॥ श्रीजिनाय नमः ॥

॥ श्रीचारित्रविजयगुरुभ्यो नमः ॥

## ॥ अथ श्रीसूक्तिमुक्तावली प्रारभ्यते ॥

( द्वितीयावृत्तिः )

छपावी प्रसिद्ध करनार—पंडित श्रावक हीरालाल हंसराज. (जामनगरवाळा)

धर्मोपदेशसूक्तानि—वीरं विश्वगुरुं नत्वा । कृत्वा यत्नेन संग्रहं ॥ सदोपकारिसूक्ताली । स्वा·
न्यपाठाय लिख्यते ॥ १ ॥ पूज्यपूजा दया दानं । तीर्थयात्रा जपस्तपः ॥ श्रुतं परोपकारश्च । म·
र्त्यजन्मफलाष्टकं ॥ २ ॥ शिष्टे संगः श्रुतौ रंगः । सध्याने धीर्धृतौ मतिः ॥ दाने शक्तिर्गुरौ भक्तिः
। षडेते सुकृताकराः ॥ ३ ॥ देवपूजा गुरूपास्तिः । स्वाध्यायः संयमस्तपः ॥ दानं चेति गृहस्थानां ।
षट् कर्माणि दिने दिने ॥ ४ ॥ जिनपूजनं विवेकः । सत्यं शौचं सुपात्रदानं च ॥ महिमक्रीडा·
गारः । शृंगारः श्रावकत्वस्य ॥ ५ ॥ यद्भक्तिः सर्वज्ञे । यद्यत्नस्तत्प्रणीतसिद्धांते ॥ यत्पूजनं यतीनां ।

फलमेतज्जीवितव्यस्य ॥ ६ ॥ दानं सुपात्रे विशदं च शीलं । तपो विचित्रं शुभभावना च ॥ भवा-
र्णवोत्तारणसत्तरंडं । धर्मं चतुर्धा मुनयो वदंति ॥ ७ ॥ श्रीमज्जिनेशनमनं तिलकत्यलीके । वक्षः-
स्थले विमलमालति सद्विवेकः ॥ ताटंकति श्रवणयोः सुगुरूपदेश—स्त्यागस्तु कंकणति पाणितले
सतां हि ॥ ८ ॥ जैनो धर्मः प्रकटविभवः संगतिः साधुलोके । विद्वद्गोष्ठी वचनपटुता कौशलं स-
त्क्रियासु ॥ साध्वी लक्ष्मीश्चरणकमलोपासना सद्गुरूणां । शुद्धं शीलं मतिरमलिना प्राप्यते भाग्य-
वद्भिः ॥ ९ ॥ जिनभवनं जिनबिंबं । जिनपूजां जिनमतं च यः कुर्यात् ॥ तस्य नरामरशिवसुख—
फलानि करपल्लवस्थानि ॥ १० ॥ वरपूजया जिनानां । धर्मश्रवणेन सुगुरुसेवनया ॥ शासनभास-
नयोगैः । सृजंति सफलं निजं जन्म ॥ ११ ॥ दानं वित्ताहृतं वाचः । कीर्तिधर्मौ तथायुषः ॥ परो-
पकरणं काया—दसारात्सारमुद्धरेत् ॥ १२ ॥ बुद्धेः फलं तत्वविचारणं च । देहस्य सारं व्रतधारणं
च ॥ अर्थस्य सारं किल पात्रदानं । वाचः फलं प्रीतिकरं नराणां ॥ १३ ॥ जिनेंद्रपूजा गुरुपर्युपा-
स्तिः । सत्वानुकंपा शुभपात्रदानं ॥ गुणानुरागः श्रुतिरागमस्य । नृजन्मवृक्षस्य फलान्यमूनि ॥१४॥
त्याज्या हिंसा नरकपदवी नानृतं भाषणीयं । स्तेयं हेयं सुरतविरतिः सर्वसंगान्निवृत्तिः ॥ जैनो धर्मो

यदि न रुचितः पापपंकावृतेभ्यः । सर्पिर्दुष्टं किमिदमियता यत्प्रमेही न भुंक्ते ॥ १५ ॥ करे श्ला-
घ्यस्त्यागः शिरसि गुरुपादप्रणमनं । मुखे सत्या वाणी श्रुतमवितथं च श्रवणयोः ॥ हृदि स्वछा वृ-
त्तिर्विजयिभुजयोः पौरुषमहो । विनाप्यैश्वर्येण प्रकृतिमहतां मंडनमिदं ॥ १६ ॥ पिता योगाभ्यासो
विषयविरतिः सा च जननी । विवेकः सौंदर्यं प्रतिदिनमनीहा च भगिनी ॥ प्रिया क्षांतिः पुत्रो वि
नय उपकारः प्रियसुहृत । सहायो वैराग्यं गृहमुपशमो यस्य स सुखी ॥ १७ ॥ धैर्यं यस्य पिता क्ष-
मा च जननी भ्राता मनःसंयमः । सूनुः सत्यमिदं दया च दुहिता शांतिः स्वयं गेहिनी ॥ शय्या
भूमितलं दिशोऽपि वसनं ज्ञानामृतं भोजनं । यस्यैतानि कुटुंबिनो वद सखे तस्यांगिनः काऽसुखं
॥ १८ ॥ यत्संतोषसुखं यदिंद्रियदमो यच्चेतसः शांतता । यद्दीनेषु दयालुता यदपि गीः सत्यामृता-
स्यंदिनी ॥ शौर्यं धैर्यमनार्यसंगविरतिर्या संगतिः सज्जने । एते ते परिणामसुंदरतराः सर्वे विवेकां-
कुराः ॥ १९ ॥ त्रिसंध्यं देवार्चां विरचय चयं प्रापय यशः । श्रियः पात्रे वापं जनय नयमार्गं नय
मनः ॥ स्मर क्रोधाद्यारीन् दलय कलय प्राणिषु दयां । जिनोक्तं सिद्धांतं शृणु वृणु जवान्मुक्तिक-
मलां ॥ २० ॥ दिने दिने मंजुलमंगलाली । सुसंपदः सौख्यपरंपरा च ॥ इष्टार्थसिद्धिर्बहुला च बु-

द्धिः । सर्वत्र सिद्धिः सृजतां सुधर्मं ॥ २१ ॥ धर्मसिद्धौ ध्रुवं सिद्धि—र्द्युम्नप्रद्युम्नयोरपि ॥ दुग्धोपलंभे सुलभा । संपत्तिर्दधिसर्पिषोः ॥ २२ ॥ ❀जीवदया जिणधम्मो । सावयजम्मो गुरूण पयभत्ती ॥ एअं रयणचउक्कं । पुन्नेहिं विणा न पावंति ॥ २३ ॥ जं अप्पह न सुहाई । तं पुण परह न वंछिअई ॥ धम्मह एहज मूलु । काहुं वलि वलि पुछिअई ॥ २४ ॥ पूजामाचरतां जगतत्रयपतेः संघार्चनं कुर्वतां । तीर्थानामभिवंदनं विदधतां जैनं वचः शृण्वतां ॥ सद्दानं ददतां तपश्च चरतां सत्वानुकंपाकृतां । येषां यांति दिनानि जन्म सफलं तेषां सुपुण्यात्मनां ॥ २५ ॥ देवं पूजयतो दयां विदधतः सत्यं वचो जल्पतः । सद्भिः संगमनुभ्रतो वितरतो दानं मदं मुंचतः ॥ यस्येत्थं पुरुषस्य यांति दिवसास्तस्यैव मन्यामहे । गोत्रं जन्म च जीवितं च सफलं श्लाघ्या कथा वाग्मिता ॥ २६ ॥ कर्त्तव्यं जिनवंदनं विधिपरैर्हर्षोल्लसन्मानसैः । सच्चारित्रविभूषिताः प्रतिदिनं सेव्याः सदा साधवः ॥

❀ जीवदया जिनधर्मः । श्रावकजन्म गुरूणां पदभक्तिः ॥ एतद् रत्नचतुष्कं । पुण्यैर्विना न प्राप्नुवंति ॥ २३ ॥ यत् आत्मनः न सुखयति । तत्पुनः परस्मै न वांछ्यते ॥ धर्मः एव एष मूलं । कुतः पुनः पुनः पृच्छ्यते ॥ २४ ॥

श्रोतव्यं च दिने दिने जिनवचो मिथ्यात्वनिर्नाशनं । दानादौ व्रतपालने च सततं कार्या रतिः श्रावकैः ॥ २७ ॥ वंद्यास्तीर्थकृतः सुरेंद्रमहिताः पूजां विधायामलां । सेव्याः सन्मुनयश्च पूज्यचरणाः ध्येया पंचनमस्कृतिश्च सतश्राव्यं च जैनं वचः ॥ सच्छीलं परिपालनीयमतुलं कार्यं तपो निर्मलं । दानं शीलतपःप्रसंतं भाव्या च सद्भावना ॥ २८ ॥ देवं श्रेणिकवत्प्रपूजय गुरुं वंदस्व गोविंदव— धर्म्ये कर्मणि कागसुभगां चाभ्यस्य सद्भावनां॥ श्रेयांसश्च सुदर्शनश्च भगवानाद्यः स चक्री यथा। साधूनां नमदेववदहो चेतश्चिरं स्थापय ॥ २९ ॥ जंतूनामवनं जिनेशमहनं भक्त्यागमाकर्णनं । चेतःशोधमनं मदापनयनं सम्यग्गुरोर्माननं ॥ मायाया हननं क्रुधश्च शमनं लोभद्रुमोन्मूलनं । धर्मे नमिंद्रियाश्वदमनं यत्तन्नयोपायनं ॥ ३० ॥ सर्वज्ञो हृदि वाचि तद्गुणगणः कायेन देशव्रतं । यत्परता परः परिणतो बोधो बुधश्लाघ्यता ॥ प्रीतिः साधुषु बंधुता बुधजने जैने रतिः शासने । संघस्य सस्यैवं भवभेदको गुणगणः स श्रावकः पुण्यभाक् ॥ ३१ ॥ त्रैकाल्यं जिनपूजनं प्रतिदिनं न्मानन । स्वाध्यायो गुरुसेवनं च विधिना दानं तथावश्यकं ॥ शक्त्या च व्रतपालनं वरतपो ज्ञानस्य पाठस्तथा । सैष श्रावकपुंगवस्य कथितो धर्मो जिनेंद्रागमे ॥ ३२ ॥ लक्ष्मीर्दानविवेकसंगममयी

श्रद्धामयं मानसं । धर्मः शीलदयामयः सुचरितश्रेणीमयं जीवितं ॥ बुद्धिः शास्त्रमयी सुधारसमयं वाग्वैभवोज्जृंभितं । व्यापारश्च परार्थनिर्मितिमयः पुण्यैः परं प्राप्यते ॥ ३३ ॥ सन्न्यायोपात्तवित्तप्रचयसफलताहेतु दानं सुपात्रे । देयं शुद्धं च शीलं सकलभयहरं पालनीयं भवद्भिः ॥ वज्रं दुष्कर्मशैलप्रचयविदलने सत्तपःकर्म कार्यं । सर्वानुष्ठानसारं भवभयमथना भावना भावनीया ॥ ३४ ॥ वांछा सज्जनसंगमे परगुणे प्रीतिर्गुरौ नम्रता । विद्यायां व्यसनं स्वयोषिति रतिर्लोकापवादाद्भयं ॥ भक्तिश्चार्हति शक्तिरात्मदमने संसर्गमुक्तिः खले । येष्वेते निवसंति निर्मलगुणास्तैरेव भूर्भूषिता ॥ ॥ ३५ ॥ हस्तो दानविधौ मनो जिनमते वाचः सदा सूनृते । प्राणाः सर्वजनोपकारकरणे वित्तानि चैत्योत्सवे ॥ येनैवं विनियोजितानि शतशो विश्वत्रयीमंडनं । धन्यः कोऽपि स विष्टपैकतिलकं काले कलौ श्रावकः ॥ ३६ ॥ निद्रांते परमेष्टिसंस्मृतिरथो देवार्चनाव्यापृतिः । साधुभ्यः प्रणतिः प्रमादविरतिः सिद्धांततत्वश्रुतिः ॥ सर्वस्योपकृतिः शुचिव्यवहृतिः सत्पात्रदाने रतिः । श्रेयोनिर्मलधर्मकर्मनिरतिः श्लाघ्या नराणां स्थितिः ॥ ३७ ॥ कृत्वार्हत्पदपूजनं यतिजनं नत्वा विदित्वागमं । हित्वा संगमधर्मकर्मठधियां पात्रेषु दत्वा धनं ॥ गत्वा पद्धतिमुत्तमक्रमजुषां जित्वांतरारिव्रजं । स्मृत्वा पंच-

नमस्क्रियां कुरु करकोमस्थमिष्टं सुखं ॥ ३८ ॥ उत्पत्तिर्विमले कुले यतिजने संगो जिनेंद्रे परा । भक्तिर्दानमतिर्निदानरहिता वैराग्यबुद्धिर्भवे ॥ सर्वत्रोचितकारिता गुणवतामेकांतपक्षाग्रहः । कुग्राहे विफला क्रिया सुकृतिनः कस्यापि संपद्यते ॥ ३९ ॥ उत्पत्तिः सत्कुलादौ प्रकृतिकरुणया व्याकुला चित्तवृत्ति—र्व्यावृत्तिः पापयोगात्तदनु गुणकरः साधुसंगानुरागः ॥ संसाराराण्यभीतिर्गुरुशरणतया कर्मनिर्मूलनेहा । प्राग्जन्मोपात्तपुण्यैरिह भवति नृणां सर्वसामग्रिकेयं ॥ ४० ॥ भक्तिः श्रीवीतरागे भगवति करुणा प्राणिवर्गे समग्रे । दीनादिभ्यः प्रदानं श्रवणमनुदिनं श्रद्धया सुश्रुतीनां ॥ पापापोहे समीहा भवभयमसमं मुक्तिमार्गानुरागः । संगो निःसंगचित्तैर्विषयविमुखता हर्म्यिणामेष धर्मः ॥४१॥ कर्त्तव्या देवपूजा शुभगुरुवचनं नित्यमाकर्णनीयं । दानं देयं सुपात्रे प्रतिदिनममलं पालनीयं च शीलं ॥ तप्यं शुद्धं स्वशक्त्या तप इह महती भावना भावनीया । श्राद्धानामेष धर्मो जिनपतिगदितः पूतनिर्वाणमार्गः ॥ ४२ ॥ सर्वज्ञार्चानुरक्तिर्विपुलतरधिया तीर्थयात्रानुषक्तिः । पापादाने विरक्तिर्मुनिवरचरणाराधनेऽगाधभक्तिः ॥ दानासक्तिः समग्राग्रहविरतिरतिर्धर्मकर्मप्रसक्तिः । केषांचित्पुण्ययोगाद्भवति यदि परं प्राणिनां प्राप्तिरेषा ॥ ४३ ॥

✻ पूआ जिणिंदे सुरुइ वएसु । जत्तो अ सामाइअपोसहेसु ॥ दाणं सुपत्ते सयणं सुतिज्ञे । सुसाहुसेवा सिवलोअमग्गो ॥ ४४ ॥ जिणाणं पूअजत्ताए । साहूणं पज्जुवासणे ॥ आवस्सयंमि सज्ञाए । उज्जमेह दिणे दिणे ॥ ४५ ॥ जज्ञ य विसयविराउ । कसायचाउ गुणेसु अणुराउ ॥ किरिआसु अप्पमाउ । सो धम्मो सिवसुहोवाउ ॥ ४६ ॥ जाएण जीवलोए । दो चेव नरेण सिक्खिअवाइं ॥ कम्मेण जेण जीवइ । जेण मउ सुग्गइं जाई ॥ ४७ ॥ नाणं नियमग्गहणं । नवकारो नयरुई अणीहा य ॥ पंचनयविभूसिआणं । न दुल्लहा सुग्गइ होइ ॥ ४८ ॥ पच्चक्खाणं

✻ पूजा जिनेन्द्रे सुरुचिः व्रतेषु । यतः च सामायिकपौषधेषु ॥ दानं सुपात्रे श्रयणं सुतीर्थे । सुसाधुसेवा शिवलोकमार्गः ॥ ४४ ॥ जिनानां पूजायात्रयोः । साधूनां पर्युपासने ॥ आवश्यके स्वाध्याये । उद्यमस्व दिने दिने ॥ ४५ ॥ यत्र च विषयविरागः । कषायत्यागः गुणेषु अनुरागः ॥ क्रियासु अप्रमादः । स धर्मः शिवसुखोपायः ॥ ४६ ॥ जातेन जीवलोके । द्वे चैव नरेण शिक्षितव्ये ॥ कर्मणा येन जीवति । येन मृतः सुगतिं याति ॥ ४७ ॥ ज्ञानं नियमग्रहणं । नवकारः नयरुचिः अनिहा च ॥ पंच नयविभूषितानां । न दुर्लभा सुगतिः भवति ॥ ४८ ॥ प्रत्याख्यानं पू-

पंचपपाए जस्स उ । न पयारो तस्स संसारो ॥ ४९ ॥

पूआ । पडिक्कमणं पोसहो परुवयारो ॥ पंचपपाए जस्स उ । न पयारो तस्स संसारो ॥ ४९ ॥ जिणागमे तिब्बसराणं बहुमाणन्नत्ती । सत्तीइ सत्ताण दया विरागो ॥ समाणधम्माणय वछ्लत्तं । जिणागमे सारमुदाहरंति ॥ ५० ॥

अथ पर्वसूक्तानि—❀ बीआ पंचमि अट्ठमि । एगादसि चउदसि पण तिहिउ ॥ एआउ सुअतिहीउ । गोअमगणहारिणा नणिआ ॥ १ ॥ बीआ दुविहे धम्मे । पंचमि नाणे अ अट्ठमी कम्मे ॥ एगारसि अंगाणं । चउद्दसी चउदपुवीणं ॥ २ ॥

---

तीर्थे·जा । प्रतिक्रमणं पौषधः परोपकारः ॥ पंच पेषु यस्य तु । न प्रचारः तस्य संसारः ॥ ४९ ॥ जिनागमे श्वराणां बहुमानन्नक्ती । शक्त्या सत्वानां दया विरागः ॥ समानधर्माणां च वात्सल्यं । जिनागमे सारं उदाहरंति ॥ ५०

❀ द्वितीया पंचमी अष्टमी । एकादशी चतुर्दशी पंच तिथयः ॥ एताः श्रुततिथयः । गौतमगणधरेण नणिताः ॥ १ ॥ द्वितीया द्विविधे धर्मे । पंचमी ज्ञाने च अष्टमी कर्मणि ॥ एकादशी अंगानां । चतुर्दशी चतुर्दशपूर्वाणां ॥ २ ॥

अष्टमी अष्टकर्मांता । सिद्धिलाभा चतुर्दशी ॥ पंचमी केवलज्ञानं । तस्मातत्रितयमाचरेत् ॥ ॥ ३ ॥ उदयंमि जाति हीसा । पमाणमित्थरीइ कीरमाणीए ॥ आणाभंगणवत्था । मिच्छत्तविराहणं चेव ॥ ४ ॥ सामायिकावश्यकपौषधानि । देवार्चनस्नानविलेपनानि ॥ ब्रह्मक्रियादानदयामुखानि । भव्याश्चतुर्मासिकमंडनानि ॥ ५ ॥ व्याख्यानश्रवण जिनालयगतिर्नित्यं गुरोर्वंदनं । प्रत्याख्यानविधानमागमगिरां चित्ते चिरं स्थापनं ॥ कल्याकर्णनमात्मशक्तितपसा संवत्सराराधनं । श्राद्धैः श्लाघ्यतपोधनादिति फलं लभ्यं चतुर्मासके ॥ ६ ॥ यज्जीवस्योपकारि स्या—त्तद्देहस्यापकारकृत् ॥ यच्छरीरोपकारि स्या—त्तज्जीवस्यापकारकृत ॥ ७ ॥ मंत्राणां परमेष्टिमंत्रमहिमा तीर्थेषु शत्रुंजयो । दाने प्राणिदया गुणेषु विनयो ब्रह्म व्रतेषु व्रतं ॥ संतोषो नियमे तपस्सु च शमस्तत्वेषु सद्दर्शनं । सर्वज्ञोदितसर्वपर्वसु परं स्याद्वार्षिकं पर्व च ॥ ८ ॥ वृक्षेषु कल्पविटपी मनुजेषु चक्री । शैलेषु कांचनगिरिस्त्रिदशेषु शक्रः ॥ संजीवनेषु जलदः सुभगेषु लक्ष्मीः । कृत्येषु धर्ममयकृत्यमपि प्रधानं ॥ ९ ॥ देवार्चनादिविधिना गुरुवंदनेन । सम्यक्तपोभिरसमैः समयामृतेन ॥ आलोचनाप्रभृतिभिश्च शुभक्रियाभिः । संवत्सरप्रभृतिपर्व कृतार्थयंति ॥ १० ॥ पृथ्वीनाथसुता भुजिष्यचरिता जंजीरिता मुंडिता ।

क्षुत्क्षामा रुदती विधाय पदयोरंतर्गतां देहलीं ॥ कुल्माषान् प्रहरद्वयव्यपगमे मे सूर्पकोणस्थितान् । दद्यात्पारणकं तदा भगवतः सोऽयं महाभिग्रहः ॥ ११ ॥ सावद्यं दलयत्यलं प्रथयते सम्यक्त्वशुद्धिं परां । नीचैर्गोत्रमधष्करोति कुयशश्छिद्रं पिधत्ते क्षणात् ॥ सद्ध्यानं धिनुते निकृंतति ततं तृष्णाभ्रतामम्रपं । वश्यं सिद्धिसुखं करोति भविनामावश्यकं निर्मितं ॥ १२ ॥ ॐ आवसयमुभयकालं । ओ-सहमिव जे कुणंति उज्जुत्ता ॥ जिणविज्जकहियविहिणा । अकम्मरोगा य ते हुंति ॥ १३ ॥ मिच्छत्ताइ न गच्छइ । न गच्छावेइ नाणुजाणेइ ॥ जं मणवयकाएहिं । तं भणियं भावपडिक्कमणं ॥ १४ ॥ सामाइयं कुणंतो । समभावं सावओ घडियदुगं ॥ आउं सुरेसु बंधइ । इत्तिअमित्ताइं पलिआइं ॥ १५ ॥ बाणवई कोडीओ लक्खा । गुणसट्ठिसहस्स पणवीसं ॥ नवसयपणवीसाए । स-

ॐ आवश्यकं उभयकालं । औषधमिव जे कुर्वंति उद्युक्ताः ॥ जिनवैद्यकथितविधिना । अ-कर्मरोगाः च ते भवंति ॥ १३ ॥ मिथ्यात्वतया न गच्छति । न गमयति नानुजानाति ॥ यत् मनोवचःकायैः । तद् भणितं भावप्रतिक्रमणं ॥ १४ ॥ सामायिकं कुर्वन् । समभावं श्रावकः घटिकाद्विकं ॥ आयुः सुरेषु बध्नाति । इयन्मात्राणि पल्यानि ॥ १५ ॥ द्विनवतिकोट्यः लक्षाः । एकोनषष्टिः

तिहा अडभागपलिअस्स ॥ १६ ॥ सतहत्तरि सत्तसया । सतहत्तरिसहसलक्ककोडीओ ॥ सगवीसं कोडीसया । नवभागा सत्तपलिअस्स ॥ १७ ॥

अथ धन्यसूक्तानि—लक्ष्मीः परोपकाराय । विवेकाय सरस्वती ॥ संततिः परलोकाय । भवेन्नन्यस्य कस्यचित ॥ १ ॥ लक्ष्मीर्विवेकेन मतिः श्रुतेन । शक्तिः शमेन प्रभुता नयेन ॥ श्रद्धा च धर्मेण समं समेत्य । धन्यस्य पुंसः सफलीभवंति ॥ २ ॥ ❀ धन्नाणं विहिजोगो । विहिपक्काराहगा सया धन्ना ॥ विहिबहुमाणी धन्ना । विहिपक्कअदूसगा धन्ना ॥ ३ ॥ आसन्नसिद्धिआणं । विहिबहुमाणो अ होइ कायव्वो ॥ विहिचाओ अविहिभत्ती । अभव्वजीअदूरभव्वाणं ॥ ४ ॥ धन्यानामिह

सहस्राणि पंचविंशतिः ॥ नव शतानि पंचविंशतिः । सत्रिधा अष्टभागपल्यस्य ॥ १६ ॥ सप्तसप्ततिसप्तशतानि । सप्तसप्ततिसहस्राणिलक्षकोट्यः ॥ सप्तविंशतिकोटीशतानि । नवभागाः सप्तपल्यस्य ॥१७॥

❀ धन्यानां विधियोगः । विधिपक्षाराधकाः सदा धन्याः ॥ विधिबहुमानिनः धन्याः । विधिपक्षअदूषकाः धन्याः ॥ ३ ॥ आसन्नसिद्धिकानां । विधिबहुमानः च भवति कर्त्तव्यः ॥ विधित्यागः अविधिभक्तिः । अभव्यजीवदूरभव्यानां ॥ ४ ॥

धर्मकर्मविषया वांछापि संजायते । धन्यानामिह तत्प्रवृत्तिरचना केषांचिदेवोद्भवेत ॥ धन्यास्तस्य च यांति पारमथवा धन्याः प्रशंसंति ये । धन्यास्तेऽपि च येऽन्यलोकविहितं धर्मं न निंदति ये ॥५॥ धन्या भारतवर्षसंभवजिना येऽद्यापि काले कलौ । निस्तीर्थेश्वरकेवले निरवधौ नश्यन्मनःपर्यये ॥ तुद्यत्सूत्रविशेषसंपदि भवेद्दौर्गत्यदुःखापदि । श्रीजैनेंद्रवचोऽनुरागवशतः कुर्वंति धर्मोद्यमं ॥ ६ ॥

अथ धर्मफलसूक्तानि—धरांतःस्थं तरोमूल—मुन्नयेणानुमीयते ॥ तथा पूर्वकृतो धर्मो—ऽप्यनुमीयेत संपदा ॥ १ ॥ राज्यं सुसंपदो भोगाः । कुले जन्म सुरूपता ॥ पांडित्यमायुरारोग्यं । धर्मस्यैतत्फलं विदुः ॥ २ ॥ धनदो धनमिच्छूनां । कामदः काममिच्छतां ॥ धर्म एवापवर्गस्य । पारंपर्येण साधकः ॥ ३ ॥ आरोग्यं सौभाग्यं । धनाढ्यता नायकत्वमानंदः ॥ कृतपुण्यस्य स्यादिह । सदा जयो वांछितावाप्तिः ॥ ४ ॥ पुंसां शिरोमणीयंते । धर्मार्जनपरा नराः ॥ आश्रीयंते च संपद्भि—र्लताभिरिव पादपाः ॥ ५ ॥ धर्मो महामंगलमंगभाजां । धर्मो जनन्युद्दलिताखिलार्त्तिः ॥ धर्मः पिता चिंतितपूरितार्थो । धर्मः सुहृद्वर्धितनित्यहर्षः ॥ ६ ॥ धर्माज्जन्म कुले शरीरपटुना सौभाग्यमायुर्बलं । धर्मेणैव भवंति निर्मलयशोविद्यार्थसंपत्तयः ॥ कांताराच्च महाभयाच्च सततं धर्मः परित्रायते । धर्मः

सम्यगुपासितो भवति हि स्वर्गापवर्गप्रदः ॥ ७ ॥ धर्मोऽयं धनवल्लभेषु धनदः कामार्थिषु कामदः ।
सौभाग्यार्थिषु तत्प्रदः किमपरं पुत्रार्थिनां पुत्रदः ॥ राज्यार्थिष्वपि राज्यदः किमथवा नानाविकल्पै-
र्नृणां । तत्किं यन्न करोति किं च कुरुते स्वर्गापवर्गावपि ॥ ८ ॥ पत्नी प्रेमवती सुतः सविनयो भ्रा-
ता गुणालंकृतः । स्निग्धो बंधुजनः सखाऽतिचतुरो नित्यं प्रसन्नः प्रभुः ॥ निर्लोभोऽनुचरः स्वबंधुसु-
मुनिप्रायोपयोग्यं धनं । पुण्यानामुदयेन संततमिदं कस्यापि संपद्यते ॥ ९ ॥ रम्यं रूपं करणपटु-
ताऽरोग्यमायुर्विशालं । कांता रूपाऽवनितरतयः सूनवो भक्तिमंतः ॥ षट्खंडोर्वीतलपरिवृढत्वं यशः
क्षीरशुभ्रं । सौभाग्यश्रीरिति फलमहो धर्मवृक्षस्य सर्वं ॥ १० ॥ कुलं विश्वश्लाघ्यं वपुरपगदं जातिर-
मला । सुरूपं सौभाग्यं ललितललना भोग्यकमला ॥ चिरायुस्तारुण्यं बलमविकलं स्थानमतुलं ।
यदन्यच्च श्रेयो भवति भविनां धर्मत इदं ॥ ११ ॥ आरोग्यभाग्याभ्युदयप्रभुत्वं । सत्त्वं शरीरे च ज-
ने महत्त्वं ॥ तत्त्वं च चित्ते सदने च संपत । संपद्यते पुण्यवशेन पुंसां ॥ १२ ॥ सौभाग्यं विरल-
स्य स्यात । समं कर्मगुणेष्वपि ॥ खड्गस्यैवोच्यते पृथ्वी । सर्वदंडायुधेष्वपि ॥ १३ ॥ सुवृत्तोऽप्येक
एवार्च्यो । लघुतापि तयोर्द्वयोः ॥ वर्णेष्वेकः शिरःस्थोऽभूत । बिंदुस्तद्युगमग्रगं ॥ १४ ॥

अथ धर्मप्रभावसूक्तानि—वने रणे शत्रुजलाग्निमध्ये । महार्णवे पर्वतमस्तके वा ॥ सुप्तं प्रमत्तं विषमस्थितं वा । रक्षंति पुण्यानि पुराकृतानि ॥ १ ॥ सुचिरमपि उषित्वा स्यात्प्रियैर्विप्रयोगः । सुचिरमपि चरित्वा नास्ति भोगेषु तृप्तिः ॥ सुचिरमपि हि पुष्टं याति नाशं शरीरं । सुचिरमपि विचिंत्यत्राणमेको हि धर्मः ॥ २ ॥ निपानमिव मंडूकाः । सरः पूर्णमिवांडजाः ॥ शुभकर्माणमायांति । विवशाः सर्वसंपदः ॥ ३ ॥ * धम्मेण कुलप्पसूइ । धम्मेण य दिव्वरूवसंपत्ती ॥ धम्मेण धणसमिद्धि । धम्मेण सवित्थरा कित्ती ॥ ४ ॥ न देवतीर्थैर्न पराक्रमेण । न मंत्रतंत्रैर्न सुवर्णदानैः ॥ न धेनुचिंतामणिकल्पवृक्षै—र्विना स्वपुण्यैरिह वांछितार्थाः ॥ ५ ॥ व्यसनशतगतानां क्लेशरोगातुराणां । मरणभयहतानां दुःखशोकार्द्दितानां ॥ जगति बहुविधानां व्याकुलानां जनानां । शरणमशरणानां नित्यमेको हि धर्मः ॥ ६ ॥ तावच्चंद्रबलं ततो ग्रहबलं ताराबलं भूबलं । तावत्सिध्यति वांछितार्थमखिलं तावज्जनः सज्जनः ॥ मुद्रामंडलमंत्रतंत्रमहिमा तावत्कृतं पौरुषं । यावत्पुण्यमिदं सदा विजयते पुण्यक्षये क्षीयते ॥ ७ ॥ दीपो हंति तमःस्तोमं । रसो रोगमहाज्वरं ॥ सुधाबिंदुर्विषा-

* धर्मेण कुलप्रसूतिः । धर्मेण च दिव्यरूपसंपत्तिः ॥ धर्मेण धनसमृद्धिः । धर्मेण सविस्तरा कीर्तिः ४.

वेगं । धर्मः पापज्वरं तथा ॥ ८ ॥ पंचभिः काम्यते कुंती । तद्वधूः पंच काम्यति ॥ सतीनामग्रणी ख्याता । यशः पुण्यैरवाप्यते ॥ ९ ॥ पश्चिमाभिमुखं याति । त्यक्त्वा विपुलमंबरं ॥ रविः शूर इति ख्यातो । यशः पुण्यैरवाप्यते ॥ १० ॥ मासि मासि समा ज्योत्स्ना । पक्षयोरुभयोरपि ॥ तत्रैकः शुक्लपक्षोऽभू—द्यशः पुण्यैरवाप्यते ॥ ११ ॥ केऽपि सहस्रंभरयः । कुक्षिंभरयश्च केऽपि केऽपि नराः ॥ नात्मंभरयस्तदिदं । फलमखिलं सुकृतदुष्कृतयोः ॥ १२ ॥ निजदिवसानतिगमयति । सुखमेवाखंडमंडलो भानुः ॥ शशभृत्कष्टमनेकाः । क्षयवृद्धिविडंबनाः सहते ॥ १३ ॥ ⊛ तं पुण्णह अहिनाणु । जं गहिल्लाण विरहम्मि ॥ तं पावह परिमाणु । जं गुणवंतह भिक्खडी ॥ १४ ॥ जइविहु विसमो कालो । विसमा देसा निवाइणो विसमा ॥ तहवि हु धम्मपराणं । सिज्झइ कज्जं न संदेहो ॥ १५ ॥

॥ इति धर्मप्रभावसूक्तानि ॥

---

⊛ तत पुण्यस्य अभिज्ञानं । यत् ग्रथिलानां विरहः ॥ तत् पापस्य परिमाणं । यत गुणवतः भिक्षा ॥ १४ ॥ यद्यपि तु विषमः कालः । विषमाः देशाः नृपादिकाः विषमाः ॥ तथापि तु धर्मपराणां । सिध्यति कार्यं न संदेहः ॥ १५ ॥

अथ धर्मोद्यमसूक्तानि—✻ आसन्ने परमपए । पावेअव्वंमि सयलकल्लाणे ॥ जीवो जिणिंद-भणिअं । पडिवज्जइ भावओ धम्मं ॥ १ ॥ सुलहो विमाणवासो । एगछत्ता च मेइणी सुलहा ॥ दुल्लहा पुण जीवाणं । जिणिंदवरसासणे बोही ॥ २ ॥ अपि लभ्यते सुराज्यं । लभ्यंते पुरवराणि रम्याणि ॥ न हि लभ्यते विशुद्धः । सर्वज्ञोक्तो महाधर्मः ॥ ३ ॥ कृत्याकृत्यविभागस्य । ज्ञातारः स्वयमुत्तमाः ॥ उपदेशे पुनर्मध्या । नोपदेशे नराधमाः ॥ ४ ॥ उत्तमाः सुखिनो बोध्या । दुःखिनो मध्यमाः पुनः ॥ सुखिनो दुःखिनो वापि । बोधमर्हंति नाधमाः ॥ ५ ॥ भवकोटीदुःप्रापा—मवाप्य नृभवादिसकलसामग्रीं ॥ भवजलधियानपात्रे । धर्मे यत्नः सदा कार्यः ॥ ६ ॥ व्याकुलेनापि मनसा । धर्मः कार्यो निरंतरं ॥ मेढीबद्धोऽपि हि भ्राम्यन् । घासग्रासं करोति गौः ॥ ७ ॥ भवंति भूरिभिर्भाग्यै—र्धर्मकर्ममनोरथाः ॥ फलंति यत्पुनस्ते तु । तत्सुवर्णस्य सौरभं ॥ ८ ॥ प्रतिजन्म

---

✻ आसन्ने परमपदे । प्राप्नुवति सकलकल्याणे ॥ जीवः जिनेंद्रभणितं । प्रतिपद्यते भावतः धर्मं ॥ १ ॥ सुलभः विमानवासः । एकछत्रा च मेदिनी सुलभा ॥ दुर्लभा पुनर्जीवानां । जिनेंद्रवरशासने बोधिः ॥ २ ॥

यदभ्यस्तं । जीवैः कर्म शुभाशुभं ॥ तेनैवाभ्यासयोगेन । तदेवाभ्यस्यते पुनः ॥ ९ ॥ चत्वारः प्र-
हरा यांति । देहिनां गृहचेष्टितैः ॥ तेषां पादे तदर्धे वा । कर्तव्यो धर्मसंग्रहः ॥ १० ॥ अन्नासत्ते
पिम्मं । पावंमि मई अणुज्जमो धम्मे ॥ मा दिज्ज दिव्व कहमवि । जइ रुठो होसि सयं वारं ॥
॥ ११ ॥ अनित्यानि शरीराणि । विभवो नैव शाश्वतः ॥ नित्यं संनिहितो मृत्युः । कर्त्तव्यो धर्म-
संग्रहः ॥ १२ ॥ उत्थायोत्थाय बोधव्यं । किमद्य सुकृतं कृतं ॥ आयुषः खंडमादाय । रविरस्तमयं ग-
तः ॥ १३ ॥ जानाति यज्जीवति नैव देही । संबंधिनो वेत्ति च मृत्युमासान् ॥ स्वं ग्रस्यमानं जर-
सावगच्छे—न्न दुर्मतिर्धर्ममतिस्तथापि ॥ १४ ॥ धर्मार्थकाममोक्षाणां । यस्यैकोऽपि न विद्यते ॥ अ-
जागलस्तनस्येव । तस्य जन्म निरर्थकं ॥ १५ ॥ * मा सूअह जग्गीअव्वं । पलाईअव्वं न कीस
वीसमह ॥ तिन्नि जणा अणुलग्गा । रोगो अ जरा य मच्चू अ ॥ १६ ॥ नव सघलुं कमइलुं ।
केसलु आविलुं नागि ॥ गारुं भरिलुं लक्कुमां । खोखरि हंडी आगिं ॥ १७ ॥ याति कालो ग-

* मा स्वपीहि जागरितव्यं । पलायितव्यं मा क्वापि विश्रामय ॥ त्रयः जनाः अनुलग्नाः । रो-
गः च जरा च मृत्युश्च ॥ १६ ॥

लत्यायुः । क्षीयंते च मनोरथाः ॥ सुकृतं न कृतं किंचित् । सतां संस्मरणोचितं ॥ १८ ॥ धर्मादधि-
गतैश्वर्यो । धर्ममेव निहंति यः ॥ कथं शुभगतिर्भावी । स स्वामिद्रोहपातकी ॥ १९ ॥ यस्य त्रि-
वर्गशून्यानि । दिनान्यायांति यांति च ॥ स लोहकारभस्त्रेव । श्वसन्नपि न जीवति ॥ २० ॥ नांत-
कस्य प्रियःकश्चि—न्न लक्ष्म्याः कोऽपि वल्लभः ॥ नासो जरायाः कोऽप्यस्ति । यूयं तदपि सुस्थिताः
॥ २१ ॥ अंकस्थाने भवेद्धर्मः । शून्यस्थानं ततः परं ॥ अंकस्थाने पुनर्भ्रष्टे । सर्वं शून्यमिदं भवेत्
॥ २२ ॥ यथा बिंदुनिपातेन । क्रमशः पूर्यते सरः ॥ स हेतुः सर्वविद्यानां । धर्मस्य च धनस्य च
॥ २३ ॥ न निमित्तद्विषां क्षेमो । नायुर्वैद्यकविद्विषां ॥ न श्रीर्नीतिद्विषामेक—मपि धर्मद्विषां न तु
॥ २४ ॥ धर्मशोकभयाहार—निद्राकामकलिक्रुधः ॥ यावन्मात्रा विधीयंते । तावन्मात्रा भवंत्यमी
॥ २५ ॥ यतः कामार्थयशसां । कृतोऽपि विफलो भवेत ॥ धर्मकर्मसमारंभ—संकल्पोऽपि न नि-
ष्फलः ॥ २६ ॥ धर्मो जगतः सारः । सर्वसुखानां प्रधानहेतुत्वात् ॥ तस्योत्पत्तिर्मनुजा—त्सारं ते नैव
मानुष्यं ॥ २७ ॥ स्फुरत्कोटिगुणं धर्मं । प्राप्य मुंचति योऽल्पधीः ॥ तस्याधो धरणौ पातः । शरस्येव
शरीरिणः ॥ २८ ॥ त्यज दुर्जनसंसर्गं । भज साधुसमागमं ॥ कुरु पुण्यमहोरात्रं । स्मर नित्यमनि-

त्यतां ॥ २९ ॥ विलंबो नैव कर्त्तव्य । आयुर्याति दिने दिने ॥ न करोति यमः क्षांतिं । धर्मस्य त्वरिता गतिः ॥ ३० ॥ यावच्चित्तं च वित्तं च । यावदुत्सहते मनः ॥ तावदात्महितं कुर्या—द्धर्मस्य त्वरिता गतिः ॥ ३१ ॥ स्थैर्यं सर्वेषु कार्येषु । शंसंति नयपंडिताः ॥ बह्वंतरायविघ्नस्य । धर्मस्य त्वरिता गतिः ॥ ३२ ॥ प्रथमे नार्जिता विद्या । द्वितीये नार्जितं धनं ॥ तृतीये नार्जितो धर्म—श्चतुर्थे किं करिष्यति ॥ ३३ ॥ छिन्नमूलो यथा वृक्षो । गतशीर्षो यथा भटः ॥ धर्महीनो धनी तद्व—त्कियत्कालं ललिष्यति ॥ ३४ ॥ मूलभूतं ततो धर्मं । सिक्त्वा भोगफलं बुधाः ॥ गृह्णंति बहुशो मूढाः । समुच्छिद्यैकदा पुनः ॥ ३५ ॥ यदि मोक्षफलं काले । भविता धर्मशाखिनः ॥ सिक्तस्तथापि संसार—सौख्यछायां करोत्यसौ ॥ ३६ ॥ अतः सिंचंति तं पुण्य—क्रियानीरेण पंडिताः ॥ अनाचारकुठारेण । पुनश्छिंदंति बालिशाः ॥ ३७ ॥ रम्येषु वस्तुषु मनोहरतां गतेषु । रे चित्त खेदमुपयासि किमत्र चित्रं ॥ पुण्यं कुरुष्व यदि तेषु तवास्ति वांछा । पुण्यं विना न हि भवंति समीहितार्थाः ॥३८॥ अवाप्य धर्मावसरं विवेकी । कुर्याद्विलंबं न हि विस्तराय ॥ तातो जिनस्तक्षशिलाधिपेन । रात्रिं व्यतिक्रम्य पुनर्न नेमे ॥ ३९ ॥ पुनः प्रभातं पुनरेव शर्वरी । पुनः शशांकः पुनरुछितो रविः ॥

कालस्य किं गच्छति याति जीवितं । तथापि मूढः स्वहितं न बुध्यते ॥ ४० ॥ ताराध्वताराततटिनी·
भुजंग—तरंगगंगासिकताकणानां ॥ संख्यां स कृत्वा कुरुतां हि धर्मं । यो धर्ममीप्सुः कृतगेहकृत्यः
॥ ४१ ॥ येन प्रभुस्वजनवैभवदेहगेह—चिंतातुरेण सुकृतं न कृतं कदाचित् ॥ वैवाहिकैराकुलित·
स्य तस्य । नो पाणिपीडनविधिः स्मृतिमाजगाम ॥ ४२ ॥ जानासि शंबलबलं बलमध्वगानां । नो
शंबलाय यतसे परलोकपांथः ॥ गंतव्यमस्ति तव निश्चितमेव तेन । मार्गेण येन न भवेत्क्रयवि·
क्रयोऽपि ॥ ४३ ॥ प्रहरद्वयमार्गेऽपि । नराः कुर्वंति शंबलं ॥ न कुर्वंति परत्रार्थे । वर्षकोटिप्रयाणके
॥ ४४ ॥ अबद्धमपि ह्यात्मानं । सुबद्धमिव मन्यते ॥ नलिकाभ्रमणभ्रांत—पक्षीव विकलो जनः
॥ ४५ ॥ ग्रामांतरे विहितशंबलकः प्रयाति । सर्वोऽपि लोक इह रूढिरिति प्रसिद्धा ॥ मूढस्तु दीर्घ·
परलोकपथप्रयाणे । पाथेयमात्रमपि नो विदधात्यधन्यः ॥ ४६ ॥ जागर्त्ति यावदिह कालभुजंगमो
न । पंचाननः स्वपिति यावदयं च कामः ॥ यावद्विवेकनिहतास्ति च मोहराजि—र्निर्गच्छ संसृति·
वनाच्छिभृतोंग तावत ॥ ४७ ॥ यावत्स्वस्थमिदं कलेवरगृहं यावच्च दूरे जरा । यावच्चेंद्रियशक्तिरप्रति·
हता यावत्क्षयो नायुषः ॥ आत्मश्रेयसि तावदेव विदुषा कार्यः प्रयत्नो महा—नादीप्ते भवने च कू·

पखननं प्रत्युद्यमः कीदृशः ॥ ४८ ॥ आयुर्वर्षशतं नृणां परिमितं रात्र्या तदर्धीकृतं । तस्यार्द्धस्य कदाचिदर्धमधिकं वार्धक्यबाल्ये गतं ॥ शेषं रोगवियोगशोकमदनक्रोधादिभिर्व्याकुल—स्यायुर्याति नरस्य तत्र कतमो यो धर्मकर्मक्षणः ॥ ४९ ॥ बालः प्रायो रमणासक्त—स्तरुणः प्रायो रमणीरक्तः ॥ वृद्धः प्रायश्चिंतामग्न—स्तदहो धर्मे कोऽपि न लग्नः ॥ ५० ॥ निर्दंतः करटी हयो गतजवश्चंद्रं विना शर्वरी । निर्गंधं कुसुमं सरो गतजलं छायाविहीनस्तरुः ॥ रूपं निर्लवणं सुतो गतगुणश्चारित्रहीनो यति—र्निर्देवं भवनं न राजति तथा धर्मं विना मानवः ॥ ५१ ॥ राज्यं निःसचिवं गतप्रहरणं सैन्यं विनेत्रं मुखं । वर्षा निर्जलदा धनी च कृपणो भोज्यं तथाज्यं विना ॥ दुःशीला दयिता सुहृन्निकृतिमान् राजा प्रतापोज्झितः । शिष्यो भक्तिविवर्जितो न हि विना धर्मं नरः शस्यते ॥ ॥ ५२ ॥ तोयेनेव सरः श्रियेव विभुता सेनेव सुस्वामिना । जीवेनेव कलेवरं जलधरश्रेणीव वृष्टिश्रिया ॥ प्रासादस्त्रिदशार्चयेव सरसत्वेनेव काव्यं प्रिया । प्रेम्णेव प्रतिभासते न रहितो धर्मेण जंतुः क्वचित् ॥ ५३ ॥

अथ मानुष्यभवसूक्तानि—न्यग्रोधे दुर्लभं पुष्पं । दुर्लभं स्वातिजं पयः ॥ दुर्लभं मानुषं ज-

न्म । दुर्लभं देवदर्शनं ॥ १ ॥ अनर्घ्याण्यपि रत्नानि । लभ्यंते विभवैः सुखं ॥ दुर्लभो रत्नकोट्या-
पि । क्षणोऽपि मनुजायुषः ॥ २ ॥ हतं मुष्टिभिराकाशं । तुषाणां खंडनं कृतं ॥ यन्मया प्राप्य मा-
नुष्यं । सदर्थे नादरः कृतः ॥ ३ ॥ केऽप्याप्तमपि पुण्येन । तत्प्रमादपरायणाः ॥ हारयंति नराः सु-
धा । इव चिंतामणिं करात् ॥ ४ ॥ मानुष्यमार्यविषयः सुकुलप्रसूतिः । श्रद्धालुता गुरुवचःश्रवणं
विवेकः ॥ मोहांधिते जगति संप्रति सिद्धिसौध—सोपानपद्धतिरियं सुकृतोपलभ्या ॥ ६ ॥ मानुषं
भवमवाप्य दक्षिणा—वर्त्तशंखवदमुं भवांबुधौ ॥ पूरयेत्सुकृतगांगवारिणा । पापवृत्तिसुरया न चोत्त-
मः ॥ ७ ॥ देवा विसयपसत्ता । नेरइआ विविहदुक्खसंपत्ता ॥ तिरिआ विवेगविगला । मणुआणं
धम्मसामग्गी ॥ ८ ॥ चुल्लगपासगधन्ने । जूए रयणे अ सुविण चक्के अ ॥ चम्मजुगे परमाणु ।
दस दिठंता मणुअलंभे ॥ ९ ॥ विप्रः प्रार्थितवान् प्रसन्नमनसः श्रीब्रह्मदत्तात्पुरा । क्षेत्रेऽस्मिन् भरते-
ऽखिले प्रतिगृहं मे भोजनं दापय ॥ इत्थं लब्धवरोऽथ तेष्वपि कदाप्यश्नात्यहो द्विः स चेत । भ्रष्टो
मर्त्यभवात्तथाप्यसुकृती भूयस्तमाप्नोति नो ॥ १० ॥ स्तंभानां हि सहस्रमष्टसहितं प्रत्येकमष्टोत्तरं ।
कोणानां शतमेषु तानपि जयन् भूतेऽथ तत्संख्यया ॥ साम्राज्यं जनकात्सुतः स लभते स्याच्चेदिदं

दुर्घटं । भ्रष्टो मर्त्यभवात्तथाप्यसुकृती भूयस्तमाप्नोति नो ॥ ११ ॥ वृद्धा कापि पुरा समस्तभरतक्षेत्र-
स्य धान्यावलिं । पिंडीकृत्य च तत्र सर्षपकणान् क्षिप्त्वाढकेनोन्मितान् ॥ प्रत्येकं हि पृथक्करोति कि-
ल सा सर्वाणि चान्नानि चेत । भ्रष्टो मर्त्यभवात्तथाप्यसुकृती भूयस्तमाप्नोति नो ॥ १२ ॥ सिद्धद्यू-
तकलाबलात्प्रतिजनं जित्वाथ हेम्नां भरैश्चाणाक्येन नृपस्य कोशनिवहः पूर्णीकृतो हेलया ॥ दै-
वादाढ्यजनेन तेन स पुनर्जीयेत मंत्री क्वचित् । भ्रष्टो मर्त्यभवात्तथाप्यसुकृती भूयस्तमाप्नोति न ॥
॥ १३ ॥ रत्नान्याढ्यसुतैर्वितीर्य वणिजां देशांतरादीयुषां । पश्चात्तापवशेन तानि पुनरादातुं कृतोप-
क्रमैः ॥ लभ्यंते निखिलानि दुर्घटमिदं दैवाद् घटेत क्वचित् । भ्रष्टो मर्त्यभवात्तथाप्यसुकृती भूयस्त-
माप्नोति न ॥ १४ ॥ स्वप्ने कार्पटिकेन रात्रिविगमे श्रीमूलदेवेन च । प्रेक्ष्येंदुं सकलं कुनिर्णयव-
शादल्पं फलं प्राप्य तत् ॥ स्वप्नस्तेन पुनः स तत्र शयितेनालोक्यते कुत्रचिद् । भ्रष्टो मर्त्यभवात्त-
थाप्यसुकृती भूयस्तमाप्नोति न ॥ १५ ॥ राधाया वदनादधः क्रमवशाच्चक्राणि चत्वार्यथ । भ्राम्यंतीह
विपर्ययेण तदधो धन्वी स्थितोऽवाङ्मुखः ॥ तस्या वामकनीनिकामिषुमुखेनैवाशु विध्यत्यहो । भ्र-
ष्टो मर्त्यभवात्तथाप्यसुकृती भूयस्तमाप्नोति न ॥ १६ ॥ दृष्ट्वा कोऽपि हि कच्छपो ह्रदमुखे सेवालबंधे

च्युते । पूर्णेंदुं मुदितः कुटुंबमिह तं द्रष्टुं समानीतवान् ॥ सेवाले मिलिते कदापि स पुनश्चंद्रं च्युते । ... नृयस्तमाप्नोति नो ॥ १७ ॥ शम्या पूर्वपयोनिधौ निकिलालोकते । भ्रष्टो मर्त्त्यभवात्तथाप्यसुकृती नृयस्तमाप्नोति नो ॥ १७ ॥ शम्या पूर्वपयोनिधौ निपतिता भ्रष्टं युगं पश्चिमां—भोधौ दुर्धरवीचिभिश्च सुचिरात्संयोजितं तद्द्वयं ॥ शम्या सा प्रविशेद्युगस्य विवरे तस्य स्वयं क्वापि चे—द्भ्रष्टो मर्त्त्यभवात्तथाप्यसुकृती नृयस्तमाप्नोति नो ॥ १८ ॥ चूर्णीकृत्य पराक्रमान्मणिमयं स्तंभं सुरः क्रीडया । मेरौ सन्नलिकासमीरवशतः क्षिप्त्वा रजो दिक्षु चेत ॥ स्तंभं तैः परमाणुभिः सुमिलितैः कुर्यात्स चेत्पूर्ववत । भ्रष्टो मर्त्त्यभवात्तथाप्यसुकृती नृयस्तमाप्नोति नो ॥ १९ ॥

अथ प्रमादत्यागसूक्तानि—चर्मवर्म किल यस्य न भेद्यं । यस्य वज्रमयमस्थि च तौ चेत ॥ स्थायिनाविह न कर्णदधीची । तन्न धर्ममवधीरय धीर ॥ १ ॥ आर्यदेशकुलरूपबलायु—र्बुद्धिबंधुरमवाप्य नरत्वं ॥ धर्मकर्म न करोति जडो यः । पोतमुज्झति पयोधिगतः सः ॥ २ ॥ यः प्राप्य दुःप्राप्यमिदं नरत्वं । धर्मं न यत्नेन करोति मूढः ॥ क्लेशप्रबंधेन स लब्धमब्धौ । चिंतामणिं पातयति प्रमादात ॥ ३ ॥ स्वर्णस्थाले क्षिपति स रजः पादशौचं विधत्ते । पीयूषेण प्रवरकरिणं वाहयत्येंधभारं

॥ चिंतारत्नं विकिरति कराद्वायसोड्डायनार्थं । यो दुःप्रापं गमयति मुधा मर्त्यजन्म प्रमत्तः ॥ ४ ॥
आदित्यस्य गतागतैरहरहः संक्षीयते जीवितं । व्यापारैर्बहुकार्यभारगुरुभिः कालो न विज्ञायते ॥
दृष्ट्वा जन्मजराविपत्तिमरणं त्रासश्च नोत्पद्यते । पीत्वा मोहमयीं प्रमादमदिरामुन्मत्तभूतं जगत् ॥
॥ ५ ॥ ते धत्तूरतरुं वपंति भुवने प्रोन्मूल्य कल्पद्रुमं । चिंतारत्नमपास्य काचशकलं स्वीकुर्वते ते
जडाः ॥ विक्रीय द्विरदं गिरींद्रसदृशं क्रीणंति ते रासभं । ये प्राप्तं परिहृत्य धर्ममधमा धावंति भो-
गाशया ॥ ६ ॥ यत्संपत्त्या न युक्ता जगति तनुभृतो यच्च नापद्विमुक्ता । यन्नाधिव्याधिहीनाः सक-
लगुणगणालंकृतांगाश्च यन्नो ॥ यन्न स्वर्गं लभंते निखिलसुखखनिं मोक्षसौख्यं च यन्नो । दुष्टः क-
ल्याणमालादलनपटुरयं तत्र हेतुः प्रमादः ॥ ७ ॥ विना दिनानि सत्कर्म । हृदयंगमसंगमैः ॥ धा-
तः सरस्वतीतातं । लिखन् मूर्ख न लज्जसे ॥ ८ ॥ प्रमादः परमद्वेषी । प्रमादः परमं विषं ॥ प्रमा-
दो मुक्तिपूर्दस्युः । प्रमादो नरकालयः ॥ ९ ॥ प्रमादस्य महाहेश्च । दृश्यते महदंतरं ॥ आद्याद्भ-
वे भवे मृत्युः । परस्माज्जायते न वा ॥ १० ॥ अलसोऽनुपायवेदी । भाग्यैरत्यंतमुष्वितो यश्च ॥
सीदति पुरुषत्रितयं । केवलमिह जगति बहुरत्ने ॥ ११ ॥ निद्रा मूलमनर्थानां । निद्रा श्रियो विघा-

तिनी ॥ निद्रा प्रमादजननी । निद्रा संसारवर्द्धनी ॥ १२ ॥ अनिष्टे न मतिं दद्या—त्तयासौ नरकं व्रजेत् ॥ तस्मात सर्वप्रयत्नेन । इष्टे धर्मे नियोजयेत् ॥ १३ ॥ मज्जं विसयकसाया । निद्दा विगहा य पंचमी जणिआ ॥ एए पंच पमाया । जीवं पाडंति संसारे ॥ १४ ॥

अथ पापत्यागसूक्तानि—अकर्तव्यं न कर्तव्यं । प्राणैः कंठगतैरपि ॥ सुकर्तव्यं तु कर्तव्यं । प्राणैः कंठगतैरपि ॥ १ ॥ राजदंडभयात्पापं । नाचरत्यधमो जनः ॥ परलोकभयान्मध्यः । स्वभावादेव चोत्तमः ॥ २ ॥ पापासक्ते चेतसि । धर्मकथाः स्थानमेव न लभंते ॥ नीलीरक्ते वाससि । कुंकुमरागो दुराधेयः ॥ ३ ॥ पुरुषः कुरुते पापं । बंधुनिमित्तं वपुर्निमित्तं वा ॥ वेदयते तत्सर्वं । नरकादौ पुनरसावेकः ॥ ४ ॥ यत्नेन पापानि समाचरंति । धर्मं प्रसंगादपि नाचरंति ॥ आश्चर्यमेतद्धि मनुष्यलोके । क्षीरं परित्यज्य विषं पिबंति ॥ ५ ॥ धर्मस्य फलमिच्छंति । धर्मं नेच्छंति मानवाः ॥ फलं पापस्य नेच्छंति । पापं कुर्वंति सादराः ॥ ६ ॥ पापं समाचरति वीतघृणो जघन्यः । प्राप्यापदं सघृण एव विमध्यबुद्धिः ॥ प्राणात्ययेऽपि न हि साधुजनः स्ववृत्तं । वेलां समुद्र इव लंघयितुं समर्थः ॥ ७ ॥ किं चित्रं यदि दंडनीतिनिपुणो राजा भवेद्धार्मिकः । किं चित्रं यदि वेदशा-

स्त्रनिपुणो विप्रो भवेत्पंडितः ॥ तच्चित्रं यदि रूपयौवनवती साध्वी भवेत्कामिनी । तच्चित्रं यदि निर्धनोऽपि पुरुषः पापं न कुर्यात्पुनः ॥ ८ ॥ पापी रूपविवर्जितः परुषवाग्यो नारकादागत—स्तिर्यग्योनिसमागतश्च कपटी नित्यं बुभुक्षातुरः ॥ मानी ज्ञानविवेकबुद्धिकलितो यो मर्त्यलोकागतो । यस्तु स्वर्गपरिच्युतः स सुभगः प्राज्ञः कविः श्रीयुतः ॥ ९ ॥ स्वर्गच्युतानामिह जीवलोके । चत्वारि नित्यं हृदये वसंति ॥ दानप्रसंगो विमला च वाणी । देवार्चनं सद्गुरुसेवनं च ॥ १० ॥

अथ न्यायसूक्तानि—निंदंतु नीतिनिपुणा यदि वा स्तुवंतु । लक्ष्मीः समाविशतु गच्छतु वा यथेष्टं ॥ अद्यैव वा मरणमस्तु युगांतरे वा । न्यायात्पथः प्रविचलंति पदं न धीराः ॥ १ ॥ दुःखं वरं चैव वरं च भैक्ष्यं । वरं च मौर्ख्यं हि वरं रुजोऽपि ॥ मृत्युः प्रवासोऽपि वरं नराणां । परं सदाचारविलंघनं नो ॥ २ ॥ सदाचारस्य धीरस्य । धीमतो दीर्घदर्शिनः ॥ न्यायप्रवृत्तस्य सतः । संतु वा यांतु वा श्रियः ॥ ३ ॥

अथ पापफलसूक्तानि—अनाज्यं भोज्यमप्राज्यं । विप्रयोगः प्रियैः सह ॥ अप्रियैः संप्रयोगश्च । सर्वं पापविजृंभितं ॥ १ ॥ शिष्याणां हि गुरुः शास्ता । शास्ता राजा दुरात्मनां ॥ अथ प्रच्छ-

न्नपापानां । शास्ता वैवस्वतो यमः ॥ २ ॥ जठराग्निः पचत्यन्नं । फलं कालेन पच्यते ॥ कुमंत्रैः पच्यते राजा । पापी पापेन पच्यते ॥ ३ ॥ सर्वत्र शुचयो धीराः । सुकर्मबलगर्विताः ॥ कुकर्मनयविस्त्रस्ताः । पापाः सर्वत्र शंकिताः ॥ ४ ॥ अत्युग्रपुण्यपापाना—मिहैव फलमाप्यते ॥ त्रिभिर्वर्षैस्त्रिभिर्मासै—स्त्रिभिः पक्षैस्त्रिभिर्दिनैः ॥ ५ ॥ कुग्रामवासः कुनरेंद्रसेवा । कुभोजनं क्रोधमुखी च भार्या ॥ कन्याबहुत्वं च दरिद्रता च । षट् जीवलोके नरका भवंति ॥ ६ ॥ ग्रामे वासो नायको निर्विवेकः । कौटिल्यानामेकपात्रं कलत्रं ॥ नित्यं रोगः पारवश्यं च पुंसा—मेतत्सर्वं जीवतामेव मृत्युः ॥ ७ ॥

अथ कलिसंबंधिसूक्तानि—कृते वर्षसहस्रेण । त्रेतायां हायनेन च ॥ द्वापरे यच्च मासेन । अहोरात्रेण तत्कलौ ॥ १ ॥ संकुचंति कलौ तुच्छाः । प्रसरंति महाशयाः ॥ ग्रीष्मे सरांसि शुष्यंति । कामं वार्धिश्च वर्धते ॥ २ ॥ धर्मः पर्वगतस्तपः प्रवसितं सत्यं च दूरे गतं । पृथ्वी मंदफला नृपाश्च कुटिलाः शस्त्रायुधा ब्राह्मणाः ॥ लोकः स्त्रीषु रतः स्त्रियोऽतिचपला लौल्ये स्थिता मानवाः । साधुः सीदति दुर्जनः प्रभवति प्रायः प्रविष्टः कलिः ॥ ३ ॥ कालः संप्रति वर्त्तते कलियुगः संतो

नरा दुर्लभा । देशाश्च प्रलयं गताः करभरैर्लोभं गताः पार्थिवाः ॥ नानाचौरगणा मुषंति पृथिवीमार्यो जनः क्षीयते । पुत्रस्यापि न विश्वसंति पितरः कष्टं युगे वर्त्तते ॥ ४ ॥ सर्वत्रोफ़्तकंदला वसुमती वृद्धिर्जनानां परा । जातं निःकमलं जगत्सुमलिनैः प्राप्ता घनैरुन्नतिः ॥ सर्पति प्रतिमंदिरं द्विरसनाः संत्यक्तमार्गो जनो । धिक्कष्टं कुनराधिपस्य च कलेर्वर्षास्वरूपं तथा ॥ ५ ॥ तैस्तैर्घोरैर्व्याधिभिः पीड्यमानः । पापाचारैस्तस्करैर्मुष्यमाणः ॥ दुर्भिक्षार्त्तो राजदंडावसन्न—श्चक्रारूढः सांप्रतं जीवलोकः ॥ ६ ॥ राजा राक्षसरूपेण । शत्रुरूपेण मंत्रिणः ॥ संग्रहो व्याधिरूपेण । यः प्रयाति स जीवति ॥ ७ ॥ सीदंति संतो विलसंत्यसंतः । पुत्रा म्रियंते जनकश्चिरायुः ॥ परेषु तोषः स्वजनेषु रोषः । पश्यंतु लोकः कलिकेलितानि ॥ ८ ॥ कलियुगमध्योत्पन्नाः । कृतयुगमध्यानुसारिणः कस्मात ॥ इति कोपादिव कलिना । पीड्यंते साधवः सततं ॥ ९ ॥ उच्छिन्नविषयग्रामाः । स्थानाद्दुच्चलितद्विजा ॥ सर्वत्र बलिभिः क्रांता । वृद्धनारीव भूरभूत ॥ १० ॥ नष्टा श्रुतिः स्मृतिर्लुप्ता । प्रायेण पतिता द्विजाः ॥ अवसादश्च सन्मार्गे । हा वृद्धो वर्त्तते कलिः ॥ ११ ॥

अथ दुःखसंबंधिसूक्तानि—निर्विवेकतया बाल्यं । कामोन्मादेन यौवनं ॥ वृद्धत्वं विकलत्वेन ।

सदा सोपद्रवं नृणां ॥ १ ॥ प्रातर्मूत्रपुरीषाभ्यां । मध्याह्ने क्षुत्पिपासया ॥ सदा कामेन बाध्यंते । प्रा
णिनो निशि निद्रया ॥ २ ॥ गतसारेऽत्र संसारे । सुखभ्रांतिः शरीरिणां ॥ लालापानमिवांगुष्ठे ।
बालानां स्तन्यविभ्रमः ॥ ३ ॥ दिनमेकं शशी पूर्णः । क्षीणस्तु बहुवासरान् ॥ सुखाद्दुःखं सुराणा-
म—प्यधिकं का कथा नृणां ॥ ४ ॥ एकस्य दुःखस्य न यावदंतं । गच्छाम्यहं पारमिवार्णवस्य ॥
तावद् द्वितीयं समुपस्थितं मे । छिद्रेष्वनर्था बहुलीभवंति ॥ ५ ॥ दुःखं स्त्रीकुक्षिमध्ये प्रथममिह
भवे गर्भवासे नराणां । बालत्वे चापि दुःखं मललुलितवपुः स्त्रीपयःपानमिश्रं ॥ तारुण्ये चापि दुः
खं भवति विरहजं वृद्धभावोऽप्यसारः । संसारे रे मनुष्या वदत यदि सुखं स्वल्पमप्यस्ति किंचित ॥
॥ ६ ॥ कृच्छ्रेणामेध्यमध्ये नियमिततनुभिः स्थीयते गर्भमध्ये । कांताविश्लेषरूपव्यतिकरविषमो यौ
वने विप्रयोगः ॥ नारीणामप्यवज्ञा विलसति नियतं वृद्धभावोऽप्यसाधुः । संसारे रे मनुष्या वदत
यदि सुखं स्वल्पमप्यस्ति किंचित् ॥ ६ ॥ दुष्टः कर्मविपाक भूपतिवशः कायाह्वयः कर्मकृत । बध्ध्वा
कर्मगुणैर्हृषीकचषकैः पीतप्रमादासवं ॥ कृत्वा नारकचारकादुपचितं त्वां प्राप्य चाशु व्रजं । गंतेति
स्वहिताय संयमभारं तं वाहयाल्पं ददत् ॥ ७ ॥ दारिद्र्याकुलचेतसां सुतसुताभार्यादिचिंताजुषां । नि

त्यं दुर्भरदेहपोषणकृते रात्रिंदिवा खिद्यतां ॥ राजाज्ञाप्रतिपालनोद्यतधियां विश्राममुक्तात्मनां । स-र्वोपद्रवशंकिनामघभृतां धिग्देहिनां जीवितं ॥ ८ ॥ निर्द्रव्यो धनचिंतया धनपतिस्तद्रक्षणे चाकुलो । निःस्त्रीकस्तदुपायसंगतमतिः स्त्रीमानपत्येच्छया ॥ प्राप्तापत्यपरिग्रहोऽपि सततं रोगैरभिद्रूयते । जीवः कोऽपि कथंचनापि नियतं प्रायः सदा दुःखितः ॥ ९ ॥ स्त्र्याः किं सुंदरि सुंदरं न कुरुषे किं नो करोषि स्वयं । धिक्त्वां क्रोधमुखीमलीकमुखरस्त्वत्तोऽपि कः कोपनः ॥ स्त्र्याः पापे प्रतिजल्पसि प्रतिपदं पापस्त्वदीयः पिता । दंपत्योरिति नित्यदंतकलहक्लेशार्त्तयोः किं सुखं ॥ १० ॥ नानाकोलबिलाकुलं बहुरजःसंकीर्णमूर्णाभृतं । तार्णं जीर्णकुटीरकं कटु रटन् द्वारे च खंजः खरः ॥ भार्या कार्यरता सुता बहुविधव्याधिव्यथाविह्वला । दंभीखंडमचंमशीतहरणं वासस्तृणैः स्रस्तरः ॥ ११ ॥ गेहं जर्जरमाखुभिः कृतबिलं चेलं च यूकालयः । शय्या मत्कुणसंकुला वपुषि रुग् रूक्षाशनं भोजनं ॥ वृत्तिर्भारवहादिका परुषवागज्ञा कुरूपा वधू—र्यस्येत्थं ननु सोऽपि नोज्झति गृहासंगं हहा मूढधीः ॥ ॥ १२ ॥ तार्णं जीर्णं कुटीरं वृषनकुलकुलैः संकुलं धान्यशून्यं । काणा काली कुरूपा कटुरटनपरा गेहिनी स्नेहहीना ॥ दंडी हुंडी च खंडी श्रुतिविकलखरी द्वारि कोकूयमाना । जीवानां संपदेषा

रमयति हृदयं ही महामोहचेष्टा ॥ १३ ॥

अथानुशास्तिसूक्तानि—❀ चिंतय रे जीव तए । अन्नाणवसेण विवेगरहिएण ॥ विअणाउ अमणाउ । नरएसु अणंतसो पत्ता ॥ १ ॥ बालस्स माइमरणं । भज्जामरणं च जुवणत्थस्स ॥ थेरस्स पुत्तमरणं । तिन्निवि डुक्खाइं गुरुआइं ॥ २ ॥ अच्छि निमीलणमित्तं । नत्थि सुहं डुक्खमेव पडिबद्धं ॥ नरए नेरइयाणं । अहोनिसं पच्चमाणाणं ॥ ३ ॥ जं नरए नेरइआ । दुक्खं पावंति गोअमा तिक्खं ॥ तं पुण निगोअमज्झे । अणंतगुणिअं मुणेअव्वं ॥ ४ ॥ सूईहिं अग्गिवन्नाहिं । संभिन्नस्स निरंतरं ॥ जावइअं गोअमा दुक्खं । गब्भे अट्ठगुणं तउ ॥ ५ ॥ गर्भस्त्वधोमुखो दुःखी।

---

❀ चिंतय रे जीव त्वया । अज्ञानवशेन विवेकरहितेन ॥ वेदनाः अमानाः । नरकेषु अनंतशः प्राप्ताः ॥ १ ॥ बालस्य मातृमरणं । भार्यामरणं च यौवनस्थस्य ॥ स्थविरस्य पुत्रमरणं । त्रीण्यपि दुःखानि गुरुकाणि ॥ २ ॥ अस्ति निमीलनमात्रं । नास्ति सुखं दुःखमेव प्रतिबद्धं ॥ नरके नारकाणां । अहोनिशं पच्यमानानां ॥ ३ ॥ यत नरके नारकाः । दुःखं प्राप्नुवंति गौतम तीक्ष्णं ॥ तत् पुनः निगोदमध्ये । अनंतगुणं ज्ञातव्यं ॥ ४ ॥ सूचीभिः अग्निवर्णाभिः । संभिन्नस्य निरं-

जननीपृष्ठिसंमुखः ॥ बद्धांजलिर्ललाटे च । पच्यते जठराग्निना ॥ ६ ॥ असौ जागर्ति जाग्रत्यां । स्वपत्यां स्वपिति स्फुटं ॥ सुखिन्यां सुखवान् दुःखी । दुःखवत्यां च मातरि ॥ ७ ॥ गर्भे जीवो वसत्येवं । वासराणां शतद्वयं ॥ अधिकं सप्तसप्तत्या । दिवसार्धेन च ध्रुवं ॥ ८ ॥ पुरुषो दक्षिणे कुक्षौ । वामे स्त्री यमलौ द्वयोः ॥ ज्ञेयं तूदरमध्यस्थं । नपुंसकमसंशयं ॥ ९ ॥ ❀ जायमाणस्स जं दुक्खं । मरमाणस्स जंतुणो ॥ तेण दुक्खेण संतत्तो । न सरइ पुव्वजाइयं ॥ १० ॥ न परो करेइ दुक्खं । नेव सुहं कोइ कस्सइ देई ॥ जं पुण सुचरिअ दुचरिअ । परिणमइ पुराणयं कम्मं ॥ ११ ॥ ताव च्चिअ होइ सुहं । जाव न कीरइ पिओ जणो कोवि ॥ पिअसंगो जेण कओ । दुक्खाण समप्पि-

---

तरं ॥ यावत् गौतम दुःखं । गर्भे अष्टगुणं ततः ॥ ९ ॥

❀ जायमानस्य यद् दुःखं । म्रियमाणस्य जंतोः ॥ तेन दुःखेन संतप्तः । न स्मरति पूर्वजातिं ॥ १० ॥ न परः करोति दुःखं । नैव सुखं कोऽपि कस्यापि ददाति ॥ यत्पुनः सुचरितं दुश्चरितं । परिणमति पुरातनं कर्म ॥ ११ ॥ तावच्चैव भवति सुखं । यावत न क्रियते प्रियः जनः कोऽपि ॥ प्रियसंगो येन कृतः । दुःखानां समर्पितः आत्मा ॥ १२ ॥

त्तं अप्पा ॥ १३ ॥ अपकारिषु मा पापं । चिंतयस्व कदाचन ॥ स्वयमेव पतिष्यंति । कूलजाता इव द्रुमाः ॥ १४ ॥ मृत्योर्बिभ्नेषि किं बाल । स च जातं न मुंचति ॥ अजात नैव गृह्णाति । कुरु यत्नमजन्मनि ॥ १५ ॥ चिरपरिचितेष्ववज्ञा । न भवेत्प्रीतिरिति हि जनवादः ॥ चिरतनशरीरनाशे । नवतरलाभेऽपि किं भीतः ॥ १६ ॥ सत्यं मनोरमाः कामाः । सत्यं रम्या विभूतयः ॥ किंतु मत्तांगनापांग—भंगलोलं हि जीवितं ॥ १७ ॥ महता पुण्यपण्येन । क्रीतेयं कायनौस्त्वया ॥ पारं भवोदधेर्गंतु । त्वर यावन्न भिद्यते ॥ १८ ॥ लोकः पृछति मे वार्ता । शरीरे कुशलं तव ॥ कुतः कुशलमस्माक—मायुर्याति दिने दिने ॥ १९ ॥ संसारे संवसतां । कुशलं किं पृच्छ्यते शरीरवतां ॥ पतितस्य दहनराशौ । दग्धोऽसि न वेतिः कः प्रश्नः ॥ २० ॥ अहह गृही क नु कुशली । बध्ध्वा संसारसागरे क्षिप्तः ॥ यदि बत लभते पोतं । तेनापि निमज्जते सुतरां ॥ २१ ॥

अथ शरीराऽसारत्वसूक्तानि—नित्यमित्रसमं देहं । स्वजनाः पर्वसन्निभाः ॥ नमस्कारसमो ज्ञेयो । धर्मः परमबांधवः ॥ १ ॥ यत्प्रातः संस्कृतं धान्यं । मध्याह्ने तद्विनश्यति ॥ तदीयरसनिष्पन्ने । काये का नाम सारता ॥ २ ॥ सुस्वादून्यन्नपानानि । क्षीरेक्षुविकृती अपि ॥ भुक्तानि यत्र

विष्ठायै । तच्छरीरं कथं शुचि ॥ ३ ॥ इदं शरीरं कर्पूर—कस्तूरीप्रभृतीन्यपि ॥ दूषयत्येव पाथोद—पाथांस्यूषरभूरिव ॥ ४ ॥ अभ्यक्तोऽपि विलिप्तोऽपि । धौतोऽपि घटकोटिभिः ॥ न याति शुचितां कायः । शुंडाघट इवाऽशुचिः ॥ ५ ॥ कृमयो भस्म विष्ठा वा । निष्ठा यस्येयमीदृशी ॥ स कायः प-रपीडाभि—र्धार्यत इति को नयः ॥ ६ ॥ अमेध्यपूर्णे कृमिजालसंकुले । स्वभावदुर्गंध अशौच अ-ध्रुवे ॥ कलेवरे मूत्रपुरीषभाजने । रमंति मूढा विरमंति पंडिताः ॥ ७ ॥ इदं शरीरं परिणामदुर्बलं पतत्यवश्यं श्लथसंधिजर्जरं ॥ किमौषधैः क्लिश्यसि मूढ दुर्मते । निरामयं धर्मरसायनं पिब ॥ ८ ॥ कस्तूरी पृषतां रदाः करटिनां कृत्तिः पशूनां पयो । धेनूनां छदमंडलानि शिखिनां रोमाण्यवीनामपि ॥ पुच्छस्नायुवसाविषाणनखरस्वेदादिकं किंचन । स्यात्कस्याप्युपकारि मर्त्यवपुषो नामुष्य किंचित्पुनः ॥

अथाऽनित्यतासूक्तानि—मस्तकस्थायिनं मृत्युं । यदि पश्येदयं जनः ॥ आहारोऽपि न रोचेत । किमुताऽकृत्यकारिता ॥ १ ॥ अद्यैव हसितं गीतं । क्रीडितं यैः शरीरिभिः ॥ अद्यैव ते न दृश्यंते । कष्टं कालस्य चेष्टितं ॥ २ ॥ संपदो जलतरंगविलोला । यौवनं त्रिचतुराणि दिनानि ॥ शारदाभ्रमिव चंचलमायुः । किं धनैः कुरुत धर्ममनिंद्यं ॥ ३ ॥ स्वप्ने यथायं पुरुषः प्रयाति । ददा-

ति गृह्णाति करोति वक्ति ॥ निद्राक्षये तच्च न किंचिदस्ति । सर्वं तथेदं हि विचार्यमाणं ॥ ४ ॥
चेतोहरा युवतयः स्वजनोऽनुकूलः । सद्बांधवाः प्रणयगर्भगिरश्च भृत्याः ॥ वल्गंति दंतिनिवहास्तर·
लास्तुरंगाः । संमीलने नयनयोर्न हि किंचिदस्ति ॥ ५ ॥ चला विभूतिः क्षणभंगि यौवनं । कृतां·
तदंतांतर्वर्त्ति जीवितं ॥ तथाप्यवज्ञा परलोकसाधने । अहो नृणां विस्मयकारि चेष्टितं ॥ ६ ॥ अ·
नित्यमारोग्यमनित्ययौवनं । विभूतयो जीवितमप्यनित्यं ॥ अनित्यताग्निः प्रहतस्य जंतोः । कथं र·
तिः कामगुणेषु जायते ॥ ७ ॥ श्रियो विद्युल्लोलाः कतिपयदिनं यौवनमिदं । सुखं दुःखाघ्रातं वपु·
रनियतं व्याधिविधुरं ॥ दुरापाः सत्पत्न्यो बहुभिरथवा किं प्रलपितै—रसारः संसारस्तदिह निपुणं
जाग्रत जनाः ॥ ८ ॥ भवारण्यं भीमं तनुगृहमिदं छिद्रबहुलं । बली कालश्चौरो नियतमसिता मो·
हरजनी ॥ गृहीत्वा ज्ञानासिं विरतिफलकं शीलकवचं । समाधानं कृत्वा स्थिरतरदृशो जागृत जनाः
॥ ९ ॥ घनापायः कायः प्रकृतिचपला श्रीरपि चला । महारोगा भोगाः कुवलयदृशः सर्पसदृशः ॥
गृहावासः पाशः प्रणयिषु सुखं स्थैर्यविमुखं । असारः संसारस्तदिह निपुणं जागृत जनाः ॥ १० ॥
आयुर्वारितरंगभंगुरतरं श्रीस्तूलतुल्यस्थिति—स्तारुण्यं करिकर्णचंचलतरं स्वप्नोपमाः संगमाः ॥ य·

ञ्चान्यद्रमणीमणिप्रभृतिकं वस्त्वस्ति तच्चास्थिरं । विज्ञायेति विधीयतामथमतो धर्मः सदा शाश्वतः ॥
॥ ११ ॥ जन्मेदं न चिराय भूरिभयदा लक्ष्म्योऽपि नैव स्थिराः । किंपाकांतफला नितांतकटवः का-
माः क्षणध्वंसिनः ॥ आयुः शारदमेघचंचलतरं ज्ञात्वा तथा यौवनं । हे लोकाः कुरुतादरं प्रतिदि-
नं धर्मेऽघविध्वंसिनि ॥ १२ ॥ भोगास्तुंगतरंगभंगचपलाः प्राणाः क्षणध्वंसिनः । स्तोकान्येव दिना-
नि यौवनसुखं प्रीतिः प्रियेष्वस्थिरा ॥ तत्संसारमसारमेव निखिलं बुध्ध्वात्मपापक्षये । लोकानुग्रह-
पेशलेन मनसा यत्नः समाधीयतां ॥ १३ ॥ ब्रह्मपुरंदरसप्तसमुद्रा । अष्टकुलाचलदिनकररुद्राः ॥ नष्टा
यत्र विचिन्तापायः । स्थास्यति तत्र कथं मम कायः ॥ १४ ॥ कदलीगर्भविचाराऽसार—स्तरुगिरि-
सागरनगरविहारः ॥ न त्वं नाहं नायं लोकः । केन किमर्थं क्रियते शोकः ॥ १५ ॥ दिवसरजन्यौ
सायं प्रातः । शिशिरवसंतौ पुनरायातः ॥ कालः क्रीडति गच्छत्यायु—र्विरमति नायमविद्यावायुः ॥
॥ १६ ॥ आत्मसुखार्थं क्रियते भोगः । पश्चादेष शरीरे रोगः ॥ रोगे जाते मरणं शरणं । तदपि
न मुंचति पापाचरणं ॥ १७ ॥ अज्जं कल्लं परं परारं । पुरिसा चिंतंति अत्थसंपत्तिं ॥ अंजलिगयंव
तोयं । गलंत जीव्यं न पिच्छंति ॥ १८ ॥

अथ शोकापनयनसूक्तानि—उमिति पंडिताः कुर्यु—रश्रुपातं च मध्यमाः ॥ अधमाश्च शि
रोघातं । शोके धर्मं विवेकिनः ॥ १ ॥ जातस्य हि ध्रुवं मृत्यु—र्ध्रुवं जन्म मृतस्य च ॥ तस्मादप·
रिहार्येऽर्थे । का तत्र परिदेवना ॥ २ ॥ संयोगाः स्युर्वियोगांता । विपत्सीमाश्च संपदः ॥ स्यादानंदो
विषादांतो । मरणांता जनिर्ध्रुवं ॥ ३ ॥ वज्रकायशरीराणा—मर्हतां यद्यनित्यता ॥ कदलीसारतु·
ल्येषु । का कथा शेषजंतुषु ॥ ॥ ४ ॥ अत्र द्रोणशतं दग्धं । पांडवानां शतत्रयं ॥ दुर्योधनसहस्रं
च । कर्णसंख्या न विद्यते ॥ ५ ॥ उत्पत्तिरत्रास्ति विपत्तिसंयुता । न कोऽप्युपायोऽस्त्यमृतौ शरी·
रिणां ॥ सर्वेंकिते चाध्वनि सर्वदावहे । ध्रुवे शुचा किं सुकृतं विधीयते ॥ ६ ॥ देहे गेहे नवश्रोत्र
—बिले रोगोरगान्विते ॥ तदंतः पतितप्राण—सार्थस्य कुशलं कुतः ॥ ७ ॥ उच्छ्वासावधयः प्रा·
णाः । स चोच्छ्वासः समीरणः ॥ समीरणाच्चलं नान्य—द्यज्जीवति तदद्भुतं ॥ ८ ॥ मरणं प्रकृतिः
शरीरिणां । विकृतिर्जीवितमुच्यते बुधैः ॥ क्षणमप्यवतिष्ठते श्वसन् । यदि जंतुर्ननु लाभवानसौ ॥
॥ ९ ॥ रुदता कुत एव सा पुन—र्न शुचा नानुमृतापि लभ्यते ॥ परलोकजुषां स्वकर्मभि—र्ग·
तयो भिन्नपथा हि देहिनां ॥ १० ॥ अवगच्छति मूढचेतनः । प्रियनाशं हृदि शल्यमर्पितं ॥ स्थिर·

धीस्तु तदेव मन्यते । कुशलोद्धारतया समुध्धृतं ॥ ११ ॥ स्वशरीरशरीरिणावपि । स्मृतसंयोगविप-
र्ययौ यदा ॥ विरहः किमिवानुतापयेद् । वद बाह्यैर्विषयैर्विपश्चितं ॥ १२ ॥ न पृथग्जनवत् शुचो व-
शं । वशिनामुत्तम गंतुमर्हसि ॥ द्रुमसानुमतां किमंतरं । यदि वायौ वहति हि ते चलाः ॥ १३ ॥
क्रियतां नाम शोकोऽयं । यदि शोकपरो जनः ॥ गतं प्रत्यानयेत्तं वा । प्रस्थितं वा निवारयेत् ॥
॥ १४ ॥ यत्र वेश्मनि नो कोऽपि । मृतः पूर्वं ततोऽधुना ॥ भृशमानीयतां रक्षा । जीवयामो यथा
तथा ॥ १५ ॥ मतं जीर्णमिदं देहं । लभ्यते च पुनर्नवं ॥ नरस्य कृतपुण्यस्य । मृत्युरेव रसायनं
॥ १६ ॥ धर्मपराणां पुंसां । जीवितमरणे सदैव कल्याणे ॥ इह जीवतां विवेकः । सद्गतिगमनं मृ-
तानां च ॥ १७ ॥ सदा सदाचारपरायणात्मनां । विवेकधाराशतधौतचेतसां ॥ जिनोदितं पंडितमृ-
त्युमीयुषां । न जातु शोच्यं महतां महीतले ॥ १८ ॥ न हु होइ सोइअवो । जो कालगओ दढं
समाहीए ॥ सो होइ सोइअवो । तवसंजमदुब्बलो जो उ ॥ १९ ॥ अर्हद्भक्तिमतां गुरुस्मृतिजुषां
क्रोधादिशत्रुद्विषां । शक्त्या पंचनमस्कृतिं च जपतामाज्ञाविधिं तन्वतां ॥ इत्थं सिद्धिनिबंधनोद्यत-
धियां पुंसां यशःशालिनां । श्लाघ्यो मृत्युरपि प्रणष्टरजसां पर्यंतकालागतः ॥ २० ॥ त्यक्त्वा पुत्रध-

नादिमोहममतां कृत्वांतिमालोचना—मुच्चार्य व्रतमालिकामनशनं चादाय वीतस्पृहः ॥ सर्वप्राणिषु
निष्कषायहृदयः कृत्वा त्रिधा क्षामणां । धन्यः पंचनमस्कृतिस्मृतिपरः कोऽपि त्यजेत्स्वं वपुः ॥ २१ ॥
पुमानत्यंतमेधावी । त्रयाणां फलमश्नुते ॥ अल्पायुरनपत्यो वा । दरिद्रो वा न संशयः ॥ २२ ॥
सृजति तावदशेषगुणालयं । पुरुषरत्नमलंकरणं भुवः ॥ तदपि तत्क्षणभंगिकरोति चे—दहह कष्ट-
मपंडितता विधेः ॥ २३ ॥ परिहरति न मृत्युः पंडितं श्रोत्रियं वा । धनकनकसमृद्धं बाहुवीर्यं नृपं
वा ॥ तपसि निरतमेतं सुस्थितं दुःस्थितं वा । वनगत इव वह्निः सर्वभक्षीकृतांतः ॥ २४ ॥ गर्भस्थं
जायमानं शयनतलगतं मातुरुत्संगसंस्थं । बालं वृद्धं युवानं परिणितवयसं विश्वमार्यं खलं वा ॥ वृ-
क्षाग्रे शैलशृंगे नभसि पथि जले कोटरे पंजरे वा । पाताले वा प्रविष्टं हरति च सततं दुर्निवार्यः
कृतांतः ॥ २५ ॥ गर्भे जन्मनि बाल्ये च । यौवने वार्द्धकेऽपि च ॥ जंतोर्जीवितरत्नानि । हरति
कालतस्करः ॥ २६ ॥ दिव्यज्ञानयुता जगत्त्रयनुता येऽनंतवीर्या जिना । देवेंद्राः सुरवृंदवंद्यचरणाः
सद्विक्रमाश्चक्रिणः ॥ वैकुंठा बलशालिनो हलधरा ये रावणाद्याः परे । ते कीनाशमुखं विशंत्यशा-
रणा यद्वा न लंघ्यो विधिः ॥ २७ ॥ ये पातालनिवासिनोऽसुरगणा ये स्वैरिणो व्यंतरा । ये ज्यो-

तिष्कविमानवासिविबुधास्तारांतचंद्रादयः ॥ सौधर्मादिसुरालयेषु सुखिनो ये चापि वैमानिका—स्ते सर्वेऽपि कृतांतवासमवशा गच्छंति किं शोच्यते ॥ २८ ॥ बद्धा येन दिनाधिपप्रभृतयो मंचस्य पादे ग्रहाः । सर्वे येन कृताः कृतांजलिपुटाः शक्रादिदिक्पालकाः ॥ लंका यस्य पुरी समुद्रपरिखा सोऽप्यायुषः संक्षये । कष्टं विष्टपकंटको दशमुखो दैवाद्गतः पंचतां ॥ २९ ॥ तिच्छयरा गणहारी । सुरवइणो चक्किकेसवारामा ॥ संहरिया हयविहिणा । सेसजीएसु च का गणना ॥ ३० ॥ नो विद्या न च भेषजं न च पिता नो बांधवा नो सुता । नाभीष्टा कुलदेवता न जननी स्नेहानुबंधान्विता ॥ नार्थो न स्वजनो न वा परिजनः शारीरिकं नो बलं । नो शक्राः सततं सुरासुरवराः संधातुमायुः क्षमाः ॥ ३१ ॥ श्वाः कष्टं प्रतिपालय त्रिजगतीनाथ प्रसद्य क्षणं । यत्तीर्थं न विबाधते तव दृशा निस्तेजितो भस्मकः ॥ इत्युक्ते हरिणा जगाद य इदं कस्यापि नैतद्भवेत । स श्रीवीरजिनः प्रणष्टवृजिनः पुष्णातु वः संपदं ॥ ३२ ॥ हंहो शक्र सुरालयश्चलति चेत्प्राचीं परित्यज्य चे—दादित्योऽप्युदयं प्रयाति जलधिः सीमां च चेन्मुंचति ॥ आयुर्न त्रुटितं तथापि भुवने संधातुमत्र क्षमः । कोऽप्येवं क्षणमेकमाह भगवान् श्रीवर्धमानः प्रभुः ॥ ३४ ॥ मंगलैः कौतुकैर्योगै—र्विद्यामंत्रैस्तथौ-

थ्वैः ॥ न शक्ता मरणात त्रातुं । सेंद्रा देवगणा अपि ॥ ३५ ॥ लंकेशः क्व स केशवः क्व स नलः
क्वासौ क्व ते पांडवाः । क्वासौ दाशरथिः क्व तत्कुरुशतं ते शक्रचक्रायुधाः ॥ नाभेयप्रमुखाः क्व ते
जिनवरास्तत्सर्वसाधारणं । नन्वेतन्मरणं न तत्र शरणं कश्चित्क्वचित् कस्यचित् ॥ ३६ ॥ वयं जाता
येऽभ्यश्चिरमुपगता एव खलु ते । समं यैः संवृद्धाः स्मरणपदवीं तेऽपि च गताः ॥ इदानीमेते स्मः
प्रतिदिनसमासन्नविगमा । गतास्तुल्यावस्थां सिकतिलनदीतीरतरुभिः ॥ ३७ ॥ पांथानामिव वर्त्मनि
क्षितिरुहां नद्यामिव भ्रस्यतां । मेघानामिह पुष्करे जलनिधौ सांयात्रिकाणामिव ॥ संयोगः पितृ
मातृबंधुतनयभ्रातृप्रियाणां यदा । सिद्धो दूरवियोग एव विदुषां शोकोदयः कस्तदा ॥ ३८ ॥

अथ विधिविषयसूक्तानि—विधिर्विधाता नियतिः स्वभावः । कालो ग्रहाश्चेश्वरकर्म दैवं ॥ भा
ग्यानि पुण्यानि यमः कृतांतः । पर्यायनामानि पुराकृतस्य ॥ १ ॥ करोमि न करोमीति । चेतः किं
परितप्यसे ॥ संपत्तौ च विपत्तौ च । विधिरेव समुत्सुकः ॥ २ ॥ सघृतं मंत्रपूतं च । भोज्यं का
कस्य निर्मितं ॥ शेवालं राजहंसस्य । विधिना पंकिलं कृतं ॥ ३ ॥ भग्नाशस्य करंडसंगततनोर्म्लानें
ड्रियस्य क्षुधा । कृत्वाखुर्विवरं स्वयं निपतितो नक्तं मुखे भोगिनः ॥ तृप्तस्तत्पिशितेन सत्वरमसौ

तिष्कविमानवासिविबुधास्तारांतचंद्रादयः ॥ सौधर्मादिसुरालयेषु सुखिनो ये चापि वैमानिका—स्ते सर्वेऽपि कृतांतवासमवशा गच्छंति किं शोच्यते ॥ २८ ॥ बद्धा येन दिनाधिपप्रभृतयो मंचस्य पादे ग्रहाः । सर्वे येन कृताः कृतांजलिपुटाः शक्रादिदिक्पालकाः ॥ लंका यस्य पुरी समुद्रपरिखा सोऽप्यायुषः संक्षये । कष्टं विष्टपकंटको दशमुखो दैवाद्गतः पंचतां ॥ २९ ॥ तित्थयरा गणहारी । सुरवइणो चक्किकेसवारामा ॥ संहरिया हयविहिणा । सेसजीएसु च का गणना ॥ ३० ॥ नो विद्या न च भेषजं न च पिता नो बांधवा नो सुता । नाभीष्टा कुलदेवता न जननी स्नेहानुबंधान्विता ॥ नार्थो न स्वजनो न वा परिजनः शारीरिकं नो बलं । नो शक्राः सततं सुरासुरवराः संधातुमायुः क्षमाः ॥ ३१ ॥ श्याः कष्टं प्रतिपालय त्रिजगतीनाथ प्रसद्य क्षणं । यत्तीर्थं न विबाधते तव दृशा निस्तेजितो भस्मकः ॥ इत्युक्ते हरिणा जगाद य इदं कस्यापि नैतद्भवेत । स श्रीवीरजिनः प्रणष्टवृजिनः पुष्णातु वः संपदं ॥ ३३ ॥ हंहो शक्र सुरालयश्चलति चेत्प्राचीं परित्यज्य चे—दादित्योऽप्युदयं प्रयाति जलधिः सीमां च चेन्मुंचति ॥ श्यायुर्न त्रुटितं तथापि भुवने संधातुमत्र क्षमः । कोऽप्येवं क्षणमेकमाह भगवान् श्रीवर्धमानः प्रभुः ॥ ३४ ॥ मंगलैः कौतुकैर्योगै—र्विद्यामंत्रैस्तथौ-

रोतु विधुरे किं वा विधौ पौरुषं ॥ १२ ॥ यद्भग्नं धनुरीश्वरस्य शिशुना यज्जामदग्न्येऽजित—स्त्यक्ता येन गुरोर्गिरा वसुमती बद्धो यदंभोनिधिः ॥ एकैकं दशकंधरस्य क्षयकृद्रामस्य किं वर्ण्यते । दैवं वर्णय येन सोऽपि सहसा नीतः कथाशेषतां ॥ १३ ॥ नेता यस्य बृहस्पतिः प्रहरणं वज्रं सुराः किंकराः । स्वर्गो दुर्गमनुग्रहः खलु हरेरैरावणो वाहनं ॥ इत्याश्चर्यबलान्वितोऽपि बलभिद्भग्नः परैः संगरे । तद्युक्तं ननु दैवमेव शरणं धिग्धिग् वृथा पौरुषं ॥ १४ ॥ ध्वांतं ध्वस्तं समस्तं विरहविगमनं चक्रवाकेषु चक्रे । संकोचं मोचितं द्राग्वरकमलवनं धाम लुप्तं ग्रहाणां ॥ संप्राप्तो यो जनेऽभ्यस्तदनु च निखिला येन भुक्ता दिनश्रीः । संप्रत्यस्तं गतोऽसौ हतविधिवशतः शोचनीयो न भानुः ॥१५॥ निदाघे संतप्तः प्रचुरतरतृष्णातुरमनाः । सरः पूर्णं दृष्ट्वा त्वरितमुपयातः करिवरः ॥ तथा पंके मग्नस्तटनिकटवर्त्तिन्यपि यथा । न नीरं नो तीरं द्वयमपि विनष्टं विधिवशात ॥ १६ ॥ स्फुरंत्युपायाः शांत्यर्थ—मनुकूले विधातरि ॥ प्रतिकूले पुनर्यांति । तेऽप्युपाया ह्यपायतां ॥ १७ ॥ स्थानं त्रिकूटः परिखा समुद्रो । रक्षांसि योधा धनदाच्च वित्तं ॥ संजीवनी यस्य मुखे च विद्या । स रावणः कालवशाद्विपन्नः ॥ १८ ॥ वैदेहीदयितेऽपि दुष्टहृदयः पार्थेऽप्यनर्थप्रदो । जीमूतेऽपि यथोचितव्यवहृतिः क·

ते नैव यातो पथा । स्वस्थास्तिष्ठत दैवमेव हि नृणां दुःखे सुखे कारणं ॥ ४ ॥ येनोदितेन कमलानि विकासितानि । तेजांसि येन निखिलानि निराकृतानि ॥ येनांधकारनिकरप्रसरो निरुद्धः । सोऽप्यस्तमाप बत दैववशाद्दिनेशः ॥ ५ ॥ रिक्तोऽहमर्थैरिति मा विषीद । पूर्णोऽहमर्थैरिति मा प्रसीद ॥ रिक्तं च पूर्णं भरितं च रिक्तं । करिष्यतो नास्ति विधेर्विलंबः ॥ ५ ॥ अन्यथा चिंतितं कार्य—मन्यथैव हि जायते ॥ बलवान् विधिरेवात्र । कार्या नैव विचारणा ॥ ६ ॥ कुमुदवनमपश्रि श्रीमदंभोजखंडं । त्यजति मदमुलूकः प्रीतिमांश्चक्रवाकः ॥ उदयमहिमरश्मिर्याति शीतांशुरस्तं । हतविधिललितानां हा विचित्रो विपाकः ॥ ७ ॥ जं चिअ विहिणा लिहिअं । तं चिय परिणमइ सयललोयस्स ॥ इअ जाणीऊण धीरा । विहुरेवि न कायरा हुंति ॥ ८ ॥ यन्मनोरथशतैरगोचरं । यत्स्पृशंति न गिरः कवेरपि ॥ स्वप्नवृत्तिरपि यत्र दुर्लभा । लीलयैव विदधाति तद्विधिः ॥ ९ ॥ अघटितघटितानि घटयति । सुघटितघटितानि जर्जरीकुरुते ॥ विधिरेव तानि घटयति । यानि पुमान्नैव चिंतयति ॥ १० ॥ छित्वा पाशमपास्य कूटरचनां भंक्त्वा बलाद्वागुरां । पर्यंताग्निशिखाकलापजटिलान्निर्गत्य दूरं वनात् ॥ व्याधानां शरगोचराण्यतिजवेनोल्लंघ्य धावन् मृगः । कूपांतः पतितः क-

रोतु विधुरे किं वा विधौ पौरुषं ॥ १२ ॥ यद्भग्नं धनुरीश्वरस्य शिशुना यज्जामदग्न्येऽजित—स्त्यक्ता
येन गुरोर्गिरा वसुमती बद्धो यदंभोनिधिः ॥ एकैकं दशकंधरस्य क्षयकृद्रामस्य किं वर्ण्यते । दैवं
वर्णय येन सोऽपि सहसा नीतः कथाशेषतां ॥ १३ ॥ नेता यस्य बृहस्पतिः प्रहरणं वज्रं सुराः किं-
कराः । स्वर्गो दुर्गमनुग्रहः खलु हरेरैरावणो वाहनं ॥ इत्याश्चर्यबलान्वितोऽपि बलभिद्भग्नः परैः सं-
गरे । तद्युक्तं ननु दैवमेव शरणं धिग्धिग् वृथा पौरुषं ॥ १४ ॥ ध्वांतं ध्वस्तं समस्तं विरहविगमनं
चक्रवाकेषु चक्रे । संकोचं मोचितं द्राग्वरकमलवनं धाम लुप्तं ग्रहाणां ॥ संप्राप्तो यो जनेभ्यस्तदनु
च निखिला येन भुक्ता दिनश्रीः । संप्रत्यस्तं गतोऽसौ हतविधिवशतः शोचनीयो न भानुः ॥१५॥
निदाघे संतप्तः प्रचुरतरतृष्णातुरमनाः । सरः पूर्णं दृष्ट्वा त्वरितमुपयातः करिवरः ॥ तथा पंके मग्नस्त-
टनिकटवर्त्तिन्यपि यथा । न नीरं नो तीरं द्वयमपि विनष्टं विधिवशात ॥ १६ ॥ स्फुरंत्युपायाः शां-
त्यर्थ—मनुकूले विधातरि ॥ प्रतिकूले पुनर्यांति । तेऽप्युपाया ह्यपायतां ॥ १७ ॥ स्थानं त्रिकूटः प-
रिखा समुद्रो । रक्षांसि योधा धनदाच्च वित्तं ॥ संजीवनी यस्य मुखे च विद्या । स रावणः कालव-
शाद्विपन्नः ॥ १८ ॥ वैदेहीदयितेऽपि दुष्टहृदयः पार्थेऽप्यनर्थप्रदो । जीमूतेऽपि यथोचितव्यवहृतिः क-

र्णोऽपि कर्णेजपः ॥ भीमो भीमसुतापतावपि हरिश्चंद्रेऽपि रौद्राशयः । शक्रेऽपि श्रितविक्रमा हतविधिर्यस्तस्य केऽमी वयं ॥ १९ ॥ ब्रह्मा येन कुलालवन्नियमितो ब्रह्मांडभांडोदरे । रुद्रो येन कपालपाणिपुटके भिक्षाटनं कारितः ॥ विष्णुर्येन दशावतारगहने क्षिप्तो महासंकटे । सूर्यो भ्राम्यति नित्यमेव गगने तस्मै नमः कर्मणे ॥ २० ॥ इह खलु विषमः पुराकृतानां । भवति हि जंतुषु कर्मणां विपाकः ॥ हरशिरसि शिरांसि यानि रेजु—र्हरहर तानि लुठंति गृध्रपादे ॥ २१ ॥ यत्र मृत्युर्यतो दुःखं । यत्र श्रीर्यत्र बंधनं ॥ तत्र तत्र स्वयं याति । प्रेर्यमाणः स्वकर्मभिः ॥ २२ ॥ शशिनि खलु कलंकं कंटकाः पद्मनाले । जलधिजलमपेयं पंडिते निर्धनत्वं ॥ स्वजनजनवियोगो दुर्भगत्वं सुरूपे । धनवति कृपणत्वं रत्नद्वेषी कृतांतः ॥ २३ ॥ नैर्मल्यं यस्य संसर्गा—द्भजंते सामला अपि ॥ जडं तदपि कुर्वाणः । परमेष्ठी ध्रुवं जडः ॥ २४ ॥ जानंत्येके प्रगुणितधियो धर्मकामादिशास्त्रं । जानंत्येके निपुणमतयो वेदसिद्धांततत्वं ॥ जानंत्येतत्सकलमपरे तन्न जानंति केचि—ल्लीलारुद्धत्रिभुवनजयो जीयते येन मृत्युः ॥ २५ ॥ कस्य स्यान्न स्खलितं । पूर्णाः सर्वे मनोरथाः कस्य ॥ कस्येह सुखं नित्यं । दैवेन न खंडितः को वा ॥ २६ ॥ भ्रष्टं नृपतिकिरीटा—त्पतितं भूमौ तिरोहितं

रजसा ॥ विधिविलसितेन रत्नं । जनचरणविडंबनां सहते ॥ २७ ॥ जो करिवराण कुंभे । पायं दाऊण मुत्तिए दलए ॥ सो सीहो विहिवसओ । जंबूअपयपिल्लणं सहए ॥ २८ ॥ एते ते मम बाहवः सुरपतेर्दोर्दर्पकंडूहराः । सोऽहं सर्वजगत्पराभवकरो लंकेश्वरो रावणः ॥ सेतुं बद्धमिमं शृणोमि कपिभिः पश्यामि लंकां वृतां । जीवद्भिस्तु न दृश्यते किमथवा किं वा न च श्रूयते ॥ २९ ॥ दृषद्भिः सागरो बद्ध । इंद्रजिन्मानवैर्जितः ॥ वानरैर्वेष्टिता लंका । जीवद्भिः किं न दृश्यते ॥ ३० ॥

अथ कर्मसंबंधिसूक्तानि—हसंतो हेलया कर्म । तत्कुर्वंति प्रमादिनः ॥ जन्मांतरशतैरेते । शोचंतोऽनुभवंति यत ॥ १ ॥ यदत्र क्रियते कर्म । तत्परत्रोपभुज्यते ॥ मूलसिक्तेषु वृक्षेषु । फलं शाखासु जायते ॥ २ ॥ कर्मणो हि प्रधानत्वं । किं कुर्वंति शुभा ग्रहाः ॥ वशिष्टदत्तलग्नोऽपि । रामः प्रव्रजितो वने ॥ ३ ॥ यत्नानुसारिणी विद्या । लक्ष्मीः पुण्यानुसारिणी ॥ दानानुसारिणी कीर्त्ति— बुद्धिः कर्मानुसारिणी ॥ ४ ॥ किं करोति नरः प्राज्ञः । प्रेर्यमाणः स्वकर्मभिः ॥ प्रायेण हि मनुष्याणां । बुद्धिः कर्मानुसारिणी ॥ ५ ॥ कृतकर्मक्षयो नास्ति । कल्पकोटिशतैरपि ॥ अवश्यमेव हि भोक्तव्यं । कृतं कर्म शुभाशुभं ॥ ६ ॥ यदुपात्तमन्यजन्मनि । शुभमशुभं वा स्वकर्म परिणत्या ॥

तद्वक्यमन्यथा नैव । कर्तुं देवासुरैरपि हि ॥ ७ ॥ आरोहतु गिरिशिखरं । समुद्रमुल्लंघ्य यातु पातालं ॥ विधिलिखिताक्षरमालं । फलति कपालं न भूपालः ॥ ८ ॥ विधत्तां वाणिज्यं श्रयतु नरनाथं प्रविशतु । द्युलोकं पातालं व्रजतु भजतां वा धनपतिं ॥ अधीतां शास्त्रौघं हृढयतु तपोऽभ्यस्यतु कलाः । पुरोपात्तं कर्म स्फुरति न तथापि ह्यपरथा ॥ ९ ॥ प्रचलति यदि मेरुः शीततां याति वह्नि—रुदयति यदि भानुः पश्चिमायां दिशायां ॥ विकसति यदि पद्मं पर्वताग्रे शिलायां । तदपि न चलतीयं भाविनी कर्मरेखा ॥ १० ॥ नमस्यामो देवान्ननु हतविधेस्तेऽपि वशगा । विधिर्वंद्यः सोऽपि प्रतिनियतकर्मैकफलदः ॥ फलं कर्मायत्तं यदि किममरैः किं च विधिना । नमस्तत्कर्मभ्यो विधिरपि न येभ्यः प्रभवति ॥ ११ ॥ सुखस्य दुःखस्य न कोऽपि दाता । परो ददातीति कुबुद्धिरेषा ॥ पुराकृतं कर्म तदेव भुज्यते । शरीरहेतोस्त्वरया त्वया कृतं ॥ १२ ॥ यद्वज्रमयदेहास्ते । शलाकापुरुषा अपि ॥ न मुच्यंते विना भोगं । स्वनिकाचितकर्मणः ॥ १३ ॥ यथा धेनुसहस्रेषु । वत्सो विदति मातरं ॥ एवं पूर्वकृतं कर्म । कर्त्तारमनुधावति ॥ १४ ॥ पत्ते वसंतमासे । रिद्धिं पावंति सयलवणराइ ॥ जं न करीरे पत्तं । ता किं दोसो वसंतस्स ॥ १५ ॥

॥ १६ ॥ नैवाकृतिः फलति नैव कुलं न शीलं । विद्यापि नैव न च यत्नकृतापि सेवा ॥ कर्माणि पूर्वतपसा किल संचितानि । काले फलंति पुरुषस्य यथेह वृक्षाः ॥ १७ ॥ अकारणं रूपमकारणं गुणाः । पुराकारणं सत्त्वमकारणं तपो । जगत्त्रयव्यापि यशोऽप्यकारणं ॥ वैद्या वदंति कफपित्तमरुद्विकारं । नैमित्तिका ग्रहकृतं प्रवदंति राणमेकं नृषु कर्म कारणं ॥ १८ ॥ दोषं ॥ भूतोपसर्गमथ मंत्रविदो वदंति । कर्मैव शुद्धमतयो यतयो गृणंति ॥ १९ ॥ मनसा मानसं कर्म । वचसा वाचिकं तथा ॥ कायेन कायिकं तद्व—न्निस्तरंति मनीषिणः ॥ २० ॥ जानामि पापं न च मे निवृत्ति—र्जानामि पुण्यं न च मे प्रवृत्तिः ॥ केनापि भूतेन हृदि स्थितेन । व्यादिश्यते यत्तदहं करोमि ॥ २१ ॥ कब्रइ जीवो बलिउ । कब्रइ कम्माइं हुंति बलिआइं ॥ जीवस्स य कम्मस्स य । पुव्वनिबद्धाइं वेराइं ॥ २२ ॥

---

* उइअंमि सहस्सकरे । सलोयणो पिछइ सयललोउ ॥ जं न उलूउ पिछइ । सहस्सकिरणस्स को दोसो ॥ १६ ॥

* उदिते सहस्रकरे । सलोचनः पश्यति सकललोकः ॥ यत् न उलूकः पश्यति । सहस्रकिरणस्य को दोषः ॥ १६ ॥

अथ भाग्योपक्रमसंबंधिसूक्तानि—महतां स्थानसंगेऽपि । फलं भाग्यानुमानतः ॥ ईश्वरकंठलग्नोऽपि । वासुकिर्मारुताशनः ॥ १ ॥ तावत्तेजस्विनां तेजो । यावद्भाग्यमभंगुरं ॥ क्षीणतैलः कियत्कालं । प्रदीपोऽपि प्रदीप्यते ॥ २ ॥ प्रभवेत्परभोगाय । सर्वस्य दिवसो निजः ॥ दीपैरपि परोलक्षै—र्न हि दीपोत्सवोऽन्यदः ॥ ३ ॥ उद्यमं कुर्वतां पुंसां । भाग्यं सर्वत्र कारणं ॥ समुद्रमथनाल्लेभे । हरिर्लक्ष्मीं हरो विषं ॥ ४ ॥ सायर तुज्झ न दोसो । दोसो अह्माण चेव कम्माणं ॥ रयणायरंमि भरिए । साव्रूरो हत्थि मे लग्गो ॥ ५ ॥ दैवमुल्लंघ्य यत्कार्यं । क्रियते फलवन्न तत ॥ सरोभश्चातकेनात्तं । गलरंध्रेण गच्छति ॥ ६ ॥ दैवेन प्रभुणा स्वयं जगति यद् यस्य प्रमाणीकृतं । तत्तस्योपनयेन्मनागपि सदा नैवाश्रयः कारणं ॥ सर्वाशापरिपूरके जलधरे वर्षत्यपि प्रत्यहं । सूक्ष्मा एव पतंति चातकमुखे द्वित्राः पयोबिंदवः ॥ ७ ॥ यद्धात्रा निजभालपट्टलिखितं स्तोकं महद्वा धनं । तत्प्राप्नोति मरुस्थलेऽपि नितरां मेरौ च नातोऽधिकं ॥ तद्धीरो भव वित्तवत्सु कृपणां वृत्तिं वृथा मा कृथाः । कूपे पश्य पयोनिधावपि घटो गृह्णाति तुल्यं जलं ॥ ८ ॥ विदेशांतरितस्यापि । भाग्यं जागर्त्ति तद्वतः ॥ अभ्रैस्तिरोहितस्यापि । भानोर्भासस्तमोऽपहाः ॥ ९ ॥ उद्यमः साहसं धैर्यं । ब-

लं बुद्धिपराक्रमौ ॥ षडेते यस्य विद्यंते । तस्य दैवोऽपि शंकते ॥ १० ॥ अनिर्विण्णः श्रियो मूलं
। लोहबद्धा च कुंडिका ॥ दीर्घाण्यप्यहोरात्राणि । समुद्रः किं न शुष्यति ॥ ११ ॥ न श्रीः कुलक्र-
मायाता । शासने लिखिता न वा ॥ खड्गेनाक्रम्य भुंजीत । वीरभोज्या वसुंधरा ॥ १२ ॥ नाभिषे-
को न संस्कारः । सिंहस्य क्रियते मृगैः ॥ विक्रमार्जितसत्वस्य । स्वयमेव मृगेंद्रता ॥ १३ ॥ न्यक्का-
रमुपकारं वा । रुष्टस्तुष्टश्च यो नरः ॥ न कर्त्तुमलमन्येभ्यः । स किं केनाप्यपेक्षते ॥ १४ ॥ तावद्भ-
यस्य भेतव्यं । यावद्भयमनागतं ॥ आगतं तु भयं दृष्ट्वा । प्रहर्त्तव्यमशंकितैः ॥ १५ ॥ उद्योगिनं
पुरुषसिंहमुपैति लक्ष्मी—दैवं न दैवमिति कापुरुषा वदंति ॥ दैवं निहत्य कुरु पौरुषमात्मशक्त्या ।
यत्ने कृते यदि न सिध्यति कोऽत्र दोषः ॥ १६ ॥ निद्रालस्यसमेतानां । क्लीबानां क्व विभूतयः ॥
सुसत्त्वोद्यमसाराणां । श्रियः पुंसां पदे पदे ॥ १७ ॥ औषधं मंत्रवादं च । नक्षत्रं गृहदेवता ॥ भा-
ग्यकाले प्रसीदंति । अभाग्ये यांति विक्रियां ॥ १८ ॥ सेवितोऽपि चिरं स्वामी । विना पुण्यं न तु-
ष्यति ॥ भानोराजन्मभक्तोऽपि । पश्य निश्चरणोऽरुणः ॥ १९ ॥ श्रियमनुभवंति धीरा । न भीरवः
किमपि पश्य शस्त्रहतः ॥ कर्णः स्वर्णालंकृति—रंजनरेखांकितं चक्षुः ॥ २० ॥ पौष्पाः पंच शराः

शरासनमपि ज्याशून्यमङ्गणोर्लता । जेतव्यं च जगतत्रयं प्रतिदिनं जेताप्यनंगः किल ॥ इहृक्षेऽपि वशीकृतं त्रिभुवनं जानेऽस्मि तत्कारणं । तेजो यस्य विराजते स बलवान् स्थूलेषु कः प्रत्ययः ॥२१॥ दीपे प्रज्ज्वलिते प्रणश्यति तमः किं दीपमात्रं तमो । वज्रेणाभिहताः पतंति गिरयः किं वज्रमात्रा नगाः ॥ हस्ती स्थूलतनुः स चांकुशवशः किं हस्तिमात्रोंकुशः । तेजो यस्य विराजते स बलवान् स्थूलेषु कः प्रत्ययः ॥ २२ ॥

अथ भविष्यसंबंधिसूक्तानि—न स प्रकारः कोऽप्यस्ति । येनेयं भवितव्यता ॥ छायेव निजदेहस्य । लंघ्यते जातु जंतुभिः ॥ १ ॥ सा सा संपद्यते बुद्धिः । सा मतिः सा च भावना ॥ सहायास्तादृशा ज्ञेया । यादृशी भवितव्यता ॥ २ ॥ न स मंत्रो न सा बुद्धि—र्न स दोष्णोः पराक्रमः ॥ अपुण्योपस्थितं येन । व्यसनं प्रतिहन्यते ॥ ३ ॥ अवश्यं भाविनो भावा । भवंति महतामपि ॥ नग्नत्वं नीलकंठस्य । महाऽहिशयनं हरेः ॥ ४ ॥ पातालमाविशतु यातु सुरेंद्रलोक—मारोहतु क्षितिधराधिपतिं सुमेरुं ॥ मंत्रौषधैः प्रहरणैश्च करोतु रक्षां । यद्भावि तद्भवति नात्र विचारहेतुः ॥ ५ ॥ गते शोको न कर्त्तव्यो । भविष्यं नैव चिंतयेत ॥ वर्त्तमानेन योगेन । वर्त्तंते हि

विचक्षणाः ॥ ६ ॥ अमुत्र भविता यत्ते । तच्चिंतय शुभाऽशुभं ॥ इह ते कर्मणामेव । विपाकश्चिंतयिष्यति ॥ ७ ॥ क्षणेन लभ्यते यामो । यामेन लभ्यते दिनं ॥ दिनेन लभ्यते कालः । कालः कालो भविष्यति ॥ ८ ॥ कालः पचति भूतानि । कालः संहरते प्रजाः ॥ कालः सुप्तेषु जागर्त्ति । कालो हि दुरतिक्रमः ॥ ९ ॥ कालः समविषमकरः । परिभवसन्मानकारकः कालः ॥ कालः करोति पुरुषं । दातारं याचितारं वा ॥ १० ॥

अथ विमर्शसूक्तानि—पुष्पैरपि न योधव्यं । किं पुनर्निशितैः शरैः ॥ युद्धे विजयसंदेहः । प्रधानपुरुषक्षयः ॥ १ ॥ अंकमारुह्य सुप्तस्य । हंतुः किं नाम पौरुषं ॥ विश्वासप्रतिपन्नानां । वंचने का विदग्धता ॥ २ ॥ सहसा विदधीत न क्रिया—मविवेकः परमापदां पदं ॥ वृणुते हि विमृश्यकारिणं । गुणलुब्धा स्वयमेव सन्मतिः ॥ ३ ॥ सगुणमपगुणं वा कुर्वता कार्यमादौ । परिणतिरवधार्या यत्नतः पण्डितेन ॥ अतिरभसकृतानां कर्मणामाविपत्ते—र्भवति हृदयदाही शल्यतुल्यो विपाकः ॥ ४ ॥ यदपसरति मेषः कारणं तत्प्रहर्तुं । मृगपतिरपि कोपात संकुचत्युत्पतिष्णुः ॥ हृदयनिहितवैरा गूढमंत्रप्रचाराः । किमपि विगणयंतो बुद्धिमंतः सहंते ॥ ५ ॥ कर्मायत्तं फलं पुंसां । बुद्धिः

कर्मानुसारिणी ॥ तथापि सुधिया भाव्यं । सुविचार्यैव कुर्वता ॥ ६ ॥ सर्वथा सर्वकार्येषु । माध्यस्थ्यं शस्यते नृणां ॥ दंतपातः कथं न स्या—दतिकर्पूरभक्षणात् ॥ ७ ॥ शल्यवह्निविषादीनां । सुकरैव प्रतिक्रिया ॥ सहसाकृतकार्यस्या—ऽनुतापस्य तु नौषधं ॥ ८ ॥ तरुदाहोऽतिशीतेन । दुर्भिक्षमतिवर्षणात् ॥ अतित्यागादनौचित्य—मति सर्वत्र गर्हितं ॥ ९ ॥ जीवन् भद्राण्यवाप्नोति । जीवन् पुण्यं करोति च ॥ मृतस्य देहनाशः स्या—द्धर्माद्युपरमस्तथा ॥ १० ॥

अथ संहतिसूक्तानि—बहूनामप्यसाराणां । समुदायो जयावहः ॥ तृणैः संजायते रज्जु—र्बध्यंते येन दंतिनः ॥ १ ॥ गिरयो येन भिद्यंते । धरा येन विदार्यते ॥ संहतेः पश्य माहात्म्यं । तृणैर्वारि निवार्यते ॥ २ ॥ कुरुते कार्यमखिलं । तृणानामपि संहतिः ॥ तालवृंतकयादित्यः । प्रतापोऽपि वार्यते ॥ ३ ॥ संहतिः श्रेयसी पुंसां । स्वपक्षे तु विशेषतः ॥ तुषैरपि परिभ्रष्टा । न प्ररोहंति तंदुलाः ॥ ४ ॥ गुणैः सर्वज्ञतुल्योऽपि । सीदत्येको निराश्रयः ॥ अनर्घ्यमपि माणिक्यं । हेमाश्रयमपेक्षते ॥ ५ ॥ बह्वीं प्रतिष्ठामाप्नोति । पंचभिः पूजितो नरः ॥ उत्तमांगं शिरः प्रोक्तं । पंचेंद्रियनिषेवितं ॥ ६ ॥ तत्वमेको द्वयोर्मंत्रं । त्रिभिर्गीतं चतुःपथं ॥ कृषिं च पंचभिः कुर्या—त्सं-

ग्रामं बहुभिर्जनैः ॥ ७ ॥ मुंडे मुंडे मतिर्भिन्ना । कुंडे कुंडे नवं पयः ॥ तुंडे तुंडे नवा वाणी । बहूनां नैकरूपता ॥ ८ ॥ एकोदरसमुत्पन्ना । एकनक्षत्रजातकाः ॥ न भवंति समाः शीलै—र्यथा बदरीकंटकाः ॥ ९ ॥ किमप्यसाध्यं महतां । सिद्धिमेति लघीयसः ॥ प्रदीपो भूमिगेहांत—र्ध्वांतं हंति न भास्करः ॥ १० ॥ लघुनि लघवः समर्था । गुरुकार्यं गुरव एव कर्त्तुमलं ॥ हंति रजोऽव· श्याय—स्तर्पयति घनागमः पृथिवीं ॥ ११ ॥ लघुभ्यो यादृशी कीर्ति—र्महद्भ्यः स्यान्न तादृशी ॥ अरण्यं सभृगं स्थानं । नगरं कीटिकाश्रितं ॥ १२ ॥

अथ सत्त्वसूक्तानि—श्रेयांसि बहुविघ्नानि । भवंति महतामपि ॥ अश्रेयसि प्रवृत्तानां । क्वापि यांति विनायकाः ॥ १ ॥ प्रारभ्यते न खलु विघ्नभयेन नीचैः । प्रारभ्य विघ्नविहता विरमंति मध्याः ॥ विघ्नैः सहस्रगुणितैरपि हन्यमानाः । प्रारब्धमुत्तमगुणा न परित्यजंति ॥ २ ॥ देवोऽपि शंकते तेभ्यः । कृत्वा विघ्नानि खिद्यते ॥ विघ्नैः स्खलितोत्साहाः । प्रारब्धं न त्यजंति ये ॥ ३ ॥ सत्वैक· तानवृत्तीनां । प्रतिज्ञातार्थकारिणां ॥ प्रभविष्णुर्न देवोऽपि । किं पुनः प्राकृतो जनः ॥ ४ ॥ सदा· चारस्य धीरस्य । धीमतो दीर्घदर्शिनः ॥ न्यायप्रवृत्तस्य सतः । संतु वा यांतु वा श्रियः ॥ ५ ॥ अ·

द्यापि नोज्झति हरः किल कालकूटं । कूर्मो बिभर्त्ति धरणीं किल चात्मपृष्ठे ॥ अंभोनिधिर्वहति दु-
स्सहवाडवाग्नि—मंगीकृतं सुकृतिनः परिपालयंति ॥ ६ ॥ अप्रार्थितानि दुःखानि । यथैवायांति दे-
हिनः ॥ सुखान्यपि तथा मन्ये । दैन्यमत्रातिरिच्यते ॥ ७ ॥ एकोऽहमसहायोऽहं । कृशोऽहमपरि-
छदः ॥ स्वप्नेऽप्येवंविधा चिंता । मृगेंद्रस्य न जायते ॥ ८ ॥ कदर्थितस्यापि हि धैर्यवृत्ते—र्न श-
क्यते सत्वगुणः प्रमार्ष्टुं ॥ अधोमुखस्यापि कृतस्य वह्ने—र्नाधः शिखा यांति कदाचिदत्र ॥ ९ ॥
अप्रकटीकृतशक्तिः । शक्तोऽपि जनात्तिरस्क्रियां लभते ॥ निवसन्नंतर्दारुणि । लंघ्यो वह्निर्न तु ज्व-
लितः ॥ १० ॥ विजेतव्या लंका चरणतरणीयो जलनिधि—र्विपक्षः पौलस्त्यो रणभुवि सहायाश्च
कपयः ॥ तथाप्याजौ रामः सकलमवधीद्राक्षसकुलं । क्रियासिद्धिः सत्वे वसति महतां नोपकरणे
॥ ११ ॥ घटो जन्मस्थानं मृगपरिजनो भूर्जवसनं । वने वासः कंदैरशनमतिदुःस्थं वपुरिति ॥ ई-
दृशोऽगस्त्यो यदपिबदपारं जलनिधिं । क्रियासिद्धिः सत्वे वसति महतां नोपकरणे ॥ १२ ॥ रथ-
स्यैकं चक्रं भुजगयमिताः सप्त तुरगा । निरालंबो मार्गश्चरणविकलः सारथिरपि ॥ रविर्यात्येवांतं प्र-
तिदिनमपारस्य नभसः । क्रियासिद्धिः सत्वे वसति महतां नोपकरणे ॥ १३ ॥ विपक्षः श्रीकंठो

जडतनुरमात्यः शशधरो । वसंतः सामंतः कुसुममिषवः सैन्यमबलाः ॥ तथापि त्रैलोक्यं जयति म·
दनो देहविकलः । क्रियासिद्धिः सत्वे वसति महतां नोपकरणे ॥ १४ ॥

अथ संपद्विपत्संबंधिसूक्तानि—जीअं मरणेण समं । उप्पज्जइ जुव्वणं सह जराए ॥ ऋद्धि·
विणाससहिआ । हरिसविसाओ न कायव्वो ॥ १ ॥ दुःखे दुःखाधिकान् पश्येत् । सुखे पश्येत्सुखा·
धिकान् ॥ आत्मानं शोकहर्षाभ्यां । शत्रुभ्यामिव नार्पयेत ॥ २ ॥ कार्यः संपदि नानंदः । पूर्वपु·
ण्यभिदे हि सा ॥ नैवापदि विषादश्च । सा हि प्राक्पापपिष्टये ॥ ३ ॥ नाभ्रम भ्रूमिपतयः कतिना·
मवारान् । वारानभ्रम कतिनाम वयं न कीटाः ॥ तत्संपदां च विपदां च न कोऽपि पात्र—मेकांत·
तस्तदलमंग मुदा शुचा च ॥ ४ ॥ खंडः पुनरपि पूर्णः । पुनरपि खंडः पुनः शशी पूर्णः ॥ संपद्वि·
पदौ प्रायः । कस्यापि न हि स्थिरे स्यातां ॥ ५ ॥ प्रायोवृत्त्या विपदः । परिहृत्याऽवस्तु वस्तुनि भ·
वंति ॥ न हि कोद्रवेषु कीटाः । पतंति गोधूमराशिषु ॥ ६ ॥ आपत्स्वेव हि महतां । शक्तिरभिव्य·
ज्यते न संपत्सु ॥ अगुरोस्तथा न गंधः । प्रागस्ति यथाग्निपतितस्य ॥ ७ ॥ सत्वोत्कर्षप्रकाशाय ।
भवंति विपदः सतां ॥ जायते गुणयोगाय । वज्रवेधव्यथा मणेः ॥ ८ ॥ संपदां विपदां पात्रं । स·

पात्रं प्रायशो भवेत ॥ पुष्पाकृतादिबिल्वानां । संबंधो मूर्ध्न एव हि ॥ ९ ॥ आपदामापतंतीनां ।
हितोऽप्यायाति हेतुतां ॥ मातृजंघापि वत्सस्य । मेधिर्भवति बंधने ॥ १० ॥ वनानि दहतो वह्नेः ।
सखा भवति मारुतः ॥ स एव दीपनाशाय । कृशे कस्यास्ति सौहृदं ॥ १२ ॥ पातितोऽपि कराघा-
तै—रुत्पतत्येव कंदुकः ॥ प्रायेण हि सुवृत्ताना—मस्थायिन्योऽभिभूतयः ॥ १३ ॥ सुवृत्तस्यैकरूप-
स्य । परप्रीत्यैकृतोन्नतेः ॥ साधोः स्तनयुगस्येव । पतनं कस्य तुष्टये ॥ १४ ॥ कल्याणमूर्त्तेस्तेजांसि
। संपद्यंते विपद्यपि ॥ किं वर्णिका सुवर्णस्य । नारोहति हुताशने ॥ १५ ॥ महतामापदं दृष्ट्वा ।
को न नीचोऽपि तप्यते ॥ काकोऽप्यंधत्वमायाति । गब्रस्तं दिवाकरे ॥ १६ ॥ संपदि परोऽपि नि-
जतां । निजोऽपि परतामुपैति विपदि जनः ॥ ताराभिर्व्रियते निशि । रश्मिभिरपि मुच्यतेऽह्नि श-
शी ॥ १७ ॥ घृष्टं घृष्टं पुनरपि पुनश्चंदनं चारुगंधि । छिन्नं छिन्नं पुनरपि पुनः स्वाददं चेक्षुखंडं ॥
तप्तं तप्तं पुनरपि पुनः कांचनं कांतवर्णं । प्राणांतेऽपि प्रकृतिविकृतिर्जायते नोत्तमानां ॥ १८ ॥ वि-
पद्यपि सदा यस्य । सौमनस्यं न वंद्यते ॥ विपणिक्रीतमुत्फुल्लं । फुल्लं शिरसि धार्यते ॥ १९ ॥ ग-
वादीनां पयोऽन्येद्युः । सद्यो वा दधि जायते ॥ क्षीरोदधिस्तु नाद्यापि । महतां विकृतिः कुतः ॥

॥ २० ॥ संतो न यांति वैवर्ण्य—मापत्सु पतिता अपि ॥ दग्धोऽपि वह्निना शंखः । शुभ्रत्वं नैव
मुंचति ॥ २१ ॥ स्वापदि तथा महांतो । न यांति खेदं यथा परापत्सु ॥ अचला निजोपहतिषु ।
प्रकंपते भूः परव्यसने ॥ २२ ॥ उदेति सविता रक्तो । रक्त एवास्तमेति च ॥ संपत्तौ च विपत्तौ
च । महतामेकरूपता ॥ २३ ॥ दृश्यतामुदयतिस्म यादृश—स्तादृशस्तरणिरस्तमीयते ॥ उत्सवव्य-
सनयोः प्रभुर्विधि—र्विक्रियासु महतामनीश्वरः ॥२४॥ शुद्धः स एव कुलजश्च स एव धीरः । श्ला-
घ्यो विपत्स्वपि न मुंचति यः स्वभावं ॥ तप्तं यथा दिनकरस्य मरीचिजालै—र्दैहं त्यजेदपि हिमं
न तु शीतलत्वं ॥ २५ ॥

अथ सत्पुरुषसूक्तानि—विपदि धैर्यमथाभ्युदये क्षमा । सदसि वाक्पटुता युधि विक्रमः ॥ य-
शसि चाभिरुचिर्व्यसनं श्रुतौ । प्रकृतिसिद्धमिदं हि महात्मनां ॥ १ ॥ विपद्युच्चैः स्थेयं पदमनुविधे-
यं च महतां । प्रिया न्याय्या वृत्तिर्मलिनमसुभंगेऽप्यसुकरं ॥ असंतो नाभ्यर्थ्याः सुहृदपि न या-
च्यस्तनुधनः । सतां केनोद्दिष्टं विषममसिधाराव्रतमिदं ॥ २ ॥ ये प्राप्ते व्यसनेऽप्यनाकुलधियः संप-
त्सु नैवोन्नताः । प्राप्ते नैव पराङ्मुखाः प्रणयिनि प्राणोपभोगैरपि ॥ ह्रीमंतः स्वगुणप्रपंचनविधावन्य-

स्तुतावुत्सुका । धिग्धात्रा कृपणेन तेऽपि न कृताः कल्पांतदीर्घायुषः ॥ ३ ॥ स्वच्छाशयाः प्रकृत्या । परहितकरणोद्यता रता धर्मे ॥ संपदि न गर्वभाजो । विपदि न मुह्यंति सत्पुरुषाः ॥ ४ ॥ दित्सा स्वल्पधनस्याप्य—वष्टंभः कष्टितस्य च ॥ गतायुषोऽपि धीरत्वं । स्वभावोऽयं महात्मनः ॥ ५ ॥ संपदि यस्य न हर्षो । विपदि विषादो रणे च धीरत्वं ॥ तं भुवनत्रयतिलकं । जनयति जननी सुतं विरलं ॥ ६ ॥ यथा चित्तं तथा वाचो । यथा वाचस्तथा क्रियाः ॥ धन्यास्ते त्रितये येषां । विसंवादो न विद्यते ॥ ७ ॥ स्पृहणीयाः कस्य न ते । सततं सरलाशया महात्मानः ॥ त्रयमपि सदृशं येषां । वचनं रचनं समाचारः ॥ ८ ॥ वदनं प्रसादसदनं । सदयं हृदयं सुधामुचो वाचः ॥ करणं परोपकरणं । येषां केषां न ते वंद्याः ॥ ९ ॥ आनंदमधुरा दृष्टि—र्मनः प्रीतितरंगितं ॥ सतामेतावदौचित्यं । शेषस्त्वाचारडंबरः ॥ १० ॥ ये शांतदांताः श्रुतपूर्णकर्णा । जितेंद्रियाः प्राणिवधान्निवृत्ताः ॥ परिग्रहे संकुचिता गृहस्था—स्ते ब्राह्मणास्तारयितुं समर्थाः ॥ ११ ॥ येषां मनांसि करुणारसरंजितानि । येषां वचांसि परदोषविवर्जितानि ॥ येषां धनानि सकलार्थिजनाश्रितानि । तेषां कृते वहति कूर्मपतिर्धरित्रीं ॥ १२ ॥ मनसि वचसि काये पुण्यपीयूषपूर्णा—स्त्रिभुवनमुपकार-

श्रेणिभिः प्रीणयंतः ॥ परगुणपरमाणून् पर्वतीकृत्य नित्यं । निजहृदि विकसंतः संति संतः कियंतः ॥ १३ ॥ चेतः सार्द्रतरं वचः सुमधुरं दृष्टिः प्रसन्नोज्ज्वला । शक्तिः क्षांतियुता मतिः श्रितनया श्रीर्दीनदैन्यापहा ॥ रूपं शीलयुतं श्रुतं गतमदं स्वामित्वमुत्सेकता—निर्मुक्तं प्रकटान्यहो नवसुधाकुंडान्यमून्युत्तमे ॥ १४ ॥ अवगणइ दोसलक्खं । इक्कं मन्नेइ जं कयं सुकयं ॥ सयणो हंससहावो । पिअइ पयं वज्जए नीरं ॥ १५ ॥ नाभ्युत्थानक्रमो यत्र । नालापा मधुराक्षराः ॥ गुणदोषकथा नैव । तत्र हर्म्ये न गम्यते ॥ १६ ॥ गर्वं नोद्वहते न निंदति परं नो भाषते निष्ठुरं । प्रोक्तः केनचिदप्रियाणि सहते क्रोधं न चालंबते ॥ श्रुत्वा काव्यमलक्षणं परकृतं संतिष्ठते मूकव—द्दोषांश्छादयते स्वयं न कुरुते ह्येतत्सतां चेष्टितं ॥ १७ ॥ न ब्रूते परदूषणं परगुणं वक्त्यल्पमप्यन्वहं । संतोषं वहते परर्धिषु पराबाधासु धत्ते शुचं ॥ स्वश्लाघां न करोति नोज्झति नयं नौचित्यमुल्लंघय—त्युक्तोऽप्यप्रियमक्षमां न रचयत्येतत्सतां लक्षणं ॥ १८ ॥ नम्रत्वेनोन्नमंतः परगुणनुतिभिः स्वान् गुणान्ख्यापयंतः । पुष्णंतः स्वीयमर्थं सततकृतमहारंभयत्नाः परार्थे ॥ क्षांत्यैवाक्षेपरूक्षाक्षरमुखरमुखान् दुर्मुखान् खर्वयंतः । संतः साश्चर्यचर्यास्त्रिभुवनभवने वंदनीया जयंति ॥ १९ ॥ ये जीवेषु दयालवः

स्पृशति यान्न स्वल्पोऽपि न श्रीमदः । श्रांता ये न परोपकारकरणे हृष्यंति ये याचिताः ॥ स्वस्थाः
सत्स्वपि यौवनोदयमहाव्याधिप्रकोपेषु ये । ते लोकोत्तरचित्रचारुचरिताः श्रेष्ठा कति स्युर्नराः ॥२०॥
उत्तिष्ठंति निजासनान्नतशिरः पृच्छंति च स्वागतं । संतुष्यंति व्रजंति यांति च चिरं प्रेमोपमां संगतिं
॥ सिंचंतो वचनामृतेन सततं संतः समीपागते । किं वा न प्रियमप्रियेऽपि हि जने कुर्वंति जल्पं-
ति च ॥ २१ ॥ शूराः संति सहस्रशः प्रतिपदं विद्याविदोऽनेकशः । संति श्रीपतयो निरस्तधनदा-
स्तेऽपि क्षितौ भूरिशः ॥ किंत्वाकर्ण्य निरीक्ष्य वान्यमनुजं दुःखार्दितं यन्मन—स्ताद्रूप्यं प्रतिपद्यते
जगति ते सत्पौरुषाः पंचषाः ॥ २२ ॥ पातालान्न विमोचितो बत बलिर्नीतो न मृत्युः क्षयं । नो-
न्मृष्टं शशलांछनस्य मलिनं नोन्मूलिता व्याधयः ॥ शेषस्यापि धरां विधृत्य न कृतो भारावतारः क्ष-
णं । चेतः सत्पुरुषाभिधानपदवीं न त्वं वहल्लज्जसे ॥ २३ ॥ दिग्वासाश्चंद्रमौलिर्वहति रविरयं वा-
हवैषम्यकष्टं । राहुः सातंकमिंदुं रचयति गरुत्मान्नागवर्गो बिभेति ॥ रत्नानां धाम सिंधुस्त्रिदशगिरिपि-
तौ स्वर्णमद्यापि तस्मा—त्किं दत्तं रक्षितं वा किमु किमिति जगत्यर्ज्यते येन चार्थः ॥२४॥ क्षा-
रो वारिनिधिः कलंककलुषश्चंद्रो रविस्तापकृत् । पर्जन्यश्चपलाश्रयः स्वयमुताहृश्यः सुवर्णाचलः ॥

शून्यं व्योम सुधा द्विजिह्वविधुरा स्वर्धाम धेनुः पशुः । काष्टं कल्पतरुर्दृषत्सुरमणिस्तत्केन साम्यं सतां ॥

अथ सज्जनसूक्तानि—यात्रार्थं भोजनं येषां । दानार्थं च धनार्जनं ॥ धर्मार्थं जीवितं येषां । ते नराः स्वर्गगामिनः ॥ १ ॥ विवेकः सह संपत्त्या । विनयो विद्यया सह ॥ प्रभुत्वं प्रश्रयोपेतं । चिह्नमेतन्महात्मनां ॥ २ ॥ यौवनेऽपि प्रशांता ये । ये च हृष्यंति याचिताः ॥ वर्णिता ये च व्रजंते । ते नरा जगदुत्तमाः ॥ ३ ॥ विभूतिरयशःस्पृष्टा । शिष्टाचाराश्रिता मतिः ॥ चेष्टा साधुजनाऽनिष्टा । भवत्युन्नतचेतसां ॥ ४ ॥ शैले शैले न माणिक्यं । मौक्तिकं न गजे गजे ॥ साधवो न हि सर्वत्र । चंदनं न वने वने ॥ ५ ॥ दधत्यार्त्तं सुखीकर्त्तुं । संतः संतापमात्मना ॥ सुदुस्सहं सहंते हि । तरवस्तपनातपं ॥ ६ ॥ अवगणइ दोसलक्खं । इक्कं मन्नेइ जं कयं सुकयं ॥ सयणो हंससहावो । पिअइ पयं वज्जए नीरं ॥ ७ ॥ अपेक्षंते न च स्नेहं । न पात्रं न दशांतरं ॥ सदा लोकहिता भक्ता । रत्नदीपा इवोत्तमाः ॥ ८ ॥ उपकर्तुं प्रियं वक्तुं । कर्तुं स्नेहमकृत्रिमं ॥ सज्जनानां स्वभावोऽयं । केनेंदुः शिशिरीकृतः ॥ ९ ॥ अयं निजः परो वेति । गणना लघुचेतसां ॥ उदारचरितानां तु । वसुधैव कुटुंबकं ॥ १० ॥ कुसुमान्यंजलिस्थानि । वासयंति करद्वयं ॥ प्रायः

सुमनसां वृत्ति—र्वामदक्षिणयोः समा ॥ ११ ॥ संतामपि महाद्वेषः । स्यादेकगुणजीविनां ॥ वैमु-
ख्यमेकमालायां । यथा सुमनसां मिथः ॥ १२ ॥ गर्जति शरदि न वर्षति । वर्षासु निःस्वनो मेघः
॥ नीचो वदति न कुरुते । न वदति साधुः करोत्येव ॥ १४ ॥ विपदि परेषां संतः । समधिकतर-
मेव दधति सौजन्यं ॥ ग्रीष्मे भवंति तरवो । घनकोमलपल्लवच्छन्नाः ॥ १५ ॥ तुष्यंति भोजनैर्विप्रा
। मयूरा घनगर्जितैः ॥ साधवः परसंपत्त्या । खलाः परविपत्तिभिः ॥ १६ ॥ महतामुदये संतो । दू-
रस्थितयोऽपि दधति परितोषं ॥ नभसि समुद्गत इंदौ । मुदितं भुवि सिंधुनाथेन ॥ १७ ॥ नालि-
केरसमाकारा । दृश्यंते केऽपि सज्जनाः ॥ अन्ये तु बदराकारा । बहिरेव मनोरमाः ॥ १८ ॥ स-
त्पक्षा ऋजवः शुद्धाः । सकला गुणसेविनः ॥ तुल्यैरपि गुणैश्चित्रं । संतः संतः शराः शराः ॥१९॥
गुणरश्मिमहाभारै—र्नितांतं पूरितांतराः ॥ संतो गौरवमायांति । यदि तत्र किमद्भुतं ॥ २० ॥ अ-
संख्यैरपि नात्मीयैः । स्वल्पैरपि परस्थितैः ॥ गुणैः संतः प्रहृष्यंति । चित्रमेषां विचेष्टितं ॥ २१ ॥
यथा यथा परां कोटिं । गुणः समधिरोहति ॥ संतः कोदंडधर्माणो । विनमंति तथा तथा ॥ २२ ॥
कोटिद्वयस्य लाभेऽपि । नतं सद्वंशजं धनुः ॥ शरस्त्ववंशजः स्तब्धो । लक्षाप्तेरपि शंकया ॥ २३ ॥

शुष्ककाष्ठं च मूर्खाश्च । भज्यंते न नमंति च ॥२४॥
नमंति फलिता वृक्षा । नमंति विबुधा जनाः॥ आपादमस्तकं यस्य । स्थिता चांतः कुशीलता ॥२५॥
वराकः स कथं नाम । नम्रीभवन् दुर्जनः ॥ इदानीं गुणसंयोगा—त्कथं तव तु वक्रता ॥ २६ ॥ नि·
शुद्धवंशजकोदंड । सरलस्त्वमभूः पुरा ॥ स हि वृद्धिक्षयभाजं । वहति शशांकः कलं·
गुणमप्यनुरक्तं । प्रायो न समाश्रितं जहति संतः ॥ मित्रावसानसमये विहितोदयोऽपि ॥ चं·
कमपि ॥ २७ ॥ दोषाकरोऽपि कुटिलोऽपि कलंकितोऽपि । कुर्वंति नैव सुजनाः श्रितदोषचिंतां ॥ २८ ॥
द्रस्तथापि हरवल्लभतां प्रयाति । येषां हृदयानि दर्पणनिभानि ॥ दुर्वचनभ·
अथ सत्प्रकृतिसूक्तानि—स्वस्त्यस्तु सज्जनेभ्यो । शुभ्रस्वभावं विशेषतो भजति
स्ससंगा—दधिकतरं यांति निर्मलतां ॥ १ ॥ संतापितोऽपि साधुः । परहितनिरतो
॥ क्वथितं किं न क्षीरं । मधुररसमनोहरं भवति ॥ २ ॥ सुजनो न याति विकृतिं । यः सा·
विनाशकालेऽपि ॥ छेदेऽपि चंदनतरुः । सुरभयति मुखं कुठारस्य ॥३॥ दुर्जनजनसंतप्तो । व्रजति विरसत्व·
धुः साधुरेव स विशेषात ॥ अपि पावकसंतप्तः । खंडः स्याच्छार्करो मधुरः ॥ ४ ॥ स्निग्धः पयसो विकारोऽपि ॥
मितरः । सत्यं परिमिलितसुंदराः संतः ॥ यांति तिलाः खलभावं ।

॥ ५ ॥ अतिकुपिता अपि सुजना । योगेन मृदूभवंति न तु नीचाः ॥ हेम्नः कठिनस्यापि । द्रवणोपायोऽस्ति न तृणानां ॥ ६ ॥ उपकर्त्ता स्वतः कश्चि—दपकर्त्ता च कश्चन ॥ चैत्रस्तरुषु पत्राणि । कर्ता हर्ता च फाल्गुनः ॥ ७ ॥ कलाकलापसंपन्ना । जल्पंति समये परं ॥ घनागमविपर्यासे । केकायंते न केकिनः ॥ ८ ॥ हिताय नाऽहिताय स्यात् । महान् संतापितोऽपि हि ॥ पश्य रोगापहाराय । भवेदुष्णीकृतं पयः ॥ ९ ॥ न मुखेनोद्गिरत्यूर्ध्वं । हृदयान्न नयत्यधः ॥ जरयत्यंतरा साधु—र्दोषं विषमिवेश्वरः ॥ १० ॥ दुर्जनवचनांगारै—र्दग्धोऽपि न विप्रियं वदत्यार्यः ॥ न हि दह्यमानोऽप्यगुरुः । स्वभावगंधं परित्यजति ॥ ११ ॥ पिशुनजनदूषिता अपि । ननु संतः सत्यमेव सद्वाचः ॥ अपिबर्बरचरणहतः । खर्जूरो मिष्ट एव स्यात् ॥ १२ ॥ सहते कटुं न जल्पति । लाति न दोषान् गुणान् प्रकाशयति ॥ रुष्यति न रोषवत्स्वपि । दाक्षिण्यमहोदधिः सुजनः ॥ १३ ॥ निवसन्नपि सममितरै—रभिजातः शिक्षते न दुर्वचनं ॥ ध्वांतविरावी न पिकः । स्थितवानपि बलिभुजां भवने ॥ १४ ॥ आक्रोशितोऽपि सुजनो न वदत्यवाच्यं । निष्पीडितोऽपि रसमुद्गिरते यथेक्षुः ॥ नीचो जनो गुणशतैरपि सेव्यमानो । हास्येन तद्वदति यत्कलहेऽप्यवाच्यं ॥ १५ ॥ उदीरयंति दुर्वा-

श्यं । स्वच्छाः स्वोत्पातसंभवे ॥ उद्गिरंति मलं नेत्रा—ण्यात्मपीडासमागमे ॥ १६ ॥
अथ गुणदोषोक्तिसूक्तानि—गुणदोषसमाहारे । गुणान् गृह्णंति साधवः ॥ क्षीरनीरसमाहारे ।
हंसाः क्षीरमिवामलं ॥ १ ॥ स्वगुणं परदोषं वा । वक्तुं याचयितुं परं ॥ अर्थिनं च निराकर्तुं । स-
तां जिह्वा जडायते ॥ २ ॥ स्वश्लाघा परनिंदा च । मत्सरो महतां गुणे ॥ असंबद्धप्रलापित्व—मा-
त्मानं पातयत्यधः ॥ ३ ॥ दूषणं मतिरुपैति नौत्तमी । माध्यमी स्पृशति भाषते न च ॥ वीक्ष्य पा-
र्श्वमथ भाषतेऽधमो । रारटीति सहसाऽधमाधमः ॥ ४ ॥ संतोऽप्यसंतोऽपि परस्य दोषा । नोक्ताः श्रु-
ता वा गुणमावहंति ॥ वैराणि वक्तुः परिवर्धयंति । श्रोतुश्च तन्वंति परां कुबुद्धिं ॥ ५ ॥ असंख्याः
परदोषज्ञा । गुणज्ञा अपि केचन ॥ स्वयमेव स्वदोषज्ञा । विद्यंते यदि पंचषाः ॥ ७ ॥ सर्वस्यात्मा
गुणवान् । सर्वः परदोषदर्शने कुशलः ॥ सर्वस्य चास्ति वाच्यं । न चात्मदोषान् वदति कश्चित ॥
॥ ८ ॥ परवादे दशवदनः । परदोषनिरीक्षणे सहस्राक्षः ॥ सद्वृत्तवित्तहरणे । बाहुसहस्रार्जुनो नी-
चः ॥ ९ ॥ परदोषकथाविचक्षणः । स्वगुणख्यापननित्यतत्परः ॥ स्वयमेव हि दैवदंडितः । कुल-
शीले कथयत्यपंडितः ॥ १० ॥ प्रच्छादयति दुरात्मा । सुजनः प्रकटयति परगुणान् काले ॥ तिरयति

भुवनानि तम—स्तान्येव रविः प्रकाशयति ॥ ११ ॥ निधानीभूतमात्सर्य—मंतर्नीचस्य तिष्ठति ॥ परश्लाघासु येनास्य । दृश्यते मुद्रितं मुखं ॥ १२ ॥ अंगनानामिवांगानि । गोप्यंते स्वगुणा यदा तदा ते स्पृहणीयाः स्यु—स्तदा चात्यंतनिर्मलाः ॥ १३ ॥ सतोऽप्यसतो वापि । स्वयं स्वान् वर्णयन् गुणान् ॥ ब्रह्मापि हास्यतां याति । किं पुनः प्राकृतो जनः ॥ १४ ॥ परेण परिविख्यातो । निर्गुणोऽपि गुणीभवेत् ॥ शक्रोऽपि लघुतां याति । स्वयं प्रख्यापितैर्गुणैः ॥ १५ ॥ अपि देवा यन्न विदु—स्तदपि हि पृच्छंति हेलया लोकाः ॥ स्खलिते हसंति मूढा । मिलिते च न विस्मयः कोऽपि ॥

अथ खलस्वरूपसूक्तानि—स्थाप्यते महतां पंक्तौ । क्वचिन्नीचोऽपि कार्यतः ॥ स्थैर्याय स्थाप्यतेंगारः । कर्पूरे समकक्षया ॥ १ ॥ प्रशस्यः खल एवैको । यद्भयादखिलो जनः ॥ अनार्यकार्यमुत्सार्य । वर्त्तते न्यायवर्त्मनि ॥ २ ॥ विशिष्टकुलजातोऽपि । यः खलः खल एव सः ॥ चंदनादपि संभूतो । दहत्येव हुताशनः ॥ ३ ॥ वयसः परिणामेऽपि । यः खलः खल एव सः ॥ सुपक्वमपि माधुर्यं । नोपयातींद्रवारुणं ॥ ४ ॥ खलः सत्क्रियमाणोऽपि । ददाति कलहं सतां ॥ दुग्धधौतोऽपि किं याति । वायसः कलहंसतां ॥ ५ ॥ उपकृतिरेव खलानां । दोषस्य महीयसो भवति हे-

तुः ॥ अनुकूलाचरणेन हि । कुप्यंति व्याधयोऽत्यर्थं ॥ ६ ॥ सद्भिः संसेव्यमानोऽपि । शांतवाक्यै-
र्जलैरिव ॥ प्लुष्टपाषाणवद्दुष्ट—स्तापमेवाभिमुंचति ॥ ७ ॥ अण्वपि गुणाय गुणिनां । महदपि
दोषाय दोषिणां सुकृतं ॥ तृणमपि दुग्धाय गवां । दुग्धमपि विषाय सर्पाणां ॥ ८ ॥ उपकरिण्यपि
सुजने । स्निग्धेऽपि खलास्त्यजंति न प्रकृतिं ॥ ज्वलति जलैरपि सिंधो—रंके निहितोऽपि वडवा-
ग्निः ॥ ९ ॥ अशनमात्रकृतज्ञतया गुरो–र्न पिशुनोऽपि शुनो लभते तुलां ॥ अपि बहूपकृते सखिता
खले । न खलु खेलति खे लतिका यथा ॥ १० ॥ स्नेहेन भूतिदानेन । कृतः स्वच्छोऽपि दुर्जनः ॥
दर्पणश्चांतिके तिष्ठन् । करोत्येकमपि द्विधा ॥ ११ ॥ मक्षिकाः क्षतमिच्छंति । क्षतमिच्छंति पार्थिवाः
॥ दुर्जनाः क्षतमिच्छंति । शांतिमिच्छंति सज्जनाः ॥ १२ ॥ दुष्टः प्रविष्टमात्रोऽपि । विपाटयति शिष्ट-
हृत् ॥ सौवीरेंतर्गते क्षीरं । विशीर्यंत सहस्रधा ॥ १३ ॥ ऋजुरेष पक्ववानिति । कांडे प्रीतिं खले
च मा कार्षीः ॥ प्रायेण हि त्यक्तगुणः । फलेन हृदयं विदारयति ॥ १४ ॥ क्वचिद्रुष्टः क्वचित्तुष्टः
। क्वचित्साधारणो मतः ॥ नैकरूपः खलजनः । संनिपात इव ज्वरः ॥ १५ ॥ सर्पाणां च खलानां
च । चौराणां च विशेषतः ॥ अभिप्राया न सिध्यंति । तेनेदं वर्त्तते जगत ॥ १६ ॥ अतियत्नगृही-

तोऽपि । खलः खलखलायते ॥ शिरसा धार्यमाणोऽपि । तोयस्यार्धघटो यथा ॥ १७ ॥ न प्रेम नौषधं नाज्ञा । न सेवा न गुणो न धीः ॥ न कुलं न बलं नाशी—र्दुर्जनस्य प्रसत्तये ॥ १८ ॥ पोतो दुस्तरवारिराशितरणे दीपोंधकारागमे । निर्वाते व्यजनं मदांधकरिणां दर्पोपशांत्यै शृणिः ॥ इत्थं तद्भुवि नास्ति यत्र विधिना नोपायचिंता कृता । मन्ये दुर्जनचित्तवित्तहरणे धातापि भग्नोद्यमः ॥

अथ खलप्रकृतिसूक्तानि—अहो सुसदृशी वृत्ति—स्तुलाकोटेः खलस्य च ॥ स्तोकेनोन्नतिमायाति । स्तोकेन यात्यधोगतिं ॥ १ ॥ खलानां कंटकानां च । द्विविधैव प्रतिक्रिया ॥ उपानन्मुखभंगो वा । दूरतो वा विसर्जनं ॥ २ ॥ दुर्जनः परिहर्त्तव्यो । विद्ययालंकृतोऽपि सन् ॥ मणिना भूषितः सर्पः । किमसौ न भयंकरः ॥ ३ ॥ मृगमीनसज्जनानां । तृणजलसंतोषविहितवृत्तीनां ॥ लुब्धकधीवरपिशुना । निष्कारणवैरिणो जगति ॥ ४ ॥ दह्यमानाः सुतीव्रेण । नीचाः परयशोऽग्निना ॥ अशक्तास्तत्पदं गंतु । ततो निंदां प्रचक्रिरे ॥ ५ ॥ उज्ज्वलगुणमभ्युदितं । क्षुद्रो दृष्टुं न कथमपि क्षमते ॥ हित्वा तनुमपि शलभः । शुभ्रं दीपार्चिरपहरति ॥ ६ ॥ का खलेन सह स्पर्धा। सज्जनस्याभिमानिनः ॥ भाषणं भीषणं साधु—दूषणं यस्य भूषणं ॥ ७ ॥ यद्यदिष्टतमं तत्त—द्दे-

थं गुणवते किल ॥ अत एव खलो दोषान् । साधुभ्यः संप्रयच्छति ॥ ८ ॥ समर्पिताः कस्य न तेन
दोषा । हगाद्रुणा वा न हृताः खलेन ॥ तथापि दोषैर्न वियुज्यतेऽसौ । स्पृष्टोऽपि नैकेन गुणेन
चित्रं ॥ ९ ॥ न सूरिः सुराणां गुरुर्नासुराणां । पुराणां रिपुर्नापि नापि स्वयंभूः ॥ खला एव वि·
ज्ञाश्चरित्रे खलानां । भुजंगप्रयातं भुजंगा विदंति ॥ १० ॥ उपकृतं बहु यत्र किमुच्यते । सुजनता
प्रथिता भवता चिरं ॥ विदधदीदृशमेव सदा सुखे । सुखितमास्स्व ततः शरदां शतं ॥ ११ ॥ न वि·
ना परवादेन । हृष्टो भवति दुर्जनः ॥ काकः सर्वरसान् पीत्वा । विनाऽमेध्यं न तृप्यति ॥ १२ ॥
शाठ्यं ह्रीमति वर्ण्यते व्रतरुचौ दंभः शुचौ कैतवं । शूरे निर्घृणता ऋजौ विमतिता दैन्यं प्रियाला·
पिनि ॥ तेजस्विन्यवलिप्तता मुखरता वक्तर्यशक्तिः स्थिरे । तत्को नाम गुणो भवेदिह सतां यो दु·
र्जनैर्नांकितः ॥ १५ ॥ दुर्जनदूषितमनसां । पुंसां सुजनेऽपि नास्ति विश्वासः ॥ बालः पयसा दग्धो
। दध्यपि फूत्कृत्य भक्षयति ॥ १६ ॥ विकारमुपकारोऽपि । कुरुते समयं विना ॥ अकालोपस्थिता
वृष्टि—र्महारिष्टाय जायते ॥ १७ ॥ दुर्जनः कालकूटं च । ज्ञातमेतौ सहोदरौ ॥ अग्रजन्मानुजन्मा
च । न विद्मः कतरोऽनयोः ॥ १८ ॥ कर्णौ भोगभृतां मूर्ध्नि । साधुनाधत्त यद्विधिः ॥ सकर्णः को·

ऽनुकुर्वीत । मर्मवित्कर्म तादृशं ॥ १९ ॥ नौश्च दुर्जनजिह्वा च । प्रतिकूलविसर्पिणी ॥ जनप्रतार-
णायैव । दारुणा केन निर्मिता ॥ २० ॥ नद्याश्रयस्थितिरियं तव कालकूट । केनोत्तरोत्तर विशेष-
पदप्रतिष्ठा ॥ प्रागर्णवस्य हृदये वृषलक्षणोऽथ । कंठे पुनर्वससि वाचि ततः खलानां ॥ २१ ॥ वृ-
श्चिकानां भुजंगानां । दुर्जनानां च वेधसा ॥ विभज्य नियतं न्यस्तं । विषं पुछे मुखे हृदि ॥२२॥
निर्माय खलजिह्वाग्रं । सर्वप्राणहरं नृणां ॥ चकार किं वृथा शस्त्र—विषवह्नीन् प्रजापतिः ॥ २३ ॥
अहो खलभुजंगस्य । कोऽप्यपूर्वो वधक्रमः ॥ अन्यस्य लगति श्रोत्रे । प्राणैरन्यो विमुच्यते ॥२४॥
अहो राहुः कथं क्रूर—श्चंद्रं गिलति मुंचति ॥ गिलंति न हि मुंचंति । दुर्जनाः सज्जनव्रजं ॥२५॥
आजन्मसिद्धं कौटिल्यं । हलस्य च खलस्य च ॥ सोढुं ययोर्मुखाक्षेप—मलमेकैव सा क्षमा ॥२६॥
आखुभ्यः किं खलैर्ज्ञातं । खलेभ्यः किमथाखुभिः ॥ येषां परगृहोत्खाता—दन्यत्कर्म न विद्यते ॥
॥ २७ ॥ अकलितपरस्वरूपः । स्वकमपि दोषं परस्थितं वेत्ति ॥ नाविस्थितस्तटस्था—नचलानपि
विचलतो मनुते ॥ २८ ॥ जिह्वैकैव सतामुभे फणभृतां स्रष्टुश्चतस्रो मता—स्ता सप्तैव विभावसो-
र्नियमिताः षट् कार्त्तिकेयस्य च ॥ पौलस्त्यस्य दशैव ताः फणिपतेर्जिह्वासहस्रद्वयं । जिह्वा लक्ष-

हस्तकोटिनियमो नो दुर्जनानां मुखे ॥ २९ ॥ दूरादुच्छ्रितपाणिरार्द्रनयनः प्रोद्घाटितार्धासनो । गा-
ढालिंगनतत्परः प्रियकथालापेषु बद्धादरः ॥ अंतर्गूढविषो बहिर्मधुमयश्चातीवमायापटुः । को नामा-
यमपूर्वनाटकविधिर्यः शिक्षितो दुर्जनः ॥ ३० ॥ मुखेऽतिमृष्टादवसानदुष्टात् । खलादपथ्यादिव शंक-
नीयं ॥ आनंदनीयं प्रथमं सुतीक्ष्णा—दंतेऽनुकूलादगदादिवार्यात ॥ ३१ ॥ दुर्जनैरुच्यमानानि ।
वचांसि मधुराण्यपि ॥ अकालिकुसुमानीव । संत्रासं जनयत्यलं ॥ ३२ ॥ वने प्रज्ज्वलितो वह्नि—
र्दहन् मूलानि रक्षति ॥ समूलमुन्मूलयति । जलौघो मृदुशीतलः ॥ ३३ ॥ चारुता परदारार्थे । ध-
नं लोकोपतप्तये ॥ प्रभुत्वं साधुनाशाय । खले खलतरा गुणाः ॥ ३४ ॥ विद्या विवादाय धनं म-
दाय । प्रज्ञाप्रकर्षः परवंचनाय ॥ अत्युन्नतिर्लोकपराभवाय । सतामहो सर्वमिदं गुणाय ॥ ३५ ॥

अथ नीचसंबंधिसूक्तानि—अन्यस्मादपि लब्धोष्मा । नीचः प्रायेण दुस्सहो भवति ॥ न त-
पति रविरिह तादृ—ग्यादृगयं वालुकानिकरः ॥ १ ॥ प्राकृत एव प्रायो । मृदुषु तरां दीप्यते न स-
त्पुरुषाः ॥ वारिणि तैलं विकसति । निर्मुक्तं स्त्यायते सर्पिः ॥ २ ॥ विघटयितुमेव नीचः । परका-
र्यं वेत्ति न प्रसाधयितुं ॥ पातयितुमेव शक्ति—र्नाखोरुद्धर्तुमुतत्रिपिटिं ॥ ३ ॥ धूमः पयोधरपदं क-

थमप्यवाप्य । वर्षांबुभिः शमयति ज्वलनस्य तेजः ॥ दैवादवाप्य ननु नीचजनः प्रतिष्ठां । प्रायः स्वबंधुजनमेव तिरस्करोति ॥ ४ ॥ यथा गजपतिः श्रांत—श्छायार्थी वृक्षमाश्रितः ॥ विश्रम्य तं द्रुमं हंति । तथा नीचः स्वमाश्रयं ॥ ५ ॥ न टिट्टिडो गच्छति हंसलीलया । न वायसः कूजति कोकिलस्वनं ॥ यवाः प्रकीर्णा न भवंति शालय—स्तथैव नीचः प्रकृतिं न मुंचति ॥ ६ ॥ रे पक्षिन्नागतस्त्वं कुत इह सरसस्तत्कियद्भो विशालं । किं मध्दाम्नोऽपि बाढं तदिह शठ महापाप मा ब्रूहि मिथ्या ॥ इत्थं कूपोदरस्थः शपति तटगतं दर्दुरो राजहंसं । नीचः स्वल्पेन गर्वीभवति हि विषया नापरे येन दृष्टाः ॥ ७ ॥ नाहं काको महाराज । हंसोऽहं विमले जले ॥ नीचसंगप्रबंधेन । मृत्युरेव न संशयः ॥ ८ ॥ अज्ञातकुलशीलस्य । न दातव्यः प्रतिश्रयः ॥ मत्कुणस्य च दोषेण । हता मंदविसर्पिणी ॥ ९ ॥ लूणह घुणह कुमाणुसह । एह तिहुं इक्कुसहावु ॥ जहीं करइ अवासड । तहिं तहिं भंजइ ठाउ ॥ १० ॥

अथोपकारसूक्तानि—शास्त्रं बोधाय दानाय । धनं धर्माय जीवितं ॥ वपुः परोपकाराय । धारयंति मनीषिणः ॥ १ ॥ कियती पंचसहस्री । कियती लक्षाथ कोटिरपि कियती ॥ औदार्योन्नतम-

नसां । रत्नवती वसुमती कियती ॥ २ ॥ क्षेत्रं रक्षति चंचा । सौधं वोलत्पटी कणान् रक्षा ॥ दंता-
त्ततृणं प्राणान् । नरेण किं निरुपकारेण ॥ ३ ॥ अस्ति जलं जलराशौ । तत्किं क्षारं विधीयते
तेन ॥ लघुरपि वरं स कूपो । यत्राकंठं जनः पिबति ॥ ४ ॥ हे हेलाजितबोधिसत्व वचसां किं वि-
स्तरैस्तोयधे । नास्ति त्वत्सदृशः परः परहिताधाने गृहीतव्रतः ॥ तृष्यत्पांथजनोपकारघटनावैमुख्यल-
ब्धायशो । भारप्रोद्वहने करोषि कृपया साहायकं यन्मरोः ॥ ५ ॥ वरं करीरो मरुमार्गवर्त्ती । यः
पांथसार्थं कुरुते कृतार्थं ॥ कल्पद्रुमैः किं कनकाचलस्थैः । परोपकारप्रतिलंभदुःस्थैः ॥ ६ ॥ अर्काः
किं फलसंचयेन भवतां किं वः प्रसूनैर्नवैः । किंवा भूरिलताचयेन महता गोत्रेण किं भूयसा ॥ ये-
षामेकतमो बभूव स पुनर्नैवास्ति कश्चित्कुले । छायायामुपविश्य यस्य पथिकास्तृप्तिं फलैः कुर्वते ॥
॥ ७ ॥ जातः कूर्मः स एकः पृथुभुवनभरायार्पितं येन पृष्ठं । श्लाघ्यं जन्म ध्रुवस्य भ्रमति नियमितं
यत्र तेजस्विचक्रं ॥ संजातव्यर्थपक्षाः परहितकरणे नोपरिष्टान्न वाधो । ब्रह्मांभोडुंबरांतर्मशकवदपरे
जंतवो जातनष्टाः ॥ ८ ॥ विद्वांसः कति योगिनः कति गुणैर्वैदग्ध्यभाजः कति । प्रौढा मत्तकरींद्र-
कुंभदलने वीराः प्रसिद्धाः कति ॥ स्वाचाराः कति सुंदराः कति कति प्राज्यप्रतिष्ठा वराः । किं त्वे-

को विरलः परोपकरणे यस्यास्ति शक्तिः सदा ॥ ९ ॥ ते तावत्कृतिनः परार्थघटकाः स्वार्थाविरोधेन
ये । ये च स्वार्थपरार्थसाधनपरास्तेऽमी नरा मध्यमाः ॥ तेऽमी मानुषराक्षसाः परहितं यैः स्वार्थतो
हन्यते । ये तु घ्नंति निरर्थकं परहितं ते के न जानीमहे ॥ १० ॥ किमत्र चित्रं यत्संतः । परानु-
ग्रहकारिणः ॥ न हि स्वदेहशांत्यर्थं । जायंते चंदनद्रुमाः ॥ ११ ॥ यद्यपि चंदनविटपी । विधिना
फलकुसुमवर्जितो विहितः ॥ निजवपुषैव परेषां । तथापि संतापमपहरति ॥ १२ ॥ न चंद्रमाः प्रत्यु-
पकारलिप्सया । करोति भाभिः कुमुदावबोधनं ॥ स्वभाव एवोन्नतचेतसामयं । परोपकारव्यसनं हि
जीवितं ॥ १३ ॥ किं चंद्रेण महोदधेरुपकृतं दूरेऽपि संतिष्ठता । वृद्धौ येन विवर्धते व्रजति च क्षीणे
क्षयं सागरः ॥ आः ज्ञातं परकार्यनिश्चितधियां कोऽपि स्वभावः सतां । स्वैरंगैरपि येन यांति तनु-
तां दृष्ट्वा परं दुःखितं ॥ १४ ॥ यदमी दशंति दशना । रसना तत्स्वादसुखमवाप्नोति ॥ प्रकृतिरियं
धवलानां । क्लिश्यंति यदन्यकार्येषु ॥ १५ ॥ लंघयति भुवनमुदधे—र्मध्यं प्रविशति वहति जलभारं
॥ जीमूतः सत्वहिताः । किं न कुर्वंति चान्यार्थे ॥ १६ ॥ यः परप्रीतिमाधातुं । भस्मतामपि गच्छति
॥ विवेकिमानिना पश्य । धात्रा सोऽप्यगुरुः कृतः ॥ १७ ॥ पिबंति नद्यः स्वयमेव नांभः । स्वादंति

परोपकाराय सतां विभूतिः ॥ १८ ॥ ध·
न स्वादुफलानि वृक्षाः ॥ पयोमुचां किं क्वचिदस्ति शस्यं । परोपकाराय सतां विभूतिः ॥ १८ ॥ भुवनविदितमेतत
वलयति समग्रं चंद्रमा जीवलोकं । किमिति निजकलंकं नात्मसंस्थं प्रमार्ष्टि ॥ भुवनविदितमेतत
प्रायशः सज्जनानां । परहितनिरतानामादरो नात्मकार्ये ॥ १९ ॥ कस्यादेशात्क्षपयति तमः सप्तस·
प्तिः प्रजानां । छायां कर्तुं पथि विटपिनामंजलिः केन बद्धः ॥ अभ्यर्थ्यंते नवजलमुचः केन वा वृ·
ष्टिहेतो—र्जात्यैवैते परहितविधौ साधवो बद्धकक्षाः ॥ २० ॥ परोपकारः सुकृतैकमूलं । परोपकारः
कमलादुकूलं ॥ परोपकारः प्रभुताविधाता । परोपकारः शिवसौख्यदाता ॥ २१ ॥ रवेरेवोदयः शस्यः
। कोऽन्येषामुदये ग्रहः ॥ न तमांसि न तेजांसि । येषामभ्युदये सति ॥ २२ ॥ युक्तोऽसि भुवन·
भारे । मा वक्रां कंधरां कृथाः शेषः ॥ त्वय्येकस्मिन् दुःखिनि । सुखितानि भवंति भुवनानि ॥२३॥
बंधनस्थोऽपि मातंगः । परेषां भरणक्षमः ॥ काकः स्वच्छंदचारोऽपि । स्वोदरेणापि दुःस्थितः ॥२४॥
छदमंतरुपकृतये । प्रकृतिचला यावदस्ति संपदियं ॥ विपदि नियतो दयायां । पुनरुपकर्तुं कुतोऽव·
सरः ॥ २५ ॥ अपकारिण्यपि प्रायः । स्वच्छाः स्युरुपकारिणः ॥ मारकेभ्योऽपि कल्याणं । रसराजः
प्रयच्छति ॥ २६ ॥ बाधाविधायिनामपि । विदधत्युपकारममलात्मानः ॥ बद्धमपि किं न जनयति ।

सौरभ्यं केतकीकुसुमं ॥ २७ ॥ उपकारः कृतोऽल्पोऽपि । सतां याति न विस्मृतिं ॥ करंबभोजनं बध्ध्वा । कुमारनृपतेरिव ॥ २८ ॥ परोपकारः क्रियते । स्वस्य कल्याणहेतवे ॥ ततोऽपि यद्यकल्याणं । कल्याणात्तत्परं पदं ॥ २९ ॥ उपकृत्युपकुर्वाणा । ध्रियंते धरया न के ॥ अपकृत्युपकारी य—स्तेनेयं ध्रियते धरा ॥ ३० ॥ प्रत्युपकुर्वन्न बह्वपि । न भवति पूर्वोपकारिणां तुल्यः ॥ एकोऽनुकरोति कृतं । निष्कारणमेव कुरुतेऽन्यः ॥ ३१ ॥ अकृतज्ञा असंख्याताः । संख्याताः कृतवेदिनः ॥ कृतोपकारिणः स्तोका । द्विताः स्वेनोपकारिणः ॥ ३२ ॥ न तं पश्यामि सौमित्रे । कृते प्रतिकरोति यः ॥ सर्वस्यापि कृतार्थस्य । मतिरन्या प्रवर्त्तते ॥ ३३ ॥ न हि मे पर्वता भारा । न मे भाराश्च सागराः ॥ कृतघ्नाश्च महाभारा । भारा विश्वासघातकाः ॥ ३४ ॥

अथ मैत्रीसंबंधिसूक्तानि—ईश्वरेण समं प्रीति—र्न मे लक्ष्मण रोचते ॥ गतस्य गौरवं नास्ति । आगते च धनक्षयः ॥ १ ॥ सहजागराण सहसुअणाणं । सहहरिससोअवंताणं ॥ नयणाणं व धन्नाणं । आजम्मं निच्चलं पिम्मं ॥ २ ॥ परोक्षे कार्यहर्तारं । प्रत्यक्षे प्रियवादिनं ॥ वर्जयेत्तादृशं मित्रं । विषकुंभं पयोमुखं ॥ ३ ॥ किं गुणैस्तस्य कर्त्तव्यं । चेतसो योऽभिरोचते ॥ किं गु-

कृतज्ञस्वामिसंसर्ग—मुत्तमस्त्रीपरिग्रहं ॥ कुर्वन्मि-
णैस्तस्य कर्त्तव्यं । चेतसो यो न रोचते ॥ ४ ॥ उत्तमैः सह सांगत्यं । पंडितैः सह सत्कथाः ॥ अलुब्धैः
त्रमलोभं च । नरो नैवावसीदति ॥ ५ ॥ ददाति प्रतिगृह्णाति । गुह्यमाख्याति पृच्छति ॥ भुंक्ते भो-
सह मित्रत्वं । कुर्वाणो नावसीदति ॥ ८ ॥ पापान्निवारयति योजयते हिताय । गुह्यं निगूहति गु-
जयति चैवं । षड्विधं प्रीतिलक्षणं ॥ ९ ॥ आपद्गतं च न जहाति ददाति काले । सन्मित्रलक्षणमिदं प्रवदंति संतः ॥
णान् प्रकटीकरोति ॥ क्षीरे तापमवेक्ष्य तेन पयसा ह्या-
॥ १० ॥ क्षीरेणात्मगतोदकाय हि गुणा दत्ताः पुरा तेऽखिलाः । युक्तं तेन जलेन शाम्यति स-
त्मा कृशानौ हुतः ॥ गंतुं पावकमुन्मनस्तदभवद् दृष्ट्वा तु मित्रापदं । सज्जने भवति नेतरे जने ॥ छिन्नता-
तां मैत्री भवेदीदृशी ॥ ११ ॥ आदिमध्यनिधनेषु सौहृदं । शरावनौनदीवृक्ष—समा प्रीतिः प्रशस्यते ॥
च्छितसुमृष्टतापितं । नान्यभावमुपयाति कांचनं ॥ १२ ॥ आरंभगुर्वी क्षयिणी क्रमेण । लघ्वी पुरा वृद्धि-
प्रासादवेणीदंडेक्षु—समा प्रीतिर्न युज्यते ॥ १३ ॥ छायेव मैत्री खलसज्जनानां ॥ १४ ॥ अस्माभिश्चतु-
मती च पश्चात ॥ दिनस्य पूर्वार्धपरार्धभिन्ना । भ्राम्यद्भिर्न स कोऽपि निस्तुषगुणो दृष्टो विशिष्टो जनः ॥ यस्या-
रंबुराशिरसनाविच्छेदिनीं मेदिनीं ।

ग्रे चिरसंचितानि हृदये दुःखानि सौख्यानि च । व्याख्याय क्षणमेकमर्धमथवा निःश्वस्य विश्राम्यते ॥ १५ ॥ वारंवारमियं चिंता । वारंवारमियं कथा ॥ युष्माकं दर्शनोत्कंठा । चक्षुषोः केन पूर्यते ॥ ॥ १६ ॥ मृगा मृगैः संगमनुव्रजंति । गावश्च गोभिस्तुरगास्तुरंगैः ॥ मूर्खाश्च मूर्खैः सुधियः सुधीभिः । समानशीलव्यसनेषु सौख्यं ॥ १७ ॥ प्रकटयति हृदयदाहं । पुरुषः प्रायेण सज्जने मिलिते ॥ ग्रावा दग्धः सलिले । पतिते पुनरुद्गमत्यग्निं ॥ १८ ॥ सुहृदि निरंतरचित्ते । गुणवति भृत्ये प्रियासु नारीषु ॥ स्वामिनि सौहृदयुक्ते । निवेद्य दुःखं सुखीभवति ॥ १९ ॥ व्याधितस्यार्थहीनस्य । देशांतरगतस्य च ॥ नरस्य शोकदग्धस्य । सुहृद्दर्शनमौषधं ॥ २० ॥ अमृतं शिशिरे वह्नि—रमृतं क्षीरभोजनं ॥ अमृतं राजसन्मान—ममृतं प्रियदर्शनं ॥ २१ ॥ अदृष्टे दर्शनोत्कंठा । दृष्टे विरहभीरुता ॥ नाऽदृष्टेन न दृष्टेन । भवता लभ्यते सुखं ॥ २२ ॥ ययोरांतरजा प्रीति—स्तयोर्दूरस्थयोरपि ॥ सा न मंदायते क्वापि । रविराजीवयोरिव ॥ २३ ॥ दूरस्थोऽपि न दूरस्थो । यो वै मनसि वर्त्तते ॥ हृदयादथ निष्क्रांतः । समीपस्थोऽपि दूरगः ॥ २४ ॥ क्व सरसि वनखंडं पंकजानां क्व सूर्यः । क्व च कुमुदवनानां कौमुदीबंधुरेषः ॥ चिरपरिचयबद्धा प्रायशः सज्जनानां । न हि विचलति

मैत्री दूरतोऽपि स्थितानां ॥ २५ ॥ अत एव हि नेच्छंति । साधवः सत्समागमं ॥ यद्वियोगासिलून·
स्य । मनसो नास्ति भेषजं ॥ २६ ॥ वरमसौ दिवसो न पुनर्निशा । ननु निशैव वरं न पुनर्दिनं
॥ उभयमप्यथवा व्रजतु क्षयं । प्रियतमेन न यत्र समागमः ॥ २७ ॥ नित्यं ब्रह्म यथा स्मरंति मु·
नयो हंसा यथा मानसं । यद्वच्च स्फुटसल्लकीवनयुतां ध्यायंति रेवां गजाः ॥ तद्वद्दर्शनलालसाः प्र·
तिदिनं स्नेहं स्मरामो वयं । धन्यः कोऽपि स वासरोऽत्र भविता यत्रावयोः संगमः ॥ २८ ॥ एह्या·
गच्छ समाविशासनमिदं प्रीतोऽस्मि ते दर्शनात् । का वार्त्ता पुरि दुर्बलोऽसि च कथं कस्माच्चिरं दृ·
श्यसे ॥ इत्येवं गृहमागतं प्रणयिनं ये भाषयंत्यादरा—त्तेषां युक्तमशंकितेन मनसा गंतुं गृहे सर्व·
दा ॥ २९ ॥ मा गा इत्यपमंगलं व्रज इति स्नेहेन हीनं वच—स्तिष्ठेति प्रभुता यथारुचि कुरुष्वे·
त्यप्युदासीनता ॥ किं ते सांप्रतमाचराम उचितं तस्योपचारं वचः । प्रस्थानोन्मनसीत्यभीष्टमनुजे
वक्तुं न शक्ता वयं ॥ ३० ॥ वरं प्राणपरित्यागो । मा वियोगो भवादृशां ॥ प्राणा जन्मांतरेऽपि
स्यु—र्न भवंति भवादृशाः ॥ ३१ ॥ आर्त्तिशोकभयत्राणं । प्रीतिविश्रंभभाजनं ॥ केन रत्नमिदं सृ·
ष्टं । मित्रमित्यक्षरद्वयं ॥ ३२ ॥

अथ गुणसंबंधिसूक्तानि—नाऽगुणी गुणिनं वेत्ति । गुणी गुणिषु मत्सरी ॥ गुणी च गुणरागी च । विरलः सरलो जनः ॥ १ ॥ गुणिनामगुणानां च । दृश्यते महदंतरं ॥ हाराः कंठगताः स्त्रीणां । नूपुराणि च पादयोः ॥ २ ॥ गुणिनः समीपवर्ती । पूज्यो लोकस्य गुणविहीनोऽपि ॥ विमलेक्षणप्रसंगा—दंजनमाप्नोति काणाक्षि ॥ ३ ॥ गुणाः कुर्वंति दूतत्वं । दूरेऽपि वसतां सतां ॥ केतकीगंधमाघ्रातुं । स्वयमायांति षट्पदाः ॥ ४ ॥ दोषाः किं नाम कुर्वंति । गुणापहृतचेतसां ॥ केतकीकुसुमं भृंगः । खंड्यमानोऽपि सेवते ॥ ५ ॥ दोषमपि गुणवति जने । दृष्ट्वा गुणरागिणो न खिद्यंते ॥ प्रीत्यैव शशिनि पतितं । पश्यति लोकः कलंकमपि ॥ ६ ॥ विषमस्थितोऽपि गुणवान् । स्फुटतरमाभाति निजगुणैरेव ॥ जलनिधिजलमध्येऽपि हि । दीप्यंते किं न रत्नानि ॥ ७ ॥ आस्तां गुणिनस्तावद् । भूषिताऽशेषभूतलाः ॥ येषां गुणानुरागोऽस्ति । सांप्रतं तेऽपि दुर्लभाः ॥ ८ ॥ नीरसान्यपि रोचंते । कर्पासस्य फलानि नः ॥ येषां गुणमयं जन्म । परेषां गुह्यगुप्तये ॥ ९ ॥ गुणा यत्र न पूज्यंते । का तत्र गुणिनां गतिः ॥ नग्नक्षपनकग्रामे । रजकः किं करिष्यति ॥ १० ॥ स्थानभ्रंशेन भ्रंशेत । गुणिनां गौरवं क्वचित ॥ मूर्धानमधिरोप्यंते । किं न पुष्पाणि पार्थिवैः ॥ ११ ॥

गुणा गौरवमायांति । न महत्योऽपि संपदः ॥ पूर्णेंदुः किं तथा वंद्यो । निष्कलंको यथा कृशः ॥
॥ १२ ॥ गौरवाय गुणा एव । न तु ज्ञातेयमंबरः ॥ वानेयं गृह्यते पुष्प—ङ्गजस्त्यज्यते मलः ॥
॥ १३ ॥ गता ये पूज्यत्वं प्रकृतिपुरुषा एव खलु ते । जना दोषत्यागे जनयत समुत्साहमतुलं ॥
न साधूनां क्षेत्रं न च भवति नैसर्गिकमिदं । गुणान् यो यो धत्ते स स भवति साधुर्भजत तान् ॥
॥ १४ ॥ पंकान्वयमपि सरसिज—मधिरोहति देवदेवमूर्धानं ॥ पश्यत गुणमहिमानं । चरणादपि
भृज्यते पंकः ॥ १५ ॥ गुणाः सर्वत्र पूज्यंते । पितृवंशो निरर्थकः ॥ वासुदेवं नमस्यंति । वसुदेवं
न ते नराः ॥ १६ ॥ गुणैरुत्तुंगतां याति । नोच्चैरासनसंस्थितः ॥ सुमेरुशिखरस्थोऽपि । काकः किं
गरुडायते ॥ १७ ॥ यत्पयोधरभारेषु । मौक्तिकैर्निहितं पदं ॥ तदाह्लादितरंध्राणां । गुणानामेव जृं-
भितं ॥ १८ ॥ गुणैरुत्तुंगतां याति । न तु जातिप्रभावतः ॥ क्षीरोदधिसमुत्पन्नः । कालकूटः किमु-
त्तमः ॥ १९ ॥ गुणहीणा जे पुरिसा । कुलस्स गव्वं वहंति ते मूढा ॥ वंसूप्पन्नेवि धणू । गुणहीणे
नहि टंकारो ॥ २० ॥ गौरवं लभते लोके । नीचजातोऽपि सद्गुणैः ॥ सौरभ्यात्कस्य नाभीष्टा । क-
स्तूरी मृगनाभिजा ॥ २१ ॥ जन्मस्थानं न खलु महिमा वर्णनीयो न वर्णो । दूरे शोभा वपुषि

निहिता पंकशंकां करोति ॥ यद्यप्येवं सकलसुरभिद्रव्यगंधापहारी । को जानीते परिमलगुणं वस्तुकस्तूरिकायाः ॥ २२ ॥ कौशेयं कृमिजं सुवर्णमुपलाद्दूर्वापि गोलोमतः । पंकात्तामरसं शशांक उदधेरिंदीवरं गोमयात् ॥ काष्ठादग्निरहेः फणादपि मणिर्गोपित्ततो रोचना । प्राकाश्यं स्वगुणोदयेन गुणिनो गच्छंति किं जन्मना ॥ २३ ॥ अंतर्धृतगुणैरेव । परेषां स्थीयते हृदि ॥ अर्थं समर्थयंत्येनं । समग्रं कुसुमस्रजः ॥ २४ ॥ कष्टान्यसहमानानां । गुणारोपः कुतो भवेत् ॥ वेधबंधं सहित्वैव । पुष्पालिर्गुणमालिनी ॥ २५ ॥ गुणेष्वनादरं भ्रातः । पूर्णश्रीरपि मा कृथाः ॥ संपूर्णोऽपि घटः कूपे । गुणछेदात्पतत्यधः ॥ २६ ॥ गुणेष्वेवादरः कार्यः । किमाटोपैः प्रयोजनं ॥ विक्रीयंते न घंटाभि—र्गावः क्षीरविवर्जिताः ॥ २७ ॥ संधयेत्सरला सूची । वक्रा छेदाय कर्त्तरी ॥ अतो विमुच्य वक्रत्वं । गुणानेव समाश्रय ॥ २८ ॥ गुणानामेव दौरात्म्या—द्धुरि धूर्यो नियोज्यते ॥ असंजातकिणस्कंधः । सुखं तिष्ठति गौर्गले ॥ २९ ॥

अथ विवेकसूक्तानि—गुणा गुणज्ञेषु गुणीभवंति । ते निर्गुणं प्राप्य भवंति दोषाः ॥ सुस्वादतोयप्रभवा हि नद्यः । समुद्रमासाद्य भवंत्यपेयाः ॥ ३० ॥ स्वयं स्वगुणविस्तारा—दूर्णनाभः

पतत्यधः ॥ तमेव संवरन्नूनं । पदमुच्चैर्विगाहते ॥ ३१ ॥ औचित्यमेकमेकत्र । गुणानां कोटिरेकतः
॥ विषायते गुणग्राम । औचित्यपरिवर्जितः ॥ ३२ ॥ स्वतो न कश्चन गुरु—र्लघुर्वापि न कश्चन
॥ उचिताऽनुचिताचार—वश्ये गौरवलाघवे ॥ ३३ ॥ विवेकिनमनुप्राप्य । गुणा यांति समुन्नतिं ॥
सुतरां रत्नमाभाति । चामीकरनियोजितं ॥ ३४ ॥ निर्विवेकं नरं नारी । प्रायोऽन्यापि न कांक्षति ॥
किं पुनः श्रीरियं देवी । पुरुषोत्तमवल्लभा ॥ ३५ ॥ आकारैरिंगितैर्गत्या । चेष्टया भाषणेन च ॥
नेत्रवक्त्रविकारैश्च । लक्ष्यतेंतर्गतं मनः ॥ ३६ ॥ पांडित्यमेतदेव हि । यत्परगुणचित्तवृत्तिविज्ञानं ॥
शास्त्रविदोऽप्यमतज्ञाः । कस्याऽप्रियतां न गच्छंति ॥ ३७ ॥ परिछेदो हि पांडित्यं । तदायत्ता विभूत-
यः ॥ अपरिछेदकर्तॄणा—मापदो हि पदे पदे ॥ ३८ ॥ उदीरितोऽर्थः पशुनापि गृह्यते । हयाश्च
नागाश्च वहंति नोदिताः ॥ अनुक्तमप्यूहति पंडितो जनः । परेंगितज्ञानफला हि बुद्धयः ॥ ३९ ॥

अथ सत्संगसूक्तानि—संगतिर्यादृशी तादृक् । ख्यातिरायाति वस्तुनः ॥ रजनिर्ज्योत्स्नया ज्यो-
त्स्नी । तमसा च तमस्विनी ॥ १ ॥ लोकरूढिरिह प्रौढि—रस्तु वस्तु यथा तथा ॥ दधि मंगलधौ-
रेयं । न पुनर्दुग्धमप्यधुः ॥ २ ॥ क्षणादसारं सारं वा । वस्तु लोकैः परीक्ष्यते ॥ निश्चिनोति म-

रुत्तूर्णं । तुलोच्चयशिलोच्चयौ ॥ ३ ॥ गुणवज्जनसंसर्गा—द्याति स्वल्पोऽपि गौरवं ॥ पुष्पमालानुषंगेन । सूत्रं शिरसि धार्यते ॥ ४ ॥ गुणिनः समीपवर्त्ती । पूज्यो लोकस्य गुणविहीनोऽपि ॥ विमलेक्षणप्रसंगा—दंजनमाप्नोति काणाक्षि ॥ ५ ॥ नीचोऽपि परिगृहीतो । महात्मभिः परमुपैति परभागं ॥ स्फटिकोपलोऽपि रक्तः । कुशलैर्माणिक्यमनुकुरुते ॥ ६ ॥ उन्नतघनमध्यगतं । निर्गुणमपि वहति सुरधनुः शोभां ॥ तेन महद्भिः सार्धं । संवासः प्रार्थ्यते सद्भिः ॥ ७ ॥ आस्तां तावद्दिगंतप्रथितसुयशसां संगतिः सज्जनानां । तैः सार्द्धं वैरयोगोऽप्यतिशयमहतीमुन्नतिं संतनोति ॥ लोके कस्यागमिष्यत श्रुतिपथमवपुर्वक्रशेषोऽपि राहु—स्त्रैलोक्यख्यातधाम्नोर्यदि रविशशिनोर्वैरतां नाकरिष्यत ॥ ८ ॥ महिमानं महीयांसं । संगः सूते महात्मनां ॥ मंदाकिनीमृदो वंद्या—स्त्रिवेदीवेदिनामपि ॥ ९ ॥ इह भुवि कलयति लघुरपि । महतां संगेन कमपि महिमानं ॥ लंघयति शशिनि लीनः । खमंडलं हेलया हरिणः ॥ १० ॥ संगः सर्वात्मना त्याज्यः । स चेत्त्यक्तुं न शक्यते ॥ स सद्भिः सह कर्तव्यः । संतः संगस्य भेषजं ॥ ११ ॥ चंदनं शीतलं लोके । चंदनादपि चंद्रमाः ॥ चंद्रचंदनयोर्मध्ये । शीतलः साधुसंगमः ॥ १२ ॥ संसारकटुवृक्षस्य । द्वे फले ह्यमृतोपमे ॥

एकं हि चक्षुरमलं सहजो विवेक—स्तद्वद्भिरेव
सुभाषितरसास्वादः । संगतिः सुजने जने ॥१३॥ एकं हि चक्षुरमलं सहजो विवेक—स्तद्वद्भिरेव सह संवसतिर्द्वितीयं ॥ एतद्द्वयं भुवि न यस्य स तत्वतोंध—स्तस्यापमार्गचलने खलु कोऽपराधः॥
॥ १४ ॥ संतप्तायसि संस्थितस्य पयसो नामापि न ज्ञायते । मुक्ताकारतया तदेव नलिनीपत्रस्थितं
राजते ॥ स्वातौ सागरशुक्तिसंपुटगतं तज्जायते मौक्तिकं । प्रायेणाधममध्यमोत्तमगुणः संवासतः सं-
भवेत् ॥ १५ ॥ एके भेजुर्यतिकरगतास्तुंबकाः पात्रलीलां । गायंत्यन्ये सरसमधुरं शुद्धवंशे विलग्नाः
॥ एके केचिद् ग्रथितसुगुणा दुस्तरं तारयंति । तेषां मध्ये ज्वलितहृदया रक्तमन्ये पिबंति ॥ १६ ॥
एकहवल्लीजायए । पिबह तुंबाए अंतरं गुरुअं ॥ एके पिअंति रुहिरं । दुत्तरं तारइ पुणो अन्ने॥
॥ १७ ॥ माताप्येका पिताप्येको । मम तस्य च पक्षिणः ॥ अहं मुनिभिरानीतः । स च नीतो ग-
वाशनैः ॥ १८॥ गवाशनानां स गिरः शृणोति । अहं च राजन् मुनिपुंगवानां ॥ प्रत्यक्षमेतद्भवता-
पि दृष्टं । संसर्गजा दोषगुणा भवंति ॥ १९ ॥ धर्मं ध्वस्तदयो यशश्च्युतनयो वित्तं प्रमत्तः पुमान् ।
काव्यं निःप्रतिभस्तपः शमदयाशून्योऽल्पमेधाः श्रुतं ॥ वस्त्वालोकमलोचनश्चलमना ध्यानं च वांछ-
त्यसौ । यः संगं गुणिनां विमुच्य विमतिः कल्याणमाकांक्षति ॥ २० ॥ संसारवासखिन्नानां । ति-

स्रो विश्रामभूमयः ॥ अपत्यं च कलत्रं च । साधुसंगतिरेव च ॥ २१ ॥ धनाढ्यता राजकुलेऽभिमा-
नं । प्रियानुकूला तनया विनीताः ॥ धर्मे मतिः सज्जनसंगतिश्च । स्वर्गाः षडेते जगतीतलांतः ॥
॥ २२ ॥ नैवास्वाद्यरसायनस्य रसनात् पीयूषपानाच्च नो । नो साम्राज्यपदासितः प्रतिदिनं नो पुत्र-
लाभादपि ॥ नैवाऽयत्नसुरत्नलाभवशतो नैवान्यतोऽप्यस्ति सा । या संप्रीतिरुदेति सज्जननृणां सद्भिः
समं संगमात ॥ २३ ॥

अथ कुसंगसंबंधिसूक्तानि—स्पृशंति जंतुः प्रायेण । स्वभावमनुजीविनः ॥ लवणोदन्वतस्तीर-
द्रुवोऽपि क्षारकुक्षयः ॥ १ ॥ कुसंगतेः कुबुद्धिः स्या—त्कुबुद्धेः कुप्रवर्तनं ॥ कुप्रवृत्तेर्भवेज्जंतु—र्भा-
जनं दुःखसंततेः ॥ २ ॥ दुर्वृत्तसंगतिरनर्थपरंपराया । हेतुः सतां भवति किं वचनीयमेतत् ॥ लंके-
श्वरो हरति दाशरथेः कलत्रं । प्राप्नोति बंधमथ दक्षिणसिंधुनाथः ॥ ३ ॥ तेजोमयोऽपि पूज्योऽपि ।
घातिना नीचधातुना ॥ लोहेन संगतो वह्निः । सहते घनताडनं ॥ ४ ॥ सर्वथा नष्टनैकट्यं । वि-
पदे वृत्तशालिनां ॥ वारिहारिघटीपार्श्वे । ताड्यते पश्य झल्लरी ॥ ५ ॥ वरं पर्वतदुर्गेषु । भ्रांतं वन-
चरैः सह ॥ न मूर्खजनसंसर्गः । सुरेंद्रभवनेष्वपि ॥ ६ ॥ महतामप्यहो दैवाद् । दुर्वारा नीचसंग-

तिः ॥ कर्पूरस्य कथं न स्या—दंगारेण समं रतिः ॥ ७ ॥ खलसंगेण विमुक्कं । पिछह तिल्लेण जं फलं पत्तं ॥ सव्वंगपहाणंगं । पहुसीसं पाविय्यं तेण ॥ ८ ॥ खलसंगो विशेषेण । दोषाय कलुषात्मनां ॥ किं न पानीयसंपर्का—ल्लोहं स्यान्मलसंकुलं ॥ ९ ॥ भवति किल विनाशो दुर्जनैः संगताना—मिति वदति जनोऽयं सर्वमेतद्धि मिथ्या ॥ भुजगफणमणीनां किं निमित्तं हि राजन् । न भवति विषदोषो निर्विषो वा भुजंगः ॥ १० ॥ असाधुः साधुर्वा भवति खलु जात्यैव पुरुषो । न संगाद्दौर्जन्यं न च सुजनता कस्यचिदपि ॥ समाने संबंधे मणिभुजगयोर्जन्मजनिते । मणिर्नाहेर्दोषान् स्पृशति न च सर्पो मणिगुणान् ॥ ११ ॥ जो जस्स खलु सहावो । सज्जणसंगेण सो तहा चेव ॥ बाणो धणुहेवि ठिओ । गुणसहिओ तहवि मारेइ ॥ १२ ॥ निजकर्मकरणदक्षः । सह वसति दुरात्मनापि निरपायं ॥ किं न कुशलेन रसना । दशनानामंतरे चरति ॥ १३ ॥

अथ योग्यसंबंधिसूक्तानि—स्वभावो नोपदेशेन । शक्यते कर्तुमन्यथा ॥ वक्रमेव शुनः पुच्छं । षण्मासनलिकाधृतं ॥ १ ॥ यस्य न सहजो बोधः । पुरतः किं तस्य भाषितैर्बहुभिः ॥ नलिकाधृतमपि सततं । न भवति सरलं शुनः पुच्छं ॥ २ ॥ चूतांकुरकवलनतोऽपि । कोकिलः स्वनति चा·

रु न तु काकः ॥ योग्यस्य जायते खलु । हेतोरपि नेतरस्य गुणः ॥ ३ ॥ वक्तुर्विशेषमधुरैर्वचनप्र-
पंचै—श्चित्तं भिनत्ति रसिकस्य न चेतरस्य ॥ पीयूषपूररचितैरपि चंद्रपादै—र्यें चंद्रकांतमणयः ख-
लु ते द्रवंति ॥ ४ ॥ ननु सर्वविदोऽपि राजते । न वचः श्रोतरि बोधवर्जिते ॥ परिणेतरि नष्टलो-
चने । सफलः किं नु कलत्रविभ्रमः ॥ ५ ॥ विचारसारा अपि शास्त्रवाचो । मूढैर्गृहीता विफला भ-
वंति ॥ मितंपचग्राम्यदरिद्रदाराः । कुर्वंत्युदारा अपि किं सुजात्यः ॥ ६ ॥ विहितः सतामनुमौ । म-
हतामपि भवति निष्फलो यत्नः ॥ व्रजति रसातलमंभो । जलदेन मरुस्थलीनिहितं ॥ ७ ॥ अलं-
कारोऽप्यलंकर्तु—मलं स्थाने नियोजितः ॥ श्रियं हारस्रजः कंठे । दधते न तु पादयोः ॥ ८ ॥
उपदेशो हि मूर्खाणां । प्रकोपाय न शांतये ॥ पयःपानं भुजंगानां । केवलं विषवृद्धये ॥ ९ ॥
कुग्गहगहगहिआणं । मूढो जो देइ धम्मउवएसं ॥ सो चम्मासीकुक्कुर—वयणंमि खवेइ कप्पूरं॥१०॥

अथ कलासंबंधिसूक्तानि—बावत्तरिकलकुसला । पंडिअपुरिसा अपंडिआ चेव ॥ सव्वकला-
णं पवरं । जे धम्मकलं न याणंति ॥ १ ॥ तं रूवं जत्थ गुणा । तं मित्तं जं निरंतरं वसणे ॥ सो
अत्थो जो हत्थे । तं विन्नाणं जहिं धम्मो ॥ २ ॥ वरमेका कला रम्या । ययाधश्क्रियते भवः ॥ ब-

ह्रीभिरपि किं ताभिः । कलंको यासु वर्धते ॥ ३ ॥ रज्जोरप्युपरि भ्रमंति कतिचित्तीव्राभियोगान्नरा —स्तर्कव्याकरणादिशास्त्रनिपुणाऽभ्यासस्तु शिल्पं कियत ॥ यद्गाढो विनयः श्रुतं यदमलं यद्वीतरागं मनो । यत्सौजन्यमखंडितं स हि गुणस्तेनैव विद्वान् पुमान् ॥ ४ ॥ विज्ञानं किमु नोर्णनाभसुगृ· हीशुष्माशिहंसादिषु । द्वंद्वं किं न लुलायलावककुले मेषे तथा कुर्कुटे ॥ गीतं नृत्यकला च केकि· पिकयोर्वाक्सारिकाकीरयोः । सद्धर्माचरणे परं चतुरता यद्यस्ति मानुष्यके ॥ ५ ॥

अथ पुस्तकारंभादिसंबंधिसूक्तानि—जन्मात्मको धारणया विमुक्तो । वक्तुं न वेत्ता विशदारु· वादी ॥ प्रस्तावपर्षद्विषयाऽनवेदी । व्याख्याधिकार्येष जनः कथं स्यात् ॥ १ ॥ तथाविधः शास्त्रपरि· श्रमो मे । नैवास्ति जाड्यं च तथा प्रकामं ॥ तथापि यत्पुस्तकवाचनाय । प्रवृत्तिरेतद्गुरुपारतंत्र्यं ॥ ॥ २ ॥ तथा च यत्किंचिदहं ब्रुवेऽहं । सोऽयं प्रभावः सकलः प्रभूणां ॥ यद्दर्दुरो नृत्यति नागमौ· लौ । नान्यो नरेंद्रादिह हेतुरस्ति ॥ ३ ॥ अज्ञानभावानुपयोगबुद्धि—वैकल्यमौढ्यात्स्मृतिसंभ्रमाद्यत् ॥ उत्सूत्रमत्राभिहितं सुशास्त्रे । मिथ्यास्तु मे संघपुरस्तदस्तु ॥ ४ ॥ क्षंतव्यमेतद्बहुनिर्मिता नो । यत्साधुसाध्व्योरनुवंदनेह ॥ सुश्रावकाणां सदुपासकानां । नतौ न च प्रोच्यत धर्मलाभः ॥ ५ ॥ द्र·

रु न तु काकः ॥ योग्यस्य जायते खलु । हेनोरपि नेतरस्य गुणः ॥ ३ ॥ वक्तुर्विशेषमधुरैर्वचनप्रपंचै—श्चित्तं भिनत्ति रसिकस्य न चेतरस्य ॥ पीयूषपूररचितैरपि चंद्रपादै—र्यै चंद्रकांतमणयः खलु ते द्रवंति ॥ ४ ॥ ननु सर्वविदोऽपि राजते । न वचः श्रोतरि बोधवर्जिते ॥ परिणेतरि नष्टलोचने । सफलः किं नु कलत्रविभ्रमः ॥ ५ ॥ विचारसारा अपि शास्त्रवाचो । मूढैर्गृहीता विफला भवंति ॥ मितंपचग्राम्यदरिद्रदाराः । कुर्वत्युदारा अपि किं सुजात्यः ॥ ६ ॥ विहितः सतामनुमौ । महतामपि भवति निष्फलो यत्नः ॥ व्रजति रसातलमंभो । जलदेन मरुस्थलीनिहितं ॥ ७ ॥ अलंकारोऽप्यलंकर्तु—मलं स्थाने नियोजितः ॥ श्रियं हारस्त्रजः कंठे । दधते न तु पादयोः ॥ ८ ॥ उपदेशो हि मूर्खाणां । प्रकोपाय न शांतये ॥ पयःपानं भुजंगानां । केवलं विषवृद्धये ॥ ए ॥ कुग्गहगहगहिआणं । मूढो जो देइ धम्मउवएसं ॥ सो चम्मासीकुक्कुर—वयणंमि खवेइ कप्पूरं ॥ १० ॥

अथ कलासंबंधिसूक्तानि—बावत्तरिकलकुसला । पंम्डिअपुरिसा अपंडिआ चेव ॥ सवकलाणं पवरं । जे धम्मकलं न याणंति ॥ १ ॥ तं रूवं जत्र गुणा । तं मित्तं जं निरंतरं वसणे ॥ सो अत्रो जो हत्ते । तं विन्नाणं जहिं धम्मो ॥ २ ॥ वरमेका कला रम्या । ययाधश्छ्रियते भवः ॥ ब-

ह्वीभिरपि किं ताभिः । कलंको यासु वर्धते ॥ ३ ॥ रज्जोरप्युपरि भ्रमंति कतिचित्तीव्राभियोगान्नरा —स्तर्कव्याकरणादिशास्त्रनिपुणान्यासस्तु शिल्पं कियत ॥ यद्वाढो विनयः श्रुतं यदमलं यद्वीतरागं मनो । यत्सौजन्यमखंभ्मितं स हि गुणस्तेनैव विद्वान् पुमान् ॥ ४ ॥ विज्ञानं किमु नोर्णनाभसुगृ· हीशुष्माशिहंसादिषु । द्वंद्वं किं न लुलायलावककुले मेषे तथा कुर्कुटे ॥ गीतं नृत्यकला च केकि· पिकयोर्वाक्सारिकाकीरयोः । सद्धर्माचरणे परं चतुरता यद्यस्ति मानुष्यके ॥ ५ ॥

अथ पुस्तकारंभादिसंबंधिसूक्तानि—जडात्मको धारणया विमुक्तो । वक्तुं न वेत्ता विशदारु· वादी ॥ प्रस्तावपर्षद्विषयाऽनवेदी । व्याख्याधिकार्येष जनः कथं स्यात् ॥ १ ॥ तथाविधः शास्त्रपरि· श्रमो मे । नैवास्ति जाड्यं च तथा प्रकामं ॥ तथापि यत्पुस्तकवाचनाय । प्रवृत्तिरेतद्गुरुपारतंत्र्यं ॥ ॥ २ ॥ तथा च यत्किंचिदहं ब्रुवेऽहं । सोऽयं प्रभावः सकलः प्रभूणां ॥ यद्दर्दुरो नृत्यति नागमौ· लौ । नान्यो नरेंद्रादिह हेतुरस्ति ॥ ३ ॥ अज्ञानभावानुपयोगबुद्धि—वैकल्यमौढ्यात्स्मृतिसंभ्रमाद्यत् ॥ उत्सूत्रमत्राभिहितं सुशास्त्रे । मिथ्यास्तु मे संघपुरस्तदस्तु ॥ ४ ॥ क्षंतव्यमेतद्बहुनिर्मिता नो । यत्साधुसाध्व्योरनुवंदनेह ॥ सुश्रावकाणां सदुपासकानां । नतौ न च प्रोच्यत धर्मलाभः ॥ ५ ॥ द्र·

व्यादिसाफल्यमतुल्यचेतो—नैर्मल्यवात्सल्यगुणान् दधानाः ॥ ञव्या ञवंत्यागमवाचनायां । त्रिधा प्रवृत्ताः शुञशाजिञाजः ॥ ६ ॥ समृद्धिवृद्धिप्रञुताप्रतिष्ठा । जिनत्वमन्येऽपि मनोज्ञभावाः ॥ हितोपदेशश्रवणे भवंति । ते चात्र शास्त्रे सकला ञवंति ॥ ७ ॥ सुख्खसायरो ख्यपारो । ख्याउं थोवं जीख्या ख्य दुम्मेहा ॥ तं किंपि सिख्खिख्यव्वं । जं कज्जकरं च थोवं च ॥ ८ ॥

ख्यथागमसंबंधिसूक्तानि—लेखयंति नरा धन्या । ये जैनागमपुस्तकान् ॥ ते सर्वं वाङ्मयं ज्ञात्वा । सिद्धिं यांति न संशयः ॥ १ ॥ ये लेखयंति जिनशासनपुस्तकानि । व्याख्यानयंति च पठंति च पाठयंति ॥ शृण्वंति रक्षणविधौ च समाद्रियंते । ते मर्त्यदेवशिवशर्म नरा लञंते ॥ २ ॥ विलेख्य कल्पं विधिना श्रुतस्य । विधाय पूजां शुञधीः शृणोति ॥ कृतोपवासो हृदि शुद्धञावो । ञवे तृतीये लञते ञवांतं ॥ ३ ॥ सव नइणं जा हुज्ज । वालुख्या सवउदहिणं जं सलिलं ॥ इत्तोवि ख्यणंतगुणो । ख्यबो एगस्स सुत्तस्स ॥ ४ ॥ न ते नरा दुर्गतिमाप्नुवंति । न मूकतां नैव जडस्वञावं ॥ नैवांधतां बुद्धिविहीनतां च । ये लेखयंत्यागमपुस्तकानि ॥ ५ ॥ बालस्त्रीमंदमूर्खाणां । नृणां चारित्रकांक्षिणां ॥ ख्यनुग्रहार्थं तत्वज्ञैः । सिद्धांतः प्राकृतः कृतः ॥ ६ ॥ लद्धूं ख्यलद्धपुव्वं ।

अथ विद्योद्यमसंबंधिसूक्तानि—जइविहु दिवसेण पयं । धरेइ पक्केण वा सिलोगद्धं ॥ उज्जोअं मा मुंचसु । जइ इच्छसि सिक्खिउं नाणं ॥ १ ॥ नानाशास्त्रसुभाषितामृतरसैः श्रोत्रोत्सवं कुर्वतां । येषां यांति दिनानि पंडितजनव्यायामखिन्नात्मनां ॥ तेषां जन्म च जीवितं च सफलं तैरेव भूर्भूषिता । शेषैः किं पशुवद्विवेकविकलैर्भूभारभूतैर्नरैः ॥ २ ॥ पठ पुत्र किमालस्य—मपठो भारवाहकः ॥ पठितः पूज्यते लोके । पठ पुत्र दिने दिने ॥ ३ ॥ काव्यशास्त्रविनोदेन । कालो गच्छति धीमतां ॥ व्यसनेन हि मूर्खाणां । निद्रया कलहेन वा ॥ ४ ॥ गृहीत इव केशेषु । मृत्युना धर्ममाचरेत ॥ अजरामरवत्प्राज्ञो । विद्यामर्थं च चिंतयेत् ॥ ५ ॥ गतेऽपि वयसि ग्राह्या । विद्या सर्वात्मना भृशं ॥ यदीह फलदा न स्यात् । सुलभा स्यादन्यजन्मनि ॥ ६ ॥ संतोषस्त्रिषु कर्त्तव्यः । स्वदारे भोजने धने ॥ त्रिषु चैव न कर्त्तव्यो । दाने चाध्ययने तपे ॥ ७ ॥ श्लोकार्धं श्लोकपादं वा । समस्तं श्लोकमेव वा ॥ अवंध्यं दिवसं कुर्या—द्दानाध्ययनकर्मसु ॥ ८ ॥ पदेनैकेन मेधावी । पदानां विंदते शतं ॥ मूर्खः पदसहस्रेण । पदमेकं न विंदते ॥ ९ ॥ पंडितेषु गुणाः सर्वे । मूर्खे दोषास्तु केवलं ॥ तस्मान्मूर्खसहस्रेण । प्राज्ञ एको न लभ्यते ॥ १० ॥ अनभ्यासे

विषं शास्त्र—मजीर्णे भोजनं विषं ॥ विषं गोष्टी दरिद्रस्य । वृद्धस्य तरुणी विषं ॥ ११ ॥ विषं कुप· ठिता विद्या । विषं व्याधिरुपेक्षितः ॥ विषं गोष्टी दरिद्रस्य । वृद्धस्य तरुणी विषं ॥ १२ ॥ श्रद्धा· घोषौ यदि स्यातां । प्रज्ञया किं प्रयोजनं ॥ तावेव यदि न स्यातां । प्रज्ञया किं प्रयोजनं ॥ १३ ॥ विनयेन विद्या ग्राह्या । पुष्कलेन धनेन वा ॥ अथवा विद्यया विद्या । चतुर्थो नैव विद्यते ॥ १४ ॥ क्रमेण शैलः सलिलेन भिद्यते । क्रमेण वाल्मीकशिखाऽभिवर्धते ॥ क्रमेण विद्या विनयेन प्राप्य· ते । क्रमेण मोक्षस्तपसाधिगम्यते ॥ १५ ॥ आरोग्यबुद्धिविनयोद्यमशास्त्ररागाः । पंचांतराः पठन· सिद्धिगुणा भवंति ॥ आचार्यपुस्तकनिवाससहायद्रव्यं । बाह्याश्च पंच पठनं परिवर्धयंति ॥ १६ ॥ ज्ञानाधिकैरहरहः परिघृष्यमाणाः । प्रायेण मंदमतयोऽपि भवंति तद्ज्ञाः ॥ संसर्गजं गुणमवाप्य हि पाटलाया—स्तोयं कपालशकलान्यपि वासयंति ॥ १७ ॥ सुखार्थी त्यज्यते विद्यां । विद्यार्थी त्य· ज्यते सुखं ॥ सुखार्थिनः कुतो विद्या । विद्यार्थिनः कुतः सुखं ॥ १८ ॥ अलसो मंदबुद्धिश्च । सु· खितो व्याधितस्तथा ॥ निद्रालुः कामुकश्चेति । षडेते शास्त्रवर्जिताः ॥ १९ ॥ आलस्येन हता वि· द्या । आलापेन कुलस्त्रियः ॥ अल्पबीजं हतं क्षेत्रं । हतसैन्यमनायकं ॥ २० ॥

अथ विद्याप्रभावसूक्तानि—विद्वत्वं च नृपत्वं च । नैव तुल्यं कदाचन ॥ स्वदेशे पूज्यते राजा । विद्वान् सर्वत्र पूज्यते ॥ १ ॥ लक्ष्मीः सुवर्णरूपापि । पाणिपादेषु योज्यते ॥ भूषयत्यंतरात्मानं । वर्णरूपापि भारती ॥ २ ॥ न हीनो धनहीनोऽपि । धनं वा कस्य सुस्थिरं ॥ विद्याहीनस्तु यः कोऽपि । स हीनः सर्ववस्तुषु ॥ ३ ॥ यद्यपि बहु नाधीषे । तथापि भव संस्कृते प्रयोगज्ञः ॥ येन हि यातं जातं । सकलं शकलं सकृत सकृत ॥ ४ ॥ श्लोकः सुश्लोकतामेति । पठितस्तद्विदां पुरः ॥ अज्ञाने श्रोतरि प्राप्ते । लूनः श्लोकस्तदा भवेत ॥ ५ ॥ शुनः पुच्छमिव व्यर्थं । विना ज्ञानं हि जीवितं ॥ न गुह्यरक्षणे दक्षं । न दंशमशकापहं ॥ ६ ॥ रूपयौवनसंपन्ना । विशालकुलसंभवाः ॥ विद्याहीना न शोभंते । निर्गंधा इव किंशुकाः ॥ ७ ॥ यद्यपि भवति विरूपो । वस्त्रालंकारवेषपरिहीणः ॥ सज्जनसभां प्रविष्टः । शोभामुद्वहति सद्विद्यः ॥ ८ ॥ पुरुषस्य परं विभूषणं । परमार्थं श्रुतमेव नापरं ॥ प्रशमो विनयश्च तत्फलं । प्रकटं नीतिविदः प्रचक्षते ॥ ९ ॥ वरं दरिद्रोऽपि विचक्षणो नरो । नैवार्थयुक्तोऽपि सुशास्त्रवर्जितः ॥ विचक्षणः कार्पटिकोऽपि शोभते । न चापि मूर्खः कनकैरलंकृतः ॥ १० ॥ विद्या नाम नरस्य रूपमधिकं प्रछन्नगुप्तं धनं । विद्या भोगकरी यशःसुखक-

री विद्या गुरूणां गुरुः ॥ विद्या बंधुजनो विदेशगमने विद्या परं दैवतं । विद्या राजसु पूज्यते न
हि धनं विद्याविहीनः पशुः ॥ ११ ॥ शास्त्रोपस्कृतशब्दसुंदरगिरः शिष्यप्रदेयागमा । विख्याताः क-
वयो वसंति विषये यस्य प्रभोर्निर्धनाः ॥ तज्जाड्यं वसुधाधिपस्य सुधियो ह्यर्थं विनापीश्वराः । कु-
त्स्याः स्युः कुपरीक्षका हि मणयो यैरर्घतः पातिताः ॥ १२ ॥ हर्तुर्याति न गोचरं किमपि शं पुष्णा-
ति सर्वात्मना—प्यर्थिभ्यः प्रतिपाद्यमानमनिशं वृद्धिं परां गच्छति ॥ कल्पांतेष्वपि न प्रयाति निध-
नं विद्याख्यमंतर्धनं । येषां तान्प्रति मानमुज्झत जनाः कस्तैः सह स्पर्धते ॥ १३ ॥ लक्षणेन विना
विद्या । निर्मलापि न शोभते ॥ युवती रूपसंपन्ना । दरिद्रस्येव वेश्मनि ॥ १४ ॥ सुलभानि हि
शास्त्राणि । गुरूपदेशस्तु दुर्लभः ॥ शिरो वहति पुष्पाणि । गंधं जानाति नासिका ॥ १५ ॥ कु-
लीनाः सुलभाः प्रायः । सुलभाः शास्त्रशालिनः ॥ सुशीलाश्चापि सुलभा । दुर्लभा भुवि तात्वि-
काः ॥ १६ ॥ शास्त्रावगाहपरिघट्टनतत्परोऽपि । नैवाऽबुधः समधिगच्छति वस्तुतत्वं ॥ नानाप्रकाररस-
मध्यगतापि दर्वी । स्वादं रसस्य सुचिरादपि नैव वेत्ति ॥ १७ ॥ यस्य नास्ति स्वयं प्रज्ञा । शास्त्रं
तस्य करोति किं ॥ लोचनाभ्यां विहीनस्य । दर्पणः किं करिष्यति ॥ १८ ॥ पापठीति सकलं च

वाङ्मयं । बोबुधीति न च किंचिदप्यसौ ॥ रत्नभारमिव गर्दभः सदा । वावहीति किल बोभुजीति वाङ्मयं । बोबुधीति न च किंचिदप्यसौ ॥ १९ ॥ परीक्षा सर्वशास्त्रेषु । विधातव्या विचक्षणैः ॥ न कुशास्त्रप्रणीतं हि । कर्त्तव्यं विषभक्षणं ॥ २० ॥

अथ मूर्खसंबंधिसूक्तानि—अज्ञः सुखमाराध्यः । सुखतरमाराध्यते विशेषज्ञः ॥ ज्ञानलवदुर्विदग्धं । ब्रह्मापि तं नरं न रंजयति ॥ १ ॥ यदा किंचिदज्ञोऽहं गज इव मदांधः समभवं । तदा सर्वज्ञोऽस्मीत्यभवदवलिप्तं मम मनः ॥ यदा किंचित्किंचिद्बुधजनसकाशादवगतं । तदा मूर्खोऽस्मीति ज्वर इव मदो मे व्यपगतः ॥ २ ॥ शक्यो वारयितुं जलेन दहनश्छत्रेण सूर्यातपो । नागेंद्रो निशितांकुशेन समदं दंडेन गोगर्दभौ ॥ व्याधिर्भेषजसंग्रहेण विविधैर्मंत्रप्रयोगैर्विषं । सर्वस्यौषधमस्ति शास्त्रविहितं मूर्खस्य नास्त्यौषधं ॥ ३ ॥ खंडेखंडेषु पांडित्यं । क्रयक्रीतं च मैथुनं ॥ भोजनं च पराधीनं । तिस्रः पुंसां विडंबनाः ॥ ४ ॥ गुरूणां विद्यया विद्वान् । पितृवित्तेन वित्तवान् ॥ शूरः परसहायेन । नंदिष्यति कियच्चिरं ॥ ५ ॥ परकाव्यैः कवित्वं य—द्गर्वो याचितभूषणैः ॥ या च याचनया वृत्ति—स्तदेतन्मूर्खलक्षणं ॥ ६ ॥ दैवखातं च वदन—मात्मायत्तं च वाङ्मयं ॥ श्रोतारः सं-

ति सर्वत्र । निर्लज्जः को न पंडितः ॥ ७ ॥ खादन्न गच्छामि हसन्न जल्पे । दत्तं न शोचामि कृतं नु मन्ये ॥ द्वाभ्यां तृतीयो न भवामि राज—न्नस्मादृशा नैव भवंति मूर्खाः ॥ ८ ॥ मूर्खत्वं च सखे ममापि रुचितं यस्मिन् यदष्टौ गुणा । निश्चिंतो बहुभोजनोऽत्रपमना नक्तं दिवा शायिकः ॥ कार्याकार्यविचारणांधबधिरो मानापमाने समः । प्रायेणामयवर्जितो दृढवपुर्मूर्खः सुखं जीवति ॥९॥ प्रकाशिताशेषनिजास्यरंध्रा । लघुत्वमायांति जडा हसंतः ॥ किंचिच्चलच्चारुकपोलमूलाः । संतो न दंतानुपदर्शयंति ॥ १० ॥

अथ भारतीसंबंधिसूक्तानि—पातु वो निकषग्रावा । मतिहेम्नः सरस्वती ॥ प्राज्ञेतरपरिच्छेदं । वचसैव करोति या ॥ १ ॥ श्रुतसंपदः कवीना—मुक्तिभिरेव प्रकाशतां यांति ॥ सिंधोरपारजलभर—मुद्गारा एव कथयंति ॥ २ ॥ अव्यये व्ययमायाति । व्यये याति सुविस्तरं ॥ अपूर्वः कोऽपि भंडार—स्तव भारति दृश्यते ॥ ३ ॥ लक्ष्मीर्दधातु विद्वेषं । भारत्यां जन्मराजसूः ॥ दृश्यते त्वद्व्ययः कोशः । साक्षाद्ब्राह्म्या न तु श्रियः ॥ ४ ॥ जयत्यन्यः स कोऽप्यध्वा । भारत्याः खमिवामलः ॥ क्षुण्णोऽपि विबुधैर्बाढं । विभात्यक्षुण्ण एव यः ॥ ५ ॥

अथ कविसंबंधिसूक्तानि—अकवित्वं परस्ताव—त्कलंकः पाठशालिनां ॥ अन्यकाव्यैः कवित्वं तु । कलंकस्यापि चूलिका ॥ १ ॥ संत्येके बहुलालापाः । कवयो बालका इव ॥ अप्रगल्भाः पदन्यासे । जननीरागहेतवः ॥ २ ॥ स्तोकापि वंद्यते लोकैः । कस्यापि सुकवेः कृतिः ॥ कलेव हरिणांकस्य । स्फुरंती नवरेखया ॥ ३ ॥ किं कवेस्तस्य काव्येन । किं कांडेन धनुष्मतः ॥ परस्य हृदये लग्नं । न घूर्णयति यच्छिरः ॥ ४ ॥ किं तेन किल काव्येन । मृद्यमानस्य यस्य ताः ॥ उदधेरिव नायांति । रसामृतपरंपराः ॥ ५ ॥ यन्नेत्रैस्त्रिभिरीक्षते न गिरिशो नाष्टाभिरप्यब्जभूः । स्कंदो द्वादशभिर्न वा न मघवा चक्षुःसहस्रेण वा ॥ संभूयापि जगत्त्रयस्य नयनैर्द्रष्टुं न यत्पार्यते । प्रत्याहृत्य दृशौ समाहितधियः पश्यंति तत्पंडिताः ॥ ६ ॥ कवयः कालिदासाद्याः । कवयो वयमप्यमी ॥ पर्वते परमाणौ च । पदार्थत्वं व्यवस्थितं ॥ ७ ॥ उत्फुल्लगल्लैरालापाः । क्रियंते दुर्मुखैः सुखं ॥ जानाति हि पुनः सम्य—क्कविरेव कवेः श्रमं ॥ ८ ॥ शमिनां दमिनां यमिनां । विवादतो जायते तपोलोपः ॥ सति सामर्थ्ये तस्मा—द्वयं विवादं न कुर्मोऽत्र ॥ ९ ॥ मातुः पुरो मातुलवर्णनं त—ल्लंकानगर्यां लहरीयकं तत् ॥ तत्प्राभृतं लावणमंबुराशेः । सतां पुरो यद्वचसां विलासः ॥ १० ॥

विरला जाणंति गुणा । विरला विरयंति ललिअकवाइं ॥ विरला साहस्सधणा । परदुक्खे दुक्खिआ विरला ॥ ११ ॥

अथ क्रियासंबंधिसूक्तानि—उपदेष्टुं च वक्तुं च । जनः सर्वोऽपि पंडितः ॥ तदनुष्ठानकर्तृत्वे । मुनयोऽपि न पंडिताः ॥ १ ॥ पठकः पाठकश्चैव । ये चान्ये शास्त्रचिंतकाः ॥ सर्वे ते व्यसनिनो ज्ञेया । यः क्रियावान् स पंडितः ॥ २ ॥ अधीत्य शास्त्राणि भवंति मूर्खा । यस्तु क्रियावान् पुरुषः स विद्वान् ॥ संचिंत्यतामौषधमातुरं हि । न ज्ञानमात्रेण करोत्यरोगं ॥ ३ ॥ केचित्काव्यकलाकलापकुशलाः केचिच्च सल्लक्षणाः । केचित्तर्कवितर्कतत्वनिपुणाः केचिच्च सैद्धांतिकाः ॥ केचिन्निस्तुषबीजशास्त्रनिरता ज्योतिर्विदो भूरय—श्चारित्रैकविलासवासभवनाः स्वल्पाः पुनः सूरयः ॥ ॥ ४ ॥ कृते युगसहस्रेण । त्रेतायां हायनेन च ॥ द्वापरे यच्च मासेन । अहोरात्रेण तत्कलौ ॥५॥

अथ विनयसूक्तानि—विनयं राजपुत्रेभ्यः । पंडितेभ्यः सुभाषितं ॥ अनृतं द्यूतकारेभ्यः । स्त्रीभ्यः शिक्षेत कैतवं ॥ १ ॥ जितेंद्रियत्वं विनयस्य कारणं । गुणप्रकर्षो विनयादवाप्यते ॥ गुणाधिके पुंसि जनोऽनुरज्यते । जनानुरागप्रभवा हि संपदः ॥ २ ॥ केनांजितानि नयनानि मृगांग·

अथ कविसंबंधिसूक्तानि—अकवित्वं परस्ताव—त्कलंकः पाठशालिनां ॥ अन्यकाव्यैः कवित्वं तु । कलंकस्यापि चूलिका ॥ १ ॥ संत्येके बहुलालापाः । कवयो बालका इव ॥ अप्रगल्भाः पदन्यासे । जननीरागहेतवः ॥ २ ॥ स्तोकापि वंद्यते लोकैः । कस्यापि सुकवेः कृतिः ॥ कलेव हरिणांकस्य । स्फुरंती नवरेखया ॥ ३ ॥ किं कवेस्तस्य काव्येन । किं कांडेन धनुष्मतः ॥ परस्य हृदये लग्नं । न घूर्णयति यच्छिरः ॥ ४ ॥ किं तेन किल काव्येन । मृद्यमानस्य यस्य ताः ॥ उदधेरिव नायांति । रसामृतपरंपराः ॥ ५ ॥ यन्नेत्रैस्त्रिभिरीक्षते न गिरिशो नाष्टाभिरप्यब्जभूः । स्कंदो द्वादशभिर्न वा न मघवा चक्षुःसहस्रेण वा ॥ संभूयापि जगत्त्रयस्य नयनैर्द्रष्टुं न यत्पार्यते । प्रत्याहृत्य दृशौ समाहितधियः पश्यंति तत्पंडिताः ॥ ६ ॥ कवयः-कालिदासाद्याः । कवयो वयमप्यमी ॥ पर्वते परमाणौ च । पदार्थत्वं व्यवस्थितं ॥ ७ ॥ उत्फुल्लगल्लैरालापाः । क्रियंते दुर्मुखैः सुखं ॥ जानाति हि पुनः सम्य—क्कविरेव कवेः श्रमं ॥ ८ ॥ शमिनां दमिनां यमिनां । विवादतो जायते तपोलोपः ॥ सति सामर्थ्ये तस्मा—द्वयं विवादं न कुर्मोऽत्र ॥ ९ ॥ मातुः पुरो मातुलवर्णनं तल्लंकानगर्यां लहरीयकं तत् ॥ तत्प्राभृतं लावणमंबुराशेः । सतां पुरो यद्वचसां विलासः ॥ १० ॥

विरला जाणंति गुणा । विरला विरयंति ललिअकवाइं ॥ विरला साहस्सधणा । परदुक्खे दुक्खिआ
विरला ॥ ११ ॥
अथ क्रियासंबंधिसूक्तानि—उपदेष्टुं च वक्तुं च । जनः सर्वोऽपि पंडितः ॥ तदनुष्टानकर्तृ·
त्वे । मुनयोऽपि न पंडिताः ॥ १ ॥ पठकः पाठकश्चैव । ये चान्ये शास्त्रचिंतकाः ॥ सर्वे ते व्यस·
निनो ज्ञेया । यः क्रियावान् स पंडितः ॥ २ ॥ अधीत्य शास्त्राणि भवंति मूर्खा । यस्तु क्रियावान्
पुरुषः स विद्वान् ॥ संचिंत्यतामौषधमातुरं हि । न ज्ञानमात्रेण करोत्यरोगं ॥ ३ ॥ केचित्काव्यक·
लाकलापकुशलाः केचिच्च सल्लक्षणाः । केचित्तर्कवितर्कतत्वनिपुणाः केचिच्च सैद्धांतिकाः ॥ केचि·
न्निस्तुषबीजशास्त्रनिरता ज्योतिर्विदो भूरय—श्चारित्रैकविलासवासभवनाः स्वल्पाः पुनः सूरयः ॥
॥ ४ ॥ कृते युगसहस्रेण । त्रेतायां हायनेन च ॥ द्वापरे यच्च मासेन । अहोरात्रेण तत्कलौ ॥५॥
अथ विनयसूक्तानि—विनयं राजपुत्रेभ्यः । पंडितेभ्यः सुभाषितं ॥ अनृतं द्यूतकारेभ्यः ।
स्त्रीभ्यः शिक्षेत कैतवं ॥ १ ॥ जितेंद्रियत्वं विनयस्य कारणं । गुणप्रकर्षो विनयादवाप्यते ॥ गुणा·
धिके पुंसि जनोऽनुरज्यते । जनानुरागप्रभवा हि संपदः ॥ २ ॥ केनांजितानि नयनानि मृगांग·

नानां । को वा करोति रुचिरांगरुहान् मयूरान् ॥ कश्चोत्पलेषु दलसंचयमातनोति । को वा करोति विनयं कुलजेषु पुंसु ॥३॥ विणए सिस्स परिक्खा । सुहडपरिक्खा य होइ संगामे ॥ वसणे मित्तपरिक्खा । दाणपरिक्खा य दुक्काले ॥ ४ ॥

अथ बुद्धिसंबंधिसूक्तानि—षट्पदः पुष्पमध्यस्थं । यथा सारं समुद्धरेत ॥ तथा सर्वेषु कार्येषु । सारं गृह्णाति बुद्धिमान् ॥ १ ॥ एकं हन्यान्न वा हन्या—दिषुर्मुक्तो धनुष्मता ॥ बुद्धिर्बुद्धिमता मुक्ता । राष्ट्रं हन्यात्सराजकं ॥ २ ॥ श्रियं प्रसूते विपदं रुणद्धि । श्रेयांसि सूते मलिनं प्रमार्ष्टि ॥ संस्कारयोगाच्च परं पुनीते । शुद्धा हि बुद्धिः किल कामधेनुः ॥ ३ ॥ वयोऽनुरूपाः प्रायेण । प्राणिनां हृदि बुद्धयः ॥ रसालस्य कषायाम्ल—मधुराः क्रमशो रसाः ॥४॥ उत्पन्नपरितापस्य । बुद्धिर्भवति यादृशी ॥ तादृशी यदि पूर्वं स्या—त्कस्य स्यान्न समीहितं ॥ ५ ॥ दैवं रुष्टं चपेटां किं । विश्राणयति जातुचित् ॥ किं तु तां दुर्मतिं दत्ते । यया रुलति रंकवत् ॥ ६ ॥

अथ मिथ्यात्वसंबंधिसूक्तानि—मिथ्यात्वं परमो रोगो । मिथ्यात्वं परमं विषं ॥ मिथ्यात्वं परमः शत्रु—र्मिथ्यात्वं परमं तमः ॥ १ ॥ अभालस्य भाले कथं पट्टबंधः । अकर्णे अनेत्रे कथं गी-

तंनृत्यं ॥ अकंठस्य कंठे कथं पुष्पमाला । अपादस्य पादे कथं मे प्रणामः ॥ २ ॥ देवो रागी य·
तिः संगी । धर्मः प्राणिनिशुंभनं ॥ मूढदृष्टिरिति ब्रूते । युक्तायुक्तविवेचकः ॥ ३ ॥ वधो धर्मो ज·
लं तीर्थं । गौर्नमस्या गुरुर्गृही ॥ अग्निर्देवो द्विकः पात्रं । येषां तैः कोऽस्तु संस्तवः ॥ ४ ॥ जन्म-
न्येकत्र दुःखाय । रोगो ध्वांतं रिपुर्विषं ॥ अपि जन्मसहस्रेषु । मिथ्यात्वमचिकित्सितं ॥ ५ ॥ न
सर्वज्ञा न नीरागाः । शंकरब्रह्मविष्णवः ॥ प्राकृतेभ्यो मनुष्येभ्यो—ऽप्यसमंजसवृत्तयः ॥ ६ ॥ स्त्री·
संगः काममाचष्टे । द्वेषं चायुधसंग्रहः ॥ व्यामोहं चाक्षसूत्रादि—रशौचं च कमंडलुः ॥ ७ ॥ गौरी
रुद्रस्य सावित्री । ब्रह्मणः श्रीर्मुरद्विषः ॥ शचींद्रस्य रवेरन्ना—देवी दक्षात्मजा विधोः ॥ ८ ॥ तारा
बृहस्पतेः स्वाहा । वह्नेश्चंतोभुवो रतिः ॥ धूमोर्णा श्राद्धदेवस्य । दारा एवं दिवौकसां ॥ ९ ॥ मु·
शलोदूखले चुल्ली । देहली पिप्पलो जलं ॥ निंबोऽर्कश्चापि यैः प्रोक्ता । देवास्तैः केऽत्र वर्जिताः॥
॥ १० ॥ यादृशो जायते देव—स्तादृशी धूपवेदिका ॥ ईशस्य यादृशी मूर्त्तिः । प्रणामस्तादृगेव
हि ॥ ११ ॥ आलमालेश्वरो देव । आलमालेन पूज्यते ॥ आलमालस्य धर्मस्य । आलमालं फलं
भवेत ॥ १२ ॥ न मांसभक्षणे दोषो । न मद्ये न च मैथुने ॥ प्रवृत्तिरेषा भूतानां । निवृत्तिस्तु म·

प्राप्यते यत्र निर्वाणं । सरागेणापि चे-
ह्याफला ॥ १३ ॥ प्रियादर्शनमेवास्तु । किमन्यैर्दर्शनांतरैः ॥ प्राप्यते यत्र निर्वाणं । सरागेणापि चे-
तसा ॥ १४ ॥ एतस्याः कुक्षिकोणे विदधति वसतिं कोटयः स्वर्गधाम्ना—मेतल्लांगूललग्नाः सपदि
तनुभृतो वैतरिण्यास्तरंति ॥ गामित्थं स्तौति विप्रः पथि पथि न वयं कारणं तत्र विद्मो । गृह्णंतीमा-
त्मगेहात्तृणमपि निबिडं ताडयंत्युग्रदंडैः ॥ १५ ॥ छागमेध्यमश्नाति विवेकशून्या । स्वनंदनं कामयते-
ऽतिसक्ता ॥ खुराग्रशृंगैर्विनिहंति जंतून् । गौर्वंद्यते केन गुणेन राजन् ॥ १६ ॥ पयःप्रदानसामर्थ्या
—द्वंद्या चेन्महिषी न किं ॥ विशेषो दृश्यते नास्या । महिषीतो मनागपि ॥ १७ ॥ स्थानं तीर्थ-
र्षिदेवानां । सर्वेषामपि गौर्यदि ॥ विक्रीयते दुह्यते च । हन्यते च ततः कथं ॥ १८ ॥ स्पर्शोऽमे-
ध्यभुजां गवामघहरो वंद्या विसंज्ञा द्रुमाः ॥ स्वर्गश्छागवधाद्धिनोति च पितॄन् विप्रोपभुक्ताशनं ॥
आप्तच्छद्मपराः सुराः शिखिहुतं प्रीणाति देवान् हविः । स्फीतं फल्गु च वल्गु च श्रुतिगिरां को वे-
त्ति लीलायितं ॥ १९ ॥ एषा तटाकमिषतो वरदानशाला । मत्स्यादयो रसवती प्रगुणा सदैव ॥
पात्राणि यत्र बकसारसचक्रवाकाः । पुण्यं कियद्भवति तत्तु वयं न विद्मः ॥ २० ॥ किं नंदी किं मु-
रारिः किमु रतिरमणः किं नलः किं कुबेरः । किं वा विद्याधरोऽसौ किमिह सुरपतिः किं विधुः किं

विधाता ॥ नायं नायं न चायं न खलु न हि न वा नापि नासौ न चैषः । क्रीडां कर्तुं प्रवृत्तः स्वयमिति च हले भूपतिर्भोजदेवः ॥ २१ ॥ सत्यं वप्रेषु शीतं शशिकरधवलं वारि पीत्वा प्रकामं । व्युच्छिन्नाशेषतृष्णाः प्रमुदितमनसः प्राणिसार्था भवंति ॥ शोषं नीते जलौघे दिनकरकिरणैर्यात्यनंता विनाशं । तेनोदासीनभावं व्रजति मुनिगणः कूपवप्रादिकार्ये ॥ २२ ॥

अथ यज्ञसंबंधिसूक्तानि—कर्माणि समिधः क्रोधा—दयस्तु पशवो मताः ॥ सत्यं यूपं समप्राणि—रक्षणं दक्षिणा पुनः ॥ १ ॥ इंद्रियाणि पशून् कृत्वा । वेदीं कृत्वा तपोमयीं ॥ अहिंसामाहुतिं कृत्वा । आत्मयज्ञं यजाम्यहं ॥ २ ॥ अंधे तमसि मज्जामः । पशुभिर्ये यजामहे ॥ हिंसानाम भवेद्धर्मो । न भूतो न भविष्यति ॥ ३ ॥ ( श्रीभोजपृष्टो धनपाल आह ) नाहं स्वर्गफलोपभोगतृषितो नाभ्यर्थितस्त्वं मया । संतुष्टस्तृणभक्षणेन सततं साधो न युक्तं तव॥ स्वर्गं यांति यदा त्वया विनिहता यज्ञे ध्रुवं प्राणिनो । यज्ञं किं न करोषि मातृपितृभिः पुत्रैस्तथा बांधवैः ॥ ४ ॥ ( किमेतदिति पृष्ट आह ) यूपं छित्वा पशून् हत्वा । कृत्वा रुधिरकर्दमं ॥ यद्येवं गम्यते स्वर्गे । नरके केन गम्यते ॥ ५ ॥ सत्यं यूपं तपो ह्यग्निः । प्राणाः समिधयो मताः ॥ अहिंसामाहुतिं दद्या—

देष यज्ञः सनातनः ॥ ६ ॥ इत्यादि, शुकसंवादोक्तं प्राह—तपोऽग्नौ जीवकुंभस्थे । दममारुतदीपि·
ते ॥ असत्कर्मसमित्क्षेपै—रग्निहोत्रं कुरूत्तम ॥ ७ ॥

अथ सम्यक्त्वसंबंधिसूक्तानि—मूलं बोधिद्रुमस्यैतद् । द्वारं पुण्यपुरस्य च ॥ पीठं निर्वाणह·
र्म्यस्य । निधानं सर्वसंपदां ॥ १ ॥ गुणानामेक आधारो । रत्नानामिव सागरः ॥ पात्रं चारित्रवित्त·
स्य । सम्यक्त्वं श्लाघ्यते न कैः ॥ २ ॥ मिच्छत्तं ढंडिदिअ । संमत्तं जो ठवेइ निअवंसे ॥ तेण
सयलोवि वंसो । सिद्धिपुरीसंमुहो ठविअ ॥ ३ ॥ तेणुक्कस पहुत्तं । लध्धूणवि परिवमंति कालेणं
॥ संमत्ते पुण लद्धे । अक्खयसुक्खं लहइ मुक्खं ॥ ५ ॥ धनेन हीनोऽपि धनी मनुष्यो । यस्यास्ति
सम्यक्त्वधनं प्रधानं ॥ धनी भवेदेकभवे सुखाय । भवे भवेऽनंतसुखी सुदृष्टिः ॥ ६ ॥ दानानि शी·
लानि तपांसि पूजा । सत्तीर्थयात्रा प्रवरा दया च ॥ सुश्रावकत्वं व्रतपालनं च । सम्यक्त्वपूर्वाणि म·
हाफलानि ॥ ७ ॥ सम्यक्त्वरत्नान्न परं हि रत्नं । सम्यक्त्वमित्रान्न परं हि मित्रं ॥ सम्यक्त्वबंधोर्न परो
हि बंधुः । सम्यक्त्वलाभान्न परो हि लाभः ॥ ८ ॥ अतुलसुखनिधानं सर्वकल्याणबीजं । जनन·
जलधिपोतं भव्यसत्वैकचिह्नं ॥ दुरिततरुकुठारं पुण्यतीर्थं प्रधानं । पिबत जितविपक्षं दर्शनाख्यं सुधां·

बु ॥ ९ ॥ यद्देवैरपि दुर्लभं च घटते येनोच्चयः श्रेयसां । यन्मूलं जिनशासने सुकृतिनां यज्जीवि-
तं शाश्वतं ॥ तत्सम्यक्त्वमवाप्य पूर्वपुरुषश्रीकामदेवादिव । दीर्घायुः सुरमाननीयमहिमा श्राद्धो म-
हर्द्धिर्भवेत् ॥ १० ॥ श्रीमत्कृष्णनरेंद्रसत्यकिनृपश्रीश्रेणिकाद्याः पुरा । श्रूयंते जिनशासने शुचित-
माः सम्यक्त्वतः केवलात ॥ तीर्थाधीशपदोदयप्रतिभुवं संप्रापन्नंतः शुभं । तस्मात्तत्र पवित्रचित्तसुकृते
शुद्धिर्विधेया बुधैः ॥ ११ ॥ कंथाचार्याघनाते ननु शफरवधे जालमश्नासि मत्स्यां—स्ते मे मद्यो-
पदंशाः पिबसि ननु युतो वेश्यया यासि वेश्यां ॥ कृत्वारीणां गृहेंह्री क नु तव रिपवो येषु संधिं
भिनद्मि । चौरस्त्वं द्यूतहेतोः कितव इति कथं येन दासीसुतोऽस्मि ॥ १२ ॥ त्रैकाल्यं द्रव्यषट्कं न-
वपदसहितं जीवषट्कायलेश्याः । पंचान्येवास्तिकाया व्रतसमितिगतिज्ञानचारित्रभेदाः ॥ इत्येतन्मो-
क्षमूलं त्रिभुवनमहितैः प्रोक्तमर्हद्भिरीशैः । प्रत्येति श्रद्दधाति स्पृशति च मतिमान् यः स वै शुद्धदृ-
ष्टिः ॥ १३ ॥ असमीक्ष्य तदादि दुर्घटं । जगतो जन्मविनाशकारणं ॥ न कदाचिदनीदृशं जगत ।
कथितं तत्वरहस्यवेदिभिः ॥ १४ ॥ आदर्शप्रतिबिंबिते स्ववदने सर्वोऽपि योषिज्जनो । वामां दक्षि-
णतः कपोलफलके पत्रावलीं पश्यति ॥ ज्ञानं सांशयिकं मनागपि न तत्किंतूक्ततत्वार्थया । युक्त्या

आरंभे नत्थि दया । महिलासंगेण नासए बंभं ॥
यत्र घरमुपैति तदहं दृष्ट्वापि न श्रद्दधे ॥ १५ ॥ जं सक्कइ तं कीरइ । जं च न सक्कइ तयंमि स·
संकाए सम्मत्तं । पवज्जा अत्थगहणेण ॥ १६ ॥
द्दहणा ॥ सद्दहमाणो जीवो । वच्चइ अयरामरं ठाणं ॥ १७ ॥
अथ वणिक्संबंधिसूक्तानि—यो न निर्गत्य निःशेषा—मालोकयति मेदिनीं ॥ अनेकाश्चर्य·
संपूर्णां । स नरः कूपदर्दुरः ॥ १ ॥ दीसइ विविहचरिअं । जाणिज्जइ सुअणदुज्जणविसेसो ॥ अ·
प्पाणं च कलिज्जइ । हिंडिज्जइ तेण पुहवीए ॥ २ ॥ अपलपति रहसि दत्तं । प्रत्ययदत्तेऽपि सं·
शयं कुरुते ॥ क्रयविक्रये च लुंटति । तथापि लोके वणिक् साधुः ॥ ३ ॥ मानेन किंचित्तुलयापि
किंचि—द्दानेन किंचिद् गृहणेन किंचित ॥ किंचिच्च किंचिच्च समाहरंति । प्रत्यक्षचौरा वणिजो
भवंति ॥ ४ ॥ श्रुत्वा दुर्वाक्यमुच्चैर्हसति मुषति च स्वीयमाप्येन लोकं । त्वर्धं गृह्णाति पण्यं बहु कि·
मिति वदन्नर्धमेव प्रदत्ते ॥ स्वीयान्यायेऽपि पूर्वं व्रजति नृपगृहं लेखके कूटकारी । मध्ये सिंहप्रतापः
प्रकटमृगमुखः स्याद्वणिग् धूर्त्तराजः ॥ ५ ॥
अथ श्राद्धसंबंधिसूक्तानि—यत्र विद्यागमो नास्ति । यत्र नास्ति धनागमः ॥ यत्र ग्रामे सुखं

नास्ति । न तत्र दिवसं वसेत् ॥ १ ॥ तत्र धाम्नि वसेद्गृहमेधी । संपतंति खलु यत्र मुनींद्राः ॥ यत्र चैत्यगृहमस्ति जिनानां । श्रावकाः परिवसंति च यत्र ॥ २ ॥ सलिलमपि सदासौ मालया वस्त्रपूतं । यदपि गृहमुपेतं दारुधान्यादि किंचित् । नयति तदुपयोगं प्रत्युपेक्षादिशुद्धं । स्पृशति गृहिणमेवं नाधिकः कर्मबंधः ॥ ३ ॥ अयशः प्राप्यते येन । येन चाधोगतिर्भवेत् ॥ स्वार्थाच्च भ्रश्यते येन । न तत्कर्म समाचरेत ॥ ५ ॥ महुमज्जमंसभेसज्ज—मूलसच्चग्गिजंतमंताइ ॥ न कयावि हु कायव्वं । सड्ढेहिं वि पावभीरूहिं ॥ ६ ॥ जिणपूआ मुणिदाणं । इत्तिअमित्तं गिहीण सच्चरिअं ॥ जइ एयाउ भठो । तो भठो सयलसुक्खाणं ॥ ७ ॥ श्रद्धालुतां श्राति जिनेंद्रशासने । धनानि क्षेत्रेषु वपत्यनारतं ॥ करोति पुण्यानि सुसाधुसेवनां । ततश्च तं श्रावकमाहुरुत्तमाः ॥ ८ ॥ पांचें चूक्यो तिहुं मूकीउ । चिउहुं न जाणइ नामु ॥ जगि ढंढेरउ वाइउ । मुंदइ श्रावक नामु ॥ ९ ॥ स्थाने निवासः सकलं कलत्रं । पुत्रः पवित्रः स्वजनानुरागः ॥ न्यायात्तवित्तं स्वहितं च चित्तं । निर्दम्भधर्मस्य सुखानि सप्त ॥ १० ॥ अक्षुद्रो रूपसौम्यो विनयनययुतः क्रूरताशाठ्यमुक्तो । मध्यस्थो दीर्घदर्शी परहितनिरतो लब्धलक्षः कृतज्ञः ॥ सद्दाक्षिण्यो विशेषात्सदयगुणरुचिः सत्कथः

पक्ययुक्तो । वृद्धार्हो लज्जितो यः शुभजनदयितो धर्मरत्नस्य योग्यः ॥ ११ ॥ जिनशासनावतंसाः । शंखाद्याः श्रावकाः पुरा जाताः ॥ अधिगम्य देशविरतिं । संतु भवंतोऽपि तादृशाः ॥ १२ ॥ चिंतइ जइकज्जाइं । न दिठखलिउवि होइ निन्नेहो ॥ एगंतवच्छलो जइ—जणस्स जणणीसमो सड्डो ॥ ॥ १३ ॥ हिअए ससिणेहोवि अ । मुणीण मंदायरो विणयकम्मे ॥ भाइसमो साहूणं । पराभवे होइ ससहाउ ॥ १४ ॥ मित्तसमाणो माणा । ईसि रूसइ अपुच्छिउ कज्जे ॥ मन्नंतो अप्पाणं । मुणीण सयणाउ अब्भहिअं ॥ १५ ॥ थद्धो छिद्दप्पेही । पमायखलिआइं निच्चमुच्चरए ॥ सड्डो सवक्किकप्पो । साहुजणं तणसमं गणइ ॥ १६ ॥ गुरुभणिउ सुतड्डो । बिंबिज्जइ अवितहो मणे जस्स ॥ सो आयंससमाणो । सुसावउ देसिउ समए ॥ १७ ॥ पवणेण पडागा इव । भमिज्जइ जो जणेण मूढेण ॥ अविणिच्छिअगुरुवयणो । सो भवइ पडाइआतुल्लो ॥ १८ ॥ पडिवन्नमसग्गाहं । न मुअइ गाअहसमणुसिठोवि ॥ थाणुसमाणो एसो । अपउसीमुणिजणे न वरं ॥ १९ ॥ उम्मग्गदेसउ निह्व—वोसि मूढोसि मंदधम्मोसि ॥ इअ संमंपि कहंतो । खरंट एसो खरंटसमो ॥ ॥ २० ॥ इति श्रीस्थानांगोक्तं श्राद्धगुणाष्टकं ॥

अथ चारित्रसंबंधिसूक्तानि—तच्चारित्रं न किं सेवे । यत्सेवावशगः पुमान् ॥ हीनवंशोऽपि संसेव्यः । सुरासुरनरोत्तमैः ॥ १ ॥ अकुलीनः कुलीनः स्या—त्सदाचारधुरंधरः ॥ अविशुद्धैकपङ्कोऽपि । दर्पणो व्रतनिर्मलः ॥ २ ॥ अपवित्रः पवित्रः स्या—द्दासो विश्वेशतां भजेत ॥ मूर्खो लभेत ज्ञानानि । मंक्षु दीक्षाप्रसादतः ॥ ३ ॥ दीक्षोल्बणगुणग्राम—क्रियालीनस्य देहिनः ॥ जायंते त्रिजगत्संप—दभ्यंयः सर्वलब्धयः ॥ ४ ॥ दत्ते महत्त्वं ऋध्यादि । जनस्य ननु जीवतः ॥ महानंदपदं नित्यं । दत्ते दीक्षा परत्र च ॥ ५ ॥ कर्माहिकीलनीमंत्रः । संवेगरसकूपिका ॥ निर्वाणभूमृदास्थानी । तपस्या पारमेश्वरी ॥ ६ ॥ कश्चिन्नृजन्मप्रासादे । धर्मस्थपतिनिर्मिते ॥ सद्गुणं विशदं दीक्षा—ध्वजं धन्योऽधिरोपयेत् ॥ ७ ॥ तद्दुःखमपि नो दुःखं । निर्वाहो यत्र सुंदरः ॥ बंधः शस्यः सुमनसां । नृपामरशिरःस्थितौ ॥ ८ ॥ नो दुःकर्मप्रयासो न कुयुवतिसुतस्वामिदुर्वाक्यदुःखं । राजादौ न प्रणामोऽशनवसनधनस्थानचिंता न चैव ॥ ज्ञानाप्तिर्लोकपूजा प्रशमसुखरतिः प्रेत्यमोक्षाद्यवाप्तिः । श्रामण्येऽमी गुणाः स्युस्तदिह सुमतयस्तत्र यत्नं कुरुध्वं ॥ ९ ॥ मिथ्या वक्तुं न हि जानामि । सारं किंचित्तव कथयामि ॥ गुप्तित्रितयं समितीः पंच । यावज्जीवं खलु मा मुंच ॥ १० ॥ पंचाश्र·

वाद्विरमणं । पंचेंद्रियनिग्रहः कषायजयः ॥ दंडत्रयविरतिश्चे—ति संयमः सप्तदशभेदः ॥ ११ ॥ जस्स कए आहारो । पाणिवहो तस्स होइ निअमेण ॥ पाणिवहे वयभंगो । वयभंगे दुग्गइ चेव ॥ १२ ॥ समविसमंपि पढंता । विरया पावेसु सग्गइं जंति ॥ सुट्ठुविअ सुक्कपाठा । दुस्सीला दुग्गइं जंति ॥ १३ ॥ केस म लोचउ अप्पणा । केसहिं किउ क दोसु ॥ तं मणु लुंचउ अप्पणुं । जं जगि भमइ सरोसु ॥ १४ ॥ जयणा य धम्मजणणी । जयणा धम्मस्स पालणी होइ ॥ तववुड्ढीकरी जयणा । एगंतसुहावहा जयणा ॥ १५ ॥ जयणाइ वट्टमाणो । जीवो सम्मत्तनाणचरणाणं ॥ सद्धाबोहणसेवण—भावेणाराहउ होइ ॥ १६ ॥ पल्ले महइ महल्ले । कुंभं पक्खिवइ सोहए नालिं ॥ असंजए अविरए । बहु बंधइ निज्जरइ थोवं ॥ १७ ॥ पल्ले महइ महल्ले । कुंभं सोहेइ पक्खिवे नालिं ॥ जे संजए पमत्ते । बहु निज्जरइ बंधइ थोवं ॥ १८ ॥ पल्ले महइ महल्ले । कुंभं सोहेइ पक्खिवे न किंचि ॥ जे संजए पमत्ते । बहु निज्जरइ बंधइ किंचि ॥ १९ ॥ भयवं के जीवा सोअणीआ भवंति? गोयमा अपामिअजिणदिक्खाउ असुअसिद्धंतवयणाउ अबोहिअलोआउ अकयधम्माउ अग्गहिआणुवयाउ अठमयपंचपमायचउकसायसंजुत्ताउ अकामियसव्वजीवाउ

अणालोइअसव्वपावाउ जे जीवा परलोअं गच्छंति ते सोअणीआ हवंति, जउ अणंते संसारे स-
यलदुहनिहाणे निच्चं दुहं अणुहवंता चिट्ठंति. ॥ १ ॥ भयवं के जीवा सोअणीया न हवंति? गो-
यमा जे उण गहिअदिक्खाउ पढिअसिद्धंतवयणाउ कयसुकयाउ अंगीकयअणुव्वयाउ कयसाह-
म्मिअवच्छलाउ दिन्नदाणाउ नाणपढंतकयसाहिज्जाउ सुहभावणाजुत्ताउ लेहिअजिणवयणाउ
खामियसव्वजीवाउ आलोइअसव्वपावाउ जे जीवा परलोअं जंति ते सोअणीआ न हवंति, जउ
सिग्घमेव सग्गं मुक्कं वा गच्छंति. ॥ २ ॥ कषाया यस्य नो छिन्ना । यस्य नात्मवशं मनः ॥ इंद्रि-
याणि न गुप्तानि । प्रव्रज्या तस्य निष्फला ॥ २० ॥ यः पालयित्वा चरणं विशुद्धं । करोति भोगा-
दिनिदानमज्ञः ॥ ही वर्द्धयित्वा फलदानदक्षं । स नंदनं भस्मयते वराकः ॥ २१ ॥

अथ साधुसंबंधिसूक्तानि—उच्चैरध्ययनं चिरंतनकथा स्त्रीभिः सहालापनं । तासामर्भकलाल-
नं पतिनुतिस्तद्दानमिथ्यास्तुतिः ॥ आदेशश्च करावलोकनमथो पांडित्यलेशः क्वचित । होरागारु-
डमंत्रवादविधयो भिक्षोर्गुणा द्वादश ॥ १ ॥ दो तुंबमाइ हच्छे । वयणे धम्मक्खराणि चत्तारि ॥ वि-
उलं च भरहवासं । को अम्ह पहुत्तणं हरइ ॥ २ ॥ सकलकुशलवल्लीपुष्करावर्त्तमेघो । दुरितति-

मिरभानुः कल्पवृक्षोपमानः ॥ भवजलनिधिपोतः सर्वसंपत्तिहेतुः । स भवतु सततं वः श्रेयसे धर्म-
लाभः ॥ ३ ॥ अमरनरेसरसुक्खं । कमेण पावंति मुक्खसुक्खंपि ॥ सो तुम्ह नरवरेसर । होउ सया
धम्मलाभुत्ति ॥ ४ ॥ भूपर्यंके निजभुजलतादंदुकं खं वितानं । दीपश्चंद्रः स्वरतिवनितालब्धमोद-
प्रसंगः ॥ दिक्कन्याभिः पवनचमरैर्वीज्यमानोऽनुकूलं । भिक्षुः शेते नृप इव ननु त्यक्तसर्वद्रणोऽपि
॥ ५ ॥ न च राजभयं न च चौरभयं । इहलोकसुखं परलोकहितं ॥ वरकीर्त्तिकरं नरदेवनतं । श्र-
मणत्वमिदं रमणीयतरं ॥ ६ ॥ महीशय्या शय्या विपुलमुपधानं भुजलता । वितानं चाकाशं व्य-
जनमनुकूलोऽयमनिलः ॥ स्फुरद्दीपश्चंद्रो विरतिवनितासंगमुदितः । सुखं शांतः शेते मुनिरतनुभू-
तिर्नृप इव ॥ ७ ॥ विवसाडा सवि जोइश्या । भिक्खसमो नवि कोइ ॥ देउल बेठां जोइयें । ज्यां
रांधे सहु कोइ ॥ ८ ॥ प्रतिदिनमयत्नलभ्ये । भिक्षुकजनजननि साधुकल्पलते ॥ नृपनमनि नर-
कतारिणि । भगवति भिक्षे नमस्तुभ्यं ॥ ९ ॥ क्षितितलशयनं वा प्रांतभैक्षाशनं वा । सहजपरि-
भवो वा नीचदुर्भाषितं वा ॥ महति फलविशेषे नित्यमभ्युदितानां । न मनसि न शरीरे दुःखमु-
त्पादयंति ॥ १० ॥ गंगातीरे हिमगिरिशिलाबद्धपद्मासनस्य । ब्रह्मध्यानाभ्यसनविधिना योगनिद्रां

गतस्य ॥ किं तैर्भाव्यं मम सुदिवसैर्यत्र ते निर्विशंकाः । कंडूयंते जरठहरिणाः शृंगमंगे मदीये ॥ ॥ ११ ॥ चंडालः किमयं द्विजातिरथवा शूद्रोऽथ किं तापसः । किं वा तत्वनिविष्टनिर्मलमतिर्योगीश्वरः कोऽपि किं ॥ इत्युत्पन्नविकल्पजल्पमुखरैः संभाव्यमाना जनैर्—न क्रुद्धाः पथि नैव तुष्टमनसो यांति स्वयं योगिनः ॥ १२ ॥ अहौ वा हारे वा कुसुमशयने वा दृषदि वा । मणौ वा लोष्टे वा बलवति रिपौ वा सुहृदि वा ॥ तृणे वा स्त्रैणे वा मम समदृशो यांतु दिवसाः । क्वचित्पुण्यारण्ये शिव शिव शिवेति प्रलपतः ॥ १३ ॥ एकाकी निस्पृहः शांतः । पाणिपात्रो दिगंबरः ॥ कदा शंभो भविष्यामि । कर्मनिर्मूलनक्षमः ॥ १४ ॥ न नटा न विटा न गायना । न परद्रोहनिबद्धबुद्धयः ॥ नृपसद्मनि नाम के वयं । कुचभारावनता न योषितः ॥ १५ ॥ शमसुखशीलितमनसा—मशनमपि द्वेषमेति किमु कामाः ॥ स्थलमपि दहति झषानां । किमंग पुनरुज्ज्वलितो वह्निः ॥ १६ ॥ खंतस्स दंतस्स जिइंदिअस्स । अज्झप्पजोगे गयमाणसस्स ॥ किं मज्झ एएण विचिंतिएणं । सकुंडलं वा वयणं न वत्ति ॥ १७ ॥ खंतस्स दंतस्स जिइंदिअस्स । अज्झप्पजोगे गयमाणसस्स ॥ पुरो भमंतीइवि अंगणाए । सकुंडलं वा वयणं न वत्ति ॥ १८ ॥ चित्तं च जड्ढं घणमंमलंमि । विखित्तचित्तेण

मए न नायं ॥ पुरो भमंतीइवि अंगणाए । सकज्जलं वा नयणं न वत्ति ॥ १९ ॥

अथ वास्तुविद्यासंबंधिसूक्तानि—शाला तु ब्रह्मशाला स्या—त्ताला तु जिनमंदिरं ॥ श्वेतांबरोपदेशेन । श्रावकैस्तद्विधीयते ॥ १ ॥ गौरी प्राह—कीदृशाश्च किमाहाराः । कर्म कुर्वंति कीदृशं ॥ अवतारः कथं तेषां । महादेव निगद्यतां ॥ २ ॥ ईशः प्राह—तपःशोषितसर्वांगा । मलक्लिन्नकलेवराः ॥ स्नसास्थिचर्मवपुषो । निहतांतरशात्रवः ॥ ३ ॥ तुंबीफलकरा भिक्षा—भोजिनः श्वेतवाससः ॥ सकंबला रोमयुता । ऊर्णारोमप्रमार्जिनः ॥ ४ ॥ गृह्णंति शुद्धमाहारं । शास्त्रदृष्ट्या चरंति च ॥ न कुर्वंति सदा कोपं । दयां कुर्वंति सर्वदा ॥ ५ ॥ मुक्तिकारणधर्माय । पापनिःकंदनाय च ॥ अवतारः कृतोऽमीषां । मया देवि युगे युगे ॥ ६ ॥ यदमीषां महर्षीणां । जलदानादपि प्रिये ॥ सुकृतं प्राप्यते लोकै—र्न हि तद्यज्ञकोटिभिः ॥ ७ ॥ स्पृष्ट्वा शत्रुंजयं तीर्थं । नत्वा रैवतकाचलं ॥ स्नात्वा गजपदे कुंडे । पुनर्जन्म न विद्यते ॥ ८ ॥ अष्टषष्टिषु तीर्थेषु । यत्पुण्यं किल यात्रया ॥ आदिनाथस्य देवस्य । दर्शनेनापि तद्भवेत ॥ ९ ॥ भक्तिं तीर्थंकरे गुरौ जिनमते संघे च हिंसाऽनृत—स्तेयाब्रह्मपरिगृहव्युपरमं क्रोधाद्यरीणां जयं ॥ सौजन्यं गुणिसंगमिंद्रियदमं दानं तपो भाव-

नां । वैराग्यं च कुरुष्व निर्वृतिपदे यद्यस्ति गंतुं मनः ॥ १० ॥

अथ देवस्वरूपसूक्तानि—अनध्ययनविद्वांसो । निर्द्रव्यपरमेश्वराः ॥ अनलंकारसुभगाः । पांतु युष्मान् जिनेश्वराः ॥ १ ॥ वपुश्च पर्यंकशयं श्लथं च । दृशौ च नासा नियते स्थिरे च ॥ न शिक्षितेयं परतीर्थनाथै—र्जिनेंद्रमुद्रापि तवान्यदास्तां ॥ २ ॥ भवबीजांकुरजनना । रागाद्याः क्षयमुपागता यस्य ॥ ब्रह्मा वा विष्णुर्वा । हरो जिनो वा नमस्तस्मै ॥ ३ ॥ प्राकारमंडपछत्र—पर्यंकासनकस्थितः ॥ निर्दोषमूर्त्या दृष्ट्या च । देवो नैव जिनात्परः ॥ ४ ॥ अशोकवृक्षः सुरपुष्पवृष्टि—र्दिव्यध्वनिश्चामरमासनं च ॥ भामंडलं दुंदुभिरातपत्रं । सत्प्रातिहार्याणि जिनेश्वराणां ॥ ५ ॥ दर्पणो भद्रपीठं च । वर्धमानककुंभकौ ॥ मत्स्यश्रीवत्सस्वस्तिक—नंदावर्त्ताः स्युरष्ट ते ॥ ६ ॥ पुष्पाद्यर्चा तदाज्ञा च । तद्द्रव्यपरिरक्षणं ॥ उत्सवास्तीर्थयात्रा च । भक्तिः पंचविधा जिने ॥ ७ ॥ रक्खंतो जिणदव्वं । परित्तसंसारिओ जिओ होइ ॥ वड्ढंतो जिणदव्वं । तित्थयरत्तं लहइ जीवो ॥ ८ ॥

अथ पूजासंबंधिसूक्तानि—वरगंधधूवचुक्खुक्खएहिं । कुसुमेहिं पवरदीवेहिं ॥ नेविज्जजलफलेहिं अ । जिणपूआ अठ्ठहा भणिआ ॥ १ ॥ जो पूएइ तिसंझं । जिणिंदरायं तहा विगयदोसं

॥ सो तइअभवे सिज्झइ । अहवा सत्तठमे जम्मे ॥ २ ॥ जिनपूजनं जनानां । जनयत्येकमपि संपदो विपुलाः ॥ जलमिव जलदविमुक्तं । काले शस्यश्रियो ह्यखिलाः ॥ ३ ॥ जिनस्य पूजनं हंति । प्रातः पापं निशाभवं ॥ आजन्मविहितं मध्ये । सप्तजन्मकृतं निशि ॥ ४ ॥ फलं पूजाविधातुः स्या—त्सौभाग्यं जनमान्यता ॥ ऐश्वर्यं रूपमारोग्यं । स्वर्गमोक्षसुखान्यपि ॥ ५ ॥ चित्रं जगत्त्रयीभर्तुः । संलग्ना कुसुमावली ॥ स्वर्गापवर्गसंप्राप्ति—फलं भव्येषु यच्छति ॥ ६ ॥ पूजाकोटिसमं स्तोत्रं । स्तोत्रकोटिसमो जपः ॥ जपकोटिसमं ध्यानं । ध्यानकोटिसमो लयः ॥ ८ ॥ पूर्वं नवांगं नवभिः प्रसूनैः । पूजा कृता श्येनकमालिकेन ॥ ततो नवस्वेव भवेषु लक्ष्मीं । नवां नवां प्राप शिवर्द्धिमंते ॥ ए ॥ स्वर्गस्तस्य गृहांगणं सहचरी साम्राज्यलक्ष्मीः शुभा । सौभाग्यादिगुणावलिर्विलसति स्वैरं वपुर्वेश्मनि ॥ संसारः सुतरः शिवं करतलक्रोडे लुठत्यंजसा । यः श्रद्धाभरभाजनं जिनपतेः पूजां विधत्ते जनः ॥ १० ॥ यः पुष्पैर्जिनमर्चति स्मितसुरस्त्रीलोचनैः सोऽर्च्यते । यस्तं वंदत एकशस्त्रिजगता सोऽहर्निशं वंद्यते ॥ यस्तं स्तौति परत्र वृत्रदमनस्तोमेन स स्तूयते । यस्तं ध्यायति क्लृप्तकर्मनिधनः स ध्यायते योगिभिः ॥ ११ ॥ अक्षतैरुज्ज्वलैः स्थालं । भृतं येन जिनाग्रतः ॥

श्रेयोभिस्तादृशैरेव । तैरात्मा परिपूरितः ॥ १२ ॥ वस्त्रैर्वस्त्रविभूतयः शुचितरालंकारतोऽलंकृतिः । पुष्पैः पूज्यपदं सुगंधितनुता गंधैर्जिने पूजिते ॥ दीपैर्ज्ञानमनावृतं निरुपमा भोगर्द्धिरन्नादिभिः । संत्येतानि किमद्भुतं शिवपदप्राप्तिस्ततो देहिनां ॥ १३ ॥ आयुष्कं यदि सागरोपममितं व्याधिव्यथावर्जितं । पांडित्यं च समस्तवस्तुविषयं प्रावीण्यलब्धास्पदं ॥ जिह्वा कोटिमिता च पाटवयुता स्यान्मे धरित्रीतले । नो शक्नोमि तथापि वर्णितुमलं तीर्थेशपूजाफलं ॥ १४ ॥ उपसर्गाः क्षयं यांति । छिद्यंते विघ्नवल्लयः ॥ मनः प्रसन्नतामेति । पूज्यमाने जिनेश्वरे ॥ १५ ॥ यांति दुष्टदुरितानि दूरतः । कुर्वते सपदि संपदः पदं ॥ भूषयंति भुवनानि कीर्त्तयः । पूजया विहितया जगद्गुरोः ॥ १६ ॥ न यांति दास्यं न दरिद्रभावं । न प्रेष्यतां नैव च हीनयोनिं ॥ न चापि वैकल्यमिहेंद्रियाणां । ये कारयंत्यत्र जिनेंद्रपूजां ॥ १७ ॥ पापं लुंपति दुर्गतिं दलयति व्यापादयत्यापदं । पुण्यं संचिनुते श्रियं वितनुते पुष्णाति नीरोगतां ॥ वैराग्यं विदधाति पल्लवयति प्रीतिं प्रसूते यशः । स्वर्गं यच्छति निर्वृतिं च रचयत्यर्चार्हतां निर्मिता ॥ १८ ॥ नौरेषा भववारिधौ शिवपदप्रासादनिःश्रेणिका । मार्गः स्वर्गपुरस्य दुर्गतिपुरद्वारप्रवेशार्गला ॥ कर्मग्रंथिशिलोच्चयस्य दलने दंभोलिधारासमा । कल्याणैकनि-

केतनं निगदिता पूजा जिनानां परा ॥ १९ ॥ नेत्रानंदकरी भवोदधितरी श्रेयस्तरोर्मंजरी । श्रीमद्धर्ममहानरेंद्रनगरी व्यापल्लताधूमरी ॥ हर्षोत्कर्षशुभप्रभावलहरी भावद्विषां जित्वरी । पूजा श्रीजिनपुंगवस्य विहिता श्रेयस्करी देहिनां ॥ २० ॥ दर्शनेन जिनेंद्राणां । साधूनां वंदनेन च ॥ न तिष्ठति चिरं पापं । छिद्रहस्ते यथोदकं ॥ २१ ॥ अद्य प्रक्षालितं गात्रं । नेत्रे च विमलीकृते ॥ मुक्तोऽहं सर्वपापेभ्यो । जिनेंद्र तव दर्शनात् ॥ २२ ॥

अथ जिनबिंबसंबंधिसूक्तानि—अंगुष्ठमानमपि यः प्रकरोति बिंबं । वीरावसानवृषभादिजिनेश्वराणां ॥ स्वर्गे प्रधानविपुलर्द्धिसुखानि भुंक्त्वा । पश्चादनुत्तरगतिं समुपैति धीरः ॥ १ ॥ जो कारवेइ पडिमं । जिणाणं जिअरागदोसमोहाणं ॥ सो पावइ अन्नभवे । सुहजम्मं धम्मवररयणं ॥ २ ॥ दारिद्दं दोहग्गं । कुजाइकुसरीरकुमइकुगइओ ॥ अवमाणे रोगसोगा । न हुंति जिणबिंबकारिणं ॥ ॥ ३ ॥ रम्यं येन जिनालयं निजभुजोपात्तेन कारापितं । मोक्षार्थं स्वधनेन शुद्धमनसा पुंसा सदाचारिणा ॥ वेद्यं तेन नरामरेंद्रमहितं तीर्थेश्वराणां पदं । प्राप्तं जन्मफलं कृतं जिनमतं गोत्रं समुद्योतितं ॥ ४ ॥

अथ जिनप्रणामसंबंधिसूक्तानि—यास्याम्ययतनं जिनस्य लभते ध्यायंश्चतुर्थं फलं । षष्ठं चो-
त्थितुमुद्यतोऽष्टममथो गंतुं प्रवृत्तोऽध्वनि ॥ श्रद्धालुर्दशमं बहिर्जिनगृहात् प्राप्तस्ततो द्वादशं । मध्ये
पाक्षिकमीक्षिते जिनपतौ मासोपवासं फलं ॥ १ ॥ असर्वभावेन यदृच्छया वा । परानुवृत्त्या ह्यथवा तृ-
ष्णया वा ॥ ये त्वां नमस्यंति जिनेंद्रचंद्र ॥ तेऽप्यामरीं संपदमाप्नुवंति ॥ २ ॥ अष्टषष्टिषु तीर्थेषु ।
यत्पुण्यं किल यात्रया ॥ आदिनाथस्य देवस्य । दर्शनेनापि तद्भवेत ॥ ३ ॥ शाठ्येनापि नमस्कारं
। यः करोति जिनेश्वरे ॥ जन्मना यत्कृतं पापं । दहत्यग्निरिवेंधनं ॥ ४ ॥ अरिहंतनमुक्कारो । जीवं
मोएइ भवसहस्साउ ॥ भावेण कीरमाणो । होइ पुणो बोहिलाभाए ॥ ५ ॥ अरिहंतनमुक्कारो ।
धन्नाण भवक्खयं करंताणं ॥ हिअयं अणुमोअंतो । विसुत्तिआवारउ होइ ॥ ६ ॥

अथ जिननमस्कारसूक्तानि—जिणसासणस्स सारो । चउदसपुव्वाण जो समुद्धारो ॥ जस्स
मणे नवकारो । संसारो तस्स किं कुणइ ॥ १ ॥ हिंसावानऽनृतप्रियः परधनाहर्ता परस्त्रीरतः । किं
चान्येष्वपि लोकगर्हितमहापापेषु गाढोद्यतः ॥ मंत्रेशं स यदि स्मरेदविरतं प्राणात्यये सर्वथा । दु-
ष्कर्मार्जितदुर्गदुर्गतिरपि स्वर्गी भवेन्मानवः ॥ २ ॥ एसो मंगलनिलउ । भवविलउ सव्वसंतिजणउ

अ ॥ नवकारपरममंतो । चिंतिअमित्तो सुहं देइ ॥ ३ ॥ अपुव्वो कप्पतरू । एसो चिंतामणी अपुव्वो अ ॥ जो झायइ सयाकालं । सो पावइ सिवसुहं विउलं ॥ ४ ॥ नवकारइक्कअक्खर । पावं फेडेइ सत्त अयराणं ॥ पन्नासं च पएणं । पंचसयाइं समग्गेणं ॥ ५ ॥ जो गुणइ लक्खमेगं । पूएइ विहीइ जिणनमुक्कारं ॥ तित्थयरनामगोत्थं । सो बंधइ नत्थि संदेहो ॥ ६ ॥ अठेव य अठसया । अठसहस्सं च अठकोडीओ ॥ जो गुणइ भत्तिजुत्तो । सो पावइ सासयं ठाणं ॥ ७ ॥

अथ यात्रासंबंधिसूक्तानि—नमस्कारसमो मंत्रः । शत्रुंजयसमो गिरिः ॥ गजेंद्रपदजं नीरं । निर्द्वंद्वं भुवनत्रये ॥ १ ॥ कृत्वा पापसहस्राणि । हत्वा जंतुशतानि च ॥ इदं तीर्थं समासाद्य । तिर्यंचोऽपि दिवं गताः ॥ २ ॥ स्पृष्ट्वा शत्रुंजयं तीर्थं । नत्वा रैवतकाचलं ॥ स्नात्वा गजपदे कुंडे । पुनर्जन्म न विद्यते ॥ ३ ॥ यो दृष्टो दुरितं हंति । प्रणतो दुर्गतिद्वयं ॥ संघेशार्हत्यपदकृत । स जीयाद्विमलाचलः ॥ ४ ॥ वच्मः किमस्य चोच्चैस्त्वं । येन पूर्वजिनेशितुः ॥ अधिरुह्यात्र लोकाग्रं । पौत्रैरपि करे कृतं ॥ ५ ॥ शत्रुंजयाद्रिरयमादियुगे गरीया—नासीदसीमसुकृतोदयराशिरेव ॥ आदीयमानसुकृतः किल भव्यलोकैः । काले कलौ भजति संप्रति दुर्बलत्वं ॥ ६ ॥ पल्योपमसहस्रं तु ।

ध्यानाल्लक्षमभिग्रहात् ॥ दुष्कर्म क्षीयते मार्गे । सागरोपमसंचितं ॥ ७ ॥ शत्रुंजये जिने दृष्टे । दु·
र्गतिद्वितयं क्षिपेत ॥ सागराणां सहस्रं च । पूजास्नात्रविधानतः ॥ ८ ॥ मिथ्यात्वगरलोद्गारः । स·
म्यग्दृष्टिसुधारसः ॥ पूर्वो ह्रस्वः परो दीर्घो । नाभिनंदनवंदने ॥ ९ ॥ सदा शुभध्यानमसारलक्ष्म्याः
। फलं चतुर्धा सुकृताप्तिरुच्चैः ॥ तीर्थोन्नतिस्तीर्थकृतां पदाप्ति—र्गुणा हि यात्राप्रभवाः स्युरेते ॥१०॥
श्रीतीर्थपांथरजसा विरजीभवंति । तीर्थेषु बंभ्रमणतो न भवे भ्रमंति ॥ तीर्थे व्ययादिह नराः स्थि·
रसंपदः स्युः । पूज्या भवंति जगदीशमथार्चयंतः ॥ ११ ॥ आरंभाणां निवृत्तिर्द्रविणसफलता संघ·
वात्सल्यमुच्चै—र्नैर्मल्यं दर्शनस्य प्रणयिजनहितं जीर्णचैत्यादिकृत्यं ॥ तीर्थोन्नत्यं च सम्यक् जिनव·
चनकृतिस्तीर्थसत्कर्मकत्वं । सिद्धेरासन्नभावः सुरनरपदवी तीर्थयात्राफलानि ॥ १२ ॥ वपुः पवित्रीकु·
रु तीर्थयात्रया । चित्तं पवित्रीकुरु धर्मवांछया ॥ वित्तं पवित्रीकुरु पात्रदानतः । कुलं पवित्रीकुरु स·
च्चरित्रैः ॥ १३ ॥ एअं जम्मस्स फलं । सारं विहवस्स इत्तिअं चेव ॥ जं अच्चिज्जइ गंतुं । सित्तुंजे
रिसहतित्थयरो ॥ १४ ॥ छठेणं भत्तेणं । अपाणएणं तु सत्त जत्ताउ ॥ जो कुणइ सित्तुंजे । सो
तइअभवे लहइ सिद्धिं ॥ १५ ॥ जीअं सुवन्नभूमी—भूसणदाणेण अन्नतित्थेसु ॥ जं पावइ पुन्न·

फलं । पूआएह्वणेण सिंचुंजे ॥ १६ ॥

अथ संघेशसंबंधिसूक्तानि—अद्य मे फलवती पितुराशा । मातुराशिषि शिखांकुरिताद्य ॥ यद्युगादिजिनयात्रिकलोकं । प्रीणयाम्यहमशेषमखिन्नः ॥ १ ॥ संसारेऽधिगता नरामरभवाः प्राप्ताः श्रियोऽनेकशः । कीर्त्तिस्फुर्तिमदर्जितं च शतशः साम्राज्यमप्यूर्जितं ॥ स्वाराज्यं बहुधा सुधाशनचयाराध्यं समासादितं । लेभे पुण्यमयं कदापि न पुनः संघाधिपत्यं परं ॥ २ ॥ तैरात्मा सुपवित्रितो निजकुलं तैर्निर्मलं निर्मितं । तैः संसारमहांधकूपपततां हस्तावलंबो ददे ॥ लब्धं जन्मफलं कृतं च कुगतिद्वारैकसंरोधनं । ये शत्रुंजयमुख्यतीर्थनिवहे यात्रासु कृतोद्यमाः ॥ ३ ॥ तैश्चंडे लिखितं स्वनाम विशदं धात्री पवित्रीकृता । ते वंद्याः कृतिनः सतां सुकृतिनो वंशस्य ते भूषणं ॥ ते जीवंति जयंति भूरिविभवास्ते श्रेयसां मंदिरं । सर्वांगैरपि कुर्वते विधिपरा ये तीर्थयात्रामिमां ॥ ४ ॥ भक्तो मातापितॄणां स्वजनपरिजनानंददायी प्रशांतः । श्रद्धालुः शुद्धबुद्धिर्गतमदकलहः शीलवान् दानवर्षी ॥ अक्रोध्यः सिद्धगामी परगुणविभवोत्कर्षहृष्टः कृपालुः । संघैश्वर्याधिकारी भवति किल नरो दैवतं मूर्त्तमेव ॥ ५ ॥

अथ गुरुसंबंधिसूक्तानि—धर्मज्ञो धर्मकर्ता च । सदा धर्मप्रवर्त्तकः ॥ सत्वेभ्यो धर्मशास्त्रार्थ-
देशको गुरुरुच्यते ॥१॥ शुद्धधर्मोपदेशेन । यः सत्वानामनुग्रहं ॥ करोति नितरां तेन । कृतः स्व-
स्याप्यहो महान् ॥ २ ॥ सर्वज्ञोक्तोपदेशेन । यः सत्त्वानामनुग्रहं ॥ करोति दुःखतप्तानां । स प्रा-
प्नोत्यचिराच्छिवं ॥ ३ ॥ न भवति धर्मः श्रोतुः । सर्वस्यैकांततो हितश्रवणात् ॥ ब्रुवतोऽनुग्रहबुद्ध्या
। वक्तुस्त्वेकांततो भवति ॥ ४ ॥ अरिहंतो अ समत्थो । तारणलोआण दीहसंसारे ॥ मग्गो देस-
णाकुसलो । तरंति जे मग्गि लग्गंति ॥ ५ ॥ जो पढइ अपुव्वं सो । लहेइ तित्थंकरत्तमन्नभवे ॥
जो पुण पढावइ परं । सम्मसुअं तस्स किं भणिमो ॥ ६ ॥ कर्तुस्तथा कारयितुः परेण । तुष्टेन
चित्तेन तथानुमंतुः ॥ साहाय्यकर्तुश्च शुभाशुभेषु । तुल्यं फलं तत्वविदो वदंति ॥ ७ ॥ केऽपि प्र-
वालमिव रागभृतः स्वयं तु । केचिच्च चूर्णकणवत्पररंगयोग्याः ॥ काश्मीरजातमिव सौरभपूरगौरा ।
धन्याः पुनः स्वपररंजकतां भजंति ॥ ८ ॥ भूयांसो भूरिलोकस्य । चमत्कारकरा नराः ॥ रंजयंति
स्वचित्तं ये । भूतले ते तु पंचषाः ॥ ९ ॥ अन्नन्नदेसजाया । अन्नन्नकुलेसु वड्ढिअसरीरा ॥ जिण-
सासणं पवन्ना । सव्वे ते बंधवा भणिआ ॥ १० ॥ कृत्रिमैर्डम्बरैश्चित्रैः । शक्यस्तोषयितुं परः ॥ आ-

त्मा तु वास्तवैरेव । हेतुभिः परितुष्यति ॥ ११ ॥ सस्पृहाणामयं धर्मो । यद्गुणैः पररंजनं ॥ निःस्पृहाणामयं धर्मो । मौनं मानसरंजनं ॥१२॥ स्वेछाविरचितशास्त्रैः । प्रव्रज्यावेषधारिभिः क्षुद्रैः ॥ नानाविधैरुपायै—रनाथवन्मनुष्यते लोकः ॥ १३ ॥ अज्ञानतिमिरांधस्य । ज्ञानांजनशलाकया ॥ नेत्रमुन्मीलितं येन । तस्मै श्रीगुरवे नमः ॥ १४ ॥ थोवा कप्पूरदुमा । रयणपसूआवि आगरा थोवा ॥ सप्पुरिसावि अ थोवा । सुग्गइमग्गं पयासंता ॥ १५ ॥ गुरुणो भट्टाजाया । सद्दे थुणिऊण लिंति दाणाइं ॥ दुन्निवि अमुणिअसारा । दूसमसमयंमि बुड्डंति ॥ १६ ॥ गुरुरेव विजानाति । कृत्याकृत्यविवेचनं ॥ मक्षिका वमनी प्रोक्ता । तद्विष्टा र्दिनाशिनी ॥ १७ ॥ विना गुरुभ्यो गुणनीरधिभ्यो । जानाति धर्मं न विचक्षणोऽपि ॥ विना प्रदीपं शुभलोचनोऽपि । निरीक्षते कुत्र पदार्थसार्थं ॥ १८ ॥ अवद्यमुक्ते पथि यः प्रवर्त्तते । प्रवर्त्तयत्यन्यजनं च निःस्पृहः ॥ स एव सेव्यः स्वहितैषिणा गुरुः । स्वयं तरंस्तारयितुं क्षमः परं ॥ १९ ॥ विदलयति कुबोधं बोधयत्यागमार्थं । सुगतिकुगतिमार्गौ पुण्यपापे व्यनक्ति ॥ अवगमयति कृत्याकृत्यभेदं गुरुर्यो । भवजलनिधिपोतस्तं विना नास्ति कश्चित् ॥ २० ॥ इहलोकविधीन् कुरुते । स्वयं जनो न तु गुरुं विना धर्मं ॥ अश्वो हि

तृणान्यत्ति । स्वयं घृतं प्राप्यतेऽन्येन ॥ २५ ॥ पूर्वं वीरजिनेश्वरेऽपि भगवत्याख्याति धर्मं स्वयं ।
प्रज्ञावत्यभयेऽपि मंत्रिणि न यां कर्तुं क्षमः श्रेणिकः ॥ अक्लेशेन कुमारपालनृपतिस्तां जीवरक्षां व्य-
धात् । पीत्वा यस्य वचःसुधां स परमः श्रीहेमसूरिर्गुरुः ॥ २६ ॥ एकादशाश्वलक्षाणि । गजेंद्राणां
शतानि च ॥ पत्तिकोट्यो द्वादश स्यु—रथाः पंचायुतीमिताः ॥ २७ ॥ आज्ञावर्त्तिषु मंडलेषु विपु-
लेष्वष्टादशस्वादरा—दब्दान्येव चतुर्दश प्रसृमरां मारिं निवार्यौजसा ॥ कीर्त्तिस्तंभनिभांश्चतुर्दशश-
तीसंख्यान् विहारांस्तथा । जैनान्निर्मितवान् कुमारनृपतिर्द्रव्यव्ययं भूरिशः ॥ २८ ॥ धन्यस्योपरि नि-
पत—त्यहितसमाचरणघर्मनिर्वापी ॥ गुरुवदनमलयनिःसृत—वचनरसश्चांदनस्पर्शः ॥ २९ ॥ धन्ना-
ण चेव गुरुणो । आएसं दिंति गुणमहोदहिणो ॥ चंदणरसो अपुन्नाण । निवडए नेव अंगंमि
॥ ३० ॥ धन्नो सो जिअलोए । गुरवो निवसंति जस्स हिअयंमि ॥ धन्नाणवि सो धन्नो । गुरूण
हिअए वसइ जो उ ॥ ३१ ॥ सव्वं हिअयपविठं । मारइ मणुअं जणे पसिद्धमिणं ॥ तंपि गुरुणा
पउत्तं । जीवावइ पिह अबरिअं ॥ ३२ ॥ धन्ना तच्चिअ पुरिसा । जे गुरुवयणं करिंति पच्चक्खं ॥
धन्नाण वि ते धन्ना । कुणंति देसंतरगया जे ॥ ३३ ॥ धन्नाणं विहिजोगो । विहिपक्खाराहगा सया

धन्ना ॥ विहिबहुमाणी धन्ना । विहिपक्खअदूसगा धन्ना ॥ ३४ ॥ एकमप्यक्षरं यस्तु । गुरुः शिष्ये
निवेदयत ॥ पृथिव्यां नास्ति तद् द्रव्यं । यत्प्रदायानृणीभवेत् ॥ ३५ ॥ एकाक्षरप्रदातारं । यो गुरुं
नाभिमन्यते ॥ स श्वयोनिशतं गत्वा । चंडालेष्वपि जायते ॥ ३६ ॥

अथ श्रीसंघसंबंधिसूक्तानि—पूतं धाम निजं कुलं विमलितं जातिः समुद्योतिता । छिन्नं दुर्गतिदाम नाम लिखितं शीतद्युतेर्मंडले ॥ दत्तो दुःखजलांजलिर्निरुपमं न्यासीकृतं स्वःसुखं । येनेदं शिवशर्मकार्मणमणेः संघस्य पूजा कृता ॥ १ ॥ रत्नानामिव रोहणः क्षितिधरः खं तारकाणामिव । स्वर्गः कल्पमहीरुहामिव सरः पंकेरुहाणामिव ॥ पाथोधिः पयसां शशीव महसां स्थानं गुणानामसा—वित्यालोच्य विरच्यतां भगवतः संघस्य पूजाविधिः ॥ २ ॥ कदा किल भविष्यंति । मद्गृहांगणभूमयः ॥ श्रीसंघचरणांभोज—रजोराजिपवित्रिताः ॥ ३ ॥ रुचिरकनकधाराः प्रांगणे तस्य पेतुः । प्रवरमणिनिधानं तद्गृहांतः प्रविष्टं ॥ अमरतरुलतानामुद्गमस्तस्य गेहे । भवनमिह सहर्षं यस्य पस्पर्श संघः ॥ ४ ॥ कल्पोर्वीरुहसंततिस्तदजिरे चिंतामणिस्तत्करे । श्लाघ्या कामदुघानघा च सुरभी तस्यावतीर्णा गृहे ॥ त्रैलोक्याधिपतित्वसाधनसहा श्रीस्तन्मुखं वीक्षते । संघो यस्य गृहांगणं

गुणयुतः पादैः समाक्रामति ॥ ५ ॥ यद्भक्तेः फलमर्हदादिपदवी मुख्यं कृषेः शस्यवत । चक्रित्वत्रिदशेंद्रतादि तृणवत्प्रासंगिकं गीयते ॥ शक्तिं यन्महिमस्तुतौ न दधते वाचोऽपि वाचस्पतेः । संघः सोऽघहरः पुनातु चरणन्यासैः सतां मंदिरं ॥ ६ ॥ यः संसारनिरासलालसमतिर्मुक्त्यर्थमुत्तिष्ठते । यं तीर्थं कथयंति पावनतया येनास्ति नान्यः समः ॥ यस्मै तीर्थपतिर्नमस्यति सतां यस्माच्छुभं जायते । स्फुर्त्तिर्यस्य परावसंति च गुणा यस्मिन् स संघोऽर्च्यतां ॥ ७ ॥ रत्नानामिव रोहणः क्षितिधरः खं तारकाणामिव । स्वर्गः कल्पमहीरुहामिव सरः पंकेरुहाणामिव ॥ पाथोधिः पयसां शशीव महसां स्थानं गुणानामसा—वित्यालोच्य विरच्यतां भगवतः संघस्य पूजाविधिः ॥ ८ ॥

अथ श्रीसंघाशीर्वादसूक्तानि—विश्वं सरोवरं तत्र । कमले जिनशासने ॥ चिरं विवेकवान्न जीयात । श्रीसंघो राजहंसवत ॥ १ ॥ जिननम्यो गुणराशि—र्वंदनीयो महात्मनां ॥ संघः सोऽघहरो जीया—द्विश्वस्तुतिपथातिगः ॥ २ ॥ नक्षत्राक्षतपूरितं मरकतस्थालं विशालं नभः । पीयूषद्युतिनालिकेरकलितं चंद्रप्रभाचंदनं ॥ यावन्मेरुकरे गभस्तिकटके धत्ते धरित्रीवधू—स्तावन्नंदतु धर्मकर्मनिरतः श्रीसंघभट्टारकः ॥ ३ ॥ स्फुर्जन्नागेंद्रनाले दिगुपचितदले तारकाबीजजाले । क्षोणीभृत्

केसराले कनकगिरिलसत्कर्णिकाचक्रवाले ॥ यावद्व्योमांबुजेऽस्मिन् स्फुरदुरुललितं राजते राजहंस-द्वंद्वं निर्द्वंद्वमेतज्जगति विजयतां तावदेषोऽत्र संघः ॥ ४ ॥

अथ दयासंबंधिसूक्तानि—शतेषु जायते शूरः। सहस्रेषु च पंडितः ॥ वक्ता शतसहस्रेषु । दाता भवति वा न वा ॥ १ ॥ न रणे विजयी शूरो । विद्यया न च पंडितः ॥ न वक्ता वाक्पटुत्वेन । न दाता धनदायकः ॥ २ ॥ इंद्रियाणां जये शूरो । धर्मं चरति पंडितः ॥ सत्यवादी भवेद्वक्ता । दाता भूताऽभयप्रदः ॥ ३ ॥ अहिंसासंभवो धर्मः । स हिंसातः कथं भवेत् ॥ न तोयजानि पद्मानि । जायंते जातवेदसः ॥ ४ ॥ कृपानदीमहातीरे । सर्वे धर्मास्तृणांकुराः ॥ तस्यां शोषमुपेतायां । कियन्नंदंति ते पुनः ॥ ५ ॥ निर्गुणेष्वपि सत्वेषु । दयां कुर्वंति साधवः ॥ न हि संहरति ज्योत्स्नां । चंद्रश्चंमालवेश्मसु ॥ ६ ॥ किं ताए पढिआए । पयकोमीए पलालभूआए ॥ जह्वित्तियं न नायं । परस्स पीमा न कायवा ॥ ७ ॥ इक्कहजीविअकारणेहिं । मारि म जीवसयाइं ॥ अज्जहिं कल्लहिं मरण तुं । पामिसि दुक्खसयाइं ॥ ८ ॥ इक्कस्स कए निअजीविअस्स । बहुआउ जीवकोडीउ ॥ दुक्खे ठवंति जे केइ । ताणं किं सासयं जीअं ॥ ९ ॥ न सा दीक्षा न सा भिक्षा । न

तद्दानं न तत्तपः ॥ न तद्ध्यानं न तन्मौनं । दया यत्र न विद्यते ॥ १० ॥ दयादयितया शून्ये ।
मनोवासगृहे नृणां ॥ दानादिदूताहूतोऽपि । धर्मोऽयं नावतिष्ठते ॥ ११ ॥ यस्य चित्तं द्रवीभूतं । कृ-
पया सर्वजंतुषु ॥ तस्य ज्ञानं च मोक्षश्च । न जटाभस्मचीवरैः ॥ १२ ॥ पठितं श्रुतं च शास्त्रं । गु-
रुपरिचरणं गुरुतपश्चरणं ॥ घनगर्जितमिव विपुलं । विफलं सकलं दयाविकलं ॥ १३ ॥ हंतूण प-
रप्पाणे । अप्पाणं जो करेइ सप्पाणं ॥ अप्पाणंदिअहाणं । कए अ नासेइ अप्पाणं ॥ १४ ॥
सर्वाणि भूतानि सुखे रतानि । सर्वाणि दुःखस्य समुद्विजंति ॥ तस्मात्सुखार्थी सुखमेव दत्ते । सु-
खप्रदाता लभते सुखानि ॥ १५ ॥ वसंत्यरण्येषु चरंति दूर्वां । पिबंति तोयान्यपरिगृहाणि ॥ तथापि
वध्या हरिणा नराणां । को लोकमाराधयितुं समर्थः ॥ १६ ॥ वैरिणोऽपि हि मुच्यंते । प्राणांते तृ-
णभक्षणात ॥ तृणाहाराः सदैवेते । हन्यंते पशवः कथं ॥ १७ ॥ रसातलं यातु यदत्र पौरुषं । कु-
नीतिरेषाऽशरणो ह्यदोषवान् ॥ विहन्यते यद्बलिनापि दुर्बलो । हहा महाकष्टमराजकं जगत ॥१८॥
येषां प्राणिवधः क्रीडा । नर्ममर्मपरं वचः ॥ कार्यं परोपतापित्वं । ते मृत्योरपि मृत्यवः ॥ १९ ॥ य-
दि ग्रावा तोये तरति तरणिर्यद्युदयति । प्रतीच्यां सप्तार्चिर्यदि भजति शैत्यं कथमपि ॥ यदि क्ष्मापी-

ठं स्यादुपरि सकलस्यापि जगतः । प्रसूते सत्वानां तदपि न वधः क्वापि सुकृतं ॥ २० ॥ क्रीडाभूः
सुकृतस्य दुःकृतरजःसंहारवात्या भवो—दन्वन्नौर्व्यसनाग्निमेघपटली संकेतदूती श्रियां ॥ निःश्रेणिस्त्रि
दिवौकसः प्रियसखी मुक्तेः कुगत्यर्गला । सत्वेषु क्रियतां कृपैव भवतु क्लेशैरशेषैः परैः ॥ २१ ॥
आयुर्दीर्घतरं वपुर्वरतरं गोत्रं गरीयस्तरं । वित्तं भूरितरं बलं बहुतरं स्वामित्वमुच्चैस्तरं ॥ आरोग्यं
विगतांतरं त्रिजगतः श्लाघ्यत्वमल्पेतरं । संसारांबुनिधिं करोति सुतरं चेतः कृपासंकुलं ॥ २२ ॥ जं
आरुग्गमुदग्गमप्पडिहयं आणेसरत्तं फुडं । रूवं अप्पडिरूवमुज्जलतरा कित्ती धणं जुव्वणं ॥ दीहं
आउ अवंचणो परिअणो पुत्ता सुपुत्ता सया । तं सव्वं सचराचरंमि जए नूणं दयाए फलं ॥२३॥
अथ सत्यसंबंधिसूक्तानि—कुर्वंति देवा अपि पक्षपातं । नरेश्वराः शासनमुद्वहंति ॥ शांता
भवंति ज्वलनादयो य—त्तत्सत्यवाचां फलमामनंति ॥ १ ॥ तस्याग्निर्जलमर्णवः स्थलमरिर्मित्रं सुराः
किंकराः । कांतारं नगरं गिरिर्गृहमहिर्माल्यं मृगारिर्मृगः ॥ पातालं बिलमस्त्रमुत्पलदलं व्यालः शृ
गालो विषं । पीयूषं विषमं समं च वचनं सत्यांचितं वक्ति यः ॥ २ ॥ विश्वासायतनं विपत्तिदलनं
देवैः कृताराधनं । मुक्तेः पथ्यदनं जलाग्निशमनं व्याघ्रोरगस्तंभनं ॥ श्रेयःसंवननं समृद्धिजननं सौ-

जन्यसंजीवनं । कीर्त्तेः केलिवनं प्रभावभवनं सत्यं वचः पावनं ॥ ३ ॥ जेण परो दुहिज्जइ । पाणिवहो होइ जेण भणिएण ॥ अप्पा पडइ अणत्थे । न हु तं जंपंति गीअत्था ॥ ४ ॥ राज्यं यातु श्रियो यांतु । यांतु प्राणा विनश्वराः ॥ या मया स्वयमेवोक्ता । वाचा मा यातु शाश्वती ॥ ५ ॥ एवं करोमीति कृतप्रतिज्ञो । यः स्वीकृतं नैव करोत्यसत्वः ॥ यात्यस्य संस्पर्शजकश्मलानां । प्रक्षालनायाब्धिरपि न चालं ॥ ६ ॥ पलएवि महापुरिसा । पडिवन्नं अन्नहा न हु कुणंति ॥ गबंति न दीणत्तं । कुणंति न हु पत्थणाभंगं ॥ ७ ॥ तत्तिअमित्तं जंपह । जत्तिअमित्तस्स निक्कयं वहइ ॥ तं उक्खिवेह भारं । जं अद्धपहे न छंडेह ॥ ८ ॥

अथ मिथ्यावादसंबंधिसूक्तानि—लिंगिनां परमाधारो । वेश्यानां परमो निधिः ॥ वणिजां परमा नीवी । मृषावाद नमोऽस्तु ते ॥ १ ॥ पारदारिकचौराणा—मस्ति काचित्प्रतिक्रिया ॥ असत्यवादिनः पुंसः । प्रतीकारो न विद्यते ॥ २ ॥ असत्यमप्रत्ययमूलकारणं । कुवासनासद्म समृद्धिवारणं ॥ विपन्निदानं परवंचनोर्जितं । कृतापराधं कृतिभिर्विवर्जितं ॥ ३ ॥ यत्र यो मुच्यते प्राय—स्तत्र स्तेयं करोति सः ॥ कथं न हरते वारि । वारिमध्यस्थिता घटी ॥ ४ ॥

अथ वाक्संबंधिसूक्तानि—यदीहसि वशीकर्तुं । जगदेकेन कर्मणा ॥ परापवादशस्येभ्य—श्चरंतीं गां निवारय ॥ १ ॥ परपरिवादः पर्षदि । न कथंचन पंडितेन वक्तव्यः ॥ सत्यमपि तन्न वाच्यं । यदुक्तमसुखावहं भवति ॥ २ ॥ वरं मौनेन नीयंते । कोकिलैरिव वासराः ॥ यावत्सर्वजनानंद—दायिनी गीः प्रवर्त्तते ॥ ३ ॥ तुल्यवर्णच्छदैः कृष्ण—कोकिलैः किल संगतः ॥ केन विज्ञायते काकः । स्वयं यदि न भाषते ॥ ४ ॥ स्वजिह्वा नो वशे यस्य । जल्पने भोजने तथा ॥ स भवेद्दुःखितो नित्य—मात्मनो दुष्टचेष्टितैः ॥ ५ ॥ हितं मितं प्रियं स्निग्धं । मधुरं परिणतिप्रियं ॥ भोजनं वचनं चापि । भुक्तमुक्तं प्रशस्यते ॥ ६ ॥ स्वायत्तमेकांतहितं विधात्रा । विनिर्मितं छादनमज्ञतायाः ॥ विशेषतः सर्वविदां समाजे । विभूषणं मौनमपंडितानां ॥ ७ ॥ मुखदोषेण बध्यंते । शुकसारसतित्तिराः ॥ बकास्तत्र न बध्यंते । मौनं सर्वार्थसाधनं ॥ ८ ॥ न तथा रिपुर्न शस्त्रं । न विषं न हि दारुणो महाव्याधिः ॥ उद्वेजयति पुरुषं । यथा हि कटुकाक्षरा वाणी ॥ ९ ॥ न तथा शशी न सलिलं । न चंदनरसो न शीतला छाया ॥ आह्लादयंति पुरुषं । यथा हि मधुराक्षरा वाणी ॥ १० ॥ रे जिह्वे कटुकस्नेहे । मधुरं किं न भाषसे ॥ मधुरं वद कल्याणे । लोको हि मधुर-

प्रियः ॥ ११ ॥ यदि तात धनं नास्ति । पूर्वदुःकृतकर्मणा ॥ तथापि ललिता वाणी । वचने का दरिद्रता ॥ १२ ॥ असंभाव्यं न वक्तव्यं । प्रत्यक्षं यदि दृश्यते ॥ यथा वानरसंगीतं । तथा तरति सा शिला ॥ १३ ॥ नैव भाग्यं विना विद्या । विना विद्यां न भाषितं ॥ सुभाषितविहीनस्य । जीवितान्मरणं वरं ॥ १४ ॥ अर्द्धांगुलपरिमाण—जिह्वाग्रायासभीरवः ॥ सर्वांगगं परिक्लेशं । सहंते मंदबुद्धयः ॥ १५ ॥ प्रियवाक्यप्रदानेन । सर्वे तुष्यंति जंतवः ॥ तस्मात्तदेव कर्त्तव्यं । वचने किं दरिद्रता ॥ १६ ॥ कोऽतिभारः समर्थानां । किं दूरं व्यवसायिनां ॥ को विदेशः सविद्यानां । कः परः प्रियवादिनां ॥ १७ ॥ प्रस्तुतं हेतुसंयुक्तं । शुद्धं साधुजनप्रियं ॥ यो वक्तुं नैव जानाति । स जिह्वां किं न रक्षति ॥ १८ ॥ प्रस्तावसदृशं वाक्यं । सद्भावसदृशं प्रियं ॥ आत्मशक्तिसमं कोपं । यो जानाति स पंडितः ॥ १९ ॥ युक्तमेव कृतं मौनं । काले प्रावृषि कोकिलैः ॥ वक्तारो दर्दुरा यत्र । तत्र नष्टं सुभाषितैः ॥ २० ॥ धर्मध्वंसे क्रियालोपे । स्वसिद्धांतार्थविप्लवे ॥ अपृष्टेनापि शक्तेन । वक्तव्यं तन्निषेधकं ॥ २१ ॥ एकापि कलासु कला । वचनकला किं कलाभिरपराभिः ॥ वरमेका कामगवी । जरद्गवीनां न लक्षमपि ॥ २२ ॥ केयूरा न विभूषयंति पुरुषं हारा न चंद्रोज्ज्वला । न

स्नानं न विलेपनं न कुसुमं नालंकृता मूर्द्धजाः ॥ वाण्येका समलंकरोति पुरुषं या संस्कृता धार्यते। क्षीयंते खलु भूषणानि सततं वाग्भूषणं भूषणं ॥ २३ ॥

अथ सुभाषितसूक्तानि—मांसखंडं न सा जिह्वा । या न वेत्ति सुभाषितं ॥ नूनं काकभयादेषा । दंतांतर्विनिवेशिता ॥ १ ॥ पृथिव्यां त्रीणि रत्नानि । जलमन्नं सुभाषितं ॥ मूढैः पाषाणखंडेषु । रत्नसंज्ञा निवेशिता ॥ २ ॥ यस्य वक्त्रकुहरे सुभाषितं । नास्ति नाप्यवसरे प्रजल्पति ॥ आगतः सदसि धीमतामसौ । लेप्यनिर्मित इवावभासते ॥ ३ ॥ सुभाषितेन गीतेन । युवतीनां च लीलया ॥ मनो न भिद्यते यस्य । स योगी ह्यथवा पशुः ॥ ४ ॥ धर्मो यशो नयो दाक्ष्यं । मनोहारि सुभाषितं ॥ इत्यादिगुणरत्नानां । संग्रही नावसीदति ॥ ५ ॥ जणणी जम्मुपत्ती । पच्छिमनिद्दा सुभासिआ गुठी ॥ मणइठं माणुस्सं । पंचवि दुक्खेहिं मुचंति ॥ ६ ॥ जं अवसरे न हूअं । दाणं विणअं सुभासिअं वयणं ॥ पच्छागयकालेणं । अवसररहिएण किं तेण ॥ ७ ॥

अथाऽदत्तसंबंधिसूक्तानि—अदत्तं नादत्ते कृतसुकृतकामः किमपि यः । शुभश्रेणिस्तस्मिन् वसति कलहंसीव कमले ॥ विपत्तस्माद्दूरं व्रजति रजनीवांबरमणे—र्विनीतं विद्येव त्रिदिवशिवल-

च्छ्रीर्भजति तं ॥ १ ॥ यन्निर्वर्त्तितकीर्त्तिधर्मनिधनं सर्वागसां साधनं । प्रोन्मीलद्वधबंधनं विरचितक्लि· ष्टाशयोद्बोधनं ॥ दौर्गत्यैकनिबंधनं कृतसुगत्याश्लेषसंरोधनं । प्रोत्सर्पत्प्रधनं जिघृक्षति न तद्धीमानद· त्तं धनं ॥ २ ॥ वरं वह्निशिखाः पीताः । सर्पास्यं चुंबितं वरं ॥ वरं हालाहलं लीढं । परस्वहरणं न तु ॥ ३ ॥ चौरश्चौरार्पको मंत्री । भेदज्ञः काणकक्रयी ॥ अन्नदः स्थानदश्चेति । चौरः सप्तविधः स्मृतः ॥ ४ ॥ हरिऊण य परदव्वं । पूअं जो करइ जिणवरिंदाणं ॥ दहिऊण चंदणतरुं । कुण· इ अंगारवाणिज्जं ॥ ५ ॥

अथ संतोषसंबंधिसूक्तानि—सर्पाः पिबंति पवनं न च दुर्बलास्ते । शुष्कैस्तृणैर्वनगजा बलि· नो भवंति ॥ कंदैः फलैर्मुनिवरा गमयंति कालं । संतोष एव पुरुषस्य परं निधानं ॥ १ ॥ इप्सितं मनसा सर्वं । कस्य संपद्यते सुखं ॥ दैवायत्तं जगत्सर्वं । तस्मात् संतोषमाश्रयेत ॥ २ ॥ निवृत्तायां धनेछायां । पार्श्वस्था एव संपदः ॥ अंगुल्या पिहिते कर्णे । शब्दाद्वैतं विजृंभितं ॥ ३ ॥ राजानं तृणतुल्यमेव मनुते शक्रेऽपि नैवादरो । वित्तोपार्जनरक्षणव्ययकृताः प्राप्नोति नो वेदनाः ॥ संसारां· तरवर्त्यपीह लभते शं मुक्तवन्निर्भयः । संतोषात्पुरुषोऽमृतत्वमचिराद्यायात्सुरेंद्रार्चितः ॥ ४ ॥ जातः

कल्पतरुः पुरः सुरगवी तेषां प्रविष्टा गृहं । चिंतारत्नमुपस्थितं करतले प्राप्तो निधिः सन्निधिं ॥ विश्वं वश्यमवश्यमेव सुलभाः स्वर्गापवर्गश्रियो । ये संतोषमशेषदोषदहनध्वंसांबुदं बिभृते ॥ ५ ॥ प्राप्ताः श्रियः सकलकामदुघास्ततः किं । संप्रीणिताः प्रणयिनो विभवैस्ततः किं ॥ दत्तं पदं शिरसि विद्विषतां ततः किं । कल्पं स्थितं तनुभृतां तनुभिस्ततः किं ॥ ६ ॥ निरीहस्य निधानानि । प्रकाशयति काश्यपी ॥ अंगोपांगानि निर्भाय । न गोपयति कामिनी ॥ ७ ॥ उपर्युपरि पश्यंतः । सर्व एव दरिद्रति ॥ अधोऽधः पश्यतः कस्य । महिमा नोपजायते ॥ ८ ॥ अनुचितफलाभिलाषी । दैवेन निवार्यते बलात्पुरुषः ॥ द्राक्षाविपाकसमये । मुखरोगो भवति काकानां ॥ ९ ॥

अथ परिग्रहसंबंधिसूक्तानि—क्षेत्रं वास्तु धनं धान्यं । कुप्यं शयनमासनं ॥ द्विपदः पशवो भांडा । बाह्या दश परिग्रहाः ॥ १ ॥ दायादाः स्पृहयंति तस्करगणा मुष्णंति भूमिभुजो । गृह्णंति छलमाकलय्य हुतभुग्भस्मीकरोति क्षणात ॥ अंभः प्लावयति क्षितौ विनिहितं यक्षा हरंते हठात् । दुर्वृत्तास्तनया नयंति निधनं धिग्बह्वधीनं धनं ॥ २ ॥ अर्थानामर्जने दुःख—मर्जितानां च रक्षणे ॥ आये दुःखं व्यये दुःखं । धिगर्थं दुःखभाजनं ॥ ३ ॥ क्लेशाय विस्तराः सर्वे । संक्षेपास्तु सुखा-

वहाः परार्थं विस्तराः सर्वे । त्यागमात्महितं विदुः ॥ ४ ॥ यथा यथा महत्तंत्रं । विस्तरश्च यथा यथा ॥ तथा तथा महद्दुःखं । सुखं च न तथा तथा ॥ ५ ॥ छन्नं तैः पार्थिवैर्मुक्ता । कालेनोर्वी धनानि च ॥ मेलितानि परं त्यक्त्वा । गतास्ते स्वकृतैः सह ॥ ६ ॥ गोशतादपि गोक्षीरं । मानं मूढशतादपि ॥ मंदिरे मंचकस्थानं । शेषाः परपरिग्रहाः ॥ ७ ॥ निद्राछेदसखेदबांधवजने सोद्वेगवैद्योक्षितः । पथ्यक्वाथकथार्दितः परिजनैस्तंद्रीभवन् क्रोशतः ॥ नष्टस्वास्थ्यमनोरथप्रियतमावष्टब्धपादद्वयः । पर्यंते विवशः करोति पुरुषः किं शल्यतुल्यैर्धनैः ॥ ८ ॥

ब्रह्मज्ञानविवेकनिर्मलधियः कुर्वंत्यहो दुष्करं । यन्मुंचंत्युपभोगभाज्यपि धनान्येकांततो निःस्पृहाः ॥ न प्राप्तानि पुरा न संप्रति न च प्राप्तौ दृढप्रत्ययो । वांछामात्रपरिग्रहाण्यपि वयं त्यक्तुं न तानि क्षमाः ॥ ९ ॥ क्रीडोद्यानमविद्यानां । वारिधिर्व्यसनांभसां ॥ कंदस्तृष्णामहावल्ली—रेक एव परिग्रहः ॥ १० ॥ प्रत्यर्थी प्रशमस्य मित्रमधृतेर्मोहस्य विश्रामभूः । पापानां खनिरापदां पदमसद्ध्यानस्य लीलावनं ॥ व्याक्षेपस्य निधिर्मदस्य सचिवः शोकस्य हेतुः कलेः । केलिवेश्म परिग्रहः परिहृतेर्योग्यो विविक्तात्मनां ॥ ११ ॥

अथ लोभसंबंधिसूक्तानि—लोभमूलानि पापानि । रसमूलाश्च व्याधयः ॥ स्नेहमूलानि दुःखानि । त्रीणि त्यक्त्वा सुखी भव ॥ १ ॥ महीयसापि लाभेन । लोभो न परिपूर्यते ॥ मात्रा समधिकः कुत्र । मात्राहीनेन जायते ॥ २ ॥ लोभो मुक्तो यदि तदा । तपोभिरफलैरलं ॥ लोभस्त्यक्तो न चेत्तर्हि । तपोभिरफलैरलं ॥ ३ ॥ निःशेषधर्मवनदाहविजृंभमाण—दुःखौघभस्मनि विसर्पदकीर्त्तिधूमे ॥ बाढं धनेंधनसमागमदीप्यमाने । लोभानले शलभतां लभते गुणौघः ॥ ४ ॥ यद्दुर्गामटवीमटंति विकटं क्रामंति देशांतरं । गाहंते गहनं समुद्रमतुलक्लेशां कृषिं कुर्वते ॥ सेवंते कृपणं पतिं गजघटासंघट्टदुःसंचरं । सर्पंति प्रधनं धनांधितधियस्तल्लोभविस्फुर्जितं ॥ ५ ॥ नीचस्यापि चिरं चटूनि रचयंत्यायांति नीचैर्नतिं । शत्रोरप्यगुणात्मनोऽपि विदधत्युच्चैर्गुणोत्कीर्तनं ॥ निर्वेदं न विदंति किंचिदकृतज्ञस्यापि सेवाकृते । कष्टं किं न मनस्विनोऽपि मनुजाः कुर्वंति वित्तार्थिनः ॥ ॥ ६ ॥ मूलं मोहविषद्रुमस्य सुकृतांभोराशिकुंभोद्भवः । क्रोधाग्नेररणिः प्रतापतरणिप्रच्छादने तोयदः ॥ क्रीडासद्म कलेर्विवेकशशिनः स्वर्भाणुरापन्नदी-सिंधुः कीर्तिलताकलापकलभो लोभः पराभूयतां ॥

अथ तृष्णासंबंधिसूक्तानि—मुखं वलिभिराक्रांतं । पलितैरंकितं शिरः ॥ गात्राणि शिथिला-

यंते । तृष्णैका तरुणायते ॥ १ ॥ दंतैरुच्चलितं धिया तरलितं पाण्यंघ्रिणा कंपितं । दृग्भ्यां कुझ्म-
लितं बलेन गलितं रूपश्रिया प्रोज्झितं ॥ प्राप्तायां यमभूपतेरिह महाधाट्यां धरायामियं । तृष्णा
केवलमेककैव सुभटी हृत्पत्तने नृत्यति ॥ २ ॥ अंगं गलितं पलितं मुंडं । दशनविहीनं जातं तुंडं
॥ वृद्धो याति गृहीत्वा दंडं । तदपि न मुंचत्याशापिंडं ॥३॥ उत्खातं निधिशंकया क्षितितलं ध्मा-
ता गिरेर्धातवो । निस्तीर्णः सरितां पतिर्नृपतयो यत्नेन संसेविताः ॥ मंत्राराधनतत्परेण मनसा नी
ताः स्मशाने क्षपाः । प्राप्तः काणवराटकोऽपि न मया तृष्णे सकामा भव ॥ ४ ॥ आराध्य भूपति
मवाप्य ततो धनानि । भोक्ष्यावहे वयममी सततं सुखानि ॥ इत्याशया बत विमोहितमानसानां ।
कालः प्रयाति मरणावधिरेव पुंसां ॥ ५ ॥ रात्रिर्गमिष्यति भविष्यति सुप्रभातं । भास्वानुदेष्यति
हसिष्यति पंकजं च ॥ इत्थं विचिंतयति कोशगते द्विरेफे । हा मूलतः कमलिनीं गज उज्जहार
॥ ६ ॥ यौवनं जरया ग्रस्तं । शरीरं व्याधिपीडितं ॥ मृत्युराकांक्षति प्राणान् । तृष्णैका निरुपद्रवा
॥ ७ ॥ शरीरं श्लथते नाऽशा । रूपं याति न पापधीः ॥ जरा स्फुरति न ज्ञानं । धिक्स्वरूपं शरी-
रिणां ॥ ८ ॥ तृष्णा खानिरगाधेयं । दुःपूरा केन पूर्यते ॥ या महद्भिरपि क्षिप्तैः । पूरणैरेव खन्य-

ते ॥ ९ ॥ आकांक्षितानि जंतूनां । संपद्यंते यथा यथा ॥ तथा तथा विशेषाप्तौ । मनो भवति दुःखितं ॥ १० ॥ मनोरथरथारूढं । युक्तमिंद्रियवाजिभिः ॥ भ्राम्यतीदं जगत्सर्वं । तृष्णासारथिनोदितं ॥ ११ ॥ त्यागार्थं यस्य वित्तेहा । तस्याऽनीहा गरीयसी ॥ प्रक्षालनाद्धि पंकस्य । दूरादस्पर्शनं वरं ॥ १२ ॥ धनेषु जीवितव्येषु । स्त्रीषु चाहारकर्मसु ॥ अतृप्ताः प्राणिनः सर्वे । याता यास्यंति यांति च ॥ १३ ॥ भवो दुःखमयः सोऽयं । किमाभाति भवस्तव ॥ यत्रेक्षातुलितं दुःखं । लभ्यते न पुनर्मुधा ॥ १४ ॥ बिंदुनाप्यधिका चिंता । चितायाः इति मे मतिः ॥ चिता दहति निर्जीवं । चिंता जीवंतमप्यहो ॥ १५ ॥ तृष्णादेवि नमस्तुभ्यं । का कथेतरमानवे ॥ अनंतनाम यद्रूपं । तत्त्वया वामनीकृतं ॥ १६ ॥ आशैव राक्षसी पुंसा—माशैव विषमंजरी ॥ आशैव जीर्णमदिरा । धिगाशां सर्वदोषभूः ॥ १७ ॥ ते धन्याः पुण्यभाजस्ते । तैस्तीर्णः क्लेशसागरः ॥ जगत्संमोहजननी । यैराशाशीविषी जिता ॥ १८ ॥ कालो न यातो वयमेव याता । भोगा न भुक्ता वयमेव भुक्ताः ॥ तृष्णा न जीर्णा वयमेव जीर्णा—स्तपो न तप्तं वयमेव तप्ताः ॥ १९ ॥

अथ जरासंबंधिसूक्तानि—मनसि जरसाभिभूता । जायंते यौवनेऽपि विद्वांसः ॥ मंदधियः पु-

नरितरे । भवंति वृद्धत्वयोगेऽपि ॥ १ ॥ आरोहंति शिरः स्वांता—दौन्नत्यं तनुते जरा ॥ शिरसः
स्वांतमायांती । दिशते नीचतां पुनः ॥ २ ॥ यातं यौवनमधुना । वनमधुना शरणमस्माकं ॥ स्फु·
रदुरुहारमणीनां । हा रमणीनां गतः कालः ॥ ३ ॥ अलंकरोति हि जरा । राजामात्यभिषग्वरान् ॥
विडंबयति पण्यस्त्री—मल्लगायकसेवकान् ॥ ४ ॥ वदनं दशनविहीनं । वाचो न परिस्फुटा गता श·
क्तिः ॥ अव्यक्तेंद्रियशक्तिः । पुनरपि बाल्यं कृतं जरया ॥ ५ ॥ गात्रं संकुचितं गतिर्विगलिता दं·
ताश्च नाशं गता । दृष्टिर्भ्रस्यति रूपमेव ह्रसते वक्त्रं च लालायते ॥ वाक्यं नैव करोति बांधवजनः
पत्नी न शुश्रूषते । हा कष्टं जरयाभिभूतपुरुषं पुत्रोऽप्यवज्ञायते ॥ ६ ॥ वृद्धस्य मृतभार्यस्य । पुत्रा·
धीनधनस्य च ॥ स्नुषावचनदग्धस्य । जीवितान्मरणं वरं ॥ ७ ॥ यममिव गृहीतदंडं । हरिमिव स·
गदं शशांकमिव वक्रं ॥ शंभुमिव विरूपाक्षं । जरा करोत्यकृतपुण्यमपि ॥ ८ ॥ पटु रटति पलितदू·
तो । मस्तकमासाद्य सर्वलोकस्य ॥ परिभवति जरामरणं । कुरु धर्मं विरम पापेभ्यः ॥ ९ ॥ वृद्ध·
त्वानलदग्धस्य । सारयौवनवस्तुनः ॥ दृश्यते देहगेहेषु । भस्मेव पलितछलात् ॥ १० ॥ वीक्ष्यते
पलितश्रेणि—नैव वृद्धस्य मूर्धनि ॥ वृथैव जातजन्मेति । किंतु भस्म विधिर्न्यधात ॥ ११ ॥ पलि·

तैः पांडुरीभूता । हंसा जाता वयं किल ॥ पश्य लोकैः कृताः काका–स्तदिदं कस्य कथ्यते ॥१२॥
इयत्यामपि सामग्र्यां । सुकृतं न कृतं त्वया ॥ इतीव कुपितो दंता—नंतकः पातयत्यलं ॥ १३ ॥

अथ लक्ष्मीवत्संबंधिसूक्तानि—लक्ष्मीवंतो न जानंति । प्रायेण परवेदनां ॥ शेषे धराभरक्रांते । शेते लक्ष्मीपतिः सुखं ॥ १ ॥ भक्ते द्वेषो जडे प्रीति—रुच्चित्तं गुरुलंघनं ॥ मुखे च कटुता नित्यं । धनिनां ज्वरिणामिव ॥ २ ॥ अंधा एव धनांधाः स्यु—रिति सत्यं तथा हि ते ॥ अन्योक्तेनाध्वना गच्छं—त्यन्यहस्तावलंबिनः ॥ ३ ॥ लक्ष्मि क्षमस्व सहनीयमिदं दुरुक्त—मंधा भवंति पुरुषास्तव दर्शनेन ॥ नोचेत्कथं कथय पन्नगभोगतल्पे । नारायणः स्वपिति पंकजपत्रनेत्रः ॥ ४ ॥ मदिरामदमत्तोऽपि । किं शृणोति च पश्यति ॥ राजश्रीमदमत्तस्तु । न शृणोति न पश्यति ॥ ५ ॥ अहो बत विचित्राणि । चरित्राणि महात्मनां ॥ लक्ष्मीं तृणाय मन्यंते । तद्भरेण नमंति च ॥ ६ ॥ आलिंगिताः परैर्यांति । प्रस्खलंति पदे पदे ॥ अव्यक्तानि च भाषंते । धनिनो मद्यपा इव ॥ ७ ॥ अवंशपतितो राजा । मूर्खपुत्रो हि पंडितः ॥ अधनेन धनं प्राप्तं । तृणवन्मन्यते जगत ॥ ८ ॥ एहि गच्छ पुरस्तिष्ठ । वद मौनं समाचर ॥ एवमाशाग्रहग्रस्तैः । क्रीडंति धनिनोऽर्थिभिः ॥ ९ ॥ म-

तद्ध्वंसनायेव धनेश्वराणां । दत्ते म-
त्वात्मनो बंधनिबंधनानि । पुण्यानि पुंसां कमला किलासौ ॥ नीचपात्रप्रियत्वं च । पंच
तिं दुर्बलपीडनाय ॥ १० ॥ निर्दयत्वमहंकार—स्तृष्णाकर्कशभाषणं ॥ —न्मोहान्मो-
श्रीसद्दचारिणः ॥ ११ ॥ भोगान् भो गांगवीचिविमलितशिरसः प्राप्य शंभोः प्रसादा
ह्वानभिज्ञाः क्वचिदपि भवत प्राणिनो दर्पभाजः ॥ यस्माद्यः स्मार्त्तविप्रप्रणतनुतपदः सर्वसंपन्नभोगो।
भास्वान् भाः स्वांगभूता अपि तु परिहरन्नस्तमेषः प्रयाति ॥ १२ ॥
अथ लक्ष्मीसंबंधिसूक्तानि—पद्मं पद्मा परित्यज्य । स्वावासमपि या व्रजेत ॥ दिनांते सा कथं
नाम । परस्थानेषु सुस्थिरा ॥ १३ ॥ गुणिनां गुणमालोक्य । निजबंधनशंकया ॥ राजन् लक्ष्मीः
कुरंगीव । दूरं दूरं पलायते ॥ १४ ॥ धीवरशंकिनी नित्यं । प्रायेण श्रीर्जनाशया ॥ गुणिभ्यो बंध-
नत्रस्ता । शफरीव पलायते ॥ १५ ॥ लक्ष्मीर्लक्षणहीनस्य । जातिहीनस्य भारती ॥ कुपात्रे रमते
नारी । गिरौ वर्षति माधवः ॥ १६ ॥ कुपात्रे रमते नारी । गिरौ वर्षति माधवः ॥ नीचमाश्रयते ल-
क्ष्मीः । प्राज्ञः प्रायेण निर्धनः ॥ १७ ॥ निम्नं गच्छति निम्नगेव नितरां निद्रेव विष्कंभते । चैतन्यं
मदिरेव पुष्यति मदं धूम्येव दत्तेंधतां ॥ चापल्यं चपलेव चुंबति दवज्वालेव तृष्णां नय—त्युल्लासं

कुलटांगनेव कमला स्वैरं परिभ्राम्यति ॥ १८ ॥ तावन्माता पिता चैव । तावत्सर्वेऽपि बांधवाः ॥ तावद्भार्या सदा हृष्टा । यावल्लक्ष्मीः स्थिरा गृहे ॥ १९ ॥ तावद्गुणगणकलित—स्तावन्निजगोत्रमंडनं परमं ॥ यावत्करिकर्णचला । कमला न त्यजति सत्पुरुषं ॥ २० ॥ श्रीपरिचयाज्जडा अपि । भवंत्यभिज्ञा विदग्धचरितानां ॥ उपदिशति कामिनीनां । यौवनमद एव ललितानि ॥ २१ ॥ यस्यास्ति वित्तं स नरः कुलीनः । स पंडितः स श्रुतवान् गुणज्ञः ॥ स एव वक्ता स च दर्शनीयः । सर्वे गुणाः कांचनमाश्रयंति ॥ २२ ॥ जाई रूवं विज्जा । तिन्निवि निवडंतु कंदरे विवरे ॥ अत्थुच्चिअ परिवड्ढउ । जेण गुणा पायडा हुंति ॥ २३ ॥ समाश्रयंति सर्वेऽपि । प्रायेण विभवं गुणाः ॥ गुणश्चटति चापेऽपि । कोटिद्वयसमन्विते ॥ २४ ॥ मातृकावर्णपाठेऽपि । शकारो वक्रकंधरः ॥ नूनं जनः समोऽप्येष । लवसंमुखमीक्षते ॥ २५ ॥ वंद्यते यदवंद्योऽपि । यदपूज्योऽपि पूज्यते ॥ गम्यते यदगम्योऽपि । स प्रभावो धनस्य तु ॥ २६ ॥ विद्यावृद्धास्तपोवृद्धा । ये च वृद्धा बहुश्रुताः ॥ सर्वे ते धनवृद्धस्य । द्वारे तिष्ठंति किंकराः ॥ २७ ॥ वारांराशिरसौ प्रसूय भवतीं रत्नाकरत्वं गतो । लक्ष्मि त्वत्पतिभावमेत्य मुरजिज्जातस्त्रिलोकीपतिः ॥ कंदर्पो जनचित्तरंजन इति त्वन्नंदनत्वादभूत् ।

सर्वत्र त्वदनुग्रहप्रणयिनी मन्ये महत्त्वस्थितिः ॥ २८ ॥ सर्वासामपि नारीणां । मध्ये श्रीः सुभगा ख-
लु ॥ स्पृहयंति महांतोऽपि । यां स्वेछाचारिणीमपि ॥ २९ ॥ स्नेणाम्रूषणमणेः कमलाया । यच्चपंति
चपलेत्यपवादं ॥ दूषणं जलनिधेर्जनिकर्तु—र्यत्पुराणपुरुषाय ददौ तां ॥ ३० ॥ नयेन नेता विन-
येन शिष्यः । शीलेन लिंगी प्रशमेन साधुः ॥ जीवेन देहः सुकृतेन देही । वित्तेन गेही रहितो
न किंचित् ॥ ३१ ॥ वरं वनं व्याघ्रगणैर्निषेवितं । द्रुमालये पत्रफलैश्च भोजनं ॥ तृणैश्च शय्या व-
सनं च वल्कलं । न बंधुमध्ये धनहीनजीवितं ॥ ३२ ॥ गुरवो यत्र पूज्यंते । वित्तं यत्र नयार्जितं ॥
अदंतकलहो यत्र । तत्र शक्र वसाम्यहं ॥ ३३ ॥ प्रीतिर्यत्र निजैर्गेहे । देहसत्वं सुसंभृतं ॥ पुण्यः
मात्मन्यगण्यं च । तत्र तिष्ठाम्यहं सदा ॥ ३४ ॥ द्यूतपोषी निजद्वेषी । धातुर्वादी सदालसः ॥ आ-
यव्ययस्याऽनालोची । तत्र तिष्ठाम्यहं सदा ॥ ३५ ॥ शिरस्सु पुष्पं चरणौ सुपूजितौ । निजांगना-
सेवनमल्पभोजनं ॥ अनग्नशायित्वमपर्वमैथुनं । चिरप्रणष्टां श्रियमानयंत्यलं ॥ ३६ ॥ दानमौचि-
त्यविज्ञानं । सत्पात्राणां परिग्रहः ॥ सुकृतं सुप्रभुत्वं च । पंच प्रतिभुवः श्रियः ॥ ३७ ॥ नालस्यप्र-
सरो जडेष्वपि कृतावासस्य कोशे रुचि—र्दंडे कर्कशता मुखे च मृदुता मित्रे महान् संश्रयः ॥

आमूलं च गुणग्रहव्यसनिता द्वेषश्च दोषाकरे । यस्यैषा स्थितिरंबुजस्य वसतिर्युक्तैव तत्र श्रियः ॥ ॥ ३८ ॥ किं तया क्रियते लक्ष्म्या । विदेशगमनेन या ॥ अरयो यां न पश्यंति । बंधुभिर्या न भुज्यते ॥ ३९ ॥ किं तया क्रियते लक्ष्म्या । या वधूरिव केवला ॥ या च वेश्येव सा मान्या । पथिकैरपि भुज्यते ॥ ४० ॥ सत्यैकभूषणा वाणी । विद्या विरतिभूषणा ॥ धर्मैकभूषणा मूर्ति—र्लक्ष्मीः सहानभूषणा ॥ ४१ ॥ सा लक्ष्मीर्या धर्मकर्मोपयुक्ता । सा लक्ष्मीर्या बंधुवर्गोपभोग्या ॥ सा लक्ष्मीर्या स्वांगभोगप्रसंगा । यान्या मान्या सा नु लक्ष्मीरलक्ष्मीः ॥ ४२ ॥ उत्पादिता स्वयमियं यदि तत्तनूजा । तातेन वा यदि तदा भगिनी खलु श्रीः ॥ यद्यन्यसंगमवती च तदा परस्त्री । तत्यागबद्धमनसः सुधियस्ततोऽमी ॥ ४३ ॥ लक्ष्मीः सर्पति नीचमर्णवपयःसंगादिवांभोजिनी । संसर्गादिव कंटकाकुलपदा न कापि धत्ते पदं ॥ चैतन्यं विषसंनिधेरिव नृणामुज्जासयत्यंजसा । धर्मस्थाननियोजनेन गुणिभिर्ग्राह्यं तदस्याः फलं ॥ ४४ ॥ काचिद्वालुकवन्महीतलगता मूलच्छिदाकारणं । द्रव्योपार्जनपुष्पितापि विफला काचित्तु जातिप्रभा ॥ काचिच्छ्रीः कदलीव भोगसुभगा सत्पुण्यबीजच्युता । सर्वांगं सुभगा रसाललतिकावत्पुण्यबीजांचिता ॥ ४५ ॥ निर्द्रव्याणामयं व्ययविभागः—

पादमायान्निधौ कुर्या—त्पादं वित्ताय शुक्लयेत् ॥ धर्मोपजोगयोः पादं । पादं भर्त्तव्यपोषणे ॥४६॥ सद्रव्याणां त्वयं—श्रायादर्द्धं नियुंजीत । धर्मे यद्वाधिकं ततः ॥ शेषेण शेषं कुर्वीत । यत्नतः स्वीयमैहिकं ॥ ४७ ॥ श्रायव्ययमनालोच्य । यस्तु वैश्रमणायते ॥ श्रचिरेणापि कालेन । स तु वैश्रमणायते ॥ ४८ ॥ त्यागो गुणो वित्तवतां । वित्तं त्यागवतां गुणः ॥ परस्परवियुक्तौ तु । वित्तत्यागौ विम्बना ॥ ४९ ॥

श्रथ कृपणसंबंधिसूक्तानि—संग्रहैकपरः प्राप । समुद्रोऽपि रसातलं ॥ दाता तु जलदः पश्य । जुवनोपरि गर्जति ॥ १ ॥ गौरवं प्राप्यते दानाद् । द्रव्यस्य न तु संग्रहात् ॥ स्थितिरुच्चैः पयोदानां । पयोधीनामधः पुनः ॥ २ ॥ श्रधः क्षिपंति कृपणा । वित्तं तत्र यियासवः ॥ संतस्तु गुरुचैत्यादौ । समुच्चैःपदकांक्षिणः ॥ ३ ॥ वनकुसुमं कृपणश्रीः । कूपछाया सुरंगधूली च ॥ तत्रैव यांति विलयं । मनोरथा भाग्यहीनानां ॥ ४ ॥ शरणं किं प्रपन्नानि । विषवन्मारयंति किं ॥ न दीयंते न जुज्यंते । कृपणेन धनानि यत् ॥ ५ ॥ न दातुं नोपजोक्तुं वा । शक्नोति कृपणः श्रियं ॥ किं तु स्पृशति हस्तेन । नपुंसक इव स्त्रियं ॥ ६ ॥ प्रतिकूलो विधिस्तेषां । निर्धना ये विनिर्मिताः ॥ प्रतिकूलत-

मस्तेषु । सतोऽर्थान् ददते न ये ॥ ७ ॥ परवित्तव्ययं वीक्ष्य । खिद्यंते नीचजातयः ॥ यवासको न किं शुष्याद् । वारि व्ययति वारिदे ॥ ८ ॥ भवन्नंजिनं न याणइ । रिद्धिं पत्तोवि पुन्नपरिहीणो ॥ विमलेवि जले तुसिन्ने । जीहाए मंडलो लिहइ ॥ ए ॥ यो नात्मने न गुरवे न च बांधवाय । दीने दयां न कुरुते न च भृत्यवर्गे ॥ किं तस्य जीवितफलं हि मनुष्यलोके । काकोऽपि जीवति चिरं च सुखं च भुंक्ते ॥ १० ॥ प्रियः प्रजानां दातैव । न पुनर्द्रविणेश्वरः ॥ आगछन् वांछ्यते लोके—वारिदो न तु वारिधिः ॥ ११ ॥ अदातरि समृद्धेऽपि । किं कुर्युरुपजीविनः ॥ किंशुके किं शुकः कुर्या—त्फलितेऽपि बुभुक्षितः ॥ १२ ॥ कूपे पयसि लघीयसि । तापेन करः प्रसारितः करिणा ॥ सोऽपि न पयसा लिप्तो । लाघवात्मा परं नीतः ॥ १३ ॥ समृद्धैरपि नो नीचै—श्चार्थसंपद्वितीर्यते ॥ रत्नाकरेण नैकापि । जन्यते हि तरंगिणी ॥ १४ ॥ दाणेण विणा न साहू । न हुंति साहूहिं विरहिञ्चं तिञ्चं ॥ दाणं दिंतेण तन्ने । तित्थुद्धारो कन्ने होइ ॥ १५ ॥ वीतरागेषु यद्दत्तं । यच्च दत्तं तपस्विषु ॥ सागरस्य भवेत्संख्या । तस्य संख्या न विद्यते ॥ १६ ॥ यस्य कोष्ठगतं ह्यन्नं । ब्रह्मचर्येण जीर्यति ॥ स तारयति दातार—मात्मानं च न संशयः ॥ १७ ॥ संपूर्णोऽपि सुवृत्तोऽपि।

स्याददानादधो घटः ॥ लघुः कुब्जोऽपि काणोऽपि । दानादुपरि कर्करः ॥ १८ ॥ रत्नाकर इति चे·
तसि । धृत्वा किं मूर्ख धावसि वृथा त्वं ॥ शमयति न तृषं जलनिधि–रपि तटमासेदुषामेषः ॥२०॥
ऐश्वर्यतिमिरे चक्षुः । पश्यतोऽपि न पश्यति ॥ द्रुतं निर्मलतां याति । दारिद्र्यांजनभेषजात ॥२१॥
वितर वारिद वारि तृषातुरे । त्वरितमुद्यतचातकयाचके ॥ मरुति विस्फुरति क्षणमन्यथा । क्व च भ-
वान् क्व पयः क्व स चातकः ॥ २२ ॥ धनिनोऽप्यदानविभवा । गण्यंते धुरि महादरिद्राणां ॥ हंति
न यतः पिपासा—मतः समुद्रोऽपि मरुरेव ॥ २३ ॥ अस्ति जलं जलराशौ । क्षारं तत्किं विधीयते
तेन ॥ लघुरपि वरं स कूपो । यत्राकंठं जनः पिबति ॥ २४ ॥ अनया रत्नसमृद्ध्या । सागर किं
स्फुरसि बहुललहरीभिः ॥ तव वल्लभा वराक्यो । वहंति वर्षास्वपि जलानि ॥ २५ ॥ अतिसंचयक·
र्तॄणा । वित्तमन्यस्य कारणं ॥ अन्यैः संचीयते यत्ना—न्मधुवन्यैः परिभुज्यते ॥ २६ ॥ कदर्योपात्त·
वित्तानां । भोगो भाग्यवतां भवेत ॥ दंता दलंति कष्टेन । जिह्वा गिलति लीलया ॥ २७ ॥ मृत्युः
शरीरगोप्तारं । रक्षितारं धनं धरा ॥ दुश्चारिणीव हसति । पितरं पुत्रवत्सलं ॥ २८ ॥ प्रासानपि न
लभंते । भोक्तुं भोगान् स्वकर्मभिः कृपणाः ॥ किल भवति चंचुपाको । द्राक्षापाकेषु काककुले ॥

॥ २९ ॥ गाढतरबद्धमुष्टेः । कोशनिषण्णस्य सहजमलिनस्य ॥ कृपणस्य कृपाणस्य च । केवलमाकारतो भेदः ॥ ३० ॥ कृपणेन समो दाता । न भूतो न भविष्यति ॥ अस्पृशन्नेव वित्तानि । यः परेभ्यः प्रयच्छति ॥ ३१ ॥ अधुना धनं न यच्छति । यदि तुच्छस्तावतैव स किमस्तु ॥ दास्यति काले कृपणः । प्राणानप्यनंतकातिशये ॥ ३२ ॥ अदाता पुरुषस्त्यागी । सर्वमुत्सृज्य गच्छति ॥ दातारं कृपणं मन्ये । मृतोऽप्यर्थं न मुंचति ॥ ३३ ॥ आदाय वारि परितः सरितां शतेभ्यः । किं नाम साधितमनेन महार्णवेन ॥ क्षारीकृतं च वडवादहने हुतं च । पातालकुक्षिकुहरे विनिवेशितं च ॥ ॥ ३४ ॥ ये संतोषसुखप्रमोदमुदितास्तेषां न भिन्ना मुदो । ये त्वन्ये धनलुब्धसंकुलधियस्तेषां न तृष्णा हता ॥ इत्थं कस्य कृते कृतः स विधिना तादृक् पदं संपदां । स्वात्मन्येव समाप्तहेममहिमा मेरुर्न मे रोचते ॥ ३५ ॥ दानार्थिनो मधुकरा यदि कर्णतालै—र्दूरीकृताः करिवरेण मदांधबुद्ध्या ॥ तस्यैव गल्लयुगमंडलहानिरेषा । भृंगाः पुनर्विकचपद्मवने चरंति ॥ ३६ ॥ प्रीतिं न प्रकटीकरोति सुहृदि द्रव्यव्ययाशंकया । भीतः प्रत्युपकारकारणभयान्नो गृह्यते सेवया ॥ मिथ्या जल्पति वित्तमार्गणधिया स्तुत्यापि न प्रीयते । कीनाशो विभवव्ययव्यतिकरत्रस्तं कथं प्राप्णोति ॥ ३७ ॥

अथ दानोपदेशसंबंधिसूक्तानि—संपत्तौ नियमः शक्तौ । सहनं यौवने व्रतं ॥ दारिद्रे दानमत्यल्प—मपि लाभाय जायते ॥ १ ॥ निर्भाग्यविभवैर्वप्तुं । सप्तक्षेत्र्यां न लभ्यते ॥ यत्र पत्नादयोऽप्युप्ताः । फलं यच्छंति वांछितं ॥ २ ॥ सारं तदेव सारं । नियोज्यते यज्जिनेंद्रभवनादौ ॥ अपरं पुनरपरधनं । पृथ्वीमलखंडपिंडं वा ॥ ३ ॥ अतिथिर्यस्य भग्नाशो । गृहात्प्रतिनिवर्त्तते ॥ स तस्मै दुष्कृतं दत्वा । पुण्यमादाय गच्छति ॥ ४ ॥ तिथिपर्वोत्सवाः सर्वे । त्यक्ता येन महात्मना ॥ अतिथिं तं विजानीया—च्छेशमभ्यागतं विदुः ॥ ५ ॥ जीवति स जीवलोके । यस्य गृहाद्यांति नार्थिनो विमुखाः ॥ भृतकवदन्यजनोऽसौ । दिनानि पूरयति कालस्य ॥ ६ ॥ बोधयंति न याचंते । भिक्षाहारा गृहे गृहे ॥ याचकस्य प्रदातव्य—मदत्तफलमीदृशं ॥ ७ ॥ पश्चाद्दत्तं परैर्दत्तं । लभ्यते वा न लभ्यते ॥ स्वहस्तेन च यद्दत्तं । लभ्यते तन्न संशयः ॥ ८ ॥ क्षुत्क्षामः पथिको मदीयभवनं पृच्छन्कुतोऽप्यागत—स्तत्किं गेहिनि किंचिदस्ति यदयं भुंक्ते बुभुक्षातुरः ॥ वाचास्तीत्यभिधाय नास्ति च पुनः प्रोक्तं विनैवाक्षरैः । स्थूलस्थूलविलोललोचनगलद्बाष्पांभसां बिंदुभिः ॥ ए ॥ अहो पश्यतां दीनजा कापि लीला । न भूता पुरा सांप्रतं नो भविन्नी ॥ यया श्रेणिकोऽज्ञायि नो राजराजा ।

गृहेऽभ्यागतः शालिना संगमेन ॥ १० ॥ यन्मयास्तमिते सूर्ये । न दत्तं धनमर्थिनां ॥ तद्धनं नैव पश्यामि । प्रातः कस्य भविष्यति ॥ ११ ॥ क्षिप्त्वा तोयनिधिस्तले मणिगणं रत्नोत्करं रोहणो । रेएवावृत्य सुवर्णमात्मनि दृढं बध्ध्वा सुवर्णाचलः ॥ क्ष्मामध्ये च धनं निधाय धनदो बिभ्यत्परेभ्यः स्थितः । किं स्यात्तैः कृपणैः समोऽयमखिलार्थिभ्यः स्वमर्थं ददत ॥ १२ ॥ ववसायफलं विहवो । विहवस्स फलं सुपत्तविणिओगो ॥ तअभावे ववसाओ । विहवोवि अ दुग्गइनिमित्तं ॥ १३ ॥ उत्पाद्य कृत्रिमान् दोषान् । धनी सर्वत्र बाध्यते ॥ निर्धनः कृतदोषोऽपि । सर्वत्र निरुपद्रवः ॥ १४ ॥ पृथिव्यामंबुपूर्णायां । चातकस्य मरुस्थली ॥ सत्यमेतदृषेर्वाक्य—मदत्तं नैव लभ्यते ॥ १५ ॥ मा मंस्थाः क्षीयते वित्तं । दीयमानं कदाचन ॥ कूपारामगवादीनां । ददतामेव संपदः ॥ १६ ॥ दानं भोगो नाश—स्तिस्रो गतयो भवंति वित्तस्य ॥ यो न ददाति न भुंक्ते । तस्य तृतीया गतिर्भवति ॥ १७ ॥ आयासशतलब्धस्य । प्राणेभ्योऽपि गरीयसः ॥ गतिरेकैव वित्तस्य । दानमन्या विपत्तयः ॥ १८ ॥ दातव्यं भोक्तव्यं । सति विभवे संचयो न कर्त्तव्यः ॥ पश्येह मधुकरीणां । संचितमर्थं हरंत्यन्ये ॥ १९ ॥ प्रदत्तस्य प्रभुक्तस्य । दृश्यते महदंतरं ॥ दत्तं श्रेयांसि संसूते । विष्टा भवति भ-

। शाम्यंति शिखंडिनां ध्वनयः ॥ २१ ॥ यद्गर्जलमपि जलदो । वल्लभतामेति सकललोकस्य ॥ नित्यं प्रसारितकरः । सवितापि भवत्यचाक्षुष्यः ॥ २२ ॥ यदि भवति धनेन धनी । क्षितितलनिहितेन भोगरहितेन ॥ तस्माद्वयमपि धनिन—स्तिष्ठति नः कांचनो मेरुः ॥ २३ ॥ अयमवसरमुपकृतये । प्रकृतिचला यावदस्ति संपदियं ॥ विपदि नियतो दयायां । पुनरुपकर्तुं कुतोऽवसरः ॥ २४ ॥ निजकरनिकरसमृद्ध्या । धवलय भुवनानि पार्वणशशांक ॥ सुचिरं हंत न सहते । हतविधिरिह सुस्थितं कमपि ॥ २५ ॥ अयमवसरः सरस्ते । सलिलैरुपकर्तुमर्थिनामनिशं ॥ इदमपि सुलभमंभो । भवति पुरा जलधराभ्युदये ॥ २६ ॥ दाता सदैवाक्षयवैभवः स्या—द्वनीपकस्तादृश एव निःस्वः ॥ नद्यो भृता अप्यचिरेण रिक्ताः । कूपः पयोभिस्तु तथैव पूर्णः ॥ २७ ॥ अदत्तदानाच्च भवेद्दरिद्री । दरिद्रभावाद्वितनोति पापं ॥ पापं हि कृत्वा नरकं प्रयाति । पुनर्दरिद्री पुनरेव पापी ॥ २८ ॥ याचितश्चिरयसि क्व नु वीर । प्राणने क्षणमपि प्रतिभूः कः ॥ शंसति हि नयनी हृढनिद्रां । द्राग्निमेषमिषघूर्णनपूर्णा ॥ २९ ॥ याचमानजनमानसवृत्तेः । पूरणाय बत जन्म न यस्य ॥ तेन भूमिरति-

भारवतीयं । न द्रुमैर्न गिरिभिर्न समुद्रैः ॥ ३० ॥ नाक्षराणि पठता किमपाठि । विस्मृतः किमथवा पठितोऽपि ॥ शब्दमर्थचयसंशयदोला—खेलनं खलु चकार नकारः ॥ ३१ ॥

अथ दानफलसूक्तानि—धर्मस्य मूलं पदवी महिम्नः । पदं विवेकस्य फलं विभूतेः ॥ प्राणाः प्रभुत्वे प्रतिभूश्च सिद्धे—र्दानं गुणानामिदमेकमोकः ॥ १ ॥ दानेन भूतानि वशीभवंति । दानेन वैराण्यपि यांति नाशं ॥ परोऽपि बंधुत्वमुपैति दाना—त्ततः पृथिव्यां प्रवरं हि दानं ॥ २ ॥ दानेन चक्रित्वमुपैति जंतु—र्दानेन देवाधिपतित्वमुच्चैः ॥ दानेन निःशेषयशोऽभिवृद्धि—र्दानं शिवे धारयति क्रमेण ॥ ३ ॥ दानं मानवदानवेंद्रपदवीविस्तारणंप्रत्यलं । दानं वासवसुंदरीसरभसक्रीडाकलाकौशलं ॥ दानं मोक्षकपाटपाटनविधौ स्फुर्जत्सुरेंद्रायुधं । दानं विष्टपजंतुपुण्यनिवहप्रासादसिंहध्वजः ॥ ४ ॥ पात्रे धर्मनिबंधनं तदितरे प्रोद्यद्दयाख्यापकं । मित्रे प्रीतिविवर्द्धकं रिपुजने वैरापहारक्षमं ॥ भृत्ये भक्तिभरावहं नरपतौ सन्मानपूजाप्रदं । भट्टादौ च यशस्करं वितरणं न क्वाप्यहो निष्फलं ॥ ॥ ५ ॥ देवानां सदनं सुवर्णशिखरी सर्वंसहा मेदिनी । रत्नानां निलयश्च कुंभतनयोऽनंतस्तथाहपतिः ॥ स्वर्बाणैर्निशितं सुदर्शनमथो ज्येष्टः करः केशवः । सोऽयं श्रीपुरुषोत्तमोऽपि बलिना दानेन

भिक्षुः कृतः ॥ ६ ॥ लक्ष्मीः कामयते मतिर्मृगयते कांतिस्तमालोकते । कीर्तिश्चुंबति सेवते सुभग-
ता नीरोगतालिंगति ॥ श्रेयःसंहतिरभ्युपैति वृणुते स्वर्गोपभोगस्थिति—र्मुक्तिर्वांबति यः प्रयबति
पुमान् पुण्यार्थमर्थं निजं ॥ ७ ॥ ब्रह्मचर्येण भूषिताः ॥ दंतशोधनमात्रेऽपि । पः
अथ पात्रविचारसूक्तानि—नवगुप्तिसनाथेन । ब्रह्मचर्येण भूषिताः ॥ मोक्षैकतानमनसो । यतयः पा-
रस्वे विगतस्पृहाः ॥ १ ॥ कृतकारितानुमति—प्रभेदारंभवर्जिताः ॥ रताः परहिते नित्यं । यतयः पात्रमु-
त्रमुत्तमं ॥ २ ॥ प्रशांततनुवाक्चित्ता । भैक्ष्यमात्रोपजीविनः ॥ यतिधर्मेभवः पात्रं । मध्यमं गृहमेधिनः ॥
त्तमं ॥ ३ ॥ सम्यग्दर्शनवंतस्तु । देशचारित्रयोगिनः ॥ तीर्थप्रभावनोद्युक्ता—स्तृतीयं पात्रमुच्यते ॥
॥ ४ ॥ सम्यक्त्वमात्रसंतुष्टा । व्रतशीलेषु निस्सहाः ॥ तं सीलसमं अपत्तं । बुमंतं बोलए
॥ ५ ॥ जं तवसंजमहीणं । नियमविहूणं च बंभपरिहीणं ॥ नाऽभीतिदानात्परमस्ति
अन्नं ॥ ६ ॥ न वीतरागादपरोऽस्ति देवो । न ब्रह्मचर्यादपरं तपोऽस्ति ॥ तत्वतो ना-
दानं । चारित्रिणो नापरमस्ति पात्रं ॥७॥ कुशास्त्रपाठमात्रेण । सदा पंडितमानिनः ॥ जिनध-
स्तिकप्राया । अपात्रमिति शंसिताः ॥ ८ ॥ स्वबुद्ध्या धर्मवंतोऽपि । मिथ्यादर्शनदूषिताः ॥

र्मद्विषो मूढाः । कुपात्रं स्युः कुतीर्थिनः ॥ ९ ॥ युधिष्ठिरभीमसंवादे भीमेनोक्तं—मूर्खस्तपस्वी राजेंद्र । विद्वांश्च वृषलीपतिः ॥ उभौ तौ तिष्ठतो द्वारे । कस्य दानं प्रदीयते ॥ १० ॥ युधिष्ठिरः प्राह—सुखासेव्यं तपो भीम । विद्या दुष्टदुराचरी ॥ विद्वांसं पूजयिष्यामि । तपोभिः किं प्रयोजनं ॥ ॥ ११ ॥ कृष्णः प्राह—न विद्यया केवलया । तपसा चापि पात्रता ॥ यत्र वृत्तमुभे चेमे । तद्धि पात्रं प्रचक्षते ॥ १२ ॥ तत्र न्यायार्जितं क्षेत्र—कालभावैरदूषितं ॥ देयं धर्मार्थिना दानं । विना कीर्त्यादिकारणं ॥ १३ ॥ यतः—परान्नेनोदरस्थेन । यत्कुर्याच्च शुभाशुभं ॥ दायकस्य त्रयो भागाः । कर्ता भागेन लिप्यते ॥ १३ ॥ इयं मोक्षफले दाने । पात्राऽपात्रविचारणा ॥ दयादानं तु सर्वज्ञैः । कुत्रापि न निषिध्यते ॥ १४ यतः—वर्षन् क्षारार्णवेऽप्यब्दो । मुक्तात्मा क्वापि जायते ॥ सततं ददतो दातुः । पात्रयोगोऽपि संभवेत् ॥ १५ ॥ अनादरो विलंबश्च । वैमुख्यं विप्रियं वचः ॥ पश्चात्तापश्च पंचामी । सद्दानं दूषयंत्यलं ॥ १६ ॥

अथ पात्रदानसंबंधिसूक्तानि—दाणं सुपत्तदाणं । अणुकंपाउचिअकित्तिदाणं च ॥ दोहिं वि मुक्को भणिओ । तिन्निवि भोगाइअं दिंति ॥ १ ॥ न कयं दीणुद्धरणं । न कयं साहम्मिआण व

॥ २ ॥ दरिद्रं भर राजेंद्र । मा समृद्धं
बलं ॥ हिमयंमि वीअराउ । न धारिज हारिज जम्मो ॥ ३ ॥ आकड्ढिऊण नीरं । रेवा रयणा-
कदाचन ॥ व्याधितस्यौषधं पथ्यं । नीरोगस्य किमौषधैः ॥ ३ ॥ आकड्ढिऊण नीरं । रेवा रयणा-
यरस्स अप्पेइ ॥ नहु गच्छइ मरुदेसे । सच्चं भरिआ भरिज्जंति ॥ ४ ॥ जयंति वंकचूलाद्याः । को-
शाश्वाश्रयदानतः ॥ अवंतिसुकुमालश्च । तीर्णः संसारसागरः ॥ ५ ॥ एलापूगफलाइ । साहूण अ-
कप्पिआ अचित्ताविं ॥ रागंगं जेण भवे । न तेसिं दाणं न वा गहणं ॥ ६ ॥ अन्नोपाश्रयभैषज्य
—वस्त्रपात्रादिदानतः ॥ उपष्टंभोऽनेकधा स्या—दन्नदानं विशिष्यते ॥ ७ ॥ अन्नदातुरधस्तीर्थ—
करोऽपि कुरुते करं ॥ तच्च दानं भवेत्पात्रे । दत्तं बहुफलं यतः ॥ ८ ॥ खलोऽपि गवि दुग्धं स्याद्
। दुग्धमप्युरगे विषं ॥ पात्रापात्रविशेषेण । तत्पात्रे दानमुत्तमं ॥ ९ ॥ सैव भूमिस्तदेवांभः । पश्य
पात्रविशेषतः ॥ आम्रे मधुरतामेति । कटुत्वं निंबपादपे ॥ १० ॥ सासाईतंपि जलं । पत्तविसेसेण
अंतरं गुरुअं ॥ अहिमुहिपडिअं गरलं । सिप्पउडे मुत्तिअं होइ ॥ ११ ॥ व्याजे स्याद् द्विगुणं वि-
त्तं । व्यवसाये चतुर्गुणं ॥ क्षेत्रे शतगुणं प्रोक्तं । पात्रेऽनंतगुणं पुनः ॥ १२ ॥ सत्पात्रं महती श्र-
द्धा । काले देयं यथोचितं ॥ धर्मसाधनसामग्री । बहुपुण्यैरवाप्यते ॥ १३ ॥ केसिं च होइ वित्तं ।

चित्तं अन्नेसिमुन्नयमन्नेसिं ॥ चित्तं वित्तं पत्तं । तिन्निवि केसिं च धन्नाणं ॥ १४ ॥ कब्बवि दलं न गंधो । कब्बवि गंधो न चेव मयरंदो ॥ इक्ककुसुमंमि महुअर । दो तिन्नि गुणा न दीसंति ॥१५॥ कब्बवि जलं न गाया । कब्बवि गाया न सीअलं सलिलं ॥ जलगायासंजुत्तं । तं पहिअ सरोवरं विरलं ॥ १६ ॥ कब्बवि तवो न तत्तं । कब्बवि तत्तं न सुद्धचारित्तं ॥ तवतत्तचरणसहिआ । मुणिणोवि अ थोवा संसारे ॥ १७ ॥ धन्योऽहं मम मंदिरं वरतरं पुण्यं धनं मामकं । श्लाघ्यं जन्म सुवासरोऽद्य यदयं सर्वज्ञमार्गानुगः ॥ आयातो मुनिपुंगवो मम गृहं गृह्णाति चानुग्रहात् । किंचित् कश्चिदिति प्रमोदकलितो दत्ते धनं शुद्धधीः ॥ १८ ॥ श्रीमज्जैनगृहे जिनप्रतिकृतौ जैनप्रतिष्ठाविधौ । श्रीसार्वस्नपने जिनार्चनविधौ श्रीसंघपूजादिके ॥ श्रीमच्छासनलेखने च सततं श्रीतीर्थयात्रामुखे । येषां स्वं विनियोगमेति धनिनां धन्यास्त एव क्षितौ ॥१९॥ यदपि तदपि शुद्धं चंदनावत्प्रदत्तं । झगिति फलति पात्रेऽन्यत्र नो चाव्ययपि स्वं ॥ जलधिजलमसारं वारिवाहेऽमृतीस्या—न्मधुरमपि हि दुग्धं पन्नगास्ये विषं स्यात् ॥ २० ॥ प्रतिदिनमपि दानं पुण्यसंपन्निदानं । पुनरधिकफलं स्यात्पारणाहोत्तराहे ॥ रचयति जलदोऽन्नं कृत्तिकादौ सुवृष्टः । पुनरमलमनर्घं मौक्तिकं स्वातियोगे ॥ २१ ॥ श्री·

श्रेयांसः स च मूलदेवनृपतिः सा नंदना चंदना ॥
नाभेयजिनेश्वरो धनभवे श्रेयःश्रियामाश्रयः । सर्वेऽप्युत्तमदानदानविधिना जाता जगद्विश्रुताः
धन्योऽयं कृतपुण्यकः शुभमनाः श्रीशालिभद्रादयः । पुष्णाति प्रशमं तपः प्रबलयत्युल्लास·
॥ २२ ॥ चारित्रं चिनुते धिनोति विनयं ज्ञानं नयत्युन्नतिं । निर्वाणश्रियमातनोति निहितं पात्रे
यत्यागमं ॥ पुण्यं कंदलयत्यघं विदलति स्वर्गं ददाति क्रमा—
पवित्रं धनं ॥ २३ ॥

अथ दातृसंबंधिसूक्तानि—दाता ध्यायति विष्टपं कियदिदं तत्रापि भागत्रय—स्तत्राल्पा वसु·
धांबुधिर्यदवधिस्तत्रापि खंडान्यहो ॥ तत्रैकत्र वसामि तद्गिरिसरित्कांतारुद्धं ततः । का शक्तिः कि·
मु वा ददे पुनरहं यद्दातृशब्दो मयि ॥ १ ॥ उत्तमोऽप्रार्थितो दत्ते । मध्यमः प्रार्थितः पुनः ॥ या·
चकैर्याच्यमानोऽपि । दत्ते नत्वधमाधमः ॥ २ ॥ नीचाः क्लेशेन याच्यंते । ते च यच्छंति नार्थिताः
॥ अथ किंचित्प्रयच्छंति । न गले न च तालुनि ॥ ३ ॥ साधुरेवार्थिभिर्याच्यः । क्षीणवित्तोऽपि स-
दा ॥ शुष्कोऽपि हि नदीमार्गः । खन्यते सलिलार्थिभिः ॥ ४ ॥ कर्णस्त्वचं शिबिर्मांसं । जीवं
जीमूतवाहनः ॥ ददौ दधीचिरस्थीनि । नास्त्यदेयं महात्मनां ॥ ५ ॥ विलसति मदप्रवाहे । वहंति

मालिन्यमानने करिणः ॥ दानप्रवृत्तिसमये । निर्मलमुखवृत्तयो विरलाः ॥ ६ ॥ गर्जित्वा बहुदूरमु-न्नतिभृतो मुंचंति मेघा जलं । जद्रस्यापि गजस्य दानसमये संजायतेनर्मदः ॥ पुष्पाम्बरयापनेन ददति प्रायः फलानि द्रुमा । नो ठेको न मदो न कालहरणं दानप्रवृत्तौ सतां ॥ ७ ॥ वार्नाथोऽपि किलोत्ससर्ज मथितो रत्नानि रत्नाकरो । मंथानेन विलोडितं वितरति स्नेहं दधि स्वाद्वपि ॥ भद्रोऽपि द्विरदश्च मौक्तिकमणीन् कुंभस्थलादाहतो । दत्ते सत्पुरुषास्तु केऽपि कमलां स्थाने व्ययंति स्वयं ॥

अथ याचकसंबंधिसूक्तानि—तावद्गुणा गुरुत्वं च । यावन्नार्थयते जनः ॥ अर्थी चेत्पुरुषो जातः । क्व गुणाः क्व च गौरवं ॥ १ ॥ तावत्सर्वगुणालयः पटुमतिः साधुः सतां वल्लभः । शूरः सच्चरितः कलंकविकलः कांतः कलाज्ञः कविः ॥ दक्षो धर्मरतः कुलीनविमलः प्राप्तप्रभावः प्रभु—र्याव-न्निष्ठुरवज्रपातसदृशं देहीति नो भाषते ॥ २॥ देहीति वचनं श्रुत्वा । देहस्थाः पंच देवताः ॥ नश्यंति तत्क्षणादेव । श्रीह्रीधीधृतिकीर्त्तयः ॥ ३ ॥ अक्षरद्वयमभ्यस्तं । नास्ति नास्तीति यत्पुरा ॥ तदिदं देहि देहीति । विपरीतमुपस्थितं ॥ ४ ॥ वरं जातो वने वृक्षः । पाषाणो वा वरं गिरौ ॥ वरं पक्षी पतंगो वा । न पुनर्याचको नरः ॥ ५ ॥ गतिभंगः स्वरो दीनो । गात्रस्वेदो महाभयं ॥ मर

णे यानि चिह्नानि । तानि चिह्नानि याचके ॥ ६ ॥ अदृष्टमुखभंगस्य । युक्तमंगस्य याचितुं ॥ अ·
हो एतन्महाकष्टं । चक्षुष्मानपि याचते ॥ ७ ॥ मृत्पिंडो जलरेखया वलयितः सर्वोऽप्ययं न त्वणु–
स्वंशीकृत्य स एव चात्र शतशो राज्ञां गणैर्भुज्यते ॥ ते दद्युर्ददतेऽथवा किमपि न क्षुद्रा दरिद्रा
भृशं । धिग्धिग् तान् पुरुषाधमान् धनलवं तेभ्योऽपि वांछंति ये ॥ ८ ॥ गुरुतामुपयाति यन्मृतः ।
पुरुषस्तद्विदितं मयाधुना ॥ ननु लाघवहेतुरर्थिता । न मृते तिष्ठति सा मनागपि ॥ ९ ॥ लज्जा·
वतः कुलीनस्य । धनं याचितुमिछतः ॥ कंठे पारापतस्येव । वाक्करोति गतागतं ॥ १० ॥ दुरकाण
एउ दुक्कं । गुरुअं गुरुआण हिअयमज्झंमि ॥ जंपि परो पछिज्जइ । जंपि परपछणाभंगो ॥ ११ ॥
तृणं लघु तृणात्तूलं । तूलादपि हि याचकः ॥ वायुना किं न नीतोऽसौ । मामयं याचयिष्यति ॥
॥ १२ ॥ पृथ्व्या गुरुतरं किं स्या–न्नगादुच्चतरं किमु ॥ तृणाल्लघुतरं किं स्या–द्वायोः शीघ्रतरं कि·
मु ॥१३॥ पृथ्व्या गुरुतरी माता । नगादुच्चतरः पिता ॥ तृणाल्लघुतरो ह्यर्थी । वायोः शीघ्रतरं मनः ॥
अथ दारिद्र्यसंबंधिसूक्तानि—परीक्ष्य सत्कुलं विद्यां । शीलं शौर्यं सुरूपतां ॥ विधिर्ददाति
निपुणं । कन्यामिव दरिद्रतां ॥ १ ॥ हे दारिद्र्य नमस्तुभ्यं । सिद्धोऽहं त्वत्प्रसादतः ॥ येन पश्या·

म्यहं सर्वं । न मां पश्यति कश्चन ॥ २ ॥ वरं रेणुर्वरं भस्म । नष्टश्रीर्न पुनर्नरः ॥ मुक्त्वैनं दृश्यते
पूजा । क्वापि पर्वणि पूर्वयोः ॥ ३ ॥ मृतदुर्गतयोर्मध्ये । मृतः शस्यो न दुर्गतः ॥ पूर्वो हि लभ्यते
वारि । तद्बिंदुमपि नोत्तरः ॥ ४ ॥ निर्द्रव्यो ह्रियमेति ह्रीपरिगतः प्रभ्रस्यते तेजसो । निस्तेजाः प-
रिभूयते परिभवान्निर्वेदमागच्छति ॥ निर्विण्णः शुचमेति शोकसहितो बुद्धेः परिभ्रस्यते । निर्बुद्धिः क्ष-
यमेत्यहो निधनता सर्वापदामास्पदं ॥ ५ ॥ दौःस्थ्यं नाम पराभूतेः । स्थानमाद्यं न संशयः ॥ रा-
जापि गोपतेः पादान् । क्षीणः संसेवते यतः ॥ ६ ॥ सहोदयव्ययाः पंच । दारिद्र्यस्यानुजीविनः ॥
ऋणं दौर्भाग्यमालस्यं । बुभुक्षापत्यसंततिः ॥ ७ ॥ विपुलमतेरपि बुद्धि—र्नश्यति पुरुषस्य विभव-
हीनस्य ॥ घृतलवणतैलतंदुल—वस्त्रेंधनचिंतया सततं ॥ ८ ॥ जीवंतो मृतकाः पंच । श्रूयंते किल
भारते ॥ दरिद्रो व्याधितो मूर्खः । प्रवासी नित्यसेवकः ॥ ९ ॥ अपुत्रस्य गृहं शून्यं । दिशः शू-
न्या ह्यबांधवाः ॥ मूर्खस्य हृदयं शून्यं । सर्वशून्या दरिद्रता ॥ १० ॥ नीचानपि निषेवंते । पोषयं-
ति पशूनपि ॥ समुद्रमपि लंघंते । दारिद्र्योपहता नराः ॥ ११ ॥ अंबा तुष्यति न मया । न स्नुष-
या सापि नांबया न मया ॥ अहमपि न तया न तया । वद राजन् कस्य दोषोऽयं ॥ १२ ॥ अयं

पटश्छिद्रशतैरलंकृतः । पितामहाद्यैः परिभुक्तयौवनः ॥ अयं पटो वांछति मत्सुतं सुतान् । अयं पटः संवृत एव शोभते ॥ १४ ॥ येनैवांबरखंडेन । दिवा संचरते रविः ॥ तेनैव निशि शीतांशु—रहो दारिद्र्यमेतयोः ॥ १५ ॥ कुटुंबचिंताकुलितस्य पुंसः । श्रुतं च शीलं च गुणाश्च सर्वे ॥ अपक्वकुंभे निहिता इवापः । प्रयांति देहेन समं विनाशं ॥ १६ ॥ तैलं नास्ति घृतं नास्ति । नास्ति गेहे युगंधरी ॥ शाकांतर्लवणं नास्ति । तन्नास्ति यच्च भुज्यते ॥ १७ ॥ अज्ज घरे नत्थि घयं । तिल्लं लूणं च इंधणं नत्थि ॥ जाया य अज्ज तरुणी । कहं कह होइ कुडुंबं ॥ १८ ॥ कुटुंबकार्याण्यतिदुर्भराणि । समुद्रकुक्षेः समरूपकाणि ॥ रात्रिर्विभाता गृहचिंतयैव । नष्टं गतं श्लोकशतं नरेंद्र ॥२०॥ वट्टइ घरे कुमारी । बालो तणुत्त रोअइ न अन्नो ॥ रोगबहुलं कुडुंबं । ओसहमूलाइअं नत्थि ॥ ॥२१॥ व्याधिरत्रैव दुःखाय । दुःखायामुत्र पातकं ॥ इहामुत्र च दुःखाय । ऋणं पुत्रक मा कृथाः ॥

अथ क्षुत्संबंधिसूक्तानि—तावन्मनोनिवासांत—र्निवसंति गुणसंपदः ॥ बुभुक्षाराक्षसी सेयं । यावद्धावति न क्षुधा ॥ १ ॥ पंच नश्यंति पद्माक्षि । क्षुधार्त्तस्य न संशयः ॥ तेजो लज्जा मतिर्ज्ञानं । मदनश्चापि पंचमः ॥ २ ॥ किमकारि न कार्पण्यं । कस्यालंघि न देहली ॥ अस्य दग्धोदर·

स्यार्थे । किमनाटि न नाटकं ॥ ३ ॥ किं किं न कयं को को । न पुच्छिज्ज कह कह न नामिअं सीसं ॥ दुप्भरउअरस्स कए । किं न कयं किं न कायवं ॥ ४ ॥ एकः स एव जीवतु । हृदयविहीनोऽपि सहृदयो राहुः ॥ यः सकललघिमकारण—मुदरं न बिभर्त्ति दुष्पूरं ॥ ५ ॥ लज्जामुज्झति सेवतेंत्यजननं दीनं वचो भाषते । कृत्याकृत्यविवेकममाश्रयति नो नापेक्षते सद्गतिं ॥ भंडत्वं विदधाति नर्त्तनकलाभ्यासं समभ्यस्यते । दुःपूरोदरपूरणव्यतिकरे किं किं न कुर्याज्जनः ॥ ६ ॥ मानं मुंचति गौरवं परिहरत्यायाति दीनात्मतां । लज्जामुत्सृजति श्रयत्यकरुणां नीचत्वमालंबते ॥ भार्याबंधुसुहृत्सुतेष्वपकृतीर्नानाविधाश्चेष्टते । किं किं यन्न करोति निंदितमपि प्राणी क्षुधापीडितः ॥७॥ जीवंति खग्गछिन्ना । पव्वयपडिआवि केवि जीवंति ॥ जीवंति उदहिपडिआ । चट्टछिन्ना न जीवंति ॥ ८ ॥

अथ मैथुनसंबंधिसूक्तानि—मेहुणसन्नारूढो । नवलक्खं हणेइ सुहुमजीवाणं ॥ केवलिणा पन्नत्तं । सद्दहिअवं पयत्तेणं ॥ १ ॥ इत्थीण जोणिमज्झे । गब्भगया हुंति नव लक्खा जीआ ॥ उप्पज्जंति चयंति अ । समुच्छिमा जे ते असंखा ॥ २ ॥ पुरिसेण सह गयाए । तेसिं जीवाण होइ

उड्डवणं ॥ वेणुगदिठंतेणं । तत्तायससिलागनाएणं ॥ ३ ॥ पंचिंदिया मणुस्सा । एगनरभुत्तनारि·
गब्भंमि ॥ उक्कोसं नवलक्खा । जायंती एगवेलाए ॥ ४ ॥ नवलक्खाणं मज्झे । जायइ एगस्स दु·
न्हय समत्ती ॥ सेसा पुण एमेवय । विलयं वच्चंति तत्थेव ॥ ५ ॥ इत्थीजोणीएसु । हवंति बेइंदि·
आउ जे जीवा ॥ इक्कोव दोव तिन्निव । लक्खपुहुत्तं च उक्कोसं ॥ ६ ॥ असंखया थीनरमेहुणाउ
। मुच्छंति पंचिंदिअमाणुसाउ ॥ नीसेसअंगाण विभत्तिचंगे । भणेइ जिणो पन्नवणा उवंगे ॥७॥
आजम्मेणं तु जं पावं । बंधिज्जा मच्छबंधउ ॥ वयभंगं काउमाणो । तं चेव य पुणो अट्ठगुणं ॥८॥
अथ शीलसंबंधिसूक्तानि—ते कह न वंदणिज्जा । रूवं दट्ठूण परकलत्ताणं ॥ धाराहयव्व व·
सहिं । वच्चंति महीं पलोअंता ॥ १ ॥ अलसा होइ अकज्जे । पाणिवहे पंगुला सया होह ॥ पर·
तत्तीसु अ बहिरा । जच्चंधा परकलत्तेसु ॥ २ ॥ सुविसुद्धसीलजुत्तो । पावइ कित्तिं जसं च इह लो·
ए ॥ सव्वजणवल्लहच्चिअ । सुहगइभागी अ परलोए ॥ ३ ॥ देवदाणवगंधव्वा । जक्खरक्खसकिन्नरा
॥ बंभयारिं नमंसंति । दुक्करं जे करंति तं ॥ ४ ॥ जो देइ कणयकोडिं । अहवा कारेइ कणय·
जिणभवणं ॥ तस्स न तत्तिअपुन्नं । जत्तिअ बंभवए धरिए ॥ ५ ॥ काएण बंभचेरं । धरंति भव्वा

उ जे ध्य सुद्धमणा ॥ कप्पंमि बंभलोए । ताणं नियमेण उववाउ ॥ ६ ॥ जो वज्जइ परदारं । सो सेवइ नो कयाइ परदारं ॥ सकलत्ते संतुठो । सकलत्तो सो नरो होइ ॥ ७ ॥ यस्तु स्वदारसंतोषी । विषयेषु विरागवान् ॥ गृहस्थोऽपि स्वशीलेन । यतिकल्पः स कल्प्यते ॥ ८ ॥ नास्त्यहिंसासमो धर्मो । न संतोषसमं व्रतं ॥ न सत्यसदृशं शौचं । शीलतुल्यं न मंडनं ॥ ९ ॥ कुंडले नाभिजानामि । नाभिजानामि कंकणे ॥ नूपुरे त्वभिजानामि । नित्यं पादाब्जवंदनात् ॥ १० ॥ शीलं नाम नृणां कुलोन्नतिकरं शीलं परं भूषणं । शीलं ह्यप्रतिपातिवित्तमनघं शीलं सुगत्यावहं ॥ शीलं दुर्गतिनाशनं सुविपुलं शीलं यशःपावनं । शीलं निर्वृतिहेतुरेव परमः शीलं तु कल्पद्रुमः ॥ ॥ ११ ॥ शीलं सर्वगुणौघमस्तकमणिः शीलं विपद्रक्षणं । शीलं भूषणमुज्ज्वलं मुनिजनैः सर्वैः समासेवितं ॥ दुर्वाराधिजदुःखवह्निशमने प्रावृट्पयोदोदकं । शीलं सर्वसुखैककारणमतः स्यात्कस्य नो सम्मतं ॥ १२ ॥ व्याघ्रव्यालजलानलादिविपदस्तेषां व्रजंति क्षयं । कल्याणानि समुल्लसंति विबुधाः सान्निध्यमध्यासते ॥ कीर्तिः स्फुर्तिमियर्त्ति यात्युपचयं धर्मः प्रणश्यत्यघं । स्वर्निर्वाणसुखानि संनिदधते ये शीलमाबिभ्रते ॥ १३ ॥ वह्निस्तस्य जलायते जलनिधिः कुल्यायते तत्क्षणा—न्मेरुः

स्वल्पशिलायते मृगपतिः सद्यः कुरंगायते ॥ व्यालो माल्यगणायते विषरसः पीयूषवर्षायते । यस्यां-
गेऽखिललोकवल्लभतमं शीलं समुन्मीलति ॥ १४ ॥ हरति कुलकलंकं लुंपति पापपंकं । सुकृतमुप-
चिनोति श्लाघ्यतामातनोति ॥ नमयति सुरवर्गं हंति दुर्गोपसर्गं । रचयति शुचि शीलं स्वर्गमोक्षौ
सलीलं ॥ १५ ॥ सीतया दुरपवादभीतया । पावके स्वतनुराहुतीकृता ॥ पावकस्तु जलतां जगाम
य—त्तत्र शीलमहिमाविजृंभितं ॥ १६ ॥ ऐश्वर्यस्य विभूषणं मधुरता शौर्यस्य वाक्संयमो । ज्ञान-
स्योपशमः श्रुतस्य विनयो वित्तस्य पात्रे व्ययः ॥ अक्रोधस्तपसः क्षमा प्रभवतो धर्मस्य निर्वाच्यता
। सर्वेषामपि सर्वकामगुणितं शीलं परं भूषणं ॥ १७ ॥ वेश्या रागवती सदा तदनुगा षड्भी रसैर्भो-
जनं । रम्यं धाम मनोरमं वपुरहो नव्यो वयःसंगमः ॥ कालोऽयं जलदागमस्तदपि यः कामं जि-
गायादरा—त्तं वंदे युवतिप्रबोधकुशलं श्रीस्थूलभद्रप्रभुं ॥ १८ ॥ श्रीमन्नेमिजिनो दिनोऽघतमसां जं-
बूप्रभुः केवली । सम्यग्दर्शनवान् सुदर्शनगृही स स्थूलभद्रो मुनिः ॥ साचंकारिसरस्वती च सुभगाः
सीतासुभद्रादयः । शीलोदाहरणे जयंति जनितानंदा जगत्यद्भुताः ॥ १९ ॥

अथ अशीलसंबंधिसूक्तानि—स्वाधीनेऽपि कलत्रे । नीचः परदारलंपटो भवति ॥ संपूर्णेऽपि

तडागे । काकः कुंभोदकं पिबति ॥ १ ॥ अप्पा धुलिहिं मेलिज्ज । वयणे दीधज्ज छार ॥ पगि पगि माथाढंकणु । जिणे जोइ परदार ॥ २ ॥ जे परदारपरंमुह । ते वुच्चइं नरसिंह ॥ जे परिरंभइ पररमणी । तांह भुसिज्जइ लीह ॥ ३ ॥ वरं अग्गिंमि पवेसो । वरं विसुद्धेण कम्मुणा मरणं ॥ मा गहिअव्वयभंगो । मा जीअं खलिअसीलस्स ॥ ४ ॥ वरं शृंगोत्तुंगाद्गुरुशिखरिणः क्वापि विषमे । पतित्वायं कायः कठिनदृषदंतर्विदलितः ॥ वरं न्यस्तो हस्तः फणिपतिमुखे तीक्ष्णदशने । वरं वह्नौ पातस्तदपि न कृतः शीलविलयः ॥ ५ ॥ दत्तस्तेन जगत्यकीर्त्तिपटहो गोत्रे मषीकूर्चकः—श्चारित्रस्य जलांजलिर्गुणगणारामस्य दावानलः ॥ संकेतः सकलापदां शिवपुरद्वारे कपाटो दृढः । शीलं येन निजं विलुप्तमखिलत्रैलोक्यचिंतामणिः ॥ ६ ॥

अथ रागसंबंधिसूक्तानि—अशक्यं रूपमद्रष्टुं । चक्षुर्गोचरमागतं ॥ रागद्वेषौ च यौ तत्र । तौ बुधः परिवर्जयेत ॥ १ ॥ नग्नेऽपि शूलिनि कपालिनि कालकूट—प्रोत्सर्पिसर्पभयदे ज्वलदग्निनेत्रे ॥ गौरी ररंज मृतभस्मकृतांगरागे । दोषं न पश्यति जनो जनितानुरागः ॥ २ ॥ उवलेवो होइ भोगेसु । अभोगी णो विलिप्पइ ॥ भोगी भमइ संसारे । अभोगी विप्पमुच्चइ ॥ ३ ॥ कुविअस्स

आउरस्स य । वसणं पत्तस्स रायरत्तस्स ॥ मत्तस्स मरंतस्स । सब्भावा पायडा हुंति ॥ ४ ॥ रागी
बध्नाति कर्माणि । वीतरागो विमुच्यते ॥ जना जिनोपदेशोऽयं । संक्षेपाद्बंधमोक्षयोः ॥ ५ ॥ राग-
द्वेषौ यदि स्यातां । तपसा किं प्रयोजनं ॥ तावेव यदि न स्यातां । तपसा किं प्रयोजनं ॥ ६ ॥
रागादयो हि रिपवो जिननायकेना—जीयंत ये निजबलाद्बलिनोऽपि बाढं ॥ पुष्णंति ताञ्जडधियो
हृदयालये ये । तेषां प्रसीदति कथं जगतामधीशः ॥ ७ ॥ मुखे पुरीषप्रक्षेपं । तथा पाषाणक्षेपणं
एकेंद्रियापि सहते । मृत्तिका रागदोषतः ॥ ८ ॥ रागोऽयं दोषपोषाय । चेतनारहितेष्वपि ॥ मंजि-
ष्ठा कुट्टनस्थान—ध्वंसतापसहा भृशं ॥ ९ ॥ हिअमा चोलमजीठ जिम । तोले घणो चडेसि ॥
रंगपसायें आपणे । परिभव घणां सहेसि ॥ १० ॥ वनेऽपि दोषाः प्रभवंति रागिणां । गृहेऽपि पं-
चेंद्रियनिग्रहस्तपः ॥ अकुत्सिते कर्मणि यः प्रवर्तते । निवृत्तरागस्य गृहं तपोवनं ॥ ११ ॥ क्व यामः
कुत्र तिष्ठामः । किं कुर्मः किं न कुर्महे ॥ रागिणश्चिंतयत्येवं । नीरागाः सुखमासते ॥ १२ ॥ अ-
पि चंडानिलोध्धूत—तरंगितमहोदधेः ॥ शक्येत प्रसरो रोध्धुं । नानुरक्तस्य चेतसः ॥ १३ ॥
अथ कामसंबंधिसूक्तानि—दिवा पश्यति नो घूकः । काको नक्तं न पश्यति ॥ अपूर्वः कोऽ-

पि कामांधो । दिवानक्तं न पश्यति ॥ १ ॥ न पश्यति हि जात्यंधः । कामांधो नैव पश्यति ॥ न पश्यति मदोन्मत्तो । अर्थी दोषं न पश्यति ॥ २ ॥ नान्यः कुनयादाधि—र्व्याधिर्नान्यः क्षयामयात् ॥ नान्यः सेवकतो दुःखी । नान्यः कामुकतोंधलः ॥ ३ ॥ दृश्यं वस्तु परं न पश्यति जगत्यंधः पुरोऽवस्थितं । कामांधस्तु यदस्ति तत्परिहरन् यन्नास्ति तत्पश्यति ॥ कुंदेंदीवरपूर्णचंद्रकलश श्रीमल्लतापल्लवा—नारोप्याशुचिराशिषु प्रियतमागात्रेषु यन्मोदते ॥ ४ ॥ तावन्महत्त्वं पांडित्यं । कुलीनत्वं विवेकिता ॥ यावज्ज्वलति नांगेषु । हंत पंचेषु पावकः ॥ ५ ॥ किमु कुवलयनेत्राः संति नो नाकनार्य—स्त्रिदशपतिरहल्यां तापसीं यत्सिषेवे ॥ हृदयतृणकुटीरे दीप्यमाने स्मराग्ना—वुचितमनुचितं वा वेत्ति कः पंडितोऽपि ॥ ६ ॥ विकलयति कलाकुशलं । हसति शुचिं पंडितं विडंबयति ॥ अधरयति धीरपुरुषं । क्षणेन मकरध्वजो देवः ॥ ७ ॥ शंभुस्वयंभुहरयो हरिणेक्षणानां । येनाक्रियंत सततं गृहकर्मदासाः ॥ वाचामगोचरचरित्रपवित्रिताय । तस्मै नमो बलवते कुसुमायुधाय ॥८॥ मत्तेभकुंभदलने भुवि संति शूराः । केचित्प्रचंडमृगराजवधेऽपि दक्षाः ॥ किंतु ब्रवीमि बलिनां पुरतः प्रसह्य । कंदर्पदर्पदलने विरला मनुष्याः ॥ ९ ॥ अये चेतोमत्स्य भ्रमणमधुना यौवनजले ।

त्यज स्वच्छंदत्वं युवतिजलधौ पश्यसि न किं ॥ तनूजालीजालं स्तनयुगलतुंबीफलयुतं । मनोजूकैव-र्तस्तव मरणहेतोर्भ्रमयति ॥ १० ॥

अथ स्त्रीसंबंधिसूक्तानि—तावदेव कृतिनामपि स्फुर—त्येष निर्मलविवेकदीपकः ॥ यावदत्र न कुरंगचक्षुषा । ताड्यते चटुललोचनांचलैः ॥ १ ॥ सन्मार्गे तावदास्ते प्रभवति पुरुषस्तावदेवेंद्रि-याणां । लज्जां तावद्विधत्ते विनयमपि समालंबते तावदेव ॥ भ्रूचापाकृष्टमुक्ताः श्रवणपथजुषो नी-लपक्ष्माण एते । यावल्लीलावतीनां न हृदि धृतिमुषो दृष्टिबाणाः पतंति ॥ २ ॥ कुंकुमपंककलंकित-देहा । गौरपयोधरकंपितहारा ॥ नूपुरहंसरणत्पदपद्मा । कं न वशं कुरुते भुवि रामा ॥ ३ ॥ संसा-रे हयविहिणा । महिलारूवेण मंडिअं पासं ॥ बध्नंति जाणमाणा । अयाणमाणावि बध्नंति ॥४॥ अहो संसारजालस्य । विपरीतो वधक्रमः ॥ न पुनर्जन्मजंतूनां । धीवरस्यापि बंधनं ॥ ५ ॥ मानो म्लायति पौरुषं विगलति क्लेशः समुन्मीलति । स्थैर्यं जीर्यति धैर्यमेति विपदं गंभीरिमा ग्रस्यति ॥ बुद्धिर्भ्राम्यति न प्रशाम्यति रुजा चेतोऽधिकं ताम्यति । व्रीडा क्षाम्यति कामिनीमदिरया मत्तस्य पुंसो हहा ॥ ६ ॥ मदिराया गुणज्येष्ठा । लोकद्वयविरोधिनी ॥ कुरुते दृष्टिमात्रेण । महिला ग्रहि-

लं जनं ॥ ७ ॥ संसार तव पर्यंत—पदवी न दवीयसी ॥ अंतरा दुस्तरा न स्यु—र्यदि रे मदिरेक्षणाः ॥ ८ ॥ स्मितेन भावेन मदेन लज्जया । पराङ्मुखैरर्धकटाक्षवीक्षितैः ॥ वचोभिरीर्ष्याकलहेन लीलया । समंतपाशं खलु बंधनं स्त्रियः ॥ ९ ॥ संमोहयंति मदयंति विडंबयंति । निर्भर्त्सयंति रमयंति विषादयंति ॥ एताः प्रविश्य सदयं हृदयं नराणां । किं नाम वामनयना न समाचरंति ॥ १० ॥ सनूपुरालक्तकपादताडितो । द्रुमोऽपि यासां विकसत्यचेतनः ॥ तदंगसंस्पर्शरसाद्द्रवीकृतो । विलीयते यन्न नरस्तदद्भुतं ॥ ११ ॥ वातोध्धूतो दहति दहनो देहमेकं नराणां । मत्तो नागः कुपितभुजगो देहमेकं निहंति ॥ ज्ञानं शीलं विनयविभवौदार्यविज्ञानदेहान् । सर्वानर्थान् दहति वनिताऽमुष्मिकानैहिकांश्च ॥ १२ ॥ पंचाननं परिभवत्युदरेण वेणी—दंडेन कुंडलिकुलं शशिनं मुखेन या ॥ हत्वा नृपं पतिमपेत्य भुजंगदष्टं । देशांतरे विधिवशाद्गणिकास्मि जाता ॥१३॥ पुत्रं भुजंगमधिगम्य चितां प्रविष्टा । शोचामि गोपगृहिणी कथमद्य तक्रं ॥ सा वा जगतत्रयजयप्रथिता नतांगी । बुध्ध्या कया बत बुधैरबला बभाषे ॥ १४ ॥ दुरितवनघनाली शोककासारपाली । भवकमलमराली पापतोयप्रणाली ॥ विकटकपटपेटी मोहभूपालचेटी । विषयविषभुजंगी दुःखसारा

कृशांगी ॥ १५ ॥ आवर्त्तः संशयानामविनयभवनं पत्तनं साहसानां । दोषाणां संनिधानं कपटशत-
गृहं क्षेत्रमप्रत्ययानां ॥ अग्राह्यं यन्महद्भिर्नरवरवृषभैः सर्वमायाकरंडं । स्त्रीयंत्रं केन लोके विषममृ-
तमयं धर्मनाशाय सृष्टं ॥ १६ ॥ अनृतं साहसं माया । मूर्खत्वमतिलोभता ॥ निःस्नेहत्वनिर्दयत्वे ।
स्त्रीणां दोषाः स्वभावजाः ॥ १७ ॥ प्रायः पुमांसः सरलस्वभावा । रंभास्तु कौटिल्यकलाकरंडाः ॥
ताताद्य याचेत्कथमन्यथास्मिन् । काले वरं केकयनंदनेयं ॥ १८ ॥ आहारो द्विगुणः स्त्रीणां । निद्रा
तासां चतुर्गुणा ॥ षड्गुणो व्यवसायश्च । कामश्चाष्टगुणः स्मृतः ॥१९॥ अणंता पावरासीओ । जाव
उदयमागया ॥ ताव इक्चित्तणं पत्तं । समं जाणीहि गोयमा ॥ २० ॥ पापाकारमिदं वपुर्मलभृतं
दृष्टिः सदोषाकुला । वक्त्रं चर्ममयं विगंधि कलुषं मांसोत्करालौ स्तनौ ॥ जंघाद्यस्थिविभूषितं च स-
कलं यस्या विरूपं सदा । पश्यन्नप्ययमातनोति हृदये रागी कथं संमदं ॥ २१ ॥ सुवंशजोऽप्यकृत्या-
नि । कुरुते प्रेरितः स्त्रिया ॥ स्नेहलं दधि मथ्नाति । पश्य मंथानको न किं ॥ २२ ॥ गृहीतहस्तकः
प्रेयान् । प्रेयसीभिर्घरट्टवत् ॥ भ्रमितः पितृमात्रादि—स्नेहं दलयति क्षणात् ॥ २३ ॥ उन्मत्तप्रेम-
संरंभा—दारभंते यदंगनाः ॥ तत्र प्रत्यूहमाधातुं । ब्रह्मापि खलु कातरः ॥ २४ ॥ रे रे यंत्रक मा

रोदीः । कं कं न भ्रमयंत्यमूः ॥ भ्रूचापोत्क्षेपमात्रेण । कराकृष्टस्य का कथा ॥ २५ ॥ दर्शने हरते चित्तं । स्पर्शने हरते बलं ॥ संगमे हरते वीर्यं । नारी प्रत्यक्षराक्षसी ॥ २६ ॥ स्मृता भवति तापाय । दृष्टा तून्मादकारिणी ॥ स्पृष्टा भवति मोहाय । सा नाम दयिता कथं ॥ २७ ॥ यथाग्निसंनिधानेन । लाक्षाऽद्रव्यं विलीयते ॥ धीरोऽपि कृशकायोऽपि । तथा स्त्रीसन्निधौ नरः ॥ २८ ॥ नरः सविभ्रमस्त्रीभिः । खाद्यमानोऽपि हृष्यति ॥ असिर्भवति तेजस्वी । घर्ष्यमाणोऽपि शाणया ॥ २९ ॥ अंतर्विषमया ह्येता । बहिश्चैव मनोरमाः ॥ गुंजाफलसमाकाराः । स्वभावादेव योषितः ॥ ३० ॥ रक्ता हरंति सर्वस्वं । प्राणानपि विरागतः ॥ अहो रागविरागाभ्यां । कष्टं कष्टा हि योषितः ॥ ३१ ॥ नागरजातिरदुष्टा । शीतो वह्निर्निरामयः कायः ॥ स्वादु च सागरसलिलं । स्त्री कृतज्ञेत्यसंभाव्यं ॥ ॥ ३२ ॥ यो मूर्ध्नि विधृतः कुंभः । पाशस्तस्यापि योषिता ॥ विधीयते कंठपीठे । जलार्थं ही मृगीदृशा ॥ ३३ ॥ गंगाइ वालुअं सा—यरे जलं हिमवंत अ परिमाणं ॥ जाणंति बुद्धिमंता । महिलाहिअयं न याणंति ॥ ३४ ॥ जल्पंति सार्धमन्येन । पश्यंत्यन्यं सविभ्रमाः ॥ हृद्गतं चिंतयंत्यन्यं । प्रियः को नाम योषितां ॥ ३६ ॥ एकं वक्रविलोकनेन वचनेनान्यं परं विभ्रमै—र्भ्रूभंगस्तन

इत्येवं कुटिलासु कृत्रिमकृतस्नेहासु तास्वप्यलं । किं रे चित्त
दर्शनप्रभृतिभिर्व्यामोहयंति स्त्रियः ॥ चतुरः सृजता राज—न्नुपायांस्तेन वेधसा ॥ न
रतिं करोषि विमुखं सिद्धांगनासंगमात ॥ ३७ ॥
सृष्टः पंचमः कोऽपि । गृह्यंते येन योषितः ॥ ३८ ॥ न स्नेहेन न विद्यया न च धिया रूपेण शौ-
र्येण वा । नेर्ष्याचाटुभयार्थदानविषयक्रोधक्षमामार्दवैः ॥ लज्जायौवनभोगसत्यकरुणासत्त्वादिभिर्वा
गुणै—र्गृह्यंते न विभूतिभिश्च ललना दुःशीलचित्ता यतः ॥ ३९ ॥ यदि स्थिरा भवेद्विद्यु—त्ति-
ष्ठंति यदि वायवः ॥ दैवात्तथापि नारीणां । न स्थेम्ना स्थीयते मनः ॥ ४० ॥ नार्यश्चलाचला एव ।
यद्यपि स्युर्नियंत्रिताः ॥ पताका वंशबद्धापि । भ्रमत्येव दिशो दिशं ॥ ४१ ॥ रहो नास्ति क्षणो
नास्ति । नास्ति प्रार्थयिता नरः ॥ तेन नारद नारीणां । सतीत्वमभिजायते ॥ ४२ ॥ सायर बप्पु
मुरारि पिउ । चंदह जेवरु भाउ ॥ लछी हींडे घरहिं घरुं । महिला कामज्जाय ॥ ४३ ॥ वल्ली
नरिंदचित्तं । वक्खाणं पाणिअं च महिलाउ ॥ तत्थय वच्चंति सया । जत्थय धुत्तेहिं निज्जंति ॥४४॥
हित्वा श्रीः पुंडरीकाक्षं । यदेनं सुभगं श्रिता ॥ इतीवायं विरूपाक्षो । गौरीं वपुषि बद्धवान् ॥४५॥
सुरूपाः पंच योद्धारः । पांडवाः पतयो मम ॥ तथापि चपलं चेतो । मुने षष्ठेऽपि धावति ॥ ४६ ॥

सुरूपं पुरुषं दृष्ट्वा । पितरं भ्रातरं सुतं ॥ देहः क्लिदति नारीणा—मामपात्रमिवांभसा ॥ ४७ ॥ नैव स्त्रीणां प्रियः कोऽपि । न चाढ्यो न च रूपवान् ॥ गावस्तृणमिवारण्ये । आकांक्षंते नवं नवं ॥४८॥ कामिन्यो नीचगामिन्य—स्तटिन्य इव निश्चितं ॥ दारा राज्ञोऽपि यत्तारः । प्रणयं यांति गोपतेः ॥

अथ वेश्यासंबंधिसूक्तानि—कश्चुंबति कुलपुरुषो । वेश्याधरपल्लवं मनोज्ञमपि ॥ चारभटचौरचेटक—नटविटनिष्ठीवनशरावं ॥ १ ॥ या विचित्रविटकोटिनिघृष्टा । मद्यमांसनिरतातिनिकृष्टा ॥ कोमला वचसि चेतसि दुष्टा । तां भजंति गणिकां न विशिष्टाः ॥ २ ॥ जात्यंधाय च दुर्मुखाय च जराजीर्णाखिलांगाय च । ग्रामीणाय च दुष्कलाय च गलत्कुष्ठाभिभूताय च ॥ यच्छंतीषु मनोहरं निजवपुर्लक्ष्मीलवश्रद्धया । पण्यस्त्रीषु विवेककल्पलतिकाशस्त्रीषु को रज्यते ॥ ३ ॥ वेश्यां नितंबजघनस्तनभूरिभारा—मारोपयंत्युरसि मूढधियो रताय ॥ संसारवारिनिधिमध्यनिमज्जनाय । संजानते न हि शिलां निजकंठबद्धां ॥ ४ ॥ वेश्यासौ मदनज्वाला । रूपेंधनसमन्विता ॥ कामिभिर्यत्र हूयंते । यौवनानि धनानि च ॥५॥ विभवो वीतसंगानां । वैदग्ध्यं कुलयोषितां ॥ दाक्षिण्यं वणिजां प्रेम । वेश्यानाममृतं विषं ॥ ६ ॥ नखविक्रियां कुरुते । नाभिनिवेशं जने प्रकाशयति ॥ नवधूपयोग्यदे-

हो । मुनिरिव वेश्याजनो भाति ॥ ७ ॥

अथ विषयसुखसंबंधिसूक्तानि—विकंपते हस्तयुगं वपुःश्रीः । प्रयाति दंता अपि विद्रवंति ॥
भिक्षाशनं तदपि नीरसमेकवारं ।
मृत्यावुपागच्छति निर्विलंबं । तथापि जंतुर्विषयाभिलाषी ॥ १ ॥ शय्या च भूः परिजनो निजदेहमात्रं ॥ वस्त्रं विशीर्णपटखंडमयी च कंथा । हा हा तथापि विषया
न परित्यजंति ॥ २ ॥ विषयगणः कापुरुषं । करोति वशवर्त्तिनं न सत्पुरुषं ॥ बध्नाति मशकमेव हि । लूतातंतुर्न मातंगं ॥ ३ ॥ अविदितपरमानंदो । वदति जनो विषय एव रमणीयः ॥ तिलतैलमेव मिष्टं । येन न दृष्टं घृतं क्वापि ॥ ४ ॥ ददति तावदमी विषयाः सुखं । स्फुरति यावदियं हृदि मूढता ॥ मनसि तत्वविदां तु विचारके । क्व विषयाः क्व सुखं क्व परिग्रहः ॥ ६ ॥ अवश्यं यातारश्चिरतरमुषित्वापि विषया । वियोगे को भेदस्त्यजति न जनो यत्स्वयममून् ॥ व्रजंतः स्वातंत्र्यात्किमपि परितापाय मनसः । स्वयं त्यक्ता ह्येते शमसुखमनंतं विदधति ॥ ७ ॥ अवलोअछ गंथबं । अबं गहिऊण पावए मुक्कं ॥ परलोए देइ दिठी । मुणिवरसारिछया वेसा ॥ ८ ॥ अजानन्दाहात्म्यं पतति शलभस्तीव्रदहने । स मीनोऽप्यज्ञानाद्बडिशयुतमश्नाति पिशितं ॥ विजानंतोऽप्येते

वयमिह विपज्जालजटिला—न्न मुंचामः कामानहह गहनो मोहमहिमा ॥ ९ ॥ तृषा शुष्यत्यास्ये पिबति सलिलं स्वादु सुरभि । क्षुधार्त्तः सन्न शालीन् कवलयति मांस्या कवलितान् ॥ प्रदीप्ते रागाग्नौ घननिबिडमाश्लिष्यति वधूं । प्रतीकारे व्याधेः सुखमिति विपर्यस्यति जनः ॥ १० ॥ शांतेऽनंतमहिम्नि निर्मलचिदानंदे तरंगावली—निर्मुक्तामृतसागरांभसि मनागमग्नोऽपि नाचामति ॥ निःसारे मृगतृष्णिकार्णवजलेऽश्रांतोऽपि मूढः पिब—त्याचामत्यवगाहतेऽभिरमते मज्जत्यथोन्मज्जति ॥ ११ ॥

अथेंद्रियदमनसंबंधिसूक्तानि—आपदां कथितः पंथा । इंद्रियाणामसंयमः ॥ तज्जयः संपदां मार्गो । येनेष्टं तेन गम्यतां ॥ १ ॥ यस्य हस्तौ च पादौ च । जिह्वा च सुनियंत्रिता ॥ इंद्रियाणि सुगुप्तानि । रुष्टो राजा करोति किं ॥ २ ॥ वनेऽपि दोषाः प्रभवंति रागिणां । गृहेऽपि पंचेंद्रियनिग्रहस्तपः ॥ अकुत्सिते कर्मणि यः प्रवर्त्तते । निवृत्तरागस्य गृहं तपोवनं ॥ ३ ॥ जितं दशार्णभद्रेण । हारितं हरिणा च यत ॥ हेतुरत्र हृषीकाणि । निर्जिताऽनिर्जितान्यहो ॥ ४ ॥ उग्रं तपः कपटतामपि लंभयंति । कीर्त्युज्ज्वलानि च कुलानि कलंकयंति ॥ अंतं नयंति परमामपि च प्रतिष्ठां । किं वा न हींद्रियजिताः किल हारयंति ॥ ५ ॥ कुरंगमातंगपतंगभृंग—मीना हताः पंचभिरेव पंच

॥ एकः प्रमादी स कथं न हन्या—द्यः सेवते पंचभिरेव पंच ॥ ६ ॥ आत्मानं कुपथेन निर्गमयितुं यः शूकलाश्वायते । कृत्याकृत्यविवेकजीवितहृतौ यः कृष्णसर्पायते ॥ यः पुण्यद्रुमखंडखंडनविधौ स्फुर्जत्कुठारायते । तं लुप्तव्रतमुद्रमिंद्रियगणं जित्वा शुभंयुर्भव ॥ ७ ॥ स पंडितो यः करणैरखंडितः । स तापसो यो निजपापतापकः ॥ स दीक्षितो यः सकलं समीक्षते । स धार्मिको यः परमर्म न स्पृशेत् ॥ ८ ॥ दो पंथेहिं न गम्मइ । दोमुह सुई न सीवए कंथं ॥ दुन्नि न हुंति कयाविहु । इंदियसुक्खं च मुक्खं च ॥ ए ॥

अथ यौवनसंबंधिसूक्तानि—प्रथमे वयसि यः शांतः । स शांत इति मे मतिः ॥ धातुषु क्षीयमाणेषु । शमः कस्य न जायते ॥ १ ॥ अतिवाहितमतिगहनं । विनापवादेन यौवनं येन ॥ दोषनिधाने जन्मनि । किं न प्राप्तं फलं तेन ॥ २ ॥ ये न स्खलंति ते दक्षाः । कृष्णकेशतमोभरे॥ वार्धके तु सदोद्योतः । शिरःस्थपलितेंदुतः ॥ ३ ॥ यौवने विकरोत्येव । मनः संयमिनामपि ॥ राजमार्गेऽपि रोहंति । वर्षाकाले किलांकुराः ॥ ४ ॥ यौवनं धनसंपत्तिः । प्रभुत्वमविवेकिता ॥ एकैकमप्यनर्थाय । किं पुनस्तच्चतुष्टयं ॥ ५ ॥ भ्रातश्चित्त सखे विवेक भगवन्नाचार रेरे गुणाः । कौ·

वयमिह विपज्जालजटिला—न्न मुंचामः कामानहह गहनो मोहमहिमा ॥ ९ ॥ तृषा शुष्यत्यास्ये पिबति सलिलं स्वादु सुरभि । क्षुधार्त्तः सन्न शालीन् कवलयति मांस्या कवलितान् ॥ प्रदीप्ते रागाग्नौ घननिबिडमाश्लिष्यति वधूं । प्रतीकारे व्याधेः सुखमिति विपर्यस्यति जनः ॥ १० ॥ शांतेऽनंतमहिम्नि निर्मलचिदानंदे तरंगावल्ली—निर्मुक्तामृतसागरांभसि मनाग्मग्नोऽपि नाचामति ॥ निःसारे मृगतृष्णिकार्णवजलेऽश्रांतोऽपि मूढः पिब—त्याचामत्यवगाहतेऽभिरमते मज्जत्यथोन्मज्जति ॥ ११ ॥

अथेंद्रियदमनसंबंधिसूक्तानि—आपदां कथितः पंथा । इंद्रियाणामसंयमः ॥ तज्जयः संपदां मार्गो । येनेष्टं तेन गम्यतां ॥ १ ॥ यस्य हस्तौ च पादौ च । जिह्वा च सुनियंत्रिता ॥ इंद्रियाणि सुगुप्तानि । रुष्टो राजा करोति किं ॥ २ ॥ वनेऽपि दोषाः प्रभवंति रागिणां । गृहेऽपि पंचेंद्रियनिग्रहस्तपः ॥ अकुत्सिते कर्मणि यः प्रवर्त्तते । निवृत्तरागस्य गृहं तपोवनं ॥ ३ ॥ जितं दशार्णभद्रेण । हारितं हरिणा च यत ॥ हेतुरत्र हृषीकाणि । निर्जिताऽनिर्जितान्यहो ॥ ४ ॥ उग्रं तपः कपटतामपि लंभयंति । कीर्त्युज्ज्वलानि च कुलानि कलंकयंति ॥ अंतं नयंति परमामपि च प्रतिष्टां । किं वा न हींद्रियजिताः किल हारयंति ॥ ५ ॥ कुरंगमातंगपतंगभृंग—मीना हताः पंचभिरेव पंच

॥ एकः प्रमादी स कथं न हन्या—द्यः सेवते पंचभिरेव पंच ॥ ६ ॥ आत्मानं कुपथेन निर्गमयि·
तुं यः शूकलाश्वायते । कृत्याकृत्यविवेकजीवितहृतौ यः कृष्णसर्पायते ॥ यः पुण्यद्रुमखंडखंडनविधौ
स्फुर्जत्कुठारायते । तं लुप्तव्रतमुद्रमिंद्रियगणं जित्वा शुभंयुर्भव ॥ ७ ॥ स पंडितो यः करणैरखंडि·
तः । स तापसो यो निजपापतापकः ॥ स दीक्षितो यः सकलं समीक्षते । स धार्मिको यः परमर्म
न स्पृशेत् ॥ ८ ॥ दो पंथेहिं न गम्मइ । दोमुह सुई न सीवए कंथं ॥ दुन्नि न हुंति कयाविहु ।
इंदियसुक्खं च मुक्खं च ॥ ९ ॥

अथ यौवनसंबंधिसूक्तानि—प्रथमे वयसि यः शांतः । स शांत इति मे मतिः ॥ धातुषु क्षी·
यमाणेषु । शमः कस्य न जायते ॥ १ ॥ अतिवाहितमतिगहनं । विनापवादेन यौवनं येन ॥ दो·
षनिधाने जन्मनि । किं न प्राप्तं फलं तेन ॥ २ ॥ ये न स्खलंति ते दक्षाः । कृष्णकेशतमोभरे ॥
वार्धके तु सदोद्योतः । शिरःस्थपलितेंदुतः ॥ ३ ॥ यौवने विकरोत्येव । मनः संयमिनामपि ॥ रा·
जमार्गेऽपि रोहंति । वर्षाकाले किलांकुराः ॥ ४ ॥ यौवनं धनसंपत्तिः । प्रभुत्वमविवेकिता ॥ एकै·
कमप्यनर्थाय । किं पुनस्तच्चतुष्टयं ॥ ५ ॥ भ्रातश्चित्त सखे विवेक भगवन्नाचार रेरे गुणाः । कौ·

लीनत्वमपि क्षमे भगवति व्रीडे सखि श्रूयतां ॥ विद्याभिः परमश्रमेण हि मया नीताः परामुन्नतिं। तत्किं मामवहाय यौवनवने कुत्रापि यूयं गताः ॥ ६ ॥

अथ वैराग्यसंबंधिसूक्तानि—सव्वं विलविअं गीअं। सव्वं नट्टं विडंबणा ॥ सव्वे आभरणा भारा । सव्वे कामा दुहावहा ॥ १ ॥ पुंसामुन्नतचित्तानां । सुखावहमिदं द्वयं ॥ सर्वसंगनिवृत्तिर्वा । विभूतिर्वा सुविस्तरा ॥ २ ॥ एको वासः पत्तने वा वने वा । एकं मित्रं भूपतिर्वा यतिर्वा ॥ एका भार्या सुंदरी वा दरी वा । एकं शास्त्रं वैद्यमध्यात्मगं वा ॥ ३ ॥ एकैव काचिन्महतामवस्था । सूक्ष्माणि वस्त्राण्यथवा च कंथा ॥ कराग्रलग्नाभिनवा च बाला । गंगातरंगेष्वथवाऽक्षमाला ॥ ४ ॥ एको रागिषु राजते प्रियतमादेहार्धहारी हरो । नीरागेषु जिनो विमुक्तललनासंगो न यस्मात्परः ॥ दुर्वारस्मरघस्मरोरगविषव्यामोहमूढो जनः । शेषः कामविडंबितो न विषयान् भोक्तुं न मोक्तुं क्षमः ॥ ५ ॥ न द्वारि द्विरदा मदांबुजलदा नाग्रे कलः पंचमः । पंचेषोर्विजयप्रपंचनकरी नो मंदिरे सुंदरी॥ तत्किं मुग्ध मुधैव धावसि भवे नाद्यापि किं मुक्तये । जायंते तव सिद्धिसिंधुपुलिनप्रांतेषु विश्रांतयः ॥ ६ ॥ नो धर्माय यतो न तत्र निरता नार्थाय येनेदृशाः । कामोऽप्यर्थवतां

तदर्थमपि नो पुंसः कचित्कस्यचित् ॥ तत्के नाम वयं किमत्र घटिता ज्ञातं पुनः कारणं । जीवंतोऽपि मृता इवेति वदता शब्दार्थसंसिद्धये ॥ ७ ॥ चक्षुर्दग्धं परस्त्रीभि—र्हस्तौ दग्धौ प्रतिग्रहैः ॥ जिह्वा दग्धा परान्नेन । गतं जन्म निरर्थकं ॥ ८ ॥ चंडानिलः स्फुरितमब्दचयं दवार्चि—र्वृक्षव्रजं तिमिरमंडलमर्कबिंबं ॥ वज्रं महीध्रनिवहं नयते यथांतं । वैराग्यमेकमपि कर्म तथा समग्रं ॥ ९ ॥ भोगे रोगभयं सुखे क्षयभयं वित्ते च भूभृद्भयं । माने ग्लानिभयं जये रिपुभयं वंशे कुयोषिद्भयं ॥ दास्ये स्वामिभयं गुणे खलभयं देहे कृतांताद्भयं । सर्वं नाम भयं भवेदिदमहो वैराग्यमेवाऽभयं ॥ ॥ १० ॥ कश्चित्कालः स भावी जिनवचनरतो यत्र युक्तो यतींद्रै—र्ग्रामादौ मासकल्पं स्वजनजनसमो मुक्तलोभाभिमानः ॥ पुण्यां पुण्यातिशायिप्रवरगुणयुतैर्ज्ञानिभिः सेवितां तां । भिक्षां निःसंगचेताः प्रशमरसरतोऽहं भविष्याम्यजस्रं ॥ ११ ॥ गुप्तो मानविवर्जितो व्रतरतः षट्कायरक्षोद्यतः । कृत्वा साधुविहारितां शमरसो निःसंगचित्तः क्षमी ॥ त्यक्ताहंकृतिनिश्चलेन मनसा ध्यायन् पदं नैर्वृतं । स्थास्येऽहं तु कदा शिलातलगतो भव्याय मार्गं दिशन् ॥ १२ ॥ दग्ध्वा मोहं समस्तं निरवधिविशदं ज्ञानमुत्पाद्य लोके । तीर्थं निर्वाणमार्गं शुभतरफलदं भव्यसार्थाय कृत्वा ॥ गत्वा लोकांत

देशं कलिमलरहितं सर्वशर्मातिशायि । लप्स्येऽहं मोक्षसौख्यं सहजनिजगुणं कोऽपि कालः स भावी ॥ १३ ॥

अथ मोहत्यागसूक्तानि—कारणात्प्रियतामेति । द्वेष्यो भवति कारणात ॥ स्वार्थार्थी जीवलोकोऽयं । न कश्चित्कस्यचित्प्रियः ॥ १ ॥ वृक्षं क्षीणफलं त्यजंति विहगाः शुष्कं सरः सारसाः । पुष्पं पर्युषितं त्यजंति मधुपा दग्धं वनांतं मृगाः ॥ निर्द्रव्यं पुरुषं त्यजंति गणिका भ्रष्टं नृपं सेवकाः । सर्वः कार्यवशाज्जनोऽभिरमते नो कस्य को वल्लभः ॥ २ ॥ तावच्चिअ सयलजणो । नेहं दरिसेइ जाव निअकज्जं ॥ नियकज्जे समवित्ते । विरला नेहं पवट्टंति ॥ ३ ॥ कृतमिदमिदं करिष्ये । केवलमिति सरलमेव चिंतयसि ॥ त्रुटिदलितसकलवांछं । विलसितमपि चिंतय विधातुः ॥ ४ ॥ हा हा दुष्टकदर्थितकायैः । क्षिप्तं जन्म मुधा व्यवसायैः ॥ काकिण्यर्थे चिंतारत्नं । हारितमेतदकृत्वा यत्नं ॥ ५ ॥ यदयं स्वामी यदिदं सद्म । सर्वं चैतन्मिथ्या छद्म ॥ यदयं कांतो यदियं कांता । सोऽयं मोहो हंत दुरंतः ॥ ६ ॥ जाताः कति न हि सुखसंबंधा । न विदंत्येते जीवा अंधाः ॥ कटरे मोहनटस्य विलासः । सर्वो नव इव पुनराभासः ॥ ७ ॥ कोऽहं कस्मिन् कथमायातः । का मे जननी

को मे तातः ॥ इति परिभावयतः संसारः । सर्वोऽयं स्वप्नव्यवहारः ॥ ८ ॥ दारा परभवकारा । बं-
धुजनो बंधनं विषं विषयाः ॥ कोऽयं जनस्य मोहो । ये रिपवस्तेषु सुहृदाशाः ॥ ९ ॥ पुत्रो मे
भ्राता मे । स्वजनो मे गृहकलत्रवर्गो मे ॥ इति कृतमिमे शब्दं । पशुमिव मृत्युर्जनं हरति ॥१०॥
द्रव्याणि तिष्ठंति गृहेषु नार्यो । विश्रामभूमौ स्वजनाः स्मशाने ॥ देहं चितायां परलोकमार्गे । क-
र्मानुगो याति स एव जीवः ॥ ११ ॥ जंतुः पयः पश्यति नैव दंडं । कीरोऽपि शालीन्न च लोष्टखंडं
॥ काकः पलं नो बत सिंहतुंडं । जंतुस्तथा शं न यमं प्रचंडं ॥ १२ ॥ निवृत्ता भोगेच्छा पुरुषबहु-
मानो विगलितः । समानाः स्वर्याताः सपदि सुहृदो जीवितसमाः ॥ शनैर्यष्ट्युत्थानं घनतिमिररुद्धे च
नयने । अहो धृष्टः कायस्तदपि मरणापायचकितः ॥ १३ ॥ मातापितृसहस्राणि । पुत्रदारशतानि
च ॥ प्रतिजन्मनि वर्त्तंते । कस्य मातापितापि वा ॥ १४ ॥ नास्तिके शकुनाः कुब्जे । वास्तुदोषाः
पशौ बलं ॥ निःस्वे नाहारदोषाः स्यु—र्न वैराग्यमसात्विके ॥ १५ ॥ त्यक्तेऽपि वित्ते दमितेऽपि
चित्ते । ज्ञातेऽपि तत्वे गलिते ममत्वे ॥ दुःखैकगेहे विदिते च देहे । तथापि मोहस्तरुणप्ररोहः ॥
॥ १६ ॥ जानामि क्षणभंगुरं जगदिदं जानामि तुच्छं सुखं । जानामींद्रियवर्गमेतमखिलं स्वार्थैक-

निष्टं सदा ॥ जानामि स्फुरिताचिरद्युतिचलं विस्फुर्जितं संपदां । नो जानामि तथापि कः पुनरसौ मोहस्य हेतुर्मम ॥ १७ ॥

अथांतःकरणसंबंधिसूक्तानि—घृष्टे नेत्रे करौ घृष्टौ । घृष्टा जिह्वा रदैः समं ॥ घृष्टानि पुस्तकायूंषि । घृष्टं नांतर्गतं मनः ॥ १ ॥ यदि वहति त्रिदंडं नग्नमुंडं जटां वा । यदि वसति गुहायां वृक्षमूले शिलायां ॥ यदि पठति पुराणं वेदसिद्धांततत्वं । यदि हृदयमशुद्धं सर्वमेतन्न किंचित ॥ २ ॥ अभ्यस्तैः किमु पुस्तकैः किमथवा चेष्टाभिरेकांततः । कष्टाभिः किमु देवतादिविषयैः पूजाप्रणामादिभिः ॥ चेतश्चेदिदमर्कतूलतरलं शक्येत रोद्धुं बला—त्कामेऽभ्यः करपंकजे ननु तदा सौख्यानि सर्वाण्यपि ॥ ४ ॥ तर्कः कंदलकंद एष कविता मिथ्यावचोजल्पनं । साहित्यं खलु बंदिवृंदपदवी कष्टावहं लक्षणं ॥ विद्यामंडलमंत्रतंत्रविधयः सर्वेऽप्यनर्थप्रदा—स्तत्त्वं मूढ निरक्षरं परपदं चेतश्चिरं चिंतय ॥ ५ ॥ शमार्थं सर्वशास्त्राणि । विहितानि मनीषिभिः ॥ तस्मात्स सर्वशास्त्रज्ञो । यस्य शांतं मनः सदा ॥ ६ ॥ सर्वाः संपत्तयस्तस्य । विशुद्धं यस्य मानसं ॥ उपानद्गूढपादस्य । ननु चर्मावृतैव भूः ॥ ७ ॥ एकाग्रमनसा ध्याता । देवाः शैलमया अपि ॥ अचिरेणैव तुष्यंति । किं पुनश्चे-

तनो जनः ॥ ८ ॥ चित्तायत्तं धातुबद्धं शरीरं । चित्ते नष्टे धातवो यांति नाशं ॥ तस्माच्चित्तं यत्नतो
रक्षणीयं । स्वस्थे चित्ते बुद्धयः संभवंति ॥ ९ ॥ सत्यपूतं वदेद्वाक्यं । वस्त्रपूतं पिबेज्जलं ॥ दृष्टि-
पूतं न्यसेत्पादं । मनःपूतं समाचरेत ॥ १० ॥

अथ ध्यानसंबंधिसूक्तानि—सत्यं वच्मि हितं वच्मि । सारं वच्मि पुनः पुनः ॥ अस्मिन्नसारे
संसारे । सारमात्मवशं मनः ॥ १ ॥ कुलं पवित्रं जननी कृतार्था । वसुंधरा भाग्यवती च तेन ॥
अबाह्यमार्गे शमसिंधुमग्नं । लीनं परब्रह्मणि यस्य चेतः ॥ २ ॥ न शब्दशास्त्राभिरतस्य मोक्षो । न
बाह्यकाम्बरबंधुरस्य ॥ न भोजनाच्छादनविस्मितस्य । न लोकचित्तग्रहणे रतस्य ॥ ३ ॥ एकाग्रचि-
त्तस्य दृढव्रतस्य । पंचेंद्रियप्रीतिनिवर्त्तकस्य ॥ अध्यात्मयोगे गतमानसस्य । मोक्षो ध्रुवं नित्यमहिं-
सकस्य ॥ ४ ॥ सुकरं मलधारित्वं । सुकरं दुस्तपं तपः ॥ सुकरोऽक्षनिरोधश्च । दुष्करं चित्तरोधनं
॥ ५ ॥ राज्यमिव्वन्नजित्वारी—ननाराध्य गुरुं श्रुतं ॥ अजित्वा च मनो मोक्षं । न प्राप्नोति कथंच-
न ॥ ६ ॥ अहो ध्यानस्य माहात्म्यं । येनैकापि हि कामिनी ॥ अनुरागविरागाभ्यां । शिवाय च
भवाय च ॥ ७ ॥ कुणउ तवं पालउ संजमं । पढउ सयलसत्थाइं ॥ जाव न झायइ अप्पा । ताव

न मुक्को जिणो जणइ ॥ ८ ॥ तव तविएं जव जविएं । बहुणा कालेण होइ सिद्धिसुहं ॥ नठविश्र श्रह कम्मा । झाणेण य तक्खणा सिद्धि ॥ ९ ॥

श्रथ तपःसंबंधिसूक्तानि—नमुश्राइदसमेहिं । मुणिणो कम्मं खिवंति जं गुत्ता ॥ तं नो वाससयाइ—कोमाकोडीहिं नेरइश्रा ॥ १ ॥ पोरुसिचउब्भठे । कालं कम्मं खिवंति मुणिणोवि ॥ तं नो नारयजीवा । वाससयसहस्स लक्खेहिं ॥ २ ॥ जं नारया न कम्मं । खिवंति बहुएहिं वरिससहस्सेहिं ॥ तं खलु चउब्भत्तोई । जीवो निज्जरइ सुहभावो ॥ ३ ॥ सो श्र तवो कायव्वो । जेण मणो श्रमंगुलं न चिंतेइ ॥ जेण न इंदियहाणी । जेण य जोगा न हावंति ॥ ४ ॥ निरवज्जाहारेणं । साहूणं निच्चमेव उववासो ॥ उत्तरगुणवुड्ढिकए । तहवि उववासमिच्छंति ॥ ५ ॥ निवसंति हृषीकाणि । निवृत्तानि स्वगोचरात् ॥ एकीभूयात्मना यस्मि—न्नुपवासमिमं विदुः ॥ ६ ॥ जे निच्चमपमत्ता । गंठिं बंधंति गंठिसहिश्रंमि ॥ सग्गापवग्गसुक्खं । तेहिं निबद्धं सगंठिंमि ॥ ७ ॥ भणिऊण नमुक्कारं । निच्चं विम्हरणवज्जिश्रा धन्ना ॥ पारंति गंठिसहिश्रं । गंठिं सह कम्मगंठीहिं ॥ ८ ॥ मंसासी मज्जरऊ । इक्केण चेव गंठिसहिएणं ॥ सोहंततंतुवाऊ । सुसाहुवाऊ सुरो जाऊ

॥ ए ॥ इअ चिंतसु अप्पाणं । अप्पाणं सिदपुरस्स जइ महसि ॥ अणसणसरिसं पुन्नं । वयंति एअस्स समयन्नू ॥ १० ॥ थोवंमिवि अवराहे । जणिअं अन्नंमि गुरुअ पच्छित्तं ॥ जं इह अप्पं तं खलु । मन्ने अप्पासकरणबं ॥ ११ ॥ देहदुर्गमुदग्राणि । तावत्कर्माणि देहिनां ॥ नोझंति या· वदन्नांबु—प्रवेशोऽत्र निर्गलः ॥ १२ ॥ विरज्य विषयेभ्यो यै—स्तेपे मोक्षफलं तपः ॥ तैरेव फ· लमंगस्य । जगृहे तत्ववेदिभिः ॥ १३ ॥ शरीरशोषणं तीव्रं । न कुर्युर्मुनयस्तपः ॥ पर्यंतविरसं सर्वं । स्यात्संसारिणां यदि ॥ १४ ॥ चक्रे तीर्थकरैः स्वयं निजगदे तैरेव तीर्थेश्वरैः । श्रीहेतुर्भवहारि दा- रितरुजं सन्निर्जराकारणं ॥ सद्यो विघ्नहरं हृषीकदमनं मांगल्यमिष्टार्थकृत् । देवाकर्षणकारि दर्पदलनं तस्माद्विधेयं तपः ॥ १५ ॥ श्रीमद्वीरजिनो दृढप्रहरणः स्वीयप्रतिज्ञादृढः । श्लाघ्यो बाहुबली बलोऽ· प्यविचलः सन्नंदिषेणव्रती ॥ आनंदः सदुपासको व्रतरुचिः सा सुंदरीत्यादयः । कर्मोन्मूलनकोवि· देन तपसा देवासुरैर्वंदिताः ॥ १६ ॥ पूजालाभप्रसिद्ध्यर्थं । तपस्तप्येत योऽल्पधीः ॥ शोष एव श· रीरस्य । न तस्य तपसः फलं ॥ १७ ॥

अथ तपःप्रभावसूक्तानि—यद्दूरं यद्दुराराध्यं । यच्च दूरे व्यवस्थितं ॥ तत्सर्वं तपसा साध्यं ।

तपो हि दुरतिक्रमं ॥ १ ॥ तपः सकललक्ष्मीणां । नियंत्रणमशृंखलं ॥ दुरितप्रेतभूतानां । रक्षामंत्रो निरक्षरः ॥ २ ॥ यस्माद्विघ्नपरंपरा विघटते दास्यं सुराः कुर्वते । कामः शाम्यति दाम्यतींद्रियगणः कल्याणमुत्सर्पति ॥ उन्मीलंति महर्द्धयः कलयति ध्वंसं च यत्कर्मणां । स्वाधीनं त्रिदिवं करोति च फलं श्लाघ्यं तपस्तन्न किं ॥ ३ ॥ यत्पूर्वार्जितकर्मशैलकुलिशं यत्कामदावानल—ज्वालाजालजलं यदुग्रकरणग्रामाहिमंत्राक्षरं ॥ यत्प्रत्यूहतमःसमूहदिवसं यल्लब्धिलक्ष्मीलता—मूलं तद् द्विविधं यथाविधि तपः कुर्वीत वीतस्पृहः ॥ ४ ॥ जन्मकोटिकृतमेकहेलया । कर्म तीव्रतपसा विलीयते ॥ किं न दाह्यमतिबह्वपि क्षणा—दुज्झितेन शिखिनात्र दह्यते ॥ ५ ॥

अथोद्यापनसंबंधिसूक्तानि—प्रासादे कलशाधिरोपणसमं बिंबे प्रतिष्ठोपमं । पुण्यश्रीस्फुटसंविभागकरणं बिभ्रद्विशिष्टे जने ॥ सौभाग्योपरिमंजरीप्रतिनिभं पूर्णेन तपसावधौ । यः शक्त्योद्यमनं करोति विधिना सम्यग्दृशां सोऽग्रणीः ॥ १ ॥ लक्ष्मीः कृतार्था सफलं तपोऽपि । ध्यानं सदोच्चैर्जनबोधिलाभः ॥ जिनस्य भक्तिः क्रमतः शिवश्री—र्गुणाः स्युरुद्यापनतो नराणां ॥ २ ॥ वृक्षो यथा दोहदपूरणेन । कायो यथा सद्रसभोजनेन ॥ विशेषशोभां लभते यथोक्ते—नोद्यापनेनैव तथा

तपोऽपि ॥ ३ ॥ सूत्राणि संतः सुतपोभिरुच्चै—राराध्य कंठे दधते तथापि ॥ मालां च सर्वोद्यमना य नूनं । श्रेयो गुणश्रीयशसां जयस्य ॥ ४ ॥

अथ भावसंबंधिसूक्तानि—जा दव्वे होइ मइ । अहवा तरुणीसु रूववंतीसु ॥ सा जइ जिणवरधम्मे । करयलमज्झे ठिआ सिद्धी ॥ १ ॥ तक्कविहूणो विज्जो । लक्खणहीणो अ पंडिओ लोए ॥ भावविहूणो धम्मो । तिन्निवि नूणं हसिज्जंति ॥ २ ॥ थोवंमि अणुठाणं । भावविसुद्धं हणेइ कम्ममलं ॥ लहुओवि सहसकिरणो । तिमिरनिअरं पणासेइ ॥ ३ ॥ ज्ञेयान्यंगानि दानादी—न्येवं धर्मनरेशितुः ॥ तस्य तेष्वधुना जीवो । भावनामा निगद्यते ॥ ४ ॥ भावो धर्मस्य हृन्मित्रं । भावः कर्मेंधनानलः ॥ सत्कृत्यान्ने घृतं भावो । भावो वेगी शिवश्रियः ॥ ५ ॥ दानशीलतपःसंपद्भावेन भजते फलं ॥ स्वादः प्रादुर्भवेद्भोज्ये । किं नाम लवणं विना ॥ ७ ॥ भावस्यैकांगवीरस्य । सान्निध्याद्भवः शिवं ॥ ययुर्नैकोऽपि दानाद्यै—र्भावहीनैर्घनैरपि ॥ ९ ॥ वित्तेन दीयते दानं । शीलं सत्त्वेन पाल्यते ॥ तपोऽपि तप्यते कष्टा—त्स्वाधीनोत्तमभावना ॥ १० ॥ चिरादेकेन दानादि—क्लेशैः पुण्यं यदर्जितं ॥ तस्यानुमोदनाभावा—त्क्षणादन्यस्तदर्जयेत् ॥ ११ ॥ भावात्सुकृतले-

शोऽपि । नृणां सर्वार्थसिद्धिदः ॥ भ्रष्टानां तु ततो नूनं । सर्वतो भ्रष्टता यतः ॥१२॥ धनं दत्तं वित्तं जिनवचनमभ्यस्तमखिलं । क्रियाकांडं चंडं रचितमवनौ सुप्तमसकृत ॥ तपस्तप्तं तीव्रं चरणमपि चीर्णं चिरतरं । न चेच्चित्ते भावस्तुषवपनवत्सर्वमफलं ॥ १३ ॥ चक्री श्रीभरतो बलानुगमृगः श्रेयानिलापुत्रको । जीर्णश्रेष्टिमृगावतीगृहपतिर्यो भावदेवाभिधः ॥ सा श्लाघ्या मरुदेवता नवमुनिः श्रीचंडरुद्रस्य चे—त्याद्याः कस्य न चित्रकारिचरिता भावेन संभूषिताः ॥ १४ ॥ न काष्टे विद्यते देवो । न शिलायां न कर्द्दमे ॥ भावेषु विद्यतें देव—स्तस्माद्भावो हि कारणं ॥ १५ ॥

अथ क्रोधसंबंधिसूक्तानि—संति संतः किं न संति । संति चेत्तन्निवेद्यतां ॥ किं कुप्यंति न कुप्यंति । ते कुप्यंति कतीदृशाः ॥ १ ॥ जं अज्जिअं चरित्तं । देसूणाए अ पुव्वकोडीए ॥ तंपि कसायमित्तो । हारेइ नरो मुहुत्तेणं ॥ २ ॥ अपूर्वः कोऽपि कोपाग्निः । सज्जनस्य खलस्य च ॥ एकस्य शाम्यति स्नेहा—द्वर्धतेऽन्यस्य वारितः ॥ ३ ॥ न भवति भवति च न चिरं । भवति चिरं चेत्फले विसंवदति ॥ कोपः सत्पुरुषाणां । तुल्यः स्नेहेन नीचानां ॥ ४ ॥ नाऽकारणरुषां संख्या । संख्याताः कारणक्रुधः ॥ कारणेऽपि न कुप्यंति । ये ते जगति पंचषाः ॥ ५ ॥ तं नत्थि घरं तं न-

दोतिन्नि खला न दीसंति ॥ ८ ॥ सं·
ब्बि । राउलं देउलंपि तं नत्थि ॥ जह अकारणकुविआ । दोतिन्नि खला न दीसंति ॥ ८ ॥ सं·
तापं तनुते भिनत्ति विनयं सौहार्दमुत्सादय—त्युद्वेगं जनयत्यवद्यवचनं सूते विधत्ते कलिं ॥ कीर्तिं
कृंतति दुर्गतिं वितरति व्याहंति पुण्योदयं । दत्ते यः कुगतिं स हातुमुचितो रोषः सदोषः सतां ॥
॥ ७ ॥ क्रोधो नाम मनुष्यस्य । शरीराज्जायते रिपुः ॥ येन त्यजंति मित्राणि । धर्माच्च परिहीयते
॥ ८ ॥ न कश्चिच्चंडकोपाना—मात्मीयोऽस्तीह भूतले ॥ होतारमपि जुह्वानं । स्पृष्टो दहति पाव·
कः ॥ १० ॥ परस्परात्मगोत्रस्थ—विग्रहः सर्वनाशकृत ॥ अन्योऽन्यकाष्टसंघर्ष—भवो वह्निर्न किं द·
हेत ॥ ११ ॥ अइतज्जणा न कायव्वा । पुत्तकलत्तेसु सामिए भिच्चे ॥ दहिअंपि महिज्जंतं । छंडइ
देहो न संदेहो ॥ १२ ॥ क्षमी यत्कुरुते कार्यं । न तत्क्रोधवशंवदः ॥ कार्यस्य साधनी प्रज्ञा । सा
च क्रोधेन नश्यति ॥ १३ ॥ कोकिलानां स्वरो रूपं । नारीरूपं पतिव्रता ॥ विद्यारूपं कुरूपाणां ।
क्षमारूपं तपस्विनां ॥ १४ ॥ पढमं चिअ रोसभरे । जा बुद्धि होइ सा न कायव्वा ॥ किंपाकफला·
णंपि । न सुंदरो तीइपरिणामो ॥ १५ ॥

अथ क्षांतिसंबंधिसूक्तानि—क्षमावतामयं लोकः । परश्चैव क्षमावतां ॥ इह सन्मानमर्हति ।

परत्र च शुभां गतिं ॥ १ ॥ एकः क्षमावतां दोषो । द्वितीयो नोपपद्यते ॥ यदेनं क्षमया युक्त—मशक्तं मन्यते जनः ॥ २ ॥ क्षमाखड्गं करे यस्य । दुर्जनः किं करिष्यति ॥ अतृणे पतितो वह्निः । स्वयमेव विनश्यति ॥ ३ ॥ यस्य क्षांतिमयं शस्त्रं । क्रोधाग्नेरुपशामकं ॥ नित्यमेव जयस्तस्य । शत्रूणामुदयः कुतः ॥ ४ ॥ श्रूयते श्रीमहावीरः । क्षांत्यै म्लेच्छेषु जग्मिवान् ॥ अयत्नेनागतां क्षांतिं । वोढुं किमिति नेश्वरः ॥ ५ ॥ मन्निंदया यदि जनः परितोषमेति । नन्वप्रयासजनितोऽयमनुग्रहो मे ॥ श्रेयोऽर्थिनो हि पुरुषाः परतुष्टिहेतो—र्दुःखार्जितान्यपि धनानि परित्यजंति ॥ ६ ॥ ददतु ददतु गालीर्गालिमंतो भवंतो । वयमिह तदभावाद्गालिदानेऽप्यशक्ताः ॥ जगति विदितमेतद्दीयते विद्यमानं । ददति खरविषाणं किं महात्यागिनोऽपि ॥ ७ ॥ प्रायः सर्वसहस्यापि । भवेयुर्मित्रशात्रवः ॥ तापैः क्ष्मां शोषयेद्ग्रीष्मो । वर्षा तोयैश्च पोषयेत ॥ ८ ॥ मुनेरपि वनस्थस्य । स्वीयकर्माणि कुर्वतः ॥ उत्पद्यंते त्रयः पक्षा । मित्रोदासीनशत्रवः ॥ ९ ॥

अथ मानसंबंधिसूक्तानि—मुष्णाति यः कृतसमस्तसमीहितार्थं—संजीवनं विनयजीवितमंगभाजां ॥ जात्यादिमानविषजं विषमं विकारं । सन्मार्दवामृतरसेन नयस्व शांतिं ॥ १ ॥ औचित्या·

चरणं विलुंपति पयोवाहं नभस्वानिव । प्रध्वंसं विनयं नयत्यहिरिव प्राणस्पृशां जीवितं ॥ कीर्त्तिके·
रविणीं मतंगज इव प्रोन्मूलयत्यंजसा । मानो नीच इवोपकारनिकरं हंति त्रिवर्गं नृणां ॥ २ ॥
अधमा धनमिछंति । धनमानौ च मध्यमाः ॥ उत्तमा मानमिछंति । मानो हि महतां धनं ॥ ३ ॥
कुसुमस्तबकस्येव । वृत्तिद्वयं मनस्विनः ॥ मूर्ध्नि वा सर्वलोकस्य । शीर्यते वन एव वा ॥ ४ ॥ ताव·
दाश्रीयते लक्ष्म्या । तावदस्य स्थिरं यशः ॥ पुरुषस्तावदेवासौ । यावन्मानान्न हीयते ॥ ५ ॥ एक
एव खगो मानी । सुखं जीवति चातकः ॥ पिपासितो वा म्रियते । याचते वा पुरंदरं ॥ ६ ॥ मा·
निनो हृतदर्पस्य । लाभोऽपि न सुखावहः ॥ जीवितं मानमूलं हि । माने म्लाने कुतः सुखं ॥७॥
कृताकृतात्ममानस्य । मानिनो मरणं वरं ॥ न चापि कृतमानस्य । कल्पांतमपि जीवितं ॥ ८ ॥
वरं प्राणपरित्यागो । मा मानपरिखंडना ॥ मृत्योस्तत्क्षणिका पीमा । मानखंडे दिने दिने ॥ ९ ॥
न सदश्वाः कशाघातं । न सिंहा घनगर्जितं ॥ परैरंगुलिनिर्देशं । न सहंते मनस्विनः ॥ १० ॥
ब्रूत नूतनकुष्मांड—फलानां के नवंत्यमी ॥ अंगुलीदर्शनाद्येन । विलीयंते मनस्विनः ॥ ११ ॥
अथ मायासंबंधिसूक्तानि—आचार्येषु नटे धूर्त्ते । व्यासवेश्याबहुश्रुते ॥ षट्सु माया न क·

र्तव्या । माया तत्रैव निर्मिता ॥ १ ॥ कुशलजननवंध्यां सत्यसूर्यास्तसंध्यां । कुगतियुवतिमालां मो-
हमातंगशालां ॥ शमकमलहिमानीं दुर्यशोराजधानीं । व्यसनशतसहायां दूरतो मुंच मायां ॥ २ ॥
मायामविश्वासविलासमंदिरं । दुराशयो यः कुरुते धनाशया ॥ सोऽनर्थसार्थं न पतंतमीक्षते । यथा
बिडालो लगुडं पयः पिबन् ॥ ३ ॥ विधाय मायां विविधैरुपायैः । परस्य ये वंचनमाचरंति ॥ ते वं-
चयंति त्रिदिवापवर्ग—सुखान्महामोहसखा स्वमेव ॥ ४ ॥ मायाशीलः पुरुषो । यद्यपि न करोति
किंचिदपराधं ॥ सर्प इवाऽविश्वास्यो । भवति तथाप्यात्मदोषहतः ॥ ५ ॥ शनैरुद्धरते पादं । जीवा-
नामनुकंपया ॥ पश्य लक्ष्मण पंपायां । बकः परमधार्मिकः ॥ ६ ॥ पृष्ठतः सेवयेदर्कं । जठरेण हु-
ताशनं ॥ स्वामिनं सर्वभावेन । परलोकममायया ॥ ७ ॥ तद्भोजनं यद्गुरुदत्तशेषं । सा प्राज्ञता या
न करोति पापं ॥ तत्सौहृदं यत्क्रियते परोक्षे । दंभैर्विना यः क्रियते स धर्मः ॥ ८ ॥

अथ वक्रत्वसंबंधिसूक्तानि—कार्याकार्याय कस्मैचि—त्सरलैरपि वक्रता ॥ ऋजुतां वस्तुनो वे-
त्ति । किं चक्षुः कूणनं विना ॥ १ ॥ वक्रत्वेन यथा लोके । गौरवं नार्जवे तथा ॥ द्वितीयायां श-
शी वंद्यः । पूर्णिमायां यतो न हि ॥ २ ॥ नात्यंतसरलैर्भाव्यं । गत्वा पश्य वनस्पतीन् ॥ छिद्यंते

नातीवमृदुना भाव्यं । मृदुः सर्वत्र बाध्यते ॥ निःसारां सरलास्तत्र । कुब्जास्तिष्ठंति पादपाः ॥ ३ ॥ नातिनीचैर्न चाप्युच्चै—र्भवितव्यं फलार्थिना ॥ स्तोकं नत्वा पिबन्नंभः । कुंभः प्राप्नोति पूर्णतां ॥ ५ ॥ कदलिं दृष्ट्वा । छेत्तुं को न समुद्यतः ॥ ४ ॥

अथ व्यसनसंबंधिसूक्तानि—द्यूतं च मांसं च सुरा च वेश्या । पापर्द्धिचौर्ये परदारसेवा ॥ एतानि सप्त व्यसनानि लोके । घोरातिघोरं नरकं नयंति ॥ १ ॥ द्यूताद्राज्यविनाशनं नलनृपः प्राप्तोऽथवा पांडवा । मद्यात्कृष्णनृपश्च राघवपिता पापर्द्धितो दूषितः ॥ मांसाच्छ्रेणिकभूपतिश्च नरके चौर्याद्विनष्टा न के । वेश्यातः कृतपुण्यको गतधनोऽन्यस्त्रीहृतो रावणः ॥ २ ॥ वैरवैश्वानरव्याधि—वादव्यसनलक्षणाः ॥ महानर्थाय जायंते । वकाराः पंच वर्द्धिताः ॥ ३ ॥ द्यूतं सर्वापदां धाम । द्यूतं दीव्यंति दुर्धियः ॥ द्यूतेन कुलमालिन्यं । द्यूताय श्लाघतेऽधमः ॥ ४ ॥ राज्यच्युतिं वल्लभया वियोगं । द्यूतान्नलः प्राप गतोरुभोगं ॥ प्रचंडतामंडितबाहुदंडा—स्ते पांडवाः प्रापुररण्यवासं ॥५॥ खंजकुंडादिकान् दृष्ट्वा । द्यूतव्यसनपोषकान् ॥ श्रेष्ठिसूर्मुमुचे द्यूतं । न पुनर्गुरुवाक्यतः ॥ ६ ॥

अथ वैद्यसंबंधिसूक्तानि—आयुर्वेदकृताभ्यासः । सर्वज्ञः प्रियदर्शनः ॥ आर्यशीलः प्रसन्नात्मा

। एष वैद्योऽभिधीयते ॥ १ ॥ व्याधेस्तत्त्वपरिज्ञानं । वेदनायाश्च निग्रहः ॥ एतद्वैद्यस्य वैद्यत्वं । न वैद्यो प्रभुरायुषः ॥ २ ॥ रोगं रोगनिदानं । रोगचिकित्सां च रोगमुक्तत्वं ॥ जानाति सम्यगेत—द्वैद्यो नायुःप्रदो भवति ॥ ३ ॥ कालज्ञानविदां वरो मधुरवाक् शांतः शुचिः शास्त्रवि—द्धीरो धर्मपरो निदानचतुरो रोगप्रयोगे पटुः ॥ संतुष्टः सदयोऽपमृत्युभयहन्मृत्युदक्षज्ञो गुणी । संमूढः प्रतिकारकर्मणि न यो वंद्यः स वैद्योत्तमः ॥ ४ ॥ यस्य तस्य तरोर्मूलं । येन तेन प्रघृष्य च ॥ यस्य तस्य प्रदातव्यं । यद्वा तद्वा भविष्यति ॥ ५ ॥ चितां प्रज्ज्वलितां दृष्ट्वा । वैद्यो विस्मयमागतः ॥ नाहं गतो न मे भ्राता । कस्येदं हस्तलाघवं ॥ ६ ॥ आतुरे वित्तहरणं । मृते चाशु पलायनं ॥ एतद्वैद्यस्य वैद्यत्वं । न वैद्यः प्रभुरायुषः ॥ ७ ॥ वैद्यराज नमस्तुभ्यं । यमभ्रातृसहोदर ॥ यमो हि हरति प्राणान् । द्रव्यप्राणहरो भिषग् ॥ ८ ॥ प्रछन्ना यमदूता । इव प्रभूताः कलौ न के वैद्याः ॥ शास्त्रवित्तरलबुद्धिः । सरलः परलोकभीर्विरलः ॥ ९ ॥ कुसंगिनं सद्भविरस्तपुण्यं । पद्मा दरिद्रं पद्मपत्रनेत्रा ॥ क्रुद्धं क्रमेर्ष्याविषमं मृगाक्षी । वैद्यान् कृपा नाश्रयते कदापि ॥ १० ॥ यो व्याधिभिर्ध्यायति बाध्यमानं । जनौघमादातुमना धनानि ॥ व्याधीन् विरुद्धौषधतोऽस्य वृद्धिं । नयेत्कृपा तत्र

इतीव वैद्यस्य कुतोऽस्तु वैद्ये ॥ ११ ॥ रसायनैः सार्धमिहौषधानि । तदत्र वासान्मम मंदता न ॥ प्रत्यूषसं वीक्ष्य पुरीषमूत्र—दुर्गंधसंबंधवशेन मद्दंतशल्लं । लोभ्नः पटुत्वं कलयन्न मुंचेत् ॥ १२ ॥ प्राप्नोति धर्मार्थयशांसि धन्ये ॥ सद्धर्मगंधः सुरभिस्वभावो । विजृंभते नो भिषजांगणेषु ॥ १३ ॥ निषेवते धर्मयशोनिशुंभी ॥१४॥ मी—श्चिकित्सकः संचरयंश्चिकित्सां ॥ अर्थार्थिनः केवलमर्थमेव । वद वैद्य किमौषधं ॥ १५ ॥ पौषभूमिजमनाकाशं । रसास्वादविवर्जितं ॥ सुलभं रोगनिर्नाशि । भवंतु तव शत्रवः ॥ १६ ॥ अषे मासे निराहारा । बह्वाहाराश्च कार्त्तिके ॥ चैत्र मासे गुमाहारा । षड्भिः प्रकारैः त्यंबुपानाद्विषमासनाच्च । दिवाशयाज्जागरणाच्च रात्रौ ॥ संधारणान्मूत्रपुरीषयोश्च । प्रभवंति रोगाः ॥ १७ ॥

अथ नृपसंबंधिसूक्तानि—दुष्टस्य दंडः सुजनस्य पूजा । न्यायेन कोशस्य च संप्रवृद्धिः ॥ अपक्षपातो रिपुराष्ट्ररक्षा । पंचैव यज्ञाः कथिता नृपाणां ॥ १ ॥ दुष्टानां दमनं नयानुगमनं स्वीयप्रजापालनं । नित्यं देवमहर्षिपादनमनं षड्दर्शनीमाननं ॥ औचित्याचरणं परोपकरणं त्यागं सुभोगं श्रियां । कुर्वाणो नृपतिः श्रिया निजपतिः सत्येव नो मुच्यते ॥ २ ॥ यस्तेजस्वी यशस्वी शरण·

। एष वैद्योऽभिधीयते ॥ १ ॥ व्याधेस्तत्वपरिज्ञानं । वेदनायाश्च निग्रहः ॥ एतद्वैद्यस्य वैद्यत्वं । न
वैद्यो प्रभुरायुषः ॥ २ ॥ रोगं रोगनिदानं । रोगचिकित्सां च रोगमुक्तत्वं ॥ जानाति सम्यगेत—द्वै-
द्यो नायुःप्रदो भवति ॥ ३ ॥ कालज्ञानविदां वरो मधुरवाक् शांतः शुचिः शास्त्रवि—द्धीरो धर्मप-
रो निदानचतुरो रोगप्रयोगे पटुः ॥ संतुष्टः सदयोऽपमृत्युभयहृन्मृत्युक्षणज्ञो गुणी । संमूढः प्रति-
कारकर्मणि न यो वंद्यः स वैद्योत्तमः ॥ ४ ॥ यस्य तस्य तरोर्मूलं । येन तेन प्रघृष्य च ॥ यस्य
तस्य प्रदातव्यं । यद्वा तद्वा भविष्यति ॥ ५ ॥ चितां प्रज्ज्वलितां दृष्ट्वा । वैद्यो विस्मयमागतः ॥
नाहं गतो न मे भ्राता । कस्येदं हस्तलाघवं ॥ ६ ॥ आतुरे वित्तहरणं । मृते चाशु पलायनं ॥
एतद्वैद्यस्य वैद्यत्वं । न वैद्यः प्रभुरायुषः ॥ ७ ॥ वैद्यराज नमस्तुभ्यं । यमभ्रातृसहोदर ॥ यमो हि
हरति प्राणान् । द्रव्यप्राणहरो भिषग् ॥ ८ ॥ प्रछन्ना यमदूता । इव प्रभूताः कलौ न के वैद्याः ॥
शास्त्रवित्तरलबुद्धिः । सरलः परलोकभीर्विरलः ॥ ९ ॥ कुसंगिनं सद्गविरस्तपुण्यं । पद्मा दरिद्रं प-
णपद्मनेत्रा ॥ क्रुद्धं क्रमेर्ष्याविषमं मृगाक्षी । वैद्यान् कृपा नाश्रयते कदापि ॥ १० ॥ यो व्याधिभि-
र्ध्यायति बाध्यमानं । जनौघमादातुमना धनानि ॥ व्याधीन् विरुद्धौषधतोऽस्य वृद्धिं । नयेत्कृपा तत्र

कुतोऽस्तु वैद्ये ॥ ११ ॥ रसायनैः सार्धमिहौषधानि । तदत्र वासान्मम मंदता न ॥ इतीव वैद्यस्य हृदंतशल्यं । लोभः पटुत्वं कलयन्न मुंचेत् ॥ १२ ॥ प्रत्यूषसं वीक्ष्य पुरीषमूत्र—दुर्गंधसंबंधवशेन मन्ये ॥ सद्धर्मगंधः सुरभिस्वभावो । विजृंभते नो भिषजांगणेषु ॥ १३ ॥ प्राप्नोति धर्मार्थयशांसि धर्मी—चिकित्सकः संचरयंश्चिकित्सां ॥ अर्थार्थतः केवलमर्थमेव । निषेवते धर्मयशोनिशुंभी ॥१४॥ अन्नमिजमनाकाशं । रसास्वादविवर्जितं ॥ सुलभं रोगनिर्नाशि । वद वैद्य किमौषधं ॥ १५ ॥ पौषे मासे निराहारा । बह्वाहाराश्च कार्त्तिके ॥ चैत्रे मासे गुडाहारा । भवंतु तव शत्रवः ॥ १६ ॥ अत्यंबुपानाद्विषमासनाच्च । दिवाशयाज्जागरणाच्च रात्रौ ॥ संधारणान्मूत्रपुरीषयोश्च । षड्भिः प्रकारैः प्रभवंति रोगाः ॥ १७ ॥

अथ नृपसंबंधिसूक्तानि—दुष्टस्य दंडः सुजनस्य पूजा । न्यायेन कोशस्य च संप्रवृद्धिः ॥ अपक्षपातो रिपुराष्ट्ररक्षा । पंचैव यज्ञाः कथिता नृपाणां ॥ १ ॥ दुष्टानां दमनं नयानुगमनं स्वीयप्रजापालनं । नित्यं देवमहर्षिपादनमनं षड्दर्शनीमाननं ॥ औचित्याचरणं परोपकरणं त्यागं सुभोगं श्रियां । कुर्वाणो नृपतिः श्रिया निजपतिः सत्येव नो मुच्यते ॥ २ ॥ यस्तेजस्वी यशस्वी शरण·

गतजनत्राणकर्मप्रवीणः । शास्ता शश्वत्खलानां क्षतरिपुनिवहः पालकः स्वप्रजानां ॥ दाता भोक्ता विवेकी नयपथपथिकः सुप्रतिज्ञः कृतज्ञः । प्राज्यं राज्यं स राजा प्रथयति पृथिवीमंडलेऽखंडिताज्ञः ॥ ३ ॥ नरकांतं तदा राज्यं । यदि राजा न धार्मिकः ॥ धार्मिके तु परं तत्र । सौख्यमत्र परत्र च ॥ ४ ॥ सव्वंदं जंपिज्जइ । किज्जइ जं जं मणस्स पडिहाइ ॥ अलियं च सच्च विज्जइ । पहुत्तणं तेण रमणियं ॥ ५ ॥ राज्ञि धर्मिणि धर्मिष्ठाः । पापे पापाः समे समाः ॥ राजानमनुवर्त्तंते । यथा राजा तथा प्रजाः ॥ ६ ॥ शशवेऽभ्यस्तविद्यानां । यौवने विषयैषिणां ॥ वार्द्धके मुनिवृत्तीनां । योगेनांते तनुत्यजां ॥ ७ ॥ क्षमी दाता गुणग्राही । स्वामी दुःखेन लभ्यते ॥ अनुकूलः शुचिर्दक्षः । स्वामिन् भृत्योऽपि दुर्लभः ॥ ८ ॥ सेवा गुरौ तदादिष्ट—ग्रहः पुरुषसंग्रहः ॥ शौर्यं धर्मश्च पंचामी । राज्यलक्ष्मीलतांबुदाः ॥ ९ ॥ आपन्नस्यार्त्तिहरणं । शरणागतरक्षणं ॥ त्यागः पुण्यानुरागश्च । राज्यलक्ष्मीलतांबुदाः ॥ १० ॥ न च भोगान्न च त्यागा—न्न चार्थेर्न च रोगतः ॥ प्रजासंतापनान्नूनं । क्षीयंते क्षितिपश्रियः ॥ ११ ॥ दुर्बलानामनाथानां । बालवृद्धतपस्विनां ॥ अनार्यैः परिभूतानां । सर्वेषां पार्थिवो गतिः ॥ १२ ॥ धर्मः क्षोणीभृतां शिष्ट—पालनं दुष्टनिग्रहः ॥ मात्स्यो न्यायोऽन्य-

था नूनं । भवेद्भुवनघस्मरः ॥ १३ ॥ न्यायो धर्मो दर्शनानि । तीर्थानि सुखसंपदः ॥ यस्याधारे प्रवर्त्तंते । स जीयात् पृथिवीपतिः ॥ १४ ॥ पार्थिवानामलंकारः । प्रजानामेव पालनं ॥ किरीटकटकोष्णीषै—र्भूष्यंते केवलं नटाः ॥ १५ ॥ शठदमनमशठपालन—माश्रितभरण च राजचिह्नानि ॥ अभिषेकपट्टबंधौ । वालव्यजनं व्रणस्यापि ॥ १६ ॥ प्रजानां धर्मषड्भागो । राज्ञो भवति रक्षितुः ॥ अधर्मस्यापि षड्भागो । जायते यो न रक्षति ॥ १७ ॥ लोकेभ्यः करमादाना । चौरेभ्यस्त्वानऽरक्षिता ॥ तदा यैर्लिप्यते राजा । पातकैरिति हि स्मृतिः ॥ १८ ॥ अकरे करकर्त्ता च । गोसहस्रवधाघभृत् ॥ प्रवृत्तकरविच्छेदे । गवां कोटिफलं भवेत ॥ १९ ॥ कार्यं शत्रावपि प्राण—त्राणं शरणमागते ॥ निजपृष्ठानुगं ध्वांतं । प्रदीपः किं न रक्षति ॥ २० ॥ जलधेरपि कल्लोला—श्चापल्यानि कपेरपि ॥ शक्यंते यत्नतो रोद्धुं । न पुनः प्रभुचेतसः ॥ २१ ॥ मास्म संधिं विजानंतु । मास्म जानंतु विग्रहं ॥ आख्यातं यदि शृण्वंति । भूपास्ते नैव पंडिताः ॥ २२ ॥ षट्कर्णो भिद्यते मंत्र—श्चतुःकर्णश्च धार्यते ॥ द्विकर्णस्य तु मंत्रस्य । ब्रह्माप्यंतं न गच्छति ॥ २३ ॥ स्वच्छंदं छंदवृत्त्या ये । रंजयंति महीपतिं ॥ ते पातयंति सर्पींषि । कुवैद्या इव सज्वरं ॥ २४ ॥ सर्वत्र सुलभा राजन् । स-

ततं प्रियवादिनः ॥ अप्रियस्य तु पथ्यस्य । वक्ता श्रोता च दुर्लभः ॥ २५ ॥ यज्ञे हता ये पशवो म्रियंते । त एव जूपा इति वेदवाचः ॥ तेनैव संस्कारवशेन तेषां । गतो विवेकः पृथिवीपतीनां ॥ ॥ २६ ॥ अविज्ञातविशेषस्य । सर्वतेजोऽपहारिणः ॥ स्वामिनो निर्विवेकस्य । तमसश्च किमंतरं ॥ ॥ २७ ॥ कामः क्रोधस्तथा हर्षो । माया लोभो मदस्तथा ॥ षड्वर्गमुत्सृजेदेनं । तत्र त्यक्ते सुखी नृपः ॥ २८ ॥ आज्ञाभंगो नरेंद्राणां । वृत्तिछेदो द्विजन्मनां ॥ पृथक् शय्या च नारीणा—मशस्त्रो वध उच्यते ॥ २९ ॥ रिक्तपाणिर्न पश्येत । राजानं भिषजं गुरुं ॥ नैमित्तिकं स्वप्नविदं । फलेन फलमादिशेत ॥ ३० ॥ गंतव्यं राजकुले । द्रष्टव्या राजपूजिता लोकाः ॥ यद्यपि न भवंत्यर्था—स्तथाप्यनर्था विलीयंते ॥ ३१ ॥ घटवत्परिपूर्णोऽपि । विदग्धो रागवानपि ॥ गृहीतुं शक्यते केन । पार्थिवः कर्णदुर्बलः ॥ ३२ ॥

अथ मंत्रिसंबंधिसूक्तानि—षट्कर्णो भिद्यते मंत्र—श्चतुःकर्णस्तु धार्यते ॥ द्विकर्णस्य तु मंत्रस्य । ब्रह्माप्यंतं न गछति ॥ १ ॥ आतुरे व्यसने प्राप्ते । दुर्भिक्षे शत्रुविग्रहे ॥ राजद्वारे स्मशाने च । यस्तिष्ठति स बांधवः ॥ २ ॥ अनिष्टे दुर्मतिं दद्या—त्तयासौ नरकं व्रजेत ॥ तस्मात्सर्वप्रयत्नेन ।

इष्टं धर्मे नियोजयेत् ॥ ३ ॥ भावस्निग्धैरुपकृतमिति द्वेष्यतामेति किंचित । शाठ्यादन्यैः परकृतमपि प्रीतिमेवोपयाति ॥ दुर्ग्राह्यत्वान्नृपतिमनसां नैकभावाश्रयाणां । सेवाधर्मः परकृतमपि प्रीतिमेवोपयाति ॥ ४ ॥ नरपतिहितकर्त्ता द्वेष्यतामेति लोके । जनपदहितकर्त्ता त्यज्यते पार्थिवेन ॥ इति महति विरोधे वर्त्तमाने समाने । नृपतिजनपदानां दुर्लभः कार्यकर्त्ता ॥५॥ अहो अहीनामपि खेलनेभ्यो । दुःखानि दूरं नृपसेवनानि ॥ एकोऽहिना मृत्युमुपैति दष्टः। सपुत्रपौत्रस्तु नृपेण दष्टः ॥६॥ अश्वतरीणां गर्भो । दुर्जनमैत्री नियोगिनां लक्ष्मीः ॥ स्थूलत्वं श्वयथुभवं । विना विकारेण न भवंति ॥ ७ ॥ नास्ये सर्पस्य रुधिरं । न च दृष्टं कलेवरे ॥ न प्रजासु न भूपाले । धनं ह्यधिकारिणि ॥ ८ ॥ प्रोक्तः प्रत्युत्तरं नाह । विरुद्धं प्रभुणा च यः ॥ न समीपे हसत्युच्चैः । स भवेद्राजवल्लभः ॥ ९ ॥ राजमातरि देव्यां च । कुमारे मुख्यमंत्रिणि ॥ पुरोहिते प्रतीहारे । वर्त्तव्यं राजवत्सदा ॥ १० ॥ वरं वनं वरं भिक्षा । दुर्भरं मरणं वरं ॥ वरं व्याधिर्मनुष्याणां । नाधिकारेण संपदः ॥ ११ ॥ राहुः सुधा प्रवृद्धः । शिरसि विलूनेऽपि शशिनमनुसरति ॥ विदितविपदोऽपि कष्टं । लब्धास्वादा निवर्त्तते ॥ १२ ॥ अधिकारात्त्रिभिर्मासैः—महापापात्त्रिभिर्दिनैः ॥ शीघ्रं नरकवांछा

चे—द्दिनमेकं पुरोहितः ॥ १४ ॥ अहो अपूर्वं चरितं । योगिनां च नियोगिनां ॥ क्षणात्परं पदं प्राप्य । पश्यंत्यात्ममयं जगत ॥ १५ ॥ नृपव्यापारपापेभ्यः । स्वीकृतं सुकृतं न यैः ॥ तान् धूलिधावकेभ्योऽपि । मन्ये दुष्टतरान्नरान् ॥ १६ ॥ प्राप्य चलानधिकारान् । शत्रौ मित्रे च बंधुवर्गे च ॥ नापकृतं नोपकृतं । न सत्कृतं किं कृतं तेन ॥ १७ ॥ प्राज्ञे नियोजितेऽमात्ये । महीशस्य गुणत्रयं ॥ यशः स्वर्गनिवासश्च । पुष्कलश्च धनागमः ॥ १८ ॥ कुलशीलगुणोपेतं । सत्यधर्मपरायणं ॥ रूपिणं सुप्रसन्नं च । राजाध्यक्षं तु कारयेत् ॥ १९ ॥ शीलवृत्तिधरो धीरः । सर्वरत्नपरीक्षकः ॥ शुचिरव्यभिचारी च । भांडाध्यक्षोऽभिधीयते ॥ २० ॥ इंगिताकारतत्त्वज्ञः । प्रियवाक्प्रियदर्शनः ॥ सकृदुक्तग्रही दक्षः । प्रतीहारः प्रशस्यते ॥ २१ ॥ चित्तज्ञः शीलसंपन्नो । वाग्मी दक्षः प्रियंवदः ॥ यथोक्तवादी स्मृतिमान् । दूतः स्यात्सप्तभिर्गुणैः ॥ २२ ॥ वेदसिद्धांततत्त्वज्ञो । जपहोमपरायणः ॥ आशीर्वादपरो नित्य—मेष राज्ञः पुरोहितः ॥ २३ ॥ अरैः संधार्यते नाभि—र्नाभौ चाराः प्रतिष्टिताः ॥ स्वामिसेवकयोरेवं । वृत्तिश्चक्रं प्रवर्त्तते ॥ २४ ॥

अथ सेवकसंबंधिसूक्तानि—सेवा श्ववृत्तिराख्याता । न तैः सम्यगुदाहृतं ॥ श्वा करोति हि पु-

चे—द्दिनमेकं पुरोहितः ॥ १४ ॥ अहो अपूर्वं चरितं । योगिनां च नियोगिनां ॥ क्षणात्परं पदं प्राप्य । पश्यंत्यात्ममयं जगत ॥ १५ ॥ नृपव्यापारपापेभ्यः । स्वीकृतं सुकृतं न यैः ॥ तान् धूलिधावकेभ्योऽपि । मन्ये दुष्टतरान्नरान् ॥ १६ ॥ प्राप्य चलानधिकारान् । शत्रौ मित्रे च बंधुवर्गे च ॥ नापकृतं नोपकृतं । न सत्कृतं किं कृतं तेन ॥ १७ ॥ प्राज्ञे नियोजितेऽमात्ये । महीशस्य गुणत्रयं ॥ यशः स्वर्गनिवासश्च । पुष्कलश्च धनागमः ॥ १८ ॥ कुलशीलगुणोपेतं । सत्यधर्मपरायणं ॥ रूपिणं सुप्रसन्नं च । राजाध्यक्षं तु कारयेत् ॥ १९ ॥ शीलवृत्तिधरो धीरः । सर्वरत्नपरीक्षकः ॥ शुचिरव्यभिचारी च । भांडाध्यक्षोऽभिधीयते ॥ २० ॥ इंगिताकारतत्वज्ञः । प्रियवाक्प्रियदर्शनः ॥ सकृदुक्तग्रही दक्षः । प्रतीहारः प्रशस्यते ॥ २१ ॥ चित्तज्ञः शीलसंपन्नो । वाग्मी दक्षः प्रियंवदः ॥ यथोक्तवादी स्मृतिमान् । दूतः स्यात्सप्तभिर्गुणैः ॥ २२ ॥ वेदसिद्धांततत्वज्ञो । जपहोमपरायणः ॥ आशीर्वादपरो नित्य—मेष राज्ञः पुरोहितः ॥ २३ ॥ अरैः संधार्यते नाभि—र्नाभौ चाराः प्रतिष्ठिताः ॥ स्वामिसेवकयोरेवं । वृत्तिश्चक्रं प्रवर्त्तते ॥ २४ ॥

अथ सेवकसंबंधिसूक्तानि—सेवा श्ववृत्तिराख्याता । न तैः सम्यगुदाहृतं ॥ श्वा करोति हि पु-

ष्ठेन । मूर्ध्ना चाटूनि सेवकः ॥ १ ॥ मौनान्मूर्खः प्रवचनपटुर्वातुलः स्वल्पको वा । क्षांत्या भीरुर्य-
दि न सहते प्रायशो नाभिजातः ॥ धृष्टः पार्श्वे भवति यदि वा दूरतोऽप्यप्रगल्भः । सेवाधर्मः परम-
गहनो योगिनामप्यगम्यः ॥ २ ॥ शूली जातः कदशनवशाद्भैक्ष्ययोगात्कपाली । वस्त्राभावाद्दिगतव-
सनः स्नानदौःस्थ्याज्जटावान् ॥ इत्थं सर्वं त्वदनुगमनादीश्वरत्वं मयाप्तं । अद्यापि त्वं मम नरपते ना-
र्धचंद्रं ददासि ॥ ३ ॥ सेवया धनमिच्छद्भिः । सेवकैः पश्य यत्कृतं ॥ स्वातंत्र्यं यच्छरीरस्य । मूढैस्तद-
पि हारितं ॥ ४ ॥ हीनमत्ति पुरो याति । निशि जागर्ति चाटुमान् ॥ द्वारे तिष्ठति दीनात्मा । धि-
क्कष्टं श्वेव सेवकः ॥ ५ ॥ शिरसा धार्यमाणोऽपि । सोमः सोमेन शंभुना ॥ तथापि कृशतां धत्ते ।
कष्टं खलु पराश्रयः ॥ ६ ॥ स्तुत्यार्थं तुल्यसामर्थ्यं । मर्मज्ञं व्यवसायिनं ॥ अर्धराज्यहरं भृत्यं । यो
न हन्यात्स हन्यते ॥ ७ ॥

अथ पुत्रसंबंधिसूक्तानि—उत्पतन्निपतन् रिंखन् । हसंल्लालावलीर्वमन् ॥ कस्याश्चिदेव धन्या-
याः । क्रोडमायति नंदनः ॥ १ ॥ शर्वरीदीपकश्चंद्रः । प्रभाते रविदीपकः ॥ त्रैलोक्यदीपको धर्मः ।
सुपुत्रः कुलदीपकः ॥ २ ॥ एकेन वनवृक्षेण । पुष्पितेन सुगंधिना ॥ वासितं तद्वनं सर्वं । सुपुत्रेण

कुलं यथा ॥ ३ ॥ एकेनापि हि शूरेण । पादाक्रांतं क्ष्मातलं ॥ क्रियते भास्करेणैव । स्फारस्फुरिततेजसा ॥ ४ ॥ एकोऽपि यः सकलकार्यविधौ समर्थः । सत्वाधिको भवति किं बहुभिः प्रसूतैः ॥ चंद्रः प्रकाशयति दिङ्मुखमंमलानि । तारागणः समुदितोऽप्यसमर्थ एव ॥ ५ ॥ योऽवश्यं पितुराचारः । पुत्रस्तमनुवर्त्तते ॥ न हि केतकिवृक्षस्य । भवत्यामलकीफलं ॥ ६ ॥ स एव पुत्रः पुत्रो यः । कुलमेव न केवलं ॥ पितुः कीर्तिं च धर्मं च । गुणांश्चापि विवर्धयेत् ॥ ७ ॥ परिवर्त्तिनि संसारे । मृतः को वा न जायते ॥ स जातो येन जातेन । याति वंशः समुन्नतिं ॥ ८ ॥ लालयेत्पंच वर्षाणि । दश वर्षाणि ताडयेत ॥ प्राप्ते च षोडशे वर्षे । पुत्रं मित्रमिवाचरेत् ॥ ९ ॥ लालनाद्बहवो दोषा—स्ताडनाद्बहवो गुणाः ॥ तस्मात्पुत्रं च शिष्यं च । ताडयेन्न च लालयेत ॥ १० ॥ माता शत्रुः पिता वैरी । बालो येन न पाठितः ॥ न शोभते सभामध्ये । हंसमध्ये बको यथा ॥११॥ पितृभिस्ताडितः पुत्रः । शिष्यस्तु गुरुशिक्षितः ॥ घनाहतं सुवर्णं च । जायते जनमंडनं ॥ १२ ॥ अजातमृतमूर्खेभ्यो । मृताऽजातौ वरं सुतौ ॥ यतस्तौ स्वल्पदुःखाय । यावज्जीवं जडः पुनः ॥१३॥ किं तया क्रियते धेन्वा । या न सूते न दुग्धदा ॥ कोऽर्थः पुत्रेण जातेन । यो न विद्वान्न भक्ति-

मान् ॥ १४ ॥ शृण्वंति पितुरादेशं । ते केऽपि विरलाः सुताः ॥ आदिष्टं ये तु कुर्वंति । संति ते
यदि पंचषाः ॥ १५ ॥ ते पुत्रा ये पितुर्भक्ताः । स पिता यस्तु पोषकः ॥ तन्मित्रं यत्र विश्वासः ।
सा भार्या यत्र निर्वृतिः ॥ १६ ॥ जनेता चोपनेता च । यस्तु विद्यां प्रयछति ॥ अन्नदः प्राणदश्चे-
ति । पिता पंचविधः स्मृतः ॥ १७ ॥ राज्ञः पत्नी गुरोः पत्नी । मित्रपत्नी तथैव च ॥ पत्नीमाता स्व-
माता च । पंचैता मातरः स्मृताः ॥ १८ ॥ उपाध्याया दशाचार्या । आचार्याणां शतं पिता ॥ स-
हस्रं तु पितुर्माता । गौरवेणातिरिच्यते ॥ १९ ॥ आस्तन्यपानाज्जननी पशूना—मादारलाभावधि
चाधमानां ॥ आगेहकर्मावधि मध्यमाना—माजीवितात्तीर्थमिवोत्तमानां ॥ २० ॥ माता पशूनां सु-
तसत्तयैव । धनार्जनैस्तुष्यति मध्यमानां ॥ वीरावदातैः पुनरुत्तमानां । लोकोत्तमानां चरितैः पवित्रैः
॥ २१ ॥ उपकर्त्ता कलाचार्यो । भर्ता माता पिता गुरुः ॥ नैते धिक्कारमर्हंति । गर्हितानां शतैरपि ॥

अथ पुत्रीसंबंधिसूक्तानि—जातेति पूर्वं महती हि चिंता । कस्य प्रदेयेति ततः प्रवृद्धा ॥ द-
त्ता सुखं स्थास्यति वा न वेति । कन्यापितृत्वं किल हंत कष्टं ॥ १ ॥ जम्मंतीए सोगो । वढ्ढंतीए
य वढ्ढए चिंता ॥ परिणीयाए दंमो । जुवइपिआ दुक्खिओ निच्चं ॥ २ ॥ निअघरसोसा परगेह—

मंम्मणी कलिकलंककुलभवणं ॥ जेहिं न जाया धूया । ते सुहिआ जीवलोअंमि ॥ ३ ॥ कुलं च शीलं च सनाथता च । विद्या च वित्तं च वपुर्वयश्च ॥ वरे गुणाः सप्त विलोकनीया—स्ततः परं भाग्यवशाच्च कन्याः ॥ ४ ॥ मूर्खनिर्धनदूरस्थ—शूरमोक्षाभिलाषिणां ॥ त्रिगुणाधिकवर्षाणां । चापि देया न कन्यका ॥ ५ ॥ अंतःस्नेहादशनवसनस्नानतांबूलवेषैः । संप्रीणंती दुहितरमिव प्रेक्षते या वधूटीं ॥ भक्तिग्राह्या मधुरवचना पुत्रिशिक्षासुदक्षा । श्वश्रूरेवं गुणगणयुता प्राप्यते पुण्ययोगात ॥ ७ ॥ निर्व्याजा दयितादौ । भक्ता श्वश्रूषु वत्सला स्वजने ॥ स्निग्धा च बंधुवर्गे । विकसितवदना कुलवधूटी ॥ ८ ॥ शय्योत्पाटनगेहमार्जनपयःपावित्र्यचुल्लीक्रिया—स्थालीक्षालनधान्यपेषणकलागोदोहतन्मंथनैः ॥ पाकैस्तत्परिवेषणैः समुचितैः पात्रादिशौचक्रिया—श्वश्रूभर्तृननांदृदेवृविनयैः कष्टं वधूर्जीवति ॥ ९ ॥ मितं ददाति हि पिता । मितं भ्राता मितं सुतः ॥ अमितस्य हि दातारं । भर्तारं का न पूजयेत् ॥ १० ॥ चंद्रचंदनकर्पूर—गोस्तनीशर्करादयः ॥ एतेषां सारमुध्धृत्य । जनन्या जनितं मनः ॥ ११ ॥ तीर्थानामष्टषष्टिश्च । विख्याता धरणीतले ॥ तेषां भागीरथी श्रेष्ठा । ततोऽपि जननी मता ॥ १२ ॥ पतिता गुरवस्त्याज्या । माता न तु कथंचन ॥ गर्भधारणपोषाभ्यां ।

यतो माता गरीयसी ॥ १३ ॥ पतिव्रता पतिप्राणा । पत्युः प्रियहिते रता ॥ यस्य स्यादीदृशी भार्या । स धन्यः पुरुषो भुवि ॥ १४ ॥ पंगुमंधं च कुब्जं च । कुष्टांगं व्याधिपीडितं ॥ आपत्सु च गतं नाथं । न त्यजेत्सा महासती ॥ १५ ॥ क्रीडां शरीरसंस्कारं । समाजोत्सवदर्शनं ॥ हास्यं परगृहे यानं । त्यजेत्प्रोषितभर्तृका ॥ १६ ॥ द्वारोपवेशनं नित्यं । गवाक्षावेक्षणं तथा ॥ असत्प्रलापो हास्यं च । दूषणं कुलयोषितां ॥ १७ ॥ लज्जा दया दमो धैर्यं । पुरुषालापवर्जनं ॥ एकाकित्वपरित्यागो । नारीणां शीलरक्षणं ॥ १८ ॥ पिता रक्षति कौमार्ये । भर्त्ता रक्षति यौवने ॥ पुत्राश्च स्थाविरे भावे । न स्त्री स्वातंत्र्यमर्हति ॥ १९ ॥ नदीतटेषु ये वृक्षा । या च नारी निराश्रया ॥ मंत्रहीनाश्च राजानो । न भवंति चिरायुषः ॥ २० ॥ वरं कारागृहक्षिप्तो । वरं देशांतरभ्रमी ॥ वरं नरकसंचारी । न द्विभार्यः पुनः पुमान् ॥ २१ ॥ अभूषितो गृहाद्याति । नाप्नोत्यंबुघटामपि ॥ अक्षालितपदः शेते । भार्याद्वयचरो नरः ॥ २२ ॥ एका भार्या त्रयः पुत्रा । देहले दश धेनवः ॥ ग्रामे वासः पुरासन्ने । स्वर्गादपि विशिष्यते ॥ २३ ॥ यस्य पुत्रा वशे भक्ता । भार्याछंदानुवर्त्तिनी ॥ विभवेष्वपि संतोषः । स्वर्गस्तस्य इहैव हि ॥ २४ ॥ वरं रंककलत्रत्वं । वरं वैधव्यवेदना ॥ वरं नरकवासो वा ।

मा सपत्न्याः पराभवः ॥ २५ ॥ सपत्नीनां शते वासः । पुत्रस्यापि न दर्शनं ॥ न्याय्ये कालेऽपि न स्वेच्छा । ही जन्म नृपयोषितां ॥ २६ ॥ एते शतं वयं पंच । यावद्वैरं परस्परं ॥ परैस्तु परिभूतानां । वयं पंचोत्तरं शतं ॥ २७ ॥ यं दृष्ट्वा वर्धते स्नेहः । क्रोधश्च परिहीयते ॥ स विज्ञेयो मनुष्येण । एष मे पूर्वबांधवः ॥ २८ ॥ यं दृष्ट्वा वर्द्धते क्रोधः । स्नेहश्च परिहीयते ॥ स विज्ञेयो मनुष्येण । एष मे पूर्वशत्रुकः ॥ ३० ॥

अथ शौचसंबंधिसूक्तानि—देवयात्राविवाहेषु । संभ्रमे राजदर्शने ॥ संग्रामे हट्टमार्गे च । स्पृष्टास्पृष्टिर्न दुष्यति ॥ १ ॥ उत्सृष्टं शिवनिर्माल्यं । वमनं मृतचर्मकं ॥ काकविष्टासमुत्पन्नं । पंच पावित्र्यभाजनं ॥ २ ॥

अथ स्वरुचिसंबंधिसूक्तानि—जो जाणइ जस्स गुणे । लोए सो तस्स आयरं कुणइ ॥ फलिए दक्खारामे । काउ लिंबोहलिं चुणइ ॥ १ ॥ यदेव रोचते यस्य । तदेव तस्य सुंदरं ॥ श्रीखंडे न तथा प्रीति—र्यथा रुडस्य भस्मनि ॥ २ ॥ रुद्रो नग्नः कविः काणः । शनिः पंगुः शशी क्षयी ॥ रामो दुःखी बलिर्भूते । न दुःखं पंचभिः सह ॥ ३ ॥ सर्वथा स्वहितमाचरणीयं । किं कु·

रिष्यति जनो बहुजल्पः ॥ विद्यते स न हि कश्चिदुपायः । सर्वलोकपरितोषकरो यः ॥ ४ ॥

अथ प्रकीर्णसूक्तानि—ग्रामो वृत्यावृतः स्यान्नगरमुरुचतुर्गोपुरोद्भासिशोभं । खेटं नद्यद्रिवेष्टं परिवृतमभितः कर्बटं पर्वतेन ॥ ग्रामैर्युक्तं मडंबं रुचिरदशशतैः पत्तनं रत्नयोनि—र्द्रोणाख्यं सिंधुवेलावलयितमथ संबाधनं चाद्रिशृंगे ॥ १ ॥ मतिरप्राप्तविषया । बुद्धिः संप्राप्तदर्शनी ॥ अतीते च स्मृतिर्ज्ञेया । प्रज्ञा कालत्रये पुनः ॥ २ ॥ हावो मुखविकारः स्या—द्भावश्चित्तसमुद्भवः ॥ विलासो नेत्रजो ज्ञेयो । विभ्रमो भ्रूसमुद्भवः ॥ ३ ॥

अथान्योक्तिसंबंधिसूक्तानि—अनवस्थितचित्तानां । प्रसादोऽपि भयंकरः ॥ सर्पिण्यत्ति किल स्नेहा—त्स्वापत्यानि न वैरतः ॥ १ ॥ यद्यपि स्वभावेन । दर्शयत्यंबुधिर्मणीन् ॥ तथापि जानुदघ्नोऽय—मिति चेतसि मा कृथाः ॥ २ ॥ टंकच्छेदे न मे दुःखं । न दाघे न च घर्षणे ॥ एतदेव महद्दुःखं । गुंजया सह तोलनं ॥ ३ ॥ स्थानं सर्वस्य दातव्य—मेकवारापराधिनः ॥ द्वितीयपतने दंता । वक्रेणापि विवर्जिताः ॥ ४ ॥ न विना मधुमासेन । अंतरं पिककाकयोः ॥ वसंते च पुनः प्राप्ते । काकः काकः पिकः पिकः ॥ ५ ॥ मणिर्लुठतु पादाग्रे । काचः शिरसि धार्यतां ॥ परीक्षक-

करग्रासः । काचः काचो मणिर्मणिः ॥ ५ ॥ वायुना यत्र नीयंते । कुंजराः षष्टिहायनाः ॥ गावस्तत्र न गण्यंते । मशकस्य च का कथा ॥ ६ ॥ यवागूजरणे जाड्यं । मोदकानां तु का कथा ॥ वचनेऽपि दरिद्रत्वं । धनाशा तत्र कीदृशी ॥ ७ ॥ मृगारिं वा मृगेंद्रं वा । हरिं व्याहरतां जनः ॥ तस्य द्वयमपि क्रीडा । क्रीडादलितदंतिनः ॥ ८ ॥ यदि नाम सर्षपकणं । शक्नोति करी करेण नादातुं ॥ इयतैव तस्य ननु किं । पराक्रमग्लानिरिह जाता ॥ ९ ॥ संकुचंति कलौ तुच्छाः । प्रसरंति महाशयाः ॥ ग्रीष्मे सरांसि शुष्यंति । कामं वारिधिरेधते ॥ १० ॥ स्त्रीणामपि वचः कात्रे—नुकूलं मन्यते बुधैः ॥ दुर्गा वामगता किं न । शस्यते मार्गगामिभिः ॥ ११ ॥ यद्यपि न भवति हानिः । परकीयां चरति रासभे द्राक्षां ॥ असमंजसं च दृष्ट्वा । तथापि नः खिद्यते चेतः ॥ १२ ॥ अतिपरिचयादवज्ञा । भवति विशिष्टेऽपि वस्तुनि प्रायः ॥ लोकः प्रयागवासी । कूपे स्नानं समाचरति ॥ १३ ॥ अपूर्वः खंमवृत्तोऽपि । द्वितीयेंदुरिवार्च्यते ॥ सपूर्वः पूर्णवृत्तोऽपि । पूर्णेंदुरिव नार्च्यते ॥ १४ ॥ अपसरणमेव युक्तं । मौनं वा तव राजहंसस्य ॥ कटु रटति निकटवर्ती । वाचालष्टिट्टिभो यत्र ॥ १५ ॥ हे बालकोकिल करीरमरुस्थलीषु । किं दुर्विदग्ध मधुरध्वनिमातनोषि ॥ अ-

न्यः स कोऽपि सहकारतरुप्रदेशो । यस्मिन् जयंति तव विभ्रमभाषितानि ॥ १६ ॥ व्यलीकमस्तु मा वास्तु । लोकोक्तिस्तु सुदुस्सहा ॥ भाजनं भज्यतां मा वा । रणत्कारस्तु मारयेत् ॥ १७ ॥ अकार्यं तथ्ये वा भवति वितथे वा किमपरं । प्रतीतो लोकेऽस्मिन् हरति महिमानं जनरवः ॥ तुलोत्तीर्ण· स्यापि प्रकटनिहताशेषतमसो । रवेस्तादृक्तेजो न हि भवति कन्यां गत इति ॥ १८ ॥ कज्जंमि स· मावडिए । अणुअत्तह दुज्जणं पयत्तेणं ॥ कीस न पिज्जइ निंबो । सरीरसंरक्खणठाए ॥ १९ ॥ रेवा हा मग्गेण वह । मत लनमूलि पलास ॥ कल्ले जलहरु थक्कसी । कवण पराइ आस ॥२०॥ रे कारिल्लि हयासे । चडिआ निंबंमि पायवे पवरे ॥ अहवा तुम्ह न दोसो । सरिसा सरिसेहिं र· ज्जंति ॥ २१ ॥ अन्नो कोवि सहावो । समुद्द गंभीरयाइभावस्स ॥ अमयं विसं हुआसो । समयं चिअ जेण धरिआइं ॥ २२ ॥ जइ मंडलेण भसिअं । हत्थिं दट्ठूण रायमग्गंमि ॥ ता किं गयस्स जुत्तं । सुणहेण समं कलिं काउं ॥ २३ ॥ यदि काको गजेंद्रस्य । विष्टां कुर्वीत मूर्धनि ॥ कुला· नुरूपं तत्तस्य । यो गजो गज एव सः ॥ २४ ॥ अस्मान् विचित्रवपुषश्चिरपृष्ठिलग्नान् । कस्माद्विमु· ञ्चसि विभो यदि वा विमुंच ॥ हाहेति केकिवर हानिरियं तवैव । भूपालमूर्धनि पुनर्भविता स्थिति·

नैः ॥ २५ ॥ शैत्यं नाम गुणस्तवैव तदनु स्वाभाविकी स्वच्छता । किं ब्रूमः शुचितां व्रजंति सुधियः
स्पर्शेन यस्यापरे ॥ किं चातःपरमस्ति ते स्तुतिपदं यज्जीवितं देहिनां । त्वं चेन्नीचपथेन गच्छसि प-
यः कस्त्वां निरोध्धुं क्षमः ॥ २६ ॥ अयुक्तो गुणयुक्तस्य । धनुषः प्राणिनां वधः ॥ युक्त एव हि ख-
ङ्गस्य । यस्योत्पत्तिः कुशीलता ॥ २७ ॥ रयणायरस्स न हु होइ । तुच्छिमा निग्गएहिं रयणेहिं ॥
तहवि हु चंदसरिच्छा । विरला रयणायरे रयणा ॥ २८ ॥ वने रतिर्विरक्तानां । रक्तानां च जने र-
तिः ॥ अनवस्थितचित्तानां । न वने न जने रतिः ॥ २९ ॥ प्रातः पुष्णो भवति महिमा नोपता-
पाय यस्मा—त्कालेनास्तं क इह न गताः के न यास्यंति चान्ये ॥ एतावत्तु व्यथयति यदा लोक-
बाह्यैस्तमोभि—स्तस्मिन्नेव प्रकृतिमलिनैर्व्योम्नि लब्धोऽवकाशः ॥ ३० ॥ तां चंदा तां चांदणी । जां
नवि उगे सूर ॥ तां ढक्कां तां म्बक्कुली । जाम न वज्जइ तूर ॥ ३२ ॥ असारस्य पदार्थस्य । प्रा-
येणाडंबरो महान् ॥ न हि स्वर्णे ध्वनिस्तादृक् । यादृक्कांस्येऽभिवीक्ष्यते ॥ ३३ ॥ न नव्यं पुस्तकं
श्रेष्ठं । न चैतल्लोकरंजकं ॥ न तस्य जल्पतो लोकैः । प्रमाणीक्रियते वचः ॥ ३४ ॥ नादरं कुरुते
कोऽपि । निर्वेषस्य जगतत्रये ॥ आडंबरेण पूज्यंते । सर्वत्र नगुणा जनैः ॥ ३५ ॥

अथ विविधाधिकारसूक्तानि—अपथ्यसेवको रोगी । सद्वेषो हितवादिषु ॥ नीरोगोऽप्यौषधप्राशी । मुमूर्षुर्नात्र संशयः ॥ १ ॥ चारुप्रियोऽन्यदारार्थी । सिद्धेऽन्ने गमनादिकृत् ॥ निःस्वो गोष्ठीरतोऽत्यर्थं । निर्बुद्धीनां शिरोमणिः ॥ २ ॥ विद्वानस्मीति वाचालः । सोद्यमोऽस्तीति चंचलः ॥ शूरोऽस्मीति च निःशंकः । स सभायां न राजते ॥ ३ ॥ क्लिष्टोक्त्यापि कविंमन्यः । स्वश्लाघी प्राज्ञपर्षदि ॥ व्याचष्टे चाश्रुतं शास्त्रं । यस्तस्य मतये नमः ॥ ४ ॥ उद्वेजकोऽतिचाटूक्त्या । मर्मस्पर्शी हसन्नपि ॥ निर्गुणो गुणनिंदाकृत । क्रकचप्रतिमः पुमान् ॥ ५ ॥ दूतो वाचिकविस्मारी । गीतकारी खरस्वरः ॥ गृहाश्रमरतो योगी । महोद्वेगकरास्त्रयः ॥ ६ ॥ वृश्चिके मांत्रिका भग्नाः । क्रये भग्ना निषग्वराः ॥ स्वभावे तार्किका भग्नाः । स्त्रीषु भग्नं जगतत्रयं ॥ ७ ॥ अंके स्थितापि युवतिः परिरक्षणीया । संसेवितोऽपि नृपतिः परिशंकनीयः ॥ शास्त्रं सुनिश्चितधिया परिचिंतनीयं । शास्त्रे नृपे च युवतौ च कुतो वशत्वं ॥ ८ ॥ उपाध्यायश्च वैद्यश्च । प्रतिभूर्भुक्तनायिका ॥ सूतिका दूतिका चैव । सिद्धे कार्ये तृणोपमाः ॥ ९ ॥ वैद्यो गुरुश्च मंत्री च । यस्य राज्ञः प्रियंवदाः ॥ शरीरधर्मकोशेभ्यः । क्षिप्रं स परिहीयते ॥ १० ॥ उत्तमं प्रणिपातेन । शूरं भेदे नियोजयेत ॥ नीचमल्पप्रदानेन ।

समशक्तिं पराक्रमैः ॥ ११ ॥ अनुचितकर्मारंभः । स्वजनविरोधो बलीयसा स्पर्धा ॥ प्रमदाजनविश्वासो । मृत्युद्वाराणि चत्वारि ॥ १३ ॥ अविनीतो भृत्यजनो । नृपतिरदाता शठानि मित्राणि ॥ अविनयवती च भार्या । मस्तकशूलानि चत्वारि ॥ १४ ॥ वैद्यस्तर्कविहीनो । निर्लज्जा कुलवधूर्व्रतीपीनः ॥ कटके च प्राघूर्णको । मस्तकशूलानि चत्वारि ॥ १५ ॥ शीतमन्नं सुताजन्म । दुर्वातैर्दूषिता कृषिः ॥ स्वजनैः सह मालिन्यं । स्वादहीनं चतुष्टयं ॥ १६ ॥ जामाता कृष्णसर्पश्च । दुर्जनः पावकस्तथा ॥ उपकारैर्न गृह्यंते । पंचमो भागिनेयकः ॥ १७ ॥ तृणं ब्रह्मविदः स्वर्ग—स्तृणं शूरस्य जीवितं ॥ विरक्तस्य तृणं नारी । निरीहस्य तृणं नृपः ॥ १८ ॥ अजीर्णं तपसः क्रोधो । ज्ञानाजीर्णमहंकृतिः ॥ परतप्तिः क्रियाऽजीर्ण—मन्नाजीर्णं विसूचिका ॥ २० ॥ उद्यमे नास्ति दारिद्र्यं । जपतो नास्ति पातकं ॥ मौनेन कलहो नास्ति । नास्ति जागरतो भयं ॥ २१ ॥ बलं मूर्खस्य मौनत्वं । तस्करस्यानृतं बलं ॥ दुर्बलस्य बलं राजा । बालस्य रुदितं बलं ॥ २२ ॥ शकटं पंचहस्तेन । दशहस्तेन वाजिनं ॥ हस्तिनं शतहस्तेन । देशत्यागेन दुर्जनं ॥ २३ ॥ आतुरे व्यसने प्राप्ते । दुर्भिक्षे शत्रुविग्रहे ॥ राजद्वारे स्मशाने च । यस्तिष्ठति स बांधवः ॥ २४ ॥ आचारः कुलमाख्याति ।

वपुराख्याति भोजनं ॥ संभ्रमः स्नेहमाख्याति । देशमाख्याति भाषितं ॥ २५ ॥ ब्राह्मणजातिरद्दिष्टो
। वणिग्जातिरवंचकः ॥ प्रियाजातिर्निरोर्ष्यालुः । शरीरी न निरामयः ॥ २६ ॥ सकृज्जल्पंति राजा
नः । सकृज्जल्पंति साधवः ॥ सकृत्कन्याः प्रदीयंते । त्रीण्येतानि सकृत् सकृत ॥ २७ ॥ विग्रहमिच्छं-
ति भटा । वैद्याश्च व्याधिपीडितं लोकं ॥ मृतकबहुलं च विप्राः । क्षेम सुभिक्षं च निर्ग्रंथाः ॥२८॥
निःस्पृहो नाधिकारी स्या—न्नाऽकामीमंडनप्रियः ॥ नाविदग्धः प्रियं ब्रूयात् । स्फुटवक्ता न वंचकः ॥
॥ २९ ॥ अग्रच्छाया तृणादग्निः । खले प्रीतिः स्थले जलं ॥ वेश्याशगः कुमित्रं च । षडेते बुद्बु-
दोपमाः ॥ ३० ॥ माता यदि विषं दद्या—त्पिता विक्रयते सुतं ॥ राजा हरति सर्वस्वं । का तत्र
परिदेवना ॥ ३१ ॥ आर्त्ता देवान्नमस्यंति । तपः कुर्वंति रोगिणः ॥ निर्धना विनयं यांति । क्षीण-
देहाः सुशीलिनः ॥ ३२ ॥ अर्थनाशं मनस्तापं । गृहे दुश्चरितानि च ॥ वंचनं चापमानं च । म-
तिमान्न प्रकाशयेत ॥ ३३ ॥ दाने तपसि शौर्ये च । विज्ञाने विनये नये ॥ विस्मयो न हि कर्त्त-
व्यो । बहुरत्ना वसुंधरा ॥ ३४ ॥ कोकिलानां स्वरो रूपं । नारीरूपं पतिव्रता ॥ विद्या रूपं कुरूपाणां
। क्षमा रूपं तपस्विनां ॥ ३५ ॥ बालादपि हितं ग्राह्य—ममेध्यादपि कांचनं ॥ नीचादप्युत्तमां वि-

द्यां । स्त्रीरत्नं दुष्कुलादपि ॥ ३६ ॥ त्यजेदेकं कुलस्यार्थे । ग्रामस्यार्थे कुलं त्यजेत् ॥ ग्रामं जनपदस्यार्थे । आत्मार्थे पृथिवीं त्यजेत ॥ ३७ ॥ प्रत्यक्षे गुरवः स्तुत्याः । परोक्षे मित्रबांधवाः ॥ कर्मांते दासभृत्याश्च । पुत्रो नैव मृताः स्त्रियः ॥ ३८ ॥ नास्ति कामसमो व्याधि—र्नास्ति मोहसमो रिपुः ॥ नास्ति क्रोधसमो वह्नि—र्नास्ति ज्ञानसमं सुखं ॥ ३९ ॥ सद्भावो नास्ति वेश्यानां । स्थिरता नास्ति संपदां ॥ विवेको नास्ति मूर्खाणां । विनाशो नास्ति कर्मणां ॥ ४० ॥ ग्रामो नास्ति कुतः सीमा । पत्नी नास्ति कुतः सुतः ॥ प्रज्ञा नास्ति कुतो विद्या । धर्मो नास्ति कुतः सुखं ॥ ४१ ॥

यत्रोदकं तत्र वसंति हंसा । यत्रामिषं तत्र पतंति गृध्राः ॥ यत्रार्थिनस्तत्र रमंति वेश्या । यत्राकृतिस्तत्र गुणा वसंति ॥ ४२ ॥ स्थिरा कीर्तिरकीर्तिश्च । स्थिरं कर्म शुभाशुभं ॥ स्थिरं दानं सुपात्रेषु । स्थिरा मैत्री सतां जने ॥ ४३ ॥ त्रयः स्थानं न मुंचंति । काकाः कापुरुषा मृगाः ॥ अपमाने त्रयो यांति । सिंहा सत्पुरुषा गजाः ॥ ४४ ॥ पूगीफलानि पात्राणि । राजहंसतुरंगमाः ॥ स्थानभ्रष्टाः सुशोभंते । सिंहाः सत्पुरुषा गजाः ॥ ४५ ॥ राजा कुलवधूर्विप्रा । नियोगी मंत्रिणस्तथा ॥ स्थानभ्रष्टा न शोभंते । दंताः केशा नखा नराः ॥ ४६ ॥ या लोभाद्या परद्रोहा—द्यः पा-

त्राद्यः परार्थतः ॥ मैत्री लक्ष्मीर्व्ययः क्लेशः । सा किं सा किं स किं स किं ॥ ४७ ॥ अग्निरापः स्त्रि-
यो मूर्खाः । सर्पा राजकुलानि च ॥ नित्यं यत्नेन सेव्यानि । सद्यः प्राणहराणि षट् ॥ ४८ ॥ अ-
ग्निर्विप्रो यमो राजा । समुद्रमुदरं गृहं ॥ एतानि न च पूर्यंते । पूर्यमाणानि नित्यशः ॥ ४९ ॥
आयुषो राजचित्तस्य । पिशुनस्य धनस्य च ॥ खलस्नेहस्य देहस्य । नास्ति कालो विकुर्वतः ॥५०॥
दुर्जनानां भुजंगाना—मंगनानां च भूभुजां ॥ सत्कृतानामपि प्रायो । विश्रब्धव्यं न सर्वथा ॥५१॥
चित्रकृद्घकर्त्ता च । कुवैद्यः कुनरेश्वरः ॥ चत्वारो नरकं यांति । पंचमो ग्रामकूटकः ॥ ५२ ॥ धन-
धान्यप्रयोगेषु । विद्यासंग्रहणेषु च ॥ आहारे च निहारे च । त्यक्तलज्जः सदा भवेत् ॥ ५३ ॥ ध-
र्मशोकभयाहारा । निद्रा कामः कलिः क्रुधः ॥ यावन्मात्रा विधीयंते । तावन्मात्रा भवंत्यमी ॥५४॥
बाल्यं वृद्धिर्वयो मेधा । त्वक्श्रोत्रनेत्रविक्रमाः ॥ दश केन निवर्त्तंते । मनः पंचेंद्रियाणि च ॥५५॥
आयुष्कर्म च वित्तं च । विद्या निधनमेव च ॥ पंचैतानि हि सृज्यंते । गर्भस्थस्यैव देहिनः ॥
॥५६॥ मातुः स्तन्यं रजःक्रीडा । मन्मना वागलज्जता ॥ शैशवे संति निर्हेतु—हास्यं भोगः पि-
तुः श्रियः ॥ ५७ ॥ शौर्येण वा तपोभिर्वा । विद्यया वा धनेन वा ॥ अत्यंतमकुलीनोऽपि । कुली-

नो भवति क्षणात ॥ ५८ ॥ जानीयात्प्रेषणे भृत्यान् । बांधवान् व्यसनागमे ॥ मित्रमापदि काले च । भार्यां च विभवक्षये ॥ ५९ ॥ जीवंतो मृतकाः पंच । श्रूयंते किल भारते ॥ दरिद्रो व्याधितो मूर्खः । प्रवासी नित्यसेवकः ॥ ६० ॥ धिग्दानमसत्कारं । पौरुषं धिक्कलंकितं ॥ जीवितं मानहीनं धि—ग्धिकन्यां बहुभाषिणीं ॥ ६१ ॥ सर्वस्य गात्रस्य शिरः प्रधानं । सर्वेंद्रियाणां नयनं प्रधानं ॥ सर्वौषधीनामशनं प्रधानं । सर्वेषु पेयेषु पयः प्रधानं ॥ ६२ ॥ दानेन पाणिर्न तु कंकणेन । मानेन तृप्तिर्न तु भोजनेन ॥ धनेन कांतिर्न तु चंदनेन । ध्यानेन मुक्तिर्न तु दर्शनेन ॥ ६३ ॥ श्रीशांतिनाथादपरो न दानी । दशार्णभद्रादपरो न मानी ॥ श्रीशालिभद्रादपरो न भोगी । श्रीस्थूलभद्रादपरो न योगी ॥ ६४ ॥ अश्वप्लुतं माधवगर्जितं च । स्त्रीणां चरित्रं भवितव्यता च ॥ अवर्षणं चापि च वर्षणं च । देवा न जानंति कुतो मनुष्याः ॥ ६५ ॥ कानीनश्च पितामहः समभवन् पुत्रादयो गोलकाः । संजाताः पृथगन्यताततजनिताः कुंडा ह्यमी पांडवाः ॥ सर्वेण द्रुपदात्मजा सहचरीयुद्धे हता बांधवाः । श्रीकृष्णेन कुलं कलंकमलिनं नीतं जगद्वंद्यतां ॥ ६६ ॥ शांतश्चंद्रश्चंदनश्चैकजाति—र्वीणा नारी मन्मथश्चैकजातिः ॥ अश्वः खड्गः क्षत्रियश्चैकजाति—र्मूर्खः काष्ठं गर्दभश्चै·

मित्रं चपलं कलत्रं ॥ विलासकाले
कजातिः ॥ ६७ ॥ पुत्रोऽपि मूर्खो विधवा च कन्या । शठं च मित्रं चपलं कलत्रं ॥ विलासकाले
ऽपि दरिद्रता च । विनाग्निना पंच दहंति देहं ॥ ६८ ॥ क्षते प्रहाराः प्रपतंत्यवश्यं । धान्यक्षये स्फु
र्जंति जाठराग्निः ॥ आपत्सु मित्राणि विसंवदंति । छिद्रेष्वनर्था बहुलीभवंति ॥ ६९ ॥ अर्थातुरा
णां न सुहृन्न बंधुः । क्षुधातुराणां न वपुर्न तेजः ॥ कामातुराणां न भयं न लज्जा । चिंतातुराणां
न सुखं न निद्रा ॥ ७० ॥ सुखी न जानाति परस्य दुःखं । न यौवनस्था गणयंति शीलं ॥ आप
द्गता निष्करुणा भवंति । आर्त्ता नरा धर्मपरा भवंति ॥ ७१ ॥ सुजीर्णमन्नं सुविचक्षणः सुतः ।
सुसाधितास्त्रं नृपतिः सुसेवितः ॥ सुचिंत्य चोक्तं सुविचार्य यत्कृतं । सुदीर्घकालेऽपि न याति विक्रि
यां ॥ ७२ ॥ बालसखित्वमकारणहास्यं । स्त्रीषु वादमसज्जनसेवा ॥ गर्दभयानमसंस्कृतवाणी । षट्
सु नरो लघुतामुपयाति ॥ ७३ ॥ काके शौचं द्यूतकारेषु सत्यं । सर्पे क्षांतिः स्त्रीषु कामोपशांतिः
॥ क्लीवे धैर्यं मद्यपे तत्वचिंता । राजा मित्रं केन दृष्टं श्रुतं वा ॥ ७४ ॥ सत्यं चेत्तपसा च किं शु
चि मनो यद्यस्ति तीर्थेन किं । सद्विद्या यदि किं धनैः सुमहिमा यद्यस्ति किं मंडनैः ॥ लोभश्चेद
गुणेन किं पिशुनता यद्यस्ति किं पातकैः । सौजन्यं यदि किं निजैरपयशो यद्यस्ति किं मृत्युना ॥

॥ ७५ ॥ यद्दारिद्र्यं कृपणजनताप्रीणनं सैव लक्ष्मी—र्यन्मर्त्तव्यं शरणमवतां जीवितव्यं तदेव ॥ यज्ञारत्वं गुरुजनरुषः स्यात्तदेवातिशौर्यं । यत्स्वाधीनं कदशनमपि स्वादु पथ्यं तदेव ॥ ७६ ॥ आराधयेद्धर्ममनन्यकर्मा । प्रायः प्रसादावधिरेव सर्वः ॥ आराध्धुमेनं तु कृतप्रसादं । कस्यापि विस्फुर्त्तिमियर्त्ति चेतः ॥ ७७ ॥ अर्था नगणां पतिरंगनानां । वर्षा नदीनामृतुराट् तरूणां ॥ सद्धर्मचारी नृपतिः प्रजानां । गतं गतं यौवनमानयंति ॥ ७८ ॥ यदेकः स्थविरो वेत्ति । न तत्तरुणकोटयः ॥ यो नृपं लत्तया हंति । वृद्धवाक्यात्स पूज्यते ॥ ७९ ॥ अनादरो विलंबश्च । वैमुख्यं विप्रियं वचः ॥ पश्चात्तापश्च पंचामी । सद्दानं दूषयंति हि ॥ ८० ॥ आनंदाश्रूणि रोमांचो । बहुमानं प्रियं वचः ॥ किंचानुमोदना पात्र—दानभूषणपंचकं ॥ ८१ ॥

॥ समाप्तेऽयं ग्रंथस्य द्वितीयावृत्तिर्गुरुश्रीमच्चारित्रविजयसुप्रसादात् ॥

---

आ ग्रंथ श्रीजामनगरनिवासी पंम्डित श्रावक हीरालाल हंसराजे स्वपरना श्रेयमाटे
पोताना श्रीजैनभास्करोदय छापखानामां छापी प्रसिद्ध कर्यो छे.

॥ इति श्रीसूक्तिमुक्तावली समाप्ता ॥

॥ श्रीजिनाय नमः ॥

# ॥ श्रीधर्मरत्नमंजूषा भाग १. ॥

( कर्त्ता—श्रीदेवविजयगणी )

छपावी प्रसिद्ध करनार—पंडित श्रावक हीरालाल हंसराज ( जामनगरवाळा )

वीरसंवत्—२४४१. विक्रमसंवत—१९७१. सने—१९१५.

किं. रु.-४-८-०

☞ श्रीजैनभास्करोदय प्रेस. जामनगर.

॥ इति श्रीसूक्तिमुक्तावली समाप्ता ॥

॥ श्रीजिनाय नमः ॥

# ॥ श्रीधर्मरत्नमंजूषा भाग १. ॥

( कर्त्ता—श्रीदेवविजयगणी )

छपावी प्रसिद्ध करनार—पंडित श्रावक हीरालाल हंसराज ( जामनगरवाळा )

वीरसंवत्—२४४१. विक्रमसंवत—१९७१. सने—१९१५.

कि. रु.-४-८-०

☞ श्रीजैनभास्करोदय प्रेस. जामनगर.

॥ श्रीजिनाय नमः ॥

॥ श्रीचारित्रविजयगुरुभ्यो नमः ॥

## ॥ अथ श्रीधर्मरत्नमंजूषा ( दानादिकुलकवृत्तिरूपा ) प्रारभ्यते ॥

( प्रथमो भागः )

( कर्ता—श्रीदेवविजयगणी )

छपावी प्रसिद्ध करनार—पंडित श्रावक हीरालाल हंसराज. ( जामनगरवाळा )

ॐनमो नाभिभूपाल—संभवाय स्वयंभुवे ॥ विलसत्केवलालोक—लोकालोकविकासिने ॥ ॥ १ ॥ श्रेयसे श्रीमदीक्ष्वाकु—कुलालंकारकारिणे ॥ त्रैलोक्यकमलाराम—विकासैकविवस्वते ॥ ॥ २ ॥ युग्मं ॥ श्रीशांतिर्विलसत्कांति—रजस्रं सृजताच्छिवं ॥ अभूद्विश्वत्रये शांति—र्यस्मिन् कुक्षिमुपेयुषि ॥ ३ ॥ नमोऽस्तु विश्वविश्वैक—स्वामिने नेमिनेऽर्हते ॥ लसल्लक्ष्मीनिवासाय । विनम्रानेकनाकिने ॥ ४ ॥ अश्वसेनधराधीश—वंशाकाशैकभास्करः ॥ पातु पुण्यात्मनो नित्यं । श्री-

पार्श्वः परमेश्वरः ॥ ५ ॥ भव्यानां मङ्गलागारं । संपादयतु सर्वदा ॥ स्वर्णवर्णो विराजिष्णुः । सद्भावो ज्ञातनंदनः ॥ ६ ॥ श्रेयसे संतु वो नित्यं । गौतमादिगणाधिपाः ॥ चारुचारित्रविस्तार- सम्यक्त्कारकारिणः ॥ ७ ॥ नमस्कृत्य सरस्वत्याः । पदं श्रीमद्गुरोस्तथा ॥ दानशीलतपोभाव- कुलकानि विवृणोम्यहं ॥ ८ ॥ निर्विघ्नग्रंथपरिसमाप्तिकामनया शिष्टाचारपरिपालनाय भावतोपकारिस्वामिनस्ती- र्थकृतोपकृतस्तत्स्तुतिरूपं मंगलमाचरति—

॥ मूलम् ॥—परिहरिअरज्जसारो । उप्पाडिअसंजमिक्कगुरुभारो ॥ खंधाओ देवदूसं । विअरं- तो जयउ वीरजिणो ॥ १ ॥ व्याख्या—' परिहरिअत्ति ' परिहृतं त्यक्तं सर्वसावद्ययोगात् राज्यस्य सारं धनकनकमणिमाणिक्यगजवाजिरथादि येन सः, तथा ' उप्पाडिअत्ति ' उत्पाटितः शिरसो- ढः संयमस्य सप्तदशभेदरूपस्यैकोऽद्वितीयो गुरुर्महान् भारो येन सः, तथा ' खंधाओ देवदूसंति ' स्कंधादंसस्थलाद्देवदूष्यं देववस्त्रं ' वियरंतो ' वितरन् ददत् पूर्वसंगतिकद्विजायेत्यनेन विशेषणद्वारेण च- तुर्ष्वपि धर्मभेदेषु प्रधानतया पूर्वं प्रतिपाद्यं दानमसूचि. ' जयउत्ति ' जयतु ' वीरजिणो ' वीर- जिनश्चरमतीर्थेश इत्यक्षरार्थः. ॥ १ ॥ विस्तरार्थस्तु वीरचरित्रादवसेयः. तत्र प्रथमतः पूर्वोक्ताना-

नपूर्वं श्रीवीरदेवचरित्रं कथ्यते, यथा—ग्रामेश १ स्त्रिदशो २ मरीचि ३ रमरः ४ षोढा परिव्राट् ५ सुरः ६ । संसारो बहु ७–१६ विश्वभूति १७ रमरो १८ नारायणो १९ नारकी २० ॥ सिंहो २१ नैरयिको २२ भवेषु बहुशश्चक्री २३ सुरो २४ नंदनः २५ । श्रीपुष्पोत्तरनिर्जरो २६ ऽवतु भवाद्वीर २७ स्त्रिलोकी गुरुः ॥ १ ॥ प्रथमो भवः—

अस्यैव जंबूद्वीपस्य प्रत्यग्विदेहविभूषणे महावप्रे विजये जयंती नाम पुर्यस्ति, तस्यां पुर्यां महासमृद्धो दोर्वीर्येण नवो जनार्दन इव शत्रुमर्दनो नाम राजास्ति, तस्य राज्ञः सेवकः स्वामिसेवकः स्वामिभक्तोऽकृतपराङ्मुखो दोषान्वेषणविमुखो परगुणग्रहणतत्परो नयसाराभिधानो ग्रामचिंतकोऽस्ति. सोऽन्यदा पृथ्वीपतेः शासनात्सपाथेयो दारुकमादातुं शकटश्रेणिमादाय वने गतः, तस्य वृक्षांश्छेदयतो द्विप्रहरसमये व्योम्नि तपनो जठरेऽग्निरिवाधिकं दिदिपे, यतः—देहस्नेहस्वरमधुरताबुद्धिलावण्यलज्जाः । प्राणोऽनंगः पवनसमता क्रोधहानिर्विलासाः ॥ धर्म्यं शास्त्रं सुरगुरुनतिः शौचमाचारचिंता । भक्ताऽपूर्णे जठरपिठरे प्राणिनां संभवंति ॥ १ ॥ तदानीं समयज्ञैः सेवकैस्तस्य कृते मंरूपोपमस्य तरोरधः सारा रसवती निष्पादिता, कृतस्नानविलेपनो नयसारः सेवकैर्भोजनाय

निमंत्रितो मनस्येवमचिंतयत्—यदि कश्चिदतिथिः क्षुधितस्तृषितो वात्र समागच्छेत्तदा वरं भवति. एवं चिंतयतस्तस्य केचन साधवः क्षुधितास्तृषिताः श्रांताः सार्थान्वेषणतत्पराः समाययुः, तान् मुनीन् दृष्ट्वा मुदमापन्नो नयसारो वंदित्वैवमपृच्छत्, भो मुनयोऽस्यामटव्यां यूयं कथं समागताः? यतोऽत्र शस्त्रिणोऽप्येकाकिनो न पर्यटंतीति नयसारेण पृष्टाः संतस्ते प्रोचुः, राजन्! वयं पुरा सार्थेन समं प्रस्थिताः, परं भिक्षार्थं यावद् ग्रामे प्रविष्टास्तावत्सार्थोऽन्यत्र ययौ, सार्थभ्रष्टाश्च वयमत्र समागताः, तत श्रुत्वा नयसारोऽब्रवीदहो सार्थेशो निःकृपः, यतः सह प्रस्थितान् साधून् मुक्त्वान्यत्र ययौ. एवमुक्त्वा नयसारो मुनीन् प्रति पुनरब्रवीत, भो साधवो मत्पुण्यादत्र यूयमागताः, इति कथयित्वा तान् मुनीन् भोजनस्थानं निन्ये. ततः शुद्धान्नपानैः सार्थोपनीतैः प्रत्यलाभयत. साधवोऽपि तत्र गत्वा विधिपूर्वकमभुंजत, नयसारोऽपि स्वस्थाने गत्वान्नादिकं भुक्त्वा मुनिसमीपे गत्वैवमवदत्, भो मुनयो मया सह यूयं चलत? यथा भवतां पुरो मार्गं दर्शयामि, मुनयोऽपि तेन सह चलिताः, क्रमेण नगरप्रत्यासन्नतरोरधश्चोपविश्य नयसारस्य जिनप्रणीतं धर्मं जगदुः, यथा—

सर्वज्ञस्त्यक्तरागादि—दोषस्त्रैलोक्यपूजितः ॥ यथास्थितार्थवादी च । देवोऽर्हन् परमेश्वरः ॥१॥

महाव्रतधरा धीरा । भैक्ष्यमात्रोपजीविनः ॥ सामायिकस्था धर्मोप—देशका गुरवो मताः ॥ २ ॥
दुर्गतिप्रपतत्प्राणि—धारणाद्धर्म उच्यते ॥ संयमादिर्दशविधः । सर्वज्ञोक्तो विमुक्तये ॥ ३ ॥ स-
म्यक्त्वमूलानि पंचा—णुव्रतानि गुणास्त्रयः ॥ शिक्षापदानि चत्वारि । व्रतानि गृहमेधिनां ॥ ४ ॥
ततः स नयसारः सम्यक्त्वमूलं द्वादशव्रतरूपं श्राद्धधर्मं समासाद्य स्वं धन्यं मन्यमानस्तान् प्रणम्य वलित्वा दारूणि राज्ञे प्रैषीत्, स्वयं तु स्वग्रामेऽगात, तद्दिनादारभ्य महाधर्मपरायणो नव तत्वानि चिंतयन् महामनाः कतिचिद्वर्षाणि धर्मं पालयामास. ततः स नयसारः स्वायुःपर्यंते विहिताराधनो नमस्कारपरायणो मृत्वा द्वितीयभवे सौधर्मदेवलोके पल्योपमस्थितिकः सुरोऽभवत्. तृतीयभवः—श्रीमदयोध्यायां श्रीयुगादिदेवकृते कृतायां श्रीऋषभस्वामिसूनुर्नवनिधीश्वरश्चतुर्दशरत्नाधिपतिर्भरत-नामा चक्रवर्त्यभूत. तत्र नयसारो ग्रामचिंतकजीवः प्रथमस्वर्गाच्च्युत्वा मरीचिन्यासदेहत्वान्मरीचि-नामा तस्य भरतस्य पुत्रो जातः. क्रमेण वर्धित उद्यौवन आद्ये समवसरणे प्रभोर्महिमानं देवैः क्रियमाणं निरीक्ष्य स्वाम्यंतिके धर्मं चाकर्ण्य सम्यक्त्वलब्धधीर्व्रतमाददे. सम्यग्ज्ञानवान् पंचसमिति-त्रिगुप्तियुक्तो निःकषायो जितेंद्रियः स्थविराणां पुरोगानि पठन्नेकादशांगपाठी ऋषभस्वामिना सार्धं

विहरतिस्म, एवं कियान् कालो गतः.

एकस्मिन् दिने स मरीचिनामा साधुः स्वेदार्द्रीभूतशरीरस्तृषार्तो ग्रीष्मर्तुना पीडित उष्णांशुखरकिरणतप्तगात्रश्चारित्रावरणोदयादिति चिंतयतिस्म. किं त्यजामि व्रतं? परं त्यक्तव्रतो लोके लज्जामि, अतोऽयं मयोपायो लब्धो येन व्रते क्षमो न भवति, अमी साधवस्त्रिदंडविरताः, दंडैर्निर्जितस्य मे करे त्रिदंडलांछनं भवतु, अमी लुंचितकेशा मुनयः, मम क्षुरमुंडिते शिरसि कलंकसूचनाय शिखा भवतु. अमी महाव्रतधराः, ममाणुव्रतानि भवंतु. अभ्युपानद्रहिताः, मम पादत्राणं भवतु. मुनयोऽमी निष्कंचनाः, मम मुद्रिकामात्रेण सकिंचनत्वं भवतु. साधवोऽमी विगतमोहाः, मम मोहछन्नस्य छत्रं भवतु. साधवोऽमी शीलेन सुगंधाः, निःशीलत्वेन दुर्गंधत्वान्मे श्रीखंडतिलकं भवतु. अमी शुक्लवस्त्रा निष्कषायाश्च महर्षयः, मम कषायिणः कषायाणि वासांसि भवंतु. अमी चारित्रेण पवित्रगात्राः, मम तु मितजलेन स्नानादिकं भवतात. एवं स्वनिर्वाहहेतवे लिंगं विकल्प्य पारिव्राज्यं प्रतिपन्नवान् मरीचिः क्लेशकातरत्वात्. तं तादृग्वेषं दृष्ट्वाखिलो जनो धर्ममपृच्छत्, सोऽपि तेषां पुरतः साधुधर्मं जिनोदितं समाचख्यौ. तथा धर्माख्यानप्रतिबुद्धान् भव्यांश्च स्वामिने समर्प-

यामास. इत्याचारः स मरीचिः स्वामिना समं विजहार.

एकस्मिन् दिने श्रीऋषभदेवो विनीतायां पुरि समवासार्षीत्, तत्र वंदनार्थमागतो भरतः प्रभुं नमस्कृत्य पृष्ठतिस्म, हे स्वामिन्नस्मिन् भरतेऽर्हच्चक्रिविष्णुप्रतिविष्णुबलाः कति भविष्यंतीति. स्वामिना यथास्थिते प्रोक्ते पुनर्भरतोऽब्रवीत्, हे तातास्यां पर्षदि त्वमिव कश्चित्तीर्थकृद्भावी वर्तते? स्वाम्याख्यद्भो भरत! अयं तव पुत्रो मरीचिनामा पारिव्राज्यप्रवर्तकश्चरमतीर्थकरो वीरनामा भावी, प्रथमशार्ङ्गभृत त्रिपृष्ठनामा पोतनपुरे भावी, तथा महाविदेहेषु मूकापुर्यां प्रियमित्रनामा चक्रभृद्भावी. तत् श्रुत्वा भरतो मरीचिसमीपे गत्वा प्रदक्षिणीकृत्य वंदित्वैवमवोचत, भो मरीचे! तव पारिव्राज्यं नाहं वंदे, किंतु त्वमिह भारते श्रीवीरोऽर्हन् भावीति वंद्यसे, तमित्युक्त्वा वंदित्वा स्वामिनं च प्रणम्य मुदितमना भरतो विनीतां पुरीं प्रविवेश. अथ तदाकर्ण्य मरीचिर्भुजास्फोटं कृत्वा नृत्यन्नेवं वाचमुवाच, यदादिमो विष्णुर्मूकायां नगर्यां चक्रवर्ती चरमोऽर्हंश्चाहं भविष्यामीत्यपरेण मे पर्याप्तं, इति कथयित्वा जातिमदमकरोद्यथा—आद्योऽहं वासुदेवानां । पिता मे चक्रवर्तीनां ॥ पितामहस्तीर्थकृता—महो मे कुलमुत्तमं ॥ १ ॥ एवं जातिमदं कुर्वन् । भुजामास्फोटयन् मुहुः ॥ नीचगोत्रा·

त्रिधं कर्म । मरीचिः समुपार्जयत ॥ २ ॥ स मरीचिः श्रीऋषभदेवनिर्वाणादूर्ध्वं साधुभिः सार्धं विहरन् भव्यान् प्रबोध्य साधुसन्निधौ प्राहिणोत्. सोऽन्यदा व्याधिग्रस्तोऽयमीति कृत्वान्यसाधुभिरनीतमपि मां नेक्षंते, तर्हि मम पालनं दूरेऽस्तु, अतः कंचिच्छिष्यं करोमि, यो मम परिचारको भवति. एवं ध्यायन् विधिवशात्स स्वस्थो जातः, तस्य कपिलनामा कश्चित्कुलपुत्रको मिलितः, तं च धर्मार्थिनं ज्ञात्वा मरीचिरार्हतं धर्ममकथयत. तेनोक्तं त्वमेवंविधं किं धर्मं न करोषि? मरीचिनोक्तमहं धर्मं कर्तुं न समर्थः, कपिलेनोक्तं त्वन्मार्गे किं धर्मो न विद्यते? तं जिनधर्मालसं ज्ञात्वा स्वशिष्यमिच्छन्निति जगौ, जिनमार्गे यथा धर्मोऽस्ति तथा मम मार्गेऽपि धर्मो विद्यते. इत्याकर्ण्य स मरीचिशिष्यो जातः.

अनेन दुर्भाषितेन मरीचिः सागरकोटाकोटिमितं संसारमार्जयत्. तच्छिष्यः कपिलो मिथ्याधर्मोपदेशकोऽभवत. एवं मरीचिः संसारं समुपार्ज्य विहितानशनस्तदनालोच्य मृतस्तुर्यभवे ब्रह्मलोके दशसागरायुः सुरोऽभवत्. कपिलोऽपि सूर्यादिशिष्यान् स्वकीयमाचारमुपदिश्य मृत्वा ब्रह्मलोके

देवोऽभवत्, स कपिलदेवोऽवधिज्ञानेन ज्ञात्वा भूतलेऽभ्येत्य शिष्यमोहात्स्वयं कृतं सांख्यमतं सूर्या-
दिशिष्यानबोधयत्, तद्दिनादारभ्यास्मिन् लोके सांख्यमतं प्रवृत्तं. पंचमभवे मरीचिदेवजीवो कोल्ला-
कसन्निवेशेऽशीतिपूर्वलक्षायुः कौशिकाख्यो ब्राह्मणोऽभवत्, सोंते त्रिदंडी भूत्वा मृत्वा षष्ठभवे देवो
जातः. ततश्च्युत्वा बहून् भवान् भ्रांत्वा सप्तमभवे स्थूणाख्ये सन्निवेशे पुष्पमित्राभिधानो द्विजोऽभूद्
द्वासप्ततिपूर्वलक्षायुः, तत्रापि तापसो भूत्वाष्टमभवे सौधर्मे मध्यमस्थितिकः सुरोऽभूत. ततोऽपि च्यु-
त्वा नवमभवे चैत्यसन्निवेशेऽग्निद्योतद्विजोऽभवत्पूर्वलक्षचतुःषष्ट्यायुष्कः, तत्रापि त्रिदंडी भूत्वा मृ-
त्वा दशमभवे ईशाने मध्यमायुः सुरोऽभवत्. एकादशभवे मंदिरसन्निवेशेऽग्निभूतिरिति नामा षट्-
पंचाशत्पूर्वलक्षायुष्को विप्रो जातः, सोऽपि त्रिदंडी भूत्वा मृतो द्वादशभवे सनत्कुमारे मध्यमायुः
सुरोऽभवत्. ततश्च्युत्वा त्रयोदशभवे श्वेतांबिकापुर्यां भारद्वाजो द्विजोऽभवच्चतुश्चत्वारिंशत्पूर्वलक्षायुः,
तत्रापि त्रिदंडी भूत्वा मृतश्चतुर्दशभवे माहेंद्रकल्पे मध्यमस्थितिकः सुरोऽभूत्, ततश्च्युत्वा भवं भ्रां-
त्वा पंचदशभवे राजगृहे स्थावरो द्विजोऽभूच्चतुस्त्रिंशत्पूर्वलक्षायुष्कः, सोऽपि त्रिदंडी भूत्वा विपद्य
षोडशभवे ब्रह्मलोके मध्यमायुः सुरोऽभवत्. ब्रह्मलोकाच्च्युत्वा बहून् भवान् भ्रांत्वा यत्रोत्पन्नस्तदा-

दाह—सप्तदशभवः—राजगृहनगरे विश्वनंदी राजा, तस्य लघुभ्राता विशाखभूतिर्युवराजोऽस्ति. तयोर्द्वयोर्द्वे पत्न्यौ प्रियंगुसुंदरीधारिणीनाम्न्यौ, तयोर्द्वयोर्द्वौ पुत्रौ, तत्र राजपुत्रो विशाखनंदी १ युवराजपुत्रश्च मरीचिजीवो विश्वभूतिरिति जातः.

इतश्चैकस्मिन् दिने उद्यौवनो विश्वभूतिः सांतःपुरः पुष्पकरंडकाख्ये वने रेमे नंदनवने सुरकुमार इव, तदानीं विशाखानंदी राट्पुत्रः क्रीडेच्छुर्द्वारपालनिवारितत्वात्प्रवेशमलभमानो द्वारपाल इव तत्रैवास्थात्, एतत्स्वरूपं पुष्पदासीतो मत्वा राज्ञ्या स्वपुत्रपराभवो राजाग्रे निवेदितः. स्त्रीहितकामनया राजा कपटेन प्रयाणभंभामवादयत्. ऋजुर्विश्वभूतिर्वनात्समागत्य राजानं व्यजिज्ञपत हे तात! त्वं गृहे तिष्ट स्वस्थचित्तः? संग्रामार्थमहमेव यास्यामीति, पश्चाद्विश्वभूतिः सर्वमसत्यं ज्ञात्वा पुनस्तत्रैव पुष्पकरंडकाख्ये वने गतः, तदानीं द्वारपालेनोक्तं मध्ये विशाखनंदी राजपुत्रोऽस्ति, तत् श्रुत्वा विश्वभूतेः कोपो जातः, अहोऽहं राज्ञा मायया वनाद्बहिष्कृतः, द्वाःस्थ पुरत इत्युक्त्वा मुष्ट्या कपित्थवृंदं ताडयित्वा सर्वाणि फलान्यपातयत्, यतः—पातयामि शिरांस्येवं । सर्वेषां भवतामपि ॥ ज्यायसि ज्यायसी ताते । न चेद्भक्तिर्भवेन्मम ॥ १ ॥ भोगैरीदग्वंचनाद्यैर्ममालमिति स

ब्रुवन् संभूतिमुनिपादांते गत्वा स व्रतमुपाददे. तं प्रव्रजितं ज्ञात्वा सावरजो राजा समागत्य नत्वा क्षमयित्वा च भोगाय निमंत्रयामास. साधुं भोगमनिच्छंतं ज्ञात्वा नृपो गृहमगमत्, गुरुणा सार्धं मुनिरन्यत्र व्यहार्षीत्. गुर्वनुज्ञयैकाकित्वविहारेण विहरन् स मथुरां ययौ, तदा तन्नृपात्मजामुद्वोढुं विशाखनंद्यागात्, विश्वभूतिसाधुरपि मासक्षपणपारणके तां पुरीं प्राविशत्, मार्गे च धेन्वाकृष्टो भूमौ पपात. तदा स कपित्थपातनक्षमं तवौजः क्व गतमिति विशाखनंदिसेवकैः स हसितः, तदा सकोपः साधुस्तां गां शृंगे धृत्वा मस्तकोपरि क्रुधाभ्रामयत्, निदानं च चकार, यथानेन तपसा भूयिष्ठवीर्योऽस्य मृत्यवे च भवांतरे भूयासमिति कोटिवर्षायुः संपूर्य तन्निदानमनालोच्य मृतोऽष्टादशे भवे महाशुक्रे सप्तमदेवलोके प्रकृष्टायुः सुरोऽभवत्.

इतश्चात्रैव भरते पोतनपुरे नगरे जितशत्रुनामा राजाभूत्, तस्य राज्ञो भद्रा नाम राज्ञी, तयोः पुत्रश्चतुःस्वप्नसूचितो बलभद्रोऽचलाभिधानोऽभवत्. पुनस्तस्य जितशत्रुराज्ञो मृगावतीनाम्नी पुत्र्यभूत्. तामत्यंतरूपवतीं यौवनवतीं च दृष्ट्वा मात्रा प्रेषिता सा सभामध्ये गत्वा पितुरुत्संगे स्थिता. तद्रूपमोहितो राजा पुरीवृद्धानाहूय पृच्छतिस्म. भो महाजनाः! अस्यां रत्नगर्भायां यानि रत्नानि

जायंते तानि कस्येति निर्णयं कृत्वा ब्रूत? तद्वचः समाकर्ण्य तैरुक्तं तानि तवैवेति. तद्वचनमुपादा-
य स स्वीयां मृगावतीं पुत्रीं परिणेतुं सज्जो जातः. तद् दृष्ट्वा लज्जिता लोकाः स्वस्थानं जग्मुः.
तदानीं राजा च तां मृगावतीं कन्यां गांधर्वेण विवाहेन पर्यणैषीत्. लज्जाक्रोधाकुला भद्रादेवी म-
हीपतिं मुक्त्वाचलेन पुत्रेण सह निर्गत्य दक्षिणापथे प्रययौ. तत्र माहेश्वरीं नवीनां पुरीं कृत्वा बल-
देवो मातरं संस्थाप्य पुनः पितुरंतिके जगाम. तत्पिता प्रजायाः पतित्वेनाखिलैर्जनैः प्रजापतिरिति
प्रोचे, अहो बलीयान् कर्मपरिणामः! विश्वभूतिजीवः शुक्रदेवलोकाच्च्युत्वैकोनविंशतितमभवे म-
हादेव्या मृगावत्याः कुक्षौ सप्तस्वप्नेन सूचितः पुत्रत्वेन विष्णुभावेनोत्पन्नः, काले सुदोहदैः सूनुः सु-
षुवे, त्रिकरंडकपृष्ठत्वात् त्रिपृष्ठ इति तस्य नाम दत्तं, अशीतिधनुःप्रमाणदेहः सोऽचलेन सह क्रीडां कुर्व-
न्नधीतसकलकलः क्रमेण यौवनं प्राप्तः. विशाखनंदिजीवोऽपि भवं भ्रांत्वा तुंगगिरौ मृगाधिपो जातः,
शंखपुरदेशे चोपद्रवं कुर्वन् स सुखेनास्थात्. तदानीमश्वग्रीवेन भूभुजा कश्चिन्नैमित्तिकः पृष्टो यथा
भो दैवज्ञ! मम मृत्युः कुतो भावी? दैवज्ञेनोक्तं श्रूयतां यथा—हंता स ते चंडवेगं। यो दूतं घ-
र्षयिष्यति ॥ मारयिष्यति यस्तुंग—गिरिसिंहं च हेलया ॥ १॥ तत श्रुत्वाश्वग्रीवः शंखपुरे शाली-

नवापयत्, तद्रक्षार्थं च वारकेण महीपतीनादिदेश. इतः सोऽश्वग्रीवः प्रजापतेस्तौ पौत्रौ महावीर्यौवश्रौषीत्, तस्मै च स स्वचंडवेगं दूतं प्रैषीत्, तदानीं पुत्रयुक्तः प्रजापतिर्नृपो नाट्यं कारयन्नासीत्, क्षुभितः प्रजापतिः, नाट्यरंगे च भंगो जातः, तं रंगभंगं दृष्ट्वा कुपितौ तौ त्रिपृष्ठाचलौ स्वान्नरानूचतुः, यथा कार्यं कृत्वा व्रजन्नयं दूतोऽस्माकं ज्ञापनीयः. अथ प्रजापतिना मानितः पूजितो विसृष्टो दूतो निजैर्नरैस्ताभ्यां ज्ञापितः. कुमारौ मार्गार्धे गत्वा भटैस्तमकुट्टयतां, तत्सहायास्तु काकवत्पलायांचक्रिरे, तत्प्रजापतिना राज्ञा ज्ञातं, भीतेन राज्ञा स पुनर्गृहे समानीतः, भृशं सत्कृत्यैवं भापितश्च, भो चंडवेग! कुमारयोर्दुर्विनयत्वं स्वाम्यग्रे न वाच्यं, यतः संतो नतवत्सला भवंतीत्युक्त्वा विसृष्टो दूतः स्वस्थानं गतः. राज्ञोऽग्रे गत्वालीकाख्यानकातरेण दूतेन यथातथमुक्तं, तत श्रुत्वा कुपितेनाश्वग्रीवेण तस्मिन् वर्षे शालिरक्षार्थं शंखपुरे प्रजापतेरुक्तं, तदादेशं ज्ञात्वा प्रजापतिपुत्रौ तत्र गतौ, शालिगोपकैरुक्तं भो कुमारौ! चतुरंगचमूचक्रैः सिंहो महता कष्टेन रक्ष्यते, युवां द्वावेव आगतौ कथं रक्षथः? ताभ्यामुक्तं भो शालिगोपकाः! सिंहं दर्शयत? यथा तस्य भयं वयं स्फेटयामः, ततस्ते तुंगाचलगुहागतं तं सिंहमदर्शयन्. रामशार्ङ्गिणौ रथारूढौ तां गुहां जग्मतुः, तत्र गुहापार्श्व-

योर्जना उच्चैः कलकलं चक्रुः, तं श्रुत्वा स केसरी जृंभादिविदीर्णवक्त्रो गुहातो विनिर्गत्य सन्मुख-
मागात्, तमापतंतमरथिनं च दृष्ट्वा त्रिपृष्ठो रथमत्यजत्, तं निरस्त्रं दृष्ट्वा त्रिपृष्ठः शस्त्राण्यप्यत्यजत्,
तत्प्रेक्ष्य जातजातिस्मृतिः केसर्यचिंतयत्, अहो महदाश्चर्यं यदेकोऽयं मद्गुहाद्वारे समागात्, द्वितीयं
रथादुत्तरणं, तृतीयं च शस्त्रमोचनं, अहोऽस्य मदांधत्वं! तर्हि हन्म्येनमेवं चिंतयित्वा व्यात्ताननः सिं-
हस्त्रिपृष्ठोपरि धावितः, त्रिपृष्ठोऽपि तमापतंतं दृष्ट्वा क्रोधाकुलः कराभ्यां तस्योष्ठौ गृहीत्वा तं जीर्णवस्त्र-
वत्पाटयामास, तदानीं देवतास्तस्योपरि पुष्पाभरणवस्त्राणि ववृषुः, लोकाश्च विस्मयं प्राप्ताः साधु सा-
ध्विति तं तुष्टुवुः, अहोऽहं कुमारेणानेन कथं मारित इत्यमर्षेण द्विधा कृतमपि स्फुरंतं तं दृष्ट्वा
सारथिना गौतमजीवेन स इत्याश्वासितः, भो सिंह! त्वं खेदं मोद्वह! पशुसिंहस्त्वमेष तु नृसिंहः,
अत एवापमानं मुधा धत्से. तत श्रुत्वा तुष्टमनाः स मृत्वा चतुर्थ्यां नरकावन्यां नारको जातः. त-
च्चर्म गृहीत्वा कुमारौ चलितौ स्वपुरंप्रति, ग्राम्यानित्यूचतुश्च, यथा—शालीन् खाद यथेष्टं त्वं । वि-
श्वस्तस्तिष्ठ संप्रति ॥ असौ हृदयशल्यं ते । केसरी यन्निपातितः ॥ १ ॥ इति चाश्वग्रीवाय कथनी-
यमित्युक्त्वा तौ पोतनपुरे गतौ. अश्वग्रीवो जनमुखात्तद् ज्ञात्वा भीतस्तौ कुमारौ दूतेनाजूहवत्,

प्रजापतिना तौ कुमारौ प्रेषितौ. ततो द्वयोस्त्रिपृष्ठाश्वग्रीवयोर्युद्धं जातं, युद्धे जायमाने त्रिपृष्ठेन स्व- चक्रेण हतोऽश्वग्रीवः, त्रिपृष्ठस्य राज्यं जातं, सुखेन च स राज्यं करोति.

एकस्मिन् दिने केचन गायना निशायां तत्पार्श्वे गानं कुर्वंतिस्म, तेन शय्यापालकस्योक्तं म- यि शयाने एते गायना विसृष्टव्याः, राज्ञि निद्रायमाणे गानलुब्धेन शय्यापालेन गायना न विसृ- ष्टाः, जागरितो राजा, पृष्टं च भो शय्यापालक! गायनाः कथं न विसृष्टाः? सोऽप्यूचे गीतलोलतः, तत् श्रुत्वा कुपितो विष्णुः प्रभाते तस्य कर्णयोस्तप्तं त्रपु अक्षेपयत्, तेन कर्मणा च स वेद्यं कर्म न्यकाचयत, अन्यदपि पापकर्म कृत्वा स चतुरशीत्यब्दलक्षायुः प्रतिपाल्य मृत्वा सप्तमावन्यां विंशति- तमभवे नारको जातः, अचलोऽपि प्रव्रज्य केवलं लब्ध्वा शिवं ययौ. एकविंशतितमभवे त्रिपृष्ठ जीवो नरकादुध्धृत्य केसरी जातः, ततो मृत्वा द्वाविंशतितमभवे स चतुर्थं नरकं ययौ. ततो निर्ग- त्य नृशिशो भवान् भ्रांत्वा मनुष्यं जन्म च प्राप्य महत्पुण्यं चोपार्ज्य त्रयोविंशतितमभवेऽपरविदेहे मूकापुर्यां धनंजयस्य राज्ञो धारिण्याः पट्टराज्ञ्याः कुक्षौ चतुर्दशस्वप्नसूचितः पूर्णमासि संपूर्णलक्षणः सूनुर्जातः, जातकर्मकरणानंतरं पितरौ प्रियमित्र इति तन्नाम चक्रतुः, पित्रोः मनोरथैः सार्धं क्रमेण

ववृधे. संसारनिर्विण्णो धनंजयो राजा प्रियमित्रं पुत्रं राज्ये निधाय स्वयं च दीक्षामुपाददे. प्रियमित्रचक्री समुत्पन्नचतुर्दशरत्नः षट्खंडं विजेतुं चक्रानुगोऽचलत्. क्रमेण षट्खंडं साधयित्वा प्रियमित्रचक्री मूकानगर्यां समागात्, द्वादशवार्षिकश्च तस्य राज्याभिषेको जातः, कोटिवर्षोनचतुरशीतिपूर्वलक्षायुः प्रतिपाल्य पोट्टिलाचार्यसमीपे च धर्मं श्रुत्वा दीक्षां लात्वा कोटिवर्षं यावत्प्रव्रज्यां प्रपाल्य मृत्वा चतुर्विंशतितमभवे शुक्रदेवलोके सर्वार्थसिद्धिविमाने स देवो जातः, पंचविंशतितमभवे देवभवाच्च्युत्वेह भरते छत्रापुर्यां जितशत्रोर्भद्रादेव्याः कुक्षौ नंदनो नाम नंदनोऽजनिष्ट, तं पुत्रं राज्ये न्यस्य जितशत्रुराट् परिव्रज्यामुपाददे, नंदनो राट्लोकानां हृदयानंदो वसुंधरां पाकशासन इव यथाविधि शशास. चतुर्विंशतिवर्षलक्षाणि जन्मतो व्यतीत्य विरक्तो राट् पोट्टिलाचार्यसमीपे व्रतमाददे, ग्रामाकरपुरादिषु गुरुणा सार्धं व्यहार्षीत्. एकधर्मरतः, आर्त्तरौद्रध्यानविवर्जितः, सदा त्रिदंडरहितः, चतुर्धर्मपरायणः, पंचव्रतैर्युक्तः, षड्जीवनिकायरक्षकः, सप्तभीस्थानवर्जितः, विमुक्ताष्टमदस्थानः, नवब्रह्मगुप्तिकः, दशविधधर्मधारकः, सम्यगेकादशांगभृत, तपो द्वादशधा कुर्वन्, द्वादशप्रतिमारुचिः, एवंविधः स नंदनसाधुर्लक्षवर्षं यावन्मासक्षपणमासक्षपणैः पारणकमकरोत्. तत्रैकलक्ष·

वर्षदीक्षायां मासक्षपणानि यथा—इक्कारसलक्खाइं । असीइसहस्सा य छसयपणयाला ॥ मासक्खवणा नंदण—भवंमि वीरस्स पंचदिणा ॥ १ ॥ अर्हद्भक्त्यादिभिर्विंशतिस्थानकैः स दुर्जं तीर्थकृन्नामकर्मार्जयामास. आयुरंते सम्यगाराधनां कृत्वा साधून् साध्वीश्च क्षमयित्वा षष्टिदिनान्यनशनं पालयित्वा पंचविंशत्यब्दलक्षायुः परिपाल्य मृतः षड्विंशतितमे भवे प्राणतदेवलोके पुष्पोत्तरनाम्नि विमाने उपपादशय्यायामुदपद्यत, पंचविधपर्याप्तिपर्याप्तो निष्पन्नशरीरः शय्यायामुपविष्टो देवर्द्धिं दृष्ट्वा मनसि मुदमापन्नश्चिंतयति, अहो! प्रभावोऽर्हद्धर्मस्य! अवधिज्ञानेन च पूर्वभवमपश्यत. तपसः प्रभावं ज्ञात्वा व्रतपालनं च सम्यगालोच्य पुनः पुनरर्हद्धर्मं देवसभायां वर्णयति. अथ तद्विमानवासिनो देवास्तंप्रति प्रतिपादयंति यथा—

इदं विमानं भवतो । वयमाज्ञाकराः सुराः ॥ अमून्युपवनान्युच्चै—रमूर्मज्जनवापयः ॥ १ ॥
इदं च सिद्धायतनं । सुधर्मेयं महासभा ॥ मज्जनौकोऽलंकुरुष्वा—भिषेकं कुर्महे यथा ॥ २ ॥

एवममरैरुक्तः स मज्जनौकसि गत्वा सिंहासने सपादपीठे निषसाद. तत्रामरैर्दिव्येन पयसाभिषिक्तः, ततोऽलंकारनिकेतनं गत्वा देवदूष्यवस्त्रपरिधानपूर्वं कृतांगरागो भूषणैर्भूषितः. ततो व्यवसाय-

सभां गत्वा पुस्तकं वाचयित्वा पुष्पादिसामग्रीं समादाय स सिद्धायतने गतः. तत्र प्रतिमानामष्टोत्तरशतमर्चयित्वा नवीनैः स्तोत्रैः स्तुत्वा च ववंदे. अथ सुधर्मसभायां गत्वा स नाट्यमकारयत्. एवं दिव्यान् भोगान् भुंजानोऽसौ विंशतिसागरोपमाण्यायुः परिपूरयामास. इति पूर्वभवाः कथिताः. अथ सप्तविंशतितमे भवे श्रीवीरो जातस्तच्चरित्रं यथा—

इतश्चास्मिन् जंबूद्वीपे भरतक्षेत्रे ब्राह्मणकुंडग्रामे कोडालसगोत्र ऋषभदत्तो नाम ब्राह्मणोऽस्ति. तस्य जालंधरकुलोत्पन्ना देवानंदा नाम भार्यास्ति. नंदनजीवो दशमदेवलोकाच्च्युत्वोत्तराफाल्गुनीस्थे निशाकरे आषाढश्वेतषष्ठ्यां तस्याः कुक्षाववातरत्. तदानीं सा देवानंदा इमांश्चतुर्दशस्वप्नानद्राक्षीत्, यथा—गय १ वसह २ सीह ३ अभिसेअ ४। दाम ५ ससि ६ दिणयर ७ झयं ८ कुंभं ९ ॥ पउमसरं १० सागर ११। विमाणभवण १२ रयणुच्च य १३ सिहं च १४ ॥ १ ॥ ततस्तया देवानंदाब्राह्मण्या ऋषभदत्तस्याग्रे गत्वा विज्ञप्तं, अहो स्वामिन्मयैते स्वप्ना दृष्टाः, एषां किं फलं भविष्यति? तेनोक्तं तव महान् पुत्रो भावी. तत् श्रुत्वा हर्षिता ब्राह्मणी तं गर्भं परिवहति. तद्गर्भानुभावतस्तस्य गृहे महती ऋद्धिर्जाता. एवं काले गच्छति स्वामिनि गर्भस्थिते व्यशीतिदिवसेषु

व्यतीतेषु सौधर्माधिपतेरासनमकंपत. ततः सौधर्मेंद्रोऽवधिना देवानंदागर्भगतं प्रभुं ज्ञात्वा सिंहासः
नात्समुत्थाय सप्ताष्टपदानि सन्मुखं गत्वा शक्रस्तवं कृत्वैवमचिंतयत्. अर्हच्चक्रिवासुदेवबलदेवा उत्त·
मकुलेषूत्पद्यंते. यत्पुनरयं जिनो मरीचिजन्मनि कुलमदं कृतवान्, तेन नीचकुलेषूत्पन्नः. अथास्माकं
तं महाकुले क्षेप्तुमधिकारोऽस्ति, अतोऽहमपि गर्भपरावर्तं कारयामि.

अथावधिज्ञानेन क्षत्रियकुंभग्रामस्वामिनं सिद्धार्थक्षत्रियमीक्ष्वाकुवंशविभूषणं, तस्य गृहे च प·
ट्टराज्ञीं सतीमुख्यां त्रिशलाख्यां गुर्विणीं ज्ञात्वा स पदात्यनीकपतिं हरिणैगमेषिणं देवं समाकार्यै·
वमादिशत. भो हरिणैगमेषिन्! गर्भपरावर्तं विधेहि? तथेति कृत्वा तेन देवेन कृष्णाश्विनत्रयोद·
श्यां हस्तोत्तरास्थिते चंद्रे देवानंदात्रिशलयोर्गर्भव्यत्ययः कृतः. ततस्तुष्टमना देवः स्वस्थानमगमत्.
तन्निशायां सा देवानंदा तान् महास्वप्नांस्त्रिशलादेव्या हृतानद्राक्षीत्. अथ सा राज्ञी त्रिशला पूर्वो·
क्तांस्तान् स्वप्नानपश्यत्, यथा—गजो १ वृषो २ हरिः ३ साभि—षेकश्रीः ४ स्रक् ५ शशी ६ र·
विः ७ ॥ महाध्वजः ८ पूर्णकुंभः ९ । पद्मसरः १० सरित्पतिः ११ ॥ १ ॥ विमानं १२ रत्नपुंजश्च
१३ । निर्धूमोऽग्नि १४ रिति क्रमात् ॥ ददर्श स्वामिनी स्वप्ना—न्मुखे प्रविशतस्तदा ॥ २ ॥ तद्दि·

नादारभ्य मुदिता देवी त्रिशला गर्भं दधार. प्रभौ गर्भस्थे शक्राज्ञया जृंभकामराः सिद्धार्थवेश्मनि भूयोभूयो निधानानि समानीय न्यधुः. तथान्ये राजानः प्राभृतपाणयः पुरः प्राभृतानि मुक्त्वा प्रणेमुः. स्वामिनः प्रभावात्तत्कुलं सिद्धार्थराजगृहं चातिशयेन ववृधे. गर्भवासस्थितो वीरो मातृमोहात्संलीनांगः स्थितो ध्यानस्थयोगिवत. तदानीं त्रिशला चिंतयति नष्टो मे गर्भो गलितो वेत्यादि चिंतयंती रुदती प्रकृतिजनांश्च रोदयंती शोकसागरे निममज्ज. तत्प्रभृति तत्कुलं शोकसंकुलं विज्ञाय स्वामिना किंचित्स्पंदितं. हर्षितः सिद्धार्थः, हर्षिता त्रिशला, गर्भस्पंदनशंसनात्सर्वैरपि हर्षितं. अहो मातापित्रोर्मोहः! अतो मातापित्रोर्जीवतोरहं प्रव्रज्यां नोपादास्ये इत्यभिग्रहं स सप्तमे मासि जग्राह. अथ प्रसन्नासु दिक्षूच्चेषु च ग्रहेषु, प्रदक्षिणानुकूलेषु भूमिसर्पिषु मारुतेषु, प्रमोदपूर्णेषु च जगत्सु, जयिषु शकुनेषु, अर्धाष्टमदिवसेषु नवसु मासेषु गतेषु, चैत्रशुक्लत्रयोदश्यां तिथौ, हस्तोत्तरागते चंद्रे सिंहांकं कांचनरुचिं सुतं स्वामिनी सुषुवे. तस्मिन् समये षट्पंचाशद्दिक्कुमार्यो भोगंकरादयोऽभ्येत्य स्वामिनः स्वामिमातुश्च सूतिकर्माणि चक्रिरे. सूतिकर्मकरणानंतरं शक्रोऽप्यासनकंपेन सपरिच्छदस्तत्रागत्य पंच रूपाणि कृत्वा स्वामिनं करसंपुटे गृहीत्वा मेरुमस्तकं ययौ. तदा नाथं

स्नपयितुमपरेऽपि त्रिषष्टिरमरेश्वराः समाययुः. अष्टोत्तरसहस्रसंख्यान् क्षीरनीरभृतान् पृथक्पृथक्कुंभान् स्वामिनोऽभिषेकायोपस्थितान् दृष्ट्वा शक्रेशः शशंके, यथेयंतं वारिसंभारं कथं स्वामी सहिष्यतीति? श्रीवीरोऽवधिज्ञानेन तद् ज्ञात्वा तदाशंकापनोदाय वामपादांगुष्ठाग्रेण मेरुमस्तकमपीडयत्. मेरुमस्तके च पीडिते यज्जातं तन्निशम्यतां, यथा—कंपमाने गिरौ तत्र। चकंपे च वसुंधरा ॥ शृंगाणि सर्वतः पेतु—श्चुक्षुभुः सागरा अपि ॥ १ ॥ ब्रह्मांडस्फोटसदृशे। शब्दाद्वैते प्रसर्पति ॥ रुष्टः शक्रोऽवधेर्ज्ञात्वा। क्षमयामास तीर्थपं ॥ २ ॥ संख्यातीतार्हतां मध्ये। स्पृष्टः केनापि नांह्रिणा ॥ मेरुः कंपमिषादित्या—नंदादिव ननर्त सः ॥ ३ ॥ तत्र जन्मोत्सवं विधाय सर्वे सुरेश्वरास्तदभिषेकजलं ववंदिरे, तथा सर्वांगेषु परिचिक्षिपुः. एवं सर्वेऽपि जन्ममहोत्सवं कृत्वा नंदीश्वरे देवान्नमस्कृत्य स्वस्थानमगुः. अथ सौधर्मेशो यथाविधि जिनं स्नपयित्वारात्रिकं मंगलप्रदीपं च कृत्वा, स्तुत्वा, जिनगृहे मातुरंतिके च मुक्त्वा, द्वात्रिंशत्कोटिस्वर्णवृष्टिं च विरचय्य, मुकुटं कुंडलयुगलं चोच्छीर्षके मुक्त्वा, श्रीदामरत्नदामाख्ये गेंडुके च पालनकोपरि कृत्वा, नंदीश्वरे यात्रां कृत्वा स्वस्थानमगमत्. तदेंद्रादिष्टधनदप्रेरितजृंभकामराः सिद्धार्थनृपौकसि स्वर्णमाणिक्यरत्नवृष्टिं ववृषुः. तदानीं सिद्धार्थः

सूनोर्जन्मोत्सवे जायमाने बंदीनमोचयत्, पूजामकारयत, दानानि चादात्. तृतीयेऽह्नि चंद्रसूर्ययोर्दर्शनं पितरौ प्रीत्या स्वयं कारयामासतुः. षष्ठेऽह्नि कंठावलंबितमालाभिः कुलस्त्रीभी रात्रिजागरणं कारयामासतुः.

एवं महोत्सवे जाते सिद्धार्थनृपतिरेकादशे दिने, निवर्तितेऽशुचिजातकर्मणि, संप्राप्ते द्वादशे दिने ज्ञातिस्वजनानाहूय दानसन्मानपूर्वकं धनादिभिर्वर्धितत्वात्तस्य वर्धमान इति नाम विदधे. वज्रिणा महोपसर्गैरक्षोभ्यं विदित्वा महावीर इत्यपरं नाम विदधे. क्रमेण न्यूनाष्टवत्सरोऽष्टोत्तरसहस्रलक्षणैर्लक्षितो निसर्गेण गुणी निजवयोऽनुरूपाभिरामलक्ष्यादिभिः क्रीडाभिः क्रीडन् स वयसा ववृधे. अथ साग्राष्टवत्सरं स्वामिनं पित्राध्यापनाय लेखशालायामुपाध्यायसमीपमानीतमवधिना विज्ञाय तत्रागत्य शक्रेण स्वामी सिंहासने निवेशितः, प्रणम्य पृष्टश्च शब्दपारायणं जगौ. सप्तहस्तोन्नतो यौवनस्थः पित्रा समरवीरराजपुत्रीं यशोदानाम्नीं महामहेन परिणायितः. श्रीवीरो यशोदयादेव्या समं वैषयिकं सुखं बुभुजे. यशोदया सार्धं भोगान् भुंजानस्य तस्य प्रियदर्शना दुहिता जाता, सा च समये जमालिना राजपुत्रेण परिणीता. स्वामिनो जन्मतोऽष्टाविंशेऽब्दे गते विहितान-

शनौ मातापितरौ विपद्य तुर्यं माहेंद्रदेवलोकं गतौ. ततश्च्युत्वापरविदेहाख्ये क्षेत्रेऽव्ययं प्राप्स्यतः. पूर्णप्रतिज्ञः स्वामी ज्येष्ठबांधवं नंदिवर्धनं राजानं शोकमग्नमूचे, यथा—सदा सन्निहितो मृत्यु—र्जीवितं न स्थिरं सदा ॥ उपस्थिते वास्तवेऽस्मि—न्न शोकस्य प्रतिक्रिया ॥ १ ॥ धैर्यालंबनपूर्वं च । धर्मानुष्ठानमेव हि ॥ युज्यते न तु शोकादि । भ्रातः कापुरुषोचितं ॥ २ ॥ इत्यादिवचनैर्बोधितो नंदिवर्धनः सामंतै राज्ये स्थापितः.

अथ श्रीवीरः संसारविमुखः प्रव्रज्याभिमुखो नंदिवर्धनं भ्रातरमापप्रच्छे. भो भ्रातस्तवाज्ञयाहं दीक्षामंगीकरोमि. तदा नंदिवर्धनो वीरंप्रत्याह, हे बांधव! शोकमग्ने मयि त्वं किं क्षते क्षारं निक्षिपसि? अथ ममोपरोधात्त्वं वर्षद्वयं तिष्ठ? तद्वचनमंगीकृत्य ब्रह्मव्रतधरो विशुद्धध्यानतत्परः प्राशुकान्नभुग्महामना वर्षमेकमत्यवाहयत. ततः समागता लोकांतिका देवाः, तीर्थं प्रवर्तयेत्युक्त्वा प्रतिबोधितो नाथो वर्षं यावद्दानं ददाति. यथा—सारस्सयमाइच्चा । वण्हीवरुणा य गद्दतोआ य ॥ तुसिया अव्वाबाहा । अग्गिच्चा चेव रिठा य ॥ १ ॥ एए देवनिकाया । भयवं बोहिंति जिणवरिंदं तु ॥ सव्वजगजीवहियं । भयवं तिब्बं पवत्तेह ॥ २ ॥ संवच्छरेण होही । अभिनिक्खमणं तु जिणव·

रिंदाणं ॥ तो अब्बसंपयाणं । पवत्तए पुव्वसूरम्मि ॥ ३ ॥ एगा हिरण्णकोडी । अठेव य णूणगा स-
यसहस्सा ॥ सूरोदयमाईयं । दिज्जइ जा पायरासाउ ॥ ४ ॥ तिन्नेव य कोडिसया । अठासीअं
च हुंति कोडीउ ॥ असीअं च सयसहस्सा । एयं संवछरे दिन्नं ॥ ५ ॥ एवं दानं दत्वा पंचाश-
द्धनुरायामां, पंचविंशतिधनुर्विस्तृतां, षट्त्रिंशद्धनुरुन्नतां चंद्रप्रभाख्यां शिबिकां भ्रातृकृतां. दिव्यानु-
भावात्सुरकृतशिबिकांतर्भवनादेकीभूतां समारूढो भगवान् पालके विमाने देवराज इव शुशुभे. पु-
विं उक्खित्ता माणुसेहिं । साहट्टरोमकूवेहिं ॥ पछा वहंति सीयं । असुरिंदसुरिंदनागिंदा ॥ १ ॥
तां शिबिकामारूढो भगवान् ज्ञातखंडवनं सुरनरगणैः परिवृतः समागात. शिबिकायाः समुत्तीर्य स
भूषणान्यत्यजत्, पंचमुष्टिभिः केशानुदध्रे, तानिंद्रः क्षीरसमुद्रे चिक्षेप, प्रभोः स्कंधे च देवदूष्यं
निदधे. एको भगवान् वीरः कृतषष्टतपाः करेमि सामाईयमिति कृत्वा चारित्रं प्रत्यपद्यत. जन्मत-
स्त्रिंशत्तमे वर्षे व्यतीते मार्गशीर्षे श्यामायां दशम्यां तिथौ हस्तोत्तरास्थे चंद्रे पश्चिमे यामे चारि-
त्रेण समं प्रभोस्तुर्यं मनःपर्यवज्ञानं समुदपद्यत. ततः स्वामी जगन्नायकः सोदर्यं नंदिवर्धनं ज्ञाति-
वर्गं चापृच्छ्य चारित्ररथमारूढो विहाराय प्रतस्थे. मुहूर्तशेषे दिवसे प्रवरं कुमारग्राममनुप्राप्तः. तत्र-

गरबहिरुद्याने च निःप्रकंपः स्वामी प्रतिमया स्थितः. तदा कश्चिद्गोपः सर्वं दिनं वृषान् वाहयित्वा सायं स्वामिसमीपे मुक्त्वा गोदोहाय गृहं गतः, ते तु स्वैरं वने गताः, स चागतः स्वामिनं वीक्ष्याऽपृच्छत्. स्वामिन्यदत्तोत्तरे न वेत्तीति रात्रौ वने विलोकयतिस्म, परं नापश्यत. रात्रिशेषे स्वयमेवाऽऽगता वृषाः. सोऽप्यागतस्तान् दृष्ट्वा नूनमनेन गोपिता इति रुष्टः सेल्हकमुत्पाट्य स स्वामिनंप्रति धावितः, अवधेरागत्य शक्रेण च स शिक्षितः. ततो मारणांतिकोपसर्गवारणार्थं बिम्भौजाः सिद्धार्थ· नामानं स्वामिमातृष्वस्रेयं व्यंतरवरं प्रभूपांते मुक्त्वा स्वस्थाने गतः. ततः प्रभुः कोल्लाकसन्निवेशे बहुलब्राह्मणगृहे सपात्रो धर्मो मया प्रज्ञापनीय इति प्रथमपारणं गृहस्थपात्रे परमान्नेन चकार. तत्र पंच दिव्यानि प्रादुर्भूतानि, यथा—

चेलोत्क्षेपः १, गंधोदकपुष्पवृष्टिः २, दुंदुभिनादः ३, व्योम्नि अहो दानमहो दानमित्याघोषणा ४, वसुधारावृष्टिश्चेति ५. अद्धतेरसकोडीओ। उक्कोसा तत्थ होइ वसुहारा ॥ अद्धतेरसलक्खा। जहणिया होइ वसुहारा ॥ १ ॥ विहरन् स्वामी मोराकसन्निवेशे ययौ, तत्र तापसाश्रमो विद्यते, तत्र च पितुर्मित्रं कुलपतिर्वर्तते. ते बाहुः प्रसारितः, स्वामिनापि पूर्वाभ्यासाद्बाहुः प्रसारितः. तस्य

प्रार्थनया स्वामी तत्रैकां रात्रिमवसत्. तस्याग्रहाच्च स्वामी अष्टौ मासान् विहृत्य वर्षाचतुर्मासीं स्थातुं तत्रागमत्, तेनार्पिते उटजे च वर्षाकालं स्थितः. तस्याप्रीतिं दृष्ट्वा चार्धमासादनंतरं स्वामी ततो निर्गत्य अस्थिकग्रामं समाजगाम. तत्र चतुर्मासीं स्थितः पारणके पृथ्वीं पावयन् विचरतिस्म. तदानीं पितुर्मित्रं सोमब्राह्मणः समागत्य स्वामिनं प्रार्थयामास. हे स्वामिंस्त्वं संवत्सरं यावद्दानमदाः, अदरिद्रं च जगज्जज्ञे मद्भाग्यमेकं मां विना, अतो मे किंचिद्देहि? अहं दारिद्र्यपीडितो भवच्छरणमागतोऽस्मीति. कारुण्यात्स्वाम्युवाच भो विप्र! त्यक्तसंगोऽस्मि संप्रति, तथाप्यंशस्थितस्यास्य वाससोऽर्धं गृहाण? एवमुक्त्वा वासोऽर्धं दत्वा स तोषितः, तदर्धमादाय च स निजगृहं ययौ. एवं स्वामिना पूर्वसंगतिकविप्राय दानं दत्तमिति चरित्रं कथितं, अथावशिष्टं किंचिदुच्यते यथा—ततो महोपसर्गान् सहमानः श्रीवीरो दीक्षादिनादारभ्य सपक्षां सार्धद्वादशाब्दीं महातपांस्यनेकानि निरन्नजलचतुर्थवर्जितानि चकार. क्रमेण विहरन् स्वचरणन्यासैः पृथ्वीं पावयन् स जृंभकं सन्निवेशं प्राप. तत्र ऋजुवालुकानदीतीरे श्यामाकगृहिणः क्षेत्रे सालतरोस्तले अव्यक्तचैत्यस्यासन्ने सिंधुरोधस्युत्तरे विजयमुहूर्ते षष्ठतपस उत्कटिकासनस्थितस्य जीर्णरज्जुवद्घनघातिकर्मणि त्रुटिते हस्तोत्तरा·

स्थिते चंद्रे शुक्लवैशाखदशम्यां चतुर्थे यामे विभोः केवलज्ञानमुत्पेदे. कंपितासनाः सुरेंद्रा देवसं· घपरिवृताः समागत्य समवसरणं विदधिरे. तत्र क्षणमात्रं देशनां दत्वा श्रीअपापानगर्यां द्वितीयं समवसरणमकरोत्. तस्मिन् समवसरणे च गणधरस्थापनाचतुर्विधसंघस्थापनाद्यकरोत्. प्रभोः परिवा· रे एकादश गणधरा अभवन्, तथा चतुर्दशसहस्रसंख्याः साधवोऽभूवन्, ष-त्रिंशत्सहस्रसंख्याः सा· ध्व्यः, एकोनषष्टिसहस्रयुगेकलक्षमिताः श्राद्धाः, अष्टादशसहस्राधिका त्रिलक्षी श्राद्धीनां बभूव. न· वसु गणभृत्सु मुक्तिं यातेषु सगौतमसुधर्मा भगवान् ज्ञातनंदनस्त्रिदशैरावृतोऽपापामगात्, तत्रांतिमां च चतुर्मासीं स्थितवान्.

अथेशः कार्तिकेऽमावास्यापश्चिमे क्षणदाक्षणे निर्वाणसमयं ज्ञात्वा षोडशप्रहरात्मिकीं देश· नां प्रारेभे. ततः स्वासनकंपात् सर्वे सुपर्वेशाः समाजग्मुः. तेषां मध्यात् साश्रुदृग् सुधर्मेंद्रो व्यजि· ज्ञपत्, यथा हस्तोत्तराख्यं त्वज्जन्मनक्षत्रं, तत्र भस्मग्रहो लग्नः, अतः स्वामिन् मुहूर्तमात्रं प्रतीक्षस्व? यत एष दुर्ग्रहो द्विसहस्रवर्षस्थितिकस्तव शासनं पीडयिष्यति. ततस्तं देवेंद्रं युक्त्या प्रतिबोध्य पर्यं· कासनभाग् तृतीयशुक्लध्यानाभियोगात् शेषकर्मेंधनानि भस्मीकृत्य स्वातिनक्षत्रे स्वामी परमं पदं प्रा·

प. त्रैलोक्येऽपि हि सात्विकेष्वनवधिः प्राग्जन्ममोक्षावधि । श्रीमद्वीरजिनेश्वरस्य चरितं को वक्तुमीशोऽखिलं ॥ ध्वस्ताघस्य तथापि हि प्रवचनांभोधेर्गृहीत्वा लवं । किंचित्कीर्तितमीदृशं ननु मया स्वान्योपकारेच्छया ॥ १ ॥ इति श्रीवीरचरित्रं लेशत उक्तं. एवंविधः श्रीमान् महावीरदेवाधिदेवो देवासुरमनुजपर्षदि दान १ शील २ तपो ३ भाव ४ भेदरूपं चतुर्विधं धर्ममाख्यातुकामः प्रथमं दानं प्ररूपितवान्. तस्य दानस्य त्रैविध्येऽपि धार्मिकदानप्रशंसायां भगवद्वचनसंमतिमाह—

॥ मूलम् ॥—धम्मत्थकामभेया । तिविहं दाणं जयम्मि विक्खायं ॥ तहवि हु जिणिंदमुणिणो । धम्मियदाणं पसंसंति ॥ २ ॥ व्याख्या—धर्मार्थकामभेदात् त्रिविधं दानं जगति विख्यातं वर्तते. तत्र यद्धर्मार्थं साधुभ्यः साधर्मिकेभ्यो वा दानं तद्धर्मदानं १. अर्थदानं स्वार्थाय यत्स्वकीर्तिकारि याचकेभ्यः स्वभृत्येभ्यो वा दानं तदर्थदानं २. काममोहितपुमान् कामार्थं यत्स्वकलत्रपण्यांगनादिभ्यस्तदर्थं परेभ्यो वा ददाति तत्कामदानमुच्यते ३. 'तह विहुत्ति' तथापि हु निश्चितं 'जिणिंदमुणिणोत्ति' जिनेंद्रो वीरजिनो, मुनयो गणधराद्यास्तत्र 'धम्मियदाणंति' धार्मिकदानं 'पसंसंतित्ति' प्रशंसंति वर्णयंतीति गाथाक्षरार्थः ॥ २ ॥ तत्कथं वर्णयंतीत्याकांक्षायां गा-

थाद्वयमाह—

॥ मूलम् ॥—दाणं सोहग्गकरं । दाणं आरुग्गकारणं परमं ॥ दाणं ज्ञोगनिहाणं । दाणं ठाणं गुणगणाणं ॥ ३ ॥ व्याख्या—दानं धार्मिकदानमित्यर्थः, सौज्ञाग्यकरं ज्ञवति, आरोग्यकारणं नीरोगतायाः परमं प्रकृष्टं कारणं ज्ञवति. दानं दत्तं सत् ' ज्ञोगनिहाणं ' ज्ञोगस्य पंचेंद्रियसुखस्य निधानं निधिर्ज्ञवति. दानं गुणगणानां स्थानमाश्रयो ज्ञवति. गुणानां गणा गुणगणास्तेषां गुणगणानामित्यक्षरार्थः. ॥ ३ ॥

॥ मूलम् ॥—दाणेण फुरइ कित्ती । दाणेण य होइ निम्मला कंती ॥ दाणावज्जिअहिअओ । वयरीवि हु पाणीयं वहइ ॥ ४ ॥ व्याख्या—दानेन कीर्तिः स्फुरति, यतो दानं हि कीर्त्याः कारणं वर्तते, कीर्तिकामः पुमान् दानं ददाति, दानेन च ज्ञवति निर्मला कांतिः, शरीरकांतेः कारणमपि दानमेव. दानावर्जितहृदयो दानेन वशीकृतहृदयो वैर्यपि पुमान् हु निश्चितं ' पाणीयं ' पानीयं वहत्यानयति, सेवकीज्ञूय चरतीत्यर्थः. ॥ ४ ॥ एवं दानं वर्णयित्वा प्रेक्षावतां प्रवृत्तये तत्फलं दृष्टांतेन दृढयन्नाह—

॥ मूलम् ॥—धणसत्थवाहजम्मे । जं घयदाणं कयं सुसाहूणं ॥ तक्कारणमुसभजिणो । तेलुक्कपियामहो जाओ ॥ ५ ॥ व्याख्या—धनसार्थवाहजन्मनि ऋषभदेवपूर्वभवे ' जं घयदाणंति ' यद् घृतदानं कृतं सुसाधूनां श्रीधर्मघोषसूरिप्रभृतीनां ' तक्कारणत्ति ' तस्मात्कारणादित्यत्र प्राकृतत्वाद्विभक्तिपरिणामः, ' उसहजिणोत्ति ' ऋषभजिनः प्रथमतीर्थेशः ' तिलुक्कत्ति ' त्रैलोक्यपितामहो जातः, पितुः पिता पितामहो जातोऽभूदिति गाथार्थः. ॥ ५ ॥ विस्तरार्थस्तु कथानकादवसेयः. तत्र प्रथमतः पूर्वभवाख्यानपूर्वं श्रीऋषभनाथचरित्रं यथा—

आदौ सार्थपतिर्धनो १ मिथुनकः २ सौधर्मकल्पे सुरः ३ । खेटेशश्च महाबलो ४ दिविषदीशाने ५ नराधीश्वरः ६ ॥ युग्मी ७ च त्रिदशेश्वरः ८ सुभिषजः पुत्रो ९ ऽच्युते निर्जरः १० । चक्री ११ सर्वसुरोत्तमः १२ प्रथमकोऽर्हन्नाभिभूर्वः श्रिये ॥ १ ॥ प्रत्यग्विदेहेषु क्षमामुकुटोपमं क्षितिप्रतिष्ठितं नाम पुरमस्ति. तस्मिन्नगरे समस्तराजमंडलीसेव्यमानचरणः क्षत्रशिरोमणिः प्रसन्नचंद्रनामा राजास्ति, तत्र पुरे लक्ष्मीनिवासभवनं धननामा सार्थवाहोऽस्ति. सोऽन्यदा वसंतपुरे नगरे व्यवहारार्थं गंतुमना यात्रार्थिनः समाह्वातुं डिंडिमं वादयामास. भो भो लोकाः! अशंबलस्य शंबलं,

अछत्रस्य छत्रकं, अवाहनस्य वाहनं; तथा यस्य यद्विलोक्यते तस्य तद्ददामि, क्षेमेण वसंतपुरं प्रा·
पयामि चेति. ततः सुमुहूर्ते सुलग्ने मंगलध्वनिपूर्वकं शिरसादृतान् बिभ्रन् पुरीपरीसरावनौ पटकुट्यां
कृतावासः स तस्थौ. अत्रांतरे वसंतपुरं गंतुकामं श्रीधर्मघोषमुनीश्वरं समालोक्य सार्थवाहस्तं पृष्ट·
तिस्म. भो मुनयो यूयं किमर्थमत्रागताः? वाचंयमशिरोमणिस्तमुवाच, भो सार्थेश! त्वया समं व·
यं वसंतपुरपत्तनं समेष्यामः. सार्थवाहेनोक्तं पादाववधार्यतां, भवतां च यत्किंचिदाहारादिकं विलो·
क्यते तद्याचनीयं. अत्रांतरे केनचित्पुरुषेण सार्थवाहपुरतो रसालफलसंभृतं स्थालं प्राभृतीकृतं. सा·
र्थवाहेन गुरोरग्रे मुक्तं प्रोक्तं च, भगवन्निदं गृहाण? मामनुगृहाण च? अहं भवद्भक्तितो धन्योऽ·
स्मि, यदस्मिन्नवसरे यूयमत्रागताः. तदानीं मुनिराह भो महाभाग! फलानि साधूनामकल्प्यानि,
साधवस्तानि नेछंति, अतोऽहमपि फलानि नेछामि. वयं सिद्धमन्नं प्रासुकं जलं च गृह्णामः. मुने·
रेतद्वचनं निशम्य विस्मयस्मेरमानसः सोऽवोचत्—

अहो कष्टमहो धैर्य—महो निःस्पृहता मुनेः ॥ एवं मुनीन् प्रशंसन् संभृतवाहनो धनेन ध·
नदोपमः स धननामा सार्थवाहो मुनिभिः सार्धं शुभशकुनैः प्रेर्यमाणो मार्गे चचाल. एवमविछिन्न·

प्रयाणैः प्रेर्यमाणः कतिचिद्दिनांते व्यतीतेषु ग्रीष्मर्तुषु वर्षाकालः समागात्, अविच्छिन्नधाराभिर्धाराधरो वर्षितुं लग्नः, यतः—पांथानां गच्छतामग्रे । प्राणद्रव्योत्तमर्णकैः ॥ नद्यो गतिनिषेधाज्ञा । रेखा इव कृता घनैः ॥ १ ॥ तदानीं स धनसार्थपतिः सार्थस्य कष्टं दृष्ट्वाटवीतटे सार्थनिवेशं चकार. सार्थपतौ तत्र स्थिते कियद्भिर्वासरैर्जनानां पाथेयानि त्रुटंतिस्म, ततश्च स सार्थलोकः कष्टे पतितः, कंदमूलफलवृत्तिं च कर्तुं प्रचक्रमे. एवं काले गच्छति वर्षर्तुप्रांते सार्थलोकचिंतया धनसार्थपतेर्निद्रा गता. ततो गतनिद्रः सार्थवाहो यामिन्याः पश्चिमे यामे स्वचित्ते चिंतयामास, अहो ते धन्याः साधवो ये मया सार्धं समागता अप्रासुकीकृतं पयोऽपि न पिबंति, तेषां मुनींद्राणां प्राणयात्रा कथं भविष्यतीति! अहो मम मंदभाग्यत्वं! अहो मम मौढ्यं! येन मया सार्धं समागतानामपि साधूनां चिंता न कृता. अथ प्रभाते तत्र गत्वा प्रासुकान्नपानैस्तेषां साधूनां चिंतां करिष्ये. एवं यावता स चिंतयति तावता सूर्योदयो जातः. जाते च सूर्योदये मंगलपाठकेनोक्तं, यथा—

अभूत् पिंगा प्राची रसपतिरिव प्राप्य कनकं । गतच्छायश्चंद्रो बुधजन इव ग्राम्यसदसि ॥ न दीपा राजंते द्रविणरहितानामिव गुणाः । क्षणक्षीणास्तारा नृपतय इवानुद्यमपराः ॥ १ ॥ मंगल-

पाठकस्येदं वचनं श्रुत्वा विधिवत्प्राभातिकं कृत्यं विधाय माणिभद्रनाम्ना मित्रेण सह चलितो गुर्वंतिके गतः, गत्वा वंदिता गुरवः, हृष्टमनाश्च स साधून् ददर्श. कथंभूतान्? कांश्चित्कायोत्सर्गपरान्, कांश्चिद्ध्यानबंधुरान्, कांश्चित्स्वाध्यायतत्परान्. कांश्चित्प्रत्युपेक्षापरान्. तान् सर्वान् प्रणम्य गुरोः पुरस्तादासीनो विनयावनम्रदेहो योजितकरकमलोऽसाववादीत. भो महानुभावाः! यूयं मम सार्थे सह समागताः, परं मया मंदभाग्येन शुश्रूषा न कृता, एष च ममापराधः सोढव्यः. अथ गुरुरभाषिष्ट भोः सार्थाधीश! त्वयास्माकं विरूपं न कृतं, किंतु हितमेव कृतं, यतः संसार इव दुर्लंघेऽस्मिन् कांतारे दुष्टकर्मभ्य इव चौरेभ्यो वयं रक्षिताः, यत्तव सार्थिका अस्माकमन्नपानादि प्रयछंति तत्त्वयैव दत्तं. धनोऽप्यूचे यूयं गुणिनः सर्वं गुणमयं मन्यध्वे, अथ कल्पनीयमाहारमादाय ममानुग्रहं कुर्वंतु, ममावासे मुनीन् प्रेषयत? ततो गुरुणा धनस्यानुग्रहकृते मुनिद्वंद्वं प्रेषितं. गृहागतं मुनिद्वंद्वं हृष्टोत्सर्पिवासनः सर्पिषा तत्प्रत्यलाभयत्. ततो धनेन तेन द्रव्यशुद्धभावशुद्धदानेन बोधिबीजमवापि. धर्मलाभाशिषं दत्वा मुनयोर्निवृत्तयोर्धनो धन्यं मन्यमानः पूर्णमनोरथः सुखेनास्थात्. साधू अपि तदन्नादिकं समादाय गुरुसन्निधौ जग्मतुः. अथापरेऽह्नि परिवारपरिवृतो धनो गुर्वंतिके समागात्.

गुरवोऽपि क्लेशनाशिनीं देशनां ददुः, यथा—

भक्तिः श्रीवीतरागे भगवति करुणा प्राणिवर्गे समग्रे । दीनादिभ्यः प्रदानं श्रवणमनुदिनं श्रद्धया सुश्रुतीनां ॥ पापापोहे समीहा भवभयमसमं मुक्तिमार्गानुरागः । संगो निःसंगचित्तैर्विषयविमुखता धर्मिणामेष धर्मः ॥ १ ॥ रागादिविजयी देवः । सच्चरित्रगुरुर्गुरुः ॥ प्राणित्राणप्रधानश्च । धर्मः सम्यक्त्वमुच्यते ॥ २ ॥ तत्त्वायमलंकारो । युज्यते पुरुषोत्तम ॥ आधातुं हृदये श्रीमन् । सम्यक्त्वं कौस्तुभः शुभः ॥ ३ ॥ एतद्धर्मं श्रुत्वा सम्यक्त्वं चांगीकृत्य धनो धन्यं मन्यमानो निजावासं गतः. प्रभाते माणिभद्रेण विज्ञप्तं, हे विभो प्रावृमतिक्रांता, इंद्रेण धनुर्विमुक्तं, वसुधाधवेन गृहीतं, तथा घनैर्नभस्त्यक्तं, बहलधूलिभिर्व्याप्तं, एवमनेके भावाः प्रकटीबभूवुः. सार्थेश एतदाकर्ण्य गुरुणा सार्धं मार्गे संचरन् क्षेमेण वसंतपुरं समाययौ. तत्र राज्ञा सन्मानितः स्वानि भांडानि विक्रीय प्रतिभांडान्युपादाय धर्मघोषमुनीश्वरं चापृच्छ्य कृतकृत्यः क्षेमेण प्रत्यावृत्तः क्षितिप्रतिष्ठितं पुरं प्राप. पूर्णायुर्मृतो धनः. इति प्रथमभवः.

अथ द्वितीयभवे उत्तरकुरुषु कल्पद्रुपूर्णसंकल्पो युग्मधर्मिषु जग्मिवान्. तुर्यभवेऽपरविदेहेषु

मंगलावतीनाम्नि विजये वैताढ्यशैले गंधारदेशे गंधसमृद्धके पुरे शतबलराट्पुत्रश्चंद्रकांतापट्टराज्ञीकुक्षिसंभवो महाबलनामा विद्याधरः संजज्ञे. क्रमेण वृद्धिं गतः पित्रा पाठितो यौवनस्थश्च पित्रा परिणायितः सुखान्यनुभवतिस्म. एवं सुखेन कालो याति. एकस्मिन् दिने स साध्वंतिके धर्मं श्रुत्वा वैराग्यवान् महाबलाय राज्यं दत्वा स्वयं दीक्षामंगीकृत्य तपांसि तप्त्वा दिवमासदत्. अथ स महाबलो राट् यौवनोन्मादमेदुरोऽज्ञातधर्मकर्मा स्वेच्छया राज्यसुखान्यनुभवन्नास्ते. अन्यदा महाबलः सदसि निविष्टः संगीतरसनिमग्नो यावता सभायां नाट्यं कारयति तावता मंत्रीशः स्वयंबुद्धो नाम्ना धर्मतत्वज्ञो नाट्यावसरे समागत्यैवमवादीत्. भो राजेंद्र! किं नाट्येन? सावधानो भव? तवायुर्मया पृष्टो गुरुरवादीत्. भवद्भर्तुर्मासमेकमायुर्वर्तते, तत् श्रुत्वा भीतो राट्, यतः—सा नत्थि कला तं नत्थि । ओसहं तं नत्थि किंपि विन्नाणं ॥ जेण धरिज्जइ काया । खज्जंती कालसप्पेण ॥ १ ॥ मंत्रिणोक्तं सावधानो भव? धीरत्वमवलंबस्व? पुण्ये प्रवर्तस्व? एकदिनपालितेऽपि चारित्रे जनो यदि मोक्षं नाप्नोति, परं वैमानिको भवत्येव, नात्र संदेहः, अथ मासमेकं पुण्यं कुरुष्व? मंत्रिवचसा राजा जिनप्रासादेऽष्टाह्निकोत्सवं करोतिस्म. ततो गुरुसमीपे दीक्षामुपादायानशनेन द्वाविंशतिदि-

नानि स्थित्वा मृत इति चतुर्थो भवः. ततः पंचमे भवे ईशानकल्पे श्रीप्रभाभिधाने विमाने ल-
लितांगाभिधो देवोऽभूत्, तस्य प्रिया स्वयंप्रभा. सा स्वयंप्रभा च्युता, तद्विरहे विलापं कुर्वन् ल-
लितांगो दृढधर्मदेवेन निवारितो यः पुरा मित्रमंत्रीशः स्वयंबुद्धोऽभवत. तेनोक्तं भो ललितांग!
सोऽहं मंत्री स्वयंबुद्धाभिधस्तव विरहे प्रव्रज्यैनां श्रियमाश्रितः. भो ललितांग! अवधिना विज्ञायाहं
तव कथयामि, यत्पुनरपि सा स्वयंप्रभा तव भविष्यति. श्रूयतां? धातकीखंडे प्राग्विदेहे नंदिग्रामे-
ऽतिदुर्गतो नागिलाख्यो गृहपतिर्विद्यते, तस्य नागश्रियां पत्न्यां पुत्रीषट्कादनंतरं सप्तमी पुत्री जा-
ता. तां दृष्ट्वोद्विग्नमानसो नागिलो वैराग्यान्नगरान्निर्गत्य दूरं गतः. तस्या दुर्भगत्वेन जने निर्नामि-
केति प्रसिद्धिरभूत. सा क्रमेण दारिद्र्येण सह वर्धिता यौवनोन्मुखी नभस्तिलकपर्वते दारुभारार्थ-
मगमत. तत्र सुरासुरनमस्कृतं युगंधरमुनिं दृष्ट्वा नत्वा तद्व्याख्यां श्रुत्वा संवेगमापन्ना जगौ. हे भ-
गवन्नस्मिन् संसारे भूयांसो दुःखिनः संति, परं मत्तो मंदभाग्याया दुःखाधिकः कोऽपि नास्ति. मु-
निनोक्तं हे वत्से! त्वं दुःखं मुधा धत्से, चतुर्गतिष्वपि संसारिजीवानां यानि यानि दुःखानि वर्तंते
तानि तानि श्रुतमात्राणि देहिनां हृदयं भिंदंति. अतोऽस्मिन् संसारसमुद्रे निपततां धर्म एव भु-

जालंबं धत्ते, धर्माराधनत एव देही चक्रवर्त्यादिपदवीं लभते, अतस्त्वमपि धर्मं विधेहि? यतः—
धर्मः कल्पद्रुमः पुंसां । धर्मः सर्वार्थसिद्धिदः ॥ धर्मः कामदुघाधेनु—स्तस्माद्धर्मो विधीयतां ॥ १ ॥
देहे द्रव्ये कुटुंबे च । सर्वसंसारिणां रतिः ॥ जिने जिनमते संघे । पुनर्धर्माधिकारिणां ॥ २ ॥
एवं तस्य त्रैलोक्यदर्शिनो मुनेरेतदुपदेशं श्रुत्वा निजदेहेऽप्युद्विग्ना गृहीतानशनाधुना वर्तते. अथ भो ललितांग! त्वं तस्याः स्वरूपं दर्शय? तथा कृते च सा तवानुरागिणी मृत्वा स्वयंप्रभादेवी भविष्यति. तेनापि तथा कृते पुनः सा स्वयंप्रभा जाता. तया सह तथैव भोगान् भुक्त्वा ललितांगदेवश्च्युतः. गतः पंचमभवः.

ततः षष्ठे भवे महाविदेहक्षेत्रे लोहार्गलपुरे सुवर्णजंघस्य राज्ञो लक्ष्मीपट्टराज्ञीकुक्षौ स ललितांगजीव उत्पन्नः. शुभस्वप्नेन सूचितः पुत्रो जातः, क्रमेण तस्य वज्रजंघ इति नाम दत्तं. स्वयंप्रभापि च्युत्वा पुंडरीकिण्यां नगर्यां वज्रसेनस्य चक्रिणो गृहे श्रीमतीनाम्नी सुताभवत्. सान्यदा प्रमदोद्याने क्रीडंती देवदानवैर्वंदितं केवलिनं मुनिं वीक्ष्य जातजातिस्मृतिर्जाता. सा श्रीमती पूर्वभवचेष्टितं सर्वं ज्ञात्वा निजधात्रेयीं पंडितां समाचख्यौ. पूर्वजन्मनीशानकल्पे ललितांगदेवप्रियाहं

स्वयंप्रभाभवं, स च मम च्यवनात्पूर्वं च्युतः, परं न ज्ञायते कुत्रोत्पन्न इति, अतोऽस्य तत्प्राप्तये य त्नं कुरु? पंडितापि सख्योक्तं वृत्तांतं श्रुत्वा पूर्वभवचरित्रं पट्टे लिखित्वांगणोपांते वज्रसेनस्य चक्रिणः सेवागतानां कुमाराणां सर्वेषामदर्शयत्. तं दृष्ट्वा वज्रजंघोऽपि जातजातिस्मृतिश्चिंतयति, अहो मम पूर्वभवः केन ज्ञानवता प्रोक्तः? अनया पंडितया च कथं पट्टे लिखितः? ततः पंडितायाः सर्वं वृत्तांतं ज्ञात्वा वज्रसेनश्चक्री वज्रजंघश्रीमत्योः पाणिग्रहणमकारयत्. ततो वज्रजंघः श्वशुरमापृच्छ्य लोहार्गलपुरं गतः, पित्रा च राज्ये निवेश्य स्वयं दीक्षा जगृहे. वज्रसेनोऽपि चक्री पुष्कलपाला-ख्यं पुत्रं राज्ये न्यस्य स्वयं दीक्षां गृहीत्वा तीर्थंकरो मुनिर्जज्ञे. अन्यदा पुष्कलपालक्ष्मापालं शत्रुभिरावृतं श्रुत्वा वज्रजंघोऽस्य साहाय्यं कर्तुं समाययौ. तत्र शत्रून् विनिर्जित्य श्रीमत्या सहितो यावता स निजं पुरं व्रजति, तावता स्वभ्रातरौ केवलिनौ मुनिसत्तमौ मार्गे मिलितौ, तौ नमस्कृत्य वज्रजंघश्चिंतयति, अहो मम मंदभाग्यता! अहो मम मतिहीनता! यदहं पितुरुच्छिष्टां लक्ष्मीं प्रासवान्, एतौ मम सोदरौ तु चारित्रसाम्राज्यं प्रापतुः. अतोऽधुनैव स्वपुरं गत्वा स्वसूनवे च राज्यं दत्वा चारित्राशनिनाहं कर्मद्रुमं भस्मीकरोमि. इति चिंतयित्वा स लोहार्गलपुरं गतः, प्रातः सूनवे

राज्यं दास्यामीति कृत्वा स रात्रौ श्रीमत्या समं सुप्तः. अज्ञातपरमार्थेन पुत्रेण राज्यलुब्धेन विषधू· मयोगेन घातितौ तौ मातापितरौ, इति षष्ठो भवः. सप्तमभवे वज्रजंघजीवस्तया श्रीमत्या दयितया सममुत्तरकुरुष्वेव युगलधर्मणोत्पन्नस्त्रिपल्यायुः. मृत्वा चाष्टमे भवे सौधर्मे कल्पे सुखैः प्रीणितौ तौ सुरौ जातौ. उक्तोऽष्टमो भवः. अथ नवमभवे जंबूद्वीपे महाविदेहे क्षितिप्रतिष्ठिते पुरे स सुविधे· वैद्यस्य सूनुर्जज्ञे. सत्कर्मकर्मठो जीवानंद इति नाम्ना स वैद्यकर्मविशारदोऽभूत्. तत्रैव नगरे ईशा· नचंद्रस्य राज्ञः कांतया कनकवत्या जातो महीधरनामा पुत्रोऽस्ति. १. तत्रैव नगरे सुनाशीरस्य मं· त्रिणो लक्ष्म्यां कांतायां जातः सुबुद्धिनामा पुत्रोऽस्ति. २. तत्रैव नगरे धनश्रेष्ठिनः शीलवत्यां प्रि· यायां जातो गुणरत्नाकरो गुणाकरनामा पुत्रोऽस्ति. ३. तत्रैव नगरे सागरदत्तस्य सार्थपतेरभयम· त्यां पत्न्यां जातः पूर्णभद्र इति नाम्ना पुत्रोऽस्ति. ४. श्रीमतीजीवः सौधर्मकल्पतश्च्युत्वा तत्रैव नग· रे ईश्वरदत्तस्य श्रेष्ठिनः केशवनामा पुत्रो बभूव. ५. एषां पंचानां समानगुणशालिनां जीवानंदेन वैद्येन समं मैत्र्यमभूत. अमीषां पंचानामेकीभूतानां वैद्यवेश्मनि स्थितानां माधुकरीं भिक्षां कुर्वन् साधुर्दृष्टिपथं ययौ. अकालान्नपानैः कुष्ठाभिभूतसर्वांगं तं मुनिं दृष्ट्वा राजपुत्रो महीधरकुमारो जी·

वानंदं वैद्यं धिगिति निंदन्नेवमवोचत्, किं ते शास्त्रकौशलं? किं ते ज्ञातृत्वं? यत्त्वमीदृशानां शरीरेऽपि निस्पृहानां साधूनां कुष्ठाभिभूतानां नोपकारं करोषि? अथ साधूनामुपकारकरणेनैव जन्मार्जितं पापमलप्रक्षालनाय. जीवानंदो जगाद भो राजेंद्रनंदन! त्वया युक्तमुक्तं, परं दीनारलक्षलक्षेणैकैकं वस्तु लभ्यते, तेषु लक्षपाकाख्यं तैलं मद्गृहे वर्तते, गोशीर्षचंदनं रत्नकंबलं च विलोक्यते.

तत् श्रुत्वा ते पंचापि मित्राणि कंचिन्महेभ्यमभ्येत्य गोशीर्षचंदनं रत्नकंबलं च मूल्येन ययाचिरे, यथा भो श्रेष्ठिन् दीनारलक्षाभ्यां गोशीर्षकंबलौ देहि? श्रेष्ठिनोक्तं किमर्थं? तैरुक्तं मुनेर्वैयावृत्त्यर्थं. तत् श्रुत्वा मुदितमानसः श्रेष्ठी मूल्यं विनैव कंबलचंदने तेषां कुमाराणामर्पयामास. ततस्ते कुमाराः शुभशकुनैः प्रेरिता जीवानंदेन सहिता मुनेरनुपदं ययुः. बाह्योद्याने न्यग्रोधतरोरधः कायोत्सर्गस्थं तं मुनिं ते प्रणमंतिस्म. वैद्यपुत्रश्च तस्य मुनेर्वैयावृत्यं करोति यथा—ततो मुनिमनुज्ञाप्य! तैलेनाभ्यंग्य वैद्यसूः ॥ विलिप्तचंदनं देहे। क्षिप्तवान् रत्नकंबलं ॥ १ ॥ तैलतापेन तेनाथ। व्याकुलास्तत्कलेवरात ॥ निःसृत्य शीतले लीनाः। कृमयो रत्नकंबले ॥ २ ॥ अथ गोशव·

मानीय । तस्योपरि दयापरः ॥ कंबलात्पातयामास । कृमीन् वैद्यः कृती स्वयं ॥ ३ ॥ गोशीर्षचंद-
नस्पंदै—रिंदुनिस्पंदसुंदरैः ॥ शमिनः शमयामास । संतापव्यापदं मुदा ॥ ४ ॥ त्रीन् वारानेवं कृ-
त्वा सर्वान् कृमीन् त्वग्मांसास्थिगतान् पातयामास. केश्चिद्दिनैः स शमिस्वामी चामीकरछविर्जातः,
तैः क्षमितश्च स पुनर्नववपुर्विहाराय ययौ. स कंबलचंदनदायी वणिग् तद्दानवैनवादंतकृत्केवलि-
नावं तस्मिन्नेव नवेऽव्रजत्. तेऽपि कंबलगोशीर्षशेषं विक्रीय तल्लब्धकांचनलक्षद्वयेन जिनप्रासादं
कारयामासुः. कियता कालेन व्रतं लात्वा ते षडपि पूर्णायुषो मृत्वा दशमनवेऽच्युते कल्पे द्वाविं-
शतिसागरायुषस्त्रिदशश्रियं शिश्रियुः.

एकादशे नवे ते षमप्यच्युताच्च्युताः, जंबूद्वीपे प्राग्विदेहे लवणवारिधेस्तटे पुष्कलावतीवि-
जये पुंमरीकिण्यां नगर्यां वज्रसेनस्य राज्ञो धारिण्यां सहचारिण्यां पुत्रो जीवानंदनिषग्जीवश्चतुर्द-
शमहास्वप्नसूचितो वज्रनानानिधो जज्ञे. तस्य वज्रनानस्य चक्रिणः पूर्वसहचरास्ते चत्वारोऽपि नृ-
पामात्यश्रेष्टिसार्थेशपुत्राः क्रमेण बाहुसुबाहुपीठमहापीठाख्याश्चत्वारोऽपि बांधवाः संजज्ञिरे. केशवजी-
वोऽपि सुयशोनामा राजपुत्रक आसीत्. प्राग्नवस्नेहतः सोऽपि वज्रनानमशिश्रियत्. एवं ते षमपि

मित्राण्येकीभूतानि सुखमनुबभूविरे. एकस्मिन् दिने लोकांतिकैर्विज्ञप्तो वज्रसेनो राट् सांवत्सरिकं दानं दत्वा वज्रनाभाभिधे पुत्रे राज्यं न्यस्य चारित्रं प्रतिपद्य मनःपर्यायज्ञानमासदत्. ततो वज्रसेनजिनस्य केवलं वज्रनाभस्य च चक्रं सममेवोदपद्यत. वज्रसेनस्य देवेंद्रैः केवलमहिमा चक्रे, चक्रस्याष्टाह्निकोत्सवं वज्रनाभश्चक्रे. ततोऽसौ देशसाधनाय विनिर्गतः पुष्कलावतीविजयं विजित्य प्राप्तचक्रिपदो वज्रनाभश्चक्री धर्मकर्माणि निर्ममे. अन्यदा जातवैराग्यो नृपः सुते राज्यं न्यस्य चतुर्भिर्बंधुभिः सह सुयशाराजपुत्रेण च सह दीक्षां जगृहे. वज्रसेनजिनो भवोपग्राहिकर्माणि क्षिप्त्वा मोक्षं गतः. द्वादशांगधरोऽनेकलब्धिमान् वज्रनाभमुनिराचार्यपदे स्थापितश्च. एकादशांगधराः पंचापि ते गुरुणा सार्धं विहरंतिस्म. अथ वज्रनाभमुनिरर्हद्भक्तिप्रभृतिविंशतिस्थानकैराराधितैस्तीर्थकृत्कर्म निर्ममे. बाहुः साधुः पंचशतसाधूनामशनपानादिदानेन चक्रिपदं संदधे. सुबाहुसाधुस्तु वैयावृत्त्यपरो बाहुबलं समुपार्जयत्, वज्रनाभमुनींद्रस्तयोः प्रशंसां चक्रे, पीठमहापीठावीर्ष्यावंतौ मायामिथ्यात्वयोगतः स्त्रीभावफलमुपार्जयतां; क्रमात्ते षडपि पूर्वलक्षान् दीक्षां पालयित्वा मृत्वा च द्वादशभवे सर्वार्थसिद्धिसौख्यं त्रयस्त्रिंशत्सागराण्यनुभवंतिस्म. इति पूर्वभवाः ॥ १२ ॥

अथ त्रयोदशभवे श्रीवज्रनाभस्य जीवस्त्रयस्त्रिंशत्सागराण्यायुर्भुक्त्वा सर्वार्थसिद्धितश्च्युत्वा कृ-
ष्णाषाढचतुर्थ्येऽह्नि उत्तराषाढास्थिते चंद्रे श्रीनाभिकुलकरपत्न्याः श्रीमरुदेवायाः कुक्षाववातरत्, प्र-
भोस्तत्रावतारे भुवनत्रयं क्षणं ध्वस्तध्वांतमभूत्, तदानीं मरुदेवेमान् चतुर्दश स्वप्नानवालोकयत्, य-
था—वृषेभसिंहश्रीदाम—चंद्रादित्यान् ध्वजं घटं ॥ सरोवार्धिविमानानि । रत्नौघज्वलितानलौ ॥
॥ १ ॥ इमान् चतुर्दश महास्वप्नान् दृष्ट्वा जागरिता सा समागत्य श्रीनाभेरचीकथत्, सोऽप्युवाच
ते सुतो महान् कुलकरो भावी, ततोऽप्यासनकंपेन समागतो शक्रो मरुदेव्याः पुरतः स्वप्नार्थं ज-
गौ, तथान्येऽपि सुरेश्वरा मरुदेवीं नमस्कृत्यामंदानंदमेदुरा निजं निजं स्थानं जग्मुः. तद्दिनादार-
भ्य रत्नगर्भा निधानमिव मरुदेवी गर्भं बभार, क्रमेण परिपूर्णेषु दिनेषु श्यामे चैत्राष्टमीदिने उत्त-
राषाढास्थिते चंद्रे शुभलग्ने वहमाने मरुदेवी युगलधर्मिणं सुतरत्नमसूत, तदा सुखवातैर्वातं, ना-
रकैर्मुदितं, जगत्त्रये तेजोऽभूत, तथा दिवि दुंदुभयो नेदुः. कंपितासनाः षट्पंचाशद्दिक्कुमार्यः स-
मभ्येत्य विधिवत्सूतिकर्माणि चक्रिरे, तथैव कंपितासनाश्चतुःषष्टिसुरेशाः समागताः, तैरपि विधिपु-
रस्सरं जिनं मेरुमस्तके नीत्वा जन्माभिषेकश्चक्रे. अथ शक्रो वृषभरूपेण स्नपनं विधायारात्रिकं मं-

गलप्रदीपं कृत्वा तं समानीय मातृसमीपे मुक्त्वा स्वर्णरत्नवृष्टिं विधाय बाढस्वरेणैवमवोचत्, यथा—

जिनस्य जिनमातुर्वा । योऽवद्यं चिंतयिष्यति ॥ तन्मूर्धा शतधा भावी—त्युच्चैर्गीरमुदीर्य सः ॥१॥
धातृकर्मप्रपंचाय । तत्पंचाप्सरसो हरिः ॥ आदिदेश सदेशस्थाः । शश्वद्विश्वत्रयीगुरोः ॥ २ ॥

एवं सर्वे सुरेश्वराः श्रीजिनस्य महिमानं विधाय नंदीश्वरेऽष्टाह्निकां कृत्वा स्वस्थानमगुः, पूर्वं स्वप्ने ऋषभदर्शनादूरुस्थऋषभचिह्नत्वाच्च पितरौ प्रभोः ऋषभ इत्याख्यां चक्रतुः, तद्युग्मजन्मजाताया धन्यकन्यायाः सुमंगलेति नाम चक्रतुः, स्वामिनो जन्मतो वत्सरे संपूर्णे जाते सौधर्मेंद्रः सेक्षुयष्टिः पुरो भूत्वा स्वामिंस्तव रोचते? इत्युक्त्वेक्ष्वाकुवंशं कृत्वेंद्रः स्वस्थानमगमत्. ततःप्रभृति विभुर्वर्धमानो दिव्यैरुत्तरकुरूद्भवैः फलैरप्रीयत. एवं क्रमेण वर्धितः पंचशतधनुर्देहमानो देवदेवीगणपरीवृतो युवतीजननयनमनोहारियौवनं प्राप, एकस्मिन् दिने कश्चिन्मिथुनकस्तालफलेन हतो मृतः, तद्युग्मजाता बालिकान्ययुगलैर्नाभयेर्पिता, सा सुनंदेति नाम दत्वा पुत्रीवत्पालिता. प्रभुरवधिज्ञानेन त्र्यशीतिपूर्वलक्षाणि यावद्भोगफलोदयं ज्ञात्वा शक्रकृतोत्सवो रतिप्रीतिनिभे सुमंगलासुनंदे पर्यणैषीत.

ऋषभदेवस्ताभ्यां सार्धं किंचिदूनषट्पूर्वलक्षाणि सुखान्यनुभवतिस्म. सर्वार्थसिद्धितश्च्युतौ बाहुपीठयोर्जीवौ सुमंगला गर्भेऽधात्. तथा—सुनंदापि कृतानंदा । तदानीमुदरे दधौ ॥ तौ सुबाहुमहापीठौ । तत एव दिवश्च्युतौ ॥ १ ॥ परं सुमंगलादेवी चतुर्दशस्वप्नांश्चक्रभृज्जन्मसूचकान् दृष्ट्वा जागरिता. शुभे दिवसे च युग्मजातयोस्तयोरभिधाने इत्यभूतां, सुतो भरतनामेति. सुता च ब्राह्मीनाम्नीति. सुनंदा बाहुबलिनं सुंदरीं चाजीजनत्, पुनरेकोनपंचाशत्पुत्रयुग्मानि सुमंगलासूत. एवं सुखान्यनुभवतः स्वामिनो विंशतिपूर्वलक्षाणि जग्मुः. कलिकदर्थितैर्लोकैर्विज्ञप्तो नाभिराट्, तदा राज्यदानाय ऋषभं तैः सार्धं स प्रेषयामास. तेऽपि स्वामिनमेकत्र संस्थाप्य जलार्थं गताः, तदानीमेवासनकंपेन शक्रः समागात्, तत्र महांतमेकं मंडपं सिंहासनयुक्तं कृत्वा तत्र स्वामिनं निधाय देवैः परिवृतः शक्रस्तीर्थोदकै राज्याभिषेकं चक्रे. तत्र देवदूष्यवस्त्रैरावृतश्चंदनादिभिर्विलिप्तः कुसुमाभरणादिभिः पूजितः स्वामी पालके विमाने देवराज इव राजते. युग्मान्यपि पद्मपात्रैः पानीयमानीय सर्वत्र भूषितं प्रभुं दृष्ट्वा तत्पादयोर्जलं चिक्षिपुः. ततः शक्रस्तानि विनीतानि ज्ञात्वा तत्र विनीताख्यां नगरीं धनदेनाचीकरत. अथ स्निग्धरूक्षकाले तरुषु स्वयमग्निरुत्पन्नः. अथ स्वामी

लेख्यादिका द्विसप्ततिकलाश्चतुःषष्टिमहिलागुणान् शिल्पशतं च प्रजाहिताय्योपदिशति. एवं त्रिषष्टि लक्षपूर्वाणि विभो राज्यं कुर्वाणस्य व्यतीतानि. अथ स्वामिनं वैराग्यवासनावासितमानसं ज्ञात्वा लोकांतिकदेवा इति विज्ञपयामासुः. हे नाथ! यथा प्रथमं राज्यं प्रवर्तितं तथा प्रथमं धर्मतीर्थं प्रवर्तय? तत् श्रुत्वा श्रीऋषभो भरतं समाकार्य कथयामास, हे वत्स! राज्यं गृहाण? वयं संयमं गृहीष्यामः. भरतोऽवोचत्—

पित्रोः पुरो निषण्णस्य । या शोभा जायते सुते ॥ उच्चैः सिंहासनस्थस्य । शतांशेनापि सा कुतः ॥ १ ॥ इत्याद्युक्तवंतमपि भरतं संबोध्य स राज्येऽस्थापयत्. बहलीराज्ये बाहुबलिनं संस्थाप्यान्येषां पुत्राणां च राज्यानि दत्वा सांवत्सरिकदानं चापि दत्वा सुदर्शनां शिबिकामारूढो देवसंघपरिवृतो भरतादिभिश्च परिवृतः प्रभुः सिद्धार्थवनमागमत्. शिबिकातः समुत्तीर्य कंकेल्लिपादपाधोभागे विभुरलंकारानत्यजत्. ततो विभुश्चतुर्मुष्ट्या केशानुच्चखान. पंचम्या मुष्टिकया यावल्लोचं करोति तावद्वातैर्वातं, सा मुष्टिर्द्विधाभूय द्वयोरंसयोरुपरि भूयसा वेणीव शुशुभे. संसाराब्धिं तरीतुमेषांसे विलग्ना शैवललतेव शोभते. पुनः कथं? यथा—तपोध्यानाग्निना प्रज्वालितानि यानि कर्मेंधनानि

तेभ्यः कर्णाभ्यां विनिर्गता धूमरेखेव रेजे. तस्मिन् समये शक्रः स्वामिस्कंधे देवदूष्यं न्यवेशयत. 'करेमि सामाईयमिति' कृत्वा चतुःसहस्रसंख्यैर्नृपैर्युतः सिद्धनमस्कारं कृत्वा कृताष्टमतपाश्चैत्रस्याष्टम्यां पश्चिमे यामे उत्तराषाढास्थे चंद्रे व्रतमुपाददे. व्रतग्रहणानंतरं वर्षांते श्रेयांसगृहे इक्षुरसेन वैशाखशुक्लतृतीयायां प्रभोः पारणकमभूत्. तत्र पंच दिव्यानि संजातानि. ततः प्रभृति साक्षयतृतीयेति पर्वत्वेन विश्रुता जाता. नृपांगजः श्रेयांसः श्रेयस्कृते तत्र प्रभोः पादयुतं रत्नपीठं चकार. एवमार्यानार्यदेशेषु विहरमाणो भगवानयोध्यामहापुर्यासन्नशाखापुरे पुरिमतालाख्ये समागात. दीक्षादिनादारभ्य वर्षसहस्रांते फाल्गुने मासि कृष्णैकादश्यां तिथौ उत्तराषाढास्थे सितदीधितौ शुक्लध्यानघ्नो जिनः केवलज्ञानमवाप. ततश्चासनकंपेन चतुःषष्टिसुरेशैः कृते समवसरणे रत्नचीकररजतकृतप्रवरप्राकारे वरे सिंहासने स्थितो भगवान् सुरासुरमनुजपर्षदि यावच्चतुर्धा धर्ममाचष्टे. तावत् केवलज्ञानवर्धापनिकया वर्धितो भरतश्चक्रोत्पत्तिवर्धापनिकयापि वर्धितः. ततः पूर्वं चक्रोत्पत्तिमहोत्सवं तातज्ञानोत्पत्तिमहोत्सवं वा करोमीति संशयानंतरमिहपरलोकहितत्वात्पूर्वं तातः पूज्य इति कृत्वा भरतो मातरं मरुदेवीं प्रत्यागत्य विज्ञपयति. हे स्वामिनि! आगच्छ? तव सुतर्द्धिं दर्शयामीति.

ततः स्वामिन्यपि पौत्रेण सह गजारूढा तत्र गता. स्वामिनः समवसरणादिश्रियं दृष्ट्वाऽनित्यभावनया केवलं लब्ध्वा क्षपकश्रेणिमारूढा सा मोक्षमगमत्. तच्छरीरं च त्रिदशैः सत्कृत्य क्षीरनीरधौ निदधे. तद्दिनादारभ्य लोके मृतकपूजनं प्रवृत्तं. समवसरणे समागतो भरतः स्वामिनो देशनां शृणोतिस्म, यथा—

दानं सुपात्रे विशदं च शीलं । तपो विचित्रं शुभभावना च ॥ भवार्णवोत्तारणयानपात्रं । धर्मं चतुर्धा मुनयो वदंति ॥ १ ॥ तवसंजमेण मुक्खो । दाणेण य हुंति उत्तमा भोगा ॥ देवच्चणेण रज्जं । अणसणमरणेण इंदत्तं ॥ २ ॥ इत्यादि साधुधर्मं श्राद्धधर्मं चोपदिश्य स्वामिना गणधरस्थापना संघस्थापना च कृता. तत ऋषभजिनो भव्यान् प्रतिबोधयन् दीक्षाकालादारभ्य पूर्वलक्षं यावत्पृथिव्यां विहृत्य स्वस्य निर्वाणसमयं ज्ञात्वाष्टापदं गिरिं ययौ. तत्र स जिनः साधूनां दशभिः सहस्रैः सह पादपोपगममनशनं प्रत्यपद्यत. ततो माघकृष्णत्रयोदश्यां पूर्वाह्णे अभीचिस्थे चंद्रे प्रक्षीणकर्मा भगवान् परित्यक्ततनुत्रिकः सिद्धानंतचतुष्क एकेन समयेन मुक्तिमगमत्. स्वामिना सार्धं दश सहस्राणि साधूनां मुक्तिं ययुः. प्रथममयमुदारां प्राप्य सम्यक्त्वलक्ष्मीं । तदनु मनुजवर्गस्व-

गसाम्राज्यलक्ष्मीं ॥ अथ निरुपमसम्यग्ज्ञानचारित्रलक्ष्मीं । त्रिभुवनपतिराप श्रेयसीं शर्मलक्ष्मीं ॥१॥
एतेन श्रीऋषभदेवचरित्रदिग्मात्रकीर्तनेन ' धणसत्थवाहजम्मे ' इति प्रपंचितं. इति श्रीऋषभनाथ-
चरित्रं समाप्तमिति. अथाभयदानं दर्शयन् तद्दृष्टांतमाह—
॥ मूलम् ॥—करुणाइ दिन्नदाणो । जम्मंतरगहियपुन्नकिरिआणो ॥ तित्थयरचक्किरिद्धिं ।
संपत्तो संतिनाहोवि ॥ ६ ॥ व्याख्या—' करुणाइत्ति ' करुणया पारापताय ' दिन्नं ' दत्तं दानं
जीवितदानं येन स तथा; अत एव ' जम्मंतरेत्ति ' जन्मांतरे, एकस्माज्जन्मनोऽन्यज्जन्मांतरं त-
स्मिन् जन्मांतरे पूर्वभव इत्यर्थः. गृहीतमंगीकृतं ' पुन्नकिरिआणोत्ति ' पुण्यमेव क्रयाणकं येन स
तथा. तेन कारणेन ' तित्थयरत्ति ' षोडशतीर्थंकरः पंचमचक्री च तयोः ऋद्धिं लक्ष्मीं ' संपत्तोत्ति '
संप्राप्तः शांतिनाथोऽपि. इदं पूर्वभवसंचिताभयदानफलमिति गाथाक्षरार्थः ॥ ६ ॥ विस्तरार्थस्तु क-
थानकादवसेयः, तत्कथानकं च द्वादशभवाख्यानपूर्वकं कथ्यते यथा—श्रीषेणो नृपतिः १ कुरौ
मिथुनकः २ सौधर्मकल्पे सुरो ३ । वैताढ्येऽमिततेजखेचरपति ४ र्देवोत्तमः प्राणते ५ ॥ रामः श्री-
अपराजितो ६ ऽच्युतपति ७ र्वज्रायुधो ८ निर्जरो । ग्रैवेये ९ नृपति १० स्त्वनुत्तरसुरः ११ शांतिः

१२ सतां शांतये ॥ १ ॥ तत्राद्यभवः कथ्यते यथा—इहैव जंबूद्वीपे भरतक्षेत्रे रत्नपुरं नाम पत्तनमस्ति. तस्मिन् पत्तने न्यायधर्मैकनिपुणः श्रीषेणनामा भूपतिरभूत्. तस्य वामांगहारिण्यौ शीलालंकारधारिण्यौ द्वे भार्ये स्तः, एकाऽभिनंदिता १ द्वितीया शिखिनंदिता च २. तयोर्मध्ये आद्या प्रेयसी ऋतुस्नानानंतरं सुखशय्यायां सुप्ता समधातुशरीरा सती यामिन्यां द्विप्रहरे स्वप्नमध्ये निजोत्संगसंगिनौ मयूखशालिनौ सूर्यचंद्रमसौ ददर्श. तद्दर्शनेन राज्ञी हर्षप्रकर्षं दधौ. ततस्तया तन्निवेद्य तोषितो राजा तत्फलं कथयति, हे देवि! कुलोद्योतकरौ तव प्रवरौ पुत्रौ भविष्यत इति. तद्दिनादारभ्य सा गर्भद्वयं दधती नितरां शुशुभे. ततः संपूर्णसमये तया पुत्रद्वयं सुषुवे. दशाहिकामतिक्रम्य तयोरिंदुषेण १ बिंदुषेणश्चेति नाम विनिर्ममे. तौ द्वावपि स्वजनैर्लाल्यमानौ क्रमेणाष्टवार्षिकौ जातौ. कलाचार्यसमीपे मुक्तौ पाठितौ क्रमेण यौवनं प्राप्तौ.

अन्येद्युः श्रीविमलबोधसूरयः पृथिव्यां विहरंतस्तत्र समागता निरवद्यस्थाने च स्थिताः. ततः सूरीणामागमनं निशम्य तद्वंदनार्थं श्रीषेणनृपतिः सपरिच्छदो ययौ. तत्र गत्वा सूरीन्नत्वा यथोचितस्थाने समुपविष्टो नृपो देशनां शृणोतिस्म. तं नृपं चोद्दिश्य सूरिभिर्धर्मदेशना प्रारेभे, यथा—

जिनेंद्रपूजा गुरुपर्युपास्तिः । सत्वानुकंपा शुभपात्रदानं ॥ गुणानुरागः श्रुतिरागमस्य । नृजन्मवृक्षस्य फलान्यमूनि ॥ १ ॥ या देवे देवताबुद्धि—र्गुरौ च गुरुतामतिः ॥ धर्मे च धर्मधीः श्रद्धा । सम्यक्त्वमिदमुच्यते ॥ २ ॥ सम्यक्त्वरत्नान्न परं हि रत्नं । सम्यक्त्वमित्रान्न परं हि मित्रं ॥ सम्यक्त्वबंधोर्न परो हि बंधुः । सम्यक्त्वलाभान्न परो हि लाभः ॥ ३ ॥ जन्मदुःखं जरादुःखं । मृत्युदुःखं पुनः पुनः ॥ संसारसागरे दुःखं । तस्माज्जागृत जागृत ॥ ४ ॥ इत्यादिधर्मं श्रुत्वा गुर्वंतिके सम्यक्त्वं लात्वा स गृहे गतः. सूरयोऽप्यन्यत्र विहरंतिस्म. श्रीषेणो नृपतिस्तद्दिनादारभ्य राज्यं सम्यक्त्वं च पालयामास.

इतश्चान्यदा कौशांबीस्वामिना बलनृपेन श्रीमतीराज्ञीकुक्षिसंभूता श्रीकांताभिधा पुत्री श्रीषेणसुतस्येंदुषेणस्यार्थं स्वयंवरा प्रेषिता. तदा तां रूपवतीं बालां वीक्ष्य द्वावपि राजसुतौ परिणेतुकामौ देवरमणोद्याने परस्परं गाढं सन्नह्य युयुधाते. यतः—विकलयति कलाकुशलं । हसति शुचिं पंडितं विडंबयति ॥ अधरयति धीरपुरुषं । क्षणेन मकरध्वजो देवः ॥ १ ॥ बहुभिर्निवारितावपि तौ न विरतौ. ईदृशे समये स श्रीषेणनृपः स्वल्पकषायः स्वच्छमानसः श्रीजिनभक्तिभावितस्तौ द्वावपि पु-

त्रौ शत्रू इव वैरायमाणौ निरीक्ष्य निवारयितुमसमर्थः सन्नेवं चिंतयति, अहो विषयलांपट्यं! अहो कर्मणां वैचित्र्यं! एतौ द्वावपि महाप्राज्ञौ मम नंदनौ भूत्वा एककामिनीकृते कलिं कुरुतः. अहमनयोर्दुश्चरित्रेण लज्जमानः सभासदां मुखं कथं दर्शयिष्यामीति विचिंत्य स्वाभिप्रायं पत्न्यग्रे कथयित्वा पंचपरमेष्ठिनमस्कारं स्मरन् विषमिश्रकमलाघ्राणतो विषप्रयोगेण विपन्नः, एवं पत्न्यपि विपन्ना. इतश्च कोऽपि चारणर्षिः समागत्य तयोरित्थमवादीत्. भो कुमारौ! युवयोश्चरित्रं दृष्ट्वा मातापितरौ विषप्रयोगेण मृतौ, युवां किं न लज्जेथे? इति तद्वचसा तौ प्रतिबुद्धौ त्यक्तयुद्धौ जातौ. ततस्तौ चारणर्षिं नत्वा तां कन्यां च विसृज्य पित्रादीनां प्रेतकार्यं कृत्वा गोत्रिणे राज्यं दत्वा धर्मरुचिमुनिपार्श्वे नृणां सहस्रचतुष्टयेन सार्धं व्रतं जगृहतुः. ततस्तावुभावपि विविधं तपः कृत्वा केवलज्ञानं प्राप्य मुक्तिपदं प्रापतुः. गतः प्रथमो भवः.

अथ द्वितीयभवे जंबूद्वीपमध्यवर्तिन्युत्तरकुरुक्षेत्रे श्रीषेणप्रथमप्रियाभिनंदिताजीवौ युगलत्वेनोत्पन्नौ, त्रिपल्यायुः प्रपाल्य ततश्च्युत्वा तृतीयभवे तन्मिथुनद्वयं सौधर्मकल्पे पल्यत्रितयायुरासीत्. उक्तस्तृतीयो भवः. इतश्चतुर्थे भवे श्रीषेणजीवः सौधर्मकल्पतश्च्युत्वार्ककीर्तिविद्याधरनृपगृहे ज्यो-

तिर्मालाराज्ञीकुक्षिसरोवरे राजहंस इवावतीर्णः, तदा मात्रा बहुतेजसा व्याप्तो रविः स्वप्ने दृष्टः, ततः समये पुत्रजन्म बभूव, ततो महोत्सवपुरस्सरं तस्य पुत्रस्य पित्रा अमिततेजा इति नाम दत्तं, क्रमेण स वर्धितेस्म. इतश्चाभिनंदिताजीवः सौधर्मकल्पादुध्धृत्य त्रिपृष्ठवासुदेवगेहिन्याः स्वयंप्रभायाः कुक्षौ पुत्रत्वेनावतीर्णः, तदा स्वयंप्रभा स्वप्नमध्ये लक्ष्मीदेव्या अभिषेकं ददर्श, तेन तस्यांगजन्मनः श्रीविजय इति नाम दत्तं, सोऽपि क्रमेण वर्धितः कलापारीणो जातो बह्वीः कन्यकाः परिणायितः, क्रमेण त्रिपृष्ठवासुदेवे परलोकं प्राप्ते सत्येकदा तत्र पोतनपुरे श्रीश्रेयांसजिनशिष्याः श्रीसुवर्णकलशाख्याः सूरयः परिवारसमन्विताः समायाताः, तदानीं तान् श्रुत्वा पुरोद्याने बलदेवोऽचलनामा प्रणमनार्थं गतः, तत्र गत्वा चाचार्यान्नत्वा मोहनिवारिणीं वाणीं सुश्राव, यथा—संसारे नत्थि सुहं । जम्मजरामरणरोगसोगेहिं ॥ तहवि हु मिच्छंधजिया । न कुणंति जिणवरं धम्मं ॥ १ ॥ तित्थयरा गणहारि—सुरवइणो चक्किकेसवा रामा ॥ अवहरिया हयविहिणा । अवरजीवाण का वत्ता ॥ २ ॥ ततः प्रस्तावं दृष्ट्वा तेनेति पृष्टं, हे भगवन्! मम कनिष्टो गुणज्येष्टः पुत्रः कां गतिं गतः? इति पृष्टे सूरय ऊचुः, स त्वद्भ्राता पंचेंद्रियादिजीववधे रतः कठोरात्मा महारंभतत्परो मृत्वा

सप्तमनरकं ययौ, तद्वचः श्रुत्वा स्नेहव्याकुलोऽचलः सुतरां विललाप, हा विश्ववीर! हा धीर! तवेदृशी का गतिर्बभूव? तदा गुरुभिरुक्तं, पूर्वं त्वं जिनोदितं वाक्यं शृणु? अस्य जीवश्चरमजिनेश्वरो भविष्यतीत्युक्ते सोऽप्यचलाभिधः श्रीविजयं त्रिपृष्टपुत्रं राज्ये निवेश्य तथापरं सुतं यौवराज्ये निवेश्य तेषां गुरूणां पार्श्वे दीक्षामग्रहीत्. इतश्चामिततेजो विद्याधरेंद्रः केवलिनं पप्रछ, प्रभो! भव्योऽहमभव्यो वा? इति प्रश्ने कृते केवल्याह हे राजन्! इतो भवान्नवमे भवेऽत्रैव भरते त्वं पंचमश्चक्रवर्ती षोडशस्तीर्थकृच्च भविष्यसि, तथाऽसौ श्रीविजयस्त्रिपृष्टपुत्रः पोतनेश्वरस्तव पुत्रो भूत्वा तवैवाद्यो गणधरो भविता, इति श्रुत्वा तस्यैव केवलिनः पार्श्वे ताभ्यां सम्यक्त्वमूलः श्राद्धधर्म उपाददे. अथ श्रीकेवलिनं नत्वा तौ श्रीविजयामिततेजसौ स्वस्वपरिवारसमन्वितौ निजं निजं स्थानं प्रयातौ, देवपूजागुरुसेवाप्रभृतिप्रयोजनैश्च श्रावकव्रतं द्योतयंतौ कालं निन्यतुः.

एकदा तेन महात्मनामिततेजसा महीयान् पंचवर्णरत्नमयः प्रासादः कारितः, श्रीजिनानां प्रतिमाश्च तत्र स्थापिताः, तथा तत्समीपे तेन राज्ञा पौषधागारं कारितं, तस्मिन् स्थाने उपविष्टः सन् पौषधमध्ये विद्याधरसभांतरे धर्मकथां कथयति, यथा—अथिरेण थिरो समलेन । निम्मलो प-

खसेण साहीणो ॥ देहेण जइ विढप्पइ । धम्मो ता किं न पज्जत्तं ॥ १ ॥ पिधानं दुर्गतिद्वारे ।
निधानं सर्वसंपदां ॥ विधानं मोक्षसौख्यानां । पुण्यैः सम्यक्त्वमाप्यते ॥ २ ॥ इत्यादिधर्मकथां या·
वता स कथयति तावता चारणश्रमणयुगलं शाश्वतजिनान्नंतुं गच्छत्तुंगं जिनालयं दृष्ट्वा तच्चैत्य·
वंदनहेतोस्तत्र समवतीर्णं, देवान्नत्वा च पौषधागारे समागतं. तदानीं राज्ञामिततेजसा तौ मुनिवरौ
प्रवरासने उपावेश्य भक्तिपूर्वकं वंदितौ. तदा तत्रैकः साधुरित्याचख्यौ, हे राजन्! यदि त्वं धर्ममा·
ख्यातुं स्वयमेव जानासि, तथाप्यस्माकं धर्मः समाख्यातुं युक्तः. ततोऽमिततेजसा प्रोक्तं, भगवन्
धर्मं कथय? मुनिनोक्तं शृणु?—मानुष्यकादिसामग्रीं । लब्ध्वा ज्ञात्वा भवस्थितिं ॥ धर्मो निरंतरं
कार्यो । निरंतरसुखार्थिभिः ॥ १ ॥ न पौरुषाभिमानोऽत्र । किंतु धर्माभिमानिता ॥ विनार्हतं वि·
ना साधुं । प्रणमाम्यपरं न हि ॥ २ ॥ भो विद्याधरेंद्र! त्वयापि निरंतरं निःकलंकमेव धर्मः का·
र्यः. इत्युपदेशं श्रुत्वामिततेजा नृपो गुर्वाज्ञां शिरसि दधत्तयोर्मुनिप्रवरयोः पादौ ननाम, तदनंतरं
तौ चारणश्रमणौ नभसोत्पत्यान्यत्र गतौ. ततः श्रीविजयामिततेजसौ भूचरखेचरस्वामिनौ धर्मकर्म·
तत्परौ कालं गमयतःस्म, तथा तौ द्वावपि पुण्यात्मानौ प्रतिवत्सरं यात्रात्रितयं विदधतुः, तन्मध्ये या·

त्राद्वयं शाश्वतं, यथा—चैत्रस्य शुक्लपक्षे एका शाश्वती, द्वितीया चाश्विनमासेऽष्टाह्निकाभिधा, तृतीया तु बलभद्रकेवलोत्पत्तिस्थाने सीमनगरे श्रीनाभेयजिनप्रासादे इति. अनेन विधिना बहूनि वर्षसहस्राणि तौ द्वावपि राज्यं कुर्वाणावेकदा मेरुगिरौ शाश्वतजिनान्नंतुं जग्मतुः, तत्र जिनान्नत्वा नंदनाख्ये वने उभौ विपुलमतिमहामतिनामानौ चारणश्रमणावुपविष्टावपश्यतां, तौ नत्वा तद्देशनां च श्रुत्वा तयोः समीपे इति पृष्टं, भो भगवंतौ! आवयोः कियदायुर्वर्तते? तत्कथ्यतां? इति पृष्टे साधुभ्यामुक्तं भो राजानौ! श्रूयतां? षड्विंशतिदिनानि युष्मदायुः शेषं विद्यते, इत्युक्ते तौ व्याकुलीभूतावेवमूचतुः, आवाभ्यां विषयलोलुपतयेयंतं व्रतं नादत्तं, हा हा सांप्रतं स्वल्पायुषौ संतौ किं करिष्यावः? एवं तौ शोचयंतौ दृष्ट्वा मुनिभ्यां प्रोक्तमद्यापि युवयोर्न किमपि विनष्टमस्ति, स्वर्गापवर्गदं संयमं गृहीत्वात्मकार्यं कुरुतां, इत्युक्ते तौ द्वावपि स्वं स्वं पुरं प्राप्तौ, ततस्तौ स्वे स्वे राज्ये स्वं स्वं पुत्रं निवेश्याभिनंदनमुनिसमीपे दीक्षां गृहीत्वा पादपोपगमानशनेन स्थितौ, तन्मध्ये श्रीविजयमुनिना दुःकरं तपः साधयता स्वजनकस्य त्रिपृष्ठवासुदेवस्य तेजः संस्मृत्य तदनंतरं तेनेदृशं निदानं कृतं—

अनेन दुःकरतपःप्रभावेणाहमपि तेजसा पितृसमो भूयासमिति. न पुनरमिततेजसा निदानं कृतं, द्वावप्यायुःक्षये निधनं गतौ. उक्तस्तुर्यो भवः ॥ ४ ॥ अथ पंचमभवे तौ द्वावपि प्राणतकल्पे दशमदेवलोके विंशतिसागरोपमायुषौ देवौ जातौ. तत्रामिततेजसो जीवो नंदिकावर्तविमाने दिव्यचूलनामा सुरो जातः, श्रीविजयजीवस्तु स्वस्तिकावर्तविमाने मणिचूलनामा सुरः संजज्ञे. तत्र स्थितौ तौ द्वावपि सुरौ मनसैव दिव्यं विषयसुखं भुंजानौ नंदीश्वरादितीर्थेषु यात्रां कुर्वाणौ देवार्चनस्तोत्रादिधर्मकर्मतत्परौ स्वसम्यक्त्वरत्नं शुभभावेन नितरां निर्मलं चक्रतुः. उक्तः पंचमो भवः. ॥ ५ ॥ अथ षष्ठभवः—अस्मिन् जंबूद्वीपे पूर्वविदेहे मध्यस्थे रमणीयाख्ये विजये सुभगायां महापुर्यां गांभीर्यादिगुणोपेतः प्रौढप्रतापयुक्तः स्तिमितसागरनामा नृपोऽस्ति, तस्य राज्ञः शीलालंकृता प्रधानगुणोचितैका भार्या वसुंधरी, द्वितीया चानुद्धरीनाम्नी बभूव. अथ यो दिव्यचूलनामा अमिततेजसो जीवः स स्वायुःक्षये प्राणतकल्पाच्च्युत्वा राज्या वसुंधर्याः कुक्षौ सुतत्वेनावतीर्णः. तदा तया गज १ पद्मसर २ श्चंद्र ३ वृषभाख्या ४ श्चत्वारः स्वप्ना हलभृज्जन्मसूचका दृष्टाः. तत्प्रभावेण समये सा राज्ञी कनकवर्णशरीरं तनयं सुषुवे. तस्याभिधानं पित्रापराजित इति विहितं. तद-

नंतरं यो मणिचूडाख्यः सुरः श्रीविजयजीवः सोऽपि प्राणतकल्पतो निजमायुः प्रपूर्य तस्यैव राज्ञो यानुद्धरीनाम्नी द्वितीया पत्नी तस्याः कुक्षौ समुत्पन्नः. तदा तया गज १ सिंह २ वृषभ ३ लक्ष्मी ४ समुद्र ५ चंद्र ६ सूर्याख्याः ७ सप्त स्वप्ना मुखे प्रविशंतो दृष्टाः. प्रभाते सहर्षा सती स्वस्वामिने कथयामास. ततः स भर्ता तान् स्वप्नान् श्रुत्वा स्वप्नशास्त्रविदः समाकार्य स्वप्नविचारं पप्रछ, तदा तैरुक्तं हे राजन्नेतैस्तव वासुदेवः पुत्रो भविष्यतीत्युक्त्वा ते स्वप्नपाठका दत्तदानाः स्वस्थानमगुः. राजा राज्यं सुखेन पालयन्नस्ति. अथ संपूर्णसमये सानुद्धरी राज्ञी कृष्णकांतिं सुतं प्राजीजनत्, पित्रा तस्य पुत्रस्यानंतवीर्य इति नाम दत्तं, तौ द्वावपि पुत्रौ क्रमेण वर्धमानौ कलाभ्यासयोग्यौ जातौ, पित्रा तयोः कलाभ्यासः कारितः.

अन्यदा तत्पुरोद्याने विशिष्टज्ञानवान् स्वयंप्रभनामा मुनिरागत्य समवसृतः. इतश्च नृपतिस्तुरंगमवाहनं कृत्वा श्रांतः सन् विश्रामार्थं तस्मिन् नंदनवनोपमे वने समागत्य तत्र क्षणमेकं विश्रांतः, तदनंतरं राजाशोकतरोस्तले ध्यानवंतं तं मुनिं वीक्ष्य शुभभावेन त्रिःप्रदक्षिणीकृत्य विधिना वंदित्वा यथोचितस्थाने समुपाविशत्, मुनिस्तस्य धर्मदेशनां व्याकरोत, स राजा तां देशनां शुश्रा-

व, यथा—कर्तव्यं जिनवंदनं विधिपरैर्हर्षोल्लसन्मानसैः । सच्चारित्रविभूषिताः प्रतिदिनं सेव्याः सदा साधवः ॥ श्रोतव्यं च दिने दिने जिनवचो मिथ्यात्वनिर्नाशनं । दानादौ व्रतपालने च सततं कार्या रतिः श्रावकैः ॥ १ ॥ देवं श्रेणिकवत्प्रपूजय गुरुं वंदस्व गोविंदव—द्दानं शीलतपःप्रसंगसुभगां चाभ्यस्व सद्भावनां ॥ श्रेयांसश्च सुदर्शनश्च भगवानाद्यः स चक्री यथा । धर्म्ये कर्मणि कामदेववद्हो चेतश्चिरं स्थापय ॥ २ ॥ इत्यादि स्वयंप्रभमुनिमुखाद्धर्मोपदेशं श्रुत्वा स्तिमितसागरो राजा प्रतिबुद्धोऽनंतवीर्यं नृपत्वे संस्थाप्यापरमपराजिताभिधं कुमारत्वे विन्यस्यास्य मुनेः पार्श्वे दीक्षामुपाददे. स राजा शीतकाले किंचिद्दीक्षां मनसा विराध्य मृत्वाधोभवने सुराधिपश्चमरेंद्रो जज्ञे. इतोऽपराजितानंतवीर्ययोः केनापि विद्याधरेण सह मैत्री जाता, तेन विद्याधरविद्याः शिक्षिताः, ततस्ताभ्यां विहायोगमनक्षमा विद्याः साधिताः. एवं तावुभावपि सिद्धविद्यौ जातौ, क्रमेण विद्याधिराजं त्रिखंडविजयिनं दमितारिं निहत्य रमणीयाख्यविजये त्रिखंडं साधयित्वा सुभगायां महापुर्यां राज्यं कुर्वाणौ स्तः, सोऽनंतवीर्यो विष्णुश्चतुरशीतिपूर्वलक्षाण्यायुः प्रपूर्य व्यपद्यत, ततो द्विचत्वारिंशद्वर्षसहस्रायुः स आदिमे श्वभ्रे निकाचितकर्मवशान्नारको जज्ञे. बलभद्रोऽपराजितो भ्रातृस्नेहमोहितो ध-

र्मविदग्धेन नीतिनिपुणेन मंत्रिणा कथंचिद्बोधितः, किंचिद्गतशोको बभूव.

तत्र नगरे तस्मिन् समये यशोधरनामा गणभृत् समाययौ, उद्यानपालकैर्गुर्वागमनवर्धापनिकया वर्धापितोऽपराजितः षोमशभिः सहस्रैर्नृपानां परिवृतो वंदनार्थं जगाम, तत्र गणधरं नत्वा कृतांजलिपुटः पुरो निषण्णो देशनामशृणोद्यथा—शोकोऽभीष्टवियोगेन । जायते दारुणो जने ॥ स सद्भिः परिहर्तव्य—स्तत्स्वरूपमिदं यतः ॥ १ ॥ नामांतरः पिशाचोऽयं । पाप्मा रूपांतरस्तथा ॥ तारुण्यं तमसो ह्येष । विषस्यैष विशेषतः ॥ २ ॥ तस्मादिष्टवियोगाख्य—महद्रोगनिपीमितैः ॥ सुश्रुतोक्तक्रियायुक्तैः । कार्यं धर्मौषधं महत् ॥ ३ ॥ इंद्रजालसरिसं । विज्जुचमक्कारसब्बहं सवं ॥ सामन्नं खणदिठं । खणनठं कोब्ब पडिबंधो ॥ ४ ॥ इत्यादि मुनिनोक्तां देशनां श्रुत्वापराजितो बलभद्रो गतशोको जातः, ततः समुत्पन्नव्रतपरिणामो गृहमागत्य स्वनंदनं राज्ये संयुज्य स परिव्रज्यां समादद, बहूनि वर्षाणि यावत्तपस्तप्त्वांतेऽनशनं कृत्वा विपद्य सप्तमे भवेऽच्युतकल्पे द्वाविंशतिसागरोपमायुस्त्रिदशेश्वरः संजज्ञे. अथानंतवीर्यो नरकादुध्धृत्य जंबूद्वीपे भरतक्षेत्रे वैताढ्ये दक्षिणश्रेण्यां गगनवल्लभे पुरे मेघवाहनस्य राज्ञो राज्ञी मेघमालिनी, तस्याः कुक्षौ पुत्रत्वेनोदपद्यत. क्रमेण

जातः पित्रा मेघनाद इति नाम दत्तं. यौवनस्थः पित्रा बह्वीः कन्यकाः परिणायितः. ततः स्वे राज्ये मेघवाहनपुत्रं संस्थाप्य स्वयं दीक्षां समादाय प्राणांते गृहीतानशनः स्वर्गं जगाम. अथ मेघनादो विद्याधराधिराजः श्रेणिद्वयस्वामी दशोत्तरं शतं देशान् साधयित्वा बहूनि वर्षाणि राज्यं करोतिस्म. अथैकस्मिन् दिने मेरुमस्तकं गत्वा स शाश्वतार्हतां यावता पूजां करोति, तावता कल्पनिवासिनः सेंद्रा देवाः सपरिवाराः समाययुः. तत्रासौ मेघनादोऽच्युतेंद्रेण दृष्टः, स्नेहात्संभाषितश्च. सोऽच्युतेंद्रस्तं तत्पूर्वभवादिकं कथयित्वा संयमधर्मे स्थिरं कृत्वा निजं स्थानं ययौ. मेघनादो विद्याधरेंद्रः स्वनंदने राज्यं निधायामरगुरोः पार्श्वे दीक्षामुपाददे. स उपात्तदीक्षो बहूनि वर्षाणि जगतीतले विहृत्य समाधिना चांते मृत्वाच्युतेश्वरोऽभूत्. अथाष्टमो भवः—

जंबूद्वीपमध्यगे पूर्वविदेहे मंगलावतीविजये सीतानदीतटे तीर्थंकरादिपुंरत्नसंचया रत्नसंचया नाम नगर्यस्ति. सा च शाश्वती सिद्धांतविख्याता देवनिर्मितेव विराजते. तस्यां नगर्यां दुर्नीतिवारकः प्रजायाः क्षेमकारकस्तीर्थंकरो क्षेमंकरो राजा जज्ञे. तस्य नृपते रत्नमालाभिधा प्रिया बभूव. असावपराजितजीवो द्वाविंशतिसागराण्यायुः परिपूर्याच्युतेंद्रपदाच्च्युत्वा रत्नमालाकुक्षाववातरत्. त-

दानीं सा राज्ञी चक्रभृज्जन्मसूचकान् गजादिचतुर्दशस्वप्नानद्राक्षीत. तथा प्रभातोत्थितया महीभर्तुस्ते कथिताः. राज्ञापि सा राज्ञी पुत्रजन्मकथनेनाह्लादिता. ततः सा राज्ञी संपूर्णसमये सुतरत्नमजीजनत्. सुतजन्मवर्धापनिकया वर्धापितो राजा तेषां बहूनि दानान्यदापयत. माता पंचदशे स्वप्ने वज्रायुधं ददर्श तेन पित्रा पुत्रस्य वज्रायुध इत्यभिधानं निर्ममे. पंचभिर्धात्रीभिर्लाल्यमानो वज्रायुधः क्रमेणाष्टवर्षीयो जातः. ततः क्षेमंकरेण राज्ञा कलाचार्यसन्निधौ तस्य सकलकलाभ्यासः कारितः. क्रमेण संप्राप्तयौवनोऽसौ वरां कन्यां लक्ष्मीवतीं परिणायितः. तया सह भोगान् भुंजानस्य तस्य कालो याति. अनंतवीर्यजीवोऽच्युतकल्पतश्च्युत्वा वज्रायुधलक्ष्मीवत्योः सुतोऽभवत सहस्रायुधनामा. एवमस्मिन् भवे तौ द्वावपि पितापुत्रौ जातौ. सहस्रायुधोऽपि संप्राप्तयौवनस्तातेन नृपसुतां सुरूपां कनकश्रियं परिणायितः. तया सार्धं बंधुरान् भोगान् भुंजानस्य तस्य क्रमेण शतबलाभिधः पुत्रः संजज्ञे. अन्येद्युः क्षेमंकरो राजा पुत्रपौत्रसमन्वितः सिंहासनोपविष्टः सभांतरे यावदस्ति तावदीशानकल्पवासी चित्रचूलनामा कश्चिन्मिथ्यात्वी सुरो मिथ्यात्वमोहितमतिर्नास्तिकवादी तत्रागात. यथा—नास्ति देवो गुरुर्नास्ति । नास्ति पुण्यं न पापकं ॥ न जीवः परलोको वे—त्यादिना

स्तिकवाद्यसौ ॥ १ ॥ ततोऽसौ सुरो वज्रायुधकुमारेण भणितो भो देव! तव नास्तिकवादो न युज्यते, यतः पुण्यं विना त्वं देवः कथं जातः? इत्यादि हेतुभिर्निरुत्तरीकृत्य स प्रतिबोधितः. ततः स देवो जगाद भो कुमारेंद्र! त्वयाहं भवार्णवे पतन् हस्तावलंबनेनोध्धृतोऽस्मि. ततः स देवो वज्रायुधकुमारसमीपे सम्यक्त्वरत्नं समाददे. किं ते प्रियं करोमीत्युक्त्वा तस्मै निस्पृहाय मनोज्ञमाभरणं दत्वा देवः स्वर्गे ईशानेंद्रसमीपं जगाम. तत्र स्वधर्मलाभादिस्वरूपे तेन प्रोक्ते ईशानेंद्रेणायं वज्रायुधो नृपः षोडशो जिनेंद्रो भावीति भक्त्या पूजितः. एवं सुखेन कालो याति. अथैकस्मिन् दिने लोकांतिकामरैरभ्येत्य क्षेमंकरो राट् विज्ञप्तः, हे स्वामिंस्तीर्थं प्रवर्तय? जिनेनाप्यवधिज्ञानेन दीक्षावसरं ज्ञात्वा वज्रायुधं राज्ये निवेश्य वार्षिकं दानं च दत्वा चारित्रमुपाददे. ततः किंचित्कालं जिनलिंगेन विहृत्य घनघातिकर्मक्षयात्स केवलज्ञानमवाप. देवैः समवसरणे कृते तत्रोपविश्यासौ जिनो धर्मदेशनां चक्रे. वज्रायुधादयो मानवा देवा देव्यश्च तां देशनां शृण्वंति, यथा—

तद्भो भव्या अहिंसादि—लक्षणं धर्ममुत्तमं ॥ परीक्ष्य विदधीतेति । क्षेमंकरजिनोऽब्रवीत् ॥ १ ॥

इमां देशनां श्रुत्वानेकशो जीवाः प्रतिबुद्धाः. जिनेंद्रेण गणधरादितीर्थं प्रावर्तितं. वज्रायुधो

राज्ञपि देशनांते सम्यक्त्वमादाय भगवंतं प्रणम्य निजां पुरिं प्रविवेश. अन्यदा तस्यायुधशालायां चक्ररत्नं समुत्पन्नं. तस्याष्टाह्निकां विधाय चक्रानुगोऽसौ षट्खंडं मंगलावतीविजयं साधयामास. ततश्चक्रवर्तिश्रियांचितो वज्रायुधो निजां पुरीं प्राप्तः. द्वात्रिंशद्राजसहस्रैर्मूर्ध्न्यभिषिक्तो वज्रायुधो निजं पुत्रं सहस्रायुधाभिधं यौवराज्ये न्यवेशयत्. सुरराजसन्निभान् भोगान् भुंजमानोऽसौ विहरन्नास्ते. अथान्यदा तस्यां पुरि पूर्वोत्तरदिग्विभागे क्षेमंकरजिनेश्वर आगत्य समवासार्षीत्. देवैः कृते समवसरणे भद्रे सिंहासने स्वामी पूर्वाभिमुखो निषसाद. चक्री च पुंभिर्वर्धापितः, ततः सपरिवारोऽसौ जिनं नंतु ययौ. तत्र गत्वा प्रदक्षिणापूर्वं च परमेश्वरं प्रणनाम, धर्मदेशनां शुश्रूषुश्च यथास्थानं निषसाद. स्वाम्यपि तेषां सभासदांप्रति बोधविधायिनीं धर्मदेशनां चक्रे, यथा—कुलं रूपं कलाभ्यासो । विद्या लक्ष्मीर्वरांगना ॥ ऐश्वर्यं च प्रभुत्वं च । धर्मेणैव प्रजायते ॥ १ ॥ धर्मः कल्पद्रुमः पुंसां । धर्मः सर्वार्थसिद्धिदः ॥ धर्मः कामदुघा धेनु—स्तस्माद्धर्मो विधीयतां ॥ २ ॥ वज्रायुधो राज्ञिमां देशनां श्रुत्वा क्षेमंकरं जिनं नत्वा गृहे गत्वा सहस्रायुधं पुत्रं स्वे राज्ये न्यवेशयत्. पुत्राय राज्ये दत्ते वज्रायुधश्चक्री राज्ञीनां चतुःसहस्रैः, पार्थिवानां चतुःसहस्रैः पुत्राणां सप्तशतैश्च सार्धं श्रा·

मण्यमग्रहीत्. गुरूणामंतिके च द्विविधां शिक्षां गृहीत्वा वज्रायुधो मुनिः सिद्धिपर्वतनामानं गिरिवरं ययौ. तत्रैको निश्चलोऽसौ रमण्ये वैरोचनस्तंभे शिलातले सांवत्सरिकीं प्रतिमां तस्थौ, तत्र प्रतिमास्थस्य तस्य वज्रायुधस्य मुनेः पूर्वमत्सरिणो देवा व्याघ्रसिंहश्वापदाद्यनेकोपसर्गादिभिश्चालनां चक्रिरे, परं भगवान् वज्रायुधो मनागपि ध्यानान्न चचाल, स वज्रायुधमहामुनिस्तामतिदुःकरां वार्षिकीं प्रतिमां पारयित्वा पारणं कृत्वा महीपीठे विजहार, क्षेमंकरे जिनपतौ मोक्षं गतेऽन्यदा वज्रायुधो राजर्षिः पृथिव्यां विहरन् रत्नसंचयायां नगर्यां समाजगाम, तत्र सहस्रायुधस्तदंतिके धर्मं श्रुत्वा शतबले पुत्रे राज्यं निवेश्य स्वयं व्रतमाददे, ततस्तावुभौ पितापुत्रौ गीतार्थौ विविधं तपः कुर्वाणौ भूम्यां विहरतःस्म, आयुरंते तौ पितापुत्रावीषत्प्राग्भारनाममहीधरे पादपोपगमेन तस्थतुः, तत्र देहं त्यक्त्वा नवमभवे नवमग्रैवेयके एकत्रिंशत्सागरायुष्कौ तौ देवौ जातौ.

अथास्मिन् जंबूद्वीपे प्राग्विदेहविभूषणे पुष्कलावतीविजये पुंडरीकिणी नाम पूरस्ति, तत्र घनरथाभिधस्तीर्थंकरराजाभूत, रूपलावण्यसंयुक्ते तस्योभे प्रिये आस्तां, आद्या प्रीतिमती, द्वितीया च मनोरमानाम्नी. वज्रायुधजीवो नवमग्रैवेयकादेकत्रिंशत्सागरायुषश्च्युत्वाद्यप्रेयसीप्रीतिमतीकुक्षौ शुक्तौ

मुक्तामणिरिव मेघस्वप्नोपसूचितः समुत्पेदे, तथैव सहस्रायुधजीवोऽपि ततश्च्युत्वा द्वितीयराजपत्न्या मनोरमायाः कुक्षौ सुस्वप्नसूचितः समुत्पेदे. अथ पूर्णकाले ते देव्यौ शुभलक्षणौ मेघरथदृढरथनामानौ वरनंदनौ सुषुवाते. तावतिक्रांतशैशवौ सुविनीतौ महाप्राज्ञावष्टवर्षीयौ कलाचार्यसन्निधौ सकलाः कलाः पेठतुः, ताश्च लेख्यं गणितमित्यादयः शास्त्रोक्ता ज्ञेयाः, तौ क्रमेण कलाकलापसपूर्णौ जातौ, यौवनं च प्राप्तौ, तयोर्मध्ये मेघरथः सुमंदिरपुरस्वामिनिहतारिनृपात्मजे प्रियमित्रामनोरमानाम्न्यावुपयेमे, तस्यैव राज्ञः कनिष्ठा पुत्री सुमतिनाम्नी दृढरथस्य पत्नी जज्ञे, मेघरथस्य नंदिषेणमेघसेनाभिधानौ नंदनौ जातौ, दृढरथस्यैको पुत्रो रथसेनाभिधोऽभवत्, ते त्रयोऽपि समये सकलकलाभ्यासं चक्रिरे. अथैकस्मिन् दिने राजा घनरथः पुत्रपौत्रसमन्वितः सिंहासनस्थः सभामंडपमलंचकार, तस्मिन् समये पुत्रपरीक्षार्थं प्रोक्तं मेघरथेन भोः पुत्राः! प्रज्ञाप्रकाशार्थं परस्परं प्रश्नोत्तराणि ब्रूत? तत्कथनानंतरं कनिष्ठेनोक्तं—कथं संबोध्यते ब्रह्मा । दानार्थो धातुरत्र कः ॥ कः पर्यायश्च योग्यायाः । को वालंकरणं नृणां ॥ १ ॥ विचिंत्य द्वितीयेनोक्तं ' कलाभ्यास इति '. स च पाठितवान्—दंडनीतिः कथं पूर्वं । महाखेदक उच्यते ॥ कोऽबलानां गतिर्लोके । पालकः पं-

चमो मतः ॥ २ ॥ ज्येष्टेन तस्योत्तरं दत्तं ' महीपतिरिति. ततश्च स पपाठ—किमाशीर्वचनं राज्ञां
। का शंखोस्तनुमंडनं ॥ कः कर्ता सुखदुःखानां । पात्रं सुकृतकस्य कः ॥ १ ॥ अन्येष्वजानत्सु मे-
घरथेन तस्योत्तरमदायि—' जीवरक्षाविधिरिति ' स्वयं भणितवान्. सुखदा का शशांकस्य । मध्ये
च भुवनस्य कः ॥ निषेधवाचकः को वा । का संसारविनाशिनी ॥ १ ॥ राज्ञोक्तं—' भावनेति '
इत्यादिवार्ता कुर्वाणस्य तस्य विद्वद्गोष्ठ्या सुखेन कालो याति. अन्यदा घनरथो राजा लोकांति-
कामरैः समभ्येत्य तीर्थं प्रवर्तयेत्युक्त्वा विबोधितो दीक्षाकालं ज्ञापितः. स्वामी सांवत्सरिकं दानं द-
त्वा मेघरथं सुतं च राज्ये स्थापयित्वा स्वयं दीक्षां जगृहे. ततः श्रीमान् घनरथो जिनः समुत्पन्नके-
वलो भव्यान् प्रतिबोधयन् महीपीठे विजहार, युवराजेन दृढरथेन सहितो मेघरथो राट् सुखेन रा-
ज्यं पालयामास. एकस्मिन् समये राजा मेघरथो मुक्तालंकरणः पौषधागारे पौषधं विदधे. कृतपौ-
षधकः सुधीर्योगासनस्थितः समस्तभूपानां पुरतो यावता धर्मदेशनां विदधे, तावता कंपमानांगस्तर-
लेक्षणस्तवाहं शरणागतो मां रक्ष रक्षेति मनुष्योक्त्या भाषमाण आकाशात्समागत्य नृपतेरुत्संगे
पारापतः पपात. भयभीतं पारापतं वीक्ष्य दयालुर्महीपतिः प्रोचे, हे भद्र पारापत! त्वं मम सन्निधौ

कुतोऽपि माभैषीः? राज्ञैवमाभाषितः पारापतो यावन्निर्भयः समभूत्तावत्तत्र क्रूरः श्येनाभिधो द्विजः समायातः, सोऽवदत् हे राजेंद्र! शृणु? यस्त्वदुत्संगे पारापतो वर्तते, स मे भक्ष्यं वर्तते, अत ए· नं मुंच? भक्षयामि, यतोऽहं क्षुधितः, त्वं च दयालुर्मयि दयां कुरु? पारापतं मह्यं देहि? तदानीं राजा प्रोचे भो भद्र! ममायं शरणागतस्तवार्पयितुं न युक्तः, यतः—शूरस्य शरणायातो—ऽहेर्म· णिश्च सटा हरेः ॥ गृह्यंते जीवतां नैते—ऽमीषां सत्या भरस्तथा ॥ १ ॥ तथास्य पलले भक्षिते ते क्षणं तृप्तिर्भाविनी, अस्य च प्राणविनाशः सर्वथा भविष्यतीति चित्ते परिभावय? पंचेंद्रियाणां जीवानां वधं कृत्वा दुराशया जीवा नरकं गच्छंति, भो पक्षिराट्! इदं चित्ते विभावय? मेघरथस्येदं वचः श्रुत्वा श्येनोऽवोचद्भो राजेंद्र! यथा मद्भीतो पारापतस्त्वच्छरणं समागतस्तथाहमपि क्षुधाग्रस्त· स्त्वच्छरणं समाश्रितः, त्वं नीतिनिपुणोऽसि, कृत्याकृत्यं च वेत्सि? मादृशे च क्षुधिते क्षुद्रकीटे धर्म· वासना कीदृशी? यतः—

आख्याहि भद्रे प्रियदर्शनस्य । न गंगदत्तः पुनरेति कूपं ॥ बुभुक्षितः किं न करोति पापं । क्षीणा नरा निःकरुणा भवंति ॥ १ ॥ एवं भो राजन्! क्षुधार्तः सन् कोऽपि कृत्याकृत्यं न जानाति,

अतोऽहमपि न जानामि, अतो मां प्रीणय यावत्प्राणा न यांति? एवं श्येनेन भणितो जगतीप-
तिः प्रोवाच, हे भद्र! यदि त्वं क्षुधितोऽसि तर्हि ते वराहारं यच्छामि, पक्ष्यूचे हे राजेंद्र! आमीषं
विनान्याहारोऽस्माकमिष्टो नास्ति, राजोचे तदपि सूनाया आनाय्य दास्यामि, श्येनोऽवोचद्यदि म-
म पश्यतोंगिनो मांसं छित्वा भित्वा दीयते तदा मम तृप्तिः स्यात्, राजोचे यत्प्रमाणोऽयं पारापतो
भवेत्तत्प्रमाणं तुलाधृतं निजं मांसं यच्छामि यदि तुभ्यं रोचते, श्येनेनोक्तमेवं भवतु, नृपेण समा-
नायिता तुला, तत्रैकपार्श्वे पारापतं द्विजं न्यवेशयत, द्वितीयपार्श्वे च करुणासागरो मेघरथः स्वं दे-
हं तीक्ष्णक्षुरिकयोत्कृत्योत्कृत्याक्षिपत्, एवं स राजा निजकमांसानि भित्वा भित्वा यथा यथा चिक्षे-
प, तथा तथा पारापतोऽधिकतरमवर्धिष्ट. मंत्रिमुख्यैर्भार्यादिभिश्च वार्यमाणोऽपि मेघरथोऽमुं गुरुभारं
ज्ञात्वा स्वयमेव तस्यां तुलायामारुरोह, तुलारूढं राजानं वीक्ष्य सकला अप्यंतःपुरस्त्रियो हाहाकारं
कुर्वाणाः सविषादमदोऽवदन्, यथा—हा नाथ जीवितत्याग—साहसं किं करोष्यदः ॥ एकस्य जी-
वनस्यार्थे । किमस्मांश्चावमन्यसे ॥ १ ॥ हे प्रभो! इदं किंचिदौत्पातिकं संभाव्यते, यतः क्षुद्रका-
यस्य पक्षिणो नेदृशो भारः संभाव्यते, एवमुक्तोऽपि सत्वाशयो मेघरथो ज्ञानवानपि ज्ञानोपयो-

गं न ददौ, किंत्विदं चिंतयामास, धरणीतले ते धन्या ये स्वांगीकृतं श्रेयःकार्यं निर्वहंति. अतोऽहमपि मंत्र्यादीनां वचनमपेक्ष्य स्वां प्रतिज्ञां न त्यजामि.

अत्रांतरे चलत्कुंडलालंकृतगल्लो, हारविराजितवक्षःस्थलः, किरीटाद्याभरणभासुरशरीरो राज्ञः पुरतः कश्चिद्देवः प्रकटीभूयैवं जगाद. भो राजेंद्र! त्वं धन्योऽसि, तव जन्मजीविते सफले, यत्तव गुणग्रामं शशांकद्युतिनिर्मलं सविस्मय ईशानेंद्रो देवसभामध्ये शशंस, तमहमश्रद्दधानस्त्वत्परीक्षणायागतः. मया चैतौ पूर्वमत्सरिणौ पारापतश्येनावधिष्ठितौ, एषा च देवमाया मया दर्शिता, परं धन्यस्त्वं यो देवमायया न चलितः. इत्युक्त्वा तस्योपरि पुष्पवृष्टिं कृत्वा स देवो देवलोकं गतः. मेघरथोऽपि तं पौषधं पारयित्वा विधिना पारणकं कृत्वा भूयोऽपि देवसन्निभान् भोगान् बुभुजे. पुनरन्यदा पौषधे पौषधागारे स्थितः कृताष्टमतपाः परीषहोपसर्गेभ्योऽभीतः संवेगरससागरनिमग्नः स्थिरः प्रतिमया तस्थौ. अत्रांतरे ईशानेंद्रेण भक्तिनिर्भरेण जल्पितं यथा—माहात्म्यनिर्जिताशेष—त्रैलोक्यगतकल्मष ॥ भविष्यदर्हते तुभ्यं । महासत्व नमो नमः ॥ १ ॥ तद्वचनं समाकर्ण्य समीपस्थास्तत्प्रियाः पृच्छंतिस्म. हे स्वामिन्नधुना कस्य नमस्कारो विहितः? ईशानेंद्रोऽवदत् क्षितिमंडले

पुंडरीकिण्यां नगर्यां मेघरथो राजा कृताष्टमतपा भाविजिनेश्वरः प्रतिमया स्थितः शुभध्याने वर्तमा- नो मया भक्त्या नमस्कृतः. एवंविधे शुभध्याने च वर्तमानं तं राजानं सेंद्रा अपि देवाश्चालयितुं न समर्थाः. इत्याकर्ण्य सुरूपातिरूपेतिनाम्न्यौ तद्वल्लभे अस्य नृपस्य क्षोभनार्थं तत्समीपमुपेयतुः. ततस्ताभ्यामुक्तं स्वामिन्नावां देवांगने त्वयि मोहिते स्वर्गादिहायाते तव वल्लभे, ततस्त्वमावयोर्भो- गेच्छां पूरय? यतस्त्वमावयोः प्राणप्रियोऽसि. आवां त्रिदशाधीशं स्वाधीनं निजकं पतिं विमुच्य त्व- द्गुणयौवनलुब्धे इहागते. इत्यादिभिस्तयो रागपेशलैर्वचनैर्हावभावैश्च मेघरथस्य मानसं न क्षुब्धं. एवं सकलां निशामनुकूलोपसर्गान् विधाय प्रातः प्रशांतहृदये भिन्नविक्रिये ते एवं संस्तुवतःस्म, य- था—सरागं हृदयं चक्रे—ऽरागेणापि त्वयावयोः ॥ अहो चित्रं न रक्तोऽसि । प्रक्षिप्तोऽप्यत्र सुंदर ॥ १ ॥ विलीयते नरो लोह—मयोऽप्यस्मद्विचेष्टया ॥ न स्तोकमपि ते धीर । चचाल हृदयं तथा ॥ २ ॥ ततस्ते देव्यौ स्वापराधं क्षमयित्वा तं नृपं नत्वा तद्गुणश्लाघां कुर्वत्यौ निजाश्रयं जग्मतुः. पौषधं प्रतिमां च पारयित्वा मेघरथो राजा प्रातः पारणं विदधे. एकस्मिन् दिने उद्यानपालकैर्भ- क्तिपूर्वं स विज्ञप्तः, स्वामिन्! संवर्धसे यदद्यात्रनगरे तव जनको घनरथो जिनः समवासार्षीत्.

तत श्रुत्वा तस्मै पारितोषिकं दानं दत्वा कुमारसंयुतो राजा जिनेश्वरं नंतुं समाययौ. तत्र गत्वा जिनं नत्वा भक्तिभावितमानसो यथास्थानं निषसाद. अत्रांतरे घनरथो जिनः सर्वभाषानुगया वाण्या जंतूनां प्रतिबोधार्थं धर्मदेशनां विदधे, यथा—

भो भव्या इह कर्तव्यो । जिनार्चननमस्कृतौ ॥ अपूर्वपाठश्रवणे । चाप्रमादो निरंतरं ॥ १ ॥
पुण्यात्मा यो भवेज्जीवो—ऽप्रमत्तो धर्मकर्मणि ॥ तस्यापदपि सौख्याय । भवेद्भाग्योदयस्तथा ॥ ॥ २ ॥ इमां देशनां श्रुत्वा मेघरथो राजा जातव्रतपरिणामो गृहं गत्वा दृढरथंप्रति प्रोचे. बंधो! राज्यं गृहाण? अहं तु व्रतं प्रतिपद्ये, सोऽवादीदहमपि त्वया सह व्रतं करिष्ये. ततो मेघरथेनात्मतनयो मेघसेनो राज्ये निवेशितो, दृढरथात्मजो रथसेनाभिधश्च यौवराज्यपदे स्थापितः. ततः स्वयं नृपाणां चतुःसहस्रैः पुत्राणां सप्तशतैश्च सार्धं बंधुना च समं जिनांतिके प्रवव्राज. स मेघरथो राजर्षिः सदा समितिगुप्तिसंयुक्तो निजदेहेऽपि निरपेक्षः परीषहानधिसेहे. एवं काले गच्छति बहून् जीवान् प्रतिबोध्य जगतीतले विहृत्य धौतकर्ममलो घनरथो जिनो मोक्षं ययौ. मेघरथर्षिणा च स्थानकैर्विंशतिभिस्तीर्थकरगोत्रकर्मार्जितं. तानि विंशतिस्थानकानि यथा—अरिहंत १ सिद्ध २ पव-

यण ३ । गुरु ४ थेर ५ बहुस्सुय ६ तवस्सीसु ७ ॥ वच्छलया एएसिं । अभिक्खनाणोवओगे अ ८
॥ १ ॥ दंसण ९ विणए १० आव—स्सए य ११ बंभवए निरईआरो १२ ॥ खणलव १३ तवच्चि·
आए १४ । वेआवच्चे १५ समाहीअ १६ ॥ २ ॥ अपुव्वनाणग्गहणे १७ । सुअभत्ती १८ पवयणे
१९ पभावणया २० ॥ एएहिं कारणेहिं । तित्थयरत्तं लहइ जीवो ॥ ३ ॥ ततः स सिंहनिःक्रीडितं तपश्चचार. एवमन्यान्यपि तपांसि तेन तप्तानि. सम्यग् संयमं वर्षलक्षमन्यूनं पालयित्वा सानुजो भगवान् मेघरथो राजर्षिस्तिलकाचले पर्वतेऽनशनं व्यधात्. मासपर्यंतेऽनशनं समाप्य स समाधिना कालं चक्रे. गतो दशमो भवः. एकादशे च भवे स सर्वार्थसिद्धिसंज्ञे विमाने सुरः संजज्ञे. अथ द्वादशो भवः कथ्यते यथा—

इतश्चात्रैव भरतक्षेत्रे कुरुदेशे प्रवरप्राकारोपगूढं, कपाटपरिखापरिमंडितं, सतोरणं, चतुर्दिक्षु वापीकूपतडागवाटिकाभिरामं, भूभामिनीभालस्थलतिलकोपमानं, पंडितसमूहैर्नगरगुणवर्णनावसरे स्तूयमानं, सर्वगुणैः सुंदरं हास्तिनापुरं नाम नगरमस्ति. यस्मिन्नगरे दारिद्र्यस्यैव दारिद्र्यमस्ति, अधर्मस्यैव पीडनं, अन्यायस्यैव च निग्रहो नान्यस्येति. तस्मिन्नगरे इक्ष्वाकुवंशतिलको विष्वक्सेन इव

सेनावान् विश्वसेनो नाम नृपोऽस्ति. तस्य राज्ञः पुण्यलावण्यनिपुणा धर्मरुचिराऽचिरादेवीति प्रियास्ति. इतश्च भाद्रपदे मासे कृष्णसप्तम्यां भरणीगते चंद्रे सर्वग्रहेषूच्चस्थानस्थितेषु निशांतरे सर्वार्थसिद्धिविमानात् त्रयस्त्रिंशत्सागराण्यायुः परिपूर्य मेघरथदेवजीवोऽचिरादेव्याः कुक्षिसरसि हंसवदवतीर्णः. तस्मिन् समये सुखसुप्ता देवी चतुर्दशमहास्वप्नानद्राक्षीद्यथा—मातंग १ वृष २ हर्यक्षाः ३ । साभिषेकेंदिरा ४ तथा ॥ पुष्पमाले ५ दु ६ सूर्यौ ७ च । ध्वज ८ कुंभौ ९ सरोवरं १० ॥ १ ॥ सागरश्च ११ विमानं १२ च । रत्नानां संचयस्तथा १३ ॥ निर्धूमो हुतभुक् चेति १४ । स्वप्ना आगमभाषिताः ॥ २ ॥ देवीमान् स्वप्नान् दृष्ट्वा जागरिता सती भूपराजं गत्वा प्रमोदभरनिर्भरा समाचख्यौ. तान् स्वप्नान् श्रुत्वा प्रहृष्टमुखपद्मो जगतीपतिर्जगाद. हे देवि! सर्वलक्षणसंपूर्णस्तवात्मजो भावी. स्वप्नस्यैतत्फलं श्रुत्वा राज्ञी कुस्वप्नालोकशंकिनी धर्मचिंतया रात्रिशेषकमतिक्रमयतिस्म. प्रगे संजाते राज्ञा निजपूरुषैरष्टांगनिमित्तज्ञानपंडिताः समाहूताः. ते कृतमंगलोपचारा नृपौकसि संप्राप्ता दत्तासनेषु चोपविष्टाः. कुसुमादिभिश्चार्चिता राज्ञा स्वप्नफलं पृष्टाश्चैवं बभाषिरे, हे जगतीपतेऽस्माकं शास्त्रे द्विचत्वारिंशत्स्वप्नाः संति, तेषु त्रिंशन्महास्वप्नाः संति. तत्रार्हतां चक्रिणां च मातर एतांश्चतु-

र्दश स्वप्नान् पश्यंति, अर्धचक्रिणां मातरः सप्त, शीरिणां चतुरः, तथा प्रत्यर्धचक्रिणां त्रीन्, अन्येषामुत्तमजन्मिनां मातरश्चैकैकं स्वप्नं पश्यंति. हे राजन्! यदचिराद्देव्या चतुर्दश महास्वप्ना दृष्टास्तेन तव षट्खंडभरताधिपश्चक्री विश्वत्रितयाधीशवंदितचरणो जिनो वा सुतो भावी. तत श्रुत्वा मुदितो राजा, सा तत्प्रियापि मुमुदे. दानमानादिभिस्तोषिताः स्वप्नपाठका विसृष्टाः स्वस्वगृहं ययुः. राज्ञी सेवधिं रत्नगर्भेव गर्भं बभार. ततो गर्भहितार्थमतिक्षारमतिमधुरमतितिक्तमतिरुक्षमतिस्निग्धमाहारं राज्ञी वर्जयामास. तद्देशे तस्मिन् समये तत्पुरे पूर्वं महदशिवमासीत. तेन मांद्यदोषेण लोकस्य महान् प्रलयः संजातः, प्रभोर्गर्भगतस्य प्रभावात्तत्क्षणं तन्मंडलमुपशांतरोगं जातं. सर्वस्मिन् देशे ग्रामे तस्मिन्नगरे च शांतिर्जाता. सार्धाष्टमदिनाधिके नवममासे गते ज्येष्ठकृष्णत्रयोदश्यां भरणीस्थे चंद्रे उच्चस्थानस्थितेऽन्यग्रहे शुभलग्ने चारुमारुते प्रवाते निशीथसमये सुवर्णवर्णं मृगलांछनं विश्वत्रयसुखावहं साचिराराज्ञी विश्वदीपकं पुत्रं सुषुवे. अत्रांतरे कंपितासनाः षट्पंचाशद्दिक्कुमार्यः समागत्य जिनजन्मोत्सवं यथोक्तं विदधुः. ततश्चलितासनाश्चतुःषष्टिसुरेंद्राः समभ्येत्य मेरुशिरसि नीत्वा तस्य जन्ममहं चक्रुः. सौधर्मेंद्रः कृतजन्ममहः स्वामिनं समानीय मातुरर्पयामास. ततः सौध-

मैंद्रो बाढस्वरेणैवं बन्नाषे, यथा—

जिनस्य जिनमातुश्च । यो डुष्टं चिंतयिष्यति ॥ एरंम्फलवद् ग्रीष्मे । स्फुटिष्यत्यस्य मस्तकं ॥ १ ॥ ततो रत्नसुवर्णादिवृष्टिं कृत्वा नंदीश्वरेऽष्टाह्निकां च कृत्वा सौधर्मेंद्रः स्वस्थाने गतः. एवं सुरेश्वराः सर्वदिक्कुमार्योऽपि नंदीश्वरे यात्रां कृत्वा निजं निजं स्थानं जग्मुः. अथ प्रन्नाते संजाते गाढं प्रस्खलद्गतयोंगप्रतिचारिकाः समागत्य राजानं पुत्रजन्मवर्धापनिकया वर्धापयामासुः, असौ राजा मुकुटं विना निजांगलग्नत्रूषणमासप्तसंततिं यावद्वृत्तिं च ताज्यां ददौ, अन्येषामपि याचकजनानामनिवारितदानान्यदापयत, द्वादशे दिने राजाशेषं बंधुवर्गं न्नोजयित्वा गौरवेण तत्समक्षमदोऽवदत, अस्मिन् जिने गर्न्नगतेऽशिवशांतिर्जाता, तदस्य सुतस्य सुंदरं शांतिरिति नामास्तु, तत एतन्नाम सर्वेषां संमतं संजातं, जन्ममहे शक्रसंक्रामितांगुष्टामृतेनाहारेण संवर्धितो न्नगवान् विशिष्टरूपलावण्यसंपन्नः क्रमाद्ववृधे, अष्टोत्तरसहस्रलक्षणैरलंकृतो लोकोत्तरगुणगणान्निरामो मतिश्रुतावधिसंज्ञैस्त्रिभिर्ज्ञानैः समायुक्तोऽशेषविज्ञानपारगः सर्वजननयनमनोहारियौवनश्रियाभिरामस्तातेन परिणायितः, पंचविंशतिवर्षसहस्रेषु गतेषु न्नगवान् जनकेन राज्ये निवेशितः, परिणायिताश्चानेकाः सर्वो·

तस्य सर्वांतःपुरमनोहरा मनोज्ञरूपा यशोमती जज्ञे. अथ दृढरथस्य जी·
त्कृष्टरूपाः कुलकन्यकाः. वस्त्रयस्त्रिंशत्सागराण्यायुः परिपाल्य सर्वार्थसिद्धिविमानात्परिच्युतो यशोमतीकुक्षौ चक्रस्वप्नोपसूचितः
समागात्, समये यशोमत्याः सुतो जज्ञे, तस्य स्वप्नानुसारतः शांतिजिनेन चक्रायुध इति नाम च·
क्रे. क्रमेणाष्टवर्षीयः कलाचार्यसमीपे कृतसकलकलाश्रमः सकलशस्त्रशास्त्रपारंगमी प्राप्तयौवनो राज्ञा
राजकन्यकानां पाणिग्रहणं कारितः, चक्रायुधस्ताभिः सह दोगुंदकदेव इव भोगान् बुभुजे.

अथान्यदायुधशालायां रविबिंबनिभं सहस्रारं चक्ररत्नं समुत्पन्नं, शस्त्रागाररक्षकेण राज्ञोऽग्रत-
स्तदुत्पत्तिर्निवेदिता, स्वामिना श्रीशांतिनाथेन तस्याष्टाह्निकोत्सवश्चक्रे. ततश्चक्रमायुधशालाया वि·
निर्गत्यांबरवर्त्मना चचाल, तदनु शांतिनाथः सैन्यसमन्वितः प्राचलत्. यक्षसहस्रेणाधिष्टितं चक्रं प्र-
थमं पूर्वस्यां मागधतीर्थासन्नवेलाकूले समागतं, तत्र चक्री सेनाया निवेशं कृत्वा शुभासने निषण्णा·
द, मागधतीर्थाभिमुखो मागधतीर्थाधीशं च मनसि कृत्वा तस्थौ, पूर्वस्यां दिशि समुद्रमध्ये द्वादश·
योजनांते जलस्याधोभागे मागधदेवस्य स्थानं वर्तते, तस्यासनं चलितं, तेन देवेनावधिज्ञानं प्र·
युक्तं, षट्खंडसाधनोद्यतमागतं शांतिजिनं चक्रवर्तिनं च ददर्श. दध्यौ च स मयान्योऽपि चक्री

आराध्यः, अयं तु जिनचक्री, अस्य भक्तिं सेंद्रा देवा अपि कुर्वते, अतो मयाप्यस्य सेवा कार्या. एवं विचार्य तेन सुवस्त्राभरणान्यादाय प्रभोरग्रे मुक्तानि, एवं च शशंस—तवाज्ञाकारकः स्वामिन् । पूर्वदिक्पालकोऽस्म्यहं ॥ आदेष्टव्यं सदा कृत्यं । स्वकिंकरसमस्य मे ॥ १ ॥ भगवान् श्रीशांतिजिनस्तं देवं सन्मान्य विससर्ज. ततः सुदर्शनसहितः शांतिजनः यामीं दिशंप्रति चलतिस्म. स जिनो वरदामतीर्थस्यासन्ने गत्वा स्थितः. तस्याधिष्ठायकं दक्षिणदिग्नायकं वरदाममेवं प्रभुस्तथैवासाधयत्. ततोऽसौ वारुणीमाशां प्रभासतीर्थं साधयितुं गतः, तदपि तीर्थं स तथैवासाधयत्. तत उत्तरस्यां दिशि सिंधुनदीतटे ययौ, तत्रापि पूर्वविधिना तेन साधिता सिंधुदेवी. सा देवी च समागत्य विभो रत्नमयं स्नानपीठमढौकयत्, तथा स्वर्णरूप्यमणिमृदादिमयान् कुंभानन्यामपि च स्नानसामग्रीं सुवस्त्राभरणानि चाढौकयत. ऊचे च हे स्वामिंस्तवाज्ञाकारिण्यस्म्यहं. इत्युक्त्वा सापि विभुना विसृष्टा स्वस्थानं गता.

अथ सेनापतिश्चर्मरत्नेन सिंधुनदीमुत्तीर्य प्रतीचीखंडं साधयित्वा विभुपांते समागतः. ततश्चक्रं कृतपूजं स्वामिसैन्यसंयुक्तं वैताढ्यस्य तलेऽगमत्. स्मृतमात्रो वैताढ्याद्रिकुमारः प्रभोर्वशवर्त्यभवत्.

ततः खंडप्रपाताया गुहाया द्वारं स्वयमुद्घटितं, कृतमालसुरश्च जगद्भर्तुराज्ञां प्रपन्नवान्. तस्यां गुहायामुन्मग्नानिमग्नानाम्न्यौ द्वे नद्यावतिदुस्तरे स्तः. वार्धकिस्तत्र मनोहरां पद्यां सद्यश्चकार. प्रभुः सैन्यसमन्वितस्तां पंचाशद्योजनायामां द्वादशयोजनोच्चां द्वादशयोजनविस्तीर्णां खंडप्रपातगुहां प्रविवेश. तत्र काकिणीरत्नेन तमो हर्तुं प्रभुर्जित्वौ जित्वावेकोनपंचाशन्मंडलानि चक्रे. एवं जगत्त्रितयनायको भगवान् शांतिजिनो गुहायाः परतो निरगात. तत्रापातचिलाताख्यान् म्लेच्छांश्च स तरसा वशीचकार. तत्र सेनानीर्द्वितीयं सिंधुनिष्कुटं साधयित्वा समागतः, ततोऽसौ हिमवत्पर्वतस्याधिदेवं साधयतिस्म. ततोऽग्रे गत्वा वृषभकूटाख्ये गिरौ निजं नाम लिलेख. ततः सेनापतिर्गंगोत्तरनिष्कुटमसाधयत्. विभुश्च तमिस्रायां नाट्यमालं संसाध्य गुहातो निरगात. पश्चाद्गंगां साधयित्वा तस्याः कूले तस्थुषः प्रभोर्नव निधयः प्रादुर्बभूवुः. कथंभूताः? मंजूषाकृतयः, द्वादशयोजनायामाः, नवयोजनविस्तृताः, नवयोजनोच्चाश्चक्रवर्तिभोग्योपस्थिताश्च. यथा—निसर्पः १ पांडुकश्चैव २। पिंगलः ३ सर्वरत्नकः ४ ॥ महापद्मः ५ काल ६ महा—कालौ ७ माणव ८ शंखकौ ९ ॥ १ ॥ तत्र स्कंधावारपुरादीनां निवेशः प्रथमे १, सर्वेषां धान्यादीनामुत्पत्तिर्द्वितीये २, महिलानां नराणां च हस्ति-

नां वाजिनां चाभरणविधिः सर्वस्तृतीये ३, चतुर्दशापि रत्नान्युत्पद्यंते चतुर्थे ४, वस्त्राणां रंगादीनां च संभवः पंचमे ५, कालत्रयज्ञानं षष्टे ६, स्वर्णरूप्यमणीनां प्रवालानां च संभवः सप्तमे ७, युद्धनीतिः सर्वप्रहरणानि योधानां तनुत्राणादि चाष्टमे ८, समस्तानि तूर्यांगानि, चतुर्विधं काव्यं, नाट्यनाटकयोर्विधिश्चेति नवमे ९. तेषु निधिषु निधानसमनामानः पल्योपमायुष्काः कुलदेवताः परिवसंति. गंगायाः पूर्वनिष्कुटमपि स तथैवात्मवशीचकार.

एवं षट्खंडं भरतक्षेत्रं साधयित्वा महामहेन हस्तिनापुरे ससैन्यः शांतिजिनः समागात्. द्वात्रिंशन्महीपालसहस्रैश्च तस्य द्वादशवार्षिकश्चक्रवर्त्यभिषेको विदधे. राज्याभिषेकादनंतरं प्रत्यहमेकैको राजा स्वामिने प्रचुरं द्रव्यं रूपनिर्जितसुरांगने च द्वे द्वे कन्यके ददौ. एवं विभोश्चतुःषष्टिसहस्राणि प्रिया अभवन्. सेनापतिप्रभृतीनि चतुर्दश रत्नानि यक्षसहस्रेणैकेन समधिष्टितानि भवंति. चतुरशीतिलक्षाणि करिणां, चतुरशीतिलक्षाणि वाजिनां, चतुरशीतिलक्षाणि रथानां, द्विसप्ततिसहस्राणि पुराणां ऋद्धिशालिनां, षण्णवतिकोट्यः पदातीनां ग्रामाणां च, द्वात्रिंशत्सहस्राणि देशानां भूभुजां द्वात्रिंशद्बद्धतरुणीनाटकानां च, विंशतिः सहस्राणि रत्नाकराद्याकराणां, अष्टचत्वारिंशत्सह-

स्त्राणि पत्तनानां. एवमसमां चक्रिपदवीं पालयतस्तस्य पंचविंशतिवर्षसहस्राणि ययुः. अत्रांतरे लो·
कांतिकानां देवानां सारस्वतादीनामासनानि चलंतिस्म. ते विभोर्व्रतसमयं ज्ञात्वा स्वाम्यंतिके स·
मागत्य जिनं नत्वा जयजयेत्याशिषं दत्वा तीर्थं प्रवर्तयेत्युक्त्वा स्वस्थानमगमन्. स्वाम्यप्यवधिज्ञाने·
न व्रतसमयं ज्ञात्वा याचकेभ्यो यथारुचि सांवत्सरं दानं ददौ. ततो निजं तनयं चक्रायुधं राज्ये
निवेश्य भगवान् दीक्षाग्रहणार्थं समुद्यतो बभूव. अत्रांतरे चलितासनाः सर्वेऽपि सुराधीशाः शांति·
नाथस्य निःक्रमणोत्सवं कर्तुमाययुः. श्रीशांतिनाथो देवमनुजकृतां सर्वार्थसंज्ञां शिबिकामारुरोह.
देवैः शिरसि धृतातपत्रश्चामरैर्वीज्यमान एवंविधसामग्र्या शनैः शनैर्नगरान्निर्गत्य सहस्राम्रवनाभिधा·
नमुद्यानप्रवरं प्राप. तत्र गत्वा शिबिकायाः समुत्तीर्याभरणानि मुक्त्वा जिनेश्वरः पंचभिर्मुष्टिभिः के·
शानुच्चखान. तान् केशान् सौधर्मेंद्रो वस्त्रांचले गृहीत्वा क्षीराब्धौ चाक्षिपत. ज्येष्ठासितचतुर्दश्यां भ·
रणीगते शशांके सिद्धनमस्कारं कृत्वा प्रभुश्चारित्रमाददे. तत्क्षणोत्पन्नमनःपर्यवज्ञानः कृतषष्ठतपा नृ·
पसहस्रेण सार्धमात्तसामायिकः प्रभुर्महीतले विजहार.

स्वामिनः प्रथमपारणकं सुमित्राख्यगृहस्थेन कस्मिंश्चित्सन्निवेशे परमान्नेन कारितं. चतुर्ज्ञान·

धरो विभुर्महीतलेऽष्टौ मासान् विहृत्य पुनर्हस्तिनापुरे समाययौ. ततो विभुः पत्रपुष्पफलाढ्ये नंदिवृक्षतले तस्थौ. प्रभोस्तदा शुक्लध्याने वर्तमानस्य कृतषष्ठस्य शुक्लायां नवमीतिथौ भरणीस्थे चंद्रे क्षीणे कर्मचतुष्टये समुज्ज्वलं नित्यं केवलज्ञानमुत्पन्नं. समागता देवा देव्यो नरा नार्यश्च. कृतं समवसरणं, पूर्वसिंहासने स्थितो भगवान् मधुक्षीरासवलब्धियुक्तया सर्वभाषानुगया वाण्या धर्मदेशनां विदधे. सहस्रायुधादयः प्रेमपरायणास्तां देशनां शृण्वंति. यथा—निर्जिताः शत्रवो लोके । महाराज त्वमी त्वया ॥ नाद्यापि निर्जिता देहे । रिपवस्त्विंद्रियाह्वयाः ॥ १ ॥ शब्दरूपरसगंध—स्पर्शाख्या विषयाः खलु ॥ अजितेष्विंद्रियेष्वेते । महानर्थविधायिनः ॥ २ ॥ वितत्य कर्णौ व्याधस्य । गीताकर्णनतत्पराः ॥ हरिणा मरणं यांति । श्रोत्रेंद्रियवशंवदाः ॥ ३ ॥ शलभः कनकाकारां । प्रदीपस्योल्लसच्छिखां ॥ पश्यन् प्रविश्य तत्राशु । म्रियतेऽनिर्जितेक्षणः ॥ ४ ॥ मांसपेशीरसास्वाद—लुब्धः कैवर्तवश्यतां ॥ यात्यगाधजलस्थोऽपि । मीनो रसनया जितः ॥ ५ ॥ भृंगः करिमदाघ्राण—लुब्धः प्राप्नोति पंचतां ॥ दुःखं वा सहते नागो । घ्राणेंद्रियवशः खलु ॥ ६ ॥ हस्तिनीवपुषः स्पर्श—लुब्धोऽथ करिपुंगवः ॥ आलानबंधनं तीक्ष्णां—कुशघातं सहेत भोः ॥ ७ ॥

एवमिंद्रियस्वरूपं साधुश्रावकव्रतरूपं धर्मं च श्रीशांतिजिनोदितं श्रुत्वा सकला सभामृतसिक्तेव बभूव. अत्रांतरे चक्रायुधमहीपतिः समुत्थाय जिनं नत्वा कृतांजलिः प्रभुं विज्ञपयामास हे प्रभो! समस्तसंशयध्वांतनिर्नाशनदिवाकराय तुभ्यं नमोऽस्तु. हे प्रभो मम दुःकर्मनिगडान् भंक्त्वा रागद्वेषाररीनुद्घाट्य भवगुप्तिगृहान्मां निस्सारय? स्वामिनोक्तं भो नरेंद्र! धर्मे प्रमादो न विधेयः. ततो गृहे गत्वा पुत्रप्रदत्तराज्यः पंचत्रिंशन्नृपान्वितश्चक्रायुधो धरापतिर्जिनेंद्रेण दीक्षितः. ततस्तेषां साधूनां जिनेन त्रिपद्यारोपिता, ते मुनयो गाढप्रज्ञावंतस्त्रिपद्या अनुसारेण क्षणाद् द्वादशांगानि विदधिरे. ते सर्वे द्वादशांगीं विधाय जिनसन्निधौ समागताः, भगवांस्तानागतान् विज्ञाय सिंहासनादुत्तस्थौ. अत्रांतरे सहस्राक्षः सद्गंधवासपूरितं विशालं स्थालं समादाय शांतिनाथपुरतस्तस्थौ. जिनेश्वरः समस्तसंघस्य गंधानर्पयामास. ततस्ते साधवः प्रभुं परितः प्रदक्षिणात्रयं ददिरे. तदुत्तमांगेषु ससंघो जिनो गंधवासानक्षिपत्. जिनेनैवं तेषां गणधरपदस्थापना विनिर्मिता. ततो जिननाथेन बहवः पुरुषाः स्त्रियश्च दीक्षिताः. ततो जिनस्य साधुसाध्वीपरिवारः समजायत. तथा ये नरा नार्यश्च यतिधर्मासमर्थास्ते स्वाम्यंतिके श्रावकत्वं प्रपेदिरे. एवं चतुर्विधः संघः शांतिजिनस्य प्रथमे स·

मवसरणे समुत्पन्नः. प्रथमपौरुष्यंते समुत्थाय जिनेश्वरो द्वितीयप्राकारमध्यस्थे देवछंदके श्रमापनयनार्थं विशश्राम, ततो जिनेंद्रस्य पादपीठे प्रथमो गणी चक्रायुधो निषण्णो द्वितीयपौरुष्यां तस्याः सदसः पुरो व्याख्यानं चक्रे, यथा—जिनधर्मस्थिरीकार—कारिणीमघहारिणीं ॥ संघस्य कथयामास । सोंतरंगकथामिमां ॥ १ ॥ तथाहि—

अत्र मनुष्यलोके क्षेत्रे शरीरे नगरे बलवान् मोहनामा महीपालः स्वेच्छया विलसति, तस्य मायानाम्नी प्रियास्ति, तत्पुत्रोऽनंगनामा, लोभनामा महामात्यः, क्रोधनामा योधश्चास्ति, रागद्वेषावतिरथौ मिथ्यात्वनामा मंडलेश्वरश्चास्ति, मोहराजस्य वाहनं मानगजेंद्रोऽस्ति, इंद्रियाश्वमारूढा विषयास्तस्य सेवका वर्तंते. एवं मोहराजस्य सैन्यमतिदुर्धरं वर्तते, तत्र नगरे कर्मसंज्ञाः कृषीवलाः, प्राणाः प्रौढवणिजो, मानसनामा रक्षकश्च वसंति. गुरूपदेशदानेन मानसे भेदिते ससैन्यो धर्मराजस्तत्र सैन्ये प्रविवेश, तस्य मनोहराचारवतीनाम्नी पट्टराज्ञ्यस्ति, संतोषनामा महामात्योऽस्ति, सम्यक्त्वनामा मंडलेश्वरोऽस्ति, महाव्रतनाम सामंताः, अणुव्रतादयः पत्तयः, वाहनं च मार्दवनामा गजेंद्रोऽस्ति, उपशमादयो योद्धारो वर्तंते, सच्चारित्ररथारूढः श्रुतनामा सेनानीर्वर्तते, तेन धर्मराजे-

नासौ मोहराजो निर्जित्य शरीरपुरान्निष्कासितः, पश्चाद्धर्मराजः सर्वेषां लोकानामिमामाज्ञां ददाति, भो भो लोकाः! मोहराजस्यावकाशो केनापि न देयः, एवं कृतेऽपि यः कश्चिन्मोहस्यावकाशं दास्यति स पुनः कर्मपरिणत्या संसारपथि संस्थाप्यते. एवं गणधरेण प्रवरा धर्मदेशना कृता, स्वयं निर्मिता द्वादशांगी च कथिता, तथा साधूनां च दशविधा सामाचारी प्रकल्पिता, साधूनामशेषकृत्यं चामुना श्रुतकेवलिना सर्वं समुपदिष्टं. ततः शांतिजिनवरो महीतले भव्यान् प्रतिबोधयन् विजहार, केचिज्जना भगवतः पार्श्वे प्रव्रज्यां जगृहुः, केचिद् गृहस्थधर्मं शुभभावतः प्रपेदिरे, केचन विरतिं, केचन सम्यक्त्वं च प्रपेदिरे, जिनभास्करे उदिते सर्वस्यापि पापतमो नष्टं, परं कौशिकानां यथांधत्वं न नश्यति, तथाऽभव्यानां जिनेनापि सिद्धिर्न जायते. श्रीमच्छांतिजिनश्चतुस्त्रिंशदतिशयैर्विराजमानः पंचत्रिंशद्वाग्गुणैर्विभूषितो भव्यान् प्रतिबोधयन् मह्यां विहरतिस्म, चक्रायुधगणधरः शुश्रूषां कुर्वाणः शांतिजिनेंदुना सह भूतले विचचार. पृथिव्यां विहरता शांतिनाथेन षट्त्रिंशद्गणधरैः संयुक्ता द्वाषष्टिसहस्राणि मुनिपुंगवा दीक्षिताः, षट्शतैरधिकान्येकषष्टिसहस्राणि शीलशोभितानि प्रभुदीक्षितानां श्रमणीनामभूवन्, श्रीशांतिनाथेन बोधितानां शुद्धसम्यक्त्वधारिणां श्राद्धानां नवति·

सहस्रयुक्ता लक्षद्वयी जाता, शुद्धसम्यक्त्वधारिणीनां श्राद्धीगुणैरलंकृतानां श्रीजिनप्रतिबोधितानां त्रिनवतिसहस्राधिकत्रीणि लक्षाणि श्राद्धीनां चाभवन्. जिनानां जिनसदृशानां चतुर्दशपूर्वभृतामष्टसहस्राणि चाभवन्. शांतिजिनस्य सहस्रत्रितयमवधिज्ञानिनामभवत्, मनःपर्यवज्ञानिनां सहस्रचतुष्टयी जाता, केवलज्ञानयुक्तानां मुनीनां त्रिशताधिकचतुःसहस्राणि बभूवुः. वैक्रियलब्धिमतां षट्सहस्राणि. चतुःशताधिके द्वे सहस्रे वादिनां, तथा वैयावृत्त्यकरः संघप्रत्यूहहरः शांतिजिनेशितुस्तीर्थरक्षाकरो गरुडनामा यक्षोऽभूत्. शांतिनाथतीर्थरक्षाकारिणी निर्वाणीनाम्नी विश्रुता शासनदेवता जज्ञे, तथा शांतिनाथस्याष्टौ प्रातिहार्याण्यशोकादीनि जज्ञिरे.

एवं श्रीशांतिनाथः पंचविंशतिवर्षसहस्राण्यनगारतां पालयन् पृथिव्यां विहरतिस्म, तत्राष्टौ मासांश्छद्मस्थत्वेन, शेषाणि च केवलित्वेन विचचार, प्रभोः कौमारत्वे पंचविंशतिवर्षसहस्राणि, तावंति वर्षसहस्राणि मंडलिकत्वे, पंचविंशतिवर्षसहस्राणि चक्रित्वे, पंचविंशतिवर्षसहस्राण्यणगारत्वे, एवं च प्रभोर्वर्षलक्षं सर्वायुरभवत्. अथ जगद्गुरुः स्वस्य निर्वाणसमयमासन्नं ज्ञात्वा स्वयं सम्मेतशिखरे आरुरोह, स्वाम्यासन्नं निर्वाणं ज्ञात्वा सर्वे सुरेश्वराः समभ्येत्यांतिमं समवसरणं चक्रुः, भगवां-

स्तत्रोपविश्यांतिमायां देशनायां सर्वभावनामनित्यतां समाचख्यौ. अत्रांतरे चक्रायुधगणधरः पाद· प्रणामपूर्वकं सिद्धशिलास्वरूपं सिद्धस्वरूपं च पप्रछ, भगवानपि तयोः स्वरूपं प्रोवाच यथा—पंच· चत्वारिंशल्लक्षाणि योजनानां विस्तृता श्वेतोत्तानछत्रसंस्थिता सकललोकस्योपरि प्रतिष्टिता पिंडेऽष्टौ योजनानि क्रमात संक्षिप्तांते मक्षिकापत्रतन्वी सिद्धशिला वर्तते, तस्योपरि योजनस्य षष्ठांशकेऽनं· तसौख्यसमन्विताः सिद्धाः प्रतिष्टिताः, तत्र तेषां सिद्धानां जन्मजरामरणरोगशोकाद्युपद्रवो नास्ति, तत्र निरुपमं सौख्यं सिद्धानां वर्तते. यतः—जं च कामसुहं लोए । जं च दिव्वं महासुहं ॥ वीय· रायसुहस्सेहिं । अणंतभागंपि नग्घइ ॥ १ ॥ एवमंतिमां देशनां समाख्याय भगवांस्ततः स्थानात समुत्थाय महीभृतः क्वापि प्रधानशिखरे आरुरोह. केवलज्ञानिनां साधूनां नवभिः शतैः सार्धं तत्र· कमासिकमनशनं व्यधात. तस्मिन् समये सपरिवाराः सर्वेऽपि सुरेंद्राः परमप्रीतिसंपन्नाः प्रभुपर्युपास· नां चक्रिरे. ज्येष्टस्यामत्रयोदश्यां निशाकरे भरणीस्थे शुक्लध्यानस्य चरमं भेदं ध्यायन् प्रभुः शांति· जिनः सिद्धिं ययौ. ते सर्वेऽपि साधवः केवलज्ञानिनोऽनशनिनः स्वामिना सह मोक्षं ययुः. सि· द्धिगतं नाथं ज्ञात्वा देवासुरमनुजगणाः साश्रुपूर्णाक्षाः प्रभोर्गुणान् स्मारं स्मारं विलपंतिस्म. हा

नाथ! संशयध्वांतविच्छेदनदिवाकर! अस्माननाथान् मुक्त्वा त्वं क्व गतोऽसि? भवंतं विना स्वभाषा-परिणामामाह्लाददायिनीं धर्मदेशनां कः कर्ता भविष्यति? इत्यादिविलापान् कृत्वा श्रीशांतिजिनेशितुः शरीरं क्षीरोदध्यादिवारिणा स्नापयामासुः. ततो नंदनवनसमुद्भगोशीर्षचंदनेनानुलिप्य, देवदूष्यवासांसि परिधाप्य मुखे कर्पूरं दत्वा, चंदनादिभिः पूजयित्वा, वररत्ननिर्मितायां शिबिकायां क्षिप्त्वा, ततः समुत्पाट्य चंदनदारुकृतचितामध्ये तज्जिनेंद्रवपुरक्षिपन्. शेषानगाराणां शरीराणि वैमानिकामरास्तथैव चंदनादिभिः संपूज्य शिबिकायां समारोप्य चितायामक्षिपन्.

ततोऽग्निकुमारा देवा मुखेऽग्निं ददुः, वायुकुमारा देवा वातं ववुः. एवमग्नौ प्रदीप्ते दग्धे मांसशोणिते. ततो मेघकुमारेण सुरभिशीतलं वारि मुक्तं, निर्वापिता चिता. ततश्चोर्ध्वस्थां दक्षिणां दंष्ट्रामाद्यवासवेंद्रो जग्राह, अधःस्थितां चमरेंद्रो, वामामुपरिस्थामीशानेंद्रोऽधःस्थां बलींद्रश्च. शेषाष्टाविंशतिदंतास्तत्संख्यैः शेषवासवैर्जगृहिरे. शेषास्थीनि पुनर्देवैर्जगृहिरे. जगद्गुरोश्चितानस्म विद्याधरनरैः सर्वोपद्रवरक्षार्थं जगृहे. एवं विहितसंस्काराः सुरेंद्रास्तद्भूमौ स्वर्णरत्नमयं स्तूपं चक्रुः. तस्योपरि जगद्गुरोः स्वर्णमयीं प्रतिमां कृत्वा देवेंद्राः पूजयामासुः. ततो नंदीश्वरयात्रां कृत्वा ते स्वं स्वं

विजहार. पृथिव्यां विहरतश्चक्रायुधो भगवान् भव्यान् प्रतिबोधयन् महीपीठे विजहार. पृथिव्यां विहरतश्चक्रा-
स्थानंप्रति ययुः. चक्रायुधो भगवान् भव्यान् प्रतिबोधयन् महीपीठे कोटिशिलायां शिवं प्रय-
युधमुनेः केवलमुत्पन्नं. सोऽपि केवली चक्रायुधो गणभृद्बहुसाधुपरिवृतः कोटिशिलायां शिवं प्रय-
यौ. सर्वोपसर्गाः स्मरणेन यस्य । व्रजंति यः कामितकल्पवृक्षः ॥ भव्यांगिनां यो वरदानदक्षः । स
शांतिनाथः प्रकरोतु शांतिं ॥ १ ॥ इवं यः सकलोपसर्गहरणः कल्याणकृद्देहिनां । ख्यातो द्वादश-
भिर्भवैर्गुणवतां पूज्यो जगत्त्रायकः ॥ भीतो येन जिनेन कंपितवपुः पारापतो रक्षितः । स श्री-
शांतिजिनो जगत्त्रयपतिर्भूयात्सतां शांतये ॥ २ ॥ इति श्रीशांतिनाथचरित्रं संक्षेपतः समाप्तं. शां-
तिचरित्रेण दिग्मात्रदर्शितेन 'करुणाइ दिन्नदाणो' इति प्ररूपितं. अथ साधूनामन्नादिदानफलमाह—

॥ मूलम् ॥—पंचसयसाहुभोअण—दाणावज्जिअसुपुण्णपब्भारो ॥ अच्छरियचरिअभरिओ ।
भरहो भरहाहिवो जाओ ॥ ७ ॥ व्याख्या—एकादशभवे बाहुसाधुर्भरतजीवः 'पंचसएत्ति' पंच-
शतसाधूनां 'भोअणत्ति' भोजनमन्नपानादि, तद्दानेनावर्जितः सुपुण्यप्राग्भारो येन स तथा
'अच्छरिअत्ति' आश्चर्यकारि यच्चरितं तेन भृतः 'भरहोत्ति' भरतः प्रथमचक्रवर्ती 'भरहाहिवो-
त्ति' भरताधिपः षट्खंडनायको जात इति गाथाक्षरार्थः. विस्तरार्थस्तु कथानकादवसेयः, तत्कथा

चेयं—ऋषभदेवैकादशभवे वैद्यपुत्रजीवानंदजीवो १, राजपुत्रमहीधरजीवो २, मंत्रिपुत्रसुबुद्धिजीवः
३, श्रेष्टिपुत्रगुणाकरजीवः ४, सार्थपतिपूर्णभद्रजीव ५ श्चैते पंचापि परममैत्र्या अच्युतकल्पे त्रिदि-
वश्रियं भुक्त्वा द्वाविंशतिसागराण्यायुः परिपाल्य च्युत्वा जंबूद्वीपे पूर्वमहाविदेहे लवणवारिधेस्तटे
पुष्कलावतीविजये पुंडरीकिण्यां नगर्यां वज्रसेनस्य राज्ञो धारिण्यां पट्टराज्ञ्यां कुक्षौ ते पंचाप्यनुक्र-
मेण पुत्रत्वेनोत्पन्नाः. तेष्वाद्यो भिषग्जीवो वज्रनाभनामा चतुर्दशस्वप्नसूचितो विशिष्टसाम्राज्यवैभ-
वो जातः १. द्वितीयो बाहुनामा २, तृतीयः सुबाहुनामा ३, चतुर्थः पीठनामा ४, पंचमो महापीठ-
नामा ५ चेति. पंचापि परमबांधवाः परमवशंवदाः क्रीडया कालं गमयामासुः. वज्रसेननृपस्यान्यदा
लोकांतिकामरैः समागत्य दीक्षासमयो ज्ञापितः. स्वाम्यपि लोकांतिकोक्तं श्रुत्वावधिज्ञानेन च ज्ञा-
त्वा वज्रनाभं ज्येष्टपुत्रं राज्ये न्यवेशयत्. सांवत्सरिकदानं दत्वा सुमुहूर्ते देवेंद्रकृतमहो भगवान् व-
ज्रसेनो बहुपरिवारपरिवृतः संयममशिश्रियत्. तत्क्षणादेव चारित्रसंपदा साकं तुर्यं मनःपर्यायज्ञान-
मासदत्. स भगवान् वज्रसेनो जिनो मह्यां विहरन् संयमं पालयामास. कतिपयवर्षांते वज्रनाभम-
हीपती राज्यं पालयन् चक्ररत्नोत्पत्तिवर्धापनिकया वर्धितः, तथा तस्मिन्नेव दिने समकालं वज्रसेन-

ज्ञिनपतेः केवलोत्पत्तिवर्धापनिकयापि वर्धितः.
ततो राज्ञा वज्रनाभेन वज्रसेनजिनस्य केवलमहिमानं विधाय ततोऽष्टाह्निकोत्सवश्चक्रस्य वि
दधे, चक्रानुगो वज्रनाभश्चक्री पुष्कलावतीविजयषट्खंडं विजित्य प्राप्तचक्रिपदः कामं धर्मार्थकामान्
साधयन्नास्ते. एवं बहूनि वर्षाणि यावत्कृतराज्यो भुक्तचक्रवर्तिभोगः समुत्पन्नवैराग्यः सुतं राज्ये न्य-
स्य सर्वबंधुसहितो नृपस्तातपादांते दीक्षां जग्राह. वज्रनाभो राजर्षिः स्थविरोपांते द्वादशांगान्यधीत्य
सूरिवरो जातः. तेषां सूरीणां चत्वारो बांधवा एकादशांगधरा बभूवुः, ते च गुरूपांते वैयावृत्त्यपराः
संयमं पालयामासुः. कियता कालेन वज्रसेनप्रभो भवोपग्राहिकर्माणि क्षयं नीत्वा निर्वृत्तिं प्राप्ते व-
ज्रनाभो गणभृद्धरायां विजहार. वज्रनाभस्य साधोः सकला लब्धयः सिद्धयश्च समागत्य पादपी-
ठांतिके लुलुठुः, तस्यान्ये बांधवाश्चत्वारोऽप्येकादशांगधराः क्षमासागरा धर्मधुराधौरेया निर्मलं संय-
मं पालयामासुः. वज्रनाभमुनींद्रोऽर्हद्भक्त्यादिभिर्विंशतिस्थानकैस्तीर्थकृत्कर्म निर्ममे. बाहुसाधुः पंच-
शतसाधूनां प्राशुकान्नपानादिदानेन चक्रिपदवीं समुपार्जयत्. सुबाहुमुनिवरः पंचशतसाधूनां विश्रा-
मणादि वैयावृत्त्यमकरोत्. तेन पुण्येन स चक्रवर्तिनोऽपि बलाधिक्यमार्जयत्. वज्रनाभमुनीश्वरस्तयोः

प्रशंसां करोति. पीठमहापीठौ महामुनी एकांते स्थितौ तपसि लीनौ वैयावृत्त्यविमुखावीर्ष्यावंतौ मायामिथ्यात्वयोगतः स्त्रीगोत्रकर्म बबंधतुः. क्रमात्ते पंचापि चतुर्दशपूर्वलक्षाणि दीक्षां पालयित्वा युरंते मृत्वा सर्वार्थसिद्धिश्रियमशिश्रियन्.

अस्मिन् जंबूद्वीपे दक्षिणार्धभरते गंगासिंधुमध्यवर्तीक्ष्वाकुभूमौ तृतीयारकपर्यंते चतुरशीतिपूर्वलक्षेषु शेषेषु किंचिदधिकेषु श्रीवज्रनाभस्य जीवः सर्वार्थसिद्धिविमानतस्त्रयस्त्रिंशत्सागरोपमसंमितायुर्भुक्त्वा कृष्णाषाढचतुर्थ्यां नाभिकुलकरमरुदेवाकुक्षौ समवातरत्. प्रभोस्तत्राद्भुतेऽवतारे भुवनत्रयं क्षणध्वस्तध्वांतं शांतदुःखं चाभूत्. तथा सा मरुदेवा भगवती जिनजन्मसूचकांश्चतुर्दश महास्वप्नानद्राक्षीत्. ततः परिपूर्णेषु दिनेषु श्यामचैत्राष्टमीदिने उत्तराषाढास्थिते चंद्रे सा मरुदेवी युगलधर्मेण सुतरत्नमसूत. समागता देवा देव्यः, कृतो जन्ममहः, वृषभलांछनत्वाद्वृषभ इति नाम पितरौ चक्रतुः. सुरस्त्रीभिः पाल्यमानोऽसौ वृद्धिं दधौ. ततो देवदेवीपरिवृतः स उत्तरकुरूद्भवैर्दिव्यैः फलभोजनैरप्रीयत, नंदनवने कल्पपादप इव ववृधे. क्रमेण स रूपसौभाग्यलावण्यपावनं यौवनं ययौ. ततः सुनंदा १ सुमंगला २ चेत्युभे रतिप्रीतिनिभे कन्यके शक्रेण परिणायिते. स्वाम्यपि त्र्यशीति-

पूर्वलक्षाणि यावद्भोगफलोदयमवधिज्ञानेन ज्ञात्वा परिणीतवान्. स्वामिनो जन्मतः षट्पूर्वलक्षेषु गतेषु तौ बाहुपीठयोर्जीवौ सर्वार्थसिद्धितश्च्युतौ सुमंगलागर्भे समागतौ. सा सुमंगलादेवी च चतुर्दश स्वप्नानद्राक्षीत. सुनंदापि तदानीं तौ सुबाहु १ महापीठजीवौ दिवश्च्युतावुदरे दधौ. ते द्वे अपि पत्न्यौ प्रीते युग्मं प्रसूते. सुमंगलायाः सुतस्य भरत इति, पुत्र्या ब्राह्मीति, सुनंदायाः सुतस्य बाहुबलीति, पुत्र्याश्च सुंदरीति नामानि दत्तानि. पुनरेकोनपंचाशत्पुत्रयुग्मानि सुमंगलासूत. एवं क्रमेण विंशतिपूर्वलक्षेषु गतेषु सौधर्मेंद्रेण स राज्ये स्थापितः. ततस्त्रिषष्टिलक्षपूर्वाणि स राज्यश्रियं बुभुजे. ततो भरतस्य राज्यं दत्वा, सांवत्सरिकं दानं च दत्वा स्वामी दीक्षां जग्राह. ततः प्रभुरप्यनार्यदेशेषु विहृत्य वर्षसहस्रांते पुरिमतालाख्येऽयोध्यापुर्यासन्नशाखापुरे शुक्लध्यानधनः केवलज्ञानमवाप. तदासनकंपेन वासवास्तत्र समीयुः. तैश्च चमत्कारिसमवसरणमकारि. ऋषभजिनः पूर्वद्वारेण प्रविश्य तीर्थं नत्वा सिंहासनं भेजे, सभालोकेषु यथास्थानं निविष्टेषु वासवो जिनं प्रदक्षिणीकृत्य स्तोत्रैः स्तुत्वा कृतकृत्यः प्रभोरुपासनाहेतोरासन्नस्थानमासदत. इतश्च भरतो भक्तिभरतो भगवंतं नंतुमनास्तत्रागतः, सुधारससोदरां स्वामिनो देशनां श्रुत्वा स्वगृहमागत्य चक्रस्याष्टाह्निकोत्सवं कृत्वा

षट्खंडं साधयितुं प्राचलत्. ततः षष्टिवर्षसहस्राणि देशान् साधयन्नेकं वर्षसहस्रं गंगाया गृहे स्थितः, तया सह च भरतो दिव्यान् भोगान् बुभुजे. ततो देशान् साधयित्वा स गृहे समागात्. एवमसमां चक्रिपदवीं पालयतो भरतस्य किंचिन्न्यूनानि पंचलक्षपूर्वाण्यतीतानि.

एकस्मिन् दिने भरतनृपालो भोजनानंतरं कृतशृंगार आदर्शगृहे स्ववपुरालोकनकृते गतः, पतितमुद्रिकामंगुलीं विरूपां दृष्ट्वा ततोऽन्यान्यप्याभरणान्यपनीय यावता विरूपं स्वं वपुरालोकयति तावता भावनारूढो भगवान् भरतः संसारासारतां चिंतयति, यथा—नित्यमित्रसमो देहः । स्वजनाः पर्वसन्निभाः ॥ नमस्कारसमो ज्ञेयो । धर्मः परमबांधवः ॥ १ ॥ यत्प्रातः संस्कृतं धान्यं । मध्याह्ने तद्विनश्यति ॥ तदीयरसनिष्पन्ने । काये का नाम सारता ॥ २ ॥ सुस्वादून्नन्नपानानि । क्षीरेक्षुविकृतीरपि ॥ भुक्तानि यत्र विष्टायै । तच्छरीरं कथं शुचि ॥ ३ ॥ अभ्यक्तोऽपि विलिप्तोऽपि । धौतोऽपि घटकोटिभिः ॥ न याति शुचितां कायः । शुंभाघट इवाशुचिः ॥ ४ ॥ इदं शरीरं परिणामदुर्बलं । पतत्यवश्यं श्लथसंधिजर्जरं ॥ किमौषधैः क्लिश्यसि मूढ दुर्मते । निरामयं धर्मरसायनं कुरु ॥ ५ ॥ इत्यादिभावनां भावयन् स केवलज्ञानमवाप, समागता देवाः, समर्पितः साधुवेषः, अन्यू-

नं पूर्वलक्षं केवलित्वे विहृत्याष्टापदे स मोक्षमगमत्. इत्थं मुनिवरदानं । पूर्वभवे भरतचक्रिणा द-
त्तं ॥ प्रवरं पुण्यनिदानं । मोक्षार्थं कुरुत भो भविकाः ॥ १ ॥ इति दानविषये भरतेश्वरकथानकं
समाप्तं. मुनीनामथौषधदानफलमाह—

॥ मूलम् ॥—मुल्लं विणावि दाउं । गिलाणपडिअरणजोगवत्थूणि ॥ सिद्धो अ रयणकंबल
—चंदणवणिओवि तंमि भवे ॥ ८ ॥ व्याख्या—' मुल्लं विणेत्ति ' राजपुत्रादिभ्यो मूल्यं विनापि,
अपिरवधारणार्थः, तेन मूल्यं विनैवेत्यर्थः, ' दाउं ' दत्वा कानि ग्लानप्रतिचरणयोग्यवस्तूनि,
ग्लानो गलत्कृमिकुष्ठव्याप्तदेहो मुनिस्तत्प्रतिचर्यायोग्यवस्तूनीत्यर्थः. ' सिद्धोत्ति ' सिद्धः शिवं प्राप्तः,
' रयणकंबलत्ति ' रत्नकंबलचंदनदानोपलक्षितो वणिगित्यर्थः, इति गाथार्थः ॥ ८ ॥ विस्तरार्थस्तु
कथानकादवसेयः, तत्कथा चेयं—

ऋषभदेवजीवो नवमभवे जंबूद्वीपे विदेहक्षेत्रमंडने क्षितिप्रतिष्ठितपुरे सत्कर्मकर्मठः सुविधेर्वै-
द्यस्य जीवानंद इति नाम्ना सूनुर्बभूव, तन्नगराधीशेशानचंद्रस्य राज्ञः कांतायां कनकवत्यां जातो म-
हीधरनामा पुत्रोऽस्ति १, तत्रैव नगरे सुनासीरस्य मंत्रिणो लक्ष्म्यां पत्न्यां जातः सुबुद्धिनामा मं-

त्रिपुत्रोऽस्ति २, तत्रैव नगरे धन्यश्रेष्टिपत्न्यां शीलवत्यां जातो गुणाकरनामा पुत्रोऽस्ति ३, तत्रैव नगरे सार्थपतेः सागरदत्तस्याजयमत्यां पत्न्यां जातः पूर्णभद्र इति नामा पुत्रोऽस्ति ४, तत्रैव नगरे ईश्वरदत्तस्य श्रेष्टिनः केशवनामा सुतोऽस्ति ५. एतेषां पंचानामपि समानगुणशालिनां जीवानंदेन वैद्येन समं मैत्र्यमभूत्. एकस्मिन् दिने ते पंचापि मित्राणि वैद्यगृहे संगताः क्रीडंतिस्म, तावता कश्चित्साधुर्माधुकरीं भिक्षां कुर्वस्तेषां नेत्रपथं ययौ, तं कुष्टिनं साधुं वीक्ष्य महीधरो राजपुत्रो जीवानंदं वैद्यपुत्रं तिरस्करोति. यथा भिषजां जन्म धिगस्तु, ये लोभग्रहग्रस्ता धनांधितधियो धनिनामेव प्रतिक्रियां कुर्वंति, न चेदृशां साधूनामुपकारं कुर्वंति, एतद्वचनं श्रुत्वा जीवानंदो जगाद, हे राजेंदुनंदन! त्वं युवापि वृद्धबुद्धिर्वर्तसे, त्वया युक्तमुक्तं, परं कथं क्रियते वैयावृत्त्यं? वस्तुत्रयं प्रत्येकं दीनारलक्षेण लभ्यते, तेषु वस्तुषु लक्षपाकाख्यं तैलं मद्गृहेऽस्त्येव, परं गोशीर्षचंदनं रत्नकंबलं च नास्ति, एतद्वैद्यवचनं श्रुत्वा ते पंचापि मित्राणि हट्टश्रेण्यां गत्वा कंचिन्महेभ्यश्रेष्टिनमूचिरे, भोः श्रेष्टिन्! दीनारलक्षाभ्यां गोशीर्षचंदनं रत्नकंबलं च देहि? श्रेष्टिनोक्तं भो कुमारकाः! आभ्यां भवंतः किं कर्तुमिच्छवः? तैरुक्तं रोगिणो मुनेश्चिकित्सां कर्तुकामा वर्तामहे. तेषां कुमाराणा-

मेतद्वचनं श्रुत्वा विस्मयस्मेरमानसः श्रेष्ठी सादरं जगाद. भोः कुमारकाः! यूयं धन्याः, ये कुष्टरोगा- भिभूतस्य मुनेर्वैयावृत्त्यं कुरुथ, मुनेर्वैयावृत्त्यं राज्येनापि न लभ्यते. यतः पुण्यनिदानानि दाना- नि कोटिशः संति, तानि सर्वाणि दानान्यारोग्यदानस्य समानतां न लभंते. भो कुमारकाः! त- स्मात्कारणाद्यूयं मूल्यं विनैवौषधं गृह्णीत? इत्युक्त्वा श्रेष्ठी रत्नकंबलचंदने तेभ्यः समर्पयामास. त- तस्ते कुमारकाः शुभशकुनैः प्रेर्यमाणा जीवानंदेन वैद्येन समं मुनेरनुपदं ययुः. स साधुर्न्यग्रोधवृ- क्षाधोभागे बाह्योद्याने गत्वा ध्याने तस्थौ. ततो वैद्यपुत्रो जीवानंदो मुनिमनुज्ञाप्य सर्वेषां पश्यतां तेनौषधेन चिकित्सां करोति. तावदादौ मुनिवपुस्तैलेनाभ्यंग्य रत्नकंबलमवेष्टयत्. तैलतापेन व्या- कुलास्तन्मुनिशरीरान्निःसृताः कृमयः शीतलत्वाद्रत्नकंबले व्यलगन्. ततस्तान् कृमीन् मृतकगोकलेव- रे दयापरो जीवानंदः पातयामास. ततो गोशीर्षचंदनस्पंदैः शीतलैः शमिनस्तापं शमयामास. एवं त्रीन् वारान् विधाय मांसास्थिगतान् जीवान्निःकास्य जीवानंदो गोशबे पातयामास. कैश्चिद्दिनैः सा- धुश्चामीकरसमछविर्जातः. तैः क्षमितो नववपुः स साधुः स्वस्थचित्तो विहारायान्यत्र ययौ. श्रेष्ठ्यपि भैषज्यदानप्रभाववैभवात्तस्मिन्नेव भवेंतकृत्केवली भूत्वा मोक्षं ययौ. ते कुमाराः शेषकंबलगोशीर्षचं-

दने विक्रीय तैः कांचनैः स्वेन लक्षद्वयेन च सम्यग् जिनप्रासादं कारयामासुः. कियता कालेन सं यमं प्राप्य सम्यग्भावनां भावयंतस्ते षडप्यच्युते कल्पे द्वात्रिंशत्सागरायुषस्त्रिदशश्रियं शिश्रियुः. इ त्थं चंदनकंबल—दायकवणिजाशु केवलं लब्धं ॥ साधुजनेभ्यो भविका । दत्तं दानं भवेच्छिवदं ॥ ॥१॥ इत्यौषधदानविषये चंदनकंबलदायकवणिक्कथानकं समाप्तं. अथ साधुभ्यः परमान्नदानफलमाह—

॥ मूलम् ॥—दाऊण खीरदाणं । तवेण सुसिअंगसाहुणो धणिअं ॥ जणजणिअचमक्कारो । संजाओ सालिभद्दोवि ॥ ९ ॥ व्याख्या—'दाऊणत्ति' दत्वा क्षीरदानं परमान्नदानं, कस्मै? त वेण सुसिअंगत्ति तपसा षष्ठाष्टमाद्यनेकभेदेन शोषितांगसाधवे, अत्र चतुर्थ्यर्थे षष्ठी, 'धणिअंति' अतिशयेन तेन क्षीरदानपुण्येन द्वितीयभवे शालिभद्रोऽपि संजातः, अपिशब्दः समुच्चये, कथंभू तः? 'जणजणिअत्ति' जनजनितचमत्कारो जनानां जनित उत्पादितश्चमत्कारो येन स तथेति गाथार्थः. ॥ ९ ॥ विस्तरार्थस्तु कथानकादवसेयः, तत्कथा चेयं—

काचिदुच्छिन्नवंशका धन्येति नाम्ना योषित्संगमकनाम्ना बालेन समं राजगृहासन्नशालिग्रामे समाययौ, स धन्यासुतः संगमको बालको ग्रामलोकानां वत्सरूपाण्यचारयत, यतो रोरबालानामियं

मृद्धजीविका. अथान्यदा सोऽर्भकः कस्मिंश्चिदुत्सवे संजाते गृहे गृहे पायसं भुज्यमानमपश्यत्, सोऽपि बालो गृहे गत्वा जननीपार्श्वे पायसं ययाचे, जननी जगाद भो पुत्रक! अहं दरिद्रास्मि, अतो मद्गृहे पायसं कुतो भवति? तेन बालेन पुनः पुनर्याच्यमाना सा निजं भर्तारं पूर्वसंपदं च स्मरंती तारं तारं रुरोद, तां रुदंतीं वीक्ष्य प्रातिवेश्मिकीनार्यो दयार्द्रहृदयाः समागत्य दुःखकारणं पप्रच्छुः, सा संगमजननी ताभ्यो गद्गदाक्षरं दुःखकारणमभ्यधत्त, यथा बालोऽयं पायसं याचते, किं करोम्यहमभाग्या? तत् श्रुत्वानुकंपातस्ता नार्यो दुग्धादिसर्वं तस्यै ददुः, संगमजननी क्षैरेयीं निष्पाद्य स्थालं भृत्वा संगमकस्यार्पयित्वा केनचित्कार्येण गृहांतर्गता. अथ संगमकः प्रकृष्टं परमान्नं परिवेशितं कदाचिदपरिभुक्तं हस्तप्रासं दृष्ट्वात्युत्कृष्टपुण्यप्रेरितश्चिंतयति, मम पुण्यप्रेरितो यदि कश्चित्साधुः समभ्येति, तदाहं तस्य तद्दत्वा शेषान्नं भुंजे तदा वरं, एवं स यावता चिंतयति तावता कश्चित्साधुर्मासमुपोषितः पारणकार्थं संगमकस्य गृहे मूर्तिमान् धर्म इव समागात्, स चिंतयति ममाद्य भाग्यं फलितं, यन्मम गृहे एष साधुः समागतः, यतः—साधु साधु महासाधु—मद्भाग्यैरयमाययौ ॥ कुतोऽन्यथा वराकस्य । ममेदृक्पात्रसंगमः ॥ १ ॥ भाग्योदयेन केनापि । ममाद्य समप·

द्यते ॥ चित्तं वित्तं च पात्रं च । त्रिवेणीसंगमो ह्ययं ॥ २ ॥ इति शुभभावनां भावयन् संगमकः पायससंभृतं स्थालं समुत्पाट्य समुत्तस्थौ, साधुरप्यनुग्रहबुद्ध्या पात्रं दधौ, सोऽपि निस्तीर्णोऽस्मीति बुद्ध्या साधवे सर्वं ददौ, करुणापरो मुनिस्तदन्नं गृहीत्वा वने ययौ, पारणकं कृत्वा च स्वस्थमनास्तस्थौ, समागता धन्या, मेने भुक्तमनेन, तत्पुनः पायसं ददौ, सोऽप्यतृप्तः पायसमाकंठं यावद् बुभुजे, परं तदन्नं तस्य यामिन्यां न जीर्णं, ततो विशूचिका जाता, स संगमः साधुदानं स्मरन् व्यपद्यत. तेन साधुदानप्रभावेण राजगृहे नगरे गोभद्रश्रेष्ठिनो भार्याया भद्राया उदरे स पुत्रत्वेनाभवत. ततः सा शालिक्षेत्रं सुनिष्पन्नं स्वप्नेऽपश्यत्. तं स्वप्नं च सा भर्तुः शशंस. भर्त्रोक्तं तव वरीयान् पुत्रो भावी.

ततः सा भद्रा गोभद्रश्रेष्ठिना संपूर्यमाणदोहदा पूर्णे काले भद्रकरं द्युतिद्योतितदिङ्मुखं तनयरत्नमसूत. सुनिष्पन्नशालिक्षेत्रस्वप्नानुसारेण तस्य सूनोः शुभे दिने पितरौ शुभां शालिभद्र इत्यभिधां चक्रतुः. स पंचभिर्धात्रीभिः परिपाल्यमानः क्रमाद्ववृधे. क्रमात्किंचिदूनाष्टवर्षीयः पित्रा कला अध्यापितः. क्रमेण मित्रैः सह क्रीडन् संप्राप्तयौवनो युवतीजनमनोनयनानंदकरो मेरुभूमौ क-

ल्पशाखीव स ववृधे. अथैकदा तत्पुरश्रेष्ठिनो निजा द्वात्रिंशत्कन्याः शालिभद्राय प्रदातुं गोभद्रश्रे-
ष्ठिनं ययाचिरे. तेषां श्रेष्ठिनां वचनं श्रुत्वा प्रहृष्टो गोभद्रः शालिभद्रेण सार्धं ताः कन्यका महाम-
हेन पर्यणाययत्. शालिभद्रो विमानसदृशे मंदिरे ताभिः सार्धं विललास. देववधूभिः समं देव
इव स शालिभद्रः सर्वानंदमग्नो रात्रिंदिवसयोरंतरं न विवेद. यतस्तस्य भोगसामग्रीं स्वयं तत्पित-
रावपूरयतां. एकस्मिन् दिने श्रीमन्महावीरवाणीं श्रुत्वा संजातवैराग्यः श्रेष्ठी गोभद्रो वीरपादमूले व्रतं
गृहीत्वा सम्यगाराध्य प्रांते विधिनानशनं कृत्वा देवलोकं जगाम. अवधिज्ञानतो गोभद्रश्रेष्ठिदेवः
शालिभद्रं निजात्मजं ज्ञात्वा तत्पुण्यावर्जितः पुत्रवात्सल्यतत्परोऽभूत्. तेन सोऽनुवासरं कल्पशाखीव
दिव्यानि वस्त्रनेपथ्यसुगंधकर्पूरादीनि सभार्यस्य शालिभद्रस्यार्पयामास. इदं पूर्वदत्तफलं, यतः—
श्रीनाभेयजिनेश्वरो धनभवे श्रेयः श्रियामाश्रयः । श्रेयांसः स च मूलदेवनृपतिः सा नंदना चंदना
॥ धन्योऽयं कृतपुण्यकः शुभमनाः श्रीशालिभद्रस्तथा । सर्वेऽप्युत्तमदानदानविधिना जाता जगद्वि-
श्रुताः ॥ १ ॥ अन्नदातुरधस्तीर्थ—करोऽपि कुरुते करं ॥ तच्च दानं भवेत्पात्र—दत्तं बहुफलं यतः
॥ २ ॥ एवंविधं सुपात्रे दत्तं दानं फलितं शालिभद्रस्य, यत्किंचिद् गृहोचितं कार्यं भवति तत्सर्वं

भद्रकारिणी भद्रा करोति, शालिभद्रः केवलं पूर्वदानफलमेव भुंक्ते.

अन्येद्युः केचन वणिजो रत्नकंबलविक्रयार्थं श्रेणिकनृपाय तन्मूल्यं कथयित्वादर्शयन्. श्रेणिकोऽपि तान् महर्घ्यान् ज्ञात्वा नाग्रहीत्. ततस्ते वणिजः शालिभद्रनिकेतनं जग्मुः. तांश्च रत्नकंबलांस्तदुक्तमूल्येन भद्राग्रहीत्. एतद् वृत्तांतं ज्ञात्वा श्रेणिकपट्टराज्ञी चेल्लणा श्रेणिकपार्श्वे रत्नकंबलं ययाचे. स्वामिन् महामूल्योऽपि कंबलो मद्योग्य एको गृह्यतां? ततो राज्ञा यथोक्तमूल्येन वणिजां पार्श्वे एको कंबलो मार्गितः. तैरुक्तं ते सर्वेऽपि कंबला भद्रया गृहीताः, ततो राज्ञा चिंतितं भद्रया वाणिज्यार्थं गृहीता भविष्यंति, अतोऽहं तत्पार्श्वादेकं गृहीतमूल्येन समानयामीति विमृश्य श्रेणिक एकं प्रवीणपुरुषं मूल्यदानात्कंबलादानहेतवे भद्रापार्श्वे प्राहिणोत्, तेन गत्वा भद्रा याचिता, भो भद्रे रत्नकंबलं देहि? राज्ञा मूल्यदानेन मार्गितमस्ति, भद्रोचे भो भद्र! ते तु रत्नकंबलाः षोडशापि द्विधा द्विधा कृत्वा शालिभद्रप्रियापादप्रोंछनीकृत्य त्यक्ताः, तत्त्वं राज्ञोंतिके गत्वा कथय? यदि तेन कार्यं भवति तर्हि राजानं पृष्ट्वामून् गृहाण? तेन गत्वा राज्ञोऽग्रे तथैव विज्ञप्तं. एतद्वचनं श्रुत्वा चेल्लणा राजानं कथयति, राजन्नस्माकं वणिजां चांतरं पश्य रीरीहेम्नोरिव? चिंतितं राज्ञा

तं शालिभद्रं भद्राकृतिं पश्यामि. ततो राज्ञा तन्माता भद्रा समाकारिता, समागता भद्रा, प्रोक्तं राज्ञा भो भद्रे! तव पुत्रं शालिभद्रं दर्शय? तयोक्तं राजेंद्र! ममात्मजः शालिभद्रः कदाचिदपि बहिर्न याति, गृहांतरे क्रीडति, अतो हे देव! गृहागमनेन ममानुग्रहः क्रियतां? श्रेणिकोऽपि कौतुकविलोकनकृते तत्तथा प्रत्यपद्यत, कियत्कालावधिं विधाय भद्रा गृहं गता, ततः सा भद्रा स्वगृहाद्राजगृहं यावद्विचित्ररत्नमणिमाणिक्यमंमितां हर्म्यश्रेणिं हट्टशोभां च विधाय राजानमाकारयामास, तथाहूतो राजा मंत्र्यादिभिः परिवृतो मार्गे गृहाट्टशोभां मार्गशोभां चालोकयन् शालिभद्रवेश्म ययौ. तत्कीदृशं?—स्वर्णस्तंभोपरि प्रेंख—दिंद्रनीलाश्मतोरणं ॥ मौक्तिकस्वस्तिकश्रेणि—दंतुरद्वारभूतलं ॥ १ ॥ दिव्यवस्त्रकृतोल्लोचं । सुगंधद्रव्यधूपितं ॥ भुवि दिव्यविमानानां । प्रतिमानमिव स्थितं ॥ २ ॥ वीशामीशः श्रेणिको विस्मयस्मेरलोचनस्तद्वेश्म विवेश, क्रमेणैकां भूमिकां समारूढः, एवं द्वितीयां तृतीयां यावच्चतुर्थीं भूमिं गत्वा सिंहासने उपाविशत्. ततो भद्रा सप्तम्यां भुवि शालिभद्रांतिके गत्वैवमवोचत्, हे पुत्र! श्रेणिक इहायातोऽस्ति, त्वमागत्य तं विलोकय? ततः शालिभद्रः श्रेणिकनामकं क्रेतव्यं वस्तु भावीति मत्वा मातरमुवाच, हे मातस्त्वं यन्मूल्यं जानासि

तत्कार्य? अत्रार्थे त्वमेव प्रमाणं, किं मम प्रश्नेनेति. ततो भद्राप्येवमुवाच, हे वत्सेदं वस्तु क्रेतव्यं नास्ति, किंत्वसौ सर्वलोकनाथो विश्वविख्यात आवयोः स्वामी श्रेणिको राट्, तत् श्रुत्वा सविषादः शालिभद्र एवमचिंतयत, धिक् सांसारिकं सुखं! यन्ममाप्युपरि राजान्यो वर्तते, ततो मया किं तपस्तप्तं? अथाहं श्रीवीरचरणांतिके दीक्षां गृहीष्यामि, अलं पारवश्यविवशैर्भोगादिभिः, दुःखानुविद्धैः सांसारिकैः सुखैरिति.

एवं संवेगयुक्तोऽपि मातुरुपरोधतो भार्यासहितो राजानमभ्येत्य विनयान्वितोऽनमत्, राज्ञा श्रेणिकेन शालिभद्रोंके निवेश्य सस्वजे, श्रेणिकोत्संगसंस्थं बालं शालिभद्रमग्निसंयोगे मदनपिंडमिव विलीयमानं वीक्ष्य राजानंप्रति भद्रा जगाद देवायं मुच्यतां? यतोऽयं मनुष्योऽपि मानुष्यमाल्यगंधेन बाध्यते, यतो देवभूमौ गतोऽस्य जनकः सभार्यस्यास्य दिव्यनेपथ्यवस्त्रांगरागादि प्रतिवासरं दत्ते. ततो राज्ञा विसृष्टः शालिभद्रः सप्तमभूमिकां ययौ, भद्रया प्रोक्तो नृपः स्वामिन्नद्यात्रैव भोक्तव्यमिति. भद्रादाक्षिण्यतस्तत्प्रतिपन्नवान्. ततस्तत्रैव गृहवाप्यां स्नानं कुर्वतो नृपस्य हस्तादंगुलीयकं वाप्यंभसि पपात, भूपतिस्तदितस्ततो यावदन्वेषयामास तावद्भद्रा दासीं समादिशत, भो स-

खि! वाप्यंभोऽन्यत्र त्यज्यतां? यथा राज्ञो मुद्रिका प्रकटीभवति, दास्या तथैव कृते दिव्याभरणमध्यगमंगाराभं स्वांगुलीयं वीक्ष्य राजा विसिष्मिये, किमेतदिति राज्ञोक्ते दास्यवोचत, यथा—न भूतं देवदेवस्य । न भूतं यच्च चक्रिणः ॥ सुवर्णमपि निर्माल्यं । नान्यस्य मत्प्रभुं विना ॥ १ ॥ हे राजेंद्र! सद्भार्यस्य शालिभद्रस्येह निर्माल्यं निधीयते. तान्याभरणानि समालोक्य राजा चिंतयति, एष शालिभद्रो धन्यः, अहमपि धन्यो यस्य राज्ये व्यवहारिण ईदृशाः संति. ततः श्रेणिकस्तत्र सपरिवारो बुभुजे. भोजनानंतरं भद्रया स वस्त्रालंकरणादिभिः सत्कारितः, पुष्पादिभिः पूजितः स्वगृहं ययौ. वैराग्यवासनया वासितः शालिभद्रो यावता गृहे तिष्टति तावता धर्ममित्रेणागत्य विज्ञप्तं हे मित्र! चतुर्ज्ञानधरः सुरासुरनमस्कृतो मूर्तिमान् धर्म इव धर्मं द्योतयन् धर्मघोषाभिधो मुनिर्मह्यां विचरन्निहोद्याने समागतः. ततः शालिभद्रो हर्षादुच्छ्वसितरोमकूपो रथं समारुह्य गुर्वंतिके गत्वा प्रदक्षिणां दत्वा वंदित्वा यथावग्रहे समुपाविशत. धर्मघोषगुरुरपि तं शालिभद्रं धर्मार्हं ज्ञात्वा धर्मदेशनां करोति, यथा—अथिरेण थिरो समलेण । निम्मलो परवसेण साहीणो ॥ देहेण जइ विढप्पइ । धम्मो ता किं न पज्जत्तं ॥ १ ॥

इत्यादिदेशनां श्रुत्वा शालिभद्रो धर्मघोषाचार्यमपृच्छत्. भगवन्! केन कर्मणा प्रभुरन्यो न जायते? भगवानुवाच भो महाभाग! ये जना भगवद्दीक्षां गृह्णंति यथाविधि च पालयंति तेऽन्यजन्मन्यशेषस्यापि जगतः स्वामिभावं भजंति. यद्येवं तर्हि हे नाथाहं गृहे गत्वा निजां मातरमापृच्छ्य त्वदंतिके व्रतं ग्रहीष्यामीत्युक्त्वा यावता गृहे याति तावता मुनिनोक्तं भो भद्र! एतदर्थे नो प्रमादो विधेय इति निशम्य शालिभद्रो गृहे ययौ. मातरं नत्वा च स विज्ञपयति हे मातर्मया धर्मघोषाचार्यसमीपे विश्वदुःखविमोचको मोक्षसुखदायकश्च जिनोक्तो धर्मः श्रुतः. एतद्वचनश्रवणानंतरं भद्रा बभाषे हे भद्र! त्वं साध्वकार्षीः, त्वं तस्य पितुर्नंदनोऽसि. इति स्तुतिं कृत्वा भद्रा यावता स्थिता तावता पुनः शालिभद्रो जगाद, हे अंब! मयि प्रसीद, तवाज्ञयाहं व्रतं ग्रहीष्यामि. साप्यवादीद्वत्स! तवैतद्युक्तं यत्त्वं तातानुपदिको भवसि. परमत्र निरंतरं मदनदंतैर्लोहमयाश्चणकाश्चर्वणीयाः. अतः प्रकृत्यातिसुकुमारो दिव्यैर्भोगैश्च लालितस्त्वं व्रतभारं कथं वोढुं समर्थो भविष्यसि? तदा शालिभद्रो मातरंप्रत्युवाच हे मातर्भोगलालिताः कष्टासहाः कातरा एव, नेतरे, अतो मामनुमन्यस्व? यथाहं दीक्षाग्रहणाय सज्जो भवामि. पुनर्भद्रा बभाषे वत्स! यदि तव व्रतेच्छा भव·

ति तर्हि शनैः शनैरेकैकां पुष्पशय्यां सस्त्रीकां त्यज ? पश्चाद् व्रतं गृह्णीयाः. तद्दिनादारभ्य शालिभद्रः प्रत्यहमेकैकां शय्यां भार्यासहितां त्यजति.

इतश्च तस्मिन्नगरे धन्यनामा महाधनः शालिभद्रकनिष्ठभगिनीपतिर्वर्तते. सा शालिभद्रस्वसा साश्रुर्धन्यं स्नपयंती धन्येन पृष्टा, भोः सुभ्रु ! किं रोदिषि? तव किं दुःखस्य कारणं? गद्गदाक्षरं सा जगाद हे स्वामिन् ! मे भ्राता व्रतं गृहीतुकामो दिने दिने सतूलिकामेकैकां भार्यां त्यजति. धन्येनोक्तं तव भ्राता फेरुरिव भीरुर्हीनसत्वश्च, यत्समंतात्सर्वं न त्यजतीति. एतद्वचनं श्रुत्वा शालिभद्रस्वसा धन्यं प्रत्याह हे नाथ! व्रतं चेत्सुकरं भवति तर्हि स्वयं किं न करोषि? एवं सहासमन्याभिरपि भार्याभिर्जगदे. धन्योऽप्यूचे अत्रार्थे भवत्य एव विघ्नरूपाः, पुण्ययोगतो भवतीभिश्चानुमतं, अथाहं द्रुतं प्रव्रजिष्यामि. ता अप्यूचुः स्वामिन्निदमस्माभिर्नर्मणोदितं, मास्मत्त्याक्षीः श्रियोऽस्मांश्च. धन्येनोक्तं स्त्रीधनाद्यनित्यं नित्यपदेप्सया त्याज्यमेव. अतोऽहमवश्यं प्रव्रजिष्यामीत्यालपन् धन्य उत्थितः. ताः स्त्रियोऽपि धन्येन सार्धं प्रव्रजितुकामास्त्वया समं प्रव्रजिष्याम इत्युक्तवंत्यो धन्येनानुमताः. तस्मिन् समये वैभारगिरौ श्रीवीरः समवासरत्. वीरं समवसृतं ज्ञात्वा धन्यः सभार्यो भगव-

दंतिके दीक्षामग्रहीत. तत् श्रुत्वा शालिभद्रोऽपि शिबिकारूढो दत्तदानः सभार्यः श्रीमहावीरपादमूले उपेत्य व्रतमग्रहीत्. ततः सपरिवारः सिद्धार्थनंदनः श्रीवीरो विहरन्नन्यतो ययौ. तौ धन्यशालिभद्रौ साधूपांते पठंतौ बहुश्रुतौ जातौ, खड्गधारासहोदरं व्रतं पालयंतौ चतुर्थषष्टाष्टमपक्षक्षपणमासक्षपणद्विमासक्षपणत्रिमासक्षपणचतुर्मासक्षपणादितपः कुर्वाणौ शरीरनिरपेक्षौ पारणं चक्रतुः. तौ साधू तेन महत्तपसा निर्मांसरुधिरांगकौ चर्मभस्त्रोपमौ समजायतां.

अन्येद्युः श्रीमहावीरस्वामिना सह विहरंतौ तौ महामुनी निजां जन्मभुवं राजगृहं पुरमाजग्मतुः; ततो राजगृहपुरात्समवसरणस्थितं जगत्पतिं नंतु जना ईयुः. अथ मासक्षपणपारणके धन्यशालिभद्रौ भिक्षार्थं गंतुकामौ भगवंतं प्रणेमतुः, ततः स्वामिना प्रोक्तं मातृपार्श्वे तेऽद्य पारणं भविष्यतीति. इच्छामीति भणन् शालिभद्रो धन्ययुतो ययौ, तावुभावपि भद्रागृहद्वारि गत्वा तस्थतुः, तौ तपःक्षामतया केनापि नोपलक्षितौ, भद्रापि श्रीवीरं शालिभद्रं धन्यं च वंदितुं गंतुमत्युत्सुका व्याकुला तौ नाज्ञासीत. तत्र तौ क्षणमेकमवस्थाय प्रतिजग्मतुः, तदानीं तस्मिन् पुरे प्रतोल्यामुखे दधिसर्पिषी विक्रेतुं यांती शालिभद्रस्य प्राग्जन्ममाता पुरोऽभवत्, सा शालिभद्रं प्रेक्ष्य संजातप्रस्न

वस्तनी भक्त्या तच्चरणौ वंदित्वा द्वाभ्यामपि दधि ददौ, तौ च वीरस्यांतिके गतौ, तदालोच्य शालिभद्रो मुनिरवदत्, स्वामिन्! मातृतः पारणं कथं जातं? पारणार्हं दधि त्वाभीर्या दत्तमिति. स्वामिनोक्तं हे शालिभद्रमहामुने! एषा तव प्राग्जन्ममाता धन्या, एतदेव सत्यं जानीहि? नान्यथेति. एतद्वीरवाक्यं श्रुत्वा दध्न भुक्तावपि पारणकं कृत्वा स्वामिनमापृच्छ्य वैभाराद्रिं तौ धन्यशालिभद्रौ ययतुः, एकस्यां शिलायां प्रतिलेखितायां तौ धन्यशालिभद्रौ पुनर्व्रतारोपणालोचनपूर्वं पादपोपगमं नामानशनमाश्रयतां, तदा भद्रा तन्माता श्रेणिकश्च नरेंद्रस्तावुभावपि भक्तियुक्तौ श्रीवीरचरणांतिके समाजग्मतुः, स्वामिनं नत्वा भद्रा बभाषे, हे स्वामिंस्तौ धन्यशालिभद्रमुनी मद्गृहे भिक्षार्थं कथं नागतौ? सर्वज्ञो बभाषे, तौ मुनी त्वद्वेश्मनि समागतौ, परं भवत्येहागमनव्यग्रचित्तया तौ न ज्ञातौ, प्राग्जन्ममाता धन्याभीरी पुरंप्रति यांती तयोर्दधि ददौ, तेन च तौ पारणं चक्रतुः. ततस्तौ महासत्वौ भवं त्यक्तुकामौ सत्वरौ वैभारगिरिपर्वते गत्वानशनं चक्रतुः. इमां वीरगिरं श्रुत्वा भद्रा श्रेणिकेन समं वैभाराद्रिं ययौ, भद्रा शालिभद्रजननी तौ तथास्थितौ पाषाणघटिताविव निश्चलावपश्यत्, भद्रा तत्पूर्वसुखानि स्मरंती पुत्रस्य तत्कष्टं च पश्यंती तरूनपि रोदयंत्य-

रोदीत्, हे पुत्र! त्वं गृहमागतोऽपि मया मंदभाग्यया न ज्ञातः, अथैकवारं ममाभिमुखं पश्य? एवं बहु बहु प्रोच्यमानोऽपि शालिभद्रो भद्राभिमुखं नापश्यत्. अथोचे श्रेणिको हे भद्रे! हर्षस्थाने मृतं विषादेन, धन्या त्वं यतोऽसौ तव पुत्रो जगत्स्वामिशिक्षानुरूपं तपस्तपते. मुग्धे! किं त्वया स्त्रीस्वभावतो मुधानुतप्यते? एवं बोधिता भद्रा तावुभौ मुनिवरौ प्रपन्नानशनौ नत्वा विमनस्का निजं धाम जगाम, श्रेणिकोऽपि स्वस्थचित्तः स्वस्थानमागमत्. तावुभौ मुनिवरौ प्रपन्नावसानौ सर्वार्थसिद्धिविमाने देवावभूतां, त्रयस्त्रिंशत्सागरायुष्कौ तौ द्वावपि ततश्च्युत्वा मोक्षं यास्यतः. इत्थं श्रीशालिभद्रेण । क्षीरदानप्रभावतः ॥ लब्धं सौख्यं महोत्कृष्ट—मिहामुत्र सुखप्रदं ॥ १ ॥ यत्सुखं न हि देवस्य । देवदेवस्य यन्न हि ॥ सुवर्णमपि निर्माल्यं । शालिभद्रं विना न तत ॥ २ ॥ इति दानविषये शालिभद्रकथानकं समाप्तं. पुनर्दानफलमाह—

॥ मूलम् ॥—जम्मंतरदाणाउ । उल्लसियापुव्वकुसलझाणाउ ॥ कयवन्नो कयपुन्नो । भोगाणं भायणं जाउ ॥ १० ॥ व्याख्या—एकस्माज्जन्मनोऽन्यजन्म जन्मांतरं, जन्मांतरे दानं जन्मांतरदानं, तस्मात्, कथंभूतात्? 'उल्लसियत्ति' उल्लसितमपूर्वं कुशलध्यानं यत्र तस्मादिति. 'कय-

वन्नोत्ति ' कृतपुण्यनामा व्यवहारिपुत्रः, कथंभूतः? कृतपुण्यः, कृतं दानपुण्यं येन सः, ' भोगाणं-
ति ' भोगानां भाजनमास्पदं जात उत्पन्न इति गाथार्थः. ॥ १० ॥ अस्या अपि विस्तरः कथान-
कादवसेयः, तच्चेदं—

मगधदेशमंडनं राजगृहं नाम नगरमस्ति, तन्नगरनायकः क्षायिकसम्यक्त्वधारकः श्रीवीरशास-
नोन्नतिकारको महाराजाधिराजः श्रेणिको नाम राजास्ति, स श्रेणिको न्यायमार्गेण पृथ्वीं पालयन्
विचरति. तस्य श्रेणिकस्य सुनंदेति नाम्ना पट्टदेव्यस्ति. तयोर्बुद्धिसागरश्चतुर्दशविद्यापारगो द्वासप्त
तिकलाकुशलश्चतुर्बुद्धिसागरोऽभयकुमारनामा पुत्रोऽस्ति. स एव मंत्रिश्रेष्ठोऽप्यस्ति. तेन मंत्रिणा
सुखसागरमग्नः श्रेणिको राट् गतमपि कालं न जानाति. तस्मिन्नगरे भूरिधनो धनदोपमो धनेश्वरा-
भिधानः सार्थवाहोऽस्ति. तस्य सार्थवाहस्य सच्छीलशालिनी दयादानतत्परा सुभद्रेति नाम्ना प्रिया-
स्ति. तयोः पुत्रो गुणरत्नरोहणगिरितुल्यः पुण्यात्मा कृतपुण्यनामास्ति. तन्नगरनिवासिश्रीदत्तश्रेष्ठि-
नः पुत्रीं धन्यानाम्नीं महामहेन पितृभ्यां कृतपुण्यः परिणायितः. परं साधुसंगात्साधुवद्विषयविमुखो
धर्मपरायणो धर्मेणैव स कालं निर्गमयामास. ततो मातापितृभ्यां चिंतितमेष कदाचिद्दीक्षां ग्रहीष्य-

ति तदास्माकं का गतिर्भविष्यतीति विचिंत्य ताभ्यां पुत्रः कृतपुण्यको ललितगोष्ठीमध्ये क्षिप्तः. ततो नटविटपुरुषैः सर्वाण्यपि व्यसनानि तस्य शिक्षितानि, यथा—द्यूतं १ च मांसं २ च सुरा ३ च वेश्या ४ । पापर्द्धि ५ चौरी ६ परदारसेवाः ७ ॥ एतानि सप्त व्यसनानि लोके । घोरातिघोरे नरके नयंति ॥ १ ॥ स कृतपुण्योऽपुण्यकसंयोगात्तादृशो जातः, यतः—अंबस्स य निंबस्स य । दुन्हंपि समागयाइं मूलाइं ॥ संसग्गीअविणठो । अंबो निंबत्तणं पत्तो ॥ १ ॥ एवं कृतपुण्यकोऽपि तेषां विटपुरुषाणां संसर्गतो व्यसनी जातः. अथ तैर्मित्रैः स तन्नगरनायिकानंगसेनागणिकापार्श्वे नीतः. तया गणिकया च स तथा मोहितो यथा तस्याः समीपं क्षणमपि मोक्तुं न शक्नोति. गणिकासक्तः सन् स मातापितरावपि न स्मरति. मातापितरौ च धनादिकं यत्किंचिद्विलोक्यते तत्सर्वं प्रेषयतःस्म. तत्र तस्य तिष्टतो द्वादशाब्दानि क्षणवद्गतानि. मातापित्रादिभिराह्वायितोऽपि स नायाति. अहो कीदृशं कामविलसितं! यतः—

विकलयति कलाकुशलं । हसति शुचिं पंन्डितं विडंबयति ॥ अधरयति धीरपुरुषं । क्षणेन मकरध्वजो देवः ॥ १ ॥ एवं स कृतपुण्यको विडंबितः. मातापित्रोश्च धनं प्रेषयतोः सर्वं धनं नि-

ष्टितं. अथाकस्मादुत्पन्नतीव्रज्वरौ मातापितरौ मृत्वा स्वर्गं जग्मतुः. अन्येद्युः सा कुट्टिनी धनानयनार्थं स्वां चेटीं कृतपुण्यकगृहे प्रेषयामास. चेटी तत्र गता तादृशं शटितं पतितं कथितं शून्यं तद्गृहं विलोक्य कृतपुण्यकप्रियांतिके गत्वा जगौ, हे कल्याणि! तव कांतेन प्रेषितास्मि धनानयनार्थं, अतो ममार्पय धनं. तस्या वचनविलासं श्रुत्वा कृतपुण्यकपत्नी धन्यातीवप्रसन्ना जगौ, हे सुंदरि! त्वमत्र धनार्थं यदागास्तद्वरं, मया तस्याज्ञा मस्तके कृता, अद्याहं तस्य वार्तया कृतार्था जातास्मि. परं तौ श्वश्रूश्वशुरौ स्वर्गं गतौ, अथाहं मंदभाग्या किं करोमि? कुतो वा धनं प्रेषयामि? द्वादशवर्षैश्च सर्वं धनं निष्ठितं, मम पार्श्वे किमपि नास्ति, परमधुना मत्पार्श्वे मत्पित्रार्पितमाभरणमेकं विद्यते तद्गृहीत्वा गच्छ? तत्र तेन भूषणेन च मत्कांतं प्रमोदय? तदाभरणमादाय दासी कृतपुण्यकपार्श्वे आगता, अर्पितं तदाभरणं तस्मै, प्रोक्तं च गृहस्वरूपं, ततः कृतपुण्यकः खिन्नः. तदाभरणं च तेन तस्यै वेश्यायै दत्तं. चेट्या च कुट्टिन्या अपि कृतपुण्यकगृहस्वरूपं प्रोक्तं. तत एकांते कुट्टिन्या नंदिषेणा गणिका प्रोक्ता. हे पुत्रि! एष कृतपुण्यः केनचिदुपायेन गृहान्निष्कासनीयः. ततस्तस्याः कुट्टिन्या आदेशाद्दास्यादिभृत्यजनः कृतपुण्यकाभिमुखं धूलिप्रक्षेपादि कुरुते. तदानीम-

नंगसेना मातुरग्रे जल्पति हे मातरेष गुणवानेतावंति वर्षाण्यत्र स्थितोऽभूत्, अस्य बहु धनं चावाभ्यां लक्षितं, कथमधुनैवंविधा विडंबना क्रियते? कुट्टिनी जगावात्मनः कुलाचार एवंविधो वर्तते, यावत्कामुकस्य गृहे धनं भवति, मार्गितं च लभ्यते तावत्स मन्यते नान्यथेति. एवंविधां तद्वार्तां निशम्य कृतपुण्यको दध्यौ—

मनस्यन्यद्वचस्यन्यत । क्रियायामन्यदेव हि ॥ यासां साधारणस्त्रीणां । ताः कथं सुखहेतवः ॥ ॥ १ ॥ कुष्टिनोऽपि स्मरसमान् । पश्यंतीं धनकांक्षया ॥ तन्वतीं कृत्रिमस्नेहं । निःस्नेहां गणिकां त्यजेत् ॥ २ ॥ मांसमिश्रं सुरामिश्र—मनेकविटचुंबितं ॥ को वेश्यावदनं चुंबे—दुच्छिष्टमिव भोजनं ॥ ३ ॥ अभ्रछाया तृणाग्निश्च । खले प्रीतिः स्थले जलं ॥ वेश्यारागः कुमित्रं च । षडेते बुद्बुदोपमाः ॥ ४ ॥ इत्यादि चिंतयन् कृतपुण्यको विमनस्कः स्वगृहगमनाय चचाल. यावता स गृहाभ्यर्णे समायाति तावता पतितप्रायं गृहं विलोक्य बहुखिन्नश्चिंतयति धिग्मम जीवितं, येन मया मातापित्रोर्महद्दुःखं दत्तं, पितुर्धनं विनाशितं, अहो! मम गृहस्य कीदृगवस्था समागता? एवं चिंतयन् स गृहमध्ये यावता याति तावत्तत्पत्नी कांतमागच्छंतं वीक्ष्य हृष्टचित्ता जलभृतभाजनं करे कृ·

त्वाचमनमादाय सन्मुखमागात्. ततः कृतपुण्यको योजितकरकमलया तया वितीर्णमाचमनं गृहीत्वा गृहमध्येऽभ्येत्य प्रियामुक्तासने उपविष्टः. ततः प्रियया भोजनसामग्री कृता. कृतपुण्यकः कृतस्नानो देवगृहे जिनमर्चयित्वा वर्यपुष्पैः स्तोत्रेण स्तुत्वा च बुभुजे. ततः कृतपुण्यस्य कांतस्य सवोऽपि गृहवृत्तांतः प्रियया प्रोक्तः. ततस्तेन चिंतितमहोऽहमभाग्यशिरोमणिर्यतो मातापित्रोर्मया सुखं न दत्तं. तेन पुत्रेण जातेन च किं? यो मातापित्रोः सुखं न ददाति. मया तु पित्रोः कुलं विनाशितं, यतः—इक्षुक्षेत्रं वंशजाली । कदलीविषपादपाः ॥ फले जाते विनश्यंति । दुःपुत्रेण कुलं यथा ॥ १ ॥ पितरौ यन्मयागाधे । क्षिप्तौ दुःखमहार्णवे ॥ धनं निधनमानीतं । पितृपर्यायसंचितं ॥ २ ॥ एवं स चिंतयन् प्रियया प्रोक्तः—यद्भावि तद्भवति नित्यमयत्नतोऽपि । यत्नेन वापि महता न भवत्यभावि ॥ एवं विधातृवशवर्तिनि जीवलोके । किं शोच्यमस्ति पुरुषस्य विचक्षणस्य ॥ १ ॥ गते शोको न कर्तव्यो । भविष्यन्नैव चिंतयेत् ॥ वर्तमानेन कालेन । वर्तयंति विचक्षणाः ॥ २ ॥ इत्यादि प्रियावचः निशम्य स्वस्थः सन् शोकं त्यक्त्वा समाधिना कृतपुण्यो गृहेऽस्थात्. पत्न्या दत्तधनेन स किंचिद्व्यापारं करोति. क्रमात्तया समं सुरतसुखमनुभवतः पत्न्याः कुक्षावाधानमभूत्. स

नंगसेना मातुरग्रे जल्पति हे मातरेष गुणवानेतावंति वर्षाण्यत्र स्थितोऽभूत्, अस्य बहु धनं चावाभ्यां गृहीतं, कथमधुनैवंविधा विडंबना क्रियते? कुट्टिनी जगावात्मनः कुलाचार एवंविधो वर्तते, यावत्कामुकस्य गृहे धनं भवति, मार्गितं च लभ्यते तावत्स मन्यते नान्यथेति. एवंविधां तद्वार्ता निशम्य कृतपुण्यको दध्यौ—

मनस्यन्यद्वचस्यन्यत । क्रियायामन्यदेव हि ॥ यासां साधारणस्त्रीणां । ताः कथं सुखहेतवः ॥ ॥ १ ॥ कुष्टिनोऽपि स्मरसमान् । पश्यंतीं धनकांक्षया ॥ तन्वतीं कृत्रिमस्नेहं । निःस्नेहां गणिकां त्यजेत् ॥ २ ॥ मांसमिश्रं सुरामिश्र—मनेकविटचुंबितं ॥ को वेश्यावदनं चुंबे—दुच्छिष्टमिव भोजनं ॥ ३ ॥ अभ्रछाया तृणाग्निश्च । खले प्रीतिः स्थले जलं ॥ वेश्यारागः कुमित्रं च । षडेते बुद्बुदोपमाः ॥ ४ ॥ इत्यादि चिंतयन् कृतपुण्यको विमनस्कः स्वगृहगमनाय चचाल. यावता स गृहाभ्यर्णं समायाति तावता पतितप्रायं गृहं विलोक्य बहुखिन्नश्चिंतयति धिग्मम जीवितं, येन मया मातापित्रोर्महद्दुःखं दत्तं, पितुर्धनं विनाशितं, अहो! मम गृहस्य कीदृगवस्था समागता? एवं चिंतयन् स गृहमध्ये यावता याति तावत्तत्पत्नी कांतमागच्छंतं वीक्ष्य हृष्टचित्ता जलभृतभाजनं करे कृ·

त्वाचमनमादाय सन्मुखमागात्. ततः कृतपुण्यको योजितकरकमलया तया वितीर्णमाचमनं गृहीत्वा गृहमध्येऽभ्येत्य प्रियामुक्तासने उपविष्टः. ततः प्रियया भोजनसामग्री कृता. कृतपुण्यकः कृतस्नानो देवगृहे जिनमर्चयित्वा वर्यपुष्पैः स्तोत्रेण स्तुत्वा च बुभुजे. ततः कृतपुण्यस्य कांतस्य सर्वोऽपि गृहवृत्तांतः प्रियया प्रोक्तः. ततस्तेन चिंतितमहोऽहमभाग्यशिरोमणिर्यतो मातापित्रोर्मया सुखं न दत्तं. तेन पुत्रेण जातेन च किं? यो मातापित्रोः सुखं न ददाति. मया तु पित्रोः कुलं विनाशितं, यतः—इक्षुक्षेत्रं वंशजाली। कदलीविषपादपाः॥ फले जाते विनश्यंति। दुःपुत्रेण कुलं यथा॥ १॥ पितरौ यन्मयागाधे। क्षिप्तौ दुःखमहार्णवे॥ धनं निधनमानीतं। पितृपर्यायसंचितं॥ २॥ एवं स चिंतयन् प्रियया प्रोक्तः—यद्भावि तद्भवति नित्यमयत्नतोऽपि। यत्नेन वापि महता न भवत्यभावि॥ एवं विधातृवशवर्तिनि जीवलोके। किं शोच्यमस्ति पुरुषस्य विचक्षणस्य॥ १॥ गते शोको न कर्तव्यो। भविष्यन्नैव चिंतयेत्॥ वर्तमानेन कालेन। वर्तयंति विचक्षणाः॥ २॥ इत्यादि प्रियावचः निशम्य स्वस्थः सन् शोकं त्यक्त्वा समाधिना कृतपुण्यो गृहेऽस्थात्. पत्न्या दत्तधनेन स किंचिद्व्यापारं करोति. क्रमात्तया समं सुरतसुखमनुभवतः पत्न्याः कुक्षावाधानमभूत्. स

यथावस्थं व्यापारं कुर्वाणो लोकैरुच्यते स एष कृतपुण्यकः पुत्ररूपेण शत्रुसन्निभो येन जातेन मा-
तापितरौ दुःखिनौ भूत्वा मृतौ, तथा धनं च निधनं गतं.

एवंविधानि लोकवचनानि श्रुत्वा गृहे गत्वा स प्रियांप्रत्याह, हे प्रिये! तवाज्ञयाहं वाणिज्या-
र्थं देशांतरं यामि. प्रियावोचत हे प्राणेश त्वं खेदं मा कुरु? दीनारसहस्रमेकं मेऽस्ति. तेन त्वं
व्यवसायं कुरु? तेनोक्तं स्वल्पद्रव्येणात्र व्यवसायं कर्तुं न शक्नोमि. अतोऽहं दूरदेशांतरे यास्या-
मि. नार्योक्तं तर्हि तव पंथानः कुशलिनः संतु. तस्मि.वसरे कश्चित्सार्थवाहो दूरदेशात्समागतः,
दूरदेशं गंतुकामश्च तत्र स्थितः. अथ तेन दीनारसहस्रेण कृतपुण्यको बहुमूल्यं स्वल्पं क्रयाणकं
लात्वा तस्मिन् सार्थे क्वचिद्देवकुले खट्वायां शंबलमोदकयुतः पत्न्या शायितः, स सुप्तस्ततो गृहं ग-
ता पत्नी. इतश्च तस्मिन्नेव नगरे बहुधनवान् धनदनामा व्यवहारी वसति, तस्य पत्नी रूपवती.त-
योर्धर्मं कुर्वतोः कालेन जिनदत्ताभिधः पुत्रोऽभूत. जिनदत्तो वृद्धिं गतो यौवनस्थः पित्रा धनदेन
चतस्र इभ्यपुत्रीर्महामहेन परिणायितः. ततो धनदः कियता कालेनायुषः क्षयेण निधनं गतः. जि-
नदत्तः पितुरूर्ध्वदेहिकं कृत्वा भार्याभिः समं विलसति, सुखेन च कालो याति. एकस्मिन् दिने

विधौ विपरीते स्वल्पदुःखेनैव रात्रौ जिनदत्तोऽपि मृतः. ततस्तया रूपवत्या स्थविरीभूतया सर्वा वधूराकार्य प्रोक्तं, हे वध्वो यदि युष्माकं भर्तारमपुत्रकं मृतं राजा श्रोष्यति तदात्मीयाः सर्वाः श्रियो ग्रहीष्यति, तेन भवंतीभिर्न रोदितव्यं, असौ भर्ता प्रछन्नं भूमिमध्ये क्षेप्यश्च यथा कोऽपि न जानाति, अहमपि न रुदिष्यामि. तावच्चान्यः कश्चित्पुरुषो भवतीभिः सेव्यो यावत्पुत्रा भवतीनां भवंति. ततस्ता वध्वः पतिं भूमिगतं कृत्वा स्नानं विधाय श्वश्रूसहिता गृहान्निर्गत्य देवकुलोपांतस्थकृतपुण्यकसमीपे गताः. तद्रूपेण मोहिता वध्वः श्वश्रूवचनात्तथावस्थं तं शनैरुत्पाट्य स्वगृहे समानीय मुमुचुः. कृतशृंगारास्ताश्चतस्रोऽपि वध्वः शय्यासन्नाः स्थिताः, स्थविराऽपि समीपे स्थिता, तावता जागरितः कृतपुण्यकः. स्नुषाचतुष्टयस्यापि पश्यतो निस्त्रपा स्थविरा कृतपुण्यककंठमालंब्य रुदंत्येवमुवाच, यथा—हा वत्स बहुवात्सल्यां । विहाय निजमातरं ॥ एतावंति दिनानि त्वं । क यातोऽसि क वा स्थितः ॥ १ ॥ निरालंबशयालुस्त्वं । तवांबास्मि न संशयः ॥ त्वं पुत्र जातमात्रोऽपि । हृतः केनापि पाप्मना ॥ २ ॥ इत्युक्त्वा रुदती जरती प्राह—इदानीं तावकीनस्य । ज्येष्ठबंधुर्विपत्तितः ॥ तव संपत्तितश्चास्मि । शोकहर्षसमाकुला ॥ १ ॥ बंधुवध्वश्चतस्रोऽमू—रमूश्च विपुलाः श्रियः ॥ एता

नद्य इवांभोधि—मगाधं त्वामुपस्थिताः ॥ २ ॥ अतः परं पुत्र त्वयान्यत्र कुत्रापि न गंतव्यं, स्वेच्छयात्रस्थ आभिर्वधूभिः समं त्वं भोगान् भुंक्ष्व? कृतपुण्यो दध्यौ किं स्वप्नो लभ्यमानोऽस्ति? अथवा काचिद्देवमायास्ति, अथवा यद्भावि तद्भवतु, सांप्रतं तु स्वर्गसुखमेवमुपस्थितं. एवं ध्यात्वा कृतपुण्योऽवग्मातर्मम सर्वं विस्मृतं, अधुनात्रागां शुभकर्मोदयात्. एवमुक्त्वा मातुरानंदमुत्पाद्य स चित्ते चिंतयति—श्रीयोगः सुदृशां योगः । स्वयंवरमिव द्वयं ॥ उपस्थितमतो व्योम—प्रसूतैः किं विकल्पनैः ॥ १ ॥ मातर्मया त्वदीयाज्ञा । देवशेषेव सुंदरा ॥ पालनीया सदा यत्ना—दिहामुत्र सुखप्रदा ॥ २ ॥ क्रमाच्चतस्रो नार्यो गर्भं दधुः, चतसृणां भार्याणां चत्वारः पुत्रा जाताः, तेषां जन्मोत्सवः कृतः, तस्य तत्र तस्थुषो द्वादशवत्सराः सुखनिमग्नस्य द्वादशघटिका इव गताः.

ततोऽन्यदा वृद्धया प्रोक्तं, भवतीनां चत्वारः पुत्रा बभूवुः, तेन राजात्मनः श्रियं न गृहीष्यति, ततोऽसौ यतः स्थानादानीतस्तत्र स्थाने मुच्यते, ताभिरुक्तं मातः कथमयमात्मनां लक्ष्म्यादिवर्धको मुच्यते? वृद्धयोक्तं युष्माकं वरो रुचितो मोक्तुं न शक्यते. ताभिरुक्तं हे मातस्त्वया कारापितो वरः कथं मुच्यते? जरत्योक्तं भो मूढाः! न ज्ञायते पुरुषस्वरूपं, कदाचिदसावात्मनां श्रियं बलाद्

ग्रहीष्यति तदात्मनां का गतिः? अतोऽयं स्वस्थाने मुच्यते यथावयोर्लक्ष्मीग्राहकोऽयं न भवति. ए- तद्वचनं स्थविराप्रोक्तं श्रुत्वा वधूभिरनिष्टमपि तद्भयेन सर्वं प्रतिपन्नं. ततस्ताभिर्वधूभिस्तामेव खट्वां सज्जीकृत्य स शायितः, स्नेहतः शंबलार्थं मध्ये रत्नानि क्षिप्त्वा मोदकाश्चत्वारो वस्त्रांचले बद्धाः. ततो वृद्धा तं तत्र सुप्तं निद्रापरवशमुत्पाट्य निशि यतो गृहीतस्तत्रैव स्थाने मुमोच. अत्रांतरे स एव सार्थवाहो द्वादशवर्षाणि देशांतरे भ्रांत्वा तस्मिन्नेव दिने तस्मिन्नेव स्थानकेऽवततार. कृतपुण्य- कप्रिया सार्थवाहं समागतं ज्ञात्वा प्राणप्रियविलोकनकृते सपुत्रा तत्रागता, यत्र देवकुले पूर्वं कृत- पुण्यकः शायितः. प्रभातं जातं, परं पतिं सुप्तं दृष्ट्वा सा पार्श्वे स्थिता, तावत्कृतपुण्यको जागरितः, तावदग्रे स्थितां सपुत्रां स्वां पत्नीं ददर्श. कृतपुण्यकश्चिंतयति किमेतत्? तद्गृहं क्व? ताः स्त्रियश्च क्व गताः? तद्धनं क्व गतं? किमेतदिंद्रजालं? किं वा मे मतिभ्रमः? किं वा देवेनोत्पाट्यात्र स्था- नेऽहं मुक्तः? इत्यादि चिंतयन् स भार्यया भाषितः स्वामिन्नेहि गृहं, तवैष पुत्रः, अतस्त्वमेनं सं- भाषय? निजोत्संगे च स्थापय? तेनापि पुत्रो निजोत्संगे आलिंगनं दत्वा स्थापितः. तत उत्थितः पुत्रमग्रे कृत्वा पत्नीसहितः कृतपुण्यकः स्वगृहे समागात्. स्त्रिया च भक्त्या गौरवितः स्नानाद्यन्नपा-

नदानतः, पत्न्या च भर्तुः पुरतः पुत्रोत्पत्तिस्वरूपं प्रोक्तं, पृष्टं च स्वामिंस्त्वया दूरदेशे गत्वा किमुपार्जितं? किमानीतं? तन्निवेदय? इति प्रियावचनं श्रुत्वा स लज्जितोऽधोमुखो भूत्वा स्थितः. तावता पुत्रः समागत्य पितुरुत्संगे निविष्टः. पुत्रेण पितुः पार्श्वे मोदको मार्गितः, पित्रा दत्तः, पुत्रेण लेखशालायां गत्वा भक्षितः, तन्मध्याद्रत्नं निर्गतं, बालेनायं मम घुंटको भविष्यतीति कृत्वा रक्षितं. तं घुंटकमादाय कांदविकगृहे स पट्टिकामार्जनाय गतः. तत्र पट्टिकां मार्जयतस्तस्य स घुंटकोऽकस्माज्जलभृतभाजने पतितः, तदा तज्जलं द्विधा भूतं. कांदविकेन तत्तथाभूतं दृष्टं, कांदविको दध्यौ नूनमयं प्रस्तरो जलकांतरत्नं बहुमूल्यं, तेन कामपि सुखभक्षिकामस्मै वितीर्येदं गृह्यते मया तदा वरं. एवं ध्यात्वा कांदविकस्तस्मै वर्यमोदकद्वयं दत्वान्यं घुंटकं च दत्वा तं प्रस्तरं ललौ. स बालकस्तां सुखभक्षिकां भक्षयित्वान्यघुंटकेन पट्टिकां घुंटयति. एवं दिनानि यांति. कांदविकेन तद्गुप्तीकृत्य रक्षितं. कृतपुण्यकेनापि ते मोदका भक्षणार्थं कर्षिताः. तेभ्यश्च बहुमूल्यानि रत्नानि निर्गतानि. तानि दृष्ट्वा मोहितः कृतपुण्यकश्चिंतयति, अहो! मे मंदभाग्यस्य भाग्यं फलितं! सुप्रसन्ना मे श्रीजिनपादाः, फलितं मे प्राचीनं कर्म, यतः—

कर्मणो हि प्रधानत्वं । किं कुर्वंति शुभा ग्रहाः ॥ वशिष्टदत्तलग्नोऽपि । रामः प्रव्रजितो वने
॥ १ ॥ यदुपात्तमन्यजन्मनि । शुभाशुभं वा स्वकर्मपरिणत्या ॥ तच्छक्यमन्यथा नैव । कर्तुं देवा-
सुरैरेव ॥ २ ॥ एवं चिंतयन् कृतपुण्यकस्तेन मोदकरत्नद्रव्येण पितुरधिको बभूव. एकस्मिन् दिने
श्रेणिकनृपतेः सेचनको हस्ती गंगानद्या मध्ये जलं पिबन् स्नानं कुर्वंश्च तंतुजीवेन निरुद्धः. अ-
नेके उपचाराः कृताः, गजो न बहिर्निर्याति. ततः खिन्ने नृपतावभयकुमारो बुद्धिवानुवाच, तंतुजी-
वेन हस्ती गृहीतोऽस्ति, यदि जलकांतो मणिर्जलधिमध्ये गजपार्श्वे मुच्यते तदा जलं द्विधा भव-
ति, तंतुजीवश्च गजं मुक्त्वा जलमध्ये याति. ततो नृपेनोक्तं भांडागारादानीयतां जलकांतो मणिः,
अभयकुमारस्ततो भांडागारं विलोक्य प्राह स्वामिन् भांडागारे जलकांतमणिर्नास्ति, तेन पुरमध्ये
पटहो वाद्यते, यथा यः कश्चिज्जलकांतमणिमानयिष्यति तस्मै राज्यार्धयुता स्वपुत्री दास्यते मया.
ततो नृपादेशादनुगैः पटहो वाद्यमानः पुरमध्ये स्थाने स्थाने भ्रमन् कांदविकगृहोपांते गतः, तदा
तेन कांदविकेन स पटहः स्पृष्टः. ततः कांदविको राजपार्श्वे आनीतो राजपुरुषैः, राजा मुमुदे. बहु-
लोकयुतो राजा नदीतटे गतः, स जलकांतमणिरानीय च गजपार्श्वे मुक्तः, तदैव तज्जलं द्विधाभू-

तं, तंतुजीवश्च नष्टः, गजश्च मुक्तोऽभूत. हृष्टेन राज्ञा भेरीमृदंगादीनि बहूनि वादित्राणि वादितानि. सन्मानितः कांदविकः. वाद्यमानेषु बहुषु वादित्रेषु सेचनकगजारूढो राजा तुरंगमारूढाभयकुमारकांदविकसहितो नानाप्रकारं दानं याचकेभ्यो विश्राणयन् स्वगृहमाजगाम. कांदविकश्च सन्मानितः सन् स्वमणिमादाय गृहे गतः.

इतो राजाभयकुमारमाकार्य रहस्यवक् भोः पुत्राभयकुमार! राजपुत्रवरयोग्यात्मनः पुत्री कांदविकस्य कथं दास्यते मनोरमानाम्नी? अभयोऽवग् स्वामिन् खेदो नानेतव्यः, यस्य जलकांतरत्नमिदं भविष्यति तं बुद्ध्वा प्रकटीकरिष्यामि. ततः सर्वं युष्मन्मनोऽभिमतमेव भविष्यति. यत ईदृशं जलकांतरत्नं राजगृहे भवति, अथवा व्यवहारिगृहे भवति, परं कांदविकादिनीचगृहे तु कदापि न भवति. यतः—पीयूषं रजनीकरे वरतरा भासश्च सूर्येंदुधौ। रत्नानां निचयो मरुत्तरुगणो मेरौ ग्रहा अंबरे ॥ स्वर्गे स्वर्गिगजस्तथा सुरहयो गीर्वाणगौर्भुजला। चक्रं चक्रिनिकेतने भवति वै नान्यत्र तिष्ठेत क्षितौ ॥ १ ॥ तथा वर्याणि वस्तूनि। रत्नादीनि च भूतले ॥ भवंति मेदिनीपाल—महेभ्यामात्यसद्मसु ॥ २ ॥ तेन कस्यापि व्यवहारिणो रत्नमिदं भविष्यति, यस्य भविष्यति

तस्मै हि राज्यार्धं सुता च दास्यते, ततो राजा हृष्टः. अथाभयकुमारेण स्वजनपरिवारपरिवृतः कांदविकः समाकारितः. कांदविको हृष्टः स्वजनपरिवारपरिवृतो वर्यवस्त्राभरणानि परिधाय राजाग्रे समागात. अभयकुमारेण सन्मानितः पृष्टं च भो कांदविक! त्वयेदं रत्नं क प्राप्तं? तेनोक्तं मम गृहे क्रमागतमस्ति. ततोऽभयकुमारेण पूर्वशिक्षितान् स्वसेवकानाकार्य प्रोक्तमस्य राज्यार्धं कन्यायुतं दीयतां? ततस्ते राजपुरुषा मंत्रिप्रेरिताः कंबादिभिस्तं तथाताडयन् यथा क्षणमेकं स निश्चेष्टः कष्टीभूतः, पुनरपि क्षणेन स स्वस्थीभूतः. पुनरप्यभयोऽवग्भो कांदविक! सत्यं ब्रूहि? त्वयेदं जलकांतरत्नं क लब्धं? यदि सत्यं न कथयिष्यसि तदाधुनामूभिः कंबाभिस्ताम्नान्मृत्युमवाप्स्यसि. मरणभयात् कांदविकेनामूलचूलतो रत्नप्राप्तिवृत्तांतः सर्वः प्रोक्तः. ततो राज्ञाभयकुमारवचनेन कृतपुण्याय राज्यार्धसहिता मनोरमा दत्ता. ततोऽभयकुमारो ग्रामैकसहितामेकां कांदविककुलोत्पन्नां कन्यां तस्मै कांदविकाय भूपादेशाद्दापयामास, यतो राज्ञोक्तं निष्फलं न भवति. ततोऽसौ वर्येभारूढं कृतपुण्यं मनोरमाप्रियायुतं वादित्रवादनपुरस्सरं गृहे प्रेषयामास.

अभयकुमारं तदा लोकाः स्तुवंतिस्म, धन्य एषोऽभयकुमारो येन सदृशः संयोगो मिलितः.

यथा कंदर्पस्य रत्या प्रीत्या वा, यथा शच्येंद्रस्य, यथा श्रिया कृष्णस्य, यथा गौर्या भवस्य, तथा मनोरमया कृतपुण्यस्येति. ततोऽभयकुमारेण सह कृतपुण्यस्य प्रीतिर्जाता. अथैकदा रहस्यभयकुमाराग्रे कृतपुण्येन स्वसंभवपुत्रचतुष्टयोत्पत्तिस्वरूपं निरूपितं, अस्मिन् पुरे मम चतुःपुत्रसंयुताश्चतस्रः पत्न्यो वर्तंते, परं तन्मंदिरं न वेद्मि. अभयकुमारेण हास्यपूर्वं प्रोक्तमहो तव चातुर्यं! यत्र द्वादश वर्षाणि स्थितस्तद्गृहं न ज्ञायते! कृतपुण्येनोक्तं सुप्त एव तथा वृद्धया सप्तभूमिधवलगृहे नीत्वा सप्तमभूम्यामहं स्थापितः, तत्र द्वादश वर्षाण्यतीतानि, तत उत्तार्य पुनस्तस्मिन्नेव स्थाने मुक्तः. अतोऽहं तद्गृहं कथं जाने? अभयकुमारेणोक्तं ये तव पुत्राः संति ते त्वामुपलक्षयंति न वा? कृतपुण्यकेनोक्तं ते मम श्मश्रु करेणाकर्षयंतोऽब्रुवन्. ममांके उपविश्य तात तातेति जल्पंतश्चाब्रुवन्, अभयोऽवदत्त्वं ताः पत्नीरुपलक्षयसि न वा? तेनोक्तं सम्यगुपलक्षयामि, अभयोऽवक्तास्ते पत्नीः पुत्रयुता अहं प्रकटीकरिष्यामि.

अथाभयकुमारेण द्विद्वारो महान् प्रासादः कारितः, एकेन द्वारेण प्रविश्यते, द्वितीयेन द्वारेण च निर्गम्यते, तत्र कृतपुण्यकरूपतुल्या यक्षप्रतिमा स्थापिता. ततोऽभयो नगरे पटहं वादयामा-

न्येद्युर्जगद्वंद्यः श्रीवीरस्वामी भव्यजीवान् प्रतिबोधयन् वैभारगिरौ समवासार्षीत्, तदा श्रेणिकनृपतिरभयकुमारकृतपुण्यकादिपरिवारयुक्तः श्रीवीरं वंदितुं ययौ, श्रीवीरोऽपि धर्मोपदेशं कथयति, यथा—

धर्मः कल्पद्रुमः पुंसां । धर्मः सर्वार्थसिद्धिदः ॥ धर्मः कामदुघा धेनु—स्तस्माद्धर्मो विधीयतां ॥१॥

धर्मदेशनांते कृतपुण्यः कृतांजलिकः पप्रछ, भगवन्! केन कर्मणांतरांतरा संपदश्च विपदश्च मेऽभूवन्? श्रीवीरेणोक्तं सर्वं पूर्वभवार्जितमेतत्, तथाहि—

पूर्वभवे श्रीपुरे त्वं गोपालदारको वत्सपालकोऽभूः, परं निर्धनः, एकस्मिन् दिने परमान्नं गृहे गृहे निष्पाद्यमानं वीक्ष्य मातरंप्रति जगौ. हे मातर्मह्यं परमान्नं देहि? अंबा रुदती जगौ हे पुत्र! मम गृहे किमपि नास्ति, कथं परमान्नं ददामि? यतः—अन्नं नास्ति जलं नास्ति । नास्ति मुद्रा युगंधरी ॥ धान्यं सलवणं नास्ति । तन्नास्ति यच्च भुज्यते ॥ १ ॥ ततस्तां रुदंतीं बालं च रुदंतं वीक्ष्य प्रातिवेश्मिकीनार्यस्तंदुलदुग्धघृतशर्करादि तस्यै ददुः, तेन च तया परमान्नं निष्पादितं, पुत्राय च परमान्नं परिवेश्य सा कस्मैचित्कार्याय प्रातिवेश्मिकीगृहे ययौ, इतो मासक्षपणपारणके साधुद्वयं तत्र विहर्तुमागतं, साधुद्वयं कृषशरीरं चारित्रपात्रं च वीक्ष्य दध्यौ गोपालबालः, यथा—अहो मे

सफलं जन्म । दिनोऽयं रुचिरोऽद्य मे ॥ यामोऽयं सुंदरो मेऽद्य । वेलेयं मेऽद्य शर्मदा ॥ १ ॥
यतोऽधुना समायातं । वर्यं साधुद्वयं स्फुटं ॥ प्रतिलाभ्य भविष्यामि । कृतार्थोऽहं तमोहरं ॥ २ ॥
एवं स गोपालबालको हृष्टचेताः स्वस्थानादुत्थाय प्रणम्य बभाषे, हे भगवन्! मम भाग्यं फलितं, यद्युष्मत्पादानामत्रागमोऽभूत्, ममानुग्रहं विधायायं शुद्धाहारोंगीक्रियतां, ततः स परमान्नस्यैकभागं ददौ, पुनश्चिंतितमेकेन किं भवति? ततो द्वितीयभागं, ततस्तृतीयभागं, एवं त्रीन् वारान् कृत्वा परमान्नं तस्मै कृतपुण्यको ददौ, साधुद्वयं तदन्नं गृहीत्वान्यत्र ययौ. ततो गते यतिद्वये मात्रा तस्य पुनरपि परमान्नं परिवेशितं, ततः कालक्रमात्स गोपालको मृत्वा त्वं कृतपुण्यकोऽभूः, पुरा भवे त्वया त्रिवारं विभज्य यतिभ्यां यद्दानं दत्तं, तेन त्रिधा तवांतरांतरा सुखमभूत्, आकर्ण्यैवं स्वं पूर्वभवं कृतपुण्यकः समुत्पन्नवैराग्यो ज्येष्टपुत्रे गृहभारमारोप्य सप्तक्षेत्र्यां च स्वधनमुप्त्वा श्रीवीरपार्श्वे दीक्षामादाय पंचमस्वर्गसुखभागभूत्. ततश्च्युतः स्वर्गं गमिष्यति. इत्थं महामुनेर्दानं । देयं भो भविका मुदा ॥ कृतपुण्यकवद् दृष्ट्वा । भवांतरसुखप्रदं ॥ १ ॥ इति कृतपुण्यककथानकं समाप्तं ॥ अथ तपोलब्धिमाहात्म्यतो दानविशेषमाह—

॥ मूलम् ॥—घयपूसवत्थपूसा । महरिसिणो दोसलेसपरिहीणा ॥ लद्धीइ सयलगच्छो—व-
ग्गहणा सुग्गइं पत्ता ॥ ११ ॥ व्याख्या—घृतेन कृत्वा सकलं गच्छं पुष्णाति पोषयतीति घृतपुष्पः,
एवं वस्त्रेण कृत्वा सकलं गच्छं पुष्णाति पोषयतीति वस्त्रपुष्पः, ते घृतपुष्पवस्त्रपुष्पलब्धिधारका इत्य-
र्थः, ' महरिसिणो ' महर्षयः, किं लक्षणाः? दोषलेशेन परिहीना रहिता इत्यर्थः. पुनः कीदृशाः?
लब्ध्या सकलगच्छोपग्रहकाः सकलगच्छोपकारकारका इति यावत. तेन सुकृतेन ' सुगइं पत्ता ' इ-
ति सद्गतिं प्राप्तास्ते च श्रीआर्यरक्षितसूरिगच्छे प्रसिद्धा इति गाथार्थः. तत्र पूर्वं तावदार्यरक्षितप्रबंधः
कथ्यते, तदनंतरं तच्छिष्यघृतपुष्पवस्त्रपुष्पयोः संबंधः कथयिष्यते, तत्रार्यरक्षितप्रबंधो यथा—दशपु-
रनगरे सोमदेवो नाम द्विजोऽभुत, तस्य पत्नी रुद्रसोमा, सा च जिनधर्मज्ञाकू, तयोरुभौ सुता-
वार्यरक्षितफल्गुरक्षितनामानावभूतां. तौ सुतौ पितुः पार्श्वे यावती विद्याभूत्तावतीं पठतःस्म. ततोऽ-
धिकविद्यार्थी आर्यरक्षितः पाटलीपुरे ययौ. तत्र सर्वविद्याविशारदो भूत्वा स्वपुरसमीपे समागात. तं
सर्वविद्यापारगं मत्वा तन्नगराधीशः संमुखमेत्य तं गजारूढं कृत्वा महोत्सवपुरस्सरं पुरमध्ये आनि-
नाय. तं राज्ञा सन्मानितं ज्ञात्वा पंडितं च मत्वा सर्वे लोकाः पंडिताश्च मानयंति. सोऽपि गृहद्वा-

रदेशे उपस्थानशालायां स्थितो वरासने बंदिभिः स्तूयमानः सुखेनास्थात. तस्य स्वजनास्तमागतं ज्ञात्वा तोरणस्वस्तिकादीनि मंगलानि चक्रुः. अन्येद्युरार्यरक्षितो दध्यावहो चतुर्दशविद्यापारगं मां मत्वा राजप्रभृतयः सर्वे लोकाः संतुष्टाः, परं मम माता न तुष्टिमापन्ना. अथ तत्करोमि येन मम जननी तुष्टिमाप्नोतीति मत्वा मध्ये गत्वा मातृपादौ नत्वा मातरं जगाद, हे मातरहं शास्त्राण्यधीत्य समागतः, परं तव तुष्टिर्न जाता तत्किं? भो वत्स! त्वं दीर्घायुर्भवेत्याद्याशिषं दत्वा माता जगाद, हे वत्स! अनया महत्यापि विद्यया किं क्रियते? येन संसारो वर्धते. यतोऽथ त्वं सकलशास्त्रपारगो यागान्नरकहेतून् जीवहिंसादिकारकान् प्रवर्तयिष्यसि, अतोऽहं किं तोषं यामि? ज्ञानस्य त्वेतदेव प्रामाण्यं यत्परपीडा न कर्तव्या, यतः—किं ताए पढियाए। पयकोडीए पलालभूयाए॥ जं इत्तिअं न नायं। परस्स पीडा न कायव्वा॥ १॥ तत् श्रुत्वा पुत्रो मातरं प्राह, हे मातस्तव केन शास्त्रेण पठितेन हर्षः स्यात? माताह हे वत्स! यदि मातुर्भक्तोऽसि तदा दृष्टिवादं मुक्तिसुखदमधीष्व? पुत्रेण दृष्टीनां वादो दृष्टिवाद इति शब्दार्थमात्रं विचार्य चिंतितं यद् दृष्टिवादः स्वल्प एव भविष्यति, अतोऽहं स्तोकैरेव दिनैस्तमधीत्य मातरं तोषयामि. पुनर्मातरं प्रत्याह हे मातस्तच्छास्त्रं

कुत लभ्यते? कस्य वा पार्श्वे पठ्यते? माता प्रोक्तं मम भ्राता तव मातुलस्तोसलिपुत्रनामाचार्योऽस्मिन्नगरोपांत ईक्षुवाटकेऽस्ति, स त्वां पाठयिष्यति, त्वं तत्र याहि? तत्र गत्वा च पठनं कुरु? तत् श्रुत्वा स प्रातर्मातापितरावापृच्छ्य चचाल. स पुरान्निर्गच्छन्नार्यरक्षितः केनचिद्विप्रेण पृष्टः कोऽसि त्वं? सोऽवगहमार्यरक्षितः, ततस्तेन पुरुषेणालिंग्येदमुक्तं, शाखापुराश्रयोऽहं त्वत्पितृमित्रं महाद्विजो गृहचिंताज्जरमग्न एतावंति दिनानि नागां, अथ प्रातरिमा ईक्षुयष्टीः सार्धा नव गृहीत्वा तव मिलनायागतोऽस्मि, तत्त्वमिमा गृहाण? ततस्ता ईक्षुयष्टीर्गृहीत्वा जगौ, अहमग्रतः कार्यार्थी यातास्मि, अत इमा गृहीत्वा त्वयेक्षुयष्ट्यर्पणवृत्तांतो मम मातुरग्रे प्रोक्तव्यः. एममुक्त्वार्यरक्षितोऽग्रतश्चचाल. विप्रेणागत्येक्षुयष्टीः पुरो मुक्त्वार्यरक्षितस्वरूपं प्रोक्तं. रुद्रसोमा माता दध्यौ मत्सुतः सार्धानि नव पूर्वाणि लप्स्यते. सार्धनवेक्षुयष्टिप्राप्तेरिदमेव फलं.

अथार्यरक्षित ईक्षुवने गुर्वासन्ने गतः. गुरुभिः पाठ्यमानानां साधूनामालापकं श्रुत्वा तत्र गुरूणां मंडतारं मधुरस्वरं श्रुत्वार्यरक्षितो मुमुदे. विधिनोपाश्रये प्रविश्य यावता स विलोकयति तावता महाधार्मिको ढड्ढरो नाम श्रावकस्तत्रागात. स चागत्य नैषेधिकीत्रयगणनपूर्वं मध्ये प्रविश्य 'इ-

ह्यामि खमासमणो ' इत्युक्त्वा गुरून् वंदित्वा परान् साधूंश्च वंदित्वा भूमिं प्रमार्ज्य पुरो निषण्णः. ढड्ढरश्रावककृतं वंदनकं वीक्ष्यार्यरक्षितस्तथैव गुरून् वंदित्वा सर्वान् साधून्नत्वा गुर्वंतिके वस्त्रांचलेन भूमिं प्रमार्ज्य पुरो निविष्टः. पृष्टं च गुरुणा तव को गुरुः? सोऽवक् ममायमेव श्राद्धो गुरुर्येनास्य पार्श्वान्मयैवं सर्वं शिक्षितं. ततः पृष्टं गुरुणा त्वं कः कस्य पुत्रः? किमर्थं चागतोऽसि? तेनोक्तमहमार्यरक्षितनामा सोमदेवरुद्रसोमापुत्रो भवदंतिके दृष्टिवादमध्येतुं चागतोऽस्मि. तोसलिपुत्राचार्यः प्राह दृष्टिवादः परिव्रज्यां विनाध्येतुं न शक्यते, सोमदेवसूनुः प्राह तर्हि मह्यं संयमं देहि? संयमं दत्वा च दृष्टिवादं पाठय? गुरुस्तं योग्यं ज्ञात्वा पात्रं च मत्वा दीक्षां दत्वाग्रतो विजहार. आर्यरक्षितमुनिर्गुरुपार्श्वे पठन् स्तोकैरेव दिनैरेकादशांगीमंगीचकार, तथा यावान् दृष्टिवादो गुरुपार्श्वे वर्तते तावानेष गुरुभिः पाठितः, ततः प्रोक्तं वत्स! यद्यधिकदृष्टिवादभणनेच्छास्ति तदा वज्रस्वामिपार्श्वे गत्वा दृष्टिवादमधीष्व? तत आर्यरक्षितो महापुरीं प्रत्यचलत्, मार्गे चोज्जयिन्यां भद्रगुप्ताचार्यसन्निधौ गतः, तत्र गुरवो वंदिताः, गुरुभिरुपलक्ष्योक्तं वत्स! वर्यं कृतं यद्ब्राह्मण्यमुन्मुच्य श्रामण्यं गृहीतं, अहं वृद्धोऽभूवं, तेनाद्यैवानशनं ग्रहीष्यामि, त्वं मम निर्यामको भव? इत्युक्त्वा श्रीभद्रगुप्तगुरु-

णानशनं गृहीतं. गृहीतानशनः श्रीभद्रगुप्तसूरिरवादीत्. भो आर्यरक्षित! वज्रपार्श्वे गत्वा दृष्टिवादं पठता त्वया पृथगुपाश्रये स्थेयं, पृथगुपाश्रये भोक्तव्यं च, येन तत्र कारणमस्ति, येन मुनिना वज्रस्वामिमंडल्यां भुक्तं तेन वज्रस्वामिना सार्धमनशनं गृहीतव्यमेव, अतो मंडल्यां न भोक्तव्यमिति. गुरुवचः प्रतिपद्य निर्यामणां च गुरोः कृत्वार्यरक्षितो वज्रस्वामिपार्श्वे दृष्टिवादं पठितुमचालीत्. तदानीं वज्रस्वामिना स्वप्नो दृष्टो यथा—

वज्रः स्वप्नमितोऽद्राक्षीत । कोऽप्यागत्य मदंतिकात ॥ पपौ भूरितरं क्षीर—मवशिष्टं किमप्यभूत् ॥ १ ॥ स्वप्नस्यार्थं प्रगे वज्रः शिष्याणामग्रे प्राह, भोः साधवः! कोऽप्यपूर्वस्तादृक्षः शिष्यः समेष्यति यः किंचिन्न्यूनां दशपूर्वीमस्मत्पार्श्वे गृहीष्यति. अस्मिन्नवसरेऽकस्मादार्यरक्षितो नैषेधिकीकरणपूर्वं वसतिमध्ये प्रविश्य श्रीवज्रस्वामिनं ववंदे, स पृष्टः श्रीवज्रस्वामिना किमागमनकारणं? आर्यरक्षितः सर्वं जगौ श्रीभद्रगुप्ताचार्योक्तं, पृथगुपाश्रये स्थित्यादि च निवेदितं. श्रीवज्रस्वामिनोक्तं वरं. ततः पृथगुपाश्रये स्थित आर्यरक्षितो वज्रस्वाम्यंतिके पठति, वज्रस्वाम्यपि तं पाठयति. एवमार्यरक्षितो नवपूर्वीं पाठित्वा दशमपूर्वस्य विषमं यमकव्रजं पठति. तस्मिन् समये तस्य मातापित्रोर्लेखः स-

मागतः, तस्मिन् लेखे एवं लिखितमासीत् हे वत्स! त्वां विना वयं दुःखिता जातास्तेनात्रागमने-
नास्माकं सुखं कुरु? तत्पितृलेखं ज्ञात्वार्यरक्षितस्त्वरितमध्येतुं प्रवृत्तः. एवं लेखप्रेषणेऽप्यनागतं पुत्रं
ज्ञात्वा तमाह्वातुं पित्रा लघुपुत्रः फल्गुरक्षितः प्रेषितः. इतः फल्गुरक्षितोऽनुजोऽग्र्येस्यार्यरक्षितं सहो-
दरंप्रति जगौ, यदि तव मातापितृविषये वात्सल्यमस्ति तदा तत्रागत्य मातापित्रादिबंधून् प्रमोदय?
केचित्स्वजना बांधवाश्च प्रव्रज्यार्थिनो वर्तंते, तेषां स्वजनानां तत्रागत्य दीक्षां देहि? तत् श्रुत्वार्य-
रक्षितोऽवगहं स्तोकदिनांते तत्रागमिष्यामि, तथापि कथ्यते हे बांधव! यदि तव दीक्षा रोचते त-
र्हि दीक्षां गृहाण? संसारे हि किमपि सुंदरं नास्ति, यतः—जीअं जलबिंदुसमं। संपत्तीउ तरंग-
लोलाउ॥ सुविणयसमं च पिम्मं। जं जाणिसु तं करिज्जासु॥ १॥ वायामिसेण कालो। स-
यलजिआणं छलं गवेसंतो॥ पासं कहवि न मुंचइ। ता धम्मे उज्जमं कुणह॥ २॥ इत्यादि-
धर्मोपदेशं निशम्य फल्गुरक्षितोऽपि दीक्षां जग्राह. गृहीतदीक्षः फल्गुरक्षितः पुनर्भ्रातरंप्रत्याह, भो
बांधव! मातापितृमिलनाय त्वरितं गम्यते, सज्जो भव? विलंबं मा विधेहि? फल्गुरक्षितेन वारंवा-
रमित्युक्त आर्यरक्षितो वज्रस्वामिनंप्रत्याह हे स्वामिन्! दशमपूर्वं मया कियदधीतं कियदवशिष्यते

चेति कथ्यतां. गुरुभिरुक्तं भो वत्स! त्वया दशमपूर्वाब्धेरेको बिंदुरधीतोऽस्ति. ततः स विशेषं पठन् दशमपूर्वार्धं यावत्पपाठ, महद्यत्नेऽपि ततोऽधिकं नायाति. ततश्चिंतितमार्यरक्षितेन पुरान्निर्गच्छतो मम जनकमित्रेण सार्धा नवेक्षुयष्टयो दत्ताः, तेनाधिकं नायास्यतीति, अथ किं मुधा प्रयासः क्रियते? ततः पठने मंदादरं मातापितृमिलनोत्सुकं च तं ज्ञात्वा श्रीवज्रस्वामिना स सूरिपदे स्थापितः. प्राप्तसूरिपद आर्यरक्षितो भ्रातृयुतो गुरुं प्रणम्य चलितः. क्रमाद्दशपुरं च समागात्, महामहेन च स पुरीं प्रविवेश. आर्यरक्षितो नृपादिसर्वलोकपुरतो धर्मोपदेशं दत्तवान्, यथा—

संबुज्झह किं न बुज्झह। संबोही खलु पेच्च दुल्लहा॥ नो हू वणमंति राईओ। नो सुलहं पुणरावि जीवियं॥ १॥ डहरा बुड्ढा य पासहा। गब्भत्थावि चयंति माणवा॥ सेणे जह वट्टयं हरे। एवं आउक्खयंमि तुट्टइ॥ २॥ इत्यादिदेशनां गुरुमुखात् श्रुत्वा सर्वलोका राजादयस्तं वारंवारं प्रशंसंतिस्म, अहोऽस्माभिरीदृशो धर्मोपदेशो न कुत्रापि श्रुत इति. राजा श्राद्धो जातः, तथा बहवो लोका अपि श्राद्धा जाताः. ततः स्वकुटुंबं प्रतिबोध्य तेन श्राद्धीकृतं. रुद्रसोमा माता भगिनी च बहुपरिवारयुता संयमं ग्राहिता. सोमदेवो जनको दीक्षां पालयितुमशक्तः श्रीआर्यरक्षितादि-

कुटुंबस्यानुरागेण तेन समं ग्रामे ग्रामे पुरे पुरे वने वने च गच्छति, न पुनः सोमदेवो लज्जया रजोहरणादि गृह्णाति. यदा श्रीआर्यरक्षितो दीक्षार्थं पितुः कथयति तदा सोमदेवो वक्ति, अत्र मम स्वजनाः संति तेनाहं स्वजनमध्ये लज्जे. ततो ममांबरयुगं कुंडिकां छत्रकोपानहौ यज्ञोपवीतं च यद्यनुजानीथ यूयं तदाहं दीक्षामंगीकरोमि. गुरुभिरुक्तमेवं भवतु. ततो विप्रवेषयुतः प्रव्रज्यां ग्राहितः सोमदेवः, ततो गुरुभिरनुज्ञातो धौतिकांबरादिसहितोऽसौ दीक्षां पालयामास. अन्यदा गुरवो देवान्नंतुं चैत्यालये गताः, तत्र पूर्वशिक्षिताः शिशवः सोमदेवं विना सर्वान् साधून् ववंदिरे. तदैकेन शिशुना प्रोक्तमेष साधुः कथं न वंद्यते? तदापरैरुक्तं नैष साधुर्गृहस्थवेषधारकत्वात्. ततः सोमदेवऋजुस्वभावः सर्वान् श्राद्धान् प्रति प्राह यूयमेतान् साधून् वंदध्वे, मां च कथं न नमथ? किं नाहं साधुः? तैरुक्तं त्वं कथं साधुः? तव तु वस्त्रयुगं गृहस्थतुल्यं वर्तते. ततस्तेन शिरस्त्राणं पृथुप्रावरणपटी चेति द्वयं तेन त्यक्तं. ततस्तैः श्राद्धैः स वंदितः, एवं कुंडिकोपानच्छत्रकं यज्ञोपवीतं चेति सर्वं त्याजितं. परं स सोमदेवविप्रो धौतिकमेकं न मुंचति. बहुशो बालकपार्श्वाज्जल्पितोऽपि न त्यजति सोमदेवः. ततो गुरुभिरनुज्ञातोऽसौ धौतिकं परिधानवस्त्रं दधाति.

इतस्तत्रैकः साधुस्तीव्रतपस्कारी भक्तप्रत्याख्यानं चकार. तदानेके जनाः श्राद्धाश्च तस्य साधोरनशनमहोत्सवं चक्रुः, साधुभिश्च तस्य सम्यग्निर्यामणा कृता. स साधुर्जिनेंद्रध्यानपरो मृत्वा स्वर्गं जगाम. तदा सोमदेवस्य धौतिकमोचनार्थमाचार्यैर्भणितं य एनं मृतं साधुं वहते तस्यासंख्यपुण्यं मुक्तिगमनयोग्यं भवति. तदानीं पृथक्पृथक् सर्वेऽपि साधवो जल्पंत्यहमेनं साधुं वहामि. तदा सोमदेवोऽपि जगादाहमपि साधुमेनं वहामि. तदा गुरुभिरुक्तं मृतं साधुं वहतां साधूनां देवा विघ्नं कुर्वंति, यदा ते साधवो न क्षुभ्यंति तदा तेषां देवाः प्रसन्ना भवंति. तदा पुनः सोमदेवो जगावहमेनं साधुं वहामि यथा ममासंख्यं पुण्यं भवति. पुनर्गुरवो जगुरत्र बालकादिकृता विघ्ना बहवः समुत्पद्यंते तेऽपि सोढव्याः, सोमदेवेनोक्तमहं सर्वानुपसर्गान् सहिष्ये. गुरुभिरुक्तं तर्हि सज्जो भव? सोमदेवः साहसं विधाय तमुत्पाटयितुं सज्जो जातः. तदानीं गुरुभिः शिक्षिता बालकास्तत्राभ्येत्याकस्मात्तस्य सोमदेवस्य साधोः परिधानांशुकं धौतिकं कर्षयामासुः. तदा गुरुभिः प्रोक्तं भो साधवः? एकं चोलपट्टवस्त्रमानयत? तदा सोमदेवो जगौ यस्मिन् दृष्टे त्रपाभूत तत्तुष्टमेवेति. एवं जल्पतः सोमदेवस्य चोलपट्टं परिधापयामासुः साधवः. ततः सोमदेवः सत्यः साधुरभूत्. तस्य सा-

धोरग्निसंस्कारे कृते यदा गुरवो देवगृहे देवान्नंतुं समागतास्तदा सर्वान् साधून् सोमदेवं च श्राद्धा
वंदंतेस्म. अथ सोमदेवो लज्जया भिक्षार्थं श्राद्धगृहे न गच्छति. एकदा श्रीगुरुभिरासन्ने ग्रामे ग-
च्छद्भिः साधूनामुक्तं भोः साधवः! युष्माभिरेव शुद्धान्नमानीय भक्षितव्यं, परं सोमदेवस्य न दात-
व्यं. अथ श्रीगुरुषु ग्रामं गतेषु साधुभिर्गुरूक्त कृतं.

एवं द्वितीये दिने गते तृतीये दिने गुरवः समागताः. गुरुभिरुक्तं सोमदेवेन किं कृतं? शि-
ष्यैर्यथा तथोक्तं. गुरवः प्राह भो शिष्याः! अस्मत्पितुरर्थं भक्तं कथं नानीतं? ते पूर्वशिक्षिताः सा-
धवो जगुरयं स्वयमेव विहर्तुं कथं न याति? गुरुभिरुक्तं भोः सोमदेव! त्वमत्रासन्नगृहे गत्वाहारा-
दिकं कथं नानयसि? किं परलाभेन? परलाभात् स्वलाभो महान्, अतः स्वयमेवाहारार्थं गम्यते.
एवं गरुभिरुत्साहितो भाजनानि गृहीत्वा कस्यापि महेभ्यस्य गृहखिडिकायां प्रविश्य गृहांगणे ग-
तः. श्रेष्ठिन्योक्तं हे यते! त्वं खिडिकायां कथं प्रविष्टः? साधुः प्राह लक्ष्मीरपि खिडिकायामपि प्रविष्टा
वरा. हृष्टः श्रेष्ठी सोमदेवस्य मुनेर्द्वात्रिंशन्मोदकान् ददौ. हृष्टः सोमदेवोऽहं लब्धिमानिति तान् गु-
रूणामदर्शयत्. गुरुभिरुक्तं साधुभ्य एतान् मोदकान् ददस्व? सोऽवक्साधुभ्यो न ददामि, यैरहं वि-

गोपितः. गुरुभिरुक्तं भोः स्थविर! मैवं वादीः, एते साधवो महांतः पूज्याः, अमीषां पादरजोऽपि हि वंद्यं. एवं गुरूक्तं श्रुत्वा साधुभ्यस्तान् मोदकान् ददौ. दत्वा पुनर्लाभोदयकर्मयोगात्स परमान्नं विहृत्यागात, पारणं च चक्रे. एवं लज्जां मुक्त्वा स सदा विहृत्यायाति. ततः स सोमदेवसाधुः षष्ठाष्टमादिपारणके स्वयमानीताभिर्भिक्षाभिः पारणकं करोति. श्रीआर्यरक्षितसूरयो भव्यजीवान् प्रतिबोधयंत एकस्मिन् समये पाटलीपुरपत्तने समाययुः. तत्र चंद्रनरेश्वरो जैनधर्मपरायणो धर्मं श्रोतुं समागात. पंचविधाभिगमेन गुरून् वंदित्वा स समीपे समुपाविशत्. गुरुभिरपि धर्मोपदेशो दत्तः, यथा—धर्मो जगतः सारः । सर्वसुखानां प्रधानहेतुत्वात् ॥ तस्योत्पत्तिर्मनुजाः । सारं तेनैव मानुष्यं ॥ १ ॥ इत्यादिधर्मोपदेशं निशम्य स विशेषतस्तदंतिके धर्मं प्रपेदे. ततस्ते आर्यरक्षितसूरयो बहुपरिवारा मह्यां विहरंतः शत्रुंजयोज्जयंतादियात्रां कृत्वा पुनः पाटलीपुरमाजग्मुः. आयुरंते चाराधनां कृत्वा स्वर्गलोकं ययुः. इत्यार्यरक्षितः सूरिः । सर्वसूरिगुणालयः ॥ यो गुरुः साधुधौरेयः । सद्गुरुर्घृतपुष्पयोः ॥ १ ॥ इति श्रीआर्यरक्षितसूरिसंबंधः समाप्तः. श्रीआर्यरक्षितसूरिगच्छे घृतपुष्पवस्त्रपुष्पौ जातौ; अतः श्रीआर्यरक्षितसूरिसंबंधः प्रोक्तः, अथ प्रस्तुत एव घृतपुष्पवस्त्रपुष्पयोः संबंधः क-

श्यते, यथा—

घृतेन कृत्वा गच्छपोषकः साधुर्घृतपुष्पमित्रो घृतमुत्पादयति, कोऽर्थः? भिक्षया स घृतमानयति, तस्य चेदृशी लब्धिः—द्रव्यतो घृतमुत्पादयति भिक्षया १, क्षेत्रतोऽवंत्यां गतस्तत्र घृतं दुःप्रापं २, कालतो ज्येष्ठाषाढमासयोः, यतस्तस्मिन् काले विशेषतो घृतं दुःप्रापं भवति ३, भावत एका द्विजातिगृहिणी गर्भवती, तस्या भर्त्रा भिक्षया स्तोकं स्तोकं मेलयित्वा षड्भिर्मासैर्घृतस्य गडुको भृतः, यदासौ पुत्रं प्रसविष्यति तदैतद्घृतस्योपयोगो भविष्यतीति स्थापितः. एवं दुःप्रापमत्यंतं सोपयोगमपि तस्य विप्रस्य गृहे भिक्षार्थं घृतपुष्पे गते सत्यन्यघृताभावे तद् घृतं हृष्टा सती सा दद्यात्, यदि सापि तद्दुःप्रापं घृतं दद्यात्तर्ह्यन्येषां धनवतां घृतदाने किं कथ्यते? ते तु ददत्येव परिमाणतो यावन्मात्रं सकलगच्छस्योपयोगे समेति तावन्मात्रं समानयति. यथा स च साधुर्भिक्षार्थं निर्गच्छन् पृच्छति भो साधवः! भवतां कियन्मात्रेण घृतेन कार्यं? ते यावन्मात्रं मार्गयंति तावन्मात्रं गृहस्थगृहादानीय स यच्छति. घृतपुष्पस्यैवैव लब्धिः. इत्येको घृतपुष्पसाधुः. अथ वस्त्रपुष्पलक्षणमाह—तथा वस्त्रेण कृत्वा गच्छपोषकः साधुर्वस्त्रपुष्पमित्रो वस्त्रमुत्पादयति. द्रव्यतो वस्त्रमुत्पादयति १,

क्षेत्रतश्चेदिदेशे तथा मथुरायां वा २, कालतो वर्षाकाले शीतकाले वा ३, भावतो यथा कयापि वृ- द्धया, रंडिकया, क्षुधया म्रियमाणयातिदुःखेन स्तोकं स्तोकं सूत्रं प्रत्यहं कर्त्तयित्वैका शाटिका निष्पादिता, तया चिंतितं कल्ये एषा शाटिका परिधास्यते, यतोऽहं नग्नास्मि.

एतस्मिन्नवसरे सा शाटिका वस्त्रपुष्पेण मुनिना याचिता, सा स्थविरा हृष्टा तुष्टा सती तां शाटिकां तस्मै ददाति, ईदृशी निर्नाथा यदि वस्त्रपुष्पमुनये वस्त्रं ददाति, तर्हि धनवतां किमुच्यते? ते तु विशेषतो मार्गितं वस्त्रं ददत्येव, वस्त्रपुष्पः साधुर्भिक्षार्थं निर्गच्छन् साधूनां पृच्छति, भो साधवः! भवतां कियन्मात्रेण वस्त्रेण कार्यं? यावन्मात्रं ते मार्गयंति तावन्मात्रं गृहस्थगृहादानीय स यच्छति, वस्त्रपुष्पस्यैषैव लब्धिः. एवं घृतपुष्पवस्त्रपुष्पौ सकलगच्छस्योपग्रहकारकौ भक्तिकारकौ च. घृतपुष्पवस्त्रपुष्पौ । महामुनी प्रवरलब्धिसंपन्नौ ॥ श्रीरक्षितगुरुशिष्यौ । देयास्तां परमसौख्यानि ॥१॥ इति घृतपुष्पवस्त्रपुष्पयोः संबंधः समाप्तः ॥ अथ जिनभक्तिपूजाकृते दानमाह—

॥ मूलम् ॥—जीवंतसामिपडिमाइ । सासणं विअरिऊण भत्तीए ॥ पव्वइऊणं सिद्धो । उदाइणो चरमरायरिसी ॥ १२ ॥ व्याख्या—जीवत्स्वामिप्रतिमायै, जीवति स्वामिनि श्रीवीरे विद्य-

माने सति तत्प्रतिमा जीवत्स्वामिप्रतिमा, तस्यै इत्यर्थः, ' सासणंति ' ग्रामं, ' विअरिअणत्ति ' वितीर्य दत्वेत्यर्थः, ' नत्तीएत्ति ' नक्तितः, ' पवइअणंति ' प्रव्रज्य दीक्षां कक्षीकृत्य सम्यक्परिपाल्य सिद्धो मोक्षं गतः, ' उदाइणोत्ति ' उदायननामा चरमराजर्षिः, यत उदायननाम्नो राज्ञः पश्चात्केनापि राज्ञा दीक्षा नांगीकृता, अतश्चरमराजर्षिरिति गाथार्थः ॥ १२ ॥ विशेषार्थस्तु कथानकादवसेयः, तच्चेदं—

सिंधुसोवीरदेशे वीतभयं नाम पुरमस्ति, तन्नगराधीश उदायननामा राजास्ति, वीतभयादित्रिषष्ट्यधिकत्रिशतिनगरनायकः सिंधुसोवीरप्रभृतिषोडशदेशाधिपो महासेनादिदशकिरीटनृपनायको महाराजाधिराजो महीं पालयन्नस्ति, तस्य राज्ञः सकलांतःपुरमुख्या प्रभावतीनाम्नी पट्टदेव्यस्ति, तस्य राज्ञः प्रभावतीजन्मा यौवराज्यधुरंधरोऽभीचिनामा पुत्रोऽस्ति, तथा तस्य राज्ये राज्यधुराधरणधौरेयः केशीति नामा भागिनेयोऽप्यस्ति. इतश्चंपायां नगर्यामाजन्मस्त्रीलंपटो धनवान् कुमारनंदिनामा स्वर्णकारोऽस्ति, स स्वर्णकारो यां यां चारुरूपां कन्यां शृणोति पश्यति वा तां तां स्वर्णपंचशतीं दत्वा परिणयति. एवं तस्य क्रमात्पंचशतानि पत्नीनां बभूवुः, स ईर्ष्यालुरेकस्तंभसौधे ताभिः

सह्हारंस्त, तस्य सुवर्णकारस्यातिवल्लभो नागिलो नाम मित्रमस्ति, स नागिलः पंचाणुव्रतधरः शुद्ध-श्रमणोपासको वर्तते. एकदा पंचशैलद्वीपवासिन्यौ व्यंतरस्त्रियौ शक्राज्ञया नंदीश्वरद्वीपयात्रायै प्रास्थिषातां, तत्पतिः पंचशैलद्वीपनायको विद्युन्मालीनामा तदानीं मार्गे च्युतः, ततस्तस्य पत्न्यौ ते हासाप्रहासानाम्न्यौ दध्यतुरथास्माभ्यां कोऽपि पुमांस्तादृग्व्युद्ग्राह्यो यादृगस्माकं पतिर्भवेत्. ततस्ताभ्यां स्वेच्छया प्रयांतीभ्यां चंपापुर्यां पंचशतैः पत्नीनां सह क्रीडन् स कुमारनंदी स्वर्णकारोऽदृश्यत. ततस्ते पतीच्छया व्युद्ग्राहार्थं तत्समीपेऽवातरतां, कुमारनंद्यपि ते दृष्ट्वा प्रोचे, के युवां? किमर्थं चागते? ते प्रोचतुर्देव्यावावां हासाप्रहासानाम्न्यौ भवदर्थं समागते, ते पश्यन् कुमारनंदी मोहमाप, काममोहितश्च स भोगार्थं प्रार्थयांचक्रे, ते ऊचतुस्त्वं पंचशैले द्वीपे समागच्छेः, तत्रावयोः संयोगो भावीत्युक्त्वा ते तूत्पतिते, स्वर्णकारो भूभुजे स्वर्णं दत्वेति पटहोद्घोषणामकारयत्, यो मां पंचशैले द्वीपे नेता स द्रव्यकोटिं लप्स्यते, एकेन निर्यामकस्थविरेण स पटहो धृतः, कोटिधनं चाददे, तद्धनं पुत्रेभ्यो दत्वा यानपात्रं सज्जीकृत्य भोजनादिसामग्रीं गृहीत्वा कुमारनंदिना सार्धं स स्थविरो यानारूढोऽब्धिवर्त्मनि दूरदेशे गत्वा कुमारनंदिनमित्यूचे, भो कुमारनंदिन्! पश्यसि त्वं

किंचित्सन्मुखं? तेनोक्तं कंचिद्वृक्षं पश्यामि, नाविकेनोक्तमब्धिकूले शैलपादजातोऽयं वटो दृश्यते, यदास्याधो यानपात्रं याति, तदास्य शाखायां त्वं विलगेः, तत्र भारंडपक्षिणो निशायां पंचशैलद्वीपाद्वासार्थं समेष्यंति, तेषां स्थानं तत्रास्ति, तेषु सुप्तेषु त्वं तस्य पादे पटेन स्वं बध्ध्वा दृढमुष्टिना विलगेः, पश्चात्ते त्वां पंचशैलद्वीपे नेष्यंति, तव पश्यतश्चैतद्यानपात्रं महावर्ते पतित्वा विनंक्ष्यति, जरयाभिभूतोऽहमविलग्नो वटे निनंक्ष्यामि, अहो जरा पुरुषं विडंबयति, यतः—

गात्रं संकुचितं गतिर्विगलिता दंताश्च नाशं गता । दृष्टिर्भ्रस्यति रूपमेव ह्रसते वक्त्रं च लालायते ॥ वाक्यं नैव करोति बांधवजनः पत्नी न शुश्रूषते । धिक्कष्टं जरयाभिभूतपुरुषं पुत्रोऽप्यवज्ञायते ॥ १ ॥ स्वर्णकृत्तथा चक्रे, पक्षिपादे च विलग्नः, पक्षिणा तत्र निन्ये, पंचशैले गतः कुमारनंदी हासाप्रहासाभ्यां दृष्टः, तेनापि ते दृष्टे, भोगार्थं प्रार्थिते च, ताभ्यां प्रोचेऽनेनांगेनावयोः संगमो न भवति, किंत्वग्निप्रवेशादिना कृतनिदानेन पंचशैलाधिपत्वं लभ्यते, तेन चिंतितमथ किं करिष्ये? द्वयमपि गतं. एवं स्वर्णकारं चिंतामग्नं दृष्ट्वा ताभ्यां पाणिपुटे कृत्वा स चंपोद्याने विमुक्तः, स स्वर्णकारो लोकेनोपलक्षितः, पृष्टं च त्वं कुत्र गतोऽभूः? तत्र गत्वा च त्वया किं कृतं? त-

दा तेन स्वर्णकारेणामूलचूलतः स वृत्तांतः कथितः, परं देवमायया मोहितः स्वर्णकारः कुत्रापि रतिं न प्राप्नोति. यतः—संमोहयंति मदयंति विडंबयंति । निर्भर्त्सयंति रमयंति विषादयंति ॥ एताः प्रविश्य सदयं हृदयं नराणां । किं नाम वामनयना न समाचरंति ॥ १ ॥ हासाप्रहासास्नेहमोहितो विस्मृतस्वगृहस्नेहोऽसावग्निसाधनं प्रारेभे. नागिलमित्रेण स एवं प्रबोधितो भो महाभाग! दुःप्रापं मानुष्यं जन्म तुच्छभोगफलार्जनकृते मा मुधा हारय? कापुरुषोचितं तव न युक्तं, को रत्नं दत्वा वराटिकां क्रीणाति? यदि तव भोगेच्छा वर्तते तर्हि जैनधर्मे रतो भव? भगवद्दीक्षां चांगीकुरु? येन हासाप्रहासादिभ्योऽप्यधिका देवस्त्रिय ऋद्धयश्च ते भविष्यंति, यो धर्मश्च भवांतरे मोक्षसौख्यप्रदोऽपि भविष्यति.

एवं वारंवारं नागिलमित्रेण वार्यमाणोऽपि कुमारनंदी स्वर्णकारो न विरराम, किंत्विंगिनीमरणं कृत्वा पंचशैलाधिपोऽभवत्. नागिलोऽपि स्वमित्रस्यापंडितमरणमालोक्य निर्वेदमापन्नः सर्वसंगपरित्यागं कृत्वा परिव्रज्यामुपाददे. सम्यक्परिव्रज्यां पालयित्वाऽच्युते कल्पे द्वाविंशतिसागरोपमायुः स सुरोऽभूत्. स देवस्तं सुवर्णकारसुहृदं पंचशैलाधिपमवधिज्ञानेन ददर्श. तस्मिन् समये श्रीनंदी-

श्वयात्रायै प्रस्थितैर्देवैः सह ते हासाप्रहासे चलिते, देवानामाज्ञया च ते पुरो गातुं प्रवृत्ते. तदा पटहग्रहणे ताभ्यां विद्युन्माली देवः प्रवर्तितः. अहं किमेतेषां देवानां सेवकोऽस्मि? ममापि किं कश्चिन्नायकोऽस्ति? यस्याग्रेऽहं पटहं वादयामि, इत्यहंकारहुंकारपूरितस्यापि पूर्वकृतकर्मेव पटहस्तस्य गले व्यलगत्. हस्तपादादिवदंगे सहजूरिव तेन गलादुत्तार्यमाणोऽपि नोत्तारयितुं शेके. तदानीं हासाप्रहासाभ्यामूचे हे प्राणेश! त्वं त्रपां मा कुरु? कंठे पटहं स्थापय? इह जन्मिनामिदमेव फलमिदमेव च कर्म, कुलोचितं कुर्वतां काचिल्लज्जा नास्ति, त्वमपि मा लज्जस्व? ततो हासाप्रहासाभ्यां मार्गे गायंतीभ्यां समन्वितो विद्युन्मालीदेवो गले पटहं धृत्वा पटहं वादयन् त्रिदिवौकसां पुरश्चचाल. स देवो यात्रायां संगतो हासाप्रहासापतिं विद्युन्मालिनं निजं पूर्वभवमित्रमवधिना ददर्श. नागिलदेवेन विद्युन्माली देवो भाषितः, भो भद्र! जानासि त्वं मां? तं द्युतिद्योतितदिङ्मुखमभिनवभानुमंतमिव तेजसा दीप्यमानं समालोक्य स जगौ भो तेजस्विन्नाहं जाने त्वं कोऽसि? तेनोक्तं भो पाटहिक! त्वं किं मां नोपलक्षयसि? इत्युक्त्वा स नागिलश्रावकरूपं कृत्वा हासाप्रहासारमणंप्रत्यबोधयत्, हे सखे! मयोक्तमर्हद्धर्ममनाश्रयन्नग्निमृत्युं च कृत्वा त्वमनयोः पतिर्जा-

नः, अहं तु जिनधर्मज्ञस्तदैव जैनीं प्रव्रज्यां लात्वा सम्यगाराधनापरो मृत्वाच्युतदेवलोके महामहर्द्धिको देवो जातः, सोऽहं देवोऽस्मि. तत् श्रुत्वा पंचशैलेश्वरः सुरो नागिलसुरेश्वरमेवमवदत्. भो मित्र! किमद्याहं करोमि? नागिलदेवेनोक्तं गार्हस्थ्ये चित्रशालायां कायोत्सर्गस्थितस्य श्रीमहावीरस्य मूर्तिं त्वं कारय? अर्हत्प्रतिमायां कारितायां च तवान्यस्मिन् जन्मनि महाफलं बोधिबीजमुत्पत्स्यते. यतः—

रागद्वेषमोहजितां । प्रतिमां श्रीमदर्हतां ॥ यः कारयेत्तस्य हि स्या—द्धर्मः स्वर्गापवर्गदः ॥१॥ जिनार्चाकारकाणां न । कुजन्म कुगतिर्न च ॥ न दारिद्र्यं न दौर्भाग्यं । न चान्यदपि कुत्सितं ॥ ॥ २ ॥ विद्युन्माली देवस्तस्याज्ञामुररीकृत्य क्षत्रियकुंडग्रामे श्रीवीरजिनं प्रतिमास्थमपश्यत्. ततः स देवो महाहिमवति पर्वते गत्वा गोशीर्षचंदनं छित्वा यथादृष्टां तन्मूर्तिं सालंकारां चकार. जात्यचंदनदारुभिः स्वयं घटितामेकां पेटीं कृत्वा विद्युन्माली देवस्तां प्रतिमां कपिलकेवलिपार्श्वे प्रतिष्ठाप्य निधानमिव तस्यां चिक्षेप. तदानीं पयोराशौ कस्यचित्सांयात्रिकस्य पोतस्योत्पातयोगतो भ्रमतः षण्मासी गता, विद्युन्माली देवश्च तं ददर्श. ततस्तमुत्पातं संहृत्य सांयात्रिकाय तं प्रतिमागर्भं समुद्ग-

कमर्पयित्वैवमुवाच, अथ तव निरुपद्रवं सुखं जातं, त्वं सिंधुसोवीरदेशे वीतभयपत्तने चतुष्पथे स्थित्वा घोषणामिमां कुर्वीथाः, इमां देवाधिदेवप्रतिमां गृह्यतां गृह्यतामिति. ततः स सांयात्रिकः प्रतिमाप्रभावतो नदीमिव नदीनाथं समुत्तीर्य तटमासदत्. स सांयात्रिकः सिंधुसोवीरदेशे वीतभये पुरे गत्वा चतुःपथे स्थित्वा तथैवोद्घोषणां चक्रे. तामुद्घोषणां श्रुत्वानेके ब्राह्मणास्तापसाश्च समागताः, तथोदायिनृपोऽपि तत्रागात्. ते विष्णुभक्ताद्या लोकाः स्वेष्टदेवान् स्मृत्वा स्मृत्वा उद्घाटयंति, परं दिव्यानुभावतः सा पेटा नोद्घटति. ततो राज्ञा कुठारेणापि स्फोट्यमाना लोहनिर्मितेव नास्फुटत. एवं दिनमुखादारभ्य मध्याह्नं यावदुद्घाटिता, तथापि सा पेटा नोदघटत. राज्ञो भोजनातिक्रमं ज्ञात्वा प्रभावती राज्ञी पतिभक्ता दासीं संप्रेष्य भोजनाय राजानमाह्वयत्. राज्ञापि यथास्थिते प्रोक्ते प्रभावती तत्रागात. देवाधिदेवो भगवान् परमेश्वरो जिनोऽर्हन्, न त्वन्ये ब्रह्मादय इति ज्ञात्वा स्नानं कृत्वा निर्मलधौतिकान् परिधाय चंदनादिभिस्तत्संपुटमभिषिच्य पुष्पांजलिक्षेपपूर्वं प्रभावती प्रणम्योचे, यथा—गतरागद्वेषमोहः । प्रातिहार्याष्टकावृतः ॥ देवाधिदेवः सर्वज्ञो—ऽर्हन् देयाद्दर्शनं मम ॥ १ ॥ इति प्रभावत्योक्ते स प्रतिमास्थानसंपुटः स्वयमेवोद्घटितः प्रगे कमलकोशवत, तन्मध्ये-

नः. अहं तु जिनधर्मज्ञस्तदैव जैनीं प्रव्रज्यां लात्वा सम्यगाराधनापरो मृत्वाच्युतदेवलोके महामह- र्द्धिको देवो जातः. सोऽहं देवोऽस्मि. तत् श्रुत्वा पंचशैलेश्वरः सुरो नागिलसुरेश्वरमेवमवदत. भो मित्र! किमथाहं करोमि? नागिलदेवेनोक्तं गार्हस्थ्ये चित्रशालायां कायोत्सर्गस्थितस्य श्रीमहा- वीरस्य मूर्तिं त्वं कारय? अर्हत्प्रतिमायां कारितायां च तवान्यस्मिन् जन्मनि महाफलं बोधिबीजमु- त्पत्स्यते. यतः—

रागद्वेषमोहजितां । प्रतिमां श्रीमदर्हतां ॥ यः कारयेत्तस्य हि स्या—द्धर्मः स्वर्गापवर्गदः ॥१॥
जिनार्चाकारकाणां न । कुजन्म कुगतिर्न च ॥ न दारिद्र्यं न दौर्भाग्यं । न चान्यदपि कुत्सितं ॥
॥ २ ॥ विद्युन्माली देवस्तस्याज्ञामुररीकृत्य क्षत्रियकुंडग्रामे श्रीवीरजिनं प्रतिमास्थमपश्यत. ततः स देवो महाहिमवति पर्वते गत्वा गोशीर्षचंदनं छित्वा यथादृष्टां तन्मूर्तिं सालंकारां चकार. जात्यचंद- नदारुभिः स्वयं घटितामेकां पेटीं कृत्वा विद्युन्माली देवस्तां प्रतिमां कपिलकेवलिपार्श्वे प्रतिष्ठाप्य निधानमिव तस्यां चिक्षेप. तदानीं पयोराशौ कस्यचित्सांयात्रिकस्य पोतस्योत्पातयोगतो भ्रमतः ष- ण्मासी गता. विद्युन्माली देवश्च तं ददर्श. ततस्तमुत्पातं संहृत्य सांयात्रिकाय तं प्रतिमागर्भं समुद्र-

कर्मपयित्वैवमुवाच, अथ तव निरुपद्रवं सुखं जातं, त्वं सिंधुसोवीरदेशे वीतभयपत्तने चतुष्पथे स्थित्वा घोषणामिमां कुर्वीथाः, इमां देवाधिदेवप्रतिमां गृह्यतां गृह्यतामिति. ततः स सांयात्रिकः प्रतिमाप्रभावतो नदीमिव नदीनाथं समुत्तीर्य तटमासदत्. स सांयात्रिकः सिंधुसोवीरदेशे वीतभये पुरे गत्वा चतुःपथे स्थित्वा तथैवोद्घोषणां चक्रे. तामुद्घोषणां श्रुत्वानेके ब्राह्मणास्तापसाश्च समागताः, तथोदायिनृपोऽपि तत्रागात्. ते विष्णुभक्ताद्या लोकाः स्वेष्टदेवान् स्मृत्वा स्मृत्वा उद्घाटयंति, परं दिव्यानुभावतः सा पेटा नोद्घटति. ततो राज्ञा कुठारेणापि स्फोट्यमाना लोहनिर्मितेव नास्फुटत. एवं दिनमुखादारभ्य मध्याह्नं यावदुद्घाटिता, तथापि सा पेटा नोदघटत. राज्ञो भोजनातिक्रमं ज्ञात्वा प्रभावती राज्ञी पतिभक्ता दासीं संप्रेष्य भोजनाय राजानमाह्वयत्. राज्ञापि यथास्थिते प्रोक्ते प्रभावती तत्रागात. देवाधिदेवो भगवान् परमेश्वरो जिनोऽर्हन्, न त्वन्ये ब्रह्मादय इति ज्ञात्वा स्नानं कृत्वा निर्मलधौतिकान् परिधाय चंदनादिभिस्तत्संपुटमभिषिच्य पुष्पांजलिक्षेपपूर्वं प्रभावती प्रणम्योचे, यथा—गतरागद्वेषमोहः । प्रातिहार्याष्टकावृतः ॥ देवाधिदेवः सर्वज्ञो—ऽर्हन् देयाद्दर्शनं मम ॥ १ ॥ इति प्रभावत्योक्ते स प्रतिमास्थानसंपुटः स्वयमेवोद्घटितः प्रगे कमलकोशवत, तन्मध्ये-

ऽम्लानमाल्यां सर्वांगसंपूर्णां देवनिर्मितां गोशीर्षचंदनमयीं सर्वालंकारसंपूर्णां कायोत्सर्गस्थां जिनप्रतिमां प्रभावती मुदैक्षत. ततः प्रभावती राज्ञी सम्यक्त्वपूतात्मा तां प्रतिमां पूजयित्वास्तवीदिति, यथा—सोमदर्शन सर्वज्ञा—ऽपुनर्भव जगद्गुरो ॥ अर्हन् भव्यजनानंद । विश्वचिंतामणे जय ॥१॥ इत्यादिश्लोकैः स्तुत्वा सा तं सांयात्रिकं सत्कृत्य बंधुवच्च सन्मान्य विसर्जयामास. अथ सा प्रभावती तां प्रतिमामंतःपुरे नीत्वा चैत्यगृहं कारयित्वा तत्र च तां प्रतिमां न्यस्य स्नानपूर्वं त्रिसंध्यं पूजयामास. तां प्रतिमां पूजयित्वा प्रभावती तदग्रे गीतनृत्यादि प्रचक्रे, प्रभावतीप्रेमानुविद्धो राजा च वीणामवादयत.

एवं काले यात्येकस्मिन् समये जिनपूजाकरणानंतरं कृतशृंगारा प्रभावती देवी प्रीता जिनपुरतो लास्यतांडवपूर्वकं ननर्त, राजा च तत्प्रेमानुविद्धो वीणामवादयत्. तदा महीपतिः प्रभावत्या नृत्यंत्याः क्षणाच्छिरो न ददर्श, किंतु नृत्यंतं तत्कबंधं ददर्शाजिकबंधवत्. अरिष्टदर्शनात् क्षुभितो महीपतिः, तेन तत्कराद्वीणागलत्, तदानीं तालच्युता राज्ञी कुपितावदत्, हे प्राणेश! तव कराद्वीणा कथं गलिता? सत्यमाख्याहि? स्त्रीकदाग्रहो बलवान्, वारंवारं पृष्टो महीपालः सत्यमाख्यत्, हे

प्रिये! तव नृत्यंत्या मया तव कबंधं दृष्टं, तेन व्यग्रत्वान्मम कराद्वीणा गलिता. राज्ञ्यूचे हे प्राणे·
श! अनेन दुर्निमित्तेन ममायुरल्पमेव ज्ञायते. पुनरन्यदा कृतस्नानविलेपनांगरागा प्रभावती देवा·
र्चार्हाणि श्वेतानि वासांसि दास्या हस्तेनानाययत्. दास्या समानीतानि श्वेतवासांसि, परं भ्राम्य·
निष्टवशात्तानि राज्ञी रक्तान्युदैक्षत. ततः कोपावेशवशाद्राज्ञी तामादर्शेन जघान, सा तु मर्मणि
हतत्वान्मृता, मृत्योर्विषमा गतिः. ततस्तानि वस्त्राणि प्रभावती श्वेतान्येव ददर्श. ततः सैवमचिंतय·
त्, धिग्मम जीवितेन, मया व्रतं खंडितं, अन्यस्यापि पंचेंद्रियस्य वधो नरककारणं, किं पुनः स्त्री·
विघातः? अनेन दुर्निमित्तेन ममायुरल्पमेवास्ति, अतो मे व्रतमेव श्रेय इति विचिंत्य सा राज्ञे
जगौ, हे नाथ! ममानुजानीहि? तवाज्ञयाहं दीक्षामंगीकरोमि, यतस्त्वं माममौलिमद्राक्षीः, अहम·
पि वस्त्रवर्णपरावर्तमद्राक्षं, ततो ममायुरल्पमेव संभाव्यते, अतः प्रसन्नो भूत्वा प्रव्रज्याग्रहणे ममांत·
रायं मा कृथाः.

एवमुक्तो वसुधाधवस्तदाग्रहं मत्वेत्युवाच, हे देवि! देवत्वमाप्तया त्वयाहं सम्यग्धर्मो बोधनीयः,
मत्कृतोऽपराधस्त्वया सोढव्यः. ततः सा सर्वविरतिरूपं सम्यक् चारित्रं प्रपद्यानशनं कृत्वा सम्यगाराध·

नां विधाय विपद्य प्रथमे कल्पे महर्द्धिको देवोऽभूत्. अथ ामंतःपुरचैत्यगां देवाधिदेवप्रतिमां देवदत्ताख्या कुब्जिका दास्यपूजयत. प्रभावतीदेवेन बोध्यमानोऽप्युदायनो राट् नाबुध्यत, ततस्तेनावधिज्ञानेन ज्ञात्वायमुपायो व्यधीयत, यथा—तापसीभूय सोऽन्येद्यु—रुदायननृपंप्रति ॥ दिव्यामृतफलापूर्ण—पात्रपाणिरुपाययौ ॥ १ ॥ तानि फलानि भुक्त्वा सोऽवर्णयत्, अहो! ईदृशानि स्वादुफलानि काप्यदृष्टपूर्वाण्यश्रुतपूर्वाणि अस्वादितपूर्वाणीति. एवं तैः फलैर्मोहितो महीपालस्तं मुनिमपृच्छत्, भो मुने! केदृशानि फलानि संति? मह्यं तत्स्थानं दर्शय? तपस्व्यूचे हे राजन्नस्य पुरस्य नातिदूरे ईदृक्फलजन्मभूर्दृष्टिविश्रामो ममाश्रमो वर्तते, राज्ञोक्तं मुने! तमाश्रमं मम दर्शय? मुनिनोक्तं मया सहैहि? दर्शयामि तमाश्रमं, देवो राजानमेकाकिनं कृत्वा किंचिद्गत्वा तादृक्फलमनोरममनेकतापसाकीर्णं नंदनोपममुद्यानं विचक्रे, तमाश्रमं दृष्ट्वा मोहितो राजा एते मम गुरवोऽहमेतेषां भक्तोऽतोऽहं फलभक्षणेच्छां पूरयिष्ये, इति चिंतयित्वा फलादानहेतवे राजा कपिवद्धावे, तावता क्रोधारुणलोचनास्तापसाः करे दंडं धृत्वा राजानं कुट्टयामासुः, तैः कुट्यमानो राजा तस्करवत्पलायिष्ट, पलायमानो राजाग्रे साधूनवस्थितानपश्यत्, राजा तेषां शरणं प्रपेदे, तैः साधु-

भिः स्वांतिके निवेश्याश्वासितो नृपतिः स्वस्थीभूतश्चिंतयति, अहो! आजन्मक्रूरकर्मभिस्तापसैर्वंचितोऽस्मि. ततस्ते तापसा राजानं साधुसमीपे समुपविष्टं दृष्ट्वा प्रणष्टाः, स्वस्थचित्तो राजा गुर्वंतिके धर्मं शृणोति, यथा—

देवोऽष्टादशभिर्दोषै—र्मुक्तो धर्मो दयान्वितः ॥ गुरुश्च ब्रह्मचार्येव । निरारंभपरिग्रहः ॥ १ ॥

इत्याद्युपदेशेन पार्थिवः प्रत्यबुध्यत, तस्य राज्ञो हृदि जिनधर्म उत्कीर्ण इव स्थिरोऽभूत्. एवं पार्थिवं जिनधर्मे संस्थाप्य प्रभावतीदेवः प्रत्यक्षीबभूव, राजानं देवतत्वगुरुतत्वधर्मतत्वाधिवासितं कृत्वापदि स्मर्तव्योऽहमिति कथयित्वा देवः स्वस्थानं गतः, तत्प्रभृति सम्यक्त्वाधिवासितो राट् सम्यग्जिनधर्ममाराधयामास. इतश्च गांधारदेशजन्मी गांधारो नाम श्रावको विद्याबलेन शाश्वतीरर्हत्प्रतिमा विवंदिषुर्वैताढ्येऽगात्, तत्र वैताढ्यमूले गत्वा तस्थौ, त्रिभिरुपवासैस्तुष्टा शासनसुरी तदीप्सितमपूरयत्. तं कृतकृत्यं शासनसुरी समुत्पाट्य वैताढ्यतलेऽमुंचत, तस्मै गांधारश्रावकाय शासनसुरी कामदमष्टोत्तरं गुटिकाशतं ददौ, एकां गुटिकां वदने क्षिप्त्वा स दध्यावहं देवाधिदेवप्रतिमां वंदितुं वीतभये पत्तने यामि, मां तत्र पत्तने प्रापय? इति चिंतितमात्रेण स श्राद्धो देवतया देवप्रतिमांतिके नीतः,

गांधारश्रावको विधिवत्तां प्रतिमां संपूज्य तत्र सुखेनास्थात्, तत्र सुखेन तस्थुषस्तस्य गांधारश्रावकस्यान्यदा शरीरं सामयं बभूव, देवदत्ता कुब्जिकैष मे धर्मबंधुरिति विचिंत्य तं प्रतिजजागार, गांधारोऽपि सज्जीभूतः सुधीर्महाश्रावकः स्वमासन्नमवसानं विंदन् कुब्जायै ताः पूर्वोक्ताः कामितप्रदा गुलिकाः प्रादात्, स्वयं च प्रव्रज्यामादद्दे, सा कुब्जिनी रूपार्थिन्येकां गुलिकां मुखे क्षिप्त्वा क्षणेन सुवर्णवर्णा दिव्याकारधारिणी बभूव, अतो राज्ञा लोकेनापि च तस्याः सुवर्णगुलिकेति नाम दत्तं, तया चिंतितं रूपेन किं? यदि मम सदृग्भर्ता नास्ति, अयं तु नृपतिर्मम पितेव, अतोऽन्यो मम पतिः प्राणप्रियश्चंडप्रद्योतोऽस्तीति कथयित्वा द्वितीयां गुटिकां मुखे क्षिप्त्वा तद्रूपं चिंतयंत्यास्ते, तावता गुलिकाधिष्ठायिका देवी चंडप्रद्योताग्रे तद्रूपं वर्णयामास, चंडप्रद्योतोऽपि कुब्जिकारूपमोहितः कुब्जिकायाः प्रार्थनाकृते दूतमादिशत्, दूतोऽपि तत्र गत्वा तां कामार्थमर्थयांचक्रे, सा दूतंप्रत्याह भो दूत! प्रथमं मम प्रद्योतं दर्शय? दर्शनानंतरमुभयोः सर्वं समीहितं भविष्यति, सोऽपि गत्वा सर्वं तथैवाख्यत्, तदैवैरावतारूढो वासवैवानिलवेगगजसमारूढो निशि प्रद्योतो वीतभयपत्तनं समाययौ, वने च द्वयोः संयोगो मिलितः; प्रद्योतस्य सा रुचिता, तस्याः प्रद्योतोऽपि च रुचितः.

एवमन्योन्यमुग्धावपि मिलितौ, चंडप्रद्योतेनोक्तं हे प्रिये! त्वं मत्पुरीमेहि? यथावयोः संगो भवति, तदानीं सा कुब्जिकावोचत्, हे नाथ! यां देवाधिदेवप्रतिमां विनाहं न जीवामि तां मुक्त्वाहं क्वचिन्न यामि, अतोऽमुष्याः प्रतिमायाः प्रतिकृतिस्त्वया कृत्वा समानेतव्या, यथा तामिह मुक्त्वैषा सहैव नीयते, अवंतीपार्थिवस्तत्प्रतिमारूपं निरूप्य तां रजनीं तया सह रंत्वा रजन्यंते पुनः स्वस्थानं ययौ, प्रद्योतः क्षेमेणावंत्यां समागत्य यथादृष्टां देवाधिदेवप्रतिमां जात्यश्रीखंडदारुमयीं तामकारयत्, प्रद्योतो मंत्रिणः प्रत्यूचे, हे मंत्रिमुख्या इयं मया चंदनमयी देवाधिदेवप्रतिमा कारिता, परमिमां कः प्रतिष्ठास्यति? मंत्रिणः प्रोचुः स्वामिन्निहास्मिन्नगरे कपिलनामा केवली स्वयंबुद्धः श्वेतांबरो मुनिपंचशतयुतः सांप्रतं समागतोऽस्ति, तव पुण्योदयेन च स एनां प्रतिमां प्रतिष्ठास्यति. ततोऽवंतिनाथेन प्रार्थितः कपिलो मुनिः प्रतिमाशिरसि मंत्रपूतचूर्णान्यक्षिपत्, तां प्रतिमां च प्रत्यष्ठात्, ततश्चर्चयित्वा तां प्रतिमां दोर्भ्यां चोध्धृत्य पार्थिवोऽवंतीशोऽनिलवेगस्य करिणः स्कंधे सुखासनस्थः स्वकीयोत्संगेऽधारयत्. ततः सोऽवंतिनाथः करिराजसमारूढो वीतभये शीघ्रमागत्य तां प्रतिमां दास्यै समर्पयत्. सा सुवर्णगुलिका तां नवीनां प्रतिमां गृहचैत्ये न्यस्य पुरातनीं प्रतिमां समादाय समा-

गता. ततो राजा दासीं सुवर्णगुलिकामनिलगिरिगजस्कंधे समारोप्य स्वयं च गजस्कंधमारुह्य द्रुतमवंतीं प्राप.

इतश्च वीतभयपत्तने नित्यकर्मरत उदायनः प्रातर्देवतालयं ययौ, देवगृहे गत्वा यावता प्रतिमां नत्वा स्तुत्वा च सन्मुखं विलोकयति तावता तां प्रतिमां स म्लानमाल्यां पश्यति. तथा दृष्ट्वोदायनश्चिंतयति नूनमियं प्रतिमा काप्यन्या, सा न भवति म्लानमाल्यत्वात्, तस्यां तु पुष्पाण्यारोपितान्यपरेऽह्नि तत्कालोत्तीर्णानीव दृश्यंते. एतानि च सांप्रतं म्लानानि दृश्यंते, पुनः स्तंभलग्ना पांचालिकेव सा सुवर्णगुलिका देवदत्तापरनाम्नी या दास्यासीत् सापि न दृश्यते, निदाघे मरुत्वारीव करिणां मदश्च निष्टो दृश्यते, तन्नूनमनिलवेगेनेह चंद्रप्रद्योतः समागादिति ज्ञायते, सदेवदत्तां तां प्रतिमां च गृहीत्वा चौरवद्गतः, यतोऽसौ कामांधः, काममोहितः पुमांश्च किमकार्यं न करोति? यतः—विकलयति कलाकुशलं । हसति शुचिं पंडितं विडंबयति ॥ अधरयति धीरपुरुषं । क्षणेन मकरध्वजो देवः ॥ १ ॥ लोकेशकेशवशिवत्रिदिवप्रभूणां । चूडामणिः प्रणयिनी प्रथते यदाज्ञा ॥ निःशेषविश्वविजयी विषमेषुरेषु । कं नावधीरयति धीरमपि प्रवीरं ॥ २ ॥ ततः प्रद्योतोपरि कुपित

उदायनो जयढक्काभिव प्रयाणढक्कामवादयत, बद्धमुकुटा दश राजानो तमन्वगुः, रुद्रा इव एकादशापि ते राजानो महौजसावंतींप्रति चेलुः, मार्गे संचरत्सैन्यं यावन्मरुस्थल्यां समागतं, तावदुष्णकालः समायातः, तस्मिन् समये जलाभावे तृषाक्रांता लोका भूमौ लुठंति, परस्परमास्फलंति, तांस्तृषाक्रांतान् लोकानालोक्योदायनो राजा प्रभावतीदेवं सस्मार, स्मृतमात्रोपस्थितेन तेन देवेन वारिपूर्णास्त्रयस्तटाकाः कृताः, तत्पयः पायं पायं तत्कटकं सुस्थितमभूत्, यतोऽन्नेन विना जीव्येत, परं जीवनीयं विना तु क्षणमेकं न जीव्यते, ततः प्रभावतीदेवो राज्ञः साहाय्यं कृत्वा स्वमालयं जगाम, क्रमेण राजोदायन उज्जयिनीं पुरीं प्राप, ततस्तयोर्द्वयोः सैन्ययोर्मिथः संगरोऽभूत, तस्मिन् संगरे द्वयोः सैन्ययोः सैनिका निधनं गताः, ततश्चंडतेजसा चंडप्रद्योतेनोक्तं भो उदायन! आवयोर्वैरं वर्तते, तर्ह्यावयोः संग्रामो भवतु, किमन्यैर्लोकैर्निधनं नीतैः? उदायनेनोक्तमेवं भवतु, प्रद्योतेनोक्तं रथे स्थित्वा प्रहर्तव्यं. ततः प्रभाते प्रद्योतोऽनिलवेगेभं सज्जीकृत्य तदारूढः संगरे समागात, उदायनश्च रथारूढ एव समागात्, गजस्थं प्रद्योतं दृष्ट्वा चेत्युवाच, हे पापभग्नसत्यसंधत्वात्त्वं नष्टोऽसि, त्वं न भवसीत्युक्त्वा मंडलिकया वेगेन स्वं रथं भ्रामयन् दोष्मानुदायनः शूचिमुखैः शि-

खीमुखैर्धनुर्धरधुरंधरोऽनिलवेगस्य विष्वक्पादतलानि विव्याध, अनिलवेगगजेंद्रस्य चत्वारोऽपि पादा बाणैः संभृताः, ततश्चलितुमशक्तो द्विपः पृथिव्यां पपात. उदायनेन प्रद्योतः कुंजरात्पातयित्वा हस्तेन धृत्वा बद्धः. निजयशोराशिरिव प्रद्योतस्य ललाटपट्टे मम दासीपतिरित्यक्षरावलीं लिलेख, उदायनस्तप्तलोहशलाकया तमंकितं निजदासमिव कृत्वा गुप्तिगृहेऽक्षिपत्. ततो दिव्यं प्रतिमारत्नं समानेतुं स प्रद्योतस्य गृहजिनालये गतः, तां प्रतिमां नत्वा पूजयित्वा स्तोत्रेण च स्तुत्वोपादातुमुपाक्रंस्त, परं सा प्रतिमा ततः स्थानाद्गिरिवन्न चचाल, पुनर्देवाधिदेवप्रतिमामर्चयित्वा स इत्युवाच, हे नाथ! मम किं भाग्यं नास्ति? किं कोऽपि मयापराधः कृतो विद्यते यत्परमेश्वर! त्वं मया सह नैषि, तदानीं प्रतिमाया अधिष्ठायको देवोऽप्युवाच, हे महाभाग! त्वं माशोचीः, यद्वीतभयपत्तनं पांशुवृष्ट्या स्थलं भावि, तत्कारणान्नाहं तत्र समेष्यामि, हे महाभाग! त्वं निवर्तय? तं देवतादेशमासाद्योदायनोऽवंतीदेशान्न्यवर्तत, मार्गस्यांतराले प्रयाणवारिणी प्रावृड्बभूव, राजा तत्रैव शिबिरं न्यधात, राजानो यत्र तिष्ठंति तत्रैव नगरं, दश राजानो धूलिवप्रं कृत्वोदायननृपं परितः परिवेष्ट्य तस्थुः, तेन कारणेन तत्र दशपुरं नाम नगरं जातं, उदायनः प्रद्योतं भोजनादिनात्मानमिव बहु

मेने, ईदृशः क्षात्रधर्मो वर्तते.

अन्यदा पर्युषणापर्वणि उदायने पौषधिके सूदः प्रद्योतमपृच्छत्, किमद्य नृप भोक्ष्यसे? तत् श्रुत्वावंतीनाथो क्षोभादिदमचिंतयत्, अहो मम कदापि न पृष्टं, अद्य च स भोजनेच्छां पृच्छति, तत् किंचित्कारणमिति मत्वा प्रद्योतः सूपकारमपृच्छत्, भो सूपकृत्! त्वया मम कदापि न पृष्टं, अद्य पृष्टं तत्किं कारणं? सूदोऽप्युवाच हे राजन्! अद्य पर्युषणोत्सवः, अद्य सांतःपुरपरिवारो मम स्वाम्युपोषितोऽस्ति, सदा तु राजार्थं रसवती क्रियते, तया रसवत्या च त्वं भोजितोऽसि, अधुना तु त्वदर्थं तां रसवतीं करिष्यामीति पृच्छामि. प्रद्योतः सूदं स्माह, भो सूद! त्वया वरं कृतं यत्पर्यूषणादिनं ज्ञापितं, ममाप्युपवासोऽद्यास्तु, यतो मम पितरौ श्रावकौ बभूवतुः. सूदोऽपि तत्प्रद्योतस्य भाषितमुदायनायाख्यत्, उदायनोऽप्येवमचिंतयत्, अयं यादृशस्तादृशो वा भवतु. परमस्मिन् कारागारनिवासिनि मम पर्युषणा साध्वी न स्यात्. एवमवधार्य प्रद्योतं कारागारान्मुक्त्वा क्षमयामास, क्षमयित्वा च तस्य भालांकगोपनं स्वर्णरत्नमणिपट्टबंधेन विदधे. तदादि वैभवसूचकः पट्टबंधो राज्ञां जातः, पूर्वं किरीटमेवाभूत् तेषां मौलिमंडनं. उदायनो राट् प्रद्योतायावंतिदेशं ददौ. वर्षारात्रे व्य-

तिक्रांते उदायनो वीतभयं ययौ. दशभिर्बद्धमुकुटे राजभिर्वासितं पुरं दशपुरं नाम नगरं पृथिव्यां
प्रथितं जातं. वीतभयप्रतिमायै विशुद्धधीः प्रद्योतो नृपतिर्दशपुरं दत्वा स्वयमवंतिपुरीमगात्. उदाय-
नो राट् विद्युन्मालिकृतायै प्रतिमायै द्वादशग्रामसहस्रान् पूजार्थं प्रददौ.

अत्रांतरे वीतभयस्थितमुदायनं प्रभावतीदेवः स्नेहेन प्रत्यबोधयत्, हे राजन्निह जीवतः स्वा-
मिनो या प्रतिमा नूतना कपिलकेवलिना श्वेतांबरेण प्रतिष्ठितास्ति सापि त्वया पुरातनीव प्रभावती
ज्ञेया तथैव पूजनीया च. समये च त्वया महाफला सर्वविरतिरपि ग्राह्या, उदायनोऽपि राट् देव-
तावचनं प्रतिपेदे. ततः स देवः स्वस्थानं गतः. उदायनस्तद्दिनादारभ्य विशेषाद्धर्मपरायणो जातः.
अन्यदा स्वपौषधागारे स पाक्षिकमहोरात्रिकं पौषधं जग्राह. तत्र राज्ञो धर्मजागरिकायां शुभध्या-
नेन तस्थुष ईदृगध्यवसायोऽभूत्, ते नगरग्रामादयो धन्या ये श्रीवीरेण स्वचरणरेणुभिः पवित्रि-
ताः, ते राजप्रजादयो धन्या यैस्तन्मुखाद्धर्मोऽश्रावि, तथा तत्पादपद्मसान्निध्याद् गृहिधर्मं द्वादशधा
शिश्रियुः. पृथिव्यां ते श्लाघ्यास्ते वंदनीयाश्च ये स्वाम्यंतिके भावतः सर्वविरतिं प्रपेदिरे. यदि स्वा-
मी श्रीवीरो विहारेण विचरन्निह वीतभयपत्तनं पुनाति तर्हि तत्पादमूले प्रव्रज्यामादाय संसारपारं

प्राप्नोमि. श्रीवीरो भगवांस्तन्मनोगतं भावं ज्ञात्वा चंपापुर्याः प्रचलितः, क्रमेण महीं पावयन् वीत-
भयपत्तने समागात्. भगवंतं समागतं ज्ञात्वोद्यानपालकेन विज्ञप्तो राजा, तस्य वर्धापनिकां दत्वा
स वंदनाय निर्गतः, स्वामिनं वंदित्वा च पुरो निषण्णः. स्वामी श्रीवीरो गंभीरमधुरगिरा वैराग्योत्पा-
दिनीं देशनां विदधे. राजा तां देशनां श्रुत्वा स्वामिनं नत्वा गृहे गतवान्, मनसि चैवं चिंतयामा-
स, अहो यद्यहमभीचये सूनवे राज्यं दद्यां तन्मयैष संसारनाटके नटः कृतो भवेत्, यतो नीतिवि-
दो वदंति नरकांतं राज्यमिति. तत्सूनवे राज्यमहं न ददामीति मत्वा स केशिनि भागिनेये राज्य-
श्रियं संक्रमयामास निशि सूर्यस्तेजः पावक इव. जीवंतस्वामिदेवाय पूजानिमित्तं ग्रामाकरपुरादि-
कं भूरि धनं च स शासनेन ददौ. ततः केशिनरेंद्रेण कृतनिष्क्रमणोत्सव उदायनः परिव्रज्यामुपा-
त्तवान्. स व्रतदिनादारभ्य षष्ठाष्टमादिमहातपोभिः स्वात्मानमशोषयत्.

एकदोदायनमुनेः पृथिव्यां विहरतो महाव्याधिरुत्पन्नोऽकालापथ्यभोजनैः स मुनिर्वैद्येन दृष्टः,
कथितश्च भो मुने त्वं देहे निस्पृहोऽपि मोक्षसाधनं देहं दधिभक्षणेन रक्ष? तत् श्रुत्वा स मुनि-
र्दध्यर्थं गोष्ठे विचरति, यतस्तत्र दोषविवर्जिता दधिभिक्षा सुलभा भवति. अन्यदा स उदायनराज-

र्षिर्वीतभयं पत्तनं गतः. तं महामुनिं समागतं ज्ञात्वा केश्यमात्यैर्भणितं भो राजेंद्र! एष तव मा·
तुलस्तपसा निर्विणो राज्यं त्यक्त्वा पश्चात्तापेनेह समागतः, स तव राज्यं ग्रहीष्यति, त्वमस्य विश्वा·
सं मा कार्षीः. केशिनोक्तं राज्यमस्यैवास्ति, अनेन दत्तं. एष एव राज्यं गृह्णातु, अत्र मम किमपि
नास्ति. तत् श्रुत्वा मंत्रिणः प्रोचुः, हे राजन् राज्यं तु पुण्येन लभ्यते, नहिं लब्धं कथं दीयते? तै·
र्वचनैर्मुदितो राजा केशी उदायने भक्तिं त्यक्त्वा मंत्रिणं प्राहाथ किं कार्यं? मंत्रिणः प्रोचुः स्वा·
मिन्नस्य मुनेर्विषं देयं. ततो मंत्रिणा प्रेरितः केशी राट् मातुलमुनये एकया पशुपालिकया सविषं
दधि दापयामास, अहो परप्रेर्यस्य का मतिः? दध्यंतर्गतं विषं देवता जहार. उवाच च भो मुने!
सविषं दधि मा भुंक्ष्व? दधिस्पृहां च मा कृथाः? मुनिना दधिभक्षणं परिहृतं, रोगो वर्धितः, रोग·
निग्रहणार्थं मुनिः पुनर्दधि जग्राह. सा देवतैवं त्रीन् वारान् विषापहारं चकार. अन्यदा देवताप्र·
मादेनोदायनो मुनिः सविषं दधि खादतिस्म. ततो विषवीचिभिरात्मनः शरीरं व्याप्तं ज्ञात्वा मह·
र्षिरनशनं प्रपेदे. समाधिना त्रिंशद्दिनान्यनशनं पालयित्वोत्पन्नकेवलज्ञानो विपद्य स शिवं गतः.
शिवं गते उदायने देवता समागत्य कोपावेशात्तन्नगरं पांशुवृष्ट्या पूरयतिस्म. तदा सा कपिलर्षि·

प्रतिष्ठिता जीवत्स्वामिप्रतिमा निधानमिव भूगता बभूव. तत्रैकं कुंभकारं शय्यातरं निरागसं समुत्पाट्य सिनपल्ल्यां नीत्वा तन्नाम्ना कुंभकारकृतमिति तत्र स्थानं चकार.

इतश्चोदायने गृहीतव्रते प्रभावतीकुक्षिजोऽभीचिनामा नंदनश्चिंतयति, अहो मत्पितुः कोऽयं विवेकः? यो मयि पुत्रे सत्यपि भगिनीनंदनाय स्वं राज्यमदात. यद्दिवा मत्तातो राज्याधिकारी यद्भाति तदेव करोति, राजानं को निवारयति? अथाहं केशिनः सेवां कथं करिष्ये? यतोऽहमुदायनपुत्रः, इति पित्रापमानितः स कुणिकराट्सेवायै जगाम, यतोऽभिमानवतां पराभवे विदेशः श्रेयान्. अथ मातृस्वस्रेयेन कोणिकेन सगौरवं वीक्ष्यमाणः स तत्र सुखेनास्थात्. महाश्रावकः सोऽभीचिः श्रावकधर्मं यथावदपालयत्, परमुदायने पराभवं स्मरन् वैरं न तत्याज. प्राणांते पाक्षिकानशनेन मृत्वा तदनालोच्यासुरोत्तमोऽसौ भुवनपतिदेवो बभूव. तत्रैकपल्योपमायुः परिपाल्य महाविदेहेषूत्पद्याभीचिजीवः शिवं गमिष्यति. या जीवत्स्वामिप्रतिमा चंडप्रद्योतकारिता कपिलर्षिप्रतिष्ठिता वीतभये पांशुपूरेण तिरोहितास्ति तस्या एवमुद्धारो भविष्यति. श्रीवीरनिर्वाणात् षोडशशतनवषष्टिवर्षाणि १६६९ यदा यास्यंति तदा पत्तने कुमारपालभूपालो भविष्यति, सोऽन्यदा वज्रशाखायां मु-

निचंद्रकुलोद्भवमाचार्यं हेमचंद्रं द्रक्ष्यति, तस्य समीपे जैनं धर्मं समासाद्य स महाश्राद्धो भविष्यति, स तां प्रतिमां महाप्रयत्नेन दिव्यानुभावाच्च पांशुपूरात्कर्षयिष्यति. कुमारपालनृपालो महामहेन तां प्रतिमां समानीय स्वगृहासन्नं स्फटिकमयं प्रासादं कारयित्वा तत्र तां संस्थाप्य प्रत्यहं स्वयं पूजयिष्यति. उदायनेन यद्ग्रामनगरादिशासनं जिनप्रतिमापूजाकृते दत्तं तत्सर्वं कुमारपालः प्रमाणीकरिष्यति. स कुमारपालो नृपालो महाश्राद्धो देवभक्त्या गुरुभक्त्या श्रेणिकसदृशो भारते भविष्यति. इत्थं तृणमिव त्यक्त्वा । राज्यलक्ष्मीमुदायनः ॥ श्रीवीरशासनस्यांत्यो । राजर्षिः परमोऽभवत् ॥ ॥ १ ॥ इत्युदायननृपकथानकं समाप्तं. अथानुकंपाभक्तिदानफलमाह—

॥ मूलम् ॥—जिणहरमंडियवसुहो । दाउं अणुकंपभत्तिदाणाइं ॥ तित्थपभावगरेहं । संपत्तो संपइराया ॥ १३ ॥ व्याख्या—जिनगृहेण जिनप्रासादेन मंडिता शोभिता वसुधा पृथिवी येन स तथा, ' दाउंति ' दत्वानुकंपाभक्तिदानादि, अनुकंपया दीनदुःस्थितेभ्यो यानि दानानि तान्यनुकंपादानानि, तथा भक्तिदानानि संघेभ्यो यानि दानानि तानि भक्तिदानानि, 'तित्थेत्ति' तीर्थप्रभावकपुरुषाणां मध्ये रेखामद्वितीयभावं ' संपत्तोत्ति ' संप्राप्तः संप्रतिराजेति गाथार्थः. ॥ १३ ॥ वि-

स्तरार्थस्तु कथानकादवसेयः, तत्कथा चेयं—

स्वामिना स्थूलभद्रेण । शिष्यौ द्वावपि दीक्षितौ ॥ आर्यमहागिरिरार्य—सुहस्ती चाभिधानतः ॥ १ ॥ श्रीस्थूलभद्रदीक्षितावार्यमहागिर्यार्यसुहस्तिनामानौ तौ द्वावपि यक्षार्यया बाल्यादपि मात्रेव पालितौ खड्गधारोपमतीव्रव्रतधारिणौ निरतीचारचारित्रचारिणौ परीषहेभ्यो निर्भीकौ महाव्रतधुराधौरेयौ श्रीस्थूलभद्रस्वामिपादपद्ममधुकरौ श्रीस्थूलभद्रेण सांगानि दशपूर्वाणि पाठितौ महाप्राज्ञौ स्वामिना स्वपदे स्थापितौ. ततः स्थूलभद्रो महामुनिरनशनेन कालं कृत्वा देवत्वं प्रपेदे. अथ तावार्यमहागिरिसुहस्तिनौ भविकान् प्रतिबोधयंतौ धर्मदेशनां कुर्वाणौ पृथिव्यां विचरंतौ स्तः, महागिरिरन्यदा निजं गच्छं सुहस्तिनेऽदात, स्वयं जिनकल्पेन विहर्तुमेकोऽभूत, परं जिनकल्पव्युच्छेदात स गच्छनिश्रया स्थितः. एवं स आर्यमहागिरिर्जिनकल्पार्हया वृत्त्या विजहार, आर्यसुहस्तिसूरयो धर्मदेशनावारि वर्षंतो वारिदा इव विचरंतः पाटलीपुत्रपत्तनं जग्मुः, तत्रार्यसुहस्तिभिर्वसुभूतिनामा श्रेष्ठी प्रतिबोधितः, स जीवाजीवादिविन्महाश्रावकोऽभूत्. अथ स वसुभूतिः स्वान् स्वजनान् प्रत्यहं धर्मकथानकैः प्रतिबोधयति, परं बहुलकर्मत्वात्ते स्वजनाः प्रतिबोधं न प्राप्नुवंति. ततो वसुभूतिश्रेष्ठी

गुरोराख्यत्, हे भगवन्! मत्स्वजना मया धर्मोपदेशेन भृशं प्रतिबोधिताः, परं प्रतिबोधयितुं न शक्यंते, अतस्तान् प्रतिबोधयितुं मद्गृहे पादाववधार्यतां, वसुभूतिश्रेष्ट्याग्रहेण श्रीसुहस्ती तद्गृहं ययौ, तत्र सुस्थानस्थितः सर्वेषां वसुभूतिस्वजनानामन्येषां च सुधातरंगिणीं धर्मदेशनां प्रारेभे, भो भविका एवंविधं मानुष्यमवाप्य धर्मे यत्नो विधेयः, इत्यादि यावत्कथयति तावत्तत्र देशनासमन्यार्यमहागिरिर्भिक्षार्थं प्राविशत. तं गुरुं समागतं ज्ञात्वा सुहस्ती स्वकीयासनात्समुत्थाय परमप्रेम्णा वंदतेस्म, श्रेष्ट्युवाच युष्माकमपि गुरवः संति? यतो युष्माभिरेते वंद्यंते. सुहस्ती स्माह भो श्रेष्ठिन्! ममैते गुरवः, एते सदा त्यागार्हभक्तपानादिभिक्षामाददते, एतेषां पादरजोऽपि हि वंद्यं, एवमार्यमहागिरिं स्तुत्वा तानखिलान् वसुभूतिश्रेष्ठिकौटुंबिकान् प्रतिबोध्य सुहस्ती भगवान् पुनरपि निजं स्थानं ययौ, स श्रेष्ठी स्वजनानेवमूचे, एनं महागिरिमुनिं यदा भिक्षार्थमागतं यूयं पश्यथ तदा त्यज्यमानं भक्तपानादि दर्शयित्वैतस्मै देयं, एतद्दानाद्भवतां महाफलं स्यात्, वसुभूतिस्वजनैस्तथैव कर्तुमारेभे, द्वितीयेऽह्नि महागिरिस्तेष्वेव गृहेषु भिक्षार्थमागात्, महागिरिं समागतं ज्ञात्वा ते श्रेष्ठिबांधवास्तथैवारेभिरे यथा वसुभूतिश्रेष्ठिना पूर्वमुक्तं. आर्यमहागिरिणोपयोगेन तदन्नाद्यशुद्धं ज्ञात्वा

त्वया विनयं कृत्वा महत्यनेषणा कृता, ते हि त्व-नादायैव वसतिं गत्वा सुहस्तिनमूचे, हे आर्य! करिष्येऽहमित्युक्त्वा पादाग्रे लुठन् सुहस्ती त्व-दुपदेशेन भिक्षां सञ्जयित्वा मह्यं ददति, नैवं भूयः वच्छिन्नजिनकल्पतुलनाकारिणं महागिरिं क्षमयामास, यथा—वुच्छिन्ने जिणकप्पे । काही जिणक-प्पतुलणमिह धीरो ॥ तं वंदे मुणिवसहं । महागिरिं परमचरणधरं ॥ १ ॥ जिणकप्पपरिकम्मं । जो कासी जस्स संघचमकासी ॥ सिद्धिघरम्मि सुहत्थी । तं अज्जमहागिरिं वंदे ॥ २ ॥ वंदे अ-ज्जसुहत्थिं । मुणिपवरं जेण संपईराया ॥ रिद्धिं सव्वपसिद्धिं । चारित्तं पाविओ परमं ॥ ३ ॥ को संबीए जेणं । दमगो पव्वाविओ अ जो जाओ ॥ उज्जेणीए संपइ—राया सो नंदउ सुहत्थी ॥४॥

इतश्च जीवंतस्वामिप्रतिमारथयात्रां निरीक्षितुमवंतीपुर्यामार्यमहागिरिसुहस्तिनावायातौ, तौ च सपरिच्छदौ पृथक्पृथक् वसत्यां तस्थतुः. अथ जीवंतस्वामिरथस्ताभ्यामाचार्याभ्यामन्वीयमानः सम-स्तसंघेन सार्धमवंतीपुर्यां त्रिकचतुष्कचत्वरादिषु भ्रमन् तूर्यनिर्घोषैः संचरन् लोकैर्महर्ध्या पूज्यमानो गतो राजकुलद्वारं. संप्रतिराट् गवाक्षस्थो रथयात्रान्वितं श्रीसुहस्तिनं दूराद्ददर्श. दृष्ट्वा चैवं दध्यौ, किमेष यतीशः शांतात्मा पुण्यमूर्तिर्मया पूर्वं कुत्रापि दृष्टो वर्तते? येनास्मिन् दृष्टे ममातीवमोहो

जायमानोऽस्ति, यतः—यस्मिन् दृष्टे भवेन्मोहो । द्वेषश्च प्रलयं व्रजेत् ॥ स विज्ञेयो मनुष्येण । बांधवः पूर्वजन्मनः ॥ १ ॥ इत्येवं विमृश्य प्राप्तमूर्छोऽसाववनितले पपात. आः किं जातमिति वदन् परिच्छदो दधावे, व्यजनैर्वीज्यमानश्चंदनैश्च सिच्यमानोऽवनिशासनो जातिस्मरणमासाद्योदस्थात्. स राजा जातिस्मृत्या तं प्राग्जन्मगुरुं ज्ञात्वा सुहस्तिनं तदैव वंदितुमागात्. त्रिःप्रदक्षिणीकृत्य पंचांगप्रणतिपूर्वकमार्यसुहस्तिनं गुरुं नत्वा स जिनधर्मस्य फलं पप्रछ. सुहस्ती भगवानाख्यत्, अहो संप्रतिनरेश ! जिनधर्मस्य फलं मोक्षः स्वर्गश्च, पुनः पृथ्वीशः पप्रछ, सामायिकस्य किं फलं ? गुरुराह सामायिकस्य यत्पुण्यं भवति तस्य संख्यां कर्तुं न शक्यते, हे भगवन्नव्यक्तसामायिकस्य किं फलं? राजन् ! राज्यादिकं फलं. एतद्वचनं श्रुत्वा राज्ञः प्रत्ययो जातः, जातिस्मृत्याऽव्यक्तसामायिकफलं ज्ञात्वा सुहस्तिनं नत्वा पार्थिवः प्रोवाच, हे भगवन् ! यूयं मामुपलक्षयध्वे किं वा नोपलक्षयध्वे ? ज्ञानोपयोगेन ज्ञात्वार्यसुहस्त्याह, हे नरेश्वर ! त्वामहं सम्यगुपलक्षये, त्वमात्मीयपूर्वभवचरित्रं सावधानो भूत्वा शृणु ?—

हे राजन् ! वयमार्यमहागिरिणा सार्धं गछेन सममेकदा कौशांब्यामागताः, साधुबाहुल्याद्वसतेः

संकीर्णत्वाच्च पृथक्पृथक् स्थितावावां, तदानीं दुर्भिक्षे प्रवर्तमाने महर्द्धिकाः श्राद्धा अस्मभ्यमशनपानखादिमस्वादिमादि बहुधा वितरंतिस्म. अन्यदा कस्यापि श्रेष्ठिनो गृहेऽस्मदीयाः साधवो भिक्षायै ययुः, तदैको रंकस्तेषां पृष्टस्थोऽन्नं बहुप्रकारं वितीर्यमाणं वीक्ष्य मार्गे मुनीन् जगौ, भो मुनयः! अहं बुभुक्षितोऽस्मि, दीनो दुःस्थो दुर्भगश्चास्मि, म्रियेऽहं, तेन मे किंचिद्भोजनं दीयतां? साधवो जगुर्गुरवो जानंति, वयं तु तदधीनाः स्वयं दातुं किमपि नेश्वराः. ततो मुनिभिः सार्धं रंको गुर्वंतिके गतः, गुरुपार्श्वे गत्वा च भोजनमयाचत, तदा गुरुभिरतिशयज्ञानवद्भिस्तस्याग्रेतनं भवं दृष्ट्वा प्रोक्तं, भो भिक्षुक! त्वं चेद् व्रतं भजसे, तदास्मत्पार्श्वाद्भक्तं लभसे, तदा स रंकोऽचिंतयद्यथा—

अचिंतयदयं रंक—श्चिरं कष्टं सहाम्यहं ॥ तद्वरं व्रतजं कष्टं । यथेष्टं यत्र भुज्यते ॥ १ ॥ रंकः प्राह मम संयमं ददतु, ततो गुरुभिस्तस्मै संयमश्रीर्विश्राणिता, अल्पायुर्मत्वा तस्यान्नपानदानेन भोजयित्वा भाववृद्धये साध्वीप्रतिश्रये साधुयुतः स रंकसाधुः प्रेषितः, साध्वीभिर्महेभ्यप्रियापुत्रीयुताभिश्च वंदितः स रंकमुनिः, तदा ध्यातं तेनाहो धर्मस्य साम्राज्यं! मया यत्कदाचिद् दृष्टं नान्नं तद्भुक्तं, एवंविधाः साध्व्यादयो मामद्यदीक्षितं वंदंते.

एवं वर्धमानभावः स रंकः पश्चादुपाश्रयमागतः सुखेन सर्वं दिनं निनाय, रात्रौ त्वकस्मादधि-
काहाराजीर्णत्वादूर्ध्वाधोवमनादिभिर्विशूचिका जाता. ग्लानीभूतो रंकसाधू रात्रौ गुरुभिर्निर्यामितो
निधनं गतः, पुनर्यत्र स उत्पन्नस्तदाह—अवंत्यां श्रेणिकराजपट्टे कूणिकः १, तत्पट्टे उदायनः २,
तत्पट्टे नवनंदाः ३, तत्पट्टे चंद्रगुप्तः ४, तत्पट्टे बिंदुसारः ५, तत्पट्टेऽशोकश्रीः ६, तस्य सुतः कुणा-
लः ७, स कुणालो बालत्वेनांधः, तत्पत्नी धारिणी, तस्याः कुक्षौ समुत्पन्नोऽसौ रंकसाधुजीवः. जा-
तमात्र एव पितामहेन दत्तराज्यस्त्वं संप्रतिनाम राजाभूः, वयं ते रंकदीक्षादातारो मुनयः, पुनर्भूपो-
ऽवग्भगवन्नेता राजसंपदो भवत्प्रसादतो मया लब्धाः. भगवन्! यदि तदा युष्माकं दर्शनं नाभवि-
ष्यत्तदा मम क्वेदृग् राज्यसंपदोऽभविष्यन्? युष्माभिः पूर्वजन्मनि संयमो दत्तः, तेन यूयं मम गु-
रवः, अस्मिन्नपि भवे भवंत एव मम गुरवो भवंतु, श्रीसुहस्तिकसूरिराह. राजन्नाजन्मस्वर्गापवर्गसु-
खदं जिनधर्मं भज? येन धर्मेण संसारान्निस्तारो भवति, ततो राजा बहुपरिवारयुतो गुर्वंतिके धर्मं
शृणोति, श्रीसुहस्तिकसूरयो धर्मं कथयंति, यथा—स्वर्गः स्यादपवर्गो वा—मुत्रार्हद्धर्मशालिनां ॥
इह हस्त्यश्वकोषादि—संपदश्चोत्तरोत्तरा ॥ १ ॥ प्रत्यग्रहीदथ नृप—स्तदग्रे तदनुज्ञया ॥ अर्हन्

देवो गुरुः साधुः । प्रमाणं मेऽर्हतो वचः ॥ २ ॥ अणुव्रतगुणव्रत—शिक्षाव्रतपवित्रितः ॥ प्रधान-
श्रावको जज्ञे । संप्रतिस्तत्प्रभृत्यपि ॥ ३ ॥ स तद्दिनादारभ्य संप्रतिराट् जीवदयां पालयति, दीने-
भ्यो दानं ददाति, प्रत्यहं नवीनजिनप्रासादवर्धापनिकया दंतधावनं करोति, संध्यात्रये जिनार्चां
करोति, प्रतिदिनं साधर्मिकवात्सल्यं करोति, सप्तक्षेत्र्यामत्यर्थं धनं वपति, मनागपि निष्फलां वेलां
न निर्गमयति, यतः—

अवाप्य धर्मावसरं विवेकी । कुर्याद्विलंबं न हि विस्तराय ॥ तातो जिनस्तक्षशिलाधिपेन ।
रात्रिं व्यतिक्रम्य पुनर्न नेमे ॥ १ ॥ अतो धर्मकार्ये राजा विलंबं न करोति, स संप्रतिनृपो दिग्या-
त्रां कुर्वाणोऽखंडां त्रिखंडां भरतभुवं साधयित्वा जिनायतनमंडितां करोतिस्म, क्रमात्संप्रतिनृपतेस्त्रि-
खंडाधिपतेरष्टौ सहस्राणि राजानः सेवां कुर्वंति, तथा संप्रतिराजस्य पंचाशत्सहस्रमिता मतंगजा
अभवन्, एककोटिमितास्तुरंगमा जाताः, रथानां नवकोटयोऽभवन्, कोटिसप्तमिताः पादात्यसेवकाः,
तस्यानेके देवाः सान्निध्यं कुर्वंति, सुवर्णरूप्यमणिमाणिक्यकोशस्य तु प्रमाणं तस्य नृपतेर्न ज्ञाय-
ते, श्रीसुहस्तिगुरूक्तं धर्मं सदा कुर्वन् संप्रतिराट् बहुपुण्यमर्जयामास. श्रीसंघेन सह वर्षे वर्षे चैत-

यात्रोत्सवः संप्रतिनृपेन तन्यते, ततः संप्रतिनृपोऽप्यष्टकर्माणि छेत्तुमेवाष्टप्रकाराभिः पूजाभिर्जैनीं प्रतिमामपूजयत, स संप्रतिराड् वैताढ्यं यावत्स्वसेवकान् सामंतांश्च समाहूयेत्यवोचत, भो सामंता यूयं यदि मयि भक्तास्तदा श्रमणोपासका भवत? इति संप्रतिराजादेशाच्च नृपाः श्रावकीभूय स्वस्वदेशेषु जैनं धर्मं प्रवर्तयामासुः. तथा राजादेशाद्बहवः श्राद्धा ग्रामे ग्रामे नगरे नगरे गत्वा धर्मकथाः कथयंति. एवमार्यदेशस्थान् नृपान् जिनधर्मकारकान् कृत्वा शुद्धधीः संप्रतिनृप इति दध्यौ, अनार्यदेशेषु मया कथं जैनधर्मः कारयितव्यः? साधून् विना लोकानां धर्मोपदेशं को ददाति? तेन प्रथमं श्रमणोपासकाः प्रेष्यंते, यथा तत्र ते धर्मोपदेशं दत्वा श्रावकान् कुर्वते. ततः संप्रतिनृपेन बहवः श्रावका यतिवेषधारकास्तत्र प्रेषिताः, तेषां प्रोक्तं च तत्र भवद्भिर्द्विचत्वारिंशद्दोषवर्जित आहारो गृहीतव्यः, साधुभिरिव भवद्भिः स्वाध्यायादि सर्वं साधुकृत्यं कर्तव्यं, यद्येवं च न करिष्यथ तर्हि भवतां सर्वोऽपि ग्रासो मया ग्रहीष्यते, यद्येवं च करिष्यथ तदा द्विगुणो ग्रासो दास्यते. अनार्यलोकांश्च राजेत्युवाच, भो भो जनाः! एते यथा यथान्नपानादि याचंते तथा तथा भवद्भिर्देयमिति, मम करश्च न देयः. तैरपि तत्प्रतिपन्नं.

ततः संप्रतिनृपतिनिर्देशात्ते श्रमणोपासका गृहीतसाधुवेषा निर्वाहमात्रगृहीतधना अनार्यदेशेषु ययुः. तत्रत्यलोकास्तान् साधून्नत्वा तदंतिके धर्मोपदेशं शृण्वंति, यथा—अहिंसा सत्यमस्तेयं । त्यागो मैथुनवर्जनं ॥ एतेषु पंचसूक्तेषु । सर्वे धर्माः प्रतिष्ठिताः ॥ १ ॥ प्राज्यानि राज्यानि सद्भोजनानि । सौभाग्यनैरोग्यसुयोग्यवर्ग्याः ॥ रामा रमारम्ययशोविलासाः । स्वर्गापवर्गाः प्रभवंति धर्मात् ॥ २ ॥ इत्यादिधर्मदेशनां श्रुत्वा ते लोकाः प्रतिबोधं प्राप्तास्तेषां साधूनां नित्यं शुद्धान्नपानदानेन प्रतिलाभयंति. क्रमात्तैर्यतिभिस्तादृशैस्ते बहवो जना जिनधर्मं ग्राहिताः, जिनभवनादिषु च ते श्रियं वपंतिस्म. तैः साधुभिस्तेऽनार्यदेशवासिनो जनाः श्रावकाः कृताः संतो जल्पंतिस्म, भवतां को गुरुरस्ति? तैरुक्तमस्माकं गुरुः श्रीसुहस्तिकसूरिः. क्रमात्संप्रतिराज्ञा तस्मिन् देशे गुर्वाज्ञया विहारितास्ते साधवस्तत्र तेभ्यो जैनं धर्मं कथयंतिस्म. एवं ते लोका जैनधर्मपरायणा जैनधर्ममेवाराधयंति. एकस्मिन् दिने वंदनार्थमागतः संप्रतिराट्, गुरुणा च धर्मोपदेशो दत्तः, भो संप्रतिनरेंद्र! श्रूयतां? चतुर्धा धर्मः श्रीजिनैरुक्तः, तत्र दानधर्मो मुख्यतयोक्तः, यतो दानं विनापरे धर्माः कर्तुं न शक्यंते, यतः—निखिलेष्वपि धर्मेषु । दानधर्मो विशिष्यते ॥ दानधर्मं विना यस्मा—

न्मुक्तिर्नैवाप्यते क्वचित् ॥ १ ॥ तथा सप्तक्षेत्र्यां धनं वपेत्, यथा—जिणभवण १ बिंब २ पुत्थय ३
। संघरूवेसु सत्तखित्तेसु ॥ ववियधणंपि जायइ । सिवफलयमहो अणंतगुणं ॥ १ ॥ ततो राजा
धर्मं श्रुत्वा विशेषतो धर्मासक्तो बभूव. पुरे पुरे जिनप्रासादान् कारयन्, अनेकशो जिनबिंबानि
कारयन्, पुस्तकानि लेखयन्, चतुर्विधसंघेभ्यो दानं ददन् दापयंश्च स जिनधर्ममाराधयन् विचरति.
ततो ग्रामे ग्रामे पुरे पुरे नृपः सत्रागारानकारयत्. पुनर्गुर्वाज्ञया संप्रतिराजेन त्रिखंडां महीं सुंदर-
जिनमंदिरमंडितां कुर्वता, षट्त्रिंशत्सहस्रनवीनजिनप्रासादकारापणसपादकोटिजिनबिंबत्रयस्त्रिंशत्स-
हस्रजीर्णोद्धारप्रासादकारापणपंचनवतिसहस्रपित्तलमयबिंबकारापणसप्तशतदानशालाकारापणादिभिः
स्थाने स्थाने धर्मोन्नतिः कृता.

राज्ञा प्राग्जन्मरंकत्वं स्मरता चतुर्षु पुरद्वारेषु महासत्रागारा अकार्यंत, तत्र सर्वेषां भोजनार्थि-
नां भोजनं दीयते. दानानंतरमवशिष्टमन्नादिकं यत्किंचिद्भवति तत्त महानसनियोगिनो विभज्यो-
पाददिरे. एकस्मिन् दिने राज्ञोक्तं भो महानसिकाः सर्वेषां लोकानां दानानंतरं यदन्नमवशिष्यते
तत्साधुभ्यो देयं, भवतां च द्रव्यं दास्यामि, एवं ते सुखिनो जाता महानसिकाः, तद्दिनादारभ्य

महानसिका अवशिष्टान्नपानादि राजाज्ञया साधुभ्यो ददिरे. साधवोऽपि तद्भेषान्नं तैर्दीयमानं शुद्धा· न्नमिति ज्ञात्वा समाददिरे. राजा कांदविकानथादिशत् भोः कांदविकाः! भवद्गृहे साधवो यत्किं· चिन्मार्गयंति तद्देयं, दाने विलंबो न विधेयः, तन्मूल्यं युष्माकमहं प्रदास्यामि, अत्रार्थे काचिच्छंका न विधेया. एवं राज्ञोक्ते ते तथारेभिरे. विशेषतो जातहर्षास्ते साधून् दानार्थं भृशमाह्वयंति, यतो लाभे सति को न तुष्यति? तथार्यसुहस्ती शिष्यानुरागेण दोषयुक्तं जानन्नपि न निषेधयति, अ· हो शिष्यानुरागो बलीयान्! महांतोऽपि मोहमानुवंति. एकस्मिन् दिने आर्यमहागिरिः सुहस्तिन· मभाषत भो महात्मन्ननेषणीयं राजान्नं जानन्नपि किमादत्से? सुहस्त्युवाच भगवन्नेते पौराः समर्प· यंति, पौराणामन्नपानग्रहणे को दोषः? जगादार्यमहागिरिरहो मायया किं जल्पसि? अथ चाव· योर्विसंभोगो भवतु, महागिरेरेतद्वचनं श्रुत्वा कंपमानशरीरो बाल इव सुहस्ती आर्यमहागिरिपादा· न् वंदित्वा कृतांजलिरेवमुवाच, हे भगवन्नहं सापराधोऽस्मि, अयं ममापराधः क्षम्यतां, मम मिथ्या· दुष्कृतमस्तु, न पुनरीदृशं करिष्येऽहं. आर्यमहागिरिरूचे भो महात्मन्! को नाम ते दोषः? पुरा स्वामिना श्रीवीरेणैतद्विभाषितं, यदीयशिष्यसंताने श्रीस्थूलभद्रमुनींद्रात्परं साधूनां सामाचारी पृथग्

भविष्यति, स्थूलभद्रमुनेश्च पश्चादावां तीर्थप्रवर्तकौ जातौ, अतस्त्वया स्वामिवचः सत्यापितं. एवं सुहस्तिसूरिं संबोध्य श्रीमहागिरिसूरिर्जीवंतस्वामिप्रतिमां नत्वावंत्या विनिर्ययौ. पूर्वं हि दशार्णगिरिसमवसृते श्रीमति चरमजिने श्रीवीरे यथाशक्त्या वंदनाय विनिर्गते श्रीदशार्णभद्रे साभिमाने, तन्निरासार्थं दिवस्पतावैरावतारूढे तत्रायाते गजेंद्रस्याग्रपादे ग्रावणि मग्ने. ततश्च जाते कुंडे तत्र जिनप्रतिमा कारिता. ततस्तत्र गजेंद्रपदनामकं महातीर्थं जातं. तस्मिन् गजेंद्रपदनाम्नि तीर्थे गत्वार्यमहागिरिसूरिणानशनेन देहस्त्यक्तः. एवं त्यक्तदेहो महागिरिः स्वर्गं ययौ, ततश्च्युत्वा च मोक्षं यास्यति. संप्रतिपार्थिवः संपूर्णं श्रावकव्रतं पालयित्वा संपूर्णायुः शतवर्षांतेऽनशनेन विपद्य देवोऽभूत्, ततश्च्युत्वा मोक्षं यास्यति.

अथ श्रीसुहस्तिकसूरिर्विहारं कृत्वा तीर्थयात्रां च कृत्वा पुनरुज्जयिनीं पुरीं जीवंतस्वामिप्रतिमावंदनार्थं समाययौ, तत्रोज्जयिन्यां भद्राश्रेष्टिन्याः पुत्रमवंतिसुकुमालं प्रतिबोध्य नलिनीगुल्मविमानसुखसंगिनं चक्रे, मह्यां विहरन् भगवानार्यसुहस्त्यपि गच्छभारं समये शिष्याय समर्प्य विहितानशनो देहं त्यक्त्वा सुरलोकातिथित्वं प्रपेदे, ततश्च क्रमान्मुक्तिं यास्यति. सश्रीकार्यमहागिरि—

सुहस्तिनौ स्थूलभद्रवरशिष्यौ ॥ निर्मलदशपूर्वधरौ । संप्रतिनृपवंदितौ वंदे ॥ १ ॥ अव्यक्तसंयम-
फलः । सुहस्तिकरदीक्षितो द्रमकजीवः ॥ संप्रतिनाम नरेंद्रो । जातो दानेन कल्पतरुः ॥ २ ॥ इ-
त्यार्यमहागिरिसूरिश्रीसुहस्तिकसूरिसंप्रतिनरेंद्रकथानकं समाप्तं. ॥ पुनर्दानफलं दर्शयन्नाह—

॥ मूलम् ॥—दाउं सद्धासुद्धे । सिद्धे कुम्मासए महामुणिणो ॥ सिरिमूलदेवकुमारो । र-
ज्जसिरिं पाविउ गरुआं ॥ १४ ॥ व्याख्या—' दाउं ' दत्वा, कान्? ' कुम्मासएत्ति ' कुल्माषका-
न्, कथंभूतान्? ' सिद्धेत्ति ' सिद्धान् पक्वानित्यर्थः, पुनः कथंभूतान्? ' सद्धासुद्धेत्ति ' श्रद्धया शु-
द्धानित्यर्थः, कस्य? महामुनेः, ' सिरिमूलदेवकुमारोत्ति ' श्रीमूलदेवनाम्ना कुमारो राज्यश्रियं ' पा-
विउत्ति ' प्राप्तः, क्वचित्स्वार्थे पिणिग्विधानात्, कथंभूतां राज्यश्रियं ' गुरुआंति ' महतीमिति गा-
थार्थः. ॥ १४ ॥ विस्तरार्थस्तु कथानकादवसेयस्तत्कथा चेयं—

गौडदेशे विख्यातं पाडलीपुरं नाम्ना पत्तनं विलासते, तत्र राजपुत्रो धियां निधानं कलाक-
लापकुशलो मूलदेवो नाम बभूव, स कीदृशः?—चौरे चौरः, साधौ साधुः, वक्रे वक्रः, ऋजौ ऋ-
जुः, ग्राम्ये ग्राम्यः, छेके छेकः, विटे विटः, भटे भटश्च. तथा—द्यूतकारे द्यूतकारो । वार्तिके वार्ति-

कश्च सः ॥ तत्कालं स्फटिकस्येव । जग्राह पररूपतां ॥ १ ॥ चित्रैः कौतूहलैस्तत्र । लोकं विस्माप-यन्नसौ ॥ विद्याधर इव स्वैरं । चचार चतुराग्रणीः ॥ २ ॥ सोऽन्यदा द्यूतव्यसनासक्तो मूलदेवः पि-त्रा निजराज्यान्निष्कासितः, स्वपुरान्निर्गत एकाकी स इतस्ततो भ्राम्यन्नुज्जयिन्यां जगाम, तत्र गु-टिकाप्रयोगेण वामनो भूत्वा पौरान् विस्मापयामास. इतश्च तत्रैव पुरे लावण्यकलाविज्ञानगुणैः कु-शला देवदत्तानाम गणिकाऽभवत्, सा च कलावती गणिकागुणोपेता रूपगुणगर्विता चाभूत्, मूल-देवेन श्रुतमेषा गणिका सामान्यपुरुषेण केनापि न रज्यते, तर्ह्यहमेनां रंजयामीति कृत्वा तस्या गणिकायाः क्षोभार्थं तद्गृहांतिके प्रभाते तुंबरुरिव मधुरगीतेन गातुमारेभे, तं मधुरध्वनिमाकर्ण्य देवदत्तापि दध्यौ, कस्यैष मधुरध्वनिरिति विस्मयात्तं ज्ञातुं दासीं प्रेषयामास, गृहाद्बहिः स्थित्वा सा दासी तं दृष्ट्वा पश्चादेत्य स्वामिनींप्रति जगौ, हे स्वामिनि! एष कोऽपि गांधर्वः सर्वकलाकुशलो मूर्त्यैव वामनो न पुनर्गुणेन वामनः, तत् श्रुत्वा विस्मिता देवदत्ता द्वितीयां दासीं माधवीनाम्नीं मू-लदेवमाह्वातुं प्रेषयामास, सा दासी तत्र गत्वा जगाद, अहो महात्मन्! हे महाभाग! मम स्वा-मिनी देवदत्तागणिका त्वामाह्वयति सगौरवं, तत् श्रुत्वा मूलदेवेनोक्तं न प्रयोजनं मे गणिकाज-

नसंसर्गेण, बुधैर्निवारितो विशिष्टानां वेश्याजनसंसर्गः, यतः शास्त्रेऽप्युक्तं—या विचित्रविटकोटिनि-
घृष्टा । मद्यमांसनिरतातिनिकृष्टा ॥ कोमला वचसि चेतसि दुष्टा । तां भजंति गणिका न विशि-
ष्टाः ॥ १ ॥ यापि तापनपराग्निशिखेव । चित्तमोहनकरी मदिरेव ॥ देहदारणकरी क्षुरिकेव । ग-
र्हिता हि गणिका सलिकेव ॥ २ ॥ अतो मे नास्ति गणिकाभिलाषः, तयानेकाभिर्भंगीभिराराध्य
मूलदेवचित्तं विस्मयं प्राप्यात्याग्रहेण करे गृहीत्वा स देवदत्तागृहे नीतः, मार्गेण गच्छता मूलदेवेन
सा कुब्जिकादासी कलाकौशलेन विद्याप्रयोगेण पार्ष्णिनास्फाल्य सरलीकृता देवदत्तागणिकाविस्म-
यार्थं, स प्रविष्टो देवदत्तागृहे, देवदत्तया वामनरूपधार्यत्युत्कृष्टलावण्यवानपि स विरूपो दृष्टः, तस्य
प्रवरासनं दत्तं, स तत्रासने निषण्णः, देवदत्तया तांबूलं दत्तं, तदानीं तया सा माधवीदासी सरला
सुंदररूपा च दृष्टा, देवदत्तया पृष्टं किमेतत्? तया सकलः स्वकीयो वृत्तांतः कथितः, तदा मूलदे-
वोपरि विशेषतो मोहिता देवदत्ता, मधुरवचनैश्च भाषितस्तया देवदत्तः, मूलदेवेनापि सा भाषिता,
उभयोरपि स्नेहो जातः, यतः—

मृगा मृगैः संगमनुव्रजंति । गावश्च गोभिस्तुरगास्तुरंगैः ॥ मूर्खाश्च मूर्खैः सुधियः सुधीभिः ।

समानशीलव्यसनेषु योगः ॥ १ ॥ तस्मिन् समये देवदत्तांतिके कश्चिद्वीणावादकोऽचलाभिधः समागात्, तेन वादिता वीणा, कि-स्वरेण गानं कृतं, मोहिता देवदत्ता, प्रशंसितो वीणावादकः, तदानीं मूलदेवः किंचित् स्मित्वावगदहो महानिपुण उज्जयिनीजनो गुणागुणयोर्विवेचनं जानाति हंस इव दुग्धपयसोः! इति वक्रोक्तिं श्रुत्वा वेश्यावग्दो मूलदेव! किमत्रास्ति क्षूणं, यत्त्वं ममोपहासं करोषि? यदि किमपि क्षूणं भवति तद्वक्तव्यं, मूलदेवेनोक्तं श्रूयतां? अशुद्धो वंशः, सगर्भा तंत्री, वेश्ययोक्तं त्वया कथं ज्ञातं? ततो मूलदेवो वल्लकीं करे कृत्वा वंशे पाषाणखंडं, तंत्र्यां केशं चादर्शयत्. ततो मूलदेवो वीणां सज्जीकृत्य स्वयमवादयत्, तेन वीणानादेन देवदत्ता पराधीनमानसा कर्णपरवशा कृता, यतः—सुखिनि सुखनिधानं दुःखितानां विनोदो । हृदयश्रवणहारी मन्मथस्याग्र्यदूतः ॥ अतिचतुरसुगम्यो वल्लभः कामिनीनां । जयति जगति नादः पंचमश्चोपवेदः ॥ १ ॥ अतिविस्मिता देवदत्ता, वीणावादकोऽपि विस्मितः, ततश्चिंतितमुभाभ्यामहो एतस्य कलाकौशलं सकललोकचमत्कारकारकं! ताभ्यां पूजितो मूलदेवः, आगता भोजनवेला, विसर्जितो वीणावादकः, देवदत्तया भणितं भो माधवीसखि! कंचिदंगमर्दकं समानय? येन मूलदेवेन समं

मज्जनं करोमि, तदानीं मूलदेवेन भणितं ममानुज्ञां देहि? यथाहं तवांगमर्दको भवामि, देवदत्त-योक्तं, किं जानासि त्वमभ्यंगकर्म सम्यक्? सम्यगहं जाने, किंतु ज्ञातृपार्श्वे स्थितोऽस्मि, समानीतं चंपकतैलं, बद्धपरिकरो मूलदेवो देवदत्तायास्तैलमर्दनं चक्रे, तेन मर्दनेन देवदत्ता विस्मयं गता चिंतयत्यहो एतस्य विज्ञानातिशयः! अहो कोमलः करतलस्पर्शः! ततोऽत्र किंचित्कारणं वर्तते, न ह्येष वामनः, किंत्वेष सिद्धपुरुषो वामनरूपेण जनानेवं विस्मापयति, अथाहं विनयेनास्य रूपं प्रकटीकारयामीति विचिंत्य मूलदेवपादौ निपत्यैवं सा विज्ञपयति, भो महात्मन्नसदृशगुणेन त्वं मया ज्ञातो यत्त्वं महानसि, जनवत्सलोऽसि, अतो मय्यनुग्रहं विधाय स्वरूपं दर्शय? तद्दर्शनायात्यर्थं मम मानसमुत्कंठते, एवं पुनः पुनर्देवदत्तया प्रोक्ते ईषद्धास्यं विधाय तेन स्वास्याद्वेषपरावर्तिनी गुलिकाकर्षिता, तत्क्षणादेव मूलदेवो देव इव दिव्यरूपो बभूव, अनंगतुल्यरूपं लावण्यैकसागरं च तं वीक्ष्य विस्मिता देवदत्ता प्राह हे प्राणेश! स्नानीयं वस्त्रं परिधेहि? यथा ते स्नानं कारयामि, मूलदेवेन स्नानवस्त्रं परिहितं, प्रीता देवदत्ता सानुरागा स्वपाणिना तदंगाभ्यंगं रचयामास, यथा—खलीप्रक्षालनापूर्वं । पीष्टांतकसुगंधिभिः ॥ कवोष्णवारिधाराभि—स्ततो द्वावपि सस्नतुः ॥

॥ १ ॥ देवदुष्यं देवदत्तो—पनीतं पर्यधत्त सः ॥ सुगंधाज्यानि भोज्यानि । बुभुजाते समं च तौ
॥ २ ॥ रहः कलारहस्यानि । वयस्यीभूतयोस्तयोः ॥ मिथः कथयतोरेकः । क्षणः सुखमयो ययौ
॥ ३ ॥ ततः सा व्याजहार त्वया लोकोत्तरैर्गुणैर्मम हृदयं हृतं, अद्यप्रभृत्यहं क्षणमपि त्वां विना स्थातुं न शक्नोमि, मूलदेवोऽवगस्मादृशेषु निर्धनेषु विदेशिषु युष्मादृशानामनुबंधो न युज्यते, देवदत्ता जगौ को विदेशो भवादृशां? गुणिनां कोऽपि परदेशो नास्ति, सर्वोऽपि स्वदेश एव, अतो भो महात्मन्! सर्वथा त्वया मद्वचः प्रतिपत्तव्यं, ततो मूलदेवेनोक्तमेवमस्तु, भवद्वचो मे प्रमाणं, ततस्तयोः क्रीडतोः स्नेहाद्विविधैर्विनोदैर्दिवसाः सुखेन यांति.

एकस्मिन् दिने राजद्वाःस्थः समागत्य देवदत्तामेवमब्रवीत्, आगच्छ भो देवदत्ते! सांप्रतं प्रेक्षाक्षणो वर्तते, अतस्त्वामधुना राजा समाह्वयति, सापि मूलदेवं सह नीत्वा राजवेश्मनि गत्वा रंभेव राजाग्रे नृत्यमारेभे, तदा मूलदेवोऽपि निपुणः पटहमवादयत्, तदा राजा तस्या नृत्यकरणेन रंजितो जगौ, मार्गय वांछितं ददामि, तयोक्तमयं प्रसादः कोशे तिष्ठतु. ततो राजा तुष्टः स्वांगलग्नं विभूषणं तस्यै ददौ, राज्ञः पुरतो नृत्यं कृत्वा सा देवदत्ता मूलदेवेन सहिता गृहे गता सुखेन ति-

ष्ठति, परं मूलदेवोऽतीवद्यूतप्रसंगी, तेन परिधानांशुकमपि तस्य शरीरे न तिष्ठति, तदपि द्यूते हास्यति, तदानीं देवदत्तया प्रोक्तं, हे स्वामिन्! महतां कलंककारणं द्यूतव्यसनं त्यज? यतः—द्यूतं सर्वापदां धाम । द्यूतं दिव्यंति दुर्धियः ॥ द्यूतेन कुलमालिन्यं । द्यूतं च श्लाघतेऽधमः ॥ १ ॥ एवं वारंवारं विनयेन वेश्योक्तोऽपि स व्यसनं न तत्याज. इतश्च देवदत्ताया गाढानुरक्तः पूर्वप्रसंग्यचलनामा सार्थवाहपुत्रो दानप्रसंगी धनवान् देवदत्ताजननी वस्त्राभरणादि यन्मार्गयति तत्सर्वं समर्पयति, स च मूलदेवोपरि द्वेषं वहति, तथा छिद्राणि विलोकयति. सोऽपि मूलदेवस्तस्य भीत्या सति तस्मिन् गृहे न प्रविशति, यत एकस्मिन् करवाले द्वौ प्रतीकारौ न स्तः. एकस्मिन् दिने मात्रा प्रोक्तं हे पुत्रि देवदत्ते! एनं निर्धनं द्यूतव्यसनिनं मूलदेवं परिहर? अचलं श्रेष्ठिपुत्रं दानकल्पतरुं चांगीकुरु? तया भणितं हे मातर्नाहमेकांतेन धनानुरागिणी, किं त्वहं गुणानुरागिणी, मम गुणेष्वेव प्रतिबंधः. जनन्या प्रोक्तं कीदृशास्तस्य द्यूतकारस्य गुणाः? तया भणितं हे मातः केवलं गुणवानेवैष:, यतः—धीरो उदारचित्तो । दक्खिणमहोअही कलानिउणो ॥ पियभासी अकयण्णू । गुणाणुराई विसेसण्णु ॥ १ ॥ अतो न त्यजाम्येनं. ततः सा कुट्टिनी दृष्टांतैर्देवदत्तां बोधयति, य-

था—अलक्तके मार्गिते सा नीरसमलक्तकं ददाति, ईक्षुदंडे प्रार्थिते ईक्षुत्वचां ददाति, कुसुमे याचिते कुसुमबिंटं ददाति, कुंभे याचिते च ढंकनिकां ददाति. इति कृत्वा च वदति हे पुत्रि! अत एनं पुरुषाधमं निर्धनं व्यसनिनं त्यज? धनदोपममचलं च भज? यथा ते सर्वसमीहितं कल्पवृक्षवत्पूरयति. देवदत्तया चिंतितमेषा किमपि न जानाति, अतोऽहं जनन्या दर्शयामि द्वयोर्विवेकं. एकदा तया मात्रे प्रोक्तं हे मातस्त्वमचलपार्श्वे ईक्षुं मार्गय? तया तस्य कथितं, तेनापीक्षुयष्टीनां शकटं भृत्वा प्रेषितं, मात्रोक्तं हे पुत्रि! यथेच्छया त्वंदत्स्वेक्षुयष्टीः. तयोक्तं हे मातः किमहं करिणी? यदेता ईक्षुयष्टीर्भक्षयामि. तया भणितं पुत्रि! एष उदारचित्तः, तेनेदमेतावत्प्रेषितं. तयोक्तं हे मातरथ मूलदेवचातुर्यं तव दर्शयामि, एवमुक्त्वा माधवीनामदासी समाकारिता, उक्तं च—भो माधवि! मूलदेवाग्रे गत्वा वद? यथा देवदत्तेक्षुं याचते, माधविकया याचितो मूलदेवः, मूलदेवेन गृहीते द्वे ईक्षुयष्टिके, निस्त्वचीकृते च.

ततस्तयोर्ग्रंथिहीनांगुलद्वयमिता खंडाः कृताः, ते चोर्ध्वं द्विर्भिन्नाः, पश्चात्तान् किंचित्किंचिच्छूलाभिर्भित्वा कर्पूरवासितान् कृत्वा नवशरावद्वये चिक्षेप. ततस्तज्जलार्द्रवाससा विधाय वातायना-

भिमुखं संस्थाप्य देवदत्तायै प्रेषयामास. माधवी तानीक्षुखंडान् देवदत्तायै चार्पयामास. तया जननी भणिता, हे मातः प्रेक्षस्व पुरुषयोरंतरं. अतोऽहं मूलदेवगुणानुरक्ता, न त्वहं धनाभिलाषिणी, अक्कया चिंतितं, मम पुत्री देवदत्ता मूलदेवेऽत्यंतं रक्ता तं न त्यजति, ततोऽहं केनाप्युपायेन त्याजयामि, यथापमानेन स देशांतरं याति, ततश्च सुस्थं भवति. एवं विचिंत्यैकस्मिन् दिनेऽक्कयाचलो भणितः, भो अचल! त्वमलीकं ग्रामांतरगमनं देवदत्ताग्रे कथय? तेन देवदत्ताग्रे कथितमहं ग्रामांतरं यामि. तं ग्रामांतरगतं ज्ञात्वा गृहाभ्यंतरे तया मूलदेवः प्रवेशितः, तस्या जनन्याचलस्य ज्ञापितं, समागतोऽचलो महासामग्र्या, अचलो गृहाभ्यंतरे प्रविशति यावत्तावद्देवदत्तया मूलदेवस्योक्तमन्यत्र कुत्रापि गोप्यस्थानं नास्ति ततस्त्वं पल्यंकस्याधः क्षणमेकं तिष्ठ? यावदेषोऽचलोऽन्यत्र याति. इत्युक्त्वा तया मूलदेवः पल्यंकाधः स्थापितः, अक्कया संज्ञितोऽचलः समागत्य पल्यंकोपरि निषण्णः, अचलेनोक्तं स्नानसामग्रीं कुरु? देवदत्तया भणितं पल्यंकादुत्तिष्ठ? स्नानोचितं वस्त्रं च परिधेहि? येनाहमभ्यंगं करोमि. अचलेनोक्तं मया दृष्टोऽद्य स्वप्नो यथा परिहितवस्त्रः पल्यंके स्थित एवाहं स्नातः. तत्सर्वं मम स्वप्नदृष्टं त्वं सफलं कुरु? देवदत्तया कथितं स्वामिन् किमर्थं महार्घ्या तू·

था—अलक्तके मार्गिते सा नीरसमलक्तकं ददाति, ईक्षुदंडे प्रार्थिते ईक्षुत्वचां ददाति, कुसुमे याचिते कुसुमबिंटं ददाति, कुंभे याचिते च ढंकनिकां ददाति. इति कृत्वा च वदति हे पुत्रि! अत एनं पुरुषाधमं निर्धनं व्यसनिनं त्यज? धनदोपममचलं च भज? यथा ते सर्वसमीहितं कल्पवृक्षवत्पूरयति. देवदत्तया चिंतितमेषा किमपि न जानाति, अतोऽहं जनन्या दर्शयामि द्वयोर्विवेकं. एकदा तया मात्रे प्रोक्तं हे मातस्त्वमचलपार्श्वे ईक्षुं मार्गय? तया तस्य कथितं, तेनापीक्षुयष्टीनां शकटं भृत्वा प्रेषितं, मात्रोक्तं हे पुत्रि! यथेच्छया भुंक्ष्वेक्षुयष्टीः. तयोक्तं हे मातः किमहं करिणी? यदेता ईक्षुयष्टीर्भक्षयामि. तया भणितं पुत्रि! एष उदारचित्तः, तेनेदमेतावत्प्रेषितं. तयोक्तं हे मातरथ मूलदेवचातुर्यं तव दर्शयामि, एवमुक्त्वा माधवीनामदासी समाकारिता, उक्तं च—भो माधवि! मूलदेवाग्रे गत्वा वद? यथा देवदत्तेक्षुं याचते, माधविकया याचितो मूलदेवः, मूलदेवेन गृहीते द्वे ईक्षुयष्टिके, निस्त्वचीकृते च.

ततस्तयोर्ग्रंथिहीनांगुलद्वयमिता खंडाः कृताः, ते चोर्ध्वं द्विर्भिन्नाः, पश्चात्तान् किंचित्किंचिच्चूर्णैर्भित्वा कर्पूरवासितान् कृत्वा नवशरावद्वये चिक्षेप. ततस्तज्जलार्द्रवाससा विधाय वातायना

पटशतनिधानं शिष्टनिंदानिदानं ॥ धननिधनविधानं सद्गुणानां पिधानं । परभवविपदाम्नां कः प-
एस्त्रीं भजेत ॥ १ ॥ विणठा मुहरसिया । नेहविहूणा विलग्गए कंठं ॥ पच्छा करइ विआरं । ब-
लहमसारिच्छिआ वेसा ॥ १ ॥ अहो अचलेनाहं छलितः, किं करोमि ? प्रथमं सरोवरे गत्वा स्ना-
नं करोमीति चिंतयता तेन सरोवरे गत्वा स्नानं कृतं, कस्मिंश्चिद्देशे गत्वैतस्य काचिद्विपत्तिं करो-
मि, यथानेन मम विरूपमाचरितं तथाहमपि तस्य विरूपमाचरामि. एवं वैरनिर्यातनं च कृत्वा स्व-
स्थो भवामि, ततश्चलितोऽसौ बेन्नातटाभिमुखं, मार्गे ग्रामनगरादि मुंचन् प्राप्तोऽसौ द्वादशयोजनमा-
नामेकामटवीं. तत्र प्रविशन् मूलदेवश्चिंतयति यदि कश्चिद् द्वितीयः सखा लभ्यते तदा सुखेनाट-
वीपारो लभ्यते. तावत्तैवागतः कश्चित्सुंदराकृतिः शंबलसक्थुकग्रंथिधारकष्टक्कब्राह्मणः, अनेन पृष्टं भो
विप्र! त्वं कुत्र यासि? तेनोक्तमस्या अटव्या अंते, कांचिद्भुवं गत्वाग्रे वीरनिधाननाम ग्रामो वर्त-
ते, तत्राहं गमिष्यामि. ततो विप्रेण पृष्टं त्वं कुत्र यासि? मूलदेवेनोक्तमहं बेन्नातटे गमिष्यामि.
ततो द्वावप्येकीभूयाटव्यां प्रविष्टौ, मार्गे वार्तां कुर्वाणौ तौ गच्छतश्च, एवं गच्छतोस्तयोर्मध्याह्नसमयो
जातः, मार्गे गच्छद्भ्यां ताभ्यां जलपूर्णमेकं सरो दृष्टं, ब्राह्मणेनोक्तमावामस्मिन् सरोवरे क्षणमेकं

लिका विनाश्यते? अचलेनोक्तमितोऽपि विशिष्टतरां तूलिकां ते दास्यामि, किमनया तूलिकया? जनन्योक्तमेवं भवतु, देवदत्ता तूष्णीका स्थिता. अचलस्तस्यामेव शय्यायां स्थित्वा तैलाभ्यंजनोद्वर्तनखलिकाक्षालनादिकं तथा चक्रे यथा पल्यंकाधःस्थो मूलदेवः खल्याद्यशुचिस्वरंटितोऽभूत. जनन्या संज्ञया मूलदेवः पल्यंकाधोभागे दर्शितः, अचलेन स्वपुरुषैर्ग्राहितः, चौरवद्बद्धो भणितश्च भो मूलदेव! निरूपय यदि कोऽप्यस्ति शरण्यः, मूलदेवेन चतुर्दिक्षु विलोकितं, दृष्टाश्चतुर्दिक्षु सायुधा अचलपुरुषाः, तैर्वेष्टितं स्वं दृष्ट्वा तेन चिंतितमेते सायुधाः, अहं च निरायुधः, अतः पौरुषस्यावसरो नास्ति, इति विचिंत्यापदि स्थितेन मूलदेवेनोक्तं भो अचल! यत्ते रोचते तत्कुरु? अचलेन चिंतितमाकृत्या ज्ञायते एष कश्चिदुत्तमपुरुषः, सुलभान्येव महापुरुषस्यापि व्यसनानि, यतः—को एत्थ सया सुहिओ । कस्सवि लच्छी थिराइं पेमाइं ॥ कस्सवि न होइ खलियं । भण कोवि न खंडिओ विहिणा ॥ १ ॥

इति विचिंत्याचलेनोक्तं भो मूलदेव! सांप्रतं त्वं मया मुक्तः, कदाचिदवसरेऽहमपि त्वया मोच्यः. ततो विमनस्को नगरान्निर्गतो मूलदेवश्चिंतयति—नटविटभटसक्तां सत्यशौचादिमुक्तां । क-

पटशतनिधानं शिष्टनिंदानिदानं ॥ धननिधनविधानं सद्गुणानां पिधानं । परभवविपदाज्ञां कः प-
णस्त्रीं भजेत ॥ १ ॥ विण्ठा मुहरसिया । नेहविहूणा विलग्गए कंठं ॥ पच्छा करइ विआरं । ब-
लहसारिच्छिआ वेसा ॥ १ ॥ अहो अचलेनाहं छलितः, किं करोमि ? प्रथमं सरोवरे गत्वा स्ना-
नं करोमीति चिंतयता तेन सरोवरे गत्वा स्नानं कृतं, कस्मिंश्चिद्देशे गत्वैतस्य कांचिद्विपत्तिं करो-
मि, यथानेन मम विरूपमाचरितं तथाहमपि तस्य विरूपमाचरामि. एवं वैरनिर्यातनं च कृत्वा स्व-
स्थो भवामि, ततश्चलितोऽसौ बेन्नातटाभिमुखं, मार्गे ग्रामनगरादि मुंचन् प्राप्तोऽसौ द्वादशयोजनमा-
नामेकामटवीं. तत्र प्रविशन् मूलदेवश्चिंतयति यदि कश्चिद् द्वितीयः सखा लभ्यते तदा सुखेनाट-
वीपारो लभ्यते. तावत्तैवागतः कश्चित्सुंदराकृतिः शंबलसक्थुकग्रंथिधारकष्टकब्राह्मणः, अनेन पृष्टं भो
विप्र! त्वं कुत्र यासि? तेनोक्तमस्या अटव्या अंते, कांचिद्भुवं गत्वाग्रे वीरनिधाननाम ग्रामो वर्त-
ते, तत्राहं गमिष्यामि. ततो विप्रेण पृष्टं त्वं कुत्र यासि? मूलदेवेनोक्तमहं बेन्नातटे गमिष्यामि.
ततो द्वावप्येकीभूयाटव्यां प्रविष्टौ, मार्गे वार्तां कुर्वाणौ तौ गच्छतश्च, एवं गच्छतोस्तयोर्मध्याह्नसमयो
जातः, मार्गे गच्छद्भ्यां ताभ्यां जलपूर्णमेकं सरो दृष्टं, ब्राह्मणेनोक्तमावामस्मिन् सरोवरे क्षणमेकं

विश्रामार्थं तिष्ठावः, ततस्तत्र गत्वा तौ द्वावपि निर्मलनीरे स्नातौ, पालिस्थितवृक्षछायायां च स्थितौ, टक्कविप्रेण शंबलग्रंथिकातः कर्षितं भाजनं, तस्मिन् भाजने सक्थुकं जलमिश्रं कृत्वा स खादितुं लग्नः, मूलदेवश्चिंतयति विप्रजातय ईदृशा एव क्षुधार्ता भवंति, भक्षणानंतरमेव मम किंचिद्दास्यति, विप्रोऽपि तदन्नं भुक्त्वा शंबलग्रंथिकां बबंध, ततोऽग्रे द्वावपि चलितौ, मूलदेवेन चिंतितमपराह्णे दास्यति, अग्रे गत्वा तथैव भुक्तं, परं किंचिदपि न दत्तं, मूलदेवेन पुनश्चिंतितं कल्ये दास्यति, इत्याशया च मार्गे स तेन सह गच्छति.

एवं गच्छतोस्तयो रजनी समागता, ततो मार्गं मुक्त्वा द्वावप्येकस्य वटस्याधः सुप्तौ, प्रत्यूषे तथैवोत्थाय मार्गे चलितौ, मध्याह्ने तथैव भुक्तं विप्रेण, परं मूलदेवस्य तथैव किमपि न दत्तं, एवं तृतीये दिने चिंतितं मूलदेवेन सांप्रतं निस्तीर्णप्रायाटवी, तेनावश्यमेवाद्य किंचिद्दास्यत्येष विप्रः, तथापि किमपि न दत्तं, एवमटवीमुल्लंघ्याग्रे गच्छता विप्रेणोक्तं भो भद्रैष तव मार्गोऽनेन मार्गेण त्वं याहि? अहमनेन मार्गेण यामि, एवमुक्त्वा यावता स विप्रो याति तावता मूलदेवेनोक्तं भो भद्राहं तव प्रसादेनैतावतीं भूमिमागतः, मूलदेवनामाहं क्षत्रियो बेन्नातटे यामि, यदि तव प्रयोजनं

किमपि भवति तदा समागच्छेर्बेन्नातटे, पुनः कुमारेणोक्तं तत्र किं नाम? तेनोक्तं सिद्धजटो जन-
कृतनिर्घृणशर्मेत्यपरनामाहं, एवमुक्त्वा विप्रः स्वग्रामे गतः, मूलदेवो बेन्नातटनगराभिमुखं चलितः,
मार्गे कश्चिद् ग्रामः समागतः, तत्र प्रविष्टः क्षुधार्तोऽसौ भिक्षायै भ्रमति, तेन मूलदेवेन भिक्षायै
भ्रमता कुल्माषा लब्धाः, नान्यत्किमपि लब्धं, तान् गृहीत्वा स गतो जलाशयाभिमुखं.

तस्मिन् समये कश्चिन्महामुनिस्तपःशोषितशरीरो महानुभावो महातपस्वी मासोपवासपारणके
भिक्षार्थं तस्मिन् ग्रामे प्रविशन् मूलदेवेन दृष्टः, तं मुनिवरं दृष्ट्वा हर्षवशोत्पन्नरोमांचकंचुकितशरीरो
मूलदेवश्चिंतयति, धन्योऽहं कृतपुण्योऽहं येन मयास्मिन् कालेऽस्मिन्नवसरे एष महातपस्वी साधुः
कल्पवृक्षोपमो मया प्राप्तः, ततो ममावश्यं महानुदयो कल्याणं च भविष्यतः, यथा—मरुत्थलीए
जह कप्परुक्खो। दरिद्दगेहे जह हेमवुठी॥ मायंगगेहे जह हत्थिराया। मुणीमहप्पा तह अम्ह ए-
सो॥ १॥ किंच—दंसणनाणविसुद्धं। पंचमहव्वयसमाहियं धीरं॥ खंतीमद्दवअज्जव—जुत्तं मु-
त्तिपहाणं च॥ १॥ सज्झायज्झाणतवो—वहाणनिरयं विसुद्धलेसागं॥ पंचसमियं तिगुत्तं। अकिं-
चणं चत्तगिहिसंगं॥ २॥ सत्तसुखित्ते ववियं। विसुद्धसद्धाजलेण संसित्तं॥ निहियं तु दव्वसस्सं

। इह परलोए अणंतफलं ॥ ३ ॥ तेनास्मिन् काले एतान् कुल्माषानस्य महामुनेर्दत्वा पारणकं कारयामि, यतोऽयं मे दायको ग्रामः, एष महामुनिरेकवारं दर्शनं दत्वा निवर्तयति, अहं तु द्वित्रिवारं भ्रांत्वा भ्रांत्वा पुनः कुल्माषानानयिष्ये, ग्रामोऽप्यासन्नोऽस्ति, एवं चिंतयित्वा तस्मै मुनयेऽत्याग्रहेण ते कुल्माषा मूलदेवेन समर्पिताः, भगवता मुनिवरेण परिणामप्रकर्षेण द्रव्यादिशुद्धमन्नं ज्ञात्वा भो धर्मशील! स्तोकं देहीत्युक्त्वा पात्रं धृतं, मूलदेवेनापि भावेन दानं दत्तं, वर्धमानपरिणामेनेदं पठितं च, यथा—धन्नाणं खु नराणं । कुम्मासा हुंति साहुपारणए ॥ तस्मिन् समये मूलदेवभक्तिं वीक्ष्याकाशगामिस्थदेवतया भणितं, भो पुत्र मूलदेव! त्वया सुंदरं कृतं यन्मुनिभ्यो दानं दत्तं, तेनाहं तुष्टा पूर्वोक्तगाथार्धेन यत्तुभ्यं रोचते तद्याचस्व? मूलदेवेनोत्तरार्धेन भणितं, यथा—गणियं च देवदत्तं । दंतिसहस्सं च रज्जं च ॥ १ ॥ पुनर्देवतया भणितं हे पुत्र! निश्चिंतो विचर? अवश्यं ते मुनिचरणानुभावतोऽहं स्तोकेनैव कालेन तव मार्गितं सर्वं संपादयिष्ये, मूलदेवेन भणितमेवमेवास्तु, त्वयोक्तं सर्वमहं लप्स्ये, मुनिवरस्तां भिक्षां लात्वा पुनरेवोद्यानं गतः, मूलदेवोऽपि साधुं नत्वा निवर्तितः, पुनरेव गतस्तं ग्रामं, तत्र तेन लब्धापरा भिक्षा, भोजनं कृत्वा चा-

ग्रे चलितो बेन्नातटाभिमुखं, एवं क्रमेण प्राप्तो बेन्नातटनगरं, तत्र रात्रौ सुप्तः पथिकशालायां मूलदेवः, तेन यामिन्याः पश्चिमे प्रहरे स्वप्नो दृष्टः, प्रतिपूर्णमंडलो निर्मलप्रभाभासुरो मृगांको ममोदरे प्रविष्ट इति.

ईदृशः स्वप्नः केनचित्कार्पटिनापि दृष्टः, कथितस्तेन कार्पटिकानां, तत्रैकेन कार्पटिकेनोक्तं लप्स्यसे त्वं घृतखंडितं गुडेन संयुक्तं महदेकं मंडकं. तत् श्रुत्वा हर्षितः कार्पटिको गतो भिक्षार्थं ग्रामे. केनापि गृहस्थेन गृहप्रवेशादिमहे क्रियमाणे तादृशो मंडकस्तस्मै दत्तः. स तं गृहीत्वा समागतो दर्शितश्च स कार्पटिकानां, उक्तं च भो भो कार्पटिकाः! मया यथोक्तो मंडको लब्धः, एवं स तेन तुष्टः. अथ मूलदेवोऽपि गतो वाटिकायां, आवर्जितो मालाकारः, दत्तानि तेन पुष्पफलादीनि, तानि पुष्पफलादीनि गृहीत्वा शुचिर्भूत्वा च स गतः स्वप्नपाठकगृहे, कृतस्तस्य प्रणामः, सोऽपि तुष्ट उवाच भो भद्र! त्वं मद्गृहे किमर्थमागतोऽसि? योजितकरकमलयुगलो विनयावनम्रदेहो मूलदेवः पुष्पफलभृतकरयुग्मं विधाय पूर्वोक्तस्वप्नफलं पप्रच्छ. तं स्वप्नं श्रुत्वा हर्षित उपाध्याय उवाच, भो महात्मन्! तवाहं शुभमुहूर्ते स्वप्नफलं कथयिष्ये, त्वं स्वस्थो भव? इत्युक्त्वा तेन विप्रेण

मूलदेवो गृहाभ्यंतरे नीतो मज्जितः प्राघूर्णकरीत्या भोजितश्च. भोजनानंतरमुपाध्यायेनोक्तं भो पुत्रक ममैषा पुत्री गुणसुंदरीनाम्नी प्राप्तयौवनास्ति, त्वमेनां परिणय? मया तुभ्यं दत्ता, त्वमेव तस्याः पतिर्भव? मूलदेवेनोक्तं तात! कथमज्ञातकुलशीलं मां जामातृकं करोषि? उपाध्यायेनोक्तं तवाचारेण ज्ञायते त्वमुत्तमकुलो वर्तसे, यतः—आचारः कुलमाख्याति । देशमाख्याति भाषितं ॥ संभ्रमः स्नेहमाख्याति । वपुराख्याति भोजनं ॥ १ ॥ को कुवलयाण गंधं । करेइ महुरत्तणं च उच्छूणं ॥ वरहत्थीण य लीलं । विणयं च कुलप्पसूयाणं ॥ २ ॥ उक्तं च—जइ हुंति गुणा ता किं । कुलेण गुणिणो कुलेण न हु कज्जं ॥ कुलमतुलं गुणवज्जि—आण गुरुअंपि सकलंकं ॥ ॥ ३ ॥ इत्यादिवचनैस्तोषितो मूलदेवस्तद्वचनमंगीकरोतिस्म. ततः स्वप्नपाठकविप्रेण सुमुहूर्ते स पाणिग्रहणं कारितः, ततः स्वप्नफलं प्रोक्तं, भो मूलदेव शृणु? त्वं सप्तदिनाभ्यंतरेऽस्यैव नगरस्य राजा भविष्यसि. तत श्रुत्वा प्रहृष्टमना मूलदेवस्तत्र सुखेन तिष्ठति. एवं पंचमे दिवसे गते मूलदेवो नगरपरिसरे क्रीडितुं गतः, रंत्वा च परिश्रांतः सुप्तः स चंपकछायायां. तस्मिन् समये तस्मिन्नगरेऽपुत्रो राट् निधनं गतः, प्रकटितानि पंच दिव्यानि, हस्ती १ अश्व २ छत्रं ३ चामरौ ४ कलश ५

श्चेति. प्रतिष्ठितानि मंत्रेण तानि दिव्यानि वादित्रसहितानि सपरिकराणि सर्वत्र नगरे भ्रांत्वा भ्रांत्वा बहिर्निर्गत्य यत्र मूलदेवश्चंपकपादपनिश्चलछायायां सुप्तोऽस्ति तत्रागतानि. तं मूलदेवं दृष्ट्वा हस्तिना गुलगुलायितं, हेषितं तुरगेण, गजकरस्थभृंगारेणाभिषिक्तो मूर्ध्नि, वीजितं चामराभ्यां, स्वयमेव विकसितं तस्य मूर्ध्नि छत्रेण. एवं मूलदेवस्य राज्यं जातं, गगनस्थदेवतया प्रोक्तं भो भो लोकाः! एष मूलदेवो महानुभागः समस्तकलापारगो देवताध्यासितशरीरो विक्रमराजापरनामा भवतां भूपो ज्ञेयः, एतस्याज्ञया यो न वर्तयिष्यति तस्य शिक्षां दास्यामीत्युक्त्वा देवता स्वस्थानं गता. तदानीं तद्राज्याधिष्ठायिमंत्रिमहामंत्रिपुरोहितादिभिः परिवृतो हस्तिस्कंधाध्यासितशरीरो महामहेनागतो राजमंदिरं, सर्वैरभिषिक्तो राज्याभिषेकेण, अभिनवभानुमानिव तेजसाक्रांतविश्वोऽसौ धरित्रीं धारयामास. एवं स विक्रमराजा विक्रमाक्रांतविश्वो न्यायेन राज्यं पालयामास. तेन विक्रमराजेनोज्जयिनीस्वामिना विचारधवलेन सह मैत्री समारब्धा, तयोः परस्परमतीवप्रीतिर्जाता.

इतश्च देवदत्ता गणिका तादृशीं विटंबनां मूलदेवस्य दृष्ट्वातीवविरक्ता जाताचलोपरि, ततः स देवदत्तया निर्भर्त्स्य गृहान्निष्कासितः, प्रोक्तं च याहि मम गृहतः, अहं हि वेश्या, किमहं तव गृ-

हिणी? येन त्वया मूलदेवस्यैवंविधा विडंबना कृता, इत्युक्त्वा सा गता राजसमीपं, राज्ञश्चरणे निपतिता; पूर्वदत्तो वरश्च मार्गितः, राज्ञोक्तं यत्तुभ्यं रोचते तद्वरं मार्गय? तया मार्गितो वरः स्वामिन्! मूलदेवं विना केनापि मम गृहे नागंतव्यं, एषोऽचलोऽपि मम गृहागमने निषेध्यः, राज्ञोक्तं यथा तुभ्यं रोचते तथाहं करिष्ये, परं कथय कोऽयं वृत्तांतः? तया देवदत्तया सकलोऽपि वृत्तांतः कथितः. तत श्रुत्वाचलोपरि रुष्टो राजा तं समाकार्यैवं कथयतिस्म, भो अचल! मम नगर्यामेको मूलदेवोऽपरा च देवदत्ता गणिका द्वे रत्ने वर्तेते, ते अपि त्वं विगोपयसि, तर्हि किमस्मिन्नगरे त्वं राजा वर्तसे? यत्त्वमेवंविधं व्यवहारं व्यवहरसि? कुरु शरणं? अन्यथा त्वशरणं त्वामहं हनिष्यामि. तदानीं देवदत्तया प्रोक्तं स्वामिन्नेतेन श्वानप्रायेण हतेन किं? अतो मुच्यतामेष इत्युक्त्वा मोचितः स देवदत्तया. राज्ञोक्तं भो अचल! त्वमस्या वचनेन मया मुक्तः, त्वमितो याहि? ग्रामनगराणि च विलोकय? मूलदेवशुद्धिं च समानय? अचलेन भणितं स्तोकदिनांते तस्य शुद्धिं समानयिष्ये, इत्युक्त्वा राज्ञश्चरणौ नत्वा तस्य शुद्ध्यर्थं नगरान्निर्गत्य स विलोकयितु लग्नः, परं क्वापि स न लब्धः, तेनैव दुःखेन स प्रवहणं भांडेन भृत्वा प्रस्थितः पारसकुलं. इतश्च

मूलदेवेन सप्राभृतकः प्रेषितो विनयप्रतिपादको लेखो विचारधवलराजस्य, देवदत्तायाश्च द्वितीयो लेखः प्रेषितः प्रेमप्रतिपादकः. तत्र राज्ञो लेखे एवं लिखितमासीत्, भो राजेंद्र! मम देवदत्तोपरि महान् प्रीतिबंधो वर्तते, तेन यद्यस्या भवतश्च रोचते तर्हि प्रसादं कृत्वैनां प्रेषयेति. तं लेखं प्राभृतं च वीक्ष्य हृष्टो राजावदत्, अनेनैतावत् किमर्थितं? मम राज्यमप्येतदधीनमस्ति, तदा देवदत्तायाः कथ्येति? ततो राज्ञा समाकारिता देवदत्ता, कथितो लेखवृत्तांतः, भो देवदत्ते यदि तुभ्यं रोचते तर्हि याहि विक्रमराजांतिके बेन्नातटनगरे, तयोक्तं महाप्रसादः, भवत्प्रसादेन मम मनोरथाः सिध्यंतु. ततो विचारधवलेन महत्या ऋध्या प्रेषिता देवदत्ता बेन्नातटनगरे समागता, विक्रमराजेन महत्या ऋध्या प्रवेशिता, तयोर्जाता परस्परं प्रीतिः, अनयो राज्ञोर्विक्रमविचारधवलयोरपि प्रीतिर्विशेषतो जाता. मूलदेवस्तया देवदत्तया समं विषयसुखान्यनुभवन् विचरति. सप्तक्षेत्रेषु धनं वपन् स राज्यं पालयामास.

इतश्च सोऽचलः पारसकूले व्यवहारं विधायानेकक्रयाणकानि समादाय प्रवरं भांडं प्रवहणे भृत्वा बेन्नातटनगरे समागात्. तेन सार्थवाहेन पृष्टा लोकाः, भो लोकाः कोऽत्र राजा? किंनामा च?

लोकैरुक्तं विक्रमनामात्र न्यायवान् राजास्ति, स च पितेव राज्यं पालयति. तत् श्रुत्वा हर्षितोऽचलः सुवर्णमुक्ताफलादिभिः स्थालं भृत्वा राज्ञः पुरो मुक्त्वा निपतितस्तत्पादेषु. राज्ञा पृष्टं भो श्रेष्ठिंस्त्वं कुतः समागतः? तेनोक्तं राजन् पारसकूलात्समागतोऽहं. ततो राज्ञा दापित आसने निषण्णोऽचलः क्षेमवार्तया तोषितश्च. तेनोक्तं राजन् कंचिन्मांडपिकं प्रेषय? यो भांडं विलोकयति. ततो राज्ञोक्तमहं स्वयमेवागत्य विलोकयिष्यामि. ततः पंचकुलसहितो गतो राजा यानपात्रे, विलोकितानि सर्वाण्यपि भांडानि शंखपूगीफलचंदनकदंतमांजिष्ठादीनि. ततो राज्ञा पृष्टं सर्वेषु पश्यत्सु भो श्रेष्ठिन्! एतावदेवास्ति क्रयाणकमथवान्यत्किमप्यस्ति? अचलेनोक्तं देव! एतावदेवास्ति, अन्यत्किमपि नास्ति. राज्ञा चार्धं शुल्कं मुक्तं, लोकेनोक्तं राज्ञा श्रेष्ठिनो महाप्रसादः कृतो यदर्धं शुल्कं मुक्तं. राज्ञोक्तं भो शुल्कपालकाः श्रेष्ठिनः सर्वं क्रयाणकं मम समक्षं तोल्यतां? तेऽपि तथा कुर्वंति, तदा पादप्रहारेण कानिचिद्भाजनानि स्फोटितानि, तेभ्यो निर्गतं बहुमूल्यं वस्तु. ततः सर्वाण्यपि तानि स्फोटितानि, तेभ्योऽपि निर्गतानि बहूनि बहुमूल्यभांडानि, यथा—कुत्रापि स्वर्णं, कुत्रापि रजतं, एवं मणिमुक्ताफलप्रवालकर्पूरकस्तूर्याद्यनेकबहुमूल्यभांडानि दृष्ट्वा रुष्टो राजा, आत्मपुरुषाणां

चादेशो दत्तो यथा भो भो सेवकाः! एनं श्रेष्ठिनं प्रत्यक्षचौरं गृह्णीत? ततस्तैर्भयेन कंपमानहृदयः श्रेष्ठी गृहीतः, राजा समागतः स्वमंदिरे, सोऽपि श्रेष्ठी तैरानीतो राजभवने. ततो राज्ञा कथितं भो सेवकाः! एनं श्रेष्ठिनं मुंचत? इत्युक्त्वा मोचितः. ततो राज्ञा पृष्टं भो श्रेष्ठिंस्त्वं मां जानासि? अचलेनोक्तं देव! सम्यग्न जानामि, ततो राज्ञा समाकारिता देवदत्ता. समागता सर्वांगभूषणैर्विराजमाना द्युतिद्योतितदिङ्मुखा, तत्क्षणादेवोपलक्षिताचलेन, मनसि लज्जितोऽचलः, तयोक्तं भो अचल! एष विक्रमराजा मूलदेवो यस्त्वया तस्मिन्मज्जनावसरे मुक्तः, त्वया भणितश्च ममापि कदाचिद्विधियोगेन व्यसनं प्राप्तस्योपकारं कुर्वीथाः, तेन त्वमप्यस्मिन्नवसरे विक्रमराजेन मुक्तः, सोऽपि महाप्रसाद इत्युक्त्वा निपतितो द्वयोस्तयोश्चरणेषु, परमादरेण स्नपितो देवदत्तया भोजितो वस्त्रादि परिधापितश्च, राज्ञा मुक्तं शुल्कं, प्रेषितोऽचल उज्जयिन्यां मूलदेवाभ्यर्थनया विचारधवलेनापि मानितः स्वगृहे समागात्. विचारधवलो मूलदेवं राज्ये निविष्टं श्रुत्वा समागतो बेन्नातटे, एवं तयोर्द्वयो राज्ञोर्गाढं परस्परं प्रीतिर्जाता, स मूलदेवः श्रावकव्रतं समाराध्य पूर्णायुरंतेऽनशनेन मृत्वा देवलोकं जगाम. ॐ श्रीमूलदेवेन । श्रद्धाशुद्धेन चेतसा ॥ कुल्माषदानतो लब्धं । प्राज्यं

राज्यं सुनिश्चलं ॥ १ ॥ इति प्रासुकान्नदानविषये मूलदेवकथानकं समाप्तं. ॥ अथ विक्रमादित्यदृष्टांतेन दानं दृढयन्नाह—

॥ मूलम् ॥—अइदाणमुहरकवियण—विअरिअ सयसंखकव्वविव्वरिअं ॥ विक्कमनरिंदचरिअं । अज्जवि लोए परिप्फुरइ ॥ १५ ॥ व्याख्या—अतिदानेनातित्यागेन ये मुखरा वाचालाः कविजनास्तैः ' विअरिअत्ति ' विचरितानि प्रसारितानि यानि शतसंख्यकाव्यानि, तैः ' विव्वरिअत्ति ' विस्तृतं विस्तारं प्राप्तमेवंविधं विक्रमनरेंद्रचरित्रं ' अज्जवित्ति ' अद्याप्यद्य यावल्लोके जगति परिस्फुरति जागर्तीति गाथार्थः. ॥ १५ ॥ विस्तरस्तु कथानकादवगंतव्यः, तत्कथा चेयं—

मालवदेशेऽवंती नाम नगर्यस्ति, कथंभूता? मालवावनितन्वंगी—भास्वद्भालविभूषणं ॥ अवंती विद्यते वर्या । पुरी स्वर्गपुरीनिभा ॥ १ ॥ यत्र धर्मं दयामूलं । कुर्वन् पौरजनोऽखिलः ॥ अर्थकामाविहाप्नोति । परत्र च शिवश्रियं ॥ २ ॥ धर्मसिद्धौ ध्रुवं सिद्धि—र्द्युम्नप्रद्युम्नयोरपि ॥ दुग्धोपलब्धौ सुलभा । संपत्तिर्दधिसर्पिषोः ॥ ३ ॥ तस्यां नगर्यां न्यायनिपुणः प्रजापालकः सकलजनतासुखदो जिताशेषशत्रुभूपो गंधर्वसेनो नाम भूपोऽभूद्विश्वविश्रुतः. अन्यदोज्जयिनीपार्श्ववर्तिग्रामे

लक्ष्मीपुराभिधे कांचिद्धर्यां विधवां ब्राह्मणीं राजा गंधर्वसेनो धनादिना लोभयित्वा भर्तृहरपुत्रसमन्वितां स्वस्त्रीत्वेनांगीचकार, तया सह स सुखान्यनुभवन्नास्ते, तया पत्न्या सह रममाणस्य राज्ञः सूर्यस्वप्नसंसूचितः पुत्रो जातः, तस्य जन्मोत्सवं कृत्वा सुदिवसे सुमुहूर्ते सूर्यस्वप्नसूचितत्वाद्विक्रमादित्य इति विश्रुतं नाम ददौ, अथवा प्रकारांतरेण विक्रमादित्योत्पत्तिं कथयति, यथा तस्यामवंत्यां सर्वजनतासुखदो गर्दभिल्लो नाम राजा न्यायेन राज्यमपालयत् स्वर्गे स्वर्गिनाथ इव, स कीदृशोऽस्ति?—शत्रूणां तपनः सदैव सुहृदामानंदनश्चंद्रव—त्पात्रापात्रनिरीक्षणे सुरगुरुर्दानेषु कर्णोपमः ॥ नीतौ रामनिभो युधिष्ठिरसमः सत्ये श्रिया श्रीपतिः । स्वीयान्येष्वपि पक्षपातसुभगः स्वामी यथार्थो भवेत ॥ १ ॥ तस्य राज्ञो धीमतीश्रीमत्याह्वे द्वे पत्न्यावभूतां पंचबाणस्य रतिप्रीती इव. सा धीमत्यन्यदा सुंदरस्वप्नसूचितं गर्भं दधार. पूर्णे मासि राज्ञी धीमती शुभेऽह्नि सुलग्ने स्फुरद्द्युतिं पूर्वार्कमिव पुत्रं सुषुवे. नृपो जन्मोत्सवं कृत्वा सज्जनसमक्षं तस्य भर्तृहर इत्याख्यां ददौ. स वर्धमानः क्रमान्मातापित्रोर्मुदं ददावब्धेरिंदुरिवानिशं. यतः—

उत्पतन् निपतन् रिंखन् । हसन् लालावलीर्वमन् ॥ कस्याश्चिदिह धन्यायाः । क्रोडमाक्रमते

सुतः ॥ १ ॥ शर्वरीदीपकश्चंद्रः । प्रभाते रविदीपकः ॥ त्रैलोक्ये दीपको धर्मः । सुपुत्रः कुलदीपकः ॥ २ ॥ अथ द्वितीया पत्नी श्रीमतीनाम्नी सूर्यस्वप्नेन सूचितं गर्भं दधार. क्रमेण दानशीलतपोभावनाद्यैर्धर्मदोहदं दधाना गर्दभिल्लेन राज्ञा सन्मानिता संपूरितदोहदा नवमासार्धसप्तदिनांते रजनीप्रांतसमये सुलग्ने सुमुहूर्ते मेदिनी निधानमिव राज्ञी पुत्रं सुषुवे. तस्यापि पुत्रस्य गर्दभिल्लेन राज्ञा मुदा जन्मोत्सवो विदधे. अर्कसमयसूचितत्वादर्कोदयवेलायां जातत्वाच्च राज्ञा गर्दभिल्लेन तस्य पुत्रस्य विक्रमार्क इति नाम विदधे. सूर्योदयवेलायां जातो महान् भवति, यतः—सूर्योदयस्य वेलायां । जायते यस्य जन्म तु ॥ तस्य दीर्घं भवेदायुः । पद्माया उदयः पुनः ॥ १ ॥ सोऽपि राज्ञा पंचधात्रीभिः स्तन्यपानादिना संवर्धितो मातापित्रोर्हर्षप्रदो बभूव. तौ द्वावपि पुत्रौ सद्रूपलावण्यगुणशालिनौ गर्दभिल्लक्षोणीपतेरत्यंतमोदकरावभूतां. तयोर्मध्ये प्रथमपुत्रो भर्तृहरः संजातोऽष्टवार्षिकः शिक्षितद्वासप्ततिकलो यौवनाभिमुखो बभूव. राज्ञा गर्दभिल्लेन स भीमसेननृपांगजामनंगसेनां पुत्रीं महामहेन विवाहितः. ततो गर्दभिल्लो राजा सकलबलसमन्वितो निःशेषान् विद्वेषिमेदिनीपतीन् साधयामास. एवं साधितदेशो देशाधिपो गर्दभिल्लः सन्मार्गेण राज्यं पालयन् श्रीरामं

स्मारयामास. एवं राज्यं पालयन् गर्दभिल्लोऽन्येद्युः शूलरोगेण मृत्वा मरुधाम जगाम. तस्य राज्ञो मृत्युकार्ये कृते मंत्रीश्वरादयः सदुत्सवपूर्वं भर्तृहरे राज्याभिषेचनं व्यधुः. तद्दिनादारभ्य भर्तृहरो राजा जातः, गजवाजिरथादिकं सर्वं तदधीनं जातं. विमातृजातत्वाद्राज्ञा भर्तृहरेण विक्रमादित्योऽपमानितः, तदपमानं संस्मृत्य विक्रमादित्य एकाकी खड्गसखायो देशांतरे ययौ.

तस्मिन् समये तस्यामवंत्यां दरिद्रो नारायणाभिधो विप्रः पूजोपहारैर्होमधूपादिभिर्भुवनेश्वरीं देवीमाराधयामास. सा संतुष्टा बहुजीवितदायकं सदाकारं सुस्वादु बीजपूरफलं तस्मै ददौ. तत्फलं लात्वा द्विजोऽवादीत्, हे देवि! अनेन फलेन भक्षितेन बहुजीवितं भवति, निर्धनत्वेन च मम तेन जीवितेनापि किं? यतः—जीवंतो मृतकाः पंच । श्रूयंते किल भारत ॥ दरिद्रो व्याधितो मूर्खः । प्रवासी नित्यसेवकः ॥ १ ॥ तत् श्रुत्वा देवी प्रोवाच भो विप्र चिंतां मा विधेहि? त्वमितो याहि? तव किंचिद्धनमपि भविष्यति, तत् श्रुत्वा विप्रः स्वगृहे गतः, कृतस्नानदेवपूजाक्रमो यावत्तत्फलं भोक्तुमुपविष्टस्तावत्ता पुनस्तेन चिंतितमहो ममानेन भक्षितेन किं? तथा बहुजीवितेनापि किं? यदि भर्तृहरनृपस्य दीयते तदा स राजा जगतः सुखंकरः स्यात्, यतः—दुर्बलानामनाथानां

। बालवृद्धतपस्विनां ॥ अन्यायैः परिभूतानां । सर्वेषां पार्थिवो गतिः ॥ १ ॥ इति ध्यात्वा स वाड-वस्तन्महिमानमुक्त्वा तत्फलं भर्तृहराय प्रददौ, भर्तृहरोऽपि तस्मै बहुधनं दत्वा विसर्जयामास, नृप-तिस्तत्फलं भोक्तुमिच्छन् दध्यावहो पट्टराज्ञीं विना भुक्तेन किं? विचिंत्येति फलं नृपतिः स्नेहेन रा-ज्ञ्यै ददौ, तयापि तस्य महिमानं श्रुत्वा स्वमित्राय हस्तिपकाय ददे, हस्तिपकोऽपि प्रीत्या राज्ञश्चा-मरधारिण्यै ददौ, चामरधारिण्यपि प्रीत्या तत्फलं पुना राज्ञे ददौ, ऊर्वीशस्तदेव फलं ज्ञात्वापृच्छद्धो सुंदरि! एतत्फलं त्वया कुतो लब्धं? तव केन दत्तं? तया सत्यमुक्तं. ततः परंपरया ज्ञातसकलवृ-त्तांतः पट्टराज्ञ्या दुश्चेष्टितं ज्ञात्वा संप्राप्तवैराग्यो नृप एवमचिंतयद्धिगहो स्त्रीविलसितं! मदनविलसि-तं च! यतः—यां चिंतयामि सततं मयि सा विरक्ता । साप्यन्यमिच्छति जनं स जनोऽन्यसक्तः ॥ अस्मत्कृते च परितुष्यति काचिदन्या । धिक्तां च तं च मदनं च इमां च मां च ॥ १ ॥ संमोहयं-ति दमयंति विडंबयंति । निर्भर्त्सयंति रमयंति विषादयंति ॥ एताः प्रविश्य सदयं हृदयं नराणां । किं नाम वामनयना न समाचरंति ॥ २ ॥ इत्यादि स्त्रीस्वरूपं ध्यात्वा भर्तृहरभूमिपालः संसाराद्वि-रक्तमानसस्तृणवद्राज्यं विमुच्य वने गत्वा योगपरायणस्तापसो बभूव, तस्मिन् समये सर्वेऽपि मंत्री-

श्वरा भर्तृहरोपांते गत्वैवं जगुः, स्वामिंस्त्वया विनेदानीं सर्वं राज्यं विनंक्ष्यति, तत् श्रुत्वा भर्तृहरो जगौ, भो मंत्रीश्वराः कस्येदं राज्यं? कस्य बांधवाः? भवांतरे मया सहस्रशो राज्यलक्ष्मीः प्राप्ता, परं मया स्वर्गापवर्गदा वैराग्यश्रीर्न कुत्रापि लब्धा, अतो मे राज्येन कार्यं नास्ति, सृतं राज्येन, अनया वार्तयापि च सृतं, एवं भर्तृहरो जल्पन् मणितृणसमाशयस्तीव्रं तपः कर्तुं महाविपीने जगाम, तदा शून्यं राज्यं ज्ञात्वाग्निवेतालिकासुरः क्रूरात्मा तत्क्षणादेव तद्राज्यमशिश्रियत्. ततस्तद्राज्याधिष्ठायका मंत्रिमुख्या राजानं वनगतं ज्ञात्वा विक्रमादित्यं च रुष्टं परदेशिनं च मत्वा श्रीपतिं क्षत्रियं कुलीनं ज्ञात्वा भर्तृहरराज्ये स्थापयामासुः, सोऽग्निवेतालिकासुरो रात्रौ तं श्रीपतिं राजानं जघान, प्रातस्तं मृतं दृष्ट्वा मंत्रिणो दुःखिनोऽभवन्. एवं यं यं नृपं मंत्रिणस्तत्र स्थापयंति, तं तं रात्रौ सदाग्निवेतालिकोऽसुरो हंति; एवं दिनानि यांति. मंत्रिणस्तस्य शांतये भूरिबलिं कुर्वंति तथापि स दुष्टोऽसुरः शांतिं नाप्नोति.

इतश्च विक्रमादित्यस्यान्यदा भट्टमात्राह्वो वणिगेको मिलितः, स तस्य सेवातत्परो बभूव. अथ तौ धनार्थिनौ रोहणाद्रिसमीपस्थग्रामे गतौ, प्रातःसमये तत्र गिरौ गत्वा भट्टमात्रो विक्रमार्कप्र·

ति प्राह भो नरेंद्र! इह यो नरः स्वकीयललाटपट्टे हस्तं दत्वा हा दैवेत्युक्त्वा प्रहारं ददाति तस्मै रोहणाचलो मणिं ददाति. नान्यथेति. भट्टमात्रस्यैतद्वचो निशम्य नृपतिश्चिंतयति, एवं तु कातरो वक्ति, परं नोत्तमः, तेन मयैतद्वचो विनैव प्रहारो देयः. ततो विक्रमनृपः खनीमध्ये खनित्रेण पुनः पुनर्घातं ददाति, परं मणिर्नो प्रादुर्भवति. तदा भट्टमात्रेण चिंतितं हा दैवेति वचो विना सर्वथा मणिर्न प्रादुर्भविष्यति, तेन केनचिच्छलेन नृपो यथैतद्वक्ति तथा कुर्वे. इति विचिंत्य भट्टमात्रेण नृपस्याग्रे नृपमातुरकुशलं कथितं, तावद्बहुदुःखितेन नृपेण बाढस्वरेण हा दैवेति वचनमुक्त्वा प्रहारः प्रदत्तः, तदा सपादलक्षमूल्यं रत्नं प्रकटितं. तद्रत्नं निरीक्ष्य हृष्टो भट्टमात्रः, परं मातुर्दुःखदुःखितो नृपो न किमपि वक्ति. तदा भट्टमात्रेणोक्तं भो नरेंद्र! तव मातुः कुशलमस्ति, परं मयैतच्छलं कृतं. एतत् श्रुत्वा हृष्टमानसो नृपो रोहणंप्रति प्राह, यथा—धिग् रोहणगिरिं दीन—दारिद्र्यव्रणरोहणं ॥ दत्ते हा दैवमित्युक्ते । रत्नान्यर्थिजनाय यः ॥ १ ॥ इत्युक्त्वा रत्नमुत्सृज्य विक्रमार्कमहीपतिः क्षत्रियवेषं त्यक्त्वावधूतवेषं विधाय तापीनदीतीरमुपाययौ. रात्रौ तत्र शिवारवं श्रुत्वा भट्टमात्रोऽवग्नो राजन्नत्र तटिनीतटे भूषणैर्भूषिता परं मृता नारी वर्तते इति शिवा वक्ति. तत् श्रुत्वा वि·

स्मितो विक्रमार्कः समित्रस्तत्र गतः. तथास्थितां तां नारीं वीक्ष्य राजा प्राह भो मित्र! तव वचः सत्यं जातं, परमस्याः स्त्रिया भूषणानि मनागपि नाहं गृह्णामि, भो मित्र! यदि तव रोचते तर्हि त्वमेवास्या भूषणानि गृहाण? विनयावनम्रदेहो भट्टमात्रः प्रोचे, भो मित्र यदि त्वमस्या भूषणानि नादत्से, तर्ह्यहं सांप्रतं चांडालिकं कर्म न करोमि. पुनः शिवारवं श्रुत्वा भट्टमात्रो राजानं जगाद, एषा शिवैवं वक्ति यत्तवावंतीराज्यं मासेन भविष्यति. तत् श्रुत्वावंत्या राज्यं शून्यं ज्ञात्वा स भट्टमात्रं मित्रमेवं वक्ति, भो मित्र! अहं सांप्रतं राज्यकृते तत्र पुरे यास्यामि, यतः—ददाति प्रतिगृह्णाति । गुह्यमाख्याति पृच्छति ॥ भुंक्ते भोजयते चैव । षड्विधं प्रीतिलक्षणं ॥ १ ॥ एवं मित्रमालाप्य मार्गे मित्रगुणान् संस्मरन् स्वीयं नगरं विक्रमार्कः समुपागमत.

अवधूतवेषो विक्रमार्क एकस्मिन् पीठे समुपविश्य कस्यचिन्मंत्रिणोंतिके राज्यशून्यस्वरूपं पप्रच्छ. मंत्रीश्वरो जगौ भर्तृहरभूमीपतेः पदे यो यो मंत्रिभिर्भूपः स्थाप्यते तं तमग्निवैतालिकोऽसुरो हंति. तदानीमवधूतवेषो विक्रमार्को जगौ भो मंत्रिन्! सर्वेऽमात्या यदि मह्यं राज्यं ददते तदाहं दुष्टान्निहत्य सज्जनान् पालयामि, एष च राजधर्मः, यतः—दुष्टस्य दंडः स्वजनस्य पूजा । न्यायेन

कोशस्य सदैव वृद्धिः ॥ अपक्षपातो रिपुराष्ट्ररक्षा । पंचैव धर्माः कथिता नृपाणां ॥ १ ॥ तस्य सत्त्वं निरीक्ष्य मंत्रिभिर्मंत्रयित्वा तस्यावधूतवेषभृतो विक्रमादित्यस्य राज्यं दत्वा सर्वेऽपि हृष्टा मंत्रिणो निर्भीकाः स्वस्थानं गताः, एवं च विक्रमादित्यस्य राज्यं जातं. ततः स राजा मनस्येवमचिंतयत्, अस्य देवस्य संतुष्ट्यर्थं बलिं कारयामि, यतो दुष्टदेवता बलिपूजातः शांतिमाप्नोति. इति विचिंत्य राजामात्यानाहूय बलिकृते मूटकत्रयपक्वान्नवटककैरेयीबाकुलादीनि कारयति, तथा पुष्पागुरुधूपप्रभृतीनि शांत्यर्थं कारयित्वा पुरप्रतोल्या उपरितनभूम्यां स्थाने स्थाने राजमंदिरादिषु शय्यादिषु चतुर्दिक्षु पुष्पबलिधूपादिविधिं विधिना कारयित्वा, तथा स्थाने स्थाने महीपालैः स्वसेवकै राजमार्गे वेगतस्तलिकातोरणैर्भूषयित्वा स्वयं खड्गसखाय एकाकी पल्यंकस्योपरि स्थितः, सावधान उन्निद्रो निर्भयः सत्ववांश्च स भगवद्गुणान् संस्मरन्नस्थात, साहसिकानां सर्वं भव्यं भवति, यतः—सीह न जोए चंदबल । नवि जोए धणरिद्धी ॥ एकलमो बहुआं भडे । जिहां साहस तिहां सिद्धी ॥ १॥ एवं यावत्स तस्थौ तावत्स सुराधमो निःकारणशत्रुः पुरगोपुरमार्गेण राजगृहंप्रति निशाद्वितीयप्रहरसमये समागात्, खड्गव्यग्रकरश्च राजशय्यासमीपे समागत्य भीषणं रूपं कृत्वा भापयन् स नवीनं

नृपं हंतुं दधावे. नृपोऽवग्भो अग्निवेतालामर! सांप्रतमहं शयने स्थितोऽस्मि, पूर्वं बलिं लाहि? ततश्च मम विग्रहं गृहाण? तत् श्रुत्वाग्निवेतालिकोऽसुरो मनोऽभीष्टं बलिं प्रात्वा महीपतेर्निर्भयं वचश्च निशम्येति दध्यौ, अहो धन्योऽयं महासत्ववानिति. ततस्तस्य वचः श्रुत्वा धैर्यं च वीक्ष्यावधिज्ञानेन तं प्रवर्धमानभाग्यं च ज्ञात्वा पुरो भूत्वा प्रोवाच, भो महाभाग! संतुष्टोऽहं तवोपरि, सुखेन राज्यं कुरु? न्यायमार्गेण प्रजां च पालय? एवंविधो बलिश्च त्वया सदा मह्यं देयः. राज्ञा भमित्युक्ते स देवः स्वस्थानं गतः.

अथ प्रभाते मंत्रिणो नृपं जीवंतं वीक्ष्य हर्षिताः प्रोचुरहोऽस्य सत्वाधिकत्वं! ततो मंत्रिणो नगरमध्ये तलिकातोरणादिभिः सदुत्सवं कारयामासुः. एवं द्वित्रिदिनानि बलिपूजादिकं कृत्वा वैतालिकासुरंप्रति भूपो जगौ, भो वैतालिकासुर! ते ज्ञानं कियदस्ति? कियती शक्तिश्चास्ति? वैतालिको नृपं प्रत्याह भो नृपते यदहं ध्यायामि तत्करोमि, सर्वं जानामि सर्वत्र च गच्छामि. राजा प्राह ममायुः कियन्मात्रं वर्तते? तच्च न्यूनाधिकं भवेद्वा न? तद् ज्ञानेन ज्ञात्वा समाख्याहि? देवोऽवगेकवर्षशतं तवायुरस्ति, तच्च केनापि न्यूनाधिकं कर्तुं न शक्यते, ततः पूर्णायुर्मृत्वा त्वं स्वर्गं

यास्यसि. इति च मयाख्यातं त्वं सत्यं जानीहि? विसर्जितोऽग्निवेतालः स्वस्थानं गतः. तद्दिनादारभ्य निर्भयो भूमीशः सुखं सुष्वाप. प्रगे जागरितो भूपः प्राभातिकीं क्रियां कृत्वा महामहेन सकलं दिनं नीत्वा पुना रात्रौ शयनालये सुखं सुष्वाप. समागतोऽग्निवेतालः, सुप्तं राजानं वीक्ष्य क्रुद्धोऽसौ भूपंप्रत्याह, रेरे दुष्टाशयमहीपाल! ममाकृत्वा बलिं पूजां च त्वं शयनीये कथं सुखं सुप्तोऽसि? यमजिह्वासदृशेनानेन खड्गेन तव शिरश्छिनद्मि, सज्जो भव? अकस्मात्तद्वचो निशम्य जागरितो भूपो यमजिह्वासदृक्षं खड्गं कोशादाकृष्य कोपारुणो बाढस्वरेणैवं जगाद, रेरे दुष्टाशयाग्निवेताल! ममायुः केनापि न त्रोट्यते, अथाहं प्रत्यहं कुतस्तुभ्यं बलिं करोमि? यदि तव योध्धुं शक्तिरस्ति तर्हि संग्रामाय सज्जो भव? यथाहं तवाहंकृतिं स्फेटयामि, शक्त्यभावे च किंकरवत्त्वं मम सेवां कुरु? तस्य राज्ञ एतद्वचनचातुरीचमत्कृतस्तस्य सत्वेन प्रवृद्धभाग्योदयेन च संतुष्टोऽग्निवेतालिकः सुरः प्राह भो भूप! तव भाग्योदयेन संतुष्टोऽहं, यद्रोचते तद्याचस्व? अमोघं देवदर्शनं, यतः—अमोघा वासरे विद्यु—दमोघं निशि गर्जनं ॥ नारीबालवचोऽमोघ—ममोघं देवदर्शनं ॥ ॥ १ ॥ राजावक् हे निर्जर यदि मयि तुष्टोऽसि तदा यद्यहं त्वां स्मरामि तदा त्वया त्वरितमेवागत-

व्यं. मदुक्तं सर्वं कार्यं च कर्तव्यं, ममोपरि पितृवत्सदा स्नेहः कर्तव्यः, भवता मम चिंता च भृशं कार्या, अस्मिन्नर्थे कथमपि न प्रमाद्यं. वेतालो बभाषे भो महात्मन् भो विक्रमार्क! मम साहाय्यतो निःशंकं राज्यं कुर्वंस्त्वं सुखेन तिष्ट? इति श्रुत्वा संतुष्टो भूपोऽप्यग्निकासुरं नत्वा स्तुत्वा पुष्पादिभिः संपूज्य च विससर्ज. सोऽपि स्वस्थानमगमत्.

अथ प्रभाते राजा मंत्रिमुख्यानाहूय नैशं वृत्तांतं वैतालिकासुरसत्कं समाचख्यौ. तत् श्रुत्वा ते भृशं हृष्टा जाताः, अथ तस्मिन्नेव दिनेऽवधूतवेषं मुक्त्वा नृपः पूर्ववेषं ललौ, इतश्च समागतो भट्टमात्रः, ततस्तौ द्वावपि सुहृदौ कुशलानुदत्तप्रश्नपूर्वकं परस्परं मिलितौ. ततो भट्टमात्रः प्राह भो भो मंत्रिण एष गर्दभिल्लपुत्रो विक्रमार्कनामा. ततस्तं समुपलभ्य सर्वेऽपि हृष्टाः. तदा श्रीमती जननी सुतं समायातं श्रुत्वा यावद्रोमांचकंचुकितविग्रहा बभूव, तावद्भूपालो मातृवत्सलो मातृमिलनाय मातुः समीपे गत्वा भक्त्या च मातुः पादं ननाम, श्रीमती निजपुत्रस्य चरित्रं निशम्यातीवहृष्टाभूत्, यतः—ते पुत्रा ये पितुर्भक्ता । स पिता यस्तु पोषकः ॥ तन्मित्रं यत्र विश्वासः । सा भार्या यत्र निर्वृतिः ॥ १ ॥ मंत्रिभिर्विक्रमादित्यस्य सुदिवसे महामहोत्सवपूर्वकं पट्टाभिषेको विदधे, न्या·

यमार्गेण पृथ्वीं पालयन् राजा जनेभ्योऽभीप्सितं दानं दत्ते, एवं कालो याति. एकस्मिन् दिने सेनया परिवृतोऽसौ देशसाधनाय निर्ययौ, अंगबंगतलिंगकाश्मीरसिंहलकलिंगकोकणसौराष्ट्रशबरबर्बरादीन् देशान् साधयित्वा लब्धजयो जयजयारवैः स्तूयमानो विक्रमार्कोऽभिनवार्क इव दिदीपे, एवं दीप्यमानोऽसाववंतीं प्राप्य मातुः पादौ प्रणनाम, मात्राभिनंदितो राज्यमपालयत्.

अन्येद्युर्विक्रमादित्यजननी श्रीमती रोगग्रस्तशरीरा सद्धर्मपरायणा वैद्यैश्चिकित्स्यमानापि जीवितक्षये स्वर्गं ययौ, अहो मरणं कोऽप्युल्लंघयितुं न क्षमते! यतः—बद्धा येन दिनाधिपप्रभृतयो मंचस्य पादे ग्रहाः। सर्वे येन कृताः कृतांजलिपुटाः शक्रादिदिक्पालकाः॥ लंका यस्य पुरी समुद्रपरिखा सोऽप्यायुषः संक्षये। कष्टं विष्टपकंटको दशमुखो दैवाद्गतः पंचतां॥ १॥ नृपमातुर्मृत्युकार्याणि कृत्वा शुचममुंचंतं तं वीक्ष्य मंत्रिण इति बोधयंतिस्म, यथा—धर्मशोकभयाहार—निद्राकामकलिक्षुधः॥ यावन्माता विधीयंते। तावन्मात्रा भवंत्यमी॥ १॥ तित्थयरा गणहारी। सुरवइणो चक्किकेसवा रामा॥ अवहरिया हयविहिणा। सेसेसु जियेसु का गणणा॥ २॥ इत्यादि शोकहृद्वाक्यं मंत्रिणां श्रुत्वा नृपः शोकं त्यक्त्वा भृशं सुखी राज्यं कुर्वन्नासीत्. इतो लक्ष्मीपुरे सिंहस्य

मेदिनीपतेः पद्मावत्यां पट्टराज्ञ्यां बहुपुत्रोपरि पुत्री जाता, तस्याः पिता कमलेत्यभिधां व्यधात, सा राजपुत्री क्रमेण वर्धमाना सकलकलासमन्विता यौवनोन्मुखी सिंहेन राज्ञा विक्रमार्काय दत्ता, विक्रमार्केण च परिणीता, राज्ञः पट्टदेवी च जाता, लक्ष्मीर्हरेरिव, एवमन्या अपि बहुकन्याः सदुत्सवेन परिणीय विक्रमादित्यभूपालोऽन्वहं राज्यं कुरुते. सर्वासां राज्ञीनां मध्ये विनीतत्वाद् भूमिनाथस्य कमला कमलेव वल्लभाऽभवत्. तस्य राज्ञो न्यायनिपुणो गंभीरो लोभरहितो राजभक्तो गुणसमुद्रस्तीक्ष्णधीर्भट्टमात्रो महामात्योऽभवत्, तथा तस्य भूपतेरग्निवेतालाभिधोऽसुरः साहसेन वशीभूतो सर्वकार्येषु सान्निध्यं चकार, अहो पुण्यानामुदये सर्वं भव्यं भवति, यतः—पत्नी प्रेमवती सुतः सुविनयो भ्राता गुणालंकृतः । स्निग्धो बंधुजनः सखातिचतुरो नित्यं प्रसन्नः प्रभुः ॥ निर्लोभोऽनुचरः सुबंधुसुयतिप्रायोपभोग्यं धनं । पुण्यानामुदयेन संततमिदं कस्यापि संपद्यते ॥ १ ॥ अन्यदा श्रीविक्रमार्को भ्रातृविरहाद् भृशं दुःखितो भर्तृहरं विनयेन संतोष्य पुरे समानीतवान्, तस्य चरणौ प्रणम्य कृशत्वं च वीक्ष्य विक्रमार्को भूपतिस्तपोदुष्करत्वं दध्यौ, ततस्तस्य मुनेः पादौ प्रणम्य स इति जगाद, हे भगवन्! मयि प्रसन्नो भूत्वा त्वं राज्यमंगीकुरु? तत् श्रुत्वा भर्तृहरो ज-

गाद, भो नरोत्तम! महान् राज्यादिकं त्यक्त्वा पुनर्नांगीकरोत्यगंधनसर्पवत्, पुनर्नृपो जगाद तर्हि त्वयात्रैव स्थेयं, ग्रामादिषु कुत्रापि न गंतव्यं, ममोपरि कृपां चाधाय मदुक्तं कार्यं, ऋषिः प्राह साधोरेकत्र पुरे चिरं स्थातुं न युक्तं, पुनर्विक्रमार्को जगाद तर्हि मामकीने गेहे त्वया सदाभ्येत्याहारो लातव्यः, पुनर्मुनिः प्राह साधूनामेकसद्मन्याहारो न युज्यते दोषसंभवात्, राजा प्राह तथाप्येकवारं मम निकेतने दोषवर्जितमाहारं लातुमागंतव्यं, मुनिना मानिते नृपः प्रियांप्रत्याह, हे प्रिये! नित्यशस्त्वयास्य मुनेराहारः प्रदातव्यः, तत् श्रुत्वा संतुष्टा राज्ञी, स्वस्थानं गतो मुनिः, राजा च राज्यकार्यरतो बभूव.

अथ भर्तृहरो मुनिराहारार्थं प्रतिदिनं राजवेश्मनि समायाति. ततो नृपगेहे गच्छन्नन्यदा भर्तृहरो मुनिः स्नानपरां भूपगेहिनीं संवीक्ष्य द्रुतं ववले. तथावस्था नृपपत्नी कृतत्वरा समुत्थाय तस्यर्षेः पृष्ठौ गत्वा स्फुटाक्षरमिति प्रोवाच—भो मुने! भवताशेषं बाह्येंद्रियजालं विजितं, परमंतरंगं तु न जितं, यतो भवान् ममांगं वीक्ष्य त्वरितं प्रत्यावृत्तः, यतः—शत्रौ मित्रे तृणे स्त्रैणे। स्वर्णेऽश्मनि मणौ मृदि ॥ मोक्षे भवे भविष्यामि। निर्विशेषमतिः कदा ॥ १ ॥ तद्दिनादारभ्य ध्यानमौनपरो

र्त्तृहरो मुनिः पृथ्वीपीठं बोधितुमन्यत्र जगाम. इति विक्रमादित्योत्पत्तिचरित्रं. ॥ एकस्मिन् दिने मंत्रिसामंतमहेभ्यालीनतक्रमो विक्रमादित्यो राजा देवेंद्रसज्ञातुल्यायां स्वसज्ञायां यावता समुपविष्ट-स्तावदेको नापितो राज्ञः पुरः समागत्य सूर्यबिंबवद्भासुरं देहप्रमाणमादर्शं पुरो दध्यौ. विक्रमार्को महीपालस्तस्मिन्नादर्शे स्वीयां निखिलां देहछायां विलोकयन् यावच्चित्ते चमत्कृतोऽभूत्, तावन्नापित-श्चमत्कृतं भूपं ज्ञात्वा तस्यां सभायां सर्वेषां मंत्रिमुख्यानां पुरो जगौ, हे राजंस्त्वयात्मीयं स्वरूपं विलोक्य यच्चिंतितं तदेते विज्ञा मंत्रिणः सांप्रतं कथयंतु, नो चेदहं जनोऽग्यत्र तवाग्रे सर्वं कथ-यामि. तदानीं भूमीभुजा पृष्टाः सर्वेऽमात्या दध्युः, सांप्रतं प्रायोऽसौ नरो वाक्सारो दृश्यते, एवं ते सर्वेऽमात्याः परस्परं ध्यात्वा राजानं जगुः, हे राजन्! म्लानिहेतवेऽयं महामानी पृच्छ्यतां, यतः—

मानिनो हतदर्पस्य। लाभोऽपि न सुखावहः॥ जीवितं मानमूलं हि। माने म्लाने कुतः सुखं॥ ॥ १ ॥

नृपेणोक्तं भो दिवाकीर्ते त्वमेव ब्रूहि? देहप्रमाणमादर्शं दृष्ट्वा किमहं चित्ते चमत्कृतः? नापितेनोक्तं राजंस्त्वया स्वरूपं दृष्ट्वा चिंतितं यन्महीमध्ये मत्तुल्यः कोऽपि मानवो नास्ति, इत्यभि-मानस्तव चित्ते समागतः, परं भो नृप! त्वं शृणु? महांतो मनुजाः कदाप्येवं गर्वं न कुर्वंति, यतो-

ऽस्मिन् संसारे सर्वशरीरेषु तारतम्यं विद्यते, राजा प्राह भो दिवाकीर्ते त्वयाद्भुतं किं दृष्टं? यदद्भुतं दृष्टं भवति तत्सर्वं निर्भयः सन् मत्पुरः सद्यो भवान् जल्पतु. नापितोऽवग्भो भूशक्र! सावधानो भूत्वा श्रूयतां? स्वर्गिपुरोपमे प्रतिष्ठानपुरे शालिवाहनभूपालो न्यायतो भुवं शशास, तस्य राज्ञो विजयाभार्याकुक्ष्युद्भवा सुकोमलानाम पुत्र्यासीत्, प्रसररूपलावण्या सत्कलाकलापशालिनी सान्यदा जातिस्मरणज्ञानतो निजान् सप्त पूर्वभवान् वीक्ष्य पुरुषं च सापराधं ज्ञात्वा पुरुषद्वेषिणी जाता, तद्दिनादारभ्य दृष्टिपथागतं नरं सा लकुटैर्हंति, नरनामश्रुतेः स्नानं करोति, यस्याः पुरोऽन्या कापि रूपशोभां न धत्ते, यथा—सुकोमलातनूपोद्य—दीप्तिपुंजपुरो मनाग् ॥ भूपाल त्वद्गृहीतानां । देहदीप्तिरणूयते ॥ १ ॥ सा च पुरुषद्वेषात् सर्वर्तुपुष्पफलाढ्ये नगरबाह्यवने तिष्ठति, तस्मिन् वने क्षीरवन्नीरपरिपूर्णं स्वर्णबद्धतलं स्वर्णपालिमनोहरं स्वर्णसोपानसुंदरं सरोवरमस्ति, मार्जारीरूपभृत्सुरी तयोर्वनसरोवरयो रक्षां करोति तृणकाष्टकचवराद्यपनयनादिना, तस्य तद्वचनं निशम्य विक्रमार्कोऽवग् हे महाभाग! त्वया सत्यमुक्तं, रूपतारतम्यं यच्च त्वयोदितं तत्सत्यमेव. अथ संतुष्टो राजा विक्रमार्कस्तस्मै यावद्धनं दापयामास तावत्स नापितो दिव्यमुकुटकुंडलहारकेयूरदिव्यवस्त्रयुग्म-

धारको देवोऽभवत्, तद्रूपं दृष्ट्वा भूपाद्याः सर्वेऽपि मंत्रिणः सभ्यलोकाश्च बाढं चित्ते चमत्कृता बभूवुः, राज्ञा पृष्टं भो सुरेश्वर! त्वं कुतः स्थानात्किमर्थं चागतोऽसि? स प्राहाहं सौधर्मदेवलोकवासी सुराचले देवनत्यै गतोऽभवं, तत्र जिनान्नत्वा भूमंडलेऽहं भ्रमन् प्रतिष्ठानपुरे गतः, तत्रापि देवान्नत्वा यावता नगरश्रियं पश्यामि तावन्मया नृपपुत्री सुकोमला दृष्टा, मया चिंतितमहो राजपुत्र्याः सुंदरं रूपं दृश्यते, ततश्चलितस्तावत् किन्नराणां मुखाद्गीयमानं तावकं साहसं रूपं च श्रुत्वाहं हे नृपते! त्वां वीक्षितुमागतः, त्वत्परीक्षाकृते चाबागां सुंदराभिधो देवः, त्वत्साहसेन तुष्टोऽस्मि, वांछितं वरं मार्गय? विक्रमोऽवग्भो सुरेशाधुना केनापि वस्तुना मम कार्यं नास्ति, यतो मम सदने लक्ष्म्यन्वितं सर्वं समीहितमस्ति, ततो देवो महीशाय दिव्यरूपकुब्जिकां बलादत्वा हृष्टचित्तो विद्युदिव तिरोदधे, यतः—संतुष्टानाममर्त्यानां। दर्शनं जातमंगिनां॥ मोघं च जायते नैव। निशागर्जितवत्कदा॥ १॥

अथैकस्मिन् दिने भट्टमात्रो दीनमुखं तं नृपं दृष्ट्वेति पृष्टवान्, हे स्वामिंस्ते मनः किमर्थं बाधते? तत्सर्वं ममाग्रे सत्यं समाख्याहि? यथा तस्योपचारः क्रियते, भवतश्च तुष्टिर्भवति, राज्ञोक्तं

भो मंत्रीश्वर! सावधानीभूय श्रूयतां? सुरोक्तायाः शालभूभुजः कन्यायाः पाणिग्रहणं विना मम जीवितं नास्ति, यतः—अक्खाणसणी कम्माण। मोहणी तह य वयाण बंभवयं ॥ गुत्तीण य मणगुत्ती। चउरो दुक्खेण जिप्पंति ॥ १ ॥ दिवा पश्यति नो घूकः। काको नक्तं न पश्यति॥ अपूर्वः कोऽपि कामांधो। दिवानक्तं न पश्यति ॥ २ ॥ मंत्री प्राह हे राजंस्तस्याः पुरुषद्वेषिण्या योषितस्तव पाणिग्रहोऽनर्थमूलं भविष्यति, अतस्तव तया सह पाणिग्रहणं कर्तुं न युज्यते, राजा प्राह भो मंत्रिन्! यदि भवतो मदीयेन जीवितव्येन प्रयोजनं स्यात्तर्हि तत्रोद्यमः क्रियतां? अथ मंत्रिणा ये ये उपायाः कृताः, येन प्रकारेण च सा भूपपुत्री सुकोमलानाम्नी परिणीता, तस्याः कुक्षौ च विक्रमचरित्रनामा पुत्रो जात इत्यादिः सकलोऽपि वृत्तांतो विक्रमादित्यचरित्रादवसेयः, ग्रंथगौरवभयान्नास्माभिर्लिखितः. अथ विक्रमादित्यो राट्, तस्य सुकोमला च पट्टराज्ञी, तयोः पुत्रो विक्रमचरित्रनामा प्रतिष्ठानपुरान्मातृसहितः पितृमिलनाय सद्योऽवंतीपार्श्वे समागमत, राजा विक्रमादित्यो भार्यापुत्रागमं श्रुत्वा तत्क्षणात् सन्मुखमागत्य तयोः पूःप्रवेशं महामहेन कारयामास, ततस्तयोः सप्तभूमिकमावासं दत्वा न्यायवर्त्मना विक्रमार्कस्तेन पुत्रेण सह राज्यं पालयामास. एवं तेन

विक्रमादित्येन बहवः कन्यकाः परिणीताः, ताभिः सार्धं च वैषयिकं सुखं भुंजानोऽसौ देवराज इव राज्यं करोति.

अथैकस्मिन् सर्वोत्कृष्टतमे दिवसे सुखप्रदे सन्मुहूर्ते सन्मानपूर्वकं सिद्धविद्यं तक्षकं समाकार्य कीरकाष्ठमयं रत्नजटितं सिंहविस्तरं मनोरमं सिंहासनं नृपतिः कारयामास, तथा तस्मिन् सिंहासने कीरकाष्ठमया रत्नखचिता द्वात्रिंशच्छालभंजिका नृपो योजयामास, सन्मुहूर्ते कृतत्वात् कीरकाष्ठमयत्वाच्च द्वात्रिंशता सुरीभिस्तत्सिंहासनमधिष्ठितं, ततःप्रभृति विक्रमादित्यनृपालस्तस्मिन् सिंहासने समासीनो निरंतरं न्यायमार्गेण मेदिनीं पालयामास. अन्यदा कश्चिद्योगिराट् प्रतिहारनिवेदितो नृपोपांते समागत्यैकं बीजपूरकं ढुढौके, एवं वर्षावधिं यावन्निरंतरं स योगिराट् नृपतेरग्रे नृशो बीजपूराणि दुढौके, एवं काले यात्येकस्मिन् दिने एको मर्कटो राज्ञो हस्तादेकं बीजपूरफलं समादाय नीत्वा च यावता बुभुजे तावत्तन्मध्यादेकं महामूल्यं रत्नं निर्गतं, तादृग्रत्नमालोक्य राजा कोशाध्यक्षात्तिकात्सर्वाणि फलान्यानीतवान्, तानि फलानि भित्वा मणींश्चैकीकृत्य वीक्ष्य प्रमुदितो राजा प्राह भो योगींद्र! त्वं महार्घ्यानेतान् मणीन् किमर्थं प्राभृतीकरोषि? योगी जगौ राजेंद्र! नृणामु·

पकारः कृतः सुखहेतवे जायते, ये च भवादृशाः सात्विका भवंति ते हि नृणां प्रार्थनाभंगं न कुर्वंति, यतः—क्षुद्राः संति सहस्रशः स्वभरणव्यापारबद्धादराः । स्वार्थो यस्य परार्थ एव स पुमानेकः सतामग्रणीः ॥ दुःपूरोदरपूरणाय पिबति श्रोतःपतिं वाडवो । जीमूतस्तु निदाघतापितजगत्संतापविच्छित्तये ॥ १ ॥ लच्छी सहावचवला । तत्तोवि चवलंपि जीवियं होई ॥ भावो उ तत्तोवि चवलो । उवयारविलंबणं कीस ॥ २ ॥

एवं योगिप्रोक्तं वचनं श्रुत्वा मेदिनीपतिः प्रोवाच भो योगिन्! यत्तव कार्यं विद्येत तत्त्वं ममाग्रतो ब्रूहि? योगी जगाद भो भूपाल! शरीरिणां साहसेन दुःशक्यापि कार्यसिद्धिः सुखकरा भूतं भवति, यतः—विजेतव्या लंका चरणतरणीयो जलनिधि—र्विपक्षः पौलस्त्यो रणभुवि सहायाश्च कपयः ॥ तथाप्याजौ रामः सकलमवधीद्राक्षसबलं । क्रियासिद्धिः सत्वे वसति महतां नोपकरणे ॥ १ ॥ राजन्! मया काचित्पूर्वं मंत्रसाधना प्रारब्धा, तस्याः कोऽप्युत्तरसाधको नास्ति, हे सात्विकाग्रणि! त्वं तस्यामुत्तरसाधको भव? तद्वचो निशम्य राजा तस्य वचः प्रतिपद्य योगिसमन्वितो निर्भयो रात्रौ वनांतरे ययौ, यतः—एकोऽहमसहायोऽहं । कृशोऽहमपरिच्छदः ॥ स्वप्नेऽप्येवंविधा

चिंता । मृगेंद्रस्य न जायते ॥ १ ॥ एवमुत्तरसाधकत्वेन स स्थापितः, योगिनाज्ञापि भो राजेंद्रा-स्यां वटशाखायां बद्धस्य शबस्य समानयनं कुरु? इत्युक्त्वा स दुष्टधीः शबानयनाय महीपालं प्रेषयामास, योगी स्वयं च खदिरदारुभिरग्निकुण्डं ज्वलज्ज्वालं कृत्वा ध्यानं कर्तुं प्रवृत्तः, नृपस्तस्मिंस्तरौ गत्वा तं समारुह्य दवरकं छित्वा मृतकं पातयित्वा शीघ्रं वृक्षाद्भूमावुत्तीर्णवांस्तावत्तन्मृतकं पुनर्वृक्षे चटितं वीक्ष्य नृपतिः पुनर्वृक्षमारूढस्तथैव शबं पातयामास. एवं द्वित्रिवारान् कृत्वा शबं च पुनरूर्ध्वगतं दृष्ट्वा कष्टं वीक्ष्य नृमिभुजाग्निवैतालिकः स्मृतः, सोऽपि स्मृतमात्रोपस्थितो मृतकशरीरमाश्रित्य मेदिनीनायकंप्रति प्राह हे राजन्! मया कथ्यमानं किंचित्कथानकं श्रूयतां? राजावग् हे शब! पुरातनी कथा ममाग्रे कथ्यतां? महीपतीरग्रे शबेन पूर्वकथा कथिता. अत्र वेतालपंचविंशतिकावतार्यां, पंचविंशतिकथानकैस्तां निशामतिवाह्य निशांते नृपंप्रति वैतालिकः प्राह यथा—राजन्नयं बली योगी । त्वां बलिं पुरुषोत्तमं ॥ विधाय स साधयिषु—रस्ति कांचनपौरुषं ॥ १ ॥ अतोऽस्य योगिनस्त्वं हि । मा विश्वासं कृथा नृप ॥ दुरात्मायं बली योगी । विद्यतेऽधर्मशेखरः ॥ २ ॥ यतः —मयोपकृतमेतस्य । वक्रस्येति न विश्वसेत् ॥ दत्तक्षीरोऽपि दुष्टाहि—र्दुर्जयो दशति ध्रुतं ॥ ३ ॥

एतद्वैतालिकस्योक्तं श्रुत्वा सविस्मयं भूपेन चित्तेऽचिंति, अहो दुष्टधियः खलु मर्त्यजन्म सुधा हारयंति तर्हि पश्याम्यहमयं छली योगी मे किं करिष्यति? तदानीं समयोचितमहमपि करिष्यामि, यतः—अतीतं नैव शोचंति । भविष्यन्नैव चिंतयेत् ॥ वर्तमानेन कालेन । वर्तयंति विचक्षणाः ॥ ॥ १ ॥ एवमुक्त्वा तच्छवं स्कंधे कृत्वा विक्रमार्को योगिराट्पार्श्वे मुमोच, शवं समानीतं दृष्ट्वा योगीशो मुदितः प्राह, अहो भूपते! तवाहं रक्षार्थं शिखाबंधं करोमि, यतो होमं वितन्वतस्तव विघ्नो न जायते, यतः—राक्षसव्यंतरप्रेत—भूतदैत्यादयः पुनः ॥ केऽपि तत्रापि नो विघ्नं । भवंति कर्तुमत्र हि ॥ १ ॥ अंगरक्षां यतो विद्या—साधका धुरि कुर्वते ॥ ततः समीहितं सर्वं । तेषां भवति निश्चितं ॥ २ ॥

एवमुक्त्वा स दुष्टमानसो योगी महीपतेः शिखाबंधं कर्तुं निखिलां सामग्रीमानयामास, महीशस्य मस्तकोपरि तत्क्षणाच्छिखाबंधं विधाय दुष्टमानसो योगिराट् स्वमानसे मुमुदे, राजा दध्यावयं पाखंडी स्फुटं दुष्टो विद्यते, मया तथा विधातव्यं यथा मम सुखं भवेत, ततो यावद्योगी नृपं वह्निकुंडे क्षिपति तावद्भूपोऽग्निवेतालं स्मृत्वा सावधानीभूय चिंतयत्यहो दुरात्मनाननेनेदानीं स्वोदरपू-

र्तये किमेवंविधाः पापप्रपंचरचना मंडिताः ! आहूतिसमये वह्निकुंडे तं योगिनमेव बलिं कृत्वा विक्रमार्को राट् स्वर्णमयं मर्त्यमसाधयत्, तदैव गांगेयनराधिष्टायकः सुरः प्रत्यक्षीभूय राज्ञे तत्प्रभावं प्रकाश्य तूर्णं तिरोदधे, विक्रमादित्यो राजा तं कनकपुरुषमग्निकुंडादादाय महता महेन रवेरुदये पुर्यां प्रविवेश, तदा मंत्रिपृष्टो राजा योगिसंभवमशेषं वृत्तांतं मंत्रिलोकानां पुरतः कथयामास, मंत्रीश्वरा जगुः परप्राणिनां द्रोहः कृत आत्मन्येव पतति नात्र संशयः, यथा—आत्मनः कुशलाकांक्षी । परद्रोहं न चिंतयेत् ॥ स्थविरायै कृतो द्रोहो । वध्वा एवापतद्यतः ॥ १ ॥ अत्र वीरश्रेष्टिस्थविरामातृपुत्रभार्याकथा वाच्या. अथ विक्रमादित्यदानाधिकारः सूत्रोक्तः कथ्यते, यथा—एकस्मिन् दिने वृद्धवादिसूरिशिष्यः सिद्धसेनदिवाकरः सर्वज्ञसूनुबिरुदं वहन् महीतले विजहार, एवं नगरे नगरे ग्रामे ग्रामे जिनोदितं धर्मं प्ररूपयन् बहून् भव्यान् प्रतिबोधयन् स मह्यां विचरति, एकदावंत्यां श्रिसिद्धसेनदिवाकरमागच्छंतं गुरुं बहिः क्रीडायै गच्छन् विक्रमार्को निरीक्ष्य सर्वज्ञपुत्रपरीक्षार्थं चेतसा नमश्चक्रे, तदानीं सिद्धसेनसूरिर्दक्षिणं करमुत्क्षिप्य धर्मलाभं ददौ, तदा राजा प्राह मह्यं धर्मलाभः कथं दीयते? यूयं केन वंदिताः? सूरिराह भवता सर्वज्ञपुत्रपरीक्षार्थं वयं वंदिताः, यथा—सूरिः

प्रोवाच नृपालः । वंदमानाय दीयते ॥ कायेन वंदिता नैव । मनसा वंदिता वयं ॥ १ ॥ श्रुत्वैतद्धर्षितो नृपो—ऽवरुह्य कुंजरात्ततः ॥ वंदित्वांतर्गुरुं स्वर्ण—कोटिं चादापयत्तदा ॥ २ ॥ निर्लोभत्वात्तदाचार्यो । जगृहे न नृपार्पिता ॥ कथितत्वान्नृपः पश्चात् । स्वर्णकोटिं ललौ न हि ॥ ३ ॥ तदा सूरेरनुज्ञया तद्धनं मंत्रिमुख्यैर्जीर्णोद्धारे व्ययितं, राजवहिकायां च लिखितं, तत्स्वरूपं दृष्ट्वा पंडितैरुक्तं यथा—धर्मलाभ इति प्रोक्ते । दूरादुच्छ्रितपाणये ॥ सूरये सिद्धसेनाय । ददौ कोटिं नराधिपः ॥ १ ॥ चमत्कृतिकृते भूमि—नायकस्यान्यदा प्रगे ॥ श्लोकचतुष्टयं कृत्वा । सिद्धसेनो दिवाकरः ॥ २ ॥ राज्ञो निकेतनद्वारे । गत्वा चेति जगौ तदा ॥ भो द्वाःस्थाहं महीशस्य । मिलनायागतोऽस्मि च ॥ ३ ॥ लिखित्वा पत्रके श्लोक—मेकं द्वारस्थपाणिना ॥ प्रेषयामास सूरीशो । नृपपार्श्वे विशारदः ॥ ४ ॥ तथाहि—दिदृक्षुर्भिक्षुरायात—स्तिष्ठति द्वारि वारितः ॥ हस्तन्यस्तचतुःश्लोकः । किंवागच्छतु गच्छतु ॥ ५ ॥ ज्ञात्वा श्लोकार्थमूर्वीशो । रंजितो द्वाःस्थपाणिना ॥ प्रतिश्लोकं पुनः प्रेष—यामास गुरुसन्निधौ ॥ ६ ॥ तथाहि—

दीयतां दशलक्षाणि । शासनानि चतुर्दश ॥ हस्तन्यस्तचतुःश्लोको । यद्वागच्छतु गच्छतु ॥७॥

ज्ञातश्लोकार्थसूरीशो । गत्वा मध्यगृहं नृपं ॥ पूर्वाशास्थितमालोक्य । पुनः श्लोकं पपाठ च ॥ ८ ॥ अपूर्वेयं धनुर्विद्या । भवता शिक्षिता कुतः ॥ मार्गणौघः समभ्येति । गुणो याति दिगंतरं ॥ ९ ॥ पूर्वां मुक्त्वा राजा दक्षिणदिग्विभागे स्थितः, पुनरपि सूरिर्द्वितीयं श्लोकं प्राह—सर्वदा सर्वदोऽसीति । मिथ्या संस्तूयसे बुधैः ॥ नारयो लेभिरे पृष्टं । न वक्षः परयोषितः ॥ १० ॥ ततो पश्चिमां स्थिते राज्ञि सूरिस्तृतीयं श्लोकं जगौ—त्वत्कीर्तिर्जातजाड्येव । चतुरंभोधिमज्जनात् ॥ आतापाय महीनाथ । गता मार्तंडमंडलं ॥ ११ ॥ ततो नृपे उत्तरायां स्थिते चतुर्थं श्लोकं सूरिः पपाठ—आहते तव निःस्वाने । स्फुटितं रिपुहृद्घटैः ॥ गलिते तत्प्रियानेत्रे । राजंश्चित्रमिदं महत् ॥ १२ ॥ पुनः पपाठ—सरस्वती स्थिता वक्त्रे । लक्ष्मीः करसरोरुहे ॥ कीर्तिः किं कुपिता राजन् । येन देशांतरं गता ॥ १३ ॥ एतत् श्लोकचतुष्टयं श्रुत्वा महीपालो विक्रमार्कश्चेतसि चमत्कृतः सिंहासनाच्छीघ्रं समुत्तीर्य भक्त्या नत्वा गुरुं सिद्धसेनं जगाद हे महामुने! लसद्धस्तिवाजिरत्नादिशालितमिदं राज्यं गृहाण? मां चानुग्रहं कुरु? सूरिर्जगाद हे राजन्! मया मातृपित्रादिनिःशेषा लक्ष्मीः पुरा त्यक्ता, तेन हेतुना मे मनः सदैव लेष्टुकांचनेषु समं वर्तते, यथा—रिपौ मित्रे तृणे स्त्रैणे । स्वर्णे-

ऽश्मनि मणौ मृदि ॥ मोक्षे भवे च साधूनां । समं चित्तं सदा भवेत् ॥ १ ॥ भुंजीमहि सदा गो-
द्ध्यं । रथ्यावासे वसीमहि ॥ शयीमहि महीपीठे । कुर्वीमहि किमीश्वरैः ॥ २ ॥ निर्लोभत्वं नृपो
वीक्ष्य । सूरीशस्य तदा भृशं ॥ जिनधर्मरतः किंचि—द्बभूव न्यायतत्परः ॥ ३ ॥ एवं राजा विक्र-
मादित्यस्तस्मिन् कीरकाष्टविनिर्मिते स्वर्णरत्नजटिते द्वात्रिंशत्पुत्तलिकासंयुक्ते सिंहासने समुपविष्टो
राज्यं करोति.

अन्यदा श्रीसिद्धसेनसूरिः श्रीऋषभदेवजिनालये देवं नंतुं ययौ, तदा तत्र चैत्ये सिद्धसेना-
चार्यं वंदितुं श्रावकवर्गः सद्यः समाजगाम, स श्रावकवर्गो देवं गुरुं च नत्वा गुरुणा सह गुरूक्तं चै-
त्यवंदनं शृणोति यथा—स मंगलं वो वृषभध्वजः क्रिया—ज्जटावलीसंवलितांसमंडलः ॥ यदीय-
मंगं किल सर्वमंगला—श्रितं प्रमोदाय न कस्य जायते ॥ १ ॥ भव्यांगभृत्कोकिलपुंडरीकं । दुः-
कर्मरुग्भेदनपुंडरीकं ॥ पद्भ्यां पवित्रीकृतपुंडरीकं । नताखिलाखंडलपुंडरीकं ॥ २ ॥ उन्मत्तमोह-
द्विपपुंडरीकं । बाल्ये कृतार्थीकृतपुंम्मरीकं ॥ शिरस्तुषाराभ्रधृतपुंडरीकं । त्वां स्तौति चंचत्पदपुंडरीकं
॥ ३ ॥ अतिस्फारनमस्कारान् । सदर्थसहितांस्तदा ॥ कथयित्वेति भावेन । सिद्धसेनो गुरुर्जगौ ॥

॥ ४ ॥ नेत्रानंदकरी भवोदधितरी श्रेयस्तरोर्मंजरी । हर्षोत्कर्षशुभप्रवाहलहरी व्यापल्लताधूमरी ॥
श्रीमद्धर्ममहानरेंद्रनगरी रागद्विषां जित्वरी । पूजा श्रीजिनपुंगवस्य विहिता क्षेमंकरी देहिनां ॥ १ ॥
ततो ' नमुत्थुणं ' इत्यादिस्तुतिभिर्वंद्यमानं जिनेश्वरं वीक्ष्य श्रावकवर्गः सूरीशं प्राह हे भगवन्नेतै·
र्वचैरेतानि शास्त्राणि गुरुसन्निधौ कथं पठितानि? एवं श्रावकप्रशंसावाक्यानि श्रुत्वा मुदितमान·
सः सिद्धसेनो गुरुः ' आवस्सहीति ' कृत्वा जिनगृहान्निर्गत्योपाश्रये समागतः, कियंति दिनानि
च तत्र स्थित्वा ततः पृथिव्यां विचरन् पुनः प्रतिष्ठानपुरे समाययौ, तत्र वृद्धवादिसूरिगुरुं नत्वा च
तत्र स्थितः. अथैकस्मिन् दिने सिद्धसेनाचार्यो गुरुं वृद्धवादिसूरीशं नत्वैवं बभाषे, हे भगवन्! वंद·
नादिकसूत्राणि प्राकृतानि न शोभंते, अतोऽहं संस्कृतान्येव कुर्वे यदि भवतां रोचते. गुरुः प्राह
हे महाभाग! गौतमादिगणेश्वराश्चतुर्दशपूर्वपाथोधिपारगा वंदनादिकसूत्राणि संस्कृतानि च कर्तुं न
जानंतिस्म? तैः संस्कृतानि कथं न कृतानि? त्वं किं ततोऽप्यभ्यधिको येनैवं प्रजल्पसि, पुनरेवं
गुरुः प्राह हे महाभाग! तव पारांचितं पापं जातं, तेन च तव दुर्गतिपातो निश्चितं भविता, त्वया
सिद्धांताशातना कृता, अनेन पापेन च तव संसारे भूरिभ्रमणं भविष्यति. सिद्धसेनोऽवक् स्वामि·

न्! मौढ्यान्मयेदृशं जल्पितं भूरिदुःखसंततिदायकं, तेनाधुना मम योग्यं प्रायश्चित्तं विश्राणय? गुरुराह तवात्यंतं पापं लग्नं, तीव्रतपश्च भवादृशां दातुं न शक्यते, अतोऽवधूतवेषेण यदि त्वं द्वादशाब्दिकां स्थित्वा प्रांते प्रौढं नृपं बोधयित्वा नवीनं तीर्थं च पालयिष्यसि, तदा ते पापाच्छुट्नं भविष्यति, गुरोरेतद्वाक्यं श्रुत्वा सिद्धसेनो वेषपरावृत्तिं कृत्वा कृतावधूतवेषः स्थाने स्थाने भ्रमन् मेदिनीं प्रतिबोधयति, इत्यादि द्वादशवार्षिको विहारो ग्रंथांतरादवसेयः. अथ प्रस्तुतमेवाह—विक्रमादित्येन राज्ञा विक्रमचरित्रपुत्रस्य बहवः कन्यकाः परिणायिताः. कुमारस्ताभिः समं दोगुंदकदेव इव वैषयिकं सुखं भेजे.

एवं विक्रमादित्यस्य देवराज इव राज्यं कुर्वतो दिनानि यांतिस्म. अथ सिद्धसेनो दिवाकरो गुरूपदिष्टं प्रायश्चित्तं कुर्वन् द्वादशवर्षाण्यवधूतवेषेण भ्रांत्वा भ्रांत्वा देशनया भव्यजीवान् प्रतिबोध्य द्वादशवर्षपर्यंते विक्रमार्कं नृपं कुयोगतो मिथ्यात्वग्रसितमाकर्ण्य तत्प्रतिबोधाय मालवनिर्वृतिं ययौ. तत्रावधूतवेषेण सिद्धसेनो गुरुर्महीपतेः प्रतिबोधायोज्जयिन्यां समायातः. तत्र महाकालेश्वरप्रासादे गत्वा निजौ चरणौ लिंगाभिमुखौ कृत्वा सूरीश्वरः सुप्तः. तं तथास्थितं वीक्ष्य देवपूजकः प्राह भो

महापुरुष त्वमुत्तिष्ट? एवं देवसन्मुखं शयनं नो क्रियते. एवं पुनः पुनः प्रोक्ते स यावन्नोत्तिष्ठति तावद्देवार्चको भूमीपतेः पार्श्वे गत्वा जगौ, स्वामिन्नेकः पुमानवधूतवेषधारक ईश्वरलिंगस्याभिमुखं पादौ दत्वा निश्चिंतं सुप्तोऽस्ति. राजा बभाषे भो देवार्चक! स यदि वचनेन न समुत्तिष्ठति तदा कंबादिभिराहत्य त्वया दूरतः कर्तव्यः. सोऽपि तत्र गत्वा भूरिशः कथयामास, तथापि यावता स नोत्तिष्ठति तावत्तेन कंबया हतः, तस्य कंबाप्रहारे दत्ते राज्ञोंतःपुरं कंबाभिस्ताड्यते, अंतःपुरपीडां ज्ञात्वा भूमिपतिर्भृशं दुःखपीडितो महाकालालयेऽभ्येत्य तमवधूतमिति जगाद, हे अवधूत! त्वं महेशं स्तुहि? एष स्तुतस्तव मोक्षं दास्यति, देवस्याशातनां मा विधेहि? एष कुपितस्तव पीडां करिष्यति, त्वमेनं महादेवं मा कोपय? तेनोक्तं हे महीपाल! एष देवो मम कृतां स्तुतिं न सहते, नृपः प्राह एष महादेवः सहिष्यति, गुरुराह हे राजन्नस्य स्तुत्या काचिद्विघ्नं भविष्यति, तदा भवता मनागपि मम दोषो न देयः, राज्ञोक्तं स्तुतिं कुरु? ततः सिद्धसेनो गुरुः पद्मासनस्थितो द्वात्रिंशद्द्वात्रिंशिकादिभिर्वीरजिनेश्वरमस्तवीत्, परं महावीरजिनेश्वराधिष्ठायको देवः कोऽपि नो प्रादुर्भूतः, तदा श्रीसिद्धसेनगुरुणा श्रीपार्श्वनाथस्य स्तुतिः समारब्धा ' कल्याणमंदिरमुदारमवद्यभेदीत्यादिः '

तत्र स्तोत्रे ' क्रोधस्त्वयेति ' त्रयोदशं काव्यं मंत्रगर्भितं सूरिर्यावद्व्यधात्तावत्ताल्लिंगं द्विधाभवत्. तन्मध्यात्पार्श्वजिनः प्रकटीबभूव, तत् श्रीपार्श्वबिंबं निर्गतं वीक्ष्य सूरिराट् प्राहायं देवो मदीयां स्तुतिमद्भुतां सहते, राज्ञोक्तं भगवन् कस्त्वं? किं चेदमद्भुतं दृश्यते? स ऊचेऽवधूतोऽहं वृद्धवादिनः सूरिमुख्यशिष्यः सिद्धसेनाभिधः केनचित्कारणेन गणाद्बहिर्निर्गतः पृथ्व्यां भ्रमन् भूरिदेशेषु भव्यान् प्रतिबोधयन्नस्मिन् पुरे समागतोऽस्मि, एतत् श्रीपार्श्वनाथस्य बिंबं धरणेंद्रादिगीर्वाणसेवितं वसुधातलान्निर्गतं, त्वमेनं देवं मोक्षदायकं सेवस्व? तथा त्वं मां किं नोपलक्षयसे? येन मया त्वं पूर्वं दिदृक्षुर्भिक्षुरायात इत्यादिश्लोकैः स्तुतस्तत्किं विस्मृतं? तां स्तुतिं श्लोकचतुष्टयमयीं स्मृतिमानय? ततः स्मृतिमागतः सिद्धसेनाचार्यो गुरुः, तं गुरुं नत्वाग्रे समुपविश्य स धर्मं शृणोति, गुरुस्तस्य प्रासादस्य प्रबंधं प्राह, अत्रावंतिसुकुमालकथा ग्रंथांतराद्वाच्या. तस्य पुत्रेण महाकालनाम्नैष प्रासादः कारितः, कालक्रमाद् द्विजैरत्र पार्वतीपतेर्लिंगं स्थापितं, अतो हे राजेंद्रैनं देवं भजस्व? यतः—

नीरागोऽसौ जिनो देवो । ददाति पदमव्ययं ॥ सुरासुरनराधीश—पदवीमपि सुंदरां ॥ १ ॥

सर्वज्ञो गतरागादि—दोषस्त्रैलोक्यपूजितः ॥ यथास्थितार्थवादी च । देवोऽर्हन् परमेश्वरः ॥ २ ॥

महाव्रतधरा धीरा । भैक्ष्यमात्रोपजीविनः ॥ सामायिकस्था धर्मोप—देशका गुरवो मताः ॥ ३ ॥ परिग्रहारंभमग्ना—स्तारयेयुः कथं परान् ॥ स्वयं दरिद्रो न पर—मीश्वरीकर्तुमीश्वरः ॥ ४ ॥ दुर्गतिप्रपतत्प्राणि—धारणाद्धर्म उच्यते ॥ संयमादिर्दशविधः । सर्वज्ञोक्तो विमुक्तये ॥ ५ ॥ इत्यादि सिद्धसेनगुरूदितं धर्ममाकर्ण्य विक्रमादित्यो राजा जिनधर्मरतो जातः, तेन राज्ञा सिद्धसेनाचार्यसमीपे श्रावकत्वं प्रपेदे, तस्मिन्महाकालप्रासादे नृपतिः श्रीपार्श्वजिनेशितुर्बिंबं स्थापयामास, आदरात् पूजयामास च.

तस्मिन्नेव दिने विक्रमार्को नृपतिस्तस्मिन् जिनालये देवपूजाकृते च ग्रामसहस्रं ददौ, द्वादशव्रतसंयुक्तं सम्यक्त्वं च ललौ, पुनः सिद्धसेनो गुरुः प्राह राजन् ! जिनैः श्रियश्चारुफलं दानमेव प्रोक्तं, श्रेयःसौख्यं यतो भवेत्, यतः—पश्चाद्दत्तं परैर्दत्तं । लभ्यते वा न लभ्यते ॥ स्वहस्तेन च यद्दत्तं । लभ्यते नात्र संशयः ॥ १ ॥ मामंस्थाः क्षीयते वित्तं । दीयमानं कदाचन ॥ कूपारामगवादीनां । ददतामेव संपदः ॥ २ ॥ पात्रे धर्मनिबंधनं तदितरे प्रोद्यद्दयाख्यापकं । मित्रे प्रीतिविवर्धकं रिपुजने वैरापहारक्षमं ॥ भृत्ये भक्तिभरावहं नरपतौ सन्मानपूजाप्रदं । भट्टादौ च यशस्करं

दद्ते स्वर्णरू-
वितरणं न काप्यहो निष्फलं ॥ ३ ॥ वर्षं यावज्जिनाः सर्वे । यथेष्टं दानमन्वहं ॥ दद्ते स्वर्णरू-
प्यादि । याचकेभ्यो मुखोदितं ॥ ४ ॥ अनृणां पृथिवीं सर्वां । कृत्वा सर्वे जिनेश्वराः ॥ दीक्षां ला-
त्वा ततः क्षीण—कर्माणो यांति निर्वृतिं ॥ ५ ॥ इत्यादि सिद्धसेनोक्तधर्मकथां श्रुत्वा राजा राज्यं
पालयन् जैनधर्मं चाराधयति, लोकानां च यथेप्सितं दानं ददाति, भूरिदानेन विक्रमादित्यो राजा
श्रीवीरजिनेश्वरसंवत्सरपरावर्तं कृत्वा निजसंवत्सरं चक्रे.

पुनरेकस्मिन् दिने विक्रमादित्यः सिद्धसेनगुरोः पार्श्वे धर्मं श्रोतुं समागात्, सूरिस्तस्मिन् ध-
र्मोपदेशे शत्रुंजयमाहात्म्यमब्रवीत्, यथा—यः श्रीशत्रुंजये तीर्थे । श्रीयुगादिजिनेश्वरं ॥ वंदते भ-
क्तितस्तस्या—नंतं पुण्यं प्रजायते ॥ १ ॥ शत्रुंजये कोटिगुणं । स्वभावस्पर्शने मतं ॥ मनोवचन-
कायानां । शुद्ध्यानंतगुणं भवेत् ॥ २ ॥ एकैकस्मिन् पदे दत्ते । शत्रुंजयगिरिंप्रति ॥ भवकोटिस-
हस्रेभ्यः । पातकेभ्यः प्रमुच्यते ॥ ३ ॥ वज्रलेपायितैः पापै—र्जंतुरत्यंतदुःखभाक् ॥ तावद्यावन्न सि-
द्धाद्रि—मधिरुह्य जिनं नमेत् ॥ ४ ॥ मयूरसर्पसिंहाद्या । हिंस्रा अप्यत्र पर्वते ॥ सिद्धाः सिद्ध्यंति
सेत्स्यंति । प्राणिनो जिनदर्शनात् ॥ ५ ॥ तेषां जन्म च वित्तं च । जीवितं सार्थकं च ये ॥ सि-

द्धक्षेत्राचलं यांति । परेषां व्यर्थमेव तत् ॥ ६ ॥ तीर्थानामुत्तमं तीर्थं । नगानामुत्तमो नगः ॥ क्षे-
त्राणामुत्तमं क्षेत्रं । सिद्धाद्रिः श्रीजिनैर्मतः ॥ ७ ॥ इत्यादि. पुराणेऽप्युक्तं—अष्टषष्टिषु तीर्थेषु ।
यात्राया यत्फलं भवेत् ॥ आदिनाथस्य देवस्य । स्मरणेनापि तद्भवेत् ॥ ८ ॥ स्पृष्ट्वा शत्रुंजयं ती-
र्थं । नत्वा रैवतकाचलं ॥ स्नात्वा गजपदे कुंडे । पुनर्जन्म न विद्यते ॥ ९ ॥ पल्योपमसहस्रं तु ।
ध्यानाल्लक्षमभिग्रहात ॥ दुःकर्म क्षीयते मार्गे । सागरोपमसंचितं ॥ १० ॥ यस्मिन् शत्रुंजये तीर्थे ।
सिद्धिसौख्यप्रदे सदा ॥ पुंडरीकादयोऽनेके । सिद्धा गणभृतः पुरा ॥ ११ ॥ यतः—चित्तस्स पु-
ण्णिमाए । समणाणं पंचकोडिपरिवरिओ ॥ सिद्धिगओ पुंडरिओ । जयउ तं पुंडरीयतित्थं ॥ १२ ॥
जत्थाइच्चजसाई—सगरंता रिसहवंसजनरिंदा ॥ सिद्धिं गया असंखा । जयउ तं पुंडरीयतित्थं ॥
॥ १३ ॥ जहिं रामाइ तिकोडी । इगनवइ नारया य मुणिलक्खा ॥ जाया उ सिद्धिराया । जय-
उ तं पुंडरीयतित्थं ॥ १४ ॥

एवं गुरूपदिष्टं श्रीशत्रुंजयमाहात्म्यं श्रुत्वा विक्रमादित्यः प्रोवाच हे भगवन्! भवदंतिके धर्मः
श्रुतः, अधुना शत्रुंजयतीर्थं नंतुं मे मनोरथो वर्तते. गुरुणोक्तं राजन् धर्मे मा प्रमादीः, श्रीगुर्वादे-

शमासाद्य विक्रमादित्यः श्रीसंघं मेलयामास. स्थाने स्थाने कुंकुमपत्रिकां प्रेष्य सर्वत्र च ज्ञापयामास. तेन संघेन सार्धं श्रीसिद्धसेनादिपंचशतसूरीशा ग्रंथांतरापेक्षया च पंचसहस्रसूरीशाः सत्क्रियाकलापकुशला जिनेश्वरं नंतुं चेलुः, एकोनसप्ततिशतं हेमदेवालयाश्चेलुः, शतत्रयमिता जनमनोहरा रूप्यदेवालयाश्चेलुः. पंचशतमिता दंतमया देवालयाश्चेलुः, अष्टादशशतकाष्ठमया देवालयाश्चेलुः, एका कोटिर्लक्षद्वयं नवशतानि रथानां, अष्टादशलक्षाणि वाजिनां, षट्सहस्राणि हस्तिनां च सह चेलुः. तथा—वेसरोष्ट्रवृषादीनां । मनुष्याणां च योषितां ॥ विक्रमादित्यभूपाल—संघसंख्या न विद्यते ॥ १ ॥ देवालयपताकास्थ—किंकिणीरुचिरक्कणाः ॥ रेणुराह्वयितुं सर्व—देशसंघजनानिव ॥ २ ॥ पीनस्कंधाः सदाकारा । नानाभूषणभूषिताः ॥ वहंति वृषभा देवा—लयान् कुंजरगामिनः ॥ ३ ॥ दिव्यरूपधराश्चारु—भूषणा हरिणेक्षणाः ॥ चतुःकोणस्थिता देवा—लये चामरपाणयः ॥ ४ ॥ गायंत्यो जिननाथस्य । गीतानि मधुरध्वनि ॥ लीलया चालयंतिस्म । चामराणि मनोहराः ॥ ५ ॥ एवं मार्गे चलन् ग्रामे ग्रामे स्नात्रपूजाध्वजादिभिः प्रभावनां च कुर्वन् विक्रमादित्यः शत्रुंजयोपांते ययौ. तत्रानर्गलं दानं ददन् जिनं नंतुं श्रीशत्रुंजयं पर्वतमारुरोह. तत्र स्ना-

त्पूजाध्वजारोपणादि सर्वं कार्यं कृत्वा स स्तुतिं चक्रे, यथा—सुरासुरमहीनाथ—मौलिमालानतक्र·
मं ॥ श्रीशत्रुंजयकोटीर—मणिं श्रीऋषभं स्तुवे ॥ १ ॥ विभो त्वत्पदराजीवं । ये सेवंते जनाः स·
दा ॥ सुरासुरनृपश्रेणि—र्भजते तान् सुभक्तितः ॥ २ ॥

इत्यादि जिनस्तुतिं कृत्वा हृष्टमानसोऽसौ यावता प्रासादं विलोकयति तावत्कुत्रापि किंचित्तं प्रासादं पतितं दृष्ट्वा नृपतिश्चिंतयति यदहं शत्रुंजयोद्धारं करोमि, तावता श्रीसिद्धसेनसूरिणोक्तं राजन्! श्रीजिननायकैर्नव्यप्रासादकारापणादुद्धारे द्विगुणं पुण्यं प्रोक्तं, यतः—प्रासादोद्धारकरणे । भूरिपुण्यं निगद्यते ॥ उद्धारान्न परं पुण्यं । विद्यते जिनशासने ॥ १ ॥ पुरात्र पर्वते चक्रे । प्रा·
सादं भरतो नृपः ॥ श्रीनाभेयजिनेशस्य । मणिस्वर्णमयं महत् ॥ २ ॥ अस्मिन्नेव महातीर्थे । प्रा·
सादमृषभप्रभोः ॥ कारयामास सगर—चक्रवर्ती द्वितीयकः ॥ ३ ॥ यतः—मणिरुप्पकणयपडिमं ।
जह रिसहचेईअं भरहविहिअं ॥ सदुवास जिणाययणं । सो विमलगिरी जयउ तित्थं ॥ ४ ॥
कयजिणपडिमुद्धारा । पांडवा जह वीसकोडीजुया ॥ मुत्तिनिलयंमि पत्ता । तं सित्तुंजयमहातित्थं
॥ ५ ॥ असंखा उद्धारा । असंखपडिमा चेईआ असंखा ॥ जहिं जाया जयउ तं । सिरिसित्तुं·

जयमहातिहं ॥ ६ ॥ पूर्वं बहुभिरुर्वीशै-र्महेभ्यैश्च स्वभावतः ॥ प्रासादाः कारिता अस्मिं-स्तीर्थे भूरिधनव्ययात् ॥ ७ ॥ एवं गुरूपदिष्टं श्रीशत्रुंजयोद्धारमहिमानं श्रुत्वा विक्रमादित्यो राजा सारकीरकाष्टमयं महत्प्रासादोद्धारं कारयामास. ततः श्रीविक्रमादित्यः शत्रुंजयाच्चलन् क्रमेण रैवतगिरौ श्रीनेमिनाथं नत्वा तत्रापि पूजास्नात्रध्वजारोपणोद्धारादि सर्वं तीर्थकार्यं कृत्वा जिनस्तुतिं करोतिस्म. अत्र श्रीनेमिनाथस्तवनं वाच्यं. एवं द्वयोस्तीर्थयोस्तदा यात्रां कृत्वा प्रत्यावृत्तो गृहाभिमुखं समागच्छन्मार्गे यथेष्टं याचकेभ्यो दानं वितरन् स महामहेनावंतीं पुरीं समागात्. तद्दिनादारभ्य श्रीसिद्धसेनगुरोः पार्श्वे प्रत्यहं धर्मकथां शृण्वन् विक्रमादित्यो राजा धर्मकार्येण मनुजजन्म सफलीकरोतिस्म. साहसिकाग्रणी राजा विक्रमार्को न्यायमार्गेण पृथ्वीं पालयन्नत्यंतं दानधर्मतत्परो बभूव. कृपावान् स नृपालश्च दीनानाथेभ्यो दीनारसहस्रादि दापयामास.

एकस्मिन् दिने स कोशाध्यक्षं समाकार्योवाच, भो कोशाध्यक्ष! त्वयेदं प्रदातव्यं, तथाहि—आर्त्ते दर्शनमागते दशशती संभाषिते चायुतं । यद्वाचा च हसेऽहमाशु भवता लक्षोऽस्य विश्राण्यतां ॥ निष्काणां परितोषते मम पुनः कोटिं ममाज्ञा परा । कोशाधीश सदेति विक्रमनृपश्चक्रे

तदानीं स्थितिं ॥ १ ॥ मंडितो विक्रमार्केण । दानपुण्योत्सवस्तदा ॥ निमंत्रिता जना एयु—र्भूरिशः स्वस्वदेशतः ॥ २ ॥ राज्ञा तस्मिन् समयेऽष्टादश प्रजा राजकररहिताः कृताः, तत् श्रुत्वा तुष्टोऽब्धिदेवो भट्टं प्रत्याह भो भट्ट! इदं रत्नचतुष्कं गृहाण? अस्मन्मित्राय विक्रमार्काय च दातव्यं, एतेषां रत्नानां प्रभावश्च कथनीयः, यथा—आद्यं वित्तौघदं ज्ञेयं । द्वितीयं भोज्यदं तथा ॥ तृतीयं सैन्यदं तुर्यं । सर्वभूषणदायकं ॥ १ ॥ तान्यादाय विप्रो नृपांतिके गतः, नृपं च प्राह, राजेंद्र! एतानि चत्वार्यपि रत्नान्यब्धिदेवेन प्रेषितानि तव कीर्तिं श्रुत्वा तुष्टेन, ततस्तेषां महिमानमुक्त्वा स तानि राज्ञः करे ददौ. राजा प्राह भो विप्र! यत्तव रोचते तदेकं रत्नं त्वं गृहाण? विप्रः प्राह गृहे गत्वा स्वं कुटुंबं पृष्ट्वा याचिष्ये. राज्ञोक्तं त्वं स्वगृहे याहि? स गतो गृहे, स्वकुटुंबाग्रे च तेन सर्वं प्रोक्तं, तदा कुटुंबेनोक्तं यथा—पुत्रः सैन्यदायकं मणिं ययाचे, भार्या भोज्यदायकं, स्नुषा भूषणदायकं, विप्रश्च द्रव्यदायकं ययाचे, एवं तेषां चतुर्णां कलहो लग्नः, विप्रेणागत्य राज्ञोऽग्रे प्रोक्तं, तुष्टेन राज्ञा तानि चत्वार्यपि रत्नानि तेषां प्रदत्तानि. एवं श्रीविक्रमादित्योऽर्थिभ्यो दानं ददद्विख्यातोऽभूत्. विक्रमादित्यस्य राज्ञः शतवर्षांते पूर्णप्रायपुण्येऽन्यदा विक्रमादित्यस्य शत्रुः प्रतिष्ठा-

नपुरे चतुरंगसेनासमन्वितो विद्यामंत्रबलिष्टः शालिवाहननामा राजा प्रकटीबभूव, स एकदा समागत्य विक्रमार्कस्य कतिचिद् ग्रामान् हत्वा पुनर्निजं नगरं जगाम, एतत्स्वरूपं वीक्ष्य भट्टमात्रो मंत्री जगौ, हे स्वामिन्! शालिवाहननृपतिर्भवतो ग्रामान् हत्वा याति, एतत्सुंदरं न दृश्यते, अतः कटकं कृत्वा तत्र गम्यते, तं च वशीकृत्य सेवकीक्रियते, सति सामर्थ्येऽन्यपराभवं को मर्त्यः सहते, यतः—न्यक्कारं सहते सिंहो—ऽन्येषां नैव कदाचन ॥ पराभवं सहंते तु । शृगालाः कातराशयाः ॥ १ ॥ नृपः प्राह भो मंत्रीश! त्वया सत्यं प्रोक्तं, परं भूभुज उपायानां चतुष्केण कार्यं कुर्वंति, यदि साम्ना कार्यं सिध्यति तर्हि किं क्रियते दाम्ना, दाम्ना यदि कार्यं सिध्येत तदा भेदेन, यदा भेदेन कार्यं सिध्येत तदा दंडेन किं क्रियते? पुनर्मंत्री भट्टमात्रो जगौ स्वामिंस्तर्हि तत्र दूतः प्रथमं प्रेष्यते, ततः शालिवाहनो यदा दूतवचनं न मन्यते तदा तं विजेतुमुपक्रमः क्रियते.

एवं विमृश्य महीशेन रिपुंप्रति प्रेषितो दूतः प्रतिष्ठानपुरे शालिवाहनसंसदि गत्वा विक्रमार्कनृपोदितमिति जगाद, हे शालिवाहननृपते! त्वयैतद्वरं न कृतं, यत्त्वया विक्रमार्कस्य ग्रामा भग्नाः, अथ तत्रागत्य तस्य नृपस्य सांप्रतं मिलित्वा स्वापराधं क्षम्यतां? अन्यथा सांप्रतं त्वां विजेतुं वि-

क्रमादित्यो राट् समेष्यति. दूतस्यैतद्वाक्यं श्रुत्वा शालिवाहनो राजा भृकुटीं कृत्वा बभाषे, भो दूत! भवतः स्वाम्यागच्छतु, अहमपि सैन्यसमेतो विक्रमार्केण सह युद्धाय समेष्यामि, त्वं याहि स्वस्थानं? दूतत्वादवध्योऽसीति मुक्तः. ततो दूतो विक्रमार्कनृपोपांते गत्वा शालिवाहनवाचिकं सर्वं समाचख्यौ, राजन्नेष तवाज्ञां न मन्यते, भवता सह युद्धाय च सज्जो जातः, अग्र यत्कर्तव्यं तत्कुरुष्व? दूतोक्त श्रुत्वा कुपितो विक्रमादित्यः सैन्यं सज्जीकृत्य सेवकेभ्यो भूयसीं लक्ष्मीं मार्गे ददानः शालिवाहनं विजेतुं प्रतिष्ठानपुरंप्रत्यचालीत्, शालिवाहनोऽपि सैन्यसमेतः सन्मुखमागात्, ततस्ते द्वे अपि सैन्ये मिलिते, ततस्तयोः परस्परं संग्रामो बभूव, यथा—अनेकमत्तमातंग—वाजिवीरविराजितं ॥ अंतरा मिलितं सैन्यं । द्वयोर्भूमिभुजोस्तदा ॥ १ ॥ रथी च रथिना सार्धं । सादी च सादिना सह पदिकाः पदिकैः सार्धं । निषादिनो निषादिभिः ॥ २ ॥ खड्गी च खड्गिना सार्धं । कुंती च कुंतिना सह ॥ वर्मिता वर्मितैः सार्धं । तूणी च तूणिना सह ॥ ३ ॥ शाक्तीकेनाथ शाक्तीकः । पत्री च पत्रिणा समं ॥ बाणिको बाणिना सार्धं । दांभिकेन च दांभिकः ॥ ४ ॥ इत्यादि तयोर्द्वयोर्बलयोर्बाढं दारुणः संग्रामो बभूव, यं दृष्टुं स्वर्गतो देवा अपि समागमन्. एवं तयोर्द्वयोः सैन्ययोर्युद्धे

जायमाने पुण्यक्षयादायुष्यक्षयाच्च विक्रमार्कवक्षसि शालिवाहनेन राज्ञा मुक्तस्तीक्ष्णो बाणो लग्नः, यतः—क्वचिद्वीणानादः क्वचिदपि च हाहेति रुदितं । क्वचिद्विद्वद्गोष्टिः क्वचिदपि सुरामत्तकलहः ॥ क्वचिद्रम्या रामा क्वचिदपि च जराजर्जरवपु—र्न जाने संसारः किममृतमयः किं विषमयः ॥१॥ कुमुदवनमपश्रि श्रीमदंभोजखंडं । त्यजति मुदमुलूकः प्रीतिमांश्चक्रवाकः ॥ उदयमहिमरश्मिर्याति शीतांशुरस्तं । हतविधिललितानां ही विचित्रो विपाकः ॥ २ ॥ तदानीं चमूमध्ये हाहाकारो जज्ञे, अहो विधिना किमकार्यं कृतं यदीदृशा राजान एवं पीड्यंते, तावद्भट्टमात्रादयो मंत्रिमुख्याः प्रोचुः, स्वामिन्नार्तध्यानं न कर्तव्यं, यतो दुर्ध्यानेन जीवाः कुगतिं लभंते, ततः श्रीविक्रमादित्यः शुभध्यानपरायणः पंचनमस्कारं ध्यायन् संस्थितस्तदैव स्वर्गसुखं प्राप, यतः—

तावच्चंद्रबलं ततो ग्रहबलं ताराबलं भूबलं । मुद्रामंडलमंत्रतंत्रमहिमा तावत्कृतं पौरुषं ॥ तावत् सिध्यति वांछितार्थमखिलं तावज्जनः सज्जनो । यावत्पुण्यमिदं नृणां विजयते पुण्यक्षये क्षीयते ॥ ॥ १ ॥ यस्मिन् देशे यदा काले । यन्मुहूर्ते च यद्दिने ॥ हानिर्वृद्धिर्यशोलाभ—स्तत्तथा न तदन्यथा ॥ २ ॥ अहो विरोधो दुःखकारणं! तस्मात्कारणाद्विरोधो न कर्तव्यः. अथ विक्रमचरित्रो

द्वितीयवासरे प्रभातसमये शालिवाहनेन समं रणं कर्तुं प्रवृत्तः, श्रीविक्रमचरित्रेण शालिवाहनो रणे भग्नः, ततस्तस्य सैनिकाश्च प्रतिदिशं नष्टाः, ततः शालिवाहनो राजा विक्रमादित्यपुत्रेण विक्रमचरित्रेण सह मेलं कृत्वा नत्वा च स्वे नगरे प्रतिष्ठानपुरे समागात, श्रीविक्रमचरित्रो लब्धजयो निजपुर्यामवंत्यां समागतः. परं विक्रमचरित्रः पितुर्मरणजं दुःखं हृदयान्न मुमोच. अथ सिद्धसेनो गुरुस्तत्रागत्य शोकच्छिदे विक्रमार्कसुतंप्रत्येवमुपदेशं ददौ, यथा—धर्मशोकभयाहार—निद्राकामकलिक्रुधः ॥ यावन्मात्रा विधीयंते । तावन्मात्रा भवंत्यमी ॥ १ ॥ तिच्छयरा गणहारी । सुरवइणो चक्किकेसवा रामा ॥ अवहरिया हयविहीणा । अवरजीवाण का वत्ता ॥ २ ॥ वज्रकायशरीराणामर्हतां यदनित्यता ॥ कदलीगर्भसारेषु । का कथा शेषजंतुषु ॥३॥ अहो राजन्! येन शत्रुंजयादितीर्थेषु यात्रा कृता, येनानेके प्रासादाः कारिताः, येन पृथ्व्यनृणीकृता, तस्य शोकः कथं भवेत? तथा—भुक्त्वा स्वर्गसुखं च्युत्वा । ततो विक्रमभानुमान ॥ स्तोकैरेव भवैर्मोक्ष—सौख्यमादर्शयिष्यति ॥ १ ॥ इत्यादि गुरोर्वाक्यं श्रुत्वा विक्रमचरित्रो विक्रमादित्यपुत्रो द्रुतं शोकं मुक्त्वा पितुर्मृत्युकृत्यं व्यधात. ततः सुमुहूर्ते सुदिवसे सुलग्नयोगे विक्रमादित्यपुत्रस्य विक्रमचरित्रस्य मंत्रिभी रा-

ज्यं दत्तं, यावता तं नृपं तस्मिन् सिंहासने मंत्रिणो न्यसंति, तावत्सिंहासनस्था द्वात्रिंशत्पुत्रिका दिव्यानुज्ञावतः प्रोचुः, भो भो मंत्रिमुख्या अस्मिन् विक्रमादित्यसिंहासनेऽस्योपवेशने योग्यता नास्ति, यो विक्रमादित्यतुल्यो दानेन शीलेन च भवति सोऽस्मिन् विष्टरे समुपविशति. मंत्रिभिरुक्तं तर्ह्यस्य सिंहासनस्य का गतिः? ताः प्रोचुरधुना विष्टरं भूमौ स्थापयंतु. ततो मंत्रिभिः तत्सिंहासनं भूमौ स्थापितं, विक्रमचरित्रश्च राज्यं करोति. ' अईणदाणमुहरकविअण ' इति गाथार्थो निरूपितः. एवं श्रीविक्रमादित्यो । दत्वा दानं मनोहरं ॥ बभूव भुवि विख्यातो । वर्णितो कविकोटिभिः ॥ १ ॥ इति श्रीविक्रमादित्यदानकथानकं समाप्तं. ॥ अथ सांवत्सरिकमहादानमाह—

॥ मूलम् ॥—तिअलोअबंधवेहिं । तब्भवचरिमेहिं जिणवरिंदेहिं ॥ कयकिच्चेहिंवि दिन्नं । संवच्छरियं महादाणं ॥ १६ ॥ व्याख्या—त्रैलोक्यबांधवैः, ' तब्भवचरिमेहिं ' स एव भवश्चरमो येषां ते तद्भवचरमास्तैर्जिनवरेंद्रैस्तीर्थकृद्भिः, पुनः कीदृशैः? कृतकृत्यैरपि, मुक्तिगमनाद्यवधारणात्, कृतं निष्पन्नं कृत्यं येषां ते तथा तैः, ' दिन्नं ' दत्तं सांवत्सरिकं वार्षिकं ' महादाणं ' महादानं, तस्य दानस्य सर्वोत्कृष्टत्वात्, यतः—एगा हिरणकोडी । अठेवयणूणगा सयसहस्सा ॥ सूरोदयमाई-

यं । दिज्जइजा पायरासाउ ॥ १ ॥ वरह वरं वरह वरं । इह घोसिज्जइ महंतसद्देणं ॥ पुरतिअ-चउक्कचच्चर—रच्छारायप्पहाईसु ॥ २ ॥ जो जं वरेइ तं तस्स । दिज्जइ हेमवत्थमाईयं ॥ विअरंति तह तिअसा । सक्काएसेण सव्वंपि ॥ ३ ॥ तिन्नेव य कोडीसया । अठासिअं च हुंति कोडीउ ॥ असियं च सयसहस्सा । एयं संवच्छरे दिन्नं ॥ ४ ॥ एतद्दानं सर्वैरपि जिनैर्दत्तमिति गाथार्थः ॥ ॥ १६ ॥ अस्यामवसर्पिण्यां प्रथमं प्रासुकदानदातारमुपदर्शयति—

॥ मूलम् ॥—सिरिसेअंस कुमारो । निस्सेअससामिउ कह न होइ ॥ फासुयदाणपवाहो । पयासिउ जेण भरहंमि ॥ १७ ॥ व्याख्या—श्रीश्रेयांसकुमारः श्रीऋषभदेवस्वामिपुत्रबाहुबलिस्त-त्पौत्रः, 'निस्सेयससामिउत्ति' निःश्रेयसस्वामिकः, अर्थान्मोक्षगतिगंता कथं न भवति? अपि तु भवत्येव, 'फासुअत्ति' प्रासुकदानप्रवाहः, 'पयासिउत्ति' प्रकाशितो येन श्रेयांसेन 'भरह-म्मित्ति' भरतक्षेत्रे, इति गाथार्थः. ॥ १७ ॥ व्यासार्थस्तु कथानकादवधार्यस्तच्चेदं —

कुरुजनपदे गजपुरनगरे ऋषभदेवपुत्रो बाहुबलिः, तत्पुत्रः सोमप्रभः, तत्पुत्रः श्रेयांसः, स च पित्रा युवराजपदे स्थापितः, तेन श्रेयांसेन स्वप्ने मेरुपर्वतः श्यामवर्णो दृष्टः, ततो मया सोऽमृतक-

लशेनाभिषिक्तोऽतीव शोभितवान्. तत्रैव सुबुद्धिश्रेष्टिना स्वप्नो दृष्टः, सूर्यमंडलात स्रस्तं किरणसहस्रं श्रेयांसेन तत्र पुनर्योजितं, तेनाधिकतरं स च संपूर्णो जातः, राज्ञापि पुनस्तत्र स्वप्नो लब्धः, यथा कश्चिदेको महान् पुरुषो महता रिपुबलेन सह युद्धं कुर्वाणः श्रेयांससहायाज्जयी जातः, एते त्रयोऽपि प्रातरंतःसन्नं संभूय परस्परं निजं निजं स्वप्नं निवेदयंतिस्म, न पुनस्ते जानंति किं भविष्यतीति. तदानीं राज्ञोक्तं श्रेयांसकुमारस्य कोऽपि महान् लाभो भविष्यतीति निर्णीय विसर्जितायां पर्षदि श्रेयांसोऽपि स्वभवने गत्वा गवाक्षे यावदुपविष्टोऽवलोकते, तावत स्वामी न किंचिद्गृह्णातीति जनोत्कलिकाकोलाहलमाकर्णोन्नितः, स्वामिनं प्रविशंतं प्रेक्षमाणश्चिंतयति, मया क्वापीदृशं नेपथ्यं दृष्टपूर्वं यादृशं मे पितामहस्येति जातिमस्मार्षीत्, अहोऽहं भगवतः पूर्वभवे सारथिस्तेन समं तीर्थंकरसमीपे प्रव्रज्यामासवान्, तत्र वज्रसेनेन तीर्थकृता कथितमासीद्यदयं वज्रनाभो भरतक्षेत्रे प्रथमस्तीर्थकृद्भावीति, स एष भगवान्. तदानीमेव तस्यैको मनुष्यः प्रधानेक्षुरसकुंभेन सहागत आसीत्, तमेवेक्षुरसकुंभमादायोपस्थितः श्रेयांसो भणति भगवन्! गृहाण योग्यामिमामीक्षुरसभिक्षां? प्रसारय पाणिं? निस्तारय च मामिति, कल्पते इति कृत्वा स्वामिनापि पाणी प्रसारितौ, निःस्पृहश्च

तेन सर्वोऽपि रसः, न चात्र बिंदुरप्यधः क्षरति, किंतूपरि शिखा परिवर्धते, यतः—माइज्ज घडसहस्सं । अहवा मायंति सागरा सव्वे ॥ जस्सेआरिसलद्धी । सो पाणिपडिग्गही होइ ॥ १ ॥ अत्र करविघटना—स्वाम्याह दक्षिणं हस्तं । कथं भिक्षां न लासि भोः ॥ स प्राह दातृहस्तस्या—धो भवामि कथं यतः ॥ १ ॥ पूजाभोजनदानशांतिककलापाणिग्रहस्थापना—चोक्षप्रेक्षणहस्तकार्पणमुखव्यापारबद्धस्त्वहं ॥ इत्युक्त्वा दक्षिणे करे स्थिते वामो ब्रूते—वामोऽहं रणसंमुखांकगणना वामांगशय्यादिकृद् । द्यूतादिव्यसनी त्वसौ स तु जगौ चोक्षोऽस्मि न त्वं शुचिः ॥ २ ॥ ततः—राज्यश्रीर्भवतार्जितार्थिनिवहस्त्यागैः कृतार्थीकृतः । संतुष्टोऽस्मि गृहाण दानमधुना तन्वन् दयां दानिषु ॥ इत्यब्दं प्रतिबोध्य दक्षिणकरं श्रेयांसतोऽकारय—त्तत्यग्रेक्षुरसेन पूर्णमृषभः पायात्स वः श्रीजिनः ॥ ३ ॥ श्रेयांसस्य दानावसरे यज्जातं तन्निशम्यतां—

नेत्रांबुधारा वाग्दुग्ध—धारा धारा रसस्य च ॥ स्पर्धया वर्धयामासुः । श्रीधर्मद्रुं तदाशये ॥४॥

ततस्तेन भगवान् सांवत्सरिकतपःपारणं कृतवान्, तत्र पंच दिव्यानि प्रादुर्भूतानि, तद्यथा—वसुधारावृष्टिः १, चेलोत्क्षेपः २, व्योम्नि देवदुंदुभिः ३, गंधोदककुसुमवृष्टिः ४, आकाशेऽहो दानमिति घो-

षणं चेति. ५. तत्र वसुधाराप्रमाणं यथा—अद्धतेरसकोडी । उक्कोसा तह होइ वसुहारा ॥ अद्धतेरसलक्खा । जहन्निया होइ वसुहारा ॥ १ ॥ ततो देवसन्निपातं दृष्ट्वा राजप्रमुखोऽखिलोऽपि लोकस्ते च तापसाः श्रेयांसभवनमुपागताः, तान् श्रेयांसः प्रतिपादयति यथा, भो जनाः! सद्गतिलिप्सयैवं भिक्षा प्रदीयते. लोकः पृच्छति कथं भवता ज्ञातं? यत्स्वामिन एवं भिक्षा प्रदीयते. सोऽवक् जातिस्मृत्या, मम तु स्वामिना सहाष्टभवसंबंधः पूर्वमासीत्, कौतुकाज्जनः पृच्छति, के तेऽष्टौ भवाः? श्रेयांस आह यदा स्वामीशाने ललितांगनामा देवस्तदानीमहं स्वयंप्रभानाम्नी तस्य देव्यभवं १. ततः पूर्वविदेहे पुष्कलावतीविजये लोहार्गले नगरे भगवान् वज्रजंघस्तदानीमहं श्रीमतीभार्याभवं २. तत उत्तरकुरौ भगवान् युगलिकोऽहं च युगलिन्यभवं ३. ततः सौधर्मे द्वावपि मित्रदेवौ जातौ ४. ततो भगवानपरविदेहे वैद्यपुत्रः, अहं च तदा जीर्णश्रेष्ठिपुत्रः केशवनामा मित्रमभवं ५. तत आवामच्युतकल्पे देवौ जातौ ६. ततः पुंडरीकिण्यां भगवान् वज्रनाभराडहं च सारथ्यभवं ७. ततः सर्वार्थसिद्धिविमाने स्वामिना सहाहं देवो जातः ८. इह पुनरहं भगवतः प्रपौत्र इति. तेषां च स्वप्नानामिदं फलं यद्भगवता भिक्षा दत्तेति.

एवं च श्रुत्वा सर्वोऽपि जनः साधुभ्यः प्राशुकदानं ददाति. यतः—भुवणं जसेण नयवं । र-
सेण नवणं धणेण पडिहह्रो ॥ अप्पा निरुवमसुक्खे । सुपत्तदाणं महग्घविअं ॥ १ ॥ रिसहेससमं
पत्तं । निरवज्जं इरकुरससमं दाणं ॥ सेअंससमो नावो । हविज्ज जइ मग्गिअं हुज्जा ॥ २ ॥
इत्यादि वचोभिरभिनंद्य सर्वोऽपि जनः स्वस्थानं गतः. श्रेयांसोऽपि यत्र स्थितो नगवान् प्रतिला-
भितस्तत्स्थानस्य पादैराक्रमणं मा नवत्विति भक्त्या रत्नपीठं कारयित्वोनय ध्यं पूजयति, विशेषतः
प्रातःकाले पूजयित्वैव भुंक्ते. लोको पृच्छति किमेतकं? श्रेयांस आह आदिकरमंडलकं. ततो लो-
केनापि यत्र यत्र नगवान् स्थितस्तत्र तत्र पीठं कृतं. कालेन तस्यादित्यपीठ इति संज्ञा जाता. एवं
श्रीश्रेयांसेन नरतक्षेत्रे प्राशुकदानप्रवाहः प्रकाशित इति. इष्टं श्रेयांसतो दानं । प्रवृत्तं प्राशुकं पुरा
॥ अस्मिन् नरतभूनागे । देयं नो नविका मुदा ॥ १ ॥ इति श्रीश्रेयांसकथानकं समाप्तं ॥ जिन-
वरेभ्यः प्राशुकदानफलमाह—

॥ मूलम् ॥—कह सा न पसंसिज्जइ । चंदनबाला जिणिंददाणेणं ॥ छम्मासिअतवतविओ
। निव्वविओ जीइ वीरजिणो ॥ १७ ॥ व्याख्या—सा चंदनबालानाम्नी दधिवाहनपुत्री जिनेंद्रदाने-

न कथं न प्रशस्यते? अपितु प्रशस्यते एव, सा का? यथा श्रीवीरजिनो ' निव्वविअत्ति ' निर्वापितः शीतलीकृतः कुल्माषदानेन. कथंभूतो वीरजिनः? ' छम्मासिअत्ति ' पंचदिनोनषाण्मासिकतपसा तप्त इति गाथार्थः. व्यासार्थस्तु कथानकादवसेयः, तच्चेदं—

स्वामी श्रीवीरो दीक्षादिनादारभ्य द्वादशे वर्षे मह्यां विहरन् कौशांबीं नगरीं समाययौ. तस्यां नगर्यां परानीकभयंकरः शतानीको नाम राजास्ति, तद्राज्ञी चेटकोर्वीशदुहिता मृगावतीनाम्न्यस्ति. सा परमश्राविका जिनाज्ञापालनतत्परा च वर्तते. तस्य राज्ञः सुगुप्तनामा सचिवः, तस्य प्रिया सुनंदा, सा मृगावतीराज्ञ्याः सखी श्राविका च वर्तते. तस्यां नगर्यां धनावहनामा श्रेष्ठी, मूलेतिनाम्नी च तस्य प्रियास्ति. तत्र स्वामी पौषमासबहुलपक्षप्रतिपद्दिने दुराचारं दुर्ग्रहं चाभिग्रहं जग्राह. यथा—काचिद्राजकन्यकाष्टमपारणे १ अयोनिगडबद्धांघ्रियुगला २ मुंडितमस्तका ३ रुदंती ४ प्रेष्यतां गता ५ देहल्यंतःस्थितैकपादा ६ बहिःक्षिप्तद्वितीयपादा ७ निवृत्तेषु सर्वभिक्षाचरेषु ८ सूर्पकोणके स्थितान् ९ कुल्माषान् १० यदि प्रदास्यति तदाहं पारणं करिष्ये, नान्यथेत्यभिग्रहं कृत्वा प्रतिदिनमुच्चावचेषु गेहेषु भिक्षार्थं परिभ्रमति, अभिग्रहवशाच्च लोकैर्दीयमानां भिक्षां न गृह्णाति, पौराश्च ता-

म्यंति. अनाप्तभिक्षः स्वाम्येवं द्वाविंशतिपरीषहान् सहमानश्चतुरो मासांश्चतुःप्रहरानिव निर्गमयामास. स्वाम्येकदा भिक्षार्थं भ्रमन् सुगुप्तामात्यवेश्मनि विवेश. श्रेष्ठीपत्नी नंदानाम्नी प्रवरानंदपूरिता प्रवरासनात् समुत्थाय स्वाम्यग्रे कल्पनीयभोज्यानि पुरो मुक्त्वा न्यमंत्रयत्, स्वामिन् शुद्धां भिक्षामिमां गृहाण? स्वाम्यभिग्रहवशात्तान्यनादाय तद्गृहान्निर्ययौ, धिगरे मंदभाग्यास्मि, न पूर्णो मे मनोरथः, इति खेदमापन्नां मंदमानसां नंदां दृष्ट्वा तस्या दास्य ऊचुः, हे स्वामिनि! देवार्यो भगवानेवं दिने दिनेऽनात्तभिक्षः प्रत्यहं निर्याति, न त्वद्यैव निर्गतः. एवमाकर्ण्य सा नंदैवमचिंतयत्, स्वामिना निश्चयेन कश्चिदभिग्रहो गृहीतः. स्वामिनोऽभिग्रहः कथं ज्ञेय इति चिंतया सा नंदा निरानंदा सुगुप्तमंत्रिणा ददृशे. पृष्टं मंत्रिणा, भो सुंदरि! त्वं किं निरानंदाद्य दृश्यसे? किं ते दुःखस्य कारणं? तयोक्तं वीरो भगवान् भिक्षार्थी अनात्तभिक्षः प्रत्यहमायाति याति च, तन्नूनं तेन कश्चिदभिग्रहः कृतो विद्यते, स कथं ज्ञास्यत इति मम मनसि चिंता वर्तते. सुगुप्तो जगाद हे प्रिये! प्रातस्तथा यतिष्ये यथा जगद्भर्तुरभिग्रहो ज्ञास्यते. एवं तयोर्वार्तां कुर्वतोर्मृगावत्याः पट्टराज्या वेत्रिणी विजयाह्वया तत्रागता. तयोस्तमालापं श्रुत्वा देव्यग्रे गत्वा तत्पूर्वोक्तं सर्वं शशंस. तत श्रु-

त्वा मृगावत्यपि तथैव खेदं विदधे. शतानीकोऽपि मृगावत्याः खेदकारणमपृच्छत्. किंचिदुन्नमितभ्रूका मृगावती व्याजहार, हे राजन्! भूभुजश्चैः सर्वं चराचरं जगज्जानंति, त्वं तु सुखसागरनिमग्नः स्वपत्तनस्यापि स्वरूपं न वेत्सि. त्रैलोक्यपूज्यो भगवान् श्रीमन्महावीरः प्रत्यहं भिक्षार्थं भ्रमति, परं शुद्धमप्यन्नं न गृह्णाति, तन्नूनं तस्य कश्चिदभिग्रहो वर्तते, राजंस्त्वं तु सुखलालसः किमपि न जानासि. अथ तथा कुरु यथा स्वाम्यभिग्रहः पूर्णीभवति. राजा चिंतयति धिग्मां, धिग्ममामात्यादीन्, यत्परमेश्वरः श्रीमन्महावीरः कृताभिग्रहः प्रमादतो न ज्ञातः. भूयोऽपि राजा प्रत्यभाषिष्ट, हे शुभाशये! एषोऽहं प्रमादी त्वया शिक्षितोऽस्मि, हे धर्मविचक्षणे! प्रातः प्रभोरभिग्रहं विज्ञाय पारणं कारयिष्यामि, इत्युक्त्वा राजा सचिवमाह्वयत्, समागतो मंत्री, ततो नृपतिरमात्यमूचे, भो मंत्रिन्! मत्पुरे त्रिजगद्गुरुः श्रीवीरोऽनात्तभिक्षश्चतुरो मासांस्तस्थौ, परं न ज्ञातोऽस्याभिग्रहोऽस्माभिः, अथ यथा ज्ञायते तथा कुरु? अमात्येनोक्तं भर्तुरभिग्रहो न ज्ञायते, ततो राजा तथ्यवादिनमुपाध्यायं नैमित्तिकमित्रमाह्वयत्, उक्तं च हे महामते! सर्वधर्माणामाचाराः शास्त्रे वर्तते. त्वं तु शास्त्रज्ञोऽसि, अतो भर्तुरभिग्रहं शास्त्रेणावलोक्य सत्यं समाख्याहि? तदानीमुपाध्यायोऽप्यभाषिष्ट, रा-

जन्न! महर्षीणां द्रव्यक्षेत्रकालभावभेदतो बहवोऽभिग्रहाः संति, अतः स्वामिनापि कश्चिदभिग्रहो गृहीतः संभाव्यते, परं विशिष्टज्ञानिनं विना तन्न ज्ञायते, यावत्कश्चिद्विशिष्टज्ञानी नायाति तावदस्मिन्नगरेऽभिग्रहपूरणार्थं बहव उपायाः क्रियंतां? ततोऽभिग्रहपूरणार्थं नृपाज्ञया लोको बहूनुपायान् करोति, यथा—काचि ायका हास्यं कुर्वाणा करे मोदकं कृत्वा स्वामिनं प्रतिलाभयति, तथापि स्वामी तदन्नं नादत्ते, एवं काचिद्रोदनं कुर्वाणा, काचिन्नृत्यं कुर्वाणा. काचित्पुत्रसंयुक्ता, काचिद्भर्तृसंयुक्ता, काचिदुद्घाटितमस्तका, एवमनेकप्रकारैर्दानं ददाति, तथापि स्वामी किंचिदपि नादत्ते, अत्युत्कटभीषणाभिग्रहवशात, तथाप्यम्लानांगो भगवान् विशुद्धध्यानभाग्महयां विचरतिस्म.

इतश्च तन्नगरनायकः शतानीको राजा सह सैन्यैर्निशि चंपां पुरीं कंपापातेनेव समागत्यारुणात, ततश्चंपापतिर्दधिवाहनो बलीयसा रुद्धं स्वं ज्ञात्वा सकुटुंबः पलायिष्टः, यतो बलीयसा रुद्धानां पलायनादन्यत्र त्राणं नास्ति, ततस्तन्नगरं शतानीकसैन्येन लुंटितं, तस्मिन् नमये दधिवाहनराजपट्टराज्ञी धारिणी वसुमत्या पुत्र्या सममेकेनौष्ट्रिकेन नश्यंती गृहीता, कृतकृत्यः शतानीकोऽप्यनीकैः परिवृतः पुनः कौशांबीं समाजगाम, सोऽप्यौष्ट्रिको धारिण्या देव्या रूपेण मोहितो मार्गे

धारिण्या पृष्टो भो महात्मंस्त्वं नगरे गत्वा मां किं करिष्यसि? सोऽप्येवं जगाद गृहे गतोऽहं त्वां स्वभार्यां करिष्ये, तथा चैनां तव पुत्रीं कन्यकां विक्रीय तेन धनेनाहं त्वया सह भोगान् भोक्ष्ये, तत् श्रुत्वा धारिणीदेवी मनस्येवमचिंतयत्, अहोऽहं निर्मले कुले जाता, राज्ञा दधिवाहनेन परिणीता, दधिवाहनपत्नी भूत्वोष्ट्रपालकस्य पत्नी भविष्यामि, रे प्राणाः श्रुत्वैतान्यप्यक्षराणि यूयमद्याप्यवतिष्ठध्वे? निस्सरतास्मात्, यदि न निस्सरथ तर्हि बलात्कारेणाप्यहं निःसारयिष्यामि नीडाद्विहंगमानिव. एवं निर्भर्त्स्यमानाः प्राणास्तत्क्षणादेव निर्गताः, प्रस्फुटितहृदया धारिणी निधनं गता. औष्ट्रिकस्तां मृतां प्रेक्ष्य दध्यौ, अहो मया किमुक्तं दुर्वचनं! येन दुर्वचनेनैषा मृता. यथांगुलीदर्शनेन कुष्मांडं विनश्यति तथैषा मम दुर्वचनेन विनष्टा. एवं पश्चात्तापपर औष्ट्रिकस्तां वसुमतीं तत्पुत्रीं कोमलवाक्यैः संतोष्य यावता स्वगृहे समागतस्तावता पत्न्या निर्भर्त्सितो रे त्वयान्यत् किमपि न लब्धं? एषैव मम सपत्नी समानीता! याहि चतुष्पथे, एनां विक्रीय धनं लात्वा शीघ्रं समागच्छ? तत्पत्नीवचो निशम्य तां बालां विक्रीतुं स चतुष्पथे गतः, यावता च तां चतुष्पथे धृत्वा स्थितस्तावता दैवात्तत्र धनावहः श्रेष्ठी समागतः, तां बालां च दृष्ट्वा स मनस्येवमचिंतयत्, नूनमेषा

बालिका मूर्खा ज्ञायते यदियं सामान्यपुत्री न भवति, अतोऽहं बहुधनं दत्वैनां गृह्णामि. असौ वराकी मूल्यगृहीतान्यस्य कस्यचिद्धीनस्य हस्ते यास्यति, अतोऽहमेनां स्वगृहे गत्वा पुत्रीवत्पालयिष्ये, मम गृहे तिष्टंत्याश्च कदाचिद्दैवयोगतोऽस्याः स्वजनवर्गसंगमोऽपि भवति. धनावह एवं विमृश्य तदीप्सितं मूल्यं दत्वा वसुमतीं बालां सानुकंपः स्ववेश्मनि निन्ये. स्वब्धधीः श्रेष्टी तामपृछत्, हे वत्से! त्वं कस्य कन्यकासि? ते स्वजनवर्गः कः? त्वं मा भैषीः, त्वं मम दुहितासि, अहं त्वां पुत्रीवत्पालयिष्ये.

एवं वारंवारं श्रेष्ठिना पृछ्यमानापि लज्जयाधोमुखी यावत्सा किंचिन्न जल्पति, तावता मूलां बभाषे, प्रियाऽसावावयोर्दुहितातियत्नेन पुष्पवत्पाल्या लाल्या च. एवं तयोर्गिरा स्वस्थचित्ता सा बाला स्वगेहे इव बालेंदुलेखेव नेत्रानंददायिनी तद्गृहे सुखं ववृधे. तस्या वाचश्चंदनवच्छीतलत्वेन हृष्टः श्रेष्टी परिजनैः सह चंदनबालेति तस्या अभिधानं विदधे. सा चंदनबाला विनयतो रूपतश्च श्रेष्ठिनोऽतीवमुदं ददाना मूलया ददृशे. ततः समत्सरा मूला चिंतयति, पुत्रीं कृत्वेयं पालिता, अद्य तामेव रूपवतीं वीक्ष्य मोहितः श्रेष्टी यद्येनां परिणयेत्तार्हि जीवंत्यपि मृतास्म्यहं. एवं स्त्रैणसुलभतु-

त्वेन च दिवानिशं ताम्यंती दुराशया मूला चंदनबालायाश्छिद्राणि विलोकयामास. एकस्मिन् दिने ग्रीष्मर्त्तौ धनश्रेष्ठी हट्टाद्देहमन्यागमत्. तदांह्रिक्षालकः कोऽपि भृत्यो नासीत्, तावता विनयाच्चंदनोत्थाय श्रेष्ठिना वारितापि पितृभक्त्या तत्पादौ क्षालयितुं प्रावर्तत. तदानीं तस्यास्तन्वंग्याः स्निग्धः श्यामलः कोमलः केशपाशः परिस्रस्तः. जलपंकिले क्ष्मातले पंकिलो मा भूयादिति धिया श्रेष्ठिना सादरं तत्केशपाशः स्वकरेण समुद्दध्रे. तत्केशपाशोद्धरणस्वरूपं गवाक्षस्था मूला निरीक्ष्यैवमचिंतयत्. अहो यस्याः केशपाशोपरि महानेतावान् स्नेहो वर्तते. तस्याः शरीरोपरि न ज्ञायते कीयान् स्नेहोऽस्य भविष्यतीति. तदियं मूलाद्व्याधिरिवोच्छेदनीया. अथ सा शाकिनीव दुराशया मूला श्रेष्ठिगमनानंतरं नापितं समाहूय चंदनायाः शिरोऽमुंडापयत, पादयोर्निगडान् क्षिप्त्वार्द्रकंबया निर्दया सा तां बह्वताडयत्. दूरस्थे गृहैकदेशेऽपवरके तां क्षिप्त्वा कपाटानि दत्वा परिवारमुवाच, श्रेष्ठिनः पृष्ठतोऽप्येतत्केनापि न कथनीयं, यः कोऽपि कथयिष्यति स मत्कोपाग्नौ शलभत्वं यास्यति. एवं सर्वेषां कथयित्वा मूला मूलगृहं ययौ. सायं श्रेष्ठी समागतो मूलामपृच्छच्चंदना क्वास्तीति? मूलयोक्तं न जाने सा क्वास्तीति. तद्भयादन्योऽपि कोऽपि तच्छुद्धिं नाचख्यौ, एवं रात्रावपि कोऽपि ना-

चख्यौ. श्रेष्टिना चिंतिमुपरितनभूम्यां सुप्ता भविष्यति. एवं द्वितीयेऽपि दिने श्रेष्टिना पृष्टं, श्रेष्टिन्या च तथैवोक्तं.

एवं तृतीयेऽपि दिने श्रेष्टिना तच्छुद्धिर्न प्राप्ता. ततः श्रेष्टी शंकाकोपाकुलः परिजनं प्रोचे रे रे कथयत? मम नंदना चंदना क्वास्ति? यदि नाख्यास्यथ यूयमहं च जानिष्ये तदाहं सर्वान्निग्रहिष्ये, तत् श्रुत्वा काचित्स्थविरा चेट्येवमचिंतयदहं चिरतरं जीवाता, आसन्नमृतिश्च, चंदनोदंते च कथिते मूला मे किं करिष्यति? यत्करिष्यति तदहं सर्वं सहिष्ये, परं चंदनां जीवापयामि, एवं विचिंत्य सा मूलाचरित्रं मूलतः समाख्यत्. ततः श्रेष्टी तस्मिन्नपवरके गत्वा द्वारमुद्घाटयामास, मध्ये गत्वा च चंदनां धनावहः समालोकयत्. कथंभूतां? क्षुत्पिपासार्तां, दवस्पृष्टलतामिव म्लानांगीं, अंह्र्योर्निगडितां, नवात्तां करिणीमिव बद्धां, परिमुंडितमस्तकां, भिक्षुकीमिव स्फटितवस्त्रांकितां, अश्रुपूरितनेत्राब्जां च, एवंविधां चंदनां दृष्ट्वा मनसि खिन्नो धनावहः, अहो पापिन्या मत्प्रियया किं कृतं! हे वत्से! त्वं स्वस्था भवेत्युक्त्वा साश्रुदृक् श्रेष्टी तद्भोज्यार्थं रसवतीं द्रुतं द्रुतं समभिलोकयति, परं तादृग्भोज्यमलभमानो दैवात्कुल्माषभाजनं ददर्श, स्थाल्यभावात्सूर्पकोणके कुल्मा-

षान् क्षिप्त्वा भोज्यार्थं चंदनायै समार्पयत्, कथितं च तेन हे पुत्रि! एतान् कुल्माषांस्तावत्त्वं भुंजीथा यावदहं तव निगडच्छिदे लोहकारमानयामीति प्रोच्य श्रेष्ठी लोहकाराकारणार्थं बहिर्गतः, ऊर्ध्वंस्थिता चंदना दध्यौ, अहो तस्मिन् राजकुले क्व मे जन्म? क्वावस्थेयमीदृशी? अहो धिग् संसारनाटकमिदं, जीवानां स्थिरं सौख्यं नास्ति, मयानुभूतं सुखं, पुनर्दुःखं च. अथ किं भविष्यति? किं करोमि? क्व यामि? कस्याग्रे पूत्करोमि? षष्ठस्य पारणकेऽमी कुल्माषाः संति. अस्मिन् समये यदि कश्चिदतिथिः समायाति तदाहं तस्य किंचिद्दत्वा पारणकं करोमि तदा वरं. एवं विचिंत्य द्वारदेशे सा गता महता कष्टेन. एकः पाद उत्पाट्य देहल्या बहिर्मुक्तः, द्वितीयं पादं चोत्पाटयितुमशक्यत्वाद्देहल्या मध्ये स्थितः.

एवमवस्थया स्थिता चंदना वारंवारमिमां भावनां भावयंती यावत्तिष्ठति, तावत्तस्याः पुण्यानुभावतो भगवान् श्रीमहावीरो भिक्षायै पर्यटंस्तत्रागात, जंगमकल्पद्रुरिव चंदनागृहद्वारे समुपस्थितः. निगडैर्देहलीमुल्लंघयितुमक्षमा चंदना परया भक्त्या भगवंतमभाषत, स्वामिन् यद्यप्यनुचितं भोज्यं वर्तते, तथापि परोपकारार्थमिमं कुल्माषान्नं गृहाण? ममोपरि चानुग्रहं कुरु? इत्यादिभेदसंयुक्तं

तमाहारं ज्ञानेन ज्ञात्वा पूर्णाभिग्रहो भगवान् तस्यै कुल्माषभिक्षायै करौ प्रसारयामास. अहोऽहं धन्येति ध्यायंती चंदना सूर्पकोणेन स्वामिनः करे कुल्माषांश्चिक्षेप. स्वाम्यभिग्रहपूर्त्या प्रीताः संतः सुरास्तत्राययुः. तत्र वसुधारादीनि पंचदिव्यानि प्रादुर्बभूवुः. तस्मिन् समये तस्या निगडानि तुत्रुटुः, तत्पदे कांचनानि नूपुराणि जज्ञिरे, केशपाशश्च पूर्ववद्बभूव. श्रीवीरभक्तैर्विबुधैश्चंदना सर्वालंकारधारिणी चक्रे, तथोत्कृष्टनादपूर्वकं देवैर्नृत्यं चक्रे. अहो दानमहो दानमित्याघोषणं चक्रे. सार्धद्वादशकोटीसुवर्णवृष्टिः सुरैश्चक्रे, देवैर्दुंदुभिनादो विदधे. तं दुंदुभिध्वनिं श्रुत्वा मृगावत्या सह शतानीकस्तत्रागात्, नंदया सह सुगुप्तो मंत्री चापि तत्रागात. मुदितमानसः शक्रो देवराजः समाययौ, धन्यो धनावहः श्रेष्ठ्यपि तत्रागतः, धनलिप्सया सा दुराशया मूलापि समागता, दधिवाहनराजस्य कंचुकी सपुलो नाम बंधान्मुक्तः, सोऽपि समागतो वसुमतीं वीक्ष्य तस्याः पादयोः पतित्वा विमुक्तकंठमरुदत. शतानीकेनोक्तं भो संपुल! त्वमेनां कुमारीं वीक्ष्य किं रोदिषि? तदानीं साश्रुनेत्रः कंचुकी प्रोवाच, राजन्नेषा बालिका दधिवाहनधारिण्योः पुत्री वसुमतीनाम्नी तादृशकुलोत्पन्ना तादृग्विभवपरिभ्रष्टा पितृभ्यां रहितान्यगृहे दासत्वं प्राप्ता, तेन चाहं रोदिमि. राजोचे न शोच्येयं, यथा

जगत्त्रयत्राणवीरः श्रीवीरो भगवान् प्रतिलाभितः, तत् श्रुत्वा राज्ञी मृगावती प्राह तर्हि राजन्नेषा मम भागिनेयीयं बाला धारिणीदुहिता, तर्हि ममापि दुहिता. अथ भगवान् वीरः पंचाहन्यूनषण्मासतपःपर्यंते पारणं कृत्वा धनावहगृहान्निर्ययौ, वसुधाराद्रव्यमादातुं समागतं शतानीकंप्रति सौधर्माधिपतिः स्वयं व्याजहार भो राजन्नेह स्वस्वामिभावो यत्त्वं स्वर्णरत्नवृष्टिं जिघृक्षसि, यस्मै कन्या वसुमती धनं ददाति स एव धनं लभते, एषा धनस्वामिनी, कन्या प्रोवाच धनावहः श्रेष्ठी मम पिता पालनात्, अतो धनावह एतां वसुधारां कन्याग्रहाज्जग्राह, अनर्थमूलं मूला च श्रेष्ठिना गृहाद्विवासितापध्यानवती क्रमेण मृत्वा नरकं गता, भूयोऽप्याखंडलोऽवोचच्छतानीकंप्रति यदियं बाला चरमदेहधरेयं भोगपराङ्मुखा श्रीवीरस्य केवले समुत्पन्ने एषा प्रथमसाध्वी भविष्यति, भो शतानीक! त्वया स्वामिकेवलोत्पत्तिं यावद्यत्नेनासौ रक्षणीया, इत्युक्त्वा स्वामिनं नत्वा मघवा देवलोकं गतः, तथा शतानीकेन राज्ञा चंदना कन्यकांतःपुरे निन्ये. ततः सा चंदना मातृस्वसुरगृहे सुखं दिनानि निर्गमयामास. स्वामिनः केवले समुत्पन्ने चंदना दीक्षां लात्वा प्रथमप्रवर्तिनी जाता, षट्त्रिंशत्सहस्रसाध्वीनां स्वामित्वं च लब्धा; मृगावतीव्यतिकरे केवलं च लब्ध्वा क्रमेण सा मोक्षमग-

मत्. इत्थं चंदनबाला—चरितं परिकीर्तितं मया भक्त्या.॥ श्रुत्वा भो भविकजना । दाने यत्नो महान् कार्यः ॥ १ ॥ इति श्रीचंदनबालाकथानकं संक्षेपतः समाख्यातं. ॥ जिनवरप्रथमपारणकदानफलमाह—

॥ मूलम् ॥—पढमाइं पारणाइं । अकरिंसु करिंति तह करिस्संति ॥ अरहंतः भगवंतो । जेसि घरे तेसि धुवसिद्धी ॥ १७ ॥ व्याख्या—तेषां पुरुषाणां ध्रुवं निश्चितं शुद्धिर्भवति, मोक्षसुखानि करतलस्थानि भवंति तेषां, केषां? येषां गृहे 'अरिहंता भगवंतोत्ति' अर्हंति त्रिभुवनकृतां पूजामित्यर्हंतस्तीर्थकराः, भगवंतो ज्ञानादिमंतः, प्रथमानि पारणकानि 'अकरिंसुत्ति' पूर्वमकार्षुः, 'करिंतित्ति' वर्तमानकाले कुर्वंति, 'करिस्संतित्ति' भविष्यत्काले करिष्यंतीति गाथार्थः. ॥१७॥ अथ सप्तक्षेत्रीधनवपनफलमाह—

॥ मूलम् ॥—जिणभवण १ बिंब २ पुत्थय ३ । संघरूवेसु ७ सत्तखित्तेसु ॥ ववियं धणंपि जायइ । सिवफलयमहो अणंतगुणं ॥ २० ॥ व्याख्या—जिनानां भवनानि जिनभवनानि, तेषु जिनप्रासादेष्वित्यर्थः १, एवं बिंबेषु प्रतिमारूपेषु जिनेषु २, पुस्तकेषु जिनवचनलिपिन्यासरूपेषु

३, संघेषु साधु ४ साध्वी ५ श्राद्ध ६ श्राद्धी ७ रूपेषु चतुर्विधसंघेषु, एवं सप्तक्षेत्रेषु ' ववयंति ' उप्तं धनं स्वर्णरजताद्यपि ' सिवफलयमिति ' मोक्षफलं जायते, अहो इत्याश्चर्ये, अनंतगुणं भवतीत्यक्षरार्थः. ॥ २० ॥ इति श्रीमत्तपागछाधिराजभट्टारकश्रीआनंदविमलसूरितत्पट्टालंकारहारभट्टारकश्रीविजयदानसूरितत्पट्टप्रभावकपातिशाहिप्रतिबोधकभट्टारकजगद्गुरुबिरुदधारकश्रीहीरविजयसूरितत्पट्टालंकारसंप्रतिविजयमानभट्टारकश्रीविजयसेनसूरिराज्ये आचार्यश्रीविजयदेवसूरियौवराज्ये पंडितदेवविजयगणिविरचितायां श्रीकुलकवृत्तौ धर्मरत्नमंजूषानाम्न्यां दानधर्मरूपः प्रथमो वक्षस्कारः समाप्तः. ॥ श्रीरस्तु ॥

---

॥ इति श्रीधर्मरत्नमंजूषायाः प्रथमो भागः समाप्तो गुरुश्रीमच्चारित्रविजयसुप्रसादात् ॥

लब्ध्वा यदीयचरणांबुजतारसारं । स्वादछटाधरितदिव्यसुधासमूहं ॥
संसारकानननतटे ह्यटतालिनेव । पीतो मया प्रवरबोधरसप्रवाहः ॥ १ ॥
वंदे मम गुरुं तं च । चारित्रविजयाह्वयं ॥ परोपकारिणां धुर्यं । चित्रं चारित्रमाश्रितं ॥ २ ॥ युग्मं.

चारित्रपूर्वा विजयाभिधाना । मुनीश्वराः सूरिवरस्य शिष्याः ।
आनंदपूर्वविजयाभिधस्य । जातास्तपागच्छसुनेतुरेते ॥ ३ ॥

---

आ ग्रंथ श्रीजामनगरनिवासी पंडित श्रावक हीरालाल हंसराजे स्वपरना श्रेयमाटे
पोताना श्रीजैनभास्करोदय छापखानामां छापी प्रसिद्ध कर्यो छे.

॥ इति श्रीधर्मरत्नमंजूषायां प्रथमो भागः समाप्तः ॥

॥ श्रीजिनाय नमः ॥

# ॥ श्रीधर्मरत्नमंजूषा भाग १. ॥

( कर्त्ता—श्रीदेवविजयगणी )

छपावी प्रसिद्ध करनार—पंडित श्रावक हीरालाल हंसराज ( जामनगरवाळा )
वीरसंवत्—२४४१. विक्रमसंवत—१९७१. सने—१९१५.
किं. रु.–६–१२–०

☞ श्रीजैनभास्करोदय प्रेस. जामनगर.

॥ श्रीजिनाय नमः ॥

॥ श्रीचारित्रविजयगुरुभ्यो नमः ॥

## ॥ अथ श्रीधर्मरत्नमंजूषा ( दानादिकुलकवृत्तिरूपा ) प्रारभ्यते ॥

( द्वितीयो भागः )

( कर्ता—श्रीदेवविजयगणी )

छपावी प्रसिद्ध करनार—पंडित श्रावक हीरालाल हंसराज. ( जामनगरवाळा )

अथ धर्मस्य द्वितीयभेदं शीलमाख्यातुकामः शीलवन्नमस्काररूपमंगलमाचरति—

॥ मूलम् ॥—सोहग्गमहानिहिणो । पाए पणमामि नेमिजिणवइणो ॥ बालेण भुअबलेण य । जणद्दणो जेण निज्जणिओ ॥ १ ॥ अरिहंतस्य नेमिजिनपतेः 'पाए' पादौ प्रणमामि नमस्करोमि, कथंभूतस्य श्रीनेमिजिनपतेः? 'सोहग्गमहानिहिणत्ति' सौभाग्यमहानिधेः सौभाग्यमहानिधानस्य, तस्य कस्य? येन श्रीनेमिना बालेन शिशुना भुजबलेन जनार्दनः श्रीकृ-

ष्णो निर्जित इति गाथार्थः. ॥ १ ॥ विशेषार्थस्तु कथानकादवसेयस्तच्चेदं—इदम्यै स्ताङ्गनृपति॰ र्धनवती १ सौधर्मकल्पे नङ्ग—श्चारी चित्रगतिश्च रत्नवतिका ३ माहेंद्रजौ ४ स्वःसदौ ४ ॥ क्ष्मा॰ पः श्रीअपराजितः प्रियमती ५ श्रीआरणे निर्जरौ ६ । श्रीशंखश्च यशोमती ७ सुरवरौ नेमिश्च रा॰ जीमती ए ॥ १ ॥

इहास्मिन् जंबूद्वीपे भरतक्षेत्रेऽचलपुरं नाम नगरमस्ति, तस्मिन्नगरे यथार्थनामा विक्रमधना॰ भिधानो वसुधाधवोऽस्ति. तस्य राज्ञो विशदशीलालंकारधारिणी धारिणीनाम पट्टदेव्यस्ति. सा क॰ थंभूता? सर्वांगसुंदरा, पुण्यशालिनी तस्य राज्ञो मूर्तिमती श्रीरिवास्ति. सा राज्ञ्यन्यदा यामिनीशे॰ षे मंजरीपुंजफलितं मत्तालिझंकारमुखरं सहकारतरुं स्वप्ने समैक्षत, कोऽपि रूपवान् पुमांस्तं सहकार॰ वृक्षं पाणौ कृत्वेत्यूचे, हे राज्ञि! सांप्रतमसौ तवांगणे रोप्यते, कियत्यपि काले गते पुनरेष सह॰ कारवृक्षोऽन्यत्र नववारानधिरोपित उत्कृष्टोत्कृष्टफलभाग्भविष्यति. एवंविधं स्वप्नं दृष्ट्वा जागरिता रा ज्ञी प्रातरागत्य तं स्वप्नं राज्ञे न्यवेदयत्, राजापि स्वप्नपाठकानाहूय तं स्वप्नं व्यचारयत्, ते प्राहुर्हे राजन्नेतत्स्वप्नानुभावतस्तव महान् पुत्रो भावी, परमन्यत्र चूतवृक्षस्यारोपणफलं वयं न जानीमः, त॰

त्फलं केवलं केवली जानाति, राज्ञोक्तं तद्वचनं राज्ञी श्रुत्वा मुदितमानसा सुदोहदा गर्भं बभारो-त्तमं निधिं रत्नगर्भेव, सा राज्ञी पवित्राकारधारिणं प्राची सूर्यमिव काले पुत्रं सुषुवे, पुत्रवर्धापनेन वर्धितो राजा तस्मै प्रीतिदानं ददौ, पुत्रजन्मोत्सवं विधाय तृतीये दिवसे चंद्रसूर्ययोर्दर्शनं कारयित्वा षष्ठे दिवसे धर्मजागरिकां च कृत्वा संप्राप्ते चैकादशे दिवसे निवर्तितेऽशुचिजातिकर्मणि, संप्राप्ते द्वादशे दिवसे राजा पुत्रस्य धन इत्यभिधां विदधे. स धनो मात्रा पित्रा चातिप्रमोदेन लाल्यमानो धात्रीभिरंकादंकं नीयमानो मेरुभूमौ कल्पद्रुरिव ववृधे, एवं क्रमेण वर्धितः सप्ताष्टवर्षीयः कलाचार्यैरध्यापितो द्वासप्ततिकलाकुशलः क्रमेणानंगलीलावनं यौवनं प्रत्यपद्यत. इतश्च कुसुमपुरे नगरे रणकर्मसुलब्धजयः सिंह इवौजस्वी सिंहनामा पृथिवीपतिरभूत्, तस्य राज्ञश्चंद्रलेखेव विमला विमलानाम राज्यभूद्देवीव भूचरी, तस्यां बहुपुत्राणामुपर्यनुपमाकृतिः सिंहमहीपतेर्धनवतीनाम कन्या जज्ञे, सापि क्रमेणाष्टवार्षिकी कलाचार्यसन्निधौ सकलाः कलाः कुमारीयोग्या जग्राह, सा सुंदरी यौवनोन्मुखी द्वाषष्टिकलाकुशला सखीभिः समावृता वसंतोत्सवसमये उद्यानश्रियमीक्षितुं वने ययौ, तस्मिन्नुद्याने विचरंती धनवत्येकस्याशोकस्य तरोस्तले चित्रपट्टिकापाणिमेकं चित्रकरमैक्षत, तां

चित्रपट्टिकां धनवत्याः सखी बलात्तत्करात्समादाय धनवत्यै समार्पयत्, तां पट्टिकां नररूपरुचिरां समालोक्य धनवती जगौ, भो महात्मन्! सुरनरेंद्रचंद्रनागेंद्रेषु कस्येदमद्भुतं रूपं? चित्रकार उवाचे, अयमचलपुराधीशविक्रमधनराजस्य पुत्रो युवा निरुपमरूपो धननामा मया विनोदेनालेखि, परं तस्य यादृशं रूपमस्ति तादृशं रूपं देवोऽपि नालेखितुं क्षमः, तच्चित्रकारवाक्यं श्रुत्वा धने मानसं निधाय शून्यचित्ता पदे पदे प्रस्खलंती धनवती गृहे समाययौ, तद्दिनादारभ्य सा धनवती कापि रतिं नाससाद मरौ गता मरालीव. यथा—

विमुक्तोद्वर्तनस्नान—चर्चालंकरणा सती ॥ साहर्निशं धनं दध्यौ । योगिनीवेष्टदेवतां ॥ १ ॥

तां धनवतीं तथाविधां दृष्ट्वा कमलिनी सखी पप्रच्छ हे सखि! त्वमेवंविधा व्यग्रचित्ता कस्माद् दृश्यसे? धनवत्युवाच हे सखि! त्वं बाह्यो जन इव वारंवारं किं मां पृच्छसि? कमलिन्युवाच सत्यं, चित्रलेख्ये धने तव मनो दृश्यते. स्थाने चानुरागस्ते, एवं कथयित्वा तया कश्चिद् ज्ञानवान् पृष्टः, ज्ञानिनोक्तं तव सख्या धनवत्या धनो भर्ता भविष्यति, तद् ज्ञानिवचः श्रुत्वा कमलिनीसखी धनवत्यग्रे कथयति, हे सखि! त्वं धीरा भव? ज्ञानिना ते धनो भर्ता कथितः, तत श्रुत्वा धनवती स्व-

स्थचित्ता जाता. अथैकस्मिन् दिने धनवती वरनेपथ्यधरा पितरं वंदितुं सभामध्ये समागता, राज्ञोंकं समाश्रित्य यावता सा स्थिता तावता राज्ञश्चिंता जाता, कोऽस्या अनुरूपो वरो भविष्यतीति. तस्मिन् समये विक्रमधनराजांतिके प्राक्प्रेषितो दूतः समागात्, स च राजकार्यं समाख्याय स्थितः. राज्ञोक्तं भो दूत! दृष्टं त्वया किंचित्त्वाश्चर्यं? दूतेनोक्तं राजेंद्र! मया विक्रमधनसूनोर्धनस्य रूपं दृष्टं, परं नेदृशं कस्यापि विद्याधरसुरेष्वपि, एतदेवाश्चर्यं दृष्टं. तद्दूतवचः श्रुत्वा राजा चिंतयति धनधनवत्योः संगमे स्रष्टुः सृष्टिप्रयासः सफलोऽस्तु. प्रीतो राजा कथयति भो दूत! त्वया साधूक्तं, ततस्तदैव राज्ञा महामत्रिणमाकार्य प्रोक्तं भो मंत्रिस्त्वं गत्वा धनवत्या धनस्यार्पणाय विक्रमधनं प्रार्थय? ततः स मंत्री अचलपुरे गत्वा विक्रमधनराजानं नत्वा यावदग्रे स्थितस्तावदासनदानादिना राज्ञा मानितः. ततः स सिंहमंत्री विनयावनम्रदेहो विज्ञपयति, राजन्! सिंहो राजा त्वत्सुताय धनाय धनवतीं निजसुतां दातुमिह मां प्राहिणोत्. यथा तव पुत्रो धनकुमारः सर्वोत्कृष्टो वर्तते, तथा धनवत्यपि स्त्रीषु सर्वोत्कृष्टा वर्तते, पूर्वं च युवयोः स्नेहो वर्तते, सोऽनयोः संबंधे पुनर्विशिष्टो भवतात् वारिसेकेन महीरुह इव. ओमित्युक्त्वा सत्कृत्य विसर्जितो मंत्री सिंहराजांतिके समागात्. तत·

स्तुष्टः सिंहरथः सुदिवसे सुलग्ने वृद्धमंत्रिसहितां परमर्द्धिसमन्वितां च कृत्वा शिक्षां दत्वा सपरिवारां छत्रचामरान्वितां शिबिकासमारूढां तां कन्यां प्रेषयामास. सापि पितरौ नत्वा सपरिवारा चचाल. सा क्रमेणाचलपुरं प्राप्ता, साक्षाद्धनकुमारस्य श्रीरिव स्वयंवरा समागता, अचलपुरासन्नवने शिबिरं विनिवेश्य च स्थिता, महत्या ऋद्ध्या शुभेऽहनि तयोर्धनधनवत्योर्विवाहो जज्ञे, तया नवोढयाभिनवयौवनो धनो रत्या स्मर इव विद्युता नवांबुद इव रेजे, धनवत्या समं रममाणो धनो मुहूर्तवत् कियंतमपि कालमनयत.

अथैकस्मिन् दिने धनो मित्रपरिवृत उद्यानश्रियमीक्षितुं वने ययौ, तत्र धनश्चतुर्ज्ञानधरं पवित्रितवसुंधरं वसुंधरं नाम महामुनिमद्राक्षीत, तत्र धारिणीधनवतीसहितो विक्रमधनो राजाप्यागात्, मुनिवंदनाय त..गरवासी सर्वो लोकोऽप्यागात्. मुनिना देशना प्रारब्धा, यथा—अथिरेण थिरो समलेण । निम्मलो परवसेण साहीणो ॥ देहेण जइ विढप्पइ । धम्मो ता किं न पज्जत्तं ॥ १ ॥ इत्यादिदेशनांते विक्रमधनो राजगुरुं व्यजिज्ञपत हे स्वामिन्! धने गर्भस्थिते स्वप्ने माता सहकारतरुं ददर्श, स नववारारोपणादुत्कृष्टफलदो भविष्यतीति नववारारोपणस्यार्थं कथय? तेन मु-

निना ज्ञानेन ज्ञात्वोत्कृष्टोत्कृष्टभवं श्रीअरिष्टनेमेर्नवभवात्मकं चरित्रमाख्यातं, एष धनस्तव पुत्रो न- वमे भवे यदुवंशसमुद्भवो द्वाविंशस्तीर्थकृद्भावी. तन्मुनिवचः श्रुत्वा सर्वे मुमुदिरे, तथा सर्वेषां सम्ना- सदां जैनधर्मे भावोऽभूत्, तं मुनिं नत्वा सपुत्रो विक्रमधनः स्ववेश्म समाययौ. धनोऽन्यदा धनव- त्या समं क्रीडितुं वनेऽगात्, तत्र कश्चिन्मुनिवरस्तृषाक्रांतो मूर्छितस्तेन दृष्टः, ततस्तं शीतलोपचारैः सज्जीकृत्य पप्रछ हे भगवंतः! केन हेतुना यूयं प्रव्रजिताः? मुनिनोक्तमहं मुनिचंद्राभिधो भववा- साद्विरक्तो दीक्षामादाय गुरुगछेन संयुतो देशांतरे प्रस्थितः, सार्थाद्भ्रष्टः क्षुत्तृषाक्रांतो मूर्छितः पति- तश्च त्वया सज्जितः स्वस्थो जातः. ततो धनो धनवतीसहितो मुनिचंद्रसाधूपांते सम्यक्त्वप्रधानद्वा- दशव्रतरूपं गृहस्थधर्मं प्रत्यपद्यत, ततस्तं मुनिं गृहे नीत्वा प्रासुकान्नपानाद्यैः प्रत्यलाभयत्, क्रमेण लब्धराज्यो धनो धनवत्या समं भोगान् बुभुजे, एवं भुक्तभोगो धनो धनवतीभवं जयंतनाम पुत्रं राज्ये न्यस्य वसुंधराचार्यांतिके धनवत्या समं व्रतमाददे, क्रमेणाधीतसकलशास्त्रः स गुरुणाचार्यप- दे स्थापितो बहून् शिष्यान् प्रतिबोध्य पर्यंते धनवत्या सहानशनं चक्रे, मासांते विपद्य द्वितीयभवे सौधर्मदेवलोके धनधनवत्यौ शक्रसामानिकौ देवौ जातौ, उक्तौ प्रथमद्वितीयभवौ. इतोऽत्र भरते

वैताढ्यपर्वते उत्तरश्रेणिभूषणे सूरनामा खेचरचक्री बभूव, तस्य राज्ञो विद्युन्मत्यभिधाना सहचारिणी बभूव, तदानीं पूर्णायुः सौधर्मदेवलोकाद्धनजीवश्च्युतो विद्युन्मत्या राज्ञ्या उदरे समवातरत्, पूर्णावधौ सुदिवसे सुलग्ने शुभलक्षणं पूर्णिमापूर्णेंदुमिव विद्युन्मती देवी सुतमसूत, पुण्येऽहनि सूरराट् तस्य चित्रगतिरित्यभिधां विदधे.

इतश्चात्रैव वैताढ्यदक्षिणश्रेणिविभूषणे शिवमंदिरपुरेऽनंगसिंहो नाम राजाभूत्, शशिमुखीति नाम्ना तस्य पत्न्यभूत. सौधर्मदेवलोकाच्च्युत्वा धनवतीजीवस्तस्याः कुक्षाववातरत्. सा शशिमुखी राज्ञी समये पुत्रीं सुषुवे, सा बहुपुत्रोपरि जाता राज्ञोऽत्यंतं वल्लभा बभूव. तस्याः शुभेऽहनि पिता रत्नवतीत्यभिधानं विदधे. सा क्रमेण जलस्थानवल्लीव ववृधे, स्तोकेनैव कालेन स्त्रीजनोचिताः कलाश्च जग्राह. एवं वर्धमाना साद्भुतं देहमंडनं यौवनमासदत्. कोऽस्या वरः स्यादिति चिंतया पित्रान्यदा स्वयं नैमित्तिकः पृष्टः. किंचिच्चिंतयित्वा नैमित्तिकोऽब्रवीत्, यस्तवासिरत्नमाछेत्ता, यस्योपरि सुरैः कृता सिद्धायतने पुष्पवृष्टिर्भविष्यति स रत्नवतीमिमां तव दुहितरं परिणेता, राजा चिंतयति यो ममासिरत्नं छेत्ता स तु महान् भविष्यति, धन्योऽहमिति हर्षनिर्भरो राट् तं ज्ञानिनं

नैमित्तिकं धनं दत्वा विसर्जयतिस्म. इतश्चक्रपुरे नगरे सुग्रीवो नाम राजा, तस्य द्वे पत्न्यौ, एका यशस्विनी, तत्पुत्रश्च सुमित्रनामाभवत्, द्वितीया भद्रेति नाम्ना, तत्पुत्रश्च पद्मनामाभूत्. एवं तौ मिथः क्रीडंतौ वसंतमदनाविव ववृधाते. परं सुमित्रो धर्मात्मा विनयी नतवत्सलश्च, पद्मस्तु तद्विपरीतः. एकस्मिन् दिने भद्रा भद्रौघघातिनी दुष्टात्मा स्वपुत्रराज्यकृते सुमित्रायोत्कटं विषं ददौ. तेन सुमित्रो मूर्छितः, तत्रागतः सुग्रीवराट् मंत्रतंत्रैरनेकोपचारांश्चक्रे, परं तस्य किंचिदपि विषवेगोपशांतिर्नाभूत्, तदा भद्रा स्वापराधभयेन पलाय्य क्वचिद्गता, सुतस्नेहमोहितो राजापि पृथिव्यां न्यपतत्. शीतलोपचारैर्लब्धचैतन्यो मंत्रिसामंतसहितस्तारस्वरेण रोदितिस्म. अत्रांतरे चित्रगतिर्विद्याधरो व्योम्नि विमानेन क्रीडया विचरंस्तत्पुरं शोकाकुलं दृष्ट्वा तत्रागमत्, विषव्यतिकरं ज्ञात्वा मंत्रपूतेन वारिणा तेनाभिषिच्य सज्जितः कुमारः समुत्तस्थौ, स्फारितेक्षणो राज्ञा संभाषितः, भो भद्र! वैरिण्या भद्रया तव विषं दत्तं, अनेन महात्मना चित्रगतिविद्याधरकुमारेण त्वं निर्विषीकृतः, सुमित्रः प्रोचे भो महात्मंस्तवोपकारेण कुलं ज्ञातं. तथापि मय्यनुग्रहं विधायात्मकुलं प्रकाशय? ततश्चित्रगतेः पारिपार्श्वकैः सचिवात्मजैः सर्वं तद्वंशादिकं शंसितं, ततः सुमित्रश्चित्रगतेर्मित्रतां गतः, चित्र-

गतिरापप्रच्छ भो मित्र! तवाज्ञयाहं निजं पुरं यामि, सुमित्रोऽप्यब्रवीद् हे भ्रातरत्रासन्नप्रदेशे सुयशानाम केवली विहर ?स्ति, सोऽत्रागमिष्यति, तस्मिन्नागते त्वं वंदित्वा तदंतिके धर्मं श्रुत्वा स्वस्थानं याया:. ओमित्युक्त्वा चित्रगतिः कतिचिद्दिनानि तत्रैव तस्थौ. कतिचिद्दिनांते सुयशाः केवल्यपि तत्रागतः, स्वर्णाब्जस्थं देवैर्वृतं केवलिनं तौ वंदितुं गतौ, तं त्रिःप्रदक्षिणीकृत्य वंदित्वा पुरो निषण्णौ, सुग्रीवराडपि तत्रागतो धर्मश्रवणार्थं, केवलिना देशना चक्रे, भो भविका! दुर्लभं मानुष्यमवाप्य धर्मे प्रमादो न कार्यः, तां केवलिदेशनां निशम्य चित्रगतिः सुधीर्गृहिधर्मं सम्यक्त्वपूर्वकं प्रत्यपद्यत, तदानीं सुग्रीवो राट् मुनिं प्रणम्य पप्रच्छ, हे भगवन्! क्व सा मम राज्ञी, यया मम सूनोः सुमित्रस्य विषं दत्तं, गुरुणोक्तं सा नष्टारण्ये गता, तत्र चौरैर्भूषणानि गृहीत्वा पल्लीभर्तुः समर्पिता, पल्लीशेन कस्यचिद्वणिजः पार्श्वे विक्रीता, सा ततोऽपि नष्टा यांती महत्यरण्ये दवाग्निना दग्धा सती रौद्रध्यानवती मृत्वा प्रथमे नरके ययौ, तत उध्धृत्य चांडालकुले समुत्पत्स्यते, ततोऽपि मृत्वा तृतीयं नरकं गमिष्यति, इत्याद्यनंतसंसारदुःखं सानुभविष्यति भवत्सूनोः सम्यग्दृष्टेर्विषदानजपाप्मना, अतो रागद्वेषादिमयं धिग् धिग् संसारं, यतः—संसारम्मि असारे। नत्थि सुहं वाहिवेयणापउरे ॥

जाणंतो इह जीवो। न कुणइ जिणदेसिअं धम्मं ॥ १ ॥ मातुरीदृशं दारुणं संसारदुःखं श्रुत्वा वैराग्यरंजितमानसः कुमारो राजानं विज्ञपयति, हे राजेंद्र! तवाज्ञयाहं व्रतमंगीकुर्वे, तनयमिति ब्रुवाणं प्रतिषिध्य राजा स्वयं दीक्षां समाददे, राजा दीक्षां लात्वा गुरुणा समं विजह्रे, चित्रगतिना समं सुमित्रो राट् निजं पुरं समाजगाम. तेन भद्रापुत्रः पद्मः कस्यापि ग्रामान् दत्वाऽदृष्टसेवकोऽकारि. अथ चित्रगतिः पित्रोर्मिलने उत्कंठितः सुमित्रनृपमापृच्छ्य निजे पुरेऽगच्छत्, तत्र देवपूजागुरूपास्तिस्वाध्यायतपःसंयमैर्व्यापृतः स पित्रोरत्यंतवल्लभोऽभूद्धार्मिकत्वात्.

इतः सुमित्रराड्भगिनीं कलिंगनृपपत्नीमनंगसिंहसुतः कमलो रत्नवती भ्राता जह्रे, भगिनीहरणेन सुमित्रो राट् भृशं शोकाकुलो जातः. एष वृत्तांतः केनापि विद्याधरेणागत्य चित्रगतेरग्रे निवेदितो मित्रत्वात, ततस्तस्याः शुद्धिकृते स स्वयमेव गतः. ततश्चित्रगतेः केनापि विद्याधरेणागत्योक्तं स्वामिंस्तव मित्रभगिनी दक्षिणश्रेणिभूषणशिवमंदिरनगरस्वाम्यनंगसिंहपुत्रकमलेन हृता वर्तते, स तु महान् वर्तते. तत् श्रुत्वा सूरनृपात्मजश्चित्रगतिविद्याधरः सर्वाभिसारेण शिवमंदिरे गत्वा कमलं राजपुत्रं लीलया दलयामास कमलखंडं द्विप इव. सुतपराभूत्या क्रुद्धोऽनंगसिंहः सिंह-

नादं विदधानः सेनया सह दधावे. ततस्तयोश्चित्रगत्यनंगसिंहयोर्विद्याबलवतोः सैन्यबलवतोर्दोर्बलवतोश्च महान् रणः प्रावर्तत. अनंगसेनश्चित्रगतिं दुर्जयं ज्ञात्वा क्रमागतं देवदत्तं खड्गरत्नमस्मार्षीत्. ज्वालासहस्रदुरालोकं दुष्टक्षयंकरं परसैन्यभयंकरं कृपाणरत्नं तत्क्षणादेव तत्पाणौ समागतं. कृपाणपाणिरनंगसिंहश्चित्रगतिं प्रोचे, रेरेऽपसर बालक? बालकहत्यां मे मा देहि? यतोऽनेन खड्गेन तव शिरस्तालफलवच्छेत्स्ये. तद्वचनं श्रुत्वा क्रुद्धश्चित्रगतिः प्रोचे, भो जरद्गव! धिक्तव बाहुबलं, यल्लोहखंडबलेन गर्वितो मां भापयसीत्युक्त्वा स विद्यया ध्वांतं विचक्रे. तेन ध्वांतेन शत्रुसमूहं मोहिनीविद्ययेव मोहयित्वा द्रुतं तत्करात्खड्गरत्नमाच्छिदत्. सुमित्रस्य भगिनीं गृहीत्वा जगाम. क्षणांतरेणानंगसिंहो राजा जातालोकः सर्वं व्यलोकयत्, पुरतो विषं च नापश्यत्, स्वपाणौ कृपाणमपि नापश्यत्. संसारस्वरूपमिव क्षणदृष्टनष्टमभूत्. अनंगसिंहः क्षणं विषादं कृत्वा ज्ञानिनो वचः स्मृत्वा मत्खड्गहर्ता जामाता भावीति स्मृत्वा भृशं मुमुदे. ततोऽनंगसिंहश्चिंतयति मत्खड्गहर्ता पुमान् कथं ज्ञास्यते? हुं ज्ञातं, सिद्धायतने कुसुमवृष्ट्या ज्ञास्यते, इति स्मृत्वा स स्वगृहं ययौ. चित्रविद्याधरोऽप्यखंडितशीलां सुमित्रपृथिवीपतेर्भगिनीं नीत्वा स्वयं राज्ञे समर्पयामास. स्वविवेकतः पु-

रापि भवोद्विग्नो राजा सुमित्रो भगिन्यपहाराद्विशेषतो वैराग्यवान्नितरां बभूव. राजा सुमित्रः सुते राज्यं न्यस्य सुयशोमुनिसन्निधौ चित्रगतेः समक्षं राज्यं त्यक्त्वा संयमसाम्राज्यमाददे. ततश्चित्रगतिः स्वे पुरेऽगात. सुमित्रराजर्षिर्गुर्वंतिके किंचिदूनानि नवपूर्वाण्यधीतेस्म. गुर्वाज्ञां गृहीत्वा सुमित्रो राजर्षिरेकाकित्वविहारेण विहरन् मगधग्रामबहिर्वने कायोत्सर्गेण तस्थिवान्. तस्मिन् समये विमात्रेयः पद्मो भद्रात्मजस्तत्रागात्, तं मुनिं च दृष्ट्वा कोपारुण आकर्णांतकृष्टेन बाणेन हृदि जघान. सुमित्रो राजर्षिर्नमस्कारं स्मरन्ननशनेन विपद्य ब्रह्मलोके इंद्रसामानिकः सुरोऽभूत्. तस्मिन्नेव दिने प्रणश्यन् पद्मः कृष्णाहिना दष्टो विपद्य सप्तम्यां नरकावनौ नारको जज्ञे. सुमित्रमृत्युना चित्रगतिः शोकं कृत्वा सिद्धायतने यात्रां कर्तुं जगाम. तत्र बहवः सूरचक्रिप्रमुखाः खेचरेश्वरा अमिलन्. तत्रानंगसिंहोऽपि पुत्र्या रत्नवत्या सममाययौ. चित्रगतिस्तत्र चित्रां जिनार्चां चक्रे. ततो रोमांचितशरीरोऽसौ जिनं स्तोतुं प्रचक्रमे. तदा सुमित्रदेवो ब्रह्मदेवलोकादवधिना ज्ञात्वा तस्य स्वपूर्वभवमित्रस्योपरि पुष्पाणि ववर्ष. अनंगसिंहस्तं चित्रगतिं दुहितुर्वरं ज्ञात्वा हृष्टः.

अथ सुमित्रदेवः प्रत्यक्षीभूय बभाषे भो मित्र चित्रगते! किं त्वं मां प्रत्यभिजानासि? कुमा-

रेणोक्तं त्वं महर्द्धिः सुरोऽसि. इति चित्रगतिनोक्ते सुरः सुमित्ररूपं चक्रे, चित्रगतिनोपलक्षितः स पूर्वभवसुहृत्. सुमित्रस्तं चित्रगतिमालिंग्येति जगाद, भो मित्र! त्वत्प्रसादादेषा मया देवर्द्धिर्लब्धा. चित्रगतिराख्यद्भो मित्र! त्वत्प्रसादादेष मया जिनधर्मो लब्धः. एवं तौ परस्परं प्रशंसां कुरुतः. तत्रानंगसिंहपुत्री रत्नवती चित्रगतिं मन्मथरूपातिरेकं प्रेक्षमाणा मन्मथेषुभिर्विव्यथे. तदानीं स्वपुत्रीं विधुरां प्रेक्ष्यानंगसिंहो राजाचिंतयत्, ज्ञानिनोक्तं सत्यं जातं, यतोऽनेन ममासिरत्नं जह्रे, अस्य शिरसि सिद्धायतने च पुष्पवृष्टिरभवत. सांप्रतं चात्र देवस्थाने संबंधादिकं वक्तुं न युज्यते. इति चिंतयित्वा सपरिवारोऽनंगसिंहो राजा स्वगृहमाययौ. अथ चित्रगतिविद्याधरोऽपि सुमित्रदेवं सत्कृत्य व्यसृजत्, सर्वान् खेचरानपि व्यसृजत्, पित्रा समं निजगृहं चाययौ. ततोऽनंगसिंहेनैको महामंत्री सूरतेजश्चक्रिणंप्रति प्रहितः. सोऽपि तत्र गत्वा चक्रिणं नत्वैवं व्याजहार, स्वामिंश्चित्रगतिनामा ते पुत्रो मारसन्निभोऽस्ति. तस्यानंगसिंहो राट् स्वपुत्रीं रत्नवतीं दातुमिच्छति, यतोऽनयोः संयोगः स्वर्णरत्नयोरिव प्रशस्यो भवेत. सूरराडपि तयोरुचितयोगेच्छुस्तद्वचः प्रत्यपद्यत. शुभेऽह्नि सूरराडनंगसिंहोऽपि च महामहेन तयोर्विवाहं चक्रतुः. तद्दिनादारभ्य चित्रगती रत्नवत्या पत्न्या समं वै-

षयिकं सुखं भेजे, तथैव श्राद्धधर्ममपि यात्रापूजादिकमपि तया सह तथैव चकार. अन्यदा सूरच- क्री पुत्रं चित्रगतिं राज्ये न्यस्य स्वयं दीक्षामुपाददे. निर्मलां प्रव्रज्यां च परिपाल्य परं पदं प्रपेदे. चित्रगतिराडपि बहूनि वर्षाणि राज्यं कृत्वा रत्नवतीभवं पुत्रं पुरंदरनामानं राज्ये न्यस्य रत्नवत्या प- त्न्या समं दमवराचार्यसमीपे व्रतं समाददे. चित्रगतिराजर्षी रत्नवती साध्वी च शास्त्राण्यधीत्य चिरं तपस्तप्त्वा प्राणांते पादपोपगमेनानशनेन विपद्य माहेंद्रे कल्पे परस्परं प्रीतिपरायणौ परमर्द्धिकौ देवौ जातौ. इत्युक्तौ तृतीयचतुर्थभवौ.

इतश्च प्रत्यग्विदेहे पद्मनाम्नि विजये सिंहपुरं नाम पुरमस्ति, तस्मिन्नगरे हरिनंदी नाम्ना भू- पतिस्तस्य प्रियदर्शना पट्टदेव्यस्ति, स चित्रगतेर्जीवः पूर्णायुर्माहेंद्रकल्पाच्च्युत्वा महास्वप्नसूचितः प्रियदर्शनाराज्ञीकुक्षाववातरत्, सुदोहदा राज्ञी पूर्णे काले सुमेरुर्वी कल्पद्रुमिव प्रियदर्शना तनयं सुषुवे, सुदिवसे पित्रा तस्य पुत्रस्यापराजित इत्याख्या चक्रे, धात्रीभिर्लाल्यमानः पितुर्मनोरथेन स- हावर्धत, क्रमेण कुमारः सकलाः कला जग्राह, क्रमाच्च यौवनं प्राप, मूर्त्या मीनध्वज इव ददृशे, तस्य सहाध्यायी विमलबोधाख्योऽमात्यसुतः सुहृद्भूत, एवं तौ वनगृहारामादिषु वसंतमदनाविव

क्रीमंतौ विहरतःस्म. इतश्चानंदपुरे नगरे जितशत्रुनामा महीपतिरस्ति, तस्य राज्ञः शीलालंकारधारिणी धारिणीनाम पट्टदेव्यस्ति, माहेंद्रस्वर्गाच्च्युत्वा रत्नवतीजीवदेवो धारिणीराज्ञीकुक्षाववातरत्, पूर्णे काले सा राज्ञी पुत्रीरत्नं सुषुवे, शुभेऽह्नि राज्ञा तस्या अभिधानं प्रीतिमतीति चक्रे. सा क्रमेण ववृधे. सकलाः कलाः स्त्रीजनोचिता आसादयामास, एवं सा लाल्यमाना सखीजनैः परिवृता स्मरजीवनं यौवनमप्यासादयामास, जितशत्रुराजा तां निजपुत्रीं यौवनवतीं समालोक्य मनस्येवमचिंतयत्, यद्येनां मत्पुत्रीं येन केनापि वरेणोद्वाहयिष्यामि, तर्ह्येषा सुखिता वा दुःखिता वा भविष्यति, अतोऽहमेनां स्वयंवरमंडपे महामहेनोद्वाहयामि, इति विचिंत्य जितशत्रुराडन्येद्युर्नगरबहिःप्रदेशे सुस्थाने सुदिवसे महामंचातिमंचानकारयत्, स्थाने स्थाने ग्रामे नगरे च स्वस्वपुत्रसहितान् नृपानाह्वातुं स्वान् नरान् प्रैषीत्, तेऽपि तत्र गत्वा जितशत्रुनृपलेखार्पणेन सर्वान् राज्ञो निमंत्रयंतिस्म. भूचराः खेचराः सर्वे राजानश्च स्वपुत्रसहिताः समाजग्मुस्तत्र मंडपे, हरिनंदिराडप्यपराजितपुत्रसहितस्तत्रागात्, एवं ते सर्वे भूचराः खेचराश्च राजानः पुत्रपौत्रादिपरिवृता उच्चमंचेषूपविष्टाः शोभंते विमाने वैमानिका देवा इव.

इतश्चानेकनेपथ्यधरामरीव धरागता सखीसमावृता चामराभ्यां वीज्यमाना स्वसेवकोत्सार्यमाणपुरजना अपरा लक्ष्मीदेवीव प्रीतिमती तत्र स्वयंवरनगरे समागात्. पित्राज्ञया पुरुषप्रमाणादर्शे सर्वान् राज्ञो राजपुत्रांश्च विलोकयंती यावद्याति तावत्सखी सर्वेषां वंशान् वर्णयति, यथा—हे स्वामिन्यसौ कदंबदेशाधीशो भुवनचंद्रनामा पूर्वदिक्स्वामी वर्तते, यदि तव रोचते तर्हि वृणीष्व? अयं प्रकृत्या दक्षो दक्षिणाधिपः समरकेतुनामा स्मरोपमः, अयं पश्चिमाधिपः सौम्यः सोमप्रभनामा कीर्त्या सोमसमः, अयमुत्तराशास्वामी चामीकरद्युतिर्दानेन कुबेरोपमः कुबेरनामा, अयं खेचराधीशो मणिचूडो महीपतिः, अयं रत्नचूडो दिव्यास्त्रधरस्तवाभिमुखं वारंवारं पश्यति, एवमन्येऽपि खेचरा राजानो राजकुमाराश्च सस्नेहास्तवाभिमुखं पश्यंतो वर्तंते, यस्तव रोचते तं वृणीष्व? एवं तस्मिन् मंडपे भ्रमंती प्रीतिमती तत्र गता यत्र हरिनंदी राडपराजितपुत्रसहितः सर्वेषां राज्ञां मध्यगतो वर्तते, तत्रागत्य प्राग्जन्मस्नेहसंबंधात् सर्वेषां पश्यतां प्रीतिमती प्रीतिपरायणापराजितकंठे स्वयंवरस्रजं सद्यश्चिक्षेप. ततोऽन्योन्यरक्तयोस्तयोरपराजितप्रीतिमत्योर्जितशत्रुराड् हरिनंदी च पुण्येऽह्नि विवाहं चक्रतुः, ततो राजा स्वयंवरसमागतान् सर्वान् राज्ञो दानमानादिभिः सत्कृत्य व्यसृजत्,

अपराजितः प्रीतिमत्या समं क्रीडन् कतिचिद्दिनानि तत्रैवास्थात्, जितशत्रुसचिवो निजां कन्यां रूपवतीनाम्नीं विमलबोधायापराजितमित्राय ददौ, एवं तौ द्वावपि राजामात्यपुत्रौ तत्र तस्थतुः, कतिपयदिनांते विमलबोधापराजितौ जितशत्रुणा राज्ञा विसृष्टौ स्वगृहमागतौ, मातापित्रोर्नेत्रोत्सवं च कुर्वंतौ तत्र तस्थतुः.

अथान्यदा हरिनंदी राडपराजिते राज्यं न्यस्य स्वयं प्रवव्राज, ततस्तपस्तप्त्वा परं पदं प्रपेदे. अथापराजितो राजा गुर्वंतिके प्रीतिमत्या समं श्राद्धधर्मं लब्ध्वा विचित्राणि लक्षशो जिनचैत्यानि रथयात्राश्च कुर्वाणः कालं गमयतिस्म. एकस्मिन् दिने तस्मिन्नगरे कश्चित् केवली समागतो ज्ञानेन तं राजानं योग्यं ज्ञात्वा. उद्यानपालकैर्गुर्वागमनकथनेन वर्धितो राजा तस्य दानं दत्वा गुर्वंतिके गतः, गुरुं नत्वा च पुरो निषण्णः, गुरुणोक्तं धर्मं च शुश्राव, धर्मं श्रुत्वा वैराग्यमापन्नः स प्रीतिमतीजवं पुत्रं पद्मनामानं राज्ये निधाय प्रीतिमत्या पट्टदेव्या समं राजापराजितः प्राव्राजीत्. अन्येऽपि विमलबोधमंत्रिपुत्रादयो बहवो राज्ञा समं संयमं समाददिरे. ते सर्वेऽपि राजादयस्तीव्रं तपस्तप्त्वारणे कल्पे ययुः, इंद्रसामानिकत्वेन च परस्परं प्रीतिभाजो बभूवुः. इत्युक्तौ पंचमषष्ठभवौ.

इतश्चास्मिन् जंबूद्वीपे भरतक्षेत्रे कुरुमंडले हास्तिनापुरं नाम नगरं, श्रीषेणस्तत्र राजाभूत्. श्रीमतीनाम्नी च तस्य पट्टदेवी. सान्यदा शंखावदातं पूर्णेंदुं मुखांबुजे प्रविशंतं निशाशेषे दृष्ट्वा दिवामुखे पत्ये चाख्यत. नृपः स्वप्नज्ञेभ्यस्तत्स्वप्नफलं निर्णीतवान्. ततो भूपेन राज्यग्रे प्रोक्तं, हे राज्ञि! तव महान् सूनुर्भावीति स्वप्नफलं ज्ञेयं. इतोऽपराजितजीवो देवलोकाच्च्युत्वा श्रीमत्या उदरे पुत्रत्वेनोदपद्यत, काले च सा राज्ञी सुतमसूत, तस्य पिता शंख इत्यभिधानं विदधे. स धात्रीभिर्लाल्यमानो ववृधे. गुरुं साक्षिमात्रं कृत्वा स लीलया सकलाः कलाश्चाददे, यतः प्रतिजन्म समभ्यस्तास्तस्य ताः सन्निहिता इवोपस्थिताः. आरणाच्च्युतो विमलबोधमित्रजीवोऽस्मिन् भवे श्रीषेणमंत्रिपुत्रो मतिप्रभनामा शंखकुमारस्य मित्रं बभूव मन्मथस्य माधव इव. स शंखकुमारस्तेन मित्रेणान्येन राजपुत्रेण च सार्धं रेमे. इतोंगदेशे चंपानाम नगर्यस्ति, तत्र जितारिनामा राजास्ति, तस्य कीर्तिमतीपत्नीजाता यशोमतीनामसुतास्ति, सात्यंतं सुंदरा कलाकुशला चेति तस्याः कोऽपि वरो न रुरुचे. तयैकदा पितुरुत्संगस्थितया केनचित्पठ्यमानगुणः शंखनामा राजपुत्रः शुश्रुवे. तस्मिन् बद्धरागा सा कदाचिद्राज्ञा दृष्टा. स्थानेऽनुरक्तेयमिति ज्ञात्वा तत्पितापि मुमुदे. ततस्तयोः शंखय-

शोमत्योः स शुभेऽह्नि महामहेन विवाहं चक्रे. कृतविवाहौ तौ दंपती देवदेव्याविवोपवनादिषु रेमाते. अन्येद्युः श्रीषेणो राट् शंखाय मेदिनीं दत्वा गुणधरगुरुपादांते व्रतमाददे. श्रीषेणो राजर्षिर्दुस्तपं तपःसंयमं च पालयामास.

अथान्यदा श्रीषेणो महामुनिः समुत्पन्नकेवलः सुरसान्निध्यशोभितो विहरंस्तत्राययौ. गुरुवंदनाय समागतः शंखभूपालो गुरुं वंदित्वा संसारांभोधितारिणीं देशनामशृणोत्. देशनांते शंखः केवलिनमपृच्छत्, हे स्वामिन् सत्यामप्यन्यस्त्रियामस्यां यशोमत्यां मम प्रेमाधिक्यं कस्मात्? हे भगवन्! केवलज्ञानेन ज्ञात्वा मम सर्वं समाख्याहि? केवल्याख्यत—प्रथमे भवे धनधनवत्यौ प्रियपत्न्यौ १, सौधर्मे कल्पे द्वावपि देवौ २, तृतीये भवे चित्रगतिविद्याधरो रत्नवती प्रिया च जज्ञे ३, तुर्ये भवे द्वावपि माहेंद्रे मित्रदेवौ जातौ ४, पंचमे भवेऽपराजितजन्मनीयं प्रीतिमती भार्याभूत् ५, ततो द्वावप्यारण्ये कल्पे षष्टे भवे सुहृद्देवौ जातौ ६, सप्तमे भवे भवान् शंखनामा राजा जातः, एषा पूर्वभवभार्या च तव भार्या यशोमती जाता. एतस्मात्ते पूर्वभवसंबंधः स्नेहकारणं. अथाष्टमभवेऽपराजितविमाने द्वावपि देवौ भूत्वा ८ नवमे भवे द्वाविंशस्तीर्थनाथस्त्वं भविष्यसि, इयं च राजीम-

तीनाम्नी त्वयाऽनूढा पाणिग्रहणपराङ्मुख्यपरिणीतैव परिव्रज्यां लब्ध्वा परिपाल्य च मोक्षं यास्यति. केवल्युक्तान् पूर्वभवान् श्रुत्वा शंखनरेश्वरः समुत्पन्नवैराग्यो यशोमतीभवं पुंडरीकसुतं राज्ये न्यस्य पुत्रमित्रैः सह भार्याभिश्च समं केवल्यंतिके दीक्षामुपाददे. शंखो गीतार्थो भूत्वा दुस्तपं तपस्तेपे. अर्हद्भक्त्यादिभिर्विंशतिस्थानकैस्तीर्थकृत्कर्म चार्जयत. ततश्चायुरंतेऽनशनं पादपोपगमनं विधाय शंखो यशोमती चेति द्वावप्यपराजितेऽनुत्तरविमाने देवौ जातौ. इति कथितौ सप्ताष्टमभवौ. अथ नवमभवः कथ्यते.

इतश्चास्मिन् भरते मथुरानाम नगर्यस्ति. तस्यां पुर्यां वसुपुत्रबृहध्ध्वजादिषु हरिवंशोद्भवेषु भूरिषु नृपेषु गतेषु यदुनामा नृपोऽभूत, यदुपुत्रः सूरनामा, सूरसुतौ शौरिसुवीरौ वीरकुंजरौ, सूरभूपः शौरिपुत्रं मथुराराज्ये न्यस्य सुवीरं च युवराज्ये न्यस्य स्वयं संसारवैराग्यात् सद्गुरुपार्श्वे परिव्रज्यामुपाददे. शौरिः सुवीरायानुजन्मने मथुराराज्यं दत्वा स्वयं कुशार्त्तदेशे गत्वा तत्र नवीनं शौर्यपुरं न्यधात. तत्र शौरेरंधकवृष्ण्याद्याः सूनवो जज्ञिरे. सुवीरस्य पुनर्भोजवृष्ण्याद्या अमितौजसः पुत्राः संजज्ञिरे. सुवीरः स्वं मथुराराज्यं स्वसूनवे भोजवृष्णये दत्वा सिंधुदेशे गत्वा सोवीरपुरं नि-

धायास्थात्, तत्र च स सुखेन राज्यं करोति. शौरिः पुनः स्वे राज्येंधकवृष्णिं स्वं पुत्रं शौर्यपुरे न्यस्य स्वयं सुप्रतिष्ठमुनेः पार्श्वे प्रव्रज्य शिवं ययौ. भोजवृष्णेर्मथुरायां राज्यं पालयत उदग्रभुजविक्रम उग्रसेननामा पुत्रो जातः. शौरिपुरे राज्यं कुर्वतोंधकवृष्णेः समुद्रविजयाद्या दशात्मजाः संजज्ञिरे. तेषां नामान्यमूनि—समुद्रविजयः १, अक्षोभ्यः २, स्तिमितः ३, सागरः ४, हिमवान् ५, अचलः ६, धरणः ७, पूरणः ८, अभिचंद्रः ९, वसुदेवश्चेति १०. दशैते दशार्हाख्याः, तेषां दशार्हाणामनुजे द्वे पुत्र्यौ जाते कुंतीमद्रीनाम्न्यौ. पिता कुंतीं पांडवेऽदात्, दमघोषाय चापरामदात्. अन्येद्युरंधकवृष्णिरवधिज्ञानिनं मुनिं सुप्रतिष्ठनामानं प्रणम्य रचितांजलिरपृच्छत्, भो मुने! मे दशमो पुत्रो वसुदेवनामात्युत्कृष्टरूपसौभाग्यकलावान् विक्रमी च केन कारणेन? तत् श्रोतुमिच्छामि भवदंतिके. सुप्रतिष्ठनामा मुनिराख्यत्, भो अंधकवृष्णे! वसुदेवपूर्वचरित्रं किंचिदुच्यते, सावधानो भूत्वा च शृणु?—

इहास्मिन् भरतक्षेत्रे मगधदेशे नंदिग्रामे सोमनामा द्विजोऽस्ति, तद्भार्या सोमिला, तयोः पुत्रो नंदिषेणः, तस्य बालत्वे मातापितरौ मृतौ, अहो तस्य मंदभाग्यत्वं! सोऽतिकुरूपस्तुंदिलो दं-

तुरस्तुच्छचतुरस्रशिरा विरूपत्वाच्च सर्वैः स्वजनैस्त्यक्तो गृहान्निष्कासितश्च. ततः स इतस्ततो भ्रमन् मातुलेन रक्षितः, तस्य गृहे स मूल्येनाजीविकां करोति. तस्योद्वाह्याः सप्त कन्यका वर्तंते. लोकैः स भक्तो भो नंदिषेण! तव मातुलो यदि तवैकां कन्यां न ददाति तर्हि मातुलसेवया किं? स तु तत् श्रुत्वा गृहकार्यं किमपि न करोति. मातुलेनोक्तं भो वत्स! गृहकार्ये त्वमलसो वर्तसे तत्किं? तेनोक्तं मह्यमेकां कन्यां देहि? तदाहं गृहकार्यं करोमि. नान्यथा. मातुलेनोक्तं त्वं स्वस्थो भव? तवाहं कन्यां दास्ये, सोऽपि संतुष्टस्तथैव गृहकार्यरतो बभूव. तत्रैका कन्या यौवनोन्मुखी पित्रोक्ता, हे पुत्रि! नंदिषेणं परिणय? तयोक्तं विषभक्षणं करोमि, परमेनं न परिणयामि, ततः सान्यत्र दत्ता, एवं सप्तापि कन्यका अन्येभ्यो दत्ताः, कयापि नंदिषेणो न वव्रे, ततो विषण्णो नंदिषेणश्चिंतयति यदि मम मातुलसुतापि मां नेच्छति तर्ह्यन्यकन्या मां कथं परिणेष्यति? धिग्मे विरूपत्वं! अथ किं जीवितेन? ततो गृहान्निःसृत्य स रत्नपुरे ययौ, तत्र दंपती क्रीडंतौ वीक्ष्य स स्वं निनिंद, धिग्मे जीवितं! अथ किं मे जीवितेनेति ध्यात्वा स मरणाय कस्मिंश्चिद्वने गतः, तस्मिन् वने सुस्थितनामानं महामुनिं स ददर्श, मुनिरपि तद्भावं ज्ञानेन ज्ञात्वा तमवोचद्भो नंदिषेण! मृत्युसाह-

सं माकार्षीः, पापस्येदं फलं, अतः पुण्यं विधेहि? येन भवांतरे तत्फलं भवति, तत्तस्य मुनेर्वचनं श्रुत्वा प्रबुद्धः स तस्योपांते व्रतमगृहीत्, क्रमेण च स महागीतार्थो जातः, गीतार्थोऽपि स साधुवैयावृत्याभिग्रहं जग्राह, बालग्लानादिवैयावृत्यपरं नंदिषेणं ज्ञानेन ज्ञात्वा सौधर्मेंद्रः सभामध्ये नंदिषेणमहामुनिगुणान् प्रशशंस, तद्वचोऽश्रद्दधत्कश्चिद्देवो ग्लानसाधुवपुर्धरो रत्नपुराभ्यर्णवने समाययौ, द्वितीयसाधुवेषं च कृत्वा तद्वसतिं च ययौ, मासक्षपणपारणके यावता स नंदिषेणो मुनिः कवलकं करे कृत्वा पारणकं करोति, तावता साधुरूपधरो देवो नंदिषेणं जगाद, भो नंदिषेणमहामुने! साधुवैयावृत्यमभिगृहीत्वाधुना त्वं कथं भोक्ष्यसे? यद्बहिर्वने क्षुधातृषाक्रांतोऽतीसाराभिभूतो मुनिः पतितोऽस्ति, तत् श्रुत्वा तदन्नं तथैव मुक्त्वा जलभाजनं च करे कृत्वा तेन सह जलान्वेषणं करोति, देवशक्त्या देवोऽप्यनेषणीयं कर्तुं प्रचक्रमे, लब्धिमाहात्म्यतो मुनिना शुद्धं जलं क्वापि लब्धं, तज्जलं लात्वा तौ वने गतौ ग्लानसमीपे, तेन मायामुनिना नंदिषेणः परुषाक्षरं चुक्रुशे, भो नंदिषेणाहमीदृगवस्थो वने पतितः, त्वं तु भोजनलंपटोऽन्नादि सुखं भक्षयसि, अहो धिक्ते वैयावृत्याभिग्रहं! एवं वारंवारं स तं निंदतिस्म, परं नंदिषेणः क्षमावान् धरित्रीव सर्वं सहते,

तज्जलं पाययित्वा तज्जलेन तस्यांगं प्रक्षाल्य तं मायामुनिं स्वस्कंधे समारोप्य नंदिषेणो नगरा·
भिमुखं प्रचचाल, तेन मायामुनिना पदे पदे आचुक्रुशे, रे दुरात्मंस्त्वं शीघ्रं व्रजन् किं मामांदो·
लनेन दुःखयसि? शनैः शनैर्याहि? सोऽपि तथैव याति. ततस्तेन स्कंधस्थितेन वर्चश्चक्रे, उक्तं
च भो मम किं वेगभंगं करोषि? ततस्तं मुनिं प्रक्षाल्य पुनः स्कंधे समारोप्य नंदिषेणश्चिंतयत्यहो·
ऽयं मुनिः कथं नीरोगो भविष्यति? कटून्यपि तद्वचांसि स नाजीगणत, देवेनावधिज्ञानेन ज्ञात्वा
चिंतितं यादृग्देवराजेनोक्तस्तादृगेवासौ क्षमावान् दृश्यते, अहो मयास्य मुनेर्विरूपमाचरितं! धिक्
साधुपरीषहकारकमिति मत्वा तस्योपरि पुष्पवृष्टिं कृत्वा त्रिःप्रदक्षिणीकृत्य दिव्यरूपं च विधाय तं मु·
निं ववंदे, तां शक्रकृतां च प्रशंसां तस्मै मुनये शशंस, ततः क्षमयित्वा तुभ्यमहं किं ददामीत्युक्त्वा
तस्य गुणान् स भृशं प्रशशंस, मुनिनोक्तं मया परमदुर्लभो जिनधर्मो लब्धः, नातःपरं किंचित्सारं,
धन्यस्त्वमिति कथयित्वा देवो देवलोकं ययौ, मुनिरपि स्वाश्रयमागात्, मुनिभिः पृष्टो नंदिषेणो
सर्वं देवचरितं शशंस, स नंदिषेणो मुनिरेवंविधं द्वादशाब्दसहस्राणि सुदुस्तपं तपस्तेपे. अंते वि·
हितानशनो नंदिषेणो मुनिर्निजं दौर्भाग्यमस्मरत्, अहो मयास्मिन् जन्मन्येकापि कामिनी न ले·

भे, तर्ह्यनेन तपसा भवांतरे रमणीजनवल्लभो भूयासं. एवं निदानं कृत्वा स महाशुक्रे देवोऽभूत्, सप्तमदेवलोकात्परिपूर्णायुश्च्युत्वा नंदिषेणजीवस्तव सूनुरयं वसुदेवनामाऽभूत्. तन्निदानमाहात्म्यतो वसुदेवो रमणीवल्लभो बभूव.

ततोंधकवृष्णिः समुद्रविजयं ज्येष्ठपुत्रं राज्ये न्यस्य स्वयं सुप्रतिष्ठमुनिपादांते प्रव्रज्य शिवं प्रययौ. उग्रसेनपुत्रं मथुराराज्यं न्यस्य भोजवृष्णिश्च प्राव्राजीत्, उग्रसेनमहिषी धारिण्यभवत्, स उग्रसेनोऽन्यदा मार्गे गच्छन् कमपि मासोपवासिनं तापसमद्राक्षीत्, तस्य चैषोऽभिग्रहोऽभूत्, यस्य गृहे यामि, तस्यैव गृहे पारणकं करोमि, नान्यस्य, प्रत्यावृत्तः पुनर्मासक्षपणं करोमीति. उग्रसेनो राजा तं पारणाय न्यमंत्रयत्, सोऽपि तापसस्तस्य गृहे भोजनाय समागात्. केनापि नोपलक्षितो मुनिः प्रत्यावृत्तो द्वितीयं मासक्षपणमकरोत्. पुनर्निमंत्रितः पुनरागतः, पुनस्तथैव स्वस्थानं गतः. एवं द्वित्रिवारान् किंचित्कारणं कृत्वा स पारणं न कारयतीति. एवमनादरतस्तस्य तापसस्य कोपो जातः, अहो मां निमंत्र्य स भोजनावसरेऽन्यत्र यातीति क्रोधवशेन स निदानमकरोत्, अनेन तपसा चास्य वधाय भवांतरे भूयासमेवं निदानं कृत्वा स उग्रसेनभार्याया धारिण्या उदरे पुत्रत्वेन

समुत्पन्नः, तस्या धारिण्याश्च त्रिमासांते पत्युर्मांसभक्षणदोहदो जातः. तद्वक्तुमशक्ता धारिणी दिने दिने क्षीयमाणा बभूव. राज्ञा कदाग्रहेण पृष्टं हे देवि! त्वं किं दुर्बला वर्तसे? तयोक्तं राजंस्तवोदरमांसदोहदो मम बाधते, तेन चाहं दुर्बला भवामि. ततः केनचिदुपायेन राज्ञ उदरे शशकामिषं न्यस्य पुनरुपायेन छित्वा मंत्रिणो देव्यै ददुः. सा पूर्णदोहदा प्रकृतिं पुनरागता, ऊचे च हा मया पापिन्या किमकार्यं कृतं? अथाहं किं करोमि? भर्तुः कथमास्यं दर्शयामि, इत्युक्त्वा यावता सा मरणोद्यता बभूव, तावता मंत्रिणस्तामूचुः, हे स्वामिनि! त्वं खेदं मोद्वह? सप्तरात्रेण ते स्वामिनो दर्शनं कारयिष्यामहे.

इत्थं स्वस्थीकृत्य ते सप्तमेऽह्नि राज्या राज्ञो दर्शनं कारयंतिस्म. ततः पूर्णेऽवधौ पौषमासे कृष्णपक्षे भद्रायां तिथौ मूलस्थिते चंद्रे निशायामुग्रसेनमहिषी धारिणी सूनुं सुषुवे. गर्भदोहदाद्भीता सा राज्ञी तं सुतं कांस्यपेटायां चिक्षेप, स्वनामांकितां मुद्रिकां जन्मपत्रिकां च तस्यां पेटायां क्षिप्त्वा, तथा तस्यां बहूनि रत्नानि क्षिप्त्वा दास्याः करे दत्वा यमुनाजलेऽक्षेपयत. मृतः पुत्रो जात इति च राज्ञे राज्ञी शशंस. अथ सा पेटा यमुनाजले वहंती शौर्यपुरद्वारे गता, शौचार्थमागतेन

सुभद्रसवणिजा च सा दृष्टा. तेन च जले प्रविश्य सा जलाद्वहिः कर्षिता. तां पेटां समादाय स गृहे गतः, दृष्टस्तत्र बालको बालेंदुवद्दीप्यमानः, विस्मयमापन्नोऽसौ तां पेटां, तां मुद्रिकां, जन्मपत्रिकां चान्यत्र गुप्तस्थाने मुक्त्वा तं बालं निधानमिव रंक्षयामास. तौ दंपती द्वादशे दिने कांस्यपेटायां लब्धत्वात्तस्य कंस इत्यभिधानं चक्रतुः. क्रमेण वर्धितोऽसावष्टवार्षिको जातः, कलाचार्यसमीपे पाठितश्च स दशवर्षीयो जातः, परं कलहशीलो निर्दयोऽसौ डिंभानकुट्टयत्. लोकाश्च तस्य वणिज उपालंभान् ददुः. अथ दशवर्षीयोऽसौ वणिजा वसुदेवकुमारस्य सेवकत्वेनार्पितः, सोऽपि वसुदेवस्यातिप्रियो जातः. स कंसो वसुदेवेन सह द्वासप्ततिकलाः कलाचार्यांतिकेऽपठत्. ततस्तौ वर्धमानौ यौवनोन्मुखौ जातौ, एकराशिगतौ सोमभौमाविव च विरेजतुः.

इतश्च राजगृहे नगरे बृहद्रथो नाम राजा, तत्पुत्रो जरासंधनामा प्रतिवासुदेवः प्रचंडाज्ञस्त्रिखंडभरतेश्वरः स्वदूतमुखेन समुद्रविजयं नृपमेवमादिशत्. वैताढ्यपर्वताभ्यर्णे सिंहवद्दुःसहो ममाज्ञाविमुखः सिंहरथः क्षत्रियो वर्तते, तं बध्ध्वा समानय? यथा ते जीवयशसं सुतां तथा तवाभीप्सितमेकं नगरं च ददामि. समुद्रविजयं नत्वा वसुदेवोऽभ्ययाचत, भो बांधव! तवाज्ञयाहं तत्र ग-

त्वा सिंहरथं बध्ध्वा समानयिष्यामि. समुद्रविजयोऽप्यूचे तव युद्धावसरो नास्ति, यतस्त्वं लघीयान्. त्वा सिंहरथं बध्ध्वा समानयिष्यामि. समुद्रविजयोऽप्यूचे तव युद्धावसरो नास्ति, यतस्त्वं लघीयान्. भूयोऽपि सनिर्बंधमुक्तो वसुदेवेन समुद्रविजयो बहुभिः सेनाभिस्तं वसुदेवं विससर्ज. कंसेन सारथिना सह चलितो वसुदेवः सैन्यसमन्वितः, सोऽपि सिंहरथः सैन्यसमन्वितः सन्मुखमागतः. ततस्तयोर्महायुद्धे जायमाने कंसः सारथिर्महीयसा परिघेन सिंहरथरथमभांक्षीत्. ततः कुपितः सिंहरथः क्रुधा ज्वलन् कंसं हंतुं खड्गं चकर्ष. तमसिं वसुदेवः क्षुरप्रबाणेनाच्छिदत्. ततः कंसः सिंहरथं बध्ध्वा वसुदेवरथेऽक्षिपत्. एवं सिंहरथबलं दूरे क्षिप्त्वा स जयमवाप. ततस्तौ कंसवसुदेवौ जययुतौ स्वपुरं समाययतुः. हर्षितः समुद्रविजयो बंधोर्जयं दृष्ट्वा. अथ समुद्रविजयो बंधुं वसुदेवमेकांते नीत्वा प्रोवाच, भो बांधव! जीवयशा जरासंधतनया पतिपितृकुलक्षयकरी नैमित्तिकेनोक्ता वर्तते, अतोऽस्याः पाणिग्रहणं त्वया न कार्यं. वसुदेवेनोक्तं सिंहरथो रणे कंसेन बद्धः. अतोऽहं जीवयशसं कंसस्य दास्ये. राजोचे वणिक्पुत्राय जरासंधः कथं पुत्री दास्यति? वसुदेवो बभाषे भो बांधव! विक्रमादयं क्षत्रिय इव विज्ञाव्यते. ततः समुद्रविजयेन राज्ञा कंसजनकः समाकारितः, शपथं दत्वा पृष्टश्च. तेनापि सत्यमुक्तं कंसस्य शृण्वतः, ततस्तन्नामांकितमुद्रिकां जन्मपत्रिकां च राज्ञे दत्वा स वणिग्य-

यौ. समुद्रविजयस्तां मुद्रिकां जन्मपत्रिकां चावाचयत्, यथा—उग्रसेनसधर्मिण्या । धारिण्या दोहदादपि ॥ भीतया स्वपतिशत्रु—स्त्यक्तः प्राणप्रियः सुतः ॥ १ ॥ नाममुद्रासमेतोऽसौ । सर्वाभरणभूषितः ॥ क्षिप्त्वांतःकांस्यमंजूषां । यमुनायां प्रवाहितः ॥ २ ॥ इति मुद्रिकां जन्मपत्रिकां च वाचयित्वायं यादवो महानुजो वर्तते, यादवमंतरेणेदृशं वीर्यं कथं स्यादिति सोऽमन्यत, एतत्सकलं कंसेन श्रुतं, सिंहरथेनापि श्रुतं, ततस्तौ मुदितौ.

अथ समुद्रविजयः कंससिंहरथाभ्यां सहितो जरासंधार्धचक्रिणे गत्वा कंसविक्रमं समाख्याय सिंहरथं समार्पयत. ततः संतुष्टो जरासंधः कंसाय जीवयशसं स्वां सुतां दत्वा स बहु मेने, उक्तं च भो कंस! स्वेप्सितं नगरं याचस्व? तेन पितृवैरेण मथुरा याचिता. जरासंधार्पितबलः कंसो मथुरायामुपेत्य निर्दयः पितरं बध्ध्वा काष्टपंजरे चिक्षेप. उग्रसेनस्यातिमुक्तादयो बहवः सुता वर्तते, तदानीमतिमुक्तकः पितृदुःखात्प्रव्रज्यामाददे. कंसः शौर्यपुरात्सुनन्दं रसवाणिजं स्वजनकमानाय्य कृतज्ञमानी सत्कृत्य पितृवन्मेने. धारिण्या जनन्या स्वपतिमुक्तये बहूक्तोऽपि कंसः पूर्ववैरतः पितरं नामुंचत्. पूर्वजन्मनिदानं नान्यथा जायते. जरासंधेन सत्कृत्य विसृष्टः समुद्रविजयो भ्रातृसमन्वितः

स्वपुरं ययौ. वसुदेवं शौर्यपुरे भ्रमंतं वीक्ष्य तद्रूपमोहिता नगरनार्यस्तदनु भ्राम्यंति. अन्येद्युर्महाजनः समभ्येत्य राजानं रहस्यूचे, राजेंद्र! देवरूपवसुदेवरूपकार्मणेनेव वशीकृता नगरनार्योऽमर्यादास्तद्रूपमोहिता भूयोभूयस्तदनु भ्राम्यंति. राजेंद्र! तेन वसुदेवस्य नगरे क्रीडाभ्रमणं निवार्यतां? राजा तत् श्रुत्वा महाजनानेवं बभाषे, भो जनाः! यूयं स्वस्थाने यात? अहं युष्मत्समीहितं करिष्ये, विसर्जितास्ते स्वस्थाने जग्मुः. राजा परिच्छदमित्यूचे, वसुदेवाग्रे केनाप्येतन्नाख्येयं. अन्येद्युर्नमस्कर्तुमुपागतं वसुदेवं निजोत्संगे समारोप्य समुद्रविजयोऽवदत्, हे वत्स! त्वमितस्ततः पर्यटनेन कृशो दृश्यसे, अतो गृहांतरेव क्रीड? बहिर्न गंतव्यं, ममाज्ञया च भवता गृहमध्ये एव स्थेयं. उ-मित्युक्त्वा वसुदेवो विनीतत्वात्तथैव स्थितो गीतनृत्यादिविनोदेन दिनानि निर्गमयामास. अन्येद्युरेकां दासीं समायांतीं करकृतचंदनकच्चोलकां वसुदेवो दृष्ट्वा पप्रच्छ, त्वं कस्य कृते चंदनं गृहीत्वा यासि? तयोक्तं शिवादेव्या प्रेषितं समुद्रविजयनृपकृते गृहीत्वा यामि. वसुदेवेनोक्तं तर्हीदं ममाप्यर्थे समायातीत्युक्त्वा हास्येन वसुदेवकुमारस्तदादाय स्वयं शरीरे विलिलेप, सा सरोषैवमुवाचानेनैव चरित्रेण त्वं नियंत्रितोऽसि, सिंहवत्पंजररूपे गृहे च स्थापितोऽसि, वसुदेवेनोक्तं तत्किं? तदा

तया दास्यादितः सर्वो वृत्तांतो निवेदितः, तां दासीं विसृज्य संध्यायां स वेषांतरं विधाय शौर्यपुरा-न्निर्ययौ, नगराद्बहिर्गत्वा श्मशाने चितां कृत्वा. तस्यां चितायामनाथमृतकं कंचिज्ज्वालयित्वा, तत्रैकं स्तंभं समारोप्य तस्मिन् स्तंभे स्वहस्तलिखितं पत्रं गुरूणां क्षामणार्थं वसुदेवो व्यलंबयत, तस्मिंश्चैवं लिखितं, यथा—

दोषत्वेनाभ्यधीयंत । गुरूणां यद्गुणा जनैः ॥ इति जीवन्मृतंमन्यो । वसुदेवोऽनलेऽविशत् ॥
॥ १ ॥ ततोऽसंतं वा दोषं मे । स्वस्मिंश्चित्ते विकल्पितं ॥ सर्वे सहंतु गुरवः । पौरलोकाश्च मूलतः
॥ २ ॥ इति कृत्वा वसुदेवो विप्रवेषं विधाय देशांतरे बभ्राम, अथ ग्रंथभूयस्त्वभयात् [?] ‍ऽस्माभिर्लिखितं विस्तरतो वसुदेवचरित्रं, प्रातर्वसुदेवमदृष्ट्वा समुद्रविजयादयो यादवाः पदानुसारेण चितांते समागताः, स्तंभे स्थितं पत्रं विलोक्य रुदंतो यादवाः सपरिवारा वसुदेवस्य प्रेतकार्याणि चक्रिरे, वसुदेवोऽप्येनां वार्तां निशम्य निश्चितो देशाद्देशं बभ्राम. एवं वसुदेवः पृथिव्यां भ्रमन्ननेकशो राजकन्यकाः श्रेष्ठीपुत्रीर्विद्याधरीश्च परिणीय ततः पल्लीपतेर्जरां नाम कन्यकां पर्यणयत, कियंति दिनानि तत्र स्थित्वा जराकुमारनाम नंदनमजीजनत्, एवमनेकशो राजकन्यका वसुदेवेनोपयेमे. अ-

न्यदा वसुदेवस्य देवतोचे भो वसुदेव! मया रुधिरराट्कन्या रोहिणी तत्र स्वयंवरे दत्ता, त्वं रिष्ट-
पुरे याहि? तत्र त्वं स्वयंवरमंडपे पटहवादको भूत्वा पटहं वादय? स तत्र गत्वा यावता पटहं वा-
दयति तावद्रोहिणी साक्षाद्भुवं प्राप्ता रोहिणीव राजपुत्री स्वयंवरे समाययौ, सा तस्मिन् स्वयंवर-
मंडपे वरवरणेच्छया भ्रांता, परं तस्या नैकोऽपि वरो रुरुचे, तदानीं कृतवेषांतरो वसुदेवः पटहे एवं
वादयामास, यथा—एह्येहि मां कुरंगाक्षि। कुरंगीव किमीक्षसे॥ तवानुरूपो भर्तास्मि। त्वत्संग-
मसमुत्सुकः॥ १॥ तत् श्रुत्वा रोहिणी राजकन्यका पुलकांकितशरीरा स्वयंवरस्रजं वसुदेवस्य कंठे
न्यधात्, तदानीं सकलेऽपि स्वयंवरे राज्ञां महान् कलकलो जज्ञे, अहोऽनयाऽज्ञानतया तूर्यको व-
व्रे! तस्मिन् समये कोशलाधीशो दंतवक्रो राजातीववक्रवाग् रुधिरनृपं वक्ति, भो रुधिरनृप! यदि
पाणविकाय कन्यां दातुकामोऽसि तर्हि कुलीना राजानस्त्वया कथमेते स्वयंवरे समाहूताः? रुधिर
ऊचे भो नृपा अनेन विचारेणालं, स्वयंवरे कन्यकया वृतो नरः प्रमाणं भवति, तदानीं रुधिरंप्र-
त्यतीविदुरो विदुरो राजूचे, त्वया साधूक्तं, तथापि वरस्य कुलादिकं प्रष्टुं युज्यते, वसुदेवेनोक्तं कु-
लकीर्तने कोऽयं प्रस्तावः? यादृशस्तादृशोऽहमनया वृतः, यो मां न सहते, तस्य दोर्वीर्यदर्शनेना-

त्मनः कुलं कथयिष्यामि, तस्येदमुक्तं वचो निशम्य जरासंधः क्रुद्धः समुद्रविजयादिकान् नृपानित्यादिशत, भो राजानो राजविप्लवकारी मत्तोऽयं पाणविको हन्यतां? इति जरासंधेनोक्ते ते राजानो रुधिरेण समं पाणविकेन सह च युयुधिरे, तस्मिन् समये खेचरेंद्रो दधिमुखनामा वसुदेवश्वशुरको वसुदेवरथे सारथीभूय युयुधे, तदा समरदुर्धरः शौरिरंगारवतीप्रियार्पितचापतूणान्याददे. तदानीं जरासंधस्य पार्थिवे रुधिरबलं भग्नं, वसुदेवेनोक्तो दधिमुखो वाजिनः प्रेरयामास, अत्युत्कटो वसुदेवो विद्याबलेन भुजबलेन च दंतवक्रनरेश्वरं शल्यराजं चाभांक्षीत्. तदा साशंको जरासंधः समुद्रविजयमब्रवीत, भो समुद्रविजय! असाध्योऽयं पाणविको महाभुजो वर्तते, त्वमितो याहि? सर्वेषां राज्ञां भंगमपास्य जयं गृहाण? तवैषा रोहिणी मया दत्ता, समुद्रविजयो बभाषे, राजेंद्र! मम परदारैः सृतं, परं तवाज्ञयाहं योत्स्ये. इत्युक्त्वा समुद्रविजयो वसुदेवेन समं युयुधे. तौ द्वावपि बांधवाविंद्रोपेंद्राविव युयुधाते. तयोर्युद्धे जायमाने भग्नप्रायः समुद्रविजयो यावज्जयं दुष्करं चिंतयति, तावद्वसुदेवस्तं ज्येष्ठबंधुं ज्ञात्वा तत्पुरस्तात्साक्षरं बाणमक्षिपत्. समुद्रविजयः करेण तं बाणं गृहीत्वा तद्वर्णानीत्यवाचयत, हे बंधो! तदा छद्मना निर्गतो वसुदेवस्त्वां नमति.

अथ हृष्टो दशार्हेशो वत्स वत्सेत्युदीरयन् रथमुत्सृज्य वसुदेवाभिमुखमाययौ. वसुदेवोऽपि र-
थादुत्तीर्य समुद्रविजयपादयोर्न्यपतत्. समुद्रोऽपि पादयोर्निपतंतं वसुदेवं दोर्भ्यां समुध्धृत्य सपदि स-
स्वजे, पृष्टं च भो वत्स! वर्षशतं त्वं क्व स्थितः? तदा वसुदेव आदितः सर्वं वृत्तांतं समाचख्यौ. स-
मुद्रविजयबांधवं वसुदेवं ज्ञात्वा सर्वे जरासंधरुधिरादयो राजानस्तं प्रशशंसुः. जरासंधो महीपतिस्तं
स्वसामंतबंधुं ज्ञात्वा कोपोपशमं संप्राप, तं स्वसेवकं च गुणाधिकं ज्ञात्वा स भृशं मुदमाप. प्रसंग-
मिलितै राजस्वजनैः पुण्यदिवसे रोहिणीवसुदेवयोर्विवाहश्चक्रे. रुधिरेणार्चिता जरासंधादयो नृपाः
स्वस्थाने जग्मुः. एकं वत्सरं यावत्कंससंयुता यादवास्तत्र तस्थुः. तत्रान्येद्युर्वसुदेवो रोहिणीं जाया-
मपृच्छत्, हे प्रिये! त्वया सर्वान्नृपान् मुक्त्वाहं पाटहिकः कथं वृतः? रोहिणी बभाषे हे प्राणेश!
अहं प्रज्ञप्तिविद्यां प्रत्यहमार्चयं, तया चाख्यातं दशमो दशार्हस्ते वरो भविता. स्वयंवरे च यः पट-
हवादकः स त्वया ज्ञेयः, तत्प्रत्ययादेव त्वं मया सर्वान्नृपान्मुक्त्वा वृतोऽसि. कतिपयदिवसांते समु-
द्रविजयेन राज्ञा वसुदेवाय प्रोक्तं भो बांधव! मया सह गृहे समागच्छ? वसुदेवेनोक्तं पूर्वोढाः स-
हस्रशो योषितः स्थाने स्थाने स्थिताः संति, ताः सर्वाः समादाय स्तोकदिनांते समेष्यामि. इत्यु-

त्वा वसुदेवः समुद्रविजयं नत्वा विद्याधरकृतविमाने समुपविश्य गरुत्मानिव गगने ययौ. समुद्रविजयो नृपः सैन्यसमावृतः शौर्यपुरमागात्. वसुदेवोऽपि देवैर्वृतो देवराज इव विद्याधरविमानैः परिवृतः सर्वप्रियासमन्वितः शौर्यपुरमागात्. तत्र ज्येष्ठबंधुं नत्वा स दिवि देवराज इव भार्याभिः सह भोगान् बुभुजे. इत्युक्ता किंचिद्वसुदेवहिंडिः. अथ कृष्णबलभद्रयोरुत्पत्तिरभिधीयते, यथा—

इतश्च हस्तिनापुरे नगरे धनावहो नाम श्रेष्ठ्यभूत, तस्य धनवतीनामवल्लभाभूत्, तयोर्ललितांगो नाम पुत्रोऽभूत्. स मातुरत्यंतवल्लभः. तस्याः श्रेष्ठिन्या अन्यदा द्वितीयो गर्भोऽभूत, स च मातुरत्यंतसंतापदो जज्ञे पूर्ववैरत्वात्. तथा मात्रा पात्यमानोऽपि स न पपात. पूर्णे मासे जातः पुत्रः, श्रेष्ठिन्या जातमत्रः स पुत्रस्त्यक्तुं दास्यै समर्पितः, इतः स तज्जनकेन श्रेष्ठिना दृष्टः, दासी पृष्टा, दास्योक्तं श्रेष्ठिन्या जातः पुत्रोऽत्यनिष्टत्वात्त्यक्तुं ममार्पितः. श्रेष्ठी बालं गृहीत्वान्यत्र गुप्तवृत्त्या तमवर्द्धयत्. द्वादशेऽह्नि तस्य पिता गंगदत्त इत्यभिधां विदधे. मातुश्छन्नं तं सदा ललितोऽपि लालयामास. एवं ताभ्यां लाल्यमानो गंगदत्तः सप्ताष्टवर्षीयो जातः. एकस्मिन् दिवसे वसंतोत्सवे जायमाने ललितांगः पितरमभ्यधात्, हे तात! यदि गंगदत्तेन सह भुज्यते तदा वरं भवति. श्रेष्ठ्यू-

चे यदि ते माता तं पश्येत्तदा न शोभनं. ललितोऽप्यब्रवीत्, तद्दर्शनेऽहं यतिष्ये. श्रेष्ठ्यपि तं समाकार्य तिरस्करिण्यांतरितं तं भोजनार्थं न्यषादयत्, तस्य पुरस्तादासीनौ तौ भुंजानौ तस्य भोज्यं यच्छतःस्म. वातप्रेरिते कांडपटे श्रेष्ठिनी तं बालं ददर्श. तदा सा क्रोधारुणलोचना तं केशे धृत्वा भृशं कुट्टयित्वा गृहस्रोतसि चाक्षिपत्. तत्स्वरूपं दृष्ट्वोद्विग्नौ श्रेष्ठिललितौ तं बालं गंगदत्तं ततो निष्कास्य स्नपयित्वाबोधयतां, भो गंगदत्त तवेदृशं कर्म वर्तते, यत्त्वं मातुरत्यंतदुःखकारकः, तत्त्वं पूर्वकृतं कर्म सहस्व? तदा साधवस्तस्य गृहे भिक्षार्थमागताः, ताभ्यां पृष्टाश्च हे स्वामिनः! अनयोर्मातापुत्रयोर्वैरकारणं किं? तदा तेषां साधूनामेकः साधुर्ज्ञानवानाचख्यौ. भो श्रेष्ठिन्नेतौ तव पुत्रौ पूर्वभवे भ्रातरावभूतां.

एकस्मिन् दिने एकां गंत्रीं लात्वा तौ वने काष्ठार्थमीयतुः, काष्ठैर्गंत्रीं भृत्वा प्रत्यावृत्तौ, गंत्रीमुखे स्थितो लघुर्गंत्रीं वाहयति, अग्रस्थो मार्गे गच्छन् ज्येष्ठः पथि वेल्लंतीं वक्कुडुंडां महोरगीं ददर्श, तदा स ज्येष्ठः कनीयांसमवोचत्, हे बंधो! वराकीयं वक्कुडुंडा महोरगी पथि वेल्लंती गंत्रीतो रक्षणीया, तत श्रुत्वा सर्पिणी हृष्टा विश्वासभागभूत्, कनिष्ठश्च गंत्रीं लात्वा तत्रायातः, तां दृष्ट्वा चे-

वमवोचत, ज्येष्ठबांधवेन त्वं रक्षितासि, परं नाहं कनिष्ठस्त्वां रक्षामि, इत्युक्त्वा तेन पापबुद्धिना तदानीमेव तस्योपरि गंत्री चालिता, तया चिंतितं कोऽप्येष मम वैरी वर्तते, एवं चिंतयंती विपद्य सा तवेयं भार्या जाता. ज्येष्ठो भ्राता विपद्यास्याः सुतो ललितांगोऽभूत, स च प्राग्जन्मकर्मणास्य प्रियः, तथा—सोऽयं मृत्वा कनिष्ठोऽभू—दनिष्टः पूर्वकर्मणा ॥ गंगदत्तः समुत्पन्नः । प्राक्तनं कर्म नान्यथा ॥ १ ॥ ततस्ते विरक्ता गुर्वंतिके व्रतं जगृहुः. पितापुत्रौ श्रेष्ठिललितौ महाशुक्रे सप्तमदेवलोके देवत्वं प्राप्तौ. गंगदत्तो मातुरनिष्टत्वं स्मरन् विश्ववाल्लभ्यनिदानं कृत्वा महाशुक्रं दिवं ययौ. ततश्च ललितांगजीवो महाशुक्राच्च्युत्वा वसुदेवस्य पत्न्या रोहिण्याः कुक्षौ गर्भत्वेनावातरत. गज १ वृषभ २ सिंह ३ शशि ४ चतुर्महास्वप्नसूचितं सुदिवसे सुमुहूर्ते रोहिणी पुत्रं सुषुवे. तस्य जन्मोत्सवं कृत्वा पिता वसुदेवो राम इत्यभिधां विदधे. क्रमाद्रामो मन्मनालापैः सर्वेषां मनांसि रमयन् प्रतिपच्चंद्र इव ववृधे. सप्ताष्टवार्षिकोऽसौ गुर्वंतिके सकलाः कला जग्राह. एकस्मिन् दिने कंसेनाहूतो वसुदेवः समुद्रविजयाज्ञया मथुरायां ययौ. तत्रान्यदा कंसो जीवयशाऽन्वितो वसुदेवमूचे, भो वसुदेव! समुद्रविजयेन राज्ञा यथा मम जीवयशा दापिता, तथैवाहमपि तवैकां महाकन्यकां दाप-

यामि. वसुदेवेनोक्तं सा का? कंसेनोक्तं शृणु सावधानो भूत्वा.

मृत्तिकावती नाम नगर्यस्ति, तस्यां नगर्यां देवको नाम मम पितृव्योऽस्ति, देवकीनाम्नी च तस्य देवकन्योपमा सुतास्ति, तया देवक्या सह तवाहं पाणिग्रहणं कारयिष्ये. वसुदेवेनोक्तं यथा तव रोचते तथा कुरु? ततश्चलितौ कंसवसुदेवौ, तावन्मार्गे नारदः समागतः. नारदेनोक्तं यूयं क चलिताः? नत्वा वसुदेवेनोक्तं कंसेनाहं देवक्याः पाणिग्रहणकृते चालितः. तत् श्रुत्वा नारदो गगनाध्वना देवकीसदने ययौ, देवक्या नतो नारदः, तेनाशीर्दत्ता, तव भर्ता वसुदेवो भवतु, यो जगत्त्रयवल्लभो विश्वैकवीर इत्यादि वसुदेवगुणानाख्याय स स्वस्थानं गतः. सापि वसुदेवगुणान् स्मरंती यावत्तस्थौ तावत्कंसो वसुदेवसहितस्तत्रागात्. विवेकिना देवकेन तौ शौरिकंसौ पूजितौ, भोजनदानसन्मानादिना च तोषयित्वा पृष्टं किमागमनकारणं? कंसोऽवोचद्वसुदेवायोचितां देवकीं प्रदापयितुं समागतोऽस्मीत्यागमनकारणं. देवकोऽवोचन्नैष विधिः कन्याप्रदाने, अतोऽहं देवकीं न दास्ये, तत श्रुत्वा तौ विलक्षौ निजं शिबिरमीयतुः. देवकोऽप्यंतःपुरे गतो नमस्कृतश्च देवक्या, राजापि हे पुत्रि! त्वमनुरूपं वरं लभस्वेत्याशीर्वादं ददौ, देवको देव्यै आख्यत्, देव्योक्तं देव! दी-

यतां देवकी वसुदेवाय? ईदृशः कोऽप्यन्यो वरो नास्ति, तत् श्रुत्वा देवको वसुदेवाय देवकीं दातुमुद्यतो बभूव, देवकोऽपि कंसवसुदेवाग्रे मंत्रिणा सह गत्वा देवकीं च दत्वा पूर्वापमानितौ तौ सद्यः सन्मानयामास. ततस्तयोर्वसुदेवदेवक्योः पुण्येऽह्नि विवाहो जज्ञे. तस्मिन् समये देवको नृपो वसुदेवाय करमोचने भूरिशः स्वर्णरत्नमणिमाणिक्यवस्त्रशस्त्रगजवाजिरथादिकं ददौ, तथा दशगोकुलनाथं नंदगोकुलिनं गोकोटिसंयुतं ददौ. विवाहानंतरं पूर्णमनोरथौ दशार्हकंसौ नंदसंयुतौ मथुरामीयतुः, मित्रविवाहोत्सवत्वात्कंसेनापि महोत्सवश्चारेभे, तदानीं पूर्वोपात्तव्रतोऽतिमुक्तको नाम महामुनिस्तपःकृशांगः पारणाहेतवे भिक्षार्थं कंसस्यौकस्यागात्, तदा मद्यवशाज्जीवयशा कंसपत्न्यालिंगनं दत्वा तं च देवरं ज्ञात्वैवमवादीत्, भो देवर! एहि? आवां नृत्यावः, किमनेन तपसा दुःखदायिना, सृतं योगध्यानेन मौनेन संयमेन च, भोगान् भुंक्ष्व? दुःप्रापं मनुजजन्म किं मुधा निर्गमयसि? मया सार्धं नृत्यं गानं च कुरु? एवं तया बहुधा कदर्थितः स ज्ञानी महामुनिः कोपावेशवशंगत एवं शशंस, हे निर्लज्जे! यन्निमित्तोऽयमुत्सवः क्रियते तस्याः सप्तमो गर्भस्त्वदीयपतिपित्रोर्हंता भविष्यति, नात्र संदेहः, तां वाचं वज्रनिभां श्रुत्वा गतमदावस्था सा महामुनिकंठं मु-

मोच, तत्क्षणादेव सा कंससमीपे गत्वा मुनिनोक्तं सर्वमाचख्यौ. कंसेन चिंतितं कदाचिदिंद्रप्रेरितं वज्रमपि मोघीभवेत् पुनर्मुनिभाषितं वृथा भवेत्, हे प्रिये! त्वं कस्याप्यग्रे इमां वार्तां माकार्षीः, अहं सर्वं भव्यं करिष्ये, इत्युक्त्वा तेन वारिता स्वप्रिया, कंसः कतिपयदिनांते क्रीडावसरे वसुदेवं ययाचे, भो वसुदेव! त्वत्समीपे किंचिदहं याचे. यतस्त्वं मम बांधवोऽसि, आवयोः किमप्यंतरं नास्ति, वसुदेवोऽवग याचस्व? कंसेनोक्तं देवकीसप्तगर्भान् याचे. वसुदेवेनोक्तं मया दत्ता देवकीपुत्राः, ते तवैव पुत्रा भवंतु, त्वं मम बांधवोऽसि, तावकीनमामकीनयोः किमप्यंतरं नास्तीत्युक्त्वा वसुदेवो गृहं ययौ, ततो वसुदेवो मुनिवृत्तांतमश्रौषीत्, छलितोऽस्मीत्युच्चरन् वसुदेवो मौनमादधे. इतश्च भद्दिलपुरे नागनाम श्रेष्ठ्यभूत्, तस्य सुलसानाम पत्न्यभूत्, तावुभौ परमश्रावकौ बभूवतुः, अतिमुक्तो मुनिश्चारणर्षिः शैशवे सुलसायाः समाचख्यौ, यदसौ बाला निंदुर्भविष्यति. तया तपसाराधितो नैगमीषी तुष्टः, तया याचितो मम पुत्रान् जीवापय? देवेनोक्तं जीवापयिष्ये, त्वं निश्चिंता भव? हरिणेगमेषिणावधिज्ञानेन ज्ञातं, सुलसापुरश्च प्रोक्तं यथा—अहं हि देवकीगर्भान्। हंतुं कंसेन याचितान् ॥ निंदोस्ते गर्भसंचारा—दर्पयिष्यामि धार्मिणि ॥ १ ॥ इति कथयित्वा स

देवकीसुलसे समं रजस्वले व्यधात, समं च ते गर्भवत्यौ बभूवतुः, समं च सुषुवाते. सुलसाया मृतमपत्यं स देवक्युदरे संचचार, तथैव देवकीगर्भं सुलसोदरे संचचार, एवं तयोस्तु षड् गर्भान् स सुरः पर्यवर्तयत, कंसोऽपि तान्निंदुगर्भान् दृढं शिलायामास्फालयत, षडपि ते देवकीगर्भाः सुलसागृहे स्वपुत्रवत्सुखमवर्धंत, तत् पुत्रमारणवृत्तांतं जनमुखात निशम्य वसुदेवदेवक्योर्महान खेदोऽभूत. अथान्यदा देवक्यर्धरात्रौ सप्तमे गर्भे गर्भागते इमान् सप्त स्वप्नानद्राक्षीद्यथा—गजो १ वृषभो २ सिंहो ३ लक्ष्मी ४ पुष्पमाला ५ शशी ६ दिनकरश्चेति ७. तान् दृष्ट्वा जागरिता देवकी चिंतयत्येते स्वप्ना भरतार्धपतिपुत्रोत्पादकास्तर्हि पत्युः शंसयामीति शीघ्रं गत्वा तया वसुदेवाग्रे प्रोक्तं, वसुदेवेनोक्तं तव वासुदेवः पुत्रो भावी. ततः सा देवकी गर्भं बभार, परं चिंतातुरा देवकी वसुदेवं जगाद, हे प्राणेश! एष सप्तमो गर्भः कंसेन व्यापादयिष्यते. शौरिर्विह्वलमभाषत, हे प्रिये! अहं जीवन्नपि मृतप्रायः, यतो मे पश्यतः कंसो मत्सुतान् पशुवज्जघान, असौ तनयः कंसराक्षसान्मया कथं रक्षणीयः? देवक्या प्रोक्तं स्वामिन् चिंतां मा विधेहि? दैवं बलवत, पुनर्वसुदेवेनोक्तं, हे देवि! मया पुत्ररक्षणोपायो लब्धः, मम गोकुलाधिपो नंदो यशोदासहितस्तव पुत्ररक्षको भविष्यति, तथा

स ते पुत्ररत्नं यत्नेन वर्धयिष्यति. एवमाश्वासिता देवकी संपूरितदोहदा गर्भं बभार. कंसोऽथ सप्तमगर्भस्य विशेषतो रक्षां करोतिस्म.

अथ संपूर्णे मासि प्रभाजालमालिनं श्रीवत्सांकितवक्षसं श्रावणसिताष्टम्यां लोकोत्तरे लग्ने वहमाने मध्यरात्रौ भरतार्धपतिं देवताधिष्टितं पुत्ररत्नं देवकी सुषुवे. तत्र कृष्णजन्मगृहे स्थापिता ये कंसपदातयस्ते भरतार्धदेवीभिस्तदा निद्रामानिन्यिरे. तान् निद्रागतान् दृष्ट्वा देवक्या वसुदेवमाहूय दत्तो बालकः. सोऽपि बालकमादाय गोकुलंप्रति प्रतस्थे. देवैरुद्योते क्रियमाणे, आतपत्रे ध्रियमाणे, चामरे वीज्यमाने. पदे पदे कृष्णशिरसि पुष्पवर्षणे विरच्यमाने स कृष्णं गोपुरद्वारमनयत्. उपरितनभूमिस्थितेनोग्रसेनेनाभाणि. भो वसुदेव! किमेतद् दृश्यते? वसुदेवेनोक्तमेष देवक्याः सप्तमो गर्भो यो मुनिनोक्तः, यश्च त्वां काष्टपंजरान्मोचयिता. सोऽयं बालो नेत्रविशालस्त्वया विज्ञेयः. उग्रसेनेनोक्तं तर्हि त्वं शीघ्रं याहि? मा विलंबस्व? सोऽपि बालमादाय यमुनामागत्य शिशोरनुभावाच्छीघ्रं यमुनामुत्तीर्य गोकुलं गतः. तदैव यशोदा नंदगेहिनी तनयां जनयांचक्रे. तनयं तस्याः समीपे मुक्त्वा तां पुत्रीं समादाय कृतकृत्योऽसौ त्वरितं स्वस्थानमागमत्, तां बालिकां च दे-

वक्याः समीपे मुमोच. तदैव ते कंसपदातयो जागरिताः, पुनस्तैः पृष्टं देवक्याः किं जातं? वसुदेवेनोक्तमेषा बालिका जाता. तेऽपि तां बालिकामुपादाय कंसाग्रे निन्युः. कंसोऽपि निरादरमुवाच एषा वराकिका किं मां हनिष्यति? इत्युक्त्वा छिन्ननाशिकां तां कृत्वा कंसो देवक्याः पुनरार्पयत. तद्दिनादारभ्य कंसः स्वस्थमना अस्थात्. अथ तेन बालेन तद्गोकुलं कांतिमदभूत्. अथ द्वादशे दिने नंदयशोदाभ्यां बालस्य कृष्णवर्णत्वात्कृष्ण इति नाम विदधे. सर्वा गोपवध्वस्तं बालं विस्मिताः सत्यो लालयंतिस्म.

एवं यशोदया पाल्यमानो बालो गोकुले ववृधे नंदने कल्पद्रुरिव. स बालो गोपवधूनां हस्ताद्धस्तं सरन्नत्यंतवल्लभोऽभूत्. अथ देवकी तनयालोकनोत्सुका कंचित्कंचिदुत्सवमुद्दिश्यांतरांतरा कृष्णस्नेहाद्गोकुलेऽगमत्. सा विविधालापपंडिता प्रस्नुतस्तनी तं बालमुल्लापयांचक्रे. नूनमहमभाग्या यानेन पुत्रेण त्यक्ता, किं करोमि? हे यशोदे! त्वं धन्या धन्यं चैतद्गोकुलं, एवं सा देवकी यशोदां गोकुलं च प्रशस्य मथुरां ययौ. अथ पूर्ववैरं स्मृत्वा पूतनाशकुनिके विद्याधर्यौ समुपागत्य विष्णुं भापयामासतुः. तदा कृष्णाधिष्ठातृदेवतया ते निधनं निन्याते. एवं कृष्णो बाहुभ्यां रिंखन् दधि-

दुग्धभांडानि लोठयन् गोकुले विचचार. एवं क्रमेण वर्धमानः स सप्ताष्टहायनो निजयशोभिर्दिशो व्यानशे. तैस्तैर्लोकोत्तरैर्गुणैर्युतः स नंदनंदनो गोकुलेषु वर्धतेस्म. एवंविधां लोकोक्तिं कोलाहलं च श्रुत्वा वसुदेवः कृष्णहिताय बलदेवं प्राहिणोत्. कृष्णोऽपि बलदेवांतिके सकलाः कला अध्यगीष्ट, अतोऽस्य बलभद्र उपाध्यायो बंधुश्च द्वयमप्यभूत. अथ ता गोपवध्वः पंचबाणेन ताडितास्तं कामरूपिणं ज्ञात्वा कृष्णमेव सिषेविरे. यथा—काश्चिदत्युच्चरोमांचाः। सानंदाश्चंदनद्रवैः॥ मांसलेंसस्थले तस्य। लिलिखुः पत्रवल्लरीं ॥ १ ॥ एवं कृष्णो गोपालबालिकाभिर्लालितो बलदेवेन पालितो गोकुलाकुले गोकुले कियंति वर्षाण्यगमयत्.

इतश्च समुद्रविजयपट्टराज्ञी शिवादेवी शौर्यपुरे नगरे कार्तिके मासि कृष्णद्वादश्यां तिथौ निशाद्वितीयप्रहरसमये चित्रागते चंद्रे चतुर्दशमहास्वप्नांस्तीर्थकृज्जन्मसूचकानद्राक्षीत्. ततो जागरिता राज्ञी प्रीतिमाप, तत उत्थाय राज्ञः समीपे च समागता सैवं जगाद, स्वामिन् मयैते स्वप्ना दृष्टाः, यथा—गय १ वसह २ सीह ३ अभिसेअ ४। दाम ५ ससि ६ दिणयरं ७ झयं ८ कुंभं ९ ॥ पउमसर १० सागर ११ विमाण—भवण १२ रयणुच्चय १३ सिहिं १४ च ॥ १ ॥ स्वामिन्नेतेषां स्व·

स्नानां मम किं फलं भविष्यति? राज्ञोक्तं तव महान् पुत्रो भावी, इत्युक्त्वा विसृष्टा सा स्वस्थानमागता, देवगुरुकथाभिः शेषरात्रिं च गमयामास. अथ प्रभाते जायमाने राजा क्रोष्टुकिप्रमुखनैमित्तिकानाहूय स्वप्नफलं पप्रच्छ. ततो विचार्य नैमित्तिकाः प्रोचुः, राजंस्तीर्थकराणां जनन्येतान्निरीक्षते, अतो लोकोत्तरप्रभावस्ते तीर्थंकरः सुतो भावी, इति श्रुत्वा राजा राज्ञी च द्वावपि पीवरां प्रीतिमापतुः, तान्नैमित्तिकान् बहुद्रव्यदानेन तोषयित्वा राजाराज्ञ्यौ व्यसृजतां, तद्गर्भानुभावतो देवी लावण्यं लेभे, तथा राजोदयं लेभे, देशो विघ्नध्वंसं लेभे. अथ श्रावणश्वेतपंचम्यां चित्रागते चंद्रे सौम्यग्रहैर्दृष्टे लग्ने शिवाराज्ञी सुतमसूत, तदानीं षट्पंचाशद्दिक्कुमारीभिस्तस्याः सूतिकर्म विनिर्ममे, तथा चतुःषष्टिसुरेश्वरैरपि तस्य सुमेरौ स्नानं चक्रे, तथा देवैर्यादवेंद्रस्य समुद्रविजयस्य सौधो धनधान्यरत्नौघैरापूर्यत, तथा तस्य पुत्रस्य जन्मोत्सवे राजा कारागारममोचयदमारिं चाघोषयत्, दशदिनानि यावद्राजा तस्य कुलोचितां स्थितिपतिकां करोतिस्म, द्वादशे दिवसे मातापितरौ तस्य पुत्रस्यारिष्टनेमिरिति नाम चक्राते, शौरिणा समुद्रविजयेन च कृष्णे जाते तथा नोत्सवश्चक्रे, यथा नेमौ जाते महामहश्चक्रे. एवं सुखेन दिनानि यांतिस्म.

एकस्मिन् दिने कंसो देवकीं दृष्टुं वसुदेवगृहे गतः, तत्र छिन्ननासिकां कन्यां क्रीडंतीमुदैक्ष त. तामालोक्य मुनेर्वाक्यं स्मृत्वा स भयातुरोऽभूत. यतः—पंथसमा नत्थि जरा । दालिद्दसमो प- राभवो नत्थि ॥ मरणसमं नत्थि भयं । खुहासमा वेयणा नत्थि ॥ १ ॥ स कंसः सौधं समेत्य रहो नैमित्तिकं पप्रछ, भो नैमित्तिक! मुनिनोक्तं किं सत्यं वाऽसत्यं वा? यद्भावि तद्ब्रूहि? नैमित्तिके· नोक्तं देवक्याः सप्तमो गर्भस्तवारातिर्जीवति, त्वं च ततो मृत्युमवाप्स्यसि, यन्मुनिनोक्तं तत्सत्यमेव. कंसेनोक्तं स ममारातिः कथं ज्ञास्यते? नैमित्तिकः प्राह भो कंसराजेंद्र! यस्तव दुष्टारिष्टनामवृषभ· हंता स ते हंता १, यः केशिसंज्ञकशूकलाश्वहंता स ते हंता २, यस्तव चाणूरमल्लहंता स ते हंता ३, तव पद्मोत्तरचंपकनामानौ यौ गजौ वर्तेते तयोर्यो हंता स ते हंता ४, पैरजनैर्दुःस्पर्श्यं यत्तव शार्ङ्गधनुस्तस्य यो ज्यारोपणं कर्ता स ते प्राणहर्ता ५, यः कालिंद्यां नद्यां कालीयो नाम्ना पन्नग- स्तस्य यो वशीकर्ता, स तव प्राणहर्ता ६. हे राजेंडैतत्सर्वं पुरा विशिष्टज्ञानवद्भिर्मुनिवरैराख्यातं. त· न्मयाप्युक्तं, परमेतत्सर्वं सत्यं ज्ञेयं. तत् श्रुत्वा भीतः कंसस्तं दानैः संतोष्य विसृज्य च मंत्रिणमू· चे, भो मंत्रि· रिष्टवृषभप्रमुखान् सुद्व्यैः पोषय? यथा ते पोषिताः संतो मदोन्मत्तास्तं ममाराति·

मेव विनाशयंति.

अथ कृष्णो गोपिकागणमध्यस्थो दिवसे धेनूनां वृंदं वने पालयामास, कथंभूतः कृष्णः? गोपालबालकैः परिवृतः. अथान्यदा कंसेन मुक्तावरिष्टकेशिनामानौ वृषभतुरगौ स्वेच्छया विचरंतौ गोष्टमुपेयतुः, तत्र तौ पड्डुकादीनां विमर्दनात्पयसां पानाद्गोकुलेऽस्तोकं शोकं चक्रतुः. गोकुलं शोकाकुलं दृष्ट्वा नंदो गोपानाह, भो गोपाः! कृष्णं समाह्वयत? गोपैराहूतो वनादागतो नंदनंदनो दुर्दमं वृषभं दृष्ट्वा धावितः शृंगे धृत्वा मुष्टिना हत्वा तत्कंधरां मृणालनालवन्मोटयित्वा तं यमातिथिं विदधे १, तथैव केशिनं तुरगं गोकुलोपद्रवकारिणं दृष्ट्वा हरिर्जगाद, भो केशिन्! सत्यपि मयि नाथेऽनाथमिव मम गोकुलं किं मथासि? इत्याक्षिप्तः स शूकलाश्वः केशी खुरैर्महीमुत्खनन् दशनैर्दशनान् पिषन् कृष्णसन्मुखमागात्. विष्णुरपि तस्य मुखे करं प्रक्षिप्य तं लीलया जीर्णपटवत्पाटयामास. ततो गोपवध्वस्तं कृष्णं स्वांचलोत्तारणैर्वर्धापयामासुः २. ततस्तयोर्वधोदंतश्चरनरैः शीघ्रमागत्य कंसाय निवेदितः. कंसोऽपि बृहस्पतिं मंत्रिणमूचे, भो मंत्रिन्ममारातिर्नंदगोकुलेऽस्ति, ततस्तद्ग्रहणोपायं विचिंतय? मंत्री ऊचे हे देव! शार्ङ्गचापाधिरोपणमिषात्सर्वान् भूपालानाहूयैवं कथय?

भो नृपालाः शृणुत मद्वचः, यः कोऽपि शार्ङ्गचापं समारोपयिष्यति तस्मै अहं स्वां भगिनीं सत्यभामां दास्ये. ततश्चारोपणकर्मणि समायातस्तवारातिस्त्वया ग्राह्यः, एवं मंत्रिणोक्तं सर्वं कंसेन कृतं, समाहूता राजानः सर्वेऽपि समाजग्मुः. तदा वसुदेवपुत्रो बलाग्रजोऽनाधृष्णिनामा शौर्यपुरात्समागत्य मथुरां गंतुकाम उत्सूरत्वाद्रात्रौ गोकुलेऽवासीत्. स तत्र बलभद्रमनुज्ञाप्य कृष्णसहायो मथुरांप्रति चचाल. मार्गेऽनाधृष्णे रथो वटद्रुमेऽस्खलत्, तद्वटद्रुमाद्रथमनाधृष्णिः समाकृष्टुं न समर्थः. तदा जनार्दनस्तं वटं मूलादुन्मूल्य दूरेऽक्षिपत्. तद् दृष्ट्वा रंजितोऽनाधृष्णिस्तं लघुबांधवमुत्संगे निवेश्य भूयोभूयश्चुचुंब, पुनश्च चचाल. ततोऽसौ मथुरां गतः, तत्र च चापं मंडपं च विलोक्य स उच्चस्थानेषूपविष्टः. ततस्ते सर्वे नृपालास्तं चापं चापसमीपस्थां सत्यभामां च निरीक्ष्य चिंतयामासुः, अहो क्वेदं चापारोपणं? क्व चास्याः सत्यभामायाः पाणिग्रहणं? तथापि सत्यभामापाणिग्रहणकृतमनोरथाः कलिंगबंगकाश्मीरकीरप्रभृतिपृथ्वीशा धनुःसमीपमागत्य दुरालोकं धनुर्विलोक्य नत्वा ते स्वं स्वं मंचं पुनराययुः.

अथानाधृष्णिस्तं राजन्यं हसित्वा धनुर्जिघृक्षया विसंस्थुलो व्यापृतकरमात्रः पततिस्म. तद्

दृष्ट्वा सत्यभामया हसितं, तथान्यैर्नृपादिभिरपि हसितं. एवं लोकहसितं दृष्ट्वाऽच्युतः स्वयं धनुरा· रोपयत्, यथा—कोदंडं चंडदोर्दंडः । कोपादारोप्य तं तदा ॥ विष्णुरस्थापयत्तेषां । हास्यस्थानेऽ· ऽद्भुतं रसं ॥ १ ॥ यावत्सत्यभामा तं सुचिरं निरीक्षते, तावत्कंसभटा निष्ठुरया गिरैवमूचुः, गृह्यतां गृह्यतां भो भो सुभटा एष चापारोपणलंपटः, यदस्मै मथुरापती रुष्टोऽस्ति. तत् श्रुत्वा केसरिकिशोर इव विष्णुरनाधृष्णिं पुरस्कृत्य तान् भटान् जित्वा मंडपान्निरगादभ्रवृंदाद्भानुमानिव. ततोऽनाधृष्णिर्ज· नार्दनं गोकुले बलभद्रांतिके मुक्त्वा स्वयं शौर्यपुरे ययौ. अनुधाविताः सुभटाः प्रत्यावृत्य कंसं ज· गुः, हे राजन्नैषोऽस्मादृशां साध्यः, किं चैष देवैरपि गृहीतुं न शक्यते. पुनः कंसो मल्लयुद्धमिषात् सर्वान् नृपानाजूहवत्. तद्भावं ज्ञात्वा वसुदेवोऽपि समुद्रविजयादीनामग्रजानां सर्वेषां कंसभावं ज्ञाप· यामास, तथा मनोगतां शिक्षां रामाय दापयामास. कंसः सर्वान् राज्ञ आगतान् दृष्ट्वोच्चेषु मंचेषु निवेशयामास. कंसोऽप्येकं मनोरमसुच्चमंचमारुरोह विमाने वासव इव. ततो दशार्हा दशदिक्पा· लसमास्तथैव मंचेष्वारुरुहुः. ततः कंसो मल्लानाजूहवत्, तेषां मल्लानां चाणूरमौष्टिकनामानौ मल्ल· नायकौ वर्तेते. ते मल्लाश्च प्रत्यहं मल्लयुद्धेन तत्र क्रीडंति. गोविंदो राजन्यान् गोकुलाग्रतस्तत्र ग·

इतो वीक्ष्य मल्लालोकनकौतुकी बलभद्रमवोचत्, हे आर्य! आवामपि मथुरां गत्वा मल्लयुद्धं पश्यावः, त्वं मे मनोरथमन्यथा माकार्षीः. बलभद्रेण चिंतितमेतस्याधुना पितुरादेशमाख्यातुं समयो वर्तते. इति विनिश्चित्य रामो यशोदामभ्यधात्. हे यशोदे! आवयोर्द्रुतं स्नानं कारय? यदावां मल्लालोकनकृते मथुरां गंतुमिच्छावः. सा प्रत्यूचे नाहं सांप्रतं रिक्ता, मम कार्यं वर्तते. तदा साक्षेपं क्रोधारुणाक्षो बलदेवोऽभ्यधात्, रे दासि! आत्मनि गर्विता किमस्मान्न जानासि? इत्युक्त्वा यशोदां निष्टुरवचनैस्तर्जयित्वा कृष्णं च करे धृत्वा स्नानाय कालिंद्यां बलभद्रः समाययौ. तस्या नद्या आसन्नवानीरवृक्षतले स्थित्वा बलः कृष्णमभाषत, भो वत्स! त्वमिदानीं विच्छायवदनः किं दृश्यसे, हरिः प्रत्याह भो बांधव! त्वया मम मातुस्तिरस्कारः कथं कृतः? तथा त्वया मम मातुर्दासीत्युक्त्वा कथं सा तिरस्कृता? मातुस्तिरस्कारकरणं मे दुःखकारणं, रोहिणीनंदनः कृष्णं बाहुभ्यां धृत्वोत्संगे निवेश्यैवमवोचत, हे भ्रातर्यशोदा तव माता नास्ति, तथा नंदस्तव पिता नास्ति, किंत्वावयोः पिता सौभाग्यनिधिर्वसुदेवः, ते माता देवकांगभवा देवकी, मम माता रुधिरराजात्मजा रोहिणी, कुशार्तदेशाधिपाः समुद्रविजयादयस्ते पितृव्याः, सर्वे यादवास्तव ज्ञातयः, त्वमस्माकं ज्ञातिभिर्नरता-

ध्र्पतिः प्रोक्तः, त्वादृशां पुरुषाणामीदृशे गोपालकुले किं जन्म भवेत्? यथा मरुस्थले किं कल्प-द्रुसंभवो भवेत्? किंतु देवकीवसुदेवाभ्यां कंसभयादिह गोकुले त्वं गोपितोऽसि. कृष्णेनोक्तं भो बांधव मम कुतो भयं? येनास्मिन् गोपसंकुले गोकुले गोपितोऽस्मि. ततो बलभद्रो भ्रातृवधादिकं सर्वं वृत्तांतं हरेरभ्याजहार. यतस्तद्वचः कर्षकेणोप्तं सद्बीजमिव फलेत्. अथ बंधुवधाद् रुष्टो गोविंदोऽभ्यधात्? भो सिद्धगंधर्वाः! देवदानवाः! क्षणमात्रं ममैकं वचनं शृणुत?—

सर्वेषां पश्यतां राज्ञां । यदि कंसं न हन्मि चेत् ॥ ध्रुवं तदाहं गृह्णीयं । तदीयभ्रूणहत्यया ॥

॥ १ ॥ इत्यादि वचनाकर्णनात्तुष्टो बलभद्रः कृष्णंप्रत्यूचे भो बांधव! त्वयात्मीयकुले तिलकवदाचरितं, यत्त्वयेदृशी प्रतिज्ञा कृता, तदेहि सांप्रतं यमुनांभसि स्नात्वा मथुरांप्रति व्रजावः, इत्युक्त्वा बलभद्रः कृष्णं यमुनाजले निनाय, तत्र जले दृष्टिविषः कालीयनामा पन्नगोऽस्ति, स यमुनातीरवासी स्वयं क्रीडन् कृष्णं दष्टुमधावत, धावंतं दंदशूकं दृष्ट्वा सर्वो लोको हाहारवपरोऽभवत्, सोऽपि श्यामघनवर्णः स्फारस्फटाटोपभीषणो विषोल्काभिर्यावत्केशवं दशति, तावदसौ तं कमलनालवत्स-कंदलेऽगृहीत्, तं नागं कमलनालेन नस्तयित्वा केशवो जात्यवाजिवत्तमारुह्य वाहयामास, तं दुर्दमं

पन्नगं दम्यमानं वीक्ष्य विमानवासिनो नभश्चरा विमानानि धृत्वा विस्मितास्तस्थुः, कृष्णेन यमुना-
जले स इतस्ततो भ्रामयित्वा तथा कृतो यथा निर्विषो जातः. ततः कृष्णस्तं मृतप्रायं समालोक्य
दूरादुत्सृज्य नद्यंभसि स्नात्वा तीरमुपागमत्, ततोऽयं यमुनातीरवासिभिस्तपस्विभिर्वीतविघ्नैर्यथार्था-
भिराशीर्भिः भूरिशोऽभ्यनंद्यत.

अथ गोकुलागतैर्गोपालबालकैः परिवृतौ रामकेशवौ नागरिकजनैर्विस्मयोत्फुल्लनयनैर्वीक्ष्यमा-
णौ मथुरागोपुरं यावता प्रापतुस्तावता मदोद्धुरौ महोत्कटौ महोन्नतौ गंधेभावन्यगजमसहमानौ त-
त्र बद्धौ कंसादिष्टमहामात्रप्रेरितौ पद्मोत्तरचंपकनामानौ रामकेशवौ हंतुमधावतां. तत्र पद्मोत्तरो हरिं
हंतुं दधावे, चंपकश्च हलायुधं हंतुं दधावे, केशवो गजशिक्षाविचक्षणो गजं खेलयामास, ततस्तं
दुष्टं गजं ज्ञात्वा स निष्ठुरैर्दृढमुष्टिभिः कीनाशदासतां निन्ये, रौहिणेयोऽपि चंपकनामानं द्वितीयं
गजेंद्रं वीक्ष्य कंठीरव इवोत्प्लुत्य कुंभस्थलं भित्वा तं हंतिस्म, ततस्तौ रामकेशवौ मथुरांतर्गत्वंतावु-
त्पताकं वालुकाकीर्णं पुष्पप्रकरदंतुरं सश्रीकं मल्लमंडपं जग्मतुः, रामसहितो गोविंदो रंगमंडपं वि-
शतिस्म, तदा तस्योपरि लोकस्य दृशो विस्मयविकस्वरा निपेतुः, ते सर्वे लोकाः कृष्णं दृष्ट्वा पर-

स्परमेवमवोचन्, यथा—स एष केशिकीनाशः । स एष वृषमर्दकः ॥ नंदस्य नंदनः सोऽयं । सो· ऽयं सर्पस्य दर्पहा ॥ १ ॥ गोपालतिलकः सोऽयं । सोऽयं सिंधुरघातकः ॥ श्लाघ्यमानो जनैरेवं । संदर्श्यते परस्परं ॥ २ ॥ युग्मं ॥ जनार्दनस्तत्र गत्वापरं जनमुत्सार्यैकं दुरारोहमुच्चमंचमारुरोह. अ· थ रामः कृष्णमभ्यधात्, हे वत्स हे सहोदरवत्सल! इतो दृष्टिर्व्यापार्यतां? किरीटकेयूरकुंडलहारमं· डित उच्चैः सिंहासने निविष्टस्तव भ्रातृघातक एष कंसस्त्वया ज्ञेयः, इतोऽपि स्वबंधुवर्गं सांऽया दृ· ष्ट्या विलोकय? एष समुद्रविजयो ज्येष्ठपितृव्यः. अयं च विश्वविख्यातयशा विद्याधरीराजकुमारी· प्राणप्रियो वसुदेवस्तव मम च पिता, एतेऽक्रूराद्याः शौर्यसिंधवस्ते बांधवाः, हे बांधव! इतः पश्य? समुद्रविजयाद्या दश दशार्हास्त्वां सौम्यदृशा विलोकयंति, इति बलभद्रे प्रवदति कृष्णः क्रोधवि· संस्थुलया दृशा कंसं विलोक्य तूष्णीको बभूव, इतः कंसो बृहस्पतिमंत्रिणं प्रोचे, भो मंत्रिन्! ऋ· षेर्वचो वृथाऽभवत, यतोऽस्मिन् मल्लयुधमंडपे स नागतः, तर्हि नास्त्येव मद्रिपुः, मंत्रिणोक्तं स्वामि न्नागतो भविष्यति, परं ज्ञातो नास्ति, अथ चाणूरमौष्टिकमल्लयोर्युद्धे स प्रकटो भविष्यति. ततः कं· सेन संज्ञितौ चाणूरमौष्टिकौ परस्परं युद्धं कुर्वंतौ सर्वेषां राजन्यानां शृण्वतां वाचमूचतुः, भो भो रा·

जन्याः! भो भो क्षत्रियाः! एतेषां सर्वेषां मध्ये यः कोऽपि शूरो वीरो विक्रांतो मानी पुमान् भवेत स आवाभ्यां सह मल्लयुद्धेन युध्यतां, यदि सर्वे स्त्रीतुल्या भवेयुस्तर्हि तूष्णीका भवंतु. इत्याक्षेपं श्रुत्वा हरिर्बलभद्रयुतो गोपवेषसहितो मंचादुत्तीर्य चाणूरस्याग्रे भूत्वा प्रगल्भया गिरेदमभ्यधात्, रे शूरमानिन् कातर! एषोऽहं तवाखर्वगर्वापहः क्षत्रियोत्तंसो विपक्षक्षयकारकस्तवाग्रे स्थितोऽस्मि. एहि? मया सह युध्यस्व? यथा ते शूरत्वं दूरीकरोमि. इति परुषया गिरा तर्जितश्चाणूरः सिंदूरारुणलोचनः कृष्णंप्रत्यूचे, रे बालगोपाल! तव मुखादद्यापि स्तन्यगंधो न निवर्तितः, तथास्मिंस्तव गात्रे पतंतो मम मुष्टयो लज्जंते, अहो! याहि स्वस्थानं? किमर्थमलीकं प्रगल्भसे? मम मुष्ट्या हतो घटकर्परवत्त्वं चूर्णीभविष्यसि. तत् श्रुत्वा हरिरवोचत, भो मल्ल! पुष्टप्रौढशरीरेण किं? लघुनापि च किं? लघुरपि सिंहः किं गजेंद्रं न भिनत्ति? अतस्त्वया स्थूलत्वलघुत्वविचारो न विधेयः, एहि मया सह युध्यस्व? पुनश्चाणूर उवाच, रे स्तनंधय! त्वं मम कक्षाकोटरे क्षिप्तः क्षणमात्रेण विनंक्षसि, अतस्त्वं दूरेऽपसर? इतो याहि? मद्दृष्ट्यापसर? मा म्रियस्व? तत् श्रुत्वा केशवो भुजास्फोटं वितन्वानो मल्लमंडपे परिभ्रमति. मल्लराजश्चाणूरोऽपि पर्जन्यवद्गर्जन् भुजास्फोटं कुर्वन्मंडपे

तरुणः क नु चाणूरः । क चा·
बभ्राम. तद् दृष्ट्वा हाहाकारपरो लोकः परस्परमेवमभाषत, यथा—
सौ गोकुलार्भकः ॥ न युक्तमनयोर्युद्धं । वृषतर्णकयोरिव ॥ १ ॥
एवं लोकोक्तिं श्रुत्वा तान् सर्वान् लोकान्प्रति कंसोऽवोचत्, भो भो लोकाः! एतौ गोपाल·
बालकौ केनाहूताविहायातौ? दुग्धमत्तौ स्वयं ह्येतौ युध्येते, एतौ को निषेधयते? कोऽनुमन्यते
च? एवं कंसोक्तं श्रुत्वा सर्वे राजानो लोकाश्च मौनमशिश्रियन्. कृष्णचाणूरयोः परस्परं नानाप्रकारं
मल्लयुद्धं दृष्ट्वा सर्वे राजानश्चित्रिता इवैकताना जाताः. तयोर्युद्धं दृष्ट्वा समुद्रविजयादीनां तनू रोमां·
चिताभवन्नवीनमेघोद्गमे नवांकुरा धरित्रीव. ततः कृष्णः स्वपाददर्दुरैर्मेदिनीं कंपयामास कंसमनसा
सार्धं. ततः कंसेन मौष्टिकोऽप्यादिष्टो यावता स श्रीपतिंप्रति हंतुं धावति तावद्रामो जगाद, रे दुरा·
चारमौष्टिक! त्वं मया सह संग्रामाय सज्जो भव? तव दोःकंडूतिमेषोऽहं व्यपनयामि. एहि मया
सह युध्यस्व? ततस्तौ द्वावपि मल्लौ द्वावपि विष्णुबलौप्रति युयुधाते. तस्मिन् महति संग्रामे जाय·
माने चाणूरेण बलं लब्ध्वा विष्णुर्हृदये मुष्टिना हत्वा भूमौ पातितो मूर्छां गतश्च. हरिं मूर्छागतमा·
लोक्य जनो हाहारवं चक्रे. ततश्चासनादुद्भवसन् कंसः पुनः किलकिलारवं चक्रे. तावद्बलः कल्पां·

तत्कालानलो मुष्टिप्रहारेण मौष्टिकमल्लं हत्वा कृष्णाभ्यर्णमागात्. ततो बलः कृष्णं स्वोत्तरीयवातव्यजनैः शीतलोपचारैश्चोन्मीलितचैतन्यं विदधे. यादवमनोरथैः सहोत्थितः कृष्णश्चाणूरंप्रति बभाषे, एहि भोश्चाणूर! यथाहं त्वां हत्वा यमातिथिं कुर्वे. तत् श्रुत्वा कुपितश्चाणूरो मुष्टिमुद्यम्य कृष्णंप्रति यावद्धावति तावत्कृष्णो वज्रसंनिभया मुष्ट्या चाणूरं वक्षसि ताडयामास. एवं सोऽपि ताडितो मृत्वा भूमौ पतितः.

अथ कंसश्चाणूरं यमस्यातिथिं वीक्ष्य चिंतयति सोऽयं ममारातिर्यः पुरा मुनिभिरुक्तः, तर्ह्येनं हन्मीति विचिंत्य स स्वाऽऽरानादिदेश, रे रे गृह्णीत गृह्णीतैनं गोपालबालकं? तत् श्रुत्वा हरिर्हरिवदुत्प्लुत्य मंचमारुह्य कंसमवोचत—अरे स्मरसि निस्त्रिंश । जातमात्रान्ममाग्रजान् ॥ निःशूकहृदयस्फार । शिलास्वास्फालयिष्यसि ॥ १ ॥ भो कंस! तवाखर्वगर्वशौर्यवीर्यं यद्यस्ति तर्हि मन आयुधे दीयतां. इत्युक्त्वांह्रिप्रहारेण तन्मुकुटं भंक्त्वा केशिजित्कंसं केशेषु धृत्वा मंचात्क्षितौ चिक्षेप. पुनरपि कृष्णस्तं कंसं तस्मिन्मंडपे उच्चैर्विमर्द्य पादप्रहारेण तस्य हृदयं विदार्य कीनाशदासतां निन्ये. अत्रांतरे मथुराधिपतेः सुभटा एनं हिंस्रं गोपं व्यापादयाम इति वादिनो रामेण वज्रवता त

दूरे निरस्ता. ततः समुद्रविजयादिभिर्यादवैर्मगधेशितुः सैन्यं विनाशं निन्ये. तस्मिन् समये द्वयमेतदभूत्, एकं जीवयशसा सह कंससैन्यैर्नष्टं, तथा सर्वैर्यादवसैन्यैर्मुदितं. अहो संसारः! एकस्य गृहे शोकोऽन्यस्य गृहे च हर्षः. अथ हृष्टोऽनाधृष्णिर्बलेन सहितं केशवं रथे समारोप्यादराच्छौरिमंदिरं प्रापयामास. ततः समुद्रविजयाद्या यादवा हरिं पुनः पुनर्नेत्राभ्यां विलोकयंतो मुदमापुः. गोविंदोऽपि प्रत्येकं प्रत्येकं पितुः पितृव्यानां च पादारविंदानि ववंदे.

अथ वसुदेवः केशवं स्वांके निवेश्य दृष्टिदोषापनोदाय मूर्ध्नि चुचुंब. देवक्यपि कृष्णमुत्संगे निवेश्य पुत्रालिंगनपरा चिरेण पुत्रगात्रस्पर्शसौख्यमशिश्रियत्. तथा समुद्रविजय उग्रसेनं मथुराराज्ये न्यवेशयत्. उग्रसेनोऽपि स्वां पुत्रीं सत्यभामां धनुरारोपणपणीकृतां जनार्दनायार्पयत्, जनार्दनश्च तां परिणिन्ये. अथ कंसस्य परिजनो मृतं भूमौ पतितं धूलिधूसरं कंसं दृष्ट्वा जीवयशसं विनान्यस्त्रियो मेदिनीगता उरस्ताडनपूर्वकं रुरुदुः. अथ कंसस्य संस्कारे जातेऽपि मगधाधीशतनया जीवयशाः कंसाय जलांजलिं न ददौ, एवमवोचच्च, यथा—उच्चैरवोचदेतच्च । सरामैः सजनार्दनैः ॥ यादवैः सह दास्यामि । प्राणेशाय जलांजलिं ॥ १ ॥ इत्युक्त्वा निवापांजलिमकृत्वा आम-

नगराण्युल्लंघ्य सा पितुरालयं राजगृहं समाययौ. यादवेश्वरः समुद्रविजयो जीवयशसं मगधेश्वरांति-
के गतां ज्ञात्वा सर्वान् यादवानाह्वास्त. तथा क्रोष्टुकिनैमित्तिकमप्याहूय सर्वेषु यादवेषु पश्यत्सु स-
मुद्रविजयस्तं नैमित्तिकं पप्रच्छ, भोस्त्रिकालज्ञ! अस्माकं जरासंधेन सह महान् विरोधो जातः, अथ
किं करिष्यते? वयमितश्चलिताः कुत्र यामः? कुत्र चास्माकमुदयो भावी? एतत्सर्वं स्वज्ञानेन ज्ञा-
त्वास्माकं पुरतः सत्यमाख्याहि? नैमित्तिकः प्राह भो राजन्! भवतः का चिंता? यस्य कुलेऽर्हद्ब-
लिकेशवानां जन्म जातं, तथा यस्य देवाः सान्निध्यमध्यासते तस्य का चिंता? तथापि शरीरिणां
भागधेयानि द्रव्यं क्षेत्रं कालं भावं च समाश्रित्य निःसंशयं विविधानि भवंति, अतो युष्माभिः स-
परिवारैरिदं क्षेत्रं मुक्त्वा पश्चिमसमुद्रतटे गंतव्यं, तथा यत्रैषा कृष्णपत्नी सत्यभामा सुतौ सूते तत्र
स्थाने महानगरी स्थाप्या, तस्यां नगर्यां च भवतामुदयो भावी. इति नैमित्तिकोक्तं श्रुत्वा सर्वे या-
दवाः समुद्रविजयादयो नैमित्तिकं द्रव्यादिभिः सत्कृत्य तं विसृज्य संचलनोपक्रमं व्यधुः. समुद्रवि-
जयेन राज्ञा कुशार्तदेशमथुरावासिलोकैः सह प्रस्थाने क्रियमाणे प्रथममेते शकुनाः प्रेरयंति, य-
था—कन्या गोपूर्णकुंभौ दधि मधु कुसुमं पावको दीप्यमानो । यानं वा गोप्रयुक्तं वररथतुरगं ब-

त्रगडातिगडं ॥ उत्खाता चैव भूमिर्जलचरमिथुनं सिद्धमन्नं मुनिर्वा । वेश्यास्त्रीमद्यमांसं हितमपि
वचनं मंगलं प्रस्थितानां ॥ १ ॥

एवं शुभशकुनैः प्रेर्यमाणा यादवेश्वराः सरिद्भूधरकांतारादिकमुल्लंघ्य क्रमाद्विंध्याटवीं प्रापुः. तत्र कानिचिद्दिनानि स्थित्वा यावता ते पुरतश्चलनोपक्रमं व्यधुस्तावज्जीवयशापूत्कृतिप्रेरितेन जरासंधेन प्रेषितः कालकुमारः सबलसैन्यपरिवृतो यादवसैन्यप्रत्यासन्नोऽभवत्. तदाच्युतसाहाय्यकारिण्या कुलदेवतया तयोः सैन्ययोरंतराले पर्वतं विकृत्य तस्य समीपे चितासमूहं, चितापार्श्ववर्तिरुदत्स्थविरारूपं च निर्विकल्पं विधाय मोहितः कालकुमारस्तस्यां चितायां पतित्वा मृतः, अनाथकं सैन्यं च प्रत्यावृत्य स्वस्थानमागमत्, जरासंधेन मंत्रिणः पृष्टा भो मंत्रिणः किं जातं? यद्यज्जातं तत्तत्सत्यं निवेदयत? मंत्रिणः प्राहू राजेंद्र! तव सुतभिया सर्वे यादवा वह्निं प्रविष्टाः, तदनु कालकुमारोऽपि कृतप्रतिज्ञो वह्निं प्रविष्टः, वयमत्र समागताः. ततो जरासंधः पुत्रशोकाकुलः कतिपयदिनांते विगतशोको बभूव. इतश्च तौ रामकेशवौ तथान्येऽपि यादवास्ततश्चलिताः क्रमेण ग्रामाकरनगरखेटकर्बटादि समुल्लंघ्य क्षेमेण पश्चिमांभोधिरोधसि क्रोष्टुकिना समादिष्टे स्थाने सैन्यं निवेश·

जात्यजांबूनदद्युती सुतावसूत, ततो नैमित्तिकादेशात् कृष्णो ल-
यामासुः, तत्र स्थाने सत्यज्ञामापि
वणाधिपं सुस्थितं देवं संमुखीकर्तुमष्टमतपोऽकार्षीत्, तेन तपसाहूतः सुस्थितो रत्नसंभृतप्राभृतमा-
दायोल्लसत्प्रीतिरागत्य कृष्णमेवमब्रवीत, जो अच्युत! त्वं ब्रूहि? किं करोमि? अच्युतेनोक्तं पूर्वं
पुरीनिवेशस्थानं देहि? ततः सुस्थितो जलमुत्सार्य केशवाय नगरीभूमिं सज्जीकृत्य ददौ, ततो मु-
रारये पांचजन्यं शंखं रामाय सुघोषं शंखं च दत्वान्यदपि रत्नमाल्यवस्त्रादिकं तयोर्दत्वा तत्स्वरूपं
चेंद्राय ज्ञापयित्वा स्वाश्रयं ययौ. इंद्रोऽवधिज्ञानेनाच्युताभिप्रायं ज्ञात्वा धनदायादिशत्, धनदोऽ-
पि तत्रागत्य तस्यामेवावनौ द्वादशयोजनायामां नवयोजनविस्तीर्णां द्वारिकानाम्नीं महानगरीं स्वः-
पुरीसन्निभामहोरात्रेण चक्रे, अत्र द्वारिकावर्णनं यथा—वप्रो वज्रमयस्तस्यां। नभःस्पृक्कपिशीर्षकः
॥ अभ्रंलिहानि वेश्मानि। नानामणिमयानि च ॥ १ ॥ विचित्रमणिमाणिक्यै—श्चत्वरेषु त्रिके-
ष्वपि ॥ जिनचैत्यानि दिव्यानि। तत्राभूवन् सहस्रशः ॥ २ ॥ दिनान्यर्धचतुर्थांश्च। यदा वैश्रव-
णाज्ञया ॥ रत्नैरनर्घ्यैर्ववृषु—र्जलैर्वर्षा घना इव ॥ ३ ॥ तत्राभिरामानारामान्। नंदनोद्यानबांधवा-
न् ॥ किंकरैः कारयामास। कुबेरो वासवाज्ञया ॥ ४ ॥ पुनः सा कीदृशी—

पृथ्वीतिलकायमाना, सर्वसौंदर्यनिधाना. लक्ष्मीजन्मावासा, सरस्वतीनिवासा, उज्ज्वलदेवकुलैर्मंडिता, परचक्रैरखंडिता, अतुलधवलगृहैर्विभूषिता, कुकविभिरदूषिता, सुवर्णहट्टमालामालिता, सर्वदैव सुमंत्रिभिः पालिता, सुवर्णपृथुप्राकारपरिखावलया, सर्वाश्चर्यनिलया, वापीकूपमंडितपरिसरा, चतुर्दिक्षु विराजमानसरोवरा, उद्यानवाटिकाभिरामा, दृश्यमानविविधारामा. पुरुषरत्नोत्पत्तिरत्नाचलनिभा, कुलवधूकल्पलताकनकाचलाभा, घनकनकैः समृद्धा, पृथ्वीतलप्रसिद्धा, अत्यंतरमणीया, सुरजनस्पृहणीया च कृता. एवंविधायां द्वारवत्यां नगर्यां सर्वे राजानो धनदेन यथास्थानं निवेशिताः, ततः कुबेरो विष्णवे पीतवाससी, नक्षत्रमालामुकुटं, महारत्नं कौस्तुभं, शार्ङ्गं धनुः, अक्षय्यशरौ तूणौ, नंदकं खड्गं, कौमोदकीं गदां, गरुडध्वजं वररथं चादात्, रामाय वनमालां, नीलवाससी, तालध्वजं रथं, तूणावक्षय्येषू, धनुर्हलमुशले चादात्, अरिष्टनेमिस्वामिने श्रीवाभरणं. बाहुरक्षके. त्रैलोक्यविजयं हारं, चंद्रसूर्याख्ये कुंडले, गंगातरंगविशदे वाससी, सर्वतेजोहरं रत्नं च धनदो मुदादात्, एवं समुद्रविजयादीनामपि शस्त्रवस्त्राभरणानि दत्वा सार्धदिनत्रयं स तत्र स्वर्णरत्नवृष्टिं विदधे, धनदाद्यैः सुरैः समुद्रविजयादिभिर्यादवैर्बलभद्रेण च संयुतः कृष्णो राज्येऽभिषिक्तस्तस्यां द्वार-

वत्यां. एवं तौ रामकेशवौ यादवसहितौ सदा स्वैरं नंदतः, यथा—लीलावनेषु वापीषु । क्रीडाद्रि-
षु यदृच्छया ॥ समं नेमिकुमारेण । रेमाते रामकेशवौ ॥ १ ॥

एवं तौ रामकेशवौ यादवसहितौ सुखेषु निमग्नौ गतमपि कालं न जानीतः. एवं कियद्व-
र्षांते, रत्नकंबलव्यतिकरेण जरासंधेन राज्ञा द्वारिका नगरी ज्ञाता, कोपावेशवशगते जरासंधे त-
त्र समागते परस्परं संग्रामो जातः, तत्र जरासंधे संग्रामे पुण्यक्षयान्निधनं गते पुण्यप्रकर्षतः कृष्ण-
स्य त्रिखंडराज्याभिषेको बभूव, तस्यां नगर्यां षट्पंचाशत्कुलकोटयो यादवा मध्ये वसंति, द्वासप्तति-
कुलकोटयो यादवा नगरकोट्टाद्बहिर्वसंति. समुद्रविजयादयो दश दशार्हाः, बलदेवादयः पंच महा-
वीराः, उग्रसेनादयः षोडश सहस्राणि राजानः, प्रद्युम्नादयः सार्धत्रयकोटिकुमाराः, शांबादयः षष्टि-
सहस्रदुर्दांतकुमाराः, वीरसेनादय एकविंशतिसहस्राणि वीराः, महासेनादिषट्पंचाशद्योधसहस्राणि,
रुक्मिणीप्रभृतयो द्वात्रिंशत्सहस्राणि राज्यः, अनंगसेनाद्यनेकगणिकासहस्राणि, इत्याद्यनेकजनस-
मूहैरलंकृतायां द्वारवत्यां नगर्यां श्रीबलभद्रकृष्णौ राज्यं कुरुतः. इतश्चाबाल्याद्ब्रह्मचारी श्रीनेमिजिनः
कुमारैः सह क्रीडया पर्यटन् कृष्णस्यायुधागारमशंकितो विवेश. तस्मिन्नायुधागारे स्वामिना श्रीने-

मिना हरेरायुधानि दृष्ट्वा विनोदेन गृहीत्वा यत्कृतं तदाह—

चक्रं येन कुलालचक्रवदिहांगुल्या भृशं भ्रामितं। शार्ङ्गं चापधनुर्मृणालवदलं येन स्वयं नामितं ॥ विष्णोरप्यसमश्रमभ्रमकरी कौमोदकी यष्टिव—घेनोत्पाट्य निजे महाम्बुजतरौ शाखाश्रियं प्रापिता ॥ १ ॥ स्वामिनि शंखं समादातुकामे शस्त्रगृहारक्षकः स्वामिनं नत्वा व्यजिज्ञपत, हे प्रभो! यद्यपि त्वं हरेर्भ्रातासि तथापि शंखमादातुं न शक्तोऽसि, तर्हि पूरयितुं कुतः समर्थो भवसि? इमं शंखमादातुमाध्मातुं हरिं विनान्यः कोऽपि समर्थो नास्ति, अतस्त्वं शंखपूरणे मुधा प्रयासं मा विधेहि? तत्तस्य वचनं श्रुत्वा किंचित् स्मित्वा श्रीनेमिस्तं शंखं करेण लीलया समुद्दध्रे, दंतज्योत्स्नया विभंबित इव पांचजन्यः स्वामिनोऽधरे विश्रामं कृतवान्. ततः स्वामी स्वशक्त्या तं शंखं दध्मौ, तदा चैवं जातं यथा—विष्णोः शंखवरेऽरविंदवदलं येन स्वयं पूरिते। स्तंभोन्मूलनपूर्वकं गजवरा भ्द्बंधनास्त्रिशिरे ॥ विश्वं स्नाग्बधिरं धरातिविधुरा वप्रश्चकंपेऽधिकं। पेतुस्ते मृतका इवाश्ववदलं शंका च बंधोर्हरेः ॥ १ ॥ संचेलुः शैलनाथा विचलितनिलया भीतिभीताः सुरेंद्राः। संत्रेसुर्दिक्करींद्रा भ्रमणपरिगतैर्मूर्छितं यादवेंद्रैः ॥ ब्रह्मांडं खंडखंडैः स्फुटितमुदधिभिः प्लावितं भूमिपीठं। य·

स्येदं शंखचापाक्रमणविलसिते सोऽस्तु नेमिः श्रिये वः ॥ २ ॥ तं शंखनादं श्रुत्वा हरिर्दध्यौ, किं चक्री कश्चिदुत्पन्नः? स्वर्गादिह वज्री समागतो वा? येनैष शंखो वादितः, अहो मयापि वादिते शंखे सामान्यनृभुजां क्षोभः स्यात्, अनेन शंखे ध्माते मम रामस्यापि च क्षोभो जातः. एवं कृष्णे चिंतयति शस्त्रागारादागत्य शस्त्ररक्षकः केशवं व्यजिज्ञपत्, हे राजेंद्र! तव बांधवेन श्रीनेमिना विनोदेनैष शंखः करे कृत्वा मुखवातेन पूरितोऽभवत्. तेन स क्षोभकारकश्च बभूव. तत श्रुत्वा विस्मयमापन्नो यादवेंद्रस्तद्वचनमश्रद्दधानो यावत्तस्थौ, तावन्नेमिनाथोऽपि तदंतिकमाजगाम. विलक्षः कमलापतिः श्रीनेमिनाथं बांधवं सगौरवं सिंहासने निवेश्यैवमभाषत, रे भ्रातरेष पांचजन्यः किं त्वया पूरितः? येन नादेन मही सर्वा क्षोभिता वर्तते. आमेति नेमिनोक्तं. तन्निशम्य तद्दोर्बलं समालोकयितुं कृष्णः सगौरवमब्रवीत्, हे बंधोऽस्मिन् शंखे त्वया पूरितेऽहं प्रीतोऽस्मि, यत एनं मां विनान्यः कोऽपि मुखवातेन पूरयितुं न क्षमः, त्वया तु मुखवातेन पूरिते त्रिभुवनं क्षोभितं. अथ तव बाहुबलपरीक्षणे मम कौतुकमस्ति, यतः—

वसणे मित्तपरिक्खा । दाणपरिक्खा य विणएण सीसपरिक्खा । सुहडपरिक्खा य होइ संगामे ॥

दुकाले ॥ १ ॥ इति कथयन्नेव कृष्णः परिकरं बबंध. ततः प्रकृत्या सदयो नेमिरिति दध्यौ, अहो!
मे दोष्णा पदेन वाक्रांतोऽच्युतः कथं भविष्यति? न जानात्येष जिनानां दोर्बलं. इति विचिंत्य स
वासुदेवंप्रति बभाषे, हे भ्रातर्मल्लयुद्धादिकं यद्युद्धं तत्तु प्राकृतजनयोग्यं, भूलुठनादिकमुत्तमानां न
युक्तं, अत आवयोर्युद्धं दोर्नामनेनैव भूयात्. ततः सामर्षः कृष्णः कथयति, अहो! शिवानंदनस्य
स्वभुजबले महान् गर्वो वर्तते. पुनः कृष्णेन स्वामिनंप्रत्युक्तं, हे बंधो! मया बालत्वे चाणूरमल्लस्य
बलं चूर्णितं, तत् किं त्वया न श्रुतं? तव मृणालकोमलबाहुनामने मम को बलोत्कर्षः? स्वामिना
सहासमुक्तं यथा—जंबालेणवि तुमए। चाणूरमुहाण भंजिओ दप्पो ॥ तं खलु जायवकुल—दे-
वयाण माहप्पमप्पडिमं ॥ १ ॥ कृष्णः पुनराह—कोमिसिलापउक्खेव—केलिकम्मेवि कोवि हु उ-
वाओ ॥ तुह हियए अ अवस्सं। वीरट्ठ एतंपि पयडेसु ॥ १ ॥ ततो नेमिः सहासं प्राह—कप्पो-
च्चिय एसो। केसवाण जं पाणिफासमित्तेण ॥ कोडिसिलाउक्खेवं। वच्चइ सयमेव किं चुज्जं ॥१॥
हरिराह—न हु तिहुयणेवि हु इक्को। कोवि गुणो आसि अत्थि होही वा ॥ जणाणंदो दिज्जइ
। मणंपि ही दुवियड्ढाणं ॥ १ ॥ नेमिः सहासमेव पुनस्तं प्राह—थेवेणंपि हु घिप्पइ। गुणेण

गोविंद जाणउ लोगो ॥ ता आयामसुबाहु । किमहं सक्केणमि नामेउं ॥ १ ॥ ततः कृष्णः शाखामिवायतं निजबाहुं प्रलंबितं कृत्वा स्वाम्यग्रेऽस्थात्. ततस्तं कृष्णबाहुं श्रीनेमिः कमलनालमिवानामयत्. ततः स्वामिनापि वज्रदंडवद् दृढो स्वबाहुः प्रलंबितः. ततो हरिस्तं नेमिबाहुं महावृक्षशाखामिवायतं समालोक्य बलगर्वितो हरिस्तं वालयितुं विलग्नः, तथापि तं नामयितुमशक्तोऽभूत्. ततः पिष्टदंतसंपुटारुणकपोलः स पादपशाखायां मर्कट इव सर्वस्वदेहभारेण पादाभ्यां भुवमस्पृशन् विलग्नः, कौतुकात् श्रीनेमिनांदोलितश्च, भणितश्च बलभद्रेण, यथा—अच्चुअ चएसु बाहुं । अहाणे कुणसि कीस अग्गाहं ॥ भमरभरेणं भज्जइ । कयावि किं नाम तरुसाहा ॥ १ ॥ ततो नेमिभुजं मुक्त्वा तं स्तुत्वा गाढं चालिंग्य हरिर्व्यसृजत्. बालेन स्वभुजबलेन चैवं जनार्दनस्तेन निर्जितः, इति प्रतिपादितं, शेषचरित्रं च श्रीनेमिचरित्रादवसेयं. एवं श्रीनेमिनाथस्य । चरित्रं भवपूर्वकं ॥ दर्शितं देशतः किंचि—न्मया मोक्षसुखप्रदं ॥ १ ॥ इति श्रीनेमिनाथचरित्रं समाप्तं. अथ गाथात्रयेण शीलं वर्णयन्नाह—

॥ मूलम् ॥—सीलं उत्तमवित्तं । सीलं जीवाण मंगलं परमं ॥ सीलं दोहग्गहरं । सीलं सो·

क्खाण कुलजवणं ॥ २ ॥ व्याख्या—शीलमुत्तमवित्तमुत्तमधनं, कारणे कार्योपचारात्, धनकारण-
त्वाद्धनं. शीलं जीवानां प्राणिनां परमं प्रकृष्टं मंगलं विघ्ननिवारकमित्यर्थः. पुनः शीलं दौर्भाग्यहरं
वर्तते. तथा शीलं सौख्यानां कुलं जवनं पितृगृहमिति सूत्रार्थः ॥ २ ॥

॥ मूलम् ॥—सीलं धम्मनिहाणं । सीलं पावाण खंमणं जणियं ॥ सीलं जंतूण जए । अ-
कत्तिमं मंडणं परमं ॥ ३ ॥ व्याख्या—शीलं धर्मस्य चारित्ररूपस्य, द्वादशव्रतरूपस्य वा निधानं
निधिः, शीलं पापानां खंडनं जणितं कथितं, शीलं जंतूनां प्राणिनां ' जएत्ति ' जगति विश्वत्रये-
ऽकृत्रिमं स्वाजाविकं मंडनं देहजूषणं प्रवरं प्रकृष्टमिति गाथार्थः. ॥ ३ ॥

॥ मूलम् ॥—नरयदुवारनिरुंजण—कवाडसंपुमसहोग्ररत्नायं ॥ सुरलोयधवलमंदिर—आरु-
हणे पवरनिस्सेणिं ॥ ४ ॥ व्याख्या—' नरयदुवारत्ति ' नरकद्वारं, तस्य यन्निरुंजणं निरोधः, तत्र
कपाटसंपुटसहोदरत्नायं कपाटसंपुटसदृशमिति निर्गलितार्थः, पुनः शीलं कीदृशं?—सुराणां लोकः
सुरलोकः, सुरलोक एव धवलमंदिरं, तत्रारोहणे निस्सेणिति निःश्रेणिकासमानमिति गाथार्थः. ॥
॥ ४ ॥ अथ दृष्टांतेन शीलं दृढयन्नाह—

॥ मूलम् ॥—सिरिउग्गसेणधूआ । राईमाई लहइ सीलवइरेहं ॥ गिरिविवरगओ जीए । रहनेमी ठाविओ मग्गे ॥ ५ ॥ व्याख्या—श्रीउग्रसेनस्य राज्ञः पुत्री राजीमतीनाम्नी शीलवतीषु सन्मध्ये सतीषु ' रेहंति ' रेखां लभते, यया राजीमत्या रथनेमिर्नेमिलघुबांधवो मार्गे स्थापित उन्मार्गे गच्छन्निवारितः सदुपदेशेन, कथंभूतो रथनेमिः? गिरिविवरगतो गिरिनारगुहास्थित इत्यक्षरार्थः, विस्तरार्थस्तु कथानकादवसेयस्तच्चेदं—

द्वाविंशः श्रीनेमिनामा जिनो राज्यं राजीमतिं च परित्यज्य विरक्तधी रैवते व्रतं प्रपन्नवान्, तस्य नेमेर्लघुभ्राता पाणिग्रहणलिप्सया राजीमतींप्रति प्रसत्तये प्राभृतानि प्रैषीत, सापि मे भर्तुर्भ्राता प्रेषयतीति बुद्ध्या निर्विकल्पतयागृहीत, एवं प्रतिदिनं कुर्वता कियद्वासरांते रथनेमिना राजीमती विवाहार्थं प्रार्थिता, तया घृतखंडसंयुक्तां दैरेयीं भुक्त्वा मदनफलमाघ्राय भाजने च वमित्वा दर्शितं, कथितं च भो देवरेदं परमान्नं भुंक्ष्व? तेनोक्तं किमहं श्वानोऽस्मि, यद्वांतमन्नं भुंजे? तत श्रुत्वा तया प्रोक्तं तर्हि भ्रात्रा त्यक्तां मां कथमुपभोक्तुमिच्छसि? अन्यच्च—को नाम गजमुज्झित्वा । रासभं बहु मन्यते ॥ को वा रत्नमनादृत्य । काचेऽपि कुरुते मतिं ॥ १ ॥ भो देवर! यत्त्वया दत्तं म-

थांगीकृतं, तद्भ्रातृस्नेहान्नान्येन हेतुना, तथास्मिन् जन्मनि जन्मांतरेऽपि च नेमितः परो मे स्वामी नो भूयात. ततः स्वामिनश्चतुःपंचाशद्दिनानंतरं समुत्पन्ने केवले राजीमती व्रतं लात्वा महत्तरा जज्ञे. ततः स्वामी पृथिव्यां विहरन्नन्यदा रैवते समवासरत्, तत्र कृष्णाद्याः सांतःपुरा यादवा अन्येऽपि च लोका वंदितुं ययुः, स्वामिनापि तेषामग्रे वैराग्यजननी धर्मदेशना विदधे, तां देशनां श्रुत्वा सांतःपुरो रथनेमिः श्रीजिनांतिके चारित्रमुपादत्त, अस्य स्त्रैणं राजीमत्या अंतिके दीक्षामपालयत्, यत उत्तमार्थेषु कृतिनः शिथिला न भवंति.

अन्यदा रथनेमिर्महामुनिर्नेमिजिनं नत्वा गिरिनारपर्वतादवतरन् मार्गे वृष्टिकायेन बाधितस्तद्गिरे एकां कंदरां प्राविशत्, राजीमतीमहत्तरापि मेघांबुभिर्बाधिता रथनेम्याश्रितामजानाना तदा तामेव गुहां प्राविशत, स्त्रीस्वभावात्सर्वाण्यपि वस्त्राणि दुष्कानाय त्यक्त्वा बाहुभ्यां स्वं शरीरं संगोप्यैकांते तस्थौ, तदानीं गुहाकोणके स्थितो रथनेमिर्मुनिस्तां स्वर्गलोकजयाय तपःक्रियां साधयंतीमिव विवसनां तन्वीं वीक्ष्य तद्रूपमोहितो ह्येवं चिंतयति, अहो एषा मया न भुक्ता, मे जन्म निरर्थकं जातं, तर्हि सांप्रतमेतां विजने मिलितां संभाषयामि. एवं विचिंत्येषत्कंप्रवपुरसौ विसंस्थुल

इवोद्वाय तस्याः पुरो भूत्वैवं बभाषे, एहि भद्रे स्वेच्छया क्रीडावः, एष गिरिः, एषा गुहा. एष मे-
घागमः, एतदावयोर्नवयौवनं वयः सफलं कृत्वा प्रांते उभावपि तपोविधिं चरिष्यावः, एवं मुनेर्वचो
निशम्य भीता सा महासत्वाऽर्द्राण्येव वासांसि परिधाय धीरत्वमवलंब्य तं महामुनिंप्रत्येवं जगाद,
भो महानुभाव! कोऽयं ते संरंभः? संसारकारणमवबुध्यस्व? पूर्वोक्तां प्रतिज्ञां च संस्मर? स्वयमं-
गीकृतां च प्रव्रज्यां मास्म विस्मर? तथा संयतीप्रतिसेवातो बोधिबीजनाशः श्रीनेमिनाथेनोक्तः, त-
दपि किं त्वया विस्मृतं? यतः श्रूयतां—संयतीप्रतिसेवायां । धर्मोड्डाहर्षिघातयोः ॥ देवद्रव्यविनाशे
च । बोधिघातो निवेदितः ॥ १ ॥ इत्याद्युक्त्वा पुनरसौ जगाद, भो महामुने! पूर्वं गृहस्थयापि
मया तव वचो नेहितं, साहं व्रतप्रतिज्ञायां त्वामद्य कथमाद्रिये? तथाहं श्रीभोजवंशीया, त्वमंधक-
कुलोत्पन्नः, तत इदमावयोरनुचितं, द्वयोर्व्रीडाकरं च, यतस्तिर्यंचोऽप्यगंधनकुले जाता भुजंगमा वां-
तं विषं न पुनरश्नंति, अतस्त्वं विचारयित्वा सावधानो भव? धर्मे च मतिं कुरु? वराटिकाकृते को-
टिं मास्म विनाशय? धीरत्वमाधाय शुद्धं धर्मं समाचर? इत्यादिमदनोन्माददर्पसर्पैकजांगुलीं तदु-
क्तियुक्तिमाकर्ण्येदं चित्ते चिंतयामासिवान्. असौ स्त्रीजातिरपि धन्या, एषा गुणसंपदां निधानं, य-

याहं पुरुषोऽपि कुकर्मजलधौ मग्नोऽपि वाग्हस्तदानेनोध्धृतः, अहोऽस्या धीरत्वं! या गृहवासेऽपीह कुशीलालंकारधारिणी, तर्हि सांप्रतं किमुच्यते? महत्तरा त्वेवंविधा भवत्येव. मया पूर्वमिदानीं च विरूपमाचीर्णं, अतो धिग्मां, यद्वावस्थावशाल्लघुता गुरुतापि च भवति, तस्मादेषा मे बंधुरथवा गुरुः, नात्र संदेहः, यया महासत्याहं नरककूपे निपतन् हस्तावलंबनेनोध्धृतः. एवं विभाव्य धन्यात्मा रथनेमिः श्रीमन्नेमिपादांते गत्वा पूर्वोक्तं दुश्चीर्णमालोच्य पुनस्तपस्यामग्रहीत्. तेन चतुर्वर्षशतप्रांते दीक्षा गृहीता. छद्मस्थो वर्षशतमेकं प्रपाल्य पंचवर्षशतांते स केवली जातः, तस्य सर्वायुर्यथा—वर्षाधिकां नवशतीं । शरदामखिलामयं ॥ प्रपूर्य सर्वशुद्धात्मा । रथनेमिः शिवं ययौ ॥ १ ॥ अहो दौरात्म्यमनुत्तरं विषयाणां, यैर्विषयैरसौ चरमात्मापि क्षणं निजवशंवदश्चक्रे. राजीमत्यपि गेहे वर्षचतुःशतीं स्थित्वा, वर्षशतं च छद्मस्थ्ये विहृत्य पंचवर्षशतांते समुत्पन्नकेवला पंचवर्षशतीं केवलशालिनी भूत्वा वर्षसहस्रांते मोक्षमगमत्. इत्थं नेमिजिनभ्रातू—रथनेमिमहामुनेः ॥ चरित्रं शीलसंयुक्तं । राजीमत्याश्च कीर्तितं ॥ १ ॥ इति रथनेमिराजीमत्योः कथानकं समाप्तं. ॥ अथ सीतादृष्टांतद्वारेण शीलप्रभावं वर्णयन्नाह—

॥ मूलम् ॥—पज्जलिओवि हु जलणो । सीलप्पभावेण पाणिअं हवइ ॥ सा जयउ जए सीआ । जीसे पयडा जसपडाया ॥ ६ ॥ व्याख्या—प्रज्ज्वलितोऽपि ज्वलनो वैश्वानरः शीलप्रभावेण शीलमाहात्म्येन पानीयं भवति. तत्र दृष्टांतमाह—'सा जयउत्ति' सा सीता जगति जयतु, यस्याः शीलमाहात्म्येन ज्वलनजलीभवनरूपयशःपताका प्रकटा वर्तते इति गाथार्थः ॥ ६ ॥ विस्तरार्थस्तु रामचरित्रादवसेयः, तथापि किंचिद्दर्श्यते, यथा—

मिथिलापुर्यां प्रजाजनक इव जनको नाम राजास्ति, तस्य राज्ञो विदेहेति नाम्ना पट्टदेव्यस्ति, सा राज्ञी यशःश्रियाविव समये युगपत्पुत्रकन्यके असूत. तस्मिन् समये कश्चिद्देवः पूर्ववैरतः पुत्रं जहारोरगं वैनतेय इव. स देवस्तं बालं वैताढ्यशिलायां विद्युत्पुंजमिवामुचत. तदानीं चंद्रशेखरविद्याधरस्य यात्रार्थं तस्योपरि गच्छतः शिशोश्चरमदेहत्वाद्विमानं स्खलितं. दक्षिणश्रेण्यधीशो रथनूपुरनायकस्तं बालकमादाय स्वगृहे गत्वा पट्टदेव्यै समर्पयामास. भामंडलत्वात्तस्य भामंडल इति नाम दत्तवान्. पुत्रवत्पाल्यमानः स बालचंद्र इव ववृधे. विदेहापि तस्मिन् हृते शोकं कृत्वा कालांतरे गतशोका बभूव. अथ सा पुत्री पितृभ्यां सीतेत्यभिधानं दत्वा वर्धिता. पुत्रापहारशोकशां-

कितैः स्वजनैर्भूमौ लोठितत्वात्तस्या भूसुतेति द्वितीयं नाम प्रस्थितं. सा वर्धमाना लक्ष्मीरिव कलाभिर्वयसापि च वर्धिता. क्रमेण यूनामुन्मादोत्पादने कापिशायिनीतुल्यं यौवनं प्राप्ता. जनको नृपस्तस्या वरार्थं यावता चिंतातुरोऽभूत्, तावता ह्यातरंगतमाम्लेच्छराजो जनकमंडलं ललौ. ततो जनकोऽयोध्याधीशं पूर्वप्रतिपन्नसौहृद्यं दशरथंप्रति दूतं प्रेषयामास. तस्य दशरथस्य चतस्रो वल्लभा अभवन्. प्रथमा कौशल्या, द्वितीया सुमित्रा, तृतीया कैकेयी, चतुर्थी सुप्रभाभिधा च. तासां चतसृणामेते चत्वारस्तनया अभवन्, प्रथमो रामनामा पद्मापरनामाष्टमो बलदेवोऽभवत् १. द्वितीयो लक्ष्मणो नारायणापरनामाष्टमोऽर्धचक्रप्रभूत् २. भरतशत्रुघ्नावपि ३, ४ महाबलवंतौ लक्ष्योधिनौ. एवं चतुर्भिः पुत्रैर्दशरथः शोभते गजदंतैर्मेरुरिव. अथ जनकदूतस्तं दशरथं प्रणिपत्य पुरो निषसाद. दशरथोऽपि मैथिलस्य स्वसुहृदः कुशलोदंतं पप्रच्छ. दूतः स्माह तव सुहृदः सांप्रतं कुशलमस्ति, परं म्लेच्छराजभिर्वेष्टितो दुर्दशां नीतः परमात्मवत्त्वां स्मरति. अथ भवान् विलंबं परित्यज्य यथोचिते कार्ये प्रयततां. तत्र मित्रकार्यकृते त्वरितं गंतुकामं दशरथं निवार्य लक्ष्मणसहितः श्रीरामः सन्नद्धः सकलसेनासमावृतो मिथिलायां प्राप, म्लेच्छसेनया सह च योध्धुं दुढौके. भग्ना म्लेच्छसेना सूर्यात्त-

म इव. तोषितो जनकः, नष्टा म्लेछाधिपाः. तस्मिन् समये जनकस्य द्वयं जातं, एको जयो द्विती-
या च वरप्राप्तिः. जनकेन चिंतितं रामाय सीतां ददामि. यावदेवंविधां वार्तां स करोति, तावत्तत्र
कौतुकी कौपीनी अपीनांगः पिंगनेत्रो भीषणाकृतिः करकृतकमंडलुस्त्रिदंडव्यापृतकरो नारदः सीतां-
तिके समागात. तं दृष्ट्वा सीता भीता गृहांतरेऽविशत्. तदानीं दासीभिर्नारदः कंठे धृत्वा बाहुभ्यां
संगृह्य गृहाद्बहिर्नीतः. तान्निर्मुक्तो नारदः क्रोधारुणलोचनो हठादुत्प्लुत्य वैताढ्यं ययौ. तत्र गत्वा
सीतारूपं पटे लिखित्वा चित्रगतिपुत्राय भामंडलाय दर्शयामास. तेन मोहितो भामंडलो नारदं
पप्रछ कस्येदं रूपं? नारदेनोक्तं जनकतनयायाः किंचिदाकारमात्रं मया विनोदतो लिखितं, परं
यादृशं रूपं वर्तते तादृशं लेखयितुं कः समर्थो भवेत्? इत्युक्त्वा नारदोऽन्यत्र गतः. भामंडलस्त-
द्दिनादारभ्य कामं कामार्तो बभूव. चित्रगतिविद्याधरेणोक्तं भो पुत्र त्वं किं चिंतातुरो दृश्यसे? त-
दा तन्मित्रेण सकलो नारदोक्तो वृत्तांतः कथितः. तत श्रुत्वा चित्रगतिनोक्तं, अहं तथा यतिष्ये
यथैषा सीता तव पत्नी भविष्यति. इत्युक्त्वा तोषितो भामंडलः सुखेनास्थात. ततश्चंद्रगतिविद्याधरे-
ण निशायां चपलगतिं विद्याधरं संप्रेष्य निद्रायां सुप्तः समुत्पाट्यानायितो जनकः स्वांतिके, जाग-

रितो जनकश्चंद्रगतिना बहुमानपुरस्सरं सीतां कन्यां भामंडलार्थं ययाचे. तेनोक्तमेष मया दशरथपुत्राय रामाय दत्ता, सा पुनस्तव पुत्राय भामंडलाय कथं ददामि? यतः—सकृज्जल्पंति राजानः ।

सकृज्जल्पंति पंडिताः ॥ सकृत्कन्याः प्रदीयंते । त्रीण्येतानि सकृत्सकृत् ॥ १ ॥ किंच—कुलं च शीलं च सनाथता च । विद्या च वित्तं च वपुर्वयश्च ॥ वरे पराः सप्त गुणा विलोक्या—स्ततः परं भाग्यवशा हि कन्या ॥ २ ॥ पुनश्चंडगतिर्जगौ यदि त्वं प्रेम्णा प्रार्थितो न दत्से तर्ह्यहं बलात्कारेणापि गृहीष्यामि, यद्वा रामं पराजित्य मत्सुतः सीतां परिणेष्यति, यदि वा सर्वेषामनिंद्यं मम वचनं शृणु?—

मम गृहे वज्रावर्त १ अर्णवावर्त २ नाम्नी पृथक्पृथग् यक्षसहस्रेणाधिष्ठिते देवताज्ञया भविष्यद्रामवासुदेवयोः कृते रक्षिते द्वे धनुषी स्तः, ते आदायैवं पणं कुरु? यदेतयोर्मध्ये एकमपि धनू रामो वा भामंडलो वा य आरोपयिष्यति, स सीतां परिणेष्यति, जनकेनोक्तमेवं भवतु, इति कालक्षेपचिकीर्षया तेन मानितं, चंडगतिविद्याधरो वज्रावर्तार्णवावर्ते द्वे धनुषी दत्वा जनकेश्वरं सानंदं मिथिलायां प्रापयामास, जनकः प्रातःसमये सीतास्वयंवरं प्रारेभे, दूतप्रेषणेनाहूता भूभुजो भूच-

राः खेचराश्च समाजग्मुः, भामंडलेन सहितश्चंद्रगतिरपि तत्रागतः, चतुःपुत्रैः परिवृतो दशरथोऽपि समागात्, तेषां सर्वेषां स्वयंवरे समागतानां राज्ञां पृथक्पृथगावासेष्वावासितानामन्नपानादिभिर्जनकस्तुष्टिं व्यधात्, शुभमुहूर्ते समारब्धे देवविमानोपमे स्वयंवरमंडपे उच्चोच्चतरमंचकेषूपविष्टेषु नृपतिषु नरयानारूढा सर्वालंकारधारिणी देवीव स्वयंवरे सीता सभामध्यमवातरत्, तस्मिन् समये सर्वेषां सभासदां दृष्टिपथं गता मोहिताः सर्वेऽपि सभाजनाः सीतारूपं वर्णयंतिस्म, यथा—तन्वी श्यामा धवलदशना पक्वबिंबाधरोष्ठी । मध्ये क्षामा चकितहरिणीप्रेक्षणा निम्ननाभिः ॥ श्रोणीभारादलसगमना स्तोकनम्रा स्तनाभ्यां । या तत्र स्याद्युवतिविषये सृष्टिराद्येव धातुः ॥ १ ॥

तस्मिन् समये जनकप्रतीहारः करमूर्ध्वीकृत्य बाढस्वरेणैवं समाचष्टे, भो भो सभासदः शृणुत मद्वचो यो वज्रावर्तं देवताधिष्ठितं धनुर्ज्यारूढं करिष्यति, सोऽस्यां सभायां खेचरो वा भूचरो वा कन्यारत्नामवैदेहीमवश्यं परिणेष्यति. ततः सरभसं भूयांसो नृपपुत्राश्च समुत्थायोपकार्मुकं समीयुः, तत्र केऽपि राजानो दिव्यानुभावतो धनुः पन्नगरूपं दृष्ट्वा नेशुः, केऽपि ज्वलद्वह्निं ददृशुः, एवमनेकप्रकारैः स्पर्शितुमशक्यं तद् ज्ञात्वा सर्वेऽपि स्वस्थानमशिश्रियुः, तदानीं पितुराज्ञया रामो गजग-

त्या चलंश्चंचलकुंडलो वज्रावर्तं धनुः करे कृत्वा प्रत्यंचारूढं विधाय वैदेहीहृदा सह समाकृष्य पुनः प्रत्यंचात उत्तार्य तथैव स्वस्थानेऽमुंचत्, एवं लक्ष्मणोऽप्यर्णवावर्तं धनुरारोप्य तथैवामुचत्, तदैव लक्ष्मणो विद्याभृतामष्टादश कन्यका उपायंस्त, भामंडलः सीतार्थं ताम्यन् केनापि ज्ञानवतामुनिनोक्तो भो भामंडल! तवेयं युग्मजातेति कथयित्वा विषयाभिलाषान्निवारितः, ततो भगिनीं नत्वा स संतुष्टमना जातः, जनकेन पूजितश्चंद्रगतिविद्याधरः सपुत्रः स्वस्थानं गतः, एवमन्येऽपि राजानः स्वस्वस्थानं गताः, सीतया सह विहितविवाहो जनकेनात्यंतविहितसत्कारो रामोऽपि दशरथान्वितः स्वां राजधानीमलंचकार. अन्यदा तुर्ये वयसि जरन् दशरथो राममभिषेक्तुकामः कैकेय्या पुरा न्यासीकृतं वरं याचितः, हे प्राणेश! ऋणार्तस्य दीक्षा न भवति, अतो न्यासीकृतं वरं देहि? राज्ञोक्तं मार्गय? तया मार्गितं भरताय मम पुत्राय राज्यं देहि? तदा रामाय दशरथेनोक्तं हे पुत्र! पुरा कैकेय्याः स्वयंवरे मया सारथ्यतुष्टेनास्या वरो दत्तः, सांप्रतं सा स्वपुत्रस्य राज्येन तं वरं याचते, रामेणोक्तं हे ताताहं तव पुत्रो भरतोऽपि च ते पुत्रः, अतो भरताय राज्यं दत्वा त्वमृणरहितो भव? तावता भरतोऽवादीत्, हे ताताहं त्वया सह तपस्यामादास्ये, मम राज्येन कार्यं ना-

स्ति, अतो रामाय राज्यं देहि? रामोऽवादीद्भो भरत! राज्यं गृहाण? तातं च ऋणरहितं विधाय मातरं कैकेयीं तोषय? इत्याद्युक्तिप्रत्युक्त्या प्रांते दशरथो भरताय राज्यं ददौ, रामश्चिंतयति मय्यत्र विद्यमानेऽसौ राज्यं न प्रतिपत्स्यते, तदहं वनवासे यामि, तत श्रुत्वा कौशल्या रामजननी मूर्छिता भूमौ पपात, पुनर्लब्धचैतन्या च सा विललापाहो विधिना किं कृतं? रामवियोगं कथं सहिष्ये, रामः प्राह हे मातः कातरत्वं त्यज? साहसं च भज? सिंहे वनांतरे गते किं सिंही दुःखिनी भवेत्? यतस्तातेन कैकेय्या वरो दत्तः, तर्हि सत्यव्रतस्य तातस्यानृण्यं कथं नोत्सहे? इत्थमंबां विबोध्य रामः शेषा जननीः प्रणम्य सिंहवत्काननं प्रतस्थे. सीतापि नृपमापृच्छ्य श्वश्रूर्नत्वा स्वभर्तुरनुययौ. लक्ष्मणोऽपि वने यांतं रामं समाकर्ण्य कोपारुणलोचनो दध्यौ, भरतं कैकेयीं च हत्वाहं रामाय राज्यं वितरामि, यद्वा पापात्मानं मां च ज्ञात्वा रामो राज्यं मां च नांगीकरिष्यति. अतः कुलविरुद्धं कार्यमुन्मुच्य राममनुयामि.

इति ध्यात्वा तातं मातरं चापृच्छ्य सीतासमन्वितं रामं सौमित्रिरनुजग्मिवान्. ते त्रयोऽपि पौरैरपारबाष्पौघैर्वीक्षमाणाः प्रफुल्लवदनाकारा अयोध्यापुर्या विनिर्ययुः. श्रीरामः सौमित्रिसीताभ्यां सम-

न्वितो मार्गे संचरन् दंडकाख्यामरण्यानीं गत्वैकस्मिन् गिरिगह्वरेऽस्थात्. तत्र द्विमासक्षपणप्रांते कौ-
चिन्मुनी समायातौ, प्राशुकान्नपानदानतस्तत्र पंच दिव्यानि जातानि, यथा—जलवृष्टिः १, पुष्पवृ-
ष्टिः २, स्वर्णवृष्टिः ३, देवदुंदुभयः ४, अहो दानमहो दानमित्याघोषणं चेति ५. तत्कुसुमसुरभिज-
लगंधतः कश्चित्कुष्टरोगी खगगंधनामा पक्षींद्रस्तत्रागत्य मुनी प्रणनाम. मुनिपादस्पर्शनतो नीरुक्
स्वर्णपक्षो रत्नांकुरजटश्च स संजज्ञे. मुनिं नत्वा रामः पप्रच्छ हे भगवंतौ! असौ दुष्टात्मा कुष्टी खगो
युष्मत्पार्श्वस्थितः शांतात्मा कथं जातः? तदा तयोर्मध्यादेको महामुनिर्जगौ भो राम! श्रूयतां, पु-
रास्यां भूमौ कुंभकारकृन्नाम पुरमभूत्. तत्र दंडकी नाम भूपालो राज्यमपालयत, तस्य पालकनामा
महामंत्र्यभूत्. तेन मंत्रिणा दंभतः स्कंदकाचार्यः पीडितः. स स्कंदको निदानं कृत्वा मृतो वह्निकु-
मारेषु सुरोऽभवत्. तेन देवेनैतत्पुरं दग्धं सराष्ट्रं सलोकं च. तद्दिनादारभ्य चेदं दंडकारण्यं जा-
तं, दंडकिभूपराज्यत्वाच्च दंडकाख्यमरण्यं पप्रथे. स दंडकिराट् भवं भ्रांत्वा सोऽयं कुष्टी खगोऽभूत्.
जातिस्मरणतश्चावामालोक्य स द्रुतमीयिवान्, अस्मत्पादस्पर्शतश्चासौ नीरोगः स्वर्णपक्षश्च संजातः.
अद्यप्रभृति चायं धर्मवान् युवयोः साधर्मिको जातः. ततः साधर्मिकत्वाद्राघवौ तं बंधुं मन्वानौ सी-

तया युतौ पंचवटीं प्राप्तौ, तत्र वल्लीगृहेषु च स्थितिमीयतुः.

अथ क्रौंचरवानद्यास्तटे लक्ष्मणो वंशजाल्यां विलग्नमेकं खड्गं ददर्श. क्रीडापरायणो लक्ष्मणः कौतुकेन तं खड्गं समादाय तत्तेजोविलोकनार्थं बालमृणालवत्तां वंशजालीं लीलया लुलाव. तस्यां वंशजाल्यां सधूमकुंभं तथैकं बुडबुडायमानं मुंडं चालोक्य लक्ष्मणो भृशं दुःखाक्रांतो बभूव, हा हा मया कश्चिद्विद्यासाधको निरायुधो नरो हतः. एवं चिरं शोचित्वा स तद्वृत्तांतं रामाय शशंस. रा· मोऽप्याख्यदसौ सूर्यहासखड्गः, अस्य साधकश्च त्वया हतः. इतः पाताललंकायां खरनामा राक्षसोऽस्ति, तस्य वल्लभा सूर्पणखा चंद्रणखापरनाम्ना दशग्रीवभगिनी संपूर्णविद्यं स्वं पुत्रं शंबूकनामानं समालो· कयितुं गानं कुर्वती नभसा समागात्. तत्र वंशजालीं छिन्नां दृष्ट्वा तन्मध्ये शंबूकमस्तकं च रुधिरा· रुणं समालोक्य हा वत्स वत्सेति कृत्वा सा मूर्छिता भूमौ पपात. पुनर्लब्धचैतन्या बाढस्वरेण वि· लापं कृत्वा स्वपुत्रस्य घातकं विलोकयितुमितस्ततो भ्रांत्वा लक्ष्मणपादांकवर्त्मना रामांतिकमुपागम· त्. कामरूपं रामं च समालोक्य कन्याकृतिरूपं कृत्वा सा निजपाणिग्रहणमयाचत. रामेणाभाणि हे भद्रे! मम भार्यास्ति, अतो मम कनिष्ठं बांधवं लक्ष्मणमंगीकुरुष्व? ततः सा लक्ष्मणपार्श्वेऽगात्,

लक्ष्मणेनापि प्रोक्तं त्वं पूर्वं ममाग्रजं गता, अतो मम भ्रातृजाया जाता, एवं लक्ष्मणेनापि निराकृता सा पुना रामपार्श्वे गता. एवं वारंवारं यांतीं चंद्रणखां विलोक्य सीता हसिता, ततो विकृताकृतिरूपं विकृत्य सा कोपान्निर्गता खराय शंबूकवधमाख्यत्. खरोऽपि पुत्रवधोदंतं श्रुत्वा चतुर्दशसहस्रसुभटैः परिवृतो दशरथात्मजौ हंतुं प्रतस्थे. तत्सैन्यं समागतं वीक्ष्य लक्ष्मणो राममभाषिष्ट, हे बंधो! त्वं सीतया सह सुखं तिष्ठ, अहं च खरं हंतुं यामि, रामेणोक्तं संकटे सिंहनादेन ज्ञापयेः. यथाहं त्वरितमेवागमनं करोमि. इति शिक्षां समादाय लक्ष्मणो राक्षसान् हंतुं प्रतस्थे गरुत्मानिव पन्नगान्.

अथ चंद्रणखा खरसाहाय्यकृते त्रिकूटपर्वते समागत्य दशास्यमिदमब्रवीत्, हे बंधो दंडकारण्ये दशरथपुत्रौ रामलक्ष्मणौ वर्तेते, याभ्यां तव भागिनेयो यमाय बलिरदीयत. ततस्तं हंतुं खरश्चतुर्दशसहस्रैर्विद्याधरैः परिवृतस्तत्रागात्, परं तैर्विद्याधरैः सह तस्य लघुबांधवो लक्ष्मणो निर्भीको युयुधे, वृद्धबांधवो रामस्तु तस्य शौर्येण स्ववीर्येण च गर्वितः सीतया जायया सह स्वैरं क्रीडन्नस्ति. किंच हे बंधो! तादृक्स्त्रीरत्नं तवापि नास्ति, यादृग्रामस्य वर्तते, तथा यावत्तौ रामलक्ष्मणौ जितौ न स्तस्तावत्ते दोष्मत्त्वं टिट्टिभस्येव मन्यस्व? तत् श्रुत्वा सीतारूपेण मोहितः पुष्पके विमाने समारुह्य स

सीतासमीपे समागात्. रामपार्श्वे तां निषण्णां वीक्ष्य हर्तुं चाशक्यां ज्ञात्वा स विलोकिनीं विद्यां सस्मार. तयोक्तं सिंहनादाद्दूरीभूते रामे त्वं सीतामपहर? एवं विद्ययोक्ते दशमुखो दूरं गत्वा सिंहनादमकरोत्. तत् श्रुत्वा साशंको रामश्चिंतयति, आः किं जातं? मद्बांधवो जगत्येकवीरो वैरिणा जितः. सीता बभाषे स्वामिन्! किं विलंबसे? प्रयाहि शीघ्रं? त्रायस्व बांधवं? एवं प्रसन्नं सीतया नुन्नो रामोऽपि चापे मौर्वीमारोप्य सौमित्रिमनुजग्मिवान्.

ततो रावणः पुष्पकविमानादवतीर्य लक्ष्मणचिंतया व्यग्रां जानकीं रयाद्विमाने आरोपयितुमारेभे, तदानीं सीताया रुदनं श्रुत्वा जटायुः पक्षिराट् समागतः, प्रोवाच च हे सीते त्वं माभैषीः, चंचाप्रहारेण हन्मि राक्षसमित्युक्त्वा धावितो जटायुः, सोऽपि क्रुद्धस्तं कृपाणेन हत्वा पृथिव्यामपातयत्. ततस्तां सीतां रुदतीं विमाने समारोप्य स नभसा चचाल, पुनः सा बाढस्वरेण हे रामलक्ष्मणौ! हे भ्रातर्भामंडल! दशास्येन नीयमानां मां रक्ष रक्षेति वादिनीं श्रुत्वा भामंडलस्यैकः पत्तिर्नभसा गच्छन् योद्धुमागच्छन् दशास्येन हतविद्यो भूतले पातितः. ततो रावणः प्राह हे सुंदरि जानकि! त्वं किमाक्रंदसि? किं मां नोपलक्षयसि? सोऽहं रावणस्त्रिलोकीकंटकः मया सह देवेन सह

देवीव त्वं भोगान् भुंक्ष्व? यथा—इह लंकामहोद्याने । देवीनामपि दुर्लभां ॥ कुरु क्रीडां हतव्रीडां । स्वर्णरत्नशिलातले ॥ १ ॥ वनेचरेण किं तेन । श्रय मां यौवनोत्कटं ॥ मरुं स्मरति किं भृंगी । रंभोरु सति नंदने ॥ २ ॥ एवं वारंवारं कथयन् रावणस्तां रुदंतीं निनाय, सापि राम रामेति वचो मुखान्न मुमोच, चाटु कुर्वन् पौलस्त्यः पुनः पुनस्तत्पदांबुजे पपात, सा सीता परपुंसः स्पर्शशंकया स्वपादौ संकोचयामास, तदा रावणः प्राह हे सुंदरि! मया सह त्वं भोगान् भुंक्ष्व? यदि न भोक्षसे तर्हि त्वं दैवेन वंचिता, इति रावणवचो निशम्य पतिव्रता सीता रावणं शशाप, हे दुरात्मन्ननया परस्त्रीवांछया त्वं मृत्योः फलमवाप्स्यसि. ततस्तां रुदंतीं राम रामेति च वदंतीं देवरमणोद्यानेऽशोकद्रुतले त्रिजटाराक्षसीसमीपे मुक्त्वा स्वयं रावणो लंकां पुरीं प्राविशत्, कतिपयदिनांते रामप्रवृत्तिमजानाना सीतैवमभिग्रहमग्रहीत्, यथा रामलक्ष्मणयोर्यावत्कुशलोदंतं न लभे, तावदन्नपानादिकं नाश्नामि, एवमभिग्रहपरा सीता रामनामपरायणा सुखेनास्थात्.

इतश्च रामो युद्धसज्जो लक्ष्मणांतिकमगात्, समायांतं रामं दृष्ट्वा ससंभ्रमो लक्ष्मणो रामं बभाषे, भो बांधव! आर्यामेकाकिनीं मुक्त्वा किं त्वमिहागतः? रामेणोक्तं तव क्ष्वेडानादं श्रुत्वाहं

त्वरितमिहागतोऽस्मि, लक्ष्मणः प्राह हे भ्रातर्मया सिंहनादो न कृतः, नूनमावां केनापि धूर्तेन वं-
चितौ, अतस्त्वं त्वरितं याहि तदंतिके? अहमप्येनं खरं जित्वा समेष्यामि. ततो व्यावृत्तो राघवो
यावन्निजोटजे याति तावत्सीतामनालोक्य रामो मूर्छितः क्षितौ क्षतद्रुरिव पपात, पुनर्वनानिलैर्ल-
ब्धचैतन्य इतस्ततो भ्रमन् हतं जटायुमालोक्य, ततश्च सीतापहारं श्रुत्वा तस्मै रामः परमार्हतः पंच-
नमस्कारं ददौ, स जटायुर्नमस्कारपरायणो मृत्वा माहेंद्रकल्पे त्रिदशोत्तमो बभूव. अथ रामस्तरुकुं-
जराद्रिगह्वरादीन् सीतार्थं दर्शंदर्शं तामनालोक्य मूर्छितश्च पुनः पृथिव्यां न्यपतत्, तदानीं लक्ष्मणः
खरादीन् हत्वा राज्यं च लब्ध्वा विराधेन विद्याधरेणान्वितो रामसमीपमागात, मूर्छितं रामं दृष्ट्वा
शीतलजलैः सिक्त्वा, तरुपल्लवैश्च वीजयित्वा स्वस्थीकृतो रामो वियोगग्रहिलोऽवदद्धो लक्ष्मण! म-
या जानकी सर्वत्र वीक्षिता, परं क्वापि न दृष्टा, अहो तामेकाकिनीं मुक्त्वा यदहं तवानुगो जात-
स्तन्मे मंदबुद्धिता! मम कौशल्यं धिगस्तु, एवं वारंवारं विलपन् भूपीठे निनाथ इव रामो लुलोठ,
तं तथाविधं दृष्ट्वा लक्ष्मणो भ्रातरं नत्वा व्याहरत्, हे बंधो! अहं लक्ष्मणोऽस्मि, खरविद्याधरं जि-
त्वा च समागतोऽस्मि, तया गिरा रामः सुधासिक्त इव सहर्षः सौमित्रिमालिलिंग, सौमित्रिराह के-

नापि कामुकेन मायिना सिंहनादेन कैतवं विधाय सीता हृता, अथ तस्य मायिनो मायायाः फलं मिलिष्यति, त्वं स्वस्थो भव? अयं विराधो विधुरबांधवो मया पातालालंकाराज्ये स्थापितः, अतस्त्वं गत्वा तं पातालालंकाराज्ये निवेशय? एष च सीताप्रवृत्तिमानयिष्यति. ततस्तेन विराधेन विमानं रचितं, तस्मिन् विमाने समुपविश्य ते सर्वेऽपि पातालालंकां गताः. रामः सुंदं रावणभागिनेयं ततो निष्काश्य विराधं पातालालंकाराज्ये निवेशयामास. ततो निष्कासितः सुंदश्चंद्रणखाजननीसहितो भीतो रावणं समाश्रितः.

एवं रामेण विटसुग्रीवं हत्वा सत्यसुग्रीवो राज्ये स्थापितः. ततो रामः सीताप्रवृत्त्यानयनाय सुग्रीवं प्रार्थयामास. रामेण प्रार्थितः सुग्रीवकपींद्रः सर्वत्र स्वान् पत्तीन् प्रेषयित्वा सीताशुद्धिमकरोत्. परं केनापि वानरेण तस्याः शुद्धिर्न लब्धा. ततः स्वयं सुग्रीवः सीताविलोकनकृते व्रजन् कंबूद्वीपं ययौ. तत्र नृपतितं रत्नजटिनं वीक्ष्य सीतावृत्तांतं पृष्ट्वा तं रामांतिकमानयत्. सोऽपि भामंडलसेवकः सीतापहरणादिकं सकलं वृत्तांतं राघवाय व्यजिज्ञपत्, रावणापहृतां सीतां ज्ञात्वा हर्षितो रामः कपींद्रं सुग्रीवं पृच्छति, यथा कियद्दूरेऽस्ति सा लंका प्रोच्यतां ममाग्रे? सुग्रीवेणोक्तं स्वामिंस्तया दूरा·

तर्हि के मा-सन्नताचिंतया किं? यतो रावणो विश्वकंटको रणे यस्याग्रे देवदानवा अपि न तस्थुः, तर्हि के मानवाः? रामोऽवोचद्भो सुग्रीव! रावणः सौमित्रेर्दर्श्यतां? ततोऽस्य ज्ञास्यते बलं, सौमित्रिरपि साक्षेपं जगाद, भो सुग्रीव! तस्य बलं भवता किं वर्ण्यते? यो वायस इव बालकरस्थपुपां सीतां हृत्वा पलायितः, तदानीं जांबवान् मंत्रीशः प्राह भोः सौमित्रे! पूर्वं ज्ञानिनोक्तमस्ति यः कोटिशिलां समुत्पाटयिष्यति, स रणे रावणं हनिष्यति. ततस्तैः सुग्रीवाद्यैः विद्याधरैः संभूय भूयसा परिवारेण सौमित्रिः सिंधुदेशस्थितां कोटिशिलां निन्ये. अथ लक्ष्मणः पुष्पादिभिस्तां पूजयित्वा देवानां च बलिं विधाय ततो बाहुभ्यां कोटिशिलां समुद्दध्रे, तस्यां समुत्पाटितायां लक्ष्मणोपरि सुराः पुष्पवृष्टिं व्यधुः, ततः कोटिशिलां नत्वा सम्मेतशैले गत्वा तत्र देवान्नमस्कृत्य विमानयानाः सर्वेऽपि विद्याधरा लक्ष्मणेन संयुक्ताः किष्किंधायां रामांतिके समवतेरुः, ते सर्वेऽपि रामं नत्वा सर्वं वृत्तांतं व्यजिज्ञपन्. ततः केऽपि वृद्धाः प्रोचुः, भो स्वामिनः! युष्मत्तो रावणक्षयो ज्ञानिनोक्तस्तथापि नीतिनिपुणेन पूर्वं दूतप्रेषणं विधेयं, यदि दूतेन कार्यसिद्धिर्भवति, तर्हि संग्रामो न कार्यः, रामेणोक्तं तर्हि कश्चित्समर्थो दूतः प्रेष्यते, यो गत्वा कार्यं कृत्वा त्वरितमेव समायाति. तत श्रुत्वा सुग्रीवकपींद्रेण

सूर्यपत्तनात्पवनंजयपुत्रो हनुमान् समाकारितः, हनुमंतं पुरस्कृत्य सुग्रीवो राममभ्यधात्, देवासौ पवनंजयपुत्रो महावीरः सकलकार्यकरणक्षमो दूतत्वेन प्रेष्यतां? स त्वरितं सीताप्रवृत्तिं समानयिष्यति, रामेणोक्तं भो हनुमन्निमां मन्नामांकां मुद्रिकां गृहाण? तत्र गत्वा देव्यै चैनां मुद्रिकां दत्वा तस्याश्चूडामणिं लात्वेदं वाचिकं निवेदयेः, यथा—

मा त्वं प्राणान् परित्याक्षी—र्वृथैव विरहे मम ॥ रामोऽहं यदि तत्सत्या—हरिष्ये भवतीं द्रुतं ॥ १ ॥ ॐमित्युक्त्वा रामं नत्वातिवेगेनांजनेयो व्योमाध्वना लंकां गत्वा बिभीषणमदोऽवदत्, हे स्वामिंस्त्वं न्यायवानसि, तव कुले न्यायः क्रमागतोऽस्ति, ततो यदि भ्रातुः श्रेयं वांछसि, तर्हि रघोः पत्नीं मोचय? सोऽप्याह भो हनुमंस्त्वदागमनपूर्वं मयैतदर्थं बहूक्तोऽप्येष एनां नामुंचत, किं करोमि? हनुमता प्रोक्तं काले पापं फलिष्यतीत्युक्त्वा तत उत्पत्य शीघ्रं हनुमान् देवरमणोद्याने गतः, तत्राशोकतरुतले कृशांगीं मलिनांबरां लुलितालकां राम रामेति ध्यायंतीं दीर्घनिःश्वासान् मुंचंतीं योगाधिरूढां योगिनीमिव संस्मरंतीं राक्षसीभिः परिवृतां सीतां वृक्षस्योपरिस्थितो हनुमान् ददर्श, तततो हनुमांस्तां रामनामांकितां मुद्रां तस्योत्संगे निचिक्षेप, तां मुद्रिकां च करे कृत्वा सीता पप्रछ,

यथा—मुद्रे संति सलक्ष्मणाः कुशलिनः श्रीरामपादाः स्वयं । संति स्वामिनि मा विधेहि विधुरं चेतोऽनया चिंतया ॥ एनां व्याहर हे च मैथलिसुते नामांतरेणाधुना । रामस्त्वद्विरहे स्वकंकणपदं यस्मै चिरं दत्तवान् ॥ १ ॥ ततोऽशोकादवतीर्य हनुमान् पुरो भूत्वा सीतां जगाद, हे स्वामिनि! श्रीरामेणाहं प्रेषितोऽस्मि, तव स्वामिसेवकः पवनांजनयोः पुत्रो हनुमान्नामा, इमां मुद्रिकां गृहीत्वा प्रत्युप्रत्ययताहेतोस्तव चूडारत्नं मे समर्पय? सीता चूडारत्नं दत्वा प्रोवाच वत्स! रामांतिके त्वरितं याहि? मा विलंबस्व? विलंबावसरो नास्ति, यतस्तेऽनर्थो मा भूथादिति हेतोर्मया प्रोच्यते. तवैतत्स्वरूपं ज्ञात्वा निस्त्रपो निःकृपो रावणस्त्वां हनिष्यति, अतस्त्वं शीघ्रं याहि? गत्वा च मद्वृत्तांतं रामाय सर्वं कथयेः, स प्राह हे देवि! मयि तत्र गते रामलक्ष्मणौ त्वरितं समेष्यतः. सीता प्राह हे वत्स! तौ वार्धिमुल्लंघ्य कथं समेष्यतः? हनुमानाह तव स्वामिसेवका मादृशा विद्याधरा बहवः संति. तैः शिक्षितविद्यौ रामलक्ष्मणौ त्वरितं समेष्यतः. अतस्त्वया तयोः कापि चिंता नो विधेया. अहमपि किंचिच्चमत्कारं रावणाय दर्शयित्वा स्वस्थाने यास्यामि. ततः सीतार्पितं चूडामणिं लात्वा सीतां नत्वा रामाभिधानं स्मृत्वा तत उत्पत्य रावणाशोकवाटिकामुन्मूल्य वाटिकारक्षपालान् राक्षसान्

हत्वा लंकासद्मानि भंक्त्वात्मबंधनं त्रोटयित्वा दशास्यमुकुटं सद्यश्चूर्णयित्वा कानिचिल्लंकागृहाणि ज-स्मसात्कृत्वा हनुमान् रामांतिकमागात्, प्रणामपूर्वकं रामाय सीतायाश्चूडामणिं च समर्पयामास, रामेणापि समालिंग्य पृष्टो हनुमान पूर्ववृत्तांतं सर्वं समाचख्यौ, हनुमदुक्तां वार्तां श्रुत्वा विराधो जांबवान् निलो भामंडलो नलोंगदश्चेत्यादयो विद्याधरा लंकागमनाय राममनुचेलुः, मार्गे सुग्रीवप्रमुखैरग्रेसरैश्चमूपरिवृतैः समं समुद्रोपरि स गच्छतिस्म, नलनीलाभ्यां द्वीपनायकौ समुद्रसेतुनामानौ विद्याधरौ बध्ध्वा रामस्यार्पितौ, रामेणापि तथैव तावुत्खातप्रतिरोपिताविव राज्ये स्थापितौ, तौ सेवापरायणौ च सह नीत्वा सोऽग्रे चचाल, पुनस्तथैव सुवेलाद्रिस्थितं वेलनृपं जित्वा स सह निन्ये, तश्चलितः सैन्यसहितो रामो लंकापार्श्वे हंसद्वीपे गतः, तत्र हंसरथं नृपं जित्वा वशवर्तिनं च कृत्वा रामचंद्रस्तत्रावासान दत्वा स्थितः.

अथ रावणो राममायातं श्रुत्वा रणोत्कटः सैन्यं सज्जयामास, तस्मिन समये बिभीषणो दशकंधरं नत्वा प्रोवाच हे देव! त्वं प्रसन्नो भव? स्वस्यापि च शुभोदर्कं विचारय? परदारापहारेण प्रथमं त्वया कुलं लज्जितं, सांप्रतं त्वं परदारार्थं सर्वसंहारं मा कुर्वीथाः? हे बंधो! विरोधो हि दुःख-

कारणं, यतः—विरोधो नैव कर्तव्यः । सादरैश्च विशेषतः ॥ त एव विपरीताः स्यू । राक्षसा एव केवलं ॥ १ ॥ इत्यादिबिभीषणवचो निशम्य क्रुद्धो रावणो बिभीषणं तथा निर्भर्त्सितवान्, यथासौ कुपितो रामचंद्रमशिश्रयत्, रामेणापि समयज्ञेन सन्मानितः, स्वांतिके च स्थापितः, लंकाराज्यं म· या तुभ्यं दातव्यमिति च प्रतिपेदे, अथ रामाज्ञया क्षणेन कपयो लंकां रुरुधुः, तदानीं लंकां रु· द्धां ज्ञात्वा राक्षसां विभुना सेनान्यो हस्तप्रहस्तमारीचिशुकसारणनामानो रावणेन प्रेषिताः, वानरैः सार्धं च युयुधुः, वानरैः क्षोभिता हस्तप्रहस्तादयो राक्षसा दिशि दिशि नेशुः, तदानीं दशास्यो बं· धुयुतः पुत्रपरिवृतो योध्धुमधावत, तस्य संमुखा रामलक्ष्मणादयो महावीरा बभूवुः, यथा—वाद्य· मानैर्महातूर्यैः । खड्गाखड्गि शराशरि ॥ वीक्ष्यमाणाः सुरैर्व्योम्नि । चिरं युयुधिरेऽथ ते ॥ १ ॥ त· स्मिन् समये दशाननः क्रोधाध्मातो बिभीषणे शूलममुंचत, तच्छूलं सौमित्रिः शुभध्यानी कर्माणी· व कणशोऽदलत, ततः प्रवर्धमानक्रोधो दशास्योऽमोघविजयाख्यया शक्त्या सौमित्रिं हृद्यताडयत्, तया शक्त्या ताडितः सौमित्रिर्मूर्छितः पृथिव्यामपतत्, धिक्कर्मणां विचित्रां गतिं! शोकार्तो राघवो लक्ष्मणं समादाय स्वं शिबिरंप्रति व्यावृत्तः, जितकासी दशास्यो रणांगणान्निवृत्तो लंकां प्राविशत्,

विदेहजा च तन्निशम्य मूर्छाविह्वला भूमौ पपात, दुःखपूरिताभिर्विद्याधरीभिः शीतलजलैः संसिक्ता पुनर्लब्धचैतन्या सा चैवं विलपतिस्म, यथा—मंदभाग्या दुरात्माहं । न मृता शैशवेऽपि किं ॥ भर्तृदेवरयोरिदं । यत्कृते कष्टमापतत् ॥ १ ॥ इत्यादि विलपंतीं तां दृष्ट्वा काचिद्विद्याधरी जगौ हे देवि सीते! ते देवरः प्रातर्निःशल्यो भावी; त्वं मा शुचः? स्वस्था भव? इत्याद्युक्त्वा सीता स्वस्थीकृता. अथ सौमित्रिं पतितं दृष्ट्वा मूर्छितो रामः पृथिव्यामपतत्, मूर्छांते प्राह हे वत्स लक्ष्मण! बिभीषणे लंकाराज्यं प्रतिपद्य त्वं किं निश्चिंत इव शेषे, हे वत्सोत्तिष्ठ? तं रावणं च हत्वास्मै बिभीषणाय राज्यं देहि? इत्युक्त्वा धनुरास्फाल्य यावत्स चलितस्तावद्धस्ते धृत्वा रामं बिभीषणो बभाषे, हे नायक! धीरत्वमवलंबस्व? मोहं जहीहि? यतो भानूदयं यावदनया शक्त्या हतः पुमान् जीवति, अतोऽस्य मंत्रतंत्रादिक्रियां कारय? रामेणामेत्युक्ते चतुर्दिक्षु चमूयुक्ता वानराः परितस्तस्थुः, तदानीं प्रतिचंद्रः खेचरः समागत्य रामं नत्वा शक्तेर्विनिर्गमोपायमभ्यधात्, भो रामचंद्र! त्वं मम वाक्यं शृणु?—

तव बांधवभरतमातुलो द्रोणमेघनरेश्वरः, तस्य पुत्री च विशल्या नाम कन्यकास्ति, तस्य स्ना-

नांबुसेचनाच्छक्तेर्विनिर्गमो भावी. तत् श्रुत्वा रामाज्ञया भामंडलादयस्तत्र गत्वा सहस्रकन्यायुतां तां समानिन्युः, तत्करस्पर्शात्सा शक्तिर्ज्वलंती लक्ष्मणशरीराद्विनिर्ययौ दस्युः परगृहादिव, ततो लक्ष्मणः प्रभातसमये तां विशल्यां सहस्रकन्यायुतां परिणीय पुनः संग्रामाय सज्जो जातः, रावणोऽपि बहुरूपिणीं विद्यां साधयित्वाऽशुभशकुनैर्वार्यमाणोऽपि संग्रामसज्जो भूत्वा रामेण सह संग्रामाय दुढौके. ततस्तयोः संग्रामो बभूव, तौ परस्परं घोरं संग्रामं कुरुतः. एवं रामरावणयोर्महाघोरे संग्रामे जायमाने लक्ष्मणशस्त्रैस्त्रासितो मरणभयभीतो रावणो बहुरूपिणीं विद्यामस्मार्षीत्. स्मृतमात्रायां तस्यामागतायां भूरिशो रावणरूपाणि जातानि. तेन पुरस्तात्पार्श्वयोः पृष्ठे भूमौ व्योम्नि लक्ष्मणो रावणानेव ददर्श. तदानीमेकोऽपि लक्ष्मणस्तार्क्ष्यारूढो निशितैः शरैस्तान् सर्वान् पातयामास. अथ प्रत्यर्धचक्री लंकेशो लक्ष्मणवधाय चक्रं स्मृत्वा करेऽकरोत्. तं चक्रं भ्रमयित्वा स लक्ष्मणंप्रति मुमोच. तच्चक्रं सौमित्रेः प्रदक्षिणां कृत्वा दक्षिणं पाणिमासदत्. तेनैव चक्रेण लक्ष्मणस्तत्क्षणात्तस्यैव शिरश्छित्वा भूमावपातयत्. तदा लक्ष्मणशिरसि देवैः कृता पुष्पवृष्टिर्जाता, तथाष्टमो हरिरयं जात इति दिवि सुरा जुघुषुः.

तस्मिन्नेव समये राघवौ श्रीविभीषणं लंकाराज्ये निवेश्य स्वयं सीतामादातुं सपरिच्छदावुद्याने
जग्मतुः. तौ दूरादायांतौ विलोक्य हर्षोत्फुल्ला विदेहजा नवमेघसिक्ता वन्यालीव व्यराजत. तदा·
नीं दिवि दिवौकसो धन्या महासती सीतेत्याघोषणां चक्रुः. लक्ष्मणाद्यैर्नता सीता तेषामाशिषं द·
दौ. तदानीं रामेण सोत्संगे निवेशिता, तया च रामो भृशं रेजे रोहिण्या शशांक इव पद्मिन्या च
दिवाकर इव. षड् वर्षाणि रामो लंकायां स्थित्वा पुनः साकेतपुरं स्मृत्वा सुग्रीवभामंडलविभीषणैर·
न्वीयमानः पुष्पकविमानं चारुह्य वेगेन सलक्ष्मणः साकेतपुरं प्राप्तः. तदानीं सानुजो भरतोऽभ्येत्य
राममानमत. लक्ष्मणोऽपि तौ नमंतौ प्रसन्नं परिसस्वजे. ततस्तौ तूर्येषु वाद्यमानेषु स्वं मंदिरं प्रवि·
ष्टौ, ताभ्यां नमस्कृता जनन्यः, श्वश्रूपादे पतिता सीता, वीरप्रसूर्भवेति ताभिरभिनंदिता वधूः. ततः
सुग्रीवादिभिर्लक्ष्मणस्यार्धचक्रित्वाभिषेको विदधे, रामस्य च बलभद्राभिषेको विदधे. ततो रामेण
सुग्रीवादयः सर्वेऽपि राजानः स्वानि स्वानि राज्यानि दत्वा स्वस्थाने प्रेषिताः. रामलक्ष्मणयोः सुख·
मनुभवतोः कियंति वर्षाणि गतानि. एवं काले याति सति शरभस्वप्नसूचितं गर्भं सीता बभार. ग·
र्भानुभावतः सा सीता दोहदे सम्मेतशैलयात्रायां मनो बबंध. अत्रांतरे तस्याः सीताया दक्षिणं

चक्षुरस्फुरत्. ततश्चकिताशया सीता तद्रामायाचचक्षे. रामः प्राह हे भद्रे! किंचिद्दुर्निमित्तं प्रादुर्भू·
तं, अतो जिनमंदिरे गत्वा देवानामर्चनं कुरु? पात्रेषु दानं देहि? एवं भर्तुः शिक्षां श्रुत्वा जान·
क्यपि तथाकरोत्.

एकस्मिन् दिने पुरीमहत्तराः सत्यगिरो राममभ्येत्यैवमभ्यधुः, देव! सत्यं वाऽसत्यं वा जिनो
वेत्ति, परं सीताया लोकापवादः श्रूयते यथा—तथाहि दशकंठेन । नारीलोलेन जानकी ॥ एका·
किनी हृता सापि । षण्मासीं स्थापिता गृहे ॥ १ ॥ सा च रक्ता ह्यरक्ता वा । दुर्लक्ष्यमिति योषि·
तां ॥ सम्मत्याथ हठादेषा । भोक्तुं केन न शक्यते ॥ २ ॥ एवंविधः सीताया अपवादः सर्वत्र प्र·
सृतो वर्तते, ततो हे राजेंद्र! सीताया एषोऽपवादः कुलकलंककृन्नोपेक्षणीयः. अथ रामः सीतायाः
कलंकं निश्चित्य दुःखतस्तूष्णीको भूत्वा धैर्यमवलंब्य तान् जगौ. भो मंत्रिमुख्याः! युष्माभिः साधु
विज्ञप्तं, स्त्रीमात्रकृते एनमपवादं नाहं सहिष्ये, इत्युक्त्वा ते विसर्जिताः. निशायामन्यदा काकुत्स्थो
वीरचर्यायै नगरमध्ये निर्गतः, कश्चिन्मालिकगृहासन्ने च गतः, तत्र मालिको मालिनींप्रति वक्ति,
हे प्रिये! त्वं निशायां क्व गताभूः? तयोक्तं मत्सखीगृहे मिलनार्थं गताभवं. मालिकेनोक्तं स्त्रीणां

निशायां परगृहे गमनं न युक्तं, इत्युक्त्वा सा तेन भृशं ताडिता. सा बभाषे भो प्राणेश! सीता रावणेन षाण्मासीं यावन्निजगृहे रक्षिता, सापि च रामेण गृहमध्ये क्षिप्ता. तेन किमपि तस्या न पृष्टं, तर्हि किं त्वं रामादधिकोऽसि? यत्त्वं मामेवं तिरस्करोषि. मालिकोऽप्यूचे स रामः सीतया वशीकृतोऽस्ति, नाहं तादृशोऽस्मि, अहं तु योषिदपराधं क्षणमपि न सहे. एनां वार्तां श्रुत्वा दुःखार्तो रामो दध्यौ, धिग्मम जीवितं, स्त्रीकृते नीचानामपि धिक्कारान् स्वकर्णाभ्यामहं शृणोमि. नूनं सीता तु पतिव्रता देवैर्मुनिभिश्चोक्ता. रावणस्तु दुःशीलो, मम वंशश्च निष्कलंकः, हा किं करोमि? इति ध्यात्वा श्रीरामो लक्ष्मणेन सह मंत्रयामास. सोऽप्याहस्म, हे बंधो त्वं लोकोक्त्या सीतां सतीं मा त्याक्षीः, रामोऽप्याहेदं सत्यं, परं लोकापवादो बलीयान्, सर्वविरुद्धेऽर्थे यशस्विभिर्महानपि त्याज्य एव. एवं रामः सौमित्रिणा सह निमंत्र्य प्रसन्नं कृतांतं सेनान्यमूचे, भोः कृतांत! वने गत्वा सीतां त्यज? अत्रार्थे च पुनर्न प्रष्टव्यं, किं चास्याः सम्मेतयात्रायाः पूर्वं दोहदो वर्तते, तेनैव मिषेणैनां नीत्वा गंगापरकूले नय? सोऽपि रामं नत्वा सीतां रथे समारोप्य सम्मेते त्वां यात्रां कारयामीत्युक्त्वा तथैव भीषणे काननेऽमुचत्. उक्तं च हे देवि! लोकोक्त्या श्रीरामेण त्वं वने त्याजिता, अत्रार्थे

त्वया मम किमपि दूषणं नानुचिंत्यं. स्वामिना नियुक्तोऽहं किंकरः किं करोमि? सेनान्योक्तं श्रुत्वा मूर्छिता सीता भूमौ पपात, पुनर्लब्धसंज्ञा च सैवमूचे, यथा—

यद्यजायत ते लोका—पवादभयभीरुता ॥ दिव्यं किमिति नादाः । समक्षं जगतो मम ॥ ॥ १ ॥ इदं कुलोचितं किं ते । निर्घृणेभ्योऽपि निर्घृणं ॥ एकाकिनीं वनेऽत्याक्षी—र्यदाधानवतीं प्रियां ॥ २ ॥ तथाप्यहं भविष्यामि । वने ह्यत्र यथा कथं ॥ चिरं जयतु किंतु श्री—राघवो लक्ष्मणान्वितः ॥ ३ ॥ एवं सेनान्यं समादिश्य सा महासती तं विसर्जयामास. सोऽपि विसर्जितः सीतां नत्वा क्षरदश्रुप्लुतनेत्रस्तद्वनाद्व्यवर्तत. जानक्यपि निजं कर्म निंदंती यूथभ्रष्टा कुरंगीव चकिताशया वने बभ्राम. इतश्च वज्रजंघो राजा गजान् गृहीत्वा वनान्निवृत्तो यत्र वने सीता वर्तते तत्रायातः. तेन सीतारूपं समालोक्य पृष्टं हे भगिनि! त्वं कासि? तया सत्यमुक्ते तेन राज्ञा तां यानारूढां कृत्वा भगिनीत्यभिधाय हर्षनिर्भरेण पुंडरीकपुरे निन्ये. इतश्च कृतांतवदनः सेनानीः सीतापरित्यागं कृत्वा रामांतिकमगात्. रामं नत्वा सीतोक्तां वार्तां निवेद्य तूष्णीको बभूव. राघवोऽपि तत् श्रुत्वा सीतावियोगार्त्तो वियोगमसहिष्णुस्तत्र वने गतो यत्र सीता त्यक्ता. तद्वनं च विलोकितं, परं

सीता न लब्धा. नूनं सिंहेन भक्षिता भविष्यतीति निश्चित्य मुक्ताशो रामो वनान्निवृत्य प्रेतक्रियां विदधे. एवं रामः सीतावियोगदुःखेन पीडितः कालमवाहयत्.

अथ सीता वज्रजंघेन भगिनीवद्रक्षिता, सा च तस्य गृहे युग्मजातौ तनयौ सुषुवे, क्रमेण तयोर्नाम दत्तं, एकस्यानंगलवण इति, अपरस्य च मदनांकुश इति, कुशलवावित्यपि तौ ख्यातौ. ततस्तयोर्जन्मनि वज्रजंघेन स्वपुत्रवन्महामहश्चक्रे. तावुभावपि पठनयोग्यौ कलाचार्येण पाठितौ, सिद्धार्थनाम्ना महाविद्येन श्राद्धेन महाविद्ये शिक्षितौ तौ सकलकलासंपूर्णौ जातौ. यौवनोन्मुखौ चंद्राविव महाभुजौ यौवनश्रिया चालंकृतौ तौ दृष्ट्वा वज्रजंघो राट् शशिचूलां स्वां पुत्रीं, द्वात्रिंशतं चान्याः कन्या अनंगलवणेनोद्वाहयत्. अंकुशाय च वज्रजंघः पृथुपृथ्वीराट्सुतां ययाचे, पृथुराजेनोक्तमज्ञातकुलाय स्वां कन्यां कथं ददे? तत् श्रुत्वा वज्रजंघः पृथुना सह योद्धुमारेभे. तत्र रणे लवणांकुशाभ्यां भग्नसैन्यः पृथुराट् नष्टः, कुशलवाभ्यामुक्तं भो पृथो! अवंशजाभ्रे त्वं सुवंशजः कथं पलायितः? वलित्वा पृथुनाभाणि भो महावीरौ! शौर्येण ज्ञातं भवतोः कुलं, युवां महावंशजौ. तदानीं तयोरेकीभूतयो राज्ञोः शिबिरे नारदो नाम महामुनिः समेतः. पृथुना राज्ञा पृष्टो नारद-

र्षिस्तयोः कुशलवयोर्वंशादिकं समाचख्यौ, हे पृथो! अनयोर्वंशादिकं को न वेत्ति? रावणवधका· रिणौ यत्तातपितृव्यौ रामलक्ष्मणौ, येन रामेण लोकापवादतः सीता सगर्भा गहनवने तत्यजे, त· स्य कुक्षिजाविमौ पुत्रौ. नारदर्षेर्वाक्यं श्रुत्वा पृथुना कनकमालाख्यां स्वां पुत्रीं कुशेन परिणाय्य स विसर्जितः.वज्रजंघश्च कुशलवाभ्यां सह स्वां पुरीमगमत. लघुबांधवः कुशो नारदमुनिमपृच्छत्, ज्ञो मुने! सा पुरी कियद्दूरेऽस्ति? यस्यां मत्तातपितृव्यौ रामलक्ष्मणौ वर्तेते. मुनिराख्यदितः षष्टियुग् योजनशतं ( १६० ) वर्तते. ततस्तौ मातुलमापृच्छ्य प्रसूं च संज्ञाप्य लवणांकुशौ सैन्यसमावृतौ क्रमेणायोध्यासमीपे रणोन्मुखौ तस्थतुः. ततस्तौ समायातौ श्रुत्वा ससैन्यौ रामलक्ष्मणावयोध्यातः संग्रमाय निर्ययतुः, उभययोः समरसंमर्दे जाते दोष्मंतौ लवणांकुशौ रामसैन्यं लीलया दैन्यदशां निन्यतुः, रामो लवेन सह युयुधे, लक्ष्मणोंकुशेन सह च युयुधे, ततस्ताभ्यां पितरौ जितौ, कुपि· तेन लक्ष्मणेन कुशाय चक्रं मुक्तं, तच्चक्रं कुशं प्रदक्षिणीकृत्य पुनर्लक्ष्मणकरकमलमलमकरोत, यत· श्चक्रं गोत्रिणं न हंति, खिन्नो लक्ष्मणो भृशमाकुलो बभूव. अथ श्रीरामलक्ष्मणौ विषण्णौ दध्यतुः, नूनमेतौ नवीनौ बलनारायणौ संजातौ.

अत्रांतरे ह्यामंमलयुतो नारदो मुनिः खिन्नं लक्ष्मणं रामं च विहस्येति प्रोचिवान्, यथा—
कोऽयं विषादो युवयो—र्हर्षस्थाने रघूद्वहौ ॥ कस्य नानंदयेच्चित्तं । निजपुत्रात्पराजयः ॥ १ ॥ त-
वैव तनयावेतौ । सीताकुक्षिसमुद्भवौ ॥ त्वां द्रष्टुं रणदंभेन । संगतौ न त्विमौ रिपू ॥ २ ॥ भव-
त्रव न यच्चक्र—मभिज्ञानमिदं तु ते ॥ अंतरेण स्वगोत्रं य—न्न चक्रं क्वापि निष्फलं ॥ ३ ॥
तत् श्रुत्वा रामलक्ष्मणौ तनयवात्सल्याल्लवणांकुशयोः पार्श्वे जग्मतुः, तावपि विनीतौ रथाद्वीग्रमवती-
र्य प्रणतौ रामलक्ष्मणाभ्यां, सगौरवं च बाहुभ्यां धृत्वा समालिंगितौ, तदानीं सैन्यद्वंद्वं सर्वं हर्षमय-
मभूत्, रामलक्ष्मणौ ताभ्यां सह महर्द्ध्या पुष्पकारूढौ भूत्वा पुरीं प्राविशतुः. अथ सौमित्रिसुग्रीव-
वज्रजंघबिभीषणाद्यैर्विज्ञप्तो राघवो मुदा शीघ्रं सीतामानाययत, सौमित्रिश्च सन्मुखं गत्वा सीतां न-
त्वा बभाषे हे देवि! चिरात्पुरीं पवित्रय? सीता प्रोचे विना शुद्धिं पुरीप्रवेशं न करोमि, भो ल-
क्ष्मण! दिव्यं कारय? मया दिव्यपंचकमंगीकृतं, यथा—ज्वलिताग्नौ विशामि १, अथवा तंदुला-
नश्नामि २, पिबामि तप्तकोशं वा ३, तुलामधिरोहामि ४, तप्तफालं जिह्वया वा लिहामि ५, एतेषां
दिव्यानां मध्याच्चतुर्थ्यं रोचते तत्करोमि, राघवोऽपि तत्सीतावचनमाकर्ण्य वह्निदिव्यमगृहीत्, त्रीणि

हस्तानां शतानि चतुरस्रां पुरुषद्वयदघ्नां खातिकां सोऽकारयत्, तां खातिकां खदिरांगारैः परिपूर्णां विधाय रामः सीतांप्रत्युवाच, हे देवि! दिव्यं देहि? कृतस्नाना सीता तत्रागत्यैवमुवाच—मनसि वचसि काये जागरे स्वप्नमार्गे । यदि मम पतिभावो राघवादन्यपुंसि ॥ तदिह दह ममांगं पावकं पावकेदं । सुकृतदुःकृतभाजां येन लोकैकसाक्षी ॥ १ ॥ सीतया दुरपवादभीतया । पावके स्वतनुराहूतीकृता ॥ पावकस्तु जलतां जगाम य—त्तत्र शीलमहिमाविजृंभितं ॥ २ ॥ एवमुक्त्वा तस्यां प्रविष्टायां ज्वलज्ज्वलनो जलतां जगाम, तस्मिन् मध्ये सहस्रकमलदलं, तस्योपरि सिंहासनं, तत्रोपविष्टा सीता लवणांकुशाभ्यां चलितचामरा श्रीरिव रराज, जानक्याः शीर्षोपरिष्टात् सुराः पुष्पवृष्टिं व्यधुः, अहो शीलमहो शीलमिति मानवाः प्रशशंसुः, लक्ष्मणाद्या महीभृतश्च वैदेहीं भक्तितो नमश्चक्रुः, तामभ्यैत्य रामो वाचमुवाच, हे देवि! लोकापवादतो मया त्वं वने त्यक्ता, तथा दिव्यं च दत्तं, तं ममापराधं सर्वं सहस्व? तदानीं सीता जगाद, यथा—

मा मा विषादभवनं भुवनैकवीर । नाहं स्थिता शुचिगणामृतपूरितेऽपि ॥ यत्त्वं पुनर्मम वियोगदवाग्निदीप्ते । चित्ते चिरं निवसितोऽसि ततः कृतज्ञः ॥ १ ॥ रामोऽवोचत् हे देवि सीते! सर्वं

क्षांत्वा त्वं पुष्पकं विमानमध्यास्व? स्वगृहे च मया सह समागच्छ? पूर्ववद्राज्यसुखानि चानुभव? सीताप्यूचे न दोषस्ते । न लोकस्यापि कश्चन ॥ सोढव्यः किंतु जीवेन । विपाकः पूर्वकर्मणां ॥ ॥ १ ॥ पुनः सीता प्राह हे प्राणेश! अतःपरं मम भववासेन पर्याप्तं, अहं जयभूषणकेवल्यंतिके दीक्षामादास्ये, तत् श्रुत्वा हर्षितो रामः सीताव्रतग्रहणोत्सवं चक्रे, शिबिकारूढा जानकी च जयभूषणकेवल्यंतिके गत्वा पंचमुष्टिभिः केशान् क्लेशानिवोत्खाय रामकरे तान् मुक्त्वा संयमं जग्राह, षष्टिवर्षाणि संयमं प्रपाल्य साच्युते कल्पे सुराधिपत्वं प्राप, कतिपयवर्षांते मृते लक्ष्मणे रामो बहुपरिवारयुतो दीक्षामादाय क्रमेण सकलकर्माण्यवधूय शुक्लध्यानेन केवलं लब्ध्वा कियंति वर्षाणि केवलं च परिपाल्य मोक्षमगमत्. इति सीतारामचरित्रं देशतो दर्शितं, विस्तरतस्तु पद्मचरित्रादवसेयं. इदं श्रीरामसीताया—श्चरित्रं चित्रकृन्मया ॥ भाषितं भव्यलोकानां । पावनेभ्योऽपि पावनं ॥ ॥ १ ॥ इति शीलविषये सीताकथानकं समाप्तं. ॥ अथ सुभद्रादृष्टांतेन शीलं वर्णयन्नाह—

॥ मूलम् ॥—चालिणीजलेण चंपाए । जीए उग्घाडिअं दुवारतिगं ॥ कस्स न हरइ चित्तं । तीए चरिअं सुभद्दाए ॥ ७ ॥ व्याख्या—' जीएत्ति ' यया सुभद्रया चालिन्या कृत्वा कूपाज्जलं

तीर्णत्ति ' तस्याः सुभद्रायाश्चरितं कस्य
कर्षितं, तेन जलेन च चंपानगर्या द्वारत्रिकमुद्घाटितं, ' तीर्णत्ति ' तस्याः सुभद्रायाश्चरितं कस्य
पुरुषस्य चित्तं न हरति? किंतु सर्वस्यापि चित्तं हरतीति गाथार्थः. विस्तरार्थस्तु कथानकादवसे-
यः, तच्चैवं—

भूमिभूषणं वसंतपुरनाम पत्तनमस्ति. यस्मिन् पुरे पुण्यांकुरालीव जिनचैत्याली बभौ. तत्पुरं
रूपकंदर्पो जितशत्रुनृपः शास्ति. तस्मिन्नगरे विख्यातवैभवो जिनदासनामा श्रावकोऽस्ति, यस्य गु-
णाः सर्वेषां मनुष्याणां हृदये हारवत्खेलंति. तस्य वल्लभा शीलवल्लभा जिनमतिनाम्न्यस्ति. तयोः
सुता सुभद्राख्या सकलगुणगरिष्ठा पुण्यैर्वरिष्ठा द्वाषष्टिमहिलागुणगरिष्ठा जिनधर्मभाविताऽस्ति, कौ-
मारेऽपि महाश्राविका सा बाला कर्मग्रंथाद्यनेकप्रकरणपाठका शुद्धसम्यक्त्वधारिका वर्तते. तद्रूपमो-
हितैरनेकैर्मिथ्यात्ववासितैर्मत्रिपुत्रैर्व्यवहारिपुत्रैः प्रार्थितापि जिनदासस्तां कन्यां तेषां नादात् मिथ्या-
त्ववासितत्वात् काकानामिव पायसं. अथान्यदा चंपातः समागतो वाणिज्यार्थं बुद्धदासाभिधो व-
णिक्पुत्रः. सोऽपि बौद्धधर्मविशारदोऽन्यदा श्रेष्ठिगृहे वाणिज्यार्थं समागतः, तेन सा सुभद्रा दृष्टा.
सोऽपि तस्याः पाणिग्रहार्थी तां ययाचे, परं मिथ्यादृष्टित्वात्तज्जनकस्तस्मै सुभद्रां नादात्. स कन्या-

र्थी दंभेन जैनमुनीन् भेजे, तदंतिके च तेन धर्मः शिक्षितः, ततः स कपटश्रावको बभूव. श्रद्धां विनापि स साधूनां पर्युपासनां तन्वानो वीतरागार्चां कुर्वाणो वंदनावश्यकादिकं च विशेषेण करोति. तस्य जिनदासेन सह भृशं मैत्री जाता. ततो मित्रत्वात्साधर्मिकत्वाच्च जिनदासेन तस्य मार्गयतः सुभद्रा दत्ता, तेन च महामहेन विवाहिता. स बुद्धदासस्तया सह वैषयिकान् भोगान् बुभुजे. एवं च तयोः कालो याति.

अथान्यदोपार्जितद्रव्यो बुद्धदासो विनयान्वितः श्वशुरमापृच्छत, श्रेष्ठिंस्त्वदाज्ञयाहं स्वदेशे यामि. तदा तत्वज्ञो जिनदासो मधुराक्षरं जामातरमाह, हे वत्स! त्वया साधूक्तं, परं मद्वाक्यं शृणु? तव मातापितरौ वैधर्मिकौ वर्तेते, त्वं तु मम साधर्मिको जामाता च. अतः प्रोच्यते, तौ महिषी वडवामिवैनां सुभद्रां कथं सहिष्येते? जामातृकेणोक्तमेनामहं पृथग्गेहे स्थापयिष्यामि, अस्याश्चिंतकश्चाहं भविष्यामि, भो श्वशुर! एतद्विषये त्वया काचिच्चिंता न विधेया, अतोऽहं त्वदाज्ञया स्वदेशे यामि. श्वशुरेणोक्तं ते पंथानः कुशलिनः संतु. श्वशुरनिदेशेन सुभद्राप्रियासहितो यानारूढो मार्गे चलन् क्रमेण स चंपां प्राप. तां च पृथग्गावासे स्थापयित्वा स स्वयं स्वगेहे जगाम. मिलित-

श्च स तत्र मातापित्रोः, पूर्ववृत्तांतमुक्त्वा स स्वकार्यपरः स्वगेहेऽस्थात्. अथ सा सुभद्रा तत्रस्था नि- श्छद्मवृत्त्यार्हतं धर्मं चक्रे. तस्याः श्वश्रूननांदरौ तच्छिद्राणि ददृशतुः. एवं काले यात्येकस्मिन् समये भक्तपानादिहेतवे तद्गेहे साधवोऽप्येयुः, तदा ताः श्वश्रूननांद्राद्या बुद्धदासं प्रोचुः, भो वत्स! त्वद्व- धूर्मुनिभिः सार्धं रमते, एवं ते प्रत्यहं जगुः. सोऽप्याह हे मातर्हे भगिनि! एवं न वक्तव्यं, यत एषा महासती सुकुलोत्पन्ना जैनधर्मपरायणा साधूपासनतत्परा, नैषा कुशीला, किंतु सुशीला, यूयं च धर्ममत्सरेणैवं व्याकुरुथ, युष्माकमिदं वक्तव्यं नार्हति. कदाचन युगांतेऽपि स्वर्णमलो जायते, न पुनरस्यां कुलीनायां कुशीलत्वं. ततस्ता ननांद्राद्या विशेषेण छिद्रान्वेषणं कुर्वंति. एकस्मिन् दि- ने सुभद्रागृहे साधुर्भिक्षार्थमागमत्, तस्य च नयने पवनांदोलितं तृणं पपात. तत्तृणं च वपुःप्र- तिक्रियाविमुखः साधुर्नापनयामास. ततः सा सुभद्रा तस्मै भिक्षां प्रयच्छंती चक्षुषि व्यथामाशंक्य जिह्वाग्रेण लाघवात्तृणं कर्षयामास. ततस्तस्याः कुंकुमतिलकं मुनिभाले लग्नं. तस्मिन् काले बुद्धदा- सजननी तत्पुत्रस्य दर्शयामास, भो वत्स! वध्वाः शीलं पश्य? तदभिज्ञानबलाद्बुद्धदासोऽपि तद्व- चनं प्रतिपद्य विरक्तो जातः. तं निःस्नेहं पतिं ज्ञात्वा सा महासतीति दध्यौ, अहो! मम निमित्तेन

श्रीजिनशासने ह्याकस्मिकोऽयमपवादः समुपस्थितः, तर्हि किं करोमि? जीवितत्यागेनापि मालिन्यमपाकरोमीति चिंतयित्वा सैवमभिग्रहमकरोत्. यावदिदं मालिन्यं शासनसुरी नोत्सारयिष्यति, तावत्कायोत्सर्गं नो पारयिष्यामि. संध्यायामित्यनुध्याय जिनेशितुः पूजां कृत्वा शासनामरीं च मनसि धृत्वा गृहस्यैकांते सा कायोत्सर्गेण तस्थौ. सम्यग्ध्याता शासनसुरी प्रादुर्भूय सुस्पष्टं तां बभाषे, हे वत्से! त्वत्सत्वप्रेरिताहं शासनसुरी समेता सुरावली तपसेव, अतस्त्वं द्रुतं ब्रूहि? तव समीहितं किं कुर्वे? तत्क्षणादेव सुभद्रा कायोत्सर्गं पारयित्वा मुदितमनास्तां नत्वा प्राह, हे देवि! शासनस्यायं कलंकोऽपनीयतां? पुनर्देवी सतीं प्रत्याह, हे वत्से! त्वं खेदं मा कुरु? तवोन्नतिकृते धर्मप्रभावनाकृते च प्रातः सर्वं करिष्ये, त्वं निश्चिंता शयने स्वपीहि? ततः सापि निश्चिंता शयनीये सुखं सुष्वाप, शासनसुरी च तिरोऽभवत. एषापि धर्मैकमानसा नमस्कारपरायणा निद्रां कृत्वा पुनर्जागरिता देवगुरून् स्मृत्वा प्रतिक्रमणं च कृत्वा देवान् पुपूज. अथ प्रातर्द्वारपालैराकृष्यमाणानि प्रतोलीद्वाःकपाटानि कथंचन नोद्घटंते.

तस्मिन् समये निखिलेऽपि चतुष्पदमनुष्यादिपूर्लोके क्षुत्तृषाभ्यां व्याकुले नृपोऽपि भृशं व्या-

कुलतां भेजे. अथ सर्वैस्तद्दैवतं कर्म मेने. धौतपोतः शुचीभूतो भूपालो धूपोद्ग्राहणपूर्वकं प्रांज-
लिः प्राह, श्रूयतां भो देवदानवाः! यः कोऽपि ममोपरि कुपितो भवति स पुष्पधूपादिबलिना प्र-
सन्नो भवतु. राज्ञेत्युक्ते नभसि प्रकटं वचः प्रादुर्बभूव, यथा—जलमुध्धृत्य चालिन्या । कूपतस्तंतुब-
द्धया ॥ काचिन्महासती पुर्याः । कपाटांश्चुलुकैस्त्रिभिः ॥ १ ॥ आच्छोटयतु चेच्चंपू । द्वारैः कार्य-
मपावृतैः ॥ आकर्ण्यैत्यभवत्सज्जा—स्ततस्तत्पौरनायकाः ॥ २ ॥ एनां देववाचं निशम्य ब्राह्मणीक्ष-
त्रियावैश्याशौद्रीप्रमुखा नगरनार्यः कूपोपकंठे समागताः, चालिन्यां वारि गृह्णानास्तदप्राप्य विलक्षतां
प्रापुः. काचिन्नायका सूत्रस्य बंधेन, काचिच्चालिन्याश्चालनेन, एवं काचित्कूपे क्षिपंती हास्यं प्राप्ता.
एवं सर्वास्ता विलक्षवदनाः स्वस्थाने जग्मुः. परं नैकापि जलं कर्षयितुं समर्था बभूव. तस्मिन् सम-
ये विनीतात्मा सुभद्रा श्वश्रूं मधुरस्वरं जगौ, हे मातस्त्वदाज्ञयाहं चालिन्या कृत्वा जलं कर्षयामि,
तेन जलाच्छोटनेन च पूर्द्वारोद्घाटनं करोमि. तदा श्वश्रूः कुपिताख्यत् हे जैनमुनिसेवके! तव स-
तीत्वं तु पुरा मया ज्ञातमेव, सांप्रतं सर्वेषां पुरीजनानां ज्ञापनेन किं प्रयोजनं? एताः सर्वा अपि
नगरनार्यः पूर्द्वारं समुद्घाटयितुं यदि न क्षमास्तर्हि त्वं कथं क्षमा भविष्यसि? सुभद्रोवाच हे मात-

स्त्वया युक्तमुक्तं, तथाप्यहं पंचाचारेण स्वपरीक्षणं करिष्ये, अत एतदर्थे त्वयाहं न निषेध्या. अथ ननांद्राभिर्हस्यमाना सा सुभद्रा महासती स्नानं कृत्वा देवान् पूजयित्वा गुरून्नत्वा कूपोपकंठे गत्वा नमस्कारपरायणा शासनसुरीं संस्मृत्य सूर्याभिमुखीभूयैवं वक्ति, यद्यहं जैनी तथा शीलालंकारधारिण्यभूवं तदा चालिन्या कूपाज्जलं निस्सरतु.

इत्युक्त्वा सूत्रतंतुभिर्बद्धां चालिनीं कूपे मुक्त्वा तत्क्षणादेव तया कूपाज्जलं कर्षितं, यथा—
उद्दधार ततः कूपा—च्चालिनीं जलसंभृतां ॥ छिद्राणि रुरुधुः सिद्धा । इव कौतुककांक्षिणः ॥ १ ॥
तावत्तो भारतोऽप्यस्थु—र्क्षताः सूत्रतंतवः ॥ तच्छीलसिद्धचूर्णेन । वज्रदार्ढ्यमिता इव ॥ २ ॥ तच्छीलमाहात्म्यं वीक्ष्य सपरिवारो नृपः प्रांजलिः पुरो भूत्वैवमवादीत्, हे पतिव्रते! हे सुशीले! पुरीद्वाराण्यपावृणु? एवं राज्ञोक्ता पौरलोकपरिवृता हस्तींद्रगामिनी विकसन्मुखनेत्रा बंदिकृतजयजयारावा सा पूर्णापुरं प्राप, ततो सा यथाकरोत्तथा चाह—परमेष्ठिनमस्कार—मुच्चरंती महासती ॥ द्वारमाछोटयामास । तदंभश्चुलुकैस्त्रिभिः ॥ १ ॥ नेत्रे इव विषार्तस्य । जांगुलीमंत्रजापतः ॥ कपाटावुद्घटेतेस्म । कर्णावपि दुरात्मनां ॥ २ ॥ नेदुर्दुंदुभयो व्योम्नि । तुष्टुवुस्तां पुरीजनाः ॥ देवैश्च

जिनधर्मस्य । चक्रे जयजयारवः ॥ ३ ॥ एवं तया दक्षिणपश्चिमोत्तरप्रतोलीद्वारत्रयं समुद्घाट्य प्रोक्तं, यापरांगना सतीगर्वं वहेत, सैतत्तुर्यं पूर्वद्वारं समुद्घाटयिष्यति. एवं सुभद्राया महासत्याः शीलालंकारसूचकं चंपापुर्यास्तद्द्वारमद्यापि मुद्रितमस्ति, यतः—अपूर्वः शीलदीपोऽयं । सुभद्राया भुवस्तले ॥ यो वारिपूरसंसर्गा—ददीपिष्ट विशेषतः ॥ १ ॥ श्वश्रूननांद्राद्या दुर्जनास्तदानीं श्यामानना जाताः, स्वस्त्रियाः शीलं वीक्ष्य भर्तृमुखं शरच्चंद्रवद्दीप्यमानं जातं, तदानीं सा सुभद्रा सती पुरजनैः स्तूयमानगुणा गांधर्वैर्गीयमानगुणव्राता पौरलोकनृपान्विता चैत्यपरिपाटीं चक्रे. ततस्तन्नगरनायकस्तां सुभद्रां शृंगारितशरीरां कृत्वा सोत्सवं तत्सदनं प्रापयामास. ततः सा सुभद्रामहासती नरेंद्रादिपौरलोकपुरतो जैनं धर्मं समादिशत, लोकोऽपि नरेंद्रयुतस्तं धर्ममंगीकृत्य सतीं स्तुत्वा स्वस्थानमगमत्, पश्चात्तापपरेण तत्कुटुंबेनापि सा मानिता. ततस्ते कुटुंबजनास्तदंतिके धर्ममंगीकृत्य धर्मपरायणा जैनधर्ममाराधयामासुः, गृहादागत्य मातापितृभ्यामपि साभिनंदिता, बुद्धदासस्तत्पतिस्तद्दिनादारभ्य महाश्रावको भूत्वा तया सह रममाणः कालं निर्गमयामास. एवमुभावपि गृहस्थधर्मं प्रतिपाल्यांते संयमं प्रतिपद्य सुगतिं समन्वभूतां. इत्थं सतीसुभद्राया—श्चरित्रं परिकीर्तितं ॥ देव-

ताकृतसाहाय्यं । सर्वलोकेषु विश्रुतं ॥ १ ॥ इति शीले सतीसुभद्राकथानकं समाप्तं ॥ पुनरपि शीलदृष्टांतमाह—

॥ मूलम् ॥—नंदउ नमयासुंदरी । सा सुचिरं जीए पालियं सीलं ॥ गहिलत्तणंपि काउं । सहिआ य विडंबणा विविहा ॥ ८ ॥ व्याख्या—सा नर्मदासुंदरीनाम्नी सती सुचिरकालं नंदतु जयतु, सा का? यया ग्रथिलत्वमपि कृत्वा शीलं पालितं, च पुनर्यया शीलरक्षणकृते विविधा नानाप्रकाराः 'विडंबणत्ति' विडंबनाः सोढाः, इत्यक्षरार्थः, विस्तरार्थस्तु कथानकादवसेयस्तच्चेदं—

अस्मिन् भरतक्षेत्रे श्रिया वर्धमानं वर्धमानाभिधं पुरमस्ति, यच्चैत्यकेतुभिर्लक्ष्म्या सुरपुरं तर्जयत् इव, तस्मिन्नगरे कंदर्पदर्पहृत्संप्रतिनामा नृपोऽस्ति, तस्मिन् पत्तने वृषभसेनाह्वः सार्थेशोऽस्ति, तस्य सार्थवाहस्य वीरमतीति नाम्ना पत्न्यस्ति, तयोः सहदेववीरदासनामानौ सुतौ वर्तेते, ऋषिदत्तानाम्नी च पुत्र्यस्ति, सा सकलगुणगरिष्ठा जैनधर्मैकनिष्ठास्ति, तस्याः पिता सम्यक्त्ववान् जैनधर्मवासितत्वादन्येषां मिथ्यादृशां मार्गयतामपि तां कन्यां न ददौ. अन्यदा रूपचंद्रपुरात्कश्चिन्महर्द्धिको रुद्रदत्तनामा वणिक्पुत्रो वाणिज्यार्थमुपागमत, स तस्मिन्नगरे कुबेरदत्तस्य निजमित्रस्य मंदिरे

स्थितः, तस्मिन् पुरे व्यवसायं कुर्वाणः स स्वगेहवन्मित्रगेहे स्वैरमास्ते. सोऽन्यदा गृहवातायनस्थो नगराट्टवीथीं विलोकयन् निजरूपेण निर्जितसुरांगनां स्वर्गादागतां सुरीमिव ऋषिदत्तां सखीपरिवृतां दृष्ट्वा मोहितमानसो रुद्रदत्तश्चिरं पश्यंस्तस्थौ. तं मार्गावलोकनं कुर्वाणं रुद्रदत्तं वीक्ष्य मित्रं कुबेरदत्तो ब्रूते, भो मित्ररुद्रदत्त! त्वं राजपथे वारंवारं किं पश्यसि? तेनोक्तमेषा कस्य तनया? या स्वर्गादवतीर्णा देवकन्येव स्वयं क्रीडति. कुबेरदत्तेनोक्तं भो रुद्रदत्त! वृषभसेनसार्थवाहस्य तनया ऋषिदत्तानाम्नी, स सार्थवाहः श्रावकः, पुत्र्यपि च श्राविका, अतो मिथ्यादृशां याचमानानामपि स श्रेष्ठी न दत्ते. कुबेरदत्तेनोक्तं स्वरूपं ज्ञात्वा रुद्रदत्तो मिथ्यादृगपि तल्लोभतो जिनधर्मं शिक्षित्वा कपटश्रावको बभूव. तद्दिनादारभ्य वृषभसेनसार्थवाहेन समं रुद्रदत्तः पौषधसामायिकं करोति. तेन पुण्यादिना हृताशयः स तस्मै कन्यामदत्त. अहो दंभो धूर्तानां कल्पपादपः. रुद्रदत्तः शुभेऽहनि ऋषिदत्तां सविस्तरेणोपायंस्त, ततश्च स स्वं कृतकृत्यं मेने. कतिभिर्मासैरतीतैः कृतकृत्यः समुपार्जितधनः स श्वशुरमापृच्छ्य ऋषिदत्ताकांतया सार्धं श्वशुरानुज्ञया स्वपुरं समागात्. पुनर्मातापित्रोः संयोगाद्रुद्रदत्तो जैनं धर्ममत्यजद्बालो रत्नमिव. तत्संसर्गादृषिदत्तापि मिथ्यात्वमभजत्, यतः शबेन

व—णाजं अफलाजं भावविणा ॥ २ ॥ व्याख्या—यथा चूर्णेन विना तांबूलं न जवति, चस्य गम्यमानत्वाद्यथा 'पासेन' जावुकद्रव्येण विना वस्त्रादौ रंगो न जवति, तथा दानशीलतपोजाव- ना जावेन विना निष्फलाः, अत्र यद्यपि जावना जावरूपैव, तथा च पौनरुक्त्यं स्यात्तथापीह भाव- ना वचोमात्ररूपा, जावस्तु मनोगतांतः शुजपरिणाम इति जावार्थः ॥ २ ॥ पुनर्जावनामाहात्म्यमाह—

॥ मूलम् ॥—मणिमंतओसहीणं । जंतयतंनाण देवयाणं त्र ॥ जावेण विणा सिद्धी । न हु कस्सवि दीसए लोए ॥ ३ ॥ व्याख्या—मणयश्चिंतामण्यादयः, मंत्राधिष्टिताक्षरसंयोगरूपा औष- धयो नागदमन्यादयः, यंत्रा अर्जुनजयपताकाद्याः, तंत्रा वस्तुसंयोगविशेषास्तेषां च पुनर्देवतानां सिद्धिरीप्सितार्थप्राप्तिर्जावेन विना लोके कस्यापि पुरुषस्य हु निश्चितं न दृश्यत इति गाथार्थः. ॥ ॥ ३ ॥ अथ प्रसन्नचंद्रराजर्षिदृष्टांतेन जावनां दृढयति—

॥ मूलम् ॥—सुहजावणावसेणं । पसन्नचंदो मुहुत्तमित्तेणं ॥ खविजण कम्मगंठिं । संपत्तो केवलं नाणं ॥ ४ ॥ व्याख्या—शुजजावनावशेन शुजजावनायोगेन प्रसन्नचंद्रराजर्षिर्मुहूर्तमात्रेण कर्मग्रंथिं क्षपयित्वा केवलज्ञानं संप्राप्त इति गाथार्थः. ॥ विस्तरार्थस्तु कथानकादवसेयस्तच्चैवं—

भुवो भूषणं गतदूषणं स्वस्तिकारणं पापवारणमुद्दामसंपदापदं पोतनपुरं नाम पत्तनमस्ति, तस्मिन् पत्तने प्रजापीयूषांजनप्रायः सौम्यकरः सोमचंद्राभिधो राजास्ति, तस्य राज्ञो राज्ञीशिरोरत्नं शीला· लंकारधारिणी धारिणी नाम राज्ञ्यस्ति सोमस्य रोहिणीव. अन्यदैकांते भर्तुर्मूर्धनि केशान् सन्मा· र्जयंति सा जरादूतोपमं पलितं व्यलोकयत, धर्मराजदूतं पलितं शिरसि समालोक्य सा राजानमवा· दीद्भोः प्राणेश दूतः समागतोऽस्ति, राज्ञा कस्यचिद्राज्ञो दूतः समागतो भविष्यतीति चिंतयित्वा द्वारावलोकनं कृतं, परं कोऽपि न दृष्टः, राज्ञा पृष्टं हे सुलोचने क्वास्ति दूतः? ततस्तया पट्टदेव्या शिरसस्तदाकृष्य पलितं दर्शयित्वा चैवमवादीद् हे प्राणनाथैष जरारूपो धर्मराजदूतस्त्वैवं कथयति यथा त्वं धर्मं कुरुष्व? धर्मविषये मा प्रमादीः, तत् श्रुत्वा लज्जितो राजा, राजानं लज्जितं समवि· लोक्य राज्ञी बभाषे हे भूमीश वार्धक्येन किं त्वं लज्जसे? राज्ञ्यैवमुक्ते राजा प्राह हे प्रिये मम पूर्वजाः पितृपितृव्यादयोऽदृष्टपलिते मध्ये वयसि प्रव्रजिताः, अहं तु विषयासक्तः पलिते जातेऽप्ये तावंतं कालं गृहे स्थितः, राज्यलोलुपेन भोगसुखाक्रांतेन मया गतोऽपि कालो न ज्ञातः, ममेद· मेव पीडाकारणं, न पुनर्वृद्धत्वं. राज्ञ्योक्तं हे स्वामिन् सांप्रतं धर्मे यत्नं कुरु? विलंबं मा विधेहि?

तत श्रुत्वा राजा सोमचंद्रो धर्मधीः स्वसुतं प्रसन्नचंद्रं बाल्ये वयसि वर्तमानं समाकार्य महता महेन राज्येऽभ्यषिंचत्. ततः सोमचंद्रेण वनं व्रजता सहायांती राज्ञी धारिणी गर्भवती निवारिता, तथापि धारिणी पत्या सह गमनाय निश्चलैकया धात्र्या समं प्राचलत्. अथ सोमचंद्र एकस्मिन् महारण्ये क्वचिदाश्रमपदे गत्वा तपस्विनीं दीक्षामंगीकृत्य सम्यक् पालयन् स्थितः, धारिणीराज्ञ्यपि चंद्रं ज्योत्स्नेव सूर्यं प्रभेव धनं तन्मिदिव पुरुषं छायेव धनं मायेवानुसरति. अथ राज्ञ्या गर्भः प्रवर्धमानः क्रमेण परिपूर्णो जातः, शुभेऽह्नि सुमंगले उत्तमपुरुषजन्मयोगे धारिण्याः पुत्रो जातः, तस्य प्रसवपीडया शीलधारिणी धारिणी भगवत्स्मरणपूर्वकं दिवं गता, अहो विधेर्विलसितमस्य बालकस्य का गतिर्भविष्यतीति चिंतातुरस्तापसस्तं बालकं वल्कलैः प्रावृतं कृत्वारक्षत, सा धात्री तं बालकं मातृवत्परिपालयति, तस्य पित्रा वल्कलवेष्टितत्वाद्वल्कलचीरीत्यभिधां विदधे. अथ सोमचंद्रस्तापसश्चिंतयत्येष बालः कथं वर्धिष्यते? तथा स्तन्यःपानं कः कारयिष्यति? अथ देवभुयं गतास्य जननी ज्ञानेन तद् ज्ञात्वा तत्रागता, कांतारमहिषीरूपं कृत्वा वल्कलचीरिणः स्तन्यपानमपायत, एवं देवरूपमात्रा धात्र्या च पालितोऽसौ ववृधे, अत्रांतरे सा धात्री निधनं गता, वल्कलचीर्यपि द्वित्रिवर्षप्रमाणो

बनूव, ततः सा धारिणीदेवता स्वस्थानमगमत्, सोमचंद्रमुनिरपि तं बालं वन्यैर्धान्यैर्धेनुदुग्धैः फलैश्च पुपोष, एवं पोष्यमाणः स सप्ताष्टवर्षीयो जातः, पित्रा शिक्षितस्तापसक्रियाकांडः, सविनयो वल्कलचीरी तं नमस्करोति. एवं वर्धमानः स षोडशवर्षियो जातः, अथ संप्राप्तयौवनः स वनात्फलान्यादाय सोमचंद्रं पितरं पुपोष, सोमचंद्रोऽपि तस्य नक्त्या तुतोष. एवं तयोर्दिनानि यांति.

एकस्मिन् दिने प्रसन्नचंद्रेण राज्ञा वनेचरमुखात श्रुतं यथा वने सोमचंद्रसमीपे वल्कलचीरी नाम्नेदृक्पुत्रोऽस्ति, प्रसन्नचंद्रेण राज्ञा चिंतितं स मम सहोदरो ममांतिके यदि समायाति तदा वरं, तत्र वने पशुरिवैककः किं करिष्यति? यदि ममांतिके समायाति तदा मम साहाय्यो नवति, तथा राज्यसुखानि नुंक्ते, किं तत्र स्थितेन वनचारिमृगेणेव? अतोऽहं केनाप्युपायेनैतमिहानयामि, द्वावप्यावां बांधवावेकीनूय राज्यसुखान्यनुनवावः. ततो राजा प्रसन्नचंद्र एतदर्थं मायाशास्त्रनिपुणं पण्यस्त्रीगणं समादिशद् हे गणिका यूयमितो यात तस्मिन् वने यत्र सोमचंद्रो मुनिः सपुत्रो वर्तते, तत्र गत्वा मम बांधवं वल्कलचीरिणं येन केनाप्युपायेन प्रलोभ्येहानयत? परं युष्माभिः स दूरतो दृष्टव्योऽन्यथा सोमचंद्रो युष्मान् शापेन धक्ष्यति ततस्ता पण्यस्त्रियः सितोपलाफलान्यादाय मुनिवे·

षं विधाय तत्तापसाश्रमासन्ने गताः, तत्र ता मुनिवेषधारिण्यः पण्यस्त्रियस्तं वल्कलचीरिणं मुनिं ज-
न्मजटिलं दीर्घनखरोमाणं क्षत्रियब्रह्मचारिणं वल्कलधारिणं रूपमन्मथोपममागच्छंतं ददृशुः, यथा—
आद्याश्रमस्थितः किंतु । भवभीतो मनोभवः ॥ दधौ वल्कलचीरित्व—मिति दध्युर्निरीक्ष्य ताः ॥
॥ १ ॥ सोऽपि ता मुनीन् ज्ञात्वा तात नमस्करोमीत्युक्त्वा पृच्छति यूयं के कुत्र वसथ? ताः प्रोचुर्वयं
वीतरागा मुनयः पोतनाश्रमे वसामः, वयमत्र भवदाश्रमं समालोकयितुमुपागताः स्मो यतस्तापसास्तपो-
वृद्धये तापसाश्रमं समागत्य भक्तिं कारयंति, सोऽप्युवाच मयैतानि फलानि वनादानीतानि, यूयं स्वे-
च्छया गृह्णीत? भूयोऽप्यहं वनाद् बहूनि फलान्यानयिष्ये. ततस्ताः प्रोचुरीदृशैः फलैर्वयं किं कुर्महे?
अस्माकं पोतनाश्रमजैरेव फलैः कार्यं, भो तापसमुने पोतनाश्रमजातानां फलानां त्वमपि वर्णिकां
पश्य? इत्युक्त्वा क्वचिदेकांते द्रुतले समुपविश्य तं रमयित्वा सितोपलाफलानि भोजयामासुः, स तासु
मोहितः, यतः—तावन्मौनी यती ज्ञानी । सुतपस्वी जितेंद्रियः ॥ यावन्न योषितां दृष्टि—गोचरं
याति पूरुषः ॥ १ ॥ स बालतापसः पोतनाश्रमफलानि भुक्त्वा बिल्वादिफलास्वादत उद्विग्नो जातः.
ततस्ताभिर्गणिकाभिर्वारंवारं स कंठे समालिंगितः. ततः सोऽदृष्टस्त्रीसंसर्गस्ताः पप्रच्छ, यथा—अहो

मृदुतमो देहः । शशोदरसहोदरं ॥ हृदि हृद्यं किमेतच्च । सुस्पर्शं वेदिकाद्वयं ॥ १ ॥ ताः प्रोचुर्मुनयोऽस्माकं । ये पोतनतपोवने ॥ ते सर्वे मार्दवदेहा । भवंति निश्चयेन हि ॥ २ ॥ पोतनाश्रमजैरेतैः । फलैरास्वादितैः स्वयं ॥ सौकुमार्यमिदं देहे । वेदिद्वंद्वं च जायते ॥ ३ ॥ अतस्त्वमप्यमुमाश्रमं त्यक्त्वा पोतनाश्रमं समागच्छ यथास्माकं प्रीतिवल्लरी वर्धते. ततः स ताभिः समं संकेतं कृत्वा प्रत्यावृत्तस्तापसाश्रमे समागत्य तपस्व्युपकरणान्येकांते संगोप्य भूयोऽपि तदंतिके त्वरितमेवागतः, कियद्वेलानंतरं यदा वल्कलचीरी नागतस्तदा सोमचंद्रो मुनिस्तमवलोकनायेतस्ततो भ्रमंस्तत्रागतः, तदानीं तरुशिरःस्थितैश्चरैः सोमचंद्रर्षिरागच्छन् दृष्टः, तैस्ताभ्यः कथितं सोमचंद्र आयाति. ततस्ताः पण्ययोषितोऽहो एष मुनी रुष्टः कोपाच्छापयिष्यतीति पृथक्पृथक् प्रणष्टाः. अथ वल्कलचीरी मुनिरेकाकी वनचर इव वने बभ्राम, यथा—संसारमृगतृष्णानां । तासामेवाथ संस्मरन् ॥ मृगपोत इवारण्ये बंभ्रमीतिस्म संभ्रमी ॥ १ ॥ अथ स बालमुनिर्मार्गे गच्छन्नेकं रथिकं रथारूढं समालोक्य तातान्भिवंदामीत्युक्त्वा यावत्तस्य पुरो बभूव तावत्तेन स मुनिर्भाषितो भो मुने त्वं कुत्र गंतासि? मुनिनोक्तमहं पोतनतपोवने गंतास्मि, स तापसस्तमनुव्रजंस्तस्मिन् रथे स्थितां तत्प्रियामपि तात तातेति

जगौ, तदा सा स्त्री रथिनं प्रत्याह हे स्वामिन्नेष मुनिकिशोरकः स्त्रीपुंसवेदयोर्भेदानभिज्ञो दृश्यते. तत् श्रुत्वा रथिनो महदाश्चर्यं समजनि. ततो वृषभान् प्रनोद्यमानान् दृष्ट्वा स वक्ति तात मृगान् किं बाढं प्रेरयसि? ऋषीणां नेदं युज्यते, रथ्याह तपस्विनां कोऽयमुपालंभः? एते स्वकर्मभिरेवेदृशाः कृताः. एवं स रथी तेन मुनिनर्जुजल्पनैर्वशीकृतः, ततस्तेन रथिना तस्य मुनेर्मोदका दत्ताः, तानास्वाद्य मुनिरूचे हुं हुं तान्येवैतानि फलानि यानि पोतनाश्रमवासिभिर्मुनिभिः पूर्वं दत्तानि. एवं मार्गे गच्छतस्तस्य तस्करो मिलितः, तेनैकेन रथिना स तस्करो जितः, तेन तस्करेण तुष्टेन रथिने बहु धनं दत्तं, तद्धनं रथे क्षिप्त्वा शीघ्रं रथं प्रेरयन् पोतनपुरमाजगाम. ततो रथिकेनोक्तं भो मुने किंचिद्धनं गृहाण? एतद्विनोटजफलादि किंचिदपि न लभ्यत इत्युक्त्वा तस्य मुनेः किंचिद्धनं दत्वैष पोतनाश्रम इत्युक्त्वा सोऽन्यत्र ययौ. ततः स वल्कलचीरी नगरमध्ये गतः, तत्र प्रतोलिकाहट्टप्रासादावासादि निरीक्ष्य चिंतयत्यहो क्व तिष्ठामि? कथमुटजं च याचे? तथा नरनारीश्च वीक्ष्य तातान्निवंदेऽहमिति वदति, लोकाश्च तं हसंति. अत्रांतरे तेन काचिद्वेश्या दृष्टा, तां मुनिं मत्वा समाकार्य मूल्यदानादुटजं ययाचे, तया स स्वगृहे समानीतः, ततस्तस्यानिच्छतोऽपि तस्य नखाः समु-

त्तारिताः. स्नानादि कारितं, अलंकारादिभिर्विभूषितः, वल्कलचीरी तत्सर्वं वेश्यया कृतमुपसर्गंवत्सेहे. ततस्तया वेश्यया तेन वल्कलचीरिणा सार्धं स्वपुत्र्याः पाणिपीडनमंगलं महामहेन कारितं, तदा तस्या गृहे गीतगानताननादभेदवाजित्रनाटकानि प्रवर्तंते.

इतश्च ताः पण्यस्त्रियस्ततो नंष्ट्वा पोतनपुरे समागताः. ताभिः सर्ववृत्तांतो राज्ञे निवेदितः, तत् श्रुत्वा राजा प्रसन्नचंद्रो भृशं शोकाकुलो बभूव, अहो मम सहोदरः सोमचंद्रादपि भ्रष्टो मत्तोऽपि भ्रष्टः, स कथंभूतो भविष्यति? एवं चिंताव्याकुलो नगरे महोत्सवान् निवारयामास, तस्मिन् समये तन्नगरं महच्छोकमयं जातं. अत्रांतरे राज्ञा तद्वेश्यागृहे मुरजध्वनिरश्रावि, तदा कुपितो राजा सेवकान् संप्रेष्य तामाकारयत्, अनेन प्रोक्तं च भो नगरनायिके मम गृहे शोके सति त्वं वाद्यानि कथं वादयसि? सा जगौ स्वामिन् मया दैवज्ञवार्तया कुमारमुनये कन्या दत्ता, विवाहश्च विहितस्तेन तानि वाद्यंते; तदेनं ममापराधं क्षमस्व? प्रसन्नचंद्रो राजा तयोक्तां तां वार्तां यावच्छृणोति तावत्तस्य राज्ञो दक्षिणेक्षणं स्फुरितं, तेन भ्रातुरागमनं निश्चित्य राजा स्वयं सपरिवारस्तस्या गृहे समागतः, तत्रानुजं वीक्ष्य प्रेमपरायणेन राज्ञा स स्वोत्संगे धृतः, आलिंग्य च शिरसा घ्रातः.

ततो राज्ञा महामहेन पूर्णं विवाहमंगलं विहितं, विवाहानंतरं महामहेन सहोदरं वल्कलचीरिणमादित्योदये महर्घ्यां पट्टहस्तिनमारोप्य स्वसौधं निन्ये. तं मुग्धं लोकव्यवहारस्यानभिज्ञं च विज्ञाय राजा प्रसन्नचंद्रः प्राज्ञपार्श्वे तं मुक्त्वा द्वासप्ततिकलाश्चतुःषष्टिमहिलागुणांस्तथान्यमपि लोकव्यवहारमशिक्षयत्, सोऽप्यतिनिपुणः सर्वकलाकुशलो बभूव. यतः—करे लक्ष्मीर्हृशो गौरी । रसनाग्रे सरस्वती ॥ हृदये च दया तस्या—वसन् वल्कलचीरिणः ॥ १ ॥ अन्याभिरपि राजन्य—कन्याभिः परिणायितः ॥ युवराजं विधायाथ । कृतार्थः पार्थिवोऽभवत् ॥ २ ॥ सहितः सहिताभिश्च । वशाभिर्नवयौवनः ॥ गजेंद्र इव राजेंद्र—प्रीतये वरजोऽजनि ॥ ३ ॥ अथ सोमचंद्रवृत्तांतः कथ्यते—

इतश्च सोमचंद्रराजर्षिर्बालं वल्कलचीरिणमपश्यन् शोकाकुलितमानसो भृशं रुरोद, स वृत्तांतः प्रसन्नचंद्रेण विज्ञातो यथा मम पिता वल्कलचीरिपुत्रविरहशोकाकुलो वर्तते, राज्ञा सर्वोऽपि वृत्तांतः सोमचंद्राय ज्ञापितः. ततः सोमचंद्रतापसो निवृत्तो जातः, अतिरोदनाच्च विहष्टिर्जातः, तस्य ब्रह्मचारिणस्तापसाः फलैः पारणं कारयंति, एवं दुःखावेशवशंगतस्य तस्य कालो याति. इतश्च प्रसन्नचंद्रो वल्कलचीरिणा बांधवेन समं सुखं क्रीडति, उभावपि भ्रातरौ सुखमग्नौ गतमपि कालं न जानीतः.

अहो विषयलांपट्यं! यत्तादृक् पिता सोमचंद्रो विस्मृतः, एवं क्रीडां कुर्वतस्तस्य वल्कलचीरिणो द्वादश वर्षाण्यतीतानि, अथैकस्मिन् दिने भूपतुरंकादवतीर्य वल्कलचीरिण उत्संगे समागतः, तद्बालकक्रीडां वीक्ष्य वल्कलचीर्यपि स्वस्य शैशवावस्थां पितुरुत्संगं च सस्मार, मम पित्रा सोमचंद्रेणापि मम मातरि विपन्नायां जातमात्रमप्येवं लालयित्वा बालक्रीडां कारयित्वाहं वर्धितो मात्रेवाहं लालितः पालितश्च, तस्य वार्धके मया वियोगो दत्तः, तथाहं विषयासक्तो जातः. जनकोऽपि विस्मृतः, धिग्मम जीवितं, धिगेतानि सौख्यानि, धिगिदं राज्यं यन्मया राज्यलोभेन विषयासक्तेन च जनकोऽपि विस्मारितः यतः कीदृशो मम तातः? कीदृशोऽहं? शैशवान्मुडिते यत्नो—न्मुद्रिते येन मे दृशौ ॥ दृशौ मुडिय तातस्य । तातस्यापकृतं मया ॥ १ ॥ धिग्धिग्ममाकृतज्ञत्व—मजितेंद्रियतां च धिक् ॥ विस्मार्य यदहं तात—मपि तिष्ठामि निष्ठुरः ॥ २ ॥ चित्ते चिरं विचिंत्येति । तातं दृष्टुमथोत्सुकः ॥ प्रसन्नचंद्रमाहृष्टुं । मूले वल्कलचीर्यगात् ॥ ३ ॥ भ्रातुरंतिके गत्वा प्रणिपातपूर्वमेवं विज्ञपयति हे भ्रातरहं पितुरंतिके गत्वा पितरं नत्वैव लोक्ये. अतस्त्वं प्रसन्नीभूय मां तत्र प्रेषय? यथाहं तत्र गत्वा तातं नमस्करोमि. एवं तेन वल्कलचीरिणा विज्ञप्तः प्रसन्नचंद्रो राडपि बंधुना सा-

र्धं तत्र गमनाय सज्जो बभूव, ततस्तौ बांधवौ सोमचंद्रमुनिपावितं वनं प्रतिहर्षनिर्भरौ चलितौ, तस्यासन्ने गत्वा तौ यानं मुक्त्वा पादचारीभूय वने प्रविष्टौ, हर्षाश्रुपूरितो वल्कलचीरी प्रसन्नचंद्रं राजानं प्रत्याह भो बंधो फलार्थमेते महीरुहो मया रोपितास्तदर्थमेताः सारिण्यो मयैव कृताः, तथैतेषां वृक्षाणामुपरि ये शुका वेदोच्चारं कुर्वंति ते मयैव पाठिताः, किंतु सांप्रतं मम रूपं वीक्ष्य ते त्रस्यंति, एते कपयः पूर्वं मया सह क्रीडंतोऽभूवंस्ते सांप्रतं मम रूपमवलोक्य त्रस्यंति, एता मया रोपिता वल्ल्यः, एषा मम वाटिका, एता महिष्यो मम धात्र्यः, अमी मृगा मम क्रीडासखाः, एते वृक्षा मया बाल्ये रोपितास्ते सांप्रतं महावृक्षा जाताः. एवं पूर्वारोपितवृक्षान् पूर्वपालितचतुष्पदान् पक्षिणश्च समालोकयन् भ्रातुर्दर्शयंश्च परमानंदपदं सोऽन्वभूत्. एवं गच्छन् क्रमेण तातसोमचंद्रपावितमुटजमाजग्मतुः, उभावपि पुत्रौ पितरं सोमचंद्रं वीक्ष्य मुमुदाते. ततस्तौ जनकं नत्वा भृशं कंठाश्लेषं चक्राते. ततः सोमचंद्रो मुनिर्वल्कलचीरिणं लघुपुत्रमुत्संगे पूर्ववन्निवेश्य सर्वांगं चालिंग्य मूर्ध्न्याजिघ्राय सर्वांगं च पाणिना पस्पर्श. वल्कलचीरिवियोगेन रुदनं कुर्वतः सोमचंद्रस्य दृशौ पूर्वं पटलावृते अभूतां, सांप्रतं ते वल्कलचीरिसंगमाद्धर्षाश्रुभिर्विगतपटले बभूवतुः, तौ दृष्ट्वा सोम·

चंद्रो मुनिस्तावंतं संतोषं प्राप्तो यावद् ज्ञानिभिरपि वक्तुं न शक्यते.

अथ वल्कलचीरी पर्णशालायां तापसोपकरणानि प्रत्युपेक्षितुमगात, तत्र गत्वा तत्तापसोपकरणानि रजसा गुंभितानि कौलिकजालैरावृतानि च समालोक्य निजोत्तरीयांचलेन प्रत्युपेक्षितवान्, तानि तापसभाजनानि वस्त्रांचलेन प्रमार्जयन् वल्कलचीरीति चिंतयामासाहो मया पूर्वं कदाचिदेवं यतिपात्राणि प्रत्युपेक्षितानीत्युहापोहं कुर्वाण आत्मनो जातिमस्मार्षीत्. स वल्कलचीरी समुत्पन्नजातिस्मरणः पूर्वभवपालितश्रामण्यं स्मृत्वा संसारसुखविमुखो वैराग्यमाश्रयत्. ततश्चैवं दध्यावहो मयैतावंति दिनानि विषयलांपट्येन निर्गमितानि, इयत्कालमहं मोहेन वंचितो यत आसन्नमपि श्रामण्यं मयेयत्कालं नावबोधि, मयैतावंतं कालं यतिधर्मो नाज्ञायि, यतः—खंती १ अज्जव २ मद्दव ३ । मुत्ती ४ तव ५ संजमे ६ अबोधव्वे ॥ सच्चं ७ सोयं ८ अकिं-चणं च ९ बंभं च १० जइधम्मो ॥ १ ॥ एष यतिधर्मः सांप्रतं ज्ञानेन ज्ञात इत्यादि भावनां भावयन्नुपशमश्रेण्या कर्माण्युपशाम्य, क्षपकश्रेण्या घनघातिकर्माणि क्षपित्वा धौतकर्ममलोऽद्वितीयस्य शुक्लध्यानस्य योगतो वल्कलचीरी केवलज्ञानमवाप. ततः स देवतादत्तालिंगः परिहितसाधुवेषो देवताकृतसौवर्णकमलोप-

विष्ट एवंविधां देशनामतनोद्यथा—मोहभूतकुलाक्रांते । रागद्वेषबिभीषिके ॥ क्रोधाख्योत्तालवेताले लोभविक्रोभराक्षसे ॥ १ ॥ प्रेताजितेंद्रियग्रामे । विषयजालसंकुले ॥ मिथ्यात्वाख्यमहागृध्रे । मायागोमायुपोषिते ॥ २ ॥ अभिमानमहाशूले । मनोभवपिशाचिनि ॥ जरारुग्मृतिजात्यादि—शाकिनीकुलसंकुले ॥ ३ ॥ संसाराख्ये महाभीमे । श्मशानेऽत्र भयंकरे ॥ कथं हि निश्चितीभूय । रमंते हंत जंतवः ॥ ४ ॥ चतुर्भिः कलापकं ॥ भो भो लोका एवंविधे संसारमहाश्मशाने निर्भयाः संतः कथं रमध्वे? यूयं संसारश्मशानतो दूरं क्रीडत? निर्वाणपत्तनं च यातेति वल्कलचीरिकेवलिमुखाद्धर्मदेशनां श्रुत्वा धर्मसंबोधिं लब्ध्वा सोमचंद्रमुनिप्रसन्नचंद्रौ जैनशासनाराधनतत्परावभूतां. तदानीं पोतनपुरोद्याने नंदनवनोपमे दुरितध्वांतवासरः श्रीवीरो भगवान् देवसेव्यपादपद्मः समवासरत्. देवैः समवसरणे कृते स्वामी तत्र सिंहासने स्थितो यावद्धर्मदेशनां विदधे तावद्वल्कलचीरी स्वयंबुद्धकेवली तीर्थकरं नत्वा तं प्राप्तसंवरं राजतापसं सोमचंद्रमुनिं भगवतोऽर्पयामास. ततः स्वामिना देशना दत्ता, तां श्रुत्वोभावपि प्राप्तवैराग्यावभूतां. सोमचंद्रेण भगवदंतिके दीक्षा गृहीता. राज्ञा प्रसन्नचंद्रेण गृहे गत्वा निजे राज्ये बालमंगजं न्यस्य निजदीक्षामहामहश्चक्रे. पोतननृपः

प्रसन्नचंद्रो भवांभोधौ पोतोपमं संयमव्रतं भेजे. ततः स्वामिना समं मह्यां विहरन् महातपश्चरो राजर्षिर्जज्ञे. अन्यदा भगवान् श्रीमहावीरो राजगृहे ययौ, स्वामिनं समागतं श्रुत्वा राजगृहेश्वरो राजा श्रेणिकस्तत्प्रणामायाचलत्. मार्गे तपःकृशं रविदृशमेकेन पादेन भूस्पृशमेवंविधं प्रसन्नचंद्रराजर्षिं वीक्ष्य श्रेणिको राडेवं कथयत्यहोऽयं महर्षिर्महति ध्याने उत्कर्षो वर्तते यः शैलवन्निश्चलः स्थितोऽस्ति. एवं मार्गे ध्यायन् नृपः स्वामिनं नत्वा पप्रच्छ स्वामिन् मार्गे मया ध्यानस्थितो महामुनिर्वंदितः, यद्येष महामुनिस्तस्मिन् समये विपद्येत तर्हि कुत्रोत्पद्यते? स्वामिनोक्तं सप्तमीं भुवं, राजा दध्यौ साधोः केदृग्गतिः? परं मया सम्यग् श्रुतं, क्षणांतरे पुनः पृष्टं प्रभोऽधुना स साधुर्यदि म्रियेत तदा कां गतिं साधयेत? भगवतोक्तं सर्वार्थसिद्धिं, तत् श्रुत्वा नृपो जगौ हे भगवन्! पूर्वापरवाक्ययोः कथं विरोधः? भगवानाह राजन् श्रूयतां? सदसद्गतिकारणं शुभाशुभध्यानविशेष एव न पुनर्कायक्लेशादिक्रिया, राज्ञोक्तं तत्कथं? स्वाम्याह त्वदनीकस्य मुखे सुमुखदुर्मुखनामानौ द्वौ नरावीयतुः, द्वावपि मिथ्यादृशौ स्वैरवादिनौ तत्रास्थं तं मुनिं वीक्ष्य सुमुखो दुर्मुखंप्रत्युवाचास्य मुनेः स्वर्गापवर्गौ हस्तगौ वर्तेते, य एवंविधे शुक्लध्याने समारूढो वर्तते. ततस्तंप्रति दुर्मुखो बभाषे भो मित्रैतस्य कथा-

मपि वृथा मा कृथाः, अस्य मुनेर्मुखावलोकनेन महत्पापं जायते, यतोऽसौ ज्ञूरक्षां दूरीकृत्य पृथिवीभारं त्यक्त्वा केशभारमपि च त्यक्त्वा बालसुते पृथ्वीभारं समारोप्य स्वयं दीक्षामादाय वनमाश्रितः कायोत्सर्गेण स्थितो राज्यभारत्रस्तो रजोहरणं समाश्रितः, यतः—राज्यादिदानीं नृपेश—दधिवाहनसंहृतैः ॥ सूनुः सोऽस्य च निर्घृणैः । सचिवैर्मारयिष्यते ॥ १ ॥ इत्थं मिथ्यात्वदावाग्नि—शिखाभिर्दुर्मुखोक्तिभिः ॥ दग्धध्यानतरुर्दध्यौ । स महर्षिरमर्षतः ॥ २ ॥ अहो मया ये महामात्या आबाल्यादपि पालितास्ते मंत्रीश्वरा मम पुत्रराज्यं परावर्तयिष्यंति, सांप्रतं यदि तत्राहं भवेयं तदा सर्वान् मम शत्रून् निहन्मि, इत्यादिमलिनध्यानेन जातव्रतविस्मृतिर्मनस्येव योध्धुं प्रवृत्तः, तस्मिन् समये त्वया पृष्टमनो मयोक्तं सप्तमनरकपृथ्वीयोग्यः, ततस्त्वयि गतेऽस्य मनसा संग्रामं कुर्वतः सर्वाणि शस्त्राणि क्षीणानि, तदा प्रसन्नचंद्रराजर्षिणा शिरस्त्राणेनैव शत्रुं हन्मीति धिया शिरसि करो व्यापृतः, तदा लोचितं स्वमस्तकं ज्ञात्वा स्मृतव्रतः स प्रतिबुद्धस्तदानीं पुनरायातसंवेगो दध्यावहो मया क्रोधपरवशेन धर्मध्यानावसरे आर्तरौद्रध्यानयोगादात्मा मलिनीकृतः, एवं मनस्येवालोचितप्रतिक्रांतो मनसैव बद्धानि पापानि मनसैव क्षिप्त्वा सर्वार्थसिद्धियोग्यो बभूव, तावत्त्वया पृष्टमतो

मयोक्तं सर्वार्थसिद्धियोग्य इति. एवं स्वामी यावत्कथयति तावदाकाशे दिव्या देवदुंदुभिध्वनिरभू-त, पुनः श्रेणिकेन राज्ञा पृष्टं हे भगवन् किमेष देवदुंदुभिनादो भवति? प्रभुरभाषत शुक्लेन ध्या-नेन प्रसन्नचंद्रो राजर्षिः केवली जातः, देवास्तस्य केवलिमहिमानं कुर्वंति, तत्र समुद्भूतेयं दुंदुभि-ध्वनिर्निशम्यते. एवं भगवद्वाक्यमाकर्ण्य श्रेणिको दध्यौ धन्य एष प्रसन्नचंद्रमहामुनिर्यः क्षणेनाशु-भध्यानयोगेन सप्तमपृथिव्या योग्यं कर्म समुपार्ज्य पुनः शुभभावनया तत्क्षपित्वा सर्वार्थसिद्धि-योग्यं कर्म समुपार्जयत्, ततः सकलकर्मक्षयं कृत्वा केवलज्ञानमवाप, यतः—वीरजिणकहि-यसत्तम—पुढवीसव्वसिद्धिगयजोगो ॥ नंदउ पसन्नचंदो । तक्कालं केवलं पत्तो ॥ १ ॥ इत्थं प्रस-न्नचंद्रर्षि—र्ध्यानं ध्यात्वा महोन्नतं ॥ केवलज्ञानवान् मह्यां । विहृत्य प्रययौ शिवं ॥ २ ॥ इति प्रसन्नचंद्रराजर्षिकथानकं समाप्तं ॥ अथ भावनोपरि मृगावतीदृष्टांतमाह—

॥ मूलम् ॥—सुस्सुसंती पाए । गुरुणीणं गरहिऊण नियदोसे ॥ उप्पन्नदिव्वनाणा । मिगा-वई जयउ सुहभावा ॥ ५ ॥ व्याख्या–गुरुणीपादौ शुश्रूषयंती पादयोः सेवां कुर्वती तथा गर्हित्वा निजदोषानुत्पन्नदिव्यज्ञाना समुत्पन्नकेवलज्ञाना मृगावती जयतु, कथंभूता? शुभभावा, शुभो भावो

यस्या असौ शुजजावेति गाथार्थः, जावार्थस्तु कथानकादवसेयस्तच्चैवं, तत्र मृगावत्याश्चारित्रांगीकारसंबंधस्तु शीलकुलके 'सुंदरीसुनंदचित्रण' इति पंचदश्यां गाथायां पूर्वं प्रतिपादितः. अथ मृगावती निरतीचारं चारित्रं पालयंती स्वामिना समं विजहार. इतश्च जगवान् श्रीमहावीरः पृथिवीमंडले विहारं कुर्वन् जव्यान् प्रतिबोधयन् कौशांबीं समवासरत्. ततो जगवतस्तृतीयपौरुषीदेशनायां दिवाकरनिशाकरौ स्वस्वविमानाज्यां समं जिनेंद्रदेशनां च श्रोतुं समागतौ, स्वामिना देशना प्रारब्धा, रविविमानतेजोभिः पूरिते समस्तदिगंते कोऽपि रात्रेः समयं समायांतमपि नाबुध्यत. जगवत्प्रवर्तिनी चंदनबाला ज्ञानेन निशासमयं ज्ञात्वा स्वमाश्रयमागात्, मृगावती तु दिनभ्रांत्या स्वामिदेशनां शृण्वाना तत्रैवास्थात. अथ स्वामिना समये देशना मुक्ता, चंद्राकौं स्वविमानं गतौ, तयोर्गतयोरकस्मात्कस्मलीभूतसर्वाशा शर्वरी जाता, तदा मृगावती शीघ्रं वेपमानदेहा सत्यशीला स्वमाश्रयमाजगाम, तां वीक्ष्य चंदनावोचद् हे सुशीले मृगावतीयंतीं वेलां तव बहिः स्थातुं न युक्तं, यतस्त्वमुज्ज्वलकुलोद्भवा. ततस्तया प्रोक्तं स्वामिनि मयेदमज्ञानवशात्कृतं, ममैकमपराधं सहस्व? एवमपराधं पुनरहं न करिष्ये, इत्थं वदंती मृगावती चंदनायाः पादौ पतिता, तस्यां पादपतितायां

संवाहनपरायां च चंदनायाः संस्थारकस्थाया निद्रा समागता. तदानीमकालागमनातिस्वरदोषं स्वं निंदंती वारंवारं भगवती मृगावती क्षामयंती घनघातिकर्माणि छित्त्वा केवलज्ञानमवाप. तदानीं चंदनायाः करांबुजं धरापीठे लुठंतं समुत्पाट्य शय्यायां मुक्तं तदा चंदना प्राह हे मृगावति सुखसुप्ताया मम करः समुत्पाट्य कथं त्वया शय्यायां मुक्तः? मृगावत्याह हे भगवति तव हस्तसमीपे मया निशायां घोरांधकारे सर्पो दृष्टः, तद्भुजंगभयात्तव करो भुवि लुठन् मया करेणोत्पाट्य शय्यायां मुक्तः. पुनश्चंदना बभाषे हे विनीते त्वया ध्वांते गच्छन् फणी कथं दृष्टः? सा जगाद मया केवलज्ञानेन दृष्टः. ततश्चंदनाचिंतयदहो मयाऽज्ञानवशतः केवल्याशातना विहिता. ततश्चंदना मृगावतीं क्षामयंती शुभध्यानात्केवलज्ञानमासदत्. अनेन मृगावतीकथानकेन 'सुंस्हुसंती पाए' इति गाथा निरूपिता, इत्थं मृगावती जाता—संप्राप्य वरकेवलं ॥ चंदनां वंदनासक्तां । क्षापयामास तत्पुनः ॥ ॥ १ ॥ इति मृगावतीकथानकं समाप्तं. ॥ अथेलातीपुत्रभावनामाह—

॥ मूलम् ॥—भयवं इलाइपुत्तो । गुरुइ वंसंमि जो समारुढो ॥ दहूण मुनिवरिंदं । सुहभावो केवली जाओ ॥ ६ ॥ व्याख्या—इलातीपुत्रो भगवान् ज्ञानवान् 'गुरुइ वंसंमि' गुरुके वं-

शेऽत्युन्नतवंशशिरसि यः समारूढस्तत्र नृत्यं कुर्वन् मुनिवरान् 'दठूणत्ति' दृष्ट्वा शुभभावो वंशशिरसि भ्रमन्नेव केवली जात इति गाथार्थः, व्यासार्थस्तु कथानकादवसेयस्तत्कथा चेयं—

वसंतपुरे नगरेऽग्निशर्मा नाम द्विजोऽस्ति, स राजमान्यो महर्द्धिको जैनधर्मी जिनगुरुसेवापरायणश्चास्ति. अन्यदा स धर्मघोषाचार्योपांते धर्मं श्रुत्वा व्रतं जग्राह, तत्प्रियापि तदनुरागेण व्रतं जेजे. तौ द्वावपि धर्मपरायणौ सम्यग्व्रतं पालयामासतुः, अथाग्निशर्मा मुनिर्गुर्वंतिके एकादशांगानि पठित्वा कानिचित्पूर्वाणि पपाठ, तस्य प्रियापि संयमं पालयंती साध्वीनामंतिके समाधितः कानिचिदंगानि पठतिस्म. अथ पूर्वं तेनाग्निशर्मणा मुनिना गार्हस्थ्ये भार्यया सह क्रीडितं तत्पूर्वाभ्यासं नात्यजत्, यतः पूर्वाभ्यासो हि दुस्त्यजः. एवं मनसा वाचा किंचिदतीचारं कृत्वा नानाजातीन् मुनीन् ज्ञात्वा जातिमदं चक्रे, तथैव साध्व्यपि मदं चक्रे, द्वावपि शौचाचारपरायणौ साधुजुगुप्साकारिणौ तद् दुःकृतमनालोच्यानशनेन मृत्वा वैमानिकौ सुरौ जातौ.

इतश्चास्मिन् भरतक्षेत्रे विपुलर्द्धिबंधुरमिलावर्धनं नाम नगरं, तत्र जितशत्रुनामा राजा राज्यं करोति, तस्मिन्नगरे महेभ्यः सर्वश्रेष्ठिश्रेष्ठः सकलगुणज्येष्ठ इभ्यो नाम श्रेष्ठ्यस्ति, तस्य श्रेष्ठिनः

शीलालंकारधारिणी धारिणीनाम दयितास्ति, तयोः परस्परं महान् स्नेहो वर्तते, तौ देवदेव्याविव सुखं भुंजानौ गतमपि कालं न जानीतः. एवं तयोः परमोत्कृष्टसौख्येऽप्येकं महद् दुःखं वर्तते, यतः पुत्रो नास्ति, विना पुत्रं धनेन किं? यतः—तं मंदिरं मसाणं । जत्थ न दीसंति धूलिधवलाइं ॥ ज्झंतं चमंत पडंत । दोतिन्निवि य डिंभाइं ॥ १ ॥ लोकैरप्युक्तं—अपुत्रस्य गतिर्नास्ति । स्वर्गो नैव च नैव च ॥ तस्मात्पुत्रमुखं दृष्ट्वा । पश्चात्स्वर्गं नु गम्यते ॥ २ ॥ एवं पुत्रं विना दुःखाक्रांतः श्रेष्ठी मनस्येवमचिंतयदस्मिन्नगरे कल्पलतेव चिंतितदायिनी सर्वसौख्यानुयायिनीला नाम देव्यस्ति, सप्रत्ययः सर्वोऽपि लोक इष्टाभिलाषी तां याचते, तर्ह्यहमपि तां देवीं पुत्रार्थं याचे, सा याचिता मह्यं पुत्रं दास्यतीति कृत्वा सप्रियं श्रेष्ठ्युत्सुकमनास्तत्र गत्वा महत्यर्च्या पूजां कृत्वा पादयोः पतित्वैवमुपयाचनां करोति, यथा—हे देवि यदि मे पुत्र—स्त्वत्प्रसादाद्भविष्यति ॥ तस्य त्वन्नाम दास्यामि । यात्रां कर्तास्म्यहं तदा ॥ १ ॥ इतश्च सोऽग्निशर्माविप्रजीवो देवलोकाच्च्युत्वेलादेव्यनुजातस्तस्या धारिण्याः कुक्षौ पुत्रत्वेनोदपद्यत, क्रमेण गर्भो ववृधे. ततः संपूरितशुभदोहदा पूर्णे मासि धारिणी पुत्रं सुषुवे. ततो जन्मोत्सवकरणानंतरं द्वादशेऽह्नि तस्य पुत्रस्येलादेव्या दत्तत्वादिलापुत्र

इति नाम दत्तं, क्रमेण देहश्रिया वर्धमानोऽष्टवर्षीयोऽसौ जातः, पित्राध्यापितो द्वासप्ततिकलाकुशलो यौवनश्रिया शोभमानः संपूर्णकलः पूर्णिमेंदुरिव दिदीपे. अथ तस्य पूर्वभवप्रियादेवो देवलोकाच्च्युत्वा जातिमदानुभावान्नटस्य पुत्रिका जज्ञे, धिग्जातिमददोषं, सा पुराकृततपःप्रभावादत्यंतरूपविलासलावण्यहासकलिता नर्तकी जाता, सा सर्वोत्कृष्टं तथा नृत्यं चक्रे यथा स्वर्गादुत्तीर्णाभिनवा स्वर्वधूरिव सर्वैर्लोकैर्ददृशे. सान्यदा लोचनानंदचंद्रिका नृत्यंती शरत्समये इलासूनुना दृष्टा. अथ तस्याः कुरंगाक्ष्या रूपलावण्ययौवनदर्शनादिलापुत्रो दुर्मदावस्थां प्राप करिणीं वीक्ष्य यथा करिवरः, सर्वातिशायिनीं तां दृष्ट्वा तस्या विज्ञानज्ञानचातुरीं च वीक्ष्य व्याक्षिप्तमानसस्तां नटीं देवीमिव स्मरंस्तस्थौ. यथा यथा स इलापुत्रस्तां नटीं सस्मार तथा तथा स मूर्छित इवालेख्यविन्यस्त इवाभवत्, स तस्यामत्यंतमोहितः, यथा—न देवे न गुरौ वापि । न धर्मे न कुलक्रमे ॥ नास्तिकस्येव तस्यास्था । स्थिरतां क्वापि नाकरोत् ॥ १ ॥ आसने शयने याने । भोजने विजने जने ॥ ध्यास्थानेऽपि स तन्नाम । मुखान्न मुमुचे क्वचित् ॥ २ ॥ मनोंतर्मन्मथव्याधौ । वृद्धिभावमुपेयुषि ॥ स क्वापि न रतिं लेभे । शुष्के वारिणि मीनवत् ॥ ३ ॥ ततः सवयोभिर्मित्रैर्भाषितोऽपि भ्रांतचित्त इ-

व शून्यानेव हुंकारान् ददौ. अहो कामातुरः पुमान् किमपि कृत्याकृत्यं न वेत्ति, यतः—तावदेव कृतिनामपि स्फुर—त्येष निर्मलविवेकदीपकः ॥ यावदेव न कुरंगचक्षुषा । ताड्यते न चटुललोचनांचलैः ॥ १ ॥ अथ स श्रेष्ठिपुत्रः स्मराहिना दष्टस्तां नटीं गारुडिकीमिव वारंवारं स्मरन्निमां प्रतिज्ञामकरोद्यथा—प्रफुल्लपद्मपत्राक्षीं । यदीमां न विवाहये ॥ प्राणेभ्यः सर्वथा रुष्टः । तदग्नौ प्रविशाम्यहं ॥ १ ॥ एवंविधां प्रतिज्ञां प्रपन्नो मित्रैः कथंचिन्मंदिरं नीतः, स कामज्वरार्दितः कथंचिद्विमनास्तत्र स्थितः, मातापितृभ्यां स पृष्टो भो पुत्र तव किं बाधते? सत्यं ब्रूहि? एवं वारंवारं पृष्टोऽपि किमप्युत्तरं यावन्न ददौ तावत्तेन श्रेष्ठिना तस्य सुहृदोऽतिनिर्बंधेन पृष्टाः, ततस्तदध्यवसितं सर्वं स्वरूपं तैर्निरूपितं, तत् श्रुत्वाकस्मात्तज्जनको वज्राहत इवापतत्, अहो सूनोरयं भावोऽस्मत्कुलकलंककारको जज्ञेऽथ किं करिष्यते? ततः पिता पुत्रांतिके गत्वा पुत्रं करे धृत्वा प्रोचे हे पुत्र त्वया किमिदं वांछितं? तवानुरूपां स्वकुलोचितामन्यां कामपि कामिनीं कामय? यतः सुशीतमपि चांडालजलं द्विजः किं पिबति? सदाचारचरिष्णूनामस्मादृशां व्यवहारिणां रूपवत्यः पुत्रिकाः किं सर्वथा नष्टाः? यत्तव मनो हीनाचारचरित्रायां भृशमनुरज्यते, तन्नूनं त्वममृतं मुक्त्वा विषं पातुं

वांछसि. त्वं पक्षद्वयविशुद्धोऽपि विवेकवानपि किमिदं चिकीर्षसि? तथा हे पुत्र त्वं हंससदृशः काकोचितं कर्म कुर्वन् किं न लज्जसे? स्वकुलोचितं त्यक्त्वा नीचकुलोचितं मा कुरु? ततः पुत्रस्नेहमोहिता रुदंती माता बभाषे, यथा—महाधनसमृद्धानां । महेभ्यकुलजन्मनां ॥ महारूपवतीनां त्वं । कन्यानां शतमुद्वह ॥ १ ॥ त्वं कुटुंबस्य भारं वह? त्वमुत्पथे पदं मा देहि? यतस्त्वमस्माकं कुलतंतुरेवासि, त्वय्युत्पथं प्रस्थिते मम का शोभा भविष्यति? तनूरुहाणां गुणोत्कर्षे मातापितरौ प्रगर्जतः, हे पुत्र त्वय्येकसूर्येण मे कुलमुद्योतितं, सदैव सुदिनं जातं, त्वया कुलाचारे त्यक्ते मम कुले तमोमय्यमावास्या भविष्यति, त्वमस्माकमेक आधारोंधस्य यष्टिरिवासि. त्वया विरहिताया मम तव जनकस्य च का गतिर्भाविनी? त्वमतिविज्ञोऽसि, मनसि विचारय? त्वदध्यवसायाद्विरमस्व? त्वं मया चिरं पालितोऽसि, त्वमध्यापितोऽसि, त्वं मया लोकेषु महत्त्वमधिरोपितोऽसि, अपगतदोषाया मे कुक्षेर्दोषं मा समुत्पादय? कुलिनाः पुत्रा मातरं महोन्नतिं नयंति, अतस्त्वमपि नयस्व? स्वकुलोचितां कन्यां याचस्व? यथैकशावेन सिंही सुखं तिष्टति, तथाहं त्वय्येकपुत्रेण सुखं तिष्टामि, त्वया नीचजनासक्तेनाहं शृगाली मास्मभूवं, पुना रुदंती माता स्माह भोः पुत्रक मातरं मन्यस्व? लो

केऽपि सर्वतीर्थेभ्यो माता तीर्थमनुत्तरं. मात्रैव मुक्तोऽपीलापुत्रस्तस्माद्दुरध्यवसितान्न न्यरंसीत्, स्मरार्ता हि गुरूनपि तृणयंति, अथेलापुत्रो मातपितरौ प्राह हे मातापितरौ भवदुक्तं सर्वमहं जाने परं किं करोमि? मम मन एनां विनान्यत्र न मोदते. तर्हि किं बहुभाषितैः? धिगहो मन्मथवैषम्यं यदस्मात्सुतो मातापितृभ्यामुक्तोऽपि न मन्यते, तर्हि किं परोक्तैः? ततस्तं पुत्रं महाव्याधिमिवाचिकित्सं ज्ञात्वेभ्यः साश्रुलोचनो नंदनमवज्ञायोपेक्षां चक्रे.

ततः स इलापुत्रोऽभिमानमुत्सृज्य नटेभ्यस्तत्तुल्यद्रव्याय तां मार्गयामास. ततस्ते नर्तकास्तं प्रोचुर्भो महात्मन् द्रविणेनास्माकं प्रयोजनं नास्ति, एषा नट्यस्माकमक्षयनिधिसंनिभानया चेत्तवार्थोऽस्ति, तर्हि नटीभूयास्याः पाणिग्रहणं कुरुष्व? ततो लोकापवादमवमन्य स तेषां नटानां मिलितः, तेषामंतिके नृत्यकलामशिक्षत्, तेन शिल्पे शिक्षिते ते प्रोचुर्भो महात्मन् विनाधनं विवाहो न भवति, अतो धनमर्जय यथा तेन तव विवाहः क्रियते. ततः स विवाहार्थी धनमर्जयितुं लग्नः. एकस्मिन् दिने ग्रामाद् ग्रामांतरं गछन् धनलाभेप्सुः कुटुंबेन सह बेन्नातटं नगरं गतः, तन्नगराधीशेन ते नटाः कौतुकेनाकार्य भाषिता यदामुष्मिन् दिने भवद्भिर्नाट्यं कार्यं, नगरेशादेशं श्रु·

त्वा मुदितास्ते नर्तकाः कियद्दिनानंतरं राज्ञोऽग्रे गताः, तैर्नटैः खल्वेको महाप्रमाणो वंशो निहितः, तस्योपरि महत्काष्ठं संस्थाप्य तदंतयोर्दृढौ द्वौ कीलौ निहितौ, इलाखुतस्तत्रारोहत्, तत्रैकस्मिन् करे तीक्ष्णं खड्गं धृतं, द्वितियकरे खेटकं धृतं, सच्छिद्रे पादुके पादयोर्न्यस्ते, ततः स क्रीडतिस्म, यथा—पृष्ठतोऽभिमुखान्युच्चै—रग्रतोऽभिमुखानि च ॥ सप्त सप्त ददौ चैवं । करणानि चतुर्दश ॥ ॥ १ ॥ करणे करणे दत्ते । छिद्रयोः पादुकास्थयोः ॥ कीलौ निवेश्य यद्वेगा—त्किमभ्यासस्य दुःकरं ॥२॥ तन्नाटकेन सर्वो जनो रंजितः, यतोऽतिशायिनाट्यानि कस्याश्चर्यकारीणि न स्युः? तदानीं सकलोऽपि जन एवं दध्यौ यदि राजा पूर्वं दानं ददाति, तदा वयमपि प्रीत्या दानं दद्मः, तत्र वंशाधःस्थितां तस्य प्रियां वीक्ष्य तद्रूपमोहितो राजा चिंतयति यद्येष नृत्यकर्ता वंशादधः पतति तदैनां नटीं गृह्णामीति धिया राजा जगाद भो नृत्यकारक त्वन्नाटकं मया सम्यग् ददृशे, अतस्तन्नाटकं पुनर्दर्शय? ततोऽतिलुब्ध इलापुत्रः पुनस्तान्येव नाटकानि दर्शयति, तथापि राजा दानं न ददाति, राजा तां नटीमिच्छंस्तृतीयवारमपि तथैव नृत्यमकारयत, सोऽप्यतिलोभात्तथैव नृत्यं करोतिस्म. पुनः प्रोचे नृपो नृत्य । चतुर्थवारमप्यहो ॥ अदरिद्रं यथा कुर्वे । तुष्टस्त्वां कल्पशाखिवत् ॥ १ ॥ सो-

ऽप्यतिलोभाच्चतुर्थवारमपि विशेषतो नाट्यं करोति. ततो नटासक्तो लोको राजानं तिरस्करोत्यहो राजा सर्वकलाकुशलोऽप्यतिनिपुणोऽपि मूढवत्किमपि नटस्य दानं न ददाति तत्किं कारणं? यदा राजा दानं न ददाति तदेलासुताश्चिंतयति नूनं राज्ञो मनो नट्यां कामातुरं जज्ञे, अहो छेकाः परस्य चेष्टां वीक्ष्य तदाशयं तुलयंत्येव. यतः—आकारैरिंगितैर्गत्या । चेष्टया भाषणेन च ॥ नेत्रवक्त्रविकाराद्यै—र्ज्ञायतेंतर्गतं मनः ॥ १ ॥ इलापुत्रो राज्ञोऽभिप्रायं ज्ञात्वा दध्यौ धिगहो कामावस्था! धिग्मामिमं नृपं च धिग्, यतः—स्वाधीनेऽपि कलत्रे । नीचः परदारलंपटो भवति ॥ संपूर्णेऽपि तटाके । काकः कुंभोदकं पिबति ॥ १ ॥ अहो मया मातापित्रोर्वचनमुल्लंघ्यैवमकार्यं कृतं, मया निर्मलमपि कुलं कलंकितं, इत्यादिवैराग्यवासिताशय इलापुत्रो वंशाग्रे क्रीडति.

इतश्च तस्यासन्ने कस्यचिद्व्यवहारिगृहे साधवो भिक्षार्थं समागताः, कीदृशाः?—महाव्रतधराः, संयमरताः, एषणानिरताः, निर्विकाराः, जितेंद्रियाश्च. ते मुनय इलापुत्रेण वंशाग्रस्थितेन सुंदरीभिः प्रतिलाभ्यमाना दृष्टाः, यथा—रूपसौंदर्यसंपत्त्या । जितस्वःस्त्रैणदीप्तिभिः ॥ श्रोणीतटरणद्रत्न—मेखलाभिर्मृदुस्वरं ॥ १ ॥ घनोत्तुंगस्तनाभोग—लुठन्मौक्तिकदामभिः ॥ करकांचनचूडादि—द्विगु-

णीकृतकांतिभिः ॥ २ ॥ ईषत्स्रस्तदुकूलत्वाद् । दृश्यमाना ललाटिकाः ॥ ललाटेषु दधानाभि—र्मु· क्ताजालेन गुंफिताः ॥ ३ ॥ भक्त्यावर्जितचित्ताभिः । सुंदरीभिः शुभात्मभिः ॥ मोदकाद्यैः प्रतिला· भ्य—माना नानाविधाग्रहात् ॥ ४ ॥ चतुर्भिः कलापकं ॥ एवंविधा गृहमहिला महाभक्त्या मुनीन् प्रतिलाभयंत्यो वंशशिरसि स्थितेन तेनेलापुत्रेण दृष्टाः, तत इलापुत्रश्चिंतयामासाहोऽहं शशांक· किरणोज्ज्वले कुले जातोऽप्यभाग्यसंयोगान्नटो जातोऽहो मे भाग्यविपर्ययो यदनुरूपकुलोत्पन्नापि रूपश्रीविभूषितापि मातापितृभ्यां दीयमानाप्यनुरूपापि कन्या मयोपेक्षिता, अहोऽहं मूढो यत्तस्या· मधमान्वयजातायां नट्यां मोहितः, मम जननीदृशेभ्यः साधुभ्यो दानं ददाना बहुशो मया दृष्टाः, सापि मयोपेक्षिता, तस्या अपि वाक्यं मया न कृतं, जनकेन वारंवारं निवारितेनापि मया कुपु· त्रेण तस्यापि वाक्यं न कृतं, तदहं सर्वमूढेभ्योऽपि सर्वथा मूढोऽथ मम दुःखं कः पश्यति? येन मो· हमूढेन मया पापिना गुरूणामपि यद्गुरुदुःखं चक्रे. मया मूढमतिना पथ्यं सुहृदां वचनमप्यपथ्यमि· वावगणितं, अहो सत्यमेतन्मद्यपे का तत्वचिंता भवेदिति, नीरप्रवाहवन्मया नीचगामिना कामिना ह्यसमंजसं कृतं, मत्तोऽप्ययं नृपोऽधमाधमः. यतः—अनेककुलजाश्चैका । मन्मथप्राणजीवितं ॥ श·

स्निग्धास्ता एष काकवत् पक्वाद्रा इवापेक्ष्य । नृपोऽयं सुभगाग्रणीः ॥ १ ॥ जकन्या भूपार्थस्त ।
यो नृपः कुलमालिन्यादिसर्वं जानाति, सो॰ ॥ एतां समीहतेऽनिष्ठा—मरिष्टफलकामिव ॥ २ ॥
धन्याः खल्वेते मुनयश्चारि॰ विषमा वर्तते. ऽप्यनया नर्तक्या मोहितस्तन्नूनं मोहराजस्य राजधानी
अहं तु रा॰ त्रादिगुणोज्ज्वलाः, येऽमूभिः स्त्रीभिर्मोदकादिभिर्निमंत्रिता अपि सन्मुखमपि न पश्यंति.
धिक् संसार॰ जादिलोकेभ्यो धनं प्रार्थयामि, परं मम कोऽपि न दत्ते, अहो मम कर्मविलसितं!
स्वरूपं! कृतार्था एते मुनयो ये विज्ञातसंसारस्वरूपाः सर्वसंगत्यागं कृत्वा स्त्रीभोगपराङ्मुखा
स्वदे॰ ब्रह्मचर्यनिरताः पराशाविरताः केवलं मोक्षाभिलाषुकाः सदाचारचारित्राः कलंकरहिताः
एवं भावनां हेऽपि निरीहाः प्रवर्तंते, तदेभिर्मुनिभिर्यो मार्गः स्वीकृतः स मार्गो ममापि प्रमाणं.
तस्मिन्नेव स॰ भावयतस्तस्य पापपंकोऽगलत, चारित्रपरिणामोऽभूत, अहो शुभध्यानमाहात्म्यं!
तं केवलिनं वी॰ मयेऽकस्मात्संकेतितमिव कर्मचतुष्टये क्षीणेऽविनश्वरमिलासूनोः केवलज्ञानमुत्पेदे,
धिगस्तु ललितं क्ष्य तत्प्रिया नटपुत्र्यपि भर्तुर्भावमतरा विज्ञायैवं दध्यौ, धिगस्तु मे रूपं लावण्यं,
तेन केवलज्ञानं लब्धं, वयोऽपि, धिग्यस्याः कृते एकेन निजकुलक्रमस्त्यक्तः, स तु शिष्टतां भेजे,

द्वितीयः पार्थिवो मत्कृते किंचिदन्यं विचारयति, अहोऽहं महानर्थकारिणी, मच्चरित्रं वाक्पतिनापि कथयितुं न शक्यते, तर्हि धिगस्तु संसारसौख्यं, सृतं मे विषयसौख्येन, एवं भावनां भावयंत्या नव्यापि घनघातिकर्मोपघाततस्तदैव केवलज्ञानमुत्पन्नं. इतश्चासन्नस्था राज्ञो महादेवी भर्तृसन्मानमाननी दृष्टिविकाराद्यैर्नरेशितुर्भावं ज्ञात्वा कामभोगान्निर्विण्णा शांतमनसा मनस्येवमचिंतयदहो मोहविलसितं! कर्मदोषतो महांतोऽपि मुह्यंति, यतो राजा नीचकुलोत्पन्नया नर्तक्या मोहितोऽभूत्, सुकुलोत्पन्नां राजपुत्रीमवगणयति, अहो संसारस्यासारता! तथा संसारे संचरंतो जंतवः काममोहिता अनार्याणि कार्याणि कुर्वंतो बहुविडंबनां लभंते, इति भावनया ध्वस्तकर्मप्रतिबंधायास्तस्यास्तदैव केवलज्ञानमुदपद्यत. अथ नृपतिर्लब्धलज्जतया लोकसंभवां विरक्तिं स्वस्मिन् हृदये वीक्ष्येति दध्यावहो ममाध्यावसायेन ज्ञानं विज्ञानं चापि गतं, यतोऽहं लोकविरुद्धानि समीहे, यतः—

दुःपूरः सलिलैर्यद्व—दंभोधिर्वह्निरिंधनैः ॥ तद्वदात्मापि दुःपूरः । सुखैर्विषयसंभृतैः ॥ १ ॥ अयं च कुलमुज्झित्वा । रक्तोऽस्यां धनकाम्यया ॥ ममोपकंठमायातो । मम चेदृग्विचेष्टितं ॥ २ ॥ तत्को वसति संसार-चारके हा विवेकवान् ॥ यत्रास्थानेऽपि जायंते । कुधियोऽस्मादृशा अपि ॥ ३ ॥ इत्यादि

भावयन् राजा । भावतश्चरणं श्रितः ॥ क्षपकश्रेणिमारूढः । केवलज्ञानमासदत् ॥ ४ ॥ एवं ते चत्वारोऽपि समकालं केवलज्ञानिनो बभूवुः, आसन्नसंनिहितैर्वानमंतरैर्देवैः केवलमहिमा चक्रे, तेषु सर्वेषु साधुवेषधरेषु नागरैर्वंदितेष्विलासूनुः केवलिमुनिः स्वर्णपंकजासीनो देवमनुजपर्षदि धर्मं समादिशति, यथा—धर्मो जगतः सारं । सर्वसुखानां प्रधानहेतुत्वात् ॥ तस्योत्पत्तिर्मनुजात्सारं तेनैव मानुष्यं ॥ १ ॥ भोगे रोगभयं सुखे क्षयभयं वित्तेऽग्निभूभृद्भयं । माने म्लानिभयं गुणे खलभयं काये कृतांताद्भयं ॥ दास्ये स्वामिभयं जये रिपुभयं वंशे कुयोषिद्भयं । सर्वं नाम भयं भवेत्पुनरिदं वैराग्यमेवाभयं ॥ २ ॥ एवं ज्ञात्वा भो भविका वैराग्ये यत्नो विधेयः, तदानीं सभाजनैरुक्तं हे भगवन् केन कर्मणा भवतां नर्तक्युपरि रागोऽभूत्? इलापुत्रकेवलिमुनिना सर्वोऽपि पूर्वभववृत्तांतोऽभिहितः, यथा—पूर्वं विप्रभवे भार्यया सह दीक्षा गृहीता, द्वाभ्यामपि जातिमदो विहितः. तदनालोच्याप्रतिक्रांतौ मृत्वा देवौ जातौ, ततश्च्युत्वा मम प्रिया जातिमदादेषा नटी जाता, एषोऽहं सुकुलोत्पन्नोऽप्यनया मोहितो जातिमदान्नटो जातः, भो भविका अन्यः कोऽपि जातिमदं कृत्वा निधनं यास्यति सोऽस्मादादिवन्नीचकुलो भविष्यति. इमां केवलिदेशनां श्रुत्वा बहवो

जना दीक्षामाददिरे, इलापुत्रकेवल्यपि कियंति वर्षाणि मह्यां विहृत्य भवोपग्राहिकर्माणि क्षपित्वा· ऽव्ययं पदं प्राप. इभ्यमिलातीपुत्रेण । लब्धं केवलमुज्ज्वलं ॥ भवोपग्राहिकर्माणि । क्षिप्त्वागात्पद· मव्ययं ॥ १ ॥ इतीलापुत्रकथानकं समाप्तं. ॥ अथ कपिलकेवलिभावनां भावयन्नाह—

॥ मूलम् ॥—कपिलो अ बंभमुणी । असोगवणियाइमज्झयारम्मि ॥ लाहालोहत्ति पयं । झायं· तो जायजाइसरो ॥ ७ ॥ व्याख्या—कपिलनामब्राह्मणमुनिर्जातजातिस्मरो जातः, किं कुर्वन्? ध्यायन् वारंवारं स्मरन्, किं? यथा लाभाल्लोभो भवतीति पदं, कुत्र? अशोकवनिकामध्य इति गाथार्थः. ॥७॥ विस्तरार्थस्तु कथानकादवसेयस्तत्कथा चेयं—कौशांबीनामनगरी, तस्यां नगर्यां जितशत्रुनामराजा· स्ति, तस्य पुरोधाश्चतुर्दशविद्यास्थानपारगः काश्यपो नाम विप्रोऽभूत, तस्य यशा नाम पत्नी, तयोः पुत्रः कपिलो नामाभूत्, तस्य शिशोर्बाल्ये काश्यपो जनको विपन्नः, कपिलश्चानाथोऽभवत, राजा काश्यपपु त्रं कपिलं बालं ज्ञात्वा तस्य पदेऽन्यं योग्यं विप्रं स्थापयामास, सोऽन्वहं हयारूढश्छत्राछादितदेहः सेवकैः परिवृतो राजद्वारादिषु याति, तदा कपिलजननी तं नृत्यत्तुरंगमारूढं वीक्ष्य बाढस्वरेण रोदनं कुरुते, यतो मंदभाग्यानां दुःखे स्मृते रोदनमायाति, कपिलोऽपि मातरं रुदंतीं प्रेक्ष्य शोकाक्रांतदे·

हो भृशं रोदिति, एवं कालो याति. एकस्मिन् दिने कपिलेन माता पृष्टा हे मातस्त्वमेनं विप्रं ह-
यारूढं राजगृहे यांतं वीक्ष्य केन कारणेन रोदिषि? ममाग्रे सत्यं समाख्याहि? ततस्तया प्रोक्तं हे
वत्स तव जनकस्थाने राज्ञायं स्थापितः, यथायं संपदां पदं वर्तते, तथा तव पितापि पूर्वमभवत्,
तं स्मृत्वा च जातखेदाहं रोदिमि, अनेन तव पितुः श्रीः प्राप्ता, त्वं तु बालोऽपठितस्तेन त्वया पि-
तुः श्रीर्न रक्षिता, पुनः कपिलो जजल्पैष पुरोधोऽधिकारो मम कथमायाति? मात्रोक्तं त्वं विद्या-
भ्यासं कुरु? चतुर्दशविद्यापारगो भव? यथा तव जनकस्थाने राजा पुनस्त्वां स्थापयति, पुनः क-
पिलेनोक्तं हे मातरहं कस्य समीपे विद्याभ्यासं करोमि? सावददस्यां नगर्यां सर्वोऽपि तव मत्सरी
वर्तते, अतस्त्वां कोऽपि नाध्यापयिष्यति, यदि तव पठनेच्छा वर्तते तर्हि श्रावस्त्यां नगर्यां व्रज?
तत्र तव पितुर्मित्रमिंद्रदत्तो द्विजः सकलशास्त्रपारगस्तव पितृतुल्यो वर्तते, स त्वां सकलकलासंपू-
र्णं करिष्यति. ततस्तत्र गतः कपिलः, तस्य चरणौ नत्वा स्वं ज्ञापयित्वा विज्ञप्तं हे तात मात्रा
त्वदंतिकेऽहं प्रेषितः, पठनायागतोऽहं, ततस्तेनोत्संगे धृतः संभाषितो भोजितश्च. ततस्तेन प्रोक्तम-
हं तव विद्याभ्यासं कारयिष्ये, परं तव भोजनचिंता कथं भविष्यति, मम गृहे तु तन्नास्ति यद्भुज्य-

ते. ततस्तेनोक्तं भिक्षयाहं भोजनं करिष्ये, इंद्रदत्तेनोक्तं भो वत्स भिक्षाभ्रमणे विद्याभ्यासो न भवति, तथा भोजनरहितस्याध्ययनं न भवति, यतो विना भोजनं मुरजोऽपि न गुंजति, अतः प्रथमं तच्चिंता क्रियते. अथ तं बालं करे धृत्वेंद्रदत्तः शालिभद्रमहेभ्यगृहे गतः, ॐ भूर्भुवः स्वरित्यादिगायत्रीं बाढस्वरेण पठन् बहिः स्थितः स्वं द्विजन्मानमज्ञापयत्. ततः श्रेष्ठिना समाहूय पृष्टो भो विप्र किं याचसे? यत्तवेप्सितं तद्याचस्व? इंद्रदत्तेनोक्तमेष बालो विप्रो विद्यार्थी, त्वमस्य प्रत्यहं भोजनं देहि? अहं पुनर्विद्यां प्रयच्छामि, ममांतिके द्रव्यं नास्त्यतो भवदंतिके प्रत्यहं भोजनं याचे, तस्य वचनं श्रेष्ठिनांगीकृतं, तद्दिनादारभ्य कपिल इंद्रदत्तपार्श्वेऽधीत्य शालिभद्रगृहे भोक्तुं याति, तदा तस्यैका दासी परिवेषयति, तस्या हास्यादिक्रमेण स तस्यां रक्तो जातः, सापि तस्मिन् रक्ता बभूव. ततस्तौ परस्परं स्त्रीभर्ताराविव रेमाते, धिग्विषयान्! यतो विषयासक्तः पुमान् किमपि कृत्याकृत्यं न जानाति, एवं तयोर्दिनानि यांति. अन्यदा दास्योक्तं मम भर्ता त्वमेव, परं निःस्वस्तेनापरं नरं प्राणयात्रार्थं भजे, न पुनर्भर्तृबुद्ध्या, तेनापि तत्प्रतिपन्नं.

अन्येद्युस्तस्मिन्नगरे कश्चिद्दासीनामुत्सवोऽभवत्, तदानीं सा दासी पुष्पपत्रादिकृते द्रव्याद्य·

भावाद्विमनस्का जाता, सा दासी कपिलेन विमनस्का दृष्टा, पृष्टा च हे सुंदरि! त्वं विमनस्का किं दृश्यसे? तयोक्तमद्य दासीनामुत्सवो वर्तते, तस्मादत्र पुष्पपत्रादि ममोपयुज्यते, अन्यथा मां दासीवर्गो विगोपयिष्यति. एतत्तस्या वचनं श्रुत्वा तद् दुःखव्यंतरावेशविवशः कपिलोऽधृत्या किंचिद्रुदित्वा मौनमालंब्य तस्थौ, तं तथाविधं दृष्ट्वा दास्यप्यदोऽवदद् हे स्वामिंस्त्वं मा विषीद? अस्मिन्नगरे धनो नाम श्रेष्टी वर्तते, यस्तं निशात्यये प्रबोधयति तस्मै स श्रेष्टी द्वौ स्वर्णमाषौ ददाति, अतस्त्वं तत्र गत्वा प्रथमं तं प्रबोधय? स जागरितः सन् तव माषद्वयं कनकं दास्यति, तत्त्वं मे समर्पयेर्यथावयोरपि कल्याणं भवति, कपिलेन तत्सर्वं प्रतिपन्नं. ततः कपिलस्तस्यामेव रजन्यां निर्गतः, मान्यः कोऽपि तत्र प्रथमं यात्विति भिया जागरितः, चंद्रज्योत्स्नया निशामविदन्मार्गे गच्छन्नारक्षकैर्धृतः, चौरधिया बद्धः, प्रभाते तैरारक्षकैः प्रसेनजितो राज्ञः पुरत आनायितः, राज्ञा पृष्टो भो विप्र त्वं कुत्र यासि? किमर्थं वात्रागतोऽसि? तेन सर्वा कथा सत्योक्ता. ततो दयार्द्रहृदयेन राज्ञा मुक्तो भाषितश्च भो विप्र यद्रोचते तद्याचस्व? तव वांछितमहं यच्छामि, स प्राह राजन्नालोच्य याचयिष्ये. ततः सोऽशोकवनांतरे गत्वा विमृशति यथा द्विमाषेण वस्त्रादि न स्यात्तर्हि सुवर्णशतं

मार्गयामि, परं तेन गृहवाहनादि न स्यात्तर्हि सहस्रं याचे, सहस्रेणाप्यपत्यविवाहाद्युत्सवा न भ· वंति तर्हि स्वर्णलक्षं याचे, तेनापि दानमानसन्मानबंधुदीनोद्धरणादि कर्तुं न शक्यते, अतः को· टिमेवं कोटिशतं कोटिसहस्रं वा तदर्थये. एवं तस्य कपिलस्य चिंतयतः शुभकर्मोदयादिति बुद्धिः समुत्पन्ना, यथा—यथा लाहो तथा लोहो । लाहालोहो पवड्ढइ ॥ दोमासकणयकज्जं । कोडी· एवि न निट्ठियं ॥ १ ॥ अहो लोभसागरो दुःपूरः, स केनापि पूरयितुं न शक्यते, यथाहं विद्या· र्थमागतः स्वगृहं त्यक्त्वा परदेशे परगृहे समागतः, एष इंद्रदत्तो धर्मार्थं मे विद्यां प्रयछति, तथैष शालिभद्रो मे भोजनं प्रयछति, मया मंदमतिना यौवनमदेनैतस्या दास्या गमनं कृतं, मम निर्म· लं कुलं कलंकितं, धिग् विषयान् ये जीवानेवं विडंबयंति. इत्यादि भावनां भावयन् विषयाद्विरक्तः संवेगमापन्नः समुत्पन्नजातिस्मरणः कपिलः स्वयंबुद्धो बभूव. ततः स्वयं मूर्धजानुध्धृत्य देवतयार्पितं रजोहरणवदनवस्त्रिकादिमुनिवेषमाददे, तत उत्थाय प्रसेनजितो राज्ञः पुरो बभूव, राज्ञोक्तमेत· त्किं? तेनोक्तं जहा लाहो तहा लोह इत्यादि कथयित्वा मुनौ स्थिते राजा प्रोचेऽहं तव कोटिमपि ददामि, त्वं भोगान् भुंक्ष्व? दुष्करं व्रतं प्राणांतेऽपि न मुंचामि, अहं निर्ग्रंथीभूतोऽस्मि, हे भद्र

तव धर्मलाभोऽस्तु, इत्युक्त्वा कपिलमुनिस्ततो निर्गत्य निर्ममो निरहंकारो निरीहो वसुंधरां विजहा· र. एवं व्रतं पालयतस्तस्य कपिलमुनेः षण्मासपर्यायेणोज्ज्वलं केवलज्ञानमभूत्.

इतश्च राजगृहनगरस्यांतरालेऽष्टादशयोजनविस्तारा भयंकरातिदारुणाटव्यस्ति, तस्यामटव्यामि· क्कडदासाख्या बलभद्रादयः पंचशतचौरा वसंतिस्म. कपिलकेवली तान् बोधार्हान् ज्ञात्वा तेषामु· पकाराय तदरण्यमभ्यागात्, तेषां चौराणां मध्यादेकश्चौरो वृक्षाग्रे समारूढस्तं महामुनिं कपिलके· वलिनं समायांतं वीक्ष्य सेनापतये समाचख्यौ, कपिलमुनिरपि सेनापतिमुपाययौ, तमायांतं वीक्ष्य सेनापतिर्जगौ भो महामुने तव नृत्यं समायाति? मुनिनोक्तं बाढं परं कश्चिद्वादको नास्ति, विना वाद्यं नृत्यं न भवति, यतः कारणं विना कार्यं न भवति, चौरैरुक्तं वयं तालवादका भविष्यामस्त्वं नृत्यं कुरु? ततः स नृत्यं करोति, ते चौराः परितो भ्रांत्वा तालादिकं वादयंति, कपिलो महामु· निरपि तेषां मध्ये नृत्यं कुर्वन् प्राकृतबंधेन ध्रुवा गायति, यथा—अधुवे असासयम्मि । संसारम्मि दुक्खपउराए ॥ किं नाम हुज्ज तं कम्मयं । जेणाहंदुग्गइं न गच्छेज्जा ॥ १ ॥ इत्यादि पंचशतध्रुवाः कपिलो जगौ, ताः श्रुत्वा ते चौराः सर्वेऽपि प्रत्यबुध्यंत. ततः श्रीकपिलस्तेषां पंचशतचौराणां व्रतं

ददौ, देवतादत्तलिंगास्ते महामुनयो जाताः केवलिना कपिलेन सार्धं पृथिव्यां विहरंतिस्म, कपिलोऽपि कियंति वर्षाणि पृथिव्यां विहृत्य मोक्षं जगाम. इत्थं श्रीकपिलमहर्षिः। सम्यग्भावेन केवलं लेभे ॥ बलभद्रप्रमुखानपि। चौरान् प्रतिबोध्य सिद्धिमगात् ॥ १ ॥ इति कपिलकेवलिकथानकं समाप्तं. पुनर्भावनायां कूरगडुदृष्टांतमाह—

॥ मूलम् ॥—खवगनिमंतणपुव्वं। वासियभत्तेण सुद्धभावेण ॥ भुंजंतो वरनाणं। संपत्तो कूरगडूवि ॥ ८ ॥ व्याख्या—क्षपकाः साधवस्तन्निमंत्रणपूर्वकं केन? 'वासियभत्तेण' पर्युषितान्नेन शुभध्यानेन शुभपरिणामेन भुंजानः कूरगडूकनामा मुनिर्वरज्ञानं केवलज्ञानं संप्राप्त इति गाथार्थः. ॥ ८ ॥ विस्तरार्थस्तु कथानकादवसेयस्तत्कथा चेयं—

विशालानगर्यां सुस्थितनामानः सूरयो बहुसाधुपरिवारपरिवृताश्चतुर्मासीं तस्थुः. तत्रैकसाधुर्निरंतरं मासक्षपणेन पारणं करोति. सोऽन्यदा मासक्षपणपारणके एकेन क्षुल्लकेन समं नगर्यां भिक्षायै पर्यटति, तस्य साधोरीर्यासमित्या गच्छतः पादतले मंडुकी समागता, पंचत्वं प्राप्ता च, तत्स्वरूपं वीक्ष्य क्षुल्लकश्चिंतयत्ययं तपस्व्येतद्भेकीघातपातकं गुरोः समीपमागत्यालोचयिष्यतीति विचिंत्य मौनं कृत-

वान्. अथ मासोपवासी साधुः शुद्धान्नपानादि समादाय वसतौ गत्वा यथोक्तविधिना गुरोरनुज्ञाप्य भोक्तुमुपाविशत्, तदानीं क्षुल्लकेन चिंतितमहोऽनेन मुनिनाधुनापि तत्पातकं नालोचितं, तन्नूनं विस्मृतिं गतं, सांप्रतं भोजनावसरे तत्स्मारयितुं मम न युक्तं, यतो मासोपवासित्वादस्य साधोः कोपो भवेत, तेन यदि प्रतिक्रमणावसरे नालोचयिष्यति तदाहं स्मारयिष्यामि, इति विचार्य तदानीं मौनमेवावलंब्य स्थितः. अथ स तपस्वी पारणं कृत्वा स्वाध्यायादिक्रियाविधौ प्रावर्तत. इतश्च संध्याकाले प्रतिक्रमणवेलायां सर्वेऽपि साधवः संभूय गुरोः पार्श्वे स्वानि स्वानि पापान्यालोचयामासुः, परं तेन तपस्विना तत्पापं नालोचितं, तदा स क्षुल्लकः प्राहाहो तपस्विन् भवताद्य नगर्यां पर्यटताऽज्ञानदोषेण पादेन भेकी हता, तत्पापं त्रिकरणशुद्ध्या कथं नालोचयसि? तदा स तपस्वी क्रुधा ज्वलन्नित्युवाचाहोऽसंबद्धवादिन्नीर्यासमित्या यतनमानस्य गच्छतो मम भेकीवधः कथं संभवति? अथ तव मिथ्यावादफलं दर्शयामीत्युक्त्वा दंडं करे कृत्वा तं क्षुल्लकं हंतुं दधावे, तदानीं क्रोधांधोंतरा स्तंभेनास्फालितो मृत्युमवाप, यतः—क्रोधो मूलमनर्थानां । क्रोधः संसारवर्धनः ॥ धर्मक्षयंकरः क्रोध—स्तस्मात्क्रोधं विवर्जयेत ॥ १ ॥ कोहो पियं पणासेइ। माणो विणयनासणो ॥ माया मि-

त्ताणि नासेइ। लोनो सव्वविणासणो ॥ २ ॥ उवसमेण हणइ कोहं । माणं मद्दवया जिणे ॥ मायं चज्जवन्नावेण । लोजं संतोसओ जिणे ॥ ३ ॥ ततोऽसौ मृत्वा विराधितसंयमानां सर्पाणां कुले दृष्टिविषो विषधरो जातः, तत्कुलस्थाः सर्पाः सर्वेऽपि जातिस्मृतिमंतः, अत एवमचिंतयन्नहो व· यं पूर्वं संयमं विराध्य दृष्टिविषाः सर्पा जाताः, इति विचिंत्य ते सर्वेऽपि सर्पा अस्मद्दृष्ट्या मा को· ऽपि व्यापाद्यतामिति निश्चयेव प्राशुकाहारेणाजीविकां कुर्वंतिस्म, तथाविधांस्तान् वीक्ष्य तपस्विजीवः सर्पश्चिंतयामासाहो मयेदृश्याहारशुद्धिः क्वचिद् दृष्टा, इत्यादीहापोहं कुर्वन् सोऽपि जातिस्मृतिमान् जातः. ततः स चिंतयति धिग्मां क्रोधकारिणं, यन्मया पूर्वं बहुभिः कालैरर्जितमपि चारित्रं क्रोधा· त्क्षणेन हारितं, सत्यवादिन्यपि क्षुल्लके वैरं चिंतितं, धिक्कषायपरिणामं, यतः—जह वणदवो वणद· वस्स । जलिओ खणेण निद्दहइ ॥ एवं कसायपरिणओ ॥ जीवो तवसंयमं दहइ ॥ १ ॥ अथाहं तिर्यग्योनौ किं सुकृतं करोमि ? धर्मसामग्री मनुष्याणामेव भवेत्, यतः—देवावि सयपसत्ता । ने· रइया विविहदुक्खसंतत्ता । तिरिया विवेकविगला । मणुआणं धम्मसामग्गी ॥ १ ॥ तथाप्यहमतः· परं कस्याप्युपरि कोपं न करोमि, एते सर्पा यथा प्राणवृत्तिं कुर्वंति तथैवाहमपि करोमि, तथा स·

म्यक्त्वं पालयामि, यथा—देवो मे वीतरागस्तु । गुरवस्तु सुसाधवः ॥ जिनप्रणीतश्रीधर्मः । सम्यगत्र भवे सदा ॥ १ ॥ इति चेतसि निश्चित्यैकं बिलमाश्रित्य तथैव प्रावर्तत.

इतश्च तुरमिण्यां नगर्यां कुंभाभिधानो नृपतिस्तस्य सुतः सर्पेण दष्टो मृत्युमाप. ततो नृपतेः सर्पोपरि प्रद्वेषः प्रकटीबभूव. ततो राज्ञा पटहो वादितः, यः कश्चन सर्पं निहत्येहानयति स दीनारमेकं लभते, इत्याघोषणां श्रुत्वा बहवो निर्दयाः पापाः प्रतिदिशं दीनाराभिलाषुका दंदशूकनिग्रहार्थं दधाविरे, तदा केचन सर्पाकर्षणविद्याविदो नराः सर्पघृष्टिदर्शितमार्गाः क्षपकाहिबिले समागताः, तत्र स्थिताः सर्पाकर्षकरं विद्यां पठंतिस्म, स तपस्विजीवः सर्पस्तस्याकृष्टस्तत्रास्थातुमशक्नुवन्निति चिंतयामास, यथा—अहो मे प्राकृतं कर्मा—शुभं ह्युदयमागतं ॥ तज्जीव भवता द्वेषः । कर्तव्यो न कदाचन ॥ १ ॥ अर्हंतः शरणाः सिद्धा । विशुद्धा साधवस्तथा ॥ जिनप्रणितः श्रीधर्मः । शरणं सर्वदा मम ॥ २ ॥ क्षमयाम्यखिलान् जीवान् । सर्वे क्षम्यंतु ते मयि ॥ मैत्री मे सर्वभूतेषु । न वैरं केनचिन्मम ॥ ३ ॥ इत्याद्याराधनां कुर्वन्मनसि नमस्कारमंत्रं स्मरन्मा मम दृष्ट्यैते मरंत्विति विमृश्याभिमुखो न निस्ससार, किंतु शनैः शनैः पुच्छतो निर्गच्छति, ते पापिनो नरास्तं निर्गतं छिंदंति.

एवं तैः स सर्पः सर्वोऽपि खंडीकृतः. ततस्ते खंडा राज्ञोऽग्रत आनीताः. इतश्च नागदेवतया राज्ञोऽग्रे प्रोक्तं हे राजन्नतःपरं सर्पघातपातकं त्वया न कर्तव्यं, तव पुत्रो भविष्यति. ततः संतुष्टो राजा सर्पेभ्यो द्वेषं परिहृत्य सर्वान् लोकान् सर्पघातपातकान्निवारयामास. इतश्च स एव क्षपकजीवः सर्पः शुभध्यानेन मृत्वा तस्यैव राज्ञः पट्टराज्ञ्याः कुक्षौ पुत्रत्वेनोत्पन्नः, ततः सा राज्ञी पूर्णे मासे सुदिवसे सुमुहूर्ते पुत्ररत्नं प्रासूत, राज्ञा पुत्रस्य जन्ममहोत्सवश्चक्रे. ततो राज्ञा तस्य पुत्रस्य नागदत्त इति नाम विदधे, स नागदत्तकुमारः पंचभिर्धात्रीभिर्लाल्यमानः क्रमेण ववृधे. ततो राज्ञा कलाचार्यस्य समीपे तस्य सकलकलाभ्यासः कारितः. अथान्यदा नागदत्तकुमारो गवाक्षे स्थित एकं मुनीश्वरमीर्यासमित्या यतमानं गच्छंतं ददर्श, तं दृष्ट्वा स चिंतयत्यहो मयेदृग्स्वरूपं पूर्वं क्वापि दृष्टमभूदित्यादीहापोहं कुर्वतस्तस्य जातिस्मरणं ज्ञानं समुदपद्यत, तेन स्वपूर्वभवस्वरूपं सर्वमपि ज्ञातं. ततो रागद्वेषमूलं संसारदुःखकारणं विज्ञाय संसाराद्विरक्तोऽभवत्. ततः प्रव्रज्यां गृहीतुमना मातापित्रोरनुज्ञां ययाचे, तावपि मृदुवाक्यैस्तुष्टौ पुत्रं व्रतग्रहणे दृढमानसं विज्ञाय व्रतानुज्ञां ददतुः. ततो नागदत्तकुमारः सद्गुरुसमीपे व्रतं जग्राह. ततः स गुरुं व्यजिज्ञपद् हे प्रभो मम पूर्वकर्मवशात्तिर्यग्योनितः

म्यक्त्वं पालयामि, यथा—देवो मे वीतरागस्तु । गुरवस्तु सुसाधवः ॥ जिनप्रणीतश्रीधर्मः । सम्यगत्र भवे सदा ॥ १ ॥ इति चेतसि निश्चित्यैकं बिलमाश्रित्य तथैव प्रावर्तत.

इतश्च तुरमिण्यां नगर्यां कुंभाभिधानो नृपतिस्तस्य सुतः सर्पेण दष्टो मृत्युमाप. ततो नृपतेः सर्पोपरि प्रद्वेषः प्रकटीबभूव. ततो राज्ञा पटहो वादितः, यः कश्चन सर्पं निहत्येहानयति स दीनारमेकं लभते, इत्याघोषणां श्रुत्वा बहवो निर्दयाः पापाः प्रतिदिशं दीनाराभिलाषुका दंदशूकनिग्रहार्थं दधाविरे, तदा केचन सर्पाकर्षणविद्याविदो नराः सर्पघृष्टिदर्शितमार्गाः क्षपकाहिबिले समागताः, तत्र स्थिताः सर्पाकर्षकरीं विद्यां पठंतिस्म, स तपस्विजीवः सर्पस्तस्याकृष्टस्तत्रास्थातुमशक्नुवन्निति चिंतयामास, यथा—अहो मे प्राकृतं कर्म—शुभं ह्युदयमागतं ॥ तज्जीव भवता द्वेषः । कर्तव्यो न कदाचन ॥ १ ॥ अर्हंतः शरणाः सिद्धा । विशुद्धा साधवस्तथा ॥ जिनप्रणितः श्रीधर्मः । शरणं सर्वदा मम ॥ २ ॥ क्षमयाम्यखिलान् जीवान् । सर्वे क्षाम्यंतु ते मयि ॥ मैत्री मे सर्वभूतेषु । न वैरं केनचिन्मम ॥ ३ ॥ इत्याद्याराधनां कुर्वन्मनसि नमस्कारमंत्रं स्मरन्मा मम दृष्ट्वैते मरंत्विति विमृश्याभिमुखो न निस्ससार, किंतु शनैः शनैः पुच्छतो निर्गच्छति, ते पापिनो नरास्तं निर्गतं छिंदंति.

एवं तैः स सर्पः सर्वोऽपि खंमीकृतः. ततस्ते खंम्डा राज्ञोऽग्रत आनीताः. इतश्च नागदेवतया राज्ञोऽग्रे प्रोक्तं हे राजन्नतःपरं सर्पघातपातकं त्वया न कर्तव्यं, तव पुत्रो भविष्यति. ततः संतुष्टो राजा सर्पेभ्यो द्वेषं परिहृत्य सर्वान् लोकान् सर्पघातपातकान्निवारयामास. इतश्च स एव क्षपकजीवः सर्पः शुभध्यानेन मृत्वा तस्यैव राज्ञः पट्टराज्ञ्याः कुक्षौ पुत्रत्वेनोत्पन्नः, ततः सा राज्ञी पूर्णे मासे सुदिवसे सुमुहूर्ते पुत्ररत्नं प्रासूत, राज्ञा पुत्रस्य जन्ममहोत्सवश्चक्रे. ततो राज्ञा तस्य पुत्रस्य नागदत्त इति नाम विदधे, स नागदत्तकुमारः पंचभिर्धात्रीभिर्लाल्यमानः क्रमेण ववृधे. ततो राज्ञा कलाचार्यस्य समीपे तस्य सकलकलाभ्यासः कारितः. अथान्यदा नागदत्तकुमारो गवाक्षे स्थित एकं मुनीश्वरमीर्यासमित्या यतमानं गछंतं ददर्श, तं दृष्ट्वा स चिंतयत्यहो मयेदृग्स्वरूपं पूर्वं क्वापि दृष्टमभूदित्यादीहापोहं कुर्वतस्तस्य जातिस्मरणं ज्ञानं समुदपद्यत, तेन स्वपूर्वभवस्वरूपं सर्वमपि ज्ञातं. ततो रागद्वेषमूलं संसारदुःखकारणं विज्ञाय संसाराद्विरक्तोऽभवत्. ततः प्रव्रज्यां गृहीतुमना मातापित्रोरनुज्ञां ययाचे, तावपि मृदुवाक्यैस्तुष्टौ पुत्रं व्रतग्रहणे दृढमानसं विज्ञाय व्रतानुज्ञां ददतुः. ततो नागदत्तकुमारः सद्गुरुसमीपे व्रतं जग्राह. ततः स गुरुं व्यजिज्ञपद् हे प्रभो मम पूर्वकर्मवशात्तिर्यग्योनितः

समागतत्वात्क्षुधावेदना भृशं बाधते, तेनाहमल्पमपि तपःकर्म कर्तुं न शक्नोमि, तस्मात्कारणादहमत्र जन्मनि क्रोधपरित्यागं करोमि, गुरुभिरुक्तं साधूक्तं, त्वया तपःकर्म विनापि केवलं क्रोधपरित्यागेन केवलज्ञानं लप्स्यते. इति गुरुवाक्यं निशम्य सम्यक् क्षमायां यतमानो निरतिचारं चारित्रं पालयन् गुरुसेवातत्परो विजहार, परं क्षुधावेदनीयकर्मोदयात्तस्य सूर्योदयादर्वागेव क्षुधा लगति, तेन नमस्कारसहितमात्रमपि प्रत्याख्यानमतिदुःकरं, तस्मात्प्रातरेवानशनं करोमि, असौ मुनिर्गडूकमितं कूरमश्नात्यतो लोके कूरगडुक इति नाम प्रसिद्धं बभूव. अथ तत्र गच्छे चत्वारः साधवस्तीव्रतपस्विनः संति, तत्रैको मासोपवासी १, द्वितीयो द्विमासोपवासी २, तृतीयस्त्रिमासोपवासी ३, चतुर्थश्चतुर्मासोपवासी च ४. ते चत्वारोऽप्ययं नित्यभोजीति कृत्वा कूरगडुमुनये ईर्ष्यां कुर्वंति. अन्यदा रात्रौ प्रथमं विधिना स्वाध्यायं कृत्वा कूरगडुमुनिः स्वात्मानं निंदयामास, यथा—धिग्मामविरतस्वल्प—तपःकर्मविवर्जितं ॥ कथंकारमशेषाणि । कर्माण्येष्यंति मे क्षयं ॥ १ ॥ चत्वारः साधवः कायो—त्सर्गस्थाः प्रवरा अमी ॥ एकद्वित्रिचतुर्मास—तपः कुर्वंति येऽनिशं ॥ २ ॥ इत्याद्यात्मनिंदां कुर्वन् धर्मध्यानं च ध्यायंस्तस्थौ. अत्रांतरे शासनदेवताप्रभूतभूषणभूषितशरीरा निशि तत्र समागत्य तांश्चतुरोऽपि

मुक्त्वा कूरगडुकमुनिमानमत्, दूरे स्थित्वा चैवं जगाद हे कूरगडुकज्ञातमुने त्वं चिरं जय? इत्याद्यनेकविधां स्तुतिं विधाय यावत्पश्चाद्वलिता तावत्तैश्चतुर्भिः क्षपकैः क्रुधाकुलैः करे धृत्वा भाषिता हे देवि पवित्रेषु देवेषु परमो विवेकः श्रूयते, तर्हि त्वमस्मांस्तपस्विनोऽवगम्यैनं नित्यं त्रिकालभोजिनं कथमवंदथाः? सा बभाषे भोः साधवो यूयं मुधा कोपं मा कुरुत? अहं भावतपस्विनो वंदे, तादृशश्चायं, यूयं तु भावतपस्विनो न किंतु द्रव्यतपस्विनोऽतोऽहं युष्मानतिक्रम्यैवं महामुनिं प्रणता, अस्यैव भावतपस्वित्वं वर्तते, तद्भवद्भिः प्रातर्ज्ञास्यते, इत्युक्त्वा सा स्वस्थानं गता, ते चत्वारोऽपि कोपाटोपव्याकुलास्तस्थुः. अथ प्रभातसमये आवश्यकं कृत्वा कूरगडुकसाधुः शुद्धान्नपानमानीय गुरोर्दर्शयित्वा तेषां तपस्विनामदर्शयत्. ततस्तेषां क्रुधा ज्वलतां मुखे श्लेष्मागतः, स मुनिभिस्तस्मिन्नशने क्षिप्तः, यतः—क्रोधाकुलानां कार्याकार्यविचारणा न स्यात. ततः स कूरगडुकसाधुश्चिंतयति, यथा—धिग्मां प्रमादिनं स्वल्पं । तपःकर्मोज्झितं सदा ॥ वैयावृत्त्यमपि ह्येषां । मया कर्तुं न शक्यते ॥ १ ॥ प्रमादोऽयं ममैवैषां । श्लेष्मा यदशनेऽपतत् ॥ यन्नश्लेष्ममालकाभावा-देषां श्लेष्मा पतत्विह ॥ २ ॥ तपः कर्तुमशक्तः सन् । वैयावृत्त्यकृतावपि ॥ चेत्त्वं मंदायसे जीव । भाविनी का

गतिस्तव ॥ ३ ॥ इत्याद्यात्मनिंदां कुर्वन् शून्यचित्ततया तदशनमाददानः धर्मध्यानाच्छुक्लध्यानं गतः, तेन समुज्ज्वलं केवलज्ञानं प्राप्तं. तदानीं तत्र त्रिदशाः समागताः, तैः केवलमहोत्सवः कृतः. ततस्तत्र सुराः कनकमयं कमलं विरचयामासुः, तत्र संनिविष्टं कूरगडुककेवलिनं देवाः स्तुवंति, यथा —हे कूरगडुकमुने । केवलज्ञानभास्कर ॥ जय त्वमिति जल्पंतः । प्रातिहार्यं व्यधुः सुराः ॥ १ ॥ अथ ते चत्वारः क्षपका एतत्स्वरूपं प्रेक्ष्य प्रशांतीभूताः परस्परमेवं प्राहुरहो निशि देवतया प्रोक्तं तत्तथ्यमेव, अयमेव भावतपस्वी, यतः क्षमावान्, वयं तु द्रव्यतपस्विनो यतः क्रोधाध्मातमानसाः, तथास्माभिरेतस्य भूयशातना कृता, तेनास्माकं का गतिर्भाविनी? अथ श्रीकूरगडुककेवलिन एव पादानाश्रयामः, स एवास्मान् भवार्णवादुत्तारयिष्यति, इति विचार्य ते चत्वारोऽपि तपस्विनः पादयोर्लगित्वा स्वान् स्वानपराधान् प्रादु कुर्वंतः श्रीकूरगडुककेवलिनं क्षामयामासुः. एवं त्रिकरणशुद्ध्या क्षामयतां तेषामपि महात्मनां लोकालोकप्रकाशनपरं केवलज्ञानमुत्पन्नं. एवं ते पंचापि केवलिनो बभूवुः. अथ श्रीकूरगडुककेवली मह्यां विहृत्य भव्यान् प्रतिबोध्य तैश्चतुर्भिः क्षपकैः सार्धं सिद्धिसौधमधिरोहतिस्म. इति कूरगडूकसाधुः । क्षांतिजलक्षालितांतरंगमलः ॥ लोकालोकवि-

कासनपरः । केवलवान् परमपदमाप. ॥ १ ॥ इति श्री कूरगडुककथानकं समाप्तं. ॥ भावनायाः परमपुरुषार्थकारणत्वं दर्शयति—

॥ मूलम् ॥—पुव्वभवसूरिविरइय–नाणासायणपभावदुम्मेहो ॥ नियमानझायंतो । मासतुसो· केवली जाओ ॥ ए ॥ व्याख्या— पूर्वभवे सूरित्वे सति विरचिता या ज्ञानस्याशातना तस्याः प्रभावादन्यस्मिन् जन्मनि 'दुम्मेहोत्ति' दुर्मेधा विगतबुद्धिरित्यर्थः, एवंविधो गृहीतदीक्षः शास्त्राध्य· यनासमर्थो गुरुणा मा रुष मा तुषेति शिक्षितस्तदपि धारयितुमसमर्थो लोके माषतुषेति प्रसिद्धि· मापन्नस्तदेव निजनाम ध्यायन् माषतुषनामा मुनिः केवली जातः, भावनायाः केवलज्ञानं प्राप्त इ· ति गाथार्थः. ॥ ए ॥ विस्तरार्थस्तु कथानकादवसेयस्तच्चैवं—

पाडलीपुरे नगरे द्वौ बांधवौ व्यवहारिणावभूतां, अन्यदा गुरुसमीपे तौ धर्मोपदेशं शुश्रुवतुः, यथा–धम्मो मंगलमुक्किठं । अहिंसा संयमो तवो ॥ देवावि तं नमंसंति । जस्स धम्मे सया मणो ॥ ॥ १ ॥ इत्यादि गुरुमुखाद्देशना निशम्य गुरुपार्श्वे तौ द्वावपि चारित्रमंगीचक्रतुः, द्वावतिनिर्मलं नि· रतिचारं चारित्रं पालयामासतुः, तत्रैको भ्राता क्षयोपशमवशाद्गुरुपादपद्मसेवनाच्च बहुश्रुतो जातः,

गुरुभिर्योग्यतां विचार्य स आचार्यपदे स्थापितः, यतः—पडिरूवो तेयस्सी । जुगप्पाहाणागमो म- हुरवक्को ॥ गंभीरो धीमंतो । उवएसपरो अ आयरीउ ॥ १ ॥ अपरिस्सावीसोमो । संगहसीलो अ- भिग्गहमई य ॥ अविकंथणो अचवलो । पसंतहिअउ गुरू होइ ॥ २ ॥ इत्यादिगुरुगुणयुक्तः सर्वेषां साधूनां वाचनां ददाति, साधवोऽपि वाचनां लात्वा स्वयं चिंतयंतो वारंवारं संशये सति प्र- श्नं कुर्वंति, आचार्यः क्षणमात्रमपि विश्रामावकाशं न लभते, ततो रात्रावपि निद्रावकाशं न लभते. ततो ज्ञानावरणीयकर्मोदयात्स एवं चिंतयत्यहो गुरुभिरहं शास्त्राणि पाठयित्वा सूरिपदे स्थापयित्वा महति क्लेशे पातितः, यतोऽहं क्षणमात्रमपि रतिं निद्रां च नाप्नोमि, धिग्मां शास्त्रपारगं, धन्योऽसौ मे बांधवो यो मूर्खः सुखेन कालं गमयति, संसारे मूर्खत्वादधिकं किंचित्सुखकारणं नास्ति, यथा —मूर्खत्वं हि सखे ममापि रुचितं यस्मिन् यदष्टौ गुणा । निश्चिंतो १ बहुभोजनो २ ऽत्रपमना ३ नक्तंदिवाशायकः ४ ॥ कार्याकार्यविचारणांधबधिरो ५ मानापमाने समः । प्रायेणामयवर्जितो ७ दृढवपु ८ मूर्खः सुखं जीवति ॥ १ ॥ अतोऽहं क्लेशं त्यजामीति चिंतयन्नास्ते. इतश्चैकदा केचन मुनयो बहिर्भूमौ गताः, केचन गोचरीं कर्तुं गताः, केचन जिनालये गताः. ततः सूरिश्चिंतयत्यहो

बहुन्निर्वासरैर्मयायमवकाशो लब्धः, अतोऽहमितो निर्गत्यैवं क्लेशं परित्यज्य निरंकुशं स्वेप्सितं साधयामीति विचिंत्योद्वेगमापन्नः सूरिर्वसतितो बहिर्निर्गतः, स एकाकी नगरान्निर्गच्छन् कौमुदीमहोत्सवे एकं स्तंभं ददर्श, कथंभूतं?—जनैर्गीयमानं, नानाविधैर्भूषणैर्भूषितं, कंकुमादिभिर्विलुप्तं च, पुनर्महोत्सवे समाप्ते तं स्तंभं विलुप्तभूषणं विगतशोभं काकादिभिर्निषेवितं च ददर्श. ततः सूरिश्चिंतयदहोऽसौ स्तंभो यदा लोकैः पूजितः परिवारपरिवृत आसीत्तदात्यंतशोभाभाजनमासीत्. इदानीं तु परिवाररहितः कामपि शोभां न लभते, तन्नूनं परिवारपरिवृतस्यैव शोभा भवेत्, नान्यथा, तर्हि धिग्मां, यतोऽहं परिवारतः परिभ्रष्टः स्वैरं विहर्तुमिच्छामि. अथ मे का गतिर्भाविनीत्यादि विचिंत्य मनो वालयित्वा पुनः स्ववसतौ समागतः, स्वमनसैवालोचनां जग्राह, परं दुश्चिंतितेन ज्ञानावरणीयकर्म बद्धं, तदवस्थितमेव बभूव, पुनर्निर्मलं निरतीचारं चारित्रं पालयामास. ततः स्वायुःपर्यंतेऽनशनेन मृत्वा देवलोके देवो बभूव, तत्रापि दिव्यान् भोगान् भुक्त्वा स्वायुःपर्यंते ततश्च्युत्वाभीरकुले पुत्रत्वेन समुत्पन्नः, क्रमाद्वर्धमानो यौवनावस्थां प्राप्तः, पित्रा कन्यां परिणायितः स्त्रिया सह भोगाननुभवतस्तस्यैका पुत्री जाता, सा यौवनं प्राप्तात्यंतरूपलावण्यसंपूर्णा बभूव, अनेके आ-

भीरा घृतभाजनैः शकटानि भृत्वा ग्रामांतरं प्रतस्थिरे, तदानीं सोऽप्याभीरः शकटीं भृत्वा स्वकीयां पुत्रिकां खेटकत्वेन स्थापयित्वा तैः सार्धं चलितः.

इतश्च ते सर्वेऽप्याभीरास्तां कन्यां समालोक्य रूपमोहिताः कामपरवशा बभूवुः, धिक्कामचेष्टितं, यतः—विकलयति कलाकुशलं । हसति शुचिं पंडितं विडंबयति ॥ अधरयति धीरपुरुषं । क्षणेन मकरध्वजो देवः ॥ १ ॥ ततस्ते तन्मुखांबुजप्रेक्षणे एकाग्रचित्ता जाताः, तदानीं ते व्यग्रमानसा उन्मार्गे शकटानि वाहयामासुः, ततस्तान्युन्मार्गे स्खलितानि घृतभाजनानि भग्नानि. तत्स्वरूपं वीक्ष्य तज्जनक आभीरश्चिंतयामास धिक् संसारस्वरूपं, जीवा असारे मलमूत्रपुरीषपात्रे स्त्रीगात्रे स्वहितसाधननिरपेक्षाः कामपरवशा मुह्यंति यतः—संसार तव निस्तार—पदवी न दवीयसी ॥ अंतरा दुस्तरा न स्यु—र्यदि न मदिरेक्षणाः ॥ १ ॥ इत्यादि संसारस्यारतां मनसि भावयन् वैराग्यमापन्नः. ततश्चिंतितग्रामे गत्वा घृतादि विक्रीय स्वकीयग्रामे स समागात, स्वां दुहितरमुद्वाह्य सर्वं धान्यादिकं जामातुर्दत्वा स्वयं श्रीमद्गुरुपदमूले दीक्षामुपाददे, क्रमेणावश्यकादियोगोद्वहनं विधायोत्तराध्ययनयोगं वहता तेनाध्ययनत्रयं पठितं, पश्चात्क्रमेण चतुर्थमध्ययनं पठितुमारब्धं, तदानीं

पूर्वोपार्जितं ज्ञानावरणीयकर्मोदयमियाय, तेन बाढस्वरेणोद्घोषणैरपि तस्याक्षरमात्रमपि मुखे ना- याति. ततः स गुरुसमीपमागत्योवाच यथा हे भगवन् मम ज्ञानावरणीयं कर्म क्षयं याति तं प्रकारं दर्शय? ततो गुरुणाज्ञापि हे मुने त्वमाचामाम्लं तपः कुर्वन् मा रुष मा तुषेति रागद्वेषनिग्रहगर्भं पदं समुद्घोषय? इति गुरुणोपदिष्टं कुर्वतस्तस्य तत्पदमपि मुखे नायाति, किंतु महता कष्टेन मा षतुषेति पदं मुखे आयातं. तत आचामाम्लं तपः कुर्वन् माषतुष इति पदं मुखे घोषयामास, अ- स्पष्टवर्णोच्चारित्वाल्लोका हसंतिस्म, तथापि स कोपं न कुरुते, किंतु स्वोपार्जितं कर्मैव निंदयामास. ततो लोके माषतुष इति नाम प्रसिद्धमभूत्. एवं तस्य मुनेराचामाम्लतपः कुर्वतो माषतुष इति प- दं घोषयतः प्रज्ञापनापरीषहं सहमानस्यात्मनिंदां विदधानस्य द्वादश वर्षाण्यतीतानि. ततः स इदं घोषयन् शुक्लध्यानं ध्यायन् सकललोकालोकप्रकाशकं केवलज्ञानमवाप. ततो देवनाभिरागत्य केव- लिमहिमा चक्रे. ततो मह्यां विहृत्य भूरिशो भव्यान् प्रतिबोध्य माषतुषः केवल्यनंतचतुष्कमयं शा- श्वतं स्थानमवाप. इत्थं माषतुषः साधु— र्भावतः क्षिप्तपातकः ॥ केवलज्ञानमासाद्य । प्रपेदे पदम- व्ययं ॥ १ ॥ इति माषतुषकेवलिकथानकं समाप्तं. ॥ अथ मरुदेवास्वामिनीभावनां दर्शयन्नाह—

॥ मूलम् ॥—हत्थिम्मि समारूढा । रिद्धिं दट्ठूण उसभसामिस्स ॥ तक्खणं सुहझाणेण । मरुदेवा सामिणी सिद्धा ॥ १० ॥ व्याख्या—ऋषभदेवजननी भरतेन सार्धं हस्तिनं समारूढा ऋषभस्वामिनस्तीर्थकृत्संपदं 'दट्ठूणत्ति' दृष्ट्वा तत्क्षणादेव शुभध्यानेन मरुदेवा स्वामिनी सिद्धा मोक्षं गतेति गाथार्थः. ॥ १ ॥ व्यासार्थस्तु कथानकादवगंतव्यः, तच्च दानकुलके ऋषभदेवचरित्रे कथितं ज्ञेयं. अथ भावनायां पुष्पचूलादृष्टांतमाह—

॥ मूलम् ॥—पडिजागरमाणीए । जंघाबलखीणमन्निआउत्तं ॥ संपत्तकेवलाए । नमो नमो पुप्फचूलाए ॥ ११ ॥ व्याख्या—पुष्पचूलायै नमो नमोऽस्त्वित्यध्याहार्यमत्यादरख्यापनार्थं द्विर्वा· वः, 'संपत्तकेवलाएत्ति' संप्राप्तकेवलायै, भावनयेति शेषः, किं कुर्वत्यै? 'पडिजागरमाणीए' शु· श्रुषयंत्यै, कं? अन्निकापुत्रनामाचार्यं, कथंभूतं? जंघाबलेन क्षीणं रहितमिति गाथार्थः. ॥ ११ ॥ विस्तरार्थस्तु कथानकादवसेयस्तत्कथा चेयं—कमलाकेलिवामभवनाभिरामा पृथ्वीललनालोचना· यमानागंतुकजनसंपूरितकामोदीच्यां दिशि मथुरा नाम नगर्यस्ति, तस्यां नगर्यां धनेन धनदोप· मो व्यवहारिपुत्रो गुणानामाकरो देवदत्ताभिधोऽभवत, स देवदत्तः पितृवत्सलः कथंचिन्मातापितरा·

वनुज्ञाप्य वाणिज्यार्थं धनमर्जयितुं दक्षिणमथुरां ययौ, तस्यां नगर्यां व्यवहारं कुर्वतस्तस्य तन्नगरवासिना जयसिंहाभिधानेन केनचिद्व्यवहारिपुत्रेण सह मित्रताभवत. तयोः परस्परं नेत्रयोरिव मैत्री ववृधे, तस्य जयसिंहस्य सिंहोदरकृशोदरी पूर्णेंदुवदना रतिरंभानुरूपा सकलगुणगरिष्ठाभिकानामस्वसास्ति. अन्यदा प्रगे जयसिंहस्तां स्वसारं व्याजहाराद्य विचित्रां रसवतीं कुरु? यतोऽहमद्य मित्रेण सह भोक्ष्ये. ततः साभिकाभगिनी बंधोरनुज्ञया महारसाढ्यां पीयूषरससन्निभां रसवतीं चकार. ततो देवदत्तेन मित्रेण सहितो जयसिंहः कृतस्नानमज्जनो विधिना विहितदेवार्चनस्तां रसवतीं भोक्तुमुपविष्टः. ततो देवदत्तः करे कवलकं कृत्वा स्वमुखे मुक्त्वा तां रसवतीं वर्णयत्यहोऽस्या रसवत्याः कोऽप्यतिप्रीणको रसो वर्तते. ततस्तौ सुहृदौ तां रसवतीं भुंजानौ मिथः प्रीतिवार्तां कुर्वाणौ हास्यं कुर्वंतौ क्रीडापरायणावभूतां. तस्मिन्नवसरे बंधोराज्ञयाभिका जयसिंहभगिनी प्रेमामृतं स्त्यानीकर्तुमिव तयोर्मित्रयोश्चेलांचलेनानिलं चकार. तदानीं तस्याः कंकणरणत्कारचंचलो भुजः स्मराश्वसंचारकशोपमां लेभे, तां कंकणरणत्कारकारकां बालां नवयौवनाभिरामां समालोक्य दध्यावहो केनैषा वेधसा जनमनोहारिणी निर्मिता? एवं चिंतयन् स्मरवेदनां दधौ, तस्या रूपं घृतादि

पात्रे प्रतिबिंबितं समालोकयन् देवदत्तस्तां चिरालोकनस्पृहो मंदं मंदं बुभुजे. तत्र मित्रगृहे मित्रसमं भुक्त्वा तदन्निकालावण्यार्णवे मनो मुक्त्वा जयसिंहेनात्यर्थं सत्कृतो देवदत्तो निजागारं जगाम. तेनान्यदा कश्चित्स्वसुहृदन्निकां याचयितुं जयसिंहंप्रति प्रेषितः, तेन गत्वा जयसिंहो याचितो भो जयसिंह देवदत्तस्तव मित्रं मन्मुखेन विनयपूर्वं तव भगिनीमन्निकां याचते. एष तव सुहृद्वभो गुणानामालयः सकलविद्यानामालयः कामरूपी भूपीठविश्रुतोऽन्निकायोग्यो वरो वर्तते, भवदिच्छया सोऽस्या वरो भवतु, तत्तस्य वचः श्रुत्वा जयसिंहो बभाषे भो मित्र यत्त्वयोदितं तत्सत्यमेव, स ईदृगेवास्ति, परमिमामन्निकां तस्मै दास्ये यदि स ममौकसि स्थास्यति, तमहं देवमिव पूजयिष्ये, एष परदेशी मया स्थापितो यदा न तिष्ठति, स्वदेशाभिमुखो यदा याति तदाहं किं करोमि? यदि देवदत्तोऽत्र तिष्ठति तदा मयान्निका दत्ता नान्यथेति मम हृदयं. तत श्रुत्वा प्रत्यावृत्तो देवदत्तसुहृज्जयसिंहोक्तमन्निकावृत्तांतं सर्वं न्यवेदयत्. ततः स देवदत्तोऽन्निकारूपमोहितो जयसिंहोक्तं सर्वमंगीकृत्य महामहेन तामन्निकामुदूढवान्. तया सह सुखं क्रीडन् विषयरसमग्नो गतमपि कालं न विवेद. अन्यदा तस्या मातापितरौ पुत्रं स्मृत्वा विरहासहौ लेखं लिखित्वा दक्षिणमथुरांप्रति दूतं प्रे-

षयामासतुः, स दूतस्तत्रागत्य तं लेखं देवदत्तस्यार्पयामास. देवदत्तोऽपि तस्य मातापित्रोः कुशलोदंतं पृष्ट्वा लेखं वाचयति, यथा—हृदंतो हृदयदीर्घ—त्वद्वियोगनियोगयोः ॥ अक्षीणि क्षीणतेजांसि बभूवुस्तावदावयोः ॥ १ ॥ आकारयति नौ कालः । स आवाभ्यां निषिध्यते ॥ नित्यं जराशिरःकंप—मिषात्त्वन्मुखमीक्षितुं ॥ २ ॥ कुलीन दीनयोरेक—वारं स्वं दर्शयावयोः ॥ समागमेन समाधिश्च । यथा स्यान्म्रियमाणयोः ॥ ३ ॥ एवं मातापित्रोर्लेखं वारंवारं वाचयन् श्रवदश्रुर्विचिंतयन् दुःखांकुरभारो विध्यातमदनानलोऽश्रुवारिभिर्वर्षाविद्ववर्ष, तत्स्वरूपं वीक्ष्य भर्तृदुःखेन दुःखिता पत्न्यम्भिका तमाचख्यौ हे प्राणेश कस्यैष लेखो यं वीक्ष्य प्रम्लानवदनो भूत्वा त्वं रोदनं कुरुषे? एतत्सर्वं सत्यं समाख्याहि? तव किं दुःखं वर्तते? देवदत्तस्तां बभाषे हे प्रिये एष मम जनकलेखः, एवमुक्त्वा तस्याः करे स लेखः समर्पितः, सापि तं लेखं वाचयित्वा तथैव दुःखातुरा जाता. ततः सा निजप्राणप्रियस्य हितवांछया पतिंप्रत्येवमाचष्ट, यथा—मा नाथ मज्ज दुःखाब्धौ । बोधयाम्यद्य बांधवं ॥ अचिरादेव यास्याव । आवामावासमात्मनः ॥ १ ॥ ततः साम्भिका श्वश्रूश्वशुरमिलनोत्सुका स्वबंधुमापृच्छ्य सुमुहूर्ते महता सार्थेन परिवृता प्रियेण सहाचालीत, मार्गे

गर्भतया सर्वलक्षणसंपूर्णः प्राच्या सूर्य इव तयाग्निकया सुतोऽजनि. देवदत्तेन चिंतितमस्य पुत्रस्य नामादि सर्वं बालकृत्यं मम पितरौ करिष्यतः, तावदस्य पुत्रस्याभिधानमग्निकापुत्र इत्यहं करोमीति विचिंत्य देवदत्त अग्निकापुत्र इत्यभिधानं दत्तवान्. ततः क्रमेण मार्गे संचरन् प्रियापुत्रसहितो देवदत्तः समागतः, पित्रा महामहेन नगरे प्रवेशितः. ततः सोऽप्यतिप्रेम्णा मातापित्रोश्चरणौ नत्वा पुरो निषण्णः. ततो मातापितृभ्यां करे धृत्वा भृशमालिंग्य निजोत्संगे निधाय शिरसा चाघ्राय कुशलं पृष्टः, ततः प्रोक्तं हे पुत्र त्वया तत्र दक्षिणमथुरायां गत्वा व्यवसायं कृत्वा किमुपार्जितं? यदुपार्जितं तत्कथय तथा दर्शय? ततस्तेन तनयः पित्रोत्संगे मुक्तः, दर्शिता च वधूटी, उक्तं च मयैतद्धनमर्जितं. ततस्तौ तस्य संधारणेत्यभिधां चक्रतुः, तथाप्यग्निकापुत्र इति नाम कथितं. ततः स पंचभिर्धात्रीभिः पाल्यमानो गिरिपुष्पाश्रितश्चंपकपादप इव ववृधे, क्रमेणाष्टवर्षीयः पित्रा कलाचार्यसमीपे स कलाः पाठितः. ततः स पठितकलो द्वात्रिंशल्लक्षणोपेतः संप्राप्तमध्यवया अपि भोगतृष्णाविमुखो धर्मासक्तो देवपूजापरः सद्गुरुसेवासावधानोऽन्यत्सर्वमजानन् विद्याभ्यासं कुर्वन् कालं गमयति. एवं काले गच्छति तत्रैकस्मिन् दिने जयसिंहनामा मुनिः शिष्यसंघपरिवृतः समाजगाम. लोकास्तं

महामुनिं वंदनाय ययुः, अन्निकापुत्रोऽपि तद्वंदनाय गतः, तस्य मुनेर्देशनां श्रुत्वा समुत्पन्नवैराग्यो मातापित्रोरनुज्ञया शिवसाम्राज्यदायकं व्रतं भेजे, यथा—कल्याणमयमात्मानं । शोधयित्वा तपोऽग्निभिः ॥ स मुक्तिमुकुटायैव । त्रिरत्नखचितं व्यधात् ॥ १ ॥ अधीतसकलशास्त्रः स गुरुणा योग्यतां ज्ञात्वाचार्यपदे स्थापितः. एवं लब्धाचार्यपदो बहुशिष्यसमूहसमावृतोऽन्निकापुत्राचार्यो मह्यां विहरति.

इतश्च सोऽन्निकापुत्राचार्यो वार्धके सपरिच्छदो गंगोपकंठस्थं स्वर्गपुरीसन्निभं पुष्पभद्राख्यं नगरं गतः. तत्र पुष्पकेतुनामा नृपोऽभवत्, तस्य पुष्पवती नाम पट्टदेव्यस्ति, तयोर्जितस्मररतिद्युती पुष्पचूलपुष्पचूलानामानौ युग्मजौ पुत्रपुत्र्यावभूतां. तावन्योन्यप्रेमशालिनौ विरहासहावन्योन्यविरहे निधनं यातुकामौ ज्ञात्वा राजा पुष्पकेतुर्दध्यावस्याः पुष्पचूलायाः कन्याया योग्यः कोऽपि वरो नास्ति, तथा पुष्पचूलपुत्रयोग्या कापि कन्या नास्ति, तर्हि केनाप्युपायेन युगादिधर्मसंवाद्यनयोः पाणिग्रहणमंगलं कारयामि, एतौ पृथक्पृथग्विवाहितौ मिथो विरहज्वरार्तौ निधनं यास्यतः, अनयोरकुशले ममाप्यकुशलं भविष्यति, मय्यकुशलेऽनाथा प्रजा पीड्यते, प्रजापीडनतो मम नरके गतिर्भविष्यति, अतोऽहं येन केनाप्युपायेनानयोः पाणिग्रहणमंगलं कारयामि. न्यायांधकूपरूप नृपतिरिदं

विचिंत्य पुरप्रधानपुरुषान् समाहूयेदमन्यधाद्भोः प्रधानपुरुषा अंतःपुरांतर्यद्रत्नं जायते तस्य स्वेच्छया विलासाय को विभुः? राज्ञो हृदयचिंतितमजानतैः प्रधानपुरुषैरुक्तं स्वामिन् यदंतःपुरे रत्नं समुत्पद्यते तस्य राजा विभुः, तस्य यत्किंचिद्राजा करोति, तत्कोऽपि न निवारयति. एवं छलं कृत्वा छलादनुमतिं लात्वा प्रियया निषिद्धोऽपि तत्पुत्रपुत्रीमिथुनं मिथो व्यवाहयत. एतत् स्वरूपं वीक्ष्य पुष्पवती तयोर्जननी वैराग्याद् व्रतमाददे, तयोर्जनको नृपालोऽपि कियता कालेन निधनं गतः, तस्य स्थाने मंत्रिमुख्यैः पुष्पचूलो राज्ये निवेशितः, स पुष्पचूलो राजा पुष्पचूलापट्टदेव्या समं देवराज इव भोगान् बुभुजे. अहोऽस्मिन् संसारे कामांधः किमपि कृत्याकृत्यं न जानाति. एवं तस्य राज्यं कुर्वतः सुखेन कालो याति. अथ पुष्पवती देवी व्रतं परिपाल्य मृता सती देवेषूत्पन्ना, तेन देवेनावधिज्ञानेन ज्ञातं, मम पुत्रपुत्रीयुग्मं महदन्याये प्रवर्तमानमस्ति, अहो एतावेवंविधं वक्तुमप्यशक्यं पापं कृत्वा नरके यास्यतः, तर्ह्यहं तथा करोमि यथैतौ नरकातिथित्वं न व्रजत इति विचिंत्य स जननीदेवः पुष्पचूलायै प्राक्प्रीतिवशात्स्वप्ने भयोत्पादकान्नरकान् दर्शयामास, एषा पुष्पचूला नरकवैषम्यभीता कंपमानशरीरा भर्तुरग्रे समागत्य यथा दृष्टान्नरकान्न्यवेदयत्. ततः स राजा सर्वान् दर्शनिनः समाहूय

नरकाः कीदृशा भवंतीति पप्रच्छ, तैः प्रोक्तं भोगानाशो रोगा वियोगा आर्तिरित्याद्येवं नरकाः. तत् श्रुत्वा राज्ञी जहास. ततो राजान्निकापुत्राचार्यांतिके गत्वा गुरुं नत्वा नरकस्वरूपं पप्रच्छ, हे भगवन्नरकाः कीदृशा भवंति? ततस्तेन गुरुणान्निकापुत्रेण तथा निरूपिता यथा तस्य प्रियया दृष्टाः, राज्ञोऽग्रे कथिताश्च. तदानीं पुष्पचूलान्निकापुत्राचार्यं पप्रच्छाहो युष्माभिरपि नरकाः किं स्वप्ने दृष्टाः? तत्तस्या वाक्यं श्रुत्वान्निकासूरय आचख्युर्हे भावुके वयं श्रीमत्तीर्थेशशासनाददृष्टमपि जानीमः, पुनः सा पुष्पचूला सूरिं पप्रच्छ हे भगवन् केन कर्मणा नरके गम्यते? गुरुः प्राह—मायामानक्रुधाकाम—लोभमात्सर्यतः कृतं ॥ कर्म स्यान्नरकायेति । तां पुनर्मुनयो जगुः ॥ १ ॥ तद्गुरुभिरुक्तं वाक्यं श्रुत्वा सा स्वगृहं गता, पुनर्निशायां स देवः स्वप्नांतरे तस्याः स्वर्गानपि दर्शयामास. सापि प्रगे राज्ञः समीपं गत्वा स्वप्ने दृष्टान् स्वर्गानप्याख्यत्. तत् श्रुत्वा मुदितमानसो राजान्यदर्शनिनः स्वर्गस्वरूपं पप्रच्छ, ते जगुर्नीरोगः संपदिष्टसंयोग इत्याद्येव स्वर्गः. तन्निशम्य राज्ञा चिंतितमेते किमपि न जानंति. ततोऽन्निकापुत्रसूरेः पृष्टं स्वामिन् स्वर्गाः कीदृशा भवंति? ततस्तेन गुरुणा यादृशाः पुष्पचूलायाः स्वप्ने दृष्टास्तादृशा गुरुणाप्युक्ताः. ततः पुष्पचूलया पृष्टं स्वामिन् स्वर्गं केन कर्मणा

गम्यते? गुरुणोक्तं चारित्रात्स्वर्गापवर्गयोः प्राप्तिर्भवति, यथा—स्वर्गापवर्गयोर्मार्गे । यतिधर्मेऽत्र निर्मले ॥ दर्शिते मुनिनाथेन । संविग्नैवं जगाद सा ॥ १ ॥ प्रभो प्राणेशमापृच्छ्य । गृहीष्यामि व्रतं द्रुतं इत्युक्त्वा पृच्छति गत्वा । तदर्थं नृपमादरात् ॥ २ ॥ जगाद जगतीशस्ता—मनुजानाम्यदः प्रिये ॥ ममैवौकसि गृह्णीषे । भिक्षां दीक्षावती यदि ॥ ३ ॥ इति राज्ञो वचः सा प्रतिपेदे. ततः सा पुष्पचूला महामहेनान्निकापुत्राचार्यांतिके प्रव्रजिता. ततः सा साध्वी निरतीचारं चारित्रं पालयामास. एवं काले गच्छत्येकस्मिन् समये श्रुताकूपारपारगो भगवानन्निकासूनुराचार्यो द्वादशाब्दिकं दुर्भिक्षं भाविनं विज्ञाय निःशंकं स्वपरिवारं पृथक्पृथग्देशेषु व्यहारयत. स्वयं वृद्धत्वाज्जंघाबलक्षीणत्वाच्च तत्रैव तस्थौ, ततः सा पुष्पचूलांतःपुरात्तथा नगराद्भक्तान्नपानखादिमस्वादिमादिसर्वं समानीयान्निकापुत्राचार्याय सदा ददौ, पित्रे पुत्रीव भक्तिभाक् सा पुष्पचूलागुरोरग्लानवृत्त्या वैयावृत्त्यं कुर्वाणा शुभध्यानवह्निना घनघातिकर्मेंधनानि दग्ध्वा केवलज्ञानमासादयामास. सा पुष्पचूला केवलज्ञानेन ज्ञात्वाऽमार्गितं गुरोरभीष्टं सारभूतं यत्किंचिद्विलोक्यते तदेवार्पयति, दिने दिने तेनैव वस्तुना वैयावृत्त्यं करोति. एकदा तां स मुनींदुर्जगौ हे वत्से मम मनोऽभीष्टं प्रत्यहं त्वं कथं समानीयार्पय-

सि? तयोक्तं भगवान् यस्य सदा संनिहितो भवति स तद्भावं किं न वेत्ति? सान्यदांबुदे वर्षति पिंडं समानिन्ये, तदा सूरिरूचे हे वत्से त्वं श्रुतज्ञासि, श्रुतज्ञानेन सर्वं जानासि, अतः प्रोच्यते एकोऽयं ममापराधो यदार्यासमानीतमाहारं गृह्णामि, त्वमप्यप्काये वर्षत्यप्याहारं समानीयार्पयसि, तत्किं? त्वं श्रुतज्ञा, श्रुतज्ञानेन सम्यग्ज्ञात्वा यथास्माकं परलोकहितं भवति तथा कुरु? अशुद्धा-हारग्रहणे जिनेन महान् दोष उक्तः. ततस्तया पुष्पचूलासाध्व्या प्रोक्तमहमचित्तैरप्कायैरचिते पथि समेतास्मि, तेनैष शुद्ध आहारो मयानितः. न त्वशुद्धः, कल्पनीयो न त्वकल्पनीयः, पुनः सूरि-णोक्तं त्वयाप्कायस्याचितता कथं ज्ञाता? तया प्रोक्तं सकललोकालोकप्रकाशकेन केवलज्ञानेन. ततः सूरिराहाहो मया केवल्याशातना विहिता, इत्युक्त्वा मिथ्यादुःकृतं ददौ, तद्दत्वा संयोजितक-रकमलो विनयावनम्रदेहोऽन्निकापुत्राचार्यो गुरुः केवलिनीं पप्रछ हे भगवत्यहं सेत्स्यामि न वा? ममोपरि कृपां विधाय सर्वं समादिश? केवल्याह गंगामुत्तरतां भवतां केवलं भावीति तस्या वाक्यं श्रुत्वा सूरिराड् जनैः परिवृतो गंगामुत्तरितुं नावामारूढः, यत्र यत्र पार्श्वे सूरिर्नावामुपाविशत्तत्र पा-र्श्वे सा नौ जले ननाम. ततः सूरिर्नौपार्श्वं परिहृत्य नौमध्यमध्यासिनः, ततः सा नौ महद्दृष-

दाक्रांतेव जले सर्वतो ब्रुडितुं लग्ना. ततो जनैरुक्तमहो एष मुनिर्महापापी वर्तते, अस्य पापेनैते सर्वे लोका यानारूढा निधनं यास्यंति. ततस्तैः सर्वैरपि जनैरुक्तमयं मुनिर्जाह्नवीतोये प्रक्षिप्यतां? तदानीं स मुनिर्लोकैर्यावज्जले क्षिप्तस्तावत्कयाचिद्दर्शनद्विषा देव्या पतंस्त्रिशूले धृतः, तदानीं स मुनींदुर्दध्यौ धिग्मामप्कायविनाशिनं यतो मम रुधिरेणैतेऽप्यप्कायिका जीवा निधनं यास्यंतीत्येवं भावनां भावयन्नंतकृत्केवली भूत्वा मोक्षमगमत्. तत्र समागतो गीर्वाणवर्गस्तेन तस्य महामुनेर्निर्वाणमहिमा चक्रे. ततो लोकैरुक्तं योऽत्र गंगातीर्थे निधनं याति स मुक्तिभाग्भवति, यथैष मुनिर्मोक्षं गतस्तथान्येऽप्यत्र मोक्षं यास्यंतीति, तद्दिनादारभ्य तत्र प्रयागनामतीर्थं प्रावर्तत. यतः—जायं पयागतित्थं । देवेहिं कयाइ जस्स महिमाए ॥ गंगाए अंतगडं । तं वंदे अन्नियापुत्तं ॥ १ ॥ अथ पुष्पचूला साध्वी मह्यां विहृत्य भव्यान् प्रतिबोध्य सकलकर्मक्षयं कृत्वानंतानंदमयं मोक्षं जगाम. इदं साध्वीशिरोरत्नं । पुष्पचूला महासती ॥ शुभभावनया लेभे । केवलज्ञानमुज्ज्वलं ॥ १ ॥ इति पुष्पचूलाकथानकं समाप्तं ॥ अथ गौतमदीक्षितपंचदशशततापसभावनां प्रदर्शयन्नाह—

॥ मूलम् ॥—पनरस य तावसाणं । गोअमनामेण दिन्नदिक्खाणं ॥ उप्पन्नकेवलाणं । सुहभावाणं नमो ताणं ॥ १२ ॥ व्याख्या–पंचदशशततापसेभ्यः, चतुर्थ्यर्थे षष्ठी, गौतमनाम्ना गणधरेण, 'कचिन्नाहेणेत्यपि पाठः,' 'दिण्णदिक्खाणंति' दत्तदीक्षेभ्यः, पुनः कथंभूतेभ्यः? 'उप्पन्नत्ति' उत्पन्नं केवलं 'नाणं' ज्ञानं येषां ते उत्पन्नकेवलास्तेभ्य उत्पन्नकेवलेभ्यः, तत्र हेतुभूतं विशेषणमाह—'किंभूतेभ्यः? शुभभावेभ्यस्तेभ्यः प्रसिद्धेभ्यो नमोऽस्तीति गाथार्थः. ॥ १२ ॥ विस्तरार्थस्तु कथानकादवसेयस्तत्कथा पुनस्तपःकुलके तुर्यगाथायां श्रीसुधर्मास्वामिकथायां कथिता वेदितव्या, पौनरुक्त्यदोषत्वान्न पुनरुच्यते. अथ स्कंदकाचार्यशिष्याणां भावनां दर्शयति—

॥ मूलम् ॥—जीवस्स सरीराओ । भेयं नाउं समाहिपत्ताणं ॥ उप्पाडियनाणाणं । खंदगसीसाणं नमो तेसिं ॥ १३ ॥ व्याख्या—तेभ्यः स्कंदकाचार्यशिष्येभ्यो नमोऽस्तु नमस्कारो भवतु, अत्र चतुर्थ्यर्थे षष्ठी, कथंभूतेभ्यः? समाधिं प्राप्तेभ्यश्चेतःस्वास्थ्यं गतेभ्यः, किं कृत्वा? 'नाउंति' ज्ञात्वा, कं? भेदं, कस्य? जीवस्य, कस्मात्? शरीरात्, पुनः कथंभूतेभ्यः? 'उप्पाडिअत्ति' तेन चेतःस्वास्थ्येन वस्तुतो भावनयोत्पादितं केवलज्ञानं यैस्तेभ्य इति गाथार्थः. ॥ १३ ॥ विस्तरार्थ-

स्तु कथानकादवसेयस्तच्चैवं—अस्मिन् जंबूद्वीपे भरतक्षेत्रे श्रावस्तीनामनगर्यस्ति, तस्यां नगर्यां जितशत्रुनामराजास्ति, तस्य राज्ञो धारिणी नाम पट्टदेव्यस्ति. तयोः पुत्रो रूपनिर्जितसुरेशो जीवाजीवादितत्वज्ञः सर्वशास्त्रनिपुणः स्कंदको नामाभूत्, तस्य राज्ञः पुत्री स्कंदकानुजा पुरंदरा नाम्नासीत्. सा कुंभकारकृतपुरस्वामिना राज्ञा दंडकिनोदूढा. एकस्मिन् दिने दंडकिना राज्ञा द्विजातीयपालको नामामात्यः केनचित्कार्येण तत्र प्रेषितः, तत्रायातो वेत्रिणा निवेदितो राज्ञा सभायां प्रवेशितः, सोऽतितुष्टो नृपांतिकमासदत्, राज्ञा भृशं गौरवितो जामातुः कुशलं पृष्टश्च. ततस्तेन राज्ञः पुरतः प्राभृतं मुक्त्वा कुशलादिसर्वं निवेदितं. ततो राज्ञा जितशत्रुणा स सुखोत्तारके स्थापितः. सोऽन्यदा नृपास्थानमंडपे समासीनो धर्मकथां कथयन् स्कंदककुमारेण महात्मना धर्मस्वरूपं युक्तिभिस्तथा पृष्टो यथा तस्य कुमारस्य किमप्युत्तरं दातुं न शशाक, तदा कुमारेण धर्मस्वरूपं प्रोक्तं, यथा—या देवे देवताबुद्धि—र्गुरौ च गुरुतामतिः ॥ धर्मे च धर्मधीः शुद्धा । सम्यक्त्वमिदमुच्यते ॥ १ ॥ सम्यक्त्वमूलानि पंचा—णुव्रतानि गुणास्त्रयः ॥ शिक्षापदानि चत्वारि । व्रतानि गृहमेधिनां ॥ २ ॥ इत्यादिसम्यक्त्वमूलं श्राद्धव्रतं सर्वेषां सदसि स्थितानां पुरः समाख्याय मिथ्यात्वधर्म

स्तिरस्कृतः, स पालकोऽपि मनसि प्रद्वेषं वहन् कुमारं शशंस. ततो राज्यकार्याणि कृत्वा स स्वस्थानमगमत्, परं मनसः कषायं नामुंचत्.

अथ स स्कंदककुमारो ज्ञानवांस्तत्त्वज्ञ आबाल्यादपि वैराग्यवासितोऽनित्यभावनां भावयन् संसारासारतां चिंतयन् विषयविमुखतया शांतरससमासन्नस्तस्थौ. अथान्यदा श्रीमुनिसुव्रतस्वामिसमागमनं वनपालेन विज्ञप्तं, तत श्रुत्वा तस्या वर्धापनिकां दत्वा जिनशत्रुराट् स्कंदककुमारेण सहितः सपरिकरः स्वामिनं वंदनाय निर्ययौ. ततो भगवता श्रीमुनिसुव्रतेन देशना दत्ता, तां देशनां श्रुत्वा स्कंदककुमारो विशेषतो वैराग्यमापन्नः, पितुराज्ञया पंचशतपुरुषैः समं संयममग्रहीत्, क्रमेणाधीतसिद्धांतः प्राप्तसूरिपदः कुंभकारकृते गंतुं स्वामिनमपृच्छत्, स्वामिनोक्तं तत्र ते सशिष्यस्य प्राणांतकोंतरायो वर्तते, स्कंदकेनोक्तं स्वामिन्! किमहमाराधको विराधको वा तत्र भविष्यामि? गुरुणोक्तं त्वच्छिष्याः सर्वेऽप्याराधका भविष्यंति, परं त्वं विराधको भविष्यसि. ततस्तेन चिंतितं मयि विराधके ममैते शिष्या आराधका भवंत्विति चिंतयित्वा जिनं नत्वा तैः पंचशतशिष्यैः परिवृतो नियतियंत्रितः स्कंदकाचार्यः कुंभकारकृते नगरेऽगमत्, यतः—उदयति यदि भानुः पश्चिमायां

दिशायां । विकसति यदि पद्मं पर्वताग्रे शिलायां ॥ प्रचलति यदि मेरुः शीततां याति वह्नि-स्तदपि न चलतीयं भाविनी कर्मरेखा ॥ १ ॥ तथावश्यं भाविभावानां प्रतिकारो न विद्यते. इतश्च स पालकः पापात्मा स्कंदकाचार्यं शिष्यसमूहपरिवृतं समागतं श्रुत्वा प्राक्संजातभूरिमत्सरः क्रूरहृदयोऽधमाधमो मुनिस्थानयोग्येषु वनेषु सर्वत्र गुप्तैरात्मनरैर्गूढमायुधानि न्यधात. अथ राजा तत्र वंदनार्थं समागतः, सूरिभिर्देशना दत्ता, राजा दंडकस्त्वत्यंतं संतुष्टः. तस्मिन् समये तेनाधमेन पापात्मना पालकेन पूर्वमत्सरतो दंडकिराजाग्रे गत्वैकांते विज्ञप्तं हे देव तवैष शालकः स्कंदकः सशस्त्रैः पंचशतसुभटैः पाखंडिभिः परिवृतो भग्नव्रतपरिणामः स्तोकसुभटैः परिवृतं वंदनायागतं ज्ञात्वा भवंतं हत्वा राज्यं गृहीष्यति. राज्ञोक्तं भोः पालकैतेषां समीपे शस्त्राणि न संति, तर्हि त मुनयो मां कथं हनिष्यंति? तेनोक्तमेतैः शस्त्राणि भूमौ गोपितानि, राज्ञोक्तं त्वया कथं ज्ञातानि? तेनोक्तं मम केनाप्युक्तानि दर्शितानि च, अहं भवंतं तानि शस्त्राणि दर्शयामीत्युक्त्वा तेन पाप्मना पालकेन स्वगोपितानि शस्त्राणि सर्वाण्यपि दर्शितानि, कथितं च हे राजन्नेतन्मया सम्यग्निरीक्ष्य भवद्भ्यो न निवेदितं, अथ यत्कार्यं तत्त्वं कुरु? राज्ञोक्तं भोः पालकामीषां निग्रहे त्वमेव मया नियुक्तः,

एतान् मुनिवेषधारकान् सर्वांस्त्वं गृहाण? ततः स पालकः पापात्मा तिलपीडनं भैरवयंत्रं समानीय स्कंदकाचार्यं तद्यंत्रसमीपे स्थापयित्वा तत्पुरस्तानेकैकशः साधूंस्तिलवत्पीलयामास, यथा—आरोप्य पश्यतः सूरे—र्दुर्यंत्रे तिलपीडने ॥ साधूनेकैकशः सर्वान् । पीलयामास पालकः ॥ १ ॥ आराधनावनास्ते तु । स्कंदकाचार्यसन्निधौ ॥ अंतकृत्केवलीभाव—भाजो भेजुः शिवालयं ॥ २ ॥ एवं तेन पाप्मना पालकेन मुनीनामेकोनपंचशत्यां पीडितायां पालकं स्कंदको जगाद भोः पालक मामनापीड्य मत्पुर एनं बालमुनिं मा यंत्रे क्षिप? अयं मम स्नेहोचितोऽतोऽस्मिन् यंत्रे पूर्वं क्षिप्ते मम मनो भृशं दुनोति, तस्मात् पूर्वं मां यंत्रे क्षिप? भवत्पार्श्वे एतावन्मात्रमहं मार्गयामि, एवं बहूक्तोऽपि स पापः पापान्न विरराम, यतो भाविनं भावं को निवारयति? ततस्तेन पापेन स बालमुनिः कृताराधनो विहितानशनस्तस्य गुरोः पुरतो यंत्रे क्षिप्तः, सोऽपि तथैव शुक्लध्यानेन मृत्वा मोक्षमगमत. एतावंतं कालं सुस्थमनसा ते सर्वेऽपि मुनयो गुरुणा मोक्षं प्रापिताः, अथ तेन बालमुनिना मोहितेन गुरुणा कोपवशान्निदानं कृतमहोऽनेन पाप्मना विप्रेण ममोक्तं न कृतं, यतो यदि मम तपसोऽस्य माहात्म्यं भवेत्तर्ह्येतन्नगरस्य नृपस्य राजस्य पालकस्य च दाहको भवेयं. एवं

कृतनिदानः स्कंदकाचार्यस्तेन यंत्रेण पीडितो मृत्वाग्निकुमारदेवेषूत्पन्नः. तस्य स्कंदकाचार्यमहामुने रजोहरणं रुधिरारक्तं करभ्रांत्या शकुनिका रजसा नीत्वा यावन्न भ्रमति तावत्तद्रजोहरणं तस्या मुखात्पुरंदरयशाराज्ञीपुरः पतितं, तया स धर्मध्वजः समुपलक्षितः, यथा—देवदत्तमहारत्न—कंबलवेष्टितो गुरोः ॥ धर्मध्वजः कुत इति । पृष्टे ज्ञातं तया जनात् ॥ १ ॥ ततस्तया राज्ञोऽग्रे समागत्य राजा तिरस्कृतो हे राजेंद्र त्वयाविमृष्टं कृतमेतत्पापं तव फलिष्यति, आदेशग्रामनगरपुरादेः सर्वस्य क्षयो भविष्यति, अनेन पापेन त्वं नरकं यास्यसि. हे राजंस्त्वया तस्य पापिनो विप्रस्योक्तं कृतं तद्युक्तं न कृतं, यतः प्रायो विप्राः पापिनो भवन्ति, पापपरायणा अकार्यकारकाः कथमपि पापान्न निवर्तंते, यतः—एते नटा वि.। धूर्ता । भक्ता चौरेश्वरास्तथा ॥ नृशंसा निस्त्रपाः किं किं । सूतकंठा न कुर्वते ॥ १ ॥ एवं राजानं कथयंतीं राज्ञः कारितं कर्म शोचयंतीं तां शासनस्याधिदेवता श्रीमुनिसुव्रतस्वामिनोंतिके निन्ये, सापि पुरंदरयशा वैराग्यात्संयमं प्रपेदे. अथ स्कंदकाचार्यो ज्वालाजिह्वकुमारतां प्रपन्नः प्रयुक्तावधिज्ञानः समुत्पन्नक्रोधाग्निना जाज्वल्यमानस्तं वैरं स्मरंस्त्वरितं तत्रागात. ततस्तेन तन्नगरं सराष्ट्रं दंडकिराजनं पापात्मानं पालकं प्रजाश्च दग्धाः, वैरनिर्यात-

नं कृतं, तस्मिन् स्थाने दंडकारण्यं जातं, अद्यापि तत्र तृणमात्रमपि नारोहति. इत्थं श्रीस्कंदकाचार्य—विनेया विशदाशयाः ॥ अंतकृत्केवलीभूय । महानंदं प्रपेदिरे ॥ १ ॥ इति श्रीस्कंदकाचार्यशिष्यपंचशतीकथानकं समाप्तं. अथ भावनायां दुर्गतादृष्टांतमाह—

॥ मूलम् ॥—सिरिवद्धमाणपाए । पूयंती सिंदुवारकुसुमेहिं ॥ भावेण सुरलोए । दुगायनारी सुहं पत्ता ॥ १४ ॥ व्याख्या—श्रीवर्धमानस्वामिपादौ पूजयंती, कैः? सिंदुवारकुसुमैर्निर्गुंडीकुसुमैः, केन? भावेन मनसा पूजां ध्यायंतीत्यर्थः, दुर्गतानारी निर्धनवती सा सुरलोके देवलोके सुखं प्राप्तेति गाथार्थः. ॥ १४ ॥ विस्तरार्थस्तु कथानकादवसेयस्तच्चैवं—अस्मिन् भरतक्षेत्रे श्रीकांतायां नगर्यां जितारिर्नाम्ना राजास्ति, तस्मिन्नगरे दारिद्र्योपद्रुतैका स्थविरा वराकिका परिवसति. अन्यदा तस्मिन्नगरे श्रीवीरजिननायको देवासुरनरविद्याधरसंघपरिवृतः समवासार्षीत्. तस्मिन् समये राजा जितारिः समस्तनागरिकप्रजापरिवृतः सर्वर्द्ध्या संयुतो वीरवंदनाय निर्ययौ. तदानीं सा स्थविरा काष्ठभारकं गृहीत्वा गृहाभिमुखी वलमाना राजादिपूजितं जिनं दृष्टवती, हर्षप्रकर्षतो विस्मितचित्ता सा चिंतयामासायमेव देवो भगवान् विश्वेश्वरो विश्ववंदितः सुरासुरनमस्कृतस्त्रैलोक्यपूजितः श्रीवीरः,

जन्मनी-
ऽहमप्येनं भगवंतं पूजयामि, यतो मया प्राग्भवे नायं पूजितो जिनेश्वरस्तेनाहमस्मिन् जन्मनी-
दृशा दुर्गता जाता, तर्ह्यहं सांप्रतं भगवंतं पूजयामि, यत एष भगवान् पुष्पादिभिः पूजितो भवांतरे मोक्षसौख्याय स्यादिति चेतसि विचिंत्य प्रवर्धमानभावा काष्ठभारकमेकांते कुत्रचित्सुस्थानके मुक्त्वा सिंदुवारादिपुष्पाणि लात्वा श्रीवीरपादानर्चितुमगात्. सा मार्गे यांती दुर्बलत्वाद् वृद्धत्वाच्च कस्मिंश्चित्कीलके स्खलितपादा पतिता भगवत्पूजाध्यानतत्परा मृत्वा शुभभावतः महर्द्धिकदेवतया समुत्पन्ना, तेन देवेनावधिज्ञानं प्रयुक्तं, तेन ज्ञानेन स्वस्य देवत्वकारणं ज्ञानं यदहं पूर्वजन्मनि दुर्गताभूवं, जिनपूजाध्यानतो मृत्वा देवो जातस्तर्हि सांप्रतं वीरं नंतु यामीति विचिंत्य स देवो भगवदुपांते वंदनाय समागात्. अत्रांतरे भगवद्वंदनाय समागतो जिनारिराजा वीरं नत्वा समुपविष्टः, स्वामिना देशना दत्ता, तां देशनां श्रुत्वा विनयावनम्रदेहो राजा पृच्छति हे भगवन्नेष देवोऽतीव द्युतिमान् दृश्यते, तत्किं कारणं? स्वाम्युवाच हे राजन् या स्थविरा त्वया कीलके स्खलिता मृता दृष्टा, सा पूजाध्यानतो मृत्वा देवेषु महर्द्धिकदेवो जातः, सोऽयं देवः सांप्रतं मम वंदनाय समागतः, तदानीं राजा चिंतयत्यहो भगवत्पूजामाहात्म्यं यदनया पूजाध्यानतः स्वल्पेनापि कालेनैवंविधा

देवर्द्धिः संप्राप्ता, पुन स्वामिना प्रतिपादितमेष देवः स्तोकभवांते मोक्षं यास्यति. भावपूजाप्रभावेण । दुर्गता देवताभवत् ॥ तस्मात्पूजाविधौ यत्नः । कार्यः कामितदायकः ॥ १ ॥ इति दुर्गताकथानकं समाप्तं. ॥ अथ दर्दुरांकदेवदृष्टांतेन भावनां दर्शयति—

॥ मूलम् ॥—भावेण भुवणनाहं । वंदेउं दद्दुरोवि संचलिउ ॥ मरिऊण अंतराले । नियनामांको सुरो जाउ ॥ १५ ॥ व्याख्या—भावेन भुवननाथं त्रिभुवनस्वामिनं श्रीवीरं वंदितुं नमस्कर्तुं दर्दुरो मंडुकोऽपि संचलितो वंदनाय वाप्या निर्गतो वापीसमवसरणयोरंतराले कस्यचिदश्वस्य पादेन हतो वीरवंदनध्यानस्थो मृत्वा सौधर्मदेवलोके दर्दुरांकनाम्नि विमाने निजनामांको दर्दुरांक इत्यर्थः, सुरो जात उत्पन्न इति गाथार्थः. ॥ १५ ॥ विस्तरार्थस्तु कथानकादवसेयस्तच्चैवं —एकस्मिन् समये भगवान् ज्ञातनंदनश्चतुस्त्रिंशदतिशयैर्विराजमानश्चतुर्दशसहस्रसाधुषट्त्रिंशत्सहस्रसाध्वीपरिवृतो देवदेवीभिरावृतोऽष्टमहाप्रातिहार्यसहितः पृथिव्यां विहरन मगधदेशमंडले राजगृहनगरे गुणशिले चैत्ये समवसृतः, देवैः कृते समवसरणे स्वामी पूर्वद्वारेण प्रविश्य पूर्वाभिमुखः सिंहासने समुपविश्य सर्वभाषाजुषा गिरा मालवकैशिकीग्रामरागपवित्रया देशनां चक्रे, तावतोद्या·

नपालकेन वर्धितो राजा श्रेणिकस्तस्य दानं दत्वा सपरिकरो भगवद्वंदनाय निर्ययौ, भगवंतं सम-
वसरणसिंहासने समुपविष्टं त्रिःप्रदक्षिणापूर्वं स्तुत्वा विधिवद्वंदित्वा यथास्थाने समुपविश्य भगवद्दे-
शनां शृणोति, तावत्तैकः कुष्ठी गलत्कायो जिनपादौ नत्वा तीर्थेशसमीपे निषसाद. ततः स भूय-
सा निजपुरीषेन निःशंको भगवतः पादौ चंदनेनेव चर्चयामास. तत् स्वरूपं वीक्ष्य क्रुद्धः श्रेणि-
को दध्यावहो पापीयान् भगवतः श्रीजिनस्य जगन्मान्यस्य सुरेशपूज्यस्य महदाशातनां करोति,
अतोऽयं वध्यः कथमपि न मोच्य इति. एवं श्रेणिको यावच्चिंतयति तावज्जिनेंद्रेण क्षुते स कुष्ठि-
कः प्रोवाच म्रियस्व? श्रेणिकेन क्षुते चिरं जीवेत्युवाच. अथाभयकुमारेण क्षुते जीव वा म्रियस्वे-
त्युवाच, कालसौकरिकेण क्षुते मा जीव मा म्रियस्वेत्युवाच. तद्वचनचतुष्कं श्रुत्वा पुनः श्रेणिको
दध्यावनेन जिनंप्रति म्रियस्वेति कथमुक्तं? ततो रुष्टः श्रेणिको निजभटानित्यादिशद्भो भटा इतः
स्थानादुत्थितोऽसौ कुष्ठी भवद्भिर्ग्राह्यः, कथमपि न मोच्यो यतोऽसौ वध्यो जिनाशातनाकारित्वात.
ततो देशनांते भगवंतं नत्वा कुष्ठी समुत्थितः, ततः श्रेणिकभटैः स रुरुधे किरातैः शूकर इव. स
कुष्ठी तेषां सर्वेषां पश्यतामेव दिव्यरूपधरस्तत्क्षणादेवांबरे उत्पपात देहत्विषाजिनवभानुमानिव.

एष सर्वोऽपि वृत्तांतः पत्तिभी राज्ञोऽग्रे निवेदितः, राजा सर्वज्ञं विज्ञपयति हे भगवन्नेष कुष्ठी स्वदेहात्पुरीषेन तव पादौ चर्चयन् मया दृष्टः स कोऽस्ति? भगवानाह राजन्नेश देवोऽस्ति, पुनः श्रेणिकेन पृष्टं हे भगवन्नेष केन हेतुना कुष्ठीभूतः? भगवानाह श्रूयतां?—

वत्सदेशे विश्रुता कौशांबीनामनगर्यस्ति, तस्यां नगर्यां शतानीको नाम राजास्ति, तस्यां नगर्यां दरिद्राणां मूर्खो मूर्खाणामवधिः सेडुकनामा द्विजोऽभूत्, सोऽन्येद्युः स्त्रियाभाणि भो भट्ट मम सूतिकर्मावसरः समायातः अतस्त्वं मदर्थं घृतं समानय? स प्रोवाच हे प्रिये मम किमपि कौशल्यं नास्ति, घृतं कथमानयामि? साप्यूचे भो भट्ट राज्ञः समीपे याहि? गत्वा च पार्थिवं सेवस्व? पृथिव्यां पार्थिवादन्यः कोऽपि कल्पपादपो नास्ति. ततः स विप्रः पुष्पफलादिढौकनै राजानं सेवितुं प्रवृत्तो रत्नेच्छुः पुमान् सात्ररमिव, कदाचित्कौशांबी चंपेशेनागत्य रुरुधे, सानीको राजा शतानीकः कौशांबीमध्ये तस्थिवान् बीलमध्ये भुजंग इव, एवं काले गच्छति चंपेशः स्तोकबलः प्रावृषि काले स्वाश्रयंप्रति प्रवृत्तः, एवं सैनिका अपि शतानीकमाकिंचित्करं ज्ञात्वा केचित्स्वजनान् मिलनाय यांति. अथैकस्मिन् दिने सेडुकविप्रः पुष्पफलाद्यर्थमुद्याने गतोऽभूत्, तेन चंपेशसैन्यं स्तो·

कं दृष्टं, तद्वीक्ष्य द्रुतमेत्य शतानीकं व्यजिज्ञपद् हे स्वामिंस्ते रिपुश्चंपेशः स्तोकसैन्यपरिवृतो वर्तते, स्तोकबलो भग्नदंष्ट्रो भुजग इव सांप्रतं स सुग्राह्यो वर्तते. तद्वचः साधु मन्वानो राजा शतानीकः सर्वाभिसारसहितः कौशांबीतो निःससार. ततश्चंपेशसैनिकाः सर्वेऽपि विद्युत्पातसममकस्मात्सैन्यं समापतितं समालोक्य प्रतिदिशं प्रणेशुः. स्वसैन्यं भग्नं वीक्ष्य चंपाधिपतिरप्येकाकी पलायितः, तस्य हस्त्यश्वरथकोशादि कौशांबीपतिरगृहीत्. ततो हृष्टः शतानीकः स्वनगरीं प्रविष्टः, सेडुकविप्रोपरि संतुष्टः शतानीको राजा सेडुकं समाकार्यैवं बभाषे भो सेडुक तवोपरि तुष्टोऽहं, यत्तव रोचते तद्याचस्व? विप्रेणोक्तं हे राजेंद्र निजप्रियां पृष्ट्वा याचिष्ये, राजोचे त्वरितं तव जायां पृष्ट्वागच्छेः, ततः स गतो गृहे, जायामपृच्छद् हे प्राणप्रिये तव पुण्येन राजा तुष्टोऽस्ति तत्किं मार्गयामि? ततः सा बुद्धिशालिनी चेतस्येवं चिंतयामास, यथा—यद्यमुना ग्राहयिष्ये । नृपाद् ग्रामादिकं तदा ॥ करिष्यत्यपरान् दारा—न्मां मुक्त्वायं द्विजः खलु ॥ १ ॥ ततस्तया विप्रपत्न्यैवमालोच्य तस्य कथितं हे नाथ ग्रामाकरनगरादिभिरावां किं कुर्वहे? ग्रातो ग्रामनगरादिषु गृहे गृहे एकैकं भोजनं दक्षिणायां दीनारं च याचस्व? तत श्रुत्वा स विप्रो राज्ञः पुरः समागत्य ग्रामनगरादिषु गृहे गृहे भो-

जनं दक्षिणायां दीनारं च ययाचे, राज्ञोक्तं भो मूढ त्वं किं याचसे? अन्यत्किमपि ग्रामनगरादिकं यत्तुभ्यं रोचते तद्याचस्व? अनया भिक्षया किं करिष्यसि? सेरुकेनोक्तं राजन्ममैतावतैस्तुष्टिर्ग्राम-नगरादिविडंबनयाहं किं करोमि? अथ राज्ञा तुष्टेन सेरुकयाचितं दत्तं. ततः स विप्रो हृष्टो गृहे गृहे प्रत्यहं भोजनं करोति, दक्षिणायां दीनारं च गृह्णाति; एवं कालो याति. राजमान्यं तं ज्ञात्वा सर्वेऽपि लोका भोजनाय निमंत्रयंति, सोऽप्येवं सर्वेषां लोकानां गृहेषु भोजनं करोति, यस्य प्रसन्नो नृपतिस्तस्य को न सेवकः? अथ स विप्रः प्रत्यहमग्रे भुक्तमन्नं वामयित्वा दक्षिणालाभलोभेना-नेकशो भोजनं विदधे. धिग्धिग्लोभो द्विजन्मनां. एवं स विप्रो धनधान्यपुत्रपौत्रादिभिरुपचियत पादैरिव वटद्रुमः. एवं प्रत्यहं वारंवारमजीर्णत्वाद्वमनाच्च पुनर्लोकगृहेषु भोजनादिभिश्च तस्य शरी-रेऽपक्वरसैर्व्याधिरुत्पन्नः. ततः क्रमेण स कुष्ठी संजज्ञे, शीर्णघ्राणांह्रिपाणिकस्तथैवावस्थितः स रा-जांतिके याति. एकदा मंत्रिभिर्नृपतिर्विज्ञप्तो हे राजन्नेष कुष्ठरोगः संचरिष्णुरतोऽस्य लोकानां गृहे भोजनं कर्तुं नार्हं, हे राजन्नस्य नीरुजो बहवः पुत्राः संति, तेभ्यः कोऽप्येको लोकगृहेषु भुज्यतां? राज्ञोक्तमेवं भवतु. ततोऽमात्यैः सेरुकविप्रं समाकार्य प्रोक्तं भो सेरुक त्वं गृहे स्थित्वा तव स्था

नके भोजनार्थं तवैकं पुत्रं प्रेषयेति राज्ञास्मन्मुखेनोक्तं, वयं त्वां निवेदयामः, तेनापि मंत्रिवचोंगीकृतं. तद्दिनादारभ्य सेडुकविप्रो भोजनार्थं स्वपुत्रं प्रेषयति, स्वयं च गृहे भुनक्ति. ततः स विप्रो मधुमं- क्कवत्क्षुद्रमक्षिकाजालमालितः पुत्रैर्गृहाद्बहिः कुटीरके स्थापितः, गृहाद् बहिः स्थितस्य तस्याज्ञां पुत्रा अपि न चक्रिरे, ते पुत्राः शुनकस्येव तं भोजनं ददुः, ते च राजादिगृहेषु भोजनं कुर्वंति. अथ स वि- प्रः पुत्रवध्वादिभिः पराभूतोऽचिंतयदहोऽमी मम पुत्रा मयैव श्रीमंतः कृताः, ते मां वाचापि न तोषयंति तेषां स्त्रियोऽपि मां रोषयंति. एते सर्वे मम पुत्रा वध्वश्चैव जानंति, एष कुष्टी रुष्टो वा तुष्टः किं करि- ष्यति? तर्हि सर्वेषां पुत्राणां जुगुप्सायोग्यान् करोमि, यथैते मां जुगुप्संति तथैते सर्वेषां स्वजनपर- जनानां जुगुप्सार्हा भवंत्विति विचिंत्य तेन पाप्मना विप्रेण निजात्मजानाहूय प्रोक्तं भोः पुत्रा अहं जीवितव्यादुद्विग्नो जातः, एषोऽस्मत्कुलाचारो वर्तते यत्पित्रा मर्तुकामेन कुटुंबस्य मंत्रोक्तितः पशुर्देयो यथा सर्वेषामृद्धिर्वृद्धिः कल्याणं संततिवृद्धिश्च भवति. एतत्पित्रोक्तं श्रुत्वा ते पुत्राः पशुवन्मंदबुद्धय एकं पशुं समानीयार्पयित्वैवं जगुर्हे तातैनं पशुं मंत्रोक्षितं कृत्वास्माकं देहि? ततः स सेडुकः पापा- त्मा स्वांगमलेनोद्वर्त्योद्वर्त्य तेनान्नेन तं पशुं भोजयामास. ततः स पशुः कुष्टीबभूव. ततः स पापात्मा

तं पशुं हत्वा तन्मांसं स्वपुत्रेभ्यो ददौ. ततस्ते तस्याशयमजानंतो मुग्धा तद् बुभुजिरे. एवमकार्यं कृत्वा किंचिच्छंबलमादाय स्वयं यात्रार्थं देशांतरं ययौ, मार्गे तस्यैका भयंकरा घोराटवी समागता, तस्यामटव्यामत्यर्थं तृषातुरः स इतस्ततो जलार्थं भ्रमन्नानाद्रुमवेष्टितं सौख्यकरं कंचिद् सरोवरमपश्यत्, तत्र स पानीयं पपौ, यथा—नीरं नीरतरुत्रस्त—पत्रपुष्पफलं द्विजः ॥ ग्रीष्ममध्यदिनार्कांशु—क्वथितं क्वाथवत्पपौ ॥ १ ॥ स सेरुकविप्रः कियंति दिनानि तत्रैव वने तस्थौ, वनफलान्यास्वादयति. तत्सरोवरजले स्नानं कुर्वतस्तस्य विधिवशात्कुष्टोऽपगतः, स नीरोगो जातश्च. ततः स परावृत्य स्वस्थानमगमत. गतकुष्टः पुर्यां प्रविशन् स लोकैर्दृष्टः, तदा सविस्मयैस्तैश्चिंतितमहो महदाश्चर्यं जातं यदेष विप्रः सेरुकनामा देदीप्यमानदेहो जातो निर्मुक्तनिर्मोकः पन्नग इव. ततो लोकैः पृष्टं भो विप्र त्वं नीरोगः कथं जातः? तेनोक्तं मया देवताराधनं कृतं, तेन तुष्टेन देवेन मम देहो नीरुक्कृतः, ततः स गृहे गत्वा स्वपुत्रान् कुष्टिनो वीक्ष्य मुदित उवाच भोः पुत्रा ममावज्ञाफलं युष्माभिर्लब्धं. ततस्तैः पुत्रैश्चिंतितमनेन पित्रा महदकार्यं कृतमेवं ते पुत्रा वारंवारं तं निंदंतिस्म. लोकैरपि स तिरस्कृत्य नगरान्निष्कासितः. ततः स राजगृहे नगरे समागत्याजीविकाहेतोर्द्वारपालस्य

नके भोजनार्थं तवैकं पुत्रं प्रेषयेति राज्ञास्मन्मुखेनोक्तं, वयं त्वां निवेदयामः, तेनापि मंत्रिवचोंगीकृतं. तद्दिनादारभ्य सेडुकविप्रो भोजनार्थं स्वपुत्रं प्रेषयति, स्वयं च गृहे भुनक्ति. ततः स विप्रो मधुमक्षकवत्क्षुद्रमक्षिकाजालमालितः पुत्रैर्गृहाद्बहिः कुटीरके स्थापितः, गृहाद् बहिः स्थितस्य तस्याज्ञां पुत्रा अपि न चक्रिरे, ते पुत्राः शुनकस्येव तं भोजनं ददुः, ते च राजादिगृहेषु भोजनं कुर्वंति. अथ स विप्रः पुत्रवध्वादिभिः पराभूतोऽचिंतयदहोऽमी मम पुत्रा मयैव श्रीमंतः कृताः, ते मां वाचापि न तोषयंति तेषां स्त्रियोऽपि मां रोषयंति. एते सर्वे मम पुत्रा वध्वश्चैव जानंति, एष कुष्ठी रुष्टो वा तुष्टः किं करिष्यति? तर्हि सर्वेषां पुत्राणां जुगुप्सायोग्यान् करोमि, यथैते मां जुगुप्संति तथैते सर्वेषां स्वजनपरजनानां जुगुप्सार्हा भवंत्विति विचिंत्य तेन पाप्मना विप्रेण निजात्मजानाहूय प्रोक्तं भोः पुत्रा अहं जीवितव्यादुद्विग्नो जातः. एषोऽस्मत्कुलाचारो वर्तते यत्पित्रा मर्तुकामेन कुटुंबस्य मंत्रोद्भिनः पशुर्देयो यथा सर्वेषामृद्धिर्वृद्धिः कल्याणं संततिवृद्धिश्च भवति. एतत्पित्रोक्तं श्रुत्वा ते पुत्राः पशुवन्मंदबुद्धय एकं पशुं समानीयार्पयित्वैवं जगुर्हे तातैनं पशुं मंत्रोद्भितं कृत्वास्माकं देहि? ततः स सेडुकः पापात्मा स्वांगमलेनोद्वर्त्योद्वर्त्य तेनान्नेन तं पशुं भोजयामास. ततः स पशुः कुष्ठीबभूव. ततः स पापात्मा

न हि कस्यापि पैतृकी ॥ १ ॥ एवं विचार्य स दर्दुरोऽस्मद्वंदनहेतोः सोपानमार्गेणोत्प्लुत्योत्प्लुत्य निर्गत्य मार्गे यावदायाति तावत्तुरंगमपादखुरक्षुण्णो भेको मृतः, ततो मृत्वा सौधर्मदेवलोके दर्दुरांकनाम्ना विमाने देवः समुत्पन्नः. इतश्चेंद्रः सदसि देवपरिवृतस्तव गुणानवर्णयत्, क्षायिकसम्यक्त्ववान् भरते यादृक् श्रेणिको वर्तते तादृगन्यः कोऽपि नास्ति, तद्वचनमश्रद्दधानोऽसौ त्वत्परीक्षार्थमागतः, स देवो दर्दुरांको गोशीर्षचंदनेन मम चरणावर्चयत, तव दृष्टिमोहार्थमन्यत्सर्वं व्यधीत्. पुनः श्रेणिको बभाषे हे भगवन् प्रभोः क्षुतेऽनेनामंगलं कथं प्रतिपादितं? अन्येषां मांगल्यामांगल्यानि कथं प्रतिपादितानि? एतद्राज्ञोक्तं वचः श्रुत्वा भगवानाह मया क्षुते एष प्रोवाच त्वं किमद्यापि भवे तिष्ठसि? मृत्वा शीघ्रं मोक्षं प्रयाहीत्याशीर्वचो न तु हीनवचः १. तव चिरंजीवेत्याशीर्वचो यतोऽत्र भवतः सुखं वर्तते, मृतो नरकं यास्यसि २. अभयो जीवन् धर्मं विधत्ते, मृतोऽनुत्तरविमाने यास्यति, अतो देवेनोक्तं जीव वा म्रियस्व वेति. ३. कालसौकरिकस्य क्षुते देवेनोक्तं मा जीव मा मृथा यतो जीवन् जीवघातादिपातकं करोति, मृतः सप्तमं नरकं यास्यति. पुनः श्रेणिको बभाषे त्वयि नाथे सति कथं मे नरके गतिः? तदा भगवानेवं बभाषे हे नृपते त्वं पुरा नरके बद्धायुर्वर्तसे, तेन

स्वयमसद्धर्मकर्म करोतिस्म. तदा वयमत्रागताः, तदानीं द्वाःस्थो निजस्थाने तं विप्रं स्थापयित्वा देशनां श्रोतुं प्रचलितः, ततः स सेडुकद्वाःस्थो दुर्गाणामग्रतः समागतं बलिं जन्मादृष्टमिवाकंठं बुभुजे. ततश्चाकंठभुक्तान्नदोषाद्ग्रीष्मोष्णतापात्तस्य तृषा समुत्पन्ना, तया तृषया मरुपांथ इव स व्याकुलो बभूव, परं किं करोति? द्वाःस्थभियान्यत्र कुत्रापि प्रपादिषु जलपानार्थं तत्स्थानं त्यक्त्वा गंतुं न शक्नोति. अथ तृषातुरः सेडुको मनस्येवमचिंतयद्धन्यास्ते जलचरा जीवा ये प्रत्यहं स्वेच्छया जले जलकेलिं कुर्वंति, अहमधन्यो यत्तृषातुरो जलं विना दुनोमि. ततो वारि वारीत्यारटंस्तृषार्तः स विपद्येहैव नगरद्वारवाप्यां दर्दुरत्वेनोदपद्यत. इतश्च विहरंतो वयं भूयोऽप्यत्र नगरे समागताः, ततः ससंभ्रमा लोका अस्मद्वंदनाय प्रचेलुः. स भेको जलहारिमुखादस्मदागमनं श्रुत्वा क्वाप्येवं मया श्रुतमित्यूहापोहं कुर्वाणस्य तस्य स्वप्नस्मरणवज्जातिस्मरणं तत्क्षणादेवाभवत, स दर्दुर एवं दध्यौ पुराहं सेडुकनामा विप्रोऽभूवं, क्रमेणाहं द्वाःस्थसेवको जातः, द्वाःस्थो मां द्वाररक्षकं कृत्वा स्वयं भगवंतं श्रीवीरं वंदितुमगात, स भगवान् सांप्रतमिहागतोऽस्ति, एता जलहारिण्यस्तस्य भगवतः समागमनवार्तां कुर्वंति, तस्मात्—यथैते यांति तं दृष्टुं । लोका यास्याम्यहं तथा ॥ सर्वसाधारणी गंगा।

त्युक्त्वा दिव्यनक्षत्रश्रेणिसोदरं रत्ननिर्मितमष्टादशचक्रं नाम्नैकहारं तथा द्वितीयं गोलकद्वयं ददौ. ततस्तेन देवेन भणितं च—योऽमुं संधास्यते हारं । त्रुटितं स मरिष्यति ॥ इत्युदीर्य तिरोधत्त । स्वप्नदृष्ट इवामरः ॥ १ ॥ दिव्यं देव्यै ददौ हारं । चेल्लणायै मनोहरं ॥ गोलकद्वितयं तच्च । नंदायै नृपतिर्मुदा ॥ २ ॥ ततः सा नंदा चेल्लणासपत्नीर्ष्यया राजानमेवं बभाषे भो राजंश्चेल्लणायै हाररत्नं दत्तं, मह्यमिदं गोलकद्वयं दत्तमनेन गोलकद्वयेनाहं किं करोमीत्युक्त्वा तद्गोलकद्वयं स्तंभे ह्यास्फाल्य स्फोटयामास. तदा चैकस्माद्गोलकाच्चंद्रद्वंद्वमिव कुंडलद्वंद्वं निःसृतं, द्वितीयगोलकादनन्यसदृशं देवदुष्यक्षौमयुग्मं च निर्गतं. तानि दिव्यानि कुंडलवस्त्ररत्नानि नंदा सानंदमगृहीत्, अनभ्रो वृष्टिलाभः कस्य महदानंददायको न भवति? अथ राजा कपिलां ययाचे हे कपिले त्वं श्रद्धयान्विता, त्वं मुनिभ्यो भिक्षां प्रयच्छ? त्वामहं धनोच्चयैर्निर्भिक्षां करोमि, कपिलोचे यदि त्वं मां सर्वां स्वर्णमयीं विधत्से. अथवा क्रोधारुणो हिनस्सि तथाप्येतत्कृत्यं प्राणांतेऽपि न करोमि, सृतं पुनः भाषणेन. ततो राज्ञा कालसौकरिकस्याप्युक्तं भोः कालसौकरिक त्वं हिंसां मुंच? प्रत्यहं पंचशतमहिषान्मा मारय? यत्तव रोचते स्वर्णमणिमाणिक्यादि तत्सर्वं यथेप्सितं ददामि, सशानं ज-

त्वं तत्र यास्यसि, यतः शुभाशुभानां कर्मणां फलं भोक्तव्यं, तद् द्वयमप्यन्यथा कर्तुं न शक्यते, तथा त्वं राजन्नाग्यः पद्मनाभाभिधो जिनो भावीत्यतो चिंतां मा विधेहि? पुनः श्रेणिकोऽवदद् हे भगवन् कोऽपि स उपायोऽस्ति येन मया नरके न गम्यते, स्वाम्यूचे यदि कपिलाविप्री मुनिभ्यो भावेन दानं ददाति, तथा कालसौकरिको हिंसां मुंचति तदा ते नरकान्मोक्षो जायेत नान्यथेति. श्रेणिको राजा सम्यगित्युपदेशं हृदि हारमिवोद्वहन् श्रीमहावीरं प्रणम्य स्वाश्रयंप्रति चचाल.

अत्रांतरे दर्दुरांकदेवेन कश्चित्साधुः कैवर्त इवानार्यं विदधद्दर्शितः, तं मुनिं दर्शनमालिन्यं कुर्वंतं वीक्ष्य सामवाक्यैस्तत्कार्यतो तं निवार्य स्वगृहंप्रति चलितः श्रेणिकः, पुनरपि स देव एकां साध्वीमुदरिणीं दर्शयामास. ततः शासनमालिन्यं माभूदिति धिया तां निजगृहे जुगोप, परं तस्य श्रेणिकस्य मनो मनागपि सम्यक्त्वान्न मम्ले. अथ देवोऽवधिज्ञानेन तं सम्यक्त्वे निश्चलं ज्ञात्वा प्रत्यक्षो भूत्वा श्रेणिकंप्रत्यूचे साधु साधु भो महात्मंस्तव सम्यक्त्वं. यद् देवेंद्रो देवसदसि तव सम्यक्त्वमवर्णयद्यथा श्रेणिकः सम्यक्त्वाद्देवेंद्रादिभिरपि न चाल्यते, तद्वाक्यमश्रद्दधानोऽहमत्रागां, परं भो नरेंद्र यादृशं सम्यक्त्वं देवेंद्रेण सभायां वर्णितं तादृशमेव साक्षात्त्वयि दृष्टं, धन्यस्त्वमि-

दिन्नो मग्गुत्ति भाववसा ॥ १६ ॥ व्याख्या—' विरयाविरयत्ति ' प्राकृतत्वाद्विभक्तिलोपे विरताविरतसहोदराभ्यां लघुज्येष्ठभ्रातृभ्यामहं सदोपवासी, अहं सदा ब्रह्मचारीति भणितायाः श्राविकाया उदकभरेण भृतया सरिता मार्गो दत्तः, भाववशाद्भावप्राधान्यमंगीकृत्येतिरर्थवहितः, स च वाक्यमाप्तौ, यद्वा विरताविरतसहोदरयोः श्राविकया ज्येष्ठभ्रातृयोषिता मम भर्ता सदा ब्रह्मचारी, देवरश्च सदोपवासी स्यात्तदा त्वया मार्गो देय इति भणितया सरिता भावप्राधान्यमंगीकृत्य मार्गो दत्त इति, शेषं पूर्ववदिति गाथार्थः. ॥ १६ ॥ विस्तरार्थस्तु कथानकादवसेयस्तत्कथा चेयं, यथा—

कस्यांचित्पुर्यां सूरसेनो नाम राजास्ति, तस्य लघुसहोदरः सोमनामा, ताभ्यां सद्गुरूपांते धर्मः श्रुतः. ततः सूरसेनः श्रावको जातः, सोमश्च धर्मं श्रुत्वा प्रव्रजितः, क्रमेण गीतार्थो जातः, एकत्वविहारेण पृथिव्यां विहरन् क्रमेण तस्याः पुर्या आसन्ने वने समागतः. अथ सूरसेनस्य पट्टराज्ञी सोत्कंठा देवरं मुनिं वंदितुं सायं स्वामिनमापृच्छ्यैवमभिग्रहं जग्राह. प्रातर्मया सोमाभिधं महामुनिं सपरिवारया वंदित्वा भोक्तव्यं. नान्यथेत्यभिग्रहं गृहीत्वा परिवारपरिवृता प्रभाते मुनिवंदनाय यावद्विनिर्ययौ तावत्तदंतराले एका नद्यस्ति, सा निशीथसमयेऽकालपूरेण पूरिता वहति. ततो

प्रत्युवाच हे राजन् हिंसायां को दोषोऽस्ति? यया बहवो मानवा जीवंति तां हिंसामहं कथं त्यजामि? नो राजन्नेतदर्थं त्वयाहं पुनर्न वाच्यः, मम क्रमागतं व्यापारं त्यक्त्वान्यत्कार्यं प्राणांतेऽपि न करोमि. ततो राज्ञा सोऽहोरात्रमंधकूपे क्षिप्त्वा धारितः, प्रभाते श्रेणिको भगवद्वंदनाय गतः, स्वामिनं नत्वैवं व्यजिज्ञपद् हे भगवन् मया कालसौकरिको घोरांधकारे कूपे क्षिप्त्वाहोरात्रं सूनाकार्यमत्याजि, तदा सर्वज्ञो भगवानभिदधे राजन्नेष पापात्मा तत्रांधकूपे महिषाणां पंचशतानि मृन्मयानि स्वयं निर्मायावधीत्, एष एतत्कार्यं प्राणांतेऽपि न त्यजति. ततः स्वामिनं नत्वा प्रत्यावृत्य तत्समीपे गतः, तत्र तान् मृन्मयान् महिषान् मारितानपश्यत. तत उद्विग्नमनाः श्रेणिको दध्यौ धिग्मे पुराकृतं कर्म, भगवद्भिरपि नान्यथा भवति. वीरागमनमाकर्ण्य । मुदांभोहारिणीमुखात् ॥ निर्गतो वंदनोत्कंठो । दर्दुरो भावतो भृशं ॥ १ ॥ स्वस्थानात्स गतो मार्गे । तुरंगपदपीडितः ॥ भावनातो विशुद्धात्मा । दर्दुरांकोऽभवत्सुरः ॥ २ ॥ इति भावनायां दर्दुरांकदेवकथानकमुक्तं, प्रसंगतः सम्यक्त्वदृढतायां श्रेणिकस्यापि किंचित्कथानकं प्रोक्तं. अथ भ्रातृद्वयदृष्टांतेन भावनां दृढयति—

॥ मूलम् ॥—विरयाविरयसहोयर । उदगस्स भरेण भरियसरियाए ॥ भणियाइ सावियाए ।

वाक्यं यावत्सम्यगुवाच तावत्सा नदीदेवी वामदक्षिणक्षिप्तवारिभिर्द्विधाभूय तस्या राज्ञ्या मार्गं ददौ, तदानीं सा राज्ञी परे तटे गत्वा स्वं धन्यं मन्यमाना तं महामुनिं भक्त्या प्रणनाम, मुनिना धर्मलाभाशीर्दत्ता, ततस्तदंतिके सा धर्मं शुश्राव, धर्मकथानंतरं मुनिना पृष्टा हे भाविके दुस्तरपूरभयंकरां नदीमुत्तीर्य त्वं कथमत्र समागता? तव नद्या कथं मार्गो दत्तः? ततस्तया भर्तुर्वाक्यं सर्वं प्रोक्तं, पुनः सा मुनीश्वरं पप्रच्छ हे भगवन्मम भर्तुर्ब्रह्मचारिता कथं घटते यन्नद्या मार्गो दत्तः? ममातीवाश्चर्यं भवति. भगवानाह हे भाविके शृणु?—मम दीक्षादिनादारभ्य तव भर्ता मम सहोदरो व्रताकांक्षी वैराग्यवानपि राज्यधुराधरणाक्षमो लोकानुग्रहकाम्यया परोपकारपरो राजा राज्यं कुर्वन् गृहे तिष्ठति, भोगाननुभवन्नपि भावतो ब्रह्मचारित्वान्नद्या मार्गो दत्तः अतो हे भाविके तव भर्ता व्यवहारतो राज्यं करोति भोगाननुभवति च, किंतु भावतस्त्वसौ ब्रह्मचार्येव. तथा—तदेवं गृहवासेऽपि । पंकजस्येव तस्थुषः ॥ निर्लेपमनसो राज्ञो । घटते ब्रह्मचारिता ॥ १ ॥ मुनेरेतद्वचो निशम्य हर्षोल्लसितमानसा राज्ञी मुनिं नत्वा परमानंदमुद्वहंती तद्वनस्यैकदेशे गत्वैकस्य वृक्षस्याधो भोजनार्थं सपरिकरा तस्थौ. तत्र तया राज्ञ्या स्वपरिच्छदहेतवे रसवतीं कारयित्वा तया शुद्धरसवत्या महामुनिं प्रतिलाभ्य मुनेः

व्याकुलमना राज्ञी प्रभाते निजवल्लभं पप्रच्छ हे प्राणेशासौ मम मनोरथोऽद्य कथं पूर्यते? राजोवाच हे देवीदृशं खेदं माकार्षीः, एतत्तु सुकरं वर्तते, यतस्त्वं सपरिच्छदा स्वस्थमना नद्यंतिके गत्वा नदीं देवीं समाह्वानपुरस्सरं करौ योजयित्वा शुद्धमानसेदं वचो वदेर्यथा—हे देवि नदि जर्तो मे। देवरव्रतवासरात्॥ आरभ्य व्रतचारी चे—न्मार्गं देहि तदा द्रुतं॥ १॥ राज्ञ एतद्वचः श्रुत्वा राज्ञी विस्मिता दध्यावहोऽसंबद्धवाक्यं राजा किं वदति? पंचमो लोकपालोऽप्येवं वदति तर्हि लोके सत्यवादी को भविष्यति? भ्रातृव्रतदिनानंतरमस्य पुत्रसंततिर्मय्येव जातास्ति तत्सर्वं ब्रह्मचारित्वं विदितं वर्तते, अहो महदसत्यं राजा वक्ति, परं राज्ञः स्वेच्छया जल्पतः को निवारयति? अथवा किमनेन विकल्पेन? सांप्रतं सर्वं ज्ञास्यते व्रतस्वरूपं, संप्रति तु पतिवाक्यं करोमि, पतिनिर्देशसंशये पतिव्रतत्वखंडना भवेत्, यतः—सती पत्युः प्रभोः पत्ति—र्गुरोः शिष्यः पितुः सुतः॥ आदेशे संशयं कुर्वन्। खंडयत्यात्मनो व्रतं॥ १॥ एवं विमृश्य हर्षोत्फुल्लमानसा राज्ञी सपरिच्छदा मिलल्लोकसंकटीभूतभूतले नदीतीरे समागता, तत्रागत्य नदीदेवीपुरो भूत्वा विनयावनम्रदेहा करौ संयोज्य भूतलन्यस्तमस्तका पुनरूर्ध्वीभूय नदीदेवीपुरतोऽर्घ्यं पूरयित्वा शुद्धमानसा स्वभर्तृकथितं

शङ्क्याः ॥ तस्माच्च लोकैः सततं विधेयो । भावो भवांभोनिधियानपात्रं ॥ ६ ॥ इति भावनायां भ्रातृद्वयकथानकं समाप्तं. अथ चंडरुद्राचार्यशिष्यभावनामाह—

॥ मूलम् ॥—सिरिचंडरुद्दगुरुणा । ताडिज्जंतोवि दंडघाएणं ॥ तक्कालं तस्सीसो । सुहलेसो केवली जाओ ॥ १७ ॥ व्याख्या—श्रीचंडरुद्राचार्यगुरुणा ताड्यमानोऽपि पीड्यमानोऽपि केन ? दंडघातेन, तत्कालं तत्क्षणं तस्य शिष्यः शुभलेश्यः शुभपरिणामः केवली जात इति गाथार्थः. ॥ ॥ १७ ॥ विशेषार्थस्तु कथानकादवसेयस्तच्चैवं—आचार्यः पंचधाचार—परिचर्यापरायणः ॥ चंडरुद्रः श्रुतांभोधेः । पारीणोऽजनि विश्रुतः ॥ १ ॥ स श्रीचंडरुद्राचार्यः स्वभावेन रोषणो निरतीचारचारित्रेण तपसा चात्मानं पवित्रयन् गच्छाद् दूरस्थः पृथिव्यां विजहार. इतश्च कदाचिच्चंडरुद्राचार्यः पृथिव्यां विचरन्नुज्जयिन्यां नगर्यामुद्याने समागात्, तस्यामुज्जयिन्यामेकस्मिन् दिने कश्चिद्व्यवहारिपुत्रो नूतनकृतोद्वाहो मित्रैः समं तत्रागतः, तस्य मित्रैः प्रोक्तं भोः साधव एषोऽस्मत्सखा संसाराद्विरक्तो भवदंतिके दीक्षां गृहीतुमिच्छति, अतो भवद्भिरस्य दीक्षा देया. ततस्ते साधवस्तं गंधमाल्यवस्त्रवरिष्ठनेपथ्यप्रथितोत्सवं विलोक्य तान् हास्यकारकान् विज्ञाय चंडरुद्राचार्यगुरूपांते प्रेषयामा-

पारणं कारयित्वा ततः पूर्णाभिग्रहा राज्ञी स्वयं बुभुजे. ततः स्वगृहे गंतुकामया महादेव्या मुनिः पृष्टो हे महामुने मया कथं नद्युत्तीर्या? ततः प्रशांतवाग्मुनिराह, यथा—नदीदेवी त्वया भाष्या । यद्यसौ मुनिराव्रतात ॥ उपोषितश्चरेन्नित्यं । तदा मार्गं प्रयच्छ मे ॥ १ ॥ पुनर्विस्मयमापन्ना । राज्ञी नद्यास्तटं गता ॥ श्रावयित्वा मुनेर्वाक्यं । नदीं तीर्त्वा ययौ गृहं ॥ २ ॥ ततो राज्ञी राज्ञोऽग्रे गत्वा सर्वं वृत्तांतं निवेद्य पप्रच्छ हे स्वामिन् मयाद्य पारणं कारितः स महामुनिः कथमुपोषितः? राज्ञोचे हे देवि त्वं मुग्धासि, त्वं धर्मतत्वं न जानासि, निरीहतया द्विचत्वारिंशद्दोषैरदुष्टमाहारं कुर्वाणो मुनिरुपोषित एव. यतः—निरवज्जाहारेणं । साहूणं निच्चमेव उववासो ॥ उत्तरगुणवड्ढिकए । तहवि हु उववासमिच्छंति ॥ १ ॥ तथा—अकृताकारितं शुद्ध—माहारं धर्महेतवे ॥ अश्नतोऽपि मुनेर्नित्यो—पवासफलमश्नुते ॥ २ ॥ मनो मूलं वचः स्कंधः । क्रिया शाखादिविस्तरः ॥ धर्मवृक्षस्य तन्मूले । दृढे सर्वं प्रजायते ॥ ३ ॥ स्वर्नतुर्देवरस्यापि । माहात्म्यं वीक्ष्य तादृशं ॥ अनुमोदनयैवात्मा । तया राज्ञ्या पवित्रितः ॥ ४ ॥ कियत्काले गते राजा । राज्ञ्यपि व्रतमाददे ॥ शेषकर्मक्षयं कृत्वा । मोक्षश्रियमशिश्रियत ॥ ५ ॥ एवं तयोर्भाविनया च नद्या । मार्गः प्रदत्तो नृपपट्ट-

त्वरं निशि चचाल. ततस्तेन नवदीक्षितेन समं चलितः. तमसाछन्ने मार्गे निम्नोन्नते पदे पदे प्रस्खलन् भूमौ पतंश्चंडरुद्राचार्यो गुरुः शिष्यंप्रति रोषणो भृशं चुकोप, रे पापिष्ट त्वया कीदृक्पंथाः शोधित इत्युक्त्वा दंडघातेन ताडितोऽपि सुशिष्यश्चिंतयत्यहो ममैष गुरुः स्वगछे सुसंस्थितः सुशिष्यैः परिवृतः समाधिचित्तो मया कुशिष्येण पीडितो निशायां चालितः, सद्गुरुर्मां शिक्षयति. एवं चिंतयन् दंडघातादि सम्यक् सहते. ततः स चिंतयति, यथा—नमस्तीर्थंकरायास्तु । स्वस्त्यस्तु श्रुतसंपदे ॥ क्व तद्दृश्यं क्व वा माद्दृ—ग्गुरुश्चेन्न प्रसीदति ॥ १ ॥ धन्यास्ते तैर्जितं तेषां । सुलब्धं जन्म जीवितं ॥ बाला इवार्जवेनैव । ये गुरून् पर्युपासते ॥ २ ॥ एवं शुक्लध्यानं समारूढ उपशमश्रेण्या कर्मदलिकानुपसमाप्य पुनः क्षपकश्रेण्या तान् कर्मांशान् क्षिप्त्वा मोहमदादिचमूं जित्वैकया गुरुसेवया चंद्रमंडलसमुज्ज्वलं केवलज्ञानमाप. तेन ज्ञानेन मार्गं सम्यक् समवलोकयन् विषमं मार्गं त्यक्त्वा समेनैव पथानयत, तं गुरुं धर्मप्रीत्या प्रीणयामास. अथ तेन गुरुणा प्रभाते तस्य शिष्यस्य शिरसि रक्तश्रावं वीक्ष्य चिंतितं, यथा—अहो शांतिरहो क्षांति—रहो दांतिरहो व्रतं ॥ फलितोऽस्य फलैः स्फीतैः । शिष्यस्यापि तपस्तरुः ॥ १ ॥ शिष्योऽपि माननीयोऽयं । यथा वृद्धेन

सुः. तत्रापि तैस्तथैव प्रोक्तं. ततो गुरुः सरोषस्तान् बभाषे भो प्रासुका भस्ममानयत? ततस्तैः प्रहासिभिर्भस्मापि समानिन्ये. ततो गुरुः स्वयं तस्य शिरसो लोचं चकार. ततः सोऽल्पकर्मत्वान्मनस्येवमाचिंतयदहो मया स्वयमेव दीक्षा गृहीतात्र गुरोः को दोषः? अथ मया गुर्वंतिके दीक्षा गृहीता सा कथं त्यज्यते? मित्राणामुक्तं यूयं गृहे यात? अथ मम गृहेण कार्यं नास्ति, सृतं वैषयिकसुखेन, सृतं च गृहवासेन, तैर्मित्रैर्भोगार्थं बहूक्तोऽपि स्वां गृहीतां दीक्षां नामुंचत, यतः—अलसायंतेणावि स-ज्जणेण जे अक्करा समुल्लविया ॥ ते पत्थरटंकुक्किरि-अव्व न अन्नहा हुंति ॥ १ ॥ मया भावेन गृहीता दीक्षा प्राणांतेऽपि न त्यजामि, तत् श्रुत्वा ते सर्वेऽपि सुहृदो विषण्णाः स्वस्य गृहं गताः, स तु नवदीक्षितो महामुनिर्गुर्वंतिके गुरुसेवातत्परो विनयावनम्रदेहस्तत्रैव तस्थौ. ततो वाचयंमशिरोमणिं मम बांधवो बलात्कारं करिष्यतीति विचिंत्य स गुरुमेवमुवाच हे भगवन्मयि प्रसादं विधायेतो द्रुतं विहारं कुरु? अन्यथात्र स्थितस्य मद्बांधवेभ्यो भवतां महद्भयं भविष्यति. गुरुराह भो महात्मन्निशायां नाहं पश्यामि, ततस्त्वं प्रथमं गत्वा मार्गमालोक्य पुनरागच्छ? ततस्तेन तत्र गत्वा पुनरागत्य विज्ञप्तं हे भगवन् मया मार्गो निरूपितः, पादाववधार्यतां. तेनेत्युक्ते स गुरुः

संपद्यते, धर्मस्यापि साधको भाव एव भणितः, तथा धर्मवृक्षस्यापि बीजं मूलं भावमेव, अत्र द्वितीयार्थे प्रथमा. जगद्गुरवः श्रीवीरस्वामिनो ब्रुवंत इति गाथार्थः. ॥ १९ ॥ पुनर्भावस्योत्कृष्टत्वमाह—

॥ मूलम् ॥—किं बहुणा भणिएणं । तत्तं निसुणेह भो महासत्ता ॥ मोक्खतरुबीयभूओ । जीवाण सुहावहो भावो ॥ २० ॥ बहुना भणितेनोक्तेन किं? न किमपीति, भो महासत्वा महा-[illegible]स्तत्वं निशृणुत? मोक्षतरुबीजभूतो जीवानां प्राणिनां सुखावहो भावो ज्ञेय इति गाथार्थः. ॥

॥ अथ चतुर्विधं धर्मं समर्थयन् नामगर्भितां गाथमाह—

॥ मूलम् ॥—दाणसीलतवभावणा । जो कुणइ सत्तिभत्तिजुओ य ॥ दिविंदविंदमहियं । [illegible]ो लहइ सिद्धिसुहं ॥ २१ ॥ व्याख्या—दानशीलतपोभावना यः करोति शक्तिभक्तियुक्तो [illegible]हितं पूजितमत्र देवेंद्रसूरिरिति स्वनाम सूचितं, अचिरात्स्तोकेनैव कालेन स लभते [illegible]द्धिसुखं मोक्षसुखमिति गाथार्थः. ॥ २१ ॥ इति श्रीमत्तपागछाधिराजभट्टारकश्रीहीरवि-[illegible]ालंकारभट्टारकश्रीविजयसेनसूरिराज्ये आचार्यश्रीविजयदेवसूरियौवराज्ये पंडितश्रीदेव-[illegible]रचितायां कुलकवृत्तौ श्रीधर्मरत्नमंजूषानाम्न्यां भावनाधर्मरूपश्चतुर्थो वक्षस्कारः समाप्तः.

किं मया ॥ त्रिधापि यस्य मे वंध्यं । स्थविरत्वं शमं विना ॥ २ ॥ इत्थं शिष्यगुणध्याना—दात्म-
दोषानुतापतः ॥ चंद्ररुद्रोऽपि रुद्रोद्य—त्कर्मद्रोहि मनोऽकरोत् ॥ ३ ॥ क्षणेन श्रेणिमासाद्य । क्षी-
णमोहः स केवलं । प्राप प्राप्यैव शिष्येण । भक्त्येव प्राभृतीकृतं ॥ ४ ॥ गुरोः स्वस्त्यस्तु पुण्यानां ।
तेषां यैरीदृशः किल ॥ सुशिष्यः प्राप्यते चिंता—मणिवद्गुणिनां गुणी ॥ ५ ॥ इत्थं श्रीचंडरुद्रस्य ।
शिष्येण गुणिना गुरुः ॥ श्रीमत् श्रीचंद्ररुद्रोऽपि । केवलज्ञानभास्कृतः ॥ ६ ॥ इति श्रीचंद्ररुद्रा-
चार्यशिष्यकथानकं समाप्तं. पुनर्भावनायाः प्रामाण्यमाह—

॥ मूलम् ॥—जं न हु भणिओ बंधो । जीवस्स वहेवि समिइगुत्ताणं ॥ भावो तत्थ पमाणं ।
न पमाणं कायवावारो ॥ १८ ॥ व्याख्या—यद्यस्मात्कारणाज्जीववधेऽपि बंधो न भणितः, हु नि-
श्चितं जीवघातेऽपि पापबंधो नोक्तः, केषां? समितिगुप्तानां मुनीनां, भाव एव तत्र प्रमाणं, न तु
कायव्यापारः प्रमाणमिति गाथार्थः. ॥ १८ ॥ पुनर्भावनामाह—

॥ मूलम् ॥—भावच्चिय परमत्थो । भावो धम्मस्स साहगो भणिओ ॥ धम्मतरुस्स य बीयं ।
भावच्चिय बिंति जगगुरुणो ॥ १९ ॥ व्याख्या—'भावच्चियत्ति' भाव एव परमार्थः, भावेन सर्वं

सूरी—श्वरशिष्यशिरोमणेः ॥ श्रीविजयराजसूरेः । शिष्यः सरलमानसः ॥१२॥ हिताय मंदबुद्धीनां । सुबोधाय सुबुद्धीनां ॥ चकार कुलकव्याख्यां । श्रीदेवविजयः सुधीः ॥ १३ ॥ पंचभिः कुलकं ॥ तच्छिष्यशेमुषीमुख्यो । नितांतविनयान्वितः ॥ स्वबुद्ध्या जयविजयः । शोधयामासिवानिमां ॥ १४ ॥ गांभीर्यौदार्यधैर्यादि—गुणमाणिक्यरोहणाः ॥ वैराग्यवासितस्वांता । विश्वविख्यातकीर्तयः ॥ १५ ॥ चतुर्विद्याविदः श्रीम—द्वाचकश्रेणिशेखराः ॥ जयंति जगति श्रीम—त्कल्याणविजयाह्वयाः ॥ १६ ॥ युग्मं ॥ तत्पादपंकजद्वंद्व—सेवाहेवाकिमानसैः ॥ श्रीसंघविजयाह्वानैः । श्रीधर्मविजयाह्वयैः ॥ १७ ॥ नैककोविदकोटीरैः । सर्वशास्त्रविशारदैः ॥ विचार्य प्रतिभावद्भि—रियं संभूय शोधिता ॥ १८ ॥ युग्मं ॥ आगमादिविरुद्धं य—द्भवेद्भ्रांतिवशादिह ॥ तद्धि मात्सर्यमुत्सृज्य । शोध्यं बुद्धिधनैर्बुधैः॥ ॥ १९ ॥ पुष्पदंताविमौ याव—द्यावज्जैनेंद्रशासनौ ॥ वाच्यमानमिदं ताव—ज्जीयाज्जगति वाङ्मयं ॥ ॥ २० ॥ प्रत्यक्षरं निरूप्यास्य । ग्रंथमानं विनिश्चितं ॥ श्लोकानां च सहस्राणि । द्वादशाप्यथ षोडश (१२०१६) ॥ २१ ॥ इति श्रीधर्मरत्नमंजूषायास्तृतीयो भागः समाप्तः. ॥ श्रीरस्तु ॥

॥ इति श्रीधर्मरत्नमंजूषा समाप्ता. ॥

॥ श्रीरस्तु ॥ अथ प्रशस्तिः—

श्रीमत्तपागणांभोधि—समुल्लासनचंद्रमाः ॥ क्रियोद्धरणधौरेयो । लब्धिपात्रं पवित्रधीः ॥१॥ सुदुस्तपतपस्तप्त्वा । द्वितीय इव गौतमः ॥ महदानंदविमलः । सूरिर्भूरिगुणोऽभवत ॥ २ ॥ युग्मं ॥ तत्पट्टपद्ममार्तंडः । पाखंडद्रुमकुंजरः ॥ प्रौढप्रमादमातंग—पंचाननसहोदरः ॥ ३ ॥ मनोवाक्कायगुप्तात्मा । पंचाचारपरायणः ॥ श्रीविजयदानसूरिः । समग्रगुणभूरभूत ॥ ४ ॥ युग्मं ॥ तत्पट्टद्रुमपाथोदः । पाथोदकेकिनामिव ॥ सर्वाणाम पि लोकाना—मासेवनकदर्शनः ॥ ५ ॥ दिल्लीमंडलभूपाला—कबरप्रतिबोधकृत ॥ श्रीशत्रुंजयतीर्थादि—करमुक्तिविधायकः ॥ ६ ॥ षड्दर्शनजनश्लाघ्यो । जीवामारीप्रवर्तकः ॥ श्रीहीरविजयसूरि—रभूत्सुविहिताग्रणीः ॥ ७ ॥ त्रिभिर्विशेषकं ॥ तत्पट्टे पट्टवैराग्य—वासनावासितात्मनां ॥ कोकंपूणगुणश्रेणि—मणिश्रेणिसरस्वतीं ॥ ८ ॥ श्रीविजयसेनसूरी—श्वराणां गुणशालिनां ॥ राज्ये विजयमानानां । प्रभूतप्रभूताभृतां ॥ ९ ॥ तत्पट्टे कैरवाराम—सुधाधामसमत्विषां ॥ श्रीविजयदेवसूरी—श्वराणां यौवराज्यके ॥ १० ॥ रसर्तुदर्शनचंद्र—वत्सरे विक्रमार्कतः ( १६६६ ) ॥ ज्येष्टमासे सिते पक्षे । पंचम्यां गुरुवासरे ॥ ११ ॥ श्रीविजयदान-

॥ समाप्तोऽयं ग्रंथो गुरुश्रीमच्चारित्रविजयसुप्रसादात ॥

लब्ध्वा यदीयचरणांबुजतारसारं । स्वादच्छटाधरितदिव्यसुधासमूहं ॥
संसारकाननतटे ह्यटताखिनेव । पीतो मया प्रवरबोधरसप्रवाहः ॥ १ ॥
वंदे मम गुरुं तं च । चारित्रविजयाह्वयं ॥ परोपकारिणां धुर्यं । चित्रं चारित्रमाश्रितं ॥ २ ॥ युग्मं.
चारित्रपूर्वा विजयाभिधाना । मुनीश्वराः सूरिवरस्य शिष्याः ।
आनंदपूर्वविजयाभिधस्य । जातास्तपागच्छसुनेतुरेते ॥ १ ॥

---

आ ग्रंथ श्रीजामनगरनिवासी पंडित श्रावक हीरालाल हंसराजे स्वपरना श्रेयमाटे पोताना श्रीजैनभास्करोदय छापखानामां छापी प्रसिद्ध कर्यो छे.

॥ श्रीजिनाय नमः ॥

# ॥ श्रीदानादिकुलकवृत्तिः ॥

( मूलकर्ता—श्रीदेवेंद्रसूरिः ) ( टीकाकार—श्रीलाभकुशलगणिः )

छपावी प्रसिद्ध करनार—पंडित श्रावक हीरालाल हंसराज ( जामनगरवाळा )

वीरसंवत्—२४४३. विक्रमसंवत—१९७३. सने—१९१७.

किं. रु.–६–८–०

☞ श्रीजैनभास्करोदय प्रेस. जामनगर. ☜

॥ श्रीजिनाय नमः ॥

## ॥ अथ श्रीदानादिकुलकवृत्तिः प्रारभ्यते ॥

( कर्त्ता—पंडित लाभकुशलगणी )

छपावी प्रसिद्ध करनार—पंडित श्रावक हीरालाल हंसराज ( जामनगरवाळा )

श्रीमहावीरं नमस्कृत्य । सर्वसिद्धिप्रदायकं ॥ वक्ष्ये बालावबोधार्थं । दानादिकुलकं वरं ॥१॥

व्याख्या—इह चेद्दानादिकुलकानां पूर्वपंडितैर्बहुकथाः सूत्रचरित्रादेरानीय संयोजिता लिखिताश्च, मयापि मद्बुद्ध्यनुसारेण तेषां कतिचित्कथाः श्रीदेवेंद्रसूरिकृतगाथाक्रममाश्रित्य प्रारभ्यंते. तत्र पूर्वं श्रीतीर्थंकरेण भगवता चतुर्धा धर्मः प्रकाशितः, स कः चतुर्धा—दानं १ शीलं २ तपः ३ भावनाख्यश्चतुर्विधः, तत्र पूर्वं दानधर्मो मुख्यो ज्ञातव्यः, तस्माद्दानकुलकं प्रथमं. शासननायकेनासन्नोपकारिणा श्रीमहावीरस्वामिना स प्रकाशितः. प्रथमं श्रीमहावीरेणात्मना दानं दत्तं, तस्याद्या गाथा—परिहरिअ रज्जसारो । उप्पाडिअ संजमिक्कगुरुभारो ॥ खंधाउ देवदूसं । वियरंतो जयउ वीर-

म्याह, गाथा–पिअमाइजाइजइणी–भज्जापुत्तत्तणेण सव्वेवि ॥ जीवा जाया वहुसो। जीवस्स एगमेगस्स ॥ २ ॥ व्याख्या—पितृमातृभ्रातृभगिनीभार्यापुत्रत्वेन सर्वेऽपि जीवा जाता बहुवारं जीवस्यैकैकस्य. ततो भ्रातुर्विशेषाग्रहेण समधिकं वर्षद्वयं विरागी सन् भगवांस्तस्थौ. ततस्त्रिवर्षानंतरं वार्षिकदानं दत्वा सुरासुरनरेंद्राणां महामहोत्सवपूर्वकं नंदिवर्द्धनमनुज्ञाप्यैकं देवदूष्यं वस्त्रमादाय सर्वालंकारवस्त्रादिरहितः सन् श्रीवीर एकाकी दीक्षां गृहीतवान्. अथानेकतपःसंयमानि निरतीचारतयाऽप्रमत्तः सन् स पालयति. अथ दीक्षितस्याऽपि भगवतो दानाधिकारो यथा–तत्र सोमिलाभिधो द्विजो भगवत्पितृमित्रीभूतोऽप्यभाग्यवशाज्जन्मदरिद्री कुत्रचिद्भिक्षावृत्तिं कुर्वन् देशांतरे गतः, पश्चाद्भगवतो दीक्षा गृहीता, ततः स द्विजो देशांतरं परिभ्रम्य किमप्यप्राप्तः सन् यथा गतस्तथा आगतः स्वगृहंप्रति, ततः स्वभार्यया कर्कशया तं निर्द्रव्यं समागतं दृष्ट्वा कर्कशवचनैर्निर्भर्त्सितः, तदा सा कथयति रे निर्भाग्यशिरोमणे, हे आजन्मदरिद्र, रे दुर्भग, रे निर्गुण, हे कुत्सितवेष त्वं कथं स्वमुखं लात्वा गृहं समागतः? अहं त्वां धनंविना साक्षाद्दरिद्ररूपं किं करोमि? तव अभाग्यवशादद्य गृहे किमपि नास्ति, यतः—

जिणो ॥ १ ॥ व्याख्या—राज्यसारं राज्यरहस्यं राज्यभारं द्रव्यं वा परिहृत्य संयमैकगुरुभारमुत्पाट्य ईदृशः श्रीमहावीरः स्कंधाद्देवदूष्यं वस्त्रं ददानः सन् जयवान् प्रवर्त्ततु, एतच्चरित्रं प्रसिद्धमेव, श्रीकल्पसूत्रवृत्त्यनुसारतो ज्ञेयं, तथापि स्वल्पचरित्रं लिख्यते, यथा—

क्षत्रियकुंडग्रामनगरे सिद्धार्थराजा परिवसति, तस्य पट्टराज्ञी त्रिशला, तया चतुर्दशस्वप्नसूचितः श्रीवर्द्धमानः प्रसवितः, अनुक्रमेण यौवनं प्राप्तः सन् स मालवनरपतिक्षत्रियस्य यशोदानाम्नीं पुत्रीं मातापित्रोराग्रहेण परिणीतवान्, तया सह विषयसुखं भुंजानोऽस्ति, ततो वीरस्य प्रियदर्शनानाम्नी पुत्री जाता, सा च प्रवरनरपतिसुतस्य स्वभागिनेयस्य जमालेः परिणायिता, तस्यापि शेषवतीनाम्नी पुत्री जाता, सा च भगवतो दौहित्रीत्यर्थः, ततोऽनंतरं भगवतोऽष्टाविंशतिवर्षातिक्रमे पितरौ तुर्यं स्वर्गं माहेंद्रं गतौ, ततो वीरः संपूर्णाभिग्रहः सन् नंदिवर्द्धनं ज्येष्ठभ्रातरं दीक्षार्थमनुज्ञापितवान्; स गाथातो भणति—जिठभाया मम जणणी—जणयविरहदुहियस्स ॥ तुहविरहम्मि सुंदर । सयंवि खारोवमो होई ॥ १ ॥ व्याख्या—ततो वीरंप्रति भणति ज्येष्ठभ्राता नंदिवर्द्धनः हे भ्रातः! जननीजनकमरणदुःखितस्य मम त्वद्विरहाग्निः हे सुंदर स्वयमपि क्षारोपमो भवति. विरक्तात्मा स्वा-

लहुअं । पञ्चणभंगो कज जेण ॥ ४ ॥ व्याख्या—सर्वेषां पदार्थानां मध्ये लघु तृणं, तृणादपि लघु तुषं, तृणतुषादिभ्योऽपि लघु प्रार्थनं, तस्मादपि लघु प्रार्थनाभंगः कृतो येन. ॥ ४ ॥ इति विचार्य सदयो वीरो देवदूष्यार्द्धं वस्त्रं ब्राह्मणाय दत्तवान्. अन्ये चेति कथयामासुः, यतः—जा संपत्त तां देहु धन । इम कहे श्रीमहावीर ॥ पितामित्रबांभणभणी । आधो दीधो चीर ॥ १ ॥ विप्रोऽपि महाप्रसाद इति कृत्वा पश्चाद्वलितः, स्वगृहसमीपे समागच्छंतं सचीरं स्वभर्त्तारं दृष्ट्वा हर्षिता सती ब्राह्मणी प्राह हे प्राणनाथ! हे स्वामिन्! हे भर्त्तः! सुखं समागतं? एवं बहुशिष्टवचनैः प्रमुदितो विप्रस्तून्नारकसमीपमागतः, तून्नारकेणोक्तं केनायं दत्तः? ततोक्तं महावीरेण दत्तः, ततस्तून्नारकेणोक्तं भो विप्र वीरात्तदर्द्धमपि समानय? संधिते सति तस्य लक्षमूल्यं समागमिष्यति, तदा तव च मम दारिद्र्यनाशो भविष्यति. ततो विप्रो व्याघुट्य स्वामिनः पश्चात परिभ्रमणं कृतवान्.

एकदा ऋजुवालिकानदीकंठे वायुयोगेन प्रभुस्कंधात्तद्वस्त्रं पतितं कंटके लग्नं, श्रीमहावीरेण सिंहावलोकनवत्पश्चाद्विलोकितं, कंटके पतितं च तद्विलोक्य विचारितं मम शासनं कंटकबहुलं भविष्यति. द्विजोऽपि कटंकाद्वस्त्रं गृहीत्वा तून्नारकसमीपे गतस्तून्नारकेणापि स्वविज्ञा-

अन्नं नास्त्युदकं नास्ति । नास्ति गेहे युगंधरी ॥ न शाकमध्ये लवणं । यन्नास्ति तन्न भुज्यते ॥१॥ अतो मद्गृहे त्वत्प्रसादात्किमपि नास्ति, केवलं दारिद्र्यमेवास्ति, पुनः सा प्राह रे निर्भाग्य? त्वयि देशांतरे गते सति श्रीवीरो मेघवत्परिवृष्टः, सर्वेऽपि धनिनो जाताः, एवं सति त्वं परदेशं गतः, इत्थं भार्यया तर्जितः सन् स निर्वेदमापन्नः, पुनः भार्या प्राह रे दरिद्र एनमेव स्वामिनं पश्चात् परिभ्रम, येनैतावंति वस्तूनि दत्तानि स एव त्वांप्रति दास्यति; इति श्रुत्वा सोमिलद्विजः श्रीमहावीरंप्रति मार्गयितुं गवेषमाणः सन् पश्चादागतः, भगवतोऽग्रे च करं योजयित्वा तेन बहुप्रार्थनां कर्तुमारब्धा, हे स्वामिन् दुःखितोऽस्मि, निराधारोऽस्मि, जन्मदरिद्री चास्मि, मया अनेकशो जनाः प्रार्थिताः, परं केनापि ममाऽऽशा न पूरिता, त्वं स्वामिन् पुष्करावर्त्तवत्परिवृष्टः, तदा अभाग्यशेखरोऽहं गृहे नाऽभूवं, तस्मादधुना त्वच्चरणे समागतोऽस्मि, हे स्वामिन्! सांप्रति किंचित्प्रदेहि, ममाशां निष्फलां मा कुरु? मम दारिद्र्यं चूरयेत्युक्त्वा ब्राह्मणजातित्वाद्बहुदीनवचनानि लपयितुं लग्नः, ततो भगवतोऽनुकंपा समुत्पन्ना, वीरेण विचारितं किं ददामि, मम निर्ग्रंथस्य पार्श्वे किमपि नास्ति, प्रार्थनाभंगेऽपि लघुता स्यात्, यतः—तिण लहुअ तुस लहुअं । तिणलहुअं च पत्थणा अहुअं ॥ तत्तो वि सोय

जिनेंद्रैर्मुनीश्वरैश्च धर्मदानं प्रशंसितं, धर्मवति पात्रबुद्ध्या मोक्षनिमित्तं भक्तत्वेन यद्दीयते तद्दानं श्रेष्ठं ज्ञातव्यमिति भावार्थः २, गाथा—दाणं सोहग्गकरं । दाणं आरुग्गकारणं परमं ॥ दाणं भोगनिहाणं । दाणं ठाणं गुणगणाणं ॥ ३ ॥ व्याख्या—दानं सौभाग्यकरं दातुः सौभाग्यं सर्वत्र विस्तारयति १, दानं पुनः आरोग्यादिकारणं परममुत्कृष्टं, दाता हि सर्वेषां दुःखानि स्फोटयति ततोऽसौ नीरोगशरीरं लभते २, पुनः दानं भोगनिधानं, दानात् सर्वेऽपि भोगं प्राप्नुवंति ३, दानं स्थानकं गुणसमूहानां, दानमध्ये सर्वे गुणाः समागताः ॥ ४ ॥ गाथा—दाणेण फुरइ कित्ती । दाणेण होइ निम्मला कांति ॥ दाणावज्जीअहिअउ । वैरिवि हु पाणिअं वहइ ॥ ४ ॥ व्याख्या—दानेन कृत्वा कीर्त्तिः प्रस्फुरति, जगन्मध्ये बहुकीर्त्तिर्जायते १, पुनः दानेन कृत्वा शरीरस्य निर्मला कांतिर्भवति २, तथा दानेनावर्जितहृदयः सन् वैरी अपि पानीयं वहति, पाठांतरे ' वैरीविहुं पाणिअं वहइ ' इति पाठे क्रोधानलज्वालया तप्तो वैरी दानात्पानीयोपमो भवति ॥ ४ ॥ गाथा—धणसब्बवाहजम्मे । जं घियदाणं कयं सुसाहूणं ॥ तक्कारणमुसभजिणो । तेलुक्कपिआमहो जाउ ॥ ५ ॥ व्याख्या—धनसार्थवाहभवे यद् घृतदानं दत्तं त्रयोदशभवे सुसाधून्प्रति, तत्कारणात् ऋषभजिन-

नचातुर्येण तत्तूणितं, विक्रये च तस्य लक्षैकदीनारं समागतं, ताभ्यामर्द्धमर्द्धं विभज्य च तद्द्रव्यं गृहीतं, स ब्राह्मणः सुखी जातश्च. भगवता दीक्षानंतरं दानेन लोकाः सुखिनो विहिताः, ततोऽनंतरं स्वामिना बहुषष्टाष्टमादितपांसि कृत्वा अनेकोपसर्गाश्च सहिताः, द्वादशवर्षानंतरं केवलज्ञानं प्राप्तं, देवैः समवसरणादिमहिमा कृतः, एकादशगणधराश्चतुर्दशसहस्रप्रमाणाः साधवः, षट्त्रिंशत्सहस्रसंख्याकाः साध्व्यः, एकोनषष्टिसहस्रोत्तरं लक्षैकं श्रावकप्रमाणं, त्रिलक्षाऽष्टादशसहस्रप्रमाणाः श्राविकाश्चेत्यादिपरिवारपरिवृतो वीरोऽनेकजीवान् प्रतिबोधयन् सन् त्रिंशद्वर्षाणि केवलपर्यायं पालयित्वा सर्वं द्वासप्ततिवर्षायुः प्रतिपाल्य मध्यमपापायां नगर्यां चतुर्थारकप्रांते मोक्षं गतः. ॥ इति दानविषये श्रीमहावीरदृष्टांतः ॥ १ ॥

अथ द्वितीयदृष्टांतः, गाथा—धम्मत्थकामभेया । तिविहं दाणं जयंमि विक्खायं ॥ तहवि अ जिणंदमुणिणो । धम्मदाणं पसंसंति ॥१॥ व्याख्या—धर्मदान १ अर्थदान २ कामदान ३ रूपं त्रिधा दानं जगति प्रसिद्धं. तद्दर्शयति–सुपात्रे यद्दानं दीयते तद्धर्मदानं १, कृत्यादिकवांछया यत्प्रथमदानं तदर्थदानं २, स्त्र्यादीनां भोगनिमित्तं यद्दानं तत्कामदानं ३, एतेषां त्रयाणां दानानां मध्ये

गुरुभ्यो दातुं लग्नः, तदा गुरुभिः प्रोक्तं एतान्यप्यकल्पनीयानि, वयं सचित्तफलानि न भक्षयामः, एवं गुरूणां निस्पृहत्वादिगुणरंजितः सन् स धनसार्थवाहः स्वचित्तेऽत्यंतमानंदितः, ततोऽनंतरं स सार्थवाहो गुरुसहितश्चलितः, पथि गछति सति कतिचिद्दिनेषु व्यतिक्रांतेषु सत्सु वर्षाऋतुः समायाता, तदा सर्वेऽपि लोकास्तत्रारण्यमध्य एव स्थिताः, केनचित् सार्थवाहमित्रेण श्रावकेणात्मवसनार्थं तृणगृहं कृतं, तत्र श्रीधर्मघोषसूरयः सुखेन स्थिताः स्वाध्यायादिधर्मध्यानं कुर्वंतः कालं निर्गमयंतिःस्म. अथ वर्षाऋतौ व्यतिक्रांते सति सार्थः प्रस्थितुं लग्नः, सार्थवाहेन रात्रौ सुप्तेन सता चिंतितं मया सर्वसार्थचिंता कृता, परं न कोऽपि विस्मृत इति चिंतिते सति श्रीधर्मघोषसूरयः संस्मृताः, अथ रात्रौ गतायां प्रभाते जैनधर्मिणा माणिभद्रनाम्ना मित्रेण सार्द्धं स सार्थवाहः गुरुसमीपे समागतः, गुरून् वंदित्वा स्वापराधं च क्षमयति, हे स्वामिन्! एतावद्भिर्दिवसैर्मया भवतां भोजनादिचिंता न कृता तन्मेऽपराधं क्षमध्वं? क्षमापात्रेण गुरुणा प्रोक्तं हे महानुभाव! साधूनामाहाराद्यलब्धौ तपसां वृद्धिः, लब्धौ च देहस्य धारणा, तस्मात्त्वं चिंतां मा कुरु? ततः सार्थवाहेनोक्तं स्वामिन् मम स्थानके साधवः प्रेषणीयाः, गुरुणापि सार्थवाहस्यातिभावं ज्ञात्वा द्वौ साधू तत्र प्रेषितौ, सार्थवहेना

स्वामी त्रैलोक्ये पितामहोपमो जातः, पितुः पिता स पितामहः कथ्यते. अथ श्रीआदिनाथस्य त्रयोदशभवपूर्वकं चरित्रं व्याख्यायते, यथा—इहैव जंबूद्वीपे पश्चिममहाविदेहक्षेत्रे क्षितिप्रतिष्ठं नाम नगरं, प्रसन्नचंद्रराजा राज्यं करोति, तत्र नगरे राजमान्यो धननामा सार्थवाहः परिवसति, स च दानशिरोमणिः परोपकारनिपुणो महाधनवांश्च. तेनैकदा नगरमध्ये उद्घोषणा दापिता, वसंतपुरंप्रति वयं गमिष्यामो यस्य कस्याप्यागमनेच्छा भवेत्तदा सोऽस्मत्सार्थे सुखेनायातु. अन्यच्च येषां केषामपि संबलादि न स्यात्ते मत्साकाशात्संबलादिवस्तूनि गृह्णंतु. इत्यादि कथिते सति बहवो लोकास्तत्सार्थे समागमयितुमारब्धाः, तस्मिन्समये श्रीधर्मघोषसूरयोऽपि धनसार्थवाहसमीपे समागताः, सार्थवाहेन गुरवो वंदिताः, पृष्टं च स्वामिन् किमर्थं समागताः? गुरुभिः प्रोक्तं वयमपि वसंतपुरे भवत्सार्थे समागमिष्यामः, इति गुरुवचः श्रुत्वा सार्थवाहेनोक्तं हे स्वामिन् मम भाग्यं महत्संजातं, इत्युक्त्वा तेन स्वसूपकाराय प्रोक्तं गुरुनिमित्तं भोजनादिचिंतां कुरु? गुरुणा प्रोक्तं तद्भोजनमस्माकमकल्पनीयमस्ति.

अथास्मिन्प्रस्तावे तत्र सार्थवाहसमीपे केनचित्सेवकेनाम्राण्यानीय ढौकितानि. तान्याम्राणि स

वैराग्येण चिंतां कर्त्तुं लग्नः, तदा स्वयंबुद्धमंत्री कथयति स्वामिन् चिंतां मा कुरु? एकदिनप्रतिपा-
लितापि दीक्षा मोक्षप्रदायिनी भवति, ततः स मासैकानशनं प्रतिपाद्य मृतः. इति चतुर्थो भवः ४.
तत ईशानदेवलोके ललितांगनामा देवो जातः, तत्र तस्य स्वयंप्रभा नाम्नी देवी वर्त्तते, तया स-
हातिप्रेमवान् स संतिष्ठते, अथैकदायुषि पूर्णे सति सा स्वयंप्रभा देवी प्रच्युता, ततः पश्चात्स ललि-
तांगनामा देवो बहु विरहदुःखं कर्त्तुं लग्नः, तदवसरे स्वयंबुद्धमंत्रिजीवो धर्मं पालयित्वा ईशानदे-
वलोके सामान्येंद्रो जातः, स तं प्रतिबोधयितुं लग्नः परं स्नेहवशात्स न प्रतिबुध्यति. ततोऽनंतरं स
सामानिकः सुरो यदा ज्ञानेन विलोकयति तदा धातकीखंडे पूर्वमहाविदेहे नंदिग्रामे नागिलनामा
दरिद्री परिवसति, तस्य गृहे नागश्रीभार्या, तया षण्णां पुत्रीणामुपरि सप्तमी पुत्री प्रसूता. सा चाऽव-
ल्लभत्वेन निर्नामिकेति नाम्ना ख्यातिं गता, वृद्धा जता, अन्यदैकस्मिन् महोत्सवे धनवतां लोका-
नां पुत्र्यः शृंगारादिपरिवेष्टितास्तया दृष्टाः, ताश्च सुखभक्षिकादींश्च भक्षयंतीर्दृष्ट्वा निर्नामिकया स्व-
मातुरग्रे शृंगारादिवस्तु मार्गितं, दुःखिनी माताब्रवीत्, रे गच्छ! अंबरतिलकनामपर्वतोपरि चटित्वा झं-
पापातं कुरु? इति श्रुत्वा निर्नामिका दुःखिनी सती गृहान्निर्गत्य अंबरतिलकपर्वतोपरि चटित्वा याव-

न्निपतति तावद्युगंधराचार्येण सा निवारिता. प्रोक्तं च बाले! बालमरणं मा कुरु? तदा सा गुरुसमीपमागत्य दूरात्तच्चरणे लग्ना, गुरुणा प्रतिबोधिता सती परमश्राविका जाता. सुखेन गृहे समागत्यानेकतपांसि कुर्वाणा तिष्ठति. परं दौर्भाग्यत्वात्तां कोऽपि परिणेतुं नेच्छति, वैराग्येण जिनधर्ममाराध्य प्रांते तयानशनं कृतं.

इतश्च स सामानिकसुरो ललितांगंप्रति वक्ति, अहो ललितांग! त्वं तस्याः स्वकीयं रूपं दर्शय? तव रूपं दृष्ट्वा सा ते चिंतनं करिष्यति, तेनैव ध्यानेन मृत्वा च तव भार्या भविष्यति. ललितांगेन तथेति प्रतिपद्य निर्नामिकायै स्वं रूपं दर्शितं. सापि तं दृष्ट्वा तद्ध्यानवशान्मरणं प्राप्य तत्स्थाने स्वयंप्रभा नाम्नी देवी समुत्पन्ना. अथ तौ देवदंपती विषयसुखानि भुंजानौ तिष्ठतः, अनुक्रमेणायुःप्रांते ततश्च्युतौ, इति पंचमो भवः ५. इहैव जंबूद्वीपे पूर्वमहाविदेहे पुष्कलावतीविजये लोहार्गलनाम्नि पुरवरे सुवर्णजंघराजा, लक्ष्मीर्भार्या, तयोः पुत्रो वज्रजंघनामा स जातः, देवी स्वयंप्रभापि तत्रैव विजये पुंडरीकिण्यां नगर्यां वज्रसेनचक्रवर्त्ती, गुणवती भार्या, तयोः पुत्री श्रीमती जाता, सर्वकलाभ्यासतः सा प्रवीणा जाता. एकदा स्वमंदिरगवाक्षस्था सती मनोरमाख्ये उद्याने सु-

स्थितनाम्नः साधोः केवलज्ञानसमुत्पत्तितो महोत्सवार्थं समागतानां देवानां वृंदं दृष्ट्वा जातिस्मरणं प्राप्य ललितांगस्वयंप्रजादेवीत्वादि सर्वं सस्मार. तदा तया चिंतितं यावदहं तं प्राणनाथं न लजे तावन्मुखेन न वदिष्यामीति तया मूकत्वमादृतं. पित्रा अनेके उपायाः कृताः, परं सा न जल्पति, कार्यावसरे हस्तसंज्ञया तथा पट्टकेऽक्षराणि लिखित्वा ज्ञापयति. तदैकांते धातृमात्रा पृष्टं हे पुत्रि! त्वं कस्मान्न ब्रवीषि? श्रीमत्या प्रोक्तं हे मातर्मम जातिस्मरणं समुत्पन्नं, पूर्वभवो दृष्टः, अनस्तं जर्तारं प्राप्य ब्रविष्यामि. ततस्तया स्वपूर्वजवस्य निखिला वार्त्ता धातुः पुरः कथिता. ततस्तया चतुरधात्र्या तद्वृत्तांतं चक्रिणे निरूप्य चित्रकारपार्श्वे तस्याः सर्वं पूर्वजवचरित्रं लिखापितं, तच्चित्रपट्टश्च सर्वनृपेभ्यो दर्शितः, परं न कोऽपि तत्संकेतं पूरयति. ततो वज्रसेनचक्रिणा लोहार्गलपुरस्य सुवर्णजंघराज्ञः पुत्राय वज्रजंघाय तत्पट्टो दर्शितः, तं दृष्ट्वा तस्यापि जातिस्मरणं समुत्पन्नं, एवं पूर्वजव संकेतपूरणेन श्रीमत्यपि संतुष्टा. पित्रा महोत्सवपूर्वकं तयोः पाणिग्रहणं कारितं. ततः सुवर्णजंघेनापि वज्रजंघाय राज्यं दत्वा दीक्षा गृहीता, उत्तमार्थश्च साधितः, वज्रसेनचक्र्यपि दीक्षां गृहीत्वा तीर्थंकरपदवीं प्राप्य मोक्षं गतः. वज्रजंघराज्ञो राज्यं पालयतः सतः श्रीमतीकुक्षौ पुत्रो जातः. अथैक

दा तस्मिन् पुत्रे वृद्धिं प्राप्ते सति रात्रौ तौ नृपराज्ञ्यौ चिंतयतः स्म, प्रातः पुत्राय राज्यं दत्वाऽवां दीक्षां गृहीष्यावः, इतश्च राज्यलोभी पुत्रश्चिंतयति वृद्धोऽपि पिता मम राज्यं न ददाति, इति विचिंत्य तेन विषधूमप्रयोगेण तौ मारितौ, इति षष्ठो भवः ६.

राजाराज्ञ्यौ मृत्वोत्तरकुरुक्षेत्रे युगलिकौ जातौ, इति सप्तमो भवः ७. ततो मृत्वा सौधर्मे देवलोके तौ देवौ जातौ, इति अष्टमो भवः ८. ततश्च्युत्वा तौ जंबूद्वीपे महाविदेहे क्षेत्रे क्षितिप्रतिष्ठितनगरे सुविधनामा वैद्यस्तस्य स जीवानंदनामा पुत्रो जातः, स चातिपंडितः परोपकारी च, तस्मिन्नेव नगरे श्रीमतीजीवोऽपीश्वरदत्तव्यवहारिणः केशवनामा पुत्रो जातः पुनस्तस्मिन्नेव नगरे राज्ञः पुत्रो महीधरो जातः, मंत्रीश्वरपुत्रो सुबुद्धिनाम जातः, सार्थवाहपुत्रो पूर्णभद्रो जातः, नगरश्रेष्ठिनः पुत्रश्च गुणाकरो जातः, एते षडपि सहैव जाताः सहैव संवर्द्धिताश्च. तेषां बाल्यादारभ्य बहुप्रीतिर्जाता. एकत्र स्थाने ते तिष्ठंति रमंते भुंजंति, च तेषां षण्णां क्षणमपि विरहो न भवति. सुखेन विषयसुखं भुंजानः सतः कालं निर्गमयंति. अथैकदा कश्चित्साधुः कुष्टरोग्यस्ति, तच्छरीरे कृमयः पतिताः संति, स साधुः षष्ठमपारणे आहारार्थं वैद्यगृहे समागतः, जीवानंदेनापि साधोः शरीरं रोगातुरं

कृमिभिश्च संकुलं दृष्ट्वा पंचानां मित्राणां कथितं, यदि यूयं रत्नकंबलं गोशीर्षचंदनं च मेलयेत तदाहं साधुशरीरं नीरोगं करोमि. इति श्रुत्वा ते पंचापि मित्राणि श्रेष्ठिनो हट्टे गतानि, तत्र च तैः श्रेष्ठिने कथितं, त्वं दीनारलक्षद्वयं गृहाण? अस्माकं च गोशीर्षचंदनं रत्नकंबलं च देहि? तदा श्रेष्ठिना प्रोक्तं किं करिष्यथ? तैः प्रोक्तं जीवानंदवैद्यो मुनिशरीरं चिकित्सयिष्यते, तदा श्रेष्ठिना कथितं यूयं बालका अपि एतादृग्बुद्धिवंतो धर्मधिया परोपकारिणो धन्या एव, अहं च वृद्धोऽस्मि, तेनाहमप्यमूल्यफलप्राप्तये तन्मूल्यं नो गृह्णामि.

इत्युक्त्वा श्रेष्ठिना तेभ्यो रत्नकंबलं गोशीर्षचंदनं च दत्तं. ततः स श्रेष्ठी तत्पुण्यमहिम्ना प्रांते चारित्रं प्रतिपाद्य मोक्षं गतः, अथ ते पंचापि सखायो रत्नकंबलं गोशीर्षचंदनं च गृहीत्वा जीवानंदवैद्यगृहे समागताः, जीवानंदोऽपि लक्षपाकतैलं गृहीत्वा पंचमित्रसहितो यत्र वने साधुः कायोत्सर्गेण स्थितस्तत्रायातः, ततो मुनिं वंदित्वा तदाज्ञां च मार्गयित्वा ते षडपि तस्य शुश्रूषां कर्तुं लग्नाः, प्रथमं सर्वशरीरे तैललेपः कृतः, समीपे मृततिर्यक्कलेवरं च समानीतं, अथ तदभ्यंगात्साधोर्मूर्ध्नि समागता, तावता तै रत्नकंबलेन तच्छरीरं वेष्टितं, तदा सर्वे कृमयो बहिर्निर्गत्य तद्रत्नकंबले लग्नाः,

तांश्च मृतकलेवरे परिष्ठापितवंतः, पुनस्तथैव कृतं, पुनस्तृतीयवारकेऽस्थिमध्यस्थाः कृमयोऽपि निर्गताः, एवं सर्वानपि कीटकान्निर्गतान् ज्ञात्वा, ततोऽनंतरं चंदनेन साधुशरीरं विलिप्तं नीरोगं च जातं कुष्टरोगश्च गतः, संरोहिण्यौषध्या च शरीरत्वक् समागता, शरीरं च सौवर्णवर्णं जातं, ततस्तैस्तत्कलेवरं तु तरुछायायां परिष्ठापितं, ततः साधुं वंदित्वा ते षमपि सखायः स्वस्वगृहे समागतास्तत्पुण्यं चानुमोदयितुं लग्नाः, शेषचंदनरत्नकंबलं च विक्रीय तद्द्रव्येण सुवर्णमयो जिनप्रासादः कारापितः, ततोऽनुक्रमेण कालांतरे तैः षड्भिर्दीक्षा गृहीता, निर्मलचारित्रं च प्रतिपाल्य प्रांतेऽनशनं कृत्वा कालं प्राप्ताः, इति नवमो भवः. । ९ ।

अथ ते षडपि जीवा द्वादशमे देवलोके द्वाविंशतिसागरोपमोत्कृष्टायुषो देवा जाताः, इति दशमो भवः १०. ततश्च्युत्वा जंबूद्वीपे पूर्वमहाविदेहे पुष्कलावतीविजये पुंडरीकिण्यां नगर्यां तीर्थंकरजीवो वज्रसेनराजा राज्यं भुनक्ति, तस्य गृहे धारिणी पट्टराज्ञी, तस्याः कुक्षौ पंच पुत्रा अनुक्रमेण समुत्पन्नाः, प्रथमो जीवानंदवैद्यजीवश्चतुर्दशस्वप्नसूचितश्चक्रवर्त्तिपदवीयोग्यो वज्रनाभनामा जातः १. द्वितीयो राजपुत्रो महीधरजीवो बाहुनामा जातः २. तृतीयो मंत्रिपुत्रः सुबुद्धिजीवः सुबाहुनामा जा-

तः १. द्वितीयो राजपुत्रो महीधरजीवो बाहुनामा जातः २. तृतीयो मंत्रिपुत्रः सुबुद्धिजीवः सुबाहुनामा जातः ३. चतुर्थः सार्थवाहपुत्रः पूर्णभद्रजीवः पीठनामा पुत्रो जातः ४. पंचमः श्रेष्ठिपुत्रो गुणाकरजीवो महापीठनामा जातः ५. एवं पंच पुत्रा जाताः, षष्ठः केशवजीवः सामंतनाम्नो राज्ञो गृहे पुत्रत्वेन सुयशानामा जातः ६. स सुयशाः पूर्वभवस्नेहाद्वज्रनाभंप्रति बहु सेवते. ततोऽनंतरं वज्रसेनतीर्थंकरो वार्षिकदानं दत्वा वज्रनाभाय राज्यं प्रदाय दीक्षां गृहीत्वा केवलज्ञानं प्राप्य तीर्थं च स्थापयित्वा विचरतिस्म. वज्रनाभेन राज्ञा चतुर्णां भ्रातॄणां देशान् विभज्य समर्पिताः, सुयशाश्च सेनानीः कृतः, अथैकदायुधशालायां चक्ररत्नं समुत्पन्नं, चतुर्दश रत्नानि नवनिधानानि च प्रादुर्भूतानि. ततः स षट्खंडं साधयित्वा चक्रवर्तिपदवीं भुंजानः सुखेनायुः प्रतिपालयति.

अथैकदा वज्रसेनो भगवान् पुंडरीकिण्यां नगर्यां समवसृतः, वज्रनाभचक्रिणा च बहुमहोत्सवपूर्वकं वंदितः, भगवता देशना दत्ता, तां श्रुत्वा वैराग्यं प्राप्य चक्री कथयति हे तात! यदि भवत्पुत्रत्वं प्राप्याप्यहं संसारे भ्रमेयं तदा ममाप्यभाग्यं ज्ञातव्यं. एतावंति दिवसानि भवद्दत्तं राज्यं मया पालितं, तथैवाधुना संयमप्रासादं कुरु? यथा पालयामि. ततश्चक्रिणा चतुर्भ्रातृसहितेन सेना-

नीप्रमुखपरिवृतेन च पुत्राय राज्यं दत्वा दीक्षा गृहीता. चक्रिणा चतुर्दश पूर्वाण्यधीतानि, बाहुप्रमुखैः पंचभिश्चैकादशांगानि पठितानि. अथानुक्रमेण वज्रसेनभगवान् मोक्षं गतः, श्रीवज्रनाभश्चाचार्यपदवीं भुनक्ति, विंशतिस्थानकतपः कुर्वता च तेन तीर्थंकरगोत्रं समुपार्जितं. बाहुनामा साधुश्च पंचशतसाधूनामन्नपानादिभक्तिं करोति, सुबाहुमुनिश्च पंचशतसाधूनां वैयावृत्त्यं करोति, पीठमहापीठौ च तपांसि कुर्वतः, वज्रनाभ आचार्यो बाहुसुबाहूप्रति वैयावृत्त्यादिगुणरंजितः सन् प्रशंसति, ततः पीठमहापीठौ स्वचेतसोरीर्ष्यां बिभृतो यद्गुरुरावयोः प्रशंसां न करोति, केवलं स्वसेवाहेतोरेतौ द्वौ प्रशंसति, एतादृगीर्ष्यावशात्ताभ्यां स्त्रीवेदत्वमुपार्जितं, बाहुसुबाहुभ्यां च वैयावृत्त्यादिगुणेन भोग्यफलं बाहुबलं च समुपार्जितं. षडपि चतुर्दशलक्षपूर्वचारित्रं प्रतिपाल्य प्रांते पादपोपगमसंस्थारकं कृत्वा सर्वायुश्चतुरशीतिलक्षमितं पालयित्वा सर्वार्थसिद्धविमाने गताः, तत्र त्रयस्त्रिंशत्सागरोपमायुरस्ति, श्रीआवश्यकसूत्रे एवं प्रोक्तमस्ति—पूर्वं श्रीवज्रनाभः समाधिना मृत्वा सर्वार्थसिद्धे गतः, ततोऽनंतरं षट्पूर्वलक्षगमनानंतरं ते पंचापि सर्वार्थसिद्धौ गताः, यदीत्थं नो चेत्तदा कथं संबंधो भवति? तस्मात्सर्वार्थसिद्धिविमानात्पूर्वं श्रीवज्रनाभजीवश्च्युत्वा ऋषभत्वेनोत्पन्नः, तेऽपि च षट्पूर्वलक्षानंतरं

युत्वा भगवत्पुत्रत्वेन भरतादयो जाताः, इति द्वादशमो भवः १२.
च्युत्वा भगवत्पुत्रत्वेन भरतादयो जाताः, इति द्वादशमो भवः १२.

अथात्रावसर्पिण्यां जंबूद्वीपे भरतक्षेत्रे प्रथमारको व्यतिक्रांतः, द्वितीयारकोऽपि व्यतिक्रांतः, तृ-
तीयारकस्य च प्रांते तत्र सप्त कुलकरा जाताः, विमलवाहन १ चक्षुष्मान् २ यशस्वी ३ अभिचंद्र ४
प्रसेनजित ५ मरुदेव ६ नाभयश्च ७, नाभेर्भार्या मरुदेवी, तस्याः कुक्षौ वज्रनाभजीवः सर्वार्थसि-
द्धिविमानाच्च्युत्वाषाढमासस्य कृष्णचतुर्थ्यामुत्तराषाढानक्षत्रे चतुर्दशस्वप्नसूचितोऽवतीर्णः, तस्मिन् स-
मये स्वप्नपाठका न संति, स्वत एव नाभिराजा स्वप्नविचारकृत. पूर्णदिने चैत्रकृष्णाष्टमीनिशायाश्चा-
र्धे उत्तराषाढानक्षत्रे प्रभोर्जन्माभवत. षट्पंचाशद्दिक्कुमारीभिश्चतुःषष्टिभिरिंद्रैश्च जन्ममहोत्सवकर-
णानंतरं प्रथमं ऋषभस्वप्नदर्शनत ऋषभ इति स्वामिनोऽभिधानं कृतं, तत्सार्धं या युगलिनी जाता
तस्या नाम च सुमंगलेति दत्तं. पंचधातृदेवांगनाभिः परिवृतः स्वामी वृद्धिं गतः, देवाश्चोत्तरकुरुक्षे-
त्रात्कल्पवृक्षफलान्यानीय तस्मै ददति, स्वामी च तानि भक्षयति, क्षीरसमुद्रादानीतानि पानीयानि
च पिबति. एवं वर्षैकं जातं, तत ईक्षुयष्टिं गृहीत्वेंद्रो भगवत्समीपे समागतस्तदा पितुरुत्संगस्थितेन
प्रभुणेक्षुयष्ट्यर्थं हस्तः प्रसारितस्तत इंद्रेण प्रभोरीक्ष्वाकुवंशः स्थापितः. एकदा किंचिद्युगलं विहर्तुं

गतं, तन्मध्यात्पुरुषो मस्तकोपरि तालफलपतनान्मृतः, तस्य भार्या सुनंदानाम्नी युगलिनी परैर्युग· लिभिर्नाभिराजसमीपे समानीता, कथितं च स्वामिन्नियं युगलिनी निराधारास्ति. नाभिना प्रोक्तं मदंतःपुरे मोचनीया, ऋषभभार्या भविष्यति. अथ स्वाम्यपि यौवनवयः संप्राप्तः, इंद्रेणापि तं पाणिग्रहणयोग्यं विज्ञाय सर्वदेवदेवीकृतमहोत्सवपूर्वकं सुमंगलासुनंदाभ्यां सह भगवतो विवाहः कृतः, अत्र ये एवं कथयंति यत् श्रीआदिप्रभुणापि पुनर्विवाहः कृतस्ते मूढा ज्ञातव्याः, पुनर्ये कथयंति भगवता भगिनी परिणीता तदपि तेषां मूर्खत्वं, यतस्तस्मिन् काले युगलधर्मस्थितिरासीत, या स्थितिर्भवेत्तां पालयतां सतां न कोऽपि दोषः, ततः श्रीऋषभदेवेन सुनंदासुमंगलयोः शुभलग्ने पाणिग्रहणं कृतं, इंद्राणीभिर्गीतगानं कृतं, गंधर्वकिन्नरैर्वादित्राणि वादितानि. तदादितो लोके विवाहस्थितिर्जाता. स्वाम्यप्यनासक्त्या सुखानि भुनक्ति, षट्पूर्वलक्षगमनानंतरं सर्वार्थसिद्धिविमानाच्च्युत्वा बाहुपीठजीवौ सुमंगलाकुक्षौ भरतब्राह्मीयुगलतयोत्पन्नौ, सुबाहुमहापीठजीवौ च सुनंदायाः कुक्षौ बाहुबलसुंदरीयुगलौ प्रसवितौ. पुनः सुमंगलया युगलानामेकोनपंचाशत्प्रसूतं. एवं पुत्रशतं द्वे पुत्र्यौ च सर्वेऽप्यनुक्रमेण वृद्धिं गताः. अथ विंशतिपूर्वलक्षाणि व्यतिक्रांतानि. तदा युगलिका अ·

न्योऽन्यं विवादं कर्तुं लग्नाः, कल्पवृक्षा अपि कालदोषात्स्वल्पफलदा जाताः, हकारमकारधिक्काररू-
पनीतित्रय्यपि विलुप्ता, तदा युगलिकाः स्वामिनमुच्चैः संस्थाप्य राज्याभिषेकार्थं पानीयमानयितुं ग-
ताः, तस्मिन्नवसरे सौधर्मेंद्रस्यासनं प्रकंपितं. तदा स्वसमयं ज्ञात्वेंद्रेणागत्य प्रभो राज्याभिषेकः कृ-
तः, सर्वशृंगारैः शरीरं मंडितं, देवदेवांगनानां पर्षन्मिलिता. इतस्ते युगलिका जलमादाय समाग-
ताः, तैः प्रभोः शरीरमलंकारादिभिर्भूषितं दृष्ट्वा विनयेन प्रभोश्चरणयोर्जलं सिंचितं. तेषां तद्विनये-
न संतुष्टेनेंद्रेण तत्र विनीताभिधाना द्वादशयोजनविस्तीर्णा नवयोजनपृथुला च नगरी स्थापिता.
तस्यां वापीकूपसरोवरमंडितायां त्रिभूमिकचतुर्भूमिकसप्तभूमिकैकविंशतिभूमिकप्रासादा अशोभंत. पु-
नस्तत्र द्वात्रिंशत्कोटिसुवर्णानां वृष्टिः कृता, उग्रा १ भोगा २ राजन्याः ३ क्षत्रियाश्च ४ स्थापिताः,
परं लोका अन्नेन विना बुभुक्षितास्तिष्ठंति. कल्पवृक्षा अपि किंचिन्न ददति. तदा स्वामिना तेभ्यः
शालिप्रमुखधान्यान्युपदर्शितानि, लोकास्तान्यादाय भक्षयंति, परमपक्वत्वेन न जीर्णयंति प्रत्युत ते-
षामुदराणि तुदंति, प्रभोरग्रे चागत्य स्वजठराणि ते दर्शयंति.

इतश्च तत्र वंशघर्षणतोऽग्निरुत्पन्नस्तदा भगवता तेषां प्रोक्तमेतानि धान्यान्यस्मिन्नग्निमध्ये पा-

चयित्वा यूयं भक्षयत? तदा तैः शालिप्रमुखं सर्वमप्यग्नौ प्रक्षिप्तं ज्वलितं च. तदा तैः प्रभोरग्रे समागत्य प्रोक्तं स्वामिन्नयं वेतालस्तु सर्वमपि भक्षयति, नः किंचिदपि पश्चान्न ददाति, तदा भगवता मृत्तिकातो घटादिनिर्माणं तेभ्यो दर्शितं. एवं प्रभुणा प्रथमं तेभ्यः पंच विज्ञानानि शिक्षापितानि. कुंभकार १ लोहकार २ चित्रकार ३ कर्षक ४ नापितविज्ञानं ५ च. तेषां प्रत्येकानां विंशतिभेदा भवंति, एवं भेदशतं शिक्षापितं. पुरुषाणां द्वासप्ततिकला भरतादीनां शिक्षापिताः, स्त्रीणां चतुःषष्टिकला ब्राह्मीसुंदर्योः शिक्षापिताः, अष्टादशलीप्यक्षरकलागणितकलाप्रमुखसर्वमपि प्रदर्शितं. अथ ते सर्वेऽपि लोकाः सुखेन स्वकार्यपरास्तिष्ठंति. भगवता त्रिषष्टिलक्षपूर्वं राज्यं पालितं, एवं सर्वं त्र्यशीतिलक्षपूर्वं जातं. ततो लोकांतिकदेवाः समागताः, दीक्षाया अवसरश्च कथितः, स्वामिना ज्ञानेन दीक्षावसरं विज्ञाय वार्षिकदानं दत्तं, प्रतिदिनमेका कोटिरष्टौ लक्षांश्च सौवर्णिकान् ददाति. वार्षिकदानमिलने त्रिकोटिशतं चाष्टाशीतिकोट्यधिकमशीतिलक्षदानं जातं, इदं सर्वमपि दानद्रव्यमिंद्रादेशाद्धनदः समानीय पूरयति. ततो भरतादिभ्यो राज्यं विभज्य स्वामी कच्छमहाकच्छादिचतुःसहस्रपरिवारपरिवृतो महोत्सवपूर्वकं चतुःषष्टिभिरिंद्रैर्निर्मितां शिबिकामारुह्य नगराद्बहिर्निर्गत्य अयोध्या-

या उपवनेऽशोकवृक्षतले चतुर्मुष्टिकं लोचं कृत्वा चैत्रकृष्णाष्टमीदिने उत्तराषाढानक्षत्रे पश्चिमार्धे दी-
क्षां गृहीतवान्. इंद्रादयः स्वस्थाने गताः, भरतादयोऽपि पुत्रा भगवद्विरहेणाश्रुपातपूर्वकं गृहे स-
मायाताः. अथ स्वामिनो वर्षं यावदन्नादिकं नो मिलितं, ते सर्वचतुःसहस्रमुनयोऽप्याहाराऽभावेन
तापसा जाताः, कच्छमहाकच्छपुत्रौ नमिविनमी दीक्षावसरे स्वामिनिर्देशात्परदेशं गतावास्तां, पश्चादा-
गतौ च स्वामिनं तथाभूतं श्रुत्वा प्रभुसमीपे समागत्य विज्ञप्तिं चक्रतुः, हे स्वामिन्नावयो राज्यं दे-
हि? कतिचिद्दिवसानंतरं धरणेंद्रो भगवद्वंदनार्थं समायातस्तेन नमिविनमिभ्यां प्रोक्तं कथं युवां से-
वां कुरुथः? ताभ्यामुक्तं राज्यप्राप्त्यर्थं. धरणेंद्रेणोक्तं यदा भगवता दानं दत्तं तदा युवां क्व गतौ?
ताभ्यां प्रोक्तं परदेशं गतौ. अन्यस्य कस्यापि चाग्रे याचनां न कुर्वः, आवयोस्तु स्वामी दानं दा-
स्यति. ततो धरणेंद्रेणोक्तमहं पातालवासी धरणेंद्रः स्वामिनः सेवकोऽस्मि, युवामपि तत्सेवकौ, अ-
त आवयोर्भ्रातृत्वेन स्वामिन आज्ञया वैताढ्यपर्वते विद्याधरपदवीं स्वीकुरुतं. ततस्ताभ्यामपि तद्व-
चोंगीकृतं, ततो धरणेंद्रेण प्रज्ञप्तीप्रमुखविद्यास्ताभ्यां दत्ताः, नमिविनमी स्वामिनं प्रणम्य स्वस्वपरि-
वारमादाय वैताढ्ये समागतौ. तत्र दक्षिणश्रेण्यां नमिराज्ञा पंचाशन्नगराणि वासितानि, विनमिना

चोत्तरश्रेण्यां षष्ठिनगराणि वासितानि, तेषां नगराणां नामानि श्रीहेमचंद्रसूरिकृतश्रीआदिनाथचरित्राद् ज्ञेयानि. अथ भगवानाहारार्थं सर्वत्र परिभ्रमति, परं कोऽपि न ददाति. एवं वर्षैकं जातं परं प्रभुर्मनसापि न क्षुब्धः. अथ भगवत आहाराधिकारमाह—

तस्मिन् समये बाहुबलेः पुत्रः सोमयशा गजपुरस्य राज्यं पालयति. अथ पूर्वं भगवज्जीववज्रनाभचक्रिणो यः सुयशानामा सेनानीरभूत, तेनापि वज्रनाभेन सह दीक्षा गृहीतासीत, चारित्रं प्रपाल्य पंचमेऽनुत्तरविमाने गतः, तत्र त्रयस्त्रिंशदायुर्भुक्त्वा स सोमयशसः श्रेयांसनामा पुत्रो जातोऽस्ति. अथ श्रीऋषभस्वामी विहरन् सन् गजपुरे समागतः, गृहे गृहे लोका अनेककन्यासुवर्णमणिमुक्ताफलादीनि ददति परं स्वामी किमपि न गृह्णन् पश्चाद्व्याघुट्यति. ततो गवाक्षस्थस्य श्रेयांसकुमारस्यैतादृशं भगवत्स्वरूपं वीक्ष्य जातिस्मरणमुत्पन्नं. अथ तस्यां निशायां श्रेयांसेन सोमयशसा सुबुद्धिनाम्ना नगरश्रेष्ठिना च स्वप्नानि लब्धानि. प्रातःकाले सभायां तैः स्वस्वस्वप्नानि कथितानि. सोमयशसा राज्ञा प्रोक्तं वैरिभिर्वेष्टितोऽहं श्रेयांससाहाय्येन वैरिणोऽजयं. सुबुद्धिश्रेष्ठिना प्रोक्तं त्रुट्यमानाः सूर्यकिरणा मया श्रेयांसहस्तसाहाय्येन रक्षिताः, श्रेयांसेनोक्तं मेरुपर्वतो मयाऽमृतेन धौ-

श्रेयांसाय भविष्यंति. श्रेयांसोऽपि हृष्टः सन् गृहे समा-
तः, तदा राज्ञा प्रोक्तं त्रीण्यप्येतत्स्वप्नफलानि श्रेयांसाय भविष्यंति. श्रेयांसोऽपि हृष्टः सन् गवाक्षादुत्तीर्य
यातः. इतश्च मध्याह्नावसरे प्रभुविलोकनानंतरं जातिस्मरणात्साधुदानविधिं जानन् स भगवदग्रे चेक्षुरसानां घटा ढौकिताः, भगवतापि
स्वामिनं वंदित्वा निमंत्र्य च स्वगृहे समानीतवान्. भगवदग्रे चेक्षुरसानां घटा ढौकिताः, भगवतापि
तन्निरवद्यं ज्ञात्वा स्वकीयहस्तौ प्रसारितौ. पाणिपतद्ग्रहलब्धिमहिम्ना तस्यैकोऽपि बिंदुरधो न पत-
ति. श्रेयांसो रसं निक्षिपति तच्छिखोर्ध्वं वर्धते. एवं स्वामिना वैशाखशुक्लतृतीयादिवसे पारणं कृतं,
तदादितो लोकेऽक्षयतृतीया जाता. श्रेयांसगृहे पंच दिव्यानि च प्रकटितानि. भगवता तत्र पारणं
कृत्वा विहृतं, श्रेयांसेन च सर्वलोकेभ्यः साधूनां भिक्षादानविधिः शिक्षापिता. स्वामी चानुक्रमेण
सहस्रवर्षं यावच्छद्मस्थत्वं पालयन् पुरिमतालनगरे समागतः, तत्र फाल्गुनकृष्णैकादश्यां भगवतः के-
वलज्ञानं समुत्पन्नं. चतुःषष्टिभिरिंद्रैः समागत्य समवसरणं कृतं. तदा भरतस्य यमकशमकाभ्यां द्वे
वर्धापनिके दत्ते. एकेन भगवत्केवलज्ञानवार्ता कथिता, अपरेण चायुधशालायां चक्ररत्नोत्पत्तिः क-
थिता. तदा भरतः क्षणं विमृश्य धर्मधिया स्वामिकेवलज्ञानमहिमानं कर्तुं पुत्रविरहदुःखेनांधीभूत-
या हस्तिस्कंधाधिरूढया मात्रा मरुदेव्या सह चलितः, मार्गे वादित्रादिध्वनिं श्रुत्वा तत्कारणं मरुदे-

वी पप्रच्छ, तदा भरतेनोक्तं हे मातः श्रीऋषभदेवस्य केवलज्ञानं समुत्पन्नमस्ति, ततो देवैस्तस्य समवसरणादिमहिमा कृतोऽस्ति, तत्कृतोऽयं गीतगानवादित्रादिध्वनिः श्रूयते. तत श्रुत्वा मरुदेवीमाता विरागतां प्राप्ता सती चिंतयत्यहोऽहं तु यन्मोहवशादंधीभूतास्मि स त्वयमीदृशानि सुखानि भुनक्ति. ततो नास्ति कोऽपि कस्येति ध्यायंत्यास्तस्याः चक्षुःपटलानि ध्वस्तानि. कर्मक्षयतः केवलज्ञानं प्राप्य सा मोक्षं गता. भरतेन स्वामी वंदितः, प्रभुणा च देशना दत्ता, तदा भरतस्य पंचशतपुत्रसप्तशतपौत्रैश्च दीक्षा गृहीता, पुंडरीकप्रमुखाश्चतुरशीतिगणधराः स्थापिताः, ब्राह्मीप्रमुखाभिरपि दीक्षा गृहीता, श्रेयांसप्रमुखाः श्रावका जाताः, सुभद्राप्रमुखाश्च श्राविका बभूवुः, भरतेनापि सम्यक्त्वं स्वीकृतं. ततस्तेन प्रभुं वंदित्वा गृहे समागत्य चक्ररत्नस्याष्टाह्निकामहोत्सवः कृतः, ततः सुषेणं सेनानीं कृत्वा तेन षट्खंडानि साधितानि. गंगोपकंठे गंगादेवीगृहे च स सहस्रैकवर्षं यावत्स्थितः, नव निधानानि प्राप्तानि, अनुक्रमेण गृहे समागत्य राज्याभिषेकः कृतः, परं चक्ररत्नमायुधशालायां न प्रविशति. तदा भरतेन प्रधानादिभ्यश्चक्ररत्नाऽप्रवेशकारणं पृष्टं, तैः कथितं हे स्वामिन् भवदीयनवनवतिभ्रातरो यदि भवदाज्ञामंगीकृत्य भवंतं प्रणमिष्यंति तदैव चक्ररत्नमपि प्रविक्ष्यति. तदा भरतेन स्वाज्ञा-

समीव्य स्वामिपार्श्वे समागताः, स्वामिनं
स्वीकारकृते तेभ्यो दूताः प्रेषिताः, ततस्तेऽष्टनवतिभ्रातरः संमील्य स्वामिपार्श्वे समागताः, स्वामिनं
वंदित्वा च कथयामासुर्हे स्वामिन् भरतेन सार्धं वयं किं युद्धं कुर्मो वा प्रणामं कुर्मः? भगवता तु
धर्मोपदेशो दत्तः, तत् श्रुत्वा वैराग्यमासाद्य तैः सर्वैर्दीक्षा गृहीता.

अथ बाहुबलिना तां वार्तां श्रुत्वा दुःखमापन्नेन भरताय कथापितं त्वयैतदयुक्तं कृतं, तदा भ·
रतेन कथापितं त्वमपि मम सेवां कुरु? नो चेद्राज्यं त्यज? बाहुबलिस्तां वार्तां नांगीकरोति, तत·
श्चक्रमपि गृहे न प्रविशति. ततो भरतेन बाहुबलिंप्रति दूतं प्रेषयित्वा चतुरंगसेनासहितेन बाहुब·
लिदेशविजयार्थं प्रस्थानं कृतं, बाहुबलिरपि सैन्यसहितः सन्मुखमागतः, अनेकानि युद्धानि जाता-
नि, बहुमनुष्याणां संहारश्च जातः, तदा सौधर्मेंद्रः समागत्य तौ निवारयामास, परमेकोऽपि न निव·
र्त्तते. तदेंद्रेणोक्तं युवामेव द्वंद्वयुद्धं कुरुतं, येन जनसंहारो न जायते. ताभ्यामपि तत्प्रतिपन्नं, तत्र
वाग्युद्धं १ दृष्टियुद्धं २ बाहुयुद्धं ३ मुष्टियुद्धं ४ दंडयुद्धं ५ चेति पंच युद्धानि स्थापितानि. ततस्तै-
र्युध्यमानयोस्तयोर्मध्ये भरतो हारितः, तदा खिन्नमानसेन तेन बाहुबलेरुपरि चक्ररत्नं मुक्तं, चक्रं तु
गोत्रिणं न पराभवति, ततो बाहुबलिः क्रुद्धः सन् मुष्टिमुत्पाट्य भरतंप्रति मारणार्थं धावितः सन् म-

नसि चिंतयति, अहो वृद्धभ्रातरं कथं मारयामीति विमृश्य तेन स्वमस्तकात्पंचमुष्टिलोचं कृत्वा दीक्षा गृहीता, अहंकारं धृत्वा कायोत्सर्गेण स्थितः, ब्राह्म्या प्रतिबोधिते सति कायोत्सर्गं पारयित्वा यावत स चलति तावत्तस्य केवलज्ञानं समुत्पन्नं. स्वामिनं वंदित्वा स केवलिपर्षदि स्थितः. अथानुक्रमेण स्वामी चैकलक्षपूर्वं चारित्रं केवलिपर्यायं च पालयित्वाऽष्टापदपर्वते दशसहस्रसाधुभिः सह मोक्षं गतः, भरतचक्रिणा तस्मिन् स्थाने चतुर्मुखो जिनप्रासादः कारितः. अथ राज्यं भुंजानस्य भरतस्य त्र्यशीतिलक्षपूर्वाणि सुखेन गतानि. एकदा भरत आदर्शगृहस्थितः सन्मुद्रिकापतनेनाऽनित्यभावनां भावयन् केवलज्ञानं प्राप्तः, तत्र देवतादत्तसाधुवेषो भरतमुनिर्दशसहस्रमुकुटबद्धराजर्षिपरिवृत्तः सहस्रपत्रकमलासनमारुह्य धर्मदेशनां ददौ. लक्षैकपूर्वं केवलपर्यायं पालयित्वा मोक्षं गतः. एवं श्रीमानादीश्वरो भगवान् धर्मकार्यादिलोकस्थितिकरणात्त्रैलोक्यपितामहो जातः, इति श्रीदानकुलके ऋषभजिनकथा. ॥

गाथा—करुणाइदिन्नदाणो । जम्मंतरगहिअपुन्नकिरिआणो ॥ तित्थयरचक्किरिद्धिं । संपत्तो संतिनाहोवि ॥ ६ ॥ व्याख्या—करुणया अनुकंपया कृत्वा दत्तं दानं येन, तत्कीदृशं दानं? जन्मां-

तरे गृहीतानि पुण्यकृत्यानि यस्मात्तत्. तन्महिम्ना तीर्थंकरचक्रवर्तिऋद्धिं प्राप्तः श्रीशांतिनाथः ॥ ६ ॥
विशेषार्थः कथानकाद् ज्ञातव्यो यथा—जंबूद्वीपे पूर्वमहाविदेहे पुष्कलावतीविजये पुष्करिण्यां न-
गर्यां घनरथतीर्थंकरो राज्यं भुनक्ति. तस्य प्रीतिमतीमनोहर्याख्ये द्वे भार्ये, प्रीतिमत्या मेघस्वप्नसूचि-
तो मेघरथनामा पुत्रो जातः, मनोहर्याश्च रथस्वप्नसूचितो दृढरथनामा पुत्रो जातः, अनुक्रमेण तौ
यौवनं प्राप्तौ, मेघरथस्य प्रियमित्रामनोरमाख्ये द्वे भार्ये आस्तां, दृढरथस्यापि सुमतीनाम्नी भार्या
जाता, मेघरथस्य नंदिषेणमेघसेनौ पुत्रौ जातौ, दृढरथस्य च रथसेननामा पुत्रोऽभूत. कालांतरे
घनरथतीर्थंकरेण वार्षिकदानं दत्वा मेघरथाय ज्येष्ठपुत्राय च राज्यं दत्वा दीक्षा गृहीता, केवलज्ञा-
नं प्राप्य तीर्थं स्थापयित्वा घनरथभगवान् मोक्षं गतः. अथ मेघरथो राज्यं पालयति, सुश्रावकत्वे-
नाष्टमीपर्वणि पौषधानि करोति, जिनाज्ञां चाऽविराधित्वेन पालयति.

अथैकदा पौषधशालायां पौषधं कृत्वा सर्वान् राज्ञःप्रति स धर्मोपदेशं ददाति, इतस्तत्रैकः पा-
रापतः कंपमानः सन् तत्रागत्य तस्योत्संगे स्थित्वा मनुष्यभाषया ब्रूते, हे मेघरथराजन्! त्वं मां रक्ष
रक्ष? इति श्रुत्वा राजा प्राह त्वं मा भयं कुरु? तावता तत्पृष्टे एकः सिंचाणकः समागतः कथयितुं

क्षमश्च हे राजन् मह्यं मद्भक्ष्यं देहि? राजा कथयति हे भद्र! शरणागतः कथं समर्प्यते? अन्यच्च परप्राणैः स्वकीयप्राणा न पोषणीयाः, पुनर्हे पक्षिन् तव पक्षैकदेशग्रहणाकर्षणादि ते पीडा जायते तदान्येषां तत्प्राणविनाशात्कथं पीडा न भवेत? तव तु क्षणमात्रा तृप्तिर्भविष्यत्यस्य च प्राणसंहारो भविष्यति. पंचेंद्रियहननाज्जीवो दुर्गतिं गच्छति. तदा सींचाणको वदति हे राजन् सुख्येव धर्माधर्मविचारं करोति, किंच यथाऽयं पारापतस्त्वच्छरणमागतोऽस्ति तथाहमपि समागतोऽस्मि, अतो ममोपरि कृपां कुरु? यदि त्वमस्य रक्षां करोषि तदा मम प्राणनाशो भविष्यति, एवं च तव कृपा कथं स्थास्यति? राजा प्राह यदि त्वं बुभुक्षितोऽसि तदाहं त्वां विशेषसरसाहारं दास्यामि. सींचाणकेनोक्तमहमामिषं विनाऽन्यन्न भक्षयामि. राज्ञोक्तं मम राज्ये मांसं कुतः? यदि किंचिन्मृतकलेवरं भविष्यति तदा तस्यामिषं ते दास्यामि. सींचाणकेनोक्तं जीवत्प्राणिमांसमेवाहं भक्षयामि, राज्ञा प्रोक्तं यावद्भारोऽस्य पक्षिणो भविष्यति तावद्भारमितं मम शरीरमांसमहं ते दास्यामि, सींचाणकेनापि तदंगीकृतं. अथ राज्ञा तुलां समानीय तदेकपुटे पारापतो मुक्तो द्वितीये च स्वशरीरमांसं छेदित्वा छेदित्वा मुक्तं, परं यथा यथा स मांसं मुंचति तथा तथा पारापतपुटकमधस्ताद् व्रजति. एवं तस्य

स्थितः, तदा राज्ञः समस्तपरिवारो हाहारवं कुर्व-
बहुभारं ज्ञात्वा साहसिको राजा स्वयमेव तुलायां
राजा तु मनागपि चेतसि
न्नश्रुपातं चकार, चिंतयामास च हा अयमकस्मादनिष्टं कुतः समुत्पन्नं?
देवः प्रादुर्भूयाहो सत्वमहो सत्वमिति वदन्
विषादं न करोति. इतस्तत्र कुंभलाद्याभरणमंडितः कश्चि
गुणवर्णनं कृतं, परं तदसहमानेन
गगनात्पुष्पवृष्टिं कृतवान्, प्रोवाच च हे राजेंद्र ईशानेंद्रेण तव
इति क्षामयित्वा देवः स्वस्थानं ग-
मयैतत्परीक्षास्वरूपं विधाय तव परीषहः कृतस्तन्मेऽपराधं क्षमस्व?
राज्ञापि पौषधं पारयित्वा पारणं
तः, राज्ञः शरीरे च सुखं जातं, सेवका अपि सर्वे सहर्षा जाताः,
कृत्वा सर्वार्थसिद्धौ पंचमेऽनुत्त-
कृतं, सुखेन राज्यं भुक्त्वैकलक्षवर्षप्रांते निर्मलचारित्रं प्रपाल्यानशनं
रविमाने स गतः, तत्र त्रयस्त्रिंशत्सागरायुः प्रपाल्य श्रीशांतिनाथो जातः. ॥ इति श्रीशांतिनाथपूर्व-
भवकथा ॥

गाथा—पंचसयसाहुभोयण—दाणावज्जिअसुपुन्नपब्भारो ॥ अच्चरिअचरिअभरिओ । भरहो
भरहाहिवो जाओ ॥ १ ॥ व्याख्या—पंचशतसाधूनां भोजनदानेनोपार्जितः पुण्यप्राग्भारो येन सः,
तथाश्चर्यकारिचरित्रेण भृत ईदृशो भरतचक्री भरतक्षेत्राधिपो जातः, तत्कथा तु पूर्वमुक्तैव. ॥ १ ॥

गाथा—मूल्लंविणावि दाउं । गिलाणपम्मिय्यरणजोगवत्थूणि ॥ सिद्धो य रयणकंबल—चंदणविणउवि तिम्मि नवे ॥ ८ ॥ व्याख्या—मूल्येन विना मूल्यग्रहणं विना दत्वा ग्लानसाधोर्वैयावृत्तियोग्यवस्तु मोक्षं प्राप्तो रत्नकंबलगोशीर्षचंदनयोर्दाता यो वणिक् तस्मिन्नेव नवे. इयं कथापि पूर्वमुक्तैव. ॥ ८ ॥

गाथा—दाऊण खीरदाणं । तवेण सुसिय्यंगसाहुणो सिग्घं ॥ जणजणिय्यचमक्कारो । संजाउ सालिन्नद्दोवि ॥ ९ ॥ व्याख्या—दत्वा क्षीरदानं तपसा सुष्टु शोषितमंगं शरीरं येनेतादृशं साधुं, जने जनितश्चमत्कारो येन एतादृशः शालिन्नद्रः संजातः ॥ ९ ॥ अथ शालिन्नद्रकथा यथा—

राजगृहनगरसमीपे शालिनामा ग्रामोऽस्ति, तत्र धन्ना नाम्नी काचित्स्त्री संगमनामपुत्रेण सह वसति, स संगमो मेषान् रक्षति चारयति च. तस्य माता तु धनिनां गृहे रंधनपेषणगोमयस्थापनसंप्रमार्जनादिकं करोति. एवं तौ स्वकालं गमयतः. अथैकस्मिन्न पर्वदिने सर्वलोकगृहे क्षीरादिभोजनं जायमानं दृष्ट्वा संगमो मातरं कथयति हे मातर्मम क्षीरान्नं देहि? साऽवोचत हे पुत्र आवयोर्गृहे प्रथमत एव धान्यसंशयस्तर्हि क्षीरान्नं तु कुतः? इत्युक्ते स न मन्यते, यतो बालो गृहस्वरूपं

कदाचिदपि न जानाति. अथ स यथा यथा तन्मार्गयति तथा तथा माता रोदितुं लग्ना, स्त्रीणां हि रुदनमेव बलं. तां रुदंतीं श्रुत्वा प्रातिवेश्मिकनार्यो मिलित्वा तां पृष्टुं लग्नाः, हे भगिनि त्वमद्य सुपर्वदिने कथं रोदिषि? तदा तया पुत्रवार्ता कथिता, ताभिरुक्तं त्वं चिंतां मा कुरु? वयं तुभ्यं क्षीरादिसामग्रीं दास्यामः, ततस्तद्दत्तसामग्रीतः क्षीरान्नं निष्पाद्य तया पुत्राय परिवेषितं, स्वयं च किंचित्कार्यनिमित्तं प्रातिवेश्मिकगृहे गता. इतः कश्चिन्मासोपवासी साधुः पारणदिने संगमगृहे समागतः, संगमेन तमागच्छंतं विलोक्य हृष्टेन तस्मै क्षीरान्नेन प्रतिलाभो दत्तः, साधुनापि तद्भावाऽखंडनत्वतो मेति नोक्तं, ततः साधुर्गतः, इतस्तन्माता समागता, स्थालं च रिक्तं दृष्ट्वा तया पुनरपरा क्षैरेयी परिवेषिता, चिंतितं चाहो मत्पुत्रोदरे किमेतावती बुभुक्षा वर्त्तते? तदा मांप्रति धिक्, संगमोऽप्याकंठं भुक्तवान्, रात्रौ च तस्य विसूचिका जाता, ततो मृत्वा साधुदानपुण्ययोगेन स राजगृहनगरे गोभद्रनामव्यवहारिणः सुभद्रानामभार्यायाः कुक्षौ पुत्रत्वेन समवतीर्णः, फलितशालिक्षेत्रस्वप्रदर्शनतस्तस्य शालिभद्र इति नाम दत्तं, अनुक्रमेण स विद्यामभ्यस्य यौवनं प्राप्तः, पित्रा च द्वात्रिंशत्कन्यानां पाणिग्रहणं कारितः, ततो गोभद्रश्रेष्ठिना श्रीमहावीरसमीपे दीक्षा गृहीता, निर्मलं

चारित्रं च प्रतिपाल्य स देवलोके गतः, तत्रावधिज्ञानेन शालिभद्रं दृष्ट्वा मोहवशेन तत्पूर्वपुण्या कर्षणेन वा प्रतिदिनं स दिव्यवस्त्राभरणानि शालिभद्राय प्रेषयति. तन्मध्ये त्रयस्त्रिंशत्पेटा नानाभरणानां, त्रयस्त्रिंशत्पेटा वस्त्राणां, त्रयस्त्रिंशत्पेटाः सुगंधद्रव्याणां, एवं सदैव नवनवतिपेटाः समुत्तरंति. एवं द्वात्रिंशदंतःपुरीभिः सह स सुखानि भुनक्ति.

अथैकदा केचिद्व्यापारिणो रत्नकंबलानि लात्वा राजगृहे समागताः, तद्रत्नकंबलमेकमपि श्रेणिकेन चेल्लणाराज्ञ्या मार्गितमपि नो गृहीतं, राज्ञा चाऽगृहीते सति अन्येनापि केनापि न गृहीतं. ततस्ते व्यापारिणो विषण्णा जाताः, पश्चात्ते व्यापारिणः शालिभद्रगृहसमीपे समागताः, सुभद्रया पृष्टं युष्मत्पार्श्वे किमस्ति? तैरुक्तं रत्नकंबलानि संति. पुनस्तया पृष्टं कियंति? ततस्तैरुक्तं षोडश. तयोक्तं स्तोकानि, तैरुक्तं कथं स्तोकानि? तया प्रोक्तं मम द्वात्रिंशद्वध्वः संति, कस्यै दीयते कस्यै नो दीयते? इत्युक्त्वा तेषां मूल्यं पृष्टं, तैरुक्तं सपादलक्षसौवर्णिका एकैकस्य मूल्यमस्ति. तथापि तदंगीकृत्य सर्वाणि रत्नकंबलानि गृहीतानि, तेभ्यश्च यथोक्तं मूल्यं दत्तं. तद्वृत्तांतं श्रुत्वा चेल्लणा कुपिता, श्रेणिकेन तां तथाभूतां ज्ञात्वा स्वप्रधानाः शालिभद्रगृहे कंबलैकमार्गणाय प्रेषिताः,

तैस्तत्र गत्वा सुभद्रापार्श्वे रत्नकंबलं मार्गितं, तयोक्तं मया तु तान्यर्धमर्धं कृत्वा मे द्वात्रिंशद्वधूभ्यः समर्पितानि, ताभिश्च स्वचरणक्षालनानंतरं तैश्चरणप्रमार्जनं विधाय गृहखालमध्ये निक्षिप्तानि, ततो यदि तज्जीर्णकंबलेच्छा भवेत्तर्हि सुखेन गृह्णीत? ततस्तैराश्चर्यं प्राप्य श्रेणिकसमीपे समागत्य सर्ववृत्तांतः कथितः. हृष्टेन राज्ञा प्रोक्तं तं शालिभद्रमत्रानीयतां यथाहं तद्दर्शनं करोमि. ततो यदा ते प्रधानास्तदानयनार्थं तत्र समागतास्तदा सुभद्रया कथितं शालिभद्रस्तु कुत्रापि बहिर्न गच्छति, राजैव मद्गृहं पावनं करोतु, ततस्तैः सुभद्रोक्तं श्रेणिकाय कथितं. ततश्चित्रितः श्रेणिकः सद्यस्तत्रागतः, सुभद्रा स्वगृहचतुर्थभूमिकायां सिंहासने राजानं स्थापयामास. ततः सा सप्तभूमिकोपरिस्थशालिभद्रपार्श्वे समागत्य तं कथयामास हे पुत्र! राजा गृहे समागतोऽस्ति, अतस्त्वमधस्तादुत्तर? शालिभद्रेणोक्तं हे मातर्मां कथं पृच्छसि? तत्क्रयाणकं मंदिरे प्रक्षिप? ततः सा प्राह पुत्र त्वं सुखलीनो न किमपि वेत्सि, तत्क्रयाणकं नास्ति, किंतु राजा श्रेणिकोऽस्ति यस्य छत्रछायया वयं सुखेन तिष्ठामः, तत श्रुत्वा शालिभद्रश्चिंतयति धिक्संसारसुखानि यन्ममाप्युपरि स्वामी वर्तते, अतो मया सुकृतं न कृतं, ततः स नाटकं त्यक्त्वा मात्रा प्रेरितो द्वात्रिंशत्स्त्रीसहितश्चतुर्थभूमिकायां समागतो रा-

ज्ञे च प्रणामं कृतवान्. श्रेणिकस्तमालिंग्य निजोत्संगे स्थापितवान्, परं राज्ञः शरीरस्पर्शेन स व्याकुलीभूतः, तदा सुभद्रया प्रोक्तं हे राजन्! भवत्प्रतापं शालिभद्रो न सहते अतस्तं मुंचत? राज्ञा तथैव कृतं, शालिभद्रोऽपि भार्यासहितः पुनः सप्तमभूमिकां प्राप्तः, विस्मितो राजाप्यधस्तादुत्तीर्णः, तदा सुभद्रया विज्ञप्तं स्वामिन्नद्य यूयमत्रैव भोजनं कुरुत? अनेकाग्रहेण राज्ञापि तत्स्वीकृतं. अथ सुभद्रया सुगंधितैलादिना राज्ञो मर्दनं कारयित्वा स्नानसामग्री विहिता. स्नानं कुर्वतो राज्ञो हस्ताद्बहुमूल्यमुद्रिका गृहमध्यस्थकूपे पतिता. तदा स्वयमेव राजा तां गवेषयितुं कूपपार्श्वे समायातः, तत्र त्वनेकान्यमूल्यभूषणानि पतितानि तेन दृष्टानि, तन्मध्येंगारसदृशां स्वमुद्रिकां दृष्ट्वा विस्मितेन राज्ञा पृष्टे सति दास्योक्तं शालिभद्रस्य च तद्द्वात्रिंशत्स्त्रीणां दिनंदिनंप्रति निर्माल्यभूषणान्यत्र कूपे निक्षिप्तानि संति, तैश्चायं कूपो भृतोऽस्ति.

अथ राजा चिंतयति नूनं धन्योऽयं यस्य पुण्येनेतादृशानि विभूषणानि निर्माल्यानि समुत्तरंति. ततो तन्मध्यात्स्वकीयमुद्रिका तेन गृहीता. स्नानं कृत्वा पवित्रवस्त्राणि परिधाय सुखासने स्थित्वा राज्ञा भुक्तं, सुभद्रया च तस्य बहुभक्तिः कृता. ततः श्रेणिकः शालिभद्रर्द्धिमनुमोदमानो गृहे

समागतः. अथ शालिभद्रः संसाराद्विरक्तोऽभूत. इतस्तत्र केचित् स्थविरसाधवस्तत्र समागतास्तेषां
वंदनार्थं शालिभद्रो गतो देशनां च श्रुत्वा स पृच्छति हे स्वामिन् केन पुण्येन शिरसि स्वामी न
भवेत्? गुरुणोक्तं यो निर्मलं चारित्रं पालयति स त्रिजगत्स्वामी भवति. शालिभद्रेणोक्तं भगवन्
मातरमापृच्छ्याहमपि चारित्रं गृहिष्यामि. ततोऽसौ गृहमागत्य मातरंप्रति कथयति, अद्य मया ध·
र्माचार्या वंदिताः श्रुतश्च धर्मो रुचितश्च मे, मात्रा कथितं धन्यस्त्वं यस्य श्रीतीर्थंकरधर्मो रुचितः,
पुनस्तेनोक्तमहं चारित्रं गृहीष्यामि, आज्ञां प्रदेहि? ततो दुःखं वहंती माता प्राह हे पुत्र चारित्रं
विषमं लोहचणकचर्वणोपमं, त्वं च प्रकृत्या सुकुमालस्ततः प्रथममत्र गृहे स्थित एव परीषहान् सह-
स्व येन ते चारित्रं सुखाराध्यं स्यात, ततः शालिभद्रः प्रतिदिनमेकैकां भार्यां त्यक्तुं लग्नः.

इतस्तस्मिन्नेव नगरे शालिभद्रभगिनीभर्ता धन्नो नामा व्यवहारी परिवसति. एकदा तस्य भा·
र्या धन्नस्य केशप्रमार्जनं करोति, तदा स्वकीयभ्रातृवैराग्यवार्तास्मरणतः सा रोदितुं लग्ना, धन्नेन पृष्टं
कथं रोदिषि? तदा तया सर्वा रुदनवार्ता कथिता. तदा धन्नेनोक्तं तव भ्राता कातरः, तया प्रोक्तं
हे स्वामिन् तद्वार्ताकरणमेव सुलभं, कर्तुं तु दुर्लभमेव. किंच यद्येवं तदा यूयं कथं न त्यजत? त-

तः साहसिना धन्नेनोक्तं हे प्रिये त्वं दूरीभव? मया समकालमष्टावपि भार्यास्त्यक्ताः, तदा ता अष्टावपि भार्याः समागत्य तं वंदित्वा कथयंति हे स्वामिन् हास्यास्पदे कथं विषादः? धन्नेनोक्तं मम कश्चिदपि कलहो नास्ति, मे मनसि शुद्धवैराग्यमस्ति, संसारछेदनाय चोद्यतोऽस्मि, ततो धन्नेन धर्मोपदेशं दत्वा ताः सर्वा अपि प्रतिबोधिता दीक्षां लातुं च परायणा जाताः, ततो धन्नः शालिभद्रगृहे समागत्य तं कथयति भो त्वं कातरत्वं मा कुरु? भार्याष्टकसहितोऽहं दीक्षां लातुमिछामि, त्वमपि सर्वास्त्यज? आवां संयमं लात्वा संसारछेदं करिष्यावः, शालिभद्रेणापि तत्प्रतिपन्नं. अथ श्रीमहावीरोऽपि तदैव तत्र समवसृतः, तदा निजभार्यासहितधन्नेन शालिभद्रेण च प्रभोरग्रे दीक्षा गृहीता. सुभद्रा चाश्रुपातं कुर्वती पुत्रगुणान् स्मरंती च द्वात्रिंशद्वधूसहिता गृहे स्थिता. श्रीमहावीरेणान्यत्र विहृतं. अथ धन्नशालिभद्रौ सिद्धांताभ्यासं कृत्वा तपांसि कर्तुं लग्नौ, दुर्बलशरीरौ च जातौ. अथैकदा श्रीमहावीरो विहरन् धन्नशालिभद्रर्षिसहितो राजगृहनगरमलंचकार, राज्ञा प्रजादिभिश्च भक्त्या वंदितः, धन्नशालिभद्रौ मासक्षपणपारणके श्रीवीरमामंत्र्य राजगृहे गतौ. तदा श्रीमहावीरेणोक्तमद्य मातुर्हस्तेन भवत्पारणकं भविष्यति. तथेत्यंगीकृत्य द्वावपीर्यासमितिं शोध्यमानौ भ

द्रागृहे समागतौ परं केनापि नोपलक्षितौ, भद्रागृहे तु श्रीमहावीरवंदनोत्कंठया सर्वोऽपि परिवारो व्यग्रचित्तोऽभूत्, क्षणमेकं स्थित्वा तौ पश्चाद्वलितौ, नगरप्रतोलीनिर्गमनावसरे एकया आभीरया भक्तिपूर्वकं ताभ्यां दधिदानं दत्तं, तज्ज्ञात्वा श्रीमहावीरसमीपमागत्य तौ पृच्छतः, हे स्वामिन्! मातुर्हस्तेन पारणं कथं ज्ञातव्यं? ततो भगवतोक्तं शालिभद्रस्य पूर्वभवमाता धन्यानामाभीरी, शालिभद्रस्य त्वयं द्वितीयो भवोऽस्ति, धन्यायास्त्वद्यापि स एव भवः, ततो भगवता सर्वोऽपि तत्पूर्वभवसंबंधः कथितः. ततस्ताभ्यां तेनैव दध्ना पारणकं कृत्वा प्रभुमापृच्छ्य वैभारगिरिशिखरशिलोपरि पादोपगमनसंस्तारकः कृतः, तदा सुभद्रया द्वात्रिंशद्वधूसहितया प्रभुं वंदित्वा पृष्टं स्वामिन् मे पुत्रजामातरौ क्व गतौ? स्वामिनोक्तं ताभ्यां वैभारगिरावनशनं कृतमस्ति. ततः श्रेणिकसहितया तया तत्र गत्वा तौ वंदितौ. तयोस्तथास्वरूपं च दृष्ट्वा साऽत्याक्रंदनपूर्वकं रोदितुं लग्ना हे पुत्र गृहागतस्त्वं मया मूढया नोपलक्षितः, एतादृग्विलापान् कुर्वतीं तां दृष्ट्वा श्रेणिकेनोक्तं हे सुभद्रे! त्वं तु रत्नगर्भासि, तव पुत्रो महासुभटो वीराधिवीरो ज्ञातव्यः, अतस्त्वं कातरतां मा कुरु? ततः श्रेणिकसुभद्रे गृहमागते. धन्नशालिभद्रावपि मासैकानशनं कृत्वा सर्वार्थसिद्धौ गतौ, भवांतरे च मोक्षं गमिष्यतः,

धन्नस्याष्टौ स्त्रियोऽपि संयमं प्रतिपाद्य सद्गतिं गताः. ॥ इति दानकुलके शालिभद्रकथा संपूर्णा ॥

गाथा—जम्मंतरदाणाउ । उल्लसिआपुव्वकुसलझाणाउ ॥ कयपुन्नो कयवन्नो । भोगाणं भायणं जाउ ॥ १० ॥ व्याख्या—जन्मांतरे पूर्वभवे सुपात्रे दानं दत्तं तस्मात्, उल्लसितं वा अपूर्वं मनोहरं कुशलं शुभं ध्यानं तस्मात्, कृतपुण्योऽसौ कयवन्नाभिधो भोगानां भाजनं जातः ॥ १० ॥

अथास्य कथा—राजगृहनगर्यां श्रेणिको राजा, अभयकुमारो मंत्री धनावहः श्रेष्ठी, सुभद्रा भार्या, तयोः पुत्रो विनयादिगुणोपेतः कयवन्नकः. तस्य चित्तं प्रमदाकृतहावभावविभ्रमविलासैर्नानुमोदते, परं धर्मशास्त्रपठनपाठनादिपूर्वकं साधुसेवादरपरं जातं. पित्रा चिंतितं यौवनप्राप्तोऽप्ययं भोगतृष्णाविमुखोऽस्ति, इति विचार्य श्रेष्ठिना तस्य मित्रायोक्तं यदस्य संसारसंबंधिसर्वकलास्त्वया शिक्षापणीयाः, ततस्तेन तस्य सर्वा अपि विषयकलाः शिक्षापिताः, वेश्यायां चासक्तो विहितस्ततोऽसौ तत्रैव वेश्यागृहे तिष्ठति, श्रेष्ठ्यपि तत्र धनादिकं प्रेषयति. कालांतरे पित्राहूतोऽपि स तदासक्तत्वेन नायाति. पितरौ वृद्धौ जातौ, पुत्रविरहेण च मृतौ धनं क्षीणं, एकदा कयवन्नेन धनार्थं दासी स्वगृहे मोचिता, तया च कयवन्नभार्यापार्श्वे धनं मार्गितं, तयोक्तं धनं तु सर्वं क्षीणं परं मदीयाभूषणा-

नि गृहाण? यतो यथा प्रियस्य संतोषो भवेत्तथैव कुलवध्वा कर्तव्यं, दास्यापि तदाभूषणानि गृ·
हीत्वा वेश्यायै समर्पितानि. अक्कया पुत्र्यै प्रोक्तं निर्धनोऽयं जातोऽतो निष्कासनीयः, अन्यं धनवं·
तं पुरुषमानयिष्यामि. पुत्र्या प्रोक्तं हे मातः सुपुरुषोऽयं कथं निष्कास्यते? तयोक्तमस्य निर्धनस्य
रक्षणेच्छा नास्ति. ततो गृहप्रमार्जनमिषेण तया तं बहिर्निष्कास्य गृहकपाटौ नियंत्रितौ. कयवन्नोऽ-
पि तदभिप्रायं ज्ञात्वा चिंतयत्यहो वेश्याजातिरीदृश्येव भवतीति विचार्य तत उत्थाय रथ्यायां भ्रमन्
स्वगृहसमीपं प्राप्तः, तत्र जीर्णीभूतद्वारं पतितप्रतोलीकं स्थाने स्थाने लूतातंतुवेष्टितं निजगृहं प्रवि-
शता तेन गल्लन्यस्तहस्ताऽधोमुखी विभूषणरहिता निजभार्या दृष्टा. तदा तस्या अपि वामांगं स्फु·
रितं, तत्कारणं चिंतयंत्यास्तस्या द्वारागतप्रियतमो दृष्टीगोचरीबभूव. तया तत्कालमुत्थायाभिमुखीभूय
तस्मै सन्मानपूर्वकमासनं दत्वा विनयो विहितः, द्वयोर्नयनेभ्योऽश्रुधारा पतिता; पार्श्ववर्तिसंबंधिनो-
ऽपि मिलिताः, मातापित्रोर्मरणं श्रुत्वा कयवन्नो विलापं कर्तुं लग्नस्तदा तया प्रोक्तं स्वामिन् विलापं
मा कुरु? यद्भाव्यं तद्भवत्येव. ततस्तया तस्य भक्तिपूर्वकं स्नानं कारयित्वा भोजनं कारितं, सुखेन
च तौ तिष्ठतः. कयवन्नेन निजप्रियांप्रत्युक्तं हे प्रिये मयैतावंति दिवसानि तवानादरः कृतस्तत्त्वया

दांतव्यं, तयोक्तं हे स्वामिन् एष मे कर्मणामेव दोषो न तु भवतः, एवं कियत्कालं तत्र स्थित्वैकदा तेन प्रियांप्रति कथितं हे प्रिये धनं नास्ति तद्व्यापारः कथं क्रियते? तद्विना च गृहनिर्वाहोऽपि कथं भवेत्? अतोऽहं विदेशं धनार्जनकृते गमिष्यामि. तत श्रुत्वा सा कथयति हे स्वामिन् यूयं व्रजतेति कथं कथ्यते? परं युष्माभिः शीघ्रमागंतव्यं, अहमपि च गर्भिण्यस्मि. अथ तस्मिन्नेव दिने कश्चित्सार्थो विदेशे गछन् श्रुतः, तदा संध्यायां तौ दंपती नगराद्बहिस्तत्सार्थे समागतौ, ततस्तत्पत्नी तस्मै चतुर्मोदकान् दत्वा तं च मंचके संस्थाप्य प्रणामं कृत्वा गृहे समागता. कयवन्नो मंचकोपरि सुप्तः सन् प्रमीलां प्राप. अथ तत्र यज्जातं तत श्रूयतां. तस्मिन्नेव राजगृहनगरे कश्चिद्धनवान् व्यवहार्यस्ति, तस्य वृद्धा माता चतस्रो वध्वश्च. अथ तस्यामेव निशायां स व्यवहारी शूलरोगेण मृतस्ततस्ताश्चतस्रो वध्वो रोदितुं लग्नाः, श्वश्रूः कथयति यूयं मा रुदध्वं, अपुत्रकत्वाद्राजा धनं गृहिष्यति. एनं मे मृतपुत्रं गर्त्तायां क्षिपत? अपरं पुरुषमहं समानयिष्यामि. ततस्ताः कथयंतिस्म हे मातः कथमियं वार्ता निष्पद्यते? श्वश्रूः कथयति युष्मासु या काचिद्वदिष्यति तामहं गर्तायां निक्षेप्स्यामि, ततो भीतास्ताः किमपि न जल्पंति. ततः सा ताभिर्वधूभिः सह पुरुषगवेषणार्थं प्र-

स्थिता, नगराद्बहिः कयवन्नांतिके समागता, मंचकसुप्तं तं समीचीनं पुरुषं दृष्ट्वा चतुर्भिर्वधूभिर्मंचक· सहितं तमुत्पाट्य स्वगृहे आनीतः, तत्र च स मंचात्सुखशय्यायां मुक्तः, दीपकाश्च कृताः, चतस्रोऽपि वध्वस्तत्पादतले शुश्रूषां कर्तुं लग्नाः, निद्रांते कयवन्नो जागरितः सन् तत्सर्वं देवलोकसदृशं वीक्ष्य चिंतितवान् किमहं देवलोकेऽवतीर्णः? किंवा स्वप्नमिदं? तावत्ताभिः सर्वोऽपि वृत्तांतः कथितः, तत् श्रुत्वा स प्रमोदमापन्नस्ताभिः सह भोगान् भुनक्ति. कालांतरे तासां चतसृणामपि एकैकः पुत्रो जातः, एवं द्वादश वर्षाणि व्यतिक्रांतानि. तदा सा वृद्धा श्वश्रूर्वधूः कथयति हे वध्वः पूर्वं यस्मात्स्थानादयमानीतस्तत्रैव पुनर्मोचनीयः, ताभिरुक्तं हे मातर्येन सह स्नेहः कृतः स मरणांतेऽपि न मोचनीयः, तत् श्रुत्वा श्वश्रूः कथयति यदि यूयं तस्य मोचनं न करिष्यथ तर्हि युष्मानपि गृहादहं निष्कासयिष्यामि. तदा भीताभिस्ताभिस्तथैव स मंचकसुप्तो नगरबहिर्मुक्तः, तस्योच्छीर्षके च सपादकोटिमूल्योपेतरत्नचतुष्टययुक्तचतुर्मोदकाः स्थापितास्तथा स्वचित्तानि कयवन्नकपार्श्वे मुक्त्वा ताः स्वगृहमागताः. अथ द्वादशवर्षानंतरं स सार्थोऽपि तस्मिन्नेव दिने तत्र स्थाने समागतः, श्रुतश्च तद्वृत्तांतस्तद्भार्यया, ततः सा तत्रागत्य पश्यति, तदा तस्मिन्नेव मंचके तस्यामेवावस्थायां स्थितं निजभर्तारं

ददर्श. भर्तापि स्त्रियं दृष्ट्वा संतुष्टः, परस्परं कुशलं पृष्टं, कयवन्नेन सर्वापि वार्ता कथिता, ततो द्वा-वपि मंचकं गृहीत्वा गृहे समागतौ. तत्र स द्वादशवार्षिकं निजपुत्रं स्वोत्संगे स्थापयामास. पुत्रेणोक्तं हे पितर्मह्यं सुखभक्षिकां देहि? पित्रा तन्मोदकेष्व्य एकस्तस्मै दत्तः, पुत्रस्तं लात्वा पाठशालायां पठनार्थं गतः, तत्र मोदकभक्षणात्तस्माद्रत्नं निःसृतं, तेन रत्नेन स रमयितुं लग्नः, इतो निकटस्थैककांदविकेन तत्करस्थं तद्रत्नं दृष्टं, तज्जिघृक्षता तेन तस्मै बालकाय सुखभक्षिकां दत्वा तद् गृहीतं. इतोऽकस्मात्तद्रत्नं तस्य हस्ताज्जलकुंभिकायां पतितं, रत्नप्रभावतश्च तज्जलं द्विधा जातं, ज्ञातं च तेन तज्जलकांतरत्नमिति यत्नतो रक्षितं. इतः श्रेणिकनृपपट्टहस्ती सरसि जलपानार्थं गतस्तत्र जलजंतुना तस्य पादो गृहीतस्तेन स बहिर्निस्सरितुं न शक्नोति. राज्ञा नगरमध्ये पटहोद्घोषणा कृता, यः कश्चिद्गजं बंधनान्मोचयेत्तस्मै मत्पुत्रीं बहुग्रामांश्च दास्यामि. तदा स कांदविको पटहं स्पृष्ट्वा रत्नं चाग्रे कृत्वा सरसि प्रविष्टः, तदा जलापनयनतो जलजंतुर्हस्तिनं त्यक्त्वा जलमध्ये लीनो हस्ती च शीघ्रं बंधनाभावतो बहिर्निस्सरितः, राज्ञा चिंतितं कथमस्मै पुत्री दीयते? मे वचनमपि च वितथं न भवेत्? अभयकुमारेणोक्तं हे राजन् चिंतां मा कुरु? सर्वं भव्यं भविष्यति. अ-

थाभयकुमारेण कांदविकः पृष्टः कुतस्त्वयेदं रत्नं प्राप्तं? तेनोक्तं मम गृहे एव वर्तते, ततस्तेनान-
तरं तेन सत्यं कथितं यत्कयवन्नपुत्रपार्श्वान्मयैतदधिगतं. ततस्तद्रत्नं लात्वाऽभयेन कयवन्नकः समा-
हूतः पृष्टश्च हे व्यवहारिन् तव पार्श्वे ईदृशानि कियंति रत्नानि संति? तेनोक्तं चत्वारि, तन्मध्यादे-
कं भवत्पार्श्वेऽस्ति, इत्युक्त्वा तेन शेषत्रीण्यपि दर्शितानि. हृष्टेन राज्ञा तस्मै पुत्री परिणायिता बहु-
ग्रामाश्च दत्ताः, रत्नसुवर्णादि बहुद्रव्यं च दत्तं. ततस्तस्याभयकुमारेण सह बहुप्रीतिर्जाता, कयवन्नेन
ताश्चतस्रः स्त्रियो न विस्मृताः. एकदा तेनाभयकुमाराय सर्वोदंतपूर्वकं कथितं मम चतस्रो भार्या-
श्चत्वारश्च पुत्रा अत्रैव राजगृहे वर्त्तते तत्प्रकटीकृत्य मह्यं देहि? ततोऽभयकुमारेण सूत्रधारमाहूयैकः
प्रासादः कारितस्तन्मध्ये च कयवन्नसदृशी यक्षमूर्तिः स्थापिता, नगरे चेत्युद्घोषणा कारिता यदद्य
सर्वस्त्रीभिः स्वस्वपुत्रैः सहात्र यात्रार्थमागंतव्यं, या च नागमिष्यति तस्याः पुत्रस्यायं यक्षोऽशोभनं
करिष्यति. ततोऽभयकयवन्नौ तत्र गुप्तौ स्थितौ. अथ नगरमध्यादनेकस्त्रियस्तत्र समायांति, अनुक्र-
मेण ताश्चतस्रोऽपि स्त्रियो निजपुत्रैः सह तत्र समागताः, कयवन्नेन चोपलक्षिताः कथितं चाभय-
कुमाराय तत्स्वरूपं, ताः स्त्रियोऽपि तां यक्षमूर्तिं दृष्ट्वा परस्परं कथयितुं लग्ना येन पुरुषेण सार्धं वा-

दशवर्षाणि यावद्विषयसुखमस्माभिर्भुक्तं तत्सदृशीयं मूर्तिर्दृश्यते, अभयकुमारेणापि तासामयमालापः श्रुतः, ते चत्वारो बाला अपि तस्य यक्षस्योत्संगे स्थिताः संतः कथयंति हे पितस्त्वमेतावंति दिवसानि क्व गतोऽभूः? कथं न ब्रवीषि? तैरेवमुक्त्वा तस्य श्मश्रूण्याकर्षितानि, ततोऽभयकुमारस्यापि विश्वासः समुत्पन्नः, ततस्ताभ्यां प्रकटीभूय पुत्रसहितास्ताः स्त्रियः श्रेणिकपार्श्वे समानीताः, कथितश्च सर्वोऽपि वृत्तांतः, राज्ञापि तत्स्त्रीपुत्रधनगृहादीनि कयवन्नाय समर्पितानि, वृद्धश्वश्रूस्तु पृथगेव तिष्ठति. अथ यदाक्षया कयवन्नो गृहाद्बहिर्निष्कासितस्तदादितः सा वेश्या पतिव्रताधर्मं पालयति, तद्वृत्तांतमपि कयवन्नेनाभयकुमाराय कथयित्वा स्वद्रव्यसहिता सापि गृहे समानीता. पुनः केनचिद्व्यवहारिणा बहुद्रव्यदानपूर्वकं कयवन्नस्य स्वकीया महारूपवती पुत्री परिणायिता. एवमष्टभार्यायुतः कयवन्नो विषयसुखानि भुनक्ति. सर्वदा विविधहावभावोपेतनाटकानि विलोकयन् स गतकालमपि नो जानाति.

अथैकदा श्रीमहावीरस्तत्र समवसृतः, श्रेणिकाभयकुमारादिबहुलोकाः प्रभुं वंदितुं गताः, कयवन्नोऽपि स्वामिनं वंदितुं समागतः, देशनांते कयवन्नेन पृष्टं स्वामिन्न ममांतरिता ऋद्धिः केन क-

र्मणा प्राप्ता? प्रभुणोक्तं त्वं पूर्वभवे गोपालोऽभूः, एकदा त्वया निजमातुः पार्श्वे क्षीरान्नं मार्गितं, तदा निर्धनत्वेन तत्तुभ्यं दातुमसमर्थया तया रुदनं कर्तुमारब्धं, प्रातिवेश्मिकस्त्रीभिर्दयया क्षीरान्नसामग्री तस्यै दत्ता, ततः क्षीरान्नं निष्पाद्य तया तुभ्यं परिवेषितं. इतो मासक्षपणोपवासी साधुस्तत्र समागतस्त्वया शुभभावपूर्वकं चिंतितमस्मादर्धं त्रिभागं वा साधवेऽर्पयामीति विचिंत्य स्थाल्यां रेखा विहिता, पुनर्भाववृद्धितस्त्वया सकलमपि क्षीरान्नं साधवे दत्तं. पूर्वं रेखाविधानतस्तवांतरायो जातः, पश्चाच्च सकलदानेन तव संपूर्णर्द्धिः प्राप्ता. याभिः प्रातिवेश्मिकाभिः क्षीरसामग्री दत्ता, ता एता अष्टावपि तव भार्या संजाताः. एवं स्वपूर्वभववृत्तांतं श्रुत्वा कयवन्नेन जातिस्मरणं प्राप्य वैराग्यतो गृहभारं ज्येष्टपुत्राय समर्प्य बहुद्रव्यं सप्तक्षेत्रेषु दत्वा भार्यासहितेन दीक्षा गृहीता. निर्मलचारित्रं प्रपाल्य स्त्रीसहितो देवलोकं गतस्ततश्च्युत्वा मोक्षं गमिष्यति. ॥ इति दानकुलके कयवन्नककथा ॥

गाथा—घयपूसवत्थपूसा । महरिसिणो दोसलेसपरिहीणा ॥ लद्धीइ सयलगच्छो—वग्गहगा सुहगइं पत्ता ॥ ११ ॥ व्याख्या—गृहस्थगृहं गत्वा घृतमानीय तेन यो गणं पोषयति स साधुर्घृतपुष्यः कथ्यते, एवं वस्त्रपुष्योऽपि, एतादृशौ यौ ऋषीश्वरौ दोषलवेनापि रहितौ, लब्ध्या च सकल-

सादान्नाम गब्रस्य भक्तिकारकौ शुभगतिं प्राप्तौ. एतादृशाः साधवोऽनेके जाताः संति, गाथामध्ये कस्यापि नास्ति, अतोऽत्र कथा नो लिखिता, ग्रंथांतरादवसेया.

गाथा—जीवंतसामिपडिमाए । सासण विच्छरिऊण भत्तीए ॥ पव्वइऊणं सिद्धो । उदायणो चरमरायरिसी ॥ १२ ॥ व्याख्या—जीवंतस्वामिनः श्रीमहावीरस्य प्रतिमायाः पूजानिमित्तं भक्त्या ग्रामादि दत्वा प्रांते दीक्षामादाय मोक्षं गत उदायिनामा प्रांतराजर्षिः ॥ १२ ॥ विस्तरार्थस्तु कथानकादवसेयो यथा—चंपानगर्यां कुमारनंदिनामा स्वर्णकारो वसति, तेन धनबलेन पंचशतस्त्रीणां पाणिग्रहणं कृतं तथापि विषयेभ्योऽसंतुष्टः, तत्र नगरे नागिलनामा श्रावकोऽस्ति, स तस्य सुवर्णकारस्य मित्रत्वात्तस्मै विषयत्यागोपदेशं ददाति, परं स नांगीकरोति. अथ समुद्रमध्ये पंचशैलनाम्नि पर्वते हासाप्रहासाख्ये द्वे व्यंतरदेव्यौ तिष्ठतः, ते इंद्रस्य सेवकत्वेन इंद्रो यदि नंदीश्वरद्वीपेऽष्टाह्निकामहोत्सवं करोति तदा तत्र नृत्यतः, तयोः पितुर्विद्युन्माली च तदा मृदंगं वादयति. स चैकदा मृतस्तदा ताभ्यां चिंतितमथ नौ को भर्ता भविष्यति? ततस्ताभ्यां कुमारनंदी विषयासक्तो दृष्टस्तस्मै च स्वकीयं रूपं ताभ्यां दर्शितं, तयोः स्वरूपं वीक्ष्य विह्वलीभूतेन तेन पृष्टं युवां के स्थः? ता-

भ्यां निजवृत्तांतं निवेद्य प्रोक्तं यदि तवास्मदीयवांछा चेत्तर्हि त्वया पंचशैले समागंतव्यं, इत्युक्त्वा ते अदृश्यीभूते. स तु तद्रूपमोहितः सन् राज्ञ आज्ञामादाय नगरमध्ये इत्युद्घोषणां दापयामास, यः कोऽपि पंचशैलद्वीपं दर्शयेत्तस्य कुमारनंदी लक्षैकं सुवर्णं ददाति. एकेन वृद्धनाविकेन स्वपुत्रसुखकृते निजमृत्युमप्यंगीकृत्य लक्षसुवर्णं गृहीत्वा तदंगीकृतं. नागिलादिभिर्निवारितोऽपि स कुमारनंदी तत्सार्थे प्रवहणस्थः प्रस्थितः. कतिचिद्दिवसानि यावत्समुद्रगाहनानंतरं दृष्टस्ताभ्यां समुद्रमध्ये एको वटवृक्षः, तदा तेन वृद्धनाविकेन तंप्रति प्रोक्तं यदीदं प्रवहणमस्य वटवृक्षस्याधः प्रयास्यति तदा समुद्रांतःस्थशैलोपर्यास्फाल्येदं प्रवहणं भंक्ष्यति. त्वया तु तत्क्षणमेवास्य वृक्षस्य शाखायां विलग्योर्ध्वं गंतव्यं, रात्रावत्र भारंडपक्षिणः समागमिष्यंति, तन्मध्यादेकस्य पादे विलग्य त्वया पंचशैले गंतव्यं, मम च नूनं मरणमेवात्र.

इतस्तत्प्रवहणं वटवृक्षाधः प्राप्तं भग्नं च, कुमारनंदी तु शाखामालंब्य वटोपरि स्थितः, रात्रौ भारंडपादलग्नः पंचशैले प्राप्तस्तत्र ताभ्यां हासाप्रहासाभ्यां दृष्ट आनीतश्च स्वावासे दत्तानि च तस्मै भोजनायामृतफलानि. ततः कामातुरोऽसौ भोगं प्रार्थयितुं लग्नस्तदा ताभ्यां प्रोक्तमेतेन तवौदारि-

कशरीरेणावाभ्यां सह भोगो न भविष्यतीत्युक्त्वा ताभ्यामुत्पाट्य पुनरसौ चंपायां मुक्तः. किंतु त- द्गतमानसत्वेन तस्य शांतिर्न जाता, वह्निप्रवेशेन मरणेच्छुरभूत. नागिलमित्रेणागत्य प्रोक्तं हे बंधो त्वं चारित्रं गृहीत्वा जिनधर्मं पालय? येन तव देवलोकः सुलभो भविष्यति. मूढेन तेन तन्न स्वी- कृतं, निदानपूर्वकं वह्निमरणं कृत्वा विद्युन्माली नामा हासाप्रहासापतिः स जातः. ताभ्यां सह च सुखानि भुनक्ति. वैराग्यान्नागिलोऽपि चारित्रं प्रपाल्य द्वादशमे देवलोके गतः. अथैकदा सर्वदेवा इंद्रसहिता महोत्सवार्थं नंदीश्वरद्वीपे मिलितास्तदा ताभ्यां स्वपतये प्रोक्तं त्वं कंठे मृदंगं स्थापय यथावां नृत्यावः, स तु लज्जितस्तथा न करोति तावन्मृदंगः स्वयमेव तत्कंठे लग्नः. तेन निष्का- स्यमानोऽपि न निर्गच्छति, दुःखितेनापि तेन मृदंगो वादितस्ताभ्यां नर्त्तितं च. तदा तत्रागतनागि- लजीवदेवेन तमुपलक्ष्य पृष्टं भो विद्युन्मालिन् त्वं मामुपलक्षयसि? तेनोक्तं स्वामिन् भवंतं को नो- पलक्षयति? तेनोक्तं महतः सर्वेऽपि जानंति. तदा तेन स्वकीयं मूलरूपं दर्शयित्वोक्तं रे पामर य- दा मया प्रोक्तं तदा त्वया न मानितं, धर्मो न कृतस्तेन त्वं दुर्गतौ पतितः, ततस्तेन तत्पादौ निप- त्योक्तं मां समुद्धर? नागिलदेवेनोक्तं संप्रति श्रीमहावीरो गृहस्थाश्रमे वर्त्तते तं वंदित्वा तदाकारां

चंदनमयीं तत्प्रतिमां कृत्वा तां सिंधुदेशे वीतभयनगरे मुंच? सा प्रतिमा तत्र पूजयिष्यते तत्पुण्ये-न तव च बोधिबीजं सुलभं भविष्यति.

ततस्तेनापि तथैव कायोत्सर्गस्थश्रीवीरप्रभोः प्रतिमा कृता चंदनमयपेटामध्ये च निहिता. अथ तस्मिन्नवसरे कस्यचिद्व्यवहारिणः प्रवहणं समुद्रोत्पाते षण्मासंयावत पतितमासीत्. तत्र तां पेटां समुद्रोपरि तरंतीं कृत्वाकाशस्थेन विद्युन्मालिना तं व्यवहारिणंप्रति प्रोक्तं त्वमेतां पेटां प्रवहणमध्ये गृहाण? येनायमुत्पातः शमिष्यति. ततो वीतभयपत्तने गत्वेमां पेटां चतुष्पथे मुक्त्वेदं त्वया वाच्यं यदस्मिन्मध्ये देवाधिदेवोऽस्ति, यस्तं प्रकटीकरोति स एव गृह्णातु. इत्युक्त्वा देवोऽदृश्यो जातः, तेन व्यवहारिणापि तथैव कृतं, समुद्रः शांतो जातः, क्षणादेव स वीतभयपत्तने प्राप्तः, तत्र तां पेटां चतुष्पथे मुक्त्वा तेन देवोक्तवचनं कथितं. सकौतुका लोका निजनिजेश्वरनामोच्चारणपूर्वकं पेटां कुठारादिभिरुद्घाटयितुं लग्नाः, परंतु सा नोद्घटिता प्रत्युत कुठारा भग्नाः, तापसभक्तो राजापि तत्रागत्य बहूपायान् कर्तुं लग्नो मध्याह्नं जातं, भोजनायाकारितोऽपि राजा नागतस्तदा प्रभावती राज्ञी तत्रागत्य स्नानं कृत्वा पवित्रवस्त्राणि परिधाय तां पेटां चंदनादिभिः पूजयित्वा गाथामिमामु-

वाच—गयरागदोसमोहो । सवन्नू पाडिहेरकयसोहो ॥ देवाहिदेवरूवो । अरहो मे दंसणं देउ ॥ १ ॥ इत्युक्ते सति तत्कालमेव पेटासंपुटं पृथग्जातं, सर्वेऽपि नागरा आश्चर्यं प्राप्ताः, तत्र च कायोत्सर्गस्थश्रीवीरप्रभोः कल्पवृक्षपुष्पालंकृतां प्रतिमां दृष्ट्वा सर्वेऽपि हृष्टाः, बह्वाडंबरेण गृहे समानीय सा देवालये स्थापिता. अथ सा परमश्राविका चेटकराजपुत्री प्रभावती राज्ञी तां प्रतिमां प्रतिदिनं त्रिकालं पूजयति. उदायिराज्ञा च तत्प्रतिमापूजानिमित्तं ग्रामं दत्तं, तथापि स तापसभक्तत्वं न जहाति. एकदा तत्पूजां कृत्वा प्रभावती तदग्रे नृत्यति, राजा च वीणां वादयति, तदा राज्ञा तस्या मस्तकं नो दृष्टं, तद्व्यग्रचित्तस्य राज्ञो हस्ताद्वीणा स्खलिता, तदा राज्ञ्या पृष्टं स्वामिन् किमिदं जातं? राज्ञोक्तं प्रिये नृत्यंत्यास्तव मया मस्तकं नो दृष्टमधुना तु तद् दृश्यते. प्रभावत्या चिंतितमथ ममायुः स्तोकमस्ति. पुनरेकदा स्नानांते तया दासीपार्श्वे श्वेतवस्त्राणि मार्गितानि, तया तान्येवानीय तस्य दत्तानि, परं दृष्टिभ्रांत्या राज्ञ्या तानि रक्तानि दृष्टानि, अतः क्रुद्धया तया दास्युपरि स्वादर्शः क्षिप्तो मर्मस्थानप्रहारतः सा मृता, ततो राज्ञ्या तान्येव वस्त्राणि श्वेतानि दृष्टानि. पश्चात्तापपरया राज्ञ्या राज्ञे कथितं स्वामिन्नहं दीक्षां गृहीत्वानशनं करिष्ये, अत्याग्रहेण राज्ञा तत्प्रतिपद्य तस्यै क-

थितं हे प्रिये यदि त्वं देवलोके व्रजेस्तदा मम सत्यधर्मस्त्वया प्रदर्शनीयः, राज्ञ्या च तत्प्रतिपन्नं. ततः सा दीक्षोपेतानशनं कृत्वा मृत्वा सौधर्मदेवलोके गता. अथ देवदत्ता नाम्नी कुब्जा दासी तां प्रतिमामहर्निशं पूजयति. प्रभावतीजीवदेवेन राज्ञः प्रतिबोधायानेके उपायाः कृताः, परं स न प्रतिबुद्धस्तदा देवेन तस्मै तापसरूपं विधाय स्वादुफलानि दत्तानि, तथाविधान्यफलप्राप्तिलुब्धकं च राजानं विधाय स तं वाटिकामध्ये समानीतवान्. तत्र च तेन बहवस्तापसा विकुर्विताः, यावद्राजा वृक्षात्फलानि गृह्णाति तावत्ते सर्वे तापसास्तं ताडयितुं यष्टिपाणयः प्रधाविताः, प्रणष्टो राजा दूरस्थजैनमुनीनां शरणं गतः, साधुभिश्च मधुरवाक्यैस्तच्चित्तं शांतं कृतं. ततो देवेन प्रकटीभूय जैनधर्मे तस्य मनः स्थिरीकृतं, शुद्धसम्यक्त्वधारी च स संजातः, देवेन तस्मै कथितं पुनरपि कार्यावसरेऽहं स्मरणीयः, ततः स देवो देवलोके गत उदायी च सुखेन राज्यं पालयति.

अथैको गांधाराभिधः श्रावकोऽनेकतीर्थानि वंदित्वा शाश्वतजिनचैत्यवंदनार्थं वैताढ्यसमीपे समागतः, परं तदुपरि गंतुमसमर्थोऽभूत्, तदा तेन प्रतिज्ञा कृता यदि शाश्वतजिनचैत्यानां मे वंदनं भविष्यति तदैवाहमाहारं करिष्ये. एवं पंचदिवसानंतरं तत्तपसाकृष्टशासनदेवतया तस्य मनोरथः

पूर्णीकृतः, दत्ताश्च तस्मै रूपादिवांछितार्थदा अष्टोत्तरशतगुटिकाः. अथ गांधारस्तन्मध्यादेकां गुटिकां मुखे प्रक्षिप्य चिंतितवानहं वीतभयपत्तने गत्वा जीवंतस्वामिप्रतिमां वंदेयं, एवं चिंतनत एव स तत्र प्राप्तः, तत्र देवाधिदेवं पूजयित्वा स्थितः, ततो दैवयोगात्स मांद्यं गतः, कुब्जिकया साधर्मिकत्वेन तस्य परिचर्या कृता, परं स्वस्यायुः क्षीणं ज्ञात्वा तेन सर्वा अपि गुटिकास्तत्प्रभावकथनपूर्वकं कुब्जायै दत्वा कालः कृतः, कुब्जिकया गुटिकामेकां भक्षयित्वा रूपं मार्गितं, तत्कालमेव तस्याः कुब्जत्वं गतं मनोहररूपं च जातं, ततः सा सुवर्णगुलिकेति नामतः प्रसिद्धा जाता. अथ तया चिंतितं मे मनोहरं रूपं पुरुषं विना निष्फलं, अयं च राजा मम पितृतुल्यः, ततस्तया चंडप्रद्योतनं मनसि कृत्वैका गुटिका भक्षिता, तदैव चंडप्रद्योतेनापि तस्या रूपं श्रुतं, तदाह्वानार्थं च दूतः प्रेषितः, तंप्रति तया प्रोक्तं यदि चंडप्रद्योतः स्वयमेवायाति तदाहं समागच्छामि. ततस्तत्रागतं चंडप्रद्योतंप्रति सुवर्णगुलिकया कथितं त्वमेकामीदृशीं नवां चंदनमयीं देवाधिदेवप्रतिमां कारय? यथा तां नवां प्रतिमामत्र स्थापयित्वा पुरातनीं च सार्धं गृहीत्वागच्छामि. तदा चंडप्रद्योतः पुनरुज्जयिनीमागत्य तथारूपां प्रभुप्रतिमां कारयित्वा तस्याः कपिलकेवलिपार्श्वे प्रतिष्ठां कारयामास. अथ कपिलके-

वलिसंबंधो यथा—

कौशांब्यां जितशत्रुराजा, तस्य पुरोहितपुत्रः कपिलः, बाल्ये एव तस्य पिता मृतः, राज्ञा च नवीनः पुरोहितः स्थापितः, एकदा तस्य नवीनपुरोहितस्याम्बरं दृष्ट्वा कपिलमाता मनसि दूना विललाप, कपिलेन तत्कारणं पृष्टा सोवाच ते बाल्यभावतस्तव पितृपदमयं भुनक्ति तेन मे मनसि दुःखं जायते. अतस्त्वं श्रावस्त्यां गत्वा तव पितृमित्रेंद्रदत्तस्य पार्श्वे विद्यां पठित्वात्र समागच्छ? यथा ते पितृग्रासः पुनः समागच्छेत्. कपिलस्तूर्णं गत्वा पठितुं लग्नः, शालिभद्रनामा श्रेष्ठी तस्य भोजनं ददाति, कर्मसंयोगत एकया दास्या सह तस्य संबंधो जातस्तेन सा गर्भवती जाता, तदा तस्याः पोषणादिकृते स द्रव्यचिंतायां पतितः, अथ तन्नगरराजा प्रतिदिनं प्रभाते प्रथमागतं द्विजं द्विमाषमितं स्वर्णं ददाति. कपिलस्तद्ग्रहणार्थं मनोविह्वलतयाऽर्धरात्र्यामेव गृहान्निर्गत आरक्षकैश्च धृत्वा प्रभाते राज्ञोऽग्रे नीतः. तत्र सत्यकथनतस्तुष्टेन राज्ञा मनोऽभीष्टद्रव्यादिमार्गणाय स प्रोक्तः, तेन कथितं विचार्य मार्गयिष्ये. ततोऽसावशोकवाटिकायां गत्वा विचारयन् लोभोदधेः पारमप्राप्नुवन् वैराग्यं प्राप्य दीक्षां जग्राह, अनुक्रमेण जातिस्मरणप्राप्तेरनंतरं केवलज्ञानं प्राप्य पंचशतचौरान् प्रति·

बोध्य स्वशिष्यान् कृत्वोज्जयिनीं समागत्य तां प्रतिमां प्रतिष्ठापितवान्. ॥ इति कपिलसंबंधः ॥

अथ चंडप्रद्योतेन सा प्रतिमा सुवर्णगुटिकायै समर्पिता, सापि तां प्रतिमां जिनालये स्थापयित्वा जीर्णां च गृहीत्वाऽनिलवेगगजोपरिस्था चंडप्रद्योतसहितोज्जयिनीं प्राप्ता. प्रभाते देवाधिदेवप्रतिमां वंदितुं समागतेनोदायिराज्ञा तत्रस्थपुष्पाणि म्लानानि दृष्ट्वा सूक्ष्मदृष्ट्या विलोकितं ज्ञातं चेयं मूलप्रतिमा नास्ति. इतस्तेन सुवर्णगुलिकापि नो दृष्टा, अनिलगतिहस्त्यागमनचिह्नानि च दृष्टानि, ततो दासीप्रतिमयोरपहारकं चंडप्रद्योतं ज्ञात्वा चतुरंगसेनामादाय स उज्जयिनींप्रति गतः, तत्र युद्धे चंडप्रद्योतं जीवंतं गृहीत्वा तस्य ललाटपट्टे मम दासीपतिरित्यक्षराणि तेन लिखितानि. ततो यावद्राजा प्रतिमामुत्पाटयति तावदाकाशे वाणी जाता यद्वीतभयपत्तने रजोवृष्टिर्भविष्यति तेनाहं तत्र नागमिष्यामि, ततो राजा तां वंदित्वा पश्चाद्वलितः, पथि मेघे वर्षति तत्र नगरं स्थापयित्वा स्थितस्तद्दशपुराभिधानं नगरं जातं. अथ तत्र पर्युषणापर्वणि समागते उदायिना पौषधं कृतं, भोजनायाहूतेन चंडप्रद्योतेन चिंतितमद्यायं मम भोजने विषं दास्यति. इति विचार्य तेन सूदंप्रति प्रोक्तं ममाप्यद्योपवासोऽस्ति. तद्वृत्तांतं श्रुत्वोदायिना सांवत्सरिकप्रतिक्रमणे तं सधर्मिणं क्षामयित्वा

तदच्छादनार्थं पट्टबंधं दत्वा बंधनमुक्तः कृतो गतोऽपि च स निजनगरीं. अथोदायिनृपोऽपि निजनगरे गत्वा तां प्रतिमां पूजयन् सुखेन राज्यं करोति. एकदा रात्रिपौषधे स धर्मजागरिकां कुर्वन् मनसि चिंतयति यद्यत्र श्रीवीरप्रभुः समागच्छेत्तदहं चारित्रं स्वीकरोमि. वीरप्रभुणापि ज्ञानेन तद्भावं ज्ञात्वा तत्र विहृतं मार्गे तृषादिपीडितैः पंचदशशतसाधुभिः कालः कृतो जाताश्च ते सर्वेऽप्याराधकाः, अथ श्रीवीरप्रभौ तत्र समागते सति राज्ञा महताडंबरेण तस्य प्रवेशोत्सवः कृतः, देशनां श्रुत्वा वैराग्यमापन्नेन राज्ञा हस्तौ नियोज्य कथितं हे स्वामिन् भवद्भिरत्रानार्यदेशेऽपि समागत्य ममोपरि महती कृपा विहिता. प्रभुणोक्तं हे राजन् त्वमंतिमो राजर्षिरसि, अतः कृपायोग्य एव. तत श्रुत्वा राज्ञा गृहे समागत्य चिंतितं यद्यहं पुत्राय राज्यं दास्यामि तर्हि स चारित्रमप्राप्य संसारे भ्रमिष्यति, इति विचार्य तेन निजभागिनेयकेशिकुमाराय राज्यं दत्वा बहुपरिवारयुतेन दीक्षा गृहीता. अथ तेनैकादशांगानि पठितानि, कालांतरे शरीरे रोगाः समुत्पन्नाः, स्वाम्याज्ञया विहृत्य वीतभयपत्तने स समागतः. तत्र गोकुले स्थितो दध्याहारं करोति, तेन तस्य रोगोपशांतिर्जाता. एकदा तस्य पूर्ववैरिणा सामंतनाम्ना प्रधानेन केशिनृपायोक्तमयं राजर्षिस्ते राज्यं गृहीतुं समागतोऽ-

स्ति. तद्वचनतो दुष्टीभूतेन राज्ञा गोकुले गत्वा विषमिश्रितं दधि मुनये दापितं मुनिरपि विषव्याप्तं स्वशरीरं ज्ञात्वा क्षपकश्रेणिमारूढः केवलज्ञानं प्राप्य मोक्षं गतः, ततः कुपितेन देवेन नगरोपरि रजोवृष्टिर्विहिता, नगरं च तन्नष्टं. ॥ इति श्रीदानकुलके उदायिराजर्षिकथा. ॥

गाथा—जिणहरमंडिअवसुहो । दाउं अणुकंपभत्तिदाणाइं ॥ तिथ्थप्पभावगरेहां । संपत्तो संपइराया ॥ १२ ॥ व्याख्या—जिनप्रासादैर्मण्डिता वसुधा कृता येन सः, दत्वा अनुकंपादानं भक्तिदानं च तीर्थप्रभावकरेखां संप्राप्तः संप्रतिराजा ॥ १२ ॥ अस्य संबंधो यथा—कौशांब्यां नगर्यां श्रीआर्यमहागिरिआर्यसुहस्तिनौ समागतौ, वर्षं च तद्दुर्भिक्षमासीत्. श्रावकाश्च साधूनां बहुभक्तिं कुर्वंति. एकदा महर्द्धिकश्रावकस्य गृहे साधवो नानाप्रकाराणि भोजनानि गृह्णंति, तदा केनापि रंकेण तद् दृष्ट्वा तेषां साधूनां कथितं भो ममाप्यन्नं देयमिति वदन् स तेषां पृष्टे लग्न उपाश्रये समागतः, गुरुभिर्ज्ञानोपयोगतस्तं लघुकर्माणं भवांतरे च शासनप्रभावकं ज्ञात्वा तस्मै प्रोक्तं हे भद्र यदि त्वं यतित्वमाश्रयसि तदा वयं तुभ्यं भोजनं दास्यामः, तेनापि तत्स्वीकृतं. तत आर्यसुहस्तिसूरिभिस्तस्मै चारित्रं दत्वा यथेष्टं भोजनं दत्तं. रात्रौ विसूचिकातः शुभध्यानवशः स कालं कृत्वोज्ज·

यिन्यां त्रिखंडाधिपतिः संप्रतिनामा राजाभूत्.

अथैकदा श्रीसुहस्तिसूरय उज्जयिन्यां समागताः, गवाक्षस्थेन संप्रतिना तान् दृष्ट्वा जातिस्मरणं प्राप्तं, शीघ्रं गवाक्षादुत्तीर्य गुरून्नमस्कृत्य तेनोक्तं हे स्वामिन् मां किमुपलक्षध्वं? गुरुभिर्ज्ञानं प्रयुंज्य स उपलक्षितः. अथ संप्रतिर्गुरून् प्रति कथयति हे स्वामिन् मया यदिदं राज्यं प्राप्तं तत्पूज्यानामेवायं प्रसादः, अतोऽहं किं करोमि तदादिशध्वं? गुरुभिरुक्तं शुभाध्यवसायतो जिनशासनप्रभावनां कुरु? ततः संप्रतिराजेन सम्यक्त्वमूलद्वादशव्रतान्यंगीकृत्य जिनशासनैकछत्रमंडितं निजराज्यं विधाय पूर्वभवस्वानुभूतदीनजनदुःखोल्लसितकरुणार्द्रमनसा स्थाने स्थाने संसारसागराद्दीनजनोद्धरणप्रवहणतुल्या दानशालाः स्थापिताः, जगज्जनोद्धरणैकलक्षाणां श्रीमदर्हतां लक्षोत्तरपंचविंशतिसहस्रमितप्रासादैर्मंडितं त्रिखंडं विहितं, तन्मध्ये षट्त्रिंशत्सहस्रनूतनप्रासादाः कारिताः, शेषैकोननवतिसहस्रजिनप्रासादानामपारसंसारसागरनिमज्जन्निजात्मोद्धरणायेव जीर्णोद्धारो विहितः, सपादकोटिमिता जिनप्रतिमा निर्माप्य प्रतिष्ठिताः, अनेकलोकानां जिनधर्मे स्थिरीकरणपूर्वकं विविधप्रकारोपेतं स्वामिवात्सल्यं च कृतं, अनार्यदेशेऽपि साधुवेषमंडितान्निजसेवकान् पूर्वं प्रेष्य तद्दे-

शमनुष्यानपि ज्ञातजैनसाध्वाचारविचारान् कृत्वा तत्रापि जैनमुनिजनविहारयोग्यसुलभता कारिता, संसारापारपारावारप्रवहणोपमतीर्थाधिराजश्रीशत्रुंजयतीर्थस्याप्युद्धारस्तेन विहितः, एवं श्रीजिनशासनोन्नतिपूर्वकं शुद्धश्राद्धधर्ममाराध्यायुःक्षये स देवलोकं गतः, अनुक्रमेण च मोक्षं यास्यति. ॥ इति दानकुलके श्रीसंप्रतिराजकथा. ॥

गाथा—दाउं सद्धासुद्धे । सुद्धे कुम्मासए महामुणिणो ॥ सिरिमूलदेवकुमारो । रज्जसिरिं पाविअ गरुआं ॥ १४ ॥ व्याख्या—दत्वा श्रद्धया भावेन शुद्धान् निर्दोषान् कुल्माषान् महामुनीश्वरस्य, श्रीमूलदेवकुमारो गुर्वीं राज्यलक्ष्मीं प्राप्तः ॥ १४ ॥ तत्कथा चेयं—पाटलीपुत्रनगरे जितशत्रुराजा, तस्य मूलदेवाभिधः कुमारः सर्वकलानिपुणोऽपि पूर्वकर्मदोषेण द्यूतव्यसनासक्तोऽभूत, पित्रा बहु वारितोऽपि स तस्मान्न निवृत्तः, तं दुर्व्यसनिनं ज्ञात्वा राज्ञा देशान्निष्कासितो भ्रमन्नुज्जयिन्यां स गतः, मार्गे केनचित्सिद्धपुरुषेण तस्मै रूपपरावर्तनगुणोपेता गुटिका दत्ता, तत्प्रभावतोऽसौ वामनरूपं कृत्वा नगरमध्ये परिभ्रमति. अथ तस्मिन्नेव नगरे देवदत्ताभिधैका मानिनी गणिका वसति, स केनापि पुरुषेण सार्धं न रमते. मूलदेवस्तां वशीकर्तुं तद्गृहसमीपेऽत्यंतमधुरस्वरैर्गायनं

कर्तुं लग्नः, तज्ज्ञानमोहितया वेश्यया तदाह्वानकृते स्वीयैका कुब्जा दासी प्रेषिता, दास्या तत्समीपे समागत्य विनयेनोक्तं युष्मान् मम स्वामिन्याह्वयति. तेनोक्तमहं वेश्यासंगं नेच्छामि, दासी तु तमाग्रहेण हस्ते गृहीत्वा चचाल, मार्गे मूलदेवेन विद्याबलेन तस्याः कुब्जत्वं दूरीकृतं. देवदत्तया चिंतितमेतादृक्कलावतोऽस्य कुब्जत्वं कथं? इतो गतकुब्जतां दासीं विलोक्य तया पृष्टं केन ते कुब्जत्वं दूरीकृतं? तयोक्तमनेन सुपुरुषेण निजविद्याबलतो मे कुब्जत्वं दूरीकृतं. तत् श्रुत्वा हृष्टा वेश्या विस्मयं प्राप्ता तस्य विविधां परिचर्यां विनयपूर्वकं कर्तुं लग्ना. इतस्तत्रैकः पुरुषो वीणां वादयन् समागतस्तस्य वीणावादनकलातो रंजितया वेश्यया मूलदेवः पृष्टः किमनेन वीणा सम्यग्वादिता न वा? मूलदेवेन शिरः कंपितं पृष्टं च तया तत्कारणं, मूलदेवो जगौ वंशमध्ये कर्करोऽस्ति, तुंबकावपि सगर्भौ स्तः, तदा कौतुकतस्तया वीणोत्कलिता दृष्टं तन्मध्ये तथैव. पुनस्तां वीणां सज्जीकृत्य मूलदेवेन तथा सा वादिता यथा वेश्या हृष्टा सती तस्योपरि सरागा जाता. भोजनवेलायां वेश्यया प्रोक्तं स्नानाभ्यंगादि कृत्वा भुज्यते, मूलदेवेनोक्तं चेत्तवेच्छा तर्हि तव शरीरेऽहं मर्दनं करोमि, वेश्यया तत्प्रतिपन्नं, तेन च तस्याः शरीरे तथा मर्द्दनं कृतं यथा सा कामातुरा सती चिंतयामास,

नूनमयं सिद्धपुरुषो विद्ययैव कुब्जीभूतोऽस्ति, ततः शीघ्रं मूलदेवेन निजरूपं प्रकटीकृतं, वेश्यात्यंतं हृष्टा, भोजनानंतरं तांबूलादि भक्षयित्वा स्नेहालापान् वदंत्या वेश्यया तस्मै प्रोक्तं हे स्वामिन्नद्यावधि केनापि पुरुषेण मे मनो नो रंजितं त्वया चाद्य वशीकृतं, अथ त्वया मम गृहे सदैवागंतव्यं, मूलदेवस्तद्वचनं स्वीकृत्य प्रतिदिनं तत्रागत्य तया सह विलासं करोति. वेश्यया तस्मै द्यूतव्यसनत्यागोपदेशो दत्तः परं तेन तन्न त्यक्तं. एकदा वेश्यया राज्ञः पुरो नृत्यं कृतं मूलदेवेन च मृदंगो वादितस्तुष्टेन राज्ञा वेश्यायै वरमार्गणाय प्रोक्तं, तयोक्तमवसरेऽहं वरं मार्गयिष्यामि.

अथ तत्रैकोऽचलनामा सार्थवाहो वसति, तेन तया वेश्यया सह प्रीतिकरणार्थं पूर्वमनेकाभरणादीनि तस्यै दत्तान्यासन्. तेन तस्या वेश्याया गृहे मूलदेवागमनं विलोक्य द्वेषं वहताऽक्कायै तदागमननिषेधाय प्रोक्तं, ततोऽक्कया निजपुत्र्यै प्रोक्तं विनाऽचलमन्यपुरुषस्य संगं त्वं मा कुरु? वेश्ययोक्तमहमेकांतधनरागिणी नास्मि, गुणरागिण्यप्यस्मि, यादृग्गुणा अस्मिन्मूलदेवे संति तादृग्गुणाः कस्मिन्नपि पुरुषे न संति. अक्कया प्रोक्तमस्य द्यूतकारकस्य मध्ये गुणानामसंभव एव, अचलस्तु धनिकत्वाद्गुणवानेव. देवदत्तया प्रोक्तमावां तयोः परीक्षां कुर्वः, देवदत्तोक्तया ततोऽक्कयाऽचल-

पार्श्वे ईक्षुयष्टिर्मार्गिता, तेन तत्क्षणमेवेक्षुभृतशकटं प्रेषितं, देवदत्तयाऽक्कायै प्रोक्तं किमहं हस्तिन्यस्मि? यत्तेनेक्षुशकटं प्रेषितं. ततो देवदत्तया दासीं प्रेष्य मूलदेवपार्श्वे ईक्षुयष्टिर्मार्गिता. तेन चोत्तमेक्षुयष्टिमादाय निस्त्वचं च विधाय शकलीकृत्य कर्पूरादिना च संस्कृत्य मनोहरभाजने संस्थाप्य कोमलवस्त्रेण चाछाद्य तदीक्षुभाजनं दास्या हस्तेन प्रेषितं. तदा देवदत्तया प्रोक्तं हे मातः पश्य गुणज्ञगुणिनोरंतरं. अक्का चमत्कृतापि लोभार्थिनी चिंतयति यद्ययं मूलदेवोऽत्र नायाति तदा वरमिति विचिंत्य तयाऽचलाय ज्ञापितं यदि मूलदेवोऽपमानं प्राप्नुयात्तदा स इतो गछेत. अथाचलो ग्रामांतरगमनमिषेण प्रछन्नं स्थितः. संध्यायां मूलदेवोऽचलं ग्रामांतरगतं ज्ञात्वा देवदत्तागृहे समागतः, अक्कया संकेतितोऽचलोऽपि शीघ्रं तत्रागतः, देवदत्तया मूलदेवो मंचकाधो गुप्तीकृतः, अक्कायाः कथनतो मूलदेवं मंचकाधःस्थितं ज्ञात्वाऽचलेन देवदत्तायै प्रोक्तमद्य मम मंचकोपर्येव स्नानं कर्तुमिछास्तीत्युक्त्वा स पानीयमादाय यावन्मंचकोपरि स्नानं कर्तुं लग्नस्तावन्मूलदेवो क्षुब्धः, अचलेन शीघ्रं मूलदेवं केशेष्वाकृष्य प्रोक्तमधुना तव किं करोमि? मूलदेवेनोक्तं यत्तुभ्यं रोचते तत्कुरु? अचलेन चिंतितमस्य रूपचातुर्यादिभिर्ज्ञायते यदयं कोऽप्युत्तमपुरुषोऽस्ति, इति विचार्य तेनोक्तमधुना

तु त्वामहं मुंचामि परमद्यप्रभृति त्वयात्र नागंतव्यं, पुनर्यदि कदाचिन्ममोपर्यपि एतादृगापदापतेत्त र्हि प्रत्युपकारस्त्वया कार्यः, ततो मूलदेवो बहिर्निर्गत्यापमानतो दूनश्चिंतयति, अथ मया विदेशे गंतव्यमिति विचार्य स विदेशंप्रति चचाल. पथि मिलितेन पृष्टेन नैमित्तिकेन तस्मै प्रोक्तं बेन्नातटगतस्य तवोदयो भविष्यति, ततोऽयं तत्र चलितोऽनुक्रमेण द्वादशयोजनीमटवीं संप्राप्तः, मार्गे चैको ब्राह्मणस्तस्य मिलितः, मध्याह्ने ब्राह्मणेन स्वपार्श्वस्थं पाथेयं भक्षितं. किंतु मूलदेवाय स्तोकमपि तस्मान्न दत्तं. एवं दिनत्रयं यावत्तेन द्विजेन तथैव कृतं, बुभुक्षितेनापि मूलदेवेन न किंचित्तस्मै मार्गितं, चतुर्थे दिने द्वयोः पंथानौ भिन्नौ जातौ, तदा मूलदेवेन ब्राह्मणाय तदभिधानं पृष्टं, तेनोक्तं ममाभिधानं निर्घृणशर्मेति. मूलदेवेनोक्तं यदि किंचित्कार्यं समुत्पद्यते तदा त्वया बेन्नातटे समागत्य मे मूलदेवस्य नाम पृष्टव्यं. अथ मूलदेवस्ततश्चलन्नेकं ग्रामं प्राप्तो बुभुक्षितश्च ग्राममध्ये भिक्षार्थं गतः, ततो भिक्षायां लब्धान् कुल्माषान् गृहीत्वा बहिर्नदीतटे समागत्य चिंतयति यद्यधुना कोऽप्यतिथिः समागच्छेत्तर्हि तस्मै यत्किंचिद्दत्वाहं भोजनं करोमि. इतस्तत्रैको मासोपवासी साधुः समागतः, सद्यस्तेनाभ्युत्थायादरपूर्वकं कथितं हे स्वामिन्निदं गृहीत्वा मां निस्तारय? साधुनाऽतिला-

न्नं ज्ञात्वा तस्मै प्रोक्तं हे महानुभाव! तस्मात्स्तोकान्नं देयं. किं तु शुभभावोल्लसितमानसेन मूल· देवेन ते सर्वेऽपि कुल्माषाः साधुपात्रे निक्षिप्ताः, हृष्टश्च सः ' धन्नाणं खु नराणं । कुम्मासा हुंति साहुपारणए ' इति द्विपदीमुच्चरन्नृत्यति. तदैव वनदेवतया प्रकटीभूय तस्मै कथितं तव सुपात्रदा- नेनाहं तुष्टा, अस्या गाथाया अग्रेतनपादद्वये यत्त्वं मार्गयिष्यसि तदहं तुभ्यं दास्यामि, ततो मूल· देवेन भणितं ' गणियं च देवदत्तं । हत्थिसहस्सं च रज्जं च ' देवतयोक्तं तत्सर्वं ते भविष्यति. अनुक्रमेण स बेन्नातटं प्राप्तस्तत्रैकदेवकुले रात्रौ स सुप्तः स्वप्ने च पूर्णं चंद्रं पीतं दृष्टवान्. प्रभाते कस्मैचिद्ब्राह्मणाय तेन तत्स्वप्नफलं पृष्टं, द्विजेनोक्तं प्रथमं त्वं भोजनं कृत्वा मदीयां रूपयौवनसंपन्नां पुत्रीं परिणय? पश्चादहं तव स्वप्नफलं कथयिष्यामि, तेन तथाकरणानंतरं द्विजेनोक्तमितः सप्तम· दिने त्वमेतन्नगरस्य राजा भविष्यसि, बहवो राजानस्त्वत्सेवां करिष्यंति, अनेकराजपुत्रीः परिणेष्य- सि परं मम पुत्र्यास्त्वया कदापि प्रीतिभंगो न कार्यः, अथ स मूलदेवो हृष्टः सन् तत्र श्वशुरगृहे तिष्ठति. अथ सप्तमदिने स नगराद्बहिश्चंपकवनतरुतले सुप्तोऽस्ति. इतस्तन्नगराधिपोऽपुत्रत्वेन मृतः, पंचदिव्यानि शृंगारितानि, हस्तिन्या नगराद्बहिरागत्य मूलदेवोपरि कलशः सिंचितः, जयजयशब्द·

मुच्चरद्भिर्हृष्टैर्लोकैर्वेष्टितो गजस्कंधाधिरूढो मूलदेवो राजद्वारे समागतः, प्रधानपुरुषैश्च तस्य राज्याभिषेको विहितः, अनेकराजपुत्रीः परिणीय स तत्र सुखेन राज्यं पालयति.

अथैकदा तस्य देवदत्ता गणिका स्मृतिपथमागता, ततस्तेनोज्जयिनीनगराधिपतिविचारधवलाभिधराज्ञा सह प्रीतिः कृता, अथ मूलदेवस्यापमानकारकाचलंप्रति रुष्टा देवदत्ता वेश्योवाचारे दुष्ट त्वं दूरीभवाहं ते परिणीता भार्या नास्मि, अतःपरं त्वया मम गृहे नागंतव्यमिति निर्भर्त्सितोचलः स्वगृहं जगाम. देवदत्ता च मूलदेवैकलीनचित्ता समयं गमयांचकार. अथैकदा मूलदेवेनोज्जयिनीपतये लेखः प्रेषितो लिखितं च तस्मिन् भवतां नगरमध्ये या देवदत्ताभिधाना वेश्यास्ति, तस्याश्च मम बहुप्रीतिर्वर्तते, ततो यदि तस्या मम पार्श्वे समागमनेच्छा भवेत्तर्हि सा मोचनीया, राज्ञा देवदत्तामाहूय ज्ञापितो लेखवृत्तांतः, तत् श्रुत्वात्यंतं हृष्टा सा बेन्नातटे गत्वा मूलदेवाय मिलिता, मूलदेवोऽपि तस्याः संगमेनात्यंतं संतुष्टः. अथैकदाऽचलो व्यापारार्थं बेन्नातटे समागत्य मणिमुक्ताफलाद्युपहारं राज्ञे दत्वोवाच हे स्वामिन् राजभागनिमित्तं भवतः सेवकान् प्रेषय? मूलदेवेन स उपलक्षितः परमचलेन मूलदेवो नोपलक्षितः, राज्ञा भणितं किं क्रयाणकमस्ति? तेनोक्तं पू-

गीफलमंजिष्टादिकमस्ति. राज्ञोक्तं श्रेष्ठिन् त्वयार्ध एव राजभागो देयः, परमहं स्वयमेव तत्रागत्य तव क्रयाणकं विलोकयिष्यामि, इत्युक्त्वा राजा तत्रागत्य तत्क्रयाणकानि द्रष्टुं लग्नस्तदा मंजिष्ठादिमध्यात्सुवर्णरूप्यरत्नानि निःसृतानि दृष्ट्वा रुष्टेन राज्ञा स चौरवद्बद्धः, तद्द्रव्योपरि च स्वसेवकाः स्थापिताः, श्रेष्ठी च राजगृहे समानीतः, राज्ञाऽचलंप्रति प्रोक्तं त्वं मामुपलक्षयसि? तेनोक्तं हे महाभाग त्वां को नोपलक्षयति? राज्ञोक्तमावयोः पूर्वमेलापकं यदि संस्मरसि तदा वद? तेनोक्तं स्वामिन्नहं न स्मरामि. राज्ञा देवदत्तामाहूय प्रोक्तं त्वमेनमचलसार्थवाहमुपलक्षयसि? तदाऽचलेन देवदत्तोपलक्षिता. देवदत्तयोक्तं भो अचल सोऽयं मूलदेवोऽस्ति यस्य त्वया पूर्वं भणितं ममापद उपकारः कर्तव्य इति. अचलेनापि मूलदेवमुपलक्ष्य प्रोक्तं स्वामिन्नस्या आपदो मां समुद्धर? मूलदेवराज्ञा कृपार्द्रमनसा तत्सकलधनसमर्पणपूर्वकं स मुक्तो गतो निजनगरंप्रति. अथान्यदा स निर्घृणशर्मा ब्राह्मणो मूलदेवं नृपतीभूतं श्रुत्वा तत्रागत्य प्रणामं कृतवान्. राज्ञा तद्वासग्रामस्तस्मै दत्तः, पुनर्येन कुल्माषान्नं दत्तं तस्मै व्यवहारिणेऽपि तद्वासग्रामो दत्तः, एवं बहुकालं यावद्राज्यं पालयन्ननेकसुपात्रदानतीर्थयात्राजिनशासनोन्नतिं कृतवान्. अथ तस्मिन्नगरे चौराणामुपद्रवो बभूव, सर्वाः

प्रजा मिलित्वा राज्ञोऽग्रे समागत्य कथयामासुः स्वामिन्नगरमध्ये चौरोपद्रवतः स्थातुं न शक्यते. राज्ञा दुर्गपालमाहूय कथितं शीघ्रमेव चौरं प्रकटीकुरु? तेनोक्तं स्वामिन् स सिद्धविद्यश्चौरो मम वशं नायाति. ततो राजा स्वयं कार्पटिकवेषं विधाय रात्रौ साशंकं विलोकमान एकस्मिन् जीर्णदेवकुले सुप्तः, तदा तत्र चौरः समायातः, पृष्टं च तेन राज्ञःप्रति कोऽसि त्वमिति. राज्ञोक्तमहं कार्पटिकोऽस्मि, चौरेणोक्तं समुत्तिष्ठ तव दारिद्र्यं खंडयामि. ततस्तौ नगरमध्ये समागतौ, ततश्चौरेण विद्याबलेन कंचिद्धनिनं निद्रां दत्वा तस्य गृहाद्बहुधनं गृहीत्वा राज्ञः शिरसि तद्भारग्रंथिं मुक्त्वा चलितं दूरेऽटवीमध्ये भूमिगृहे तद्द्रव्यं स्थापितं.

अथ तस्य चौरस्यैका रूपवती भगिनी वर्तते, तांप्रति तेनोक्तमस्य प्राघूर्णकस्य चरणक्षालनं कुरु? तया तत्रागत्य सुकुमालशरीरं मनोहररूपं च राजानं निरीक्ष्य प्रोक्तं हे सत्पुरुषाहं त्वां दृष्ट्वा हृष्टास्मि. अत्र चरणक्षालनमिषेण बहवो जना मया कूपमध्ये निक्षिप्ताः संति, परं त्वं तूर्णं निर्गच्छ? राजा ततोऽभ्युत्थाय प्रणष्टो गृहे समागतः, प्रभाते राजा नगरमध्ये निःसृतस्तत्र व्यवहारिवेषधरं भ्रमंतं तं चौरमुपलक्ष्य सन्मानपूर्वकं निजसभायामानीतवान्, दत्ता च तस्मै तेन निजप्रधानप-

द्वी, चौरेणापि रात्रौ मिलितो नृप उपलक्षितः, ततो राज्ञा प्रोक्तं तव भगिनीं मह्यं देहि? चौरेणापि सा राज्ञा सह परिणायिता, त्यक्तं च स्वकीयं चौरव्यसनं. कतिचिद्दिवसानंतरं राजाज्ञया तेन सर्वमपि धनं संस्मृत्य संस्मृत्य लोकानां समर्पितं. एवं मूलदेवराजा बहूनां लोकानामुपर्युपकारं कृत्वा सम्यक्त्वादिगुणं निर्मलं प्रतिपाद्य दानमहिम्ना देवलोके गतस्ततोऽनुक्रमेण च मोक्षं गमिष्यति. ॥ इति दानकुलके मूलदेवराजकथा समाप्ता. ॥

गाथा—अइदाणमुहरकविअण—विरइअसयसंखकवविब्भरिअं ॥ विक्कमनरिंदचरिअं । अज्जवि लोए परिप्फुरइ ॥ १५ ॥ व्याख्या—अतिदानेन कृत्वा मुखरा वाचाला ये कवयः पंडितजनास्तैर्विरचितानि यानि शतसंख्यमानानि काव्यानि, तैर्विस्तृतं प्रसृतं श्रीविक्रमादित्यनरेंद्रचरितं तदादि अद्यप्रभृति लोके परिस्फुरति. ॥ १५ ॥ श्रीविक्रमनरेंद्रचरित्रं सिंहासनद्वात्रिंशिकादिग्रंथेषु विस्तारयुक्तमस्ति, तथापि तस्य स्वल्पः संबंधोऽत्र लिख्यते—मालवदेशे उज्जयिन्यां नगर्यां भर्तृहरिराजा राज्यं करोति, तस्य लघुभ्राता विक्रमादित्यनामास्ति. अथैकदा स ज्येष्ठभ्राता सह क्रोधं कृत्वा परदेशं गतः, भर्तृहरे राज्ञोऽनंगसेनेत्यभिधानाऽत्यंतवल्लभा पट्टराज्यस्ति. सा चैकेन मेंठेन सह

व्यभिचारं सेवते. अथ तत्रैकेन द्विजेन भुवनेश्वरी देवी समाराधिता, तया संतुष्टया तस्मै अजरामरफलं दत्तं, द्विजेन फलमादाय गृहं समागत्य चिंतितं मया याचकेनाजरामरीभूतेन किं? यदि भर्तृहरिराजाऽजरामरत्वं प्राप्नुयात्तदा वरं, इति विचार्य तेन राज्ञस्तत्फलं प्राभृतीकृतं, फलमाहात्म्यं च कथितं. संतुष्टेन राज्ञा तस्मै बहुधनं दत्तं. अथ राज्ञा विचारितमिदं फलं प्राणप्रियराज्ञ्यै देयं, इति विचार्य स्नेहवशेन तेन तस्यै तत्फलं दत्तं. राज्ञ्या च स्वप्राणप्रियाय मेंठाय तत्फलं दत्तं, तेनापि चिंतितं मम वेश्यया सह प्रीतिरस्ति ततो मया तस्यै एवेदं देयं, इति विचार्य तेन कामलताभिधवेश्यायै तद्दत्तं. तयापि चिंतितमनेकपातकखनिभूतया मयाऽजरामरीभूतया सृतं, बहुलोकोपकारकारकभर्तृहरिनृपयोग्यमेवैतत्फलं, ततस्तस्मै एव देयं. इति विचार्य तया तत्फलं राज्ञे प्राभृतीकृतं. राज्ञा तत्फलमुपलक्ष्य वेश्यायै पृष्टं केन तवेदं फलमर्पितं? तयोक्तं भवतः पट्टहस्तिपकेन मम दत्तं. हस्तिपकमाहूय बहुप्रहारांश्च दत्वा यदा पृष्टं तदा तेन मानितं यन्ममानंगसेनया राज्ञ्या दत्तमस्ति. तत् श्रुत्वा साश्चर्यदुःखितो राजांतःपुरे गतः, कथितं च तेन राज्ञ्यै यदमरफलं समानय? राज्ञ्या प्रोक्तं मयैतत्फलं भक्षितं, ततोऽत्यंतं क्रुद्धेन राज्ञा तस्या कशाप्रहारा दत्तास्तदा तया सत्यं क-

थितं, अथ राज्ञो वैराग्यमुत्पन्नं, कथितं च तेनेदं काव्यं—यां चिंतयामि सततं मयि सा विरक्ता। साप्यन्यमिच्छति जनं स जनोऽन्यसक्तः ॥ अस्मत्कृते च परितुष्यति काचिदन्या । धिक् तां च तं च मदनं च इमां च मां च ॥ १ ॥

अथ तेन राज्यं पुत्रंविना शून्यमेव त्यक्त्वा योगो गृहीतः, पश्चात्तत शून्यं राज्यमग्निकवीरवेतालेनाधिष्टितं. यः कोऽपि गोत्रियो राज्ये निषीदति स म्रियते. देशांतरगतेन विक्रमेणेयं वार्ता श्रुता, तदासावुज्जयिन्यामागत्य सामान्यवेषेण प्रधानेभ्यो मिलितः, तस्य सत्वाधिक्येन तुष्टैर्मंत्रिभिः स राज्ये स्थापितः, अथासौ रात्रौ निजशय्यायाः परितो बलिबाकुलादीन्निक्षिप्य स्वयं जागरमाणः सुप्तस्तावता करालरूपोऽग्निवेतालस्तत्र समागतस्तत्र सुरभिबलिं वीक्ष्य तत्परिमलं गृह्णन् संतुष्टोऽसौ जगाद त्वया प्रतिदिनमिच्छमेव कर्तव्यमहं तवाभयदानं दास्यामि, इत्युक्त्वा स पश्चाद्वलितः, प्रभाते राजानं जीवंतं दृष्ट्वा प्रधानप्रमुखा हृष्टाः, अथैवं तेन दिनत्रयं यावद्बलिदानं कृतं. तृतीयदिने वेतालेन सह प्रीतिं कृत्वा तेन पृष्टं हे वेताल मदीयमायुः कियत? तेन ज्ञानबलेन ज्ञात्वोक्तं तवायुः शतवर्षमितं वर्त्तते. विक्रमेणोक्तं हे वेताल ममायुषो वर्षैकं न्यूनाधिकं कृत्वा त्वं तद्दिशून्यं

कुरु? वेतालेनोक्तं वर्षमेकं तु दूरेऽस्तु किं तु दिवसैकमपि न्यूनाधिकं कर्तुं नाहं समर्थोऽस्मि. तत श्रुत्वा विक्रमः संतुष्टः. अथ चतुर्थदिने तेन बलिर्न कृतस्ततः कुपितो वेताल उवाच अरे अद्य त्वया बलिः किं न कृतः? यदि त्वं ममायुर्न्यूनाधिकं कर्तुं समर्थो नासि तर्हि कथमहं बलिं करोमि? इत्युक्त्वा संग्रामार्थं खड्गमुत्पाट्य स उत्थितः, एवं तत्साहसगुणेन तुष्टेन वेतालेनोक्तं वरं मार्गयस्व? राज्ञोक्तं त्वं मनुष्यं मा मारय? किंच मयि संस्मारिते त्वयागंतव्यं मदीयं च कार्यं कर्तव्यं, तथेत्युक्त्वा स स्वस्थाने गतः, विक्रमादित्यश्च सुखेन राज्यं पालयति.

अथैकदा कोऽपि योगी राज्ञः समीपे समागत्योवाच हे सत्पुरुष! मयैका विद्या साधयितव्यास्ति ततस्त्वयोत्तरसाधकत्वेन भाव्यं, राजा तत्स्वीकृत्य कृष्णचतुर्दश्यां रात्रौ श्मशाने योगिपार्श्वे गतः, अग्निवेतालेनोक्तमयं योगी कपटी वर्त्तते ततस्त्वया सावधानतया स्थेयं. अथोत्तरसाधकत्वं कुर्वन् राजाऽहूतिवेलायां योगिनः कुदृष्टिं दृष्ट्वा तमेवोत्पाट्याग्निकुंडे निक्षिप्तवान्. राज्ञः पुण्यप्रभावेण स योगी सुवर्णपुरुषरूपः संजातः, प्रभाते महोत्सवपूर्वकं राज्ञा स गृहे समानीतः. अथ तस्यां नगर्यां पूर्वं श्रीअवंतिसुकुमालपुत्रेण श्रीपार्श्वनाथबिंबयुतं महाकालाभिधानं तीर्थं स्थापितमासीत्.

कालांतरे मिथ्यात्विभिर्जिनबिंबमधो निक्षिप्य तत्र शिवलिंगं स्थापितमभूत. तदा श्रीसिद्धसेनसूरिभिस्तत्रागत्य तच्छिवलिंगस्फोटनपूर्वकं जिनबिंबं प्रकटीकृत्य पुनस्तत्तीर्थं वालितं विक्रमश्च प्रतिबोधितः परमश्रावकश्च कृतः, ततो विक्रमोऽनेकतीर्थयात्राः शत्रुंजयतीर्थोद्धारं च कृत्वा श्रीजिनशासनप्रभावनां कृतवान्. कालांतरे सुवर्णपुरुषप्रसादेन तेन समस्ता पृथ्वी ऋणरहिता कृता, स्वकीयः संवत्सरश्च स्थापितः, विक्रमनृपकृतदानादिवर्णनं ग्रंथांतरादवसेयं. ॥ इति विक्रमनृपकथानकं ॥

गाथा—तियलोयबंधवेहिं । तप्भवचरिमेहिं जिणवरिंदेहिं ॥ कयकिच्चेहिं वि दिन्नं । संवच्छरियं महादाणं ॥ १६ ॥ व्याख्या—स्वर्गमृत्युपाताललक्षणानां त्रिभुवनानां बंधवः परमसहोदरभूतैरेतावता त्रिजगद्धितकारकैः, पुनः कीदृशैस्तद्भवचरिमैस्तस्मिन्नेव भवे मोक्षगामिभिरेतादृशैर्जिनवरेंद्रैस्तीर्थंकरैः, पुनः कीदृशैः कृतकृत्यैः सर्वकार्यसिद्धिभिस्तीर्थंकरैर्दत्तं सांवत्सरिकं महादानं. ॥ १६ ॥ तीर्थंकरवार्षिकदानविधिर्यथा—प्रथमं देवा नगराद्बहिर्दानमंडपं रचयंति, तन्मध्ये स्वर्णसिंहासनं मंडयंति, तत्र सूर्योदये भगवानागत्य पूर्वाभिमुखस्तिष्ठति, देवताः सर्वग्रामनगरादौ ' यदिप्सितं तन्मार्गयध्वं ' इत्याद्युद्घोषणां कुर्वंति, स्वामी तु सर्वेषां वांछितं पूरयति, प्रतिदिवसमेकाकोटीरष्टौ लक्षं

च सुवर्णं प्रभुर्ददाति. एवंविधा सर्वतीर्थंकराणां स्थितिर्ज्ञातव्या.

गाथा—सिरिसेअंसकुमारो । निस्सेअसस सामिओ कह न होई ॥ पासुअदाणपवाहो । पयासिओ जेण जरहंमि ॥ १७ ॥ व्याख्या—श्रीऋषभदेवस्य प्रपौत्रः श्रेयांसकुमारो निःश्रेयसस्य मोक्षस्य स्वामी कथं न जवति? येन प्रासुकदानप्रवाहः प्रकाशितोऽस्मिन् भरतक्षेत्रे ॥ १७ ॥ अस्यां चतुर्विंशतौ येन जगन्मध्येऽन्नदानं प्रकाशितं स श्रेयांसकुमारः प्रसिद्ध एव. दानेष्वन्नदानमपि प्रधानमस्ति, अन्नदातुः पुरस्तीर्थंकरा अपि हस्तं प्रसारयंति. अत्र विषये श्रीऋषभदेवसदृशं प्रधानं पात्रं श्रेयांसकुमारस्य निर्मलो जावः, निर्मलेक्षुसदृशं च दानवस्तु, एवमुत्तमोत्तमदुर्लजत्रिकसंयोगो बजूव. श्रीश्रेयांसकुमारात्साधूनां दानविधिः प्रवर्तितास्ति, तस्य विस्तृतवृत्तांतस्तु श्रीआदिनाथचरित्रादवसेयः. ॥

गाथा—कह सा न पसंसिज्जइ । चंदणबाला जिणंददाणेणं ॥ बम्मासिअतवतविओ । निवविओ जीए वीरजिणो ॥ १८ ॥ व्याख्या—सा चंदनबाला जिनेंद्रदानेन कथं न प्रशस्यते? यया षण्मासतपस्तपितः श्रीवीरजिनः संतोषितः. ॥ १८ ॥ तस्याः कथा चेयं—चंपानगर्यां दधिवाहनरा-

जा, तस्य धारिणीनाम्नी प्रिया, तयोर्वसुमतीनामा पुत्री वर्तते. एकदा कौशांबीपतिशतानीकराज्ञा चंपानगरी भग्ना. दधिवाहनो नष्टस्तदा शतानीकराज्ञ उष्ट्रपालकेन वसुमतीसहिता धारिणी गृहीता. शतानीकः सैन्ययुतो निजनगरींप्रति पश्चाद्वलितः, मार्गे तेन उष्ट्रपालेन धारिणींप्रति प्रोक्तमहं त्वां मम भार्यां करिष्यामि, वसुमतीं च चतुष्पथे विक्रयिष्यामि. तत्त श्रुत्वा धारिणी मनसि तीव्रखेदं दधाना मृता. अथ कौशांब्यामागत्य तेन दुष्टोष्ट्रपालकेन चतुष्पथे वसुमती विक्रीता गृहीता च धनावहश्रेष्ठिना बहुद्रव्यदानेन. गृहे समागत्य श्रेष्ठी वसुमतीं पृच्छति हे पुत्रि! त्वं कस्य कुले समुत्पन्नासि? लज्जया वसुमती किमपि न जजल्प. श्रेष्ठिना निजभार्यायै मूलायै कथितं वसुमतीमावयोः पुत्रीस्थाने ज्ञातव्या, सा च सर्वदा चंदनवत शीतलवचनानि ब्रूते तेन तस्याश्चंदनबालेति नाम दत्तं. एकदा मूलया चिंतितमस्या मनोहररूपमोहितः श्रेष्ठी एनां पुत्रीं कथयित्वापि नूनं भार्यां करिष्यति, तेनाहं च जीवन्मृतैव, इति विचिंत्य सा तस्या मारणोपायं चिंतयति. एकदा सा विनयवती चंदना गृहागतस्य श्रेष्ठिनः पादक्षालनं कर्तुं लग्ना, तदवसरे तस्या भूमौ पतितो वेणीदंडः श्रेष्ठिनोत्पाट्य स्वोत्संगे धृतस्तद् दृष्ट्वा मूलया चिंतितं नूनं मदध्यवसायः सत्यो जातः, अथ श्रेष्ठी

तु भोजनं कृत्वा हट्टे गतः. ततो दुष्टमूलया मस्तकमुंमनपूर्वकं चंदनबालां निगडितचरणद्वयां विधाय शून्यगृहमध्ये निक्षिप्य तत्कपाटकं दत्वा तालकं दत्तं, कथितं च परिवारेभ्यो यः कोऽपि श्रेष्ठिनमेतद्वृत्तांतं कथयिष्यति तस्य जीवितसंशयो ज्ञातव्य इति तर्जनां दत्वा सा दुष्टा पितुर्गृहे गता. गृहागतश्रेष्ठिना पृष्टं चंदना क्व गता? कथं न दृश्यते? इत्यादि श्रेष्ठिना पृष्टोऽपि परिवारो मूलाभीत्या किमपि न प्रजल्पति, श्रेष्ठिना ज्ञातं बही रममाणा भविष्यति. द्वितीयदिवसेऽपि श्रेष्ठिना तथैव पृष्टं परं कोऽपि तद्वृत्तांतं न कथयति. तृतीयदिने श्रेष्ठिना क्रुद्धेन पृष्टं, तदैकया वृद्धभोजनकारिकया मूलायाः सर्वा वार्ता प्रकाशिता, दुःखीभूतेन श्रेष्ठिना शीघ्रमेव तालकं भंक्त्वा कपाटावुद्घाटितौ. तत्र मुंमितमस्तकां निगडितपादां क्षुत्क्षामकुक्षीं स्वकर्मदूषणदानतत्परां नमस्कारपदमुच्चरंतीमश्रुजलाविलनेत्रां तामुत्पाट्य श्रेष्ठी बहिरानीतवान्, तामाश्वास्य दयार्द्रचेताः श्रेष्ठी तस्याः कृते गृहमध्ये भोजनं गवेषयितुं लग्नः, परं दुष्टमूलया युक्त्या गोपितमुक्तं तत् क्वापि न लब्धं, महिष्यादिकृते सूर्पकमध्यस्थान् बाकुलान् दृष्ट्वा तदा तु तत्सहितं तत्सूर्पकं तस्यै प्रदाय श्रेष्ठी स्वयं निगडभंजनकृते लोहकारानयनार्थं गतः, तदा चंदनया चिंतितं मया यदि पुण्यानि न्यूनानि कृतानि त-

देयमीदृशी मे विपत्तिः समायाता, अधुनापि यदि कोऽपि पात्रमत्रायाति तदा तस्मै बाकुलान्नमिदं दत्वा भोजनं करोमीति चिंतयंती सा स्थितास्ति.

इतश्च श्रीमहावीरप्रभुः षण्मासाभिग्रहधारी तत्र समायातस्तदा सा हृष्टा सती चिंतयत्ययं कोऽपि महामुनिर्जंगमतीर्थरूपो मद्भाग्यबलेनात्र समागत इति विचिंत्य सर्वं दुःखं विस्मृत्य हृष्टा सती प्रभुंप्रति बाकुलान् दातुं लग्ना, तदा प्रभुणा स्वाभिग्रहो विचारितो द्रव्यतो माषान्नं सूर्पकोणके स्थितमस्ति, क्षेत्रतो गृहदेहलीमध्ये पादमेकं बहिरेकं चांतः कृत्वा स्थितास्ति, कालतस्तृतीयप्रहरोऽपि वर्तते, भावतो राजपुत्री, विक्रीता, दासीत्वमापन्ना, कुमारिका, मुंडितमस्तका, निगडितचरणा, बुभुक्षिता सत्यपि रोदनं न करोति, ततः स्वामिना करो न प्रसारितः, तदा अहो ममाऽभागिन्या हस्तादयं मुनिरप्याहारं न गृह्णातीति चिंतयंती सा रुदनं चकार. तदा स्वामिना निजं सर्वमप्यभिग्रहं संपूर्णीभूतं विज्ञाय हस्तौ प्रसारितौ, चंदनादत्तबाकुलान् गृहीत्वा पंचदिनोनषाण्मासीतपःपारणं कृतं. तत्र पंच दिव्यानि प्रकटितानि, तत्पदद्वयस्थितं निगडं त्रुटित्वा स्वर्णमयं जातं, शिरसि केशपाशो जातः, सर्वांगेषु च रत्नानामाभरणानि जातानि. अहो धन्यमहोधन्यमिति वदंतो देवास्तत्र नृ-

सौधर्मेंद्रोऽपि तत्र समाग-
त्यं चक्रुः, प्रनोः पारणकं जातं श्रुत्वा राजादयो बहवो लोकास्तत्रागताः, सौधर्मेंद्रोऽपि तत्र समाग-
तः, तावता धनावहः श्रेष्ठ्यपि तत्रायातः पश्यति स्वगृहं राजादिनिर्भृतं, शृंगारितां च चंदनां दृष्ट्वा
हृष्टः, ततः सौधर्मेंद्रः श्रेष्ठिनं कथयति, इयं दधिवाहनराज्ञः पुत्री चंदना प्रनोः प्रथमसाध्वी नवि-
ष्यति, ततो राजा लोनाकृष्टस्तत्सर्वं धनं गृहीतुं लग्नस्तदेंद्रेण निवारितः, उक्तं च चंदना यंप्रति क
थयिष्यति स एव तद्धनं गृहिष्यति. ततश्चंदनेनोक्तेन धनावहश्रेष्ठिना तत्सर्वं धनं गृहीतं. पुनरिंद्रे-
णोक्तमियं नोगतृष्णापराङ्मुखी बालब्रह्मचारिणी चरमशरीरिणी वर्ततेऽतः सुखेन पालनीया. इयं
च तीर्थस्थापनाकाले दीक्षां लास्यतीत्युक्त्वा सौधर्मेंद्रः स्वस्थाने गतः, ततः श्रेष्ठिना सा दुष्टा मूला
गृहाद्बहिर्निष्कासिता मृत्वा च नरकं गता. स्वामिनः केवले समुत्पन्ने सति द्वितीये समवसरणे चं-
दनया चारित्रं गृहीतं, क्रमेण च मोक्षं गता. ॥ इति श्रीदानकुलके चंदनबालायाः कथा ॥

गाथा—पढमाइं पारणाइं । अकरिंसु करंति तह करिस्संति ॥ अरिहंता भगवंतो । जेसिं घ-
रे तेसिं धुवा सिद्धी ॥ १९ ॥ व्याख्या—दीक्षां लात्वा प्रथमपारणकमनेकतीर्थंकराश्चक्रुः संप्रति च
कुर्वंति पुनः करिष्यंति चार्हंतो नगवंतो येषां गृहे ते गृहिणो ध्रुवं निश्चितं सिद्धिं मोक्षं यास्यंति

तस्मिन्नेव भवे तृतीयभवे वा. ॥ १९ ॥

गाथा—जिणभवणबिंबपुत्थय—संघसरूवेसु सत्तखित्तेसु ॥ ववियं धणंपि जायइ । सिवफलयमहो अणंतगुणं ॥ २० ॥ व्याख्या—जिनभवनं जिनप्रासादः, बिंबं जिनप्रतिमा, पुस्तकं भगवत्यादिसिद्धांतः, संघश्चतुर्विधः, साधुसाध्वीश्रावकश्राविकारूपः, एवंविधेषु सप्तक्षेत्रेषु यद्धनं वप्तं तदहो इत्याश्चर्ये अनंतगुणसुखरूपमोक्षफलदायकं भवति. ॥ २० ॥ इति प्रथमं दानकुलकं समाप्तं ॥

———

॥ अथ शीलकुलकं प्रारभ्यते ॥

गाथा—सोहग्गमहानिहिणो । पाए पणमामि नेमिजिणवइणो ॥ बालेण भुयबलेणं । जणंदणो जेण निज्जिणिओ ॥ १ ॥ व्याख्या—बालेनापि बाल्यत्वे वर्तमानेनापि येन प्रभुणा भुजबलेन स्वकीयहस्तवीर्येण जनार्दनः श्रीकृष्णो निर्जितस्तस्य सौभाग्यमहानिधेर्बालब्रह्मचारिणः श्रीनेमिनाथस्य जिनपतेश्चरणौ प्रणमामि. ॥ १ ॥ तस्य संक्षेपतश्चरित्रमित्थं—जंबूद्वीपे भरतक्षेत्रेऽचलपुरनगरे विक्रमराजा राज्यं करोति, तस्य धारिणी भार्या, सा च सकलस्त्रीगुणैरलंकृता. अन्यदा

रात्रौ सुप्तया तयेदं स्वप्नं दृष्टं, प्रथमं तया सहकारतरुर्दृष्टस्ततः केनापि पुरुषेण तत्रागत्य तस्यै क-
थितं सांप्रतं मयैषो वृक्षस्त्वांगणे वप्तोऽस्ति, ततः कस्मिंश्चित्कालेऽहं तं वृक्षमन्यत्र वप्स्यामि, अनया
रीत्या नववारमहमेतं वृक्षं वप्स्यामि. तथैतत्फलादिकं दिनं दिनंप्रति वृद्धिं प्रयास्यति. इति स्वप्नं दृ-
ष्ट्वा धारिणी जागृता, प्रभाते च तया तत्सर्वस्वप्नवार्ता राज्ञोऽग्रे कथिता, राज्ञा स्वप्नपाठकेभ्यः पृष्टं,
तैः प्रोक्तं पुत्रो भविष्यति, परं नववारस्यार्थं वयं न जानीमहे. ततो धारिण्या शुभदिने पुत्ररत्नं प्र-
सूतं, राज्ञा च महोत्सवपूर्वकं तस्य धन इति नाम दत्तं. अथ कुसुमपुरे श्रीसिंहराज्ञो विमलाभि-
धाना राज्ञी, तया धनवतीनामा पुत्री प्रसूता. सा चतुःषष्टिकलानिपुणा यौवनं प्राप्ता. एकदा सा स-
खीसहिता वने क्रीडां कर्तुं गता. तत्र तया कस्यचित्पुरुषस्य करे चित्रपट्टो दृष्टः, तस्मिंश्चित्रितां म-
नोहरां पुरुषमूर्तिं वीक्ष्य तया तंप्रति प्रोक्तं कस्येदमाश्चर्यकारि मनोहरं रूपमस्ति? पुरुषेणोक्तमच-
लपुरनरपतिविक्रमनृपपुत्रधनकुमारस्यैतद्रूपमस्ति. ततः कुमारी तं रूपं पुनःपुनर्विलोकमाना काम-
पीडिता सती निजसख्यै कमलिन्यैप्रति जगाद हे सखि मयैतादृग्मनोहरं रूपं कुत्रापि दृष्टं नास्ति,
इदं रूपं दृष्ट्वा मे मनसि हर्षोत्कर्षः समुत्पद्यते. ततः सख्या सार्धं धनवती गृहे गता, परं मनोवि-

ह्वलतया न केनापि सह जल्पति, न चाश्नाति न च स्वपिति च. तां तथावस्थां दृष्ट्वा कमलिन्यो·
क्तं हे सखि त्वं चिंतातुरा कथं दृश्यसे? इति बहुवारं पृष्टापि धनवती लज्जया न किंचिदपि वद·
ति, तदा चतुरसख्या तन्मनोऽभिप्रायं ज्ञात्वा तस्या मातुः पुरः सर्वा वार्ता कथिता, मात्रा च धन·
वतीं सालंकारां कृत्वा नृपाग्रे मोचिता, तां दृष्ट्वा राज्ञो मनसि तस्या वरसंबंधिचिंता समुत्पन्ना. इत-
स्तस्याः पुण्ययोगेन विक्रमराज्ञः कश्चिद्दूतो राजकार्यार्थं नृपाग्रे समायातः, तेन मनोहररूपाद्यलं·
कृतां राजपुत्रीं विलोक्य कथितं, हे राजन्! तवेयं पुत्री विक्रमनृपांगजधनकुमारस्य योग्यास्ति. रा·
ज्ञा प्रोक्तं भो दूत नूनं त्वया मे मनसो वार्ता ज्ञाता. अथ यथा तद्वार्ता सफलीभवेत्तथा कुरु? त-
तो राज्ञा कुंकुमपत्रिकां लिखित्वा तेन सार्धं कन्यादानार्थं स्वकीयो दूतः प्रेषितः, दूतेन तत्र गत्वा
विक्रमराज्ञो हस्ते नतिपूर्वकं कुंकुमपत्रिका मुक्ता, विक्रमनृपेणापि हर्षतस्तत्प्रतिपन्नं. अथ धनकुमा·
रेणापि धनवत्यर्थं मुक्ताफलहारो लेखश्च प्रच्छन्नं तेन दूतेन सार्धं प्रेषितौ. दूतेन तत्र गत्वा धनवत्यै
हारलेखौ समर्पितौ. धनवती लेखं वाचयित्वात्यंतं प्रमुदिता सती तं हारं स्वकंठे स्थापयामास. अ-
थ विक्रमराजा गजतुरगादिसकलसैन्यसहितो महताडंबरेण पुत्रयुतः कुसुमपुरे समागतः, शुभदि·

वसे च महोत्सवपूर्वकं दंपत्योः पाणिग्रहणं जातं, श्रीसिंहराज्ञा करमोचनावसरे धनकुमाराय बहुद्र-व्यं दत्तं. ततो धनवतीं गृहीत्वा धनकुमारः परिवारयुतो निजनगरे समागत्य तया सह विषयसुखा-नि भुंजानः सुखेन कालं गमयति.

अथैकदा विक्रमराजा धनधनवतीसहितो गजेंद्रमारुह्य वनक्रीडां कर्तुं गतस्तत्र वने चतुर्ज्ञान-धरं श्रीवसुंधराचार्यं वीक्ष्य वंदनां कृतवान्, मुनिना देशना दत्ता, देशनांते विक्रमराज्ञा मुनये पृष्टं हे स्वामिन् यदायं धनकुमारो गर्भे समागतस्तदा तस्य माता स्वप्ने आम्रतरुसहित एकः पुरुषो दृ-ष्टः, तेन पुरुषेण चोक्तमहमष्टवारं तवांगणे इमं सहकारतरुं वप्स्यामि, तस्य कोऽर्थविशेषः? साधु-नोक्तं हे राजन्! तेन देवेन तदस्य भवस्वरूपं कथितं, नवमे भवे चासौ मोक्षं यास्यति. तत् श्रु-त्वा संतुष्टो राजा मुनिं वंदित्वा परिवारयुतो गृहे समायातः. अथान्यदा धनधनवत्यौ क्रीडार्थं वने समागतौ, तत्रैकं साधुं मूर्छया निश्चेतनीभूय पतितं वीक्ष्य शीतलजलवायुयोगेन तं सचेतनं चक्र-तुः, ततस्तं साधुं तौ स्वगृहे समानयामासतुः, पृष्टं च ताभ्यां तस्मै हे भगवन् यूयं निश्चेतनीभूय कथं पतिताः? साधुनोक्तं परमार्थतोऽहं संसारात् खिन्नो भूत्वा पतितोऽभूवं, श्रूयतश्च मे वृत्तांतं शृ-

णुतं नामाहं मुनिचंडोऽस्मि सार्थाद्भ्रष्टो बुभुक्षितश्च पतितः, पश्चाद्युवाभ्यामुपचारं कृत्वाहं सचेतनीकृतः, ततो धनधनवतीभ्यां तस्य मुनेः पार्श्वे सम्यक्त्वमूलद्वादशव्रतानि गृहीतानि. विक्रमराजापि निजराज्यं धनकुमाराय दत्वा चारित्रं जग्राह. धनराज्ञापि कियंतं कालं यावद्राज्यं पालयित्वा निजपुत्रजयंताय राज्यं दत्वा धनवत्या सह दीक्षा गृहीता. प्रांते च मासिकीं संलेखनां कृत्वा तौ द्वावपि सौधर्मदेवलोके सामान्येंद्रत्वं प्राप्तौ. इति द्वितीयो भवः २. तत्र द्विसागरोपमायुर्भुक्त्वा वैताढ्यपर्वते उत्तरश्रेण्यां सूरतेजनगरे सूरनामा विद्याधरो विद्युन्मतीभार्या, तयोः पुत्रत्वेन धनजीवश्चित्रगतिनामा बभूव. धनवतीजीवस्तु दक्षिणश्रेण्यां अनंगसिंहनृपशशिप्रभाराज्ञ्यो रत्नवतीनामपुत्रीत्वेनोत्पन्नः, तथा तौ द्वावपि स्वस्वनगरे यौवनावस्थां प्राप्तौ. अथैकदानंगसेनराज्ञा निजपुत्र्या वरार्थमेको नैमित्तिकः पृष्टस्तेनोक्तं हे राजन् युद्धावसरे यस्तव करवालं गृहिष्यति पुनर्नंदीश्वरद्वीपे यस्य मस्तकोपरि पुष्पवृष्टिर्भविष्यति स तव पुत्रीभर्ता भविष्यति. ततो राज्ञा दानपूर्वकं नैमित्तिको विसृष्टः. इतश्च भरतक्षेत्रे विक्रमपुरे सुग्रीवाभिधो राजा तस्य यशस्वीभद्राख्ये द्वे भार्ये, तयोः सुमित्रपद्माभिधानौ यथाक्रमं द्वौ पुत्रौ जातौ. भद्रया चिंतितं यशस्वीपुत्रसुमित्रेण सता मत्पुत्रस्य राज्यं न मि·

लिष्यति. इति विचिंत्य तया सुमित्राय विषं दत्तं, यावता सुमित्रो व्याकुलीभूतस्तावता तत्र राजा समायातः, अनेकमंत्रतंत्राद्युपचारे कृतेऽपि स न सज्जीभूतः, लोकेऽपि तत्प्रकटीभूतं यद्भद्रया सुमित्राय विषं दत्तमिति श्रुत्वा भद्रा प्रणष्टा, राजा सुमित्रंप्रति धर्मं श्रावयामास, तद्गुणान् संस्मृत्य च स रोदितुं लग्नः, इतश्चित्रगतिविद्याधरो विमानस्थितस्तन्नगरोपरि समायातः, पौरान् राजानं च दुःखिनं वीक्ष्याधोऽवतीर्य लोकमुखात्तद्वार्तां श्रुत्वा मंत्रितवारिणा सुमित्रं प्रक्षालयामास, ततः सुमित्रः स्वस्थीभूयावदत कथमेते लोका मां परिवेष्ट्य स्थिताः संति? राज्ञा सर्वोऽपि वृत्तांतः कथितस्तदा सुमित्रस्तूर्णं समुत्थाय चित्रगतिं नत्वा कथयति हे सत्पुरुष त्वया ममोपरि महोपकारः कृतस्तेनैव तवोत्तमकुलं ज्ञातं तथापि स्वकुलं त्वं प्रकाशय? तदा चित्रगतिसेवकैस्तस्य कुलादिवार्ता प्रकाशिता. इतस्तत्र सुयशानामा केवली समायातः, नृपादिसर्वेऽपि तं वंदितुं गतास्तत्र च केवलिमुखाद्धर्मं श्रुत्वा चित्रगतिना सम्यक्त्वं स्वीकृतं. अथ सुग्रीवेन पृष्टं हे भगवन्! सा भद्रा सुमित्राय विषं दत्वा क्व गता? केवलिनोक्तं भद्रा नष्टा चौरैर्धृता, तस्या वस्त्राभरणानि गृहीत्वा तैरकस्मै वणिजे विक्रीता, तत्पार्श्वादपि प्रणष्टा वने दवदग्धा मृत्वा प्रथमनरके गता, ततोऽपि निःसृत्य तज्जीवो बहुसं-

सारं भ्रमिष्यति. तत् श्रुत्वा वैराग्यमापन्नेन सुग्रीवराज्ञा सुमित्राय राज्यं दत्वा दीक्षा गृहीता, चित्रगतिरपि स्वस्थानके गतः.

इतोऽनंगसिंहपुत्रेण कमलविद्याधरेण सुमित्रभगिन्यपहृता. तदा सुमित्रेण सह निजप्रीतिं विज्ञाय चित्रगतिना कमलेन सह संग्रामो मंडितः पुत्रस्नेहेनानंगसिंहोऽपि तत्रागतः, तदा चित्रगतिनांधकारं विकुर्व्य तस्य खड्गोऽपहृतः, संग्रामे च तौ विजित्य चित्रगतिः सुमित्रभगिनीं गृहीत्वा गृहे समायातः, सुमित्रस्तु भगिनीविरहेण वैराग्यतः पुत्राय राज्यं दत्वा चारित्रं गृहीतवान्. नवपूर्वाण्यधीत्य गुर्वाज्ञामादाय मगधदेशग्रामाद्बहिः कायोत्सर्गेण स्थितः, तत्र पद्मस्तं वीक्ष्य वैरं संस्मृत्य बाणेन जघान, सुमित्रर्षिः शुभध्यानतो मृत्वा पंचमे देवलोके गतः, पद्मस्तु सर्पेण दष्टो मृत्वा सप्तमनरके गतः, अथ सुमित्रर्षेर्मरणं ज्ञात्वा चित्रगतिर्मनसि दुःखं वहमानो यात्रार्थं नंदीश्वरे समायातः, तदा रत्नवतीसहितोऽनंगसिंहोऽपि तत्र समागतः, अथ चित्रगतिर्जिनपूजां कृत्वा स्तुतिं कर्त्तुं लग्नस्तदा सुमित्रजीवेन ब्रह्मदेवलोकादागत्य तस्योपरि पुष्पवृष्टिः कृता, तद्वीक्ष्यानंगसिंहेन नैमित्तिकोक्तं संस्मृत्य स्वपुत्रीरत्नवती चित्रगतिना सह तत्रैव परिणायिता. भवांतरस्नेहतस्तौ दंपती स्व-

स्थाने समागत्यावर्णनीयप्रेमपरौ सुखेन कालं गमयांचक्रतुः, प्रांते पुरंदराभिधपुत्राय राज्यं दत्वा निर्मलचारित्रं प्रपाल्यानशनं कृत्वा तौ चतुर्थे माहेंद्रदेवलोके देवत्वेनोत्पन्नौ. इति चतुर्थो भवः. ४.

अथ पश्चिममहाविदेहे पद्मविजये सिंहपुरनगरे हरिनंदराजा, प्रियदर्शना पट्टराज्ञी, तस्याः कुक्षौ माहेंद्रदेवलोकाच्च्युतश्चित्रगतिजीवोऽपराजितनामा पुत्रत्वेनोत्पन्नः, सर्वाः कलास्तेनाऽभ्यसिताः, एकदा स मंत्रिपुत्रविमलबोधसहितोऽश्वं वाहयन् वने गतः, द्वयोरप्यश्वौ वक्रशिक्षितावभूतां बहुदूरेऽटवीं प्राप्य तौ द्वावप्यश्वौ रुधिरं वमंतौ मृतौ. ततस्तौ द्वौ सरसि जलं पीत्वेत्यचिंतयतां यदधुनाऽवां देशांतरदर्शनेच्छां सफलां करिष्यावः, इति विचार्य तौ यावदग्रे प्रस्थितौ तावद्रक्ष रक्षेति वदन् कोऽप्येकः पुरुषः कंपमानस्तयोः शरणं प्राप्तः, इतस्तत्र राजपुरुषा आगत्य कुमारं कथयामासुरयं तस्करो बहुलोकाश्चानेन मुषितास्ततत एनं वयं मारयिष्यामः, तदा कुमारेणोक्तं यद्यपि चौरोऽयं तथापि शरणागतत्वान्न वधार्हः, तत् श्रुत्वा ते राजपुरुषास्तं कुमारं हंतुं धाविताः, परं कुमारेण ताडितास्ततो नंष्ट्वा ते निजनृपसमीपे गतास्ततो राज्ञा निजसैन्यं तत्र प्रेषितं तदपि कुमारेण निर्जितं. ततो राजा स्वयं तत्रागत्य मंत्रिपुत्राय पृष्टवान् कस्यायं कुमारोऽस्ति? तेन सर्वोऽपि वृत्तांतः कथितस्ततस्तु-

ष्टेन राज्ञोक्तमहो एषस्तु मम मित्रहरिनंदिपुत्र इत्युक्त्वा तं गृहे समानीय निजकनकमालाभिधाना पुत्री तेन सह परिणायिता. अथ कुमारः कियत्कालं तत्र स्थित्वा देशांतरविलोकनकुतूहलतया मंत्रिपुत्रान्वितो निर्गतः, मार्गमुल्लंघ्य तावेकनगरसमीपमुपागतौ, इतस्तत्र वने कस्याश्चित्स्त्रियो रुदनं श्रुत्वा तच्छब्दानुसारेण तत्र गतौ. तदा तत्राग्निकुंडसमीपे एकां स्त्रियं खड्गपाणिं चैकं पुरुषं दृष्ट्वा कुमारो बभाण, अरे दुरात्मन्नेतां स्त्रियं मुंच नो चेद्युद्धं कुरु? इत्युक्त्वा कुमारस्तं विद्याधरं निर्जितवान्. इतः प्रभाते तत्कन्याजनको राजा तस्याः शोधनार्थं तत्रागतः, कुमारेण सर्वोऽपि वृत्तांतस्तस्मै कथितः, हृष्टेन राज्ञा तस्या रत्नमालायाः पाणिग्रहणं तेन कुमारेण सह कारितं. अथ तत्रापि कियत्कालं स्थित्वा प्रछन्नतया स निर्गतः, कुंडलपुरसमीपे समागत्य ताभ्यां केवलिन उपदेशं श्रुत्वा पृष्टं किमावां भव्यौ वा अभव्यौ? केवलिनोक्तं युवां द्वावपि भव्यौ, पुनर्हे कुमार त्वं तु इतः पंचमे भवे भरतक्षेत्रे श्रीनेमिनाथाभिधस्तीर्थंकरो भविष्यसि. तवायं सुहृच्च तवाद्यो गणधरो भविष्यति. तत् श्रुत्वा हर्षितौ तौ द्वावपि तत आनंदपुरे प्राप्तौ, तत्र जितशत्रुराजा, धारिणी राज्ञी, तस्याः कुक्षौ माहेंद्रदेवलोकाच्च्युतो रत्नवतीजीवः प्रीतिमतीनामपुत्रीत्वेनोत्पन्नः, सकलकलाकलापक-

लितया तया यौवनावस्थायां पितुः पुर इति प्रतिज्ञा कृता यो मां कलया जेष्यति स मे भर्ता भविष्यति, इति श्रुत्वा पित्रा स्वयंवरमंडपो मंडितस्तत्रानेकनृपभूचरखेचराः समायाताः, अपराजितकुमारोऽपि गुटिकाप्रभावतो रूपपरावर्तनेन कार्पटिकरूपं विधाय तत्र समायातः, अथ प्रतिहारीयुक्ता मनोहरवरमालामंडितहस्ता राजकुमारी तत्र समागता, तया पादपूर्त्यर्थं समस्याकाव्यानि प्रोक्तानि परं कोऽपि तेषां पूर्त्तौ समर्थो नाभूत्. यदा सर्वेऽपि राजकुमारादयो दिङ्मूढा जातास्तदापराजितकुमारेण स्तंभपुत्तलिकामस्तकोपरि स्वकरं न्यस्य तस्या मुखेन सर्वा अपि समस्याः पूरिताः, तद् दृष्ट्वा कुमारीराजन्यादयः सर्वेऽपि चित्तेषु चमत्कृतिं प्राप्ताः, पूर्वभवस्नेहाकृष्टया कुमार्या तत्कालमेव तत्कार्पटिकवेषभृत्कुमारकंठे वरमाला क्षिप्ता. तथाभूतं वीक्ष्य तत्र मिलिताः सर्वेऽप्यन्ये राजकुमाराः शस्त्राणि सज्जीकृत्यापराजितकुमारंप्रति धाविताः, परं कुमारेण निजरूपं प्रकटीकृत्य सिंहनादस्तथा कृतो यथा ते सर्वेऽपि मृगवत्पलायिताः. अथ तत्रागतसोमप्रभाभिधेन तस्य मातुलेन कुमारमुपलक्ष्य सर्वोऽपि तस्य कुलादिवृत्तांतः कथितः. ततो हृष्टेन जितशत्रुनृपेण शुभलग्ने तयोर्विवाहः कारितः, मंत्रिणा च स्वपुत्री विमलबोधाय परिणायिता. अथ हरिनंदनृपेण तत्रस्थं कुमारं ज्ञात्वा स्व·

मंत्रिणं कीर्तिराजं तत्र प्रेष्य कुमार आकारितः, कुमारोऽपि मंत्रिमित्रभार्यादिपरिवारयुतो निजनगरे प्राप्तः, ततो राजा कुमाराय राज्यं दत्वा स्वयं दीक्षां गृहीत्वा शुद्धचारित्रं प्रपाल्य मोक्षं गतः, ततोऽवसरेऽपराजितराजापि पद्मपुत्राय राज्यं दत्वा सकलत्रो दीक्षां गृहीत्वा प्रांते चानशनं कृत्वा आरणदेवलोके सामान्येंद्रो जातः. ॥ इति पंचमषष्ठौ भवौ. ॥

अथ जंबूद्वीपे भरतक्षेत्रे हस्तिनागपुर्यां श्रीषेणराज्ञः श्रीमतीनार्याकुक्षौ शंखस्वप्नसूचितोऽपराजितजीवः शंखनामकुमारत्वेनोत्पन्नोऽनुक्रमेण च स सकलकलाकलापयुतो यौवनं प्राप्तः. अथैकदा नगरलोका राज्ञोऽग्रे समागत्येति प्रोचुः, हे स्वामिन् विशालशृंगाभिधपर्वतवास्तव्यः समरनामा पल्लीपतिरस्माकं द्रव्यादि हृत्वास्मान् दुःखीकरोति. तत श्रुत्वा शंखकुमारः सैन्ययुतो राजाज्ञया तत्र गत्वा तेन सह युद्धं कृत्वा तं बध्ध्वा काष्टपंजरे निक्षिप्तवान्. येषां येषां च धनानि तेनापहृतानि तेषां तेषामुपलक्ष्य कुमारेण पुनः समर्पितानि. ततः पश्चाद्वलित्वा पथि रात्रौ सुखसुप्तेन कुमारेण कस्याश्चित्स्त्रियो रुदनं श्रुतं, तच्छब्दानुसारेण कुमारस्तत्र गत्वा तां स्त्रियं रुदनकारणं पृछति. तयोक्तं मगधदेशे चंपापुर्यां जितारिराजा, कीर्तिमती प्रिया, तयोः पुत्री यशोमती, सा यौवनस्था श्रीषे·

णराजपुत्रशंखकुमारस्य रूपयौवनादिगुणान् श्रुत्वा तंप्रत्यतिरागवती जाता. तां वार्तां श्रुत्वा राज्ञा हस्तिनागपुरे तस्या विवाहार्थं प्रधानजनाः प्रेषिताः, इतो मणिशेखरनामविद्याधरेण साऽपहृता. तस्या अहं धातृमाताऽपहरणसमये बाहुलग्ना यावदत्र समागता तावत्स दुष्टो बलात्कारेण मे हस्तं दूरीकृत्य तामादाय क्वापि गतस्तस्या विरहदुःखेनाहं रोदिमि. तत श्रुत्वा कुमारेणोक्तं त्वं माक्रंदं कुरु? अहमधुनैव तं खेचरं हत्वा तां कन्यां पश्चाद्वालयिष्यामि. इत्युक्त्वा सूर्योदये कुमारो यावद्विशालशृंगगुहाद्वारे समायाति तावत्तेन कन्यां प्रार्थ्यमाणः स विद्याधरो दृष्टः, शंखकुमारेण खड्गं निष्कास्य प्रोक्तं रे दुरात्मन् परस्त्रीपातकफलमधुना विलोकय ? इत्युक्त्वा तेन पादप्रहारेण स भूमौ पातितः. अथ विद्याधरेणोक्तं हे सत्पुरुष अद्यप्रभृत्यहं तव सेवकोऽस्मीत्युक्त्वासौ कुमारचरणयोर्लग्नः, दयाद्रुना कुमारेणापि स जीवन्मुक्तः, हृष्टेन विद्याधरेण तस्मै भूरिमणिमुक्ताफलवस्त्राभरणादीन्यर्पितानि. अथ कुमारेण सा यशोमती जितारिनृपाय समर्पिता, जितारिणापि महर्ध्या सा शंखकुमाराय परिणायिता, तां गृहीत्वा शंखकुमारो महताडंबरेण हस्तिनागपुरे समायातः. अथ श्रीषेणराजा तस्मै शंखकुमाराय राज्यं दत्वा स्वयं चारित्रं गृहीत्वा केवलज्ञानमासाद्यान्यदा हस्तिनागपुरे

समायातः, शंखराजा सांतःपुरस्तं वंदितुं समागतः, देशनांते राज्ञा पृष्टं हे भगवन्! मम यशोमत्या· श्चैतावान् स्नेहः परस्परं कथं? केवलिना तयोः पूर्वभववृत्तांतं कथयित्वोक्तं हे राजन्! अथ नवमे भवे त्वं नेमिनाथाख्यो द्वाविंशतितमस्तीर्थंकरो भविष्यसि, यशोमती चेयं राजीमती भविष्यति. तत् श्रुत्वा शंखराजा वैराग्यमासाद्य पुंडरीकपुत्राय राज्यं दत्वा यशोमत्या सह दीक्षामादाय विंशति· स्थानकतप आराध्य तीर्थंकरनामकर्म बध्ध्वा प्रांतेऽनशनं कृतवान्. ततस्तौ द्वावप्यपराजितविमाने दे· वत्वेनोत्पन्नौ.

तत आयुःक्षये जंबूद्वीपे भरतक्षेत्रे शौरीपुरनगरे यादववंशीयसमुद्रविजयराज्ञः शिवादेवीरा· ज्ञ्याः कुक्षौ कार्तिककृष्णद्वादश्यां शंखजीवो ज्ञानत्रययुतः पुत्रत्वेनोत्पन्नः, राज्ञ्या चतुर्दशमहास्वप्ना· नि दृष्ट्वा तेषां फलं राज्ञे पृष्टं, समुद्रविजयेनोक्तं हे प्रिये तीर्थंकरो वा चक्री तव कुक्षावुत्पन्नोऽस्ति. प्रभाते राज्ञा स्वप्नपाठकेभ्यस्तत्फलं पृष्टं, तैरुक्तं द्वाविंशतितमस्तीर्थंकरो भविष्यति. क्रमेण संपूर्णस- मये राज्ञ्या श्रावणशुक्लपंचम्यां पुत्रः प्रसूतः, इंद्रादिभिश्च तस्य जन्ममहोत्सवः कृतो द्वात्रिंशत्कोटि- सुवर्णानां च वृष्टिः कृता, तत इंद्रादयो देवा नंदीश्वरद्वीपे समागत्याष्टाह्निकामहोत्सवं कृत्वा स्वस्थानं

प्राप्ताः, अथ प्रातः प्रियंवदया दास्या राज्ञे पुत्रजन्मवर्धापनिका दत्ता, हृष्टेन राज्ञा तस्यै पारितोषिकदानपूर्वकं महताडंबरेण पुत्रजन्मोत्सवः कृतः, सर्वेऽपि बंदिनो मोचिताः. एवं दशदिवसं यावज्जन्महोत्सवं कृत्वा एकादशमे दिने सूतिकर्म समाप्य द्वादशमे दिवसे सर्वज्ञातिपरिवारादीन् भोजयित्वा गतारिष्टत्वादरिष्टनेमीति तस्य नाम दत्तं. अथ पंचधातृभिः पाल्यमानः प्रभुर्वृद्धिं प्राप्नुवन् समयं गमयांचकार. इतो मथुरानगर्यामुग्रसेनराजा, तस्य धारिणी राज्ञी, तस्या गर्भकाले निजभर्तुर्मांसास्वादनदोहदोऽभूत, प्रधानैर्बुद्धियुक्त्या तस्या दोहदं प्रपूर्य राजा जीवन् रक्षितः, पुत्रजन्मावसरे राजादिभिश्चिंतितं यदेषो गर्भस्थोऽपि यदि पितृसंतापकारको जातस्तदा वृद्धिं गतः किं न करिष्यतीति विचार्य तस्यांगुल्यां राजनामांकितमुद्रिकां न्यस्य कांस्यपेटायां निक्षिप्य स यमुनायां प्रवाहितः, सा पेटा नद्यां वहमाना प्रभाते शौरीपुरपार्श्वे समागता, दृष्टा चैकेन व्यवहारिणा गृहीता च, गृहमागत्योद्घाटिता दृष्टश्च तस्यामेको जातमात्रो बालः. तदंगुलीगतमुद्रिकां प्रछन्नं रक्षयित्वा तेन सः पुत्रवत्पालितो दत्तं च तस्य कंस इत्यभिधानं. अथ वृद्धिं गतोऽयं कंसो राजबीजत्वाद् दुर्दांतः सन् अन्यव्यवहारिपुत्रान् संतापयति, तत्प्रजापूत्कारो राज्ञोऽग्रे गतः, राज्ञा तं व्यवहारिणमाहूय पृ-

ष्टं, भीतेन तेन तन्मुद्रिकादानपूर्वकं कथितं स्वामिन्नेष मे पुत्रः, समुद्रविजयेन मुद्रिकातस्तमुग्रसेनरा- जपुत्रं विज्ञाय स्वसमीपे रक्षितस्तत्र कंसवसुदेवयोः परस्परं प्रीतिर्जाता. अथ जरासिंधनामा प्रतिवा- सुदेवो राजगृहे राज्यं पालयति, तेनैकदा समुद्रविजयायादिष्टं यः कोऽपि सिंहरथराजानं बध्वान- यिष्यति तस्याहं मम पुत्रीं जीवयशां दास्यामि. तदा प्रयाणोद्यतं समुद्रविजयं निषिध्य लघुभ्राता वसुदेवः कंससारथिसहितः सैन्ययुतः सिंहरथं जेतुं प्रचचाल. सिंहरथोऽपि सन्मुखमायातः, द्वयोः संग्रामो जातस्तदा सिंहरथं भूमौ पतितं बध्वा कंसयुतो वसुदेवः स्वनगरंप्रति प्रयाणमकरोत. इ- तो नैमित्तिकेनैकेनागत्य समुद्रविजयाय ज्ञापितमियं जीवयशा विषकन्या श्वसुरपितृकुलयोः क्षय- कारिण्यस्ति. अथ वसुदेवो यदा सिंहरथयुतो नगरे समायातस्तदा समुद्रविजयेन नैमित्तिकोक्ता वार्त्ता तस्य कथिता, वसुदेवेनोक्तं जरासंधस्याग्रेऽहं सिंहरथबंधनकारकं कंसं निवेदयिष्यामि. अ- थ वसुदेवो सिंहरथयुतो जरासंधपार्श्वे गत्वा सिंहरथबंधनकारकं कंसं निवेदयामास. तदा हृष्टेन जरासंधेन कंसाय जीवयशा परिणायिता, करमोचने च तस्मै मथुरानगरीराज्यं दत्तं. वसुदेवोऽथ शौरिपुरे समागतः, कंसेन मथुरायां गत्वा स्वपिता पूर्ववैरेण काष्टपंजरे क्षिप्तः स्वयं च राज्यं चकार.

इतः शौरिपुरे वसुदेवो भ्रातृविरोधेन विदेशे गतस्तत्र शतवर्षमध्ये निजपराक्रमेण तेन द्वासप्ततिसहस्रकन्याः परिणीतास्ततो रौहिण्याः स्वयंवरमंडपे स समुद्रविजयादीनां मिलितः, ततो देवकराजपुत्रीदेवकीस्वयंवरमंडपे सर्वे यादवाः कंससहिताः समागताः. इतः पश्चान्मथुरायां जीवयशागृहेऽतिमुक्तकर्षिराहारार्थं समागतो देवरत्वेन चोन्मत्तया जीवयशया संतापितोऽवदद्रे जीवयशे! त्वं गर्वं मा कुरु? यस्याः स्वयंवरमंडपे ते स्वामी गतोऽस्ति तां वसुदेवः परिणेष्यति, तस्याः सप्तमो गर्भश्च ते भर्तारं पितृपरिवारयुतं संहरिष्यतीत्युक्त्वा मुनिर्निर्गतः, तत् श्रुत्वा जीवयशया खेदं प्राप्य मथुराऽगताय कंसाय सर्वापि वार्ता कथिता, ततो भीतेन कंसेन मुनिवाक्यं व्यर्थं कर्त्तुं वसुदेवो मथुरायां रक्षितः, कृता च तेन सार्द्धमतिप्रीतिः. अथैकदा वसुदेवेन कंसंप्रति कथितं यत्त्वं मार्गयसि, तदेहं ते दास्यामि, वचनं गृहीत्वा कंसेनोक्तं हे स्वामिन् युष्माकं द्वासप्ततिसहस्रप्रमाणाः स्त्रियः संति, अतो देवक्याः सप्त गर्भा मह्यं देयाः, वचनबद्धेन वसुदेवेन तत्प्रतिपन्नं. अथ देवकी यदा गर्भं प्रसवति तदा कंससेवकास्तत्र तिष्ठंति. इतो देवकी यं बालं प्रसूते तं बालं हरिणेगमेषीदेवो भद्दिलपुरे मृतवत्सायाः सुलसाया अग्रे मुंचति, तस्या मृतबालं देवकीसमीपे मुंचति. कंससेवका-

स्तं मृतबालमादाय कंसाय समर्पयंति, तं मृतमपि बालं कंसः शिलायामास्फालयति, तदा देवकी-वसुदेवावेवं जानीतो यदस्मद्बालान् कंसो मारयतीति. अथानुक्रमेण सप्तमो गर्भः संजातः, पूर्णे मासे भाद्रपदकृष्णाष्टम्यां रोहिणीनक्षत्रे सप्तस्वप्नसूचितो देवक्या पुत्रोऽजनि, तत्पुण्यप्रभावात्तदा कं ससेवका निद्रावशं गताः. तदा वसुदेवस्तं बालं मस्तकोपरि विधाय वस्त्रेण चाछाद्य नंदगोपालगृहे मोचितुं चलितः, पथि नगरप्रतोल्यां काष्टपंजरस्थेनोग्रसेनेन वसुदेवं दृष्ट्वा पृष्टं, स्वामिन्! किमिद-मादाय गछसि, वसुदेवेनोक्तं भवतोऽस्माकं च यस्मात्सुखं भविष्यति तद्गृहीत्वाहं व्रजामीत्युक्त्वा स गोकुले समागतः, दैवयोगेन तदा नंदभार्यया यशोदया पुत्री प्रसूताभूत, तस्याः स्थाने पुत्ररत्नं मुक्त्वा वसुदेवस्तां पुत्रीमादाय पश्चाद्वलितस्तूर्णमागत्य च तां देवकीसमीपे मुक्तवान्. इतः कंसप्रा-हरिका जागृताः पुत्रीं च तामादाय कंससमीपे समागताः, तां दृष्ट्वा कंसेन हसितं सप्तमोऽयं गर्भो मां कथं हनिष्यति? तस्याः कर्णनासिके छित्वा स्त्रीत्वाज्जीवन्मुक्ता. अथ गोकुलमध्ये स वसुदेव-पुत्रो वर्धते, कृष्णवर्णत्वात्तस्य कृष्ण इति नाम दत्तं. अथ वसुदेवो ज्येष्टपुत्राय बलभद्राय तद्वृ-त्तांतं कथयित्वा तं कृष्णसमीपे मुक्तवान्, तत्र तावुभौ रममाणौ सुखेन कालं निर्गमयतः.

एकदा कंसेन नैमित्तिकः पृष्टस्तेनोक्तं मुनिवाक्यं नैव वृथा भविष्यति, देवक्याः सप्तमो गर्भस्तवांतकारको वर्त्तते परं तन्नामाहं न जानामि, किं तु यः कालिनागं वशे करिष्यति, तव पद्मोत्तरचंपकाभिधौ दुष्टगजौ व्यापादयिष्यति, शार्ङ्गधनुषि बाणं योजयिष्यति, स तव शत्रुर्ज्ञातव्यः. ततः कंसेन स्ववैरिपरीक्षानिमित्तं स्वयंवरमंडपे शार्ङ्गधनुर्मुक्त्वोद्घोषितं य एतद्योजयिष्यति तस्याहं मम भगिनीं सत्यभामां दास्यामि. तदा तत्रानेके राजानो मिलितास्तदा वसुदेवेन बलभद्रायोक्तं युवाभ्यां स्वयंवरे नागंतव्यं, बलभद्रेणोक्तं यथा भव्यं भविष्यति तथा करिष्यामि, ततो बलभद्रेण कृष्णाय सर्वोऽपि वृत्तांतो निवेदितस्तत् श्रुत्वा कृष्णः कंसोपरि अत्यंतं कुपितः, अथ वसुदेवेन निषिद्धावपि तौ द्वौ मदोध्धुरौ स्वयंवरे गंतुं प्रचलितौ. पथि यमुनामध्ये कालिनागं लोकानामुपद्रवकारकं ज्ञात्वा कृष्णस्तं वशीकृत्य तदुपरि स्थित्वा बहुवारं च तं भ्रामयित्वा विमंबितवान्. ततोऽनंतरं प्रतोल्यां कंसप्रेरितावुन्मत्तौ पद्मोत्तरचंपकनामानौ गजौ तयोर्मिलितौ, पद्मोत्तरः कृष्णेन चंपकश्च बलभद्रेण मारितौ. ततः स्वयंवरमंडपे समागत्य मंचश्रेणिमध्यादेकं राजानं दूरीकृत्य तौ तत्र स्थितौ. अथ तत्र सर्वे राजानो धनुषि बाणं योजयितुमनेकानुपायान् कुर्वंति, परं केनापि तदारोपयितुं

न शक्यते. ततः कृष्णेनोत्थाय टंकारनादबधिरितसकलसभाजनं बाणं धनुष्यारोपितं, ततः कंससंकेतितचाणूरमुष्टिमल्लौ कृष्णेन सह योध्धुं समागतौ, तूर्णं कृष्णेन चाणूरो मारितो बलभद्रेण च मुष्टिमल्लो व्यापादितः, ततः क्रुद्धः कंसः स्वयं कृष्णंप्रति धावितः, कृष्णस्तमपि काकपक्षं गृहीत्वा सद्यो व्यापादयामास. अथ समुद्रविजयेनोग्रसेनं काष्टपंजरान्निष्कास्य राज्ये स्थापितस्तेन च सत्यभामा कृष्णाय परिणायिता. अथ कंसवधानंतरं जीवयशा जरासंधपार्श्वे समागत्य तद्वृत्तांतं कथयामास. तदा क्रुद्धेन जरासंधेन समुद्रविजयंप्रति दूतं प्रेषयित्वा कृष्णबलभद्रौ मार्गितौ, समुद्रविजयेन चिंतितं तस्य दुष्टस्य पुत्रौ कथं दीयेते? ततस्तेन पृष्टेन नैमित्तिकेनोक्तं युष्माभिर्न भेतव्यं. कृष्णस्त्वयं त्रिखंडभोक्ता भविष्यति, पश्चिमदिशि समुद्रोपकंठे श्रीकृष्णभार्या सत्यभामा यत्र पुत्रयुगलं प्रसवेत्तत्र नगरं कृत्वा स्थेयं, तत्र युष्माकं महानुदयो भविष्यति. अथ सर्वेऽपि यादवा उग्रसेनादयश्च निजसैन्ययुताः क्रमेण विंध्याचलपार्श्वे समागताः. अथ कालमहाकालप्रमुखाः पंचशतजरासंधपुत्रा अग्निप्रविष्टानामपि यादवानां मारणाय नियमं कृत्वा तत्र समागताः, इतो यादवकुलदेव्या मार्गे प्रपंचं कृत्वा दावानलं विकुर्व्य वृद्धस्त्रीरूपं कृत्वा रुदितुं प्रारब्धं. तदा तत्रागतकालमहाकाला·

न्यां तस्यै पृष्टं हे वृद्धे त्वं कथं रोदिषि? तयोक्तं युष्मद्भयात्सर्वेऽपि यादवा अत्र प्रज्ज्वलिता इत्युक्त्वा तया देवमायया‍ऽर्धज्वलिते कृष्णबलभद्रशरीरे ताभ्यां दर्शिते. तद् दृष्ट्वा तैः पंचशतैरपि स्वनियमपालनाय यादवान् निष्कासयितुमग्नौ प्रविष्टं, तान् सर्वान् ज्वलितान् दृष्ट्वा तेषां सैन्यं पश्चाद्वलितं. जरासंधेन तत् श्रुत्वा चिंतितं पुत्रास्तु मृताः, परं यादवक्षयोऽभूत्तदेव वरं जातं.

अथ यादवाः क्रमेण समुद्रोपकंठे समागतास्तत्र सत्यभामया भानुभामराभिधानपुत्रयुगलं प्रसवितं. अथ तत्र कृष्णेनोपवासत्रयं कृत्वा समुद्राधिष्ठायकसुस्थितदेवः समाराधितः, प्रकटीभूतं देवंप्रति कृष्णेनोक्तं नगरस्थापनाकृते स्थानं समर्पय? देवेनेंद्रमापृच्छ्य समुद्रजलं पश्चादाकर्षितं, ततो धनदेन द्वादशयोजनविस्तृता नवयोजनपृथुला च द्वारिकाभिधाना नगरी तत्र निर्मापिता, कृष्णस्य च राज्याभिषेकस्तत्र कृतः, अथ सर्वेऽपि यादवास्तत्र सुखेन तिष्ठंति. इतश्च केचिद्वणिजो रत्नकंबलानि गृहीत्वा द्वारिकायामागतास्तत्र पुनः स्तोकं लाभं ज्ञात्वा ततो राजगृहनगरमुपागताः, तत्र जीवयशया तान्यर्धलक्षमौल्येन मार्गितानि, ततस्तैर्वणिग्भिरुक्तं लक्षमौल्येन त्वेतानि द्वारिकायां श्रीकृष्णराज्ञ्या मार्गितानि तथाप्यस्माभिर्नार्पितानि, ततोऽर्धलक्षमौल्यस्य तु का वार्ता? ततो जीव-

यशया प्रोक्तं कः कृष्णः? का द्वारिका? तत श्रुत्वा वणिग्भिः सर्वोऽपि यादववृत्तांतो मूलतः कथि· तः, तदा जीवयशा पूत्कुर्वती पितुः समीपे गता, कथितं च तया तस्मै यदधुनापि मम वैरिणो जी· वंतीति. तदा जरासंधेन तामाश्वास्य शीघ्रमेव प्रयाणभेरी वादिता. तथा सहदेवादिशतपुत्रैः शिशु· पालदुर्योधनादिराजसहस्रैश्च सकलसैन्यैः परिवृतोऽपशकुनैर्निवारितोऽपि स पश्चिमदिशि प्रस्थितः. तस्मिन् समये नारदेनागत्य कथितं हे जरासंध त्वं श्रीकृष्णं जेतुं सर्वथाऽसमर्थ एव, एवं ऋषिवा· क्यमप्यवगणय्य स त्वग्रे चलितः. अथ नारदेन व्योमवर्त्मना द्वारिकायामागत्य जरासंधसमागमन· वार्ता कृष्णाय कथिता, तदा कृष्णेनापि प्रयाणपटहो वादितः. तदा दशार्हपांडवादयः सर्वेऽपि नि· जनिजबलोपेतास्तत्र समायाताः, तदा श्रीनेमिनाथकृते सौधर्मेंद्रेण मातलिसारथियुतः सर्वास्त्रैरलं· कृतः स्वरथः प्रेषितः, अथ तयोर्द्वयोरपि सैन्यं सौराष्ट्रसीमनि पंचासराग्रे मिलितं, जरासंधेन चक्र· व्यूहो रचितः, कृष्णेन च गरुडव्यूहः कृतः, द्वयोः सैन्ययोर्महाभयंकरं युद्धं जातं, भूरिगजतुरगरथ· सुभटानां विनाशो जातः, जरासंधेन जराविद्यया यादवानां सैन्यं निश्चेतनीभूतं विहितं. तदा श्री· नेमिप्रभोर्वचनतः कृष्णेन धरणेंद्राराधनं कृतं, धरणेंद्रेण प्रकटीभूय कृष्णाय श्रीशंखेश्वरपार्श्वनाथप्र·

तिमा समर्पिता, ततः कृष्णेन तत्प्रतिमाप्रक्षालनवारिणा सर्वं निजसैन्यं सचेतनीकृतं. पुनर्द्वयोः सैन्ययोः परस्परं महायुद्धं जातं. अथ जरासंधो निजसैन्यं यादवकृतप्रहारतो निर्बलीभूतं विलोक्य कृष्णंप्रति स्वकीयं ज्वालामालाकरालं चक्रं मुमोच, तदा तच्चक्रं कृष्णं प्रदक्षिणीकृत्य समागत्य कृष्णकरे स्थितं. तदा कृष्णेनोक्तं हे जरासंध अधुनापि त्वं मम प्रणामं कुरु? यथा त्वां जीवंतं मुंचामि, तत् श्रुत्वा जरासंधोऽवददरे गोपाल ! लोहखंडेनैतेन किं गर्वं करोषि? इत्युक्त्वा स स्वयं कृष्णंप्रति धावितस्तदैव कृष्णेन मुक्तं तच्चक्रं जरासंधस्य मस्तकं छेदित्वा पुनः कृष्णहस्ते समागतं. देवैर्जयजयारावपूर्वकं कृष्णोपरि पुष्पवृष्टिर्मुक्ता. नवमश्चायं कृष्णो वासुदेव इति चोद्घोषणा कृता. अथैवमनुक्रमेण खंडत्रयं साधयित्वा श्रीकृष्णः परिवारयुतो द्वारिकायां समागतः, मातलिसारथिरपि श्रीनेमिनं प्रणम्य स्वस्थाने गतः, एवं श्रीकृष्णवासुदेवस्तत्र सुखेन राज्यं पालयति.

अथ ज्ञानत्रयसहितः श्यामवर्णो दशधनुर्देहधारी श्रीनेमिर्यौवनावस्थायामपि विषयपराङ्मुखो बभूव. अथैकदा सांबप्रद्युम्नादिकुमारान् स्वस्वस्त्रीभिः परिवेष्टिताननेकक्रीडाकुर्वाणान् वीक्ष्य शिवादेवी श्रीनेमिंप्रति कथयति हे वत्स त्वमप्येकां स्त्रियं परिणीय मम मनोरथं सफलीकुरु? तत् श्रुत्वा

श्रीनेमिरुवाच हे मातर्मदुचितां कन्यां विलोक्याहं कथयिष्यामीत्युक्त्वा मातरं स्वस्थीकृतवान्. अथ यशोमतीजीवोऽपराजिद्विमानाच्च्युत्वा श्रीउग्रसेनराजभार्यां धारिणी, तस्याः कुक्षौ राजीमतीनामपुत्रीत्वेनोत्पन्नः, यथाक्रमेण वर्धमाना सा यौवनं प्राप्ता. पित्रा बहवो वरास्तस्या अर्थे विलोकिताः, परं राजीमत्या मनसि कोऽपि नायाति.

अथैकदा श्रीनेमिकुमारः कृष्णायुधशालायां समागतः, शार्ङ्गधनुराद्यायुधांश्चोत्पाटयितुं लग्नस्तदा तदारक्षकैर्भणितं हे स्वामिन्नेषा क्रीडा भवद्भिर्न कर्तव्या, इमान्यायुधानि श्रीकृष्णं विहायान्यः कोऽप्युत्पाटयितुं न शक्नोति. तत श्रुत्वानंतशक्तियुता श्रीनेमिप्रभुणा विनोदार्थं पांचजन्यं शंखमुत्पाट्य तथा पूरितो यथा सर्वमपि नगरं क्षुब्धं, गिरिशृंगाणि पतितानि, समुद्रोऽपि प्रोच्छलितकल्लोलव्याकुलो बभूव, सभास्थितकृष्णबलभद्रावपि क्षुब्धौ. ततः कृष्णेन भयं प्राप्य तत्कारणगवेषणं कृतं, ज्ञाता च श्रीनेमिकृतक्रीडा, अथ विविधभयचिंतनोल्लिखितमानसो नारायणो बलभद्रादिसमन्वित आयुधशालायामागतः, बलसंबंधिनिजहृदयगतसंशयनिवारणार्थं च तेन श्रीनेमिं प्रत्युक्तं हे बंधो आवां निजनिजबलपरीक्षां कुर्वः, तदा श्रीनेमिप्रभुः कृष्णस्याभिप्रायं ज्ञात्वा तत्प्रतिपन्नवान्. ततस्तौ

द्वावपि बलभद्रादिपरिवारयुतौ योग्यस्थानके समागतौ. अथ श्रीनेमिना शस्त्रादिभिरन्योन्ययुद्धानि विरुद्धानि विज्ञायोक्तं हे बंधो आवयोर्बाहुबलपरीक्षावाभ्यां कर्तव्या, कृष्णेनापि तत्प्रतिपन्नं. बलभद्राद्याः सर्वेऽपि साक्षिणस्तस्थुः. अथ प्रथमं श्रीकृष्णेन स्वकीयो बाहुः प्रसारितस्तदा श्रीनेमिना स कमलनालवद्वालितः, ततः श्रीनेमिना निजबाहुः प्रसारितस्तदा कृष्णस्तं वालयितुं लग्नः परं नो वलितः, तदा कृष्णो द्वाभ्यां निजबाहुभ्यां तत्र विलग्नस्तथापि स तं वालयितुं समर्थो नाभूत, प्रत्युत वृक्षशाखायां कपिरिव स आंदोलनं चकार. अथ कृष्णः सचमत्कारं खेदं प्राप्तः, ततः सर्वेऽपि गृहे समागताः, कृष्णं खिन्नं ज्ञात्वा बलभद्रेणोक्तं हे बंधो त्वं मा विषीद? एष नेमिस्तु द्वाविंशतितमस्तीर्थंकरो भविष्यति, अत एष नैव राज्याभिलाषुकः. अथैकदा शिवादेवीसमुद्रविजयाभ्यां कृष्णायोक्तं त्वं कथमपि प्रकारेण विवाहार्थं नेमेः सम्मतिं संपादय? येनावयोर्मनोवांछा सफलीभवेत. इतस्तत्र वसंतर्तुरायाता, तदा सर्वेऽपि यादवकुमाराः श्रीनेमिप्रभुसहिता वने क्रीडार्थं गतास्तत्र कृष्णप्रेरिता जांबवतीसत्यभामारुक्मिणीप्रमुखा राज्ञ्यः श्रीनेमिना सह हास्यविनोदानकुर्वंत, बलात्कारेणापि प्रभोः पाणिग्रहणसम्मतिमविंदंत, तत्कालमेवोग्रसेनपुत्र्या राजीमत्या सह प्रभोर्विवाहो मे-

लितः, श्रावणशुक्लषष्ट्यां ज्योतिषिणा लग्नं दत्तं समुद्रविजयोग्रसेनगृहे महोत्सवा मंडिताः, द्वयोश्च गृहे कुलांगना गीतानि गायंति.

अथ श्रीनेमिप्रभू रथमारूढो ध्रियमाणछत्रश्चामरैर्वीज्यमानो विष्णुबलभद्रप्रमुखयादववृंदैर्वेष्टितः श्रीउग्रसेनगृहसमीपे समागतस्तावता प्रभुणाऽनेकशशकसूकरहरिणपारापतकुर्कुटप्रमुखप्राणिभिः भृतो वाटको दृष्टः, सर्वेऽपि ते प्राणिनस्तत्र महाक्रंदं कुर्वंति. तद् दृष्ट्वा प्रभुणा सारथिः पृष्टः, भो सारथे किमर्थमेते प्राणिनोऽत्र समूहीकृताः संति? सारथिनोक्तं हे स्वामिन् भवद्विवाहे गौरवकृते यादवादीनां भोजनार्थमेते सर्वे प्राणिनोऽत्र स्थापिताः संति, तद्वृत्तांतं श्रुत्वा दयार्द्रमानसेन प्रभुणा दुःखं प्राप्तं. इतो गवाक्षस्था राजीमत्यपि निकटप्राप्तं श्रीनेमिप्रभुं वीक्ष्य स्वकीयात्मानं धन्यं मन्यमाना परमानंदोल्लसितमानसा जाता. इतस्तस्या दक्षिणेक्षणं स्फुरितं, ततः किमप्यमंगलं ध्यायंती यावत्सा स्थितास्ति तावत्कृपापरेण प्रभुणा सारथिनमुक्त्वा रथः पश्चाद्वालितः, तदा प्रभुमातृपितृकृष्णबलभद्रादिसकलपरिवारैर्बहुधा निवारितोऽपि श्रीनेमिकुमारो विवाहकार्यं नानुमन्यत, तद्वीक्ष्य राजीमत्यपि वज्राहतेव मूर्छया भूमौ पपात, सखीभिः शीतलजलाद्युपचारैः सचेतनीकृता नानावि-

विलापांश्चकार. अथैतो लोकांतिकदेवैस्तत्रागत्य जयजयेतिशब्दोच्चारपूर्वकं प्रभोर्दीक्षासमयो ज्ञापितः, प्रभुरपि वार्षिकदानं दत्वा शिबिकामारुह्य देवमनुष्यादिपरिवारवेष्टितो गिरिनाराचले सहस्राम्रवने समागत्य सहस्रपुरुषैः सह श्रावणशुक्लषष्ठीदिने पंचमुष्टिलोचं कृत्वा दीक्षां जग्राह, द्वितीयदिने च वरदत्तद्विजगृहे प्रभुणा परमान्नेन पारणं कृतं, तत्र पंचदिव्यानि प्रकटितानि. अथैतश्चतुःपंचाशद्दिनानि प्रभुणा छद्मस्थत्वेन व्यतिक्रांतानि, तत आश्विनामावास्यायां सहस्राम्रवने प्रभोः केवलज्ञानं समुत्पन्नं, चतुःषष्टिभिरिंद्रैः समागत्य तत्र समवसरणं कृतं, तदा वर्धापनिकादातारं पुरुषंप्रति श्रीकृष्णो द्वादशकोटिं रूप्यकाणां दत्वा यादववृंदपरिवृत उग्रसेनराजीमतीसहितः प्रभोर्वंदनार्थं तत्रायातः, प्रभोर्देशनां श्रुत्वा वरदत्तप्रमुखैर्द्विसहस्रनृपै राजीमतीप्रमुखाभिर्बहुभी राजपुत्रीभिर्दीक्षा गृहीता. प्रभुणा च तत्राष्टादशगणधरस्थापना कृता, ततः श्रीकृष्णेन पृष्टं हे भगवन् भवता सह राजीमत्या एतादृशस्य स्नेहस्य किं कारणं? भगवता स्वकीयपूर्वनवभववृत्तांतः कथितः. अथ कृष्णेन दशभिर्दशार्हैश्चोग्रसेनरामादिभिश्च श्रावकत्वं प्रतिपन्नं. शिवादेवीरोहिणीरुक्मिणीभिश्च श्राविकात्वमापन्नं. एवं प्रभुणा चतुर्विधसंघस्थापना कृता, प्रभोः शासने गोमेधनामा यक्षोंबिकाख्या च देवी

जाता. एवं सप्तशतवर्षाणि केवलपर्यायं पालयित्वा सर्वायुश्च सहस्रैकवर्षमितं समाप्य रैवताचले श· तोत्तरषट्त्रिंशद्भिः साधुभिः सहाषाढशुक्लाष्टम्यां प्रभुर्मोक्षं गतः, राजीमत्यपि एकवर्षं छद्मस्थत्वं पंच· शतवर्षं च केवलिपर्यायं पालयित्वा सर्वायुरेकोत्तरनवशतवर्षमितं भुक्त्वा प्रभोः पूर्वमेव मोक्षं गता. श्रीनेमिपितरौ च चतुर्थदेवलोके गतौ.

अथाग्रे प्रसंगतः श्रीकृष्णद्वारिकासंबंधो लेशतः प्रदर्श्यते—एकदा विष्णुना श्रीनेमये पृष्टं हे स्वामिन् द्वारिकायाः केनांतो भविष्यति? पुनः कीदृग्मे मरणं भविष्यति? प्रभुणोक्तं मदिराप्रयोगे· ण कुपितः कृष्णद्वीपायनर्षिर्द्वारिकां प्रज्ज्वालयिष्यति, तव मरणं च ते वृद्धभ्रातृजराकुमारहस्तेन भविष्यति. तत् श्रुत्वा जराकुमारो विदेशे गत्वा वनमध्ये स्थितः, मदिरा च कृष्णेन द्वारिकातो ब· हिर्गिरिकंदरायां निक्षिप्ता. अथैकदा सांबप्रद्युम्नादयः कुमारा नगराद्बहिः क्रीडार्थं निर्गताः, तृषातुरै· श्च तैः कंदरास्थमदिरापानं कृतं. तेनोन्मत्तीभूतैस्तैस्तत्र तपस्तप्यमानो द्वीपायनर्षिर्दृष्टः, मदिरातः परव· शीभूतैस्तैस्तं दृष्ट्वा चिंतितमहोऽयं खल्वस्माकं नगरीसंहारको भविष्यतीति विचिंत्य ते सर्वेऽपि सं· भूय तमृषिं निर्भर्त्स्य ततो निष्कासयामासुः, क्रुद्धोऽथ स द्वारिकाज्वालननिदानं कृत्वा मृतोऽग्निकु·

मारेषु देवो जातः, तत आगत्य तेन षण्मासं यावद् द्वारिका ज्वालिता. तस्मिन् दावानले कृष्णब- लदेवौ विना यादवप्रभृति सर्वेऽपि ज्वलिताः. अथ कृष्णबलदेवौ ततो निर्गत्य यत्र वने जराकुमा- रस्तिष्ठति तत्र भवितव्यतायोगेन समागतौ, कृष्णं तृषार्त्तं वीक्ष्य बलदेवो जलार्थं दूरे गतः. इतो वनांतर्भ्रमता जराकुमारेण वृक्षछायासुप्तकृष्णपादपद्मं हरिणेक्षणवद् दृष्ट्वा तं हरिणं मन्यमानेन क- र्णांताकृष्टं बाणं मुक्तं, तेन विद्धः कृष्णः पूच्चकार, जराकुमारस्तूर्णं तत्रागत्य बाणविद्धं च कृष्णं वि- ज्ञायात्यंतं विषादं कृतवान्. कृष्णेनोक्तं श्रीनेमिप्रभुवाक्यं कथमन्यथा भवेत्? अथ बाणघातविधुरो- ऽपि कृष्णो जराकुमारंप्रति जगाद, अथ त्वमितो द्रुतं दूरे व्रज? नो चेदत्रागतो बलभद्रः क्रोधेन त्वां व्यापादयिष्यतीत्युक्त्वा तेन स्वकीयं कौस्तुभरत्नं तस्मै समर्प्यादिष्टमथ त्वया पांडवाग्रे गत्वा स- र्वोऽप्ययमुदंतः कथनीयः. अथ जराकुमारस्ततो निर्गत्य पांडुमथुरायां पांडवानामग्रे प्राप्तः, कथितश्च तेन तेभ्यः सर्वोऽपि द्वारिकादाहादिवृत्तांतः, दर्शितं च तत्कौस्तुभरत्नं. तत् श्रुत्वा ते पंचापि पांडवा वैराग्यं प्राप्य दीक्षां गृहीत्वा मोक्षे गताः. इतो जराकुमारगमनानंतरं रौद्रध्यानाधिरूढः कृष्णो वर्षैक- सहस्रायुः समाप्य मृत्वा तृतीये नरके गतः. अथ बलभद्रो जलं लात्वा यावत्तत्र समायाति, तावत्

कृष्णं तथावस्थं वीक्ष्य मूर्छितं च तं मन्यमानो बहुकालं यावत्तच्छरीरं स्कंधे वहमानो बभ्राम. किय-
ता कालेन सिद्धार्थदेवेन प्रतिबोधितस्तच्छरीरस्याग्निसंस्कारं कृत्वा वैराग्याद्दीक्षां गृहीतवान्. एकदा स
बलर्षिराहारार्थं नगरमध्ये गतः, तत्र बलर्षिरूपमोहितया कयाचित्स्त्रिया घटकंठस्थाने पुत्रकंठे दव-
रको दत्तस्तदा तेन मुनिना तां स्त्रियं प्रतिबोध्य तत्कृतं तदनर्थं दूरीकारयित्वा स्वयं च तदादितो
नगरागमनाभिग्रहं गृहीतवान्. वनस्थितेन बलभद्रर्षिणा बहवस्तिर्यंचः प्रतिबोधितास्तेष्वेको मृगो
भद्रकभावतया सुश्रावकवद्बलभद्रसेवां करोति. अथैकदा तत्र वने कश्चिद्रथकारः काष्टं छेदयति, तं
वीक्ष्य स हरिणः संज्ञया बलर्षिं तत्रानयामास. रथकारश्च मुनये भिक्षां दातुं लग्नो हरिणश्च तत्र-
स्थो तदनुमोदनं करोति. इतोऽर्धछेदिता वृक्षशाखा तेषां त्रयाणामुपरि पतिता, त्रयोऽपि कालं कृ-
त्वा शुभध्यानेन पंचमे देवलोके गताः. ॥ इति शीलकुलके नेमिनाथकथा ॥

गाथा—सीलं उत्तम वित्तं । सीलं जीवाण मंगलं परमं ॥ सीलं दोहग्गहरं । सीलं सुक्खाण
कुलभवणं ॥ २ ॥ व्याख्या—शीलशब्देन ब्रह्मचर्यं तदुत्तमं प्रधानं वित्तं धनं, शीलरूपधनस्य चौ-
रादिकेभ्योऽपि भयं नास्ति. पुनः शीलं परममुत्कृष्टं मंगलं, शीलरूपमंगलं कदापि न हीयते. पुनः

शीलं दौर्भाग्यस्य हंतृ, अर्थात्तेन शीलेन प्राणी सौभाग्यवान् भवति. पुनः शीलं समस्तानां सुखानां कुलभवनं गृहमस्ति. ॥ २ ॥

गाथा—सीलं धम्मनिहाणं । सीलं पावाण खंडणं भणियं ॥ सीलं जंतूण जगति । अकित्तिमं मंडणं नेयं ॥ ३ ॥ व्याख्या—पुनः शीलं कीदृशं? शीलं धर्मस्य निधानं, पापानां च खंडनं कथितं, पुनः शीलं जंतूनां जगति लोके अकृत्रिमं मंडनं प्रवरमाभूषणं ज्ञेयं, अन्यान्याभूषणानि विघटयंति परं शीलरूपशृंगारः सर्वदा स्थिरीभवति. ॥ ३ ॥

गाथा—निरयदुवारनिरुंधण—कवाडसंपुडसहोअरच्छायं ॥ सुरलोअधवलमंदिर—आरुहणे पवरनिस्सेणी ॥ ४ ॥ व्याख्या—पुनः कीदृशं शीलं? नरकस्य यद् द्वारं तस्य निरुंधने कपाटसंपुटसदृशं, पुनः सुरलोकानां देवलोकानां यानि धवलमंदिराण्यावासास्तत्रारोहणे प्रवरनिःश्रेणिसदृशं ज्ञेयं. ॥ ४ ॥

गाथा—सिरि उग्गसेणधूया । राइमइ लहउ सीलवईरेहं ॥ गिरिविवरगउ जीए । रहनेमी ठाविउ मग्गे ॥ ५ ॥ व्याख्या—श्रीउग्रसेनराजपुत्री राजीमती शीलवतीनां मध्ये रेखां लभ-

तु, यथा गिरिविवरे गुहामध्ये प्राप्तो रथनेमिर्मार्गे स्थापितः ॥ ५ ॥ राजीमतीकथा चेत्थं—

द्वारिकानगर्यां श्रीनेमीश्वरस्य दीक्षाग्रहणसमये गृहस्थया राजीमत्या सह रथनेमी रागं धर्तुं लग्नः, तस्यै च वस्त्रालंकारतांबूलादीन् मुंचति, राजीमती तु तं पतिलघुभ्रातरं मन्यमाना निर्विकार तया गृह्णाति. अथैकदा तेन शुद्धशीलवतीं राजीमतीमेकांते मिलित्वा कथितं त्वमद्याप्यपरिणीता वर्त्तसे ततो मया सह पाणिग्रहणं कुरु? राजीमत्या चिंतितं मयायं युक्त्या प्रतिबोध्य इति विचार्य तयोक्तं त्वं ममावासे भोक्तुं समागच्छेरित्युक्त्वा राजीमती स्वावासे गता, इतो रथनेमिरपि तत्रागतस्तदा राजीमत्या भुंजमानया मदनफलमाघ्राय वमनं कृतं, ततस्तया रथनेमये प्रोक्तं त्वममुं मया वमितमाहारं भक्षय? तेनोक्तं हे सुभगे किमहं श्वास्मि यद्वमिताहारं भक्षयामि! तयोक्तमेवमेव वमिताहारवत्तव वृद्धभ्रात्राहं परिहृतास्मि, एवंविधां च मां त्वं कथं वांछसि? तत् श्रुत्वा रथनेमिर्लज्जितः सन् स्वगृहं गतः. इतः श्रीनेमिप्रभोः केवलज्ञानं समुत्पन्नं. तदा श्रीकृष्णः परिवारयुतो महोत्सवपूर्वकं प्रभुं वंदितुं समागतः, तत्र राजीमतीरथनेमिप्रभृतिभिर्दीक्षा गृहीता. अथैकदा वर्षाकाले रथनेमिर्गुहामध्ये कायोत्सर्गेण स्थितोऽस्ति, इतो राजीमती श्रीनेमये वंदितुं समागच्छंती मा-

र्गे मेघवृष्टितस्तस्यामेव गुहायां प्रविष्टा. जलेनार्द्रीभूतानि वस्त्राणि च शरीरतो दूरीकृत्य तया गुहायां मुक्तलीकृतानि. तत्र विस्तृतांधकारतस्तया गुहामध्यस्थितो रथनेमिर्न ज्ञातः, रथनेमिस्तु तां विवसनां निरीक्ष्य मदनसुभटमुक्तबाणधोरणीभिर्विद्धो ध्वस्तधैर्यो बभूव. ततो मन्मथोन्माथितमानसो रथनेमिस्तांप्रति जगाद हे भद्रे प्रथमत एवावयोर्बहुस्नेहो वर्त्तते, ततोऽत्र प्रथमं भोगविलासं कृत्वा मनसि च संतोषमादाय पश्चात् शुद्धं चारित्रं पालयिष्यावः. इति श्रुत्वा महासती राजीमती वस्त्रैर्निजदेहमाच्छाद्य तन्मनोजवमनोभवोन्मत्तगजेंद्रांकुशनिभं घनगंभीरभारत्या वचनमुवाच, भो महानुभाव! प्रथमं गृहस्थावस्थायामपि मया त्वं प्रतिबोधितः, पुनस्त्वं महति कुले समुत्पन्नोऽसि, त्वयैतद्वचनोच्चारमपि कर्तुं न युज्यते, आवाभ्यां भगवत्समीपे महाव्रतान्यंगीकृत्य सर्वेऽपि भोगा वांताः संति, वांतभोगेच्छां कुर्वाणाः श्वेव जगतीतले लघुतां प्रयांति. इत्यादिसुवचनैः प्रतिबोधितो रथनेमी राजीमतींप्रति कथयामास, हे सति त्वं धन्यासि, कुपथगामिनं मां त्वया प्रतिबोधसुभाषितदवरकैराकृष्य सन्मार्गे समानीत इत्युक्त्वा स ततो निःसृत्य श्रीनेमिप्रभोः समीपे तत्प्रमादस्थानमालोच्य शुद्धचारित्रं प्रपाल्य केवलज्ञानं प्राप्य मोक्षं गतः, राजीमत्यपि शुद्धमनसा निरवद्यचारित्रं प्रपाल्य

केवलज्ञानमासाद्य शिवं गता. ॥ इति राजीमतीकथा ॥

गाथा—पज्जलिउवि हु जलणो । सीलप्पभावेण पाणीअं होइ ॥ सा जयउ जए सीआ । जीसे पयडा जसपडाया ॥ ६ ॥ व्याख्या—सा सीता सती जगति लोके जयतु, यस्या यशःपताका प्रकटा वर्त्तते, यतो यांप्रति प्रज्ज्वलितो धगधगायमानोऽपि ज्वलनोऽग्निः शीलप्रभावेण पानीयं जलं भवति. ॥ ६ ॥ सीतायाः कथा चेदं—मिथिलायां नगर्यां जनकराजा राज्यं करोति, तस्य विदेहाख्या राज्ञी, अन्यदा तया पुत्रपुत्रीयुगलं प्रसूतं. तावता कर्मयोगेन पूर्वभववैरिणा देवेन पुत्ररत्नमपहृत्य वैताढ्यपर्वते समानीय मुक्तं दृष्टं च तत्रत्यदक्षिणश्रेणिस्थरथनूपुरनगराधिपतिचंद्रगतिनामराज्ञा वनमागतेन. सोऽथ तं बालमादाय स्वप्रियायै चंडमत्यै भामंडल इत्यभिधानपूर्वकं पुत्रीकृत्य समर्पितवान्. अथ जनकराजादिभिः पुत्रापहरणं ज्ञात्वा शोकपीडितैः पुत्रीमुखं वीक्ष्य शीतलीभूय तस्याः सीतेति नाम दत्तं. अथ सा सीताऽनुक्रमेण यौवनावस्थां प्राप्ता. इतो मायूरशालपुराधिपतिर्म्लेच्छनृपो मिथिलानगरीं परिवेष्ट्य स्थितः. इतोऽयोध्यायां नगर्यां दशरथाभिधानो राजा राज्यं करोति, तस्य कौशल्यासुमित्राकैकेयीसुप्रभाभिधानचतुर्महिषीकुक्षिसमुद्भवाः क्रमेण राम-

लक्ष्मणभरतशत्रुघ्नाभिधानाश्चत्वारः पुत्रा आसन्. अथ जनकराज्ञा दूतं प्रेष्य दशरथाय निजशत्रुकृतपराभवदूरीकरणार्थं सहायो मार्गितः, दशरथराजापि स्वमित्रसहायार्थं निजसकलसैन्ययुतः प्रयाणाभिमुखो बभूव. तदा रामचंद्रेण सविनयं प्रणामं कृत्वा निजजनकाय कथितं हे पितरत्र कार्ये भवद्भिः कृपां विधायाहमेव प्रेष्यः, महताग्रहेण राज्ञा तत्प्रतिपन्नं. अथ पितुराज्ञामादाय सलक्ष्मणो रामो निजसैन्ययुतो मिथिलासमीपे समागतो म्लेच्छैः सह च युद्धं कृत्वा तान् विजित्य तद्देशाद् दूरे निष्कासयामास. अथ रामपराक्रमोल्लसितमानसेन जनकेन चिंतितं ममेयं दुहिता सीता रामचंद्रयोग्यैव. इति विचार्य जनकेन राममापृच्छ्य तेन सार्धं सीताया उद्वाहो मेलितः. अथ रामः सैन्ययुतस्ततो निवृत्यायोध्यायामागतः, इतो नारदर्षिर्जनकराज्ञोंतःपुरे समायातस्तदा तस्य भयानकं रूपं वीक्ष्य भीतया सीतयाक्रंदितं, तेन रुष्टो नारदो वैताढ्ये गत्वा चंद्रगतिपुत्रभामंडलाय सीताया रूपादिगुणानां प्रशंसां कृतवान्. तत श्रुत्वा मदनातुरो भामंडलो विह्वलतां प्राप्तः. चंद्रगतिराज्ञा तद् वृत्तांतं ज्ञात्वा भामंडलायोक्तं हे पुत्र त्वं खेदं मा कुरु? ते सीतापरिणयनमनोरथमहं सफलीकरिष्यामीत्युक्त्वा तेन निजदूता जनकपार्श्वे प्रेषिताः, दूतैस्तत्र गत्वा भामंडलकृते सीता याचिता, किं

तु जनकस्तन्नांगीकरोति. ततस्ते जनकं गृहीत्वा चंद्रगतिसमीपे गताः, तत्र चंद्रगतिना जनकायोक्तं त्वं सीतां देहि? तेनोक्तं सीता तु प्रथमत एव मया रामाय दत्तास्ति, किं चोत्तमकुलोत्पन्नैः स्वकन्या त्वेकवारमेव दीयते. तदा चंद्रगतिना विमृश्योक्तं मम पार्श्वे वज्रावर्त्तार्णवावर्त्ताख्ये द्वे धनुषी वर्त्तेते, तयोरुपरि यो बाणं समारोपयेत्स सीतां परिणयतु. जनकोऽपि तत्प्रतिपद्य धनुःसहितो मिथिलायां समागतः. अथ तेन तत्र स्वयंवरमंडपसमारंभः कृतः, तत्रानेकभूचरखेचराश्च समागताः, रामलक्ष्मणावपि समागतौ. तदा विविधालंकारवस्त्राभिरामा घनालिमंडिता सौदामिनीव स्वकीयापांगेक्षणैः क्षणं क्षोणीभृतां मनांसि क्षोभयंती सीतापि स्वयंवरमंडपे समागता, अथ मंडपमध्यस्थापितवज्रावर्त्तधनुषि बाणमारोपयितुं विश्वैरपि राजकुमारैः प्रयत्नः कृतः. परं कोऽपि तमारोपयितुं समर्थो न बभूव. अथ रामचंद्रेण निजपितुराज्ञया तद्धनुः कमलनालवदाम्रेडयित्वा तस्मिन् बाणमारोपितं, मिलितसकलराजकुमारहृदयविदारको विहितश्च तेन तस्य टणत्कारः, स्थापिता च तत्क्षणमेव सीतया रामचंद्रकंठे वरमाला. तावता लक्ष्मणेनाप्युत्पायार्णवावर्तधनुः समारोपितं, तदा तुष्टैर्विद्याधरैस्तस्मै स्वकीयाष्टादश कन्याः परिणायिताः. अथैतत्स्वरूपमालोक्य भामंडलोऽत्यंतं क्रुद्धः, इतश्चैको ज्ञानी

साधुस्तत्र समागतः, सर्वैश्च वंदितः, साधुनोक्तं सीता हि भामंडलभगिनी वर्तते. तत्त श्रुत्वा सर्वेऽपि चमत्कृतास्ततो मुनिना तस्य देवापहारादिः सर्वोऽपि वृत्तांतः कथितस्तदा भामंडलो लज्जयात्र नतकायः स्वस्थीभूय स्थितस्ततो रामलक्ष्मणाद्याः सर्वेऽपि सीतासहिताः स्वगृहे समायाताः.

अथैकदा दशरथराज्ञा निजवृद्धत्वं ज्ञात्वा रामचंद्राय राज्यं दातुं समारंभः कृतः. तदा कैकेयी स्वावसरं ज्ञात्वा पूर्वदत्तं वरं मार्गयितुं राज्ञः समीपे समागता. वरमार्गणाय राज्ञादिष्टा कैकेयी प्रोवाच. मम पुत्रस्य भरतस्य राज्यं देहि? रामश्च वने वासं कुर्यात्. तत् श्रुत्वा दशरथो वज्राहत इव शून्यहृदयो बभूव. तदा रामचंद्रेणोक्तं हे पितर्भरतः सुखेन राज्यं करोतु, अहं च मम मातुः कैकेय्याः सुखार्थं वने स्थास्यामीत्युक्त्वा रामचंद्रो विषादं कुर्वतीं निजमातरं युक्त्यादिगर्भितमिष्टवचनैः प्रतिबोध्य धनुर्गृहीत्वा सीतालक्ष्मणयुतो वनंप्रति चचाल. तदा सकलनगरलोका अपि शोकाकुलाः संजाताः. अथ रामस्ताभ्यां सहितः शनैः शनैः पंथानमुल्लंघ्यानुक्रमेण दंडकारण्यमागतस्तत्रैको मासक्षपणोपवासी साधुराहारार्थं समागतः. सीतया च स शुद्धान्नपानादिभिर्भक्तिपूर्वकं प्रतिलाभितो देवैश्च सीतोपरि पुष्पवृष्टिः कृता. इतस्तत्रैकः पक्षी रोगाभिभूतः समागत्य तस्य मुने·

श्चरणयोर्लग्नः, मुनिपादस्पर्शतः पक्षिणो रोगा विनष्टाः. तदाश्चर्यं विलोक्य रामेण साधुं वंदित्वा पृष्टं हे स्वामिन् कोऽयं पक्षी? कथं तस्य रोगा बभूवुर्नष्टाश्च. मुनिनोक्तमत्र पूर्वं कुंभकारकटकाभिधं नगरमासीत्, दंडकाभिधो नृपः पालकनामा च तस्य प्रधानो बभूव. स प्रधानोऽभव्यत्वाद् द्वेषबुद्ध्याऽत्रागतान् चरणकरणोद्यतान् शमसंवेगादिगुणगणमंडितान् श्रीस्कंधकाचार्यपंचशतशिष्यान् गुरुसहितान् यंत्रे निष्पीड्य व्यापादितवान्, शिष्यास्तु सर्वेऽपि शुक्लध्यानोत्पन्नक्षपकश्रेणिसमारूढा अंतकृत्केवलित्वमासाद्य मोक्षं गताः, किं तु तद्दुष्टकृतशिष्यविडंबनतः कषायोद्भवनात्स्कंधकाचार्यो निदानं कृत्वाग्निकुमारेषु देवत्वेन समुत्पन्नः, सक्रोधेन तेनाग्निकुमारेण तद्देशराजादि सर्वं ज्वालितं, तेन चैतद्दंडकारण्यं जातं. यश्च दंडकराज्ञो जीवोऽभ्रमत्स संसारेऽनेकयोनिषु भ्रांत्वैष कुष्टरोगाक्रांतपक्षी जातः, स च मां विलोक्य जातिस्मरणं प्राप्य जिनधर्मांगीकारतो नीरोगो जातः. अतो हे रामचंद्र! अयं जटायुःपक्षी तव साधर्म्यस्ति, तत् श्रुत्वा रामेण तं जटायुषं मित्रीकृत्य निजसार्थे गृहीतः, अथ ते सर्वेऽपि ततः प्रयाणं कृत्वा दक्षिणदेशे गोदावर्या उपकंठे प्राप्ताः. तत्र लक्ष्मणो वनलीलाकौतुकं निरीक्षमाणो वंशजालनिकटे खड्गैकं पतितं ददर्श. निजक्षत्रियजातिस्वभावतस्तं कराग्र-

खड्गमादाय तत्तैक्ष्ण्यपरीक्षार्थं तेन सा वंशजालिश्छिन्ना. इतस्तत्राग्निकुंडोपरि ह्यवनतशिरा धूम्रपानं क्रियमाणो विद्यासाधनपरः कोऽपि पुरुषस्तत्करवालघाततो विछूनमस्तको बभूव. तं तथावस्थं दृष्ट्वा दययार्द्रीभूतमानसो लक्ष्मणः शुचं गतो विचारयामास, हा मयाऽनर्थदंडरूपक्रीडामात्रेणैव कोऽपि तपस्तप्यमानो निरपराधिजनो व्यापादितः. अथ स शुचाकुलमानसस्तं करवालमादाय रामसमीपे समागत्य सर्वमपि तं वृत्तांतं कथयामास, रामेण खड्गमालोक्योक्तमेष खलु चंद्रहासखड्गोऽतस्तत्साधनपरः कोऽपि जनस्त्वया क्रीडामात्रेण हतः, नूनमत्र कोऽपि तस्योत्तरसाधको भविष्यति. इतः खरनामा राक्षसः पाताललंकाधिपतिर्बभूव, तस्य रावणभगिनी सूर्पणखाभिधाना प्रियास्ति, तस्य पुत्रो विद्यासाधनतत्परो वंशजालिमध्ये तपस्तप्यमानोऽभूत.

अथ सा सूर्पणखा स्वपुत्रतपोऽवधिकालं संपूर्णीभूतं विज्ञाय तच्छुद्ध्यर्थं तत्रागता, दृष्टं च तया निजपुत्रशरीरं शिरोविहीनं. ततो विविधान् विलापान् कुर्वती पदानुसारेण सा रामलक्ष्मणसमीपे समागता, जितकामं रामरूपं दूरादेव विलोक्य मन्मथोन्माथितहृदया सा निजतनयमरणोद्भवं दुःखं विस्मृत्य तंप्रति हंत भोगविलासप्रार्थनां चकार. तदा रामेणोक्तमहं तु सभार्योऽस्मि, अतो

लक्ष्मणांतिके व्रज? ततस्तया वृक्षतलासीनस्य लक्ष्मणस्य पार्श्वे समागत्य तथैव भोगप्रार्थना कृता, लक्ष्मणेनोक्तं प्रथमं त्वया मे ज्येष्ठबंधुः प्रार्थितोऽतो मे त्वं जननीतुल्यासि. ततः सीतया हसित्वा तांप्रत्युक्तमेवं प्रार्थनाभंगतस्त्वं कापि दुर्भगैवानुमीयसे. तत श्रुत्वा क्रोधानलाध्मातमानसा सूर्पणखोवाच समयेऽहं तवाप्यभिमानमुत्तारयिष्यामीत्युक्त्वा सा निजपतिखरराक्षससमीपे गता, कथिता च शंबूकमरणवार्ता. ततो रुष्टोऽयं खरराक्षसश्चतुर्दशसहस्रसुभटयुतो युद्धार्थं तत्रागतस्तदा लक्ष्मणः सीतारक्षणकृते रामं तत्रैव मुक्त्वा सन्नद्धः स्वयं तैः सह योध्धुं प्रचचाल. रामेणोक्तं हे बंधो तत्र यदि किमपि संकटमापतेत्तदा त्वया सिंहनादः कार्य इति भ्रातुर्वचनं प्रतिपद्य लक्ष्मणो राक्षससैन्याभिमुखमागत्य विविधास्त्रैरेकोऽप्यनेकीभूत इव राक्षसान् पातयामास. लक्ष्मणप्रहारतो जर्जरीभूतं राक्षससैन्यं विलोक्य सूर्पणखा त्रिकूटपर्वते निजभ्रातृरावणसमीपे समागत्य सर्वं वृत्तांतं कथयित्वा सीतारूपलावण्यादिप्रशंसां चकार. तत श्रुत्वा मदनव्यथाव्यथींभूतमतिप्राग्भारो रावणस्तूर्णं पुष्पकविमानमारुह्य रामसीतापादन्यासपवित्रीभूतस्थानमाससाद. विद्ययादृश्यीभूतो रावणो रामनिकटवर्तिनीं सीतामपहर्तुं स्वमसमर्थं मन्यमानो निःसपत्नझैकमंदिरं लक्ष्मणनादनिभं सिंहनादं कृतवान्.

तत श्रुत्वा रामो निजसंकेतमनुसृत्य सीतां तत्रैव मुक्त्वा सन्नद्धबद्धतूणीरो धनुःपाणिस्ततः शीघ्रं लक्ष्मणसहायार्थं चचाल. तदवसरं प्राप्य कपटैकपटू रावणो द्रुतं पूत्कुर्वतीं सीतामपहृत्य स्वकीयविमाने च तां संस्थाप्य ततश्चचाल. सीताकृतपूत्कारमाकर्ण्य निकटस्थो जटायुराकाशे उड्डीय स्वनखै रावणशरीरं विदारयितुं लग्नस्तदा रुष्टेन रावणेन खड्गप्रहारतोऽसौ पक्षिराड् भूमौ पातितः. विमानस्थिता सीता महता स्वरेण हा राम हा लक्ष्मण हा भामंडल मामस्माद्दुष्टराक्षसाद्रक्ष रक्षेति पूचकार. तत श्रुत्वा गगनाध्वना गच्छता भामंडलपदातिनैकेन रावणेन सह युद्धं कृतं, कृपाणप्रहारतो रावणेनासावपि भूमौ पातितः, अथ पथि रावणेनानेकप्रकारमिष्टालापैः सीतामनो वशीकर्तुं प्रयत्नो कृतः परमूषरभूमौ धाराधरधोरणीव तस्य वाग्विलासा निष्फला जाताः.

अथ रावणो लंकायामागत्य प्राहरिकैः परिवेष्टितायामशोकवाटिकायां सीतां रक्षितवान्. तत्र रामनामैकतानमानसा सीता रामलक्ष्मणकुशलसंदेशलाभावधिप्रत्याख्यातान्नपाना जिनध्यानपरा निजकालं गमयांचकार. अथ तत्र रामागमननिरीक्षणाद्विस्मयमापन्नो लक्ष्मणस्तंप्रत्युवाच हे बंधो त्वं वद्भिस्तत्रैकाकिनीं सतीसीतां विहाय कुतोऽत्र समागमनं विहितं, चकितेन रामेणोक्तं हे बंधो मया

तु त्वत्कृतसिंहनादमेवाकर्ण्यात्रागमनं कृतं, लक्ष्मणेनोक्तं मया तु सिंहनादो नैव कृतः, नूनं केनचित्कपटपाटवकोविदेनारिणाऽयं प्रपंचो विहितोऽस्ति, अतस्त्वं तूर्णं तत्र व्रज? अहमपि तूर्णं शत्रून् हत्वागच्छामीत्युक्तो रामोऽविलंबं त्वरितपदैस्तत्र समायातः, सीतां चादृष्ट्वा वज्राहत इव मूर्छां प्राप. कियत्कालांतरे सुरभिवनवायुना सचेतनीभूय सीताशुद्ध्यर्थमितस्ततो वनमध्ये विलोकयामास. इतो मरणांतदशाप्राप्तं विशीर्णपक्षजालं भूमौ लुठंतं जटायुपक्षिणं विलोक्य सीतावियोगापन्निमग्नोऽपि रामस्तं नमस्कारमंत्रं दत्तवान्, तत्प्रभावतो जटायुपक्षी पंचत्वमधिगत्यापि चतुर्थे माहेंद्रदेवलोके देवत्वेनोत्पन्नः, पुनः स्मृतिपथमागतां सीतां कुत्राप्यनालोक्य रामो मूर्छितः, इतो द्विषन्निषूदनोल्लसितमानसो लक्ष्मणस्ततो निवृत्त्य यावत्तत्र समायाति तावद्रामचंद्रं तथावस्थं वीक्ष्य सीतां चाऽनालोक्य खिन्नमानसोऽनिलजलादिप्रयोगेण रामं सचेतनीचकार. सचेतनीभूतो रामोऽवोचत हे भ्रातः! सीतां मुक्त्वा यदाहं तव समीपे समागतस्तदा केनापि छलान्वेषिणारिणा सीतापहरणं कृतं. लक्ष्मणेनोक्तं हे भ्रातरधुना त्वं मा विषादं कुरु? आवां शीघ्रमेव सीतायाः शुद्धिं करिष्यावः. इतो विराधाभिधः पूर्वपातालंकाधिपतिस्तत्रागत्य रामलक्ष्मणौ वंदित्वावदत् हे स्वामिन् मयाधुना श्रुतं य-

लक्ष्मणेन मम वैरी खरो हतस्तेनाहमतः परं भवत्सेवकोऽस्मि. रामलक्ष्मणाभ्यां तमाश्वास्य पाताललंकाधिपतिः स्थापितः.

इतः किष्किंधाधिपतिः सुग्रीवो बहिः क्रीडार्थं गतस्तदवसरं प्राप्य केनचिद्विद्याधरेण स्वकीयविद्याबलतः सुग्रीवरूपं विधाय तस्य राज्यं गृहीत्वा तदंतःपुरे प्रविष्टं, तत श्रुत्वा खेदमुपगतः सत्यसुग्रीवो रामपार्श्वे समागत्य निजवृत्तांतं कथयित्वा विज्ञप्तिं कृतवान्. हे स्वामिन् ममोपरि कृपां विधाय वैरिणं निष्कास्य मम राज्यं दापयित्वा मां सेवकं सनाथीकुरु? तत् श्रुत्वा कृपालुरामेण शीघ्रमेव तत्रागत्य मायाविनं सुग्रीववेषधरं विद्याधरं निर्जीत्य सत्यसुग्रीवाय तद्राज्यं समर्पितं. तुष्टोऽथ सुग्रीवो निजाष्टादशकन्यानां पाणिग्रहणकृते रामं निमंत्रयामास. रामेणोक्तं प्रथमं त्वं सीताशुद्धिं समानीय मम मनःसंतापं दूरीकुरु? पश्चात्त्वदुक्तं सर्वमप्यहं करिष्यामि. तत श्रुत्वा विराधसुग्रीवौ सीताशुद्ध्यर्थं विमानस्थितौ चलितौ. इतस्ताभ्यां रावणकृतखड्गप्रहारतो भूमौ पतितो भामंडलपदातिरत्नजटीविद्याधरो दृष्टः, वेदनाक्रांतेनापि तेन रावणकृतसीतापहरणादिसर्वोऽपि वृत्तांतस्ताभ्यां कथितः, तत श्रुत्वा तौ द्वावपि तूर्णं रामसमीपे समागत्य तद्वृत्तांतं कथयामासतुः.

ततो रामाज्ञया सुग्रीवो हनुमंतमाकार्य रामनामांकितमुद्रिकयोपेतं सीताप्रवृत्तिशुद्ध्यर्थं लंकायां प्रेषितवान्. हनुमानपि रामं प्रणम्य ततो द्रुतं गगनाध्वना लंकायां प्राप्तः, तत्र बिभीषणकुंभकर्णादिपरिवारपरिवेष्टितं सभास्थितं रावणं नमस्कृत्य तेनोक्तं हे राजन् त्वं महासतीं सीतां मुंच? नो चेद्रामः कमलनालमिव तव मस्तकं छेदयिष्यति. तत् श्रुत्वा क्रोधोद्धतेन रावणेन हनुमद्गृहणार्थं निजसेवका आदिष्टाः, इतो हनुमान् रावणं पादप्रहारतोऽविलंबं सिंहासनादधो निपात्य स्वयं प्रपलाय्याशोकवाटिकायां समागतस्तत्राशोकवृक्षतले मुखमवनतीकृत्य हस्ततलविन्यस्तमस्तका मलीनचीवराणि दधाना स्नानांगविलेपनादिरहितोष्णोष्णनिःश्वासान्निष्कासयंती रामनामैकतानलीना सीता तेन दृष्टा. तूर्णं तस्याः समीपमागत्य तेन तां महासतीं प्रणम्य रामनामांकितमुद्रिका तस्या हस्ते दत्ता कथिता च रामकुशलोदंतपूर्वकं सकलापि वार्ता. मुद्रिकादर्शनतः सहर्षं चमत्कृता सीता निजहृदयगतनिस्सीमरामस्नेहकदंबकाविर्भावं बहिर्निष्कासयंतीव निजनयनाभ्यां हर्षाश्रूणि मुमोच. हनुमतोक्तं हे मातरधुना त्वया चिंता न कर्तव्या, रामोऽधुनैवात्र सैन्ययुतः समागमिष्यति. वैरिणं च निहत्य विरहदुःखितायास्तव शुद्धिं करिष्यति. इत्युक्त्वा हनुमांस्ततो निःसृत्याग्निना लंकां प्रज्ज्वा-

व्यारामांश्च भंक्त्वा द्वारपालान्निहत्य सहर्षो रामसमीपे समागतः, रामं नत्वा सर्वोदंतपूर्वकं तेन सीतावृत्तांतो निवेदितः. अथ रामोऽनेकविद्याधरवृंदयुतो भामंडलहनुमत्सुग्रीवविराधादिसुभटसहितो भूरिसैन्यसंकलितो लंकासमीपे समागतः.

इतो बिभीषणेन रावणायोक्तं हे बंधो! अधुनापि त्वं रामं प्रणम्य सीतां समर्पय? अन्यथायं रामस्तव कुलक्षयं करिष्यति, इति श्रुत्वा क्रुद्धेन रावणेन स निर्भर्त्स्य निष्कासितः, सोऽपि रामसमीपे समागत्य प्रणामं कृतवान्, रामेणाप्यवसरं ज्ञात्वा तस्मै बहुमानं दत्वा प्रोक्तमहं लंकाया राज्यं तुभ्यं दास्यामि. अथ रावणोऽपि निजसैन्यं मेलयित्वा समागतः, परस्परं द्वयोः सैन्ययोर्महायुद्धं प्रवर्तितं. रावणेन निजसैन्यं भग्नं विज्ञाय लक्ष्मणोपरि शक्तिप्रहारो मुक्तस्तेन लक्ष्मणो निश्चेतनीभूय भूमौ पतितस्तदा शोकातुरो रामो नानाविधान् विलापान् कर्तुं प्रवृत्तः, रामसैन्यं सर्वमपि शून्यं जातं. इतश्चंद्रविद्याधरेणागत्य रामाय प्रणम्य चोक्तं हे स्वामिन्! शक्त्या हतो जनः सूर्योदयं यावज्जीवति, तस्य जीवनोपायश्चैकोऽस्ति. भरतमातुलस्य विशल्याभिधाना महासती पुत्री वर्तते, तस्याः करस्पर्शनतो लक्ष्मणो नूनं शल्यरहितो भविष्यति. तत् श्रुत्वा हनुमता प्रोक्तं तां विशल्यां महास-

तीं तज्जनकद्रोणमेघसहितामहमधुनैवानानयिष्यामि. ततो रामाज्ञामादाय भामंडलहनुमंतौ विय- न्मार्गेण तत्र गत्वा तज्जनकसहितां तां विशल्याभिधानां महासतीमानयामासतुः, तस्याः करस्पर्शन- तो द्रुतमेव सा शक्तिर्लक्ष्मणशरीराद् दूरं गता, तदा रामसैन्ये जयजयारावो जातः, परिणायिता च विशल्या द्रोणमेघराज्ञा लक्ष्मणाय. अथ पुनरपि द्वयोः सैन्ययोर्महायुद्धानि बभूवुः, प्रांते रावणेन निजसैन्यं सकलमपि प्रायो नष्टं ज्ञात्वा लक्ष्मणोपरि चक्रं मुक्तं. तच्चक्रं तु लक्ष्मणं प्रदक्षिणीकृत्य तस्यैव हस्ते स्थितं. तदा लक्ष्मणेन रावणायोक्तं अरे रावण! अधुनापि त्वं सीतां प्रत्यर्पय? नो चेदिदं चक्रं ते गलनालं छेदयिष्यति, एवमुक्तोऽपि रावणो यदा रणान्न विरराम तदा लक्ष्मणेन तच्चक्रं रावणोपरि मुक्तं, ततश्छिन्नमस्तको रावणो मृत्युमासाद्य ज्येष्टकृष्णैकादशीदिवसे चतुर्थे नर- के गतः, देवैश्च लक्ष्मणोऽयमष्टमो वासुदेव इत्युद्घोषणपूर्वकं तस्योपरि पुष्पवृष्टिः कृता. अथ रा- मः परिवारयुतो लंकायां प्रविश्य बिभीषणं च राज्ये संस्थाप्य चिरकालविरहदुःखविह्वलामखंडित- शीलां महासतीं सीतां गृहीत्वा ततो निवृत्त्यायोध्यायां समागतः, भरतादिभिर्महताडंबरेण तस्य प्र- वेशमहोत्सवः कृतः, सुग्रीवहनुमद्भामंडलाद्याः सर्वेऽपि रामचरणौ प्रणिपत्य निजनिजस्थानके समा-

गताः. अथ तत्र रामः सीतया सह विषयसुखानि भुंजानो निजकालं गमयति.

इतः सीतायाः कुक्षौ गर्भोत्पत्तिर्जाता, गर्भप्रभावतश्च तस्याः सम्मेतशिखरयात्राया दोहदः समुत्पन्नः, इतस्तस्या दक्षिणेक्षणं स्फुरितं, तावता नागरमहाजनै रामाग्रे समागत्य प्रोक्तं हे स्वामिन्! लोका भवतोऽपवादं बहु जल्पंति यद्बलात्कारेणापहृता सीता ध्रुवं परस्त्रीलंपटेन रावणेन भुक्तैव भविष्यतीति. तत्र श्रुत्वा रामो गुप्तवेषेण रात्रौ नगरचर्चां श्रोतुं नगरमध्ये निर्गतः, पथि भ्रमन्नेकस्य रजकस्य गृहाग्रे समागतः, इतो रजकोऽपि क्षुधातुरो वस्त्रग्रंथिं मस्तके धृत्वा नद्याः स्वगृहे समागतः, तस्मिन्नवसरे तस्य भार्या गृहकपाटे तालकं दत्वा किंचित्कार्यार्थं प्रातिवेश्मिकगृहे गतासीत. क्षुत्क्षामेण रजकेण निजभार्याकारणार्थं पूत्कारः कृतस्तत श्रुत्वा सा तूर्णं तत्रागत्य गृहकपाटमुद्घाटयित्वा गृहांतर्गता. क्रुद्धेन रजकेण तां पादेन निहत्योक्तं रे दुराचारिणि एतावत्कालं त्वं कुत्र गतासीः? निर्गच्छ मम गृहात्, मे किमपि ते प्रयोजनं नास्ति. तत्र श्रुत्वा स्त्रियोक्तं रे निर्लज्ज त्वं विचारय? रामेण यदि षण्मासं यावत्परगृहे स्थिता सीता पुनरानीय स्वगृहे रक्षिता, तर्हि त्वं मां केवलं क्षणमात्रेणैव गृहान्निष्कासयसि? रजकेणोक्तं रामस्तु स्त्रीवशोऽहं तु स्त्रीवशो नास्मि. इत्या-

द्यालापं श्रुत्वा रामेण चिंतितं सांप्रति धिक्, लोकापवादस्तु महानेव दृश्यते, अतो मया सीतायाः परिहार एव कर्तुं योग्यः, इति विचार्य तेन लक्ष्मणाग्रे सा वार्ता कथिता, लक्ष्मणेनोक्तं हे भ्रातः! लोकास्तु दुराचारिणः परदोषान्वेषिणः संति, स्वदोषांस्तु केऽपि न जानंति, रामेणोक्तमेष लोकापवादो मया सोढुं न शक्यते. ततो रामेण निजसारथिमाहूयोक्तं त्वं सीतां रथाधिरूढां कृत्वा सम्मेतशिखरे व्रज, तत्र तस्या दोहदं पूरयित्वाऽरण्यमध्ये तां विमुच्य त्वयेयं लोकापवादवार्ता तस्यै कथनीया. अथ सारथिरपि तां रथे समारोप्य सम्मेतशिखरंप्रति चलितस्तत्र गत्वा सीतयाऽत्यंतं भावपूर्वकं जिनवंदनेन तीर्थयात्रा कृता, ततो व्याघुट्य रथाधिरूढा सीता यद्यरण्यमध्ये समागता तदा सारथिना हस्तौ नियोज्य रामोक्तो वृत्तांतस्तस्यै कथितः, ततस्तामेकाकिनीं वने त्यक्त्वा रथिको रथमादायायोध्यांप्रति चलितुंमनाः क्षणं तत्रैव तस्थिवान्. अथ सीता तत्र मनसि महादुःखं वहमाना मूर्छिता भूमौ पतिता, क्रमाच्छीतलानिलसंयोगतः सचेतनीभूय विलापं चकार, हे रामचंद्र! यदि त्वया लोकापवादभीतेनाहं त्यक्ता तर्हि लोकप्रत्यक्षं मम परीक्षा तत्रैव किं न कृता? अहो राम त्वया मे सगर्भाया अबलाया अपि दया मनसि नानीता, इत्यादिविविधप्रकारान् विलापान् कृत्वा

सा चिंतयामास, अहोऽत्रार्थे रामस्य किं दूषणं? ममैव प्राक्कृतदुष्कर्मणामयमुदयो बभूव. अथ भ्रात्रा त्वहं परिहृता परं जिनोक्तो धर्मो मां मा परिहरतु. अथ सीतां नमस्कृत्य स्वाम्याज्ञैकपालने निजसार्थकतां मन्यमानो रथिको मनसि दुःखं वहमानोऽपि नयनाभ्यामश्रूणि मुंचन् रथमादायायोध्यांप्रति चलितः. इतस्तत्र परनारीसहोदरतुल्यः पुंडरीकाभिधनगराधिपतिवज्रजंघनामा नृपस्तत्र समायातस्तेन विलापान् कुर्वंतीं सीतांप्रति पृष्टं, हे भगिनि त्वं कासि? केन दुःखेनात्र गहनगहने समागतासि? तद्वचनतस्तं सत्पुरुषं ज्ञात्वा संतुष्टया सीतया स्वकीयः सर्वोऽपि वृत्तांतस्तस्मै निवेदितः, राजा तामाश्वास्य निजनगर्यामानीतवान्, निजभगिनीकृत्य चावासमध्ये रक्षिता, तत्र तया पुत्रयुगलं प्रसवितं, राज्ञा च महोत्सवपूर्वकं तयोर्लवांकुशाभिधाने दत्ते, क्रमेण तत्रैव च तौ वर्धितौ.

इतो रथिकेनायोध्यायामागत्य सीताकृतविलापादिवृत्तांतकथनपूर्वकं सर्वोऽपि तद्वृत्तांतो रामाय कथितः, तत् श्रुत्वा पश्चात्तापं कुर्वाणो रामः सीतावियोगदुःखविदीर्णमानसो रथिनमादाय तूर्णं तत्र वने समागतः, कृतं च तेन स्थाने स्थाने परिभ्रम्य तत्र सीताया गवेषणं, किंतु निर्भाग्यवता रंककुटुंबिना निधानमिव तेन क्वापि सीतामुखं नो दृष्टं. ततस्तां यूथभ्रष्टां मृगीमिवैकाकिनीं कानन-

सा·
निवासिसिंहादिक्रूरप्राणिनिहतां मन्यमानः शोकानलदग्धहृत्तृणकुटीरो रामः कथंचिदयोध्यायां प्रतिबोध्य·
रथियुतः समागत्य, कृत्वा च तस्याः प्रेतकार्याणि, राजकार्यादिपराङ्मुखो लक्ष्मणादिभिः सकलक·
मानोऽपि सीताध्यानैकलीनचेता मूढ इव निजसमयं गमयांचकार. अथ तत्र लवांकुशौ नि·
लाकलापकलितौ क्रमेण ललितललनाहृदयांबुजहंसलीलायिताईवयसौ जातौ. तदा वज्रजंघेन च
जवदनलवणिमतिरस्कृतशशिलेखाशशिचूलाभिधाना निजतनया लवाय परिणायिता, अंकुशार्थं च
स्वमित्रपृथुराजपार्श्वे तत्तनूजा मार्गिता, पृथुना च तदज्ञातवंशादिदूषणदानपूर्वकं तन्न स्वीकृतं. तदा
संग्रामे पृथुराजं विजित्य पराक्रमेण च स्वकीयोत्तमकुलतां प्रकटीकृत्य प्रांते च सन्मानादिना तं प्री·
णयित्वा लवणिमाद्यगण्यगुणगणमंडितां तस्य पुत्रीमंकुशः परिणीतवान्. इतस्तत्र कुतूहलैकप्रियेण
नारदेनाप्यागत्य लवांकुशयो रामसीतांगजन्मत्वं निवेद्य सर्वेऽप्यतुलहर्षोल्लसितमानसा विदधिरे. अ·
थ लवांकुशौ निजभुजाबलेन बलवतोऽपि कतिचिद्भूपतीन् वशीकृत्य प्रकंपिताचलाचलं भूरिगजतु·
रगस्यंदनसुभटान्वितं बलमादायायोध्यानिकटे समागतौ. तत श्रुत्वा रामलक्ष्मणावपि निजसैन्यमा·
दाय सन्मुखमागतौ, द्वयोः सैन्ययोः परस्परं खङ्गाखङ्गि शराशरि युद्धं प्रवृत्तं. तदा लवांकुशाभ्यां क·

ल्पांतकालविकरालघनाघनधाराधोरणीभिरिव कर्णांताकृष्टधनुर्मुक्तबाणधाराभिः पद्मसैन्यपद्मवनखंडं तथा विलोडितं यथा कतिचिद्राजहंसैस्ततः पलायितं, पद्मोऽपि पद्ममिवांतर्विशरारुतां प्राप्तस्तदा लक्ष्मणेनानन्योपायेन ज्वलज्ज्वालामालाकरालितं चक्रं तान्प्रति मुक्तं. तच्चक्रमपि निसर्गतो गोत्रघातपराङ्मुखीभूतत्वात्तन्मुक्तशरराजिभिर्जर्जरीभूतमिव भयादपसृत्य पुनर्लक्ष्मणकरसंगतं जातं, तदा लक्ष्मणो विषादं प्राप्तः.

इतो नारदेन तत्रागत्योक्तं भो पद्म! अत्र गतभ्रमरतनुजागमावर्णनीयहर्षस्थाने कथमिव त्वया स्वकीयं हृदयं शोकपंकेन मलिनीक्रियते? मनोविह्वलतया नारदोक्तश्लेषोक्तिमजानता पद्मेन नारदः प्रश्नविषयीकृतो भो नारदमुने! अधुना त्वहं निजजयसंशयापन्नोऽनेकतर्कवितर्ककल्लोलोल्ललितशोकापाराकूपारपतितो गतपोतो वणिगिव निःश्वस्य विश्वमपि विश्वं शोकपानीयमयं नयनविषयी करोमि, न जानामि हंत त्वयैतन्मे शोकस्थानं कथमिव हर्षस्थानीकृत्य वर्ण्यते? ततो नारदो लवांकुशयोः सीतासतीकुक्षिसरोजभ्रमरतनुजोत्पत्तित्वं प्रकटीकृत्य पद्मं च विध्वस्तशोकपंकं हर्षोल्लासविकसितं च विधाय भ्रमरतनूजावासरसास्वादादियोग्यं तस्य हृदयं चकार. तत श्रुत्वा हर्षोल्लसित-

मानसो रामः स्वपुत्रमिलनार्थं प्रस्थितः, तदानीमेव विनयप्राग्भारनम्रीभूतशरीरौ लवांकुशावपि पि·
तुः सन्मुखमागत्य पद्मपदपद्मयोर्निजभ्रमरायितं ख्यापयंतौ नेमतुः, प्रवेशमहोत्सवपूर्वकं तौ नगरे
समानीय रामेण चिरविरहनिजहृदयोद्भूतसंतापस्तद्वदननिर्गतोदंतवाग्जलधाराभिरुपशामितश्च. अ·
थ लक्ष्मणसुग्रीवप्रमुखाः शीघ्रं पुंडरीकनगरे गत्वा ततो महासतीं सीतामानयामासुः, नगरबहिःस्थित·
या सीतयोक्तं प्रथमं मे शीलपरीक्षां कारयिष्यामि. ततो रामादिसकलनगरलोकसमूहा नगरबहिः
समागताः, तदा सीतया तत्र खदिरांगारधगधगायमानैका खातिका निर्मापिता, प्रविष्टं च तन्मध्ये
स्वशीलपरीक्षायै. ततस्तस्याः शीलप्रभावेण साग्निखातिका निर्मलजलकल्लोलयुता संजाता, तस्यां
कमलोपरि हंसलीलायितं दधाना सीता साक्षाल्लक्ष्मीरिव रामादिनिखिलनगरलोकमनोगतसंशयदा·
रिद्र्यं दूरीचकार. देवैर्जयजयारावपूर्वकं सीतोपरि सुमनोवृष्टिर्विहिता, घोषितं च निखिलजगज्जनज·
नितचमत्कारसकलललनालिशिक्षणीयाचरणीयाचारविचारेयं महासती सीता निर्दोषैव. अथ ल·
क्ष्मणादयो विश्वेऽपि नगरनिवासिजननिकरा सीताचरणारविंदे नमस्कृत्य निजापराधं क्षमयामासुः,
रामोऽपि नयनाश्रुधाराभ्मना निजांतःकरणमालिन्यं क्षालयन् स्वकीयापराधं क्षमयामास, कथितं च

तेन सीतायै हे प्रियेऽधुना तव चरणन्यासैश्चिरोत्कंठितामिमामयोध्यां नगरीं पावनीकुरु? सीतयोक्तं हे राम! अधुना वैराग्यामृतरसास्वादतृप्तीभूतं मे मानसमसारसंसारसुखविषास्वादतो विमुखीभूतमेव. अतोऽहं गतवृजिनजिनैकध्यानपरा रागाद्यंतरंगारिपराभवं शमसंवेगादिसुभटसहायेन परिहृत्य संसारिजनभंगुरप्रेमाभिलाषपराङ्मुखी अवर्णनीयाविचलाभंगुरैकप्रेमपात्रं चिरोत्कंठितां मुक्तिसखीमेव मिलितुमिच्छामि.

तत् श्रुत्वाऽश्रुजलाविलनेत्रो रामः स्वकीयाविचारितकार्यनिंदनपरः पश्चात्तापोदधिमग्नोऽनेकविधाः प्रार्थनास्तस्यै नगरांतरागमनाय चकार. सीतयोक्तं हे राजन् संप्रति त्वया संसारसागरनिमज्जनैकहेतुर्मम विषये मोहो नैव कर्तव्यः, न च किंचिदत्रविषये भवतामपराधोऽपि मे दृष्टीगोचरी भवति, मम कर्मणामेवायं दोषः, किंच संसारघोरांधकारेऽनादिकालतो मोहनीलिकांधीभूतांतर्विलोचनानां रागादिचौरह्रीयमाणरत्नत्रयधनानां पामरप्राणिनां निसर्गतो दयाद्भुतार्द्रीभूतांतःकरणा ज्ञातजिनसिद्धांतरहस्यत्वेन गीतार्थपदवीं प्राप्ताः सुगुरवो ज्ञानांजनशलाकया नेत्ररोगं दूरीकृत्य पुनश्च रत्नत्रयदानपूर्वकमक्षयानंतसौख्यैकभांडागाररूपं मोक्षनगरंप्रति तान्नयंति, अतस्तदक्षयसुखप्राप्त्यर्थम-

हमपि तेषामेव सुगुरूणां शरणमंगीकरिष्यामि, अतो हे राजन् मह्यमाज्ञां देहि? रामेणापि तस्या अत्याग्रहं विनिश्चित्याज्ञा दत्ता. वैराग्यपरंपरया तया बहुपरिवारेण सह दीक्षा गृहीता. घनघातिकर्मेंधनदहनैकदाहनिभानि विविधानि तपांसि तप्त्वा कालं कृत्वा सा माहेंद्रपदवीं प्राप्ता, ततोऽनुक्रमेण च मोक्षं यास्यति. ततो द्वादशसहस्रवर्षायुःक्षये लक्ष्मणः कालं कृत्वा चतुर्थे नरके गतः, श्रीरामेण विरहातुरेण षण्मासं यावन्मृतलक्ष्मणशरीरमुत्पाट्य भ्रमितं, ततो देवीभूतजटायुपक्षिजीवेन प्रतिबोधितो रामस्तस्याग्निसंस्कारं कृत्वा दीक्षां गृहीतवान्. एकदा कायोत्सर्गस्थितस्य रामस्य परीक्षणकृते शक्रेण सीतारूपं तस्याग्रे प्रकटीकृतं, परं रामस्तु निश्चल एव स्थितः. प्रांते श्रीरामर्षिः शत्रुंजयतीर्थे समागत्य केवलज्ञानमासाद्य मोक्षं गतः, रावणलक्ष्मणावपि कतिचिद्भवांतरे मोक्षं गमिष्यंति. ॥ इति शीलकुलके सीताकथा ॥

गाथा—चालणीजलेण चंपाए । जीए उग्घाडिअं दुवारतिगं ॥ कस्स न हरेइ चित्तं । तीए चरिअं सुभद्दाए ॥ ७ ॥ व्याख्या—चालनिकया निष्कासितं यज्जलं तेन यया चंपानगर्या द्वारत्रिकं समुद्घाटितं, तस्याः सुभद्रायाश्चरित्रं कस्य चित्तं न विस्मापयति? अपितु सर्वेषामपि चित्ते

विस्मयं करोतीत्यर्थः. ॥ ७ ॥ सुभद्रायाः कथा चेवं—वसंतपुरनगरे जितशत्रुनामा राजास्ति. तत्र जिनदासाभिधानः श्रेष्ठी वसति, तस्य जिनधर्मैकतत्परा शीलवत्यभिधा भार्या, तस्याः कुक्षिशुक्तिसमुद्भवा मुक्तामया विद्याद्यनेककलाकलापाभिरामा जिनधर्मैकचित्ता सुभद्राख्या तनयाभूत्. तस्या वदनेंदुमालोक्य भीतमिव मिथ्यात्वघोरतिमिरं दूरीभूतमेव. इतस्तत्र चंपानगरीवास्तव्यो बुद्धधर्मैकलीनो बुद्धदासाभिधानः श्रेष्ठी व्यवसायार्थं समागतः, व्यापारादिनिमित्तं गमनागमनप्रसंगतो जिनदासेन सह तस्य मैत्री जाता. एकदा व्यापारार्थं जिनदासगृहागतस्य बुद्धदासस्य हृदयं सुभद्रावदनेंदुं निरीक्ष्य चकोरलीलायितं प्राप्तं. अथ सुभद्रागतमानसो बुद्धदासो निजगृहे समागतः, ततस्तेनैकस्मै स्वमित्राय स्वकीयाभिलाषो निवेदितः, मित्रेणोक्तं हे बुद्धदास! जिनदासो जैनधर्मिणं विनान्यस्मै कस्मैचिदपि स्वतनयां न दास्यति, तत श्रुत्वा बुद्धदासः कपटश्रावकीभूय त्रिसंध्यं जिनपूजापरायणः प्रतिक्रमणादिक्रियातत्परश्च संजातः, सर्वदा मुनिवंदनं कृत्वा धर्मकथाव्याख्यानादि शृणोति. एवं बुद्धदासं जैनधर्मैकचित्तं विलोक्यैकदा जिनदासेन हृष्टेन स्वयमेव निजांगजा सुभद्रा तस्मै परिणायिता. अथ तौ दंपती तत्र सुखेन सांसारिकभोगान् भुंजानौ तिष्ठतः. अथ क-

तिचिद्दिवसानंतरं बुद्धदासो बहुद्रव्यमुपार्ज्य सुभद्रासहितश्चंपायां गतः, तत्र जिनधर्मपरायणां सुभ· द्रां वीक्ष्य बुद्धधर्मानुयायी श्वशुरपरिवारस्तस्या उपरि द्वेषमवहत. अतः सुभद्रा पृथग्गृहेऽवसत. सुभ· द्रां दृढजिनधर्मानुरागिणीं विज्ञाय जैनमुनयस्तस्या गृहे आहाराद्यर्थं समागछंति. तस्याः श्वश्रूननां· दृप्रभृतिपरिवारः सर्वदा साधोर्दुर्जन इव छिद्राण्यन्वेषयति. एकदा बुद्धदासभगिन्या बुद्धदासाय क· थितं हे भ्रातस्तव भार्या दुःशीला ज्ञायते, तस्य गृहे सर्वदा जैनमुनयः समागछंति, तैः सह सैषा तव भार्या हास्यविनोदादिकुतूहलानि करोति. तत श्रुत्वा बुद्धदासेन तामवगणय्योक्तं मम भार्या दुःशीला नैवास्ति, यूयं सर्वे धर्मविरोधतस्तस्या उपरि द्वेषं वहथ, किंच ज्ञातचरणकरणधर्मा जैन· साधवोऽपि कदापि दुःशीला न भवेयुः.

अथैकदा कोऽपि पाणिपात्रो जिनकल्पी साधुः सुभद्रागृहे आहारार्थं समागतः, सुभद्रया त· न्मुनिनयनं अंतःपतिततृणव्याकुलं दृष्टं, निष्कासितं च लाघवतो जिह्वाग्रेण, तदा सुभद्राललाटस्थं कुंकुमतिलकं मुनिललाटे लग्नं. कुंकुमतिलकालंकृतभालं मुनिं सुभद्रागृहान्निस्सरंतं विलोक्य छिद्र· विलोकनैककार्यया ननांद्रा बुद्धदासमाकार्य तद्वितथमपि सुभद्रादुःशीलत्वं प्रकटीकृत्य तस्मै दर्शितं,

तद् दृष्ट्वा शंकाकुलचेता बुद्धदासस्तस्या गृहे गमनागमनं तत्याज, विस्तृता च सा वार्त्ताभिलारूढेव सकलेऽपि नगरे. अथ सुभद्रा निजनिमित्तं जिनशासनमालिन्यमुपस्थितं ज्ञात्वा हृदि खिन्ना सती कायोत्सर्गं चकार, गृहीतश्च तयेत्यभिग्रहो यदा ममोपरितः कलंकमिदमुत्तरिष्यति तदैवाहं कायोत्सर्गं पारयिष्यामि. अथ तस्याः सतीत्वमाहात्म्यतः शासनदेवतया प्रत्यक्षीभूय कथितं हे वत्से प्रातरहमस्या नगर्याः प्रतोलीकपाटान्नियंत्रयिष्यामि, त्वया सूत्रतंतुबद्धचालिन्या कूपाज्जलं निष्कास्य प्रतोली सिंचनीया, एवं कृते सत्येव कपाटाः समुद्घटिष्यंति, जिनशासनापभ्राजना च विलयं यास्यति. इत्युक्त्वा साऽदृश्यीभूता. अथ प्रातर्नगरप्रतोल्यनुद्घटनतः सर्वेऽपि मनुष्यतिर्यंचो व्याकुलीभूय स्थिताः, राज्ञापि तत्रागत्य हस्त्यादिभिः कपाटा आकर्षिताः, परं केनाप्युपायेन ते नोद्घटिताः, तदा व्याकुलीभूतो भूपतिस्तद्दैविककोपकृत्यं विचिंत्य स्नानं कृत्वा शुद्धवस्त्राणि परिधाय गंधद्रव्ययुतबलिदानादि विधाय कथयामास यः कोऽपि देवः क्रुद्धो भवेत्तेन सर्वोपरि कृपा कर्तव्या. तदा चंपानगरीस्था कापि महासती सूत्रतंतुबद्धचालिन्या कूपाज्जलं निष्कास्य यदि तज्जलेन प्रतोलीः सिंचयिष्यति तदैव तस्याः शीलमाहात्म्यतः प्रतोल्यः समुद्घटिष्यंतीत्याकाशवाणी जाता. ततो

राज्ञा निजराज्ञीः सतीशेखरा मत्वाहूताः किं तु तास्वेकापि तत्कार्यं कर्तुं न शक्ता जाता, ततो राज्ञा पटहोद्घोषणा कारिता यन्नगरमध्ये या कापि सती भवेत्तयैतत्कार्यं कृत्वा नगरजनदुःखं दूरीकर्तव्यं, परं नगरनारीमध्यात्कापि तत्कार्यं कर्तुं समुद्यता नाभूत. तदा सुभद्रया कायोत्सर्गं पारयित्वा श्वश्रूंप्रति कथितं हे मातर्यदि भवदाज्ञा चेत्तदाहमेतत्कार्यं विधाय नगरलोकान् संकटरहितान् कुर्वे. तत् श्रुत्वा हृदयगतेर्ष्याङ्गाराभिष्कासयंतीव सावदत् हे सतीमन्ये मया तु प्रथमत एव तव सतीत्वं ज्ञातं, अधुना लोकानां तद्ज्ञापने किमपि प्रयोजनं नास्ति, अतो गृहमध्यस्थितैव तव सतीत्वं पालय? मास्मानपि व्रीडापात्रं कुरु? श्रुता च मया पूर्वमपि जैनानां पाखंडाः, सुभद्रा तु मौनमाधाय तद्वचांस्यवगणय्य स्नानं कृत्वा पवित्रवस्त्राणि परिधाय पंचपरमेष्ठिध्यानं कुर्वती नृपसमीपे प्राप्ता. राज्ञोक्तं हे भगिनि नगरलोकं संकटविमुक्तं कृत्वा तव सकलसतीशिरोमणित्वं प्रकटीकुरु? ततः सा नृपादिनगरलोकपरिवृता कूपोपकंठमागत्य सूत्रतंतुबद्धचालिन्या मिलितलोकोत्कंठया सह कूपाज्जलमाचकर्ष. अथ तज्जलमादाय प्रतोलीपार्श्वे समागत्य तयोक्तं यदि मया मनोवाक्कायाभिरखंडितं शीलं पालितं भवेत्तर्हि प्रतोलीकपाटा उद्घटंतु, इत्युक्त्वा तया प्रतोलीकपाटौ सिंचितौ तत्क्षणमेव चो-

द्घटितौ. इत्थं तया प्रतोलीत्रय . द्य उद्घाटिताः, गगनांगणागतागणितदेववृंदैर्दुदुभिनादपूर्वकं जयजयारावमुच्चरद्भिस्तस्या उपरि पुष्पवृष्टिर्विहिता. ततस्तयोक्तमथ चतुर्थप्रतोलीकपाटौ या कापि स्वकीयसतीत्वख्यापनोत्सुका चंपायां भविष्यति सैवोद्घाटयिष्यति. एवं तत्सतीत्वं दृष्ट्वाऽपारप्रमदोल्लसितमानसा नृपादयो नगरलोका आश्चर्यमासाद्य तस्याश्चरणौ पूजयामासुः, श्वशुरादयश्च लज्जावनतवदनाः स्वकीयापराधं क्षमयामासुः, बुद्धदासोऽपि तद्वदनेंदुं निरीक्ष्य समुद्र इव हर्षकल्लोलोल्लसितमानसो बभूव. ततस्तद्दत्तधर्मोपदेशामृतधारासिक्ता नृपश्वशुरादिनगरलोका गतमिथ्यात्वातपा जैनधर्मानुरागिणो बभूवुः, एवं सतीसुभद्रया शीलसलीलतो निजकलंकपंकं दूरीकृत्य जिनशासनप्रभावना कृता, कियत्कालं गृहस्थावासे श्रावकत्वमाराध्य प्रांते चारित्रं गृहीत्वा सुभद्राबुद्धदासौ स्वर्गं गतौ. ॥ इति शीलकुलके सुभद्रासतीकथा ॥

गाथा—नंदउ नमयसुंदरी सा । सुचिरं जीए पालिअं सीलं ॥ गीढबणंपि काउं । सहिया य विम्बणा विविहा ॥ ८ ॥ व्याख्या—सा नर्मदासुंदरी चिरकालं यावन्नंदतु, यया कृत्रिमं ग्रैथिल्यं कृत्वा विविधा नानाप्रकारा विम्बनाः कदर्थनाः सहिताः, निर्मलं शीलं च पालितं. ॥ ८ ॥

तस्याः कथा चेवं—वर्धमानाभिधनगरे संप्रतिनामा राजा, ऋषभसेनाभिधश्च सार्थवाहः परिवसति, तस्य भार्या वीरमती, तस्याः सहदेववीरदासाख्यौ द्वौ पुत्रौ, ऋषिदत्ताभिधाना च पुत्री, क्रमेण सा युवजनस्पृहणीययौवनावस्थां प्राप्ता, बहुभिर्व्यापारिधनिकपुत्रैर्मार्गितापि मिथ्यात्वतिमिरांधभूतेभ्य-स्तेभ्यः सा तत्पितृभ्यां न ददे. अन्यदा चंद्रपुरनगराद्रुद्रदत्ताभिधः कश्चित् श्रेष्ठी तन्नगरे समाययौ. अन्यदा तेन रुद्रदत्तनासत्यमपि प्रमाणविदां दययेव व्योमांबुजोदाहरणं निजवदनांभोजेन सत्यीकुर्वंती निजप्रासादगवाक्षस्था सा ऋषिदत्ता दृष्टा. तां दृष्ट्वा मन्मथशरविद्धो रुद्रदत्तो गतचैतन्य इव बभूव. ततस्तेन स्वकीयमित्राय कुबेरदत्ताय स्वकीयाभिप्रायं निवेद्य पृष्टं, भो मित्र रूपनिर्जित-निर्जरांगनागर्वेयं कस्य पुत्री? तेनोक्तं मित्र इयं जिनधर्मैकतत्परस्य ऋषभसेनसार्थवाहस्यांगजास्ति, किं च जैनंविना सोऽन्यस्मै कस्मैचिदपि निजांगजां नैव दास्यति. तत श्रुत्वा स कपटश्रावकीभूय नित्यं जिनपूजासाधुवंदनावश्यकादिक्रियापरः समजनि. अथ ऋषभसेनस्तं जिनधर्मपरायणं निज-साधर्मिणं ज्ञात्वा तस्मै निजतनयां ददौ.

अथायं रुद्रदत्तः श्वशुरमापृच्छ्य ऋषिदत्तामादाय चंद्रपुरनगरे समायातस्त्यक्तश्च तेन तत्र जि-

नधर्मः, क्रमेण ऋषिदत्तापि भर्तृस्नेहतः संसर्गदोषेण जिनधर्मे शिथिला जाता. क्रमेणैषा गर्भिणी जाता, संपूर्णसमये तस्या महेश्वरनामा पुत्रो जातः, क्रमेण सकलविद्याभ्यासं कृत्वा स यौवनवयः संप्राप्तः. इतश्च ऋषिदत्ताया वृद्धभ्राता सहदेवाभिध आसीत्, तस्य सुंदर्याख्या भार्या बभूव, तस्या एकदा नर्मदायां स्नानकरणार्थं दोहदः समुत्पन्नस्ततः सहदेवसार्थवाहः क्रयाणकानि समादाय सुंदरीसहितो नर्मदोपकंठे समागत्य तस्या दोहदं पूरयामास. तत्र च व्यापारे बहुलाभं विज्ञाय तेन नर्मदापुरीत्यभिधानं नगरं संस्थाप्यैकं जैनमंदिरमपि निर्मापितं. क्रमेण संपूर्णसमये तयैका पुत्री जनिता. श्रेष्ठिना पुत्रवत्तस्या जन्ममहोत्सवं कृत्वा नर्मदासुंदरीति नाम दत्तं. अथ क्रमेण शशिलेखेव वर्धमाना सकलकलाकलापबंधुरा सा यौवनं प्राप्ता. अथैकदा ऋषिदत्तया तस्या अवर्णनीयरूपलावण्यादिगुणान् श्रुत्वा चिंतितं चेदेषा मम पुत्रस्य महेश्वरस्य पाणिग्रहणं कुर्यात्तदा मे मनोऽभिलाषः सफलीभवेत, परं मां जिनधर्मपराङ्मुखीं विज्ञाय मम भ्राता तां निजतनयां मम पुत्राय नैव दास्यतीति चिंतयंती सा विलापं कर्तुं लग्ना. तावद्रुद्रदत्तेन तत्कारणं पृष्टा सा निजहृदयगताभिलाषं कथयामास. तत् श्रुत्वा सोऽपि चिंताचांतचित्तः समभवत. अथ पार्श्वस्थेन महेश्वरेण तद्वृ-

... हे पितरौ युवां विषादं मा कुरुतं, अहमेव तत्र गत्वा केनाप्युपायेन तां परिणीय समागमिष्यामीत्युक्त्वा स शीघ्रमेव तत्रागत्य मातुलाय मिलितः, ततः क्रमेण तेन विनयादिगुणगणैर्मातुलादीनां मनस्तथावर्जितं यथा ते सर्वेऽपि तस्योपरि हर्षोल्लसितहृदयाः संजाताः, महेश्वरोऽपि नित्यं निजशुद्धभावेन देवगुरुवंदनावश्यकादिक्रियाभिर्जिनधर्माराधकः समभूत. अथ तं तथाविधं जिनधर्मपरायणं विज्ञाय मातुलेन तस्मै नर्मदासुंदरी परिणायिता. कियत्कालं तत्र स्थित्वा स श्वशुराज्ञया तामादाय निजनगरे समायातः, वधूसहितं निजतनयं समागतं दृष्ट्वा पितरावत्यंतं प्रमुदं प्राप्तौ. क्रमेण नर्मदासुंदर्या श्वशुरादीन् प्रतिबोध्य मिथ्यात्वघोरसागरे निमज्जतः समुध्धृत्य सर्वेऽपि ते जिनधर्मैकयानपात्रे समारोपिताः.

अथैकदा सा नर्मदासुंदरी गवाक्षस्था निजवदनतो दिवापि नगरजनानां चंद्रोदयभ्रमं कारयंती तांबूलं चर्वंती निष्ठीवनं चकार. अकस्माच्च तन्निष्ठीवनं पथि गच्छतो जैनमुनेरेकस्य मस्तकोपरि पतितं. मुनिनोक्तं यद्येवं त्वं मुनीनामासातनां करोषि तेन तव भर्तुर्वियोगो भविष्यतीति निशम्य भयसहितं विषादं दधाना सा तूर्णमेव गवाक्षादुत्तीर्य मुनेश्चरणयोर्नमस्कृत्यानुपयोगतो विहितं नि·

जापराधं क्षमयामास. मुनिनोक्तं हे महानुभाव! मम हृदये मनागपि क्रोधो नास्ति, मन्मुखादेतद्वाक्यं वृथैव निर्गतं तेन त्वं खेदं मा कुरु? अथ नर्मदासुंदरी स्वकर्मणामेव दोषं ददती गृहे समागता. अथैकदा महेश्वरदत्तो व्यापारार्थं द्वीपांतरंप्रति प्रस्थितस्तदा मोहाकुलमानसया स्त्रिया भणितं हे स्वामिन्नहमपि भवता सार्धमेव समागमिष्यामि, यतो भवद्वियोगं सोढुमहमशक्तैव. तस्या अत्याग्रहं विज्ञाय सोऽपि तया सह प्रवहणारूढो द्वीपांतरंप्रति चलितोऽवगाहितश्च तेन भूयान् पंथा. अथैकदा रात्रौ प्रवहणमध्ये केनचित्पुरुषेण गायनं कर्तुं प्रारब्धं. तन्निशम्य नर्मदया भर्तुरग्रे कथितं हे स्वामिन् योऽयं पुरुषो गायति, तस्य शब्दानुसारेणाहं जानामि यदयं पुरुषो श्यामवर्णः स्थूलहस्तपादो दुर्बलदेहो मषांकितगुह्यस्थानो द्वाविंशतिवर्षप्रमाणो विशालहृदयश्चास्ति. तत् श्रुत्वा भर्त्रा चिंतितं नूनमियमसती वर्त्तते, नोचेदियमेतादृशी वार्ता कथं जानीयात्? अथ प्रभाते तेन स पुरुषो दृष्टः, पृष्टश्च तदा तत्सर्वमपि यथोक्तं मिलितं. अथ श्रेष्टिना निजहृदयोद्भूतक्रोधानलमवसरेक्षणभस्मनाच्छाद्य स्थितं.

इतः कतिचिद्दिवसानंतरं राक्षसद्वीपमासाद्य नाविकैः कथितं भो लोका अहमत्र प्रवहणं स्थि·

रीकरोमि, अयं राक्षसद्वीपः समायातः, यः कोऽपि जलेंधनादिग्रहणेच्छुर्भवेत्तेन तत शीघ्रमेव ग्राह्य-मित्युक्त्वा तेन प्रवहणं स्थिरीकृतं. सर्वेऽपि लोकास्तत्र शनैः शनैरुत्तीर्य जलेंधनादिसंचयं चक्रुः. अथ महेश्वरेणापि तया नर्मदया सहोत्तीर्य चिंतितं किमहमेतां दुःशीलां जलधौ निधानीकरोमि वा विषं दत्वा यमकिंकरीत्वं प्रापयामीति विचारयन् स तया सह क्रीडामिषेण कदलीकानने समागतः, सुप्तश्च क्षणं कदलीदलकोमलशय्यायां. अथ तत्र नर्मदासुंदरी आंदोलितकदलीदलालिभिः सुरभिवनवातैस्तूर्णं निद्रां प्राप्ता. एवं सुखसुप्तां तां तत्रैव विमुच्य महेश्वरदत्तस्तूर्णं ततः समुत्थाय रत्नाकरतटमागत्य प्रवहणोपरि समारूढः, कथितं च तेन कपटकुटिलचेतसा नाविकादिलोकानां पुरो यन्मम महिला राक्षसैर्भक्षिता, अहं च कथमपि प्रपलाय्यागतोऽस्मि, निशाचरप्रकराश्च पृष्टे समागच्छंति, तत इतस्तूर्णं प्रवहणं सज्जीकृत्य वाहयत? इति श्रुत्वा भयाकुलचेतसो नाविका द्रुतं ततः पोतं वाहयामासुः. अथ पोतस्थितेन महेश्वरेण चिंतितं सम्यग्जातं यदपगतलोकापवादं मयैषा दुःशीला त्यक्ता. अथ पवनप्रेरितः पोतोऽयं यवनद्वीपे प्राप्तः, कियत्कालानंतरं स श्रेष्टी ततो बहुधनमुपार्ज्य निजगृहे समायातः, कथितं च तेन निजपरिवाराय राक्षसभक्षणादि निजभार्यास्वरू-

पं, शुचं प्राप्तेन परिवारेण च तस्याः प्रेतकार्यादि कृतं, महेश्वरश्चान्यां भार्यां परिणीतवान्. अथ तत्र सुप्तोत्थिता नर्मदासुंदरी तत्र निजभर्त्तारमदृष्ट्वा हृदयास्फोटं पूत्कारं कुर्वंती विविधविलापैर्वनवासिजंतूनपि रोदयंती हा नाथ मामिहैकाकिनीं मुक्त्वा त्वं कथमव्रज? इति पुनः पुनः प्रजल्पंती नयनाश्रुजलैर्वनवृक्षसंचयान् सिंचयंती वदनतो दीर्घोष्णनिःश्वासान्निष्कासयंतीतस्ततोऽटंती तटिनीपतेस्तटमागता. परं तत्रापि प्रवहणमनालोक्य हृदयोद्भूतातीवदुःखतो मूर्छां प्राप्ता. सुरभिशीतलानिलतः पुनः सचेतनीभूय नानाविलापमुखरीकृतकाननैषा चिंतयामासाथानन्यशरणाया ममात्मघात एव शरणं. पुनस्तया चिंतितं संसारसागरतरणैकयानपात्रनिभजिनागमे प्रतिषिद्धबालमरणकरणतो न ममात्मनः कापि श्रेयोऽर्थप्राप्तिः, किं च न जानेऽहमत्र भर्त्रा कथमेकाकिनी त्यक्ता? नूनं मया तदा या जैनमुनेराशातना कृता तन्मे दुष्कर्म उदयमागतमेव. इति विचार्य सा मृत्तिकात एकां श्रीजिनप्रतिमां कृत्वा सर्वदा तत्र पूजयति वनफलादि च भक्षयति. एवं सा नमस्कारध्यानपरायणा स्वकर्मनिंदनतत्परा धर्मप्रभावतो वनवासिक्रूरप्राणिभिरनुपद्रुता निजसमयं गमयांचकार.

अथैकदा तस्याः पितृव्यो वीरदासाभिधानो बब्बरकुलंप्रति गच्छन् जलेंधनाद्यर्थं प्रवहणस्थस्तत्र

समागतस्तेन रत्नाकरोपकंठे भ्रमंती नर्मदासुंदरी वीक्ष्योपलक्षिता च. विस्मयमापन्नेन तेन पृष्टं हे पुत्रि त्वमत्रैकाकिनी कथं समागतासि? इत्युक्ता सा नयनाभ्यामश्रूणि मुंचंती सकलमपि निजवृत्तांतमादितः कथयामास. अथ वीरदासस्तामाश्वास्य निजप्रवहणमध्ये समारोप्याग्रे चलितः, क्रमेण बब्बरकुले समागत्य राज्ञश्च प्राभृतं दत्वा स सुखेन तत्र व्यापारे समुद्यतोऽभवत, नर्मदासुंदर्यपि तत्र सुखेन तिष्टति. अथ तस्यां नगर्यामेका हरिण्यभिधाना रूपजितनिर्जरांगना वारांगना वसति, तस्यै संतुष्टेन राज्ञैवं वरो दत्तोऽस्ति यद्यः कोऽपि नूतनव्यापारी अत्र समागच्छेत् स तस्यै वारांगनायै दीनारसहस्रमर्पयेत. अथ वीरदासं तत्रायातं श्रुत्वा तस्या वारांगनाया दासी तद्दीनारसहस्रं गृहीतुं तत्पार्श्वे समायाता. तत्र रूपलवणिमादिभिर्निखिलनगरनारीगर्वतिरस्कारिणीं नर्मदासुंदरीं विलोक्य विस्मयमापन्ना गृहे समागत्य सा हरिणींप्रति कथयामास, हे स्वामिनि! मयाद्य वीरदासगृहे निखिलनागरपुरुषवशीकरणैकलवणिमा यैका प्रमदा विलोकिता सा चेदस्मद्गृहे भवेत्तदा नूनं कल्पवल्ल्येव गृहांगणे प्रफुल्लिता ज्ञातव्या. इतो वीरदासो हरिण्यै दीनारसहस्रं समर्पयितुं तद्गृहे समागतः; हरिण्या च दीनारसहस्रं गृहीत्वा मिष्टवचनसत्कारादिभिस्तस्य मनो वशीकृत्य तत्पार्श्वात्त-

न्नामांकिता मुद्रिकाधिगता. अथ वीरदासस्ततो निःसृत्य व्यापारार्थमन्येषां व्यापारिणां गृहे गतः, तदवसरं प्राप्य कपटपेटया हरिण्या दास्यै कथितं, त्वमेतन्मुद्रिकाभिज्ञानं दर्शयित्वा तत्पितृव्याकारप्रच्छद्मना तां युवतीं द्रुतमत्रानय? अथ सैषा कपटपाटवोपेता चेट्यपि तथैव कृत्वा नर्मदासुंदरीं तत्रानयामास. वेश्यया च सा भूमिगृहे गुप्तीकृता. अथ निजस्थानं समागतेन वीरदासेन नर्मदामनालोक्य व्याकुलीभूय नगरमध्ये सा गवेषिता. परं तां निर्भाग्यो लक्ष्मीमिव कुत्राप्यलब्ध्वा स हरिणीगृहे समागतः, तेन तस्यै बहुधा पृष्टं परमनृतैकखन्या तया सत्यं न जल्पितं. भूरिदिवसानंतरं नर्मदागवेषणश्रांतः शोकाकुलमानसः स ततो निःसृत्य भृगुकच्छपुरे समायातः. अथ तत्रैको जिनदासाभिधानः परोपकारैकदक्षः श्राद्धवर्यो वसति, तत्पुरतो दुःखितेन वीरदासेन निजसकलोऽपि वृत्तांतः कथितस्तदा तेनोक्तं हे बंधो त्वं खेदं मा कुरु? अहं बुद्धिप्रयोगेण निश्चितं नर्मदां समानयिष्यामीत्युक्त्वा दयार्द्रांतःकरणेन तेन क्रयाणकैः प्रवहणानि पूरितानि, प्रस्थितश्च स बब्बरकुलंप्रति. इतो वीरदासगमनानंतरं वारांगनाया सा नर्मदा भूमिगृहाद्बहिर्निष्कासिता, कथितं च तस्यै त्वमथ वारांगनाचारमंगीकुरु? भुंक्ष्व च वियोगरहितानि विषयसुखानि? नर्मदया तु तत्कथमपि नांगी·

कृतं, वेश्यया पंचशतकशाप्रहारैस्ताडितापि सा स्वकीयशीलभंगं कर्तुं मनसापि नैछत्. इतो दैवयोगेन नर्मदाशीलमाहात्म्यतस्तद्दिने एव हरिणी मृता. तदा भीताभिरन्याभिस्तत्परिवारवेश्याभिः सा नर्मदा गृहान्निष्कासिता. इतश्च राज्ञा तद्रूपादि श्रुत्वा तदानयनार्थं निजप्रधानपुरुषप्रेषणपूर्वकं सुखासनिका मुक्ता. अथ नर्मदा स्वशीलरक्षणार्थं बुद्धिमुपार्ज्य कृत्रिमग्रथिलत्वमंगीकृत्य सुखासनिकामवगणय्य तैः सार्धं चलिता, मार्गे च ग्रथिलेवानेकविधानि कुतूहलानि कुर्वती पंकिलमेकं पल्वलं वीक्ष्य तत्र पतित्वा शरीरे च कर्दमलेपं कृत्वा लोकानां पुरः कथयति, भो लोका यूयं पश्यताहं मम शरीरे कस्तूरिकालेपं करोमि, किं च यः कोऽपि जनः समीपे समायाति तंप्रति सा कर्दममुछालयति, हस्ताभ्यां च धूलिमुत्पाट्य स्वशिरसि निःक्षिपति, लोकांश्चैवं धूलिधूसरान् विदधाति. ततः प्रधानपुरुषै राज्ञोऽग्रे तस्या ग्रथिलत्वं ज्ञापितं, राज्ञा मांत्रिकानाहूय नानाप्रकारमंत्रतंत्रादिप्रयोगः कारितस्तेन त्वेषा सविशेषं स्वकीयग्रथिलतां प्रकटीकृत्य धूलिपाषाणादीनक्षिपत. अथ तां ग्रथिलां ज्ञात्वा राज्ञापि सा त्यक्ता. अथ सा नागरडिंभादिभिरुपद्रुता निजग्रथिलतां प्रकटयंती नगरमध्ये परिभ्रमति. इतोऽसौ जिनदासश्रेष्ठी प्रवहणयुतो बब्बरकुले समागत एव डिंभगणैः परिवेष्टितां जि·

नस्तवनान्युच्चारयंतीं इतस्ततः परिभ्रमंतीं ग्रथिलां नर्मदां विलोकयामास. श्रेष्ठिना चिंतितं नूनमेषा ग्रथिला नास्ति. श्रेष्ठिना तस्यै प्रोक्तं हे पुत्रि त्वं मा भयं कुरु? इति श्रुत्वा नर्मदया शिशवो भापयित्वा दूरं निष्कासिताः, तदा श्रेष्ठिना पृष्टं हे पुत्रि केयं तेऽवस्था? तव पितृव्यवीरदासकथनतोऽहं भृगुकच्छनगरवास्तव्यो जिनदासनामा श्रेष्ठी ते शुद्ध्यर्थमेवात्रायातोऽस्मि. तत् श्रुत्वा हृष्टा नर्मदा निजोदंतकथनपूर्वकं बभाण हे तात मामस्मात्संकटान्निष्कासय? जिनदासेनोक्तमथ त्वया राजमार्गे नगरनारीपानीयघटाः कर्करादिप्रयोगेण भंजनीयाः, अथ तत्संकेतपुरस्सरं तौ द्वावपि नगरमध्ये समागतौ, तत्र नर्मदा हास्यादिविविधकुतूहलानि कुर्वंती नगरनारीशिरःस्थान् कूपोध्धृतजलभृतघटान् कर्करादिभिर्बभंज, गतश्च राज्ञोऽग्रे नागरजनकृतस्तत्पूत्कारः, राज्ञोक्तमस्ति कोऽपीदृशो नरो य एतां पुरमध्याद्बहिर्निष्कासयेत. वेश्यामरणतो भीतानां नागराणां मध्ये केनापि तत्कार्यं नांगीकृतं, तदा जिनदासेनागत्योक्तं स्वामिंश्चेत्तवाज्ञा तर्हि द्वीपांतरगमनोत्सुकोऽहमेनां प्रवहणे समारोप्य द्वीपांतरे नयामि, राज्ञा तु हर्षेण नगरजनप्रियं तत्कार्यं तस्मै समर्पितं.

अथ जिनदासेन नृपाज्ञया लोकानां दर्शनाय बलात्कारेण तस्याश्चरणौ निगडितौ, बध्ध्वा

च तस्या हस्तौ सा प्रवहणमध्ये मुक्ता, वाहितानि च प्रवहणानि, पथि तया सर्वग्रथिलतां त्यक्त्वा स्नानं कृत्वा जिनदासदत्तवस्त्राभूषणानि परिहितानि. क्रमेण प्रवहणानि भृगुकछे प्राप्तानि, मिलिता च नर्मदा निजपितृभ्याय, पितृभ्योऽपि हृष्टः सन् जिनदासस्य महोपकारं मन्यमानस्तया सह नर्मदापुर्यां समागतस्तां दृष्ट्वा सर्वमपि कुटुंबं प्रमुदितं, तयापि सर्वं निजविडंबनं कुटुंबाग्रे प्रकटीकृतं. अथैकदा ज्ञानी मुनिरेकस्तत्र समायातस्तंप्रति वंदनार्थं सर्वे गताः, देशनांते नर्मदापित्रा पृष्टं हे भगवन् केन कर्मणा नर्मदा दुःखिनी जाता? मुनिनोक्तं सा पूर्वभवे नर्मदानद्यधिष्ठायिका देव्यासीत, एकदा शीतादिपरीषहसहनार्थं साधुरेकस्तत्र समायातः, तं वीक्ष्य मिथ्यात्वभावेन तया तस्योपसर्गाः कृताः, परं साधुं निश्चलं ज्ञात्वा तं क्षामयित्वा सम्यक्त्वमंगीकृतं. ततश्च्युत्वेयं तव तनया नर्मदासुंदरी जाता. भवांतराभ्यासतस्तद्गर्भोत्पत्तिसमये तस्या मातुर्नर्मदानदीस्नानदोहदो जातः, साधूपसर्गकरणतस्तया च दुःखं प्राप्तं. इति श्रुत्वा नर्मदया जातिस्मरणं प्राप्य दीक्षा गृहीता, एकादशांगान्यधीत्य विविधतपसा शरीरशोषं विधायैकदा सा परिवारयुता चंद्रपुरीं समागता, महेश्वरदत्तोपाश्रये च स्थिता श्वश्रूश्वशुरभर्त्रादीनुपलक्ष्य धर्मं श्रावयति, परं ते तां नोपलक्षयंति. अथैकदा तया महा-

सत्या स्वरलक्षणादीनि व्याख्यातानि यत्स्वरश्रवणेनैवेवं पुरुषादीनां वर्णाकारतिलमषवर्षादीनि ज्ञायंते. तत श्रुत्वा महेश्वरेण चिंतितं यद्येवंविधं वर्णनं शास्त्रमध्ये वर्त्तते, तदा नूनं मया सा निरपराधा प्रिया परित्यक्ता. इति चिंताकुलहृदयेन तेन पृष्टं हे महासति उक्तज्ञानयुक्ता मयैका निर्दोषा मम स्त्री परित्यक्ता साथ कीदृशी भविष्यति? साध्व्योक्तं त्वं खेदं मा कुरु? सैवैषाहं नर्मदासुंदर्यस्मीत्युक्त्वा प्रतीत्यर्थं तया सर्वोऽपि संकेतितवृत्तांतः कथितः, अथ तामुपलक्ष्य महेश्वरेण क्षमा याचिता, साध्व्योक्तं नैष तव दोषो मम कर्मणामेवायं दोषः, ततो महेश्वरऋषिदत्ते वैराग्यतो दीक्षां जगृहतुः, क्रमेण ते त्रयोऽप्यनशनं कृत्वा देवलोके गताः, भवैकेन च मोक्षं गमिष्यंति. ॥ इति शीलकुलके नर्मदासुंदरीकथा ॥

गाथा—भद्दं कलावईए । भीसणरन्नंमि रायचत्ताए ॥ जं सा सीलगुणेणं । छिन्नंगा पुणनवा जाया ॥ ९ ॥ व्याख्या—कलावत्याः सत्या भद्रं कल्याणमस्तु, रौद्रारण्यमध्ये राज्ञा त्याजिता या सा स्वशीलगुणेन कृत्वा छिन्नांगा सती पुनर्नवा जाता. ॥ ९ ॥ तस्याः कथा चेवं—जंबूद्वीपे मंगलावतीविजये शंखपुरे नगरे शंखनामा राजा राज्यं करोति, अथैकदा विदेशागततन्नगर-

निवासिनागश्रेष्ठिपुत्रदत्तेन राज्ञोऽग्रे प्राभृतमानीय मुक्तं. कुशलोदंतपूर्वकं राज्ञा पृष्टं चेत्किमप्याश्चर्यं विलोकितं भवेत्तदा कथय? तेनोक्तं हे स्वामिन् देवशालनगरे मयैकस्त्रियो महास्वरूपं दृष्टमित्युक्त्वा तेन राज्ञोऽग्रे तत्प्रतिकृतिचित्रपट्टो मुक्तः, तद् दृष्ट्वा राज्ञोक्तं भो दत्त नूनमियं कापि देवीव दृश्यते मानुष्या इदं रूपं तु दुर्लभं. दत्तेनोक्तं स्वामिन्नियं देवशालपुरेशितुर्विजयसेनराज्ञः श्रीमतीराज्ञीकुक्ष्युद्भवायाः कलावत्याः प्रतिकृतिरस्ति. तया चैवं प्रतिज्ञा कृतास्ति यद्यः कोऽपि मम चतुःप्रश्नानामुत्तरं प्रदास्यति तस्यैवाहं पाणिग्रहणं करिष्यामि.

अथैकदा राज्ञा मांप्रतीत्यादिष्टं यदस्याः कलावत्या योग्यः कोऽपि राजकुमारो गवेषणीयः, तत् श्रुत्वाहं तस्याः प्रतिकृतिमादाय भवंतं च तद्योग्यं ज्ञात्वात्र समागतोऽस्मि. तत् श्रुत्वा मदनातुरमानसेन राज्ञोक्तं हे दत्त येन केनाप्युपायेन मच्चित्तधनचौरिकां तां दापय? दत्तेनोक्तं हे राजन्! युष्मद्भिः सरस्वती समाराधनीया, यथा तच्चतुःप्रश्नप्रत्युत्तरदानपूर्वकं सा भवतः सुलभा भवेत्. तत् श्रुत्वा राजा ब्रह्मचर्यं पालयन् सरस्वतीसमाराधनतत्परो जातः, सप्तमे दिने सरस्वत्या प्रत्यक्षीभूयोक्तं हे वत्स तव करस्पर्शनमात्रेणैव स्तंभस्थपुत्तलिका तच्चतुःप्रश्नानामुत्तराणि दास्यतीत्युक्त्वा सा तिरो·

न्मृता. अथ शंखराजा हृदयगततत्प्राप्त्यभिलाषप्रेरितो दत्तसहितो देवशालपुरंप्रति प्रस्थितः, शंखराजानं तत्रागतं ज्ञात्वा विजयसेनराज्ञा महताडंबरेण तस्य प्रवेशमहोत्सवः कृतः, अथ नृपतिकारितस्वयंवरमंडपे दानशालायां भोजनार्थिनो विप्रा इव कन्यार्थिनोऽनेके राजानो मिलिताः, अथ श्वेतांबरोपशोभिता हृदयस्थितमुक्तमाला नानालंकरणालंकृतांगोपांगा हस्तन्यस्तवरमाला कलावती स्वयंवरमंडपे विदग्धसखीयुता समायाता. अथ प्रतिहारी जगाद—नृपति सघला बोलजो । चार बोल सुविचार ॥ कवण देव गुरु तत्व कुण । सत्व कहो कुण सार ॥ १ ॥ तत्त श्रुत्वा केचिद्राजानो हरिं केचिद्ब्रह्माणं केचिद्विष्णुं देवं कथयंति. गुरुतत्वसत्वादिस्वरूपवार्तामपि कोऽपि न जानाति. अथ शंखराज्ञा तत्प्रश्नोत्तरदानार्थं स्तंभन्यस्तशालभंजिकोपरि स्वहस्तो न्यस्तः, तदैव सा जल्पिता येन पुरुषेण मम मस्तकोपरि हस्तो विन्यस्तस्तस्य सत्पुरुषस्य महिम्नाहं प्रत्युत्तरं यच्छामीत्युक्त्वा सोवाच—वीतराग देवो गुरु । पंचमहाव्रतधार ॥ दयाधर्म ए तत्व छे । सत्वेंद्रियजय सार ॥ ॥ १ ॥ इति स्वकीयचित्तकलापिकादंबिनीध्वनितुल्यं प्रश्नोत्तरध्वनिं श्रुत्वा मयूरीवामंदानंदसंदोहयुता कलावती द्रुतं शंखराजकंठे वरमालां चिक्षेप. अथ तां सुमुहूर्ते परिणीय शंखराजा निजनगरं

प्रति प्रस्थितः, महोत्सवपूर्वकं पुरीप्रवेशं विधाय कलावत्या सह विषयसुखं भुंजानोऽयं सुखेन राज्यं पालयति. अथैकदा कलावत्या स्वप्ने कामकुंभं वीक्ष्य राज्ञे तद् ज्ञापितं, राज्ञोक्तं हे प्रिये सर्वशुभलक्षणोपेतो राज्यभारधुरंधरस्ते मनोज्ञः पुत्रो भविष्यति. अथ कलावतीं सगर्भां विज्ञाय विजयसेनराज्ञा सा निजप्रधानपुरुषान् संप्रेष्य स्वगृहे समाहूता. तैः प्रधानपुरुषैः सह कलावत्यर्थं तद्भ्रात्रा जयसेनेन मनोहरवस्त्रोपेते द्वे भुजाभरणे प्रेषिते आस्तां. राज्ञ्या तु तदाभूषणवस्त्राणि राज्ञोऽदर्शयित्वैव पेटायां मुक्तानि. अथ तेषां प्रधानपुरुषाणां महताग्रहेणापि राज्ञा निजराज्ञी न प्रेषिता. ततस्ते व्याघुट्य निजनगरंप्रति गताः.

अथैकदा कलावती ते भुजाभरणे परिधाय हास्यविनोदं कुर्वती सखीनामग्रे कथयति, हे सख्यः! येन पुरुषेण ममैतान्याभरणवस्त्राणि मुक्तानि तेन सह ममात्यंतप्रीतिर्वर्तते, कदा स दिवसः समायास्यति यदाहं तेन सह मिलित्वा ममात्मानममंदानंदसंदोहपराकाष्टां प्रापयिष्यामीत्यादिमिश्रशब्दानुच्चारयंत्येषा प्रछन्नस्थितेन राज्ञा दृष्टा. तत् श्रुत्वा च क्रोधाध्मातचित्तो राजा विचारयामास यदस्याः केनाप्यपरपुरुषेण सार्धमवर्णनीयस्नेहो वर्त्तते, यस्यैतान्युदारसन्निभानि वचनानि तस्या दुः·

शीलत्वं प्रकटीकुर्वंति. अथास्याः परित्याग एव युक्त इति विचार्य तेन रात्रौ मातंगीद्वयमाहूयोक्तं युवाभ्यां कलावतीं रथे समारोप्य वनमध्ये नीत्वाऽभूषणयुतं तस्या हस्तद्वयं च छेदयित्वा, तां च तत्रैव मुक्त्वात्रागत्य तद्धस्तद्वयं मे समर्पणीयं. अथ ते मातंग्यौ तां रथाधिरूढां कृत्वाऽरण्ये समागत्य कथयामासतुः, हे मातर्न ज्ञायते यत्केन कारणेन राज्ञा त्वं परित्यक्तेत्युक्त्वा राज्ञ आदेशस्तस्यै ताभ्यां प्रोक्तः, तत श्रुत्वैषा विविधान् विलापान् करोति, इतस्ताभ्यां तस्या हस्तावलंकारयुतौ छेदयित्वा प्रस्थितं. अथ महावेदनाव्याकुलया तया तत्र पुत्ररत्नं प्रसूतं, परं कररहिता सा तस्य जलशुद्धिं कर्तुमप्यसमर्थासीत. इतस्तस्याः शीलमाहात्म्यतस्तत्र जलवृष्टिर्जाता, नद्यां च जलपूरं समागतं. एवं मेघवृष्टयैव तत्पुत्रदेहशुद्धिर्जाता, ततस्तया किंचिदनुकूलं स्वदैवं विज्ञायोक्तं यदि मया त्रिकरणशुद्ध्या शीलं पालितं भवेत्तदा मम करौ पुनः समागच्छतां. तत्क्षणमेव गगनांगणात्कुसुमवृष्टिपूर्वकं तस्या अलंकारोपेतं करयुगलं स्थानस्थितं बभूव. अथैषा निजार्भकमादाय तदन्यपरतटे संप्राप्ता. इतस्तत्र स्नानार्थमागत एको वृद्धस्तापसस्तां तथावस्थामचिरप्रसविनीं विज्ञाय दयार्द्रांतःकरणः कथयामास, हे सुभगे हे पुत्रि! एतदवस्थया त्वयात्र वने स्थातुमयुक्तमतो ममाश्रमे समागच्छेत्युक्त्वा

स तां स्वाश्रमे समानीतवान्. ततस्तां दुःखितामाश्वास्य तापसेन पृष्टं हे पुत्रि! त्वं कस्य नार्या? कस्माच्चासन्नप्रसविन्यप्यरण्यमध्ये समागता? तत श्रुत्वा कलावत्या स्वकीयः सकलोऽपि वृत्तांतस्तापसाय कथितः, कृपालुना तापसेन सा पुनरप्याश्वास्य स्वाश्रमे रक्षिता. धर्मध्यानयुता सा तत्र सुतसहिता निजसमयं गमयांचकार.

अथ मातंगीयुगलेनालंकारसहितं कलावतीकरयुगलं राज्ञोऽग्रे मुक्तं, राजा तदलंकारं यावद् गृह्णाति तावत्तद्बंधुजयसेनकुमारनामांकितं दृष्टं, ततः संभ्रांतेन राज्ञा तस्याः सखी तद्विषये पृष्टा, तयोक्तं स्वामिन् देवशालनगरागतप्रधानपुरुषाणां हस्तेन राज्ञ्या भ्रात्रा जयसेनेनाभूषणवस्त्रादीनि निजभगिनीकृते प्रेषितान्यभवन्, तत श्रुत्वा राज्ञा ते प्रधानपुरुषा आहूय पृष्टास्तदा तैस्तथैव यथास्थितवृत्तांतो निवेदितः, तत श्रुत्वा राजा वज्राहत इव निश्चेतनीभूय भूमौ पपात. प्रधानादिभिः शीतलानिलजलादिभिः सचेतनीकृतो नृपो विविधान् विलापान् कर्तुं प्रवृत्तः, विरहानलोद्भूतांगारराशिभिस्तन्मुखकमलं म्लानिं प्राप्तं. दुःखव्याकुलोऽसौ वह्नौ प्रवेष्टुं समुद्यतोऽभूत्. तदा दत्तव्यवहारिणा समागत्य राज्ञे विज्ञप्तिः कृता, हे स्वामिन् सप्तदिवसावधि त्वं प्रतीक्षस्व यावदहं तत्र गत्वा

तस्याः शुद्धिं करिष्ये. इति राजानं प्रतिबोध्य स तां गवेषयितुमरण्यमध्ये भ्रमणं चकार. इतस्तेन सरिदुपकंठे कतिचित्तापसा दृष्टाः, तेऽन्यस्तेन पृष्टं भो तापसा भवद्भिः किं काचिदेकाकिनी महिला दृष्टा? तैरुक्तं तव तया सार्धं किं कार्यमस्ति? ततस्तेन सर्वं वृत्तांतं कथयित्वोक्तं हे तापसास्तस्याः कलावत्या वियोगेन राजा निजदेहं त्यजति, ततो यदि सा चेत्समासाद्यते तर्हि जीवितदानपुण्यं भवेत्. इति श्रुत्वा तैरनुमितं नूनमयं राज्ञः प्रधानोऽस्तीति विचार्य तैर्दत्ताय पुत्रसहिता सा कलावती दर्शिता. दत्तं दृष्ट्वा कलावत्या नयनाभ्यामश्रुधारा पतिता, ततोऽसौ तामाश्वास्य राज्ञो वृत्तांतं निवेदयामास, कथितं च पुनस्तेन हे भगिनि कृतं कर्म विना भुक्तं नैव प्रक्षीयते, तीर्थंकरादिसत्पुरुषा अपि निजकर्मफलानि भुक्त्वैवाधिगतानंतसौख्यात्मकमोक्षभाजो भवंति. अथ त्वं निजवदनेंदुदर्शनतो विरहवन्हिवाग्निदग्धं नृपहृदयानंदमहोदधिं चपलमुल्लासितं कुरु? अन्यथा नृपो नूनमग्नौ प्रविश्यात्मघातं करिष्यति, अथ कलावती तापसानापृच्छ्य दत्तेन सह रथस्थिता चचाल, तूर्णं च निजनगरपरिसरे प्राप्ता. राजापि तामागतां श्रुत्वा नयनाभ्यामश्रूणि मुंचन् द्रुतं सन्मुखमागतः, निजापराधं च क्षामयित्वा महोत्सवपूर्वकं पुत्रसहितायास्तस्या नगरप्रवेशमकारयत, ततोंगजन्म·

नोऽपि तेन स्वप्नानुसारेण पूर्णकलश इति नाम दत्तं. अथैकदा कलावत्या राज्ञे पृष्टं हे स्वामिन्! केनापराधेनाहं वनमध्ये त्यक्ता कृता च छिन्नहस्ता? तदा लज्जितेन राज्ञा प्रोक्तं हे भद्रे त्वं तु सर्वथैव गतकलंकासि, मया तु किंचित्पूर्वदुष्कर्मानुसारेण यत्त्वयि अनाचरणं विहितं तन्मातंगैरपि न क्रियते, इति कथयित्वा तेन सर्वोऽप्युदंतः कथितः.

इतस्तत्रैको ज्ञानी मुनिः समायातः, राजा कलावत्या सह मुनिं नंतु समागतः, मुनिना देशना दत्ता, तत श्रवणानंतरं राज्ञा मस्तकेंजलिं कृत्वा पृष्टं हे भगवन्ननया कलावत्या किमेतत्कर्मोपार्जितं येन मया निष्कलंकापि सा छिन्नहस्ता विहिता. मुनिरुवाच हे राजन्! श्रीमहाविदेहे माहेंद्रपुरनगरे विक्रमाभिधराज्ञो लीलावत्यभिधभार्याकुक्षिसमुद्भवा सुलोचनाह्वया पुत्री बभूव, क्रमेणैषां यौवनं प्राप्यैकदा नृपोत्संगपंकजे हंसलीलायितं दधौ. तदैकेन केनचित्पुरुषेणैकः शुको राज्ञे प्राभृतीकृतः, पठितोऽसौ शुको राज्ञे मधुरवचनैराशीर्वादं ददौ. तुष्टेन राज्ञा स शुको निजपुत्र्यै समर्पितः, राजकुमारी तं शुकं सुवर्णपंजरे निक्षिप्य तस्मै भक्षणकृते दाडिमद्राक्षादि ददाति. अथ क्रमेण तस्य शुकस्योपरि तस्यात्यंतप्रीतिः संजाता, क्षणवारमपि सा तस्य विरहं न सहते. एकदा सा सु-

लोचना निजानंदमहोदधींदुतुल्यं तं शुकं कनकपंजरगतं हस्ते गृहीत्वा श्रीमोद्याने सीमंधरस्वामिप्रासादे गत्वा प्रभुं नमस्कृत्यानेकरसिककाव्यैः स्तुतिं कर्तुं लग्ना. तदा राजकुमारीहस्तस्थसुवर्णपंजरगतः शुकोऽपि तां प्रभुप्रतिमां दृष्ट्वा चिंतयामास मया त्वेवंविधा प्रतिमा नूनं क्वापि दृष्टास्ति. इति चिंतयतस्तस्य जातिस्मरणज्ञानं समुत्पन्नं, तेन स निजपूर्वभवं चिंतयितुं लग्नो यथा मया पूर्वभवे चारित्रं प्राप्य शास्त्राण्यधीत्यापि वस्त्रपुस्तकपात्रादिमूर्छया चारित्रं विराध्य निजज्ञानं वृथा निर्गमितं. ततः कालं कृत्वाहमत्र वने शुकोऽभवं. अथ मयाद्यप्रभृति सर्वदा प्रभुमेनं प्रणम्यैव भोजनं कर्तव्यमित्यभिग्रहस्तेन गृहीतः, अथ सुलोचना शुकसहिता पुनः स्वगृहे समायाता, द्वितीयदिने सुलोचनया यदा स शुको हेमपंजराद्बहिर्निष्कास्य स्वहस्ते गृहीतस्तदा ' नमो अरिहंताणं ' इत्युच्चरन् समुड्डीय तत्र प्रासादे गत्वा प्रभुप्रतिमां प्रणम्य बहिरागत्य स वनफलानि भक्षयितुं लग्नः, सुलोचना त्वत्र शुकविरहातुरा चंद्रंविना चकोरीव विविधान् विलापांश्चकार.

एवं रुदनपरां तां ज्ञात्वा पदातयः शुकानयनार्थं धावितास्तैश्च तत्राम्रतरुशाखायां शुकं विलोक्य गृहीत्वा चपलं कुमारिकायै समर्पितः, सुलोचनया क्रोधेनैतस्य गतिभंगकृते पार्श्वतो द्वावपि

पक्षौ छेदितौ स्वर्णपंजरे च स निक्षिप्तः, अथ तत्रस्थेन तेन चिंतितं धिगस्तु मांप्रति यन्मया पूर्वभवे चारित्रं विराद्धं तेनात्र भवे मम पारवश्यं संप्राप्तं. अथ गृहीतनिजाभिग्रहपालनबद्धादरोऽयं जिनदर्शनवंचित आहारं परित्यज्यानशनं गृहीत्वा सौधर्मे देवलोके देवो जातः. सुलोचनापि शुकशोकविरहातुराऽनशनं प्रतिपद्य सौधर्मदेवलोके शुकदेवप्रिया जाता. ततश्च्युत्वा हे राजन् स शुकजीवस्त्वं जातः, सुलोचनाजीवस्तु कलावती जाता. एवं भवांतरेऽनया यत् शुकपक्षद्वयं छेदितं तेन कर्मोदयेन त्वयैतस्या हस्तौ छेदितौ. एतत् श्रुत्वा नृपराज्ञ्योर्जातिस्मरणं समुत्पन्नं, स्वपूर्वभवान् विलोक्य वैराग्येण ताभ्यां चारित्रमंगीकृतं, ततः कालं कृत्वा तौ देवौ जातौ, कालांतरे मोक्षे च गमिष्यतः ॥ इति शीलकुलके कलावतीकथा ॥

गाथा—सीलवईए सीलं । सक्कइ सक्कोवि वन्निउं नेयं ॥ रायनिउत्ता पुरिसा । चउरोवि पवंचिआ जीए ॥ १० ॥ व्याख्या—शीलवत्याः शीलंप्रति शक्रोऽपींद्रोऽपि वर्णयितुं न समर्थो भवति, यतः शीलगुणा अनंताः, इंद्रस्य च मतिः स्वल्पा, यया शीलवत्या राज्ञा नियुक्ताश्चत्वारोऽपि जनाः प्रवंचिताः संकटमध्ये निक्षिप्ताः, अर्थाच्चतुर्भिर्धूर्तजनैरिति प्रतिज्ञा कृता यद्वयं शीलवतीं ख़ुं·

जयिष्यामस्तान् धूर्त्तान् सा वंचयामास, स्वशीलमपि च तया रक्षितं. ॥ १० ॥ शीलवतीकथा चे· वं—आनंदपुरेऽरिदमनाख्यो राजा राज्यं करोति, तत्र मणिमाणिक्यमुक्ताफलादिनिजद्रव्यसमूहै· तो रत्नाकरं केवलं मकराकरमेव मन्यमानो रत्नाकराख्यो राजमान्यः श्रेष्ठी परिवसति. तस्य श्रीना· म्नी जिनधर्मपरायणा भार्यासीत्. तया पुत्राभावतोऽजितबलाख्या देवी समाराधिता. भाग्ययोगेनैकं पुत्ररत्नं लब्ध्वा तस्य तयाजितसेनेति नाम दत्तं. अथानुक्रमेण सोऽजितसेनो बाल्यभावमपाकृत्य महिलाहृदयकलापिघनगर्जतुल्यां यौवनावस्थां प्राप्तः. अथैकदा तस्य रत्नाकरस्य कोऽपि सेवको मं· गलावतीनगर्यां गतोऽभूत्, तत्र तेन जिनदत्तश्रेष्ठिनो गृहे कन्यकैका रूपादिगुणगणैर्दासीकृतामरां· गना दृष्टा. अथ तेन पृष्टो जिनदत्तोऽवदत यदि कोऽप्यस्यास्तुल्यरूपादिगुणोपेतो द्वासप्ततिकला· निपुणो वरो मिलिष्यति तदा तेन सार्धमहमेतस्या मे कन्यायाः पाणिग्रहणं कारयिष्यामि. तत् श्रुत्वा तेन सेवकेनोक्तं मम श्रेष्ठिरत्नाकरस्यैकोऽजितसेनाभिधः कलाकलापनिपुणः पुत्रोऽस्ति. तत् श्रुत्वा हृष्टेन श्रेष्ठिना स्वपुत्रीसंबंधकरणार्थं निजपुत्रो जिनशेखराभिधस्तेन सार्धं तत्र प्रेषितस्तेन त· त्रागत्य रत्नाकराय सर्वा वार्ता निरूपिता. पाणिग्रहणं च मेलितं. ततो रत्नाकरो निजपरिवारयुतो

मंगलावत्यामागतः, महोत्सवपूर्वकं जिनदत्तेन निजपुत्रीशीलवत्यजितसेनेन सह परिणायिता, ततः पुत्रवध्वादिपरिवारपरिवृतो रत्नाकरः पुनः स्वनगरे समायातः, तत्राजितसेनः शीलवत्या सह विषयसुखानि भुंजानः सुखेन तिष्ठति.

अथैकदा रात्रौ सुखसुप्तया तया नदीमध्ये कटिभागबद्धरत्नपंचकं मृतकं यातीति वदंत्याः शृगाल्याः शब्दः श्रुतस्ततः शीलवती द्रुतं समुत्थायार्धरात्रौ मस्तके घटं धृत्वा नदींप्रति चलिता. जागरमाणेन श्वशुरेणार्धरात्रावपि तां बहिर्गच्छंतीं विलोक्य चिंतितं नूनमेषा दुःशीला वर्त्तते. शीलवती तु नदीतीरे समागत्य मृतकं च जलमध्यान्निष्कास्य तस्य कटीतटाद्रत्नानि गृहीत्वा तन्मृतकं शृगाल्यै भक्षणाय समर्पितं, ततस्तूर्णं गृहे समागत्य निजशय्यायां प्रसुप्ता, प्रभाते श्वशुरेण पुत्रादीनां तद् वृत्तांतं निरूप्यैकः कूटलेखो लिखितो यच्छीलवतीपिता शीलवतीं निजपार्श्वे कस्मैचिदविलंबितप्रयोजनाय समाह्वयतीति. तल्लेखोदंतं शीलवत्यै ज्ञापयित्वा श्वशुरस्तामादाय प्रस्थितः, चतुरशीलवत्या श्वशुरादीनां मुखाकृतितस्तेषां तत्कपटपाटवं निजहृदयगोचरीकृतं. अथ पथि गच्छंतौ तौ विश्रामार्थं कस्यचित्तरोश्छायायां प्रसुप्तौ, श्वशुरस्तु तस्याश्चेष्टाविलोकनार्थं कृत्रिमनिद्रायुतो जागरमा-

णः प्रसुप्तः. इत एकः काको निकटस्थकरीरवृक्षस्थितो जल्पति यदत्र वृक्षमूले दशलक्षमितं द्रव्यमस्ति, तत श्रुत्वा शीलवत्योक्तं हे काक प्रथमं शृगालयुक्त्या मे भर्तृविरहोऽजायत, अधुना त्वमप्युक्त्वा किं मातापित्रोरपि वियोगं कारयिष्यसि? तत श्रुत्वाश्चर्यं प्राप्तेन श्रेष्ठिना द्रुतमुत्थाय पृष्टं भो वधु त्वं केन सार्धं वार्तालापं करोषि? तयोक्तमहं तु स्वभावेनैव जल्पामि. गाढाग्रहेण पृष्टया तया तद्द्रव्यवृत्तांतः श्वशुराय निवेदितस्ततो हृष्टेन श्वशुरेण तत्र खनित्वा तत्सर्वं धनं निष्कासितं. अथ श्वशुरेणोक्तमथेत आवां निजगृहे एव गमिष्यावः, शीलवत्योक्तमथ मम पितुर्ग्रामं निकटमस्ति, ततस्तत्र गत्वैवावां पुनर्निजनगरंप्रति गमिष्यावः, श्वशुरेणोक्तमथ पश्चादेव तत्र गमनवार्ता. इत्युक्त्वा श्वशुरस्तया सार्धं पश्चाद्वलितो मार्गे च तेन तदा रात्रौ गमनकारणं पृष्टा शीलवती यथास्थितं पंचरत्नप्राप्तिस्वरूपं जगौ. तेनात्यंतहृष्टेन श्वशुरेण गृहे समागत्य पुत्रादिपरिवाराय तस्याः सकलवृत्तांतं निरूप्य कथितमियं वधूर्नूनं साक्षाल्लक्ष्मीरिवास्मद्गृहेऽस्ति. क्रमेण स रत्नाकरश्रेष्ठी श्रावकधर्मं प्रपाल्य सद्गतिं गतः. अथैकदा राज्ञाजितसेनमाहूय तस्मै मंत्रिपदवी दत्ता. एकदा नृपो निजसैन्ययुतः परदेशगमनोत्सुको बभूव, कथितं च तेनाजितसेनाय यत्त्वयापि मया सार्धं परदेशे समागंतव्यमिति.

अथाजितसेनेन गृहमागत्य शीलवत्यै तद्वृत्तांतकथनपूर्वकमुक्तं हे प्रियेऽधुना ते शीलखंडनचिंता मम जायते. तदा शीलवत्योक्तं हे स्वामिन् त्वं चिंतां मा कुरु? एतां मम पुष्पमालां निजकंठे स्थापयित्वा यूयं व्रजत? यदि सा म्लानिं प्राप्नुयात्तदा त्वया मम शीलभंगो ज्ञातव्यो नो चेदहमखंडितशीला ज्ञातव्या. अथ तां मालां कंठे निधाय स नृपेण सह प्रस्थितः, क्रमेण च ससैन्यो नृपो वृक्षादिरहितायां महाटव्यां प्राप्तः, अथाजितसेनकंठे तामम्लानां पुष्पमालां दृष्ट्वा नृपेण पृष्टं. हे मंत्रिन्नस्यामटव्यां पुष्पफलादिरहितायां कुत इयमम्लाना पुष्पमाला त्वया लब्धा? तदाजितसेनेन स्वकीयसकलोदंतपूर्वकं निजललनाया अखंडितशीलत्वयुक्तं महासतीत्वं प्रकटीकृतं. तत् श्रुत्वा विस्मितेन राज्ञा तत्परीक्षार्थं प्रच्छन्नवृत्त्या कामांकुरललितांगरतिकेल्यशोकाभिधानाश्चत्वारो विटपुरुषाः सकलवृत्तांतकथनपुरस्सरं शीलवत्याः पार्श्वे मुक्ताः, तेऽपि तस्याः शीलखंडनकृते प्रतिज्ञां कृत्वा ततश्चलिताः, नगरमध्ये समागत्य तैः शीलवत्या गृहनिकटे गृहमेकं गृहीत्वा निवासः कृतः, तत्र ते कामोन्मादजनकान्नृत्यगायनादिहावभावान् कुर्वंति, तत् श्रुत्वापि शीलवती बधिरेव तानुपेक्षते. अथैकदा कामांकुरेण भोगादिप्रार्थनार्थं शीलवतीपार्श्वे दूती मुक्ता, तया तत्र गत्वा शीलवत्यै तद्वा-

र्ता कथिता, शीलवत्या तु सा निर्भर्त्स्य गृहान्निष्कासिता. एवं शेषत्रयेणापि पृथक्पृथक् तथैव कृतं, परं शीलवती न चलिता. अथ शीलवत्या चिंतितं नूनं सा पुष्पमाला राज्ञा दृष्टास्ति, तेन चेर्ष्यया मम शीलभंगायैते पुरुषाः प्रेषिताः संति. ततोऽथ मया निजचातुर्येण स्वशीलरक्षणपूर्वकं तेभ्योऽपि तेषां दुःशीलत्वफलं प्रदर्शनीयमिति विचिंत्य यदा सा दूती पुनरपि तैः प्रेरिता तस्याः समीपे समागता तदा शीलवत्योक्तमेतत्कार्यं द्रव्यं विना न भवेदतस्तैः प्रत्येकैरेकैकलक्षदीनारानयनपूर्वकं रात्रौ मम गृहे क्रमेणैकद्वित्रिचतुःप्रहरेषु समागंतव्यं. परं तेषु परस्परं केनापि कस्यचिदप्येषा वार्ता नैव प्रकाशनीया, इत्यादिष्टा दूती द्रुतं तत्रागत्य तेभ्यः पृथक्पृथक् तद्वृत्तांतं कथयामास, तत् श्रुत्वा तेऽपि हृष्टा रात्रिं प्रतीक्षमाणाः दूतीवचनतः परस्परमजल्पंतः स्थिताः, इतः शीलवत्या गृहे पूर्वं वर्षाजलसंग्रहार्थं निर्मापितैका जलरहिता कूपिका कपाटरहिता कृता. तस्योपरि च युक्त्या कपटशय्या कृता. अथ प्रथमप्रहरे कामांकुरितदुर्बुद्धियुतः कामांकुरो लक्षैकदीनारसहितस्तत्रागतः, शीलवतीकृतसत्कारतः स्वात्मानं धन्यं मन्यमानो यावत स शय्योपरि निषीदति तावदेव भग्नांगोपांगः कूपिकांतः पतितः. एवं ते त्रयोऽपि सुहृदः क्रमेण परस्परविरहदुःखं सोढुमशक्नुवंत इव

मिलित्वैव कूपिकांतः स्थिताः. अथ सा तेषां सर्वदा स्वल्पमेव धान्यं दवरकबद्धमृत्पात्रे निक्षिप्य ददाति. अथ कतिचिद्दिवसानंतरं राजा सर्वान् वैरिणो जित्वाऽजितसेनसहितो निजनगरे समायातः, तेषां चतुःपुरुषाणां शुद्धिं च कृतवान्, परं केनापि तत्प्रवृत्तिर्न कथिता. अथ शीलवत्याऽजितसेनाय सर्वोऽप्युदंतः कथितो दर्शितं च तच्चतुर्लक्षमितं धनं. अथ नारकवद्दुःखमनुभवंतस्ते चत्वारः पुरुषा अजितसेनंप्रति कथयामासुर्हे सत्पुरुष त्वमस्मान्निष्कासय? शीलवत्योक्तं यदि मदुक्तं करिष्यथ तर्हि युष्मानहं निष्कासयिष्यामि, तैरपि तदंगीकृतं.

अथ शीलवत्या विविधपक्वान्नानि निष्पाद्य तेषां करंडका भृताः, रक्षिताश्च प्रछन्नं भूमिगृहे. ततः शीलवत्याः कथनतोऽजितसेनेन राजा भोजनायाहूतः, नृपोऽपि तत्रागत्य कामपि भोजनसामग्रीमदृष्ट्वा विस्मयं प्राप्तः, इतः शीलवत्या राज्ञोऽग्रे स्वर्णस्थालिका मुक्ताः, पश्चात्तयोक्तं भो यक्षाः पक्वान्नानि समानयत? तत्कालमेव तैश्चतुर्भिः पक्वान्नभृतवंशभाजनानि भूमिगृहत ऊर्ध्वीकृतानि. तस्मात्पक्वान्नानि समादाय तया राज्ञे परिवेषितानि. अथ तद्वीक्ष्य विस्मयमापन्नो राजा चिंतयति नूनमस्या गृहे देवाः पक्वान्नादि पूरयंति. भोजनानंतरं राज्ञा तद्गृहमजितसेनान्मार्गितं. शीलवत्यो-

र्ता कथिता, शीलवत्या तु सा निर्भर्त्स्य गृहान्निष्कासिता. एवं शेषत्रयेणापि पृथक्पृथक् तथैव कृतं, परं शीलवती न चलिता. अथ शीलवत्या चिंतितं नूनं सा पुष्पमाला राज्ञा दृष्टास्ति, तेन चेर्ष्यया मम शीलभंगायैते पुरुषाः प्रेषिताः संति. ततोऽथ मया निजचातुर्येण स्वशीलरक्षणपूर्वकं तेभ्योऽपि तेषां दुःशीलत्वफलं प्रदर्शनीयमिति विचिंत्य यदा सा दूती पुनरपि तैः प्रेरिता तस्याः समीपे समागता तदा शीलवत्योक्तमेतत्कार्यं द्रव्यं विना न भवेदतस्तैः प्रत्येकैरेकैकलक्षदीनारानयनपूर्वकं रात्रौ मम गृहे क्रमेणैकद्वित्रिचतुःप्रहरेषु समागंतव्यं. परं तेषु परस्परं केनापि कस्यचिदप्येषा वार्ता नैव प्रकाशनीया, इत्यादिष्टा दूती द्रुतं तत्रागत्य तेभ्यः पृथक्पृथक् तद्वृत्तांतं कथयामास, तत् श्रुत्वा तेऽपि हृष्टा रात्रिं प्रतीक्षमाणाः दूतीवचनतः परस्परमजल्पंतः स्थिताः, इतः शीलवत्या गृहे पूर्वं वर्षाजलसंग्रहार्थं निर्मापितैका जलरहिता कूपिका कपाटरहिता कृता. तस्योपरि च युक्त्या कपटशय्या कृता. अथ प्रथमप्रहरे कामांकुरितदुर्बुद्धियुतः कामांकुरो लक्षैकदीनारसहितस्तत्रागतः, शीलवतीकृतसत्कारतः स्वात्मानं धन्यं मन्यमानो यावत स शय्योपरि निषीदति तावदेव भग्नांगोपांगः कूपिकांतः पतितः. एवं ते त्रयोऽपि सुहृदः क्रमेण परस्परविरहदुःखं सोढुमशक्नुवंत इव

देवलोके देवौ जातौ, ततश्च्युत्वा तस्या भर्तृजीवोऽयमजितसेनो जातः, सा चेयं शीलवती जाता, पंचमीतपःप्रभावतस्तस्या निर्मला बुद्धिरभवत्, पूर्वभवाभ्यासेन तया निर्मलं शीलं पालितं, ततश्रुत्वा ताभ्यां द्वाभ्यामपि जातिस्मरणं प्राप्य वैराग्यतो दीक्षा गृहीता, शुद्धचारित्रं प्रपाल्य पंचमे देवलोके तौ देवौ जातौ, ततश्च्युत्वा मनुष्यत्वमासाद्य तौ मोक्षं गमिष्यतः. ॥ इति शीलकुलके शीलवतीकथा ॥

गाथा—सिरिवद्धमाणपहुणा । सुधम्मलाभुत्ति जीए पठविउ ॥ सा जयउ जए सुलसा । सारयससिविमलसीलगुणा ॥ ११ ॥ व्याख्या—श्रीवर्धमानप्रभुणा धर्मलाभ इति यस्याः प्रति श्रावकांबडेन सार्धं कथापितः, सा सुलसा जगति जयतु, सा कीदृशी? शरत्कालस्य यः शशी चंद्रस्तद्वन्निर्मलाः शीलादिगुणा यस्याः ॥ ११ ॥ तस्याः कथा चेत्थं—राजगृहनगरे श्रेणिकाभिधो राजास्ति, तत्रैको नागनामा क्षत्रियो वसति, स महाशूरो जिनधर्ममर्मज्ञश्चासीत्. तस्य शीलादिगुणगणोपेता सुलसाभिधा भार्या बभूव. सा संतानरहितत्वात् सर्वदा स्वचित्ते खेदमवहत. अथैकदा तां खिन्नां विज्ञाय भर्त्रा कथितं हे प्रिये! त्वया कश्चिद्देव आराध्यः, सुलसयोक्तं हे स्वामिन् मिथ्या·

क्तं हे राजन् तान् यक्षानेवाहं भवद्भ्यः समर्पयिष्यामि. ततस्तया करंडकेषु निक्षिप्तास्ते चत्वारोऽपि पुरुषा नृपाय समर्पिताः, राजापि करंडकस्थांस्तान् रथे संस्थाप्य निजगृहे समायातः. अथ तेन तेभ्यो यक्षेभ्यः पक्वान्नादिप्राप्त्याशया रसवतीकृते सूदा निषिद्धाः, भोजनसमये राज्ञा करंडकस्थेभ्यः पक्वान्नादि मार्गितं, तदा तेभ्यो दीनस्वरो निर्गतो यद्वयं कुतो दद्मः? एवं तेभ्यो मनुष्यकृतं दीनस्वरं श्रुत्वा विस्मितेन राज्ञा ते करंडकाः समुद्घाटितास्तदा तेभ्यो विकरालरूपा दुर्बलशरीरिणः परिहितजीर्णवस्त्रप्रायाः प्रेता इव ते कामांकुराद्याः प्रकटीभूताः, राज्ञा पृष्टास्ते सर्वमप्युदंतमुक्त्वा शीलवत्याः प्रशंसां चक्रुः, तत श्रुत्वा राजा शीलवतीमाकार्य निजापराधं क्षामयामास. इतस्तत्र ज्ञानिगुरवः समागताः, राजादयः सर्वेऽपि तस्मै वंदितुं गताः, देशनांते राज्ञा गुरुभ्यः पृष्टं हे भगवन् केन गुणेन धर्मेण वा शीलवती बुद्धिनिपुणा जाता? ज्ञानिनोक्तं पूर्वभवे कुशलपुरे कश्चिदेको दरिद्री बभूव, तस्य दुर्गिलाख्या भार्या, एकदा तया महासाध्व्यै पृष्टं हे भगवति वयमाजन्म दरिद्रिणः स्मः, ततोऽस्मान् दुःखात्समुद्धर? साध्व्योक्तं महानुभावे पुण्यं कुरु? परपुरुषनिषेधं गृहाण? पुनः पंचमीतपश्च कुरु? दुर्गिलया तत्सर्वमप्यंगीकृतं. ततस्तौ दंपती शुद्धश्राद्धधर्मं पालयित्वा सौधर्मे

देवलोके देवौ जातौ, ततश्च्युत्वा तस्या भर्तृजीवोऽयमजितसेनो जातः, सा चेयं शीलवती जाता, पंचमीतपःप्रभावतस्तस्या निर्मला बुद्धिरभवत्, पूर्वभवाभ्यासेन तया निर्मलं शीलं पालितं, ततश्च्युत्वा ताभ्यां द्वाभ्यामपि जातिस्मरणं प्राप्य वैराग्यतो दीक्षा गृहीता, शुद्धचारित्रं प्रपाल्य पंचमे देवलोके तौ देवौ जातौ, ततश्च्युत्वा मनुष्यत्वमासाद्य तौ मोक्षं गमिष्यतः. ॥ इति शीलकुलके शीलवतीकथा ॥

गाथा—सिरिवद्धमाणपहुणा । सुधम्मलाभुत्ति जीए पठविउ ॥ सा जयउ जए सुलसा । सारयससिविमलसीलगुणा ॥ ११ ॥ व्याख्या—श्रीवर्धमानप्रभुणा धर्मलाभ इति यस्याः प्रति श्रावकांबडेन सार्धं कथापितः, सा सुलसा जगति जयतु, सा कीदृशी? शरत्कालस्य यः शशी चंद्रस्तद्वन्निर्मलाः शीलादिगुणा यस्याः ॥ ११ ॥ तस्याः कथा चेत्थं—राजगृहनगरे श्रेणिकाभिधो राजास्ति, तत्रैको नागनामा क्षत्रियो वसति, स महाशूरो जिनधर्ममर्मज्ञश्चासीत. तस्य शीलादिगुणगणोपेता सुलसाभिधा भार्या बभूव. सा संतानरहितत्वात् सर्वदा स्वचित्ते खेदमवहत. अथैकदा तां खिन्नां विज्ञाय भर्त्रा कथितं हे प्रिये! त्वया कश्चिद्देव आराध्यः, सुलसयोक्तं हे स्वामिन् मिथ्या·

त्विदेवाराधनेन श्रेयोऽभिलाषा निष्फलैव, अतोऽहं श्रीवीतरागगुरुपूजनपूर्वकं शुद्धसम्यक्त्वमाराधयिष्यामीत्युक्त्वा सा श्रीजिनधर्मसमाराधनैकव्यापारा जाता. इतः सौधर्मेंद्रेण निजसभायां सम्यक्त्वाराधने सुलसायाः प्रशंसा कृता, तदसहमानः कश्चिन्मिथ्यात्विदेवो ग्लानसाधो रूपं विधाय सुलसागृहे समागतः, सुलसया वंदित्वागमनकारणं पृष्टेन तेनोक्तं तव गृहे लक्षपाकतैलं वर्तते तन्मे रोगापनयनकृते देहि? तत् श्रुत्वा स्वं धन्यं मन्यमाना सुलसा तत्तैलकुंपिकामपवरकादानयामास. इतः सा कुंपिका देवकृतमायातः पतित्वा भग्ना, एवं कुंपिकात्रयं भग्नं तैलं सर्वं च नष्टं, तथापि तस्या मनसि तद्धानितो मनागपि खेदो न बभूव, प्रत्युत तया चिंतितं ममाभाग्यवशादेतत्साधोरुपयोगे नायातं. देवेन ज्ञानबलात्तच्चित्तं निश्चलं विज्ञाय प्रकटीभूय तत्तैलभाजनानि सज्जीकृत्य तैलसंभृतानि कृतानि, तस्या मस्तकोपरि च पुष्पवृष्टिः कृता, ततस्तेन सौधर्मेंद्रकृततत्प्रशंसादिसर्ववृत्तांतं कथयित्वा स्वापराधं च क्षामयित्वोक्तं हे सुलसे त्वं वरं मार्गय? तदा सुलसया संततिर्मार्गिता, तुष्टेन देवेन तस्यै द्वात्रिंशद्गुटिकाः प्रदत्ताः, कथितं च पुनरपि कार्यावसरे मम स्मरणं कर्तव्यमित्युक्त्वा सोऽदृश्यीभूतः, अथ सुलसया विचारितं द्वात्रिंशत्पुत्रोत्पत्तितः सामायिकादिधर्मक्रियाया अं·

तरायो भविष्यतीति विचार्य द्वात्रिंशल्लक्षणोपेतैकस्यैव पुत्रस्याशंसया तया सर्वा अपि गुटिकाश्चूर्णीकृत्य भक्षिताः.

अथ समकालमेव द्वात्रिंशत्पुत्रगर्भोत्पत्तितः पीड्यमानया तया स देवः संस्मृतस्तदा देवेन तत्पीडोपशमनकरणपूर्वकं कथितं हे सुलसे त्वयैतत्समीचीनं न कृतं, एकनालोत्पत्तितस्ते सर्वेऽपि स्वल्पायुष्का भविष्यंतीत्युक्त्वा देवः स्वस्थानं गतः, अथानुक्रमेण तया द्वात्रिंशत्पुत्राः प्रसूता यौवनं च प्राप्यातिबलवंतः संतस्ते श्रेणिकनृपसेवां कुर्वंति. दैवयोगेन चिल्लणापहरणसमये ते सर्वेऽपि पंचत्वं प्राप्ताः, सुलसा तु गतशोकैव धर्मं करोति. अथैकदा श्रीवीरप्रभुश्चंपायां समवसृतस्तत्रांबडपरिव्राजकेन वंदनपूर्वकं प्रभोर्देशनां श्रुत्वोक्तं स्वामिन्नहं राजगृहनगरे व्रजामि. प्रभुणोक्तं तत्र सुलसाश्राविकायै मे धर्मलाभः कथनीयः, तथेति प्रतिपद्यांबरमार्गेण गच्छतांबडेन चिंतितं राजगृहे तु बहवः श्रावकाः संति. परं भगवता सुलसाधर्मलाभकथनान्नूनं तस्यां कश्चिद्विशेषः संभवति. अतस्तस्या मया परीक्षा कर्तव्येति विचार्य तेन राजगृहोद्याने समागत्य दिनत्रयावधि प्रतिदिनमाडंबरयुतं क्रमेण ब्रह्माविष्णुमहेश्वररूपं प्रकटीकृतं, बहवो नगरलोकास्तं वंदनार्थमागताः, परं सख्यादिभि-

बहु प्रेर्यमाणापि सुलसा तं मायाविनं निश्चित्य निजसम्यक्त्वभंगभयात्तत्र न गता. चतुर्थे दिने निजलब्धिशक्तितः समवसरणरचनपूर्वकं तेन तीर्थंकररूपं प्रकटीकृतं, तथापि निश्चलमानसा सुलसा नागता. ततोंबडः स्वकीयमूलरूपं प्रकटीकृत्य सुलसागृहे समागतस्तदा सुलसयाभ्युत्थानस्वागतप्रश्नादिपूर्वकं तस्यादरः कृतः, ततोंबडेन यदि भगवतोक्तो धर्मलाभस्तस्यै कथितस्तदा हर्षेण रोमोद्गमोत्फुल्लगात्रया तया श्रीवीराय नमस्कारः कृतः. अथांबडः प्रोवाच हे सुश्राविके मया श्रुतं यदत्र नगराद्बहिर्ब्रह्मादिदेवाः समागता आसन् त्वया ते वंदिता न वा? सुलसयोक्तं हे अंबड सम्यक्त्वी जीवः कथं रागादिदोषदूषितांस्तान् वंदते? किं चैवंविधा इंद्रजालिका जगति बहवः संति, अहं कदाचिदपि मिथ्यात्विनां संगं न करोमि. पुनरंबडेनोक्तमिह खलु पंचविंशतितमस्तीर्थंकरोऽपि किं समागतोऽभूत्? सुलसयोक्तं हे अंबड त्वं शुद्धश्रावकीभूय कथमेवं मिथ्यावचनं श्रद्दधसि? तीर्थंकराश्चतुर्विंशतिरेव श्रीवीरेण कथिताः संति. इति तस्या दृढसम्यक्त्वं निश्चित्यांबडेन स्वकृततत्स्वरूपादिवृत्तांतनिरूपणपूर्वकं निजापराधः क्षामितो गतश्च तां मुहुर्मुहुः प्रणम्य स्वस्थानं प्रति. सुलसापि निरतिचारतया धर्ममाराध्यानशनं कृत्वा देवलोके गता. आगामिचतुर्विंशत्यां च तस्या जीवः पंच

दशमो निर्ममनामा तीर्थंकरो नविष्यति, मोक्षं च गमिष्यति. ॥ इति शीलकुलके सुलसाकथा ॥

गाथा—हरिहरबंनपुरंदर—मयनंजणपंचबाणबलदप्पो ॥ लीलाइ जेण दलिउं । स थूलिभद्दो दिसउ भद्दं ॥ १२ ॥ व्याख्या—स श्रीस्थूलन्नद्रस्वामी नडं कल्याणं दिशतु, येन नगवता हरिः कृष्णो हरो रुद्रो ब्रह्मा पुरंदरश्च, एतेषां यो मदो गर्वस्तस्य नंजने समर्थ एतादृशो यः पंचबाणः कंदर्पस्तस्य दर्पोऽहंकारो लीलया हेलया दलितो मर्दितोऽर्थात्कंदर्पमदं हत्वा तेन शुद्धं शीलं पालितमिति भावः. ॥ १२ ॥ श्रीस्थूलभद्रकथा चेवं—भरतक्षेत्रे पाटलीपुत्रनगरे नंदाभिधो राजा, शकडालाख्यश्च मंत्री, तस्य लक्ष्मीवत्यनिधाना भार्या, तस्याः कुक्षिदरीसमुद्नूतौ सिंहाविव वैरिगजविदारणक्षमौ स्थूलभद्रश्रीयकाख्यपुत्रौ द्वावनूतां. तयोर्मध्ये श्रीयको नंदनृपस्य सेवां करोति, स्थूलन्नद्रश्च पितुः प्रसादेन कोशावेश्यागृहस्थितः सुखानि नुनक्ति. इतश्चैको वररुचिनामा काव्यकलाकलापनिपुणः साहित्यसारोदधिपारंगतो द्विजस्तत्रागतः, स निरंतरमष्टोत्तरशतनवीनकाव्यानि नूपस्तुतिगर्भितानि कृत्वा नंदनृपं स्तौति, तदा नंदः शकमालानिमुखं पश्यति, शकमालस्तु तस्य मिथ्यात्वनावेन प्रशंसां न करोति. एवं स्तुतिं कुर्वतोऽस्य ब्राह्मणस्य नूरिदिनानि गतानि, किंतु राजा

तस्मै किंचिदपि दानं न ददाति. वररुचिना चिंतितं शकडालकृतप्रशंसांविना राजा दानं नैव दा· स्यतीति विचार्य स शकडालगृहे समागत्य तस्य भार्यां स्तोतुं लग्नः, एवं प्रतिदिनं कुर्वतो वररुचे· रुपरि लक्ष्मीवती संतुष्टा, तदा तेनोक्तं हे मातर्यथा नृपसंसदि मे काव्यानां शकडालः प्रशंसां कु· र्यात्तथा कुरु? लक्ष्मीवत्या तत्प्रतिपद्य शकडालाय तद् ज्ञापितं. अथ द्वितीयदिने यदा वररुचिः सं- सदि नृपस्तुतिबद्धनवीनकाव्यानि पठित्वा विरमितस्तदा स्त्रीवचनप्रेरितेन शकडालेनोक्तं स्वामिन् काव्यानि त्वेतानि मनोहराणि संति. ततस्तुष्टेन राज्ञा वररुचयेऽष्टोत्तरशतदीनारदानं दत्तं, अथैवं तंप्रति प्रतिदिनं राजा दानं दातुं लग्नः. अथैकदा मंत्रिणा चिंतितमयं तु मिथ्यात्ववृद्धिर्मत्सकाशा· ज्जाता, अतः सा निवारणीया, इति विचार्य द्वितीयदिने तेन राज्ञे कथितं स्वामिन्निमानि काव्या· नि तु जीर्णानि संति, यतो मम पुत्र्योऽप्येतानि जानंति. तद्विषयेऽहं प्रातर्भवतः प्रतीतिं कारयिष्या· मि. अथ तस्य मंत्रिणो यक्षायक्षदिन्नादिसप्तपुत्र्यः संति, स्वप्रज्ञातिशयस्तासां क्रमेणैकद्वित्र्यादिस· प्तवारावधि श्रवणानंतरं काव्यादि सुखमुखोच्चारं भवति. प्रभाते मंत्रिणा संकेतपूर्वकं ताः सप्तापि क· न्या यवनिकांतरे सभायां स्थापिताः, अथ वररुचिरप्यागत्य स्वकीयनवीनस्तुतिभिर्नृपं तुष्टाव. तद·

नंतरं मंत्रिकृतसंकेततो यक्षादिभिः सप्तभिरपि कन्याभिस्तान्येव स्तुतिकाव्यानि पठितानि, ततो रुष्टेन राज्ञा तस्मै दानं निवारितं. अथ वररुचिर्विषण्णो गंगातटे गत्वा जलमध्ये एकं कपटयंत्रं कृत्वा लोकानां पुरो गंगास्तुतिं कृत्वा कथयति, हे मातर्गंगे यदि राजा दानं न ददाति तर्हि त्वं मे यच्छेत्युक्त्वा जलांतःस्थं यंत्रं पादेनाकर्षयति, ततस्तत्र पूर्वमुक्ता दीनारग्रंथिर्बहिरापतति. एवं प्रतिदिनमाश्चर्यप्राप्तानां लोकानां पुरः स करोति. नगरे सर्वत्र सा वार्ता प्रसिद्धा जाता. राजापि तद्वृत्तांतमाकर्ण्याश्चर्ययुतस्तद्दर्शनगंतुमना मंत्रिसन्मुखमैक्षत. मंत्रिणोक्तं स्वामिन् प्रभाते वयमपि तत्र गत्वा तदाश्चर्यं विलोकयिष्यामः, अथ रात्रौ मंत्रिणा तत्र नदीस्थाने निजमेकं गुप्तचरपुरुषं प्रेष्य वररुचिन्यस्ता दीनारग्रंथिरानायिता.

अथ प्रभाते नृपयुतो मंत्री तत्र समागतः, सर्वनगरलोका अपि तदाश्चर्यं द्रष्टुं समागताः, वररुचिरपि मंत्रियुतं राजानमागतं दृष्ट्वा महता स्वरेण गंगास्तुतिं पठमानो दीनारग्रंथिं पादप्रचारपूर्वकं मार्गयामास. परं तत्कपटपाटवतः कुपितेव गंगा तस्मै किमपि नार्पयति. शंकाकुलेन वररुचिना यंत्रे बहुशः पादप्रहारा दत्ताः परं तत्पादप्रहारतो विशेषतः क्रुद्धेव गंगाजलोच्छलनोद्भूतसीकरकणच·

पेटाभिस्तं ताडयामास. तदासौ विषण्णो न्यग्मुखीभूय स्थितः, इतः शकडालेन सा ग्रंथिर्निजकक्षातो निष्कास्य राज्ञोऽग्रे मुक्त्वा सकलोदंतपूर्वकं प्रकटितश्च तस्य कपटजालो लोकानां पुरः, अथात्यंतं कुपितो वररुचिः शकडालमंत्रिणश्छिद्राण्यन्वेषयामास. एकां मंत्रिगृहदासीं द्रव्यदानादिनावर्ज्य स सर्वदा मंत्रिगृहवार्तां पृछति. अथैकदा मंत्रिगृहे श्रीयकोद्वाहमहोत्सवः समारब्धः, तत्प्रसंगे नृपोपहारार्थं मंत्रिणा नवीनछत्रचामरासनशस्त्रादीनि स्वगृहे निष्पाद्यंते. दासीमुखात्तदुदंतं लब्ध्वा वररुचिना सुखभक्षिकादिभिर्बाला आवर्जिताः, पाठितं च तेषामिदं लोकभाषाकाव्यं—मूढ लोक जाणे नहि । जं शकडाल करेसी ॥ नंदराय मारी करी । सिरियो राज ठवेसी ॥ १ ॥ अथ ते बालका नगरमध्ये स्थाने स्थाने भ्रमंतस्तदेव काव्यं पठंति. राजापि तत् श्रुत्वा शंकितो निजगुप्तपुरुषान् मंत्रिगृहचर्याविलोकनाय प्रेषयामास, तैरपि केनचिन्मिषेण मंत्रिगृहे समागत्य तत्सर्वसामग्री दृष्टा, कथितश्च तदुदंतो राज्ञे. तदा राज्ञा चिंतितं नूनं बालवाक्यं सत्यं दृश्यते. ततः प्रभाते यदा मंत्री सभायामागत्य नृपाय प्रणामं कृतवान् तदा नृपः पराङ्मुखीभूय तस्यानादरं कृतवान्. द्रुतमेव मंत्रिणा गृहमागत्य श्रीयकमाहूय कथितं हे वत्स केनापि दुर्जनेन प्रेरितो नृपोऽद्य ममोपरि क्रुद्धो-

ऽस्ति, ततश्च यावत्सकलकुलविनाशकालो न समापतेत्तावता कुलरक्षणप्रयत्नो विधेयः, अथाहं प्रभाते मुखमध्ये तालपुटविषं धृत्वा नृपंप्रति नमिष्यामि तदा त्वया करवालेन मम शिरश्छेदः कर्तव्यः, महता कष्टेन कथमपि तत्कार्यकरणाय तं प्रतिबोध्य मंत्री प्रभाते सभायामागत्य नृपाय प्रणामं कृतवान्, परं राजा पराङ्मुखो जातस्तदैव श्रीयकेन करालकरवालतो मंत्रिशिरश्छेदः कृतः, हा हेति कथयता राज्ञा श्रीयकः पृष्टो हे वत्स किमेतत्त्वया कृतं? श्रीयकेनोक्तं स्वामिन् यो भवतोऽपमानपात्रं जातस्तेन पित्रापि किं प्रयोजनं? यतो येन कर्णस्त्रुट्यते तत्सुवर्णमपि निरुपयोग्येव. तत् श्रुत्वा संतुष्टो राजा तस्मै मंत्रिमुद्रां दातुं लग्नः, श्रीयकेनोक्तं हे स्वामिन् मम वृद्धभ्राता स्थूलभद्रो वेश्यागृहे वसति, तत्रस्थेन तेन सूर्योदयास्तमप्यजानता द्वादशसुवर्णकोटिर्विलसितास्ति. तमाहूयेयं मुद्रा दातव्या. राजा तमाहूय शकडालमरणकथनपूर्वकं तस्मै मंत्रिमुद्रिकां दातुं प्रवृत्तस्तदा स्थूलभद्रेणोक्तमहं विमृश्योत्तरं दास्यामि. राज्ञोक्तमस्यामशोकवाटिकायां गत्वा विमृश्य द्रुतं समागच्छ? इत्युक्तः स्थूलभद्रोऽशोकवाटिकायां गत्वा विचारयति, अहो धिक्संसारं यया मंत्रिमुद्रया जनकाय मरणं दत्तं, तया मे किं श्रेयो भविष्यति? अयं संसारः केवलं स्वार्थव्याकुल एव, न को·

ऽपि कस्यापि वल्लभोऽस्तीति विचार्य तेन ' करेमि भंते ' इत्यादिपाठः समुच्चरितस्तदैव शासनदेवतया तस्मै संसारांभोनिधिपारप्रापणार्थं पोत इव साधुवेषो दत्तः, सांसारिकवेषं शरीरविलग्नं भुजंगमिव परित्यज्य तेन स वेषः स्वीकृतः, अथ साधुवेषयुतोऽसौ चपलं नृपसभायामागत्य धर्मलाभाशिषं दत्तवान्. राज्ञोक्तं किमिदं त्वया कृतं, तेनोक्तं राजन् मयैतदेवालोचितमित्युक्त्वा स्थूलभद्रस्ततो मुक्तनिर्मोको नाग इव निर्गतः, राज्ञा तद्गमनमार्गविलोकनाय तत्पृष्टे निजसेवका मुक्ताः, स्थूलभद्रस्तु चांडालपाटकमिव वेश्यापाटकं दूरतो मुक्त्वा श्रीसंभूतिविजयसमीपे समागत्य दीक्षां गृहीतवान्. सेवकमुखाद्राज्ञा तं तथाभूतं विज्ञाय श्रीयकाय मंत्रिमुद्रा प्रदत्ता. अथ स्थूलभद्रं दीक्षितं विज्ञाय विरहातुरा कोशा श्रीयकपार्श्वे समागत्य रुदनं चकार. श्रीयकेनोक्तमेतत्सर्वमपि विपरीतकार्यं वररुचिना कृतमस्तीत्युक्त्वा तेन सर्वोऽपि वृत्तांतस्तस्यै कथितस्तदा कोशापि वररुचेरुपरि भृशं कोपातुरा जाता. श्रीयकेनोक्तं त्वद्भगिन्योपकोशया सह वररुचेः संबंधोऽस्ति, ततस्तां कथयित्वा स कथंचिदपि मदिरापानासक्तः कार्यस्ततोऽहं येन केनाप्युपायेनैतद्वैरनिष्क्रियां करिष्यामि, कोशयापि तदंगीकृत्य तथैव कारितं.

अथ वररुचिर्निर्भयः सन् सर्वदा नृपसभायां समायाति, काव्यैश्च नृपं प्रसन्नीकृत्य द्रव्यं गृह्णाति. अथैकदा निर्जनमवसरं प्राप्य श्रीयकेन राज्ञो विज्ञप्तिः कृता, स्वामिन् संप्रति भांडागारे द्रव्यं स्तोकमस्ति. राज्ञा शकडालं स्मृत्वा कथितं तस्मिन् सुमंत्रिणि सति मम भांडागारे कदापि द्रव्यन्यूनता नाभूत. श्रीयकेनोक्तं स्वामिन्ननेन मद्यपेन वररुचिना तदा बालानां मृषाकाव्यमध्याप्य भवन्मनो विप्रतारितं. राज्ञोक्तं किमयं मद्यपानं करोति? श्रीयकेनोक्तं प्रभातेऽहं भवतां तत्प्रतीतिं कारयिष्यामि. अथ श्रीयकेन गृहे समागत्य मालिनमाहूयोक्तं प्रभाते राजसभायां सर्वेभ्यस्त्वयैकैकं कमलं देयं, तदा वररुचेर्हस्ते त्वया मदनफलरसभावितं कमलं देयमित्याग्रहपूर्वकमुक्त्वा स विसर्जितः. अथ प्रभाते राज्ञः सभा मिलिता, तदा वररुचिरपि निजव्यसनतो नित्यनियमानुसारेण कृतमदिरापान एव सभायामागतः. संकेतानुसारेण मालिना सभास्थसर्वजनेभ्य एकैकं कमलं दत्तं, वररुचयेऽपि तीव्रमदनरसभावितं कमलं दत्तं. स्वभावेनैव सर्वेऽपि निजनिजपुष्पाण्याघ्रातुं लग्नास्तदा वररुचिरपि यावत्तत्पुष्पमाघ्राति तावत्तन्मदनरसगंधस्वभावतस्तस्य वमनं जातं, वमननिर्गतमदिरामिषतस्तस्यांतःकरणमालिन्यं सभायां प्रकटीभूतं, वमितमदीरोद्भूतदुर्गंधात्तत्प्रकटीभूतदौर्जन्यादिव

राजादिसभागतसकलजना व्याकुलतां नाटयामासुः, राज्ञोक्तमाय प्रोक्तमरे एनं मालिन्यमालाकलितं दुष्टमद्यपं नगराद्बहिर्निष्कास्य काननगोचरीक्रियतां? तत् श्रुत्वा लज्जावनतकंधरः सकलसभाजनैर्हास्यास्पदं प्राप्यमाणः प्राहरिकैर्यष्टिमुष्ट्यादिभिस्ताड्यमानः स सभाया निर्गत्य नगरबहिर्गतः, अथ सा वार्ता मरुदारूढेव ग्रामे ग्रामे नगरे नगरे च विस्तृता, सर्वैर्द्विजैर्मिलित्वा स ज्ञातिबहिष्कृतः, ततोऽसौ त्रपया पंभितादिष्टकृततप्तत्रपुपानो मृतः. अथ श्रीयको निष्कंटकः सन् पितृवैरनिष्क्रयात आनंदितमानसः सुखेन मंत्रिपदं भुनक्ति.

इतः श्रीस्थूलभद्रमुनिर्गुरुसमीपे एकादशांगान्यधीतवान् जातश्च गीतार्थः, अथासन्ने चतुर्मासके शिष्यैर्विविधाभिग्रहा गुरुपार्श्वे गृहीताः, एकेनोक्तमहं चातुर्मासोपवासयुतः सिंहगुहाद्वारे कायोत्सर्गोपेतः स्थास्यामि, द्वितीयेनोक्तमहं दृष्टिविषसर्पबिले कायोत्सर्गस्थश्चतुर्मासावधि स्थास्यामि. तृतीयेनोक्तमहं कूपार्धप्रदेशकाष्टे कायोत्सर्गपूर्वकं चातुर्मासं स्थास्यामि. एवमन्यैरपि शिष्यैर्विविधाः सुकरा निजशक्त्यनुसारेणाभिग्रहा गृहीताः, स्थूलभद्रेण विज्ञप्तं स्वामिन्नहं षड्रसाहारभोजनयुतो ब्रह्मचारित्वेन कोशावेश्यागृहे तस्याश्चित्रशालायां चातुर्मासं करिष्ये, गुरुणा निजज्ञानबलेन तेषां

सर्वेषां तत्तत्करणे योग्यतां विज्ञायादेशा दत्ताः, अथ ते त्रयोऽपि शिष्या निजनिजस्थाने गताः, स्थूलभद्रमुनिरपि कोशावेश्यागृहे समायातः, कोशा तं वीक्ष्य हृष्टा सती चिंतयामास नूनमेष कोमलकमलसुकुमालः खड्गधारातीव्रं चारित्रं पालयितुमशक्नुवन् मम भाग्यदवरकाकृष्ट इवात्र समायातोऽस्तीति विचिंत्य सा सहसाभ्युत्थाय सन्मुखमागत्य हृदयगतस्नेहोद्गारान्निष्कासयंतीव स्वागतं स्वामिन्नित्यादिविविधस्नेहालापानुच्चरंती नानाप्रकारान् हावभावान् कुर्वंती जगाद, हे स्वामिन् मम दास्या आज्ञामादिशध्वं? स्थूलभद्रेणोक्तं हे कोशे चतुर्मासावधिस्थितिकृते तव चित्रशालां समर्पय? वेश्ययोक्तं स्वामिन्नहमपि त्वदीयैवास्मि तर्हि चित्रशालाया मार्गणे प्रश्नः कः! स्वामिन् सुखेनैव मम हृदये इव चित्रशालायां निवासं कुरुत? अथ दमितमदनविकारः स्थूलभद्रो महामुनिर्वेश्यार्पितचित्रशालायां धर्मध्यानपरः स्थितः, ततो हृष्टया कोशया षड्रसोपेतानेकप्रकाररसवतीं निष्पाद्य स भोजितः, भोजनानंतरं सकलशृंगारभासुरा पादारुणनखांशुनिकरैर्मदनार्कोदयं दर्शयंती निजोरुणा मदनगंधगजेंद्रबंधनकृते स्वर्णस्तंभविभ्रमं प्रकटयंती मुष्टिग्राह्यकटीतटेन मृगेंद्रकटीगर्वमपि खर्वयंती निजपीनतुंगकठिनोरुस्तनयुगलदंभेन यूनां मदनोदधिपारप्रयाणार्थं कुंभौ दर्शयंती स्वकीयवदनेंदु-

दयतो विरहाकुलपुंसां चित्तचकोरानमंदानंदसंदोहं प्रापयंती नूपुरक्वणत्कारैः पुरुषहृदयसुप्तमदनं गतनिद्रं कुर्वंती कर्णांताकृष्टभ्रूचापोन्मुक्तकटाक्षशरपंक्तिभिर्मदनांधपुरुषहृदयानि विदारयंती विविधविलासोपेतहावभावान् दर्शयंती सा कोशाभिधवेश्या श्रीस्थूलभद्रमुनिसमीपे चित्रशालायां समागता. तत्र तया नूपुरकिंकिणीनादानुयायि तिरस्कृतभरतनाट्याचार्यनृत्यकलाडंबरं लज्जीकृताप्सरोगणकलकलाकलापं नृत्यमकारि.

एवंविधनृत्यकलाहावभावादिभिरपि तमक्षुब्धं ज्ञात्वा सा निजवचनचातुरीं दर्शयामास. हे स्वामिन् पूर्वमावाभ्यां यथा विविधविलासोपयुक्ता भोगा भुक्ताः संति, तथैवाधुनापि त्वं निःशंको मया सह भोगान् भुंक्ष्व? किमनेन यौवनवयोविडंबननिभेन चारित्रेण? यौवनवयोवृक्षफलास्वादनयोग्योऽयं वर्षाकालः किं त्वयैवं विडंबनमात्रेण वृथैव निर्गम्यते? चिरकालवियोगानलविधुरां मां भवत्कमलामलकोमलांगालिंगनामृतसंचयसिंचनेनोपशांतां कुरु? तस्या इत्यादिवचनविलासशरनिकरैरपि स्वीकृतचारित्राभेद्यसन्नाहो महामुनिस्थूलभद्रो मनसापि मनाग्भेदभावं न प्राप्तः, एवं तया सर्वदा विविधहावभावपरिमंडितवाग्विलासादिटंकैर्मुनिमनो भेत्तुं प्रयत्नः कृतः, परं श्रीस्थूलभद्रमहा-

र्या च कृते द्वे अपि कार्ये दुष्करे न, किं तु स्थूलभद्रेण यत्कार्यं कृतमस्ति तद्दुष्करेभ्योऽपि दुष्करं ज्ञेयमित्युक्त्वा तया सर्वोऽपि स्थूलभद्रोदंतस्तस्मै निवेदितस्ततः प्रतिबुद्धेन तेन दीक्षा गृहीता. इतोऽथ द्वादशवार्षिको दुष्कालः पतितः, साधुसाध्वीभिश्च महाकष्टेन स निर्वाहितः, तदापत्तौ पठनपाठनाभावतः सिद्धांताः साधूनां मुखपाठतो विस्मृताः, दुष्कालानंतरं पाटलीपुत्रे सर्वसंघो मिलितः, तदा यो यः सिद्धांतभागो यस्य यस्य मुखपाठे मिलितस्तत्सर्वमेकीकृत्य महाप्रयासेनैकादशांगानि पूर्णीकृतानि. अथ तस्मिन् काले चतुर्दशपूर्ववेत्ता श्रीभद्रबाहुस्वामी नेपालदेशे विहृतवान्. तस्याकारणार्थं पाटलीपुत्रमिलितसंघेन पूर्वोद्धारकृते तत्र द्वौ मुनी प्रेषितौ, मुनिभ्यां तत्र गत्वा श्रीभद्रबाहुस्वामिने संघसंदेशो ज्ञापितः, तेनोक्तं संप्रति मया महाप्राणध्यानं समारब्धमस्त्यतस्तत्र मयाऽऽगंतुं न शक्यते. तदा तौ साधू पश्चात् पाटलीपुत्रे समागत्य तत्संदेशं श्रीसंघाय निवेदयांचक्रतुः, संघेन पुनर्द्वौ साधू तत्र प्रेष्य तस्मै संदेशितं च यः कश्चित्संघाज्ञां न मन्यते तस्य को दंडो देय इति. तद्वचनतात्पर्यं विचिंत्य श्रीभद्रबाहुना कथितं श्रीसंघो मह्यं कृपापरो भूत्वान् बुद्धिनिधीन् साधून् प्रेषयतु, तेभ्योऽहं पूर्ववाचना दास्यामि, येन श्रीसंघकार्यसफलताविधानपूर्वकं ममापि ध्या-

नांतरायो न भवेत. श्रीसंघेनापि तत्स्वीकृत्य स्थूलभद्राद्याः पंचशतबुद्धिनिधानमुनयस्तत्र प्रेषिताः, कियता कालेनैकं स्थूलभद्रमहात्मानंविनाऽन्ये सर्वेऽपि साधवः सिद्धांताध्ययनोद्विग्नमानसाः संतः पश्चाद्वलिताः, स्थूलभद्रेण तु तत्र स्थित्वा दशपूर्वाण्यधीतानि. अथैकदा गृहीतदीक्षा यक्षाद्याः स्थूलभद्रभगिन्यस्तत्र गुरुवंदनार्थं समागताः, भद्रबाहुस्वामिनं वंदित्वा तत्र च स्थूलभद्रमुनिमदृष्ट्वा ताभिर्विनयावनतमस्तकाभिः पृष्टं हे गुरवः स्थूलभद्रमुनिः क्वास्ति? गुरुभिरुक्तं निकटदेवकुले स्वाध्यायपरः स्थितोऽस्ति. तत् श्रुत्वा ता महासत्यो निजभ्रातरं वंदितुं तन्निकटस्थदेवकुलंप्रति गमनं चक्रुः, दूरतस्ताः समागच्छंतीर्विलोक्य निजचापल्यतः कुतूहलोत्कंठितमानसेन तेन निजविद्याबलात्स्वकीयं विकरालसिंहरूपं विकुर्वितं. ताश्च तत्रस्थं महाभयंकरं पंचाननं विलोक्य मुग्धमृग्य इव भयकंपितचित्ता द्रुतं पश्चाद्वलित्वा गुरुसमीपमागताः, प्रोक्तं च ताभिर्हे गुरवस्तत्र त्वस्मद्भ्रातरं नूनं कवलीकृत्यैको भयंकरः पंचाननः समुपविष्टोऽस्ति. गुरुभिर्ज्ञानोपयोगचक्षुषा विलोक्य कथितं संप्रति तत्र सिंहो नास्ति, स्थूलभद्र एव समुपविष्टोऽस्ति. गुरुवचनप्रामाण्यं मन्यमानास्ताः पुनस्तत्र गता दृष्ट्वा च स्थूलभद्रं हृष्टाः संत्यो वंदनां विधायाग्रे समुपविष्टाः, स्थूलभद्रेण पृष्टं श्रीयकः क्वास्ति?

नांतरायो न भवेत. श्रीसंघेनापि तत्स्वीकृत्य स्थूलभद्राद्याः पंचशतबुद्धिनिधानमुनयस्तत्र प्रेषिताः, कियता कालेनैकं स्थूलभद्रमहात्मानंविनाऽन्ये सर्वेऽपि साधवः सिद्धांताध्ययनोद्विग्नमानसाः संतः पश्चाद्वलिताः, स्थूलभद्रेण तु तत्र स्थित्वा दशपूर्वाण्यधीतानि. अथैकदा गृहीतदीक्षा यक्षाद्याः स्थूलभद्रभगिन्यस्तत्र गुरुवंदनार्थं समागताः, भद्रबाहुस्वामिनं वंदित्वा तत्र च स्थूलभद्रमुनिमदृष्ट्वा ताभिर्विनयावनतमस्तकाभिः पृष्टं हे गुरवः स्थूलभद्रमुनिः क्वास्ति? गुरुभिरुक्तं निकटदेवकुले स्वाध्यायपरः स्थितोऽस्ति. तत् श्रुत्वा ता महासत्यो निजभ्रातरं वंदितुं तन्निकटस्थदेवकुलंप्रति गमनं चक्रुः, दूरतस्ताः समागच्छंतीर्विलोक्य निजचापल्यतः कुतूहलोत्कंठितमानसेन तेन निजविद्याबलात्स्वकीयं विकरालसिंहरूपं विकुर्वितं. ताश्च तत्रस्थं महाभयंकरं पंचाननं विलोक्य मुग्धमृग्य इव भयकंपितचित्ता द्रुतं पश्चाद्वलित्वा गुरुसमीपमागताः, प्रोक्तं च ताभिर्हे गुरवस्तत्र त्वस्मद्भ्रातरं नूनं कवलीकृत्यैको भयंकरः पंचाननः समुपविष्टोऽस्ति. गुरुभिर्ज्ञानोपयोगचक्षुषा विलोक्य कथितं संप्रति तत्र सिंहो नास्ति, स्थूलभद्र एव समुपविष्टोऽस्ति. गुरुवचनप्रामाण्यं मन्यमानास्ताः पुनस्तत्र गता दृष्ट्वा च स्थूलभद्रं हृष्टाः सत्यो वंदनां विधायाग्रे समुपविष्टाः, स्थूलभद्रेण पृष्टं श्रीयकः क्वास्ति?

र्या च कृते द्वे अपि कार्ये दुष्करे न, किं तु स्थूलभद्रेण यत्कार्यं कृतमस्ति तद्दुष्करेभ्योऽपि दुष्करं ज्ञेयमित्युक्त्वा तथा सर्वोऽपि स्थूलभद्रोदंतस्तस्मै निवेदितस्ततः प्रतिबुद्धेन तेन दीक्षा गृहीता. इतोऽथ द्वादशवार्षिको दुष्कालः पतितः, साधुसाध्वीभिश्च महाकष्टेन स निर्वाहितः, तदापत्तौ पठनपाठनाभावतः सिद्धांताः साधूनां मुखपाठतो विस्मृताः, दुष्कालानंतरं पाटलीपुत्रे सर्वसंघो मिलितः, तदा यो यः सिद्धांतभागो यस्य यस्य मुखपाठे मिलितस्तत्सर्वमेकीकृत्य महाप्रयासेनैकादशांगानि पूर्णीकृतानि. अथ तस्मिन् काले चतुर्दशपूर्ववेत्ता श्रीभद्रबाहुस्वामी नेपालदेशे विहृतवान्. तस्याकारणार्थं पाटलीपुत्रमिलितसंघेन पूर्वोद्धारकृते तत्र द्वौ मुनी प्रेषितौ, मुनिभ्यां तत्र गत्वा श्रीभद्रबाहुस्वामिने संघसंदेशो ज्ञापितः, तेनोक्तं संप्रति मया महाप्राणध्यानं समारब्धमस्त्यतस्तत्र मयाऽगंतुं न शक्यते. तदा तौ साधू पश्चात् पाटलीपुत्रे समागत्य तत्संदेशं श्रीसंघाय निवेदयांचक्रतुः, संघेन पुनर्द्वौ साधू तत्र प्रेष्य तस्मै संदेशितं च यः कश्चित्संघाज्ञां न मन्यते तस्य को दंडो देय इति. तद्वचनतात्पर्यं विचिंत्य श्रीभद्रबाहुना कथितं श्रीसंघो मह्यं कृपापरो भूत्वात्र बुद्धिनिधीन् साधून् प्रेषयतु, तेभ्योऽहं पूर्ववाचना दास्यामि, येन श्रीसंघकार्यसफलताविधानपूर्वकं ममापि ध्या-

ख्यो विज्ञप्तास्तदा तैः केवलं सूत्रपाठतः शेषचतुःपूर्वाणि स्थूलभद्राय पाठितानि, उक्तं च त्वयापि शिष्येभ्यो दशपूर्वाण्येव देयानि न त्वपराणि. अथैकदा स्थूलभद्रमुनिर्विहरन्नेकस्मिन्नगरे पूर्वमित्रगृहे समागतः, मित्रं तु विदेशगतमभूत्, तस्य भार्यया सन्मुखमागत्य मुनेः स्वागतं कृतं, स्थूलभद्रेण तां विषण्णां विज्ञाय पृष्टं मम सुहृत्सोमः कास्ति? तयोक्तं हे भगवन् स तु धनार्जनकृते देशांतरे गतोऽस्ति. तदा दयालुना स्थूलभद्रेण तस्य गृहमध्ये स्तंभाधो भूतलांतर्द्रव्यसमूहं ज्ञानोपयोगतो दृष्ट्वा तस्यै तत्स्तंभसन्मुखं मुहुर्मुहुर्निजहस्तं विधायोपदेशो दत्तः, ततो महामुनिस्थूलभद्रोऽन्यत्र विजहार. कियद्दिवसानंतरं स सोमोऽपि स्वांतरायकर्मयोगतो धनार्जनं विनैव विषण्णः सन् गृहे समागतः, भार्यया च स्थूलभद्रागमनवृत्तांतः कथितः, हृष्टेन सोमेनोक्तं तेन प्रभुणा किं कथितं? तयोक्तं हे स्वामिन् तेन भवन्नाम गृहीत्वोक्तं स क्व गतोऽस्ति? मयोक्तं हे भगवन् स धनार्जनकृते देशांतरं गतोऽस्ति, ततस्तेन महात्मना मुहुर्मुहुरेतत्स्तंभंप्रति हस्तं प्रसार्य मह्यमुपदेशो दत्तः. इति श्रुत्वा सोमेन चिंतितं नूनं तस्य महात्मनः संज्ञा निरर्थका नैव भवेदिति विचार्य तेन तस्य स्तंभस्याधो भूमिः खनिता, तत्कालमेव ततः सपादलक्षमितं द्रव्यं निर्गतं. अथ श्रीस्थूलभद्रस्वामी

तदा तास्वेकावदत् तेनाप्यस्माभिः सहैव दीक्षा गृहीता, परं क्षणमपि बुभुक्षितुमसमर्थत्वादेकाशनमपि नाकरोत्. इतः पर्युषणापर्वोपागतं, महासत्याग्रहतस्तेन तद्दिने पौरुषी कृता, तदनंतरं सार्द्धपौरुषी, एवं महताग्रहेण तपोवृद्धितः संध्या समागता. ततो महासत्या तस्मै प्रोक्तमधुना रात्रिस्तु सुखेनैव निर्गमिष्यत्यतः प्रभाते एव पारणकं कार्यं. इतोऽर्द्धरात्रिसमये तेनाराधनापूर्वकं कालः कृतः, प्रभाते मुनिघातपातकालिप्तमात्मानं मन्यमानया महासत्या पारणकं न कृतं, संघेन मिलित्वा महासत्यै कथितं शुद्धाध्यवसायेन तत्तपःकारणे त्वं निर्दोषैव, तथापि तयोक्तं मां यदि वीतरागो निर्दोषां प्रकटीकुर्यात्तदैवाहं पारणं विधास्ये. तदा संघेन कायोत्सर्गपूर्वकं शासनदेवताराधिता, ततः सा प्रकटीभूय संघाज्ञया तां महासतीं सीमंधरपार्श्वेऽनयत्. तत्र सीमंधरप्रभुस्तां निर्दोषां प्रकटीकृत्य चूलिकाद्वयं दत्तवान्. ततो महासत्या शासनदेवीसहायेनात्रागत्य ते चूलिके संघाय समर्पिते. इत्यादिवार्त्तालापं विधाय ताः सर्वाः स्वकीयोपाश्रमे समागताः, इतश्च स्थूलभद्रो वाचनाकृते श्रीभद्रबाहुसमीपे समागतः. परं गुरुणा सिंहरूपविकृतितस्तमयोग्यं कथयित्वा वाचना न दत्ता. स्थूलभद्रेण बहुविधविनयोपायैः क्षमा याचिता परं गुरुणा पाठो न दत्तः, संघेन मिलित्वा महताग्रहेण क्षमायाचनपूर्वकं गु-

रवो विज्ञप्तास्तदा तैः केवलं सूत्रपाठतः शेषचतुःपूर्वाणि स्थूलभद्राय पाठितानि, उक्तं च त्वयापि शिष्येभ्यो दशपूर्वाण्येव देयानि न त्वपराणि. अथैकदा स्थूलभद्रमुनिर्विहरन्नेकस्मिन्नगरे पूर्वमित्रगृहे समागतः, मित्रं तु विदेशगतमभूत्, तस्य भार्यया सन्मुखमागत्य मुनेः स्वागतं कृतं, स्थूलभद्रेण तां विषण्णां विज्ञाय पृष्टं मम सुहृत्सोमः कास्ति? तयोक्तं हे भगवन् स तु धनार्जनकृते देशांतरे गतोऽस्ति. तदा दयालुना स्थूलभद्रेण तस्य गृहमध्ये स्तंभाधो भूतलांतर्द्रव्यसमूहं ज्ञानोपयोगतो दृष्ट्वा तस्यै तत्स्तंभसन्मुखं मुहुर्मुहुर्निजहस्तं विधायोपदेशो दत्तः, ततो महामुनिस्थूलभद्रोऽन्यत्र विजहार. कियद्दिवसानंतरं स सोमोऽपि स्वांतरायकर्मयोगतो धनार्जनं विनैव विषण्णः सन् गृहे समागतः, भार्यया च स्थूलभद्रागमनवृत्तांतः कथितः, हृष्टेन सोमेनोक्तं तेन प्रभुणा किं कथितं? तयोक्तं हे स्वामिन् तेन भवन्नाम गृहीत्वोक्तं स क्व गतोऽस्ति? मयोक्तं हे भगवन् स धनार्जनकृते देशांतरं गतोऽस्ति, ततस्तेन महात्मना मुहुर्मुहुरेतत्स्तंभंप्रति हस्तं प्रसार्य मह्यमुपदेशो दत्तः. इति श्रुत्वा सोमेन चिंतितं नूनं तस्य महात्मनः संज्ञा निरर्थका नैव भवेदिति विचार्य तेन तस्य स्तंभस्याधो भूमिः खनिता, तत्कालमेव ततः सपादलक्षमितं द्रव्यं निर्गतं. अथ श्रीस्थूलभद्रस्वामी

प्रांतेऽनशनं विधाय स्वर्गं गतः ॥ इति श्रीशीलकुलके स्थूलभद्रकथा ॥

गाथा—मणहरतारुण्णभरे । पब्भिज्जंतोवि तरुणिनिअरेण ॥ सुरगिरिनिच्चलचित्तो । सो वयरमहारिसी जयउ ॥ १३ ॥ व्याख्या—मनोहरयौवनभरे स्त्रीणां वृंदैः प्रार्थितोऽपि यः श्रीवज्रस्वामी सुरगिरिवन्मेरुवन्निश्चलचित्तोऽभूत स श्रीवज्रस्वामी जयतु ॥ १३ ॥ श्रीवज्रस्वामिकथा चेत्थं—मालवदेशे तुंबवननामा ग्रामोऽस्ति, तत्रातिधनवान् धर्मवांश्च धनगिरिनामा व्यवहारी वसति, स वैराग्यवासितमानसोऽपि पितृभ्यां महताग्रहेण सुनंदाभिधकन्यया सह परिणायितः, अथो धनगिरिणा चिंतितं पुत्रोत्पत्त्यनंतरमहं दीक्षां गृहिष्ये. कालांतरे सुनंदायाः कुक्षौ कोऽपि देवजीवो गर्भत्वेनोत्पन्नस्तदा धनगिरिणा वैराग्येण मोहोन्मादं परिहृत्य श्रीसिंहगिरिगुरुसमीपे दीक्षा गृहीता, धनगिरिमुनिर्निजमातुलार्यसमितमुनिना सह शास्त्राध्ययनं करोति. अथ सुनंदया संपूर्णसमये तेजोऽभिराममेकं पुत्ररत्नं प्रसूतं. तस्य जन्मोत्सवे गृहे मिलिता नार्यः परस्परं कथयंति यद्यस्य बालस्य पिता दीक्षां नाग्रहिष्यत्तर्हि बालस्यास्य जन्मोत्सवं स महताडंबरेणाकरिष्यत. तत् श्रुत्वा तस्य बालस्य जातिस्मरणं संपन्नं, ततस्तेन दीक्षाग्रहणेच्छुना मातुरुद्वेगाय रात्रिंदिवा रुदनं कर्त्तुं समारब्धं,

एवं रुदतस्तस्य षण्मासा व्यतिक्रांताः, उद्विग्नया मात्रा प्रातिवेश्मिकादिकथनतो चिंतितं यदस्य पि· ता चेदत्र समागच्छेत्तर्हि रुदनशीलो बालोऽयं तस्मै एव मया समर्पणीयः, इतो धनगिर्यादिपरिवारयु· ताः श्रीसिंहगिरयस्तत्र समागताः, धनगिर्यार्यसमितावुभावपि गुरुमापृच्छ्याहारार्थं चलितौ. तदा श्रु· तोपयोगतो गुरुणोक्तमद्य युवाभ्यां सचित्ताचित्तं यदपि मिलेत्तद्ग्राह्यं, तथेति कृत्वा तौ विहरमाणौ सुनंदागृहे समागतौ. तौ समालोक्योद्विग्नया तया प्रोक्तं रुदनशीलोऽयं भवदंगजो भवतैव ग्राह्यः, अस्य दिवारात्रिं रुदतोंऽगजस्योद्विग्नाया मम न किंचिदपि प्रयोजनमस्ति, ताभ्यामपि गुरुवचनं सं· स्मृत्य सर्वसाक्षियुतं तं बालं झोलिकायां निक्षिप्याग्रे चलितं. अथ स बालोऽपि रुदनतो विरराम, क्रमेण च तावुपाश्रये समागतौ. झोलिकां भूरिभारयुतां दृष्ट्वा गुरुणा तस्य वज्र इति नाम वि· धाय साध्वीनामुपाश्रये रक्षितस्ताभिश्च शय्यातरश्राविकायै पोषणार्थं समर्पितः, तत्रोपाश्रये पालनके सुप्तो वज्रो महासतीनां पठनश्रवणेनैकादशांगानि सूत्रार्थतः पठितवान्. गुरवस्त्वन्यत्र विजह्रुः, व· ज्रोऽयं श्राविकागृहे क्रमेणाष्टवार्षिको जातः, तस्य सरससुकोमलवचनैः श्रीसंघोऽप्यत्यंतं प्रमोदं प्राप्तः. अथ सुनंदा स्वकीयांगजमेवंविधं निपुणं मनोहररूपवाग्विलासादियुतं दृष्ट्वा दुर्ललितेव मोहदशां

सा श्राविकायै मुहुर्मुहुः कथयामास, ममांगजोऽयमतो मह्यं समर्पय ? श्राविकयोक्तमेतद्गुरुन्यासोऽस्ति कथमहं तुभ्यं समर्पयामीत्युक्त्वा निराशा शोचनीया सुनंदा मोहवशेन सर्वदा तद्गृहे समागत्यान्येव वज्रं दूरादेव विलोक्य हृदि दूना पुनर्निजगृहे समायाति, चिंतयति च यदि धनगिरिरत्रागमिष्यति तर्हि ममैनं पुत्रं तस्य कथयित्वा गृहिष्यामीति विचिंत्य सा घनाघनमिव तदागमनं प्रतीक्षमाणा स्थिता, इतस्तदाशागुणाकृष्टा इव धनगिर्यादियुताः श्रीसिंहगिरिसूरयस्तत्र समागताः, हृष्टा सुनंदा द्रुतमुपाश्रये समागत्य धनगिरितः पुत्रं मार्गयामास. धनगिरिणोक्तं हे महानुभावे तदैव त्वया बहुजनसाक्षिकं सोऽस्माकं समर्पितोऽस्ति अतस्ते पुनर्नैव मिलिष्यति. परस्परं विवादो जातः, प्रांते राज्ञोऽग्रे सर्वे गताः, राज्ञोक्तं यस्याहूतो बालो गच्छेत्तस्य समर्पणीयः, द्वितीयदिने राजसभा मिलिता तदा सुनंदा विविधप्रकारसुखभक्षिकावस्त्रालंकारकुतूहलकारिवस्तूनि गृहीत्वा राजसभायां समागता, मुनयोऽपि श्रीसंघयुता वज्रमादाय तत्र समागताः. अथ नृपाज्ञया सुनंदा बहुसुखभक्षिकादिवस्तूनि दर्शयित्वा वज्रमाह्वयामास, तदा वज्रेण चिंतितं यद्यपि माता पूज्या, तस्यै दुःखदानं नैव युक्तं, परं यदि मातरं प्रीणयामि तदा संघापमानं भवेत्, तच्च महद्दूषणं, किंच मम दी·

ज्ञातो वैराग्यमापन्ना मे मातापि दीक्षां गृहिष्यतीति विचार्य स मातुरंतिके नायातः. ततो राजाज्ञ-
या धनगिरिणा वज्रंप्रत्युक्तं हे वत्स अस्माकं पार्श्वे रजोहरणमुखवस्त्रिके स्तः, यदि तवेच्छा भवेत्तदा
गृहाण? तदा वज्रेण रजोहरणं रागाद्यंतरंगारिरजोहरणैकदक्षं संसारसुभटभंगैकमुद्गरं च मन्यमाने-
न द्रुतं गृहीत्वा नृपसभायां नर्त्तितं. तद् दृष्ट्वा संघः प्रमुदितः, सुनंदयापि क्षणं विलप्य कथितं
यदि मे भर्तृपुत्राभ्यां दीक्षांगीकृता तर्हि संप्रत्यहमपि चारित्रं गृहिष्यामीत्युक्त्वा मातृपुत्राभ्यां सिंह-
गिरिगुरुसमीपे दीक्षा गृहीता. प्रांते सुनंदा चारित्रं प्रपाल्य सद्गतिं गता. अथैकदा गुरवो बहिर्गता
आसन् तदा श्रीवज्रस्वामी सर्वसाधूनामुपधीन् गृहीत्वा शिष्यस्थाने च संस्थाप्य मध्यस्थितः स्वयं वा-
चनाचार्य इवैकादशांगपाठान् महता स्वरेण दातुं प्रवृत्तः, इतो गुरवस्तत्रोपाश्रयद्वारं समागताः, म-
हता ध्वनिनैकादशांगवाचनादानपरं वज्रस्वामिनं विज्ञायाश्चर्यगतमानसेन गुरुणा तदक्षोभार्थं मह-
ता स्वरेण नैषेधिकीमुच्चार्योपाश्रये प्रविष्टं. गुरुशब्दं श्रुत्वा वज्रस्वामिना सहसोत्थाय सकलोपधीन्
योग्ययोग्यस्थानेषु मुक्त्वा द्रुतं गुरुसन्मुखमागत्य निजात्मक्षालनमिव गुरुचरणक्षालनं कृतं. अथ
गुरुभिर्वज्रस्वामिज्ञानज्ञापनार्थं सर्वसाधुभ्यः कथितमहं स्तोकदिनावध्यासन्नग्रामे गमिष्यामि, साधु-

भिरुक्तं हे स्वामिन् तर्हि अस्माकं वाचनाः कः प्रदास्यति ? गुरुभिरुक्तमयं वज्रस्वामी युष्मभ्यं वाचनाः प्रदास्यति, साधुभिस्तदाकर्ण्याधिगताश्चर्यैरपि गुरुवचनं प्रमाणमितिमन्यमानैस्तूष्णिं स्थितं. प्रभाते गुरुविहारानंतरं श्रीवज्रस्वामिना सर्वसाधुभ्यस्तथा वाचना दत्ता यथा मासैकपाठोऽपि तैर्दिवसैकमध्ये साश्चर्यं हृग्गोचरीकृतः, कालांतरे गुरवस्तत्र समागतास्तैः पृष्टाश्च शिष्या वज्रस्वाम्यधिगतवाचनाप्रशंसां चक्रुः, ततो गुरुभिः श्रीवज्रस्वामिने वाचनाचार्यपदं दत्तं. अथैकदा परिवारयुता गुरवोऽवंतींप्रति प्रस्थिताः, मार्गे श्रीवज्रस्वामिपूर्वभवमित्रतिर्यग्जृंभकदेवैः श्रावकरूपं कृत्वाऽहारकृते श्रीवज्रस्वामिनो निमंत्रिताः, परं तैर्देशकालानुमानादिभिस्तं देवपिंडं विज्ञाय न गृहीतस्तदा तुष्टैस्तैस्तस्मै वैक्रियलब्ध्याकाशगामिनीविद्ये प्रदत्ते. क्रमेण गुरुवचनतस्तेन श्रीभद्रगुप्ताचार्यपार्श्वाद्दशपूर्वाणि पठितानि. तदा तिर्यग्जृंभकदेवकृतमहोत्सवपूर्वकं गुरुभिस्तस्याचार्यपदं दत्तं. क्रमेण श्रीसिंहगिरिसूरीणां स्वर्गगमनानंतरं वज्रस्वामी निजचरणन्यासैर्भूपीठं पावयन्ननेकभव्यजीवकल्पपादपान्निजोपदेशामृतधाराभिः सिंचयन् विजहार. इतः पाटलीपुत्रनगरे धनश्रेष्ठिनो धारिणीभार्याकुक्ष्युद्भवारूपनिर्जितनिर्जरांगना रुक्मिण्यभिधाना पुत्री वर्त्तते, सा निजगृहनिकटस्थोपाश्रये साध्वीभ्यः शा-

स्त्राध्ययनं करोति. अथैकदा साध्वीमुखात् श्रीवज्रस्वामिनो रूपादिगुणवर्णनं निशम्य मुग्धतया तयैवं प्रतिज्ञा कृता यदस्मिन् भवे मम भर्त्ता श्रीवज्रस्वाम्येव भवतु. तत्पित्रा तत्प्रतिज्ञां विज्ञाय तस्यै कथितं हे मुग्धे स वज्रस्वामी तु वीतरागो निस्पृहो भवभीतः संसारसागरतरणैकबद्धकक्षो विषयपराङ्मुखो वर्त्तते. इतः श्रीवज्रस्वाम्यपि विहरन् पाटलीपुत्रनगरे समागतस्तदा स धनश्रेष्ठी शतकोटीदीनारद्रव्यविविधालंकारवस्त्रादिभिर्युतां तां रुक्मिणीं पुरस्कृत्य श्रीवज्रस्वामिसमीपे समागत्य कथयामास हे स्वामिन्नियं मे पुत्री भवद्गुणगणाकृष्टहृदया भवंतमेव परिणयितुं गृहीताभिग्रहा वर्त्तते, तदेतद्द्रव्ययुतां तां स्वीकुरु? गुरुणोक्तं हे महानुभाव धनकन्ययोर्लोहशिलानिर्मितनौनिभयोः संसारसागरतरणैकाभिलाषस्य मे प्रयोजनं नास्ति. तत् श्रुत्वा विषण्णया रुक्मिण्योक्तं हे स्वामिन् तर्हि मया कृता प्रतिज्ञा कथं पूर्यते? गुरुणोक्तं यदि तव ममोपर्येव रागो वर्त्तते तर्हि त्वमपि मयाचीर्णमेव पंथानमनुसर? किमेभिरसारैः क्षणविध्वंसिविषयजन्यसौख्यैः? किं च प्रांते रागाद्यंतरंगारिनिकरैरप्यगम्यायां मोक्षनगर्यां गत्वा तत्रावां मिलित्वा निःशंकं निर्भयं शाश्वतानंताभंगुरानंदसंदोहयुतं सुखास्वादं लभिष्यावहे, कृते चैवं तव प्रतिज्ञापि पारं प्रयास्यति. इति श्रुत्वा प्रतिबुद्धया तया

वैराग्यं प्राप्य तत्सकलद्रव्यव्ययपुनमहोत्सवपूर्वकं दीक्षा गृहीता. अथैनो द्वादशवार्षिको दुष्कालः समागतस्तदा धान्याद्यभावतः सकलसंघो दुःखभाग्बभूव. कृपालुः श्रीवज्रस्वामी निजविद्याप्रभावतः सकलसंघं काष्टपट्टे समारोप्याकाशमार्गेण सुभिक्षयुतायां नगर्यां समागतः, तत्र पर्युषणापर्वणि बौद्धमतानुयायिराज्ञा द्वपत्तावतो जिनमंदिरे पुष्पनिषेधः कृतस्तदा संघाज्ञया श्रीवज्रस्वामी जिनशासनप्रभावनार्थं निजविद्याबलेन नंदनवनाद्धिंशतिलक्षादिव्यपुष्पाण्यानयत्. तद् दृष्ट्वा प्रतिबुद्धेन राज्ञा जैनधर्मोंगीकृतः, अथ श्रीवज्रस्वामिनो निजशिष्यं वज्रसेनं गणं समर्प्याकथयन् यदा त्वं सोपारकनगरे लक्षमूल्यपाकतो भिक्षां लभसे तद्दिनतः सुकालो भविष्यतीति कथयित्वा स्वयमनशनं प्रतिपद्य स्वर्गं गताः, अथ श्रीवज्रसेनसूरिरपि विहरन् क्रमेण सोपारकं प्राप्तस्तत्र च तेन लक्षमूल्यपाकतो भिक्षा लब्धा गतश्च दुष्कालः, श्रीवज्रसेनसूरीतो नागेंद्रचंद्रनिर्वृत्तिविद्याधराख्याश्चत्वारः शाखा निर्गताः ॥ इति श्रीशीलकुलके वज्रस्वामिकथा ॥

गाथा—मुणिउं तस्स न सक्का । सद्धस्स सुदंसणस्स गुणनिवहं ॥ जो विसमसंकडेसुवि । पडिउवि अखंडसीलधरो ॥ १४ ॥ व्याख्या—तस्य सुदर्शनश्रेष्ठिनः श्रावकस्य गुणनिवहं ज्ञातुं पं

क्षिता अपि समर्था न, यो महानुभावो विषमसंकटे पतितोऽप्यखंमशीलधारकः संजातः ॥ १४ ॥ किं तस्य कथा चेत्थं—अंगदेशे चंपानगर्यां दधिवाहनो राजा, तस्य रूपनिर्जितरंभाऽभयानामभार्या. च तस्यामेव नगर्यां ऋषभदासाख्यः श्रेष्ठी, तस्य भार्याऽर्हद्दास्यभिधानास्ति. तयोर्गृहे सुभगाभिधो गोमहिष्यादिपालको गोपालोऽस्ति, स सर्वदा गोमहिष्यादिचारणार्थं वने याति, अथैकदा वनात्प्रत्यागच्छमानेन तेनैको निर्वस्त्रः शीतपरीषहं गृह्णन् प्रतिमास्थो मुनिर्दृष्टः, सुभगो गृहमागत्य तत्साधुशीतकष्टं स्मरन् रात्रिं कथंचिदतिक्रम्य प्रभाते पुनर्गोमहिष्यादियुतस्तत्र वने समागतः, मुनिं च तथैव ध्रुवमिव तत्र निश्चलं दृष्ट्वा हृदि चमत्कृतः, तावन्मुनिः 'नमो अरिहंताणं' इत्युच्चरन्नाकाशे समुत्पतितः, तदा सुभगेन चिंतितं 'नमो अरिहंताणं' इति नूनं गगनगामिनी विद्या संभवतीति विचार्य स दिवारात्रिं तदेव पदं जल्पति. अथैकदा वर्षाकाले तस्मिन् गोमहिष्यादियुते वने स्थिते सति नद्यां जलपूरं समागतं, तदा पशवस्तु तरित्वा परपारं प्राप्ताः, सुभगस्तु तटिनीतटस्थित एव चिंतयति मम पार्श्वे या गगनगामिनी विद्या वर्त्तते, तस्या अद्याहं परीक्षां करोमीति ध्यायन् 'नमो अरिहंताणं' इत्युच्चरन्नद्यां पपात, इतो जलांतःस्थखदिरकाष्ठाग्रेण विद्धो मृत्वा नमस्कारध्यानमाहा-

त्म्येनार्हद्दासीकुक्षौ पुत्रत्वेनोत्पन्नः, तस्या गर्भानुभावतो धर्ममयदोहदाः समुत्पन्नाः, संपूर्णसमये पुत्रजन्म जातं. सर्वांगसुंदरं च तं दृष्ट्वा तस्य सुदर्शन इति नाम दत्तं. क्रमेण यौवनं प्राप्तोऽसौ पित्रा मनोरमया कन्यया सह परिणायितः, जैनधर्माभिलाषैकमानसेन तेन गुरुसमीपे परस्त्रीभोगनियमो गृहीतः. अथ तत्रैव नगरे कपिलनामैकः पुरोहितो वसति, तेन सह सुदर्शनस्य प्रीतिर्जाता. अथैकदा पुरोहितभार्याकपिला सुदर्शनस्य मनोहरं रूपं दृष्ट्वा मदनातुरा जाता. कपिले ग्रामांतरं गते सति सैकदा सुदर्शनसमीपे समागत्य कथयामास भो सुदर्शन तव मित्रशरीरेऽद्याकुशलमस्त्यतोऽसौ त्वां मिलनार्थमाह्वयति. तत श्रुत्वा सरलः सुदर्शनो मैत्र्यगुणाकृष्ट इव द्रुतं तया सह मित्रगृहे समागतः, सुदर्शने गृहांतः समायाते सति कपिलया गृहकपाटौ दत्तौ. सुदर्शनेन चिंतितं नूनमेतद्ब्रह्मादीनामप्यगोचरं स्त्रीचरित्रं दृश्यते. इतः कपिला स्फारशृंगारा नानाविधहावभावान् दर्शयंती निजांगोपांगान् प्रकटीकुर्वंती मारविकाराविर्भावकलितैर्विविधवचनैस्तस्मै भोगप्रार्थनां चकार. तदावसरज्ञेन सुदर्शनेनोक्तं हे कपिले एतत्कार्यं जगति कस्य प्राणिनः प्रियं नास्ति ? परं त्वया तु सर्वथैवायं मिथ्या प्रयत्नः कृतो यतोऽहं क्लीबोऽस्मि. तत श्रुत्वा गलितमदनविकारया तया सद्यो गृह-

कपाटौ समुद्घाटितौ, तदा सुदर्शनोऽपि द्रुतं ततो निःसृत्य व्याधपंजरमुक्तपक्षीव निजगृहे समायातो गृहीतश्च तेनाद्वितीयेन परगृहगमने नियमः. इतश्चैकदा विश्वेऽपि नगरजना इंद्रमहोत्सवे समागते वनमध्ये गंतुं प्रवृत्ताः, अभयाराज्ञ्यपि कपिलायुता सुखासनस्थिता वने चचाल. मार्गे ताभ्यां पंचांगजपरिवृता तांबूलचर्वणारुणाधरपल्लवा स्तनफलस्तबकान्विता विकसितहास्यकुसुमोत्करा जंगमा कल्पवल्लीव सुदर्शनभार्या मनोरमा दृष्टा. तां भूरिपुत्रवतीं दृष्ट्वा साधारणस्त्रीस्वभावतः कपिलयाऽभयायै पृष्टं हे सखि कस्येयं भार्या वर्त्तते ? अभययोदितमियं पंचपुत्रोपेता सुदर्शनश्रेष्ठिभार्यास्ति. तदाश्चर्यं गतया कपिलया हसित्वोक्तं हे सखि क्लीबस्यापि किं संततिः संभवति ? अभययोक्तं त्वया कथं ज्ञातं यत्सुदर्शनः क्लीबोऽस्ति ? तदा तयाप्यतिस्नेहेन स्वकीयः सर्वोऽपि वृत्तांतस्तस्यै कथितः, तत् श्रुत्वा हसित्वाभययोक्तं हे सखि त्वमीदृशी चतुरापि तेन धूर्त्तेन वंचिता, नूनं स परस्त्रीसंगे एव नपुंसकोऽस्ति, स्वगृहे गृहिण्याः पुरतो नपुंसको नास्त्येव. तत् श्रुत्वा हास्यकोपकलितया कपिलया प्रोक्तं हे भगिनि मम चातुर्यं तु भस्मनि हुतमिव निरर्थकं गतं, परं यदि संप्रति त्वं चेत्सुदर्शनं वंचयेस्तदैवाहं तवापि चातुर्यं सत्यं जानामीत्युक्ता साभिमाना राज्ञ्यपि तत्कार्यार्थं प्रतिज्ञां

चकार. अथ कतिचिद्दिवसानंतरं राज्ञ्या निजधात्रीमातुः पुरो निजप्रतिज्ञावार्त्ता कथिता. धात्र्या प्रोक्तं त्वं चिंतां मा कुरु? तवेमां प्रतिज्ञामहं पूरयिष्यामीत्युक्त्वा तामाश्वासयामास. अथ क्रमेण त· या ज्ञातं यत्सुदर्शनोऽष्टमीप्रमुखपर्वणि पौषधं गृहीत्वा कस्मिंश्चिच्छून्यगृहे कायोत्सर्गस्थस्तिष्ठति. अथ कार्त्तिकपूर्णिमायां कौमुदीमहोत्सवे समागते सति राजादिनगरलोका वनमध्ये गताः, राज्ञी तु नि· जदेहापाटवमिषेण निजप्रासादे एव स्थिता. अथ धात्री प्रथमत एव निर्मितां सुदर्शनसदृशीं काष्ट· मयीं प्रतिमां सुखासने संस्थाप्य सखीभिः परिवृता यक्षप्रतिमोत्सवमिषं कुर्वाणा राजदुर्गप्रतोल्या ब हिर्निर्गता. प्रतोलीरक्षकैश्च सा काष्टमयी यक्षप्रतिमा दृष्टा. बहिरागत्य तां प्रतिमां गुप्तापवरके संस्था· प्य शून्यगृहे कायोत्सर्गस्थं सुदर्शनं मार्जारी मूषकमिवोत्पाट्य सा तस्मिन् सुखासने स्थापयामास, पुनस्तेनैव मार्गेण राजदुर्गप्रतोल्यां समागता, सविश्वासैरारक्षकैरनिवारिता सुदर्शनयुतं सुखासनं रा· ज्ञीसमीपे समानयत्. राज्ञी तं दृष्ट्वा हृष्टा सती विविधहावभावान् प्रदर्शयंती कटाक्षविक्षेपपूर्वकं त· स्मै भोगप्रार्थनां चकार. सुदर्शनस्तु मेरुरिव तस्या विविधवचनप्रपंचचंडवातैरक्षुब्ध एव कायोत्सर्ग· ध्याने स्थितः, तदा तया निर्लज्जया स्वकीयवस्त्राणि परित्यज्यानेकविधानुकूलोपसर्गास्तस्य कृतास्त·

थापि तं निश्चलं ज्ञात्वा तया नानाविधभयवचनानि कथितानि. परं सुदर्शनस्तु चतुःप्रहरान्याव त्कायोत्सर्ग एव तस्थौ. अथ प्रातःकाले यदा नृपागमनावसरो जातस्तदा निःकृपया तया निजदेहं स्वनखैर्विदार्य वस्त्राभूषणानि च त्रोटयित्वा निजदुराचरणोद्घोषणं कुर्वतीव पूत्कारं चकार. तत्क्षण मेव प्राहरिकैस्तत्रागत्य कायोत्सर्गस्थः सुदर्शनो दृष्टो ज्ञापितश्च तैर्नृपाय. नृपोऽपि तत्रागत्य सुदर्श नं दृष्ट्वा चिंतितवान् यदमृतादपि विषप्रकटीभवनं न संभवतीति विचार्य राज्ञा सुदर्शनस्तद्वृत्तांतं पृष्टः, सुदर्शनेन राज्ञीदयया किमपि न जल्पितं. तदा राज्ञानुमितं नूनमेष नीतिपथभ्रष्टो विज्ञाय ते. इति विचिंत्य राज्ञा दुर्गपालायादिष्टं यदेनं नगरमध्ये विडंब्य शूलायामारोपयेति. राज्ञ आदे शमासाद्य यमदूतैरिवातिभयानकैर्दुर्गपालसेवकैः स कचेष्वाकृष्य बहिर्निष्कासितस्ततो मुंडितार्धम स्तकं कंठस्थापितार्कपुष्पमालं कृतरक्तांजनललाटतिलकं शिरोधार्यमाणसूर्पछत्रमेवंविधविविधविडंब नापूर्वकं सुदर्शनं रासभोपरि समारोप्य ते राजमार्गे चेलुः, इतस्तं वृत्तांतं श्रुत्वा तद्भार्यया मनोरम या चिंतितं चंद्रादपि कदाचिदंगारवृष्टिर्भवेत् परं मम भर्त्तुः परस्त्रीलंपटत्वमसंभवितमेवेति विचार्य सा गृहदेवालये गत्वा जिनं पूजयित्वा कथयामास हे शासनदेवि मम भर्त्तुः सांनिध्यं कार्यमित्युक्त्वा

सा कार्योत्सर्गे तस्थौ. तत्क्षणमेव शासनदेव्या प्रकटीभूय तस्यै कथितं हे महासति त्वं चिंतां मा कुरु? अहं तच्छीलमाहात्म्यात्सांनिध्यं करिष्यामीत्युक्त्वा साऽदृश्या बभूव. अथैवं विडंब्यमानं सुदर्शनं ते शूलीसमीपे समानीय तस्यामारोपयामासुः, तत्क्षणमेव सा शूली सिंहासनरूपा जाता, ततस्तैस्तस्मै खड्गादिप्रहारा दत्तास्ते प्रहारा अप्यलंकारतां भेजुः, अथ तैर्दुर्गपालसेवकैस्तद्वृत्तांतो राज्ञे निरूपितस्तदा राजा स्वयं तत्रागत्य तथास्थितं च सुदर्शनं दृष्ट्वा प्रणामं कृत्वा स्वापराधं क्षामयामास, सन्मानपुरस्सरं च तं तद्गृहे प्रेषयामास. ततो राजा तत्सत्यवृत्तांतं विज्ञायाऽभयां गृहान्निष्कासयितुं लग्नस्तदा सुदर्शनेनागत्य राजानं च विज्ञप्य तस्यै अभयदानं दापितं. किंतु लज्जया विषण्णीभूतया तया गलपाशेनात्मघातः कृतः। अथ तस्या धात्रीमानापि राज्ञा नगरान्निष्कासिता पाटलीपुत्रे देवदत्तागणिकागृहे स्थिता. कियता कालेन सुदर्शनो वैराग्यमासाद्य दीक्षां गृहीत्वा पाटलीपुरे समागतः, तदाऽभयाधात्री तमुपलक्ष्य कपटश्राविकीभूयाहारदानमिषेण देवदत्तागृहे समानीय देवदत्तायुता तस्य नानाविधोपद्रवांश्चकार. किंतु तं निश्चलं विज्ञाय संध्यायां स्वयमेव मुमोच. सुदर्शनमुनिरपि स्मशाने गत्वा कायोत्सर्गेण तस्थौ. तत्र व्यंतरीभूतोऽभयाजीवः पूर्ववैरेणागत्य तंप्र·

त्यनेकानुपसर्गांश्चकार, किंतु शुक्लध्यानेन सुदर्शनमुनिना केवलज्ञानमासादितं. देवैश्च महोत्सवः कृतः, अभयाजीवव्यंतर्यापि सम्यक्त्वमंगीकृतं, देवदत्ताभयाधात्रीमात्रादिभिश्च श्रावकत्वमंगीकृतं. क्रमेण च सुदर्शनकेवली मोक्षं गतः ॥ इति श्रीशीलकुलके सुदर्शनश्रेष्ठिकथा ॥

गाथा—सुंदरि सुनंद चिल्लण—मणोरमा अंजणा मिगावईअ ॥ जिणसासणसुपसिद्धा । महासइओ सुहं दिंतु ॥ १५ ॥ व्याख्या सुंदरी सुनंदा चिल्लणा मनोरमा अंजनासुंदरी मृगावती, आदिशब्दादन्या दमयंतीप्रमुखा महासत्यो ज्ञातव्याः, जिनशासनमध्ये प्रसिद्धास्ता महासत्यः सुखं ददतु. ॥ १५ ॥ अत्र सुंदरीकथा तपःकुलके विख्यातास्ति, श्रीवज्रस्वामिमातुः सुनंदायाः कथा वज्रस्वामिकथायां कथिता यया भर्तुर्वियोगेऽपि शुद्धं शीलं पालितं. सुदर्शनश्रेष्ठिभार्यामनोरमायाः कथा सुदर्शनश्रेष्ठिवृत्तांते कथिता. अथ चिल्लणांजनासुंदरीमृगावतीनां कथाः कथ्यंते, तत्र प्रथमं चिल्लणायाः कथा प्रारभ्यते—विशालायां नगर्यां श्रीवीरप्रभुमातुलश्चेटकाभिधो राजा राज्यं करोति. तस्य च सप्त पुत्र्यो वर्त्तंते, चेटकराज्ञा द्वादश श्रावकव्रतानि गृहीतानि. अथ तस्य सप्तपुत्रीमध्यात्सुज्येष्ठाचिल्लणाभिधाने द्वे पुत्र्यौ कुमारिके आस्तां. श्रेणिकेन सुज्येष्ठां मनोहररूपां निशम्य चेट-

कंप्रति दूतं प्रेष्य सा मार्गिता, किं तु न्यूनकुलत्वेन चेटकः श्रेणिकाय तां नार्पयत्. ततोऽभयकुमारः सुगंधितैलविक्रयकारकवेषं धृत्वा वैशाल्यां समागत्य चेटकराजद्वाराग्रे आपणं कृत्वा स्थितः, ततो यदा सुज्येष्ठाया दासी तैलग्रहणार्थं समायाति तदा स स्तोकमूल्येन बहुतैलं ददाति श्रेणिकचित्रप्रतिकृतिं च दर्शयति. तदनंतरं दासी तां प्रतिकृतिं सुज्येष्ठायै दर्शयामास. सापि श्रेणिकराजप्रतिकृतिं दृष्ट्वा मोहिता, ततस्तया बुध्या ज्ञातं नूनं मदानयनकृतेऽत्राभयकुमारः समागतोऽस्तीति विचिंत्य तया लेख लिखित्वाऽभयकुमाराय ज्ञापितं यदि त्वं प्रवीणोऽसि तदा मां श्रेणिकेन सह मेलय ? ततोऽभयकुमारेण प्रछन्नतया सुज्येष्ठायाः प्रासादावधि सुरंगैका कारिता. तन्मध्ये रथस्थः श्रेणिकः सुलसाया द्वात्रिंशत्पुत्रैः सह समागतो दत्तश्च संकेतः सुज्येष्ठायै, तयोक्तं ममाभरणकरंडकं गृहीत्वाधुनैवागछामीत्युक्त्वा त्वरितपदैः सा प्रासादमध्ये समागता. तदा चिल्लणा तामतित्वरमाणां विलोक्यापृछद् हे भगिनि त्वं कथं व्याकुला दृश्यसे ? सुज्येष्ठया चिंतितं भगिन्यै कथयित्वैव गछामीति विचार्य सा सर्वमप्युदंतं कथयित्वाभूषणकरंडकं गृहीतुमपवरकमध्ये गता. तमवसरं प्राप्य द्रुतं चिल्लणा सुरंगायामागत्य श्रेणिकरथे समारूढा, विह्वलतया श्रेणिकेनापि तामनुपलक्ष्य रथो नोदि-

तः, इतः सुरंगायामागता सुज्येष्ठा रथमनालोक्य प्रासादे च चिल्लणामप्यदृष्ट्वा पूत्कारं चकार, ततः, क्षणमेव चेटकराजसेवकैः सुरंगायां प्रविश्य पृष्ठस्थसुलसाद्वात्रिंशत्पुत्रा मारिताः, इतोऽविलंबं रथं प्रेर्यमाणः श्रेणिकश्चेल्लणायुतो राजगृहे समागतः. कृतं च चेल्लणया सहैव तेन पाणिग्रहणं. पश्चात्सुज्येष्ठया वैराग्येण श्रीवीरप्रभुसमीपे दीक्षा गृहीता. अथ चिल्लणायाः कोणिकहल्लविहल्लाख्यास्त्रयस्तनयाः संजाताः. श्रीवीरेण ता सप्तापि भगिन्यः सतीत्वेन व्याख्याताः, श्रेणिकोऽपि क्षायिकसम्यक्त्वधारी वर्त्तते. अथैको द्विजजीवो मृत्वा दर्दुरो जातः स भगवद्वंदनार्थमागच्छन् पथि श्रेणिकाश्वखुरेण मृतः श्रीवीरध्यानतो देवश्च जातः, अथैकदा देवसभायां सौधर्मेंद्रेण श्रेणिकसम्यक्त्वप्रशंसा कृता, तदश्रद्दधानेन तेन कुष्टिरूपं कृत्वा प्रभुपार्श्वे समागत्य प्रभोः स्पर्शः कृतः, मत्स्यजालधारिसाधुरूपं कृतं, गर्भिणीसाध्वीरूपं च कृतं, एवं तेन बहुधा श्रेणिकसम्यक्त्वपरीक्षा कृता, परं तं निश्चलं विज्ञाय संतुष्टेन तेन श्रेणिकायैको हारो गोलकद्वयं च दत्तं. श्रेणिकेन स हारश्चेल्लणायै दत्तो गोलकद्वयं च नंदाराज्ञ्यै समर्पितं, क्रुद्धया नंदया तद्गोलकद्वयं भित्तावास्फालितं, तत्क्षणमेवैकस्मात्कुंडलद्वयं द्वितीयमध्याच्च क्षौमयुगलं निर्गतं, तद् दृष्ट्वा नंदा हृष्टा सती तत्कुंडलद्वयेन चीवरद्

येन च स्वशरीरं भूषयति, चिल्लणा च हारं धारयति. अथैकदाऽभयकुमारेण श्रेणिकं प्रतिबोध्य नं दामातृसहितेन श्रीवीरसमीपे दीक्षा गृहीता, कुंमलयुगलं चीवरयुगलं च चिल्लणापुत्रहल्लविहल्लाभ्यां समर्पिते, एकदा श्रेणिकेन कोणिकाय राज्यं दातुं चिंतितं, सेचाणकहस्तिहारौ च हल्लविहल्लाभ्यां दत्तौ. तद् दृष्ट्वा क्रुद्धेन कोणिकेन कालादिदशकुमारैः सहालोच्य श्रेणिकः काष्टपंजरे निक्षिप्तः, स्वयं च राज्ये स्थितः श्रेणिकं सदा कशाप्रहारैस्ताडयति. चिल्लणा महादुःखं दधाति. अथैकदा कोणिकभार्यया पद्मावत्या पुत्ररत्नं प्रसूतं, कोणिकोत्संगस्थेन तेन पुत्रेण भोजनसमये स्थाल्यां मूत्रितं, तन्मिश्रितं भोजनं भुंजानेन तेनोक्तमहो कीदृक् स्वादु धान्यमस्ति? तत् श्रुत्वा चिल्लणया रुदनं कृतं, तदा कोणिकेन पृष्टं हे मातस्त्वं कथं रोदिषि? मात्रोक्तं यदा पूर्वं त्वदंगुली दुःखितासीत् तदा त्वत्पित्रा श्रेणिकेन सा निजमुखे धृतासीत्, स्वपुत्राः सर्वेषां वल्लभाः संति परं त्वं तु पितरं सर्वदा ताडयसीति दुःखेनाहं रोदिमि. तदैव पितृस्नेहोल्लसिताऽर्द्रीभूतमानसः स काष्टपंजरभंगाय कुठारं गृहीत्वा धावितः, श्रेणिकेन तं तथावस्थमागच्छंतं विलोक्य भीतेन तालपुटविषमाघ्रायात्मघातः कृतो गतश्च स प्रथमं नरकं. तद् दृष्ट्वा कुणिको महापश्चात्तापं कुर्वन्नाक्रंदितुं लग्नः, शो·

कातुरेण तेन तन्नगरं त्यक्त्वा चंपानगर्यां वासः कृतः. अथ हल्लविहल्लौ तत्कुंडलाद्याभूषणानि प· रिधाय सेचनकगजस्थितौ नगरमध्ये भ्रमतस्तौ च दृष्ट्वा कोणिकभार्या कोपातुरा स्वभर्त्रे कथया· मास हे स्वामिन्नेतानि वस्तूनि त्वं बलादपि ताभ्यां गृहाण? ततो भार्याप्रेरितेन तेन तानि वस्तू· नि ताभ्यां मार्गितानि, ताभ्यामुक्तमावाभ्यां पित्रा समर्पितानि तत्कथं दीयते? तदा कोणिकेन ब· लादपि तानि गृहीतुं यदि प्रयत्नः कृतस्तदा तौ सांतःपुरौ सर्ववस्तूनि गृहीत्वा सेचानकोपरि समारु· ह्य विशालायां निजमातुलचेटकराजसमीपे गतौ. तद् ज्ञात्वा कोणिकेन दूतं प्रेष्य चेटकात्तौ मार्गि· तौ. चेटकेनोक्तं शरणागतार्पणे क्षत्रियाणां धर्मो नश्यति. तदा कोणिको निजसैन्यमादाय विशा· लायां प्राप्तः, चेटकोऽपि सन्मुखमागतः, सैन्ययोर्महायुद्धं जातं, तस्मिन् युद्धे कोट्येकाशीतिलक्षम· नुष्या मृताः, श्रेणिकराज्ञः कालादिदशकुमाराश्चेटकेन मारिताः, प्रांते कोणिकमजेयं ज्ञात्वा चेटकः प्रतोलीं पिधाय विशालायां प्रविष्टः, कोणिको द्वादशवर्षपर्यंतं विशालां परिवेष्ट्य स्थितः, प्रांते स विशालां भंक्त्वा चंपायामागतः, चेटकोऽनशनमाराध्य स्वर्गं गतः, हल्लविहल्लावपि दीक्षामादाय स्वर्गं गतौ. अथैकदा श्रीवीरश्चंपायां समवसृतस्तदा कोणिकेन प्रभुं प्रणम्य स्वगतिः पृष्टा, स्वामिनोक्तं त्वं

षष्टं नरकं प्रयास्यसि ? कोणिकेनोक्तं सप्तमं नरकं के व्रजंति ? प्रभुणोक्तं केचिच्चक्रयाद्या गच्छंति. ततोऽसौ गृहमागत्य चक्रादिकृत्रिमचतुर्दशरत्नानि मेलयित्वा देशसाधनाय निर्गतः, क्रमेण तमिस्रा· गुहोद्घाटनकृतप्रयत्नः कृतमालदेवेन स भस्मसात्कृतो मृत्वा च षष्टे नरके गतः. चेल्लणा तु श्रीवीरप्र· भुसमीपे दीक्षामादाय सद्गतिं गता. ॥ इति श्रीशीलकुलके चेल्लणा कथा ॥ अथांजनासुंदरीकथा कथ्यते—जंबूद्वीपे भरतक्षेत्रे वैताढ्यपर्वते प्रल्हादनपुराभिधं नगरमासीत्, तत्र प्रल्हादाभिधराज्ञः पद्मावतीराज्ञीकुक्ष्युद्भवः पवनंजयाख्यः पुत्रो बभूव. स निजमित्ररुषभदत्तेन सह सुखेन निजसमयं गमयति. अथ तस्मिन्नेव वैताढ्यपर्वतेंजनपुराभिधं नगरं, तत्रांजनकेतुराज्ञोंजनावतीराज्ञीकुक्ष्युत्पन्नां· जनासुंदर्यभिधाना पुत्री सकलकलाकलापोपेता बभूव. यौवनं प्राप्तां तां विलोक्य राज्ञा तस्या वि वाहार्थं मंत्री पृष्टः, मंत्रिणोक्तं दत्तकुमारो रूपादिगुणोपेतोऽस्ति परं केवलिना सोऽष्टादशमे वर्षे मो· क्षगामी प्रोक्तोऽस्त्यतस्तस्मै स्वल्पायुषे कन्या कथं दीयते ? अथैकदा नंदीश्वरयात्रायामनेके विद्या· धराः संमिलितास्तत्रांजनकेतुराज्ञा पवनंजयकुमाररूपमालोक्य तेन महांजनसुंदर्या विवाहो मेलित· स्ततः सर्वे यात्रां विधाय निजनिजगृहे समेताः, पवनंजयेन स्वमित्ररुषभदत्तायोक्तं लग्नदिवसो दूरे·

ऽस्ति. ततोंजनारूपविलोकनायावां तत्र गमिष्यावः, इत्युक्त्वा स प्रछन्नतयाकाशमार्गेण मित्रयुनस्तत्र समागतः, तदांजनसुंदरी निजसखीयुता गवाक्षस्थितासीत्. सख्योक्तं हे अंजने पूर्वं त्वदर्थं यो दत्तकुमारो वरो विलोकितः स स्वल्पायुर्दोषयुतो बभूव. तेन तं विहाय तव विवाहः पवनांजयेन सह मेलितः, अंजनयोक्तं हे सखि स्तोकमप्यमृतं समीचीनं, बह्वपि विषं तु कष्टदमेव. प्रछन्नस्थितः पवनंजयस्तद्वचः श्रुत्वा कुपितः करवालं गृहीत्वा तस्या वधकृते सज्जीभूतः, परं मित्रेण निवारितः, ततस्तौ द्वावपि स्वस्थाने समागतौ. अथ लग्नदिवसे महोत्सवपूर्वकं तयोर्विवाहो जातः परमंतःकोपानलज्वलितं पवनंजयं विज्ञाय कमलसुकुमालांजनासुंदरी म्लानिं प्राप. तथापि सा निजपतिव्रतत्वैकतत्परा भर्तुर्भक्तिं कुर्वाणा स्वकर्मणामेव दोषं ददाति. अथैकदा पवनंजयः पितुरादेशाद्वरुणेन सह युद्धं कर्त्तुं समुद्यतस्य निजमित्रस्य रावणस्य सहायार्थं भूरिसैन्यं गृहीत्वा मित्रयुतः प्रयाणाभिमुखो बभूव. तदासौ निजमातरं नंतुं समागतः, परं तत्र स्थितामंजनां दृष्ट्वाप्यनालोक्य मातरं नत्वा प्रयाणमकरोत्. तदांजनसुंदरी मनस्यतीवदूना नयनांबुदनिर्गताश्रुधाराभिर्निजकर्ममलं क्षालयंतीव रुदनं चकार. अथ पथि पवनंजयोऽनेकराजहंससंचयालंकृतकमलजालं स्फटिकामलजलांतर्ग·

तप्रकटदृश्यमानशौक्तिकेयकदंबकैर्निजौदार्यशंसिसुमानसत्वं प्रकटयंतं पालीगतद्रुमालिचलत्कोमल-
किसलयवृंददंभेनात्यादरपूर्वकं पथिकप्राघूर्णकानाह्वयंतं तटगतानेककोकिलादिपक्षिकृतकलकलारव-
मिषेण जगद्विस्तृतस्वकीयकीर्त्तिबिरुदावलिं ख्यापयंतं मानसाख्यं तडागं दृष्ट्वा विश्रामार्थं तत्र नि-
जसैन्यं स्थापयामास. तत्र भोजनजलक्रीडादि कृत्वा मानससरोरम्यतां च दृष्ट्वा सोऽमंदानंदकलि-
तो बभूव. इतश्चतुर्यामितमपि पतिविरहमसहमाना तेजस्वितारकनिकरदंभतोंतःसुवर्णबिंदुशालिनी-
लांबराच्छादितदेहभागा चंद्रोपलकरजलनिर्झरनिकरधारामिषतो निजनायकविरहोद्भवनयनाश्रूणि
निष्कासयंती काननमध्यभागज्वलदौषधीसमूहच्छद्मना निजहृदयोद्भूतविरहानलं प्रकटीकुर्वती विक-
सितकुमुदकदंबकदंभेन कटाक्षविक्षेपान् कुर्वती निजभोगविलासांतरायभयान्निखिलजगज्जंतुजातं गा-
ढनिद्रावशं कुर्वती प्रथमपतिसंगरंगभंगभयाल्लज्जयेव निजाकाशावासप्रकाशितं दिनकरदीपं विध्या-
पयंती स्वकीयप्रियपतिचंद्रमसमिलनायात्यंतमुत्सुका तमिस्रा समागता. इतः पतिवियोगतश्चक्रवाकी-
कृताक्रंदं श्रुत्वा पवनंजयेन निजमित्ररुषभदत्ताय पृष्टं हे सखे किमियं पक्षिणी विलापान् करोति ?
तेनोक्तं हे मित्र इयं चक्रवाकी निजपतिवियोगदुःखिनी हृदयस्फोटं विलापान् करोति. तत् श्रुत्वा

पवनंजयेनांजनासुंदर्यंतरायकर्मोदयवशादिति मनसि चिंतितं यदि पक्षिणामप्येतादृशं विरहदुःखं भवति तर्हि मया त्यक्तांजनसुंदरी तु द्वादशवर्षवियोगदुःखाक्रांतास्तीति विचार्य तेन मित्रायोक्तं हे मित्र अहं त्वतस्तत्र गत्वांजनसुंदर्या मिलित्वा द्रुतं पश्चादागमिष्यामि, अथ मया विरहदुःखं सोढुं न शक्यते. इत्युक्त्वा पवनंजयो निशायामेवाकाशमार्गेण प्रच्छन्नतयांजनागृहे समागतः, तत्र तेन शय्यायां जलंविना शफरीवेतस्ततो लुठ्यमाना वदनाद्दीर्घोष्णनिःश्वासान् निष्कासयंती नेत्राश्रुजलधाराभिरार्द्रीकृतशय्यावरणा निजपतिनामाक्षरमालां गणयंती चिरपतिविरहदुःखशिथिलीभूतांगोपांगांजनासुंदरी दृष्टा. इतः पवनंजयो द्रुतं तत्र चंद्र इव प्रादुर्भूय तन्मनोगतशोकतिमिरनिकरं दूरीकृत्य चकोरीमिव तामवर्णनीयानंदोल्लसितां चकार. ततः स्वानुभूतचक्रवाकीवार्त्तां तस्यै निवेद्य तया सह गाढालिंगनपूर्वकं भोगविलासं विधाय स प्रभाते प्रस्थितुं लग्नस्तदांजनसुंदर्योक्तं हे स्वामिन्नद्यैव मया ऋतुस्नानं कृतमस्ति, ततः कदाचिन्मे गर्भोत्पत्तिसंभवोऽस्ति. एवं च सति लोका मह्यं कलंकं प्रदास्यंति. तत श्रुत्वा पवनंजयेनोक्तं हे प्रिये त्वं चिंतां मा कुरु? त्वरितमहं समागमिष्यामि, तथापीयं मम नामांकिता मुद्रिका त्वया रक्षणीया कार्यावसरे च सा दर्शनीयेत्युक्त्वा मुद्रिकां च त-

स्यै दत्वा पवनंजयः प्रस्थितः. अथातांजनसुंदरी निजपतिबहुमानेन हृष्टा सती गर्भं दधार, तृतीयमासे गर्भप्रकटीभवनतः श्वशुरादयस्तामसतीं मन्यमाना गृहान्निष्कासयितुं प्रवृत्तास्तदांजनया तदभिज्ञानमुद्रिकादर्शनपूर्वकमुक्तं मम भर्तुरेव गर्भोऽस्ति, परं तैस्तद्वचनममन्यमानैः सा गृहान्निष्कासिता. अथ सा धात्र्या सह नगरान्निर्गत्य पितुर्गृहे गमनोत्सुका जाता, परं तया चिंतितं अस्यामवस्थायां पितृगृहे गमनमप्यनुचितमिति विचार्य सा वने एव स्थिता निजकर्मोदयविपाकं मन्यमाना जिनधर्मध्यानलीनमानसा वनफलानि भुंजाना झरन्निर्झरनिर्मलजलं पिबंती च पूर्णावधौ पुत्ररत्नमजनयत्. इतस्तया वनमध्ये कश्चिदेको मुनिर्दृष्टस्तस्मै तया सपुत्रया वंदनं कृतं. मुनिनापि धर्मोपदेशो दत्तः, ततस्तया निजदुःखानि कथयित्वा मुनिः पृष्टः हे भगवन् किं मयेदृक्कर्म बद्धं येनाहमेवंविधदुःखभाजनं जाता. मुनिनोक्तं पूर्वभवे त्वमेका सपत्नीयुता व्यवहारिजायासीत्, तस्यास्ते सपत्न्या जिनधर्मानुरागत्वाज्जिनप्रतिमापूजनानंतरं भोजनकरणे नियमोऽभूत. त्वयैकदा समत्सरया द्वादशप्रहरावधि तां प्रतिमां रजःपुंजे निक्षिप्य तस्याः पूजनभोजनांतरायः कृतः, पश्चात्तां रुदंतीं दृष्ट्वा त्वया सा प्रतिमा ततो निष्कास्य तस्यै समर्पिता. तत्कर्मणा तवापि द्वादशवर्षावधि प·

तिविरहो बभूव. धर्मद्वेषेण सपत्न्याः कलंकदानेन चाद्यापि त्वं दुःखं सहसे. अथ त्वं धर्मं कुरु? ध-र्मत एव प्राणिनः सुखीभवंति. तत श्रुत्वा तया सम्यक्त्वं गृहीतं. इतोंजनामातुलः सूर्यकेतुनामा वि-द्याधरो विमानस्थो गगनमार्गे गछन् स्खलितविमानोऽधो भूमौ साधुं दृष्ट्वा वंदनायावतीर्णः, तत्र स्थामंजनामुपलक्ष्य तेनात्रागमनकारणं पृष्टं. तयापि सर्वं वृत्तांतं निरूप्य विलापः कृतः, तदा मातुलस्तामाश्वास्य सतनयधात्रीं विमानाधिरूढां विधायाग्रे चलितः, मार्गे मातुरुत्संगस्थितेन तेन बाले-न घंटारवः श्रुतस्तदा घंटामुद्दिश्य यावत्स निजहस्तमग्रे करोति तावत्स विमानात्पतितस्तदांजना वि-विधविलापान् कर्तुं लग्ना. अथ तं पतितं ज्ञात्वा सूर्यकेतुर्यावदधः पश्यति तावत्स बालो यत्पर्वतशि-लोपरि पतितोऽस्ति सा पर्वतशिला चूर्णीभूतास्ति. ततस्तेन विमानं तत्र समुत्तारितं दृष्टश्च तत्रासौ बाल उपद्रवरहितो रममाणः, ततस्तं गृहीत्वा तन्मातुः समर्प्य तस्य शिलाचूर्ण इत्यभिधानं दत्तं. अथ विमानस्थाः सर्वेऽपि निजनगरे प्राप्तास्तत्र मातुलेन महताडंबरेण तस्य जन्ममहोत्सवः कृतः, अंजनापि तत्र स्वकीयमखंडं शीलं पालयंती भर्तृनामाक्षरमालां जपंती धर्मध्यानपरा सपुत्रा तिष्ठ-ति. अथ स पवनंजयो वरुणं विजित्य रावणाज्ञया स्वगृहे समायातः, तत्र तेन निजपत्नीवृत्तांतं वि-

ज्ञाय विह्वलीभूतेन सर्वमपि तृणवत्परित्यज्य विलपितुमारब्धं. ततस्तेन वह्नौ प्रवेशेच्छा कृता. तदा रुषभदत्तेनोक्तं हे मित्र त्वं दिनत्रयं प्रतीक्षस्व ? इतोऽहं तव प्रियां समानयिष्यामीत्युक्त्वा रुषभदत्तो विमानाधिरूढो गगनमार्गेणानेकराजनगराणि पश्यन् पृच्छंश्च सूर्यकेतुगृहे समागतः. पुत्रसहितां चांजनसुंदरीं तत्र दृष्ट्वा हृष्टस्तयापि स निजपतिकुशलोदंतं पृष्टस्तदा तेनोक्तं मम सुहृत्त्वद्विरहेणाग्निप्रवेशं कर्त्तुं समुद्यतोऽस्त्यतस्त्वं शीघ्रं तत्रागच्छ ? ततस्तां विमाने संस्थाप्य स प्रह्लादपुरे समागतस्तां दृष्ट्वा पवनंजयोऽपि प्रमोदं प्राप्तस्ततस्तेन महोत्सवपूर्वकं पुत्रस्य हनुमानिति नाम दत्तं. ततः प्रांते हनुमंतं राज्ये संस्थाप्य पवनंजयोंजनया सह दीक्षामादाय सद्गतिं गतः, हनुमानपि बहुकालं राज्यं प्रपाल्य रामलक्ष्मणयोः सेवां कृत्वा प्रांते बहुपरिवारेण सह दीक्षां गृहीत्वा श्रीशत्रुंजये संस्तारकं विधाय मोक्षं गतः. इति श्रीशीलकुलके अंजनासुंदरीकथा. अथ मृगावतीकथा—वत्सदेशे कौशांब्यां नगर्यां सहस्रानीकसूनुः शतानीकाभिधो नृपो राज्यं करोति. तस्य चेटकराजपुत्री सतीशिरोमणितुल्या मृगावत्यभिधाना राज्ञी वर्त्तते. क्रमेण गर्भवत्यास्तस्या रुधिरभृतकुंभिकायां स्नानकरणदोहदोऽभूत्. परं तत्कार्यं हिंसामयं विज्ञाय तया राज्ञे तद्वृत्तांतो नो कथितः, परं दोहदाऽपूर्ण·

त्वेन कृष्णपक्षीयचंद्रलेखेव सा दिनानुदिनं कार्श्यभावमापन्ना. एवं तां दुर्बलीभूतां विलोक्य राज्ञा तत्कारणं पृष्टं तदा तयोक्तं स्वामिन्न दोहदापूर्णत्वेनाहं दुर्बलीभूतास्मि, परं स दोहदो हिंसामयोऽस्ति ततस्तं कथयितुं मे मनो नाभिलषति. बह्वाग्रहेण पृष्टया तया निजदोहदो ज्ञापितस्तदा राज्ञोक्तं हे प्रिये त्वं चिंतां मा कुरु? यथा तव दोहदः सुखेन पूरयिष्यते तथाहं करिष्यामि. अथ राज्ञा मंत्रिणमाहूय तद्दोहदपूरणोपायः पृष्टस्तदा मंत्रिणोक्तं स्वामिन्न कुसुंभरसैः कुंडिकामापूर्य तस्यां राज्ञी सुखेन स्नानं करोतु. अथोक्तप्रकारेण राज्ञी निजदोहदं पूर्णीकृत्य यावत्कुंभिकातो बहिर्निर्गता तावद्गगनगामिना भारंडपक्षिणैकेन सा दृष्टा, ततस्तां मांसपेशीं मन्यमानोऽसौ पक्षिराट् निजचरणद्वयमध्ये समुत्पाट्याकाशे समुत्पतितः, राज्ञी बह्वाक्रंदं करोति सुभटा अपि हाहारवं कुर्वाणा इतस्ततो भ्रमंति, परं क्रमेण स पक्षी तु दृष्टिपथातीतो बभूव. राज्ञा ग्रामनगरदेशपर्वतवनकूपतडागादिषु तस्याः कृते बहुः शुद्धिः कारिता, परं सा न मिलिता. एवं च चतुर्दशवर्षाणि व्यतिक्रांतानि, राजा तु तद्वियोगानलदग्धांतःकरणः कुत्रापि स्वकीयात्मनि सुखं न लभते. अथैकदा तस्यामेव नगर्यां कस्यचित्स्वर्णकारस्य समीपे कोऽपि व्याधः कंकणैकं समादाय विक्रयार्थं समागतः, स्वर्णकारेण त·

महं बहूपकारपूर्वकं द्रव्यादिभिः संतोषयिष्यामि. तत् श्रुत्वा व्याधोऽपि निर्भयो हृष्टः सन् परिवारयुतराज्ञा सह चचाल. कियद्दिवसानंतरं राजा मलयाचले तद्वनं प्राप, तदा व्याधेनोक्तं स्वामिन्ममात्र स्थाने तापसकुमारेण कंकणं दत्तं, किं चेतो निकटे तापसानामाश्रमोऽस्ति, तत्र च मादृशाः पापभारभारितदेहा व्याधास्तापसशापभयेन गंतुं न शक्नुवंति, अतोऽहमस्मात्स्थानादेव पश्चाद्वलिष्ये. तदा राज्ञा बहुधनदानपूर्वकं स पश्चाद्वालितः, अथ राजापि निजपरिवारं तापसाश्रमक्षोभकृते तत्रैव संस्थाप्य स्वयमेकाकी तापसाश्रमंप्रति चलितः, अग्रे गछता तेन परित्यक्तपरस्परवैरान् व्याघ्रमृगादिश्वापदानप्येकत्रस्थाने संभूय मिलितान् दृष्ट्वा निजमनसि चमत्कृतेन राज्ञा चिंतितं नूनमिदं किंचिद्भ्रांतमेव प्रभाविकं स्थानमनुमीयते. इतस्तेनैकतापसयुतोऽतिमनोहरस्तापसकुमारो दृष्टः, राज्ञा तत्समीपे गत्वा प्रणामं च कृत्वा पृष्टं भो महात्मन् कस्यायं कुमारोऽस्ति? तत् श्रुत्वा तापसेनोक्तं शृणु तद्वृत्तांतं. अयं ब्रह्मभूतितापसस्याश्रमोऽस्ति, तस्य शिष्यो विश्वभूतिनामास्ति, स चैकदा चंदनवने समागतस्तत्र च तेन कौसुंभरागाभिषिक्तदेहा महिलैका मूर्छिता दृष्टा, दयया वारिणा सिंचयित्वा च सज्जीकृता. तदा सचैतन्यया तया प्रोक्तं 'हे कौशांबीपते शरणं भव' ततो विश्वभूतिना

सा भगिनीति कृत्वालापिता स्वकीयं मृगावतीति नाम कथयित्वा सकलमपि निजवृत्तांतं निवेदयामास. ततस्तेन सा ब्रह्मभूतितापससमीपे समानीता, तेनापि च सा पुत्रीति कृत्वा मानिता. कियद्दिवसानंतरं गर्भवत्या तया शुभसमये पुत्रैकः प्रसूतस्तस्य जन्मोत्सवानंतरं ब्रह्मभूतिना चिंतितं बालस्यास्य किं नाम दीयते ? इतो 'बालस्यास्य उदयन इति नाम देयं' एवंविधा गगनवाणी जाता. तदा हृष्टेन कुलपतिना तस्य 'उदयन' इति नाम दत्तं. क्रमेण बालोऽसौ सकलकलासंपूर्णो वृद्धिं प्राप्तः सन् महाबलवान् योद्धो जातो हस्तिना सहापि युद्धं करोति, कस्यापि तिरस्कारं न सहते, सोऽयं दुर्धर उदयनकुमारोऽस्ति अहं च सैष विश्वभूतितापसोऽस्मि. अस्य बालस्य माता मृगावत्यप्यधुनात्र समायास्यति, अथैवममृतरसधारातुल्यानि तस्य वचनानि श्रुत्वा शतानीको राजात्यंतं प्रमुदितो हस्तावग्रे कृत्वा तं तापसकुमारंप्रति कथयामास हे पुत्र त्वमत्र ममोत्संगे समागछ ? तत्र श्रुत्वाऽपरिचितेनोदयनेन कथितं विना शतानीकं मां पुत्र इतिकथनपरस्य पार्श्वेऽप्यहं न समागछामि. इतस्तत्र तापसीवृंदपरिवृता तारकगणवेष्टितशशिलेखेव परिहितवल्कलवस्त्रा मृगावती ब्रह्मभूतिकुलपतिप्रणामाय समागता. तां विलोक्य समुपलक्ष्य च गतधैर्येण राज्ञा प्रोक्तं हे प्रिये विर-

हानलदग्धं मां निजनेत्रवीक्षणपीयूषधाराभिः सिंचय ? मृगावत्यपि तमुपलक्ष्य नयनांबुदनिर्गतहर्षाश्रुजलधाराभिस्तस्य विरहाग्निमुपशामयंती चरणक्षालनं कुर्वतीव मौनमालंब्य स्थिता. इत उदयनेन मातुः समीपमागत्योक्तं हे मातः कोऽयं परमस्नेहवान् जनो यो मां पुत्र इत्युक्त्वाह्वयति. मात्रोक्तं हे पुत्र तव सुभाग्याकृष्टोऽयं तव जनकः शतानीको राजा तव मिलनायात्र समागतोऽस्ति, तत श्रुत्वातिप्रमोदं प्राप्त उदयनोऽपि तात तातेति जल्पन् पितुश्चरणे पतितः, शतानीकोपि तमुत्थाप्य स्वोत्संगे स्थापयित्वा चंद्रमसं संप्राप्योदधिरिवोल्लासभावं प्राप्तः, इतस्तापसा एनं वृत्तांतं ब्रह्मभूतिकुलपतये निवेदयामासुः, तदा ब्रह्मभूतिरपि तत्रागत्य निजैकं दक्षिणकरमूर्ध्वीकृत्य कथयामास भो राजन् त्वं दिष्ट्या वर्द्धसे ? साष्टांगप्रणामं विधाय राज्ञोक्तं भो महात्मन् भवत्प्रसादादपारसंसारसागरे पतितं प्रियारत्नं मयाद्य संप्राप्तं. ततः कुलपतिनोक्तं भो इयं मृगावती महासती गंगोरुजलनिर्मलशीला त्वया ज्ञातव्या. इतो राजा तत्र कियत्कालावधि स्थित्वा प्रियापुत्रसहितो निजनगरे समागतः, हृष्टैर्नगरलोकैस्तस्य प्रवेशमहोत्सवः कृतः, शतानीको राजा निजप्रासादे समागत्य मृगावत्या सह केलिकौतुकैश्चिरविरहजं दुःखं दूरीकारयामास. अथैकदा पुत्रयुतसभास्थितस्य नृपस्य पार्श्वे

कोऽपि वीणावादकः समायातः, कथितं च नेन नास्ति स कोऽपि जनो जगति यो मया सह वीणावादं कुर्यात्. तत् श्रुत्वोदयनकुमारेण निजवीणा तथा वादिता यथा सभाजनयुतः स वीणावादकोऽपि महदाश्चर्यं प्राप्तः, हारितश्च कुमारपादयोः पतितस्ततो राज्ञा पृष्टं भो वत्स त्वयेयं कला काभ्यस्ता? कुमारेणोक्तं हे तात? मयैकदा तत्र चंदनवनमध्ये व्याधव्यापाद्यमानः सर्पैको दृष्टः, कृपाप्रादुर्भावार्द्रांतःकरणेन च मया व्याधंप्रति मम मातुः कंकणं समर्प्य तस्मै सर्पायाभयदानं दत्तं. इतोऽसौ सर्पस्तिरोभूय देवीभूतो ममाग्रे समागत्योवाच हे उदयन अहं तव पूर्वभवमित्रमस्मि, ते दयार्द्रभावनश्च तुष्टोऽस्मीत्युक्त्वा स मामेतां वीणां वादनवरदानपूर्वकं दत्वा तिरोऽभूत्. अथैकदा हृष्टेन राज्ञोदयनाय युवराजपदवी दत्ता. इतः कौशांबीनगरीवास्तव्यः सुरप्रियनामा कश्चिच्चित्रकारकः साकेतपुरे गतः, अथ तत्र नगर्यामेका यक्षमूर्त्तिरस्ति, तां मूर्त्तिं राजाज्ञया प्रतिवर्षमेकैकश्चित्रकारश्चित्रयति, स च चित्रकारस्तस्मिन्नेव दिने मृत्युमासादयति, यदा च न चित्रयति तदा सर्वलोकानां मरणसंकटमायाति. तद् दृष्ट्वा राज्ञा सर्वचित्रकाराणां क्रमो बद्धः, अथ यस्य चित्रकारस्य गृहे पूर्वोक्तः कौशांबीवास्तव्यश्चित्रकारः प्राघूर्णकः समायातस्तस्यैव चित्रकारस्य यक्षमूर्त्तिचित्रकृ-

ते तदा वारकः समायातस्ततोऽसौ विलापं कर्त्तुं लग्नः, प्राघूर्णकेन तत्कारणं पृष्टोऽसौ सकल- वृत्तांतं कथयामास. तदा प्राघूर्णकेनोक्तं त्वं मा भयं कुरु? अद्य तव स्थानेऽहं यक्षकार्यं क- रिष्यामीत्युक्त्वा तेन चिंतितं नूनमविधिकृतचित्रतोऽयं यक्षश्चित्रकारं मारयतीति विचार्य स स्नानपू- र्वकं पवित्रवस्त्राणि परिधाय मुखेऽष्टपुटवस्त्रं च बध्ध्वा चित्ररंगद्रव्याणि च पवित्रभाजने स्थापयित्वा लेखिनीं चापि पवित्रीकृत्य भक्तिपूर्वकं यक्षमूर्त्तिं चित्रयामास. ततो निजकरद्वयं योजयित्वा स्तुतिं च कृत्वा तेन विज्ञप्तं भो यक्षराज मदपराधं क्षमस्व? अथ तस्य भक्त्या संतुष्टो यक्षः प्रत्यक्षीभूय तं वरार्थं प्रार्थयामास. चित्रकारेणोक्तं त्वं जीवहिंसां त्यज मह्यं च तां कलां देहि? यथाहं कस्या- पि प्राणिनोंगांशमात्रविलोकनेनापि तस्य संपूर्णरूपालेखनशक्तियुक्तो भवामि. यक्षेण तदुक्तं सर्वं कृतं. अथ स चित्रकारः क्रमेण कौशांब्यां समागत्य राजादेशतो नृपप्रासादं चित्रयितुमारब्धवान्. दैवयोगात्तत्रापवर्गांतःस्थाया मृगावत्या दक्षिणकरांगुष्टस्तेन दृष्टस्तदा तेन कुतूहलतो मृगावत्याः सं- पूर्णरूपं भित्तावालेखितं, अकस्माच्च तस्मिंश्चित्रे राज्ञ्या गुह्यस्थाने मषीबिंदुः पतितस्तदा तेन स बिंदुर्द्विवारं दूरीकृतस्तथापि तृतीयवारमपि तत्रैव मषीबिंदुः पतितस्तदा तेन ज्ञातं यत्तत्र स्थाने नूनं

तिलांकमस्ति. ततस्तेन स बिंदुस्तत्रैव रक्षितः, अथैकदा राजा निजप्रासादचित्राणि विलोकयितुं समागतस्तदा राज्ञ्याश्चित्रं गुह्यस्थानगततिलांकितं विलोक्य चित्रकारं प्रति कुपितः, ततो राजा चित्रकारमाहूय तत्स्वरूपमपृच्छत्, तदान्यैरपि सर्वचित्रकारैरुक्तं स्वामिन्नस्य देवेन तत्संबंधिवरो दत्तोऽस्ति. तदा राज्ञा तत्परीक्षार्थमेकस्याः कुब्जदास्या अंगुष्टस्तस्मै दर्शितस्तदा तेन चित्रकारेण तथाभूतं तस्याः स्वरूपमालेखितं, तथापि क्रुद्धेन राज्ञा तस्य चित्रकारस्य चत्वारो दक्षिणांगुल्यश्छिन्नाः, ततोऽसौ दूनः साकेतपुरे समागत्य यक्षस्य स्तुतिपरो बभूव, तदा यक्षेण तस्य वामकरे चित्रकरणवरो दत्तः, पश्चात्तेन मृगावत्याः सविशेषं स्वरूपमालेख्य चंडप्रद्योताय दर्शितं. तद् दृष्ट्वा व्यामोहितेन राज्ञा शतानीकंप्रति स्वप्रधानं मुक्त्वा मृगावती मार्गिता, परं शतानीकेन स निर्भर्त्स्य निष्कासितः, तदा चंडप्रद्योतो निजसैन्यमादाय कौशांबींप्रति चलितः, इतोऽत्र शतानीकोऽतिसाररोगेण मृतस्तदा मृगावत्या निजशीलरक्षणकृते निजबुद्धेरुपयोगः कृतः, तया चंडप्रद्योताय संदेशः प्रेषितो यन्मम भर्ता तु मृतः, उदयनश्च लघुरस्ति, अतोऽधुना त्वमेव ममाधारोऽसि. परं प्रथमं त्वयोदयननगररक्षणकृते शत्रुभिरप्यजेयो धनधान्यपूर्णो वैशालीवप्रः कार्यः, मोहमूढेन चंडप्रद्योतेन तथैव कृतं.

अथ तस्मिन् वप्रे स्थितया मृगावत्या चंडप्रद्योतंप्रति संदेषः प्रेषितो रे मूर्ख मया त्वेषो वप्रो मम शीलनगररक्षणकृते त्वत्पार्श्वे कारापितोऽस्ति. तत् श्रुत्वा क्रुद्धश्चंडप्रद्योतस्तत्रागत्य वैशालीग्रहणकृत· बहुप्रयत्नोऽपि निष्फलत्वं प्राप. इतो मृगावत्या चिंतितं यदि श्रीवीरप्रभुरत्र समागच्छेत्तदाहं दीक्षिता भवामि. इतः श्रीवीरप्रभुरपि तान्नं विज्ञाय तत्र समवसृतस्तस्यातिशयप्रभावतश्च चंमप्रद्योतस्य मन· सि वैरमुपशमितं, ततो मृगावत्या श्रीवीरप्रभुपार्श्वे दीक्षा गृहीता, ततः प्रभुदेशनां श्रुत्वा प्रतिबुद्ध· श्चंमप्रद्योतो वैशाल्यामुदयनस्य राज्याभिषेकं कृत्वा स्वस्थाने गतः, मृगावत्या महासत्या चंदनबाला· समीपे एकादशांगानि पठितानि. अथैकदा कौशांब्यां श्रीवीरप्रभुवंदनार्थं सूर्यचंद्रौ निजमूलविमान· युतौ समागतौ, संध्याकाले सर्वसाध्व्यः स्वस्थाने गताः, परं मृगावती प्रमादवशेन सूर्यविमानतेजसा रा· त्रावपि दिवसं मन्यमाना तत्रैव समवसरणे स्थिता, इतः सूर्यचंद्रौ स्वस्थाने गतौ, तदा रात्रिं ज्ञात्वा शंकितभीता मृगावती नगरमध्ये चंदनबालासमीपे उपाश्रये प्राप्ता. तदा चंदनबालयोक्तं भो म· हानुभावे एष साध्व्या आचारो नास्ति. तत् श्रुत्वा निजप्रमाददोषं विज्ञाय मृगावती मुहुर्मुहुर्निजा· पराधं क्षामयामास, शुभध्यानतश्च तस्याः केवलज्ञानं समुत्पन्नं, ज्ञानेन तया तमस्यपि सर्प आग·

ब्रन् दृष्टस्तदा तया चंदनबालायै कथितं सर्पः समायाति, चंदनयोक्तं कथं त्वयैतद् ज्ञातं? तयोक्तं भवत्प्रसादान्मम केवलं समुत्पन्नमस्ति. तदा केवल्यासातनाभयाचंदनबालाया अपि क्षामयंत्याः केवलोत्पत्तिर्जाता, क्रमेण च ते मोक्षं गते. ॥ इति ॥

गाथा—अच्चंकारिअचरिअं। दट्ठुण को न धुणाइ किर सीसं ॥ जा अखंडिअसीला। भिल्लवइकयहिआवि ॥ १६ ॥ व्याख्या—अच्चंकारिभट्टायाश्चरित्रं दृष्ट्वा को निजशीर्षं न धुनोति? अपितु सर्वेऽपि धुन्वंति चमत्कारं च प्राप्नुवंति. या अच्चंकारीभट्टा अखंडशीले स्थिता पल्लीपतिकरगता बहुकदर्थनां प्राप्ता, परं तया स्वशीलं रक्षितं. अत्राच्चंकारीकथा—उज्जयिन्यां नगर्यामेको द्विजस्तिलसंग्रहं करोति तेनासौ लोके तिलभट्ट इत्युच्यते. तस्य धनश्रीनामभार्या कुशीला परपुरुषरक्तास्ति, तया चापवरकसंगृहीताः सर्वतिला भक्षिताः। अथैकदा स द्विजो निजक्षेत्रे रात्रौ स्थितोऽभूत्, तदा तया कुशीलया पिशाचिनीरूपं विधाय तत्र गत्वा स भापितः कथितं च तिलान् भक्षयामि वा तिलभट्टं भक्षयामि? तेन भीतेन द्विजेनोक्तं तिलान् भक्षय? ततोऽत्यंतं भयाकुलः स द्विजो द्रुतं गृहे समागत्य मृतः, संबंधिनस्तं वनमध्येऽग्निना ज्वालयामासुः, परं तस्य चितामनु-

पशाम्यैव ते सर्वे गृहं समागताः, इतस्तच्चितोत्पतिताग्निकणतो वनमध्ये दावानलः प्रकटीभूतस्तदा तत्र कायोत्सर्गस्थ एको जैनमुनिर्दग्धः, स च नगरमध्ये समागतस्तदा तस्य चिकित्साकृते नगरस्थितैर्मुनिभिर्लक्षपाकतैलशुद्धिकरणायाच्चंकारीभट्टागृहे समागत्य धर्मलाभो दत्तः, प्रोक्तं च तया भगवन् किमर्थं यूयं समागताः ? साधुभिः प्रोक्तं भो श्राविके लक्षपाकतैलार्थं समागताः स्मः, तत श्रुत्वा सा हर्षिता. इतः सौधर्मेंद्रेण निजसभायामच्चंकारीभट्टायाः क्षमा प्रशंसिता, तदा कश्चिद्देवस्तत्परीक्षार्थं तत्र समागतः. अथाच्चंकार्या दास्यै प्रोक्तं गृहमध्याल्लक्षपाकतैलकुंपिकामानय ? अथ दासी यावत्तां कुंपिकां समानयति तावदहृश्यदेवेन सा कुंपिका पातिता, नष्टं च सर्वं तैलं, अथ द्वितीया तृतीयापि तथैव पातिते, ततश्चतुर्थीमध्यात्तेन साधवे तैलं प्रतिलाभितं. तदा साधुभिरुक्तं हे भद्रे त्वया दास्यै कोपो न कार्यः, तत् श्रुत्वाच्चंकार्योक्तं हे भगवन् मया क्रोधफलानि बहूनि दृष्टानि, तदादितो मम कोपकरणे नियमोऽस्ति. साधुभिरुक्तं त्वया क्रोधफलानि कथं दृष्टानि ? तदा सा बभाण. अस्मिन्नेव नगरे धनश्रेष्ठिनः कमलश्रीभार्यातः समुद्भूतानां सप्तपुत्राणामुपर्यहमच्चंकारीभट्टाभिधाना पुत्री जाता. मातापित्रोरतीववल्लभत्वान्मम कथनकरणतत्परेण सुबुद्धिमंत्रिणा सहाहं परिणायिता. अथैकदा मया मंत्रिणे

कथितं भवद्भिर्निशायां त्वरितमागंतव्यं, तेनापि तत्प्रतिपन्नं. अथ ज्ञाततद्वृत्तांतेन राज्ञैकदा स मंत्री रात्रौ बहुवारं रक्षितः, द्विप्रहरानंतरं स गृहे समागतः परं मया द्वारं नोद्घाटितं, तदा तेनोक्तं हा देव मयेयं कुरंभा क्व परिणीता? तत् श्रुत्वा क्रुद्धाहं द्वारमुद्घाट्य गृहान्निर्गता. मंत्री च गृहे प्रविष्टः, आभूषणयुता च पथि गच्छंत्यहं चौरैर्धृता, चौरपतिश्च मां निजभार्यां कर्त्तुमुत्सुकोऽभूत्परं मयैतन्न मानितं. तदा मम शीलं दृष्ट्वा शापभीतेन तेनाहं सार्थवाहाय विक्रीता. सार्थवाहेनापि भार्याकृते मम गाढप्रार्थना कृता, परं मां दृढचित्तां विज्ञाय क्रुद्धेन तेनाहं बब्बरकुले विक्रीता. तत्रानार्यलोकैर्मम रुधिरं निष्कास्य वस्त्राणि रंजितानि, एवं च प्रतिदिनं करणतोऽहं तत्र दुर्बला जाता. अथैकदा व्यापारार्थमागतेन मम भ्रात्रा बहुद्रव्यव्ययेनाहं तेभ्यो व्याधेभ्यो मृगीव मोचिता, ततस्तेनात्रागत्याहं पुनर्भर्त्रे समर्पिता. अतः कारणात् हे भगवन् मम क्रोधकरणे नियमोऽस्ति. तत् श्रुत्वातिहृष्टः साधवस्तैलमादायोपाश्रये प्राप्ताः, अथ तस्य क्षमागुणेन तुष्टेन देवेन प्रत्यक्षीभूयोक्तं हे सुशीले मया तव क्षमापरीक्षार्थं त्रयो घटा भग्ना अतो मां क्षमस्व? इत्युक्त्वा तस्या घटांस्तैलपूर्णान् सज्जीकृत्य स स्वस्थाने गतः, अच्चंकारीभट्टापि प्रांते क्षमायुक्तशुद्धशीलाराधनपूर्वकं कालं कृत्वा सद्गतौ गता. ॥

इति श्रीशीलकुलके अच्चंकारीजट्टाकथा ॥

गाथा—नियमित्तो नियभाया । नियजणओ नियपिआमहो वावि ॥ नियपुत्तोवि कुसीलो । न वल्लहो होइ लोआणं ॥ १७ ॥ व्याख्या—कुशीलः शीलरहितो निजसुहृद् निजभ्राता निजजनको निजपितामहो वा निजपुत्रोऽपि लोकानां वल्लभो न भवति. ॥ १७ ॥

गाथा—सव्वेसिंपि वयाणं । भग्गाणं अत्थि कोइ पडिआरो ॥ पक्कघडस्सव कन्ना । नाहोइ सीलं पुणो भग्गं ॥ १८ ॥ व्याख्या—प्राणातिपातादिसर्वेषामपि व्रतानां कदाचिदज्ञानतया भग्नानां कोऽपि प्रतीकारोऽस्ति, अर्थात्तेषां प्रायश्चित्तेनापि शुद्धिर्भवति, परं पक्वघटकर्णवद्भग्नं शीलं कदाचिदपि नो सज्जीभवति. तस्मात् शीलं निरतिचारतया पालनीयं ॥ १८ ॥

गाथा—वेआलभूअरक्कस–केसरिचित्तकगइंदसप्पाणं ॥ लीलाइ दलइ दप्पं । पालंतो निम्मलं सीलं ॥ १९ ॥ व्याख्या—वेतालभूतराक्षसकेसरिचित्रकगजेंद्रसर्पाणां दर्पं निर्मलं शीलं पालयन्मनुष्यो लीलया हेलया दलति ॥ १९ ॥

गाथा—जे केइ कम्ममुक्का । सिद्धा सिज्झंति सिज्झिहिंति तहा ॥ सव्वेसिं तेसिं बलं । विसा-

लसीलस्स डुल्ललिअं ॥ २० ॥ व्याख्या—ये केऽपि कर्मनिर्मुक्ताः सिद्धाः सिद्ध्यंति भविष्यत्काले च सिद्धिं प्रयास्यंति तेषां सर्वेषां विस्तीर्णशीलस्य दुर्ललितं विलसितं बलं ज्ञातव्यं ॥ २० ॥

॥ इति श्रीशीलकुलकं समाप्तं ॥

---

॥ अथ श्रीतपःकुलकं प्रारभ्यते ॥

गाथा—सो जयउ जुगाइजिणो । जस्संसे सोहए जडामउडो ॥ तव झाणग्गिपज्जलिअ-कम्मिंधणधूमलहरिव्व ॥ १ ॥ व्याख्या—स श्रीयुगादिजिनो जयतु, यस्य स्कंधे जटामुकुटस्तपोध्यानरूपाग्निना ज्वलितानि यानि कर्मरूपेंधनानि तेषां लहरीव श्रेणिरिव शोभते इति गाथार्थः ॥ १ ॥ यदा श्रीऋषभदेवप्रभुणा दीक्षावसरे लोचः कृतस्तदेंद्रस्य कथनतः पंचमीमुष्टिपरिमिताः केशा अलुंचिता एव रक्षितास्ते च सुवर्णकलशोपरि नीलकमलानीवाशोभंत.

गाथा—संवछरिअतवेणं । काउस्सग्गंमि जो ठिउ भयवं ॥ पूरिअनिअपइन्नो । हरउ दुरिआइं बाहुबली ॥ २ ॥ व्याख्या—वार्षिकं तपः कृत्वा यो भगवान् कायोत्सर्गे स्थितः स पूरितनि·

त्प्रतिज्ञो बाहुबलिनामा मुनिर्दुरितानि पापानि हरतु विनाशयतु. ॥ २ ॥ बाहुबलिकथा पूर्वं श्रीऋषभदेवचरित्रे कथिता.

गाथा—अथिरंपि थिरं वंकं-पि उज्जुयं दुल्लहंपि होइ सुलहं ॥ दुसज्झंपि सुसज्झं । तवेण संपज्जए कज्जं ॥ ३ ॥ व्याख्या—तपःप्रभावेनास्थिरमपि कार्यं सुस्थिरं संपद्यते, वक्रमपि च ऋजु सरलं भवति, दुर्लभमपि कार्यं सुलभं भवति यथाऽभयकुमारेणाष्टमतपसा धारिण्या राज्ञ्या अकालेपि मेघवृष्टिदोहदः पूर्णितः, पुनर्यद्दुःसाध्यमपि कार्यं सुसाध्यं भवति, यथा चक्रिणामष्टमतपसा मागधवरदामप्रभासकृतमालप्रमुखा देवा वशीभवंति, अर्थात्तपसा चिंतितं सर्वमपि कार्यं संपद्यते. ३

गाथा—छठं छठ्ठेण तवं । कुणमाणो पढमगणहरो भयवं ॥ अक्खीणमहाणसीओ । सिरिगोयमसामिओ जयउ ॥ ४ ॥ व्याख्या—षष्टं षष्टेन तपसा पारणं कुर्वन् प्रथमगणधरः श्रीगौतमस्वामी भगवान् अक्षीणमहानसीलब्धियुतो जयतु. लब्धिवान्मुनिर्यद्वस्तुमध्ये यावन्निजदक्षिणांगुष्टं धारयति तावत्तद्वस्त्वक्षीणमेव भवति, स्वयं भुक्ते सति च तत्क्षीयते, सा महानसीलब्धिरुच्यते. ॥ ४ ॥ अथ श्रीगौतमस्वामिवृत्तांतस्त्विवं—मगधदेशे गोर्वरग्रामे वसुमतिनामैको धनाढ्यो द्विजो वसति,

तस्य च पृथ्व्यभिधाना भार्या वर्त्तते. तत्कुक्षिसंभवा इंद्रभूतिरग्निभूतिर्वायुभूतिश्चेति त्रयः गौतम-गोत्रीया पुत्रा आसन्. इतोऽपापायां नगर्यां सोमिलद्विजकारितयज्ञे ते इंद्रभूत्याद्या एकादश याज्ञिका द्विजा निजनिजशिष्ययुता मिलित्वा यज्ञं कुर्वंति. तदा तत्र महसेनवनखंडे श्रीवीरप्रभुः समवसृतो देवैश्च समवसरणं रचितं. तं महिमानं दृष्ट्वेंद्रभूतिः प्रभुं सर्वज्ञमश्रद्दधन् निजपंचशतशिष्यपरिवारयुतः प्रभुसमीपमागतस्ततः स्वामिना तन्मनोगतो जीवसंबंधिसंशयो दूरीकृतस्ततस्तेन वैराग्यमासाद्य निजपरिवारैः सह प्रभोः समीपे दीक्षा गृहीता, एवं च तैः सर्वैरप्येकादशयाज्ञिकद्विजैः प्रभोः समीपे निजसंदेहान् दूरीकृत्य निजनिजपरिवारयुतैर्दीक्षा गृहीता. इंद्रभूतये च प्रभुणा गणधरपदवी दत्ता, तेन द्वादशांगी रचिता, क्रमेण च स श्रीगौतमस्वामी. चतुर्ज्ञानधरो महालब्धिवान्महातपस्वी षष्ठं षष्ठेन पारणं करोति. एकदा श्रीगौतमस्वामिना चंपायामागत्य शालमहाशालादीनां प्रतिबोध्य दीक्षा दत्ता, तैः सह च स यावन्महावीरप्रभुपार्श्वे समायाति तावत्तेषां नवदीक्षितानां केवलज्ञानं पथि समुद्भूतं, ते च तत्रागत्य केवलिपर्षदि समुपविष्टास्तदाश्चर्यं प्राप्तेन गौतमस्वामिना प्रभुः पृष्टः हे भगवन्नेते केवलिपर्षदि कथं समुपविष्टाः ? प्रभुणोक्तं तेषां केवलज्ञानं समुत्पन्नमस्ति.

तदा गौतमेन तान् क्षामयित्वा स्वामिनंप्रत्युक्तं हे भगवन् मम केवलज्ञानं कदा समुत्पत्स्यते ? प्रभुणोक्तं तवापि समुत्पत्स्यते. गौतमेनोक्तं तस्य चिन्हं कथयत ? प्रभुणोक्तं यः कोऽपि निजतपोलब्धिबलेनाष्टापदयात्रां करोति रात्रौ च तत्रैव वसति स मोक्षं गच्छेत्. तत् श्रुत्वा कोडिन्नदिन्नसेवालाख्यास्त्रयस्तापसाः प्रत्येकं पंचशतशिष्यपरिवृत्ता अष्टापदाग्रे समायाताः, तत्रैकोपवासकारिणः प्रथममेखलायां, षष्ठतपःकारिणो द्वितीयमेखलायामष्टमतपःकारिणश्च तृतीयमेखलायां स्थिताः, परं ततोऽग्रे गंतुं शक्ता न बभूवुः, इतः श्रीगौतमस्वामिनं दृढपुष्टशरीरयुतं तत्रागच्छंतं विलोक्य ते चिंतयामासुरेषः श्रीगौतमः शरीरभाराक्रांतः कथमूर्ध्वं गमिष्यतीति चिंतयतां तेषां पश्यतामेव निजतपोलब्ध्या श्रीगौतमः क्षणैकमध्येऽष्टापदोपरि संप्राप्तस्तत्र 'जगचिंतामणीति' चैत्यवंदनं विधाय स जिनालयाद्बहिर्निशायां तत्रैव स्थितः, प्रभाते तत्र मिलितानां विद्याधरदेवानां पर्षदि तेन देशना दत्ता. तदा तत्रायातश्रीवज्रस्वामिजीवतिर्यग्जृंभकदेवः पुष्टशरीरं श्रीगौतमस्वामिनं निरीक्ष्य हसितो यन्मुनयोऽपि किमीदृशाः पुष्टदेहाः संभवंति ? तदा श्रीगौतमेन तस्याभिप्रायं विज्ञाय कंडरीकपुंडरीकसंबंधमाख्याय तत्संदेहो दूरीकृतः, पश्चात्तेन देवेन क्षामितं. ततः पश्चाद्वलमानेन श्रीगौतमेन

पंचशततापसानां दीक्षा दत्ता, तथाऽक्षीणमहानसीलब्ध्या पात्रमेकं क्षीरेण भृत्वाष्टमतपःकारिणां तेषां साधूनां पारणं कारितं, तत्र च तेषां केवलज्ञानं समुत्पन्नं, द्वितीयपंचशतानां च पथि केवलं समुत्पन्नं, तृतीयपंचशतानां च प्रभुसमवसरणे दृष्टे सति केवलमुत्पन्नं. अथ श्रीगौतमेन त्रिंशद्वर्षाणि यावत्प्रभुसेवां विधाय चतुर्ज्ञानयुतेनापि प्रभोः प्रश्नपूर्वकमनेके संशया निवारिताः, अथांत्यचतुर्मासेऽपापायां स्थितेन प्रभुणा निजनिर्वाणसमयं विज्ञाय देवशर्मद्विजप्रतिबोधायासन्नग्रामे श्रीगौतमः प्रेषितः, तं प्रतिबोध्य प्रभाते समागछन् श्रीगौतमो देवोक्तश्रीवीरनिर्वाणवार्त्तामाकर्ण्य क्षणं शून्यचित्तीभूय बालवदनेकान् विलापानकरोत्. ततस्तेन चिंतितमहो वीतरागास्तु निःस्नेहा एव भवंति, अहं तु मृषैव मोहं करोमीत्याद्यनित्यभावनां भावयता केवलज्ञानमासादितं, इंद्रादिभिश्च तस्य महोत्सवः कृतः, सहस्रपत्रकमलं चासनीकृत्य तेन देशना दत्ता, एवं द्वादशवर्षपर्यंतं केवलिपर्यायं पालयित्वा वैभारगिरौ संस्तारकं विधाय स मोक्षं गतः॥ इति श्रीतपःकुलके श्रीगौतमगणधरकथा॥

गाथा—सोहइ सणंकुमारो। तवबलखेलाइलद्धिसंपन्नो॥ निध्धूअखवलयंगुलिं। सुवण्णसोहं पयासंतो॥ ५॥ व्याख्या—स श्रीसनत्कुमारश्चक्री शोभते, यस्तपोबलेन खेलादिलब्धिसंपन्नः

श्लेष्मादिलब्ध्युपेतः सन् केवलं मुखवारिणा स्वांगुलीं विलिप्य देवानां पुरः सुवर्णशोभामप्रकाशयत्. ॥ ५ ॥ सनत्कुमारवृत्तांतस्त्वेवं—कुरुदेशे हस्तिनागपुरे नगरेऽश्वसेनाभिधो राजा, सहदेवी च राज्ञी, तयैकदा चतुर्दशमहास्वप्नसूचितः सनत्कुमाराह्वयस्तनयो जनितः, क्रमेण यौवनाभिमुखस्य तस्य प्रधानपुत्रमहेंद्रसिंहेन सह प्रीतिर्जाता. अथ कदाचिदसौ सनत्कुमारो विपरीतशिक्षिताश्वारूढो महाटव्यां प्राप्तः, पित्रा तस्य शुद्धिकृते बहूपायाः कृताः परं स क्वापि न लब्धस्ततो महेंद्रसिंहस्तच्छुद्धिकरणार्थं प्रस्थितः. अथ वर्षैकानंतरं भूरिभामिनीपरिवारपरिवृत्तं हंसीसंचयसेवितं राजहंसमिवैकस्मिन् सरसि क्रीडंतं सनत्कुमारं दृष्ट्वा स मिलितः, सनत्कुमारोऽपि तं दृष्ट्वातिहृष्टः सन् मातृप्रभृतीनां कुशलोदंतं पृष्टवान्. ततः स्नानभोजनानंतरं महेंद्रसिंहेन पृष्टं भो मित्र त्वयैतावती समृद्धिः कुतो लब्धा ? ततः सनत्कुमारेण विज्ञप्तिविद्यां स्मृत्वा कथितं हे मित्र तदाश्वापहृतोऽहं निरंतरजंबूजंबीरनारंगाम्रादिघनतरुश्रेणिभिर्दिनकरकरनिकरैरप्यगम्यायां सिंहव्याघ्रसूकरादिहिंस्रश्वापदकुलैर्व्याकुलायां सहस्रकिरणात्रस्तघोरतिमिरततिकृतनिवासायां क्वचित्श्रूयमाणगिरिकंदरलीनघोरघूकघूत्कारशब्दायां क्वचित्क्वचिद्दूरतः श्रवणगोचरीभवत्पक्वद्रुमालिललितफलावलिरक्षणवृक्षोपरिबद्धमंचक·

स्थितकृषीवलमुग्धकुमारिकोद्गीयमानगीतमधुरालापायां तुंगगिरिवरझरन्निर्मलजलनिर्झरझंकाररवरम-णीयायां महाटव्यां संप्राप्तः. अथामितश्रमोन्मथितमानसो यावदहं मुक्तवल्गोऽश्वादुत्तरितस्तावदेवाश्वो मृत्वा भूमौ पतितः, तदा विषण्णीभूतोऽहं यावत्पादप्रचारैरग्रे गच्छामि तावत्तृषाक्रांतो मूर्छितो वटवृक्षाधो भूमावपतं. इतो मम पुण्यगुणाकृष्टेन वटवृक्षवास्तव्ययक्षेण मह्यं मानससरःपानीयमानीय पायितं. सचेतनीभूतेन मया पृष्टं त्वं कोऽसि कुतश्चैतत्तिरस्कृतामृतमाधुर्यं त्वया पानीयमानीतं. तेनोक्तमहमेतद्वटवृक्षाधिष्टायकयक्षोऽस्मि, दयया चैतन्मानससरःपानीयमानीय मया तव पायितं. ततो मया कथितं हे यक्षराज मम मानसं मानससरःसलिले स्नानकरणाभिलाषि वर्त्ततेऽतो ममोपरि कृपां विधाय मां तत्र नय? दयालुना यक्षेणाप्यहं तत्र मुक्तः, मयापि तत्र स्फटिकनिर्मलजले स्नानं कृत्वामंदानंदः संप्राप्तः, इतः पूर्वभववैरिणाऽसितनाम्ना यक्षेण सह तत्र युद्धं कृत्वाऽहं तं व्यापाद्य विजयवानभवं. ततोऽग्रे प्रस्थितेन मया भित्तिखचितमणिकरनिकरैरस्तांधकारा अनेके दिव्यावासा दृष्टाः, इतस्तत्र सहसा भानुवेगाभिधेनैकेन विद्याधरेणागत्य स्वागतपूर्वकं मम भोजनादि दत्तं, कथितं च हे कुरुवंशशिरोमणे अश्वसेनतनय ममाष्टौ कन्यास्त्वं परिणय? मयोक्तं त्वं कथं मामुपलक्षसे?

तेनोक्तं वयं वैताढ्यवासिविद्याधराः स्मः. एकदा मया पृष्टेन ज्ञानिनोक्तं यो हि असितयक्षं जेष्यति स त्वदीयकन्यानां भर्त्ता भविष्यति, चक्रवर्त्तित्वं च लप्स्यते, अतोऽद्यासितयक्षजयात्त्वामहं तमेव जानामि. ततोऽहं तत्र ताः कन्याः परिणीय वैताढ्ये समागतस्तत्र च मया चंद्रवेगराज्ञो बकुलमतीप्रमुखकन्याशतं परिणीतं. तावदत्र त्वं मम मिलितः, अथ महेंद्रसिंहेन पृष्टं तेनासितयक्षेण सह तव पूर्ववैरं कथमस्ति ? तदा तेनावलोकिनीं विद्यां प्रयुंज्य कथितं तेन सह मम पंचभववैरमस्ति. कंचनपुरनगरे विक्रमयशोराज्ञो रूपवत्यः पंचशतराज्ञ्य आसंस्तथापि भोगेभ्यः सोऽतृप्त एवासीत्. अथ तत्रैव नगरे नागदत्तव्यवहारिणो विष्णुश्रीनामभार्यासीत्. एकदा गवाक्षस्थां तां विलोक्य राजा व्यामोहितः सन् तां स्वांतःपुरे नीतवान्; कृता च तेन सा पट्टराज्ञी, मंत्रिणानेकप्रकारैः प्रतिबोधितोऽपि स तां न मुमोच. स्त्रीविरहपीडितो नागदत्तो ग्रथिलीभूय विलापान् कुर्वन्नगरमध्ये भ्रमति. अथ तस्यामासक्तेन राज्ञा ताः पंचशतराज्ञ्योऽपि विस्मृतास्तदा ताभिः कार्मणं कृत्वा विष्णुश्रीर्व्यापादिता, ततो राजापि नागदत्तवद्ग्रथिलो जातः संस्तया सहाग्निप्रवेशं कर्त्तुमिच्छति. तदा मंत्रिणः कथमपि नृपप्रतिबोधाय प्रच्छन्नं तत्कलेवरं नगराद्बहिर्वनमध्ये मुमुचुस्ततो द्वितीयदिने

च राजानं तत्र समानीय तत्कलेवरं दर्शयामासुः, तदातिदुर्गंधयुतं शृगालादिभिर्भक्षितं कृमिकुलव्या· कुलं च तन्निरीक्ष्य राज्ञा चिंतितं धिग्मां यदर्थं मया धर्मकुललज्जादि त्यक्तं तत्स्वरूपं त्वीदृशं दृ· श्यते. इति वैराग्यपरेण तेन पुत्राय राज्यं दत्वा सुधर्माचार्यसमीपे दीक्षा गृहीता, निर्मलतपांसि च तप्त्वा तृतीयदेवलोके स देवो जातस्ततश्च्युत्वा रत्नपुरे श्रावककुले समुत्पन्नो जिनधर्माभिधोऽसौ शुद्धसम्यक्त्वं पालयति. अथ स नागदत्तजीवः स्त्रीवियोगतो दुर्ध्यानेन मृत्वा तिर्यग्योनिषु च बहु परिभ्रम्य दरिद्री ब्राह्मणो जातस्तत्र च दुःखगर्भितवैराग्येण स सन्यासी जातः, द्विमासतपः कुर्वन् रत्नपुरे समागतः, तदा तापसभक्तेन राज्ञा स पारणार्थं निमंत्रितो यावज्जनसमूहैर्वेष्टितो महोत्सव· पूर्वकं नगरे समायाति तदा पथि तेन स जिनधर्मश्रावको विलोकितः, तं दृष्ट्वोल्लसितपूर्वभववैरे· ण तेन तापसेन राज्ञे प्रोक्तं यदि त्वमस्य श्रावकस्य पृष्टे स्थालीं संस्थाप्य मां भोजयसि तदैवाहं पारणं करिष्याम्यन्यथा नैव करिष्यामि. तत् श्रुत्वा तद्भक्तो राजा बलात्कारेणापि तं श्रावकमाहूय तस्य पृष्टेऽत्युष्णभोजनस्थालीं संस्थाप्य तापसं भोजयामास. अथ तापसभोजनानंतरं स्थाली यदा दूरीकृता तदा तत्पृष्टत्वक् समुत्तीर्णा, पतितं च तत्र रुधिरं निःसृतं च तस्मान्मांसमपि. अथ स श्रा-

वकः क्षमायुतो गृहमागत्य कुटुंबिनां सर्वेषां च क्षामयित्वा वृद्धपुत्राय च सर्वं गृहभारं समर्प्य स्वयं चारित्रमादाय तुंगिकगिरिशिखरे चतुराहारप्रत्याख्यानपूर्वकं कायोत्सर्गं विधाय षष्टिदिनानि यावत् काकादिजंतुकृतकदर्थनां सहमानः शुभध्यानेन मृत्वा सौधर्मेंद्रो जातः, स तापसश्चाज्ञानतपांसि त-प्त्वा मृत्वा च तस्य वाहनमैरावणो जातोऽवधिज्ञानतश्चेंद्रं निजवैरिणं विज्ञाय निजहस्त्यादिरूपं वि-धाय भापयामास. इंद्रेणाप्यवधिना तं तापसजीवं विज्ञाय वज्रं दर्शयित्वा तस्य तर्जना कृता तदा-सौ भीतः सन् शांतो जातः, ततो मृत्वा तिर्यग्योनिषु बहु परिभ्रम्य सोऽयमसितयक्षो जातः, अहं च हस्तिनागपुरे सनत्कुमारो जातः, तत श्रुत्वा हृष्टेन महेंद्रसिंहेनोक्तं हे मित्र संप्रति चिरविरहदुः-खितयोर्मातापित्रोः समीपे त्वं समागच्छ ? ततः सनत्कुमारोऽपि विमानारूढो निजसकलभार्योपेतो मित्रयुतस्तूर्णं हस्तिनागपुरे समायातस्तदा तमेतादृगृद्धियुतमनेकवधूसहितं च समागतमालोक्य मातापितरावत्यंतं प्रमोदं प्राप्तौ. अथ कतिचिद्दिवसानंतरमायुधशालायां चक्ररत्नं समुत्पन्नं. ततोऽसौ चक्ररत्नानुगः षट्खंडानि साधयित्वा निजनगरे समागत्य चक्रवर्त्तिपदवीं पालयामास. इतो द्विलक्ष-वर्षगमनानंतरमीशानदेवलोकात्कोऽपि महारूपवान् देवः सौधर्मेंद्रसभायामागतस्तस्यातीवमनोहरं रूपं

दृष्ट्वा सभास्थितैर्देवैरिंद्रः पृष्टः, स्वामिन् अस्य देवस्य रूपं केन कारणेनातीवसुंदरमस्ति? इंद्रेणोक्तमनेन देवेन पूर्वभवे आचाम्लवर्द्धमानाभिधं तपः कृतं, तेनासावतीवरूपवानस्ति. पुनर्देवैः पृष्टं स्वामिन्नस्य सदृशमस्त्यन्यस्यापि कस्यचिद्रूपं? इंद्रेणोक्तं भरतक्षेत्रे चतुर्थचक्रिसनत्कुमारस्य रूपमस्मादप्यधिकमस्ति. तत् श्रुत्वा विजयवैजयंताख्यौ देवौ तदश्रद्दधानौ द्विजरूपीभूय तत्र सनत्कुमारनगरे समागतौ. राजद्वारे च समागत्य द्वारपालंप्रति कथयामासतुर्हे द्वारपाल त्वं राजानं कथय यद्भवद्रूपदर्शनोत्कंठया द्वौ द्विजौ परदेशात्समागतौ स्तः, यद्याज्ञा चेत्तर्हि आगच्छेतां. द्वारपालेनापि तथैव विज्ञप्तो राजा तावाह्वयामास. अथ तदवसरे राजा स्नानकरणतत्परोऽभूत्. तस्य रूपं च दृष्ट्वा द्विजीभूतौ तौ देवौ हर्षं संप्राप्येंद्रोक्तं तथ्यमेव मन्यमानौ तस्य प्रशंसामकुर्वतां. तदा चक्रिणोक्तं भो द्विजौ शृंगाराद्याडंबरयुतोऽहं यदि सभायामागच्छामि तदैव युवाभ्यां मम रूपं विलोकनीयं. ततस्तौ द्विजरूपौ देवावन्यत्र गतौ. अथ चक्री सविशेषं शृंगारादियुतः सभायां सिंहासने समुपविश्य तौ द्विजौ चाहूय कथयामास भो द्विजौ अधुना ममाद्भुतं रूपं युवां विलोकयतं? तदा ताभ्यां चक्रिशरीरं रोगाकुलं विलोक्य शिरो धूनितं, राज्ञा प्रोक्तं युवाभ्यां शिरः कथं धूनितं? ताभ्यामुक्तं

हे राजन् तव शरीरे सप्त महारोगाः समुत्पन्नाः संति, तेन तव रूपं च नष्टमस्ति. चक्रिणोक्तं युवाभ्यां तत्कथं ज्ञातं ? तदा ताभ्यां निजदेवरूपं प्रकटीकृत्येंद्रकृतप्रशंसादिवृत्तांतो निरूपितः, तत श्रुत्वा चक्री वैराग्यमासाद्य पुत्राय च राज्यं दत्वा विनयंधरसूरिपार्श्वे चारित्रं जग्राह. षष्टपारणके च शीतलान्नप्राशितोऽस्य शरीरे ज्वरादिसप्तरोगाः प्रादुर्भूतास्तथापि देहममत्वरहितोऽयं सनत्कुमारराजर्षिर्मनसाप्यदूनो विविधतपांसि कुर्वन् शुद्धं चारित्रं पालयामास. क्रमेण तपोबलेन तस्य खेलौषध्यादिमहालब्धयः समुत्पन्नास्तथापि गतदेहममत्वोऽसौ महर्षिर्निजरोगचिकित्साकरणोत्सुकं न बभूव. इतः सौधर्मेंद्रेण पुनः सभामध्ये शरीरनिःस्पृहताविषये सनत्कुमारराजर्षेः प्रशंसा कृता, तदा पूर्वोक्तावेव देवौ वैद्यरूपमाधाय तस्य पार्श्वे समागत्य तच्छरीरगतरोगचिकित्सार्थं प्रार्थयामासतुः, तदा मुनिनोक्तं यदि युवां भावरोगध्वंसने समर्थौ तदैव मे चिकित्सां कुरुतं, तत श्रुत्वा ताभ्यामुक्तं तद्विषये आवां नैव समर्थौ. तदा मुनिना तयोर्विस्मयकरणार्थं निजकुष्टविनष्टांगुलीं निजमुखनिष्ठीवनेन स्पृष्ट्वा सुवर्णवर्णा कृता. तद् दृष्ट्वा ताभ्यां निजरूपं प्रकटीकृत्येंद्रकृतप्रशंसादिवृत्तांतः कथितस्ततो मुनिं नत्वा तौ निजस्थाने गतौ. सप्तशतवर्षानंतरं ते सर्वेऽपि रोगाः स्वयमेव मुनिशरीरतो दूरीभूताः, एवं

वर्षलक्षं यावन्निर्मलं चारित्रं प्रपाल्य तृतीयदेवलोके स सनत्कुमारेंद्रो जातः, एकावतारे च मोक्षं गमिष्यति. ॥ इति श्रीतपःकुलके सनत्कुमारचक्रिकथा ॥

गाथा—गोबंभगब्भगब्भिणी—बंभिणीघायाइगुरुअपावाइं ॥ काऊणवि कणयंविव । तवेण सुद्धो दढप्पहारी ॥ ६ ॥ व्याख्या—गौर्द्विजो गर्भो गर्भिणी ब्राह्मणी, एतेषां चतुर्णां घातादिरूपगुरुपापानि कृत्वापि यो दृढप्रहारिनामा चौरः कनकमिव तपसा शुद्धो जातः ॥ ६ ॥ दृढप्रहारिकथा चेवं—कस्मिंश्चिद्ग्रामे एको ब्राह्मणोऽवसत. तस्य पुत्रो नीतिरहितो लोकैः सह युध्यते. तदा लोकपूत्कारतो दुर्गपालेन स नगराद्बहिर्निष्कासितः, ततो निःसृत्यासौ चौरपल्ल्यां गतः, पल्लिपतिना च स पुत्र इति कृत्वा रक्षितः, धाट्यादिषु च लोकानां दृढप्रहारदानात्स दृढप्रहारीति लोके विख्यातो बभूव. पल्लीपतिमरणानंतरं स पल्लीपतिर्जातः, अथैकदा कुशस्थलपुरे तेन धाटी पातिता, तदा जन्मदरिद्रिदेवशर्माभिधब्राह्मणस्य गृहं तेन लुंटितं, द्विजो यष्टिमादाय तंप्रति धावितस्तदा दृढप्रहारिणा करवालेन स द्विधा कृतः, अंतरागता गौरपि तेन खड्गेन व्यापादिता, इतस्तस्य द्विजस्य गर्भिणी भार्या कटुकवचनैस्तं तर्जयामास, तदा सापि तेन खड्गेन मारिता, तस्या उदराद्गर्भोऽपि प-

तितः, अथैतादृशं भयंकरं कार्यं दृष्ट्वा प्रांते तस्य पश्चात्तापपूर्वं वैराग्यं समुत्पन्नं, ततो वने गत्वालोचनापूर्वकं साधोरग्रे तेन दीक्षा गृहीता, गृहीतश्च तेनाभिग्रहो यद्यावदिदं पापमहं स्मरामि तावदाहारं न करिष्यामीत्यभिग्रहमादाय स कुशस्थलपुरे गत्वा कायोत्सर्गेण स्थितः, लोकास्तं यष्टिदृषदादिभिस्ताडयंति परं स क्षमया सर्वमपि सहते, प्रांते तपोबलेन केवलज्ञानमासाद्य स मोक्षं गतः ॥ इति श्रीतपःकुलके दृढप्रहारिकथा ॥

गाथा—पुव्वभवे तिव्वतवो । तविउं जं नंदिसेणमहरिसिणा ॥ वसुदेवो तेण पिउ । जाउ खयरीसहस्साणं ॥ ७ ॥ व्याख्या—यद्यस्मात्कारणान्नंदिषेणमहर्षिणा पूर्वभवे तीव्रं तपस्तप्तं तेनासौ खेचरीसहस्राणां प्रियः स्नेहयुतो वसुदेवो जातः ॥ ७ ॥ तस्य कथा चेवं—नंदिग्रामे कश्चिदेको विप्रोऽवसत, तस्य पुत्रो जन्मदरिद्री नंदिषेणाभिधो बभूव. बाल्ये एव तस्य मातापितरौ मृतौ, ततोऽसौ महादुर्भागी कुरूपश्च मातुलगृहे गत्वा स्थितः, मातुलेनोक्तं मम सप्त पुत्र्यः संति तन्मध्यादेकां तव परिणाययिष्यामि. पुत्रीभिस्तां वार्त्तां निशम्य कथितं वयमग्नौ प्रविशामः परं, नंदिषेणं नांगीकरिष्यामस्तत् श्रुत्वा नंदिषेणो वने गत्वात्मघातोत्सुको बभूव, इतस्तत्रस्थेनैकेन साधुना

स आत्मघातान्निवार्य प्रतिबोधितस्तदासौ दीक्षामादाय षष्टषष्टपारणके आचाम्लतपः कुर्वन् साधुवैयावृत्त्यपरो बभूव. अथैकदेंद्रेण निजसभायां तस्य साधुवैयावृत्त्यप्रशंसा कृता, तदा द्वौ सुरौ तत्परीक्षणाय तत्रागतौ. तयोरेको ग्लानसाधुरूपं विधाय नगराद्बहिः स्थितो द्वितीयश्च साधुरूपभृदुपाश्रये तत्समीपे समागतः. अथ नंदिषेणो यावत् षष्टपारणकपरो बभूव तावत्तेनागत्य कथितं भो नंदिषेण नगराद्बहिरेकोऽतिसाररोगपीडितो मुनिः पतितोऽस्ति, तत् श्रुत्वा नंदिषेणो निजाहारपात्रमाबाध्य तेन सह द्रुतं तद्ग्लानसाधुसमीपे गतस्तदा तेन तस्य बहुकठिनवचनानि जल्पितानि, परं क्षमापरेण नंदिषेणेन तानि सर्वाणि सोढानि. ततो नंदिषेणेन तं प्रत्युक्तं हे महात्मन् यूयमुपाश्रये समागच्छत ? साधुनोक्तमहं गंतुमशक्तोऽस्मि, तदा नंदिषेणस्तं स्कंधे समारोप्योपाश्रयंप्रति चलितस्तदा पथि तेन मायिनोक्तं अरे पापिन् त्वं शनैः शनैर्व्रज ? तव शीघ्रगमनेन मम दुःखं भवति. ततः क्षमानिधिर्नंदिषेणः शनैश्चचाल. पुनस्तेनोक्तं अरे दुष्ट तव शनैर्गमनेन मे शरीरं तापव्याकुलं भवति. तदा नंदिषेणेन चिंतितं नायमस्य ग्लानसाधोर्दोषः किं तु ममैवायं दोष इति विचिंत्य स तं क्षामयामास. अग्रे गच्छता तेन मायिसाधुना तस्य शरीरोपरि विष्टा कृता, तथापि नंदिषेणस्तां चंद-

नलेपमिव मन्यते, क्रमेण स चोपाश्रये समागत्य तद्देहशुध्ध्यर्थं जलमादातुं श्रावकगृहे गतः, परं सर्वत्र तेन देवेनानेषणा कृता, तथापि तमक्षुब्धं क्षमापरं च ज्ञात्वा तौ देवौ प्रकटीभूय तच्चरणयोः पतितौ, निजापराधं च क्षामयित्वेंद्रकृतप्रशंसादिवृत्तांतं तस्मै निवेदितवंतौ. ततस्तौ सम्यक्त्वमादाय निजस्थाने जग्मतुः. एवं नंदिषेणमुनिर्द्वादशवर्षाणि यावच्चारित्रं प्रपाल्य प्रांतेऽनशनं विधाय स्त्रीवल्लभत्वनिदानं कृत्वा मृत्वा सप्तमदेवलोके देवो जातः, ततश्च्युत्वा शौरीपुरेंधकवृष्णिनृपस्य स वसुदेवाख्यपुत्रत्वेनोत्पन्नः, पूर्वकृतनिदानतस्तस्य रूपमत्यद्भुतं स्त्रीजनवल्लभं जातं. मनोहररूपलावण्याद्युपेतं तं निरीक्ष्य निखिलनगरनार्यस्तस्योपरि मोहं प्राप्य गृहकार्याण्यपि च परित्यज्य पतिवचनमप्यनादृत्य तस्य पृष्टे एव भ्रमणं चक्रुः. तदा नगरलोकैस्तस्य वृद्धभ्रातुः समुद्रविजयनृपस्य पार्श्वे समागत्य तद्वृत्तांतं च कथयित्वा विज्ञप्तं हे स्वामिन् वसुदेवो गृहमध्ये एव संरक्षणीयः, नृपेण नगरलोकाः सन्मानाश्वासनपूर्वकं विसर्जितास्ततो यदा वसुदेवः प्रणामाय समुद्रविजयपार्श्वे समागतस्तदा नृपस्तमुत्संगे संस्थाप्य मिष्टवचनैः कथयामास हे वत्स ! त्वं कथं दुर्बलोऽसि ? बहिरातपादिषु मा भ्रम ? गृहांतरेव विनोदान् कुरु ? वसुदेवोऽपि तदंगीकृत्य गृहे एव तिष्टति. अथैकदा ग्रीष्म-

त्यौ शिवादेव्या चंदनभृत्स्वर्णभाजनं दासीहस्तेन विलेपनकृते राज्ञे प्रेषितं. बालचापल्यतोंतराले वसुदेवेन दासीहस्तात्तद्गृहीत्वा तन्मध्यस्थं चंदनं निजशरीरे विलिप्तं. दास्योक्तं यदि त्वमीदृशश्चपलोऽसि तर्ह्येव गृहकारागारे क्षिप्तोऽस्तीत्युक्त्वा तया तस्मै सर्वलोकवार्त्ता कथिता. तत श्रुत्वा हृदि दूनो वसुदेवो भ्रातृकृतापमानतो निशायामेकं मृतकलेवरं चितायां प्रज्ज्वाल्य 'वसुदेवोऽग्नौ प्रविश्य मृतः' इति च तत्र लेखं लिखित्वा नगरान्निर्गतः, प्रभाते राजा तद्वृत्तांतं विज्ञायातीवदूनस्तस्य प्रेतकार्यं कृतवान्. अथ वसुदेवो देशांतरे भ्रमन् बहुनृपविद्याधरद्विजन्यापारिणां द्वासप्ततिसहस्रकन्याः परिणीतवान्. प्रांते रोहिणीस्वयंवरे स समुद्रविजयादीनां मिलित इत्यादिसंबंधः पूर्वं श्रीनेमिनाथचरित्रे प्रोक्त एव. इति वसुदेवभोगप्राप्तिकरणे पूर्वभवकृततपोमाहात्म्यमेव ज्ञेयं. ॥ इति तपःकुलके वसुदेवकथा ॥

गाथा—देवावि किंकरत्तं । कुणंति कुलजाइविरहिआणंपि ॥ तवमंतपभावेणं । हरिकेसीबलस्सव रिसिस्स ॥ ८ ॥ व्याख्या—हरिकेशीबलाभिधमुनिवरस्येव तपोमंत्रप्रभावेण कुलजातिविरहितानामपि जनानां देवा अपि किंकरत्वं कुर्वंति ॥ ८ ॥ हरिकेशीबलमुनिकथा चेत्थं—हस्तिना·

गपुरे सोमदेवनामा पुरोहितो वैराग्यं प्राप्य साधुसमीपे दीक्षां जग्राह. स निर्मलं चारित्रं तु पालयति परं वयं द्विजोत्तमा इत्यादि कथयन् जातिमदं बहु करोति. आयुषि संपूर्णे सति स देवलोके गतस्ततश्च च्युत्वा नीचकर्मोदयानिलप्रेरितश्चांडालकुले समवातरत्. तदा तस्य माता बहुजनसेव्यमानं फलितमाम्रतरुं स्वप्ने ददर्श. जन्मानंतरं पित्रा बल इति तस्याभिधानं चक्रे. हरिकेश्यभिधानं च तस्य गोत्रमभूत्. यौवनं प्राप्यैकदा पितृकृतापमानेन दूनोऽयं विदेशे गतः. तत्र साधूपदेशं निशम्य वैराग्यं च प्राप्य स दीक्षां जग्राह. षष्ठाष्टममासक्षपणादिविविधतपः कुर्वन् विहरन् सन्नेकदा स वाणारस्यामागत्य तिंदुकनामयक्षालये स्थितस्तदा तस्य तपोवैराग्यादिगुणगणैरतीवप्रमुदितस्तिंदुकयक्षः सर्वदा तस्य सेवाकरणतत्परो जातः. अथैकदा तस्य केनचिन्मित्रयक्षेण तिंदुकपार्श्वे समागत्योक्तं भो मित्र संप्रति त्वं मम गृहे कथं न समागच्छसि? तेनोक्तमधुना मम प्रासादे कश्चिदेको निष्प्रमादी तपस्वी समागतोऽस्ति तस्याहं सेवां करोमि. तेनोक्तमेतादृक्चारित्रिणस्तु ममालयेऽपि बहवः संति, तत् श्रुत्वा तेन तत्रागत्य ते चारित्रिणो विलोकिताः, परं तान् प्रमादिनो विज्ञाय स पश्चादागत्य तमेव हरिकेशीबलमुनिं सेवितुं लग्नः. अथैकदा बहुपरिवारपरिवृता राजकुमारी

प्सडा तं तिंदुकयक्षं पूजयितुं समागता, तत्र तया मलिनवस्त्रधारिणं कुरूपं तं मुनिं दृष्ट्वा जुगुप्सया थूत्कृतं, तदा कुपितेन यक्षेण सा ग्रथिलीकृता, राज्ञानेके उपायाः कृताः परं तस्या ग्रथिलत्वं नो गतं. इतो यक्षेण तस्याः शरीरे समुत्तीर्य तन्मुखेन कथितं यत्साधुमालोक्यानया थूत्कृतमस्ति ततोऽहं तां नैव मोक्ष्यामि. राज्ञा विनयादिभिर्यदा बहुर्विज्ञप्तिः कृता तदा तेनोक्तं सा यदि तेनर्षिणा सह परिणयेत्तदैवाहं तां पाटवोपेतां करिष्यामि. राजा तत्स्वीकृत्य संध्यासमये तां कन्यां च पुरस्कृत्य मुनिसमीपे समागत्य कथयामास भो मुने ममैनां पुत्रीं परिणय ? साधुनोक्तं हे राजन् अहं त्यक्तपरिग्रहः कथमेनां ते पुत्रीं स्वीकरोमि ? तत श्रुत्वा राजा विषण्णस्तदा यक्षस्तत्साधुरूपं विधाय तां च परिणीय विडंबनापूर्वकं प्रभाते त्यक्तवान्. अथ चिंतातुरो राजा प्रधानादिभ्योऽपृच्छत् यदियं ऋषिपरिणीता कन्या कस्मै प्रदेया ? प्रधानादिभिरुक्तं स्वामिन्नेवंविधा कन्या द्विजायैव प्रदीयते. तत् श्रुत्वा राज्ञा सा रुद्रदेवाख्यपुरोहिताय समर्पिता, तया सह रुद्रदेवो विषयसुखानि भुनक्ति. अथैकदा तेन यज्ञः समारब्धस्तदा हरिकेशीबलमुनिस्तत्राहारार्थं मासक्षपणपारणे समागतस्तं मलिनांबरधरं मुनिं दृष्ट्वा पिशाचमिव मन्यमाना द्विजकुमारा मारणाय समुद्यितास्तान् सर्वान् य·

क्तो रुधिरवमतो विधायाधः पातयामास, तत्कोलाहलमाकर्ण्य जद्रा बहिरागता, तमेव च मुनिं दृष्ट्वा प्रणम्य द्विजेभ्यः कथयामास भो द्विजा यूयं मूर्खाः स्थ, अयं तु महाप्रभाविकस्तिंदुकयक्षपूजितो महातपस्वी मुनिरस्ति, तत एनं प्रणम्य क्षमां याचध्वं. ततो भीताः सर्वेऽपि द्विजास्तं प्रणम्य क्षमां याचयितुं लग्नाः, मुनिनोक्तं भो द्विजा मम तु रागद्वेषौ न स्तः, यूयं मम सेवापरं यक्षं क्षामयत ? ततः सर्वेऽपि द्विजाः प्रणतिपूर्वकं विनयेन यक्षं क्षामयामासुः, तुष्टेन यक्षेणापि सर्वे द्विजकुमाराः सज्जीकृतास्ततो हृष्टैर्द्विजैर्मुनयेऽन्नपानादि दत्तं, देवकृता सुवर्णवृष्टिश्च तत्र जाता, ततो हरिकेशीबलमुनिस्तान् द्विजान् प्रतिबोध्य तपोबलेनान्यानपि कतिचिद्भव्यान् प्रतिबोध्य निर्मलं चारित्रं प्रपाल्य मोक्षे गतः ॥ इति श्रीतपःकुलके हरिकेशीबलमुनिकथा ॥

गाथा—घमसयमेगघडेणं । एगेण घडेण घमसहस्साइं ॥ जं किर कुणंति मुणिणो । तवकप्पतरुस्स तं खु फलं ॥ ए ॥ व्याख्या—मुनयो यदेकेनैव घटेन घटशतं, तथैव एकेनापि घटेन घटसहस्रं किल निश्चयेन कुर्वंति तत खलु तपोरूपकल्पवृक्षस्य फलं ज्ञातव्यमिति शेषः ॥ १० ॥

गाथा—अनिआणस्स विहिए । तवस्स तविअस्स किं पसंसामो ॥ किज्जइ जेण विणासो ।

निकाईयाणंपि कम्माणं ॥ १० ॥ व्याख्या—अनिदानस्य निदानरहितस्य विधिना श्रीवीतरागो-
क्तविधिपूर्वकं तप्तस्य तपसो वयं किं प्रशंसां कुर्मः ? येन तपसा निकाचितानामपि कर्मणां विना-
शो भवति ॥ १० ॥

गाथा—अइदुक्करतवकारी । जगगुरुणा कन्हपुच्छिएण तदा ॥ वाहरिओ स महप्पा । समरि-
आओ ढंढणकुमारो ॥ ११ ॥ व्याख्या—हे भगवन् अत्रातिदुष्करतपःकारकः कोऽस्तीति कृष्णेन पृष्टो
जगद्गुरुर्भगवान् श्रीनेमिनाथो यस्याभिधानं जगौ, स महात्मा श्रीढंढणकुमारमुनिर्नूनं स्मर्त्तव्यः
स्मरणकरणयोग्योऽस्तीति. ॥ ११ ॥ श्रीढंढणकुमारमुनिकथा चेवं—द्वारिकायां नगर्यां श्रीकृष्णवा-
सुदेवो राज्यं पालयति, तस्यैकया ढंढणाभिधराज्ञ्या ढंढणकुमाराभिधपुत्रः प्रसूतः, स यदा यौवनं
प्राप्तस्तदा पित्राऽनेकराजपुत्र्यस्तस्य परिणायिताः, इत एकदा तेन श्रीनेमिनाथवचांसि श्रुत्वा वैरा-
ग्येण बहुमहोत्सवपूर्वकं दीक्षा गृहीता. अथ श्रीनेमिप्रभुर्निजचरणन्यासैर्महीं पावयन् देशनामृत-
प्रवाहैरनेकभव्यजनानां संसारदुःखोद्भूतदावानलमुपशामयन् चरणकरणपरिणतैकाग्रहृदयमुनिगणश्रे-
णिभ्यो मोक्षमार्गं दर्शयन्नेकदा द्वारिकायां समवसृतस्तदाऽनेके मुनयः प्रभुमापृच्छ्याहारार्थं नगर्यां

गताः, ढंढणर्षिरपि तथैवाहारार्थं नगरे गतः, अन्येषां सर्वेषामपि मुनीनामाहारो मिलितः, परं लाभांतरायकर्मोदयतो ढंढणमुनिना बहुभ्रमताप्याहारो न प्राप्तस्तेन स यथा गतस्तथैव पश्चादागतः, तदा सर्वमुनिभिर्नेमये पृष्टं हे भगवन् महर्द्धिश्रावकव्याप्तायामपि द्वारिकायां ढंढणमुनिनाहारः कथं न लब्धः ? प्रभुणोक्तमयं पूर्वभवे मगधदेशस्थधन्याभिधग्रामाधिकारी बभूव. एकदा तेन भोजनवेलायामपि सर्वहालिकानां क्षेत्रेष्वेकैकपंक्तिनिष्कासनादेशो दत्तस्तदा बहुमंतरायकर्माद्य तस्योदयमागतं. तत् श्रुत्वा ढंढणर्षिणाभिग्रहो गृहीतो यद्यावदहं स्वलब्ध्याहारं न प्राप्नुयां तावन्मया न भोक्तव्यमित्यभिग्रहयुतोऽसौ वेलायां नगरे भ्रमति तथापि कुत्राप्याहारं न प्राप्नोति. अथैकदा प्रभुवंदनार्थमागतेन कृष्णेन पृष्टं हे स्वामिन् एतेषां सर्वेषां साधूनां मध्ये को दुष्करकार्यस्ति ? प्रभुणोक्तं तव पुत्रो ढंढणर्षिरलाभपरीषहं सहन् महादुष्करं तपः करोति. तत् श्रुत्वा हृष्टः कृष्णो यावन्नगर्यां समायाति तावत्पथि भिक्षार्थं भ्रमन् ढंढणमुनिस्तेन दृष्टस्तदा कृष्णेन गजादुत्तीर्य विधिपूर्वकं स वंदितस्तदा गवाक्षस्थेन भद्रकश्रेष्ठिना तं दृष्ट्वा चिंतितं नूनमयं कोऽपि महर्षिरस्ति. अथ ढंढणोऽपि दैवयोगेन तस्यैव श्रेष्ठिनो गृहे भिक्षार्थं समागतः, श्रेष्ठिनापि स मोदकवरैः प्रतिलाभि·

तस्तान् गृहीत्वा स मुनिरपि प्रभुसमीपे समागत्य पृष्टवान् हे स्वामिन् मयाद्याहारो लब्धस्तेन किं मम कर्म क्षीणं? भगवतोक्तं हे महानुभाव अद्यापि ते तत्कर्म क्षीणं नास्ति, इमे मोदकाश्च त्वया कृष्णलब्ध्या प्राप्ताः संति. तन्निशम्य स मोदकपरिष्ठापनिकायै कुंभकारशालायां गतस्तत्र परिष्ठापनिकावसरे स्वकर्माणि निंदतः शुभाध्यवसायाधिरूढस्य तस्य केवलज्ञानमुत्पन्नं, तदा देवदुंदुभिं निशम्य कृष्णेनागत्य तस्य महोत्सवो विहितः, कियत्कालं केवलपर्यायं परिपाल्य स मोक्षे गतः ॥ इति श्रीतपःकुलके ढंढणर्षिकथा ॥

गाथा—पइदिवसं सत्तजणे । हणिऊण गहिअवीरजिणदिक्खो ॥ दुग्गभिग्गहनिरओ । अज्जुणओ मालिओ सिद्धो ॥ १२ ॥ व्याख्या—प्रतिदिवसं सप्तजनहिंसाकारक एवंविधोऽप्यर्जुनमाल्यपि वीरप्रभुपार्श्वे दीक्षां गृहीत्वा दुर्गाभिग्रहे निरतो लीनः सन् सिद्धिगतिं प्राप्तः. ॥ १२ ॥ अर्जुनमालिकथा चेत्थं—राजगृहनगरे श्रेणिकाभिधो राजा, तत्रार्जुनाख्यो माली वसति, तस्य बंधुमतीनामभार्या, अथ तस्य वाटिकापार्श्वे मुद्गरपाणिनामयक्षस्यालयमस्ति, तस्मिन् तस्य यक्षस्य पाणिधृतसहस्रपलमितभारमुद्गरा मूर्त्तिर्वर्त्तते. अर्जुनमाली सर्वदा तं यक्षं पुष्पादिभिः पूजयित्वा नगर·

मध्ये पुष्पविक्रयार्थं चतुष्पथे समागछति. अथ तस्मिन् यक्षालये षट् विट् पुरुषा नित्यं समागत्या· नेकभोगक्रीमादि कुर्वंति. एकदा तैर्विटपुरुषैर्बंधुमतीयुतमर्जुनमालिनं तत्रागछंतं विलोक्य परस्परं निश्चयो कृतो यदद्यास्माभिः सर्वैः कपाटपृष्टे स्थातव्यं, यावच्चायमर्जुनमाल्यत्रागछेत्तावत्तं परिगृह्य गाढबंधनैर्बध्ध्वा तस्य भार्यया सह भोगविलासः कर्त्तव्य इति विचिंत्य ते प्रछन्नतया कपाटपृष्टे स्थिताः, इत आगतमर्जुनमालिनं तथैव बध्ध्वा तैस्तस्य स्त्रिया सह भोगविलासं कर्त्तुं प्रारब्धं. तद् दृष्ट्वार्जुनमाल्यत्यंतं कुपितः सन् चिंतयामास नूनमयं यक्षोऽशक्त एव, यस्य दृष्टौ विधीयमानमप्येतत्पापं स एड इवोपेक्षते, एतावद्भिर्दिवसैर्मया वृथैव तस्य पूजा विहिता. इतः सावधानीभूतेन यक्षेण तस्यार्जुनमालिनः शरीरमधिष्टितं, तद्बंधनानि च स्वयमेव त्रुटितानि, सहस्रपलमितलोहमुद्गरोऽपि स्वयमेव तस्य हस्ते समायातः, तत्कालमेव तेनोछाय मुद्गरतस्ते षमपि पुरुषाः सप्तमी च भार्या व्यापादिता. तदादितः स प्रतिदिनं वनसमेतजनमध्यात् षट्पुरुषान् सप्तमीं च स्त्रियं मारयति. एवं तेन बहवो जना मारिताः, क्रमेण सा वार्त्ता राजगृहे विस्तृता. इतः श्रीवीरप्रभुस्तत्र वने समवसृतः, परं यक्षाधिष्टिततदर्जुनमालिभीत्या कोऽपि वनमध्ये प्रभुवंदनार्थं न समायाति. परं सुद·

र्शनश्रेष्टी मातृपितृनिवारितोऽपि श्रीवीरप्रभुवंदनार्थं तत्र चलितः, यावच्च तस्य यक्षस्यायतनाग्रे समागतस्तावदर्जुनमाली मारणाय समुच्छितस्तदा सुदर्शनश्रेष्टिना सागारिकमनशनं कृत्वा श्रीवीरप्रभुशरणं चांगीकृत्य नमस्कारस्मरणमारब्धं. अथ सोऽर्जुनमाली तस्याग्रे समागंतुमशक्तोऽभूत, यक्षोऽपि निजमुद्गरमादाय तच्छरीरं विहायादृश्यीभूतः, अथ मालिनं सुस्थितं विज्ञाय सुदर्शनेन भणितं, भो अर्जुन ! त्वं मनुष्यसंहारं कथं करोषि ? हिंसातः प्राणी दुर्गतौ पतति, किंचाहं श्रीवीरप्रभुवंदनार्थं गच्छामि, तत् श्रुत्वा तेनोक्तमहमपि तत्र समागमिष्यामि. ततस्ताभ्यां द्वाभ्यामपि श्रीवीरो वंदितः, वीरप्रभुदेशनां श्रुत्वा प्रतिबुद्धेनार्जुनमालिना दीक्षा गृहीता, ततस्तेन यावज्जीवं षष्ठंषष्ठेन तपसा पारणकरणाभिग्रहो गृहीतः, पारणकदिने यदाऽहारार्थं स नगरे प्रयाति तदा पूर्ववैरतो लोकास्तस्यानेकविधानुपद्रवान् करोति, परं क्षमायुतोऽर्जुनमालिमुनिः केवलं निजदोषमेव पश्यति, न च कस्मै अपि कुप्यति. कदाचिदन्ने मिलिते सति पानीयं न मिलति. एवंविधानतिघोरपरीषहान् सहमानोऽसौ मुनिः प्रांतेऽनशनेन केवलज्ञानमासाद्य मोक्षे गतः ॥ इति श्रीतपःकुलके अर्जुनमालिकथा ॥

गाथा—नंदीसररुयगेसुवि । सुरगिरिसिहरेवि एगफालाए ॥ जंघाचारणमुणिणो । गच्छंति तवप्पभावेणं ॥ १३ ॥ व्याख्या—नंदीश्वरे रुचकद्वीपे मेरुशिखरेऽपि चैकेन फालेन जंघाचारणविद्याचारणमुनी निजतपःप्रभावेण गच्छतः ॥ १३ ॥ अथ ते चारणमुनयो द्विविधा भवंति, विद्याचारणा जंघाचारणाश्च. विद्याचारणस्य नित्यं षष्टपारणे सति लब्धिः समुत्पद्यते, स च करतलैकसंयोगे त्रिवेलं जंबूद्वीपं परिभ्रम्य समायाति. तिर्यग्गत्या च समुत्पतिते सति स्फालेनैकेन मानुषोत्तरे याति, द्वितीयस्फालेन च तस्मादुत्पत्य नंदीश्वरे याति, तत्र च चैत्यानि वंदित्वोत्पत्य चैकेन स्फालेनैवात्र समायाति. अथोर्ध्वगत्यैकेन स्फालेन मेरौ नंदनवने याति, भूमिसकाशान्नंदनवनं पंचशतयोजनोच्चमस्ति, तस्मादुत्पत्य मेरोरग्रभागशिखरे पंडकवने याति, तत्र च चैत्यानि प्रणम्यैकेनैव स्फालेनात्र समायाति. अथ जंघाचारणतपोलब्धिर्निरंतरमष्टमतपःपारणे कृते सति समुत्पद्यते. तल्लब्धिवान्मुनिः करतलैकसंयोगे कृते सप्तवेलं जंबूद्वीपे परिभ्रम्य समायातीति तस्य शीघ्रगतिर्ज्ञेया. तिर्यग्गत्यैकेन स्फालेन स रुचकद्वीपे याति, चैत्यानि च नमस्कृत्य द्वितीयस्फालेन स नंदीश्वरे समायाति, तत्र च चैत्यानि वंदित्वा समुत्पत्य चात्र समायातीति तस्य तिर्यग्गतिर्ज्ञेया. अथोर्ध्वगत्यैकेन

स्फालेन मेरोरग्रभागे पंमकवने याति, तत्र चैत्यानि वंदित्वा पश्चाद्वलमानो नंदने विश्राम्यति, तत्र च चैत्यानि वंदित्वा तत उत्पत्यैकस्फालेनात्र समायातीति तस्योर्ध्वगतिर्ज्ञेया. विद्याचारणस्य गमने मंदगतिरागमने च शीघ्रगतिर्भवति. जंघाचारणस्य गमने शीघ्रगतिरागमने च मंदगतिर्भवति. तस्य किं कारणमिति चेद्विद्याचारणो विद्याबलेन याति, सा च विद्या स्मरमाणा स्मरमाणा जागरमाणा भवति. जंघाचारणः पुनः शरीरबलेन याति, स गमने सोत्साहो याति, आगमने पुनः खिन्नः सन् विश्राम्य समायातीति भावार्थः ॥ इति श्रीतपःकुलके जंघाचारणविद्याचारणवृत्तांतः ॥

गाथा—सेणीअपुरऊ जेसिं। पसंसियं सामिणा तवोरूअं ॥ ते धन्ना धन्नमुणी। दुन्हवि पच्चुत्तरे पत्ता ॥ ४ ॥ व्याख्या—श्रेणिकराजाग्रे श्रीमहावीरेण ययोस्तपःस्वरूपं स्वमुखेन प्रशंसितं, तौ धन्नौ धन्यौ ज्ञेयौ, तौ द्वावपि पंचमानुत्तरविमाने प्राप्तौ. ॥ ४ ॥ अथ प्रथमस्य काकंदीवास्तव्यधन्नस्य कथा कथ्यते—काकंदीनगर्यां जितशत्रुनामराजास्ति. तत्र भद्राभिधाना महाधनवती सार्थवाही वसति, तस्य पुत्रो धन्न इत्यभिधानो यौवनं प्राप्त एकेनैव दिनेन द्वात्रिंशत्कन्याः परिणीतवान्. ताभिः सहानेकविधानि सुखानि स भुनक्ति. अथैकदा श्रीवीरस्तत्र समवसृतस्तदा सर्वनगर·

ल्लोकान् वीरवंदनार्थं गच्छतो विलोक्य धन्नोऽपि रथस्थस्तत्र गत्वा श्रीवीरप्रभुं ननाम. वीरदेशनां च श्रुत्वा प्रतिबुद्धेन धन्नेनोक्तं स्वामिन्नहं मातरमापृच्छ्य भवत्समीपे चारित्रं गृहिष्यामि. भगवतोक्तं यथासुखं देवानुप्रियेति. अथ धन्नो गृहमागत्य मातरंप्रत्युक्तवान् हे मातर्मयाद्य श्रीवीरो वंदितः श्रुता च तस्य धर्मदेशना. मात्रा प्रोक्तं त्वं धन्योऽसि, तवाभिधानमप्यद्य सफलीभूतं. पुनर्धन्नेनोक्तं हे मातर्यदि तवाज्ञा भवेत्तर्हि अहं श्रीवीरप्रभोः पार्श्वे दीक्षामधिगच्छामि. तत श्रुत्वा व्याकुलया मात्रोक्तं हे पुत्र सर्वमेतद्धनं कस्य भोग्यतां प्रयास्यति ? धन्नेनोक्तं हे मातर्धनमेतदसारमस्ति, यतो धनस्य चौरराजाग्निसमुद्भवभयोऽस्ति, पुनर्मात्रोक्तं हे पुत्र एतास्ते द्वात्रिंशत्प्रिया अपि क्व गमिष्यंति ? धन्नेनोक्तं हे मातरेताः सर्वा हरिद्रारागवन्निःस्नेहा ज्ञेयाः, संसारः सकलोऽप्ययमिंद्रजालसमोऽस्ति. एवं मातरं निजद्वात्रिंशद्भार्याश्च प्रतिबोध्य तेन श्रीवीरप्रभुपार्श्वे चारित्रं गृहीतं. अथ तस्मिन्नेव दिने तेन श्रीवीराय प्रोक्तं हे स्वामिन्नहं यावज्जीवं षष्ठंषष्ठेनाचाम्लपारणकं विधास्ये. स्वामिनापि तस्याज्ञा दत्ताः, अथैकदा पारणकदिने काकंदीनगर्यामागत्य स प्रथमप्रहरे स्वाध्यायं द्वितीयप्रहरे च ध्यानं विधाय श्रीवीरप्रभुमापृच्छ्य स्वयमाहारार्थं गतः, नीरसमाहारमादाय प्रभुपार्श्वे समागत्याऽलं·

पटत्वेन चाचाम्लं कृतवान्. एवं तपोयुतं नवमासं यावच्चारित्रं पालयतस्तस्य शरीरमतीव दुर्बलं जातं. अथैकदा श्रीवीरो राजगृहे समवसृतस्तदा श्रेणिकनृपेण प्रभुं वंदित्वा पृष्टं हे स्वामिन् गौतमादिचतुर्दशसहस्रयतीनां मध्ये को दुष्करकारकोऽस्ति? प्रभुणोक्तं हे राजन्नेवंविधो धन्नो नामाणगारोऽस्ति. तत् श्रुत्वा हृष्टः श्रेणिकः प्रभुं वंदित्वा धन्नाणगारसमीपे समागतस्तत्र तं ध्यानारूढमालोक्य प्रदक्षिणापूर्वकं नत्वा तेन कथितं हे मुने त्वं धन्योऽसि तव जीवितं चापि सफलमेवास्ति, यतः श्रीवीरप्रभुणा स्वमुखेन तव प्रशंसा कृतास्तीति तं स्तुत्वा श्रेणिको निजगृहे समायातः. अथैकदा धन्नोऽणगारो रात्रौ चिंतयति यदधुना मम विहारकरणे शक्तिर्नास्ति. प्रभातेऽतः प्रभुमापृच्छ्याहमनशनं विधास्ये. अथ प्रभाते प्रभुमापृच्छ्य धन्नोऽणगारः सर्वमुनीन् क्षामयित्वा विपुलगिरिवरे गत्वा पादपोपगमनानशनं विधाय मासिक्या संलेखनया कालं कृत्वा सर्वार्थसिद्धिविमाने गतः, ततश्च्युत्वा च महाविदेहक्षेत्रे स मोक्षं गमिष्यति. ॥ इति श्रीतपःकुलके प्रथमधन्नाणगारकथा. ॥ अथ द्वितीयशालिभद्रभगिनीपतिधन्नाणगारस्य कथा कथ्यते—प्रतिष्ठितपुरपत्तने काचिदेका वृद्धा सपुत्रा वसति, सा नित्यं वत्सान् गृहीत्वा वने चारयति, एकदा तस्य पुत्रेण मातुः पार्श्वे क्षैरेयी याचिता,

परं निर्धना सा तद्दानाऽसमर्था रोदितुं लग्ना, तदा दयापराभिः प्रातिवेश्मिकचतुःस्त्रीभिस्तस्यै दुग्धतंदुलघृतखंडादिसामग्री दत्ता, ततस्तयापि क्षैरेयी निष्पादिता परिवेषिता च पुत्राय. इतः कश्चिन्मासोपवासी साधुस्तत्राहारार्थं समागतस्तं दृष्ट्वा हृष्टेन तेन पुत्रेण स्थालीगता सर्वापि क्षैरेयी साधवे प्रतिलाभिता. साधुगमनानंतरं मात्रा पुत्रस्थालीं रिक्तां दृष्ट्वा तस्यान्यक्षैरेयी परिवेषिता, चिंतितं च मम पुत्रो बहुक्षुधातुरोऽस्ति. अथ मातृस्नेहदृष्टिपतनात्स बालोऽजीर्णत्वेन रात्रौ मृत्वा तस्यैव नगरे धनाढ्यैकस्य श्रेष्ठिनो गृहे धन्नाभिधः पुत्रः समभवत. यौवनं प्राप्य तेन् द्वासप्ततिकला अभ्यस्ताः, पितरौ तस्य बहुमानं रक्षतस्ततस्तस्य त्रयो भ्रातरो मत्सरं धारयंति, श्रेष्ठिना तं वृत्तांतं विज्ञाय तेभ्यः पुत्रेभ्यः प्रोक्तं यूयं कथं खेदं धारयथ? तैः प्रोक्तं वयं वृद्धास्तथाप्यस्मान् विहाय युवां धन्नायैव कथमत्यादरपरौ स्थः? पित्रोक्तं कुमारोऽयं भाग्यवानस्ति, तस्य जन्मतोऽस्मद्गृहे धनधान्यादिवृद्धिर्जातास्ति. तत् श्रुत्वा तैरुक्तं तर्हि यूयमस्माकमपि परीक्षां कुरुत? तदा श्रेष्ठिना तत्प्रतिपद्य तेभ्यः पृथक्पृथक् विंशतिविंशतिरूप्यका दत्ताः, प्रोक्तं चैभ्यो रूपकेभ्यो व्यापारं कृत्वा लाभमधिगच्छत? तैर्व्यापारं कुर्वद्भिर्मूलमपि निर्गमितं, निर्द्रव्याश्च संतो गृहे समागताः, अथ धन्नोऽपि

तान् रूप्यकान् गृहीत्वा चतुष्पथे गतस्तत्रैको वैदेशिको निजैकमेषविक्रयार्थमागतस्तेन दृष्टः, धन्नेन तं द्रव्यं दत्वा स मेषो गृहीतः, इतो राजपुत्रो निजैकमेषयुतस्तत्र मार्गे क्रीडार्थं समायातः, अथ तौ द्वावपि मेषौ जातिस्वभावतः परस्परं योध्धुं लग्नौ. तदा राजकुमारधन्नाभ्यां विनोदेन परस्परं पणः कृतो यद्यस्य मेषो हारयेत्स सहस्रदीनारं दद्यात. लोकवृंदमपि तत्र परितः समूहीभूतं. इतो दैवयोगाद्राजकुमारस्य मेषो हारयित्वा प्रणष्टस्तदा राजकुमारेण निजपणस्थिरीभूतेन धन्नाय दीनारसहस्रं समर्पितं. धन्नोऽपि हृष्टः सन् गृहमागत्य पितुरग्रे तद्दीनारसहस्रं मुक्तवान्. तदा श्रेष्ठिना तांस्त्रीनपि पुत्रानाहूय प्रोक्तं धन्नस्य भाग्योदयं पश्यत ? तैरुक्तमेकवारेण किं ? पुनरपि परीक्षां कुरु ? तत् श्रुत्वा पित्रा तेभ्यश्चतुर्भ्योऽपि पृथक् पृथक् षष्टिषष्टिस्वर्णकाः समर्पिताः, अथ ते त्रयोऽपि भ्रातरः पूर्ववन्मूलरहिता एव गृहे समागताः, धन्नस्तु तद्धनं गृहीत्वा चतुष्पथे समायातः ॥ इतस्तस्मिन्नगरे कोऽपि महाधनाढ्यः कृपणः श्रेष्ठी वसति, सोऽतिकृपणत्वात्कपर्दिकामात्रमपि कस्मै न ददाति. तद्गाढबंधनव्याकुलीभूतेव कुपिता लक्ष्मीः सर्वदा तस्य भोजनायापि शुद्धमन्नं न प्रयच्छति. एवं तेन बहूनि रत्नानि संचयीकृत्य मंचकचतुःपादमध्ये प्रच्छन्नतया रक्षितान्यभवन्, तस्य मंचकोपरि च नित्यं

स्वयं स्वपिति. मरणावसरे तेन पुत्रेभ्यः कथितं युष्माभिरहमनेन मंचकेन सह श्मशाने समानेयः, अथ मृतं तं पुत्रा मंचकयुतं श्मशाने समानयामासुः, तं च प्रज्ज्वाल्य मंचकश्च नियमानुसारेण तैः श्मशानरक्षकचांडालाय समर्पितः, चांडालोऽपि द्रव्यार्थं मंचकयुतश्चतुष्पथे समायातः, भाग्याकृष्टेन धन्नेन स मंचको द्रव्यं दत्वा तस्माद्गृहीतः समानीतश्च गृहद्वाराग्रे, अथ मंचकं विशालत्वाद् द्वारप्रवेशायाऽयोग्यं ज्ञात्वा तेन तस्य पादा मुत्कलीकृता निःसृतानि च तस्माद्रत्नानि, ढौकितानि च तेन पितुः पादाग्रे. तद् दृष्ट्वा ते त्रयोऽपि भ्रातरः श्याममुखीभूय चांडाला इव धन्नमारणेच्छामकुर्वन्. अथ कुतोऽपि तद्वृत्तांतं विज्ञाय धन्नो पुण्यैकसखो देशांतरंप्रति चलितः, बहुभूमिलंघनानंतरं केनचित्कृषीवलेन तमाहूय भोजनं दत्तं. इतस्तत्र तस्य क्षेत्रे हलोत्खातभूमितो निधानं निःसृतं, परं कृषीवलेन तन्न दृष्टं, धन्नेन तस्मै तद्दर्शितं सोऽतीवहृष्टः, इतो धन्नोऽग्रे चलन् राजगृहे समागत्यैकस्मिन् शुष्कवने स्थितः, परं तस्य पुण्योदयतस्तद्वनं प्रफुल्लितं. तदा हृष्टो वनपालो धन्नं निजगृहे समानीय तस्य बहुभक्तिं चकार. इतस्तस्य माहात्म्यं विज्ञाय श्रेणिकराज्ञा निजपुत्रीसोमश्रीस्तेन सह परिणायिता, गोभद्रश्रेष्ठिना च वनपालेनापि निजनिजपुत्र्यो तस्य परिणायिते. राज्ञा

तस्मै बहुग्रामधनावासादि दत्तं, धन्नोऽपि देववत्तत्र सुखानि भुंजानस्तिष्ठति. इतश्चैकदा गवाक्षस्थेन धन्नेन पथि सकलमपि निजकुटुंबं रंककुटुंबमिवेतस्ततो भ्रमद् दृष्टं, धन्नस्तानुपलक्ष्य स्वसमीपे समानयत्, ततस्तेन पित्रे पृष्टं हे पितः कथमेतादृशी विपत्समागता ? तेनोक्तं हे वत्स यदा त्वं गृहान्निर्गतस्तदा तव विरहमसहमानेव सकलापि लक्ष्मीर्निर्गता, जाताश्च वयं सर्वेऽपि दुःखिनः, परं क्रमेण त्वामत्र नृपजामातरं विज्ञायागताः स्मः, तत् श्रुत्वा धन्नेन मातापित्रोर्बहुभक्तिः कृता. भ्रातॄणामपि बहुमानं समर्पितं, कथितं च यूयमप्यत्र सुखेन मम गृहे तिष्ठत ? कियद्दिवसानंतरं पुनस्ते दुष्टभ्रातरो धन्नोपरि मत्सरं धृत्वा योध्धुं लग्नाः, पित्रा बहु प्रतिबोधिता अपि ते नामन्यंत, तदा धन्नः खिन्नः पुनरपि देशांतरंप्रति चलितः, क्रमेण च कौशांबीनगर्यां समागतः. अथ तस्यां नगर्यां शतानीकाभिधानो राजास्ति, तस्य सौभाग्यमंजर्यभिधाना पुत्री वर्त्तते. किंच राज्ञः पार्श्वे बहुमूल्यमेकं रत्नमस्ति किंतु तस्य परीक्षां कोऽपि न जानाति, राज्ञा पटहोद्घोषणा कृता यद्यः कोऽपि रत्नपरीक्षां करिष्यति तस्मै राजा पंचशतग्रामयुतां निजपुत्रीं प्रदास्यति. तदा धन्नेन नृपाग्रे समागत्य रत्नपरीक्षां विधाय कथितं यस्याग्रे रत्नमिदं संतिष्ठते तस्य राज्यं वृद्धिं प्रयाति, शत्रुरपि तं न

पराजवति, किंच भोजनभृतस्थाल्यां यदीदं रत्नं मुच्यते तर्हि कोऽपि पक्षी तत्समीपे नायाति. रा· ज्ञा तत्प्रतीतिं विधाय धन्नाय पंचशतग्रामयुता निजपुत्री परिणायिता. अथ धन्नस्तत्र तया सह सुखं भुनक्ति. एकदा तेन तत्रैकसरःखननकार्यमारब्धं. तत्र च बहवो निराधारा जनास्तेन धनार्पणपूर्वकं योजिताः. अथ यद्दिवसाद्राजगृहाद्धन्नो निर्गतस्तद्दिवसात्सर्वमपि धनं तत्पितृगृहान्नष्टं. तदा श्रेष्ठी धन्नस्य द्वे भार्ये तत्पित्रोर्गृहे मुक्त्वा शालिभद्रभगिनीभद्रायुतः सर्वकुटुंबं गृहीत्वा परदेशे प्रस्थितः, क्रमेण दैवयोगेन कौशांब्यामागतस्तत्र च सरःखननकार्यं दृष्ट्वा हृष्टः सन् कुटुंबयुतस्तस्मिन् कार्ये लग्नो निजाजीविकां स चकार. पुरुषाः सर्वे खननकार्यं कुर्वंति स्त्रियश्च मृत्तिकादि वाहयंति. अथैकदा धन्नश्रेष्ठी नृपयुतस्तत्सरःखननकार्यं विलोकयितुं समागतस्तत्र च कर्मकरजनवृंदमध्ये निजपितृप्रभृतिसकलकुटुंबं निरीक्ष्य स विस्मितः, कुटुंबजनास्तु निजनिजकार्यतत्परास्तं नोपलक्षयंति. अथ धन्नेन श्रेष्ठिनमाहूय पृष्टं यूयं सर्वे क्व नगरे वसथ? लज्जितेन श्रेष्ठिना धन्नमनुपलक्ष्य सर्वं वितथं कथितं. ततो धन्नेन तस्याभिप्रायं विज्ञाय प्रोक्तं तक्रादिकृते निजवध्वो मम गृहे मोचनीयाः, हृष्टः श्रेष्ठी प्रतिदिनमनुक्रमेणैकैकां वधूं तत्र तक्रादिकृते प्रेषयति, सापि दधितक्रादि गृहीत्वा पुनः

श्वशुरसमीपे समायाति. अथ यदा भद्रा तक्रगृहणार्थं समायाति तदा तस्यै कंचुकीप्रमुखवस्त्राण्यपि धन्नोऽर्पयति, भद्रा च तत्सर्वं श्वशुरपार्श्वे मुंचति. तदा स श्रेष्ठी नूनमियं वधूः सौभाग्यवतीति तस्याः प्रशंसां करोति. तत् श्रुत्वा वृद्धपुत्रवधूभिः प्रोक्तं पूर्वं प्रशंसितो देवृधन्नोऽस्मान् विहाय गतोऽधुना कदाचित्प्रशंसिता वधूरपीयं तथैव करिष्यति. अथैकदा तक्रमादातुमागता भद्रात्याग्रहेण धन्नेन पृष्टाऽधोमुखीभूय निजसकलमपि वृत्तांतं निवेदयामास. पुनः कथितं चाहमपि भवन्नामतुल्येनैकेन श्रेष्ठिपुत्रेण सह परिणीता परं स मे भर्ता गृहक्लेशान्निर्गतस्तस्याद्यापि क्वापि शुद्धिर्न लब्धा. ततोऽनेकविधां तस्याः सतीत्वस्य परीक्षां विधाय विज्ञाय च तां निश्चलां धन्नेनोक्तं हे सुभगे स एवाहं धन्नोऽस्मीति कथयित्वा तेन सर्वे गुप्तसंकेता उक्ताः, तत् श्रुत्वा तं च समुपलक्ष्य भद्रा निजनयननिर्गताश्रुजलधाराभिर्भर्तुः पादक्षालनं कुर्वतीव तस्थौ. धन्नोऽपि हर्षाश्रुदंभतस्तस्यै निजस्नेहं प्रकटीकुर्वन् बहुमूल्यवस्त्रालंकारादिभिस्तां शृंगारयुतां निर्माय निजांतःपुरे स्थापयामास. इतो वधूं पश्चादनागतां विज्ञायानेकसंकल्पविकल्पकल्लोलोल्ललिताचिंतापारपारावारमध्ये पतितो वधूशुद्धिकरणाभिलाषदवरकाकृष्टो द्रुतं तत्राश्रयणीयधन्नगृहतटे समायातस्तदा धन्नोऽपि सद्यः समुत्थाय विनयभारावः

नतशिराश्चिरकालविरहोद्भूतहृदयदुःखसंचयं हर्षाश्रुमिषेण बहिर्निष्कासयन्निव जनकचरणयोर्नतिं कृतवान्, क्रमेण तत्र सर्वमपि कुटुंबं मिलितं. पुनरत्र धन्नेन निजभ्रातृभ्यो विभागीकृत्य ग्रामा दत्ताः, परं तेषां मनोभ्यो दौर्जन्यं न दूरीभूतं. अथ कियत्कालानंतरं धन्नं तत्रस्थं ज्ञात्वा श्रेणिकस्तदाह्वानकृते तत्र निजदूतं प्रेषितवान्. धन्नोऽपि शतानीकमापृच्छ्य बहुगजरथादिपरिवृत्तो भार्याद्वयसमेतो राजगृहे श्रेणिकसमीपे समागतस्तत्र भार्याचतुष्टयं मिलितं. पुनस्तत्र तेन व्यवहारिणां चतुःकन्या अन्याः परिणीताः, एवं तस्याष्टौ भार्याः संजाताः. अथ धन्नार्पितेषु येषु ग्रामेषु ते त्रयोऽपि भाग्यरहिता भ्रातरोऽवसन् तत्र वृष्टेरभावात्सर्वेऽपि लोका देशांतरे पलायिताः, पितरौ च परलोकं गतौ, भाग्यहीनास्ते त्रयोऽपि भ्रातरो भाटकेन शकटानि वाहयंतो देशांतरे रंकवद्भ्रमंति, एकदा ते शकटेषु भाटकेन धान्यं भृत्वा राजगृहे समागताः, धन्नस्तानुपलक्ष्य स्वसमीपे समाह्वयत्, कथयामास च हे भ्रातरः केयं भवतामवस्था ? लज्जितास्ते निजापराधं क्षामयित्वा तस्थुः. धन्नस्तान् सन्मान्य पूर्ववन्निजगृहे सुखेन रक्षितवान्. तेऽपि निजमनसः क्लेशभावं दूरीकृत्य निर्मलचित्ताः संतस्तत्र सुखेन भोगान् भुंजाना निजकालं गमयांचक्रुः, इतस्तत्र धर्मघोषाभिधसूरयः समागतास्तदा कुटुंबयुतो

धन्नस्तत्रागत्य देशनां शुश्राव. देशनांते धन्नेन पृष्टं हे भगवन् ममैतैर्भ्रातृभिर्लाभांतरायकर्म कथमुपार्जितं ? सूरिणोक्तं पूर्वभवे त्रयोऽप्येते कस्मिंश्चिद्ग्रामे भ्रातरोऽभूवन्, एकदा च ते वने काष्ठग्रहणार्थं गतास्तत्र च तैः पार्श्वस्थमन्नं साधवे प्रतिलाभ्य पश्चात्तापं कर्त्तुं प्रारब्धं, ततस्तैरिदं भोगांतरायकर्म बद्धं. तत श्रुत्वा धन्नो वैराग्यमासाद्य संसाराद्विरक्तीभूय निजद्रव्यस्य धर्ममार्गे व्ययं विधातुं समारंभं कृतवान्. इतस्तेन शालिभद्रेण सह दीक्षा गृहीतेत्यादिसंबंधः पूर्वमेवोक्तः ॥ इति श्रीतपःकुलके धन्नर्षिद्वयकथा ॥

गाथा—सुणऊण तव सुंदरी—कुमरीए अंबिलाण अणवरयं ॥ सट्ठिं वाससहस्सा । भण कस्स न कंपए हिअयं ॥ १४ ॥ व्याख्या—श्रुत्वा तपः सुंदर्याः कुमार्या आचाम्लं निरंतरं षष्टिसहस्रवर्षं यावत् त्वं भण कथय कस्य हृदयं न कंपते ? अपि तु सर्वेषामपि हृदयं कंपते. अर्थात् षष्टिसहस्रवर्षं यावत्सुंदरीकृतमाचाम्लतपोवार्त्तां श्रुत्वा को न चमत्कारं प्राप्नोति ? ॥ १४ ॥ सुंदरीकथा चेवं—यदा श्रीऋषभदेवप्रभोः केवलज्ञानं समुत्पन्नं तदा प्रभोर्देशनां निशम्य प्रतिबुद्धा सुंदरी दीक्षाग्रहणतत्परा जाता, परमियं स्त्रीरत्नं भविष्यतीति विचार्य भरतेन सा निवारिता. अथ भरतोऽपि

षष्टिवर्षसहस्राणि यावत षट्खंमसाधनायाक्रमत. भरतगमनानंतरं सुंदर्या चिंतितं यद्यहं स्त्रीरत्नं भविष्यामि तर्हि मम षष्टनरके गमनं भविष्यतीति विचार्य तयाचाम्लतपः समारब्धं, षष्टिसहस्रवर्षाणि यावत्तथा तत्तपः कृत्वा निजशरीरं शोषितं. इतो भरतोऽपि सुभद्राभिधाननमिराजपुत्रीस्त्रीरत्नयुतः षट्खंमानि साधयित्वा गृहे समागतः, तत्रातीवदुर्बलां सुंदरीमालोक्य तेन कोपेन सूपकाराः पृष्टाः किमस्मद्गृहे धान्यं नास्ति ? सूपकारैर्भयविह्वलैः प्रोक्तं स्वामिन् श्रीमंतो यदा देशसाधनाय प्रस्थितास्तदादित इयमाचाम्लतपांसि करोति, तत् श्रुत्वा भरतेन सुंदरी पृष्टा कथं ते शरीरं दुर्बलं ? तयोक्तं मम चारित्रग्रहणेछा वर्त्तते तस्मादादेशं देहि ? ततो भरताज्ञया महोत्सवपूर्वकं तया श्रीऋषभदेवप्रभुसमीपे दीक्षा गृहीता, निर्मलं चारित्रं प्रपाल्य चतुरशीतिलक्षपूर्वायुर्भुक्त्वा केवलज्ञानं च प्राप्य सा मोक्षे गता. ॥ इति श्रीतपःकुलके ऋषभजिनपुत्रीसुंदरीकथा ॥

गाथा—जं विहिअमंबिलतवं । बारसवरिसाइं सिवकुमारेणं ॥ तं दहूण जंबूरूवं । विम्हइओ सेणिओ राया ॥ १३ ॥ व्याख्या—यद् द्वादशवर्षं यावदाचाम्लतपो येन शिवकुमारेण कृतं, तस्य श्रीजंबूस्वामिनः स्वरूपं दृष्ट्वा श्रेणिको राजा विस्मितः ॥ १३ ॥ तस्य कथा चेवं—एकदा राज-

गृहनगरे श्रीमहावीरः समवसृतस्तदा श्रेणिकेन महोत्सवपूर्वकं तत्रागत्य प्रभुं वंदित्वा देशनां च श्रुत्वा पृष्टं स्वामिन्नस्यां चतुर्विंशतौ चरमकेवली को भविष्यति ? स्वामिनोक्तमयं समीपस्थो विद्युन्मालिदेव इतः सप्तमे दिने च्युत्वात्र तव नगरे जंबूनामा चरमकेवली भविष्यति. तदा राज्ञा पुनः पृष्टं स्वामिन्निकटच्यवनकालोऽप्ययं देवो महातेजस्विरूपवान् कथं दृश्यते ? प्रभुणोक्तं मगधदेशे सुग्रामाभिधग्रामे भवदत्तभवदेवाख्यौ द्वौ भ्रातरावभूतां, तयोर्वृद्धभ्रात्रा भवदत्तेन वैराग्येण दीक्षा गृहीता. अथैकदा स निजसंबंधिमिलनाय तस्मिन्नेव ग्रामे समागतः. अथ तस्मिन्नवसरे भवदेवो नागिलाभिधां स्त्रियं परिणीय तस्या मंडनकार्ये तत्पर आसीत्. भवदत्तं समागतं विज्ञाय संबंधिनो घृतादिभिर्भक्त्या तं प्रतिलाभयामासुः, इतो भवदेवोऽपि निजभ्रातरमागतं श्रुत्वार्धमंडितामेव निजभार्यां त्यक्त्वा वंदनोत्सुकस्तस्य समीपे गतो वंदित्वा च पार्श्वे स्थितः, तदा मुनिना झोलिकायां निजपात्राणि सम्यक्कुर्वता हस्तस्थं घृतपात्रं भूमौ मुक्तं, विनयान्वितेन भवदेवेन भूमितस्तन्निजहस्ते धृतं, तावता भवदत्तस्ततः प्रस्थितो भवदेवोऽपि तद्घृतपात्रमादाय तस्य पृष्टे गतः, अथ पृष्टागता अन्ये सर्वेऽपि संबंधिनो नगरप्रतोलीतो व्याघुट्य वलिताः, भवदेवेन चिंतितं भ्रातुः पार्श्वे झो-

लिकायामतिभारोऽस्ति, ततस्तस्मै पात्रमिदं दत्वा पश्चाद्वलनं ममायुक्तमेव. अथानेकविधां वार्त्तां पथि कुर्वंतौ तौ द्वावपि वने गुरुसमीपे प्राप्तौ. भवदेवं दृष्ट्वा गुरुणोक्तं कोऽयं तरुणः? भवदत्तमुनिनोक्तं भगवन्नयं मम भ्रातास्ति. पुनर्गुरुणोक्तं घृतपात्रोत्पाटनेन कथमयं दीक्षाभिप्रायेण समागतोऽस्ति? भवदत्तेनोक्तं भगवान् यथादेशं दास्यति तथाहं करिष्यामि. तत् श्रुत्वा गुरुणा भवदेवं प्रत्युक्तं भो भवदेव किं ते चारित्रग्रहणभावोऽस्ति? तदा तेन विनयिना विचारितं भ्रातृवचनमलीकं न कार्यमिति विचिंत्य तेनोक्तं मम भावोऽस्ति. तदा गुरुणापि ज्ञानतो लाभं विज्ञाय तत्क्षणं तत्रैव तस्य दीक्षा दत्ता. अथ भवदेवस्तु निजनवपरिणीतां स्त्रियं स्मरमाणो लज्जयैव केवलं चारित्रं पालयति. अथ कालांतरे वृद्धभ्राता भवदत्तोऽनशनं कृत्वा मृत्वा च सौधर्मदेवलोके देवो जातस्ततो भवदेवेन चिंतितं मया केवलं भ्रातुः प्रीतये एव चारित्रं गृहीतमस्ति, अथ भ्राता तु स्वर्गभागभवत, किंच मद्विरहदुःखिनी नवपरिणीतनागिला चंद्रं विना चकोरीव ताम्यंती भविष्यति. इत्यादि चिंतयन्नसौ गुरुमनापृच्छ्यैव स्वीयग्रामं समागत्य निजगृहे समायातो गृहांगणोपविष्टां नागिलां च दृष्ट्वापि तां स नोपलक्षयामास, तया च चतुरया स उपलक्षितः, ततस्तेन पृष्टं मम भा-

र्या नागिला कास्ति ? नागिलयोक्तं सैवाहमस्मि, परं हे मुने त्वयाधुना मदर्थं चारित्रं न त्याज्यं. इत्यादिमिष्टवचनैस्तया प्रतिबोधितोऽसौ द्रुतं पश्चाद्गुरुपार्श्वे समागत्यालोचनां जग्राह. नागिलयापि साध्वीसमीपे दीक्षा गृहीता. प्रांते भवदेवः शुद्धं चारित्रं प्रपाल्य सौधर्मदेवलोके सामान्येंद्रो जातस्तत्र च तौ द्वावपि भ्रातरौ परस्परं महाप्रीतिवंतौ जातौ. अथ भवदत्तजीवस्तु क्रमेण ततश्च्युत्वा पुष्कलावतीविजये पुंडरीकिण्यां नगर्यां चक्रवर्त्तिपुत्रो जातस्तत्र च यौवनं प्राप्य दीक्षामादायावधिज्ञानं च स प्राप्तवान्. भवदेवजीवोऽपि तत्रैव विजये वीतशोकायां नगर्यां पद्मरथनृपस्य शिवकुमाराभिधः पुत्रो जातः, परिणीताश्च तेन पंचशतस्त्रियः, एकदा निजपूर्वभवभ्रातरं चक्रिपुत्रं वीक्ष्य प्रतिबोधं प्राप्य स दीक्षाग्रहणोत्सुकोऽभूत्, परं मातापितृभ्यां निवारितोंतःपुरमध्ये भावयतित्वं पालयन् स्थितः, सर्वा अपि नार्यो हावभावादिविलासांस्तस्य पुरः कुर्वंति परं स मनागपि नो चलितः, तत्रस्थोऽयं नित्यं षष्ठंषष्ठेनाचाम्लतपः करोति, एवं स द्वादशवर्षावधि तपस्तप्त्वा पंचमदेवलोकवास्ययं विद्युन्माली देवोऽभूत्, आचाम्लतपःप्रभावेणायमखंडिततेजोयुक्तो वर्त्तते. अथानंतरं स देवः सप्तमे दिवसे ततश्च्युत्वा राजगृहनगरे ऋषभदत्तव्यवहारिणो धारिणीनामभार्यायाः कुक्षौ जंबूवृक्षस्वप्नसूचि·

तपुत्रत्वेनोत्पन्नः, स्वप्नानुसारेण तस्य जंबूकुमार इति नाम दत्तं. क्रमेण यौवनं प्राप्तोऽसौ समुद्र-श्रीप्रभृत्यष्टौ कन्याः केवलं पित्रोराग्रहेण परिणीतवान्. परं स्वयं वैराग्ययुक्तो ब्रह्मचर्यैकलीनस्ताः प्र-तिबोधयामास. इतो जयपुरनगरे विंध्याभिधराज्ञः प्रभुप्रभवाभिधौ पुत्रावास्तां. राज्ञा स्नेहतो लघु-पुत्राय प्रभवे राज्यं दत्तं, ततो ज्येष्ठपुत्रप्रभवः कुपितश्चौरपल्ल्यां समागत्य चौरवृत्तिं कृतवान्. अथै-कदा स पंचशतचौरयुतो राजगृहे जंबूकुमारगृहे चौर्यार्थं समागत्य सर्वेभ्योऽवस्वापिनीं निद्रां दत्वा धनं गृहीतुं लग्नः, अथ जंबूकुमारस्य ब्रह्मचर्यमाहात्म्येन सा निद्रा नागता, ततोऽसौ तांश्चौरान् दृ-ष्ट्वा नमस्कारमहामंत्रस्य निजमनसि ध्यानमकरोत. तत्प्रभावतस्ते सर्वेऽपि चौराः स्तंभितास्तदा प्र-भवो जंबूकुमारं नत्वा विज्ञपयामास हे जंबो त्वं मम स्तंभिनीं विद्यां देहि? मम पार्श्वाच्चावस्वापि-नीं तालोद्घाटिनीं च द्वे विद्ये गृहाण? जंबूकुमारेणोक्तं प्रातरहं पितरौ प्रतिबोध्य दीक्षामादास्ये, मम विद्यायाः प्रयोजनं नास्ति. किंच मम पार्श्वे कापि विद्या नास्ति, केवलं यूयं शासनदेव्यैवस्तं-भिताः स्थ. इति श्रुत्वा प्रभवेन सर्वेषामप्यवस्वापिनी निद्रा पश्चात्संहृता कथितं च हे मित्र यौव-नेऽपि त्वं विषयसुखपराङ्मुखः कथं वर्त्तसे? जंबूकुमारेणोक्तं हे प्रभव सांसारिकविषयोऽयं मधुबिं-

दुसदृशोऽस्ति. यथा कश्चित्पुरुषः सार्थाद्भ्रष्टो वने मदोन्मत्तगजेन दृष्टस्ततो भीतोऽसौ कूपोपरि लंब-
मानैकवटवृक्षशाखायां विलग्नो गजेन शुंडातस्तमादातुं बहुः प्रयत्नः कृतः परमशक्तो बभूव, द्वौ मूष-
कौ तां शाखां कर्त्तयतः, गजश्च तां वृक्षशाखां धूनयितुं लग्नः, इतोऽधः कूपमध्ये विकासितनिजभ-
यंकरमुखौ द्वावजगरौ तेन दृष्टौ, चतुःपार्श्वेषु चतुःकृष्णसर्पाः फूत्कारं कुर्वंतस्तेन दृष्टाः, अथ वटवृ-
क्षोपर्येकं मधुछत्रमस्ति, ततो मधुमक्षिका उड्डीय तच्छरीरे दंशान् ददति, परं मधुछत्रतो क्षरन्मधुबिं-
दुस्तस्य मुखे पतति. तदास्वादनलोलुपोऽयं सर्वमपि पूर्वोक्तं दुःखं विस्मरति. इतः कश्चिद्विमानस्थेन
विद्याधरेण तत्रागत्य कथितं भो पुरुष त्वामहमस्माद्दुःखान्निष्कासयामि ततस्त्वं मम विमाने समा-
गच्छ ? तेनोक्तं स्तोकान्मधुबिंदूनास्वाद्यागमिष्यामि. तत् श्रुत्वासौ विद्याधरो गतः. अथ हे प्रभव त्व-
मस्य दृष्टांतस्योपनयं शृणु ? पुरुषसदृशोऽयं संसारिजीवः, संसाररूपेयमटवी, कूपो हि मनुष्यजन्म,
मृत्युरूपो गजः, नरकतिर्यग्गतिरूपावजगरौ, चतुःकषायरूपाः सर्पाः, शाखारूपमायुः, मूषकौ हि कृ-
ष्णशुक्लपक्षौ, मक्षिकारूपशोकवियोगादिदुःखानि, मधुबिंदुरूपं च विषयसुखं, विद्याधररूपश्च सद्गुरु-
र्ज्ञेयः, अतो हे प्रभव प्रभातेऽहं श्रीसुधर्मस्वामिपार्श्वे दीक्षां गृहिष्यामि. प्रभवेनोक्तं हे मित्र ? मा-

तृपितृभार्यादिसंबंधिस्नेहः कथं तव मानसं नार्द्रीकरोति? जंबूकुमारेणोक्तं हे प्रभव? एवंविधाः संबंधाः संसारेऽनेके जायंते, तत्वतोऽयं जीव एकाक्येवास्ति. कुबेरदत्तवद्यो बहुस्नेहं करोति स कर्मणा बध्यते. तथाहि—मथुरानगर्यां कुबेरसेनाभिधगणिका बहुनटविटैः सह भोगादि भुनक्ति. सैकदा गर्भिणी जाता, तया गर्भपातनायानेके उपायाः कृताः परं गर्भो नो पतितः, अनुक्रमेण च तया युगलं प्रसूतं. तयोः करांगुल्योः कुबेरदत्तकुबेरदत्तेत्यभिधानांकितमुद्रिके समारोप्य काष्टपेटायां च तौ संस्थाप्य सा पेटी यमुनामध्ये प्रवाहिता. प्रभाते द्वाभ्यां व्यवहारिभ्यां स्नानार्थं नदीतटगताभ्यां दृष्टा, गृहीता च ताभ्यां विभागीकृत्य. गृहमागत्य तौ बालौ ततो निष्कास्य निजसंतानवत्पालयामासतुः, क्रमेण यौवनं प्राप्तौ तौ परस्परं परिणायितौ. अथैकदा कुबेरदत्तकरांगुलिस्थां मुद्रिकां दृष्ट्वा शंकितया कुबेरदत्तया कथंचिन्मातापितृभ्यां स्वकीयभ्रातृभगिनीसंबंधं विज्ञाय वैराग्येण दीक्षा गृहीता, तपसा च तस्या अवधिज्ञानं समुत्पन्नं. इतः कुबेरदत्तो व्यापारार्थं मथुरायां गतस्तत्र च दैवयोगेन तस्य निजमाता कुबेरसेनया सह संबंधो जातः, प्रसूतश्च तथैकः पुत्रः. अथ कुबेरदत्ता साध्वी तदनर्थं निजज्ञानेन विज्ञाय मथुरायां कुबेरसेनागृहे समागता, तयोः प्रतिबोधाय च तं बा-

लमष्टादशविधसंबंधसूचकवचनोपेतगीतैरुल्लापयंती विनोदमकारयत. तत् श्रुत्वाश्चर्यं प्राप्तौ तौ द्वावपि मुद्रिकाभिज्ञानदर्शनपूर्वकं सा प्रतिबोधयामास. तदा कुबेरदत्तेन दीक्षा गृहीता, कुबेरसेनया च सम्यक्त्वं गृहीतं. अतो हे प्रभव संसारमध्येऽनेकविधाः संबंधा भवंति, संबंधिपंजरबद्धा शुका इव विद्वांसोऽपि जना मोक्षसुखं न प्राप्नुवंति. प्रभवेणोक्तं हे मित्र! लोके कथ्यते यद्विना पुत्रेण प्राणी दुर्गतिं प्राप्नोति तत्कथं? जंबूकुमारेणोक्तं शृणु? तामलिप्त्यां नगर्यामेको महेश्वरदत्ताख्यः सार्थवाहो वसति, तस्य गांगिलाभिधा भार्या, सा दुःशीला परपुरुषासक्ता बभूव. अथैकदा महेश्वरदत्तमातापितरौ मृत्वा तस्मिन्नेव नगरे क्रमेण शुनीमहिषौ जातौ. एकदा महेश्वरदत्तेन निजभार्यां गांगिलां परपुरुषेण सह विलासं कुर्वंती दृष्टा, ततः क्रुद्धेन तेन स पुरुषो व्यापादितः, स च गांगिलैकध्यानतो मृत्वा तस्या एव गर्भे स्ववीर्येण समुत्पन्नः, क्रमेण तया स बालः प्रसूतः, पुत्रप्रसवतो गांगिलापि भर्तुः सादरा जाता, महेश्वरदत्तश्च तं बालं निजपुत्रं जानन् निजोत्संगे संस्थाप्यामंदानंदमनुभवति. अथ निजपितुः श्राद्धदिने महेश्वरदत्तस्तमेव निजपितृजीवमहिषं द्रव्यदानपूर्वकं गृहीत्वा तं च व्यापाद्य तन्मांसेन निजसंबंधिनः प्रीणयामास. गृहमध्ये प्रविशंतीं तां निजजननीजी-

वरूपशुनीं च यष्ट्यादिभिः कुट्टयित्वा स बहिर्निष्कासितवान्. सापि बहिःक्षिप्तान्यस्थिखंडानि भक्षयति. तदैवाहारार्थं तत्रागतेनैकेन ज्ञानिमुनिना तं वृत्तांतं स्वज्ञानेन ज्ञात्वा पश्चाद्वलितं. तदा महेश्वरदत्तेन मुनिपार्श्वे समागत्योक्तं हे मुने अद्य मत्पितुः सांवत्सरिकश्राद्धमस्ति ततस्त्वं भिक्षां गृहाण ? मुनिनोक्तं मांसभोजिगृहस्थगृहाद्वयं भिक्षां नाधिगच्छामस्तत्रापि त्वं तु पितृमांसभोज्यसि. तत श्रुत्वा विस्मितेन महेश्वरदत्तेन पृष्टो मुनिः सर्वमप्युदंतं कथितवान्. तत श्रुत्वा पार्श्वस्थशुन्या जातिस्मरणं समुत्पन्नं. ततस्तेन पुनः पृष्टं हे मुने कृपां विधाय तदभिज्ञानं दर्शय ? मुनिनोक्तं गृहमध्ये मुक्तेयं प्राप्तजातिस्मरणा शुनी गृहस्थं निधानं ते दर्शयिष्यति. महेश्वरदत्तेन गृहमध्ये मुक्ता शुनी तथैव निजपादखननेन तस्मै निधानं दर्शयामास. तद् दृष्ट्वोत्पन्नविश्वासेन महेश्वरदत्तेन वैराग्योद्भवनतः संसारं त्यक्त्वा दीक्षा गृहीता, गतश्च सद्गतौ. अतो हे प्रभव त्वं विचारय संसारसागरनिमज्जतो जंतोः पुत्राः कथमुद्धारकारका भवंतीति. तत श्रुत्वा प्रतिबुद्धेन प्रभवेणोक्तं हे स्वामिन्नहमपि त्वया सार्द्धं चारित्रमादास्ये. अथ समुद्रश्रीरुवाच स्वामिन् दीक्षाग्रहणेन त्वं कदाचित्कृषीवल इव पश्चात्तापं प्रयास्यसि. तथाहि—सुसीमाभिधग्रामे कश्चिदेको बकाभिधः कृषीवलोऽ-

वसत, तेन निजक्षेत्रे कंगुकोद्रवादिधान्यमुप्तं. एकदा च निजसंबंधिमिलनाय स निकटवर्त्तिग्रामे गतस्तत्र संबंधिनां गृहे तेन गुडमिश्रितपोलिकानां भोजनं प्राप्तं. हृष्टेन बकेन तेभ्यः पृष्टं गुम्गोधूमादि कथं निष्पाद्यते ? तदा तैस्तस्मै गोधूमेक्षुनिष्पत्तिविधिः कथिता, द्रुतं गृहे समागतोऽसौ गोधूमेक्षुवाभिलाषी बकः पुत्रादिभिर्निवारितोऽप्यर्धनिष्पन्नकंगुकोद्रवानुत्पाटितवान्; ततस्तेन तत्र गोधूमवपनेच्छातः कूपः खनितः परं वंध्यास्तनाद्दुग्धमिव तस्मात्पानीयं न निःसृतं, ततो द्वाभ्यां भ्रष्टोऽसौ पश्चात्तापपरो जातः, एवं हे स्वामिंस्त्वमप्येतानि संप्राप्तसुखानि परित्यज्य मोक्षसुखाभिलाषतः कदाचित्पश्चात्तापं प्रयास्यसि. जंबूकुमारेणोक्तं हे कामिनि काकतुल्योऽहं नास्मि. यथा विंध्याचलाटव्यां नर्मदाभिधतटिनीतटे वृद्धैकहस्ती मृतस्तदा कोऽप्यतिमांसलोलुपः काकस्तस्यापानद्वारतस्तत्कलेवरमध्ये प्रविश्य तन्निजकुलायमिव मन्यमानो मांसं स्वादयन् रात्रिंदिवा तत्रैव निवासं कृतवान्, इतो भीष्मग्रीष्मतापपरितप्तं तदपानद्वारं शुष्कीभूय संकुचितं, मरुदागमनमार्गनिरुंधनेन व्याकुलीभूतोऽयं काको बहिर्निस्सरितुमनेकानुपायानकरोत्. इतो गंभीरगर्जनप्रयाणभेरीझांकारबधिरीकृतदिग्नागः सौदामिनीशाणोत्तीर्णनिशितासिकुंतततिमंडितो भीष्मग्रीष्मारिमपि निर्बलीकुर्वन्नाकृष्टधनुर्नि-

गतमुशलपरिमितजलधाराशरधोरणीभी रणाभिमुख इव मेघमहीपतिः समायातः, तदा नर्मदापि मदाकुलकुलटांगनेव दीर्णशेवालनीलोत्तरीया, विविधजलविभ्रमान् दर्शयंती, निजस्वछंदचारेण कुलद्वयमपि पातयंती, निजांगजानपि बालवृक्षपादपान्मूलादुन्मूल्येतस्ततो निःक्षेपयंती, उल्ललल्लोलकल्लोलकरोछालनं कुर्वंती, निजजनकाद्रिराजहृदयमपि स्फोटयंती, निजतुल्यचापल्योद्भूतमन्यलघुनदीसखीगणमपि सार्द्धं नयंती, पथि निजनिवारणोद्यतानेकपदार्थानप्यवगणयंती निशोद्भूतघोरतमस्यपि निर्भयैव चचाल. अथ नर्मदायास्तस्मिन् जलपूरे तद्गजकलेवरं कल्लोलैरुल्लाल्यमानं काकदौर्भाग्याकृष्टमिवाग्रे चचाल. क्रमेण नदीप्रवाहैः प्रेर्यमाणस्तन्मध्यस्थः परलोकप्रयाणार्थी वायसोऽपि परद्वीपगमनार्थी यानारूढः पोतवणिगिव महासागरे समायातः, अथ तद्गजकलेवरस्य जलार्द्रीभूतमपानद्वारमपि पुनर्विवरितं विलोक्य गिरिकंदरातो घूक इव काकस्तस्माद्बहिर्निस्सरितः, कारागारनिस्सरित इव द्रुतमुड्डितोऽप्ययंभव्यः संसारपारमिव स जलनिधेस्तटं न प्राप्तः, उड्डीयोड्डीय श्रांतः पुनरपि तत्रैव कलेवरोपरि स्थितः, अथ तत्कलेवरमपि नक्रचक्रमकरादिजलजंतुभिर्विदार्यमाणं जलभाराक्रांतं जलधौ निमग्नं, सार्द्धं काकोऽपि जलशरणीभूय पंचत्वं प्राप्तः, एवं हे कामिनि काक इवाहं

भवहरीरकलेवरार्थी सन् घोरसंसारसागरे पतितुं नेछामि. अथ द्वितीया पद्मश्रीरुवाच हे स्वामिन् त्वं वानरवत्पश्चात्तापं करिष्यसि, तथाहि—कस्यामप्यटव्यामेकं वानरवानरीयुगलं परस्परमतीवस्नेहपरमवसत. एकदा गंगातटिनीतटेऽटनं कुर्वन् वानरो ऽह्रमध्ये पतितो जातश्च तीर्थप्रभावेण मनोहररूपोपेतो मनुष्यः, तं तथाभूतं दृष्ट्वा वानर्यापि तथैव कृतं. जाता च सापि मनोहररूपा मानुषी. ततस्तौ दंपती मानुष्यभवसुखानि भुनक्ति. पुनरेकदा तेनैको ह्रदो दृष्टस्तदा निजभार्यां प्रत्युक्तमस्मिन् पतनादहं देवत्वं लप्स्ये, भार्ययोक्तं स्वामिन्नतीव लोभो न कर्त्तव्यस्तथापि स मूर्खस्तामवगणय्य तस्मिन् ह्रदे पतितो जातश्च पुनर्वानरः, इतस्तत्र केचिन्नृपसेवकाः समागताः, ते च तां भव्यरूपामेकाकिनीं स्त्रियं दृष्ट्वा गृहीत्वा राज्ञेऽर्पयामासुः, राज्ञा च सा पट्टराज्ञी कृता, इतोऽसौ वानरः केनचिद्योगिना गृहीत्वा नृत्यादिकलाकुशलो विहितः, कियद्दिवसानंतरं स योगी वानरयुतस्तस्य नृपस्य पार्श्वे द्रव्यार्थं वानरं नर्त्तयन् समायातः, तत्र नृपार्धासनस्थां निजभार्यां दृष्ट्वा वानरो रुदितुं लग्नस्तदा राज्ञ्योक्तं हे वानर अतिलोभतोऽविचारितं कार्यं कृत्वा प्राणी पश्चात्तापं प्राप्नोत्येव. तथैव हे स्वामिन् त्वमपि पश्चात्तापं प्रयास्यसि. जंबूकुमारेणोक्तमहमंगारकारक इव नास्मि, यथा कश्चिदं·

गारकारको ग्रीष्मकालेंगारकरणार्थमटवीमध्ये प्राप्तो जातश्च तृषातुरः, ततो जलार्थं बहुभ्रमणं कुर्वता तेन स्तोकजलबहुलकर्दमयुतं पल्वलं दृष्टं, तत्कर्दमयुतं पानीयं जिह्वालेहनपूर्वकं पीत्वापि स तृप्तो न जातस्ततोऽग्रे गछन्मूर्छया पतितः, स्वप्ने च तेनानेकतडागकूपसमुद्रा अपि जलपानतो निर्जलीकृताः, जागृतोऽसौ तृषातुरमेवात्मानमपश्यत्. एवं हे कामिनि कर्दमयुक्तजलतुल्यभवद्भोगैर्नाहं तृप्तीभवितुमिछामि. तदा पद्मसेनयोक्तं हे स्वामिन् त्वं नूपुरपंडिताशृगालकथां शृणु ? यथा राजगृहनगरे देवदत्ताभिधः स्वर्णकारोऽवसत्. तस्य पुत्रो देवदिन्नाभिधस्तस्य भार्या च दुर्गिलाभिधा. सा सुंदररूपलावण्ययौवनाद्युपेता निजकटाक्षशरश्रेणिभिरनेकतरुणपुरुषचित्तपक्षिणः पातयंती नगरे स्वछंदतया भ्रमति. अथैकदा सा ग्रीष्मर्त्तौ स्नानार्थं तटिनीतटप्राप्ता सकलांगपरिहितस्वर्णरत्नाभूषणा जलदेवीवाशोभत. मदनगंधगजेंद्रकुंभस्थलाविव मुक्तमालालंकृतौ जगज्जयसमुद्यतमकरध्वजमहीधरगिरिदुर्गाविव पयःप्रवाहोत्पत्तिस्थानौ निजस्तनमंडलौ दर्शयंती सा शनैःशनैः स्वकीयकंचुकमुत्तारयामास. ततो नदीजलमध्ये समागत्य स्वकीयोच्चपीनस्तनौ तुंबयंती जलकल्लोलानवगाहमाना सखीभिः सह विविधनर्मकेलिकुतूहलोपेतवचनविलासैर्वशिनामपि पुंसां कामोन्मादं जनयंती, चाप-

व्योपेततरंगिणीसखीकृततरंगहस्तालिंगनं स्वीकारयंती, परिहितैकमात्रांतरीया विस्रस्तकेशपाशा धौताधरपल्लवरागा तत्कालं स्तोछितप्रमदेव सा दुर्गिला नदीमध्ये जलक्रीडां चकार. इतस्तां तथाविधां निरीक्ष्य कामानिलप्रेरितो युवैकस्तस्याः समीपमागत्योवाच हे सुभगे तेऽहं सुस्नातकुशलं पृछामि, मदनातुरया तयाप्युक्तं मम सुस्नानपृछकस्याहं समीहितं पूरयिष्यामि. अथ क्रमेणोपायतस्तस्य स्वर्णकारस्य गृहपृष्टे वाटिकायां रात्रौ तयोः संबंधो जातस्तत्रैव च तयोर्निद्रा समागता. लघुचिंतार्थमुछितेन श्वशुरेण तत्र परस्परालिंगनपूर्वकं निद्रावशं प्राप्तौ तौ दृष्ट्वा विस्मितेन गृहांतरागतेन पुत्रस्तु निजस्थाने एकाक्येव निद्रितो दृष्टः, तदा तेन चिंतितमस्या दुःशीलाया इमं वृत्तांतं प्रभाते चेत्पुत्रस्य कथयिष्यामि तर्हि स नैव मानयिष्यतीति विचिंत्य तेन शनैस्तस्याः पादतो नूपुरमभिज्ञानार्थमुत्तार्य गृहीतं, तावता विनिद्रया तया चतुरया कुलटया श्वशुरः समुपलक्षितः. अथ श्वशुरगमनानंतरं तया जाराय कथितमावयोर्वृत्तांतोऽयं मे श्वशुरेण ज्ञातोऽस्ति, अथ प्रभातेऽहं यदा शोभनयक्षपूजायै गछेयं तदा त्वया कृत्रिमग्रथिलीभूय ममालिंगनं सर्वजनमध्ये पथ्येव देयं, इत्युक्त्वा जारं विसर्ज्य सा गृहमध्ये पतिपार्श्वे समागता, भर्तारं गतनिद्रं विधाय तयोक्तं हे स्वामिन्नत्रातः

पातुराया ममाद्य निद्रा नायाति, अत आवां वाटिकायां गत्वा निद्रां कुर्वः, सरलेन देवदिन्नेन त- त्प्रतिपद्य तथैव कृतं. क्रमेण स च तत्र निद्रां प्राप, घटिकाद्वयानंतरं कुटिलया तया स्वामिनं गत- निद्रं विधाय कथितं हे स्वामिन् तव कुलेऽयमाचारो न शोभते, यत्त्वया सह सुप्ताया मम पादा- न्नूपुरं गृहीत्वा तव पिता गृहमध्ये गतः, एवंविधश्चायं दुर्बुद्धिर्नूनं प्रभाते मच्छिरसि कलंकं दास्य- ति. देवदिन्नेनोक्तं हे प्रिये त्वं विषादं मा कुरु? अहं मम पित्रे सत्यं कथयिष्यामि. अथ प्रभाते देवदिन्नेन निजपितरंप्रत्येतद्विषये उपालंभो दत्तः, पित्रा बहु कथितं तथापि तेन न मानितं. अथ तौ विवदमानौ दृष्ट्वा स्त्रीचरित्रैकदक्षया दुर्गिलया कथितं नूनमहमद्य शोभनयक्षस्य पादाभ्यां निःसृत्य स्वसतीत्वं प्रकटीकरिष्ये, इत्युक्त्वा सा पूजोपकरणयुता यक्षमंदिरं प्रति चलिता, लोका अपि तत्कुतूहलेक्षणकृते तत्र बहवो मिलिताः. इतः स जारो ग्रथिलीभूय पथ्येव लोकेषु पश्यत्सु तामा- लिलिंग, तया च निर्भर्त्स्य स दूरीकृतः, अथ तया यक्षाग्रे समागत्योक्तं हे यक्ष मया मे भर्त्तारं त- थैवाधुना स्पृष्टमेतं ग्रथिलं विनान्यस्य कस्यापि पुरुषस्य चेत्स्पर्शः कृतो भवेत्तर्हि मम शिक्षां कुरु? इत्युक्तवती द्रुतमेव सा यक्षपादाभ्यां निर्गता, यक्षस्तु तस्याः स्त्रीचरित्रकपटपाटवं चिंतयन्नेव तस्थि-

वान्, लोकैरपि सतीति कथ्यमाना सा गृहं समायाता, अथ तदादितो स्त्रीचरित्रविषयीभूतो देवदत्तो रात्रावपि गतनिद्रो बभूव, तं गतनिद्रं श्रुत्वा राजा निजप्रासादे प्राहरिकं कृतवान्. अथ राज्ञः पट्टराज्ञी मेंठेनैकेन सह लुब्धासीत, सा तस्य पार्श्वे गमनोत्सुका पुनः पुनः शयनादुत्थाय द्वाराग्रे समायाति परं तं स्वर्णकारमनिद्रं ज्ञात्वा पश्चाद्वलति. अथ तत्कारणजिज्ञासुः स्वर्णकारः कपटनिद्रया सुप्तस्तदा राज्ञी तं गाढनिद्रितं विज्ञाय गवाक्षे समागता. तत्र बद्धहस्तिना च शुंडादंडेन साऽधः समुत्तारिता, तत्र मेंठेन सह भोगविलासं विधाय तथैव हस्तिशुंडाप्रयोगेण गवाक्षे समागत्य सा निजालये शयनीये सुप्ता. तद् दृष्ट्वा स्वर्णकारेण चिंतितं यदि राजगृहेऽप्येतादृगकार्यं भवति तर्हि मम गृहस्य तु का वार्त्ता? इति चिंतयतः शांतीभूतचित्तस्य तस्य सुखनिद्रा समागता. प्रभातेऽपि तमजागृतं ज्ञात्वा राज्ञा निजसेवकेभ्यः कथितं यदि स गतनिद्रो भवेत्तदा मम पार्श्वे समानीयः, अथ प्रहरानंतरं गतनिद्रोऽसौ सेवकै राज्ञोऽग्रे नीतः, राज्ञा च तस्य गाढाग्रहेण निद्राकारणं पृष्टं, तदा तेनाभयदानमार्गणपूर्वकं सर्वोऽपि निशावृत्तांतो राज्ञोऽग्रे निवेदितः, तत् श्रुत्वा कुपितेन राज्ञादिष्टं गजमेंठसहितेयं राज्ञी वैभारगिरितः पातयित्वा व्यापादनीया. अथ मेंठेन स गजो वैभा-

रशिखरोपरि समानीतः स्थापितश्च स्वीपदैः, तदा लोकै राज्ञे विज्ञप्तिः कृता स्वामिन् शिक्षितोऽसौ गजो रक्षणीयः, किं तु राज्ञा तन्न स्वीकृतं, तदा मेंठेन स द्वाभ्यां पदाभ्यां स्थिरीकृतस्तथापि राज्ञः कोपो न शशाम. प्रांते चैकपदस्थितं गजं विलोक्य लोकानामप्यत्याग्रहं विज्ञाय गजरक्षणपूर्वकं राज्ञा राज्ञीमेंठयोर्वधः समादिष्टः, अथ तं गजं गिरिशिखरादुत्तारयितुं कोऽपि समर्थो नाभूत, तदा तेन मेंठेनोक्तं हे स्वामिन् चेदावयोरभयदानं मिलेत्तदाहं तं गजं कुशलेनाध उत्तारयामि. राज्ञा तत्स्वीकृतं, तदासौ शनैःशनैः कुशलेन तं गजं गिरितः समुत्तारयामास. ततो राज्ञा तावभयदानपूर्वकं देशान्निष्कासितौ. अथ तौ ततो निःसृत्य रात्रौ नगरस्यैकस्य समीपे समागत्य बहिरेव कस्मिंश्चिद्देवकुले स्थितौ, श्रांतस्य मेंठस्य निद्रा समागता. इतश्चैकश्चौरो नगरात्प्रणश्य तत्र देवकुले लीनो वेष्टितं च देवकुलमारक्षकैः, अथ तमसि राज्ञी चौरशरीरं सुस्पर्शं विज्ञाय तंप्रति कथयामास भो सुभग चेत्त्वं मां स्वीकरिष्यसि तदाहं त्वां जीवंतं रक्षयिष्यामि, चौरेण तत्प्रतिपन्नं, कामवशीकृतहृदयया राज्ञ्यापि निजः सर्वो वृत्तांतस्तस्मै गदितः. अथ प्रभाते आरक्षका मध्ये प्रविश्य तत्र चैकां स्त्रियं पुरुषद्वयं च दृष्ट्वा स्त्रियंप्रत्यपृछन् एतयोर्द्वयोर्मध्ये कश्चौरोऽस्ति? राज्ञ्या मेंठो द·

र्शितः, ततस्तैर्नृपादेशतो मेंठोऽसौ शूलिकाग्रे निक्षिप्तो जिनदासश्रावककथनेन च नमस्कारं स्मरन् मृत्वा देवीभूतः, अथैतश्चौरयुता राज्ञी प्रस्थिता, पथि चैका जलपूर्णा नदी समागता, तदा चौरेणोक्तं तव वस्त्राभूषणादि मम समर्पय ? यथाहं तत्सर्वं परतीरे मुक्त्वा पश्चादागत्य गताधिकभारां त्वामुत्पाट्य परतटे गच्छामि. तदा राज्ञ्यापि नग्नीभूय तत्सर्वं तस्मै समर्पितं. चौरोऽपि तद्ग्रंथिं शिरस्यादाय महाकष्टेन परपारं प्राप्तो विचारयति, यन्नदीमूलप्रदेशे नूनं मेघवृष्टिर्नो नद्यां जलमधिकाधिकं समायाति. तेनात्र नदीमध्यप्रवेशो ध्रुवं ममाकालमरणायैव भविष्यति. किंच या नृपमेंठयोः प्रत्यपि प्रीतिपरा न जाता, सा मयि प्रीतिभाजनं कथं भविष्यतीत्यादि विचिंत्य ग्रंथिमादाय स चलितस्तदा राज्ञ्या पूत्कारं कृत्वा रुदितुं प्रारब्धं, तदा पथि गच्छता चौरेणोक्तं हे भामिनि ! साक्षात्पिशाचिनीमिव त्वां नग्निकां दृष्ट्वाहं बिभेमीत्युक्त्वा स ततः पलायनं चकार. अथ तटिनीतटस्था सा नग्ना शीतकंपितदेहाऽनेकविधान् विलापांश्चकार. इतो देवीभूतो मेंठस्तस्याः प्रतिबोधाय मुखन्यस्तमांसखंडं शृगालरूपं विधाय तत्र समायातो नदीनीरगतं मीनं च दृष्ट्वा मांसखंडं तटे मुक्त्वा मीनं गृहीतुं नद्यां प्रविष्टः, इतो मीनं जले कर्दमांतर्विलीनीभूयादृश्यीभूतं, तटस्थं मांसखंडमपि काकः

समादायोड्डितः, स्वयं च पंके निमग्नो दुःखीबभूव. तद् दृष्ट्वा तटस्थशाङ्गया हसित्वोक्तं रे मूर्ख त्वं द्वाभ्यामपि भ्रष्टो जातस्तदा शृगालेन मनुष्यभाषया प्रोक्तं रे नग्निके अहं तु द्वाभ्यां भ्रष्टः परं त्रि-भ्योऽपि भ्रष्टं स्वकीयात्मानं त्वं कथं न शोचसि? तत श्रुत्वा विषण्णा सा यावद्विस्मयं प्राप्नोति ताव त्तेन निजरूपं प्रकटीकृत्य सर्वमुदंतं च कथयित्वा बहुतर्जनापूर्वकं तस्यै कथितं, अथ त्वमपि स्वमो-दकृते जिनधर्ममाराधय? तयापि तत्प्रतिपन्नं, तदा देवेन सोत्पाट्य साध्वीसमीपे मुक्ता, तत्र दी-क्षामादायालोचनापूर्वकं शुद्धतपांसि तप्त्वा सा सद्गतिं प्राप्ता, ततो हे स्वामिन् त्वमपि मिलितसुखा-नि विहायान्यसुखेभ्यो माभिलाषं कुरु? अथ जंबूकुमारः कथयति नाहं विद्युन्मालीव मूर्खः, यथा वैताढ्यश्रेण्यां गगनवल्लभनगरे मेघरथविद्युन्मालिनामानौ द्वौ भ्रातरावभूतां, एकदा गुरुणा ताभ्या-मुच्छिष्टचांडालिनीं विद्यां दत्वा कथितं चांडालपुत्रीं परिणीय वर्षैकं यावद्ब्रह्मचारित्वेनेयं विद्या सा-धनीया. ततस्तौ गुरुमापृच्छ्य वसंतपुरे चांडालपाटके स्थितौ. क्रमेण च परिचयतश्चैकेन चांडालेन मेघरथाय निजैकाक्षिणी कन्या परिणायिता, विद्युन्मालिने च दंतुरा कन्या परिणायिता. मेघरथ-स्तु ब्रह्मचर्यस्थितस्तां निजोत्तरसाधकां विधाय स्वविद्यां साधयामास. विद्युन्माली तु तस्यां दंतुराया-

मपि चांडाल्यामासक्तः सन् विषयभोगपरो जातः, वर्षानंतरं च सा सगर्भा बभूव. मेघरथेन स्वभ्रात्रे कथितं हे भ्रातः संप्रत्यावां स्वगृहे गच्छावः, विद्युन्मालिनोक्तं हे भ्रातर्मया तु विद्या न साधिता, किंचेयं मे भार्यापि सगर्भास्ति, ततस्तां विहाय मया तत्र नागम्यते. अथाधुना द्वितीयवर्षेऽहं ध्रुवं विद्यां साधयिष्यामि, ततो त्वयाथ वर्षानंतरं मम ग्रहणायात्र समागंतव्यं. ततो मेघरथः स्वगृहे गतः, कथिता च कुटुंबिनां विद्युन्मालिकथा. अथ द्वितीयवर्षानंतरं मेघरथेनागत्य विद्युन्माली गृहागमनकृते बहुधा प्रतिबोधितस्तथापि तस्यामेव विषयासक्तः सन् स न समायातः. एवं तृतीयवर्षेऽपि स न समागतः, कथितं च तेनाहं त्वत्रैव चांडालकुले स्थास्यामि. अथ मेघरथो राज्यं प्रतिपाल्य प्रांते निजपुत्राय च राज्यं दत्वा स्वयं दीक्षामादाय स्वर्गं गतः, विद्युन्माली तु तत्रानेकविधां चांडालीकृतविडंबनां सहमानः प्रांते दुर्ध्यानतो नरके गतः. ततो हे कामिनि अहं विद्युन्मालिसदृशो नास्मि. ॥ अथ कनकसेनोवाच हे स्वामिन् त्वं शंखवादकवत्पश्चात्तापं प्रयास्यसि. यथा शालिग्रामे कश्चिदेकः कृषीवलः सदैव रात्रौ क्षेत्रे मालकोपरिस्थितः शंखं वादयति, तच्छब्दतश्च हरिणशूकरादि श्वापदा दूरं पलायंते. अथैकदा कतिचिच्चौरा धेनुसमूहं कुतोऽपि चोरयित्वा रात्रौ तदध्वना व्रजंति,

ते च तत्र शंखध्वनिं श्रुत्वा पश्चादारक्षकानागतान् मन्यमाना गोगणं तत्रैव मुक्त्वा पलायिताः, प्र· भाते तेन कृषीवलेन निःस्वामिकं गोवृंदं निजक्षेत्रपार्श्वे चरद् दृष्टं. तेन चिंतितं नूनं मे शंखनादं श्रुत्वा भीताश्चौरा गोसमूहमिममत्रैव त्यक्त्वा पलायिताः. ततोऽसौ तं गोसमूहं नगरमध्ये समानीय लोकेभ्यः कथयामास यद्देवेन मह्यमयं गोसमूहो दत्तः, अथ द्वितीयवर्षेऽपि तथैव तस्करा गोसमू· हयुतास्तत्र समागताः, श्रुत्वा च शंखशब्दं शंकितास्तच्छंखशब्दानुसारेण ते तत्रागता दृष्ट्वा च तं कृषीवलं क्रोधेन ते यष्ट्यादिभिस्तं ताडयामासुस्ततस्तस्य क्षेत्रमुन्मूल्य तत्पशूनपि गृहीत्वा ते पला- यितास्ततोऽसौ दुःखी जातस्ततो हे स्वामिन् त्वमपि बहुलोभं मा कुरु? जंबूकुमारेणोक्तं हे कामि· नि नाहं वानरतुल्यो यथा विंध्याचलाटव्यां कश्चिदेको वानरो बहुवानरीयुतः सुखेन निजकालं ग- मयति, क्रमेण स वृद्धो जातः, इत एकेन तरुणवानरेण तत्रागत्य तं वृद्धं यूथान्निष्कास्य ताभि- र्वानरीभिः क्रीडितुमारब्धं. अथ खिन्नोऽसौ वृद्धवानरस्तृषातुरस्ततः पलाय्य गिरिकंदरायां गतस्तत्र दरब्शिलारसैर्भृतैका गर्त्तासीत, तेन मूर्खवानरेण जलधिया तस्मिन्निजमुखं क्षिप्तं संलग्नं च शिलार- से, मुखं निष्कासयितुं तेन तत्र निजहस्तपादाः क्षिप्तास्तेऽपि तत्र संलग्नाः, एवं स बुभुक्षितस्तृषि

तस्तत्रैव मृतः, ततोऽहं स इव मूर्खो नास्मि. अथ नभःसेनयोक्तं स्वामिन् वृद्धस्त्रीवत्त्वमतिलोभं मा कुरु? यथैकस्मिन् ग्रामे सिद्धिबुद्ध्याख्ये द्वे वृद्धस्त्रियावभूतां, तयोः परस्परं महती स्पर्द्धा बभूव, एकदा बुद्ध्या तत्रस्थो भद्रकनामा यक्षः समाराधितस्तेन तुष्टेन कथितं त्वयैकैको दीनारः सर्वदा मम पादाग्राद्गृहणीयस्ततोऽतिहृष्टया तया सदैव तथा कर्त्तुमारब्धं. क्रमेण तां धनाढ्यां वीक्ष्य सिद्ध्या पृष्टं हे भगिनि त्वयैतावती ऋद्धिः कुतः प्राप्ता? तया सरलतया स वृत्तांतस्तस्यै कथितः, तत श्रुत्वा तयापि स्पर्द्धया स यक्षः समाराधितस्तदा तुष्टेन यक्षेण तस्यै अपि नित्यमेकैकदीनारं दातुं समारब्धं. ततः पुनः सिद्ध्या यक्षमाराध्य तस्मात्ततो द्विगुणमधिगतं. अथ बुद्ध्या यक्षमाराध्य सिध्ध्युपरिद्वेषं विधाय निजैकाक्षिविनाशो मार्गितः, सिद्ध्यापि ततो द्विगुणं यक्षान्मार्गयित्वा स्वनयनद्वयं विनाशितं. अतो हे स्वामिन् त्वं बहुलोभं मा कुरु? जंबूकुमारेणोक्तं जात्याश्ववदहं तु मार्गे एव गमिष्यामि, उन्मार्गे नैव गमिष्यामि. यथा वसंतपुरपत्तने जितशत्रुराजास्ति, तत्र जिनदासाख्यः श्रावको राजमान्यो वसति. अथैकदा राजा जात्याश्वमेकं द्रव्यादिवृद्धिकरं विज्ञाय द्रव्येण गृहीतवान्, पोषणार्थं स जिनदासाय समर्पितः, अथ स श्रेष्ठी सर्वदा तस्याश्वस्य पानीयपानार्थं सरसि गच्छति. पथि

च जिनप्रासादं प्रदक्षिणीकृत्य वीतरागं च प्रणम्य गृहे समायाति. अथ तस्य राज्ञः शत्रुजित्तदश्वापहरणकृते विचारः कृतस्तदैकेन प्रधानेन कथितमहमश्वमपहृत्यानयिष्यामीत्युक्त्वा स वसंतपुरे समागत्य कपटश्रावकीभूय जिनालये च समागत्यानेकविधां जिनपूजां चकार. तं दृष्ट्वा श्रेष्ठिना पृष्टं भो श्रावकोत्तम त्वं कुतः समागतोऽसि ? श्रावकेणोक्तमहं संसारविरक्तो भावसाधुस्तीर्थयात्रां कुर्वन्नत्र नगरे जिनालयपूजार्थं समागतोऽस्मि. तत् श्रुत्वा हृष्टः श्रेष्ठी तं निजसाधर्मिणं विज्ञायादरेण निजगृहे समानयत्, भोजनादिभिश्च तस्य सत्कारं कृतवान्, ततः श्रेष्ठिना कथितमद्य त्वया मम गृहे एव रात्रिवासो विधेयस्तदा तेन कपटश्रावकेण महताग्रहेण तत्प्रतिपन्नं. इतः श्रेष्ठी तस्मिन्नेव दिने कस्मैचिदनिवार्यप्रयोजनाय निकटस्थग्रामांतरे गतः, अथ रात्रौ स धूर्तस्तमश्वं गृहीत्वारुह्य च तदुपरि प्रछन्नं प्रस्थितः, परमश्वस्तु नित्याभ्यासतः सरसि समागत्य पश्चाद्वलित्वा जिनालयं च प्रदक्षिणीकृत्य पुनर्जिनदासगृहे समायातः, धूर्त्तेन तस्य कशादिप्रहारैर्बहुताडितस्तथापि सोऽग्रे न चचाल. ततोऽसौ धूर्त्तः खिन्नः सन्प्रभातादर्वागश्वं तत्रैव मुक्त्वा पलायितः, प्रभाते समागतश्रेष्ठी निजाश्वं कशाप्रहारांकितशरीरं विधुरं च विज्ञाय धूर्त्तस्य तस्य दौर्जन्यं हृदि ध्यायंस्तदादितः सावधानो

बभूव. ततो हे कामिनि अहमपि सोऽश्व इव सन्मार्गगाम्यस्मि. ॥ अथ कनकश्रीरुवाच हे स्वामिन् भवतः कुलपुत्रवत्कदाग्रहो लग्नोऽस्ति. यथैकस्मिन् ग्रामे कश्चिदेको महामूर्खः कुलपुत्रो वसति, तस्मै तन्मात्रैकदा शिक्षितं हे वत्स त्वं चापल्यं मुंच ? किमपि कार्यं गृहीत्वा नैव त्यक्तव्यं. तेनापि तदंगीकृतं. अथैकदा स चतुष्पथे गतोऽभूत, तत्र बहवो नगरलोका निजनिजकार्यकृते गमनागमनं कुर्वंति. इतः कस्यैकस्यापि रजकस्य रासभः प्रणष्टस्तदा दूरादेव रजकेण लोकानुद्दीश्य पूत्कृतं यदेषो मे रासभो गृहितव्यः, तत् श्रुत्वा तेन कुलपुत्रेण धावमानस्य तस्य लांगूलं हस्ताभ्यां गृहीतं, रासभेन बहवः पादप्रहारास्तस्मै दत्ताः, परं मातृवचनं स्मरमाणेन तेन तन्न मुक्तं, लोकैर्बहुधा निवारितोऽपि स तत्कार्यान्न विरराम. अथ रासभपादप्रहारतस्तस्य तुंडं दशनविहीनं जातं, मस्तकादपि रुधिरं निस्सृतं, प्रांते पतितोऽसौ गृहमागतो दुःखी बभूव. ततो हे स्वामिन् त्वमपि कदाग्रहं मा कुरु ? अथ जंबूकुमारेणोक्तं हे कामिनि सोल्लकब्राह्मणवदहं स्वार्थे ग्रथिलो नास्मि. यथा वसंतपुरे सोमदत्तविप्रपुत्रः सोल्लकनामा जन्मदरिद्री बभूव. तस्मिन्नेव नगरे कामपताकाभिधैका वेश्या यौवनरूपलावण्याद्युपेता वसति. तया सहानेकधनिकपुत्राः स्पर्द्धयाधिकाधिकधनदानपूर्वकं विलासान्

कुर्वंति. अथैकदा कामपीडितस्य सोल्लकस्यापि तया सह विलासकरणाभिलाषो जातस्ततोऽसौ भिक्षाधिगतधान्यमादाय तस्याः पार्श्वे समागत्य तद्धान्यदानपूर्वकं विलासार्थं याचनामकरोत. तयोक्तं त्वं मम गृहकर्म कुरु? ततः कदाचिदहं तवाभिलाषं पूरयिष्यामि. तदप्यसौ प्रतिपद्य नित्यं तस्या गृहे पानीयं समानयति, धान्यानि दलयति, शय्यां च सम्यक्करोति, उच्छिष्टभाजनानि च मार्जयति. एवं गृहकर्म कुर्वता तेन कतिचिद्दिवसानंतरं तस्यै भोगप्रार्थना कृता, तदा तया स निजसेवकैः कुट्टयित्वा गृहाद्बहिर्निष्कासितो निजकार्यादपि भ्रष्टीभूय दुःखी बभूव. ततो हे कामिनि स इवाहं मूर्खो नास्मि. अथ सप्तमी कनकवती जजल्प हे स्वामिन् मासाहसपक्षिवत्त्वं साहसं मा कुरु? यथा कश्चिदेकः पक्षी वननिकुंजे सुप्तस्य व्याघ्रस्य दशनस्थानि मांसखंडानि भक्षयति, उड्डीयोड्डीय च वृक्षोपर्युपविश्य 'मासाहसेति' पुनः पुनर्जल्पति. तथा हे स्वामिन् त्वमपि केवलं मुखेनैव विषयसुखतिरस्कारं करोषि, मनसि तु तेऽधिकाधिकसुखवांछा ज्ञायते. अथ जंबूकुमारेणोक्तं हे कामिनि त्वमप्येकां कथां शृणु? वसंतपुरे जितारिनामराजा, सोमदत्ताभिधश्च पुरोहितः, तस्य पुरोहितस्य पर्वमित्रनमस्कारमित्रनित्यमित्राभिधा यथा नामास्तथागुणास्त्रयः सुहृदोऽभवन्. अथैकदा तस्मै

सोमदत्ताय राजा कुपितस्तदा स सहायार्थं नित्यमित्रपार्श्वे समागतः, परं नृपभीतेन तेन तस्य सहायो न दत्तः, पर्वमित्रेणापि तथैव कृतं. अथासौ विषण्णः सन् प्रणाममित्रपार्श्वे गछन् पथि चिंतयितुं लग्नो यदस्य प्रणाममित्रस्य मया कदापि किंचिदपि नोपकृतं. ततोऽस्मिन् भयंकरसंकटे स कथं मम सहायं दास्यति? परं स सज्जनोऽस्ति इति शंकाकुलमानसः स तत्पार्श्वे गतः, कथितश्च तेन स्वकीयो वृत्तांतस्तदा तेन मित्रेण तस्मै अत्यादरपूर्वकं कथितं भो मित्र त्वं भयं मा कुरु? इत्युक्त्वा स शस्त्रयुतस्तेन सह चलितो मुक्तवांश्च तं तस्येप्सितस्थाने. अत्रोपनयस्त्वेवं—नित्यमित्रतुल्यं शरीरं, पर्वमित्रसमाश्च कुटुंबिनः, प्रणाममित्रसमश्च धर्मः, यमराजतुल्यश्च राजा, ततो यमनृपे कुपिते सति प्राणिनां केवलं धर्म एव सहायो भवति, न तु शरीरबांधवादय इति भावार्थः. अथाष्टमी जयश्रीरुवाच हे स्वामिन् त्वमपि नागश्रीवदस्मान् कल्पितकथया मोहयसि, यथा रमणीयपुरे कथाप्रियो नामा राजा नित्यं लोकेभ्यः कथाः शृणोति, कथाश्रवणाय तेन सर्वपौराणां वारकाः कृताः, एकदा नागशर्मणो द्विजस्य वारकः समागतः, परं स मूर्खत्वात्कथां कथयितुं समर्थो नोऽभूत्. तेन स चिंतया विषण्णो बभूव. तं चिंतातुरं दृष्ट्वा तस्य पुत्र्या नागश्रिया तत्कारणं पृष्टं,

तेनोक्तमहं राजाग्रे कथाकथनेऽशक्तोऽस्मि. तयोक्तमहं राजाग्रे गत्वा कथां कथयिष्यामीत्युक्त्वा सा नृपाग्रे गता. राज्ञोक्तं हे पुत्रि त्वं कथां कथय ? तयोक्तं स्वामिन्नस्मिन्नगरेऽग्निशर्माभिधो द्विजस्तस्य भार्या सोमश्रीः, पुत्री चाहं नागश्रीः, पित्रा निकटग्रामस्थेनैकेन मातृपितृरहितेन द्विजपुत्रेण सह मम संबंधो मेलितः. अथैकदा मे पितरौ मामेकाकिनीं गृहे मुक्त्वा ग्रामांतरं गतौ. इतो मे भर्त्ता समायातो मया तस्मै भोजनं दत्वा रात्रौ शय्या सम्यक्कृत्वा दत्ता. ततोऽसौ तत्र सुप्तः, गृहमध्ये द्वितीयशय्याऽभावत्वेनाहं भूमौ सुप्ता, परं गृहमध्ये सर्पभीतितो भीताहं तेन सार्धं शय्यैकदेशे सुप्ता. इतो भर्त्ता जागृतो मदंगस्पर्शेन च तस्य कामः संदीप्तः, किं तु कुमारित्वेन विषयसेवनमयुक्तं विज्ञायाहं ममांगोपांगानि वस्त्रैराच्छाद्य संगोप्य च स्थिता. अथ विषयरोधेन दाघज्वरोत्पत्तितः स तत्र मृतः, तदा मया लोकभीत्या गृहे एव गर्त्तां खनित्वा तस्य च खंडखंडं कृत्वा तदंतर्निक्षिप्तः, उपरि च मृत्तिकां क्षिप्त्वा भूमिर्विलिप्ता, प्रभाते पितरौ गृहे समागतौ, परं केनापि सा वार्त्ता न ज्ञातेति कथयित्वा नागश्रीर्मौनमुपागता. राज्ञोक्तं हे कुमारि किमेषा वार्त्ता सत्या वा असत्या ? तयोक्तं सर्वदा लोककथिता वार्त्ताः सर्वा अपि यदि सत्याः स्युस्तर्हि मयोक्तेयमपि वार्त्ता भवता सत्यैव

विप्रतारयसि. जंबूः
ज्ञातव्या. एवं यथा नागश्रिया राजा विस्मयितस्तथा त्वमपि हे स्वामिन्नस्मान् विप्रतारयसि. जंबूः
कथयति हे कामिनि ललितांगवदहं विषयलोलुपो नास्मि. यथा वसंतपुरे शतायुधनामा नृपस्तस्य
च ललिताख्या राज्ञी दुःशीला वर्त्तते. अथैकदा गवाक्षस्थया तया समुद्राभिधव्यवहारिपुत्रो मनो·
हररूपो ललितांगाभिधः पथि व्रजन् दृष्टस्तं दृष्ट्वा सा मोहिता, ललितांगोऽपि तां दृष्ट्वा कामा·
तुरो बभूव. अथैकदा कौमुदीमहोत्सवे राजा नगराद्बहिर्वने गतस्तमवसरं प्राप्य राज्ञ्या स ललितां·
गो यक्षमूर्त्यानयनमिषेण निजावासे समानीतः, इतस्तत्र राजानमायांतं श्रुत्वा तया स गृहपश्चा·
द्भागस्थितायां विष्टाकूपिकायां क्षिप्तः, तत्रस्थोऽसौ नरकादप्यधिकं दुःखमनुभवति; दयया च राज्ञी त·
स्यान्नं क्षिपति, तद्विष्टोपरिपतितमन्नं क्षुधातुरोऽसौ भक्षयति, दशमासानंतरमतीवमेघवृष्टितो जलप्रवा·
हेण प्रेर्यमाणः स मूर्छितो बहिर्निस्ससार, क्रमेण सचेतनीभूय गृहे समागतः, अथैकदा पुनरपि प·
थि गच्छन्नसौ गवाक्षस्थया राज्ञ्याहूतस्तत्र गंतुमुत्सुकोऽभवत्. ततो हे स्त्रियः कथयध्वं यूयं यदसौ ल·
लितांगो मूर्खो वा चतुरः? तदा ताभिरष्टाभिरप्युक्तं हे स्वामिन् स ललितांगो महामूर्खो ज्ञेयः, जं·
बूकुमारेणोक्तं तर्हि दृष्टांतस्यास्योपनयं शृणुत? ललितांगतुल्योऽत्र संसारिजीवः, राज्ञ्या सह दर्पणेक·

सुखसदृशं विषयसुखं, नृपनिभं मरणं, विष्ठाकूपतुल्यो गर्भावासः, आहारतुल्यो मातृभक्षिताहारस्वादः, दशमासानंतरं बहिर्निस्सरणतुल्यं गर्भागारतो योनिद्वारेण जन्म, पुना राज्ञीसमीपगमनतुल्यं पुनरपि गर्भावासे पतनं. इति श्रुत्वा तासामष्टानामपि वैराग्यं समुत्पन्नं, ततः प्रभाते जंबूकुमारेण सर्वपरिवारयुतेन श्रीसुधर्मस्वामिपार्श्वे दीक्षा गृहीता, प्रभवोऽपि समागत्य चारित्रं गृहीत्वा जंबूस्वामिशिष्योऽभूत. क्रमेण श्रीसुधर्मास्वामी जंबूस्वामिनं निजपट्टे स्थापयित्वा केवलज्ञानमासाद्य मोक्षे गतः, ततो जंबूस्वाम्यपि निजपट्टे प्रभवस्वामिनं संस्थाप्य मोक्षे गतः, स जंबूस्वामी च चरमकेवली ज्ञेयः ॥ इति श्रीतपःकुलके जंबूस्वामिकथा ॥

गाथा—जिणकप्पियपरिहारिअ । पडिमापडिवन्नलंदयाइणं ॥ सोऊण तवसरूवं । को अन्नो वहइ तवगव्वं ॥ १७ ॥ व्याख्या—जिनकल्पी साधुः, परिहारविशुद्धिचारित्रवान् साधुः, द्वादशसाधुप्रतिमाप्रतिपन्नः साधुः, लंदनाभिग्रहतपोवान् साधुश्च, एतेषां तपःस्वरूपं श्रुत्वा कोऽन्यस्तपोगर्वं करोति ? पूर्वोक्तानां चतुर्णामपि महातपस्विनां तपोविधिः प्रवचनसारोद्धारादिग्रंथतोऽवसेया. ॥ १७ ॥

गाथा—मासद्धमासखवणो । बलभद्दो रूववंपि हु विरत्तो ॥ सो जयउ रम्मवासी । पडिबोहिय·

सापयसहस्सो ॥ १८ ॥ व्याख्या—मासक्षपणार्द्धमासक्षपणादितपःकारक एवंविधः श्रीबलभद्रर्षी रूपवानपि विरक्तः सन्नरण्यवासीभूतः प्रतिबोधितश्वापदसहस्रो जयतु. बलभद्रर्षिकथा पूर्वं श्रीनेमिनाथाधिकारे कथितास्ति ॥

गाथा—थरहरिअधरं खलहलीय—समुयं चलियकुलसेलं ॥ जमकासी जयं विहणु । संघकए तं तवस्स फलं ॥ १९ ॥ व्याख्या—थरहरिता कंपाविता धरा यत्र, तथा खलहलिताः क्षोभिताः समुद्रा यत्र, तथा चालितानि कुलशैलानि यत्र, एवंविधं जगत् विष्णुकुमारेण श्रीसंघकृते यत्कृतं तदपि तपस एव फलं ज्ञेयं. ॥ १९ ॥ श्रीविष्णुकुमारकथा चेत्थं—एकदोज्जयिन्यां नगर्यां श्रीमुनिसुव्रतस्वामिशिष्याः श्रीसुवृत्तसूरयः समागतास्तदा धर्मदत्तनृपप्रमुखाः सर्वेऽपि लोकास्तं वंदितुं तत्रायाताः, अथ तत्र राज्ञो नमुचिनामा प्रधानो मिथ्यात्वी वर्त्तते. तेन गुरुणा सह धर्मवादः समारब्धस्तदैकेन सूरिशिष्येण धर्मपक्षं स्थापयित्वा सर्वलोकसमक्षं नमुचिर्जितस्ततोऽसौ कोपेन खड्गमादाय रात्रौ गुरूणां मारणाय समागतस्तदा स देवैः स्तंभितः, प्रभाते राज्ञ उपरोधतः स सूरीन् क्षामयित्वा मुक्तो बभूव. अथ नगरलोकैर्धिक्कृतोऽसौ राज्ञा देशाद्बहिर्निष्कासितस्ततोऽसौ हस्ति·

नापुरे समागत्य पद्मोत्तरराज्ञः सेवको जातः, तस्य पद्मोत्तरराज्ञो विष्णुकुमारमहापद्माख्यौ द्वौ पुत्रावास्तां, तयोर्माता परमजैनधर्मानुरागिणी एकदा जिनरथयात्रामहोत्सवं चकार, तस्या ईर्ष्यांत एकया मिथ्यात्विन्या सपत्न्या ब्रह्मरथमहोत्सवः कृतः, जिनमतानुरागिण्या राज्ञ्योक्तं मम रथोऽग्रे यास्यति मिथ्यात्विन्या चोक्तं मे रथोऽग्रे गमिष्यति. तयोर्विवादं विज्ञाय राज्ञा ते द्वे अपि तत्कार्यतो निवारिते. अथ महापद्मो निजमातृदुःखं विज्ञाय परदेशे गतस्तत्र च चक्ररत्नोत्पत्त्यनंतरं तेन षट्खंडानि साधितानि, क्रमेण चक्रवर्त्तिनः सकलसमृद्धियुक्तोऽसौ हस्तिनागपुरे समायातः, ख्यातश्च स नवमश्चक्रवर्ती. पद्मोत्तरराज्ञा तस्मै राज्यं दत्वा निजपुत्रविष्णुकुमारेण सह श्रीसुव्रताचार्यसमीपे दीक्षा गृहीता, अनुक्रमेण षट्सहस्रवर्षानंतरं विचित्रतपोविधानतो विष्णुकुमारमुनेर्वैक्रियाद्यनेकलब्धिः समुत्पन्ना. अथात्र हस्तिनागपुरे नमुचिमंत्रिणा विनयादिगुणेन चक्रवर्ती वशीकृतः, संतुष्टेन चक्रिणोक्तं त्वं वरं मार्गय ? नमुचिनोक्तं कदाचिदवसरेऽहं वरं मार्गयिष्यामि. अथैकदा श्रीसुव्रतसूरयो हस्तिनागपुरे समागत्य चक्रिण आग्रहेण चतुर्मासं स्थिताः, विष्णुकुमारमुनिश्च मेरुपर्वतोपरि चतुर्मासं स्थितः, अथ तान् सुव्रतसूरींस्तत्र चतुर्मासं स्थितान् ज्ञात्वा नमुचिना पूर्ववैरं संस्मृतं, ततोऽसौ

चक्रिपार्श्वे समागत्य निजपूर्ववरदानमार्गणपूर्वकं कथयामास हे स्वामिन् मह्यं सप्तदिनं राज्यं समर्पय ? राजा तं राज्यं समर्प्य निजांतःपुरे तस्थौ. अथ नमुचिः सर्वदर्शनिनः समाहूय कथयामास यूयं सर्वेऽपि मम वंदनं कुरुत ? भीतैः सर्वैरप्यन्यदर्शनिभिस्तस्मै वंदनं कृतं, ततोऽनेन सुव्रतसूरयोऽपि तत्कार्यकरणाय समाहूताः, सूरिभिरुक्तं वयं मुनयः केषामपि गृहस्थानां प्रणामं न कुर्महे. तदा मंत्रिणोक्तं तर्हि मम भूमिं द्रुतं त्यजत ? सूरिभिरथ स नमुचिरुपलक्षितः. नमुचेरनयतः संघोऽपि सकलो दूनः, अथ सक्रोधैर्गुरुभिरुक्तमस्ति स कोऽपि य एनं शिक्षां ददाति. तदैकेन शिष्येणोक्तं स्वामिन् विष्णुकुमारमत्राह्वयत ? अथ संघाज्ञयैकः शिष्यो मेरुपर्वते श्रीविष्णुकुमारसमीपे गत्वा तस्मै सकलं वृत्तांतं निवेदयामास. तत् श्रुत्वा कोपातुरो विष्णुकुमारमुनिस्तेन निजगुरुभ्रात्रा सह हस्तिनागपुरे राजसभायां समागतस्तं दृष्ट्वा नमुचिं विना सर्वेऽपि समुत्थाय वंदयामासुः, अथ विष्णुकुमारमुनिना नमुचिमुद्दिश्योक्तं त्वं साधूनामुपद्रवं मा कुरु ? तथापि तेन न मानितं, ततो विष्णुकुमारेणोक्तं तर्हि त्वं मम पादस्थानं देहि ? ततस्तेन पादत्रयाणां स्थानं दत्तं, अथ विष्णुकुमारमुनिना वैक्रियलब्ध्या स्वकीयं लक्षयोजनप्रमाणं शरीरं विहितं, पूर्वपश्चिमसमुद्रयोश्च निजपादद्वयं

मुक्तं, तृतीयवारं च चरणमुत्पाट्य नमुचिशिरसि मुक्तं, तेन स मृत्वा रसातले प्राप्तस्तथापि मुनिकोपो नोपशमते. अथ सौधर्मेंद्रेण तत्रागत्योपशमयुक्तवचनैः क्रमेण मुनिं शांतिं नीतः. ततो विष्णुकुमारमुनिर्निजमूलरूपं विधाय गुरुपार्श्वे समागत्यालोचनां जग्राह. प्रांतेऽनशनं विधाय स मोक्षे गतः ॥ इति तपःकुलके श्रीविष्णुकुमारमुनिकथा ॥

गाथा—किं बहुणा नणिएणं । जं कस्सवि किंवि सुहयंवि ॥ दीसइ तिहुअणमझे । तङ्ग तवो कारणं चेव ॥ २० ॥ व्याख्या–बहु कथनेन किं ? यत्र यस्य कस्यापि कथमपि यत् किंचिदपि त्रिभुवनमध्ये सुखं दृश्यते तत्र तप एव कारणं ज्ञेयं ॥ २० ॥

॥ इति श्रीतपःकुलकं समाप्तं ॥

---

॥ अथ श्रीभावकुलकं प्रारभ्यते ॥

अथ भावेन विनैषां दानादीनां माहात्म्यं नास्ति, ततो भाव एव प्रवरः, तत्र मंगलाचरणाय प्रथमं श्रीपार्श्वनाथस्तुतिमाह—

गाथा—कमठासुरेण रइअंमि । भीसणे पलयतुल्लजलबोले ॥ भावेण केवललच्छिं । विवाहिउ जयउ पासजिणो ॥ १ ॥ व्याख्या—कमठनाम्ना मेघमालिना भुवनवासिदेवेन रचिते कृते भीषणे रौद्रे प्रलयकालतुल्ये जलबोले पानीयपूरे सति भावनायां भावितायां सत्यां यः केवललक्ष्मींप्रति विवाहितः परिणीतवान् एवंविधः स श्रीपार्श्वजिनो जयतु. ॥ १ ॥ सा कथा चेयं—जंबूद्वीपे भरतक्षेत्रे पोतनपुरे नगरेऽरविंदाभिधो राजा, तस्य विश्वभूतिनामा पुरोहितो बभूव. तस्यानुद्धरीनामभार्या, तस्याः कुक्षिसमुद्भवौ कमठमरुभूतिनामानौ द्वौ पुत्रावभूतां. कमठस्य वरुणाभिधा भार्यास्ति, मरुभूतेश्च वसुंधराभिधाना भार्या वर्त्तते. अथ विश्वभूतिपुरोहितो जिनधर्ममाराध्य प्रांतेऽनशनं च विधाय सौधर्मदेवलोके देवो जातस्ततः कमठमरुभूती द्वावपि भ्रातरौ पुरोहितपदं पालयामासतुः. अथैकदा तत्र श्रीमुनिचंद्रसूरयः समागतास्तस्य धर्मोपदेशं श्रुत्वा मरुभूतिर्वैराग्यं प्राप्य विषयव्यालान्महानर्थकारकान्मत्वा तेभ्यो विमुखो जातः, अथ तस्य भार्या वसुंधरा चापल्येन कंदर्पाविर्भूततापोपशमनाय स्त्रीलंपटेन कमठेन सहानाचारं सेवितुं लग्ना, क्रमेण कमठभार्यया वरुणया तदनर्थं विज्ञाय तद्वृत्तांतो मरुभूतये निवेदितः, प्रच्छन्नस्थितेन मरुभूतिनापि तत्प्रत्यक्षं दृष्टं,

ततोऽसौ कोपेन व्याकुलीभूतो निजभ्रातरं कमठं तदकार्यकरणे निवारयामास, परं लंपटेन तेन न मानितं, तदा मरुभूतिना तद्वृत्तांतोऽरविंदराज्ञे निवेदितस्ततो राजा कमठं गृहीत्वा तस्य शिरोमुंडनमुखकज्जलालेपलंबकर्णारोहणादिविडंबनां विधाय तं निजदेशान्निष्कासयामास. मनस्यतीवदूनोऽसौ भ्रातरि कोपं वहन् सन् शिवाख्यतापसपार्श्वे तापसीं दीक्षां जग्राह. अथैकदा मरुभूतिना विमृष्टं नूनं मया भ्रात्रा सहाऽयुक्तं कृतं, ततोऽधुना तस्य समीपे गत्वाहं तस्मै क्षामयामीति विचार्य राज्ञा निवारितोऽपि स वने कमठपार्श्वे गत्वा कथयति हे भ्रातः केवलं स्त्रीकृते मया त्वया सहाऽशोभनं यत्कृतं तन्ममापराधं क्षमस्व ? एवं तस्यामृतमधुराण्यपि वचनानि श्रुत्वा फणीव कोपाटोपकलितः कमठो विषानलज्वालानिभानि वचांसि बभाण. रे दुराचारिन् रे कुलांगारक त्वमितो दूरीभव ? निजमुखं त्वं मा दर्शय ? एवं तिरस्कृतो मरुभूतिस्ततो निःसृत्य मनस्यतीव खिन्नो दुर्ध्यानेन मृत्वा विंध्याचले हस्ती जातः, तं वृत्तांतं श्रुत्वाऽरविंदो नृपो वैराग्यमासाद्य दीक्षां गृहीतवान्. क्रमेण निर्मलं चारित्रं पालयतस्तस्यावधिज्ञानं समुत्पन्नं. अथ कमठभार्या वरुणा मृत्वा तत्रैव विंध्याचले हस्तिनी जाता; तया सह विविधां क्रीडां कुर्वन् स गजो निजकालं गमयति. अथैकः सागरदत्तनामा सार्थ·

वाहोऽरविंदमुनियुतः संघसहितोऽष्टापदयात्रायै प्रयाणमकरोत्. क्रमेण स संघः प्रयाणं कुर्वन् विंध्या-चलाटव्यामेकस्य सरसस्तीरे समुत्तीर्णस्तदैषो हस्ती हस्तिनीयुतस्तत्र जलपानार्थं समायातस्तं दृष्ट्वा संघलोका भीताः पलायितुं लग्नाः, अरविंदमुनिस्तु तत्रैव कायोत्सर्गध्याने स्थितस्तस्य प्रभावतश्च स गजः शांतो जातः, ततो मुनिना ज्ञानेन तमुपलक्ष्योक्तं हे मरुभूते किं त्वं मामरविंदं नोपलक्षसीत्युक्त्वा मुनिना सर्वोऽपि पूर्वभववृत्तांतस्तस्मै कथितस्तत् श्रुत्वा हस्तिनीयुतस्य हस्तिनो जातिस्मरणज्ञानं समुत्पन्नं, ततस्ताभ्यां देशविरतिर्गृहीता. अथ कमठतापसः क्रोधाध्मातात्मार्त्तध्यानतः कालांतरे मृत्वा विंध्याचलाटव्यां सर्पो जातस्तत्र मरुभूतिजीवं हस्तिनं दृष्ट्वा तस्य पूर्ववैरमुल्लसितं, तेन दंशितो हस्ती विधिनानशनं विधाय कालं कृत्वा सहस्रारदेवलोके सप्तसागरोपमायुर्देवः समुत्पन्नः । इति तृतीयो भवः । सा हस्तिन्यपि प्रांतेऽनशनं विधाय द्वितीयदेवलोके देवांगना जाता. इतोऽसौ सर्पस्तत्र बहुजीवघातं विधाय मृत्वा पंचमे नरके गतः । अथ पूर्वमहाविदेहे सुकच्छविजये वैताढ्यपर्वते तिलकापुर्यां विद्युद्गतिर्नामा विद्याधरनृपो राज्यं करोति, तस्य तिलकावत्यभिधाना राज्ञी वर्त्तते. अथ स गजजीवो देवलोकाच्च्युत्वा तस्या राज्ञ्याः कुक्षौ किरणवेगेत्यभिधानपुत्रत्वे-

नोत्पन्नः, क्रमेण यौवनं प्राप्ताय तस्मै पिता पद्मावत्यभिधाना राजपुत्री परिणायिता, तया सह स किरणवेगोऽनेकसुखानि भुनक्ति. अथैकदा तत्र श्रुतसागराभिधानो मुनिः समागतस्तस्य धर्मोपदेशं श्रुत्वा विद्युद्गतिराज्ञा पुत्राय राज्यं दत्वा संयमं गृहीतं. अनुक्रमेण किरणवेगस्य पद्मावतीराज्ञीकुक्ष्युद्भवः किरणतेजोऽभिधानः पुत्रो बभूव, एकदा तत्र सुरगुरुनामा मुनीश्वरः समागतस्तस्य च देशनां श्रुत्वा वैराग्यं प्राप्य राज्ञा किरणतेजसे राज्यं दत्वा दीक्षा गृहीता, पठितानि चैकादशांगानि, तपःप्रभावेण चानेकलब्धयस्तस्य समुत्पन्नाः, अथैकदासौ मुनिराकाशमार्गेण पुष्करावर्त्तद्वीपे समागत्य तत्र शाश्वतचैत्यानि च वंदित्वा वैताढ्यपर्वते च समागत्य कायोत्सर्गेण तस्थौ. अथ स कमठजीवो नरकान्निःसृत्य तत्र वैताढ्यवने महासर्पो बभूव, तत्र च कायोत्सर्गस्थं तं मुनिं दृष्ट्वा स सर्पो निजपूर्वभववैरेण मुनिशरीरं वेष्टयित्वा दंशप्रहारान् दत्तवान्, मुनिरपि कालं कृत्वा द्वादशमे देवलोके गतः, सर्पोऽपि च दवदग्धः सन् पंचमे नरके गतः । अथ जंबूद्वीपे पूर्वविदेहे सुगंधलावतीविजये शुभंकरायां नगर्यां वज्रवीर्याभिधो राजास्ति, तस्य च लक्ष्मीवत्यभिधाना राज्ञी वर्त्तते, तस्याः कुक्षौ द्वादशमदेवलोकाच्च्युतो किरणवेगजीवो वज्रनाभाभिधपुत्रत्वेनावतीर्णः, यौवनं प्राप्ताय

तस्मै राज्यं दत्वा राज्ञा दीक्षा गृहीता. क्रमेण वज्रनाभोऽपि निजपुत्रचक्रायुधपुत्राय राज्यं दत्वा संयमं जग्राह. अधीतद्वादशांगो वज्रनाभमुनिरेकदा ज्वलनगिरिसमीपे कायोत्सर्गेण तस्थौ. अथ स सर्पजीवः पंचमनरकान्निःसृत्य संसारं च भ्रमित्वा तत्र भिल्लो जातस्तेन तं वाचंयमं कायोत्सर्गस्थं दृष्ट्वा पूर्ववैरानुभावेन तंप्रति बाणं मुक्तं, तेन विद्धो मुनिरालोचनापूर्वकमनशनं विधाय मृत्वा मध्यमग्रैवेयके ललितांगनामा देवो बभूव. भिल्लश्च मृत्वा नरके गतः, अथ जंबूद्वीपे महाविदेहक्षेत्रे सुरपुरीनगरे वज्रबाहुनामा राजास्ति, तस्य सुदर्शनाभिधाना राज्ञी वर्त्तते, तस्याः कुक्षौ चतुर्दशमहास्वप्नसूचितो ललितांगदेवजीवः सुवर्णबाहुनामपुत्रत्वेनोत्पन्नः, क्रमेण यौवनाभिमुखाय तस्मै राज्ञा राज्यं दत्वा दीक्षा गृहीता. अथैकदा सुवर्णबाहुराजा विपरीतशिक्षिताश्वापहृतो बहूर्भूमिमुल्लंघ्य सरोवरमेकं ददर्श, तत्र तेन निर्मलं जलं पीतं, तस्य सरसस्तीरे विविधाम्रनारंगलवंगदाडिमताल्लतमालादितर्वालिपरिमंडितनिजप्रदेशैः पथि श्रांतपांथानामाश्रयीभूतं कुंदमल्लीजातिचंपकांकुरनिचयनिर्गतपरिमलसुरभीकृतवनवातं पल्वलोद्भूतप्रफुल्लकमलालिकलितोरुभागमुपवनमेकं तेन दृष्टं. तत्र द्राक्षलतामंडपे तापसकन्याभिः परिवृता तारकालिभिर्वेष्टिता चंद्रकलेवैका मनोहररूपा कन्या तेन

दृष्ट्वा, तां चंद्रमुखीं विलोक्य राज्ञा चिंतितं किमियममरी वा मानुषी वर्त्तते ? इत एको भ्रमरोऽन्य-सुगंधिपुष्पाणि विहाय तस्या मुखकमलमलौकिकसुगंधयुक्तं मन्यमान इव झंकाररवमिषेण तद्वद-नांभोजपरिमलं वर्णयन्निव कामुक इव तदोष्ठचुंबनाभिलाषी सन् तस्या आननसमीपे भ्रमणं कृत-वान्. तदा संभ्रांता सा कन्या सखीभ्यः कथयामास हे सख्यो मामस्माद्दुर्विनीताद्भोलंबाद्रक्षत ? तत् श्रुत्वा सहास्याभिः सखीभिरुक्तं हे सखि दुर्विनीतानां शासने भूमिपाल एवाधिकारी, अतस्त्वं सुवर्णबाहुभूपालमाह्वय ? यतस्ते तस्यैव शरणमुचितमस्ति. तासामेवं नर्मयुक्तहास्यकेलिवचनं नि-शम्य निजहृदये प्रकटीभूतमपि मदनविकारं संगोप्य त्रपया मौनमाधाय सा प्रमदा स्थिता, इतो वृ-क्षांतरितो राजा तासां विनोदसंलापान् श्रुत्वा सहसा तत्र प्रकटीभूयोवाच भो तापसकुमार्यः कोऽ-स्ति स दुर्विनीतो यो युष्माकं मुग्धानामत्र संतापकारको भवति ? तत् श्रुत्वा सर्वाः कुमार्यश्चकिता-स्त्रस्तहरिण्य इव संभ्रांता बभूवुः, अथ तमाकारादिभिर्नृपमेवावधार्य तासु विदग्धैका सखी प्रोवाच हे राजन् स्वागतं इमामस्माकं सखीं पद्मावतीमयं दुर्विनीतो भ्रमरः संतापयति. ततो भीताया अस्या मे सख्या भवंतः सहायीभूय रक्षणं कुरुत ? राज्ञोक्तं केयं पद्मावती ? तदा सखी प्रोवाच रत्नपुरन-

गरे रत्नशेखरनामा विद्याधरो बभूव, तस्य रत्नावलीनाम भार्या, तयोर्द्वयोः पुत्रयोरुपर्येकेयं पद्मावत्यभिधाना पुत्री जाता. अथैकदा स विद्याधरो मृत्युमाप, तदा राज्यार्थं द्वौ भ्रातरौ विवादं कर्त्तुं लग्नौ, तेन दुःखिता राज्ञी निजपुत्रीं पद्मावतीमादायात्राश्रमे समागता. अथैकदात्र ज्ञानी मुनिः समायातस्तस्या मात्रा पृष्टश्च स जगाद अस्यास्ते तनयायाः स्वर्णबाहुचक्री भर्त्ता भविष्यतीति. किंचाकाशदिग्भिर्जानामि यद्यूयमेव स्वर्णबाहुचक्री स्थः, इतः पश्चात्स्थितो राज्ञः सकलोऽपि परिवारस्तत्र समागतः, अथ क्रमेण रत्नावल्या तापसैश्च स्वर्णबाहुराजानं तत्रागतं दृष्ट्वा हर्षेण सा पद्मावती तेन सह परिणायिता. अथ तया सह स्वनगरे स समायातः, क्रमेण चक्ररत्नोत्पत्त्यनंतरं तेन षट् खंडानि साधितानि. अथैकदा तत्र श्रीजगन्नाथनामा तीर्थंकरः समवसृतस्तदा चक्रवर्त्ती निजपरिवारयुतो जिनं वंदितुं समागतः. तत्र मिलितान् देवान् दृष्ट्वा कुत्रापि मयेदृशा देवा दृष्टाः संतीति चिंतयतस्तस्य जातिस्मरणज्ञानं समुत्पन्नं, प्रभोर्देशनां श्रुत्वा वैराग्येण परिवारसहितेन तेन निजपुत्राय राज्यं समर्प्य प्रभोः पार्श्वे दीक्षा गृहीता. समस्तसिद्धांतानधीत्य विंशतिस्थानकतपश्चाराध्य स तीर्थंकरनामकर्मोपार्जितवान्. अथैकदा स्वर्णबाहुमुनिः क्षीरगिरिसमीपे वने कायोत्सर्गेण तस्थौ. इ-

तोऽसौ भिल्लजीवो नरकाच्च्युत्वा तत्रैव वने सिंहो बभूव, मुनिं दृष्ट्वा तस्य वैरमुल्लसितं, तेनासौ सिंहो मुनिं व्यापाद्य तस्य मांसं भक्षयामास. मुनिस्तु तस्योपर्यनुकंपाध्यानतो मृत्वा प्राणतदेवलोके देवत्वेन समुत्पन्नः, सिंहजीवश्च मृत्वा चतुर्थनरके गतः. अथ जंबूद्वीपे भरतक्षेत्रे काशीदेशे गंगोपकंठे वाणारसीनामनगर्यस्ति, तत्रेक्ष्वाकुवंशीयाश्वसेनाभिधो राजा राज्यं करोति, तस्य सत्यवतंसीभूता वामाभिधाना राज्ञी वर्त्तते. तस्याः कुक्षौ दशमदेवलोकाच्च्युतः स्वर्णबाहुजीवश्चतुर्दशस्वप्नसूचितः पुत्रत्वेनोत्पन्नः, तदा षट्पंचाशद्दिक्कुमारिभिश्चतुःषष्टिशक्रैश्च तस्य जन्ममहोत्सवः कृतः, प्रभाते राज्ञापि जन्मोत्सवपूर्वकं तस्य श्रीपार्श्वनाथ इति नाम दत्तं. अथानुक्रमेण कल्पशाखीव वृद्धिं प्राप्नुवन् प्रभुर्यौवनावस्थां संप्राप्तः. अथ कुशस्थलाभिधनगरे प्रसेनजितनामा नृपो राज्यं करोति, तस्य रूपसौभाग्यलावण्यैकनिधिः प्रभावतीनामा पुत्री बभूव. तयैकदा श्रीपार्श्वनाथरूपगुणादिवर्णनं श्रुत्वैवं प्रतिज्ञा कृता, यदस्मिन् भवे मम स्वामी श्रीपार्श्वनाथ एव भवतु. इतः कलिंगदेशाधिपयवनराज्ञा प्रसेनजितराज्ञे दूतं प्रेषयित्वा प्रभावती मार्गिता. प्रसेनजितराज्ञा तन्न प्रतिपन्नं. तदा कुपितः कलिंगाधिपतिर्निजसकलसैन्ययुतो भूरिभृतः कंपयन् कुशस्थलपुरंप्रति चचाल. तं सैन्य-

युतमायांतं श्रुत्वा प्रसेनजितराज्ञा निजमित्राश्वसेननृपंप्रति स्वकीयपुरुषोत्तमाभिधानमंत्रिणं प्रेष्य सहायो मार्गितः, तदाश्वसेनराजापि निजमित्रसहायार्थमनेकानेकपतुरंगस्यंदनसुभटान्वितः कुशस्थलपुरंप्रति गमनोत्सुको बभूव. अथ तं वृत्तांतं श्रीपार्श्वनाथकुमारः श्रुत्वा पितुः पार्श्वे समागत्य विज्ञप्तिं चकार हे पितर्मयि सति संग्रामार्थं भवतां गमनमनुचितमेव, अतः कृपां विधाय मामेव तत्र प्रयाणायादेशं देहि ? राजापि तस्यात्याग्रहं विज्ञाय प्रयाणायादेशं दत्तवान्. पितुरादेशमासाद्य श्रीपार्श्वनाथः प्रयाणाभिमुखोऽभवदित इंद्रेण प्रभुं रणप्रयाणोद्यतमवधिना विज्ञाय निजमातलिसारथियुतो दिव्यरथः प्रेषितस्तदा प्रभुरपि वैरितिमिरततितिरस्काराय सूर्य इव तं दिव्यस्यंदनमारुरोह. क्रमेण नियमितप्रयाणानि कुर्वन् सकलबलयुतः प्रभुः कुशस्थलपुरपरिसरे समाजगाम. अथ भूरिसैन्यसंयुतं श्रीपार्श्वनाथं तत्र समागतं श्रुत्वा कालिंगनृपस्तस्य तेजोऽसहमानो भीतः सन् कंठे कुठारं विधाय पार्श्वप्रभोश्चरणयोः पतितो निजापराधं च क्षामयित्वा पश्चाद्वलितः. अथ हर्षफुल्लितांतःकरणः प्रसेनजितराजा निजपुत्रीं प्रभावतीं पुरस्कृत्य श्रीपार्श्वप्रभोः समीपे समागत्य विज्ञपयामास, हे स्वामिन् भवदनुरक्तां ममैतां नवयौवनां पुत्रीं परिणीय मम मनोरथं सफलीकुरु ? संसारविरक्तो भ·

गवानुवाच हे राजन् मम पितुरादेशस्तव शत्रुतो रक्षणकरणरूप एवास्ति, अतोऽहमत्र कन्यापाणिग्रहणं नैव करिष्यामीत्युक्त्वा निजसैन्ययुतः श्रीपार्श्वनाथो निजनगरंप्रति प्रयाणमकरोत, वाणारस्यां चागत्य पितुः प्रणामं कृतवान्. अथ प्रभुं प्रस्थितं विज्ञाय प्रभावत्या विविधविलापान् कर्तुं प्रारब्धं, तदा प्रसेनजितराजा तामाश्वास्य सार्द्धं च गृहीत्वा स्वयं वाणारस्यामागत्याश्वसेननृपाय विज्ञप्तिं कृतवान्. प्रभुरपि ज्ञानेन निजभोग्यकर्म विज्ञाय महोत्सवपूर्वकं प्रभावतीं परिणीतवान् तया सह च प्रवरविषयसुखानि भुनक्ति. अथैकदा प्रभुः प्रभावत्या सह गवाक्षस्थो नगरशोभां विलोकयति तदैकस्यां दिशि भूरिनगरलोकान् गच्छतो दृष्ट्वा तत्कारणं सेवकाय पृष्टवान्. सेवकेनोक्तं स्वामिन् कश्चिदेकः कमठनामा पंचाग्निसाधनपरस्तापसो नगराद्बहिः समागतोऽस्ति, तं वंदितुमेते पौराः प्रयांति, तत् श्रुत्वा प्रभुरपि तत्कौतुकविलोकनकृते हस्तिस्कंधस्थितः प्रस्थितः, क्रमेण तत्रागत्य प्रभुणाग्निसाधनपरः स तापसो दृष्टः, ज्ञानेन चोपलक्षितो यदयं स एव सिंहजीवोऽस्तीति. तस्य पूर्वभवे सिंहीभूतस्य कमठजीवस्य वृत्तांतस्त्वेवमस्ति. स सिंहजीवो नरकाच्च्युत्वा तीर्यगादिषु भ्रमित्वा कस्यैकस्य दरिद्रस्य ब्राह्मणस्य पुत्रत्वेन समुत्पन्नोऽस्ति, बालत्वे एव पित्रोर्मरणादुदरपूरणादिदुःखेन

तापसो जातोऽस्ति. अथ प्रभुणा तेन प्रज्वलितकाष्ठांतर्दह्यमानं सर्पं स्वज्ञानबलेन ज्ञात्वा दयार्द्री-भूतांतःकरणस्तापसायोक्तं भो तापस त्वं हिंसात्मकं तपः कथं करोषि? कमठतापसेनोक्तं यूयं राजपुत्रा गजाश्वादिखेलनविधावेते समर्थाः, न च दयातपोवार्त्ताविषये भवतां सामर्थ्यं. तत श्रुत्वा प्रभुर्निजसेवकेन तज्ज्वलत्काष्टं कुठारतो द्विधा कारयामास. निस्सृतश्च तस्मादर्द्धज्वलितः सर्पः, ततः प्रभुस्तं सर्पं नमस्कारमंत्रं श्रावयामास. तेन शुभध्यानेन मृत्वा स सर्पो धरणेंद्रो जातः। अथैनं वृत्तांतं दृष्ट्वा सर्वेऽपि नगरलोकाः कमठं निंदयामासुः, एवं जनापमानतो दूनोऽसौ क्रोधांधीभूतोऽज्ञानतपांसि तप्त्वा मृत्वा च मेघकुमारदेवो जातः। प्रभुरपि गृहे समागत्यैकदा वसंतर्त्तौ सेवकप्रेरितो वनमध्ये क्रीडार्थं गतस्तत्रैकं जिनमंदिरं चालोक्य तन्मध्ये प्रविष्टः, तत्र चित्रयुतं श्रीनेमिचरित्रं लिखितं दृष्ट्वा मनसि विस्मयं प्राप्तवान् यन्नेमिप्रभुणा राज्यं राजीमतीं च विहाय बालब्रह्मचारित्वेनैव चारित्रं गृहीतमस्तीति. अथ वैराग्येण स्वामिना चिंतितं यद्गृहे गत्वा पितरावापृच्छ्याहमपि दीक्षामादास्ये, इति विचिंत्य यावता प्रभुर्गृहमागतस्तावता लोकांतिकदेवैरागत्य धर्मतीर्थप्रवर्त्तनाय प्रभोर्विज्ञप्तिः कृता. अथ प्रभुरपि वार्षिकदानं दत्वा चतुःषष्टींद्रकृतमहोत्सवपूर्वकं विशा-

त्शिबिकायामारुह्योपवने समागत्य पंचमुष्टिलोचं कृत्वा पौषकृष्णैकादशीतिथौ सामायिकोच्चारं कृतवान्. तदैव प्रभोर्मनःपर्यवज्ञानं समुत्पन्नं. इंद्रादयः सर्वेऽपि सुरगणाः प्रभुं वंदित्वा नंदीश्वरे चाष्टाह्निकामहोत्सवं कृत्वा जग्मुः. द्वितीयदिवसे प्रभुः कोपटाभिधग्रामे धन्नाभिधगृहस्थगृहे क्षीरान्नेनाष्टमपारणं कृतवान्. तत्र च पंच दिव्यानि प्रकटितानि. ततस्त्र्यशीतिदिवसानि यावत्प्रभुश्छद्मस्थत्वेन विहृत्य वाणारस्यां नगर्यां बहिरुद्याने तापसाश्रमे वटवृक्षतले कायोत्सर्गेण स्थितः, अथ स कमठो मेघमाली पूर्वभववैरप्रेरितः प्रभोः परीषहं कर्तुमागतस्तत्रानेकविकरालगजव्याघ्रवेतालादिरूपाणि विधाय स प्रभुं भापयामास. परं तैः स्वामिनमक्षुब्धं विज्ञाय स घोरांधकारनिकरैकनिधितुल्यैर्महामेघैरंबरमाछादयामास, तदा ब्रह्मांडोदरविदारणैकदक्षाणि बधिरीकृतनिखिलजगज्जननिकरकर्णानि निःसत्त्वीभूयप्रणष्टपंचाननगणपरिपूरितगिरिकंदराणि घोरघनगर्जितानि दिग्गजानपि त्रासयामासुः. तडितो निजनिरंतरझात्कारैर्घोरतमतमोव्याप्तगिरिगह्वरगतानपि घूकान् दिनकरोदयभ्रमं कारयामासुः, घृतमुशलरूपाविछिन्नपतज्जलधाराभिर्मेघा वर्षयामासुः, कल्पांतकालोछलितमुक्तमर्यादो यादोनाथ इव कल्लोलोल्ललितं जलपूरं प्रभोर्नासाग्रं यावदागतं, तत्क्षणमेव कृतापराधजनहृदयमिव धरणेंद्रासनं

चकंपे, तदैव स धरणेंद्रो निजज्ञानेन कमठकृतोपसर्गं विज्ञायाग्रमहिषीयुतस्तत्र समाजगाम, प्रभुं च वंदित्वा सहस्रपत्रकमलोपरि प्रभुमुध्धृत्य मस्तकोपरि च स निजफणामंडलछत्रं धृतवान्, तदग्रमहिष्यश्च तत्र नृत्यं चक्रुः, ततो धरणेंद्रः कमठंप्रति जगाद अरे दुष्ट ! त्वयैतत् किं समारब्धं ? अधुनैव तव विनाशं करिष्यामीत्युक्त्वा तेन चक्रं निजकरे गृहीतं, तदा भीतः कमठः प्रभुमेव शरणीकृत्य तस्य चरणयोः प्रविष्टः प्रोवाच च हे स्वामिन् मां रक्ष रक्षेति. धरणेंद्रेणोक्तं रे दुष्ट प्रभोः शरणग्रहणादेवाहं त्वां मुंचामीत्युक्तः कमठः प्रभुं क्षामयित्वा त्यक्तवैरभावो निजस्थाने जगाम. धरणेंद्रोऽपि परिवारयुतः प्रभुं वंदित्वा स्वस्थाने गतः, ततश्चैत्रकृष्णपंचम्यां प्रभातवेलायां प्रभोः केवलज्ञानं समुत्पन्नं, देवैरागत्य समवसरणं रचितं. तत् श्रुत्वाश्वसेनराजापि परिवारयुतो महताडंबरेण तत्रागत्य प्रभुं वंदित्वा धर्मदेशनां शुश्राव, ततश्रवणोत्पन्नवैराग्यो राजा हस्तिसेनाख्यांगजाय राज्यं दत्वा वामाप्रभावत्यादिपरिवारयुतो दीक्षां गृहीतवान्. चिरकालं दीक्षां प्रतिपाल्य प्रभोर्मातापितरौ चतुर्थे देवलोके गतौ. प्रभुरपि सप्ततिवर्षं यावत्केवलपर्यायं परिपाल्य सम्मेतशिखरे त्रिंशत्साधुपरिवृतो मासिकीसंलेखनायुतः श्रावणकृष्णाष्टम्यां च मोक्षे गतः ॥ इति श्रीभावकुलके श्रीपार्श्वनाथकथा ॥

गाथा—निच्चुन्नो तंबोलो । पासेण विणा न होइ जह रंगो ॥ तह दाणसीलतवज्ञावणाउं । अहलाउं सव्व भाव विणा ॥ २ ॥ व्याख्या—यथा चूर्णेन विना नागवल्लीदलं रंगयुतं न स्यात्तथा भावं विना सर्वा अपि दानशीलतपोभावना निष्फला ज्ञेयाः ॥ २ ॥

गाथा—मणिमंतउसहीणं । जंततंताण देवयाणंपि ॥ भावेण विणा सिद्धि । न हु दीसइ कस्सवि लोए ॥ ३ ॥ व्याख्या—मणयश्चिंतामणिप्रमुखास्तेषां तथैव मंत्राणामौषधीनां यंत्राणां तंत्राणां देवानां चापि भावेन विना कस्यापि लोके निश्चयेन सिद्धिर्न दृश्यते ॥ ३ ॥

गाथा—सुहभावणावसेणं । पसन्नचंदो मुहुत्तमित्तेणं ॥ खविऊण कम्मगंठिं । संपत्तो केवलं नाणं ॥ ४ ॥ व्याख्या—शुभभावनामहिम्ना प्रसन्नचंद्रराजर्षिर्मुहूर्त्तमात्रेणापि कर्मग्रंथिं क्षपयित्वा केवलज्ञानं संप्राप्तः ॥ ४ ॥ तस्य कथा चेवं—पोतनपुरनगरे सोमचंद्राभिधो राजास्ति, तस्य धारिण्यभिधाना राज्ञी वर्त्तते. सैकदा राज्ञः केशपाशं सुगंधितैलादिना वासयति, तन्मध्ये चैकं श्वेतवालं दृष्ट्वा तया विनोदेनोक्तं स्वामिन्नयं यमदूतः समागतोऽस्ति. संभ्रांतेन तेनेतस्ततो विलोकितं परं कोऽपि पुरुषो न दृष्टस्तावता विस्मयमापन्नस्य राज्ञो हस्ते सा तं श्वेतवालं निष्कास्यार्प-

यामास, कथितं च तथा स्वामिन् सैष धर्मराजदूतः समागतोऽस्ति. अथ चकितेन राज्ञा चिंतितम- द्वौ मे पूर्वजाः संसारसागरत्तीताः श्वेतवालदर्शनादर्वागेव प्रव्रज्याप्रवहणाधिरूढा मोक्षनगरे गताः संति, अहं त्वद्यापि विषयकर्द्दमनिमग्नोऽस्म्यतो मांप्रति धिगिति विचार्य स निजपुत्रप्रसन्नचंद्राय राज्यं दत्वा स्वयं धारिण्या सह तापसीं दीक्षां जग्राह. ॥ अथ प्रथमत एव गर्भवत्या धारिण्या तत्र तपोवने पुत्रकः प्रसूतो वल्कलैराछादितत्वेन च तस्य वल्कलचीरीति नाम दत्तं, धारिणी च तत्र सूतिरोगेण मृत्युमाप, तदा सोमचंद्रोऽरण्यमहिषीणां दुग्धपानतस्तं वल्कलचीरिणं पोषयामास. क्रमेणासौ यौवनं प्राप्तो वनफलानयनादिभिर्निजपितुः परिचर्यां करोति. तत्र स्त्रीरहिते तपोवने वसन्नसौ स्त्रीनामापि न जानाति. अथ प्रसन्नचंद्रेण श्रुतं यत्तपोवनप्रसवितो ममैको भ्रातारण्यवासी संजातोऽस्ति, परं तमत्रानीय मया तस्मै राजभागो देय एवेति विचार्य तेन चित्रकारमाहूयोक्तं त्वया मम पितृपादपवित्रिते तपोवने गत्वा मेऽनुजस्य यथास्थितरूपमालेख्यात्र समागत्य तच्चित्रितरूपं मह्यं समर्पणीयं. चित्रकारोऽपि तत्र गत्वा युक्त्या तस्य यथास्थितरूपमालेख्य राज्ञोऽर्पयामास, कथितं च तेन हे राजन् स तेऽनुजो नूनमरण्यवासी पशुरिवाऽदृष्टसंसारविभवो न कस्यापि जनस्य वि-

श्वासं करोति, मयापि प्रछन्नं तरुकोटरस्थितेन फलाद्याहरणायागतस्य तस्येदं चित्रमालेखितमस्ति. निजानुजस्य चित्रालिखितरूपं दृष्ट्वाऽवर्णनीयभ्रातृस्नेहार्द्रीभूतांतःकरणो नृपो जगाद अस्ति स कोऽपि सभामध्ये यो ममैनमनुजचंद्रमत्र समानीय ममामंदानंदोदधिमुल्लासयेत्? तदा तापसश्रापभयात्सभास्थितजनमध्यात्केनापि तत्कार्यं नांगीकृतं. किंत्वेकया विदग्धया वेश्यया राज्ञे नमस्कृत्योक्तं हे स्वामिन्निदं भवदिप्सितं कार्यमहं नूनं करिष्यामीत्युक्त्वा सा निजगृहे समागता. अथ सा वेश्या स्वकीयसखीभिः सह कतिचित्पुरुषान् सार्थं गृहीत्वा तापसाश्रमसमीपे वने समागता. पुरुषाश्च वृक्षोपरि प्रछन्नतया स्थिताः सोमचंद्रगमनागमनं विलोकयंति. इतो वल्कलचीर्यपि फलादिग्रहणाय तत्र वने समायातस्तत्र च स्थितं वेश्यागणं तापससमूहं मन्यमानो वंदित्वा पप्रछ भो तापसा यूयं कुतः समागताः? वेश्याभिरुक्तं वयं पोतनपुराभिधाश्रमात्समागताः स्मः, वल्कलचीरिणोक्तं तर्हि यूयमेतानि मया समानीतानि फलानि भक्षयतेत्युक्त्वा तेन निजपार्श्वस्थफलानि तासामग्रे मुक्तानि. वेश्याभिरुक्तं वयमीदृग्नीरसानि फलानि न भक्षयाम इत्युक्त्वा ताभिर्निजकरंडतो मनोहरस्वादोपेता मोदका निष्कासिता दत्ताश्च तस्मै भक्षणाय. वल्कलचीरी तान् सुगंधसुस्वादोपेतान् मोदकानास्वा·

द्य बिल्वादिफलेभ्यः पराङ्मुखीभूय हृष्टः सन् पृष्टवान् भो तापसाः कुत ईदृशानि सुस्वादुफलानि भवद्भिरधिगतानि ? ताभिरुक्तमस्माकमाश्रमे ईदृशानि मनोहरफलान्येवोद्भवंतीत्युक्त्वा ताभिर्निजवक्षःस्थलाद्यंगोपांगैस्तस्य स्पर्शः कृतस्तेनोक्तं भो ऋषयो भवतां शरीराणि किमतीवकोमलानि संति ? ताभिरुक्तमस्मदाश्रमफलास्वादनत ईदृशानि कोमलानि शरीराणि भवंति, चेत्तवेछा तर्हि त्वमप्यस्माभिः सहास्मदाश्रमे समागछ ? तेनोक्तमहं मम पितुरेतानि फलानि दत्वाधुनैवागत्य भवद्भिः सहागमिष्यामीत्युक्त्वा स द्रुतं निजपितुः पार्श्वे समागतः. फलानि च तस्याग्रे मुक्त्वा ततश्चलितः, सोमचंद्रेण चिंतितं कथमसावद्य पुनर्गछतीति चिंतयन् स तस्य पृष्टे चचाल. इतः सोमचंद्रर्षिमप्यागछंतं विलोक्य वृक्षस्थपुरुषा वेश्याभ्यस्तं वृत्तांतं ज्ञापयामासुस्ततस्ताः सर्वा भीतास्तैः पुरुषैर्युतास्ततो नष्ट्वा नगरे समागताः, अथ वल्कलचीर्यपि द्रुतपदैश्चलन् बहुभूमिमुल्लंघितवान्, इतस्तस्य पथ्येको रथो मिलितो रथिनं चालोक्य वल्कलचीरिणोक्तं हे तात भवद्भ्योऽहं प्रणमामि, रथिनोक्तं भो तापसकुमार त्वं क्व व्रजसि ? तेनोक्तमहं पोतनपुराश्रमे व्रजामि, रथिनोक्तं वयमपि तत्रैव गछामः, तत श्रुत्वा वल्कलचीर्यपि तेन सह चलितः. अथ रथमध्यस्थितां रथिप्रियामपि स ताना-

तेति कथयति. तदा तया निजभर्त्तारंप्रत्युक्तं हे स्वामिन्नसौ तापसकुमारः कथमसंबद्धं प्रजल्पति? रथिनोक्तं हे प्रिये स्त्रीरहितेऽरण्ये वसन्नसौ मुग्धत्वेन स्त्रीपुरुषयोर्भेदं न जानाति. अथ क्रमेण चलन् वल्कलचीर्यपि तेन रथिना सह पोतनपुरप्रतोलीं प्राप्तस्तदा रथिकस्तस्मै स्तोकं द्रव्यं दत्वा कथयामास भो तापसकुमार त्वमत्र कस्मैचिदेतद् द्रव्यं दत्वा तस्य स्थाने निवासं कुर्याः, यतोऽत्र विना द्रव्यं स्थानं न लभ्यते. इत्युक्त्वा स रथी निजगृहे गतः. अथ वल्कलचीर्यपि नगरमध्ये प्रविश्य मुखमूर्ध्वीकृत्येतस्ततो विलोकयन् पथि चचाल, अथ काहं प्रविशामीति चिंतयन्नेकस्या वेश्याया गृहद्वारमुद्घाटितं ज्ञात्वा तच्च तापसाश्रमं जानंस्तस्मिन् प्रविश्य वेश्यायै जगाद हे तात अहं प्रणमामि गृहाणेदं द्रव्यं प्रदेहि च मे निवासस्थानं? वेश्ययोक्तं भो तापसकुमार त्वमत्र सुखेन संतिष्ठेत्युक्त्वा मोदकादिभिस्तं सा संतोषयामास. ततः सा नापितमेकमाहूय तस्मै कथयामास, भो नापित अस्य ऋषिकुमारस्य नखकेशादीन् कर्त्रयित्वा सम्यक् कुरु? अथ नापितेन तथाकरणानंतरं वेश्या तस्य वल्कलानि निष्कासयामास, तदा स वल्कलचीरी बाल इव रुदनं चकार, कथयामास च ममाजन्ममुनिवेषं त्वं मा निष्कासय? तदा वेश्ययोक्तं हे ऋषिकुमार त्वं खेदं मा कुरु? अस्मिन्ना-

श्रमस्थस्यायमेव विधिरस्ति. ततः स्नानानंतरं वेश्या तस्य मनोहरवस्त्राभूषणानि परिधापयामास, ततः सा मृदंगतूर्यादिध्वनिगानपूर्वकं तेन सह निजैककन्यायाः पाणिग्रहणं कारयामास. अथ वल्कलचीर्यानयनकृते तपोवनगतया वेश्यया समागत्य सकलोदंतपूर्वकं राज्ञे निवेदितं स्वामिन् स भवदनुजोऽस्माभिः सह यावदत्रागंतुं प्रचलितस्तावत्पृष्ठे समागच्छंतं सोमचंद्रर्षिं दृष्ट्वा वयं भीताः प्रणश्यात्र समागताः, सोऽप्यस्मान् गवेषयितुं वने एव भ्रमन् भविष्यति. तत श्रुत्वा राजातीवखेदमापन्नश्चिंतयामास धिग्मां मया पितापुत्रयोर्वियोगः कारितः, किं चैकाकिनो वने भ्रमतो मम भ्रातुरपि का दशा भविष्यतीति चिंतया दुःखीभूतो नृपो नगरे नृत्यगानादि निवारयामास, नगरलोका अपि सर्वे शोकातुरा जाताः. इतो निजकर्णशूलतुल्यं मृदंगध्वनिं श्रुत्वा राज्ञा पृष्टं यदत्र समये कोऽस्ति स सुखी यस्य गृहे वादित्रनादो जायते ? मंत्रिभिस्तच्छुद्धिकरणानंतरं द्रुतमेव सा वेश्या नृपसमीपे समागत्यावदत हे स्वामिन् पूर्वं ममैकेन नैमित्तिकेनोक्तं यत्तापसवेषभृत्कोऽपि कुमारस्तव गृहे समेष्यति तस्मै त्वया स्वपुत्री परिणायितव्या, सोऽद्य तथोक्तः कुमारो मम गृहे समायातस्तेन मम गृहे विवाहमहोत्सवे मृदंगादिवादित्राणि वाद्यंते, भवतां च दुःखं मया न ज्ञातं, तन्मेऽप-

राधं यूयं ममोपरि कृपां विधाय क्षमत ? अथ राजा तापसकुमारनामनो विस्मितस्तस्य शुध्यर्थं पूर्वं तपोवनप्रेषितवेश्यां तत्र प्रेषयामास. सापि तत्र गत्वा तमुपलक्ष्य हृष्टा द्रुतं पश्चादागत्य राजानं व-र्धापयामास हे स्वामिन् स एव तवानुजो वर्त्तते. तत् श्रुत्वातीवानंदितो नृपः स्वयं तस्य सन्मुखं ग-त्वा परिणीतनार्यासहितं तं हस्तिस्कंधे समारोप्य बहुमहोत्सवपूर्वकं निजगृहे समानयत. अथ क्र-मेण स वल्कलचीर्यपि सर्वसंसारस्थितिनिपुणो जातः, राज्ञा चान्या अपि बह्वयः कन्यास्तस्य परि-णायितास्ताभिः सह सोऽनेकविषयसुखानि भुनक्ति. अथ सोमचंद्रर्षिर्वल्कलचीर्यन्वेषणकृते सक-लेऽपि वने पर्यटनमकरोत्, किंतु कुत्रापि तमलब्ध्वा खिन्नो निवृत्त्य पश्चान्निजाश्रमे समागत्य पुत्र-विरहदुःखितोऽनेकविधान् विलापान् कुर्वन्नंधीबभूव. कतिचिद्दिवसानंतरं प्रसन्नचंद्रराज्ञा निजप्रधानमु-खेन स्वपित्रे संदेशः प्रेषितो यद्वल्कलचीरी मम समीपे कुशलेन वर्त्ततेऽतस्तद्विषया चिंता न कर्त्त-व्या. तत् श्रुत्वा सोमचंद्रर्षेः किंचिद्दुःखं स्वल्पीभूतं. अथ द्वादशवर्षानंतरमेकदा रात्रौ जागृतो व-ल्कलचीरी मनसि चिंतयामास यद्धिगस्ति मां कृतघ्नंप्रति, यद्येन पित्राहं बाल्ये एव मृतमातृकोऽने-ककष्टसहनेनापि पोषयित्वा वर्द्धितस्तस्य मे वृद्धपितुः सेवावसरेऽहं तं वनमध्ये एव त्यक्त्वाऽत्र विष-

यसुखनिमग्नीभूय स्थितोऽस्मि, अतः प्रभाते एव भ्रातरमापृच्छ्याहं तपोवने गत्वा पितृपादपरिचर्यापरो भविष्यामीति विचिंत्य प्रभाते तेन भूपाय प्रोक्तं हे भ्रातः संप्रति मम पितुश्चरणेक्षणाभिलाषो वर्त्तते तत् श्रुत्वा प्रसन्नचंद्रेणाप्युक्तं हे भ्रातर्ममापि स एवाभिलाषोऽस्ति. अथ तौ द्वावपि भ्रातरौ निजसैन्ययुतौ ततश्चलितौ. तपोवननिकटे समागत्य तौ पादचारिणौ तपोवनमध्ये प्रविष्टौ. तदा वल्कलचीरी पूर्वं तपोवनविविधप्रदेशेषु चिरकालानुभूतबाल्यकेलीसौख्यं संस्मृत्य प्रसन्नचंद्रंप्रति कथयामास. हे भ्रातस्त एवैते बिल्वादिवृक्षा यत्राहं कपिवदारूढोऽनेकफलान्यविदम. तान्येवेमानि सरांसि येषां स्फटिकनिर्मलसलिले मया हंसलीलानुभवो विहितः, त एवेमे हरिणा यैः सह मया चिरकालं यावत्क्रीडा कृताभूत, ता एवैता महिष्यो याभिर्निजपीयूषनिभैः क्षीरैर्मातृवन्मे पोषणं विहितमित्यादिवर्णनैर्निजभ्रातुर्मानसमाह्लादयन् क्रमेण वल्कलचीरी बंधूपेतो निजतातचरणांभोजे भ्रमरलीलायितं कुर्वन् कथयामास च हे तात पूज्यपादानां भवतां चिरकालाच्चरणारविंदसेवनवंचितः कृतघ्नोऽयं भवत्पुत्रो वल्कलचीरी घोरसंसारसागरे निमज्जन् पताकाद्यंकितभवच्चरणप्रवहणं शरणीकर्त्तुं समागतोऽस्तीत्युक्त्वा तेन निजमस्तकं सोमचंद्रर्षिचरणयोर्न्यस्तं. सोमचंद्रर्षिरपि तस्य विनयां·

चितवचनानि श्रुत्वातीवहर्षोद्भवनतो विघटितनिजनयनतिमिरपटलैर्हर्षाश्रुजलनिकरैश्चिरकालघोरसंसारस्थित्युत्पन्नतच्छरीरमालिन्यापनोदार्थमिव तं संस्नपयामास. ततः प्रसन्नचंद्रोऽपि हर्षाश्रुदंभतश्चिरविरहहृदुद्भवदुःखसमूहं बहिर्निष्कासयन्निव तातपादारविंदयोर्निजमस्तकं विन्यस्य जगाद हे तात वल्कलचीर्यपहरणतः कृतभवदपराधभारतो विनम्रीभूतोऽयं प्रसन्नचंद्रोऽप्यनृणीभवनाय भवच्चरणसेवनाभिलाषैकमानसः समागतोऽस्ति. अथ नयनपटलापहारतो दूरीभूतनिजांधत्वः सोमचंद्रर्षिरपि साक्षान्निजविनयिपुत्रौ नयनगोचरीकृत्याशीर्वाददानपूर्वकमुवाच भो पुत्रौ प्रयाति किं युवयोः कालः सुखसमाधिना ? ताभ्यामुक्तं पूज्यतातपदानां प्रसादादावां सुखिनौ स्व इत्युक्त्वा वल्कलचीर्युटजमध्ये प्रविश्य पूर्वसंस्कारतः सरजस्कानि निजपात्रविशेषाणि निजात्मलग्नकर्माणीव प्रमार्जयितुं लग्नश्चिंतितं च तेन पूर्वमपि मया कदाचिदेवंविधानि पात्राणि प्रमार्जितानि संतीति विचारयतस्तस्य जातिस्मरणज्ञानं समुत्पन्नं, दृष्टश्च तेन गृहीतदीक्षो निजपूर्वभवः, क्रमेण तदैव शुक्लध्यानोपगतोऽसौ वल्कलचीरी तत्रैव केवलज्ञानमाप्तवान्, देवैरागत्य तस्य मुनिवेषदानपूर्वकं महोत्सवः कृतः, श्रुत्वा च तस्य धर्मदेशनां सोमचंद्रप्रसन्नचंद्राभ्यां सम्यक्त्वं गृहीतं. इतः श्रीमहावीरप्रभुस्तत्र पोतनपुरे स

श्राव. देशनांते नृपेण पृष्टं हे भगवन् पथि समागच्छता मया दुष्करतपःक्रियाधिरूढो यदा प्रसन्नचं-
द्रराजर्षिर्वंदितस्तदैव चेदसौ कालधर्मं प्राप्नुयात्तर्हि क्व व्रजेत ? भगवनोक्तं हे नृप तदासौ सप्तमे न-
रके व्रजेत्. तत् श्रुत्वाऽतीवविस्मितेन राज्ञा चिंतितं हंतेदृग्दुष्करतपोध्यानाधिरूढमुनेरपि गतिः स-
प्तमनरकरूपा कथं संभवति ? परं नूनं प्रभुणा युक्तमेव प्रोक्तं भविष्यतीति क्षणं वितर्क्य तेन पुनः
पृष्टं स्वामिन्नधुना चेत्कालं कुर्यात्तर्हि क्व व्रजेत ? प्रभुणोक्तमधुना मृतोऽसौ पंचमेऽनुत्तरविमाने व्र-
जेत्. तत् श्रुत्वाऽवर्णनीयविस्मयमापन्नेन राज्ञा पृष्टं स्वामिन्नस्य महदंतरितवृत्तांतस्य कारणं मयि कृ-
पां विधाय यूयं कथयत ? तदा प्रभुस्तस्य सुमुखदुर्मुखाभिधतत्सेवकमुखनिःसृतवचनैर्ध्यानपरावर्त्तना-
दिपूर्वोक्तवृत्तांतकथनपुरस्सरं कथयामास हे राजन्नेवं स राजर्षिर्मनसा युद्धं कुर्वन् निःक्षीणनिजस-
र्वास्त्रो मुकुटेनापि शत्रुजिघांसनोद्यतो यावन्मस्तके निजहस्तं न्यस्तवांस्तावन्मस्तकं तु लुंचितं ज्ञा-
त्वा निजवाचंयमत्वं च संस्मृत्य पुनरनित्यतादिभावनाजलैर्हृदयोद्भूतदुर्ध्यानानलमुपशामयंस्तत्रैव भा-
मनसि ध्यायन्नालोचनां जग्राह. क्रमेण च दुर्ध्यानं परित्यज्य शुक्लध्यानं प्राप्तवान्. इतो देवदुंदुभे-
र्ध्वनिं श्रुत्वा तेनोक्तमयं ध्वनिः कुतः श्रूयते ? स्वामिनोक्तं तस्यैव प्रसन्नचंद्रमुनेः केवलज्ञानं समु-

त्पन्नमस्ति, तस्य महिमार्थं गच्छद्भिर्देवैः कृतोऽयं देवदुंदुभिनादः श्रूयते. तत् श्रुत्वा श्रेणिकोऽत्यानंदं प्राप्तः. अथ क्रमेण सोमचंद्रराजर्षेरपि केवलज्ञानं समुत्पन्नं. एवं वल्कलचीर्यादयस्ते त्रयोऽपि केवलपर्यायं परिपाल्य मोक्षे गताः ॥ इति श्रीप्रसन्नचंद्रराजर्षिकथा ॥

गाथा—सुस्सुसंती पाए । गुरुणीए गरहिऊण निअदोसे ॥ उप्पन्नदिव्वनाणा । मिगावई जयउ सुहभावा ॥ ५ ॥ व्याख्या—गुरुण्याः श्रीचंदनबालायाः पादौ चरणौ शुश्रूषमाणा सेवमाना, अर्थात्तस्याः पादयोर्निजशिरः संस्थाप्य क्षमां मार्गयंती निजदोषाणां गर्हणां कुर्वंती दिव्यज्ञानं केवलज्ञानं प्राप्नुवंती. एवंविधा शुद्धभावा सा मृगावती जयतु. तस्या मृगावत्या वृत्तांतो विस्तरतः पूर्वं शीलकुलकाधिकारे कथितोऽस्ति. ॥ ५ ॥

गाथा—भयवं इलाइपुत्तो । गुरुए वंसंमि जो समारूढो ॥ दट्ठूण मुणिवरिंदं । सुहभावउ केवली जाउ ॥ ६ ॥ व्याख्या—यो महति वंशे समारूढः सन् मुनिवरेंद्रं दृष्ट्वा शुभभावतः केवली जातः स इलाचीपुत्रनामा भगवान् जयतीति शेष इति. ॥ ६ ॥ तस्य कथा चेयं—सुंदराभिधग्रामे द्विज एको वसति, तेन श्रीसुव्रताचार्यसमीपे देशनां श्रुत्वा स्वस्त्रीसहितेन दीक्षा गृही-

ता. अथ सा ब्राह्मणी चारित्रं पालयंती चिंतयति यदस्मिन् धर्मे स्नानादिशुद्धिर्नास्ति, एवं चिंतयन्त्या तया नीचगोत्रकर्मोपार्जितं. प्रांते च तदनालोच्यानशनपूर्वकं कालं कृत्वा सा देवलोके देवांगना जाता. ब्राह्मणोऽपि संयममाराध्यानशनेन कालं कृत्वा तत्रैव देवोऽभूत. इतश्चैलावर्द्धनाभिधपुरे इलादेव्यभिधदेव्या एकं सप्रभावं स्थानं वर्त्तते, तत्रैका व्यवहारिभार्या सर्वदा तस्याः पूजां विधाय पुत्रं याचते. क्रमेण स द्विजजीवो देवलोकाच्च्युतस्तस्याः कुक्षौ गर्भत्वेनावातरत्, इलापुत्र इति च तस्य नाम दत्तं, क्रमेण च स यौवनं प्राप्तः, इतः स ब्राह्मणीजीवोऽपि पूर्वबद्धनीचगोत्रकर्मोदयेन देवलोकाच्च्युतो नटस्यैकस्य गृहे पुत्रीत्वेन समुत्पन्नः, क्रमेण सा नटपुत्री यौवनं प्राप्यातीवरूपलावण्याद्युपेता जाता. अथैकदा स नटो निजकुटुंबयुत आजीविकार्थं निजकलादर्शनायेलावर्द्धनपुरे समागतः, अथ चतुष्पथमध्ये स नटो वंशारूढो लोकानां पुरो निजांगमोटनादिकलां दर्शयति. इतस्तत्रागतेलापुत्रेण सा महारूपयौवनवती नटपुत्री दृष्टा, तां दृष्ट्वा मोहितोऽसौ मदनशरविद्धो निजगृहे समागत्य जीर्णमंचकोपरि सुप्तो मातादिपृष्टोऽपि किंचिन्न जल्पति. ततोऽत्याग्रहेण पित्रा पृष्टोऽसौ निजमनोरथं कथयामास. तदा पित्रोक्तं हे पुत्र एषां नीचकुलोत्पन्नानां स·

र्शनापि वयमपवित्रीभवामस्तर्हि विवाहस्य का वार्त्ता? अहं त्वामतियौवनरूपलावण्यादिगुणगणालंकृतां सुकुलोद्भवां व्यवहारिपुत्रीं परिणाययिष्यामि. एवं बहुधोक्तोऽप्यसौ कथयामास ममान्यकन्येच्छा नास्ति, चेदसौ नटपुत्री मम न मिलिष्यति तदाहं प्राणत्यागं करिष्यामि. तत् श्रुत्वाऽनन्योपायः श्रेष्ठी तस्य नटनायकस्य समीपे गत्वा कथयामास हे नट त्वमिप्सितं द्रव्यं गृहीत्वापि तव पुत्रीं मम पुत्राय समर्पय? तेनोक्तं हे श्रेष्ठिन् कन्यादानाधिगतं द्रव्यं नाहं स्वीकरोमि, परं यः कोऽपि मम गृहजामाता भविष्यति तस्मै मे कन्यामहं दास्यामि, चेत्तव पुत्रस्य तथेच्छा भवेत्तर्हि मम पुत्रीमपि तस्मै समर्पयिष्यामि. तत श्रुत्वा चिंतातुरः श्रेष्ठी गृहे समागत्य पुत्रंप्रति कथयामास हे पुत्र मया स नटनायको बहुधा लोभितोऽपि निजपुत्रीं नार्पयति, कथयति च यो मम गृहजामाता भविष्यति तस्यैवाहं पुत्रीं दास्यामीति. तत श्रुत्वेलापुत्रेणोक्तं हे पितरहं तथैव करोमि ममाज्ञां देहि? नोचेदहं प्राणत्यागं करिष्यामीत्युक्त्वा पित्रादिकुटुंबिभिर्बहु निवार्यमाणोऽपीलापुत्रो नटेभ्यो मिलितः, नटोऽपि तस्य निजपुत्रीं समर्प्य तं च गृहजामातरं कृत्वा रक्षितवान्. क्रमेणेलापुत्रोऽपि तया नटपुत्र्या सह विविधभोगान् भुंजानो वंशोपरि खेलनादिसकलनटकलाप्रवीणो बभूव. अथ स

नटनायको निजकुटुंबयुतो नगरे नगरे भ्रमन् क्रमेण बेन्नातटनगरे समायातस्तत्र च तेन नटकुटुंबेन राज्ञोऽग्रे नृत्यं प्रारब्धं. तदवसरे राजा निजरूपयौवनलावण्यादिगुणगणैर्जितनाकिनितंबिनीमिलापुत्रभार्यां दृष्ट्वा मोहितो मदनशरव्याकुलीभूतश्चिंतयामास चेदसाविलापुत्रो वंशाग्रभागात्पतित्वा म्रियेत तदाहमेतां सुंदरीं लब्धुं समर्थो भवेयमिति विचिंत्य तेनेलापुत्राय कथितं हे नटोत्तम त्वं वंशाग्रे गत्वा पट्टोपरिस्थो निजाः सर्वाः कलाः प्रदर्शय ? यथाहं तुष्टीभूय तुभ्यं भूरिदानं यच्छामि. तत् श्रुत्वा द्रव्यलोभाभिभूतेनेलापुत्रेण तथैव कृतं, कुशलत्वेन च वंशाग्रादुत्तीर्य स राज्ञोऽग्रे दानं मार्गयामास. कुटिलमानसेन राज्ञोक्तं मया व्यग्रचित्ततया तव नृत्यकला सम्यग्न दृष्टा, ततः पुनस्तव नृत्यकलां मा दर्शयेत्युक्त इलाकुमारः खिन्नोऽपि पुनर्वंशाग्रे गत्वा पट्टोपरिस्थो निजसकलनृत्यकलाः कृत्वा समुत्तीर्णः. अथ तथैव तृतीयवारमपि कर्त्तुं नृपेणादिष्ट इलाकुमारस्तस्येंगिताकारादिचेष्टाभिर्ज्ञाततद्दुष्टाभिलाषो वंशाग्रे गत्वा नगरस्वरूपं विलोकयामास. इतस्तेनैकव्यवहारिणो गृहे साधुराहारार्थं समागतो दृष्टस्तदा व्यवहारिभार्या महारूपयौवनवती विविधस्वर्णाद्यलंकारालंकृतदेहा मुनये मोदकान् प्रतिलाभयति. परं निर्विकारो मुनिस्तु न्यस्ताधोदृष्टिः सन् तस्याः

सन्मुखमपि नावलोकयति. एवं तस्य मुनेर्निर्विकारतया हृदि विस्मित इलापुत्रो निजहृदि विचिंतयामास, यन्मयापि कदाचिदेवंविधो वेषो दृष्टोऽस्तीति चिंतयतस्तस्य जातिस्मरणज्ञानमुत्पन्नं. ततश्च तेन पूर्वभवपालितं चारित्रं साक्षान्नयनगोचरीकृतं, अथ तेन चिंतितं धिग्मां विषयलंपटं, स्त्रियो हि प्राणिनां संसारसागरे निमज्जनैकदक्षा शिलातुल्या अस्तीत्याद्यनित्यभावनां भावयतस्तस्य तत्र वंशोपर्येव केवलज्ञानं समुद्भूतं, वंशश्च सहस्रदलकमलरूपो जातो देवैश्चागत्य तस्य महोत्सवः समारब्धः, देवदत्तसाधुवेषमंगीकृत्येलापुत्रकेवलिना तत्र विषयत्यागोपदेशो दत्तस्तदा नृपप्रभृतिभूरिलोकाः प्रतिबुध्य सम्यक्त्वमंगीचक्रुः, इलापुत्रस्त्रियापि दीक्षा गृहीता, ततोऽसाविलापुत्रकेवली चिरकालं केवलिपर्यायं परिपाल्य मोक्षं गतः ॥ इति श्रीभावकुलके इलापुत्रकेवलिकथा ॥

गाथा—कविलो अ बंभणमुणी । असोगवणिआइमज्झयारंमि ॥ लाहालोहत्तिपयं । पढंतो जायजाइसरो ॥ ७ ॥ व्याख्या—कपिलनामा द्विजपुरोहितपुत्रो मुनिरशोकवाटिकायां 'जहा लाहो तहालोहो' इत्येतत्पदं पठन् भावयन् सन् जातजातिस्मरणज्ञानो जज्ञे, ततोऽसौ साधुवेषं समासाद्य कालांतरे च केवलज्ञानमाप्तवान्. ॥ ७ ॥ तस्य कथा प्रथमकुलके उदाईराजर्षिकथाम-

ध्ये कथिता. ॥

गाथा—खवगनिमंतणपुव्वं । वासीभत्तेण सुद्धभावेणं ॥ भुंजंतो वरनाणं । संपत्तो कूरगड्डुवि ॥ ८ ॥ व्याख्या—क्षपकनिमंत्रणपूर्वकमिति मासक्षपणादिकारकमुनिं प्रति वंदित्वा निमंत्र्य च वासीभक्तेन करंबादिशीतलान्नेन शुद्धभावपूर्वकं भुंजानः कूरगडूनामसाधुरपि केवलज्ञानमाप्तवान् ॥ ८ ॥ तस्य कथा चेवं—एकदा विशालायां नगर्यां सुव्रताभिधानाचार्याश्चतुर्मासीं स्थितास्तस्य च तत्र बहुपरिवारो निजकर्मकंटककदंबकदाहाय तिव्रदहननिभान्यनेकविधतपांसि कुर्वन् श्रुताभ्यासैकलीनो बभूव. तत्परिवारमध्ये कोऽप्येकस्तपस्विसाधुर्मासक्षपणतपः करोति, पारणकदीने च केनचिदेकेन लघुक्षुल्लकेन सहाहारार्थं गच्छति. अथैकदाहारार्थं तेन लघुक्षुल्लकेन सह गच्छतस्तस्य तपस्विसाधोः पादतले दर्दुर्येका समागतत्वान्मृता. तदा तेन क्षुल्लकेनोक्तं हे स्वामिन् भवत्पादतले समायातेयं दर्दुरी मृता. तत् श्रुत्वा क्रुद्धेन तपस्विना भणितमियं तु पूर्वमेव मृतास्ति, न च मे पादतलाघातेन मृतास्तीत्युक्त्वा तेन मिथ्यादुष्कृतं न दत्तं. ततस्तौ द्वावप्याहारमादायोपाश्रये समाजग्मतुस्तदा क्षुल्लकेन चिंतितं ध्रुवमसौ संप्रति गोचर्यालोचनसमये तत्पापमालोचयिष्यति, परं त-

न्मंडुकीघातोद्भूतं पापं तेन नालोचितं. तदा क्षुल्लकेन चिंतितं ध्रुवं तेन तत्पापं विस्मृतं संभवति, परमधुना पारणावसरे कथनतस्तस्य क्रोधः प्रादुर्भविष्यति, ततः प्रतिक्रमणवेलायां चेदसौ विस्मरिष्यति तदाहं तस्यैतत्स्मारयिष्यामीति विचिंत्य स मौनमाधाय स्थितः, अथ संध्यासमये सर्वेऽपि मुनयः प्रतिक्रमितुं लग्नाः, आलोचनासमये च सर्वैर्निजनिजपापमालोचितं, परं तेन तपस्विना मंडुकीघातपापं नालोचितं, तदा सरलमानसेन क्षुल्लकेनोक्तं भो पूज्य अद्य यदावामाहारार्थं गतौ तदा भवत्पादतले मंडुकी मृता, ततस्तत्संबंधिपापमालोचयध्वं ? तत् श्रुत्वातीवकुपितोऽसौ तपस्वी मुनिः प्रोवाच रे मूढ ईर्यापथिकीशोधनपूर्वकं गच्छतो मम पादतले मंडुकी कुतः समायाता ? ततोऽनृतवचनजल्पाकस्य तव तत्फलं दर्शयामीत्युक्त्वा स क्रोधांधः पट्टकमादाय क्षुल्लकमारणाय धावितः, परं सूचिभेद्योपाश्रयमध्यस्थांधकारे तस्य शिरः स्तंभेनास्फाल्य भग्नं, मृत्वा स प्रचंडो दृष्टिविषसर्पो जातस्तत्र तस्य कथंचिज्जातिस्मरणज्ञानं समुत्पन्नं, ततश्च तेन चिंतितं धिग्ममेदं क्रोधफलं समुद्भूतमतोऽस्मिन् भवेऽहं कदाचिदपि क्रोधं नो करिष्यामि, प्रासुकाहारं च भक्षयिष्यामि, देवश्च मे वीतरागः, सुसाधुश्च गुरुः, केवलिप्रणीतधर्मश्च मम शरणमिति सम्यक्त्वयुतां प्रतिज्ञां विधाय दिवसे

निजमुखं च बिलमध्ये निक्षिप्य स तिष्ठति, रात्रौ च प्रासुकाहारं गवेषयित्वा भक्षयति. इतस्तुरमणीनगर्यधिपकुंभाख्यनृपस्य ललितांगनामा पुत्रः सर्पविषेण मृतः, तदा क्रुद्धेन राज्ञा लोकेभ्य आदिष्टं यद्यः कोऽपि कमपि सर्पं मारयित्वानिष्यति तमहं दीनारमेकं दास्यामि. द्रव्यलोभाभिभूता लोका दृष्टिपथमायातान् सर्वानपि सर्पान् मारयित्वा नृपाग्रे समानयंति. इतो बिलमध्यक्षिप्तमुखस्तपस्विमुनिजीवरूपोऽसौ दृष्टिविषः सर्पः केनचित्कृषीवलेन दृष्टस्तदा स तं सर्पं बिलान्निष्कासयितुं विविधानुपायानकरोत्. तदासौ सर्पश्चिंतयामास हे जीव तवाऽशुभकर्म समुदितं तस्मादुद्वेगं मा कुरु? ततोऽसावर्हदादिचतुर्णां शरणं विधाय सर्वजीवांश्च क्षामयित्वा 'मा मम दृष्टिविषादयं कृषीवलः पंचत्वं प्राप्नोत्विति' विचिंत्य संमिलितनेत्रोऽसौ स्वयमेव बिलान्निःसृतः, कृतश्च दुष्टेन तेन कृषीवलेन खंडशो मृतश्च. इतो निजसंततीनामुच्छेदं ज्ञात्वा नागदेवेनागत्याकाशवाणी कृता हे राजन् त्वं सर्पान् मा मारय? तव पुत्रो भविष्यतीति श्रुत्वा राज्ञा सर्पमारणं निषिद्धं. अथ स सर्पजीवः कुंभराज्ञः पट्टराज्ञीकुक्षौ पुत्रत्वेनावतीर्णः, पूर्णे मासे च तया सुखेन पुत्रः प्रसूतस्तस्य महोत्सवपूर्वकं च नागदत्त इति नाम स्थापितं. क्रमेणासौ नागदत्तोऽधीतसकलकलो यौवनमनुप्राप्तः कदाचिद्गवा·

क्षस्थो नगरशोभां विलोकयति, तदा तेनैको मुनिः पथ्यीर्यासमितिशोधनपूर्वकं गच्छन् दृष्टस्तं दृष्ट्वेहापोहं कुर्वतो नागदत्तस्य जातिस्मरणज्ञानमुत्पन्नं, तेन स संसाराद्विरक्तीभूय चारित्रग्रहणाभिलाषी जातः, ततोऽसौ विनयपूर्वकं पितरावापृच्छ्य सद्गुरुसमीपे दीक्षां गृहीत्वेति विज्ञप्तिं चकार हे भगवन् तिर्यग्भवागतत्वेन क्षुद्वेदनीयकर्मोदयसद्भावादहं तपः कर्त्तुं समर्थो नास्मि, ततोऽहमाजन्म क्रोधत्यागाभिग्रहं करोमि, तत् श्रुत्वा हृष्टेन गुरुणोक्तं भो महानुभाव तपस्विमुनिरपि क्रोधत्यागेनैव केवलमवाप्नोति, रागद्वेषयोर्जयं विना नैव सिद्धिर्भवति. यतः—रागद्वेषौ यदि स्यातां । तपसा किं प्रयोजनं ॥ रागद्वेषौ च न स्यातां । तपसा किं प्रयोजनं ॥ १ ॥ ततो नागदत्तमुनिना गुरुवचनमंगीकृत्य क्रोधकरणप्रत्याख्यानं कृतं. तदादितोऽसौ संघमध्यात्केनचित्साधुनापि कथितं कठिनं वचनं शांतमनसा सहते, न च तस्योपरि मनागपि क्रोधं करोति, परं तपोविषयेऽशक्तीभूतः संध्यायामत्याहारं कृत्वा सुप्तोऽप्यसौ क्षुधातुरः कष्टेन रात्रिं निर्गमयति. गन्दूभृतं करंबाहारं स करोति तेन तस्य कूरगडु इति नाम जातं. अथ तत्र संघाटकेऽन्ये एकमासीद्विमासीत्रिमासीचतुःमासीतपःकारकाश्चत्वारस्तपस्विनः संति, ते नित्याहारकर्त्तुः कूरगडुसाधोर्हास्यं कुर्वंति. एकदा स कूरगडुसाधुर्निशायां

प्रथमपौरुष्यां स्वाध्यायं कृत्वा द्वितीयपौरुष्यां च ध्यानस्थितश्चिंतयति सांप्रति धिगस्तु तपसा विना
नित्यमाहारलोलुपस्य मम कर्माणि कथं विलयिष्यंति ? अमी चत्वारस्तपस्विनः साधव एव धन्याः
संतीत्यादि चिंतयतस्तस्य पार्श्वे शासनदेवतयागत्य वंदना कृता. तस्मै वंदयंतीं शासनदेवतां निरी·
क्ष्य तेषां चतुर्णां तपस्विसाधूनां मनस्यतीवेर्ष्या समुत्पन्ना. अथ प्रभाते स कूरगडुमुनिर्यदाहारं स-
मानीय भक्षयितुं लग्नस्तदा तैरीर्षालुभिर्मुनिभिस्तत्समीपे समागत्य तस्याहारमध्ये थूत्कृतं. तदा स
मुनिः क्षमायुक्तश्चिंतयामास अहो मयाधमेन तेषां तपस्विमहात्मनां वैयावृत्त्यं न क्रियतेऽतस्तेषां क·
षायोत्पत्तिर्बभूव. ममैवायं दोष इत्याद्यनित्यभावनां भावयन् क्षपकश्रेण्यामारूढोऽसौ मुनिः केवल·
ज्ञानमासादितवान्. तदा देवैरप्यागत्य दुंदुभिनादपूर्वकं तस्य केवलमहोत्सवः कृतस्ततो देवरचित·
स्वर्णकमलोपरिस्थितेन तेन कूरगडुकेवलिना धर्मदेशना दत्ता, ते चत्वारोऽपि तपस्विनः प्रतिबुद्धाः
संतो निजात्मानं निंदंतस्तस्य पार्श्वे समागत्य विनयावनता निजापराधं क्षामयामासुः, प्रांतेऽनित्य·
भावनां भावयद्भिस्तैरपि केवलज्ञानमासादितं. अथ कूरगडुमुनिर्बहुजीवान् प्रतिबोध्य प्रांते मोक्षे ग·
तः ॥ इति श्रीभावकुलके कूरगडुमुनिकथा ॥

गाथा—पुव्वभवसूरिविरइय—नाणासायणपभावदुम्मेहो ॥ नियनामं झायंतो । मासतुसो केवली जाओ ॥ ९ ॥ व्याख्या—पूर्वभवे सूरिपदधारकस्तस्मिन् समये च तेन ज्ञानस्याशातना कृता, तत्प्रभावाद् बुद्धिरहित एवंविधो मासतुसनामा मुनिर्निजनाम ध्यायन् केवली जातः ॥९॥ तस्य कथा चेवं—पाटलीपुरनगरे द्वौ व्यवहारिभ्रातरौ वसतः, कदाचित्ताभ्यां सुगुरुसमीपे वैराग्येण दीक्षा गृहीता, तयोरेको भ्राता बहुश्रुतो जातः, क्रमेण च गुरुणा तस्मै आचार्यपदवी दत्ता. अथ सूत्रार्थपाठकाः सर्वेऽपि शिष्यास्तं दिवारात्रिं सेवयंति, क्षणे क्षणे संदेहान् पृच्छंति, एवं चासौ क्षणमात्रमपि विश्रामं न लभते. तदा तेन चिंतितं गुरुणा ममाचार्यपदवीं दत्वाऽध्याप्य चाहं महाक्लेशमध्ये पातितः, अनधीतोऽयं मम भ्राता धन्यो यः सुखेन संतिष्ठते निद्रां च लभते, संसारमध्ये मूर्खत्वमेव वरं, मूर्खत्वे चाष्टौ गुणाः संति यथा—मूर्खत्वं हि सखे ममापि रुचितं यस्मिन् यदष्टौ गुणा । निश्चिंतो बहुभोजनोऽत्रपमना नक्तं दिवा स्वापकः ॥ कार्याकार्यविचारणांधबधिरो मानापमाने समः । प्रायेणामयवर्जितो दृढवपुर्मूर्खः सुखं जीवति ॥ १ ॥ इति तेन सूरिणा ज्ञानस्यावहेलना कृता, अथैकदा सर्वेऽपि मुनयः स्थंडिलचर्यादिकार्यविशेषाय बहिर्गतास्तमवसरं प्राप्य खिन्नोऽ-

सावेकाकी नगराद्वहिर्निःसृतः. तदा कौमुदीमहोत्सवानंतरं लोकैरेकत्र स्थाने मुक्त इंद्रस्तंभस्तेन दृष्टस्तं च दृष्ट्वा तेन चिंतितमहो कौमुदीमहोत्सवे जनगणैर्वेष्टितोऽयमिंद्रस्तंभः शृंगारितोऽतीवशोभायुक्तो बभूव. अधुना त्वेकाकिस्थितस्यास्योपरि काका अपि विष्टां कुर्वंति, अतो ममापि गच्छमध्यस्थितिः श्रेय इति विचिंत्य स पश्चाद्वलित्वोपाश्रये समागतो मनसैव च स्वातिचारस्यालोचना तेन गृहिता. शुद्धं चारित्रं प्रपाल्य प्रांतेऽनशनं विधाय स देवलोके गतस्ततश्च्युतोऽसावाभीरकुले समुत्पन्नः क्रमेण च यौवनं संप्राप्तः पित्रा कन्ययैकया सह परिणायितः, क्रमेण च तस्यैका पुत्री जाता, सा यौवनं प्राप्यातीवरूपलावण्योपेता बभूव. अथैकदा स आभीरो घृतभाजनानि शकटे संस्थाप्य तां निजपुत्रीं च सारथीकृत्य घृतविक्रयाय नगरंप्रति चलितः, सार्थे केचिदन्येऽप्याभीरा घृतभाजनभृतानि निजनिजशकटानि समादाय नगरंप्रति प्रस्थिताः, पथि ते यौवनोन्मत्ता आभीरास्तां महारूपवतीमाभीरपुत्रीं चपलदृग्भिर्विलोकयामासुस्ततस्तेषां व्यग्रचेतसां शकटान्यपि तत्स्पर्द्धयेवोन्मार्गगामीनि बभूवुः, पतितानि चावटमध्ये भग्नानि च तेषां मनोभिः सार्द्धं घृतभाजनानि. तद् दृष्ट्वा तस्याभीरस्य मनसि वैराग्यभावः समुल्लसितस्ततोऽसौ क्रमेण नगरे समागत्य घृतवि·

क्रयं च कृत्वा निजग्रामे समागतस्ततोऽसौ निजपुत्रीं केनाप्याभीरेण सह परिणाय्य तस्मै जामात्रे च गृहधनादि सर्वं समर्प्य स्वयं सद्गुरुसमीपे दीक्षां जग्राह. ततो योगोद्वहनक्रियासमये तेनोत्तराध्ययनानि पठितुमारब्धानि. अध्ययनत्रयाभ्यासानंतरं तस्य ज्ञानावरणीयकर्म समुदितं, तेनासावग्रे पदमप्युच्चारयितुं समर्थो नाभूत्. तदा तेन विनयावनतेन गुरवः पृष्टा हे भगवन् मयि कृपां विधाय ज्ञानावरणीयकर्मक्षयायोपायमादिशध्वं ? गुरुणोक्तं हे महानुभाव त्वमाचाम्लतपःकरणपूर्वकं 'मा रुष मा तुषेति' पदं पठ ? तथेति कृत्वा तेन तत्प्रतिपन्नं. अथ क्षमासागरोऽसौ मुनिराचाम्लतपःपरायणो गुरूक्तं पदं सर्वदा पठति, परं जडीभूतत्वेन तत्पदस्थाने 'मासतुसेति' पदं पठितुं समारब्धं. गुरुर्बहुवारं तस्य स्पष्टतया तत्पदं कथयति परं पूर्वबद्धगाढज्ञानावरणीयकर्मोदयतोऽसौ तत्पदं स्पष्टतयोच्चारयितुं न शक्नोति. तं तथोद्घोषयंतं दृष्ट्वा लोका हसंति, परं क्षमामहोदधेस्तस्य मनसि मनागपि क्रोधो न प्रादुर्भवति, प्रत्युत स निजात्मगर्हणां करोति. एवमाचाम्लतपः कुर्वतस्तत्पदं चोद्घोषयतस्तस्य द्वादश वर्षाण्यतिक्रांतानि, तथापि तत्पदं ततो भीतमिव तन्मुखे सम्यग्नायातं. लोकैस्तस्य च 'मासतुसमुनिरिति' नाम दत्तं, तथापि स मुनिस्तु शुभध्याने एव स्थितो ज्ञा-

नावरणीयकर्मतरुं निर्मूलीकृत्य केवलज्ञानमाप्तवान्, देवैरागत्य तस्य महोत्सवः कृतः, प्रांते च बहुजीवान् प्रतिबोध्य स मोक्षमासादितवान्. ॥ इति श्रीलावकुलके मासतुसकेवलिदृष्टांतः ॥

गाथा—हत्थिंपि समारूढा । ऋद्धिं दठूण उसभसामिस्स ॥ तक्खण सुहझाणेणं । मरुदेवी भगवई सिद्धा ॥ १० ॥ व्याख्या—हस्तिस्कंधोपरि समारूढा सती श्रीऋषभदेवप्रभोः समृद्धिं दृष्ट्वा तत्क्षणं शुभध्यानेन श्रीमरुदेवा भगवती सिद्धौ गता. ॥ १० ॥

गाथा—पडिजागरमाणीए । जंघाबलहीणमन्निआपुत्तं ॥ संपत्तकेवलाए । नमो नमो पुप्फचूलाए ॥ ११ ॥ व्याख्या—जंघाबलहीनं चरणबलरहितमेवंविधं श्रीअन्निकापुत्राचार्यप्रति प्रतिजागरमाणायै वैयावृत्त्यकरणतत्परायै ततश्च संप्राप्तकेवलायै एवंविधपुष्पचूलासाध्व्यै नमो नमः ॥ ११ ॥ तत्कथा चेवं—उत्तरमथुरादक्षिणमथुराख्ये द्वे नगर्यौ स्तः, तत्रोत्तरमथुरावास्तव्यो देवदत्तनामैको वणिक् व्यापारार्थं दक्षिणमथुरायां समागतस्तत्र जयसिंहाख्येनैकेन व्यवहारिणा सह तस्य प्रीतिर्जाता. अथ तस्य जयसिंहस्यैकाऽन्निकाभिधा कुमारिका महारूपवती भगिनी वर्त्तते. एकदा जयसिंहनिमंत्रितो देवदत्तस्तस्य गृहे भोजनार्थं समागतस्तदा जयसिंहदेवदत्तौ भोजनं कर्त्तुमुपविष्टौ,

अन्निका च तयोर्भोजनद्रव्याणि परिवेषयति. अथ देवदत्तस्तामन्निकां देवांगनामिवातीवरमणीयरूपां चरणाहितमंजीरकिंकिणीनादैश्च सुप्तमपि मदनं जागरयंतीं दृष्ट्वा मकरध्वजपारवश्यं गतः सन् भोजनास्वादमपि न ज्ञातवान्. भोजनानंतरं स निजगृहे समागत्यैकं द्विजवरं जयसिंहपार्श्वे प्रेषयित्वा तां कन्यां मार्गयामास. तदा जयसिंहेनोक्तं नूनमयं देवदत्तो गुणवान् रूपवान् द्रव्यवान् सकलकलानिपुणः कन्यायोग्य एव वरोऽस्ति, परं सोऽन्यनगरवास्तव्योऽस्ति तेन तस्मै भगिनीं दातुं मे मनस्युल्लासो न भवति, चेदसौ मम गृहजामाता भवेत्तदाहं तस्मै मम भगिनीमर्पयामि. द्विजेन सर्वोऽप्ययमुदंतो देवदत्ताय निवेदितस्तदा क्षणं विमृश्य देवदत्तेनोक्तमेकपुत्रजन्मावधि नूनमत्राहं स्थास्यामि. ततो हृष्टेन जयसिंहेन तेन सह निजपुत्री परिणायिता. एवं स देवदत्तोऽन्निकाप्रेमपरिबद्धस्तत्रैव स्थितो निजसमयं सुखेन गमयांचकार. एवं बहुकालानंतरं तस्य पितुर्लेखः समायातो यत् हे पुत्र आवां वृद्धौ त्वद्विरहेणात्यंतं दुःखीभूतौ स्वः, केवलमेकवारमेवावयोर्जीवतोस्त्वद्वदनेन्दुदर्शनतस्त्वमानंदोदधिमुल्लासय ? नोचेदथावां त्वद्विरहातुरावेव यमराजदासत्वमाप्स्यावः, इत्यादिकरुणारसोपेतलेखवृत्तांतं वाचयतस्तस्य देवदत्तस्य नयनाभ्यामश्रुजलबिंदवो भूमौ पतितास्तदा

निकटस्थाग्निकयोक्तं हे स्वामिन् किमस्त्येवंविधं दुःखकारणं येन जवन्नेत्रे अप्यश्रुजलाविले कृते? तदा देवदत्तेन स लेखोऽग्निकाया हस्ते समर्पितस्तयापि तं वाचयित्वा कथितं हे स्वामिन् त्वं चिंतां मा कुरु? अहं स्वयमेव मे ज्रातरं विज्ञप्य जवदीप्सितं कार्यं करिष्यामीत्युक्त्वा सा ज्रातुः समीपे गत्वा कथयामास हे ज्रातस्त्वया विवेकिना किमयं पणबंधः कृतः? तव जामाता निजपितृविरहेण दुःखीजवति, किंचाहमपि श्वशुरचरणदर्शनोत्कंठितास्म्यतस्त्वमावयोः प्रस्थानादेशं देहि? एवं तया प्रतिबोधितेन जयसिंहेनापि तत्प्रतिपन्नं. ततो देवदत्तोऽग्निकया सहोत्तरमथुरांप्रति प्रस्थितो मार्गे चाग्निकया पूर्णावधौ प्राच्या लोकबांधव इवैको महातेजस्वी पुत्रः प्रसूतस्तदा देवदत्तेन तस्याग्निकापुत्र इत्यभिधानं दत्तं. क्रमेण देवदत्तः पत्नीपुत्रयुत उत्तरमथुरायां प्राप्तश्चिरविरहातुरयोः पित्रोर्मिलितश्च, तं च प्रियापुत्रयुतं कुशलेनागतं विलोक्य पितरावपि प्रमोदमेदुरांतःकरणौ जातौ. अथाग्निकापुत्रः क्रमेण यौवनं प्राप्तोऽधिगतसकलकलाकलापः शशांक इव पित्रोर्हृदयकुमुदं प्रमोदविकसितं चकार. एवं यौवनवनगतोऽप्यसौ सिंह इव मन्मथव्याधशरव्यतां न जगाम, वैराग्यरसामृतधारासिक्तं तस्य हृदयं केवलं मोक्षमार्गगमनोत्सुकमेव बजूव. ततस्तेनाग्रहेणापि निजपितरावापृच्छ्य श्रीज-

यसिंहाचार्यसमीपे दीक्षा गृहीता. क्रमेणासावन्निकापुत्रमुनिर्निजदृढबुद्धिबेडया सकलसिद्धांतपारावारपारं प्राप्तस्तदा गुरुणापि तं धुर्यमिव सकलगच्छभारवहनसामर्थ्ययुतं ज्ञात्वा तस्मै आचार्यपदवी दत्ता. क्रमेणासावाचार्यार्को निजपादचारी भव्यकमलवनानि विकासयन् अनादिकालमोहनिद्रागतजंतून् विनिद्रीकुर्वन् कूटदर्शनिघूकगणान् गिरिकंदरगतान् कुर्वन्ननुक्रमेण गंगातटे पुष्पभद्रपुरे समागतः. अथ तत्र नगरे पुष्पकेतुनृपस्य पुष्पवतीराज्ञ्यैकं युगलं प्रसूतमभूत्. तस्य युगलस्य च पुष्पचूलपुष्पचूला इति नाम दत्तं. यौवनं प्राप्तयोस्तयोः परस्परमतीवस्नेहत्वेन राज्ञा विवाहो विहितः, अतो दुःखिनी पुष्पवती वैराग्येण दीक्षां जग्राह, निर्मलं चारित्रं च प्रतिपाल्य सा देवोऽभूत्. अथ पुष्पकेतुराज्ञि मृते सति पुष्पचूलो नृपोऽभवत. इतः पुष्पवतीराज्ञीजीवदेवेन निजतनयां पुष्पचूलामासन्नसिद्धिकां ज्ञात्वा तस्यै प्रतिबोधार्थं स्वप्ने नरकदुःखपीड्यमाना नारकाः प्रदर्शिताः, तत्स्वप्नदर्शनतः संभ्रांतया राज्ञ्या निजभर्तुरग्रे स वृत्तांतो निवेदितस्तदा राज्ञा तन्निमित्तं शांतिकर्म कारितं. परं द्वितीयतृतीयदिनेऽपि राज्ञ्या तथैव स्वप्नो दृष्टस्तदा राजाऽनेकपाखंडिकानाहूय नरकस्वरूपं पप्रछ. तेषु कैश्चिद्गर्भावासरूपं कैश्चिच्च दारिद्र्यरूपं कैश्चिच्च वंध्यत्वरूपं नरकस्वरूपं प्रोक्तं, परं पु-

ष्पवत्या स्वप्नदृष्टं नरकस्वरूपं कथयितुं कोऽपि शक्तो न बभूव. तदा राजान्निकापुत्राचार्यमाहूय नरकस्वरूपं पृष्टवान्, तदा गुरुणा तद्यथास्थितं नरकस्वरूपं निवेदितं. तत् श्रुत्वा चमत्कृता पुष्पचूलोवाच हे भगवन् युष्माभिस्तत्स्वरूपं कथं ज्ञातं? गुरुभिरुक्तं श्रुतज्ञानेन तत्सर्वमपि ज्ञायते. तदा राज्ञ्या पुनः पृष्टं हे भगवन्नेवंविधं नरकदुःखं केन कर्मणा प्राप्यते? गुरुभिरुक्तं महापरिग्रहपंचेंद्रियवधमांसाहारादिभिर्महापापैः प्राणी पूर्वोक्तं नरकदुःखं प्राप्नोति. तत् श्रुत्वा राज्ञ्या तानि पापस्थानानि परित्यक्तानि. कतिचिद्दिवसानंतरं तया पुनः स्वप्ने स्वर्गसौख्यानि दृष्टानि. तदा राज्ञा पृष्टाः पाखंडिनः पूर्ववदेवासमंजसोत्तराणि ददुस्ततोऽसंतुष्टया राज्ञ्या पुनराचार्याः पृष्टास्तैर्दत्तं च यथास्थितोत्तरं श्रुत्वाऽतीवहृष्टा राज्ञी पप्रच्छ हे भगवन् तानि स्वर्गसुखानि कथं प्राप्यंते? गुरुणोक्तं सम्यक्त्वयुतशुद्धचारित्रदेशविरतिपालनेन तानि सुखानि लभ्यंते. तत् श्रुत्वा वैराग्यमापन्ना राज्ञी नृपंप्रति कथयामास हे स्वामिन्नस्माद्विविधदुःखकल्लोलोच्छलितसंसारसागराद्भीताहं संयमप्रवहणं स्वीकर्त्तुमिच्छामि, ततो मामाज्ञां प्रदेहि? राज्ञोक्तं यद्यस्मिन्नेव नगरे स्थिता त्वं मद्गृहादाहारादिग्रहणं स्वीकरोषि तर्ह्येव तुभ्यमहं दीक्षाग्रहणादेशं दास्यामि. पुष्पचूलयापि तत्प्रतिपद्य दीक्षां गृहीत्वा तत्रैव न-

गरे स्थितिः कृता. अथ कालांतरे वृद्धभावतोऽन्निकापुत्राचार्यस्य जंघाद्वयं बलहीनं जातं, ततोऽसावपि तत्रैव नगरे स्थितः, इत आचार्येणागामिकवर्षे दुर्भिक्षयुतं विज्ञाय निजशिष्याः परदेशे प्रेषिताः, वैयावृत्त्यार्थं रक्षितानामपि शिष्याणां दैवयोगेनाऽभावो जातस्तदा पुष्पचूला साध्वी तस्य वैयावृत्त्यं करोति. शुद्धभावेन निर्जरापेक्षया सा शुद्धान्नपानीयौषधादीन्यानीय गुरुभ्यः समर्पयति. क्रमेण शुभभावनया साऽशुभकर्माणि छेदयित्वा शुक्लध्यानाधिरूढा केवलज्ञानमाससाद. अथ तद्ज्ञानबलेन सा गुरुचित्तचिंतितमाहारादि तमनापृच्छ्यैव समानयामास. तदा गुरुभिरुक्तं त्वं मया चिंतितमेवाहारं कथं समानयसि ? तदा तया गुरुवैयावृत्त्यांतरायभयादुक्तं हे भगवन् समीपस्थाहं भवतां स्वभावं जानामि. अथैकदा वर्षति मेघे तयाहारः समानीय गुरुभ्यो दत्तस्तदा गुरुणोक्तं हे महाभागे केवलं कारणविशेषत एवाहं साध्वीसमानीताहारं स्वीकरोमि, तत्रापि त्वं मेघे वर्षति कथमाहारं समानयसि ? अहं चरणवायुरोगेण बलहीनोऽस्मि, परं क्षुधापरीषहसहनेऽहं समर्थोऽस्मि. तत् श्रुत्वा साध्व्योक्तं हे भगवन् यूयं खेदं मा कुरुत ? पथि यत्र यत्राचित्तकायवृष्टिर्बभूव तत्र तत्रैवाहारार्थं गतया मया गमनागमनं विहितमस्ति. गुरुणोक्तं किं तव केवलज्ञानमस्ति ? यदेवं ब्रूषे ? त·

योक्तं भवत्प्रसादात्तदेव ममास्ति. तत् श्रुत्वा विस्मितेन गुरुणा 'हा मया केवल्याशातना कृता' इत्युच्चरता सा क्षामिता, पृष्टं च मम केवलज्ञानं भविष्यति न वा? तयोक्तं यूयं चिंतां मा कुरुत? युष्माकमपि गंगातटे केवलज्ञानयुता मोक्षलक्ष्मीर्वरिष्यति. तत् श्रुत्वा गुरुणोक्तं तर्ह्यधुनैवाहं गंगां समुत्तरिष्यामीत्युक्त्वा स गंगातटे समागत्य नौमध्ये स्थितो नौरपि गंगाजले प्रस्थिता. अथ पूर्वभववैरिदेवकृतप्रयोगतो नौमध्ये यत्र यत्र पार्श्वेऽन्निकापुत्राचार्य उपविशति तत्र तत्र नदीजलमंतः समायाति ततश्च नौर्मज्जनपरा भवति, तदाऽनार्यनाविकैः स सूरिरुत्पाट्य नदीजलमध्ये क्षिप्तो धृतश्च वैरिदेवेन स शूलिकोपरि. शूलिविद्धाचार्यश्चिंतयति धिग्मां यन्मम रुधिरैरप्कायविराधना जायते, एवं शुभभावनां भावयन् सूरिरंतकृत्केवलित्वमासाद्य मोक्षे गतस्तदा देवैस्तत्रागत्य महोत्सवः कृतस्तत्र च प्रयागाभिधानं तीर्थं प्रवर्त्तितं, गंगाया अपि च माहात्म्यं वर्द्धितं. सूरिमस्तकास्थि गंगाप्रवाहेणाकृष्यमाणं दूरतस्तटोपरि पतितं, वायुयोगेन च तस्मिन् पाटलबीजं मिलितं, तस्माच्च पाटलतरुरुत्पन्नः, सुसंगतिना तत्पाटलमूलजीवश्चैकावतारी जातः, कोणिकपुत्रोदायिराज्ञा च तत्र पाटलीपुत्रनगरं स्थापितमिति. ॥ इति श्रीभावकुलकेऽन्निकाचार्यपुष्पचूलाकथा ॥

गाथा—पनरसयतावसाणं । गोयमनामेण दिन्नदिरकाणं ॥ उपन्नकेवलनाणं । सुहनावाणं नमो ताणं ॥ १२ ॥ व्याख्या—कोम्निन्नदिन्नसेवालप्रमुखपंचदशतापसानां श्रीगौतमस्वामिना दीक्षितानां केवलज्ञानं समुत्पन्नं, एवंविधेभ्यः शुभभावेभ्यस्तेभ्यो नमोऽस्तु ॥ १२ ॥ तेषां तापसानां कथा पूर्वमुक्तैव.

गाथा—जीवस्स सरीराउ । भेयं नाउं समाहिपत्ताणं । उप्पाडियनाणाणं । खंदकसीसाण तेसि नमो ॥ १३ ॥ व्याख्या—जीवस्य शरीराद्भेदमंतरं ज्ञात्वा समाधिप्राप्तानां शुभभावनां भावयतां सतां येषां स्कंदकाचार्यशिष्याणां केवलज्ञानं समुत्पन्नं, तेभ्यः श्रीस्कंदकाचार्यशिष्येभ्यो नमः ॥ १३ ॥ तेषां कथा चेवं—श्रावस्त्यां नगर्यां जितशत्रुनामा राजा बभूव, तस्य धारिणीराज्ञीकुक्ष्युद्भवः स्कंदकनामा कुमार आसीत, पुरंदरयशाभिधाना च पुत्र्यभवत्. सा पुत्री कुंभकारनगराधीशदंडकाभिनामभूपेन सह राज्ञा परिणायिता, जाता च सा तस्य पट्टराज्ञी. अथैकदा दंडकाभिनृपस्य पालकनामा पुरोहितः स्वस्वामिकार्यार्थं श्रावस्त्यां समागतः, स च महामिथ्यात्वी जैनधर्मद्वेषी चाभव्योऽभूत्. एकदा राजसभामध्ये धर्मगोष्टिर्जाता, तदा तेन दुष्टेन पालकेन जिनधर्मनिंदा कृता,

तत् श्रुत्वा हृदि खिन्नेन स्कंदककुमारेण स पालको दयामूलजिनधर्मस्थापनपूर्वकं युक्त्या निरुत्तरीकृतस्तदा हृदयस्थद्वेषभावोऽपि स पालको मुखेन कुमारयुक्त्यादिप्रशंसां कृतवान्. ततो निवृत्तकार्यः स पालको निजकुंभकारनगरे प्रयातः. इतो जगज्जनाज्ञानांधकारपटलानि दूरीकुर्वन् भव्यांभोजराजिं विकसितां कुर्वन् कुमतान्यदर्शनितारकगणान् विलोपयन् केवलज्ञानकिरणनिकरैर्भव्यहृदालवालसमुद्भूतसम्यक्त्वांकुरान् वर्द्धयन् जिनधर्मद्वेषिजनघूकान् घनं संतापयन् श्रीमुनिसुव्रतस्वामितीर्थंकरभानुर्विहरन् सन्ननुक्रमेण श्रावस्त्यां समागतस्तदा जितशत्रुराजा स्कंदकादिपुत्रपरिवारयुतः प्रभुं वंदितुं समायातः, तत्र प्रभोर्धर्मदेशनां श्रुत्वा बहुजनाः प्रतिबोधं प्राप्ताः, स्कंदककुमारोऽपि वैराग्येण पितरावापृच्छ्य पंचशतराजकुमारपरिवृतो बहुमहोत्सवपूर्वकं दीक्षां जग्राह. अधीतैकादशांगोऽसौ प्रभुणा पंचशतसाधूनामाचार्यः कृतः, अथैकदा श्रीस्कंदकाचार्येण मुनिसुव्रतस्वामिनः पृष्टः स्वामिन् भवदाज्ञा चेत्तर्ह्यहं निजभगिनीपतिं प्रतिबोधयितुं गच्छामि, तत श्रुत्वा प्रभुणा न जल्पितं, तदा तेन पुनस्तथैवोक्तं तथापि प्रभुर्नोवाच, तदा पुनस्तेन तृतीयवारमपि तथैवोक्तं तदा स्वामिना कथितं तत्र तव प्राणांतकृदुपसर्गो भविष्यति. स्कंदकाचार्येणोक्तं हे स्वामिन् तस्मिन्नुपसर्गे वयमाराधका भ·

विष्यामो वा विराधका भविष्यामः? प्रभुणोक्तं त्वां विहाय सर्वेऽप्याराधका भविष्यंति, तदा तेनोक्तं यदि सर्वेऽप्याराधका भविष्यंति, तर्हि मम न कोऽपि विशेषः, अहं च भवांतरे मोक्षं गमिष्यामी· त्युक्त्वा भगवंतं च नमस्कृत्य स निजपरिवारयुतस्ततः प्रस्थितः, क्रमेण च कुंभकारनगरसमीपे स· मागतः, एवं तं तत्र समागछंतं विज्ञाय दुष्टपालकपुरोहितेन चिंतितमद्य मम वैरिणः स्कंदककुमा- रस्य वैरफलं दर्शयिष्यामीति विचिंत्य तेनाधमेनोपाश्रयमध्ये भूम्यंतः प्रछन्नतया शस्त्राणि क्षिप्तानि. ततः प्रभाते गुरवस्तत्र समागतास्तदा हृष्टो राजा राज्ञीयुतो गुरुं वंदितुं ययौ. गुरोरमृतधारातुल्यां दे- शनां श्रुत्वानंदितो राजा स्वगृहे समागत्य तस्य गुणान् वर्णयामास. तदा महाक्रूरेण पालकेन क- थितं हे स्वामिन्नस्य स्वरूपं यूयं न जानीथ, मया सर्वमपि तच्चेष्टितं ज्ञातमस्ति. तत् श्रुत्वा संभ्रांते- न राज्ञोक्तं त्वया तेषां किं स्वरूपं ज्ञातमस्ति? तेनोक्तं स्वामिन्नयं यौवने खड्गधारातीव्रव्रतपालना· त्खिन्नस्तव राज्यं गृहितुमत्र समागतोऽस्ति. तेन सहैते पंचशतशिष्या अपि महासुभटाः संति, स च त्वां विश्वास्य मारयिष्यति, तदा राज्ञोक्तं तेषां पार्श्वे धर्मोपकरणानि विहायान्यत किमपि शस्त्रा· दिकं नास्ति. तदा पुरोहितेनोक्तं यदि मम वचसि विश्वासो न तर्हि यत्र स्थानके ते पाखंडिनः

समुत्तीर्णाः संति, तां भूमिकां प्रछन्नं खानयित्वा त्वं विलोकय? तत् श्रुत्वा विस्मितो राजा तत्कार्यार्थं निजचरांस्तत्र रात्रौ प्रेषयामास. तैस्तत्र गत्वा भूमिः खनिता, तन्मध्याच्च शस्त्राणि निष्कास्य तै राज्ञोऽग्रे मुक्तानि. तदवसरे मुनयः सर्वेऽपि ध्यानस्थिता न किंचिदप्यवदन्. शस्त्राणि दृष्ट्वा क्रुद्धेन राज्ञा कथितं ध्रुवमेते दुरात्मानः साधुरूपाः पिशाचाः संति, अतो हे पालक मयैते तुभ्यं समर्पिताः, यत्ते रोचते तत्तेषां कुरु? एवंविधं राज्ञ आदेशमासाद्य स दुष्टः पालको नगराद्बहिरेकं घाणकं मंडयामास, साधूंश्च सर्वान् गृहीत्वा तन्मध्येऽनुक्रमेण क्षेपयामास. तदा तेन स्कंदकाचार्यं प्रत्युक्तं हे स्कंदक त्वया तदा सभासमक्षं यो मम मानभंगो विहितस्तस्य फलं त्वं पश्य? तदाचार्येण तीर्थंकरवचनं स्मृत्वा शिष्येभ्य आराधनां कारयितुं प्रारब्धं, ते सर्वेऽपि घाणके निक्षिप्ताः समाधियुता अंतकृत्केवलित्वमासाद्य मोक्षे गताः, प्रांते शिष्यमेकं बालक्षुल्लकं यदा स घाणके क्षेप्तुं लग्नस्तदा मोहनीयकर्मोदयतः स्कंदकाचार्येणोक्तं प्रथमं त्वं मां निपीलय? परं दुष्टेन पालकेन तन्नांगीकृतं, किंतु द्रुतमेव तं क्षुल्लकमुत्पाट्य स पीलयामास, तदा स क्षुल्लकोऽप्यंतकृत्केवलित्वेन सिद्धिं गतः अथ क्रोधानलज्वलितेन स्कंदकाचार्येण स्वपीलनावसरे निदानं कृतं यत्पालकयुतैतद्देश-

नगरराज्यादिज्वालकोऽहं भवामीति निदानपूर्वकं मृत्वा सोऽग्निकुमारेषु देवो जातः, इतः प्रभातो जातस्तदा गृध्रप्रमुखा जीवा मांसार्थिनस्तत्र भ्रमयामासुस्तेष्वेकेन गृध्रेनोत्पाटितं रक्तलिप्तहस्तभ्रांत्या रुधिरलिप्तं स्कंदकाचार्यरजोहरणमकस्माद्राजभवनांगणे तस्य चंचुपुटात्पतितं, अथ तस्मिन्नवसरे पुरंदरयशाराज्ञी निजभ्रातृवंदनार्थं गमनोत्सुकांगणे यावत्समायाता तावत्तद्रजोहरणं तत्र पतितं दृष्ट्वा सखेदाश्चर्यं प्राप्ता सती विचारयामास यदिदं नूनं मया दत्तरत्नकंबलवेष्टितं मम भ्रातुरेव रजोहरणमस्ति, तद्रुधिरभृतं कुत अत्रागत्य पतितं ? शुद्धिकरणानंतरं हृदयस्फोटकं तं वृत्तांतं ज्ञात्वा सा मूर्छिता, सखीभिः शीतलजलवायुना सचेतनीकृता च विविधविलापान् कर्त्तुं लग्ना, इतस्तत्रागतं राजानंप्रति सा कथयामास रे मूढ त्वया नीचपालकद्विजवचनतः किमेतदकार्यं कृतं ? नूनं त्वया ज्ञातव्यं यत्तव देशस्य च निर्मूलनाशः समागतोऽस्ति. अथ परमवैराग्यं प्राप्ता पुरंदरयशा शासनदेवतयोत्पाट्य भगवत्समीपे मुक्ता, तया च दीक्षा गृहीता. अथाग्निकुमारमध्योत्पन्नेन स्कंदकसूरिजीवेनावधिना स्वनिदानं संस्मृतं, तत्कालोत्पन्नक्रोधोऽसौ तत्रागत्यांबरादग्निवृष्टिं कुर्वन् महादावानलं प्रकटीकृत्य सर्वजनपश्वादियुतं तं देशं ज्वालयामास, राजादिसर्वलोका भस्मीभूताः; पालकोऽपि मृ-

त्वा सप्तमनरकं गतस्ततस्तद्देशाटव्या दंडकारण्यमित्यभिधानं जातं, यत्राद्यापि तृणमात्रमपि न प्ररोहति. ॥ इति श्रीभावनाकुलके स्कंदकसूरिशिष्यकथा ॥

गाथा—सिरिवद्धमाणपाए । पूयंती सिंदुवारकुसुमेहिं ॥ भावेणं सुरलोए । दुग्गयनारी सुहं पत्ता ॥ १४ ॥ व्याख्या—श्रीवर्द्धमानचरणौ सिंदुवारकुसुमैर्भावेन पूजयंती दुर्गतानारी सुरलोके देवलोके सुखं प्राप्ता ॥ १४ ॥ तस्याः कथा चेयं—एकदा श्रीईक्ष्वाकुवंशमुक्ताफलोपमः केवलज्ञानविराजमानश्चतुर्दशसहस्रसाधुषट्त्रिंशत्सहस्रसाध्वीभिश्च परिवृतोऽनेकवृंदारकवृंदैर्वंदितपादपद्मः श्रीमहावीरप्रभुर्विहरन् सन् काकंदीनगर्यां समवसृतस्तदा प्रभुपूजार्थं पुष्पादिपूजोपकरणसहिताननेकजनांस्तत्र गच्छतो दृष्ट्वैकया जन्मदरिद्रिण्या स्त्रिया जनैकः पृष्टो यदिमे जनाः क्व व्रजंतीति, तदा तेन पुरुषेणोक्तं जन्मजरामरणरोगशोकदुःखदारिद्र्याद्यनेकविधसंसारतापोपशमनैकचंद्रतुल्यं श्रीमहावीरप्रभुं पूजयितुमेते जना व्रजंति. तत् श्रुत्वाऽऽसन्नसिद्धिकया तया निजमनसि चिंतितं यदहमपि श्रीवीरप्रभुं पूजयिष्यामीति विचिंत्य साऽरण्यसुलभानि सिंदुवारकुसुमानि गृहीत्वा हर्षप्रफुल्लहृदया निजजीवितं च सफलं मन्यमाना समवसरणसमीपे समागता. तदातिवृद्धत्वेन क्षीणे चायुषि

तदैव तत्रैव स्थाने मृत्वा सा देवत्वं प्राप्ता. तदा तत्कलेवरं दृष्ट्वा सदया लोकास्तां मूर्छितां मत्वा शीतलपानीयैः सिंचयामासुः परमभव्यो बोधिबीजमिव सा चैतन्यं न प्राप्ता. तदा लोकैः श्रीवीरप्रभुः पृष्टो हे भगवन् किमियं वृद्धा जीवति वा मृता? प्रभुणोक्तं वृद्धेयं मृत्वा देवत्वं प्राप्तास्ति. इतोऽसौ देवोऽवधिज्ञानेन श्रीवीरप्रभुं तत्र समवसृतं विज्ञाय वंदितुं समागतस्तदा पुनर्भगवतोक्तं भो लोकाः स एवैष देवोऽत्र समागतोऽस्ति. तदा विस्मितैर्लोकैः पुनः पृष्टं हे भगवन् पूजामनोरथमात्रेणैव जीवः किं देवत्वं प्राप्नोति? तदा प्रभुणोक्तं शुभध्यानवशेन जीवस्तीर्थंकरादिमहापदवीमपि प्राप्नोति, तदा देवत्वस्य तु का वार्त्ता? तदा पुनर्लोकैः पृष्टं हे भगवन् तर्हि किमयं जीवो मोक्षेऽपि प्रयास्यति? प्रभुणोक्तं इतो देवभवाच्च्युत्वायं जीवः कनकपुरे कनकध्वजाभिधो राजा भविष्यति. तत्र बहुकालं राज्यं पालयन् सन्नेकदा सोऽश्वक्रीडार्थं वनमध्ये यास्यति. तत्राम्रतरुतलस्थोऽयं दर्दुरं ग्रसंतं सर्पमेकं विलोकयिष्यति, तं सर्पमप्येकेन महासर्पेण, तं महासर्पमप्येकेनाजगरेण ग्रस्यमानं दृष्टीगोचरीकरिष्यति. तदोत्पन्नवैराग्योऽयं गृहमागत्य निजपुत्राय च राज्यं दत्वा चारित्रमंगीकरिष्यति. क्रमेण विहरन् सन् सोऽयोध्यानगर्यां शत्रुंजयावतारतीर्थे कर्मक्षयं कृत्वा मोक्षे गमि

ष्यतीति श्रुत्वा सर्वेऽपि लोका आनंदिताः स्वस्वस्थानके गताः, प्रभुरप्यन्यत्र विजहार. ॥ इति श्रीभावकुलके दुर्गतानारीकथा ॥

गाथा—भावेण भुवणनाहं । वंदिउं दद्दुरोवि संचलिउ ॥ मरिऊण अंतराले । नियनामंको सुरो जाउ ॥ १५ ॥ व्याख्या—भावेन कृत्वा भुवननाथं श्रीमहावीरप्रभुं वंदितुं चलितो दर्दुरोऽप्यंतराले मृत्वा निजनामांकित एव दर्दुरांकाभिध एव देवो जातः ॥ १५ ॥ तस्य कथा चैवं—कोशांब्यां नगर्यां शतानीकाभिधो राजा बभूव, तत्र चैको महादरिद्री सेडुकनामा द्विजोऽवसत्, स निर्बुद्धित्वेन द्रव्यरहितो महादुःखेन निजसमयं गमयति. अथैकदा तस्य गर्भिण्या भार्ययोक्तं मम प्रसवसमयो निकटे वर्त्ततेऽतस्त्वं घृतगुडगोधूमादि समानय ? तेनोक्तं विना द्रव्येणाहं तद्वस्तूनि कुतः समानयामि ? भार्ययोक्तं त्वं राज्ञः सेवां कुरु ? येन तुष्टो राजा तुभ्यं द्रव्यं दास्यति. एवं भार्यया प्रेरितोऽसौ नित्यं फलपुष्पादिभिर्नृपं सेवते. अथैकदा चंपानगरीस्वामी दधिवाहननृपः सैन्यं गृहीत्वा कौशांबीं परिवेष्ट्य स्थितः, परं कौशांबीवप्रं गृहितुं स न समर्थो बभूव. इतो वर्षाकाले समागते सति दधिवाहनो रात्रावेव पश्चाद्वलितः, अथ सूर्योदयादर्वाक् स सेडुको यदा पुष्प-

ग्रहणाय नगराद्बहिर्वाटिकायां गतस्तदा तेन दधिवाहनसैन्यं ततो निर्गतं विज्ञाय द्रुतं शतानीकपार्श्वे गत्वा तद्वृत्तांतो निवेदितस्तदैव शतानीकेन तस्य पृष्टे गत्वा तस्य हस्त्यश्वादयो गृहीतास्ततो निवृत्त्य शतानीकेन सेडुकायोक्तं त्वं यथेप्सितं मार्गय ? तेनोक्तं स्वामिन्नहं मम भार्यामापृच्छ्य मार्गयिष्यामीत्युक्त्वा स द्रुतं निजगृहे भार्यासमीपे समागतः, कथितश्च तेन तस्यै सर्वोऽपि वृत्तांतस्तदा भार्यया चिंतितं चेद् बहु द्रव्यं गृहे समागमिष्यति तर्हि नूनमयं द्वितीयां भार्यां करिष्यति, ततो यथा सुखेनाजीविका भवेत्तथैवाहं करोमीति विचार्य तयोक्तं हे स्वामिन् त्वया नृपाग्रे नगरमध्ये प्रतिदिनं दीनारैकार्पणसहितं गृहे गृहे भोजनं मार्गणीयं. ततोऽसौ नृपसमीपे गत्वा तथा मार्गयामास, नृपेणापि तत्कथनानुसारिणी नगरमध्ये उद्घोषणा कारिता. अथ स सेडुकः प्रतिदिनं तथैव करोति. अनुक्रमेण यथा यथा तस्य पुत्रपौत्रादिपरिवारो वर्द्धितस्तथा तथा तस्य लोभोऽपि वर्द्धितस्तेनासौ भूरिदीनारार्थी सन्नेकस्मिन्नेव दिने वमनपूर्वकमनेकगृहेषु भोजनं करोति. एवं कुर्वन्नसौ कतिचिद्दिवसानंतरं कुष्टरोगाभिभूतो जज्ञे. तं कुष्टिनं विज्ञायैकदा मंत्रिणा राज्ञे प्रोक्तं स्वामिन्नस्य कुष्टिद्विजस्य सभामध्यागमनमयुक्तमस्ति, तदा राज्ञा तं निष्कास्य तस्य स्थाने तत्पुत्रः स्थापितः, अथ गृहाग-

तोऽसौ सेरुकद्विजः पुत्रैर्गृहादपि निष्कासितः सन् शून्यैकगृहे स्थितस्तत्र काष्टभाजनमध्ये तिरस्कारपूर्वकं तस्मै पुत्रैर्भोजनं दीयते, एवं वातुलकुक्कुर इव तिरस्कृतोऽसौ चिंतयति ममैते पुत्रा मयोपार्जितां लक्ष्मीं भुंजंति मां च तिरस्कुर्वंति, ततोऽहं तान् सर्वानपि कुष्टिनः करिष्यामीति विचिंत्य तेन पुत्रेभ्यः कथितं हे पुत्रा यूयमस्मत्कुलाचारं शृणुत ? अजमेकमानीय मंत्रैश्च तं पूतीकृत्य कुलदेवतायै च प्रकल्प्य तन्मांसं सर्वकुटुंबिभिर्भक्षणीयं, येन कुलदेव्याः संतोषो भवेत. तत् श्रुत्वा तैरेक अजो मूल्येन समानीय मंत्रपूतीकरणाय सेरुकाय समर्पितः, सेरुकः प्रछन्नं तमजं निजकुष्टरुधिरादिमिश्रितभोजनं सर्वदा भोजयामास. एवं कतिचिद्दिवसानंतरं नियमितदिवसे कुटुंबिभिस्तमजं व्यापाद्य तन्मांसं भक्षितं. ततः सेरुकस्तीर्थयात्राकृते ततो निर्गतः, पश्चादनुक्रमेण तस्य सर्वमपि कुटुंबं कुष्टरोगाभिभूतं जातं. अथ स सेरुको भ्रमन् संस्तृषातुरः क्रमेणैकमहाटव्यां संप्राप्तस्तत्र गिरिनिर्झरपानीयभृतैकावटस्तेन दृष्टस्तत्र विविधौषधीमूलरसमिश्रितं जलं मिलितमभुत्. तृषातुरेण सेरुकेन तत्पीतं, औषधीरसमाहात्म्याच्च तस्य कुष्टरोगो गतो जातं च मनोहरं शरीरं, तदा स हृष्टः सन् निजगृहंप्रति चचाल. क्रमेण कौशांब्यामागतस्तदा लोकास्तं पृछंति हे सेरुक तव शरीरं कथं

गतरोगं बभूव ? तेनोक्तं देवाराधनेन मे रोगो गतः, ततस्तेन गृहमागत्य पुत्रादिभ्यः प्रोक्तं किं दृष्टं युष्माभिर्ममावज्ञाफलं ? पुत्रैरुक्तं हे तात कुटुंबिनामुपरि युष्माभिः कथं विश्वासघातः कृतः ? एवं पुत्रपौरादिभिर्निंदितोऽसौ नगरप्रतोल्यां समागतः. इतस्तत्र श्रीमहावीरप्रभुः समवसृतस्तदा द्वारपालेनोक्तं हे सेडुक त्वमत्र मम स्थाने क्षणं तिष्ठ ? अहं श्रीवीरप्रभुं वंदित्वा द्रुतमेवागच्छामीत्युक्त्वा स गतः, अथ क्षुत्तृषातुरेण सेडुकद्विजेन तत्र समीपवर्त्तिदुर्गादेवीस्थाने लोकैर्ढौकितानि वटप्रमुखद्रव्याणि भक्षितानि, ग्रीष्ममध्याह्नकालयोगेन च स भृशं तृषातुरो जातो मनसि च वापीकूपतडागादीनि ध्यायति, परं प्रतोलीं निर्जनां मुक्त्वा स कुत्रापि गंतुं समर्थो नो भवति, एवं तज्जलध्यानपरोऽसौ मृत्वा राजगृहनगरे वापिकायां गर्भजसंज्ञिपंचेंद्रियदर्दुरत्वेन समुत्पन्नः. अथ प्रभुरपि ततो विहरन् राजगृहे समवसृतस्तदा जलाहरणार्थमागतानां परस्परं वार्त्तालापं कुर्वतीनां पौरस्त्रीणां मुखेभ्यः श्रीमहावीरप्रभोस्तत्रागमनं श्रुत्वा तस्य दर्दुरस्य जातिस्मरणज्ञानं समुत्पन्नं, ततश्चिंतितं तेन यद् द्वारपालो मां प्रतोल्यां मुक्त्वा यं श्रीमहावीरं वंदितुं गतोऽभूत् स एव जगज्जंतूनां संसारसागरतः समुद्धरणक्षमः श्रीवीरप्रभुरत्र समवसृतः संभवति, मया च यदि तस्मिन्मनुष्यभवे ध·

र्मो न कृतस्तेनैवाहं नूनं तिर्यग्भवे समागतोऽस्मि, अतोऽद्यैव श्रीवीरप्रभुं वंदिष्यामीति विमृश्य स प्रभुवंदनमनोरथयुतो वाप्या बहिर्निर्गत्य समवसरणे गमनोत्सुकः पथि गच्छति. इतः श्रेणिकराजापि प्रभुवंदनाय निजपरिवारयुतः समायाति, तदा नृपाश्वपादतले समागतोऽसौ दर्दुरो मृत्वा शुभभावनया प्रथमदेवलोके दर्दुरांकनामा देवो जातस्तत्रेंद्रेण सभायां श्रेणिकसम्यक्त्वप्रशंसा कृता, तत्परीक्षार्थं स दर्दुरांकदेवोऽवधिना प्रभुं राजगृहोद्याने समवसृतं विज्ञाय द्रुतं तत्रागत्य प्रभुं च वंदित्वा प्रभोः शरीरं चंदनादिद्रव्येण विलेपयति. श्रेणिकस्तु देवमायातस्तं कुष्टिनं कुष्टरसैः प्रभुशरीरं च विलेपयंतं पश्यति. तदा क्रुद्धेन श्रेणिकेन तस्य ग्रहणार्थं निजसेवकानां संज्ञा कृता. इतः प्रभुणा छिक्कृतं तदा तेन देवेनोक्तं त्वं म्रियस्व? तदैव श्रेणिकेन छिक्कृतं तदा तेनोक्तं त्वं चिरं जीव? अभयकुमारस्य छिक्कृत्यनंतरं तेनोक्तं म्रियस्व वा जीव? ततो यदा कालकसूकरिकेण छिक्कृतं तदा तेनोक्तं त्वं मा म्रियस्व मा च जीव? अथ भगवतो मरणकथनेन श्रेणिकस्तस्योपर्यत्यंतं कुपितः, इतो देशनांते स यावदुत्थितस्तावत् श्रेणिककृतसंज्ञातस्तलारक्षास्तं गृहीतुं समायाताः, इतोऽसौ गगनमार्गे समुत्पतितस्तदा विस्मितेन श्रेणिकेनोक्तं हे भगवन् किमेतदाश्चर्यं? भगवता

तस्य दर्दुरांकदेवस्य सकलं स्वरूपं निवेद्योक्तमयं हि देवस्तवेंद्रप्रशंसितसम्यक्त्वपरीक्षार्थमत्रागतोऽ· भूत्, किं च स कुष्ट्यपि नाभूत्, तथैव तेन मम शरीरमपि चंदनादिना लिप्तमासीत्, तत्कृतदेव· मायात एव त्वयैवं दृष्टं. पुनर्मांप्रति तेन यन्म्रियस्वेति कथितं तन्मे मोक्षापेक्षया कथितं. त्वांप्रति जीवेति तव भविष्यन्नरकदुःखापेक्षया कथितं. अभयकुमारंप्रति म्रियस्व वा जीवेति यत्कथितं तद· त्राभयकुमारो बहुलोकोपकारान् करोति, मृतश्चासौ पंचमेऽनुत्तरविमाने गमिष्यतीत्यपेक्षया कथितं. कालकसूकरिकंप्रति यत्तेन मा म्रियस्व मा च जीवेति यदुक्तं तदत्रस्थोऽयं बहुजीवहिंसां करोति मृ· तश्चासौ दुर्गतिं यास्यतीत्यपेक्षया कथितं. तत् श्रुत्वा विषण्णेन श्रेणिकेनोक्तं हे स्वामिन् मम भवा· दृशाः स्वामिनस्तर्हि मे दुर्गतिगमनं कथं ? भगवतोक्तं हे राजन् त्वया सम्यक्त्वोपार्जनादर्वागेव न· रकायुर्बद्धमस्ति. तदा पुनर्नृपेणोक्तं हे स्वामिन् मम तद्दुर्गतिनिवारणं कथं भवेत ? प्रभुणोक्तं य· दि त्वं कपिलादास्या हस्तेन दानं दापयेस्तथैव कालकसूकरिकं जीवहिंसातः संरक्षयेस्तदैव ते नर· कगत्युच्छेदो भवेत. तत् श्रुत्वा श्रेणिकः प्रभुं वंदित्वा गृहंप्रति समागत्य कपिलायै कथयामास हे कपिले त्वं दानं देहि ? तयोक्तं हे राजन् ! मरणं श्रेयः परमहं दानं नैव दास्यामि. राज्ञानेके भु·

पायाः कृताः परं तया दानं नैव दत्तं. ततो राज्ञा कालकसूकरिकमाहूय कथितं त्वं हिंसां मा कुरु? तथापि तेन तन्न स्वीकृतं, तदा राज्ञासौ बद्धहस्तपादः कूपमध्ये रक्षितस्तत्रस्थोऽपि स मनसा जीवान्मारयति. अथ श्रेणिकेन प्रभोः समीपे समागत्योक्तं हे स्वामिन् कालकसूकरिको मया जीवहिंसातो रक्षितोऽस्ति. प्रभुणोक्तं हे राजन् स कूपमध्यस्थितो मनसापि पंचशतमहिषवधकरणरूपां जीवहिंसां करोति. तदा खिन्नेन श्रेणिकेनोक्तं हे स्वामिन् तर्हि किं मम नरकगमननिवारणोपायः कश्चिदपि नास्ति? प्रभुणोक्तं हे राजन् त्वं खेदं मा कुरु? भविष्यचतुर्विंशत्यां त्वं मादृश एव प्रथमतीर्थंकरो भविष्यसि, तत् श्रुत्वा संतुष्टो नृपो निजस्थाने जगाम, प्रभुरप्यन्यत्र विजहार. ॥ इति श्रीभावकुलके दर्दुरांकदेवकथा ॥

गाथा—विरयाविरयसहोअर । उदगस्स भरेण भरियसरियाए ॥ भणियाए सावियाए । दिन्नो मग्गुत्ति भाववसा ॥ १६ ॥ व्याख्या—विरताऽविरतौ द्वौ भ्रातरौ, तयोरेको भ्राता मुनिर्द्वितीयश्च श्रावकस्तौ द्वावप्युद्दिश्य श्राविकाभिर्भणितया उदकपूरेण भरितयापि नद्या भाववशान्मार्गो दत्त इति गाथार्थः, भावार्थस्तु कथानकगम्यः स चेदं—जयपुरनगरे सूराभिधो राजा बभूव, तस्य

लघुभ्राता च सोमो युवराजपदवीं भुनक्ति. अथैकदा तत्र श्रीसुव्रताचार्याः समागतास्तदा राजा युवराजादिपरिवारयुतो महोत्सवपूर्वकं तत्र वंदितुं गतः, गुरून् च नमस्कृत्य तेन भवभयविनाशिनीति देशना श्रुता. भो भव्या इह क्रोधोग्रदावानलभस्मीभूतक्षमारण्ये मानमहोत्तुंगगिरिखर्वितमार्दवसरित्प्रवाहे मायाविषवल्लीमालाछादितसरलतालतामंडपे लोभोच्छलितोदधिवेलाप्लावितौदार्यकल्पतरुनिकुरंबके संसारे कपटपाटवोपेतमोहलुंटाकलुंटितात्मभावधना घना जनाः क्वापि निवृत्तिस्थानमलभमाना महादुःखदारिद्र्योपेतावस्थायां स्थिता अनादिकालोद्भूताऽज्ञानतमसांधीभूयेतस्ततो भ्रमंतो घोरांधकारभृतनरकावटे पतंति. ततो विवेकिभिर्जनैर्निजनयनपाटवकृते सर्वदा सुगुरुधर्मोपदेशरूपांजनस्योपयोगः कर्त्तव्यो येनांजनेन निर्मलीभूतनयना घोरावटादीन् दूरे त्यक्त्वा सारासारभावरूपमार्गं पश्यंतो सद्धर्मावलंबनेन क्षपकश्रेणिसमारूढा जना अतिदूरस्थेऽपि मोक्षनगरे गंतुं समर्था भवंति. एवंविधं गुरुदत्तोपदेशं श्रुत्वा सोमराज्ञो मनसि वैराग्यो बभूव. तेनासौ गृहमागत्य निजवृद्धभ्रातरं सूरनृपंप्रति कथयामास हे भ्रातरिदं राज्यं तुभ्यं समर्प्य चरणकरणनाराचदृढीभूतं चारित्रकवचं परिधाय रजोहरणमहामुद्गरेण संसारसमरांगणे संमुखीभूतं मोहमहामल्लसुभटं हत्वाऽमंदानंदमंदिरं मो-

क्राज्यमधिगंतुमहमिच्छामि. तत् श्रुत्वा सूरनृपेणोक्तं हे बंधो त्वमिवाहमपि गुरुमुखश्रुतमाहात्म्यं मोक्षराज्यं लब्धुं वांछामि. ततो मंत्रिप्रमुखाणामाग्रहतः केवलं निजलघुबंधुवचनत एव पुत्रजन्मावधि बंधनमिव मन्यमानोऽसौ सूरनृपो राज्यं पालयामास. सोमनृपश्च दीक्षां गृहीत्वा गुरुणा सहान्यत्र विजहार. क्रमेणाधीतानेकशास्त्रोऽसौ राजर्षिर्गीतार्थो जातः, अथैकदा कतिचिद्वर्षानंतरं स सोमर्षिर्निजभ्रातुर्मिलनाय जयपुरोद्याने समागतस्तदा सूरनृपो निजमंत्र्यादिपरिवारयुतो हर्षेण तत्र गत्वा मुनिं वंदितवान्. मुनिदत्तोपदेशं श्रुत्वा भ्रातुश्चारित्रं चानुमोदयन् स गृहे समागतः. अथ द्वितीयदिने सूरनृपस्य सर्वा राज्यो देवमुनेर्वंदनार्थमुद्याने गताः, परमंतराले नदीमध्ये मेघवृष्टितो जलपूरं समागतं. ततस्ताः सर्वा अपि मुनेरवंदनतो मनसि दूनाः पश्चाद्वलित्वा गृहे समागतास्तदा राज्ञोक्तं यूयं सर्वाः कथं पश्चादागताः ? ताभिरुक्तं स्वामिन्नंतराले नदीमध्ये भीषणं जलपूरं समागतं, तेन वयं पश्चाद्वलितास्तदा राज्ञोक्तं तज्जलपूरस्य प्रतिकारस्तु सुलभोऽस्ति. युष्माभिर्नदीतटे गत्वा वाच्यं यद् यद्दिवसादारभ्यास्मद्देवरेण दीक्षा गृहीतास्ति तद्दिवसादस्मत्पतिर्यदि ब्रह्मचारी भवेत्तर्हि हे नदीदेवि अस्माकं मार्गं देहीति कथिते सति नदी मार्गं दास्यति. तत् श्रुत्वा सर्वा राज्यो

मुखे हस्तं दत्वा हसंत्यः संत्यश्चिंतयामासुर्यद्राज्ञा शीलं पालितमस्ति तत्तु सर्वं वयं जानीम इति विचिंत्य कौतुकार्थिन्यस्ताः सर्वा रथस्थिताः पुनर्देववंदनार्थं चलिताः, नदीतटे गत्वा ताभिस्तथैवोक्तं, तत्कालमेव नदीप्रवाहः पृथग्भूतस्तदा रथसहिताः सपरिवारास्ताः परतटे प्राप्ताः, तत्क्षणमेव पुनर्नदीपूरप्रवाहस्तथैव वहितुं लग्नः, विस्मिताभी राज्ञीभिरुपवने गत्वा देवमुनिर्वंदितः श्रुतश्च तस्य धर्मोपदेशः, ततस्ताभिस्तत्र स्वभोजनकृते मनोहररसवती निष्पादिता प्रतिलाभितश्च भक्त्याहारादिना स मुनिः, ततः संध्यायां गृहगमनोत्सुकास्ताः परस्परं वार्त्तयितुं लग्ना यदथ वयं किं पश्चाद्वलमानास्तदेव वाक्यं कथयिष्यामः किं वान्यत्? तदा गुरुणोक्तं भो महानुभावा यूयं किं जल्पथ? ततस्ताभिः सर्वा वार्त्ता मुनेरग्रे कथितास्तदा मुनिनोक्तमथ युष्माभिर्नदीतटे गत्वैवं वक्तव्यं यदस्माभिरद्य दीक्षाग्रहणदिनादारभ्य चेदनाहारिणैव स्थितं भवेत्तर्हि हे नदी देवि अस्माकं मार्गं देहीति. तत श्रुत्वा पुनर्विस्मिताभिस्ताभिश्चिंतितमिदमपि कथं घटते? अस्माभिरद्यैव प्रत्यक्षं तस्मै आहारो दत्तोऽस्तीति चिंतयंत्यस्ता विस्मिताः संत्यः पुनर्नदीसमीपे समागत्य तथैव कथयामासुस्तदा पूर्ववदेव नदी द्विधा जाता. प्राप्ताश्च सर्वा अपि सरथाः परिवारयुता निजगृहे. अथातीवविस्मिताभिस्ताभि-

र्नैर्वं पृष्टं हे स्वामिन् कथं यूयं ब्रह्मचारिणः कथं च देवमुनिर्निराहारः ? तदा नृपेनोक्तं यूयं मुग्धा धर्मतत्वं न जानीथ, यदा भ्रात्रा दीक्षा गृहीता तदादितोऽहं चारित्रमनोरथरथस्थित एव गमनागमनादिसकलक्रियां करोमि, राज्ययोग्यपुत्रप्रसवावधिमेवाहं केवलं लूदपरिणामेनैव गृहस्थोऽस्मि, अतोऽहं युष्माभिर्ब्रह्मचारीति ज्ञेयः, यथा—परपुंसि रता नारी । भर्त्तारमनुगच्छति ॥ तथा तत्वरतो योगी । संसारमनुवर्त्तते ॥ १ ॥ किंच यश्चारित्रस्थितो निरवद्याहारं करोति स केवलं धर्मसाधनदेहमात्रधारणाय न तु रूपकांतिपुष्टिहेतवे. 'निरवज्जाहाराणं । साहूणं निच्चमेव उववासो ॥' इति वचनान्निरवद्याहारकर्त्तारः साधवः सदैव निराहारा ज्ञेयाः. तत् श्रुत्वा हृष्टाभ्यां राज्ञीभ्यां तेनोक्तं सर्वं तथेति प्रतिपन्नं. अथ कालांतरे पुत्रप्रसवानंतरं यौवनोपेताय तस्मै च राज्यं दत्वा सूरराजा दीक्षां गृहीतवान्, जातश्च गीतार्थः, कालांतरे तौ द्वावपि भ्रातरौ केवलज्ञानमासाद्य मोक्षे गतौ. ॥ इति श्रीभावकुलके सोमराजर्षिकथा ॥

गाथा—सिरिचंडरुद्दगुरुणा । ताडिज्जंतोवि दंडघाएणं ॥ तक्कालं तस्सीसो । सुहलेसो केवली जाउ ॥ १७ ॥ व्याख्या—श्रीचंडरुद्राचार्यगुरुणा दंडघातेन ताड्यमानोऽपि तस्य शिष्यस्त-

त्कालं शुक्ललेश्यातः केवलज्ञानयुतो जातः ॥ १७ ॥ एकदा चंद्ररुद्राभिधानाचार्या बहुपरिवारपरिवृता विशालाया उपवने समवसृताः, तेषामाचार्याणां प्रकृतिरत्यंतक्रोधाकुला बभूव, तेन तस्य परिवारस्तस्मात्स्तोकं दूरे एवावसत. तस्य क्रोधोपेतप्रकृतितश्च लोकैस्तस्य चंडरुद्राचार्य इति नाम दत्तं. इतः कोऽपि नवपरिणीतो व्यवहारिपुत्रो निजसुहृद्गणोपेतो हास्यकुतूहलानि कुर्वन् क्रीडार्थं तत्रोद्याने समागतः, साधुवृंदं च तत्र दृष्ट्वा वंदित्वा च ते हास्यक्रीडां कर्त्तुं लग्नाः, मित्रेणैकेन मुनिभ्यः कथितं भो मुनयो नवपरिणीतो सुहृदयमस्माकं दीक्षाग्रहणाभिलाषेणात्र समागतोऽस्ति, मुनिभिस्तेषां तद्धास्यवचनं ज्ञात्वा न किंचिदपि जल्पितं, तदा पुनरपि तैर्मित्रैस्तथैवोक्तं तदा स्वाध्यायभंगभीरुभिर्मुनिभिरुक्तं भो महानुभावा एतद्विषये वयं न जानीमहे, इतो दूरस्थितायास्मद्गुरवे यूयं विज्ञप्तिं कुरुत ? ततस्ते हास्यं कुर्वाणास्तत्र उद्याय गुरुसमीपे गत्वा तथैव कथयामासुः, परं गुरुणा न जल्पितं, द्वित्रिवारकथनतः समुत्पन्नक्रोधो गुरुर्जगौ तर्हि लोचकृते रक्षामानयत ? तैश्चापल्यजभावेन रक्षानीता, तदा गुरुणापि नवपरिणीतं तं बलादपि गृहीत्वा तस्य शिरो द्रुतं द्रुतं केशोत्पाटनपूर्वकं लुंचितं विहितं. तद् दृष्ट्वा विषण्णास्ते सर्वेऽपि सुहृदो भयात्पलायिताः, अथ तेन नवप

रिणीतशिष्येण शुभभावताश्चिंतितं हास्येनापि मयैतच्चारित्रं यल्लब्धं तन्मे नूनं महद्भाग्यं सूचयति, अधुना तस्य निर्वाहे एव मया यत्नो विधेय इति विचिंत्य तेन गुरवे निवेदितं हे भगवन् मम संबंधिनोऽज्ञानिनः संति ततोऽत्रस्थानां भवतां ते पराभवं करिष्यंति, मां च गृहीत्वैव यास्यंति, तत इत आवयोर्विहार एव योग्यस्तदा गुरुणोक्तं वृद्धत्वेनाहं रात्रौ गमनाऽसमर्थोऽस्मि, त्वं मम संतापकारकः शिष्यः क्व मिलितः? शिष्येणोक्तं हे भगवन् यूयं मम स्कंधमारोहत? तदा गुरुस्तस्य स्कंधोपरिस्थः पथि चचाल. पथि चांधकारबाहुल्येन शिष्यस्य निम्नोच्चभूमौ गच्छतो यदा पदस्खलना भवति तदा क्रुद्धोऽसौ चंडरुद्राचार्यस्तस्य शिरसि दंडप्रहारान् करोति. तथापि क्षमावान् शिष्यो विनयेन चिंतयति यन्ममाभाग्यवशान्मत्सकाशान्मे गुरूणां दुःखं समुद्भवति. एवं पुनः पुनर्दंडप्रहारेण तस्य मस्तकतो रुधिरधारा निर्गता, तथाप्यनित्यभावनां भावयतस्तस्य क्षपकश्रेणिमारूढस्य केवलज्ञानं समुत्पन्नं. अथ ज्ञानबलेनासौ समविषमभूमिकां पश्यन् समभूमावेव चलन् गुरुभ्यो रोचयामास. तदा गुरुभिश्चिंतितमथ केवलं प्रहारत एवासौ सम्यक् चलति. इतस्तन्मस्तकान्निःसृतया रुधिरधारया गुरुशरीरमार्द्रीभूतं, तदा तेन चिंतितमहो नवदीक्षितस्याप्यस्य कीदृशी क्षमा वर्त्तते!

अहं मूढश्च वृद्धीभूतोऽपि क्रोधमलाविलमलिनांतःकरणोऽस्मि, अतो मांप्रति धिगस्तु. ईदृक्कोपं कुर्वतो मम का गतिर्भविष्यति ? इत्यादिशुभभावनां भावयतः क्षपकश्रेणिमारूढस्य तस्य चंद्ररुद्राचार्यस्यापि केवलज्ञानं समुत्पन्नं. क्रमेण तौ गुरुशिष्यौ बहुजीवान् प्रतिबोध्य मोक्षे गतौ ॥ इति श्रीभावकुलके चंद्ररुद्राचार्यशिष्यकथा ॥

गाथा—जं न हु बंधो भणिओ । जीवस्स वधेवि समिइगुत्ताणं ॥ भावो तह पमाणं । न पमाणं कायवावारो ॥ १८ ॥ व्याख्या—समितिगुप्तानां मुनीनां जीवस्य प्राणिनो वधेऽपि यत्कर्मबंधो न भणितस्तत्र भाव एव प्रमाणं न च कायव्यापारः प्रमाणभूतः ॥ १८ ॥

गाथा—भावुच्चिय परमहो । भावो धम्मस्स साहगो भणिओ ॥ सम्मत्तस्सवि बीअं । भावुच्चिय बिंति जगगुरुणो ॥ १९ ॥ व्याख्या—परमार्थेन भाव एव प्रधानो ज्ञेयः, पुनर्धर्मसाधकोऽपि भाव एव कथितः, सम्यक्त्वस्य बीजमपि भाव एव, इति जगद्गुरवः श्रीवीतरागाः कथयंति. ॥ १९ ॥

गाथा—किं बहुणा भणिएणं । तत्तं निसुणेह भो महासत्ता ॥ मुक्खसुहबीअभूओ । जीवाण सुहावहो भावो ॥ २० ॥ व्याख्या—बहुना कथनेन किं ? भो महासत्वा भव्यजीवास्तत्वं परमार्थं

शृणुत ? मोक्षसुखस्य बीजभूतो जीवानां स सुखावहः सुखदाता भाव एव ज्ञेयः ॥ २० ॥ अथ चतुर्धर्माणां फलमाह ॥

गाथा—इअदानसीलतवभाव—णाउ जो कुणइ सत्तिभत्तिपरो ॥ देविंदविंदमहिअं । अइरा सो लहइ सिद्धिसुहं ॥ २१ ॥ व्याख्या—यो भव्यप्राणी इत्थं पूर्वोक्तप्रकारेण दानशीलतपोभावनारूपं चतुर्धा धर्मं शक्त्या च भक्त्या तत्परः सन् करोति स जीवो देवेंद्रवृंदैः शक्रसमूहैर्महितं पूजितमेवंविधं सिद्धिसुहं मोक्षसुखमचिरात्स्तोककालमध्ये एव लभते. अस्यां गाथायां 'देवेंद्र' इति पदेन ग्रंथकर्तृभिर्महात्मभिः श्रीमद्देवेंद्रसूरिभिरनौद्धत्यसूचकं निजनाम सूचितं ॥ २१ ॥

गाथा—भावेण भुवणनाहं । भावेण हुंति देवलोगाउ ॥ भावेण सिद्धिसुक्खं । पावंति सव्वसंपत्तिं ॥ २२ ॥ व्याख्या—भावेन जीवः स्वर्गमर्त्यपातालात्मकत्रिभुवनस्याधिपत्यं प्राप्नोति, च पुनर्भावेन देवलोका अपि प्राणिनां सुलभा भवंति, पुनर्भावेनैव प्राणिनः सर्वसंपत्तियुतं जन्ममरणादिरहितं सिद्धिसुखं मोक्षसुखं प्राप्नुवंतीति. इति श्रीतपागच्छेशभट्टारकश्रीविजयरत्नसूरीश्वरराज्ये पंडितश्रीभोजकुशलगणिशिष्यपंडितश्रीवृद्धिकुशलगणिशिष्येण पंडितलाभकुशलगणिना विरचिता·

यां श्रीदानादिकुलकवृत्तौ भावनाकुलकं समाप्तं ॥ तत्समाप्तौ च समाप्तेयं श्रीदानादिकुलकवृत्तेर्द्वितीयावृत्तिः ॥ श्रीरस्तु ॥

॥ समाप्तोऽयं ग्रंथो गुरुश्रीमच्चारित्रविजयसुप्रसादात् ॥

लब्ध्वा यदीयचरणांबुजतारसारं । स्वादच्छटाधरितदिव्यसुधासमूहं ॥
संसारकाननतटे ह्यटताऽलिनेव । पीतो मया प्रवरबोधरसप्रवाहः ॥ १ ॥
वंदे मम गुरुं तं च । चारित्रविजयाह्वयं ॥ परोपकारिणां धुर्यं । चित्रं चारित्रमाश्रितं ॥ २ ॥ युग्मं.
चारित्रपूर्वा विजयाभिधाना । मुनीश्वराः सूरिवरस्य शिष्याः ।
आनंदपूर्वविजयाभिधस्य । जातास्तपागच्छसुनेतुरेते ॥ ३ ॥

---

आ ग्रंथ श्रीजामनगरनिवासी पंडित श्रावक हीरालाल हंसराजे स्वपरना श्रेयमाटे पोताना श्रीजैनभास्करोदय छापखानामां छापी प्रसिद्ध कर्यो छे.

॥ श्रीजिनाय नमः ॥

# ॥ श्रीविवेकमंजरीटीका ॥

( मूलकर्ता श्रीआसड—टीकाकार श्रीबालचंद्रसूरिः )

छपावी प्रसिद्ध करनार

पंडित श्रावक हीरालाल हंसराज ( जामनगरवाळा )

वीरसंवत—२४३९. विक्रमसंवत्—१९६९. सने—१९१२.

किं रु.-५-८-०

☞ जामनगर श्रीजैनभास्करोदयछापखानामां छाप्युं.

॥ श्रीजिनाय नमः ॥

## ॥ अथ श्रीविवेकमंजरीटीका प्रारभ्यते ॥

( मूलकर्ता श्रीआसड—टीकाकार श्रीबालचंद्रसूरिः )

छपावी प्रसिद्ध करनार—पंडित श्रावक हीरालाल हंसराज ( जामनगरवाळा )

श्रीनाभिनंदनजिनोर्वदनं मुदेऽस्तु । श्रीसारदासदनमद्भगवाद्धरम्यं ॥ स्कंधाचलोपरि कलश्रुतदोलयोर्य—त्पर्यंतयोरुपवनीयति कुंतलालिः ॥ १ ॥ देवाधिदैवतमतीवततानि शांतिः । श्रेयांसि वो दिशतु संहृतविश्वतांतिः ॥ यत्पादयोर्नखरुचः प्रणतेषु शांति—तोयछटात्वमरुणछवयः श्रयांति ॥ २ ॥ मर्यादयापि कलितः प्रियनिम्नगोऽसौ । कुग्राहवानतिगभीरपयोऽन्वितोऽपि ॥ हित्वा समुद्रमिति कंबुरगाद्यदंकं । स श्रीजिनो वृजिनमस्यतु शंखलक्ष्मा ॥ ३ ॥ निर्मेघमेघपथमेचकदेहधामा । वामासुतः स भवताद्भवतां विभूत्यै ॥ यन्मौलिसीम्नि ऋषिमंडलसप्तसप्तेः । सप्तापि सप्तय इवाहिफणाः स्फुरंति ॥ ४ ॥ ते वः शिवश्रियमपश्चिमतीर्थनाथ—पादारविंदनखचंद्रमसो दिशंतु ॥ कामं

न्नो प्रोषितोदरमृगा इव ये विभांति ॥ ५ ॥ नम्रासुरासुरेंद्र...
कलंकविकलाः सकलांकसिंहं । किरीटकोटि—शाणानिशातपदपद्मनखेंदुकांताः ॥ कांतानि वः शिवसुखानि दिशंतु शश्व—दन्येऽ-
पि तीर्थपतयोऽजितनाथमुख्याः ॥ ६ ॥ मोहांधकारधिक्कार—दीपिका मुक्तिवर्त्मनि ॥ विवेकमंज-
रीवृत्ति—रियं निर्दिश्यते मया ॥ ७ ॥ इह हि महितगुणमहिमकुमुदहिमकरस्य मकरकेतुबाणवि-
वस्तसमस्तजनपरित्राणवज्रवज्रपंजरस्य गुर्जरवसुंधरावदनमंडलीनगरमंडनश्रीमहावीरचैत्यप्रतिष्ठाकृतः
सुकृतचरितचमत्कृतदेवेंद्रस्य श्रीदेवेंद्रगुरुस्वहस्तस्वपदविनिवेशितस्य भुवनभद्रंकरस्य श्रीभद्रेश्वरसूरि-
गुरोः पट्टनभस्तलालंकरणकिरणमालिकेन प्रतिवादिदैत्यदमनशौरिणा श्रीमदभयदेवसूरिणा सद्गुरुदि-
ष्टसकलसिद्धांतसारः संसारवैराग्यरसप्रसरपुष्टचेताः शिष्टसमयसरसिजवनीविकाशनैकरविः श्रीमदासा-
डकविः कविसभाश्रृंगार इत्यपरनामधेयः श्रेयःप्रवृत्तिसुभगं भावुकभविकजनचक्रप्रमोदसंपादनबेक-
रुचिविवेकमंजरीप्रकरणमभिष्टदेवतानमस्कारपुरस्सरं प्रतिजानीते, यथा—

मूलम्—सिद्धिपुरसत्थवाहं । वीरं नमिऊण चरमजिणनाहं ॥ सवणसुहारससरियं । वुच्छामि
विवेगमंजरियं ॥ १ ॥ व्याख्या—अहं विवेकमंजरीं वक्ष्यामीति संबंधः, किं विशिष्टां ? सवणसुहा-

रससरितं श्रवणयोः कर्णयोर्विषयार्तिविषमविषसमुच्छलितातुच्छमूर्छाविच्छेदकत्वात् सुधारससरित् अमृतनदी तां, किं कृत्वा नमिऊण नत्वा, कं? चरमजिणनाहं चरमश्चासौ जिननाथश्च चरमजिननाथश्चतुर्विंशतितमस्तीर्थनाथस्तं, किंविशिष्टं? सिद्धिपुरसत्थवाहं सिद्धिरेव पुरं मुक्तिरेव नगरं तत्र सार्थो भव्यसत्वसंघातस्तं वाहयति प्रापयतीति सिद्धिपुरसार्थवाहस्तं, भगवतः सार्थवाहत्वे निरूपणमिदमतिविशदमागमानुगामि, यदाहुः श्रीभद्रबाहुस्वामिपादाः—पाविंति निव्वुइपुरं । जिणोवइठेण चेव मग्गेण ॥ अमवीइदेसियत्तं । एवं नेयं जिणिंदाणं ॥ १ ॥ सार्थवाहत्वे चास्य सामर्थ्यं नाम्नैव प्रकाशयति—किं नामानं? वीरं, ईर गतौ कंपने चेत्यनेन विपूर्वेण विशेषेण ईरयति कंपयति भावशत्रूनिति वीरः तं, भगवतः सत्स्वपि वर्धमानेतिप्रभृतिषु नामसु वीरमित्यतः साभिप्राया निरुक्तिरिति. अत्राभिधेयं विवेकमंजरीप्रकरणं, संबंधो वाच्यवाचकरूपः, वाच्या उपदेशाः, वाचको ग्रंथः, प्रयोजनं च कर्तुरिह महती कीर्तिः, श्रोतुश्च तत्वपरिज्ञानं, उभयोरपि परंपराफलं मुक्तिरिति. अथ प्रतिज्ञातावतारणाय परमार्थसंपत्तावौपयिकमेकं विवेकं व्यतिरेकतः प्रस्तुवन्नाह—

॥ मूलम् ॥—दुठ्ठकम्मवसगा । भमंति भीमे भवंमि निस्सीमे ॥ नठविवेगपईवा । जीवा

न मुणंति परमट्ठं ॥ २ ॥ व्याख्या—जीवाः प्राणिनो भ्रमंति भ्राम्यंति पादावर्तवदूर्ध्वाधः, कुलालचक्रवच्च तिर्यक् अनवस्थिता भवंति, क? भवंमि भवे चतुर्गतिरूपे संसारे, किंविशिष्टे? निस्सीमे न विद्यते सीमा पर्यंतो यस्यासावसीमा तस्मिन्, अत एव भीमे भयंकरे. भ्रमणे च तत्र तेषां विशेषणेन पारतंत्र्यमाह—दुठ्ठकम्मवसगा दुष्टानि निःकृपाणि च तान्यष्टौ कर्माणि ज्ञानावरणदर्शनावरणवेदनीयमोहनीयायुष्कनामगोत्रांतरायनामानि, तेषां वशगा आयत्ताः, न केवलं भ्राम्यंतीति तेषां शोच्यं, किंतु न मुणंति न जानंतीत्यपि. कं? परमट्ठं परमः पूज्यः शाश्वतानंदमयमुक्तिपुरीपथरूपोऽर्थः परमार्थः तं, तदज्ञाने च तेषां विशेषणेन कारणमाह—नठविवेगपईवा भ्रष्टो विवेको रागद्वेषमोहादिदोषेभ्यः पृथग्भावरूपो निरंतरांतरतिमिरभरसंहरणप्रवणः प्रदीपो येषां ते तथा. भ्रंसश्चेह विश्लेषः, स च द्विविधोऽसंपत्तौ प्रथमः, द्वितीयश्च कषायविषयविनिर्मितविध्वस्ततया विश्रस्ततत्वलक्षण इति. अधुना विवेकस्यैवान्वयेन माहात्म्यमुन्मीलयंस्तस्यैव हेतुमाह—

॥ मूलम् ॥—इह जीवाण विवेगो । परमं चक्खू अकारणो बंधू ॥ जइ कहमवि पाविज्जइ । असरिसकम्मक्खवसमा ॥ ३ ॥ व्याख्या—इहास्मिन् जगति जीवानां विवेकः परमं चक्षुः प्रकृष्टं

लोचनं, यदुक्तं—एकं हि चक्षुरमलं सहजो विवेकः । प्रोक्तं च पांडित्यमपि द्वितीयं ॥ एतद्द्वयं भुवि न यस्य स चास्ति ह्यंध–स्तस्याप्यमार्गचलने वत कोऽपराधः ॥१॥ तथा अकारणो बंधुः कारणनिरपेक्षः स्वजनः, बंधुर्हि कारणमंतरेण न कोऽपि सौजन्यमंगीकरोति, यदुक्तमस्माभिः सूक्तपंक्तौ—पद्माश्रय इति पद्मं । धिनोति कुमुदं न यदब्जबंधुरपि ॥ अब्जत्वे तुल्येऽपि । हितबुद्धिः कारणात्मैव ॥ १ ॥ एवंविधो विवेकः जइ कहमवि पाविज्जइ यदि कथमपि प्राप्यते तदानीं असरिसकम्मक्खवसमा असदृशोऽनन्यसामान्यः, कर्मणां मिथ्यात्वमोहनीयादीनामुदीर्णानां क्षयः, अनुदीर्णानां चोपशमः, क्षयेण युक्त उपशमः क्षयोपशमः, तस्मात्, विवेको हि श्रुतज्ञानभावनासमुद्भः, तच्च श्रुतज्ञानं क्षायोपशमिकभावनासंभवं, यदाहुः—भावे खओवसमिए । डुवालसंगंपि होइ सुयनाणं ॥ केवलियनाणलंभो । नन्नब्खए कसायाणं ॥ १ ॥ इति. इह निसर्गमधुरमपि वस्तु कियतापि विभूषणेन विना न चमत्करोतीत्यतस्तस्य विभूषणमाह—

॥ मूलम् ॥—तस्स विब्भूसणमेगं । मणसुद्धी मंजरीव रुक्खस्स ॥ तीइ समिद्धो एसो । सुहफलरिद्धिं पयच्छेइ ॥ ४ ॥ व्याख्या—तस्य विवेकस्य एकमसाधारणं विभूषणमलंकरणं, का? म-

णसुद्धी मनसः शुद्धिर्मनःशुद्धिः कृष्णनीलकापोतलेश्यात्रितयकलंकपंकरहितात्मसमुद्भमतिशयतश्चेतसो नैर्मल्यमिति भावः, केव? मंजरीव पुष्पगुच्छ इव, कस्य? रुक्खस्स वृक्षस्य, न केवलमियं मनःशुद्धिर्विवेकस्य वृक्षस्येव मंजरी विभूषणमात्रं, किंतु तीइ समिद्धो एसो तया मनःशुद्ध्या एष विवेकः समृद्धः सन् सुहफलरिद्धिं सुखानि राज्यस्वर्गापवर्गसंभवानि, तान्येव फलानि तेषामृद्धिः संपत् सुखफलर्द्धिस्तां पयच्छइ प्रयच्छति. वृक्षस्तु मंजर्या समृद्धः सुफलर्द्धिं परिपाकपेशलफलस्फातिं प्रयच्छतीति गतं. अथ सर्वोपदेशसंग्रहकारिकामाह—

॥ मूलम् ॥—तम्हा खलु आयहियं । चिंततेणं विवेगिणा एसा ॥ कायव्वा मणसोहि । न होइ जह दुल्लहा बोही ॥ ५ ॥ व्याख्या—तस्मात्पूर्वोपदिष्टात् हेतोः खलु निश्चितं आयहियं आत्महितं स्वपथ्यं, यद्वा आयो ज्ञानादीनां लाभस्तस्मै हितं आयहितं चिंततेणं चिंतयता विमृशता विवेकिना विवेको रागद्वेषादिदोषेभ्यः पृथग्भावरूपो गुणो विद्यते यस्य स विवेकी तेन, एसा एषा कायव्वा मणसोही मनःशुद्धिः कार्या, तपःश्रुतयमप्रायैः किमन्यैः कायदंभैरिति भावः, यथा किं? न होइ जह दुल्लहा बोही यथा बोधिर्जिनधर्मावाप्तिर्न दुर्लभा भवतीति. अथ मनःशुद्धि-

कारणान्याह—

॥ मूलम् ॥—चउसरणे पडिवत्ति, सम्मं अणुमोअणा गुणाण तहा ॥ डुक्कडगरिहा तह भाव-णाय मणसुद्धिबीयाइं ॥६॥ व्याख्या—चतुर्णामर्हत्सिद्धसाधुकेवलिप्रज्ञप्तधर्माणां शरणं चतुःशरणं, तस्य प्रतिपत्तिः स्वीकारः, प्राकृतत्वात् सप्तमी षष्ठ्यर्थे, सम्मं अणुमोअणा गुणाण तहा, तथा सम्यक् मनोवाक्कायकर्मभिरिति भावः, अनुमोदना अनुस्मरणं, केषां ? गुणानां सत्यशौचतपस्त्यागाकिंचन्यब्रह्मचर्यादीनां, तथा डुक्कडगरिहा दुःकृतानां पापानां गर्हा निंदा सा, तथा भावणा य, भावना द्वादशधा सा, चः समुच्चये, एतानि चत्वार्यपि मणसुद्धिबीयाइं मनःशुद्धेर्बीजानि कारणानीति भावः इति. चत्वार्येतानि प्रकरणेऽत्र द्वाराणि, तत्रादौ चतुःशरणप्रतिपत्तिद्वारं गाथाचतुष्केणाह—

॥ मूलम् ॥—निठवियअठकम्मा । देसियडुल्लक्खमुक्खपुरमग्गा ॥ तेल्लुक्कपरमबंधू । अरहंता मंगलं पढमं ॥ ७ ॥ सिद्धा य मंगलं सव्वे । साहू मंगलमुत्तमं ॥ धम्मो केवलिपन्नत्तो । सव्वजीवाण मंगलं ॥ ८ ॥ अरहंता लोगुत्तमा । सिद्धा लोगुत्तमा तहा ॥ साहू लोगुत्तमा एसो । धम्मो लोगाणमुत्तमो ॥ ९ ॥ अरहंता मे सरणं । सरणं सिद्धा य साहुणो सरणं ॥ धम्मो करुणारम्मो

। सरणं जिणनाहनिद्दिठो ॥ १० ॥ व्याख्या—सुगमाः, अथेह भरतभुवो वर्तमानातीतानागतांश्च जिनान् गाथाचतुष्टयेन शरणत्वेन प्रतिपद्यते यथा—सिरिरिसहअजियसंभव–अभिनंदणसुमइपउमप्पहनाहा ॥ जिणवरसुपासचंद–प्पहसुविहिसीयलसिज्जंसा ॥ १२ ॥ वासुपुज्जविमलसामिअ–णंतपहुधम्मसंतिकुंथुजिणा ॥ अरमल्लिसुव्वयनमी–नेमिपासो अ वद्धमाणो य ॥ १३ ॥ इय चउवीसं तिहुयण–नमंसिया वद्धमाणतित्थयरा ॥ केवलनाणदिणेसा । हरंतु महमोहतिमिरोहं ॥१३॥ केवलनाणिपमुहा । अईयतित्थंकरा य चउवीसं ॥ तह पउमनाहपमुहा । मम सरणमणागया अरिहा ॥ १४ ॥ व्याख्या—इमे अपि सुगमे. अथ तीर्थानि शाश्वतान्यशाश्वतान्यपि गाथाद्वयेन वंदते—सिरिउसभवद्धमाण य । चंदाणणवारिसेणनामाणो ॥ सासयजिणालयेसु । वंदेहं सासए जिणंदे ॥ १४ ॥ अथ गाथायुगेन विहरमाणानर्हतः स्तौति—पुव्वविदेहे सीमंधर–सामी मम सिवं दिसउ ॥ १६ ॥ मुक्खपहं पयमंतो । बाहुजिणंदो तहा सुबाहु य ॥ अन्नेवि अरहंता । हरंतु दुरिआइं विहरंता ॥ १७ ॥ इमे अपि सुगमे. अथ तीर्थानि शाश्वतान्यशाश्वतान्यपि गाथाद्वयेन वंदते—नंदीसरअठावए । सत्तुंजयउज्जयंतस्स य ॥ पमुहाइं अहं वंदे । तित्थाइं परमभत्तीए ॥

॥ १७ ॥ सासयजिणालयाइं । असासयाइंपि जाइं सवाइं ॥ उड्ढमहतिरियलोए । तेसिं पणमा- मि ज्ञावेणं ॥ १ए ॥ स्पष्टे. अथ गाथायुगलेन साधूनुपश्लोकयति—अड्ढाइज्जा दीवा । पनरस ते- सु कम्मजूमीउ ॥ जे केवि तब साहू । पंचमहव्वयधरा धीरा ॥२०॥ अठारससीलंग-सहस्सधुराध- रणलङमाहप्पा ॥ कंदप्पदप्पदलणा । तेसिं चलणा सुहं दिंतु ॥ २१ ॥ व्याख्या—अड्ढाइज्जा दी- वा द्विवचनस्य बहुवचनमिति प्राकृतलक्षणात्, अर्धं तृतीयः पुष्करवरनामा द्विपो ययोस्तावर्धतृती- यौ द्वीपौ धातकीखंडजंबूनामानौ, पन्नरस तेसु कम्मजूमीउ कर्मणां शुभानामशुभानामपि जूमयो जन्मस्थानानि कर्मजूमयः, तत्र जनितानि. किमुच्यते—अत्रत्योपार्जितान्यपि कर्माणि तासूत्पद्य जीवैर्भोगभूमिगतैरुपभुज्यंत इति. क संति ताः? तास्तु तयोरर्धतृतीययोर्द्वीपयोः, कति? पन्नारस पंचपंचज्ञरतैरवतमहाविदेहसंज्ञिताश्च ताः. पंचमहव्वयधरा पंचमहाव्रतधराः, अत एव धीराः धिया बुध्या राजंत इति धीराः, पुनश्च किंरूपाः? अठारससीलंगसहस्सधुराधरणलङमाहप्पा शीलानि स- च्चरितानि तेषामंगान्यवयवाः शीलांगानि, तेषां सहस्राः शीलांगसहस्राः, अष्टादश ते च शीलांग- सहस्राश्च अष्टादशशीलांगसहस्राः, तथा च वाचकः—धर्माद्भूम्यादींद्रिय—संज्ञाभ्यः करणतश्च यो-

गाच ॥ शीलांगसहस्राणा—मष्टादशकस्य निष्पत्तिः ॥ १ ॥ इति. तेषां धूर्जरोऽष्टादशशीलांगसहस्रधुरा, तस्या धारणं यावज्जीवमुद्वहनं, यदाहुः—बुब्भंति नाम भारा । तच्चिय बुब्भंति वीसमंतेहिं ॥ सीलभरो वोढव्वो । जावज्जीवं अवीसामो ॥ १ ॥ तेन लब्धं माहात्म्यं महिमा यैस्ते तथा, अत एव कंदप्पदप्पदलणा कंदर्पस्य सुरासुरविजयिनो मन्मथस्य दर्पं गर्वं दलयंति चूर्णयंतीति कंदर्पदर्पदलनाः, तेसिं चलणा तेषामेवंविधानां गुणरत्नसिंधूनां साधूनां चलनाः पादाः सुहं दिंतु सुखं समाधानं ददतु इति. अथासन्नोपकारिणः श्रीवर्धमानविभोः प्रथमगणधरमुपश्लोकयन्नाह—

॥ मूलम् ॥—सिद्धंतसुत्तहारो । पयडियवरचरणववहारो ॥ भवियाण भवभयहरो । सिरिगोयमगणहरो जयइ ॥ २२ ॥ व्याख्या—श्रिया ज्ञानलक्ष्म्या उपलक्षितो गौतमो गौतमगोत्रसंभवश्चासाविंद्रभूतिनामा श्रीगौतमगणधरः जयति सर्वोत्कर्षेण वर्तते. किंविशिष्टः? सिद्धंतसूत्तहारो सिद्धांतं द्वादशांगं गणिपिटकं तस्य सूत्रं त्रिपदि तां धारयति विस्तारयतीति सिद्धांतसूत्रधारः, यदुक्तमस्माभिर्गणधरावल्यां—श्रीमाननेकपघटैकपतिर्नवीनः । पायादपायगहनाज्जगदिंद्रभूतिः ॥ विस्तार्थ मंजुलपदस्त्रिपदीमदीन—जातिर्न जातु बत यः शिथिलीचकार ॥ १ ॥ पुनः किंविशिष्टः? पयडि-

यवरचरणकरणववहारो प्रकटितः प्रकाशितो वरः शुद्धश्चरणकरणयोर्व्यवहारः क्रिया येन स तथा. चरणकरणं च प्रत्येकं सप्ततिधा यथा—वय ५ समणधम्म १० संजम १७ । वेयावच्चं १० बंभगुत्तीओ ९ ॥ नाणाइतियं ३ तव १२ कोह—निग्गह ४ इह चरणमेयं ॥ १ ॥ तत्र व्रतानि अहिंसानृतास्तेयब्रह्मचर्यापरिग्रहनामानि पंच. श्रमणधर्मस्तु क्षांत्यार्जवमुक्तितपःसंयमसत्यशौचाकिंचन्यब्रह्मचर्यादिभेदैर्दशधा. अपरं च, वसहि कहं निसिज्जिं—दियकुड्डंतरपुव्वकीलियपणीए ॥ अइमायाहारविभूसणाई । नवबंभचेरगुत्तीओ ॥१॥ ज्ञानादित्रिकं तु विदितं. तपस्तु बाह्याभ्यंतरषट्षड्भेदैर्द्वादशधा यथा—अणसणमूणोयरिया । वित्तिसंखेवणं रसच्चाओ ॥ कायकिलेसो संलीणया य बज्झो तवो होइ ॥ १ ॥ पायच्छित्तं विणओ । वेयावच्चं तहेव सज्झाओ ॥ झाणं उस्सग्गोवि य । अब्भिंतरओ तवो होइ ॥ २ ॥ अपि च क्रोधादीनां चतुर्णां कषायाणां निग्रहः. क्रोधनिग्रहोऽत्र शाकपार्थिवादिदर्शनान्मध्यमपदलोपी समास इति. संपिंडितं चरणं सप्ततिधा—पिंडविसोही ४ समिई ५ । भावण १२ पडिमा य १२ इंदियनिरोहो ५ ॥ पडिलेहणगुत्तीओ ३ । अभिग्गहा ४ चेव करणं तु ॥ १ ॥ तत्र पिंडादीनां चतुर्णां पिंडवस्त्रशय्यापात्राणां विशिष्टा शुद्धिः पिंडविशुद्धिः, यदाहुः—

पिंडं वत्थं च सेज्जं च । चउत्थं पायमेव य ॥ अकप्पियं न गिण्हिज्जा । पडिगाहिज्ज कप्पियं ॥१॥ अपिच—ईर्याभाषैषणादाननिक्षेपोत्सर्गसंज्ञिताः पंच समितयः, भावनाश्चानित्यतादयो द्वादश ज्ञेयाः. प्रतिमाश्च भिक्षूणां द्वादश, तत्र स्वनामसदृशार्था प्रथमा एकमासिकी, द्वितीया द्विमासिकी, तृतीया त्रिमासिकी, चतुर्थी चातुर्मासिकी, पंचमी पंचमासिकी, षष्ठी षाण्मासिकी, सप्तमी सप्तमासिकी, अष्टमी नवमी दशमी च सप्ताहोरात्रिकी, एकादशी तु अहोरात्रिकी, द्वादशी चैकरात्रिकी. यदाहुः—मासाई सत्त ता । पढमा दुतईय सत्तराइंदी ॥ अहराई इगराई । भिक्खूपडिमाण बारसगं ॥ १ ॥ इंद्रियनिरोधस्तु पंचविधः स्पष्टः, प्रतिलेखनाश्च पंचविंशतिः, वस्त्रस्य वपुषः पात्रस्य च, तद्यथा—इगदिठी छप्पुरिमा । नव अक्खोडपक्खोड वत्थ पणवीसा ॥ भुयसिरमुहहियए तिय । तिय चउ पुठि छप्पयपणवीसा ॥ १ ॥ बारस बाहिं ठाणा । बारस ठाणाय हुंति मज्झंमि ॥ पत्तपडिलेहणाए । पणवीसयमो करप्फंसो ॥ २ ॥ तिस्रो गुप्तयस्तु विश्रुताः. अपि चाभिग्रहा द्रव्यक्षेत्रकालभावभेदैश्चत्वार इत्येकत्र संमीलने करणमपि सप्ततिधा. पुनः किंविशिष्टो भगवान् गौतमः? भवभयहरो भवात्संसाराद्भयं भवभयं तत् हरत्यपनयतीति भवभयहरः, केषां? भवियाणं भविकानां. अथ

बाहुल्येन सर्वानपि गणभृतः स्तौति—

॥ मूलम् ॥—सिरिपुंमरीयगोयम—पमुहा गणहारिणो महामुणिणो ॥ तिहुयणपणमियचरणा । सरणं मम मोहनिठवणा ॥ २३ ॥ व्याख्या—स्पष्टा, अथेह नरते द्वादश चक्रिणोऽनवन्, तेषु च त्रयः शांतिकुंथुअरनाथास्तीर्थनाथा अपि बभूवुः, ते तु जिनाधिनाथवीथीषु शरणीकृतपूर्वाः, द्वौ च सुनूमब्रह्मदत्तनामानौ डुर्गतिगतत्वादयोग्यौ, शेषांश्चक्रिराजर्षीन् शरणीकुर्वन्नाह—

॥ मूलम् ॥—भरहो सणंकुमारो । सगरो मघवं जऊ य हरिसेणो ॥ तह सुपनमो य सत्तवि । चक्कवईमुणिवई सरणं ॥ २४ ॥ इयमपि सुगमैव. अथ बलनद्रमुनीन् शरणीकुर्वन्नाह—

॥ मूलम् ॥—तिव्वतवखग्गखंमिय—नवपायववियम्नपयम्मियपहावा ॥ सरणं नव बलदेवा । वरगुणरयणायरा मम ॥ २५ ॥ व्याख्या—नव च ते बलदेवा नवबलदेवा अचलविजयभद्रसुप्रनसुदर्शनआनंदपद्मरामनामानो बलदेवराजर्षयो मम मम शरणं भवंत्विति शेषः. किंविशिष्टाः? वरगुणरयणायरा वराणि निर्दूषणानि च तानि तपोदमजपयमसंयमस्वाध्यायध्यानरूपगुणा एव रत्नानि तेषामाकराः प्रनवनूमयः, पुनः किंविशिष्टाः? तिव्वतवत्ति तीव्रं तीक्ष्णं च तत्तपश्च तीव्रतपस्त-

देव खड्गस्तरवारिस्तेन खंडितश्चासौ भवपादपः संसारतरुश्च तथा तेन विकटं विपुलं प्रकटितः प्रकाशितः प्रभावो महिमा यैः ॥ इत्याचार्यश्रीबालचंद्रविरचितायां विवेकमंजरीवृत्तौ चतुःशरणप्रतिपत्तिद्वारविवरणं नाम प्रथमः परिमलः समाप्तः ॥ श्रीरस्तु ॥ शेशाहिमूलकलितः सुरशैलशाखी । ताराप्रसूनकलितोरुदिगंतशाखः ॥ सूर्येंद्रमंमलफलः स्फुटमेष याव-त्तावज्जयं कलयतादिह जैत्रसिंहः ॥१॥

अथ गुणानुमोदनाद्वारमाह—

॥ मूलम् ॥—भरहाईण मुणीणं । गुणगोरववन्नणेण पावमलं ॥ पक्खालेमि य सव्वं । पवित्ततित्थोदयेणं च ॥ २६ ॥ व्याख्या—न केवलमर्हदादीन् चतुःशरणं प्रपद्ये, किंतु पक्खालेमि य प्रक्षालयाम्यपनयामि च, किं तत्? पापं भृशमतिशयेन, नैहिकभवमेवेत्याह—सव्वं सर्वपूर्वभवसंततिवितमपीति भावः, केन? गुणगोरववन्नणेण गुणानां गौरवं महिमा गुणगौरवं, तस्य वर्णनमुत्कीर्तनं तेन, केषां मुणीणं मुनीनां, किंविशिष्टानां? भरहाईण भरतः श्रीयुगादिजिनसूनुरादौ येषां ते तथा तेषां, केन? पवित्ततित्थोदयेणं च पवित्रं पंकपटलपिच्छलतारहितं च तत् तीर्थं नद्यादेरवतारस्थानं च पवित्रतीर्थं, तस्य उदकं जलं तेन, कोऽत्र भावः? यथा पवित्रतीर्थोदकेन पापम-

लो निंद्यमलः सर्वोऽपि वस्त्रदेहादेः प्रक्षाल्यते केनचित् तथाहं भरतादिमुनिगणगौरववर्णनेन पापमधर्म्यं कर्म अलमतिशयेनापनयामीति. अधुना भरतगुणान् गाथायुगेनाह—

॥ मूलम् ॥—विहियं वेयावच्चं । विहिणा साहूण सुद्धसीलाण ॥ सिरिरिसहसुओ भरहो । जाओ भरहाहिवो तेणं ॥ २७ ॥ व्याख्या—श्रीऋषभसुतो भरतो भरताधिपः षट्खंडभरतक्षेत्रभूमंडलाखंडलस्तेन जातः संवृत्तः, यत्तदोर्नित्यसंबंधत्वात् येन साधूनां यतीनां शुद्धशीलानां अजिह्मब्रह्मचारिणां वैयावृत्त्यं भक्तपानीयादिसंपादनरूपं विहितं निर्मितं, केन? विहिणा विधिना पिंडेषणाध्ययनप्रणीताचारेण, यदुक्तं—दाणेणं हुंति उत्तमा भोगा इति.

॥ मूलम् ॥—सो पढमचक्कवट्टी । भरहो भवियाण कुणओ कल्लाणं ॥ आयरिसघरे केवललद्धीए जो सयं वरिओ ॥ २८ ॥ व्याख्या—सोऽनन्यसामान्यगुणगरिम्णो जगद्विख्यातः प्रथमचक्रवर्ती भरतो भविकानां कल्याणं शिवं करोतु, यः स्वयमात्मना रुच्येति भावः, वरिओ वृतोंगीकृतः, कया? केवललद्धीए केवलज्ञानलक्ष्म्या, किमुपशमस्थाने कापीत्याह—आयरिसघरे आदर्शगृहे, तच्च मोहस्यैकं निकेतनं, यतोऽत्र विनश्वराशुचिकृतघ्नविभिन्नस्वरूपेऽपि वपुषि वैपरीत्येनाभिमानोऽ-

कमुन्नते,ज्जं अत एव स्वयं वृत्तोऽसौ, न तु तेन सा वृता, एतावता किमुक्तं? पूर्वस्मिन् भवे शुद्धशीलसाधुवैयावृत्त्यं यथाविधि वितन्वतानेन तत्पुण्यमगण्यमुपार्जितं येन त्रिलोकीतिलकैरभिगम्ययापि केवललक्ष्म्या स स्वयमभिसृत इति. अथात्मभाषाविभूषणाय बाहुबलिगुणवलयं कलयन्नाह—

॥ मूलम् ॥—बालाण तवस्सीण य । थविरगिलाणाण जेण साहूणं ॥ वीसामणयं काहि । बाहुबली तेण बाहुबली ॥ ३० ॥ व्याख्या—बाहुबलिर्भरतेश्वरलघुभ्राता बाहुबली बाह्वोर्बलमतीवश्रेष्टं यस्येति स बाहुबली तेन हेतुना येन वीसामणयं काही विश्रामणामकार्षीत् पूर्वजन्मनीति शेषः, केषां? साहूणं साधूनां, किंविशिष्टानां? बालाण बालानां शैक्षकाणां, न केवलमेषां तवस्सीण य, तपो विद्यते येषां ते तपस्विनस्तेषां च, न केवलममीषां थविरगिलाणाण स्थविरा वयोवृद्धाः, ग्लानाः स्वाध्यायाध्ययनानुष्ठानखिन्ना रोगपीडिता वा ते तथा तेषामिति. अथ भवभ्रमणोपजातखेदविच्छेदनिबंधनं गजसुकुमालगुणच्छायाशालमभिश्रयन्नाह—

॥ मूलम् ॥—जस्स जलणेण सीसं । झाणेण य उत्तमेण नीसेसं ॥ पज्जलियं समकालं । गयसुकुमालं च तं नमिमो ॥ ३१ ॥ व्याख्या—संक्षेपार्थोऽस्या व्यक्त एव, व्यासार्थस्तु कथान-

काद्वसेयस्तच्चैतत्—पुरी द्वारवतीत्यस्ति । पश्चिमांभोधिरोधसि ॥ हेमहर्म्या हरिद्वयो । हरिर्हेतोर्व्य-
धत्त यां ॥ १ ॥ दशारो दशमस्तत्र । वसूदेवो वसूपमः ॥ आसीत् कुलशिरोरत्नं । पिता पितांबरस्य
यः ॥ २ ॥ देवकी सेवकीभूत—भूर्भुवःस्वर्वधूजना ॥ तत्प्रियाजनि यत्कुक्षा—वुवास गरुडध्वजः
॥ ३ ॥ सान्यदा यदुरत्नस्य । नेमिनाथजिनेशितुः ॥ नत्वा पादौ समायांती । याम्ययानमधिष्टिता
॥ ४ ॥ निजसौधतले कांचित् । पुत्रं पुत्रवतीं निजं ॥ चुंबंतीं लपयंतीं चो—ल्लापयंतीमलोकत ॥
॥ ५ ॥ युग्मं ॥ ततोऽसौ चिंतयामास । बाष्पाविलविलोचना ॥ धन्येयं या स्वयं स्वीय—मेवं
लालयते सुतं ॥ ६ ॥ धिक्पुनः पुण्यविकलां । किल मां कोकिलामिव ॥ यदपत्यान्यपाल्यंत । य-
दन्यैश्चिरजीविभिः ॥ ७ ॥ युग्मं ॥ मत्वा मातुरभिप्रायं । श्रीकृष्णो नैगमेषिणं ॥ देवमाराधयामा-
स । तुष्टः सोऽप्येवमब्रवीत् ॥ ८ ॥ भावी तवानुजः किंतु । यौवने प्रव्रजिष्यति ॥ तस्मिन् गते त-
तः कृष्णः । प्रातर्मातुर्न्यवेदयत् ॥ ९ ॥ तदा च देवकीकुक्षौ । देवः कोऽपि दिवश्च्युतः ॥ अवती-
र्णो गजस्वप्न—सूचिताद्भुतवैभवः ॥ १० ॥ बभूव समये विश्व—रूपरूपस्ततः सुतः ॥ नाम्ना ग-
जसुकुमालो । देवक्या लालितः स्वयं ॥ ११ ॥ उपयेमे नृपसुता—मेष नाम्ना प्रभावतीं ॥ सो-

माभिधां द्वितीयां च । सोमशर्मद्विजांगजां ॥ १२ ॥ उद्यौवनः समं ताभ्यां । प्रियाभ्यामन्यदा ग-
जः ॥ श्रीनेमिव्याख्यया जात—वैराग्यो व्रतमग्रहीत् ॥ १३ ॥ पृष्ट्वा प्रभुं स्मशाने स । मतिमान्
प्रतिमां व्यधात् ॥ दृष्टः श्वशुरकेणात्र । ब्रह्मणा सोमशर्मणा ॥ १४ ॥ सैष प्रव्रज्य मत्पुत्रीं । व्यडं-
बयदिति क्रुधा ॥ तन्मूर्ध्नि विदधे पालीं । मृदाऽमृडुमना द्विजः ॥ १५ ॥ चितांगारश्चितां चक्रे ।
तामसौ तामसौजसा ॥ गजस्तया ज्वलंत्यासी—दौषध्येव नगो निशि ॥ १६ ॥ उत्तमांगे ज्वल-
त्युच्चै—र्गजो गजनिमीलिकां ॥ चक्रे शरीरं मन्वानः । सर्वथा पृथगात्मनः ॥ १७ ॥ वह्निर्यथा य-
था तस्या—ज्वलन्मूर्ध्नि तथा तथा ॥ पातालयंत्रवच्चेतः । शमामृतमजीजनत् ॥ १८ ॥ अन्यत्र का-
रणं कार्य—मन्यत्रास्य तदाभवत् ॥ जज्वालास्य शिरस्यग्निः । कर्मादह्यत चेतसि ॥ १९ ॥ अन्य-
च्च कारणं पश्चात् । कार्यं चित्रमभूत्पुरः ॥ तमो विलीनमग्रेऽस्य । पश्चाद् ज्ञानेंदुरुद्ययौ ॥ २० ॥
उदूढज्ञानश्रीप्रणयरसनिर्वासितरजो । गजात्मा शैलेशीविधिमयवधूप्रोषितवपुः ॥ कपाले दीप्राग्नौ
त्रटदिति विभिन्ने किल तदा । मुदा ब्रह्मद्वारादविशदपुनर्जन्मभवनं ॥ २१ ॥ इति श्रीगजसुकुमा-
लकथा ॥ अथ दौर्गत्यदलनदृढसारढंढणकुमारगुणरत्नभारमुदाहरन्नाह—

॥ मूलम् ॥—घोरंतरायकम्माणु—सएणं सोवि ढंढणकुमारो ॥ उम्मूलइ उज्जुत्तो । सवाइं चेव कम्माइं ॥ ३२ ॥ व्याख्या—अपीति संभावनायां, यस्य यदुवंशनभोरत्नं नवमोऽर्धचक्री पिता. द्वाविंशतितमश्च जिनेश्वरो गुरुः, अतः प्रसिद्धो ढंढणकुमारः उज्जुत्तो उद्युक्तोंगीकृताभियोगभंगीकः, सवाइं चेव सर्वाण्येव कर्माणि ज्ञानावरणादीनि उम्मूलइ उन्मूलयति समूलकाषंकषति, गुंफनकाले कविमनसि वर्तमानत्वादस्येति वर्तमानत्वं. केन हेतुना? घोरंतरायकम्माणुसएण घोरे भयंकरे अंतरायकर्मणि योऽनुशयो दृढमत्सरः स तथा तेन. यदुक्तमस्माभिः—एकापराधे यद्गोत्रं । निर्मूलं कुरुते जयी ॥ निहंति यत्तमोजातं । तमसार्कः स्वलीकृतः ॥ १ ॥ इति संक्षेपार्थो, व्यासार्थस्तु कथानकादवसेयस्तच्चैतत्—द्वारिकेत्यस्ति नगरी । गरीयःश्रीनिकेतनं ॥ स्फारहारायितांभोधिं । निकषा नाभिवद्भुवः ॥ १ ॥ तत्रार्धचक्री नवमः । कृष्णनामाभवन्नृपः ॥ यत्प्रतापप्रदीपस्य । कज्जलं मंडलं दिवः ॥ २ ॥ द्वात्रिंशच्च सहस्राणि । तस्यासन् शासितुः प्रियाः ॥ तास्वभूढंढणानाम—राज्ञ्येकानेकसद्गुणा ॥ ३ ॥ तत्कुक्षिशुक्तिकारत्नं । तस्य त्रासविवर्जितः ॥ पुत्रो बभूव ढंढण—कुमार इति विश्रुतः ॥ ४ ॥ उद्यौवनः क्रमेणायं । करिणीभिरिव द्विपः ॥ कन्याभिरवनी·

शानां । हरिणा परिणायितः ॥ ५ ॥ श्रीनेमिरेकदा विश्वं । बोधयन् रैवताचले ॥ समेत्य समवा-
सार्षी-दृषींद्रपरिवारितः ॥ ६ ॥ श्रुत्वेति द्वारिकानाथः । सनाथः संमदश्रिया ॥ सांतःपुरपरिवारो ।
विभुं वंदितुमाययौ ॥ ७ ॥ यथाविधि नमस्कृत्य । निविष्टेषु नृपादिषु ॥ स्वामी मुक्तिपुरीमार्ग—
दर्शिनीं देशनां व्यधात् ॥ ८ ॥ देशनांते गतः पुर्या-मापृच्छ्य पितरावथ ॥ कुमारो ढंढणः स्वा-
मि-सविधे व्रतमग्रहीत ॥ ९ ॥ तप्यमानस्तपस्तीव्रं । सहमानः परीषहान् ॥ स्पष्टं सोऽध्यैष्ट सिद्धांतं
। स्थविरेभ्यः स्थिराशयः ॥ १० ॥ अन्यदा कर्म तस्योच्चै—रांतरायकमुद्ययौ ॥ हंतायं लाभहंता-
भू-द्येन स्वस्य परस्य च ॥ ११ ॥ साधवोऽथ जगन्नाथ-मपृच्छन् किं न ढंढणः ॥ कुत्रापि लभते
किंचि-न्नगर्यामृद्धिभाज्यपि ॥ १२ ॥ अथावदद्विभुर्ग्रामे । धान्यपूराभिधे पुरा ॥ विप्रो मगधदेशे-
ऽभू-दयं नाम्ना परासरः ॥ १३ ॥ ग्रामे राजनियुक्तोऽसौ । ग्राम्यैः क्षेत्राणि वापयन् ॥ सीतामाकर्ष-
यद्भक्ते—ऽभ्युपेतेऽपि पृथक्पृथक् ॥ १४ ॥ बुभुक्षितानपि नित्यं । तथा तृष्णातुरानपि ॥ वृषान्
दासांश्च स क्रूरो । न मुमोच कथंचन ॥ १५ ॥ इत्यंतरायमर्जित्वा । कर्म भ्रांत्वा चिरं भवे ॥ ढं-
ढणो विष्णुपुत्रोऽभूत् । पूर्वकर्मोदितं च तत् ॥ १६ ॥ समाकर्ण्येति संविग्नः । कृष्णसूनुः पुरः प्रभोः

॥ अभ्यग्रहीदिदं यन्नो । भोक्ष्येऽहं परलब्धिभिः ॥ १७ ॥ परलब्धं न तद् भुंक्ते । लभते न स्वयं क्वचित् ॥ कालक्षेपमसाविभ्रं । चक्रे दुःकरकारकः ॥ १८ ॥ वासुदेवोऽन्यदापृच्छ—न्नेमिनाथं सभा-स्थितं ॥ मुनीनामंतरे ह्येषां । को नु दुःकरकारकः ॥ १९ ॥ स्वाम्याह दुष्करकराः । सर्वेऽमी ढंढ-णस्त्वति ॥ इयंतं योऽत्यगात्कालं । सोढा लाभपरीषहं ॥ २० ॥ नत्वाथ स्वामिनं कृष्णः । पुरीं द्वा-रवतीं विशन् ॥ मुनिं ढंढणमालोक्या—नमदुत्तीर्य कुंजरात् ॥ २१ ॥ विष्णुनापि ववंदेऽसा—वि-ति केनापि मोदकैः ॥ ढंढणो गृहमायातः । श्रेष्ठिना प्रत्यलाभ्यत ॥ २२ ॥ ढंढणोऽन्येत्य सर्वज्ञं । नत्वा चैवं व्यजिज्ञपत् ॥ किं मेंतरायकं कर्म । क्षीणं भिक्षां यदाप्नुवं ॥ २३ ॥ जिनो जगाद नो कर्म । क्षीणं लब्धिश्च नैव ते ॥ वंदमानं हरिं दृष्ट्वा । यत्त्वां स प्रत्यलाभयत् ॥ २४ ॥ रागादिरहि-तः सोऽथ । परलब्धिरसाविति ॥ परिष्ठापयितुं भिक्षां । प्रारेभे स्थंडिलावनौ ॥ २५ ॥ मोदकानिष्ट-कादाह—चूर्णेन सह चूर्णयन् ॥ सशब्दमथमात्मारि—गात्रभंगमिवातनोत् ॥ २६ ॥ कराभ्यां मो-दकानेष । कणशः कणशो बहिः ॥ कर्माणि चूर्णयामास । शुक्लध्यानेन चांतरा ॥ २७ ॥ किम-न्यदथ स प्राप । ज्ञानं मोदकमद्भुतं ॥ एकोऽपि मंडकः पंच—पलानि किमु वा बहु ॥ २८ ॥

कृतकेवलिमहिमा सुर—सार्थैः श्रीनेमिना समं विहरन् ॥ कालक्रमेण मोक्षं । गतवान् ढंढणकुमारोऽयं ॥ ३० ॥ इति ढंढणकुमारकथा. अथ स्थूलभद्रमुनिसुभटचारभटीं प्रकटीकुर्वन्नाह—

॥ मूलम् ॥—उप्भडवेसा वेसा । सा कोसा तस्स थूलभद्दस्स ॥ किं कुणइ जस्स न मणं । मणंपि धिरत्तणं मुयइ ॥ ३३ ॥ व्याख्या—तस्य जगद्विदितमहिम्नः शकटालसुतमहामुनेः सा कोसा कोशानाम्नी वेसा वेश्या उप्भडवेसा उद्भटः स्फारः कोटीरहारकेयूरकर्णपूरतिलकताटंककंचीरमंजीरमेखलाकनकशृंखलावलयांगुलीयकाद्यशेषो वेषो मंडनं यस्याः सा तथा, किं कुणइ किं करोति? न किमपीति भावः, यस्य मनश्चित्तं मणंपि मनागपि लेशमात्रमपि न धीरत्तणं मुयइ न धीरत्वं न धैर्यं मुंचति. यतः—विषयगणाः कापुरुषं । करोति वशवर्तिनं न सत्पुरुषं ॥ बध्नाति मशकमेव हि । लूतातंतुर्न मत्तेभं ॥१॥ अथ तमेव भक्तिभरतरलतया पुरःस्थमिव पश्यन्नुपश्लोकयति

॥ मूलम् ॥—जं डुक्करडुक्करकारओत्ति । भणिओसि थूलभद्द तुमं ॥ मयणभडवायभंजण । लज्जइ तुम्ह गुरुवयणं ॥ ३४ ॥ व्याख्या—हे स्थूलभद्र जं यत तुमं त्वं भणिओसि भणितोऽसि, किं डुक्करडुक्करकारओत्ति दुष्करदुष्करकारकेति, मयणभडवायभंजण मदनस्य मन्मथस्य भटवादः

सुरासुरनरेश्वरविजयरूपा चारभटी मदनभटवादः, तं भनक्ति विसूत्रयतीति स तथा, तस्य संबोधनं हे मदनभटवादभंजन तं तद् गुरुवयणं गुरोः श्रीविजयसंभूतिनाम्नो वचनं गुरुवचनं पूर्वोक्तं सिंहगुहाहग्विषाहिकूपोपकंठकृतस्थितिषु यतिषु दुःकरकारकेतिस्वागतवाक्यातिरेकेण गरीयो वचनं गुरुवचनं तुह तव भजाइ राजते इति संक्षेपार्थः, व्यासार्थस्तु कथानकादवसेयस्तच्चैतत्—देवसौधमणिज्योत्स्ना-पटलैः पाटलीकृतं ॥ पाटलीपुत्रमित्यस्ति । पुरं पुरमिवामरं ॥ १ ॥ त्रिखंडशासिता चंम—वैरिसुंभविखंडनः ॥ गुणैर्विश्वजनानंदो । नंदोऽभूदिह भूपतिः ॥ २ ॥ प्रकटः सेवधिः श्रीणां । धियां धामा ह्यसंकटः ॥ शकडाल इति ख्यात—स्तस्यामात्यवरोऽभवत् ॥ ३ ॥ सुतावजनिषातां द्वौ । तस्यार्केंदू इव त्विषा ॥ स्थूलभद्रस्तयोर्ज्येष्टः । कनिष्टः श्रीयकः पुनः ॥ ४ ॥ यक्षायक्षदत्ताभूता । भूतदत्ता तथैव च ॥ सेणा वेणा तथा रेणा । प्राज्ञाः पुत्र्योऽस्य मंत्रिणः ॥ ५ ॥ उर्वशीवावतीर्णोर्व्यां । वशीकृतजगन्मना ॥ वेश्यासीत्तत्र कोशेति । रतिकोशो मनोभुवः ॥ ६ ॥ प्रत्यहं स्थूलभद्रोऽनु—कूलभोगपरायणः ॥ वसतिस्म तदावासे । समा द्वादश तन्मनाः ॥ ७ ॥ श्रीयकस्त्वंगरक्षोऽभू—द्दक्षो नंदस्य भूपतेः ॥ जृंभमाणोरुविश्रंभ—स्तस्य स्वांतमिवांगमत् ॥ ८ ॥ अभूच्च तत्र

कविता-रुचिर्वररुचिर्द्विजः ॥ नंदमानंदयत्काव्यै-र्नव्यैरयमहर्निशं ॥ ९ ॥ मंत्री त्वेकादिसंख्या-
भिः । स्वपुत्रीभिस्तमन्यदा ॥ पराभूय प्रभोस्तुष्टि-दानापात्रमसूत्रयत् ॥ १० ॥ ततो वररुचिश्चक्रे
। गंगांतर्यंत्रमत्र च ॥ वस्त्रे बध्ध्वा न्यधाद् हृष्टो । दीनारशतमष्टयुक् ॥ ११ ॥ प्रगे गंगामयं स्तुत्वा
। यंत्रमाक्रमदंह्रिणा ॥ दीनारास्ते च तस्यास्मा-दुत्पत्य न्यपतन् करे ॥ १२ ॥ एवं स विदधेऽक-
स्मा-द्विस्मापितजनोऽन्वहं ॥ राजा तच्च समाकर्ण्य । कथयामास मंत्रिणे ॥ १३ ॥ इदं यद्यस्ति
सत्यं तत् । ध्रुवं वीक्षामहे स्वयं ॥ इत्युक्तो मंत्रिणा राजा । तथेति प्रत्यपद्यत ॥ १४ ॥ दत्त्वा शि-
क्षां चरः सायं । प्रेषितस्तत्र मंत्रिणा ॥ शरस्तंबनिलीनोऽस्थात् । पक्षीवानुपलक्षितः ॥ १५ ॥ तदा
वररुचिर्गत्वा । मंदं मंदाकिनीजले ॥ दीनाराष्टोत्तरशत-ग्रंथिं न्यस्य ययौ गृहे ॥ १६ ॥ दीनार-
ग्रंथिमादाय । तज्जीवितमिवैष तु ॥ चरः समर्पयामास । गत्वा तां लघु मंत्रिणे ॥ १७ ॥ स्वयं गु-
प्तात्तदीनार-स्ततोऽमात्यो निशात्यये ॥ ययौ राज्ञा समं गंगा-मागाद्वररुचिश्च सः ॥ १८ ॥ द्रष्टु-
कामं नृपं दृष्ट्वो-त्कृष्टमानो विकृष्टवाक् ॥ गंगामढौकत स्तोतुं । मूढो वररुचिस्ततः ॥ १९ ॥ स्तो-
त्रांतेऽचालयद्यंत्र-मंह्रिणासौ परंतु न ॥ दीनारग्रंथिरुत्पत्य । पपात करकोटरे ॥ २० ॥ तत्ततोऽन्वे-

षयन्नेष । मंत्रिणान्नाषि किं न ते ॥ दत्ते न्यस्तमपि द्रव्यं । गंगा यन्मुहुरीक्षसे ॥ २१ ॥ उपलक्ष्य
गृहाणेदं । निजद्रव्यमिति ब्रुवन् ॥ तस्मै दीनाय दीनार—ग्रंथिमर्पयतिस्म सः ॥ २२ ॥ निशि वि-
न्यस्य विप्रोऽयं । विप्रतारयितुं प्रजाः ॥ द्रव्यं प्रातरसौ गृह्णा—तीति च प्राह भूपतिं ॥ २३ ॥ उक्ते-
दं साधु विज्ञात—मिति मंत्रिणमालपन् ॥ आययौ विस्मयस्मेरः । स्ववेश्म वसुधाधवः ॥ २४ ॥
अमर्षणो वररुचिः । प्रतिकाराय मंत्रिणः ॥ पृच्छन् गृहकथामिच्छ—मज्ञासीच्चेटिकामुखात् ॥ २५ ॥
श्रीश्रीयकविवाहेऽथ । नृपामंत्रणतत्परः ॥ मंत्री प्रगुणयन्नस्ति । शस्त्रादि प्राभृताय च ॥ २६ ॥ छल-
ज्ञस्तच्छलं प्राप्य । वरं वररुचिस्ततः ॥ चणकादि प्रदायेति । डिंभरूपाण्यपाठयत् ॥ २७ ॥ न वे-
त्ति राजा यदसौ । शकडालः करिष्यति ॥ नंदं व्यापाद्य राज्येऽस्य । श्रीयकं स्थापयिष्यति ॥२८॥
एवं दिने दिने डिंभान् । पठतः प्रतिचत्वरं ॥ जनश्रुत्या ततोऽश्रौषी—दिति चाचिंतयन्नृपः ॥२९॥
बालका यच्च भाषंते । भाषंते यच्च योषितः ॥ उत्पातिकी च या भाषा । मृषा भवति सा न हि
॥ ३० ॥ तत्प्रत्ययार्थं राज्ञाथ । प्रेषितो मंत्रिवेश्मनि ॥ पुरुषः सर्वमागत्य । यथादृष्टं व्यजिज्ञपत् ॥
॥ ३१ ॥ नमतो मंत्रिणोऽथाभूद् । नृपः कोपात्पराङ्मुखः ॥ तद्भाववेदी वेश्मेत्या—मात्यः श्रीय-

कविता-रुचिर्वररुचिर्द्विजः ॥ नंदमानंदयत्काव्यै-र्नव्यैरयमहर्निशं ॥ ९ ॥ मंत्री त्वेकादिसंस्था-भिः । स्वपुत्रीभिस्तमन्यदा ॥ पराभूय प्रभोस्तुष्टि-दानापात्रमसूत्रयत् ॥ १० ॥ ततो वररुचिश्चक्रे । गंगांतर्यंत्रमत्र च ॥ वस्त्रे बध्ध्वा न्यधाद् हृष्टो । दीनारशतमष्ट्युक् ॥ ११ ॥ प्रगे गंगामयं स्तुत्वा । यंत्रमाक्रमदंह्रिणा ॥ दीनारास्ते च तस्यास्ता-दुत्पत्य न्यपतन् करे ॥ १२ ॥ एवं स विदधेऽक्-स्मा-द्विस्मापितजनोऽन्वहं ॥ राजा तच्च समाकर्ण्य । कथयामास मंत्रिणे ॥ १३ ॥ इदं यद्यस्ति सत्यं तत् । प्रातर्वीक्षामहे स्वयं ॥ इत्युक्तो मंत्रिणा राजा । तथेति प्रत्यपद्यत ॥ १४ ॥ दत्वा शि-क्षां चरः सायं । प्रेषितस्तत्र मंत्रिणा ॥ शरस्तंबनिलीनोऽस्थात् । पक्षीवानुपलक्षितः ॥ १५ ॥ तदा वररुचिर्गत्वा । मंदं मंदाकिनीजले ॥ दीनाराष्टोत्तरशत-ग्रंथिं न्यस्य ययौ गृहे ॥ १६ ॥ दीनार-ग्रंथिमादाय । तज्जीवितमिवैष तु ॥ चरः समर्पयामास । गत्वा तां लघु मंत्रिणे ॥ १७ ॥ स्वयं गु-प्तात्तदीनार-स्ततोऽमात्यो निशात्यये ॥ ययौ राज्ञा समं गंगा-मागाद्वररुचिश्च सः ॥ १८ ॥ द्रष्टु-कामं नृपं दृष्ट्वो-त्कृष्टमानो विकृष्टवाक् ॥ गंगामढौकत स्तोतुं । मूढो वररुचिस्ततः ॥ १९ ॥ स्तो-त्रांतेऽचालयद्यंत्र-मंह्रिणासौ परंतु न ॥ दीनारग्रंथिरुत्पत्य । पपात करकोटरे ॥ २० ॥ तत्ततोऽन्वे-

षयन्नेष । मंत्रिणान्नापि किं न ते ॥ दत्ते न्यस्तमपि द्रव्यं । गंगा यन्मुहुरीक्षसे ॥ २१ ॥ उपलक्ष्य गृहाणेदं । निजद्रव्यमिति ब्रुवन् ॥ तस्मै दीनाय दीनार—ग्रंथिमर्पयतिस्म सः ॥ २२ ॥ निशि विन्यस्य विप्रोऽयं । विप्रतारयितुं प्रजाः ॥ द्रव्यं प्रातरसौ गृह्णा—तीति च प्राह भूपतिं ॥ २३ ॥ ऊचेदं साधु विज्ञात—मिति मंत्रिणमालपन् ॥ आययौ विस्मयस्मेरः । स्ववेश्म वसुधाधवः ॥ २४ ॥ अमर्षणो वररुचिः । प्रतिकाराय मंत्रिणः ॥ पृच्छन् गृहकथामिच्छ—मज्ञासीच्चेटिकामुखात् ॥ २५ ॥ श्रीश्रीयकविवाहेऽथ । नृपामंत्रणतत्परः ॥ मंत्री प्रगुणयन्नस्ति । शस्त्रादि प्राभृताय च ॥ २६ ॥ छलज्ञस्तच्छलं प्राप्य । वरं वररुचिस्ततः ॥ चणकादि प्रदायेति । डिंभरूपाण्यपाठयत् ॥ २७ ॥ न वेत्ति राजा यदसौ । शकडालः करिष्यति ॥ नंदं व्यापाद्य राज्येऽस्य । श्रीयकं स्थापयिष्यति ॥२८॥ एवं दिने दिने डिंभान् । पठतः प्रतिचत्वरं ॥ जनश्रुत्या ततोऽश्रौषी—दिति चाचिंतयन्नृपः ॥२९॥ बालका यच्च भाषंते । भाषंते यच्च योषितः ॥ उत्पातिकी च या भाषा । मृषा भवति सा न हि ॥ ३० ॥ तत्प्रत्ययार्थं राज्ञाथ । प्रेषितो मंत्रिवेश्मनि ॥ पुरुषः सर्वमागत्य । यथादृष्टं व्यजिज्ञपत् ॥ ॥ ३१ ॥ नमतो मंत्रिणोऽथाभूद् । नृपः कोपात्पराङ्मुखः ॥ तद्भाववेदी वेश्मेत्या—मात्यः श्रीय-

कमब्रवीत् ॥ ३२ ॥ राज्ञेऽस्मि कथितः केना—प्यभक्तोऽहं द्विषन्निव ॥ असावकस्मादस्माक–मुद्ययौ
तत्कुलक्षयः ॥ ३३ ॥ स्दंस्तन्नमतो राज्ञे । शिरश्छिंद्या ममासिना ॥ अभक्तः स्वामिनो वध्यः । पि-
तापीति वदेत्ततः ॥ ३४ ॥ जरसापि यियासौ म—य्येवं याते पराशुतां ॥ त्वं मत्कुलगृहस्तंभो ।
नंदिष्यसि चिरं ततः ॥ ३५ ॥ श्रीयकोऽपि रुदन्नेव—माह गद्गदया गिरा ॥ तात घोरमिदं कर्म ।
कुर्वीत श्वपचोऽपि किं ॥ ३६ ॥ अमात्योऽथाब्रवीदेव—मेवं कुर्वन् विचारणां ॥ मनोरथान् पूरयसि
। वैरिणामेव केवलं ॥ ३७ ॥ पितृहत्यापि ते नात्त—विषं मां हिंसतस्तदा ॥ पित्रैवं बोधितोऽसौ
तत् । प्रतिपेदे चकार च ॥ ३८ ॥ किमकारि त्वयेत्युक्तः । क्ष्माभुजा श्रीयकोऽवदत् ॥ अभक्तो य-
त्प्रभोस्तेन । पितापि निहतो मया ॥ ३९ ॥ कृतौर्ध्वदेहिकं नंद—स्ततः श्रीयकमब्रवीत् ॥ सर्व-
व्यापारसहिता । मुद्रेयं गृह्यतामिति ॥ ४० ॥ व्यजिज्ञपदिति क्ष्मापं । श्रीयकोऽस्ति ममाग्रजः ॥
स्थूलभद्रो धियां धाम । कोशासंभोगलालसः ॥ ४१ ॥ आहूयाथ स्थूलभद्र—स्तमर्थं नृभुजोदि-
तः ॥ पर्यालोच्यामुमादेशं । करिष्यामीत्यभाषत ॥ ४२ ॥ अद्यैवालोचयेत्युक्तः । स्थूलभद्रोऽथ नृ-
भुजा ॥ अशोकवनिकां गत्वा । विममर्शेति चेतसा ॥ ४३ ॥ अशनं शयनं स्नान—मन्यच्च सुख-

हेतुकं ॥ कालेऽपि नानुभूयेत । दुर्गतैरिव सेवकैः ॥ ४४ ॥ त्यक्त्वा निजार्थमत्यर्थं । राजार्थं कुर्वतामपि ॥ उपद्रवंति पिशुना । उद्धानामिव द्विकाः ॥ ४५ ॥ यथा स्वदेहसर्वस्व—व्ययेनापि प्रयत्यते ॥ राजार्थं तद्वदात्मार्थं । यत्यते किं न धीमता ॥ ४६ ॥ विमृश्यैवं व्यधात्केशो—त्पाटनं पंचमुष्टिभिः ॥ दत्तं देवतयाशेष—मुनिवेषमथाददे ॥ ४७ ॥ ततश्च स महासत्वो । गत्वा नृपतिमब्रुवत् ॥ आलोचितमिदं धर्म—लाभः स्तादिति निर्ययौ ॥ ४८ ॥ किमेष कपटं कृत्वा । यायाद्वेश्यागृहं पुनः ॥ इत्यप्रत्ययतः क्ष्मापः । सौधाग्रस्थस्तमैक्षत ॥ ४९ ॥ प्रदेशे शवदुर्गंधे—ऽप्यकूणितविकूणितं ॥ यांतं दृष्ट्वा यतींद्रं तं । नरेंद्रोऽघूर्णयच्छिरः ॥ ५० ॥ भगवान् वीतरागोऽसा—वस्मिन् धिग्मे कुचिंतितं ॥ इत्यात्मानं निनिंदोच्चै—र्नंदस्तमभिनंदयन् ॥ ५१ ॥ स्थूलभद्रोऽपि गत्वा श्री—संभूतिविजयांतिके ॥ दीक्षां सामायिकोच्चार—पूर्विकां प्रत्यपद्यत ॥ ५२ ॥ उपरुध्य नृपेणापि । कृतः श्रीकरणाधिपः ॥ चकार श्रीयको राज्य—चिंतामवहितः सदा ॥ ५३ ॥ कोशाया नित्यमावासे । विनीतः श्रीयको ययौ ॥ स्थूलभद्रवियोगार्ता । सापि तं वीक्ष्य चारुदत ॥ ५४ ॥ तेनोचेऽसौ वररुचिः । पापो नस्तातघातकः ॥ स्थूलभद्रवियोगं ते । विदधे दावदारुणं ॥ ५५ ॥ त्वद्याम्यामुप-

कोशाया—मासक्तो यावदस्त्ययं ॥ तावत्प्रतिक्रियां कांचि—द्विचिंतय मनस्विनि ॥ ५६ ॥ तदादि-
शोपकोशां यत । प्रतार्य कथमप्यसौ ॥ विधीयतां वररुचि—र्मद्यपानरुचिस्त्वया ॥ ५७ ॥ प्रेयोवि-
योगजाद्दुःखा—द्दाक्षिण्याद्देवरस्य च ॥ तत्प्रतिज्ञाय सा सद्य—स्तत्तथा सर्वमातनोत् ॥ ५८ ॥ अथ
कोशामुखान्मत्वा । श्रीयकस्तं सुरारतं ॥ मेने जनकवैरस्य । विदितं प्रतियातनं ॥ ५९ ॥ शकडा-
लमहामात्या—त्ययात्प्रभृति सोऽप्यभूत् ॥ भट्टो वररुचिर्नृप—सेवावसरतत्परः ॥ ६० ॥ अन्यदा
नंदनृपालः । शकडालस्य संस्मरन् ॥ सदसि श्रीयकामात्य—मित्युवाच सगद्गदं ॥ ६१ ॥ भक्तिमा-
न् शक्तिमान्मंत्री । शकडालो ममाभवत ॥ दिवस्पतेरिव प्राज्य—प्रज्ञोपेतो बृहस्पतिः ॥ ६२ ॥ ए-
वमेव विपन्नोऽसौ । दैवादथ करोमि किं ॥ मन्ये शून्यमिवास्थान—महं तेन विनात्मनः ॥ ६३ ॥
उवाच श्रीयकोऽप्येव—मिह किं देव कुर्महे ॥ इदं वररुचिः सर्वं । पापं व्यधित मद्यपः ॥ ६४ ॥
सत्यमेष सुरां भट्टः । पिबतीति नृपोदिते ॥ श्वोऽमुं दर्शयितास्मीति । श्रीयकः प्रत्यवोचत ॥ ६५ ॥
प्रातः सोऽथ सदस्यानां । पद्ममेकैकमार्पयत् ॥ तस्मै भट्टाय मदन—फलांभोभावितं पुनः ॥ ६६ ॥
भट्टः सोऽप्यनयद् घ्रातुं । घ्राणाग्रे पंकजं निजं ॥ चंद्रहाससुरां रात्रि—पीतां सद्यो ववाम च ॥ ६७ ॥

सर्वैराकृष्यमाणोऽथ । निर्ययौ सदसो द्विजः ॥ विप्रेभ्यश्च सुरापान—प्रायश्चित्तमयाचत ॥ ६८ ॥
तापितत्रपुणः पान—मेतस्मै ते न्यवेदयन् ॥ तदाचर्य विपेदेऽसा—वमोघास्त्रं हि धीः सतां ॥
॥ ६९ ॥ स्थूलभद्रोऽपि संभूति—विजयाचार्यसन्निधौ ॥ अपालयद् व्रतं पार—दृश्वा विश्वागमांबु-
धेः ॥ ७० ॥ प्रावृष्यथ गुरुं नत्वा—भ्यगृह्णन् यतयः क्रमात् ॥ सिंहदृग्विषसर्पौकः—कूपेष्वनशनां
स्थितिं ॥ ७१ ॥ योग्यान् मत्वा गुरुः साधून् । यावत्तानन्वमन्यत ॥ स्थूलभद्रः पुरोभूय । नत्वैवं
तावदब्रवीत् ॥ ७२ ॥ कोशाभिधाया वेश्याया । गृहे या चित्रशालिका ॥ तत्राकृततपःकर्म—विशे-
षः षड्रसाशनः ॥ ७३ ॥ स्थास्यामि चतुरो मासा—निति मेऽभिग्रहः प्रभो ॥ ज्ञात्वोपयोगाद्योग्यं
तं । गुरुस्तत्रान्वमन्यत ॥ ७४ ॥ साधवोऽथ ययुः सर्वे । स्वं स्वं स्थानं प्रतिश्रुतं ॥ स्थूलभद्रोऽपि च
प्राप । कोशावेश्यानिकेतनं ॥ ७५ ॥ तमभ्युदस्थात्कोशापि । विकोशाब्जमुखी ततः ॥ ऊचे च
स्वागतं स्वामिन् । किंकरी किं करोमि ते ॥ ७६ ॥ चतुर्मासीवसत्यै मे । चित्रशालेयमर्प्यतां ॥ इ-
त्याह स्थूलभद्रस्तां । सातूचे गृह्यतामिति ॥ ७७ ॥ तया प्रगुणिते सद्यो । वासवेश्मन्युवास सः ॥
मुनिरूप इवोर्वीभि—स्तत्र कामरसार्णवे ॥ ७८ ॥ अथ सा षड्रसाहार-भोजनस्यापि नाशकत् ॥

मनः क्षोभयितुं तस्य । विश्वचेतोहरापि हि ॥ ७९ ॥ मुनेस्तस्येंद्रियजय—प्रकर्षेण चमत्कृता ॥
प्रपेदे श्रावकत्वं सा । गृहीत्वैवमभिग्रहं ॥ ८० ॥ तुष्टः कदापि कस्मैचि—द्ददाति यदि मां नृपः ॥
विना पुमांसमेकं त—मन्यत्र नियमो मम ॥ ८१ ॥ निर्व्यूढाभिग्रहांस्त्रींस्तान् । प्रावृषोऽतिक्रमाद्यतीन्
॥ स्वागतं दुःक्करकरा । इत्यूचे गुरुरागतान् ॥ ८२ ॥ अथायांतं स्थूलभद्र—मुत्थाय गुरुरब्रवीत् ॥ दु-
ष्करदुष्करकर । स्वागतं ते महामुने ॥ ८३ ॥ सासूयाः साधवस्तेऽथा—चिंतयन्नित्यहो गुरोः ॥ इद-
मामंत्रणं मंत्रि—पुत्रताहेतुकं खलु ॥ ८४ ॥ यद्यसौ तत्तथा वृत्त्या । कृतदुष्करदुष्करः ॥ इदं वर्षां-
तरे तर्हि । प्रतिज्ञास्यामहे वयं ॥ ८५ ॥ क्रमादथाष्टमासांते । प्रणिपत्य पुरो गुरोः ॥ साधुः सिंह-
गुहावासी । चकारेति प्रतिश्रवं ॥ ८६ ॥ कोशावेश्यागृहे नित्यं । षड्रसाहारभोजनः ॥ भगवन्
समवस्थास्ये । चतुर्मासीमिमामहं ॥ ८७ ॥ स्थूलभद्रस्य मात्सर्या—देतदंगीकरोत्ययं ॥ विचार्ये-
त्युपयोगेन । ज्ञात्वा च गुरुरब्रवीत् ॥ ८८ ॥ वत्स माभिग्रहं कार्षी—रतिदुष्करदुष्करं ॥ क्षमः क-
र्तुममुं स्थूल—भद्र एवाद्रिनिश्चलः ॥ ८९ ॥ न हि मे दुष्करोऽप्येष । कथं दुष्करदुष्करः ॥ त-
दवश्यं करिष्यामी—त्युक्त्वा कोशामगान्मुनिः ॥ ९० ॥ स्पर्धया स्थूलभद्रस्या—याति मन्ये तपस्व्य-

सौ ॥ भवे पतन् रक्षणीय । इत्युत्थाय ननाम सा ॥ ९१ ॥ वसत्यै याचितां चित्र–शालां तस्य स- मर्प्य सा ॥ चक्रे भुक्त्वोर्ध्वमागत्य । क्षणं सत्वपरीक्षणं ॥ ९२ ॥ चुक्षोभ स मुनिः प्रेक्ष्य । तत्क्ष- णं तां मृगेक्षणां ॥ स्मरसंधुक्षणं तादृग् । भोज्यं हि स्त्री च तादृशी ॥ ९३ ॥ स्मरार्त्या याचमानं तं । कोशाह भगवन् वयं ॥ वेश्या धनेन वश्याः स्मो । मन्मथस्यापि नान्यथा ॥ ९४ ॥ स मुनिः प्राह लोलाक्षि । प्रसीद मयि सीदति ॥ अस्ति द्रव्यं किमस्मासु । तैलं च चणकेष्विव ॥ ९५ ॥ नेपालभूधवोऽपूर्व–साधवे रत्नकंबलं ॥ दत्ते तमानयेत्यूचे । सापि खेदयितुं मुनिं ॥ ९६ ॥ तत्राकालेऽपि गत्वा भू–पालात्कंबलमाप्य च ॥ स मुनिर्ववले तत्र । वर्त्मन्यासंश्च तस्कराः ॥ ९७ ॥ आयाति लक्षमित्याख्य–त्तेषां सिद्धांजनः शुकः ॥ तैरप्युपेक्षिते भिक्षौ । याति यातीति चावदत् ॥ ॥ ९८ ॥ मुनिं चौरपतिः प्राह । सत्यं वद किमस्ति ते ॥ तेन वंशांतरस्तीति–ख्याते सोऽमुच्यतामुना ॥ ९९ ॥ समागत्य च कोशायै । स ददौ रत्नकंबलं ॥ साक्षिपत्क्षालपंके तं । सोऽब्रवीत् किमिदं शुभे ॥ १०० ॥ सोचे शोचसि मूढेदं । न स्वं नरकपातिनं ॥ सोऽवदद्बोधितः साधु । साध्वहं रक्षितो भवात् ॥ १ ॥ शुद्ध्यै गुरुं प्रयास्यामि । धर्मलाभोऽस्तु तेऽनघे ॥ साह क्षमेऽथ बोधा-

मनः क्षोभयितुं तस्य । विश्वचेतोहरापि हि ॥ ७९ ॥ मुनेस्तस्येंद्रियजय—प्रकर्षेण चमत्कृता ॥
प्रपेदे श्रावकत्वं सा । गृहीत्वैवमभिग्रहं ॥ ८० ॥ तुष्टः कदापि कस्मैचि—द्ददाति यदि मां नृपः ॥
विना पुमांसमेकं त—मन्यत्र नियमो मम ॥ ८१ ॥ निर्व्यूढाभिग्रहांस्त्रींस्तान् । प्रावृषोऽतिक्रमाद्यतीन्
॥ स्वागतं दुःष्करकरा । इत्यूचे गुरुरागतान् ॥ ८२ ॥ अथायांतं स्थूलभद्र—मुत्थाय गुरुरब्रवीत् ॥ दु-
ष्करदुष्करकर । स्वागतं ते महामुने ॥ ८३ ॥ सासूयाः साधवस्तेऽथा—चिंतयन्नित्यहो गुरोः ॥ इद-
मामंत्रणं मंत्रि—पुत्रताहेतुकं खलु ॥ ८४ ॥ यद्यसौ तत्तथा वृत्त्या । कृतदुष्करदुष्करः ॥ इदं वर्षां-
तरे तर्हि । प्रतिज्ञास्यामहे वयं ॥ ८५ ॥ क्रमादथाष्टमासांते । प्रणिपत्य पुरो गुरोः ॥ साधु· सिंह-
गुहावासी । चकारेति प्रतिश्रवं ॥ ८६ ॥ कोशावेश्यागृहे नित्यं । षड्रसाहारभोजनः ॥ भगवन्
समवस्थास्ये । चतुर्मासीमिमामहं ॥ ८७ ॥ स्थूलभद्रस्य मात्सर्या—देतदंगीकरोत्ययं ॥ विचार्ये-
त्युपयोगेन । ज्ञात्वा च गुरुरब्रवीत ॥ ८८ ॥ वत्स माभिग्रहं कार्षी—रतिदुष्करदुष्करं ॥ क्षमः क-
र्तुममुं स्थूल—भद्र एवाद्रिनिश्चलः ॥ ८९ ॥ न हि मे दुष्करोऽप्येष । कथं दुष्करदुष्करः ॥ त-
दवश्यं करिष्यामी—त्युक्त्वा कोशामगान्मुनिः ॥ ९० ॥ स्पर्धया स्थूलभद्रस्या—याति मन्ये तपस्व्य-

सौ ॥ भवे पतन् रक्षणीय । इत्युत्थाय ननाम सा ॥ ९१ ॥ वसत्यै याचितां चित्र-शालां तस्य स-
मर्प्य सा ॥ चक्रे भुक्त्वोर्ध्वमागत्य । क्षणं सत्वपरीक्षणं ॥ ९२ ॥ चुक्षोभ स मुनिः प्रेक्ष्य । तत्क्ष-
णं तां मृगेक्षणां ॥ स्मरसंधुक्षणं तादृग् । भोज्यं हि स्त्री च तादृशी ॥ ९३ ॥ स्मरार्त्तां याचमानं
तं । कोशाह भगवन् वयं ॥ वेश्या धनेन वश्याः स्मो । मन्मथस्यापि नान्यथा ॥ ९४ ॥ स मुनिः
प्राह लोलाक्षि । प्रसीद मयि सीदति ॥ अस्ति द्रव्यं किमस्मासु । तैलं च चणकेष्विव ॥ ९५ ॥
नेपालभूधवोऽपूर्व-साधवे रत्नकंबलं ॥ दत्ते तमानयेत्यूचे । सापि खेदयितुं मुनिं ॥ ९६ ॥ तत्रा-
कालेऽपि गत्वा भू-पालात्कंबलमाप्य च ॥ स मुनिर्ववले तत्र । वर्त्मन्यासंश्च तस्कराः ॥ ९७ ॥
आयाति लक्षमित्याख्य-त्तेषां सिद्धांजनः शुकः ॥ तैरप्युपेक्षिते भिक्षौ । याति यातीति चावदत् ॥
॥ ९८ ॥ मुनिं चौरपतिः प्राह । सत्यं वद किमस्ति ते ॥ तेन वंशांतरस्तीति-ख्याते सोऽमुच्यता-
मुना ॥ ९९ ॥ समागत्य च कोशायै । स ददौ रत्नकंबलं ॥ साक्षिपत्क्षालपंके तं । सोऽब्रवीत्
किमिदं शुभे ॥ १०० ॥ सोचे शोचसि मूढेदं । न स्वं नरकपातिनं ॥ सोऽवदद्बोधितः साधु । सा-
ध्वहं रक्षितो भवात् ॥ १ ॥ शुद्ध्यै गुरुं प्रयास्यामि । धर्मलाभोऽस्तु तेऽनघे ॥ साह क्षमेऽथ बोधा-

य । मया यदसि खेदितः ॥ २ ॥ इच्छामीति भणित्वा स । गुर्वंतिकमुपेत्य च ॥ गृहीत्वालोचनां तीव्र-माचचार पुनस्तपः ॥ ३ ॥ राज्ञादीयत कोशापि । तुष्टेन रथिनेऽन्यदा ॥ नृपायत्तेति सा रागं । विनापि तमुपाचरत् ॥ ४ ॥ स्थूलभद्रगुणस्तोत्र-परायै शयितो रथी ॥ बाणाव्यानीतमाकंद-लुंब्यास्यै स्वमरोचयत् ॥ ५ ॥ सापि सर्षपराश्युप्त-सूचीन्यस्तसुमोपरि ॥ ननर्तिस्म नो सूच्या । विद्धा राशिश्च न कृतः ॥ ६ ॥ स ततः प्राह तुष्टोऽस्मि । दुष्करेणामुना तव ॥ सोवाच विस्मयेथा मा । किमभ्यासस्य दुष्करं ॥ ७ ॥ माकंदलुंबीछेदस्ते । नृत्यं मे च न दुष्करं ॥ अशिक्षितं स्थूलभद्र-श्चक्रे यत्तत्तु दुष्करं ॥ ८ ॥ द्वादशाब्दानि बुभुजे । यत्र भोगान् मया सह ॥ तत्रैव चित्रशालायां । तस्थौ सोऽखंडितव्रतः ॥ ९ ॥ स्थूलभद्रं विनाप्येषां । मनो मश्नाति मन्मथः ॥ न सुरा नासुराः केचि-दत्र भग्ना महारथ ॥ १० ॥ श्रीनेमितोऽपि शकडालसुतं विचार्य । मन्येत को न भुवनेऽधिकमेकवीरं ॥ देवोऽद्रिदुर्गमधिरुह्य जिगाय मोहं । यन्मोहनालयमयं त्वधिगम्य धीरः ॥ ॥ ११ ॥ जगदेकमुनेस्तस्य । संसर्गेण ममाप्यहो ॥ नृपादिष्टं विनान्यस्य । पुंसोऽस्ति नियमः खलु ॥ १२ ॥ श्रुत्वेति सोऽवदद्भद्रं । स्थूलभद्राय साधवे ॥ यास्यामि तस्य पंथानं । भवत्येव निवे-

दितं ॥ १३ ॥ भद्रमस्तु च ते भद्रे । पालय स्वमभिग्रहं ॥ उक्त्वैवं सुगुरोः पार्श्वे । स गत्वा व्रत-
माददे ॥ १४ ॥ द्वादशाब्दीयदुःकाल—संकटे गलितं श्रुतं ॥ संभूयामीमिलत्संघः । पाटलीपुत्रप-
त्तने ॥ १५ ॥ संघेन प्रहितौ गत्वा । नेपाले यतिनावुभौ ॥ दृष्टिवादभृतं भद्र—बाहुमाह्वयतामथ
॥ १६ ॥ सोऽप्युवाच महाप्राण—ध्यानसिद्धौ समेष्यते ॥ तद्वचस्तौ मुनी संघ—स्यागत्याशंसताम-
थ ॥ १७ ॥ संघेन प्रहितावन्यौ । शिक्षयित्वेत्यथो मुनी ॥ संघाज्ञालोपिनो दंडः । कः स्यादिति
स वाच्यतां ॥ १८ ॥ संघाद्बहिः स कर्तव्य । इति वक्ति यदा तु सः ॥ तर्हि तद्दंडयोग्योऽसी—
त्याचार्यो वाच्य एव सः ॥ १९ ॥ ताभ्यां गत्वा तथैवोक्तो । भद्रबाहुरथावदत ॥ मैवं करोतु भग-
वान् । संघः किंतु करोत्वदः ॥ २० ॥ मयि प्रसादं कुर्वाणः । श्रीसंघः प्रहिणोत्विह ॥ शिष्यान् मे-
धाविनस्तेभ्यो । दास्यामि खलु वाचनाः ॥ २१ ॥ ताभ्यामेत्य तथाख्याते । श्रीसंघोऽपि प्रमोदभा-
क् ॥ प्राहिणोत् स्थूलभद्रादि—मुनिपंचशतीमथ ॥ २२ ॥ सूरिस्तान् वाचयामास । तेऽप्यानंत्यात्
श्रुतांबुधेः ॥ उद्वज्येयुर्निजं स्थानं । स्थूलभद्रस्त्ववस्थितः ॥ २३ ॥ उद्वज्यसे किमित्युक्तः । सूरि-
णा सोऽब्रवीदिदं ॥ नोद्वज्ये भगवन् किंतु । ममाल्पा एव वाचना ॥ २४ ॥ सूरिरूचे मम ध्यानं ।

पूर्णप्रायमिदं ततः ॥ तदंते वाचनास्तुभ्यं । प्रदास्यामि त्वदिच्छया ॥ २५ ॥ पूर्णे ध्याने ततः सूरि-
र्भूरिशस्तमपाठयत् ॥ द्विवस्तूनानि पूर्वाणि । दश यावत्पपाठ सः ॥ २६ ॥ सूरयः पाटलीपुत्र—म-
थाजग्मुः सहामुना ॥ तस्थुश्चोपवने प्रापु—श्चाल वंदारवो जनाः ॥ २७ ॥ व्रतिन्यः स्थूलभद्रस्य ।
भगिन्यो वंदनागताः ॥ गुरुं प्रणम्य पप्रच्छुः । स्थूलभद्रः क नु प्रभो ॥ २८ ॥ इह यक्षालयेऽस्ती-
ति । गुरूक्ते समुपेयुषीः ॥ दृष्ट्वा चित्रयितुं स्थूल—भद्रः शार्दूलतामधात् ॥ २९ ॥ वीक्ष्य सिंहं तु
भीतास्ताः । सूरिमेत्य व्यजिज्ञपन् ॥ ज्येष्ठार्यं जग्रसे सिंह—स्तत्र सोऽद्यापि विद्यते ॥ ३० ॥ ज्ञा-
त्वोपयोगादाचार्यो—ऽप्याह सिंहो न सोऽस्ति तु ॥ अथोपेताश्च ताः स्थूल—भद्रं वीक्ष्य ववंदि-
रे ॥ ३१ ॥ यक्षोचे श्रीयको दीक्षां । मया सह समाददे ॥ क्षुधालुः कारितश्चायं । तपः पर्युषणा-
दिने ॥ ३२ ॥ पौरुष्या सार्धपौरुष्या—ऽपार्धेनानशनं क्रमात् ॥ बालवत्कवलैर्भोज्यं । कारितोऽसौ
मया मुनिः ॥ ३३ ॥ निशीथे स ततो धर्म—ध्यानान्मृत्वा दिवं गतः ॥ मयापि याचितः संघः ।
प्रायश्चित्तं तदेनसः ॥ ३४ ॥ अदुष्टभावात्त्वं शुद्धे—त्युक्तानेन तथाप्यहं ॥ ताम्यंती प्रापिता देव-
तया सीमंधरं जिनं ॥ ३५ ॥ भरतादागतार्येयं । निर्दोषेत्यवदज्जिनः ॥ कृपया मन्निमित्तं च । व्या-

चक्रे चूलिकाद्वयं ॥ ३६ ॥ ततोऽहं छिन्नसंदेहा । देव्यात्र प्रापिता पुनः ॥ श्रीसंघस्यार्पितवती ।
चूलिकाद्वितयं च तत् ॥ ३७ ॥ उक्त्वेति स्थूलभद्राय । ययुस्ताः सोऽप्यगाद्गुरुं ॥ न ददौ वाचनां
तस्या—योग्योऽसीति गुरुर्जगौ ॥ ३८ ॥ दीक्षादिनात्प्रभृत्येषो—ऽप्यपराधानचिंतयत् ॥ ऊचे च
न स्मराम्यागो । गुर्वादिष्टोऽस्मरच्च तत् ॥ ३९ ॥ न करिष्यामि भूयोऽद । इत्युदित्वा नमन्नयं ॥
गुरुणोचेऽथ ते दास्ये । न पुरो वाचनामहं ॥ ४० ॥ स्थूलभद्रार्थितेनाथ । संघेन भणितो गुरुः ॥
जगौ यथा विचक्रेऽने—नान्योऽपि विकरिष्यति ॥ ४१ ॥ स संघेनाग्रहादुक्तो । विवेदेत्युपयोगतः
॥ न मत्तः शेषपूर्वाणा—मुच्छेदो भाव्यतोऽस्तु तत् ॥ ४२ ॥ अन्यस्मै शेषपूर्वाणि । प्रदेयानि त्व·
या न हि ॥ इत्यभिग्राह्य भगवान् । स्थूलभद्रमवाचयत् ॥ ४३ ॥ सर्वपूर्वधरमथ । स्थूलभद्रमहामु·
निं ॥ तमाचार्यपदे श्रीमान् । भद्रबाहुरतिष्ठिपत् ॥ ४४ ॥ गते वर्षशते वीर—मोक्षात्सप्ततिकाधिके
॥ भद्रबाहुरथ स्वामी । ययौ स्वर्गं समाधिना ॥ ४५ ॥ आचार्यः स्थूलभद्रस्तु । श्रावस्त्यामन्यदा
ययौ ॥ उद्यानेऽस्थाच्च तं नंतु—मागमच्च पुरीजनः ॥ ४६ ॥ नत्वा पुरो निविष्टेषु । भव्येषु भग·
वानपि ॥ चिरं चकार संसार—त्रासिनीं धर्मदेशनां ॥ ४७ ॥ देशनांते स्वसुहृदं । श्रावस्तीवासिनं

विभुः ॥ धनदेवमनायातं । विज्ञायैवमचिंतयत् ॥ ४८ ॥ स नः प्रियसुहृन्नून—मिह नास्ति कु
तोऽन्यथा ॥ पुर्लोकः सकलोऽप्यागा—न्न पुनः स्नेहलोऽपि सः ॥ ४९ ॥ गतो देशांतरं वा स्या—
द्रोगी वा स्यादिति स्वयं ॥ गन्ताऽमस्तद्गृहमपि । सोऽनुग्राह्यो विशेषतः ॥ ५० ॥ इति निश्चित्य
भगवान् । संघलोकसमन्वितः ॥ बंदिभिः स्तूयमानः स्त्री—गीयमानतपोगुणः ॥ ५१ ॥ नगरीम-
ध्यचैत्यानि । वंदमानः पदे पदे ॥ जगाम पूर्वसुहृदो । धनदेवस्य धामनि ॥ ५२ ॥युग्मं ॥ विशं-
स्तत्र धनेश्वर्या । धनदेवगृहस्थया ॥ अभ्युत्थाय ववंदेऽसा—वासितश्च महासने ॥ ५३ ॥ भगवा-
नप्यथो धर्म—वार्ताभिरनुगृह्य तां ॥ पप्रच्छ धर्मशीले किं । धनदेवो न दृश्यते ॥ ५४ धनेश्वर्यप्य-
दोऽवादीत् । भगवन् श्रावको धनं ॥ व्ययतेस्म निधिं पश्चा—दपश्यन्न च पैत्रिकं ॥ ५५ ॥ ततो-
ऽर्थहीनस्तृणव—ल्लघुंमन्योऽत्र पत्तने ॥ ययौ देशांतरमसौ । द्रविणार्जनहेतवे ॥ ५६ ज्ञात्वोपयो-
गात्कर्मोप—देशव्याजादथ प्रभुः ॥ अधःस्थितनिधिं स्तंभं । दर्शयन् हस्तसंज्ञया ॥ ५७ ॥ व्याहा-
र्षीदयि संसार—स्वरूपं पश्य कीदृशं ॥ गृहमिदृग्भवद्भर्तु—र्वाणिज्यं तस्य तादृशं ॥ ५८ ॥ मु-
नीन्द्रश्चोपदिश्यैवं । धनेश्वर्यै मुहुर्मुहुः ॥ ययौ विहर्तुमन्यत्र । जिनधर्मं प्रभावयन् ॥५९॥ यथागत-

गतस्याख्य—धनदेवस्य तत्प्रिया ॥ धर्म्याः स्तंभं समुद्दिश्य । स्थूलभद्रकथास्तथा ॥ ६० ॥ व्यम-
र्शद्धनदेवोऽपि । स्तंभमुद्दिश्य देशनां ॥ चक्रे यद्भगवान्नून—मिह भाव्यो निधिस्ततः ॥ ६१ ॥
बुध्ध्वेति तत्क्षणात्तेन । स्तंभमूलमखन्यत ॥ निधिश्चाविरभूत्तत्र । कंदः पुण्यतरोरिव ॥ ६२ ॥ धन-
देवोऽभवत्तेन । धनेनातिधनेश्वरः ॥ स्थूलभद्रप्रसादोऽय—मिति च व्यस्मरन्न हि ॥ ६३ ॥ धनदेवो-
ऽन्यदा गत्वा । पाटलीपुत्रपत्तनं ॥ स्थूलभद्रमवंदिष्ट । तमूचे च कृतांजलिः ॥ ६४ ॥ त्वत्प्रसादेन
दारिद्र्य—समुद्रं तीर्णवानहं ॥ त्वं गुरुस्त्वं च मे स्वामी । तदादिश करोमि किं ॥ ६५ ॥ भूयास्त्व-
मार्हत इति । स्थूलभद्रस्य भाषितं ॥ धनदेवोऽभिगृह्याथ । स्वस्थानमगमत्पुनः ॥ ६६ ॥ स्थूलभ-
द्रोऽथ शिष्यौ द्वौ । महागिरिसुहस्तिनौ ॥ यक्षार्यापालितावेता—विस्यार्योपपदौ व्यधात् ॥ ६७ ॥
तौ स्थूलभद्रहेमाद्रि—सूर्यचंद्रमसाविव ॥ सांगानि दशपूर्वाणि । महाप्रज्ञावधीयतुः ॥ ६८ ॥ विश्व-
दर्शितया नेत्रे । बहुश्रुततया श्रुती ॥ जनोद्धारतया हस्तौ । तौ श्रुतस्य विरेजतुः ॥ ६९ ॥ तपो-
निधी तौ समधीतविद्यौ । शांतौ च दांतौ गुरुलब्धिमंतौ ॥ क्रमादथाचार्यपदे निवेश्य । श्रीस्थूल-
भद्रस्त्रिदिवं जगाम ॥७०॥ इति श्रीस्थूलभद्रकथा समाप्ता ॥ अथ दृढप्रहारिमुनिपरिदृढतामभिष्टौति—

॥ मूलम् ॥—छम्मासनिराहारो । तवसोसियघोरकम्मपब्भारो ॥ सिद्धिसुहं संपत्तो । दढप्पहा-
री महासत्तो ॥ ३५ ॥ व्याख्या—अस्याः पदार्थः स्पष्टः, व्यासार्थस्तु कथानकादवसेयः, तच्चैतत्—
पुरा सुसीमनि ग्रामे । भूतशर्माऽभवद् द्विजः ॥ तस्यासीत्कपिला विद्यु—दिव वारिमुचः प्रिया ॥१॥
छायार्कयोरिव शनि—स्तयोरजनि नंदनः ॥ पिंगलः कपिवत्क्रीडा—कंपिताखिलबालकः ॥ २ ॥ त-
द्दुःकर्मोपतप्ताभ्यां । पितृभ्यामयमन्यदा ॥ गृहान्निर्वासितश्चौर—पल्लीमेकां समासदत् ॥ ३ ॥ नृ-
शंसचरितैस्तैस्तै—रात्मनस्तुल्य इत्यसौ ॥ चौरसेनाधिपतिना । पुत्रत्वेनान्वमन्यत ॥ ४ ॥ चौरप-
ल्लीपतौ तस्मिन् । यातेऽथ यमधामनि ॥ तत्पुत्र इति चौरैस्त—त्पदेऽसौ विनिवेशितः ॥ ५ ॥ नि-
स्त्रिंशघातैरुद्दामै—र्गंडशैलानपि क्षिपन् ॥ असौ दृढप्रहारीति । नाम्ना निजगदे जनैः ॥ ६ ॥ अ-
न्यदा विश्वलुंटाकः । स लुंटाकचमूवृतः ॥ ग्रामं कुशस्थलं लुंटा—लंपटो लुंटितुं ययौ ॥ ७ ॥ ब्राह्म-
णो देवशर्मेति । तत्रासीत्तस्य मंदिरे ॥ धेनोर्नवप्रसूताया । राद्धं दुग्धेन पायसं ॥ ८ ॥ भाजनेषु
शिशूनां त—द्गेहिनी पर्यवेषयत् ॥ यावत्तावदमी चौरा—स्तत्रैव समुपाययुः ॥ ९ ॥ युग्मं ॥ चक्षु-
षुर्भग्नरूपाणां । भुंजतां भाजनानि ते ॥ तत्पायसं चखादुश्च । दुश्चरित्रा द्विका इव ॥ १० ॥ हृ-

दृष्ट्वेति भिन्नरूपाणि । विलपंति निशम्य च ॥ देवशर्मा क्रुधा घोरः । परिघेण जघान तान् ॥ ११ ॥ शस्यानीव खले तेन । कुट्यमानान् विलोक्य तान् ॥ त्रस्यतश्च स्थिरीकुर्वन् । प्राप चौरचमूपतिः ॥ ॥ १२ ॥ तत्रागत्यासिदंडेन । द्विजमुंडमखंडयत् ॥ तदस्रगंधविभ्रांता । त्रोटयामास दाम गाः ॥ ॥ १३ ॥ शृंगाग्रैरुल्लिखंती सा । दस्यून् पूत्कारभीषणा ॥ उल्ललाल खुरोदग्रा । पताकीकृत्य वालधिं ॥ १४ ॥ तामप्येषो महाक्रूरो । विश्वदौर्जन्यदुर्मदः ॥ द्विधा कृत्वासिघातेन । पातयामास पातकी ॥ १५ ॥ आः पाप निःकृप कृतं । किमेतदिति वादिनी ॥ वेलामासवती तेना-भ्यायांती ब्राह्मणी हता ॥ १६ ॥ ततो जरायुमध्यस्थं । तस्या गर्भं द्विधा कृतं ॥ विस्फुरंतमदैक्षिष्ट । स पापिष्ठशिरोमणिः ॥ १७ ॥ दृष्ट्वेति विह्वलस्यास्य । निस्त्रिंशो न्यपतत्करात् ॥ तन्मूलेव मनःस्थाने-ऽशुष्यन्निस्त्रिंशतापि सा ॥ १८ ॥ ततः प्रोद्भूतकारुण्य-परिवाहैरिवाश्रुभिः ॥ पूर्यमाणेक्षणः सोऽयं । चिंतयामासिवानिति ॥ १९ ॥ आस्तदेतन्मयाकारि । कुर्यान्न श्वपचोऽपि यत् ॥ दर्शयिष्ये च कस्याह-मदृष्टव्यमुखो मुखं ॥ २० ॥ अस्यैकस्यात्मजीवस्य । कृते किं किं कृतं मया ॥ इदं तु तत्कृतं यस्य । फलं दुर्गतिरप्यणु ॥ २१ ॥ सगोभ्रूणौ हतौ हंत । मयैतौ द्विजदंपती ॥ अमून्येतदपत्यानि ।

जीवंत्यपि हतानि हा ॥ २२ ॥ वराकाणाममीषां कः । पालको हा भविष्यति ॥ ममापि कः शर-
ण्यः स्याद् । घोरदुर्गतिपातिनः ॥ २३ ॥ ध्रुवमेतन्न मे कोऽपि । प्रायश्चित्तं प्रदास्यति ॥ ज्वलंतम-
ग्निमात्मीय–गेहे क्षिपति कः किल ॥ २४ ॥ ईदृग्पापकृतः प्रायः । प्रायश्चित्तं न मे भवेत्॥ श्वेति-
मा क्वापि जायेत । नीलीरक्तस्य वाससः ॥ २५ ॥ तदहं भैरवं पातं । करिष्यामि गिरेरतः ॥ श-
रीरं पापकारीति । खंडशो येन जायते ॥ २६ ॥ दृढप्रहारी सुदृढं । चिंतयन्निति यातवान् ॥ प्रत्या-
सन्नगिरौ तत्र । मुनीन् दृष्ट्वा ननाम च ॥ २७ ॥ धर्मलाभाशिषं दत्वा । समभाषंत तेऽपि तं ॥ प-
रिम्लानमुखो भद्र । भग्नमान इवासि किं ॥ २८ ॥ स तूवाचेत्यहं पापी । भाष्यमाणोऽपि पाप्मने
॥ मलिनः स्पृश्यमाणोऽपि । मलिनीकुरुते परं ॥ २९ ॥ येषामेकतममपि । श्वभ्रपाताय तान्यहं ॥
ब्रह्मस्त्रीभ्रूणगोघात—पातकान्यकृपोऽकृपं ॥ ३० ॥ मामीदृशमपि त्रातुं । साधवो यूयमर्हथ ॥ कि-
मपि स्थानमस्थानं । भानोर्भासयतो भुवः ॥ ३१ ॥ अथ ते यतयस्तस्मै । यतिधर्ममुपादिशन् ॥
सर्वपापक्षयोपाय–मखिलापायतायिनं ॥ ३२ ॥ भो भद्र कियदेवैत–दैहिकं तव पातकं ॥ तपसा ह-
न्यतेऽनंत–भवसंभृतमप्यदः ॥ ३३ ॥ नीचोऽपि क्रियते मूर्ध्नि । पात्रीभूय कृतव्रतः ॥ विषोढानलसं-

पर्कः । पंक एव निरूपणं ॥ ३४ ॥ तपः संपल्लतामूलं । प्रतिकूलं शुचां तपः ॥ तपो भवांबुधेः कूलं । कुकूलं कर्मणां तपः ॥ ३५ ॥ मनःक्षेत्रे शुभध्यान—कृषिर्मोक्षफला तदा ॥ एतदघतृणौघं चेत् । क्षेत्रज्ञो ननु निंदति ॥ ३६ ॥ इति श्रुत्वा श्रुतिसुधा—किरस्तेषामयं गिरः ॥ व्रतं निर्वृतिकामोऽथ । समादत्त समाहितः ॥ ३७ ॥ न भोक्ष्ये तत्र यत्राह्नि । स्मरिष्याम्यस्य पाप्मनः ॥ करिष्ये सर्वथा क्षांतिं । सोऽग्रहीदित्यभिग्रहौ ॥ ३८ ॥ पूर्वावस्कंदिते तस्मि—न्नेव ग्रामे कुशस्थले ॥ विवेकी विजहारात्म—कर्मक्षयचिकीरसौ ॥ ३९ ॥ स एवायं बकध्यानी । पापः पापीयसामपि ॥ इत्यभर्त्स्यत लोकेन । स तस्मिन् विहरन् मुनिः ॥ ४० ॥ ब्रह्मस्त्रीभ्रूणगोघात—पातकी बत कीदृशः ॥ निस्त्रपो दर्शयत्यास्य—मूर्ध्वस्फोटं न याति किं ॥ ४१ ॥ परतः स्फिट पापिष्ठ । व्रती केनासि निर्मितः ॥ डुष्यते व्रतमप्येत—त्करेणेव पयस्त्वया ॥ ४२ ॥ जल्पतेति जनेनोच्चैः । श्वेव लोष्टैरकुट्यत ॥ विशन् गृहेषु भिक्षार्थं । स ईर्यासमितो मुनिः ॥ ४३ ॥ विशेषकं ॥ स्मार्यमाणो जनेनेति । तत्पापमयमन्वहं ॥ शांतस्वांतो न भुंक्तेस्म । तादृशां किमु दुष्करं ॥ ४४ ॥ लेष्टुभिर्मुष्टिभिः पांशु—वृष्टिभिर्यष्टिभिर्जनाः ॥ यद्जघ्नुः सोऽधिसेहे तत् । सम्यक् चैवमभावयत् ॥ ४५ ॥

आत्मन् मा खेदमायासी—रमी कर्मप्रदीपनं ॥ शमयंतीति कुर्वाणा—स्त्वयि तेनोपकारिणः ॥४६॥ शापाभिचारमंत्रेण । कर्मदोषं तवोत्कटं ॥ अमी स्वयं निगृह्णंतः । किं न स्युरुपकारिणः ॥ ४७ ॥ दूये तु कर्मदोषोऽयं । मां विमुच्य कथंचन ॥ निःकारणोपकर्तृणा—ममीषां यल्लगिष्यति ॥ ४८ ॥ एवं मैत्रीपवित्रेण । हृदयामोदशालिना ॥ उपेक्षापक्षलेनांतः—करुणाशरणात्मना ॥ ४९ ॥ क्षुत्तृषालाभशीतोष्ण—वधाक्रोशपरीषहान् ॥ सहता तेन षण्मासी । दिनैकवदलंघ्यत ॥ ५० ॥ इत्थं तेन दृढप्रहारिमुनिना कर्मेंधचक्रे तपो—वह्निना भवभीतिशीतजनितात् त्रातुं स्वमुत्कंपतः ॥ लोकालोकतमोऽपहेन महसा तत्कालमुन्मीलता । दृष्टैवैष पुरो विमुक्तिवनितामाकृष्य रेजेऽपि च ॥ ॥ ५१ ॥ इति दृढप्रहारिकथा ॥ अथ स्कंदकाचार्यशिष्यचरित्रचित्रीयमाणचित्तः प्रवक्ति—

॥ मूलम् ॥—खंदगसीसेहिं तहा । पीलिज्जंतेहिं अहह जंतेहिं ॥ जं तेहिं पीलियाइं । नियकम्माइं तमच्छेरं ॥ ३६ ॥ व्याख्या—स्कंदकाचार्यशिष्यैस्तथा तेन प्रकारेण घोरेणेत्यर्थः, पीलिज्जंतेहिं पीड्यमानैः, अहहेत्यनेकार्थत्वात् तादृग्निरपराधमुनिविनाशविडंबनानुस्मरणात् खेदे अद्भुते च, वक्ष्यमाणमाह—जंतेहिं द्वितीयातृतीययोः सप्तमीति प्राकृतलक्षणात्, यंत्रेषु पीलनोपक-

रणेषु जंतेहिं यन्त्रैः पीलितानि पेषितानि नियकम्माइं निजानि च तानि कर्माणि च, तमन्देरं तदाश्चर्यं, अपि चोक्तमस्माभिः—कल्याणवर्णिकावृत्त्यै । गरीयान् जहजानरीन्॥ क्लिश्यमानोऽपि क्लिश्नाति । नागो धातूनिवाखिलान् ॥ १ ॥ इति संक्षेपार्थः, व्यासार्थस्तु कथानकादवसेयस्तच्चैतत्—

श्रावस्तीनाम भरत—भूमावस्तीह पूर्वरा ॥ जितशत्रुरिति ख्यात—स्तत्र धात्रीधवोऽभवत ॥ १ ॥ धारिणीति कलामाल—भारिणी तस्य वल्लभा ॥ तस्यां च स्कंदकः पुत्रः । पुरंदरयशाः सुता ॥२॥ कुंभकारकृताभिख्य—पुरद्रोणीभृता वृता ॥ राज्ञा दंडकिसंज्ञेन । नीता च परिणीय सा ॥ ३ ॥ एकदा पालको नाम । मंत्री दंडकिभूपतेः ॥ श्रावस्त्यामाययावात्म—राज्यकार्येण केनचित् ॥ ४ ॥ जितशत्रुमहीभर्तुः । प्रतीहारनिवेदितः ॥ स विवेश सदःसद्म । कासारमिव कासरः ॥ ५ ॥ तदा तु राजा सर्वज्ञो—पज्ञतत्वविशारदः ॥ आसीत् कुर्वन् समं सभ्यै—र्धर्माधर्मविचारणां ॥ ६ ॥ पालकः स तु चार्वाक—चातुरीं तत्र सूत्रयन् ॥ भिन्नजिह्व इवाकारि । स्कंदकेन निरुत्तरः ॥ ७ ॥ ततः सभाजनैः सर्वै—रपि गर्वस्य पाततः ॥ हसितो न्यग्मुखीभूय । विलक्षः स्वपुरं ययौ ॥ ८ ॥ श्रावस्त्यामन्यदा स्वामी । सुव्रतः समवासरत ॥ स्कंदकेन समं राजा—भ्येत्य तं प्रणनाम च ॥९॥

प्रणम्योचितभूपीठ—प्रतिष्टेषु नृपादिषु ॥ भगवान् भववैराग्य—जननीं देशनां व्यधात् ॥ १० ॥
श्रुत्वाथ भगवद्व्याख्यां । स्कंदको नृपनंदनः ॥ राजपुत्रैः समं पंच—शत्या व्रतमुपाददे ॥ ११ ॥
भगवानथ सद्भव्य—राजीराजीवभास्करः ॥ विजहार भुवं ग्राम—नगराकरमंडितां ॥ १२ ॥ तप्यमान-
स्तपस्तीव्र—मधीयानः श्रुतं महत् ॥ कालक्रमेण गणभृ—त्पदस्थः स्कंदकोऽभवत् ॥ १३ ॥ स राज-
पुत्रमुनिभि—स्तैरेव सह दीक्षितैः ॥ पंचशत्या वृतोऽदीपि । यूथाधिप इव द्विपः ॥ १४ ॥ अन्येद्युः
प्रतिबोधाय । पुरंदरयशःस्वसुः ॥ स्कंदको नाथमापृच्छत् । कुंभकारकृतं प्रति ॥ १५ ॥ स्वाम्यूचे व-
त्स भावी ते—ऽनर्थस्तत्र व्ययात्मकः ॥ त्वांविनाराधकाः सर्वे । भवितारश्च संयताः ॥ १६ ॥ यद-
मी साधकाः सर्वे । तदा प्राप्तं न किं मया ॥ चिंतयित्वेति चलितः । स्कंदकस्तत्पुरंप्रति ॥ १७ ॥
पालकस्तु समाकर्ण्य । समायांतं स्फुरत्तमाः ॥ आयुधानि न्यधाच्छन्नं । प्रासुकोद्यानभूमिषु ॥ १८ ॥
एत्य च स्कंदकाचार्यो । मुनिपंचशतीवृतः ॥ तत्रैव समवासार्षी—त्तं नंतुं चाययौ नृपः ॥ १९ ॥ श्रु-
त्वा तद्देशनां द्वीरा—श्रवलब्ध्यातिबंधुरां ॥ प्रशंसन् दंडकी राजा । प्रविवेश पुरं ततः ॥ २० ॥
याचित्वैकांतमेकांत—मत्सरी पालको नृपं ॥ जगाद स्कंदकोऽयं ते । राज्यार्थ्यस्ति समागतः ॥

॥ २१ ॥ अनेन सह योद्धारः । सर्वे पाखंडधारिणः ॥ शस्त्राणि गोपयित्वोर्व्यां । सर्वे त्वां हंतुमुद्यताः ॥ २२ ॥ सज्जनाकृतयः कुर्यु—र्दुर्जना जनयातनां ॥ हरेर्दंष्ट्रांकुराः किं न । निघ्नंतींदुकलाकलाः ॥ २३ ॥ प्रत्येषि यदि मे न त्वं । स्वयं तदवधारय ॥ संत्यायुधानि यद्येषां । तत्प्रमाणं वचो मम ॥ २४ ॥ श्रुत्वेति तद्गिरं राजा । शंकितस्तत्तथाकरोत् ॥ दृष्ट्वा च भुवि शस्त्राणि । कुप्यतिस्माविचारकः ॥ २५ ॥ ऊचे च पालकं साधु । साधु ज्ञातमिदं त्वया ॥ अतःपरं त्वमेवैतान् । निगृहाण यथारुचि ॥ २६ ॥ संसिद्धेप्सितमानी स । कीनास इव निर्घृणः ॥ मुनीनां पीलनायाथ । वने यंत्रमसूत्रयत् ॥ २७ ॥ प्रत्येकं पीलयामासा—तीवद्रुष्टो यतीनयं ॥ तेषां तु स्कंदकाचार्यः । पर्यंताराधनां व्यधात् ॥ २८ ॥ अथैकं क्षुल्लकं दृष्ट्वा । पर्यंताराधनोद्यतं ॥ जगाद स्कंदकाचार्यः । शिष्यवात्सल्यमोहितः ॥ २९ ॥ बालकस्यास्य पुरतो । यंत्रे मां क्षिप पालक ॥ यथात्मलोचनैरस्य । पश्यामि मरणं न हि ॥ ३० ॥ श्रुत्वेति पालकस्तस्य । विशेषार्तिकृते शठः ॥ तमेव क्षुल्लकं यंत्रे । क्षिप्त्वा पूर्वमपीलयत् ॥ ३१ ॥ यतीनां पील्यमानानां । कपालैः साकमत्रुटन् ॥ कर्माणि सर्वथा शुद्ध—भावनाभावितात्मनां ॥ ३२ ॥ संप्राप्य केवलालोकं । लोकंपृणगुणश्रियः ॥ ते सर्वेऽपि स-

दानंदं । महानंदं प्रपेदिरे ॥ ३३ ॥ अथोत्पन्नमहाकोपो । निदानं स्कंदकोऽकरोत् ॥ पालकेऽस्मि-
न् वधाय स्यां । दुष्टे राष्ट्रे च राजनि ॥ ३४ ॥ इत्थं कृतनिदानोऽसौ । सद्यो यंत्रातिथीकृतः ॥ स्कं-
दकस्तु विपद्याग्नि—कुमारेषूदपद्यत ॥ ३५ ॥ नयंत्यस्याविलं तस्य । रजोहरणमंबरे ॥ पुरंदरयशः-
सौधे । शकुनिः समपातयत् ॥ ३६ ॥ पुरंदरयशा वीक्ष्यो—पलक्ष्य च तदग्रतः ॥ रुरोद रोदयंती
सा । प्रासादं प्रतिनिःस्वनैः ॥ ३७ ॥ विलपंत्याह भर्तारं । हा पाप किमिदं कृतं ॥ रजोहरणमेत-
न्मे । बंधोस्तु किं हतस्त्वया ॥ ३८ ॥ त्वां विना तव संकेतं । विना चात्रैव पत्तने ॥ को हंति हंत
वैरीति । निरीहस्यास्य कः पुनः ॥ ३९ ॥ बहुधा विलपंतीति । रुदंती सातिदुःखतः ॥ सद्यो निहं-
तुमात्मानं । भूम्यां चास्फोटयच्छिरः ॥ ४० ॥ अत्रांतरे समागत्य । स्कंदकोऽग्निकुमारकः ॥ नीत्वा
सुव्रतपादांते । व्रतिनीं तामकारयत ॥ ४१ ॥ ततः सदेशं सपुरं च सप्रजं । सपालकं दंडकिनं प्र-
कोपवान् ॥ आच्छाद्य संवर्तकमारुताहृतैः । काष्ठैः स देवः कुरुतेस्म भस्मसात् ॥ ४२ ॥ इति स्कंद-
ककथा ॥ अथ गाथायुगेन चिलातीपुत्रचरित्रसद्भावमुद्भावयन्नाह—

॥ मूलम् ॥—सोणियगंधविणिग्गय-पिवीलिया वज्जकीलियाजव्व ॥ जस्स पविठा चलणेहिं

। णिग्गया सीसदेसंमि ॥ ३७ ॥ अहह महपावडुविलसि—याणमेयं कियत्ति चिंततो ॥ पत्तो चि· लाइपुत्तो । सुरलोअं निच्चउज्जोयं ॥ ३८ ॥ व्याख्या—शोणितगंधेन सिराप्रसरडुधिरपरिमलेन विनिर्गता निःसृताश्च ताः पिपीलिकाः कीटिकाश्च शोणितगंधविनिर्गतपिपीलिकाः कर्त्र्यः, का इव? वज्जकीलियाउव्व वज्रकीलिका इव, जस्स पविठा यस्य प्रविष्टाः, केषु? चलणेहिं चरणेषु, न केव- लं प्रविष्टाः किंतु निग्गया निर्गता निःसृताः, क? सीसदेसम्मि शीर्षस्य देशः प्रदेशस्तत्र ॥ ३७ ॥ यत्तदोर्नित्यसंबंध इति वाक्यात स चिलातीपुत्रः सुरलोकं देवलोकं नित्योद्योतं सततप्रकाशमानं पत्तो प्राप्तः, किं कुर्वन्? चिंततो चिंतयन्, किं? अहह इति खेदे, महपावडुविलसियाणमेयं कि· यत्ति मम पापडुर्विलसितानामेतत पिपीलिकोपसर्गवेदना तु कियत्? न कियदेवेति संक्षेपार्थः, व्यासार्थस्तु कथानकादवसेयस्तच्चैतत्—क्षितिप्रतिष्टितपुरे । यज्ञदेवो द्विजः पुरा ॥ विजित्य पंडि- तंमन्यो । रिपुणैकेन दीक्षितः ॥ १ ॥ ततः शासनदेव्यासौ । चित्ताह्लादकिरा गिरा ॥ दृढीकृतो व्र- ते विंध्या—नीतो गज इवानिशं ॥ २ ॥ ततः प्रभृति चारित्रं । विपुलं पालयन्नयं ॥ दीनः प्राची- नसंस्कारा—द्धीनदेहमलोऽभवत् ॥ ३ ॥ तस्य प्रियानुरागार्ति—मनुभ्रंत्यन्यदा पुनः ॥ वश्यो मेऽ·

स्त्विति मूढास्मै । पारणे कार्मणं ददौ ॥ ४ ॥ क्षीयमाणोऽमुना मृत्वा । स मुनिः स्वर्गमासदत् ॥
तत्प्रियाथ परिव्रज्य । तदनालोच्य देव्यभूत् ॥ ५ ॥ यज्ञदेवस्य जीवोऽथ । च्युत्वा राजगृहे पुरे ॥
धनसार्थपतेश्चेट्या—श्चिलात्यास्तनयोऽभवत् ॥ ६ ॥ यज्ञदेवप्रियाजीव—श्च्युत्वाऽनुसुतपंचकं ॥ भ-
द्राया धनभार्यायाः । सुसुमेति सुताजनि ॥ ७ ॥ धनो नियोजयामास । चिलातीतनयं च तं ॥
सुसुमायाः स्वडुहितुः । संक्रीडापनकर्मणि ॥ ८ ॥ शैशवे वर्तमानाम—प्यसौ प्राग्भवसंस्कृतः ॥
नीलीरागो बुभुजे तां । रोलंब इव मालतीं ॥ ९ ॥ तदन्यायरतो दासः । श्रेष्ठिना निरवासि सः॥
गवां स्तनान्यभिलिह—न्निव दूरेण कुक्कुरः ॥ १० ॥ सोऽथ सिंहगुहां चौर-पल्लीं गत्वा तदीशितुः
॥ पुत्रकोऽभूदपुत्रस्य । चौरमुख्यो बभूव च ॥ ११ ॥ यौवनं सुसुमाथाप—दसमा रूपसंपदा ॥ दू-
रस्थोऽपि स तां दध्यौ । मत्तेभ इव नर्मदां ॥ १२ ॥ चैलातेयोऽन्यदोचे स्वा—नस्ति राजगृहे पुरे
॥ अंतर्धनो धनः श्रेष्ठी । डुहिता चास्य सुसुमा ॥ १३ ॥ तस्करास्तत्र गच्छामो । धनं वः सुसुमा च
मे ॥ आस्थायेति व्यवस्थां सो—ऽपतद्धनगृहे निशि ॥ १४ ॥ कृत्वावस्वापिनीं विद्यां । चौरैर-
ग्राहयद्धनं ॥ ज्ञापयित्वा स्वमायातं । सुसुमां स्वयमग्रहीत् ॥ १५ ॥ हृदि स्मरास्त्रभिन्नेऽथ । स क्रु-

त्वा सुसुमौषधीं ॥ चैलातेयः पलायिष्ट । सलोप्त्रैः सह दस्युभिः ॥ १६ ॥ आहूयारक्षपुरुषान् । धनश्रेष्ठीत्यभाषत ॥ वित्तं वस्तस्करोपात्तं । समानयत मे सुतां ॥ १७ ॥ ततो धनः सहारक्षैः । पुत्रैश्चायुधपाणिभिः ॥ पुरोगस्त्वमनःस्पर्द्ध—येव त्वरितमन्वयात् ॥ १८ ॥ इतः पीतमितो भुक्त—मितः स्थितमितो गतं ॥ एवं वदद्भिः पदिकैः । स दस्यून् सममाययौ ॥ १ए ॥ हंहो हत हताह्वाय । गृह्णीतेति च भाषिणः ॥ मलिम्लुचानामभिल—ष्यारक्षपुरुषास्ततः ॥ २० ॥ काकनाशं ननाशुस्ते । हित्वा लोप्त्रं मलिम्लुचाः ॥ सुसुमां स तु नामुंचत् । पुरश्वेवाप्तपूपिकां ॥ २१ ॥ आरक्षपुरुषास्ते तु । तद्धनं प्राप्य पुष्कलं ॥ व्यावर्तंत कृतार्थो हि । सर्वः स्यादन्यथामतिः ॥ २२ ॥ कृपाणं पाणिनैकेन । द्वितीयेन च सुसुमां ॥ उद्वहन्नविशतपल्लीं । चिलातीतनयः पुनः ॥ २३ ॥ धनस्तु तदनु प्राप । सूनुभिः सह पंचभिः ॥ मोचयिष्यन् सुतां तस्मा—न्मृगीमिह मृगादिव ॥ २४ ॥ धने सविधमायाते । रागांधोऽथ मलिम्लुचः ॥ सारग्राही भवामीति । तत्क्षणोत्पन्नया धिया ॥ २५ ॥ शिरः प्रधानं गात्रस्ये—त्युत्कृत्यादत्त तन्मुखं ॥ वीक्षमाणस्तनस्तूर्णं । पलायिष्ट प्लवंगवत् ॥ २६ ॥ युग्मं ॥ सुसुमायाः कबंधस्यां—तिके स्थित्वा रुदन् धनः ॥ वारीव बाष्पदंभेन । नयनांजलिभिर्ददौ ॥ २७ ॥

तच्च संस्कार्य तत्रैव । पुरे गत्वोर्ध्वदेहिकं ॥ कृत्वा कर्मातदं वीर—पादांते व्रतमग्रहीत् ॥ २८ ॥
चैलातेयोऽपि संताप—हरं छायातरुं यथा ॥ मुनिमेकं ददर्शाग्रे । कायोत्सर्गस्थितं पथि ॥ २९ ॥
स स्वेनः कर्मणा तेन । किंचिदुद्विग्नमानसः ॥ तमुवाच समाख्याहि । धर्मं संक्षेपतो मम ॥ ३० ॥
अन्यथा सुसुमाशीर्ष—छेदोत्कर्षव्रतासिना ॥ शिरस्ते पातयिष्यामि । फलं तालतरोरिव ॥ ३१ ॥ स
ज्ञानान्मुनिरज्ञासिद् । बोधबीजमिहाहितं ॥ सरजस्केऽपि सत्क्षेत्र—इव स्फातिं गमिष्यति ॥ ३२ ॥
विधेह्युपशमं छेक । विवेकमथ संवरं ॥ इत्युक्त्वा स मुनिर्व्योम्न्यु—त्पपात द्रुतमेव च ॥ ३३ ॥ प-
दानि मंत्रवत्तानि । परिवर्तयतस्ततः ॥ जज्ञे चिलातीपुत्रस्य । पदार्थोल्लेख ईदृशः ॥ ३४ ॥ भवेदुप-
शमः क्रोधे । क्षयमीयुषि तत्करे ॥ तन्मूलं शस्त्रमेतन्मे । तत्त्याज्यमिति सोऽत्यजत् ॥ ३५ ॥ भ-
वेद्विवेको रागस्य । विलये तत्करेऽस्ति मे ॥ तत्त्याज्यमंगनावक्त्र—मिति तच्चापि सोऽमुचत् ॥
॥ ३६ ॥ भवेच्च संवरः सर्वें—द्रियाणामिह संवृतौ ॥ सा तु योगनिरोधे स्या—दित्युत्सर्गेण स
स्थितः ॥ ३७ ॥ ततोऽस्य विश्रगंधास्त्र—मिश्रे वपुषि कीटकाः ॥ रंध्राणि पापनिस्सार—द्वाराणीव
वितेनिरे ॥ ३८ ॥ सकीटिकः क्षीणविकर्मसेना—जयप्रशस्तिं परितो दधानः ॥ चारित्रभूपालपवि-

त्रकीर्ति-स्तंभो यथाराजत सुप्रतिष्टः ॥ ३९ ॥ दत्वा सुरंगा इव कीटिकाभिः । कृष्टश्चिलातीतनयस्य जीवः ॥ पुरांतरायुर्विघ्नोऽपि सार्धा—होरात्रयुग्मेन ययावथ द्यां ॥ ४० ॥ इति चिलातीपुत्रकथा ॥ अथावंतीसुकुमालमुत्तालभक्तिभरसिद्धांजनोज्जृंभमाणांतश्चक्षुषा पुरःस्थमिव पश्यन्नाह—

॥ मूलम् ॥—जं डुठसिगालीए । ववसीअमसमंजसं तए सहियं ॥ तं मह सुअंपि सामिय । अवंतिसुकुमाल भयजणयं ॥ ३९ ॥ व्याख्या—हे स्वामिन्नवंतीसुकुमाल जं दुठसिगालीए ववसियं यद्दुष्टश्रृगाल्या क्षुधा परिक्षीणतया निष्करुणफेरंडया व्यवसितं कृतं तवांगोपांगभक्षणमिति भावः, किंविशिष्टं? असमंजसमरीतिकं, श्रृगाला हि जीवतो वपुषि न लगंतीत्यमीषां नीतिः, तया तु जीवतोऽपि तव वपुस्त्रोटितमित्यसमंजसं, तए सहियं त्वया सहितं मर्षितं, तं मह सुयंपि तन्मम श्रुतमप्याकर्णितमपि भयजणयं भयजनकमातंकहेतुरित्यक्षरार्थः, व्यासार्थस्तु कथानकादवसेयस्तच्चै-तत्—अस्त्यवंतीषु विख्याता—ज्जयिनीति पुरी वरा ॥ पुरंदरपुरोदार—संपदुज्जयिनी श्रिया ॥१॥ त्रिखंडभोक्ता भंक्तारि-भूविभ्रमभुजोष्मणः ॥ संप्रतिस्तत्र नाम्नाभू—द्गुणैरप्रतिमो नृपः ॥ २ ॥ इ-भ्यपुत्रोऽभवत्तत्र । सुत्रामसुतसन्निभः ॥ अवंतीसुकुमालाख्यः । सुकुमालः प्रसूनवत् ॥ ३ ॥ यस्य

कोटिध्वजभार्यायाः । कामं मायामशिश्रयन् ॥ वेश्मनि द्रविणद्रोह-रक्षादक्षाहिसंततेः ॥ ४ ॥ भा-
ग्यलक्ष्मीरिवामुष्य । प्राचीनभवसंभवा ॥ माता भद्रेति सर्वाणि । गृहकार्याण्यचिंतयत् ॥ ५ ॥ स्व-
देहलक्षणश्रीभि-रिव मूर्ताभिरेष तु ॥ द्वात्रिंशता स्त्रीभिः प्रेम-वतीभिः सुखमन्वभूत् ॥ ६ ॥
सूरिरार्यसुहस्त्यागा-दन्यदा तत्र पत्तने ॥ जीवंतस्वामिनं नंतुं । मुनिपंचशतीयुतः ॥ ७ ॥ बाह्यो-
द्याने च भगवान् । सुहस्ती समवासरत् ॥ मध्ये पुरि च स प्रैषी-द्वसतिं याचितुं मुनी ॥ ८ ॥ तौ
तु भद्राभिधानायाः । श्रेष्ठिन्या जग्मतुर्गृहे ॥ पप्रच्छ सापि तौ नत्वा । किं नामादिशतां युवां ॥
॥ ९ ॥ तावप्यूचतुरावां हि । शिष्यावार्यसुहस्तिनः ॥ तदादेशेन कल्याणि । वसतिं प्रार्थयावहे ॥
॥ १० ॥ अथैकां सार्पयामास । वसत्यै विकटां कुटिं ॥ चारित्रनृपहस्तीति । सुहस्ती तामशिश्रयत्
॥ ११ ॥ परावर्तितुमारेभे । स्वाध्यायसमयेऽन्यदा ॥ आचार्यैर्नलिनीगुल्मा-भिधमध्ययनं निशि ॥
॥ १२ ॥ वधूभिः सह भद्रेयः । सप्तभूमगृहोपरि ॥ क्रीडंस्तदा ददौ कर्णं । तत्र कर्णरसायने ॥
॥ १३ ॥ अवंतीसुकुमालस्तत् । श्रुत्वा गीतमिवोत्सुकः ॥ कस्तूरिकामृगः सूरि-वसतिद्वारमाययौ
॥ १४ ॥ अनुभूतं मया क्वेद-मिति चिंतापरः स तु ॥ जातजातिस्मृतिज्ञानो । ययावाचार्यसन्निधौ

॥ १५ ॥ नत्वा चोवाच भगवन् । भद्रायास्तनयोऽस्म्यहं ॥ पुरा च नलिनीगुल्म—विमाने त्रिद·
शोऽभवं ॥ १६ ॥ कदाचिद्यूयमप्यत्र । तस्मादेव समागताः ॥ जानीथ नलिनीगुल्मे—तिवृत्तं कथ-
मन्यथा ॥ १७ ॥ सूरिरूचे महाभाग । न तस्माद्वयमागताः ॥ लोकालोकः समग्रोऽपि । साक्षात्
स्वाध्यायिनां पुनः ॥ १८ ॥ श्रुत्वेत्युवाच भाद्रेयो । यदीदं ब्रूत तत्प्रभो ॥ विमानं नलिनीगुल्मं ।
पथा केन प्रयाम्यहं ॥ १९ ॥ सूरिराह व्रतं वत्सो—पात्तमेकदिनेऽपि हि ॥ अनन्यमनसो मोक्षं ।
न चेद्दत्ते दिवं ध्रुवं ॥ २० ॥ सोऽप्याह नलिनीगुल्मं । जातिस्मृत्याहमस्मरं ॥ तत्रैव गंतुं भूयोऽपि
। परिविव्रजिषाम्यतः ॥ २१ ॥ प्रव्राजयत मामेव—मर्थयत्तममुं गुरुः ॥ जगादेदं वरं किंतु । सुकु·
मालोऽसि बालक ॥ २२ ॥ सुचर्व्या लोहचणकाः । सुपेया वह्निहेतयः ॥ दुष्करं तु जिनोपज्ञ—
मतीचारोज्झितं व्रतं ॥ २३ ॥ भाद्रेयोऽभिदधे भूम्नो । प्रव्रज्योत्कंठितोऽस्म्यहं ॥ सामाचारीं चिरं का-
लं । न च पालयितुं क्षमः ॥ २४ ॥ आदावेव परिव्रज्यां । तस्मादनशनान्वितां ॥ आदास्ये सत्व-
मालंब्य । स्तोकखेदमिदं खलु ॥ २५ ॥ गुरुरूचे महाभाग । जिघृक्षसि यदि व्रतं ॥ अनुज्ञापय
तद्बंधू—नंधूनिर्बांधकारिणः ॥ २६ ॥ सोऽप्याह किमनुज्ञातै—रेतैर्विघ्नविधायिभिः ॥ एष व्रती भ-

वन्नसी—त्युच्चखान शिरोरुहान् ॥ २७ ॥ स्वेनैवोपात्तलिंगोऽसौ । माभूदिति सुहस्त्यपि ॥ तं परि-
व्राजयामास । प्रव्रज्याविधिमुच्चरन्न ॥ २८ ॥

चिरकालं तपःकष्ट-निर्जरां कर्तुमक्षमः ॥ गुरूनापृच्छ्य सोऽन्यत्र । ययावनशनंचिकीः ॥२९॥ अवंतीसुकुमालस्य । पदयोः सुकुमारयोः ॥ कर्करघृष्टयो रक्त—धारा प्रादुरभूत्तदा ॥३०॥ शृगाला-कृष्टकंकाल—मृदंगरवभंबरं ॥ नृत्यद्वेतालमुत्ताल—शिवारुदितगीतिकं ॥ ३१ ॥ प्रतिस्थानं चिताव-ह्नि-ज्वालापल्लवितं ततः ॥ सोऽगात्पितृवनं क्रीडा-वनं पितृपतेरिव ॥ ३२ ॥ युग्मं ॥ कंथारिकाकु-ड्मंगांत-स्तस्थावनशनेन सः ॥ समाहितः स्मरन् पंच-परमेष्ठिनमस्कृतिं ॥ ३३ ॥ तत्पदान्यस्रविश्राणि । लिहंती सह बालकैः ॥ शृगाली कापि तत्रागा-त्तत्कुड्मंगं विवेश च ॥ ३४ ॥ शोधयंती च सा प्राप । तत्पदं चासृगास्पदं ॥ तं च खादितुमारेभे । कृतांतस्येव किंकरा ॥ ३५ ॥ त्रोटं त्रोटं पलं पायं । पायं रुधिरमंतरा ॥ भंजं भंजमस्थ्यश्रांत्या । चादत्सा कर्कटीमिव ॥ ३६ ॥ तस्यैकं भक्षयंती सा । पदं च निरशेषयत् ॥ तड्डिंभरूपाण्यपरं । प्रथमे प्रहरे निशः ॥ ३७ ॥ तथापि न चकंपे स । दध्यौ प्रत्युत सात्विकः ॥ शरीरं जीव कारान्नं । भज्यते यदि भज्यतां ॥ ३८ ॥ एवं द्वितीययामे

त—दूरू क्रुरा चखाद सा॥ जीवोऽयं क्षुधितस्तृप्य—त्विति चक्रे कृपां स तु ॥ ३९ ॥ तत्तुंदं भक्षया-
मास । तृतीये प्रहरे च सा ॥ स तु दध्यौ तुदत्यंहो—वृंदं तुंदमियं न मे ॥ ४० ॥ यामे तुर्ये च
यामिन्या । महासत्वो विपद्य सः ॥ विमाने नलिनीगुल्मे । महर्द्धिरमरोऽभवत् ॥ ४१ ॥ महाव्रती
महापुण्यो । महासत्वोऽयमित्यथ ॥ तत्कालजूमौ तत्कालं । विदधे महिमामरैः ॥ ४२ ॥ तत्प्रिया-
स्तमपश्यंत्यः । पृच्छंतिस्म सुहस्तिनं ॥ आख्याहि भगवन्नस्म—त्पतिः कथमभूदिति ॥ ४३ ॥ उप-
योगेन विज्ञाय । सुहस्त्यपि च तत्तथा ॥ तद्वृत्तं सर्वमाचख्यौ । ताभ्यो मधुकिरा गिरा ॥ ४४ ॥
अवंतीसुकुमालस्य । वध्वो गत्वाथ धामनि ॥ भद्रायाः पुरतः सर्वं । तं वृत्तांतं न्यवीवदन् ॥ ४५ ॥
वज्रपातोपमं भद्रा । तं निशम्य निशात्यये ॥ स्मशाने प्रययौ तत्र । कंथारिवनभारिते ॥ ४६ ॥
आकृष्टं दिशि पूर्वस्यां । दृष्ट्वा सूनोः कलेवरं ॥ रुरोद सवधूकापि । भद्रेति विललाप च ॥ ४७ ॥
हा वत्स यदि वैराग्या—दस्मांस्तृणवदत्यजः ॥ शरीरं तत्किमत्याक्षी—र्यदाद्यं धर्मसाधनं ॥ ४८ ॥
हा वत्स दीक्षितोऽपि त्व—मेकस्मिन्नपि वासरे ॥ किं नालमकृथाः स्वस्य । विहारेण गृहांगणं ॥
॥ ४९ ॥ हा वत्स शयने पुष्प—पतपीडाऽसहिष्णु ते ॥ वपुः कथं विषेहेऽदः । क्रोष्ट्रीदशनदार-

णं ॥ ५० ॥ हा वत्स यदि निर्मोह—स्त्वमत्याक्षीः कुटुंबकं ॥ तद्गुरुष्वपि निर्मोहः । किमन्भूस्ते यदुज्झिताः ॥ ५१ ॥ हा वत्स रात्रिः कल्याणी । का भविष्यत्यतः परं ॥ स्वप्ने या दर्शयित्वा त्वा—मस्मान् संजीवयिष्यति ॥ ५२ ॥ अनेकशो विलप्येति । भद्रा सिप्रानदीतटे ॥ तस्योर्ध्वदेहिकं चक्रे । रुदंती समयोचितं ॥ ५३ ॥ भद्रासूनोर्गृहिण्योऽपि । विलप्य च विलप्य च ॥ सिप्रायां चक्रिरे शंखो—द्धरणं क्लिन्नवाससः ॥ ५४ ॥ सुतमृत्युसमुद्भूत—शोकानलकरालिता ॥ भद्रा तदैव्रतप्रव्रज्यां । शमामृततरंगिणीं ॥ ५५ ॥ समेत्य सदने साथ । मुक्त्वैकां गुर्विणीं वधूं ॥ सवधूका परिव्रज्य । व्यहरद्गुरुभिः समं ॥ ५६ ॥ गुर्विण्यास्तनुभूः क्रमाच्च जनतः श्रुत्वेति यन्मे पिता । चक्रे कालमहो महंतमिह तन्मूर्त्या सनाथं ततः ॥ प्रासादं तटिनीतटेऽतिविकटं निर्मापयामासिवा—नद्याप्यस्ति स विश्रुतः किल महाकालाख्ययावंतिषु ॥ ५७ ॥ इत्यवंतिसुकुमालकथा ॥ अथ सुकोशलमुनेर्वधपरीषहसहनकौशलकलाकिसलयेनात्मवाणीं वसंतयन्नाह—

॥ मूलम् ॥—जणणी जाया वाघी । तीए तह दारिज्जवि मुणिवसहो ॥ अहियासिंतो अहिअं । सुकोसलो निव्वुइं पत्तो ॥ ४० ॥ व्याख्या—जननी माता व्याघ्री सिंही जाता, तया तथा

तेन प्रकारेण दारुणेनेत्यर्थः, दारितोऽपि खंडशः कृतोऽपि मुणिवसहो मुनिवृषभः, मुनिषु प्रतिपन्न-परिषहोपसर्गनिर्वहनतया वृषभो धवलः स तथा यद्वा मुनिश्रेष्टः सुकोसलो सुकोशलनामा निव्वुइं पत्तो निर्वृतिं सुखं प्राप्तः, यः किल विदार्यते स कथं सुखमाप्नोति ? इति व्यतिरेकोऽयं, अन्वय-स्तु निर्वृतिं निर्वाणं प्राप्तः, किं कुर्वाणः ? अहियासंतो अधिसहमानः, किं तत् ? अहियं अहितं वपुर्विदारणस्वरूपं, यद्वा अधिकं. सह कलेवर खेदमचिंतयन् । स्ववशतापि पुनस्तव दुर्लभा ॥ चि-रतरं च सहिष्यसि जीव हे । परवशो न च तत्र गुणोऽस्ति ते ॥१॥ इति भावनातिरिक्तं यथा भव-तीति संक्षेपार्थः, व्यासार्थस्तु कथानकादवसेयस्तच्चैतत्—अस्ति श्रीदत्तसंकेतं। साकेतमिति पत्तनं ॥ तत्रासीदिंदुविशद—कीर्तिः कीर्तिधरो नृपः ॥ १ ॥ सहदेव्या महादेव्या । सह वैषयिकं सुखं ॥ अनन्यहृदयोऽभुंक्त । हृषीकेशः श्रियेव सः ॥ २ ॥ कालक्रमेण तनयः । सहदेव्या सु कोशलः ॥ असूयत सुधांभोधि—वेलयेव निशाकरः ॥ ३ ॥ अथान्यबंदिनोऽभावा—दात्मानं भवचारकात् ॥ मोचयिष्यन्नृपस्तत्र । मुदितः पुत्रजन्मनि ॥ ४ ॥ मोक्षार्थकुशलो बाल—मपि राज्ये सुकोशलं ॥ विन्यस्य विजयाचार्य—पादांते व्रतमग्रहीत् ॥ ५ ॥ युग्मं ॥ धात्रीभिः पंचभिः पाल्य-मानो वृद्धिं

सुकोशलः ॥ भेजे समितिभिर्धर्मो-ऽनिशं कीर्तिधरस्य तु ॥ ६ ॥ सुकोशलः क्रमेणाप । वर्धमानः स यौवनं ॥ मुनिः कीर्तिधरो गुर्व—नुज्ञया तु ययौ वनं ॥ ७ ॥ उद्योगवान् रिपून् जिग्ये । बहिरंगान् सुकोशलः ॥ मुनिः कीर्तिधरस्तूच्चै—रंतरंगान्निरंतरं ॥ ८ ॥ एको गुणान् परो जीव—निकायान् षडपालयत् ॥ उपायांश्चतुरश्चैकः । सध्यानांशान् परोऽश्रयत् ॥ ९ ॥ एकः शक्तित्रयं चान्यो । गुप्तित्रयमपालयत् ॥ राज्यचिह्नान्यधादेको—ऽपरः पंचव्रतानि च ॥ १० ॥ साकेतनगरे मासो—पवासी पारणेच्छया ॥ भिक्षार्थमाजगामासौ । मध्याह्ने तत्र चाभ्रमत् ॥११॥ सहदेवी गवाक्षस्था । तं च दृष्ट्वेत्यचिंतयत् ॥ पत्यौ प्रव्रजितेऽमुष्मिन् । पतिहीना पुराभवं ॥ १२ ॥ सुकोशलोऽपि दृष्ट्वैनं । दैवतः प्रव्रजेद्यदि ॥ गतनीव्यास्तदा मेऽद्य । भुवि हस्तावुभावपि ॥ १३ ॥ तस्मान्निरपराधोऽपि । भर्तापि व्रतधार्यपि ॥ राज्यस्थेमकृते सूनो—र्निर्वास्योऽयं पुरान्मया ॥ १४ ॥ इत्यन्यलिंगिभिः सार्धं । राज्ञी तं निरवासयत् ॥ किमिव नूनं कुर्वीत । नाकृत्यं जंतुरात्मने ॥ १५ ॥ धात्री सुकोशलस्याथ । स्वामिनं व्रतधारिणं ॥ पुरान्निर्वासितं मत्वा । रोदितिस्म दिवानिशं ॥ १६ ॥ सुकोशलोऽथ तामूचे । मातः किमिति रोदिषि ॥ सापीति कथयामास । तस्मै गद्गदया गिरा ॥१७॥

राज्ये त्वां बालकं न्यस्य । तव कीर्तिधरः पिता ॥ प्राव्राजीदद्य सोऽविक्ष—ज्ञिक्षार्थमिह पत्तने ॥ ॥ १८ ॥ तद्दर्शनात्तवाप्यद्य । व्रतग्रहणशंकया ॥ निर्वासितः स ते मात्रा । दुःखेनानेन रोदिमि ॥ ॥ १९ ॥ श्रुत्वा सुकोशलोऽप्येत—द्गत्वा च पितुरंतिके ॥ प्रणम्य प्रांजली राज्य—विरक्तोऽयाचत व्रतं ॥ २० ॥ तत्प्रिया चित्रमालाथ । गुर्व्यस्य सह मंत्रिभिः ॥ उवाचास्वामिकं स्वामि—न्न राज्यं त्यक्तुमर्हसि ॥ २१ ॥ नृपोऽप्युवाच गर्भस्थ—गोपताविह नंदने ॥ त्यक्तराज्यः प्रव्रज्यामि । तच्च मे ह्युचितं किल ॥ २२ ॥ इत्युक्त्वामात्यसात्कृत्वा । राज्यं स्वपितुरंतिके ॥ सुकोशलः प्रवव्राज । कुशलो धर्मकर्मसु ॥ २३ ॥ तप्यमानस्तपस्तीव्रं । सहमानः परीषहान् ॥ महीतले महर्षी तौ । पितापुत्रौ विजह्तुः ॥ २४ ॥ तनुजस्य वियोगेन । खेदत्वाक् सहदेव्यपि ॥ आर्तध्यानपरा मृत्वा । व्याघ्रभूद्गिरिगह्वरे ॥ २५ ॥

इतश्च तावपि मुनी । कुत्रापि गिरिकंदरे ॥ स्थितौ वर्षाचतुर्मासी—मासीनौ ध्यानवर्त्मनि ॥ ॥ २६ ॥ प्रावृडंते प्रयांतौ तौ । पारणाय महामुनी ॥ दृष्टौ मार्गे तया व्याघ्र्या । कालरात्र्येव घोरया ॥ २७ ॥ व्यात्तवक्त्रांतरा लोल—जिह्वासौ दीप्रलोचना ॥ घुर्घुरामुखरा घ्नंती । पुच्छेनोर्वीमधावत

॥ २८ ॥ एतस्यामापतंत्यां ता—वतिमात्रक्षमाधरौ ॥ क्षमाधरौ यथास्थातां । कायोत्सर्गेण निश्चलौ ॥२९॥ सा तु व्याघ्री समुत्प्लुत्य । पपातादौ सुकोशले ॥ दूरापातप्रहारेण । पृथ्व्यां च तमपातयत् ॥ ३० ॥ दारं दारं वपुस्तस्य । रक्तं पापा पपावियं ॥ त्रोटं त्रोटं पलं चाश्ना—दुद्भंजं भंजमथास्थ्यपि ॥ ॥ ३१ ॥ मर्माणि न हि कर्माणि । सहायेयं भिनत्ति मे ॥ इति भेजे मुदं मम्लौ । स मुनिर्न मनागपि ॥ ३२ ॥ व्याघ्र्येति भक्ष्यमाणोऽपि । शुक्लध्यानपरायणः ॥ उत्पन्नकेवलो मोक्षं । सुकोशलमुनिर्ययौ ॥ ३३ ॥ मुनिः कीर्तिधरोऽप्युच्चै—स्तदा व्याघ्रीभयादिव ॥ क्षपकश्रेणिमारूढः । केवलज्ञानमासदत् ॥ ३४ ॥ सापि व्याघ्री तदंगानि । खादंखादमशेषतः ॥ तृप्ता सुकोशलस्यास्यं । विलोक्येदमचिंतयत ॥ ३५ ॥

ईदृग्मुखं मया क्वापि । विलोकितचिरं किल ॥ इत्यूहापोहतो जाति—स्मृतिं शिश्राय सा क्षणात् ॥ ३६ ॥ अहं पूर्वभवे कीर्ति—धरस्य पृथिवीभृतः ॥ सहदेवीति कांतासं । मम पुत्रः सुकोशलः ॥ ३७ ॥ तौ व्रतं प्रतिपेदाते । तद्वियोगादहं पुनः ॥ आर्तध्यानाद्विपद्यास्मि । जाता व्याघ्री वनांतरे ॥ ३८ ॥ तदिदं मुखमेतद्धि । सुकोशलमुखोपमं ॥ आः स्वपुत्रो मया प्राज्य—पाप-

या मारितः स्वयं ॥ ३९ ॥ अयं कीर्तिधरः साधु-र्यो मया मंदभाग्यया ॥ पारणायै भ्रमन् भिक्षां ।
नगरान्निरवास्यत ॥ ४० ॥ अधिकाधिकपापिष्ठां । धिग्धिग्मां पूर्वजन्मतः ॥ धन्यावेतौ पितापुत्रौ ।
पुनः सत्कर्मनिर्मलौ ॥ ४१ ॥ अधमा पापिनी दुष्टा । तदहं करवाणि किं ॥ पतामि पर्वताद्येन ।
प्रयामि विशरारुतां ॥ ४२ ॥ विशामि ज्वलति क्वापि । यद्वा दवहुताशने ॥ भस्मीभवामि येनेति ।
चिंतयंती लुलोठ सा ॥ ४३ ॥ चक्रंद दीनवदना । स्वनखैर्विलिलेख च ॥ दंतैः पाणी चखादोच्चैः ।
क्षितावास्फोटयच्छिरः ॥ ४४ ॥ अथाह केवली कीर्ति-धरस्तां करुणापरः ॥ शुभे संसारललित-
मीदृगेव शरीरिणां ॥ ४५ ॥ अविचारितरम्योऽयं । भवोऽनर्थपदं पुरः ॥ तृष्णा तस्यापि चूलेयं ।
देवासुरविडंबिनी ॥ ४६ ॥ जंतवोऽपशवोऽप्येत-द्वशाः स्युरविवेकिनः ॥ पशुजन्मनि जातायाः ।
शुभे तव किमुच्यते ॥ ४७ ॥ यत्त्वं चिंतयसे पातं । गिरेर्वह्नौ प्रवेशनं ॥ तन्न भद्रे समीचीनं ।
धर्मध्यानं तु संश्रय ॥ ४८ ॥ दानशीलतपोभाव-भेदैस्तच्च चतुर्विधं ॥ पशोस्ते तु तपःशील-
भावैस्त्रेधं विशुद्धिदं ॥ ४९ ॥ तत्रापि भावनाशुद्धं । तप एवाघमर्षणं ॥ यदाराध्य दिवं प्रापुः । पं-
चापातकिनोऽपि हि ॥ ५० ॥ श्रुत्वा कीर्तिधरादिति व्यतिकरं धर्मस्य निर्माय च । व्याघ्री सानश-

नं विपद्य च पदं वैमानिकानामगात् ॥ राजर्षिः स तु धर्षितांतररिपुस्तत्रैव शैले स्थितः । शैलेशीकरणं विधाय करणं मुक्त्वा च मुक्तिं ययौ ॥ ५१ ॥ इति सुकोशलमुनिकथा ॥ अथ तद्गुणानुध्यानरसैकतानमानसतया पुरो दृष्ट्वेवानुत्तरविमानमणिकिंकिणीकणनलयपरायणं शालिभद्रमुल्लिङ्यन्नाह—

॥ मूलम् ॥—तह सुकुमालो तह भोग—लालसो सालिभद्द कहणु तुमं ॥ दुद्धरं नियमधुरं । पडिवन्नो नमिऊण वीरजिणं ॥ ४१ ॥ व्याख्या—हे शालिभद्र! कहणु तुमं न्विति वितर्के, कथं त्वं दुर्धरां नियमधुरां दुर्वहाभिग्रहधुरां पादपोपगमानशनरूपां पडिवन्नो प्रतिपन्नः, किं कृत्वा? नमिऊण वीरजिणं वीरजिनमपश्चिमतीर्थनाथं नत्वा, तदाज्ञामादायेति भावः. किंविशिष्टस्त्वं? तह सुकुमालो तथा तेन प्रकारेण सुकुमारो यथा महाराजश्रेणिकस्यापि वपुरुष्मणा त्वं व्यथां प्राप्तः, तह भोगलालसो तथा तेन प्रकारेण भोगा विषयास्तेषु लालसो लंपटः, यथा साक्षादात्मवपुर्लक्षणलक्ष्मीभिरिव द्वात्रिंशतावधूभिरसूर्यंपश्याभिः सह सुरलोकादागतं गंधमाल्यवसनमंडनाशनरसमनुदिवसमवशमानसस्त्वं विलसन्नात्मनः स्वामिसत्तामपि नाज्ञासीरिति संक्षेपार्थः, व्यासार्थस्तु कथान-

कादवसेयस्तच्चैतत्—अस्ति राजगृहं हस्ति-विराजद्गोपुरं पुरं ॥ धराहारसमाकार—प्राकारपरिवारितं ॥ १ ॥ चतुरंगरणक्रीडा—स्वजेयो द्यूतकारवत् ॥ वशीभूताद्यचारोऽत्र । नृपः श्रेणिक इत्यभूत् ॥ २ ॥ प्रिया तस्य प्रियालाप-चणाभूच्चिल्लणाभिधा ॥ यस्या मुखस्य खंभात्र-मचंमद्युतिमंमलं ॥ ३ ॥ पुरे तत्र सुरेंद्रस्य । कोशागारिकवैभवः ॥ पुण्यैः षट्खंडगोभद्रः । श्रेष्ठी गोभद्र इत्यभूत् ॥ ॥ ४ ॥ गेहिनी गेहिनीतिज्ञा । तस्य श्रीरिव जंगमा ॥ निष्कलंकमहाशील—भद्रा भद्राभिधाभवत् ॥ ५ ॥ शालिक्षेत्रमहास्वप्न—सूचितं गर्भमन्यदा ॥ बिभरामास सा रत्नं । रत्नभूधरभूरिव ॥६॥ उद्दामदानसद्धर्म-मतिसंदोहदानथ ॥ दोहदान् भद्रधीरस्या । गोभद्रः पर्यपूरयत् ॥ ७ ॥ पूर्णे काले ततः पुत्रः । पूर्णेंदुरिव पूर्वया ॥ तयासूयत सुश्रेष्टं । श्रेष्ठी जन्मोत्सवं व्यधात् ॥ ८ ॥ दृष्टस्वप्नानुसारेण । चक्रतुः पितरावथ ॥ सूनोः श्रीशालिनः शालि-भद्र इत्यभिधां ततः ॥ ९ ॥ धारणाभिर्यथा ध्यानं । तपः समितिभिर्यथा ॥ ववृधे पाल्यमानोऽसौ । धात्रीभिरथ पंचभिः ॥ १० ॥ स पंचवर्षदेशीयो-ऽध्यापकानां समर्पितः ॥ सिंधोराप इवागस्त्यो । निःपपौ सकलाः कलाः ॥ ११ ॥ अनंगीकृत्य पंचेषुं । तदंगेनेव निर्मितः ॥ स प्राप यौवनं स्त्रैण—नेत्रालिवल्लीवनं ॥ १२ ॥ ध-

न्या द्वात्रिंशतं कन्याः । पित्रा सूत्रामसन्निभः ॥ अथैष लक्ष्मीसंवास—हारिणा परिणायितः ॥१३॥
शालिभद्रः समं ताभि—स्ताराभिरिव चंद्रमाः ॥ पितृभ्यां पूर्यमाणेष्ट—भोगो भोगानभुंक्त सः ॥१४॥
दांतः श्रीवीरपादांते । गोभद्रो व्रतमग्रहीत् ॥ कृत्वा चानशनं मृत्वा—ऽमर्त्यभूमिं जगाम सः ॥
॥ १५ ॥ पूरयामास तत्पुण्याद् । दिव्यभोगानथान्वहं ॥ आगत्य सवधूकाय । शालिभद्राय सोऽम-
रः ॥ १६ ॥ कार्यं मर्त्योचितं यद्यद् । भद्रा तत्तदसाधयत् ॥ पूर्वपुण्यप्रभावेण । भोगानेवैष भुक्त-
वान् ॥ १७ ॥ वणिजोऽन्येद्युराजग्मु—र्गृहीत्वा रत्नकंबलान् ॥ महार्घानीति नादत्त । नृपो भद्राग्र-
हीत्तु तान् ॥ १८ ॥ चिल्लणाप्रार्थितेनाथ । राज्ञैकं रत्नकंबलं ॥ याचिता वणिजोऽशंसन् । भद्रा
तानग्रहीदिति ॥ १९ ॥ प्रधानपुरुषेणाथ । भूविभू रत्नकंबलं ॥ महामूल्यं यथामूल्य—मेकं भद्राम-
याचयत् ॥ २० ॥ भद्रोचे तान् वधूपाद—प्रोंछनीकृतवत्यहं ॥ संत्येतानि तु जीर्णानी—त्यतो विज्ञ-
प्यतां विभुः ॥ २१ ॥ स गत्वैतज्जगौ राज्ञे । राज्ञ्यूचे चिल्लणा ततः ॥ पश्यास्मद्वणिजां काच—वै-
डूर्याणामिवांतरं ॥ २२ ॥ तमेव पुरुषं प्रेष्य । श्रेणिकेनातिकौतुकात् ॥ शालिभद्रे समाहूते । ग-
त्वा भद्रेदमब्रवीत् ॥ २३ ॥ बहिर्नहि महीनाथ । जातु निर्याति मेंगजः ॥ प्रसादः क्रियतां देव ।

तद्गृहागमनेन मे ॥ २४ ॥ कौतुकात्प्रतिपेदे तद् । नृभुजा श्रेष्टिनी ततः ॥ आराजसौधं स्वगृ-
हा—दतिशोभामकारयत् ॥ २५ ॥ तयाहूतस्ततो राजा । पुष्पैराजानुराजितां ॥ ज्वलध्धूपघटीधूमां
। क्षौमांशुकसमुच्छ्रूयां ॥ २६ ॥ रंभासमूहसंरंभा—मतिजंभारिपत्तनां ॥ चंद्रोदयचमूहृद्या—मतिद्यां
च पुरः पुरः ॥ २७ ॥ विपंच्यमानसंगीतां । प्रतिमंचं पदे पदे ॥ स्थाने स्थाने च निष्पाद्य—मा
ननीराजनोत्सवां ॥ २८ ॥ परिस्फुर्जत्पुरशोभां । हट्टशोभां निभालयन् ॥ प्राप संपद्भरैः शालि ।
शालिभद्रनिकेतनं ॥ २९ ॥ कलापकं ॥ गोपुरोन्नयतः क्रूसें—द्रनीलकदलीवनं ॥ मणिमयप्रतीहा-
र—स्तंभितेक्षणमंगिनां ॥ ३० ॥ पुरः सहस्रमाणिक्य—स्तंभं कनकभित्तिमत् ॥ सुजात्यरूप्यवल-
भि । कुरुविंदाश्मकुट्टिमं ॥ ३१ ॥ सप्तभूमितया सप्त—लोक्या मंडनिकामिव ॥ सहस्राक्षमिवांग
वा । गवाक्षैर्गणनातिगैः ॥ ३२ ॥ नानादिव्यांशुकोल्लोच—रोचमानं समंततः ॥ प्रतिकोणं ज्वल-
द्धूप—घटीधूमाधिवासितं ॥ ३३ ॥ कृतकस्तूरिकालेपं । स्वस्तिकन्यस्तमौक्तिकं ॥ स्वर्णपिष्पलस्र-
ग्दाम—श्रेणिविश्राणितोत्सवं ॥ ३४ ॥ विमानमिव जित्वेदं । नृत्यत्कोटिध्वजाभुजैः ॥ विलसद्विस्म-
यावेश—स्तद्विवेश विशां पतिः ॥ ३५ ॥ षड्भिः कुलकं ॥ तस्याधस्तीन् क्षणान् धात्री—विभुरालो-

क्य विस्मयात् ॥ तुरीयं क्षणमारुह्य । सिंहासनमुपाविशत् ॥ ३६ ॥ सप्तम्यां भुवि भद्रेत्य । शालि-
भद्रमजूहवत् ॥ आयातः श्रेणिकोऽस्तीह । वत्स तं दृष्टुमेह्यधः ॥ ३७ ॥ अंब त्वमेव यद्वेत्सि । त-
न्मूल्यं तस्य कारय ॥ किं मया तत्र कर्तव्य—मिति भद्रामुवाच सः ॥ ३८ ॥ अथाह भद्रा हे व-
त्स । क्रेतव्यं वस्तु न ह्यदः ॥ किंत्वसौ सर्वलोकानां । युष्माकमपि च प्रभुः ॥ ३९ ॥ श्रुत्वेति
शालिभद्रोंतः । सविषादमचिंतयत् ॥ धिक्सांसारिकमैश्वर्यं । यन्ममाप्यपरः प्रभुः ॥ ४० ॥ रोगैरिवा-
हिभोगैर्वा । भोगैरलमतः परं ॥ करिष्यामि तथा स्वामी । यथा नान्यो भवेन्मम ॥ ४१ ॥ अथो-
परुद्धो मात्राय—मुत्ततार शिरोगृहात् ॥ समं वधूभिराकाशा—दप्सरोभिरिवामरः ॥ ४२ ॥ वेणी-
भुजगमंजीर-भृंगसंजितसंयुताः ॥ कर्पूरवृक्षनिकषा । श्रीखंडलतिका इव ॥ ४३ ॥ आन्वायांतीर्वधूः
शालि—भद्रमैक्षिष्ट भूपतिः ॥ अभ्येत्य सोऽपि राजान—मनमद्विनयान्वितः ॥ ४४ ॥ युग्मं ॥ स-
स्वजे शालिभद्रोऽथ । स्वांके सुत इवासितः ॥ राज्ञा शिरसि चाघ्रातः । खिन्नो म्लानोऽभवत्क्षणात्
॥ ४५ ॥ ततो भद्रा जगादैवं । देवायं मुच्यतां यतः ॥ मनुष्यमाल्यगंधेन । मनुष्योऽप्येष बाध्यते
॥ ४६ ॥ देवभूमिं गतः श्रेष्ठी । सभार्यस्यास्य यच्छति ॥ दिव्यनेपथ्यवस्त्रांग—रागादि प्रतिवासरं ॥

॥ ४७ ॥ ततो राज्ञा विसृष्टेऽस्मिं–श्चंद्रशालामुपेयुषि ॥ भोक्तुं भद्रार्थितः सस्नौ । राजा मुद्रास्य चा-
पतत् ॥ ४८ ॥ गवेषयति राज्ञीमां । भद्रादेशेन दासिकाः ॥ वाप्यंभोऽन्यत्र निन्युः सो–ऽपश्यत्त-
त्र महो महत् ॥ ४९ ॥ तन्मध्यमुद्रिकाचंद्र–बिंबांककलिकामिव ॥ दृष्ट्वा स फुल्लनयनो । विस्म-
याउदधारयत् ॥ ५० ॥ किमेतदिति राज्ञोक्ता । दास्यवादीदिहान्वहं ॥ निर्माल्यं शालिभद्रस्य ।
सभार्यस्यापि धीयते ॥ ५१ ॥ सर्वथा धन्य एवायं । धन्योऽहमपि यस्य मे ॥ राज्ये येनेदृशाः सं-
ती–त्यंतरामुमुदे नृपः ॥ ५२ ॥ राजाथ बुभुजे जात–संमदः सपरिच्छदः ॥ स्वालयं च ययौ व-
स्त्र–रत्नालंकारपूजितः ॥ ५५ ॥

शालिभद्रोऽपि संसार–विरक्तः सुहृदान्यदा ॥ वर्धितो धर्मघोषस्य । प्रभोरागतिवार्तया ॥५६॥
आरुह्य रथमभ्येत्या–चार्यपादान् प्रणम्य च ॥ निविष्टो देशनांतेऽसौ । पप्रच्छेति कृतांजलिः ॥५७॥
प्रभो के ते महापुण्या । येषां स्वामी न विद्यते ॥ भगवानप्युवाचैवं । दीक्षां गृह्णांति ये जनाः ॥
॥ ५८ ॥ आपृच्छ्यांबां व्रतमहं । गृहीष्यामीत्युदीरयन् ॥ गुरून्नत्वा गृहं गत्वा । सावित्रीमित्ययं ज-
गौ ॥ ५९ ॥ अंबाद्याश्रृणवं धर्मं । धर्मघोषप्रभोरहं ॥ भद्रावादीद्वरं वत्स । पितुस्तस्यासि नंदनः ॥

॥ ५९ ॥ नत्वोचे शालिभद्रश्चे—न्मातरेवं प्रसीद तत् ॥ गृहीष्यामि परिव्रज्यां । पितुस्तस्य सुतोऽस्म्यहं ॥ ६० ॥ भद्राभ्यधत्त ते योग्यो । नास्ति साधुव्रतोद्यमः ॥ किंचात्र पुत्र पेयाभि—ज्वालामाला निरंतरं ॥ ६१ ॥ कुमार सुकुमारस्त्वं । दिव्यभोगैश्च लालितः ॥ रंभास्तंभो गजालान—मिव किं वांछसि व्रतं ॥ ६२ ॥ शालिभद्रोऽभ्यधान्मातः । सत्वस्य किमु दुर्घटं ॥ मृणालमृडुलः शेषः । क्ष्माभारं दधाति यत् ॥ ६३ ॥ भद्रावादीत् पुरो वत्स । भोगाननुदिनं त्यज ॥ सहस्व त्वं मनुष्याणां । गंधान् पश्चाद् व्रतं भज ॥ ६४ ॥ शालिभद्रस्ततो भद्रा—वचनं प्रतिपद्य तत् ॥ भार्यां च तूलिकामेकां । मुंचतिस्म दिने दिने ॥ ६५ ॥ इतश्चासीत्पुरे तस्मिन् । धन्यः सत्कर्मधन्यधीः ॥ सुभगं भावुकः श्रीभिः । शालिभद्रस्य भावुकः ॥ ६६ ॥ शालिभद्रस्वसा साश्रु—स्नपयंती तु तं तदा ॥ किं रोदिषीति तेनोक्ता । जगादेति सगद्गदं ॥ ६७ ॥ व्रतं ग्रहिता मे भ्राता । मुंचत्येकां दिने दिने ॥ भार्यां च तूलिकां चाहं । तेन रोदिमि हेतुना ॥ ६८ ॥ धन्यः सनर्म तामूचे । वराकः फेरुपोतवत् ॥ हीनसत्वस्तव भ्राता । य एवं कुरुते किल ॥ ६९ ॥ अन्याभिरिति च प्रोचे । स भार्याभिः सनर्मकं ॥ सुकरं चेद्व्रतं नाथ । किं त्वयाङ्गियते न हि ॥ ७० ॥ धन्योऽप्यूचे व्रते

विभो । भवत्यस्ताश्च पुण्यतः ॥ अनुमंत्र्योऽद्य मेऽब्रूवन् । प्रव्रजिष्यामि तद् द्रुतं ॥ ७१ ॥ अथोचू-
स्ताश्च भर्तार—मश्रुमिश्रविलोचनाः ॥ प्रसीद नाथ नो हास—विकाशं कर्तुमर्हसि ॥ ७२ ॥ अ-
थाह धन्यः स्नेहस्य । भव्या द्रव्यात्मनोऽपि न ॥ संसक्तिः पश्यतैतस्यां । जायते यद्यदंगिनां ॥७३॥
क्रियंते मानुषाः पोत्तिं । परिधाप्य बहिःश्रियः ॥ मर्द्यते निर्दयं हस्तैः । पादैश्च परिपीड्यते ॥७४॥
पिष्टैरावर्त्यते स्वैरं । खटीभिश्च खरंट्यते ॥ चपेटाभिश्च हन्येत । निरागा अपि मूर्धनि ॥ ७५ ॥ इ-
ढं विगोपकास्तसे—नांभसा तपसा यथा ॥ गतस्नेहमलं भूयो—ऽप्यलंकुर्वीत संपदे ॥ ७६ ॥ भा-
वस्नेहस्य तद् ब्रूमः । किमतोऽधिक एव सः ॥ बलीयान् बहिरंगाद्य—दंतरंगो विधिः स्मृतः ॥७७॥
मत्वेति भवतीभिस्त—द्वाच्यमेव न किंचन ॥ अवश्यं प्रव्रजिष्यामी—त्यालपन् धन्य उज्झितः ॥
॥ ७८ ॥ त्वामनु प्रव्रजिष्याम । एवमुक्तवतीश्च ताः ॥ अन्वमन्यत धन्योऽपि । धन्यंमन्यो महाम-
नाः ॥ ७९ ॥ गिरावितश्च वैभारे । श्रीवीरः समवासरत् ॥ मनोऽभिमतसामग्री । सतां हि परिप-
च्यते ॥ ८० ॥ दत्तदानः सदारोऽसा—वारुह्य शिबिकामथ ॥ गत्वा श्रीवीरपादांते । मुदांतेवा-
स्यभूदयं ॥ ८१ ॥ श्रुत्वेति शालिभद्रोऽपि । धन्यंमन्योऽतिविस्तरं ॥ गत्वातिसत्वरं वीर-पादांते व्र-

तमग्रहीत् ॥ ८२ ॥ ततः सपरिवारोऽपि । विजहार जिनेश्वरः ॥ महीं ग्रामाकरद्रोण—मडंबपुरमंडि·
तां ॥ ८३ ॥ धन्यश्च शालिभद्रश्च । विश्रुतौ तौ बहुश्रुतौ ॥ अभूतां तपसा क्षामौ । श्यामौ दग्धा·
विव द्रुमौ ॥ ८४ ॥ तौ विश्वतिलकौ धर्मो—द्यानपालेन सत्कृतौ ॥ आरोपितुमिवांगार—भावं नी·
तौ तपोऽग्निना ॥ ८५ ॥ अन्यदा श्रीमहावीर—स्वामिना सह तौ मुनी ॥ आजग्मतुः पुरं राज—
गृहं जन्मभुवं निजां ॥ ८६ ॥ ततो निकटारामस्थं । प्रणंतुं परमेश्वरं ॥ समीयुः परितः पौराः । सु·
राज्यविपुलश्रियः ॥ ८७ ॥ तौ मासपारणे शालि—भद्रधन्यावुभावपि ॥ कान्ते विहर्तुं भिक्षार्थे ।
भगवंतं प्रणेमतुः ॥ ८८ ॥ पारणं मातृहस्तेन । तेऽद्येति स्वामिनोदितः ॥ इच्छामीति भणन् शा·
लि—भद्रो धन्ययुतौ ययौ ॥ ८९ ॥ भद्रागेहांगणे गत्वा । तावस्थातां महामुनी ॥ तपःकृशतया
किंचो—पलक्षितौ न केनचित् ॥ ९० ॥ सशालिभद्रधन्यः श्री—वीरो वंदिष्यतेऽधुना ॥ इत्यौत्सु·
क्यवती भद्रा । नाद्राक्षिदपि तौ पुरः ॥ ९१ ॥ क्षणमेकमिह स्थित्वा । निर्गतौ नगरादपि ॥ स·
मायांती जरत्येका । दध्ना तौ प्रत्यलाभयत् ॥९२॥ श्रीवीरस्यांतिके गत्वा । तदालोच्य कृतांजलिः
॥ शालिभद्रोऽभ्यधान्नाथ । मातृतः पारणं कथं ॥ ९३ ॥ सर्वज्ञोऽभिदधे वत्स । पुरस्यास्य समीप·

गे ॥ शालिग्रामे समागच्छ—न्न्येद्युश्छिन्नवंशका ॥ ९४ ॥ कृत्वा परगृहे कर्म । सा जीवति वराकि-
का ॥ बालः संगमकस्तस्या । वत्सरूपाण्यचारयत् ॥ ९५ ॥ दृष्ट्वान्येद्युरथ ग्राम—र्भिन्नान् पायसमश्न-
तः ॥ गत्वा स्वगेहे जननीं । पायसं सोऽप्ययाचत ॥ ९६ ॥ साप्युवाच दरिद्रास्मि । मद्गेहे पायसं
कुतः ॥ स चाज्ञानतया बालो । ययाचे पायसं मुहुः ॥ ९७ ॥ तेनेति याच्यमानाथ । दारिद्र्याच्च
तथात्मनः ॥ शोचंती पूर्वविभवं । स्मारं स्मारं रुरोद सा ॥ ९८ ॥ कुररीमिव तारं ता—मुररीकृतरो-
दनां ॥ श्रुत्वेति प्रातिवेश्मिन्यः । पप्रच्छुर्दुःखकारणं ॥ ९९ ॥ ताभ्योऽप्यधत्त सा दुःख—कारणं
गद्गदाक्षरैः ॥ क्षीराद्यदुश्च तास्तस्यै । सापचत्पायसं ततः ॥ १०० ॥ खंडाज्यपायसभृतं । स्थालं बा-
लस्य तस्य सा ॥ अर्पयित्वा ययौ कर्म । निर्मातुं परवेश्मनि ॥ १ ॥ विचरन् पारणायात्र । क्षणे
मासमुपोषितः ॥ यतिरेकः समागच्छ—त्तपःक्षामोऽतिरेकतः ॥ २ ॥ सोऽचिंतयदिदं साधु । साधुपा-
त्रमुपस्थितं ॥ चित्तं पात्रं च मे वित्तं । त्रिवेणीसंगमोऽद्य तत् ॥ ३ ॥ अथोत्थाय मुनिं नत्वा ।
प्रांजलिः प्रार्थयन्मुदा ॥ गृहाण पायसमिदं । प्रसीद परमेश्वर ॥ ४ ॥ इत्यसौ स्थालमुत्पाट्य । पा-
यसं मुनये ददौ ॥ जग्राह मुनिरप्यस्या—नुग्रहाय महाशयः ॥ ५ ॥

मुनिर्ययौ च धन्या च । परगेहादिहागमत् ॥ मत्वा भुक्तमनेनास्मै । पायसं सा पुनर्ददौ ॥
॥ ६ ॥ अनासादितपूर्वं तद् । बालोऽपि बुभुजेतमां ॥ तदजीर्णेन यामिन्यां स्मरन् साधुं व्यपद्यत
॥ ७ ॥ तेन दानप्रभावेण । स त्वं गोभद्रनंदनः ॥ सा च पूर्वभवांबा ते । यथासि प्रतिलाभितः
॥ ८ श्रुत्वेति पारणं कृत्वा—नुज्ञाप्य च जिनाधिपं ॥ सधन्यः शालिभद्रोऽद्रौ । वैभारेऽनशनं व्य-
धात् ॥ ए ॥ तदा तदंबा भद्रा च । श्रेणिकश्च महीपतिः ॥ भक्तियुक्तावुपेयातां ॥ श्रीवीरचरणां-
तिके ॥ ११ ॥ सर्वज्ञोऽभिदधे भद्रे । भवद्देश्मागताविमौ ॥ ज्ञातौ त्वया तु नैवेहा—गमनव्यग्र-
चित्तया ॥ १२ ॥ प्राग्जन्ममाता सूनोस्ते । धन्या यांतीपुरंप्रति ॥ ददौ दधि तयोस्तेन । तौ व्यध-
त्तां च पारणं ॥ १३ ॥ उभावपि शुभावेतौ । भवत्यागाय सत्वरौ ॥ पादपोपगमं कृत्वा । वैभाराद्रौ
स्थितावथ ॥ १४ ॥ वैभाराद्रिं ययौ भद्रा । श्रेणिकेन समं ततः ॥ तथास्थितावपश्यच्च । पतितौ तौ
द्रुमाविव ॥ १५ ॥ तद्दुःखमिति पश्यंती । स्मरंत्यपि च तत्सुखं ॥ रुरोद रोदयंती सा । कंदराः प्र-
तिनिःस्वनैः ॥ १६ ॥ हा वत्स गृहमायातो—ऽप्यद्य निष्पुण्यया मया ॥ न ज्ञातोऽसि प्रमादेन ।
प्रसीद मयि मा रुष ॥ १७ ॥ हा वत्स यद्यपि त्वं नो—ऽत्याक्षीः पूर्वं तथाप्यभूत् ॥ मनोरथो यदा-

गत्य । शिशिरीकुरुषे दृशोः ॥ १८ ॥ हा वत्स वपुषस्त्याग—हेतुनानेन कर्मणा ॥ मनोरथं तम-
पि मे । भंक्तुमुद्यतवानसि ॥ १९ ॥ हा वत्स हंसतूलीषु । वपुस्ते सुखलालितं ॥ कथं विषहते
ब्रूहि । कठोराश्मतलव्यथाः ॥ २० ॥ हा वत्स श्रेणिकस्यापि । यदम्लायि वपूष्मणा ॥ तत्कथं क-
र्कशां भूमिं । सहते शंस ते वपुः ॥ २१ ॥ हा वत्स मृदुसंगीत—पानदुर्ललितौ तव ॥ सहिष्ये-
ते कथं कर्णौ । फेरुदारुणफूत्कृतिं ॥ २२ ॥ अथोचे श्रेणिको हर्ष—स्थाने रोदिषि किं शुभे ॥
ईदृग् यस्याः सुतः स्त्रीषु । त्वमेका पुत्रवत्यसि ॥ २३ ॥ असौ तृणमिवात्याक्षी—ल्लक्ष्मीं भोगांश्च
रोगवत् ॥ मुक्तिसंपत्प्रदान् पादान् । प्रपेदे स्वामिनः पुनः ॥ २४ ॥ असौ श्रीवीरशिष्यत्वा—नुरूपं
तप्यते तपः ॥ त्वया तु स्त्रीस्वभावेन । मुधा मुग्धेऽनितप्यते ॥ २५ ॥ इत्थं श्रेणिकभूभुजा निज-
कैराश्लुंछताश्रूदक—श्रेणिं पंकजबंधुनेव नलिनीवालंब्य संबोधिता ॥ भद्रा धाम जगाम सा निज-
मथो भूमानपि स्वामिनः । श्रीवीरस्य पदौ प्रणम्य विमनाः स्वां राजधानीमगात ॥ २६ ॥ अथ ज-
गति सधन्यः शालिभद्रः स धन्यः । सुकृतनिकृतकर्मा भिन्नसंसारमर्मा ॥ अनशनमिति कृत्वा भा-
वशुद्धं च मृत्वा । वितुषसुखसमृद्धिं प्राप सर्वार्थसिद्धिं ॥ २७ ॥ इति श्रीशालिभद्रकथा समाप्ता ॥

तिस्मरणमासदत् ॥ १५ ॥ जातजातिस्मृतिज्ञानः । संसारासारतां विदन् ॥ अकुंठः क्षीरकंठोऽपि ।
तातमार्गमियेष सः ॥ १६ ॥ कथमुद्विज्य मां माता । त्यक्ष्यतीति विचिंत्य सः ॥ मातुरुत्संगलीनोऽ-
पि । रोदितिस्म दिवानिशं ॥ १७ ॥ गानैर्न क्रीडनैर्नाक—नृत्यैर्न च न चाटुभिः ॥ वाद्यैर्न चुंब-
नैर्नापि । विरराम स रोदनात् ॥ १८ ॥ एवं च रुदतस्तस्य । शिशोर्मासाः षम्त्ययुः ॥ सुनंदापि
सदोद्विग्ना—ऽजनि तेन तनूभुवा ॥ १९ ॥ तत्र सिंहगिरिस्त्वागा—दन्यदा सन्निवेशने ॥ विनेयैर्ध-
नगिर्यार्य—समितादिभिरावृतः ॥ २० ॥ तं गुरुं धनगिर्यार्य—समिताविल्यपृच्छतां ॥ प्रभो नौ स्वज-
ना ह्यत्र । तान् विवंदयिषावहे ॥ २१ ॥ निमित्ततः कुतोऽप्याह । यियासंताविमौ गुरुः ॥ भावी
लाभो महान् ग्राह्यं । सचित्ताचित्तमद्य तत् ॥ २२ ॥ सदनेऽथ सुनंदाया । जग्मतुस्तौ महामुनी ॥
तस्याः सखीभिः सानंदं । ह्यार्यायातौ निवेदितौ ॥ २३ ॥ सोत्प्रासमूचिरे सख्यः । सुनंदे नंदन-
स्त्वया ॥ अर्पणीयो धनगिरेः । क्व नेष्यत्येष दृश्यतां ॥ २४ ॥ सुनंदापि निरानंदा । तमादाय
स्तनंधयं ॥ तेन निर्वेदितोदस्था—दूचे धनगिरिं च सा ॥ २५ ॥ इयंतं कालमात्मेव । बालकः पा-
लितो मया ॥ नटिताहं त्वनेनोच्चै—रनिशं रुदता भृशं ॥ २६ ॥ यदि प्रव्रजितोऽसि त्वं । तथाप्येनं

स्वमंगजं ॥ गृहाण मामिव त्वादी—र्मास्मैनमपि संप्रति ॥ २७ ॥ श्रुत्वा धनगिरिस्त्वाह । विन्य-
स्तमुखवस्त्रिकः ॥ कल्याण्येवं करिष्यामि । पश्चात्तापं तु यास्यसि ॥ २८ ॥ मा कृथाः सर्वथेदृक्षं ।
कुरुषे वा कुरुष्व तत् ॥ समक्षं साक्षिणां भद्रे । पुनर्नैनं हि लप्स्यसे ॥ २९ ॥ ततश्च साक्षिणः
कृत्वा । सनिर्वेदं सुनंदया ॥ तस्मै स मुनये सूनु—रर्पितस्तेन चाददे ॥ ३० ॥ बालं धनगिरिः
पात्र—बंधने तं न्यधत्त च ॥ रोदनाद्दत्तसंकेत । इवासौ विरराम च ॥ ३१ ॥ ततः सुनंदासदना—
न्मुनी तावात्तबालकौ ॥ गुर्वाज्ञापालकौ भूयो—ऽपीयतुर्गुरुसन्निधौ ॥ ३२ ॥ तद्भारेण नमद्बाहुं ।
दृष्ट्वा धनगिरिं गुरुः ॥ अभाषतामुना भिक्षा—भारेणायासितो भवान् ॥ ३३ ॥ तदेनमर्पयास्माकं
। विश्राम्यतु भुजस्तव ॥ इत्यार्पयद्धनगिरि—र्गुरोर्यत्नेन तं सुतं ॥ ३४ ॥ बालार्कमिव तं बालं ।
भासमानं समाददे ॥ गुरुः करयुगेनाथ । दीप्रं शोणतनूरुचा ॥ ३५ ॥ तद्भारभंगुरकरो । गुरुराह
सविस्मयः ॥ अहो पुंरूपभृद्वज्र—मिदं धर्तुं न शक्यते ॥ ३६ ॥ भावी प्रवचनाधारो । महापुण्यः
पुमानयं ॥ साध्वीनामिति तं बालं । पालनायार्पयद्गुरुः ॥ ३७ ॥ तं बालं गुरुणा क्लृप्त—वज्रनामा-
नमार्यिकाः ॥ शय्यातरकुले भक्ते । पालनायार्पयंस्ततः ॥ ३८ ॥ दक्षाः कुमारपोषाय । शय्यातर्यो-

अथ श्रीवज्रस्वामिनं तदपूर्वगुणग्रहणपूर्वं प्रणमन्नाह—

॥ मूलम् ॥—तरुणीजणेण धणसं—चयेण तह गुरुअबंधुनेहेण ॥ न विद्धुहं जस्स मणो
। तस्स नमो वयरसामिस्स ॥ ४२ ॥ व्याख्या—तस्मै वज्रस्वामिने नमः, जस्स मणो यस्य मनः
न विह्वलं न विमूढं, केन? तरुणीजणेण प्रार्थनापरवशाभिनवयौवनयुवतीजनेन, न केवलमनेन,
किंतु धनसंचयेन धनानां गणिमधरिममेयपारिछेद्यानां संचयः समूहस्तेन, न केवलममुना तथा
गुरुअबंधुनेहेण गुरुरेव गुरुकः स चासौ बंधुस्नेहोऽत्र मातृवात्सल्यं गुरुकबंधुस्नेहस्तेन, यदुक्तमस्मा-
भिरपि गणधरावल्यां—बाल्ये न मातृवचनैरतिदीनदीनैः । स्निग्धांगनार्थनगिरा न हि यौवनेऽपि
॥ श्रीसंचयैरपि चचाल मनो न यस्य । तस्मै नमोऽस्तु दशपूर्वभृतेंतिमाय ॥ १ ॥ इति संक्षेपार्थः,
व्यासार्थस्तु कथानकादवसेयः, तच्चैतत्—अस्त्यवंतिषु विख्यातं । पुरं तुंबवनाभिधं ॥ श्रेष्टी धन-
गिरिनामा । तस्मिन् गुरुधनोऽभवत् ॥ १ ॥ स बाल्यादपि संसार—विरक्तात्मा सुनंदया ॥ धनपा-
लेभ्यनंदिन्या—ग्रहतः पर्यणीयत ॥ २ ॥ अन्यदा तु ऋतुस्नातां । सुनंदां ब्रह्मधीरपि ॥ भेजे धन-
गिरिर्भोग—फलं कर्म हि नान्यथा ॥ ३ ॥ इतश्चाष्टापदगिरौ । गौतमेन गणेंदुना ॥ प्रथितं पुंड-

रीकाख्या—ध्ययनं यः पुराभृणोत् ॥ ४ ॥ स हि वैश्रवणाभिख्यः । यक्षसामानिकः सुरः ॥ प्रच्यु-त्यावतरत्तस्याः । सुनंदायास्तदोदरे ॥ ५ ॥ युग्मं ॥ अंतर्वत्नीमथो पत्नीं । मत्वा धनगिरिर्जगौ ॥ एष गर्भो द्वितीयस्ते । भविता प्रव्रजाम्यहं ॥ ६ ॥ अमनीषित एवाभूत् । संबंधोऽपि त्वया सह ॥ प्रव्रज्यैव प्रिया मेऽतः—परं स्वस्त्यस्तु ते पुनः ॥ ७ ॥ उक्त्वेत्युप्रांचकारैता—मवक्रयकुटीमिव ॥ गुरोः सिंहगिरेः पार्श्वे । गत्वा च व्रतमाददे ॥ ८ ॥ सुनंदासोदरोऽप्यत्रा—भूदार्यसमितो व्रती ॥ समं तेन तपस्तेपे । स विषोढपरीषहः ॥ ९ ॥ नवमास्यां व्यतीतायां । सुनंदापि हि नंदनं ॥ अजीजनज्जनानंद—कंदमिंदुमिवेंद्रदिक् ॥ १० ॥

सुनंदाप्रीतिपात्राणि । सख्यो याः सूतिकागृहे ॥ प्रतिजागरणायाता—स्ता बालमिदमूचिरे ॥ ॥ ११ ॥ यदि जात न ते तातः । प्राव्रजिष्यत्तदोत्सुकः ॥ तव जन्मोत्सवः श्रेया—नभविष्यत्तदा खलु ॥ १२ ॥ विना पुमांसं नायांति । नार्यः कार्योपयोगितां ॥ अंगुल्यो मुष्टिबंधाय । विनांगुष्टं भवंति किं ॥ १३ ॥ स तु बालोऽपि संज्ञावान् । ज्ञानावरणलाघवात् ॥ तासामाकर्णयामास । तं संलापं समाहितः ॥ १४ ॥ अचिंतयच्च मे तातः । परिव्रज्यामुपाददे ॥ एवं स चिंतयन्नेव । जा-

तिस्मरणमासदत् ॥ १५ ॥ जातजातिस्मृतिज्ञानः । संसारासारतां विदन् ॥ अकुंठः क्षीरकंठोऽपि ।
तातमार्गमियेष सः ॥ १६ ॥ कथमुद्विज्य मां माता । त्यक्ष्यतीति विचिंत्य सः ॥ मातुरुत्संगलीनोऽ-
पि । रोदितिस्म दिवानिशं ॥ १७ ॥ गानैर्न क्रीडनैर्नाक—नृत्यैर्न च न चाटुभिः ॥ वाद्यैर्न चुंब-
नैर्नापि । विरराम स रोदनात् ॥ १८ ॥ एवं च रुदतस्तस्य । शिशोर्मासाः षमत्ययुः ॥ सुनंदापि
सदोद्विग्ना—ऽजनि तेन तनूभुवा ॥ १९ ॥ तत्र सिंहगिरिस्त्वागा—दन्यदा सन्निवेशने ॥ विनेयैर्ध-
नगिर्यार्य—समितादिभिरावृतः ॥ २० ॥ तं गुरुं धनगिर्यार्य—समितावित्यपृच्छतां ॥ प्रज्ञो नौ स्वज-
ना ह्यत्र । तान् विवंदयिषावहे ॥ २१ ॥ निमित्ततः कुतोऽप्याह । धियाऽनंताविमौ गुरुः ॥ भावी
लाभो महान् ग्राह्यं । सचित्ताचित्तमद्य तत् ॥ २२ ॥ सदनेऽथ सुनंदाया । जग्मतुस्तौ महामुनी ॥
तस्याः सखीभिः सानंदं । द्वार्यायातौ निवेदितौ ॥ २३ ॥ सोत्प्रासमूचिरे सख्यः । सुनंदे नंदन-
स्त्वया ॥ अर्पणीयो धनगिरेः । क्व नेष्यत्येष दृश्यतां ॥ २४ ॥ सुनंदापि निरानंदा । तमादाय
स्तनंधयं ॥ तेन निर्वेदितोदस्था—दूचे धनगिरिं च सा ॥ २५ ॥ इयंतं कालमात्मेव । बालकः पा-
लितो मया ॥ नटिताहं त्वनेनोच्चै—रनिशं रुदता भृशं ॥ २६ ॥ यदि प्रव्रजितोऽसि त्वं । तथाप्येनं

स्वमंगजं ॥ गृहाण मामिव त्यागी—र्मास्मैनमपि संप्रति ॥ २७ ॥ श्रुत्वा धनगिरिस्त्वाह । विन्य-
स्तमुखवस्त्रिकः ॥ कल्याण्येवं करिष्यामि । पश्चात्तापं तु यास्यसि ॥ २८ ॥ मा कृथाः सर्वथेदृक्षं ।
कुरुषे वा कुरुष्व तत् ॥ समक्षं साक्षिणां भद्रे । पुनर्नैनं हि लप्स्यसे ॥ २९ ॥ ततश्च साक्षिणः
कृत्वा । सनिर्वेदं सुनंदया ॥ तस्मै स मुनये सूनु—रर्पितस्तेन चाददे ॥ ३० ॥ बालं धनगिरिः
पात्र—बंधने तं न्यधत्त च ॥ रोदनाद्दत्तसंकेत । इवासौ विरराम च ॥ ३१ ॥ ततः सुनंदासदना—
न्मुनी तावात्तबालकौ ॥ गुर्वाज्ञापालकौ भूयो—ऽपीयतुर्गुरुसन्निधौ ॥ ३२ ॥ तद्भारेण नमद्बाहुं ।
दृष्ट्वा धनगिरिं गुरुः ॥ अभाषतामुना भिक्षा—भारेणायासितो भवान् ॥ ३३ ॥ तदेनमर्पयास्माकं
। विश्राम्यतु भुजस्तव ॥ इत्यार्पयद्धनगिरि—र्गुरोर्यत्नेन तं सुतं ॥ ३४ ॥ बालार्कमिव तं बालं ।
भासमानं समाददे ॥ गुरुः करयुगेनाथ । दीप्रं शोणतनूरुचा ॥ ३५ ॥ तद्भारभंगुरकरो । गुरुराह
सविस्मयः ॥ अहो पुंरूपभृद्वज्र—मिदं धर्तुं न शक्यते ॥ ३६ ॥ भावी प्रवचनाधारो । महापुण्यः
पुमानयं ॥ साध्वीनामिति तं बालं । पालनायार्पयद्गुरुः ॥ ३७ ॥ तं बालं गुरुणा क्लृप्त—वज्रनामा-
नमार्यिकाः ॥ शय्यातरकुले भक्ते । पालनायार्पयंस्ततः ॥ ३८ ॥ दक्षाः कुमारपोषाय । शय्यातर्यो-

ऽपि तं शिशुं ॥ स्वस्वपुत्राधिकप्रीत्या । पश्यंत्यः पर्यपालयन् ॥ ३९ ॥ वयोवृद्धपरिणामो । वज्रः स-
दृज्ञानवत्तया ॥ बालोऽपि नाप चापल्यं । किंचित्तासामसौख्यदं ॥ ४० ॥ ज्ञानोपकरणादानै—बा-
लकेलिं स कल्पयन् ॥ वज्रः प्रमोदयामास । प्रतिवासरमार्यिकाः ॥ ४१ ॥ वज्रं दृष्ट्वा सुनंदोद्य—
न्मोहा शय्यातरानथ ॥ अयाचिष्टतरां ते तु । गुरुस्वमिति नार्पयन् ॥ ४२ ॥ महता तूपरोधेन ।
सा तेषामेव वेश्मनि ॥ धात्रीव लालयामास । स्तन्यपानादिना सुतं ॥ ४३ ॥ पाल्यमानोऽभवद्व-
ज्रः । क्रमेणाथ त्रिहायनः ॥ साधवो धनगिर्याद्या—स्ते च तत्राययुस्तदा ॥ ४४ ॥ प्राप्ते धनगिरा-
वत्र । गृहीष्यामि स्वमंगजं ॥ चिंतयंती सुनंदैव—मायातेऽस्मिन्नमोदत ॥ ४५ ॥ सुनंदाथ महर्षि-
भ्यः । स्वनंदनमयाचत ॥ ते पुनर्नार्पयामासुः । प्रत्यभाषंत चेदृशं ॥ ४६ ॥ अयाचितस्त्वया सुज्ञे
। दत्तोऽस्मभ्यमयं शिशुः ॥ विक्रीतेष्विव दत्तेषु । स्वामित्वमपराध्यति ॥ ४७ ॥ पक्षयोरुभयोरेव—
मुच्चैर्विवदमानयोः ॥ लोकोऽवददमुं वादं । राजा निर्धारयिष्यति ॥ ४८ ॥ ततः सुनंदा लोकेन ।
सहिता नृपसंसदि ॥ जगाम संघसहिताः । श्रमणा अपि ते ययुः ॥ ४९ ॥ राज्ञो न्यषीदद्वामेन ।
सुनंदा दक्षिणेन तु ॥ श्रीमान् संघः समस्तोऽपि । यथास्थानमथापरे ॥ ५० ॥ आत्तवज्रो जगौ

श्रुत्वा । द्वयोर्भाषोत्तरं नृपः ॥ येनाहूतः समायाति । बालस्तस्य भवत्वसौ ॥ ५१ ॥ कृपयानुमता
साथ । जनेन जननी शिशोः ॥ विविधैः क्रीडनैर्भोज्यै—श्चाटुभिश्च तमाह्वयत् ॥ ५२ ॥ न मातु-
रुपकाराणां । कोऽपि स्यादनृणः पुमान् ॥ एवं विदन्नपि सुधी—र्वज्र एवमचिंतयत् ॥ ५३ ॥ यदि
संघमुपेक्षिष्ये । कृत्वा मातुः कृपामहं ॥ तदा स्यान्मम संसारो—ऽसारो दीर्घतरः खलु ॥ ५४ ॥
धन्येयं च सवित्री मे—ऽल्पकर्मा प्रव्रजिष्यति ॥ आयतिदुःखमोक्षाय । ततः स्यां भेषजादिवत् ॥
॥ ५५ ॥ दीर्घदर्शी विमृश्यैवं । वज्रो वज्रदृढाशयः ॥ प्रतिमास्थ इव स्थाना—न्न चचाल मनाग-
पि ॥ ५६ ॥ ततो राज्ञा धनगिरिः । प्राप्तावसरमीरितः ॥ रजोहरणमुत्क्षिप्य । जगादैवं मिताक्षरं ॥
॥ ५७ ॥ व्रते चेद्व्यवसायस्ते । तत्वज्ञोऽसि यदि स्वयं ॥ तद्रजोहरणं धर्म—ध्वजमादत्स्व मेऽनघ ॥
॥ ५८ ॥ वज्रस्तमभिधावित्वा । घर्घरायितघुर्घुरः ॥ रजोहरणमादत्त । लीलांभोजं व्रतश्रियः ॥५९॥
सद्यो म्लानमुखांभोजा । पद्मिनीव दिनात्यये ॥ हस्तविन्यस्तचिबुका । सुनंदैवमचिंतयत् ॥ ६० ॥
भ्राता प्रव्रजितो भर्ता—पि च प्रव्रजितो मम ॥ प्रव्रजिष्यति पुत्रोऽपि । प्रव्रजाम्यहमप्यतः ॥ ६१ ॥
विनिश्चित्यात्मनीति सा । सुनंदा सदनं ययौ ॥ वज्रमादाय वसतिं । प्रययुर्मुनयोऽपि ते ॥ ६२ ॥

व्रतेच्छुर्न पपौ स्तन्यं । वज्रस्तावद्दया अपि ॥ इत्याचार्यैः परिव्राज्य । साध्वीभ्यः पुनरर्पितः ॥ ६३ ॥
सुनंदापि व्रतं भेजे । वज्रस्त्वेकादशापि हि ॥ पठदार्यामुखाच्छ्रुत्वा — ध्यैष्टांगानि सन्मतिः ॥ ६४ ॥
अष्टवर्षोऽभवद्वज्रो । यावदार्याप्रतिश्रये ॥ ततो वसत्यामानिन्ये । हर्षितैस्तैर्महर्षिभिः ॥ ६५ ॥ अ-
न्यदा वज्रगुरवः । प्रत्यवंतिं प्रतस्थिरे ॥ अंतरा घनवृष्टौ च । तस्थुर्यक्षमठे क्वचित् ॥ ६६ ॥ प्राग्ज-
न्मसुहृदो वज्र — स्यामरा जृंभकास्तदा ॥ सत्त्वपरीक्षाकृते तत्र । वणिजीभूय चावसन् ॥ ६७ ॥ वा-
रिदे विरतप्राये । गुरून्नत्वाथ ते सुराः ॥ भिक्षार्थमभणन् वज्रं । गुरवस्त्वनुजज्ञिरे ॥ ६८ ॥ वज्रो-
ऽप्यावश्यकीं कृत्वे — र्यापरोऽपरसाधुयुक् ॥ गच्छन्नप्कायकणिका — स्पर्शभीतो न्यवर्तत ॥ ६९ ॥ तु-
षमात्रामपि ततो । वृष्टिं देवा निरुध्य तां ॥ विहर्तुमनयन् वज्रं । तत्सार्थे सोऽपि यातवान् ॥ ७० ॥
ससंभ्रमेषु देवेषु । तेषु भक्तादिदित्सया ॥ द्रव्यक्षेत्रकालभावै — रुपयोगमदत्त सः ॥ ७१ ॥ कु-
ष्मांडकादिकं द्रव्यं । कुतो ग्रीष्मसंभवि ॥ इदं तूज्जयिनीक्षेत्रं । स्वभावादेव कर्कशं ॥ ७२ ॥ प्रा-
वृषि प्रथमायां च । द्रव्यस्यास्य कथापि का ॥ दातारोऽप्यनिमेषाक्षाः । साक्षात्पद्भ्यामभूस्पृशः ॥
॥ ७३ ॥ तद् ध्रुवं देवपिंडोऽय — मकल्प्यो यतिनामिति ॥ वलितोऽसौ प्रणम्योचे । प्रत्यक्षीभूय तैः

सुरैः ॥ ७४ ॥ वयं हि जृंभका देवाः । प्राग्जन्मसुहृदस्तव ॥ त्वां दृष्टुं चागतास्त्वेह । कृष्टाः स्नेह-
गुणेन ते ॥ ७५ ॥ अथ वैक्रियलब्ध्याख्यां । विद्यां वज्राय तेऽमराः ॥ समंततः क्लृप्तमाया । इव
दत्वा तिरोऽभवन् ॥ ७६ ॥ ज्येष्टे मास्यन्यदा तद्वत् । परीक्ष्य बहुरूपिणीं ॥ विद्यां वज्राय दत्वामी ।
यथागतमगुः सुराः ॥ ७७ ॥ वज्रोऽथ सुस्थिरीभूतै-कादशांगो महामतिः ॥ अधीयमानमादत्त । श्रु-
त्वा पूर्वगताद्यपि ॥ ७८ ॥ स्थविराज्ञाभंगभीरुः । शक्तिं स्वामप्रकाशयन् ॥ पठन् स्वपाठमव्यक्तं ।
सोऽश्रौषीत्पठतोऽपरान् ॥ ७९ ॥ अन्यस्मिन्नहि मध्याह्ने । विहर्तुं व्रतिनो ययुः ॥ बहिर्भूमौ च गुर-
वो । वज्रोऽस्थाद्वसतौ पुनः ॥ ८० ॥ साधूनां मंडलेष्वेष । वेष्टिकाः संन्यवीविशन् ॥ आचार्य इव
साधूनां । तासां चादत्त वाचनाः ॥ ८१ ॥ वसतिद्वारमायाना । दूरादेवातिगर्जितं ॥ श्रुत्वा तद्वाचना-
ध्वानं । गुरवोऽचिंतयन्निति ॥ ८२ ॥ अस्मदागमनं त्वेते । पालयंतो महर्षयः ॥ स्वाध्यायं कुर्वते
भिक्षां । समादाय समागताः ॥ ८३ ॥ इत्याचार्यः क्षणं स्थित्वा । विदांचक्रुर्विमृश्य च ॥ यद्येष
वज्रबालर्षे—र्वाचनां ददतो ध्वनिः ॥ ८४ ॥ असौ पूर्वगतस्यैका-दशांग्या अपि वाचनां ॥ यद्दत्ते
तत्किमध्यैष्ट । गर्भस्थो विस्मयामहे ॥ ८५ ॥ स्थविरैः पाठ्यमानोऽय—मत एवालसायते ॥ बा-

व्यात्पाठलस इति । ज्ञात्वा तं प्रेरयामहे ॥ ७५ ॥ अस्मदाकर्णनाशंकी । लज्जितो मास्मभूदयं ॥
रोमांचिताः शिष्यगुणै-रित्याचार्या अपासरन् ॥ ७६ ॥ शब्देन महताचार्या-श्चक्रुर्नैषेधिकीमथ ॥
गुरूणां शब्दमाकर्ण्यो—दस्थाद्वज्रोऽपि विष्टरात् ॥ ७७ ॥ समुपेत्य मंदगति—र्न यावत्प्राविशद्गुरुः
॥ तावत्ता वेष्टिकाः सर्वाः । स्थाने वज्रो मुमोच च ॥ ७८ ॥

गुरोर्दंडं समादाय । तस्य चांह्री ममार्ज च ॥ धौतवांश्चासनस्थस्य । ववंदे च पदोदकं ॥७९॥
गुरवोऽचिंतयन्नस्य । व्रतिनः श्रुतसेवधेः ॥ यथा जानंति माहात्म्यं । प्रयतिष्यामहे तथा ॥ ९१ ॥
इत्याचार्या विभावर्यां । शिष्येभ्योऽकथयन्निति ॥ यास्यामो ग्राममुकं । द्वित्राहं तत्र नः स्थितिः
॥ ९२ ॥ वज्रो वो वाचनाचार्यो । भवितेति गुरोर्वचः ॥ भक्तत्वादविचार्यैव । प्रत्यपद्यंत ते तथा ॥
॥ ९३ ॥ प्रातःकृत्ये कृते वज्रं । निषद्यायां न्यषादयन् ॥ आचार्यस्येव विनयं । तस्याकार्षुश्च साध-
वः ॥९४ ॥ सर्वेषामपि साधूना—मानुपूर्व्या परिस्फुटान् ॥ संक्रांत्या वज्रलेपाभान् । वज्रोऽप्यालाप-
कान् ददौ ॥ ९५ ॥ अमोघवचनो वज्रो । बभूवातिजडेष्वपि ॥ तन्नव्यमद्भुतं दृष्ट्वा । गच्छः सर्वो
विसिस्मये ॥ ९६ ॥ आलापान् साधवः पूर्व-मधीतान् सस्फुरानपि ॥ संवादार्थमपृच्छंश्च । वज्रोऽप्या-

स्यत्तथैव तान् ॥ ९७ ॥ एकवाचनया वज्रा—त्तावत् पेठुर्महर्षयः ॥ यावन्न गुरुनोऽमून्नि—रनेका-
भिरपि श्रुतं ॥ ९८ ॥ तेऽप्यधुः साधवोऽन्योन्यं । गुरुर्यदि विलंबते ॥ वज्रपार्श्वे तदा शीघ्रं । श्रु-
तस्कंधः समर्थ्यते ॥ ९९ ॥ गुरुभ्योऽप्यधिकं वज्रं । मेनिरे मुनयो गुणैः ॥ तद्भूतमपि किं पुष्पं
। वृक्षेभ्यो नातिरिच्यते ॥ १०० ॥ एतावता गणो भावी । ज्ञातवज्रगुणः खलु ॥ इत्यायातान् गु-
रून् वज्र—सहिता मुनयोऽनमन् ॥ १ ॥ पृष्टे स्वाध्यायनिर्वाहे । गुरुणा मुनयोऽभ्यधुः ॥ पूज्यप्र-
सादाद्वज्रेणा—ऽज्ञानशैलो व्यभेदि नः ॥ २ ॥ वज्रोऽस्माभिरवज्ञातो । ह्यज्ञाततद्गुणैश्चिरं ॥ इदा-
नीमयमस्माकं । बालोऽपि भगवत्समः ॥ ३ ॥ बालोऽप्यस्त्येष गच्छस्य । तदतुच्छगुणो गुरुः ॥ ज्यो-
तिश्चक्रस्य नेतास्ति । ध्रुवोऽणुरपि किं न हि ॥ ४ ॥ गुरवोऽप्यधुर्युष्माक—मस्य ज्ञापयितुं गुणान्
॥ अगच्छाम वयं ग्राम—माचार्योऽयं च वोऽर्पितः ॥ ५ ॥ अन्यथा वाचनाचार्य-पदवीं नायमर्हति
॥ गुर्वदत्तं यतोऽनेन । कर्णश्रुत्याददे श्रुतं ॥ ६ ॥ संक्षेपविधिरूपोऽस्यो—त्सारकल्पो महाशयाः ॥
कार्यः पूर्वमिहाचार्य—पदयोग्यस्ततो भवेत् ॥ ७ ॥ ततश्च प्रागपठितं । श्रुतमर्थसमन्वितं ॥ वज्रम-
ध्यापयामासा—नायासादंजसा गुरुः ॥ ८ ॥ ह्यभूद् दृष्टिवादोऽपि । यावानेतस्य तावतः ॥ सा-

द्धिमात्रीभवन् पात्री—चक्रे वज्रमुनिं गुरुः ॥ ९ ॥ अन्यदा विहरंतोऽमी । पुरं दशपुरं ययुः ॥ भद्रगुप्तस्तदावंत्यां । दशपूर्वधरोऽभवत् ॥१०॥ तदादिशन्नमी वज्रं । त्वं वत्सोज्जयिनीं व्रज ॥ दशपूर्वीमिहाधीष्व । भद्रगुप्तगुरोर्मुखात् ॥ ११ ॥

इत्यात्मना तृतीयोऽयं । प्रेषितो गुरुणा क्षणात् ॥ वज्रोऽगाद्भद्रगुप्तांहि—पूतामुज्जयिनीं पुरीं ॥ १२ ॥ तदैक्षिष्ट गुरुः स्वप्नं । यदादाय करान्मम ॥ पतद्ग्रहं पयःपूर्णं । कश्चिदागंतुकोऽपिबत् ॥ ॥ १३ ॥ स्वप्नादिति स्वशिष्येभ्यो । भद्रगुप्तः प्रगे जगौ ॥ यदेष्यत्यतिथिः कोऽपि । स ममाध्येष्यते श्रुतं ॥ १४ ॥ वज्रोऽपि नगरीद्वारे । शर्वरीमतिवाह्य तां ॥ प्रभाते भद्रगुप्तस्या—चार्यस्य वसतिं ययौ ॥ १५ ॥ प्रसिद्धिसदृशीं वज्र—स्याकृतिं परिभाव्य च ॥ वज्रोऽयमिति निश्चिक्ये । भद्रगुप्तो जहर्ष च ॥ १६ ॥ वंदनाभिमुखं वज्रं । भद्रगुप्तोऽथ सस्वजे ॥ अंकमारोप्य चोवाच । तन्मुखन्यस्तलोचनः ॥ १७ ॥ कच्चित्सुखविहारस्ते । कच्चित्तेंगमनामयं ॥ कच्चित्तपस्ते निर्विघ्नं । कच्चित्ते कुशली गुरुः ॥ १८ ॥ किं किंचित्कार्यमुद्दिश्य । विहारक्रमतोऽथवा ॥ इहागतोऽसि वज्रर्षे । कथयास्मान् प्रमोदय ॥ १९ ॥ वंदित्वा भद्रगुप्तर्षिं । वज्रो विरचितांजलिः ॥ उवाच वदनद्वार—विन्यस्तमुखव-

स्त्रिकः ॥ २० ॥ यद्यत्सुखविहारादि । पूज्यपादैरपृच्छ्यत ॥ तत्तत्तथैव देवानां । गुरूणां च प्रसादतः ॥ २१ ॥ अध्येतुं दशपूर्वाणि । त्वामागां गुर्वनुज्ञया ॥ तद्वाचनाप्रदानेन । प्रसीद भगवन्मयि ॥ ॥ २२ ॥ तदामुं दशपूर्वाणि । भद्रगुप्तोऽध्यजीगपत् ॥ गुरोरजनितक्लेशो । वज्रश्च दशपूर्व्यभूत् ॥ ॥ २३ ॥ भद्रगुप्तमथापृच्छ्य । वज्रो दशपुरं ययौ ॥ पूर्वानुज्ञा कृता सिंह—गिरिणा गुरुणास्य तु ॥ २४ ॥ तदनुज्ञादिने तस्य । विदधे जृंभकामरैः ॥ गंधांबुवृष्टिकुसुम—प्रकरैर्महिमाद्भुतैः ॥२५॥ गणं वज्रमुनेः सिंह—गिर्याचार्यः समर्प्य सः ॥ प्रत्याख्यायान्नपानादि । कालं कृत्वा ययौ दिवि ॥ ॥ २६ ॥ वज्रस्वामी व्यहार्षीच्च । मुनिपंचशतीवृतः ॥ महीमहीनसौभाग्य—श्रुतशीलादिविश्रुतः ॥ ॥ २७ ॥ अन्यकथाभागो ग्रंथांतराद् ज्ञेयः ॥ अथ सविस्मयं मुनिजनार्यमेतार्यगुणचर्यामाह—

॥ मूलम् ॥—दिढसिरवेढनिपीडण—निग्गयनयणोवि जं न परिकुविज्ज ॥ मेअज्जखमासमणो । मे अज्जवि तं चमक्केइ ॥ ४३ ॥ व्याख्या—मेअज्जखमासमणो मेतार्यनामा क्षमाश्रमणो महामुनिः दिढत्ति दृढश्चासौ शिरसो वेष्ट आर्द्रचर्मबंधनं दृढशिरोवेष्टः, तेन निर्गते नयने यस्य स तथा, अपीत्यतिशये, एवंभूतोऽप्यसौ जं न परिकुविज्ज यन्न परिकुपितः मे अज्जवि तं चमक्केइ म-

माद्यापि तच्चमत्करोतीति संक्षेपार्थः, व्यासार्थस्तु कथानकादवसेयस्तच्चैतत्—अस्ति राजगृहं नाम । पुरं तिलकवद्भुवः ॥ यत्र मुक्तापरीवेशः । शालवेषः प्रकाशते ॥ १ ॥ तत्र वित्रासितारातिश्रेणिः श्रेणिक इत्यभूत ॥ राजा सुकृतसंदर्भराजितः परमार्हतः ॥ २ ॥ त्रिसंध्यमर्चयित्वार्हदर्चां तस्याः पुरोऽन्वहं ॥ स्वस्तिकं कुरुते स्वर्णयवैरष्टशतेन सः ॥ ३ ॥ पुरेऽस्मिन्नेकदैकाकिविहारप्रतिमास्थितः ॥ मेतार्यो दशपूर्व्यांगादर्यमेव तमोऽपहः ॥ ४ ॥ वैभारभूधरे कृत्वा । स मासक्षपणं प्रभुः ॥ सैंहीं वृत्तिं प्रपेदानः । पारणायाविशत्पुरीं ॥ ५ ॥ स्वामीर्यासमितो भ्राम्यन्नेषणावीक्षणापरः ॥ राज्ञः सुवर्णकारस्य । गृहांगणमथं गतः ॥ ६ ॥ दरिद्रस्येव कल्पद्रुरंधस्येव सुधाकरः ॥ मेतार्यपादास्तिष्ठंतो । रेजिरेऽस्य गृहांगणे ॥ ७ ॥ देवतावसरायोर्वीपतेः स्वर्णयवान् कृतान् ॥ विमुच्य स्वर्णकारोऽयं । गृहांतरविशत्तदा ॥ ८ ॥ भ्राम्यन्नत्रयेत्य तत्क्रीडाक्रौंचः पक्षी क्रमिभ्रमात् ॥ जवादेव यवानेतानपक्षूणमचूणयत् ॥ ९ ॥ यावत्सुवर्णकारोऽपि । गृहमध्यादुपाययौ ॥ नाद्राक्षीत् यवांस्तावद् । दध्यौ चेति चमत्कृतः ॥ १० ॥ एतावन्मात्रकाले हा । ययुः क नु यवा मम ॥ देवार्चासमयश्चायं । नान्यान् घटयितुं सहे ॥ ११ ॥ इहापराधे हा हंत । राजांत·

क इव क्रुधा ॥ मां विमुच्यापरं दंभं । नवखंभं विधास्यति ॥ १२ ॥ तदेनं सत्यवचनं । मुनिं पृ-
च्छामि तत्कथं ॥ असौ तन्नाशसाक्षी यत् । कर्मसाक्षीव खेचरः ॥ १३ ॥ ध्यात्वेति दीनवदनो-ऽभि-
सृत्य मुनिमब्रवीत् ॥ यवाः केन गृहीता मे । प्रसीद कथय प्रभो ॥ १४ ॥ शृण्वन्नपि मुनिश्रेया-
नशृण्वन्निव तद्गिरं ॥ स क्रौंचकृपयाभेजे । मौनं सर्वार्थसाधनं ॥ १५ ॥ मुहुर्मुहुरसावेवं । पृच्छ्य-
मानोऽपि नावदत् ॥ यदा तदामुनाशंकि । खल्वयं यवतस्करः ॥ १६ ॥ गृहांतरा दुरात्मासौ । ततः
सौवर्णिको मुनिं ॥ नीत्वा रूक्षाक्षराक्षेप-पूर्वं पप्रच्छ तत्कथं ॥ १७ ॥ यावत्तथापि नाशंस-न्महा-
त्मासौ कृपापरः ॥ तावत्कुट्टयितुं तेन । प्रारेभे यष्टिमुष्टिभिः ॥ १८ ॥ घटी हरति तायोनि । ता-
ड्यते झल्लरी यथा ॥ दीपालिकाच्चि पिबति । सूर्पो वा कुट्यते यथा ॥ १९ ॥ तथा क्रौंचो यवान-
श्नाद् । दुर्जनः सद्गुणानिव ॥ विषेहे स तु मेतार्यः । कलादस्य कदर्थनां ॥ २० ॥ स यावज्जा-
त्यहेमेव । ताड्यमानोऽपि नास्फुटत् ॥ कलादेनामुना ताव-न्मारांकमुपचक्रमे ॥ २१ ॥ वेष्टयि-
त्वाभितो वध्रं । नीरंध्रं मूर्ध्नि स क्रुधा ॥ कीलौ मुनिवृषस्यास्य । निचखान विषाणवत् ॥ २२ ॥
यथा यथा व्यथा जज्ञे । मुनिरेष तथा तथा ॥ प्रमोदमैत्रीकारुण्यो-पेक्षापुण्योऽभवद् भृशं ॥ २३ ॥

निर्निमित्तोपकार्येष । निःशेषदुरितापहं ॥ कथंचनापि कल्याणी । बोधिरत्नमवाप्नुयात् ॥ २५ ॥ मे
तार्यः सकलो लोको । वराकोऽयं तु मज्जति ॥ वृथा मेतार्यनामाह—मेतस्मिन्नन्नवं हहा ॥ २६ ॥
देहोऽयं याति तद्यातु । यद्यस्त्येष तदस्तु वा ॥ किमस्य चिंता ह्यस्माकं । नश्वरस्य च निश्चयात्
॥ २७ ॥ इत्यस्य ध्यायतः पक्ष्म—पुटतो निःसृते दृशौ ॥ एतत्समोऽस्ति कोऽप्यन्य । इतीव बहि-
रीक्षितुं ॥ २८ ॥ क्षपकश्रेणिकः श्रेणि-मथारोहन्नयं मुनिः ॥ केवलं गुणमासाद्य । सद्यो लोकाग्र-
मीयिवान् ॥ २९ ॥ तदानीं स्वर्णकृद्गेह-प्रांगणे कश्चिदक्षिपत् ॥ इंधनं तद्भटत्कृत्या । भीतः क्रौंचो-
ऽवमद्यवान् ॥ ३० ॥ तान् विलोक्य जनः क्रोशन् । निनिंद मुनिघातकं ॥ निजेन कर्मणा सोऽपि
। मषीलिप्त इवाभवत् ॥ ३१ ॥ राज्ञा विज्ञाय तत्तूर्णं । स्वर्णकारं निशुंभितुं ॥ प्रेषिताः पुरुषाः प्रा-
पु—रुत्क्रोशंत इवारयः ॥ ३२ ॥ संसारस्य नृपस्य च प्रतिभयादुत्पन्नधीः स्वर्णकृत् । श्रामण्यं सकु-
टुंबकोऽपि स निजावासे समासेदिवान् ॥ मुक्तः क्षोणिभुजा तदैव यतिरित्येतद्वयं मन्महे । संसा-
रेण तु मोक्ष्यते क्वचिदसौ जानाति तत्केवली ॥ ३३ ॥ अथ तदसीमशीलगुणध्यानप्रधानमानसः
संजातपुरोदर्शनमिव सुदर्शनमभिनंदयन्नाह—

॥ मूलम् ॥—जवजमणनिप्भयाए । अजयाए पाडिजंवि तह विसमे ॥ निव्वूढोऽसि सुदंस-
ण । तुह कित्ती तेण महमहइ ॥ ४४ ॥ व्याख्या—हे सुदर्शन जवभ्रमणनिर्भयया अभयया तह
विसमे तथा तेन निरुपायसारेण प्रकारेण विषमे संकटे वह्नाविव कनकपिंडः पाडिजंवि पातितोऽ
पि, यत्तदोर्नित्यसंबंधत्वात् येन निव्वूढोऽसि निर्व्यूढोऽसि तस्माद्विषमादिति जावः, विशेषमहिमान-
माह—तुह कित्ती तेण महमहइ तव कीर्तिस्तेन वहमानपरिमला प्रसरतीति संक्षेपार्थः, व्यासार्थ-
स्तु कथानकादवसेयस्तच्चैतत्—अस्त्यंगदेशे दत्तारि-कंपा चंपाजिधा पुरी ॥ ङुग्धोदधियशास्तस्यां
। नृपोऽभूद्दधिवाहनः ॥ १ ॥ अजया विभया स्वास्य—दासितेंडुः प्रियास्य तु ॥ रूपलावण्यकलिता
। कैटजारेरिवेंदिरा ॥ २ ॥ इतस्तस्यां पुरि श्रेष्ठी । गरिष्ठो धर्मशालिनां ॥ अजूद् वृषजदासोऽस्या-
र्हद्दासीति प्रिया खलु ॥ ३ ॥ श्रेष्टिनस्तस्य महिषी—पालः सुजग इत्यजूत् ॥ निनाय महिषीर्नित्यं ।
स तु चारयितुं वने ॥ ४ ॥ माघमासे वनादेष । निवृत्तः सायमन्यदा ॥ अप्रावरणमद्राक्षीत् । का-
योत्सर्गस्थितं मुनिं ॥ ५ ॥ अस्यां हेमंतरात्रौ यः । स्थाता स्थाणुरिव स्थिरः ॥ असौ धन्यो महा-
त्मेति । चिंतयन् स गृहं ययौ ॥ ६ ॥ कथं सोढा महर्षिः स । रात्रौ शीतकदर्थनां ॥ तमित्यार्द्रम-

ना ध्यायन् । यामिनीं तामनीनयत् ॥ ७ ॥ निशायामविज्ञातायां—मादाय महिषीस्ततः ॥ स य-
यौ तत्र यत्रास्ति । स मुनिः प्रतिमास्थितः ॥ ८ ॥ नमस्यन्नतिमात्रं त—मुपासामासिवानसौ ॥ त-
दास्यस्पर्धयेवार्क । उद्ययौ तदुपास्तये ॥ ९ ॥ स नमो अरिहंताण—मित्युक्त्वोदपतन्मुनिः ॥ त-
त्पदं खेचरीविद्या-धियांतः सुभगस्त्वधात ॥ १० ॥ स्वपन्जाग्रन्नदंस्तिष्ठ-न्नक्तमह्नि गृहे बहिः ॥ त-
देवापठदुद्विष्टो—ऽप्येकग्राह्या हि तादृशाः ॥ ११ ॥ पप्रच्छ विस्मितः श्रेष्ठी । तत्प्रवृत्तिमयं ततः ॥
शशंस तत्तथोद्भूतां । श्रेष्ठी पुनरुवाच तं ॥ १२ ॥ आकाशगमने हेतु—रसौ विद्या न केवलं ॥
किंतु हेतुरसावेव । गतौ स्वर्गापवर्गयोः ॥ १३ ॥ किमेकमुच्यते पंच-परमेष्ठिनमस्कृतेः ॥ अस्या
यस्याः प्रभावेण । किंकरीक्रियते जगत् ॥ १४ ॥ विद्येयं साधु यत्प्राप्ता । पठ कित्वखिलामिमां ॥
उद्विष्टो मा जपेः श्रेयः । परत्रेह च ते यथा ॥ १५ ॥ सोऽथ शेषनमस्कार—मधीत्य श्रेष्ठिनो मु-
खात् ॥ परावर्तयताजस्रं । धनं प्राप्येव निर्धनः ॥ १६ ॥ एवं तस्य नमस्कार—जापव्यापारिणः स-
तः ॥ कियत्यपि गते काले । वर्षाकालः समाययौ ॥ १७ ॥ नीचैस्तराण्यथो नीचै—रुच्चैरुच्चैस्तरा-
ण्यथ ॥ तदानीमेकदानीव । घनः स्वीयश्रियाधिनोत् ॥ १८ ॥ गृहाद्गृहीत्वा महिषी—र्जगाम सु-

भगो वनं ॥ नदीं तीर्त्वा महिष्यस्तु । परक्षेत्रे तदाविशन् ॥ १९ ॥ दृष्ट्वा ताः सुभगः शीघ्रं । न-
मस्कारपरायणः ॥ दत्तझंपो नदीपूरे । विद्धः कीलेन केनचित् ॥ २० ॥ तथैवावर्तयन् पंच—परमे-
ष्टिं विपद्य सः ॥ श्रेष्टिपत्न्यास्ततः कुक्षौ । तत्प्रभावादवातरत् ॥ २१ ॥ तस्मिन् गर्भगते श्रेष्ठी । दे-
वसंघार्चनादिकान् ॥ पत्न्या ऋषभदासोऽथ । पूरयामास दोहदान् ॥ २२ ॥ सार्हद्दासी ततः पुत्र—
मसूत शुभलक्षणं ॥ पुत्रजन्मोत्सवं श्रेष्ठी । यथावैभवमातनोत् ॥ २३ ॥ पितृभ्यां सोत्सवं कृत—
नामा सैष सुदर्शनः ॥ वर्धमानः क्रमेणेंदु—रिवाप सकलाः कलाः ॥ २४ ॥ कन्यां मनोरमां ना-
म्ना । मनोरमकुलोद्भवां ॥ रतिस्मरमिव श्रेष्ठी । तमथो पर्यणाययत् ॥ २५ ॥ पित्रोर्न केवलं नेत्र—
कुमुदानंदमिंदुवत् ॥ चक्रे राज्ञोऽपि लोकस्य । सर्वस्यापि सुदर्शनः ॥ २६ ॥ इतो नगर्यां तत्रास्ते
दधिवाहननृपतेः ॥ पुरोधाः कपिलः सोऽधात् । सौहृदं श्रेष्टिसूनुना ॥ २७ ॥ अर्जुनस्य विधुः पंच
–शरस्य च विधुर्यथा ॥ सुदर्शनस्य स प्रायः । पारिपार्श्वं मुमोच न ॥ २८ ॥ कपिलं कपिलाना-
मा । भार्यापृच्छत्तमन्यदा ॥ विस्मरन्नित्यकृत्यानि । क्वेयत्कालं विलंबसे ॥ २९ ॥ पार्श्वे सुदर्शनस्या-
हं । तिष्ठामीति तदीरिते ॥ कोऽसौ सुदर्शन इति । तयोक्तः प्रत्युवाच सः ॥ ३० ॥ मम मित्रं स-

तां धुर्यं । विश्वैकप्रियदर्शनं ॥ सुदर्शनं न चेद्वेत्सि । तत्त्वं वेत्सि न किंचन ॥ ३१ ॥ तं ज्ञापयाधु-
नापीति । तयोक्तः कपिलोऽवदत् ॥ असावृषभदत्तस्य । श्रेष्ठिनस्तनयो नयी ॥ ३२ ॥ सैष रूपेण
पंचेषु-स्तेजसा तेजसां पतिः ॥ सौंदर्येण शरच्चंद्रो । गांभीर्येण तु वारिधिः ॥ ३३ ॥ सदा स्व-
दारसंप्राप्त-लीलः शीलगुणो महान् ॥ मुक्तास्थाले यथा रत्न-मिंदुकांतममूल्यकं ॥ ३४ ॥ श्रुत्वेति
कपिला काम-विह्वला तद्गुणश्रवात् ॥ सुदर्शनेऽभिसर्तुं सा । चक्रे चिंतामहर्निशं ॥ ३५ ॥ अन्य-
दा नृपतेर्गूढ—देशाद्ग्रामांतरं गते ॥ कपिले कपिलेयाय । सुदर्शनमुवाच च ॥ ३७ ॥ अद्य ते
सुहृदो देहा—पाटवं तेन ते गृहं ॥ नाययौ त्वां समाह्वातु-मातुरो मां न्ययोजयत् ॥ ३८ ॥ हा
न वेद्मीदमित्युक्त्वा । तं गृहं द्रुतमागतं ॥ नीत्वैकांते वृषस्यंती । कपिलाप्रार्थयत् किल ॥ ३९ ॥
पतितः संकटे तस्याः । स्मित्वोवाच सुदर्शनः ॥ भद्रे युक्तमिदं यूनां । भवस्यापि फलं ह्यदः ॥४०॥
षंढः परमहं मूढे । मोहिता त्वं मुधा खलु ॥ इत्युक्त्वा द्रुतमेवासौ । निर्ययौ च सुदर्शनः ॥ ४१ ॥
स्तोकेन दुर्गतद्वारा-च्त्रुटितोऽस्मीति चिंतयन् ॥ कल्याणी शीलवृत्तिः स्वं । धाम धीमानयं गतः ॥
॥ ४२ ॥ नार्योऽनार्यौचितीशीलाः । कीला इव हविर्भुजः ॥ भस्मतां मेलयंत्यात्म—पराश्रयमसं-

स्तुताः ॥ ४४ ॥ एताभ्यो भीरुरस्मीति । विमृश्याथ सुदर्शनः ॥ प्रत्यज्ञासीत्परगृहे । नैको यास्याम्यतः परं ॥ ४५ ॥ देहबद्ध इव न्यायो । विवेक इति मूर्तिमान् ॥ प्रत्यक्ष इव धर्मोऽसौ । नावद्यं किंचिदाचरत् ॥ ४६ ॥ यथाकालमथायाते । तत्र चेंद्रमहोत्सवे ॥ सुदर्शनपुरोधाभ्यां । सहोद्यानं ययौ नृपः ॥ ४७ ॥ इतो नरविमानस्था—ऽभया कपिलयान्विता ॥ शरल्लक्ष्मीरिवोत्फुल्ल—नयना नृपमन्वगात् ॥ ४८ ॥ सुदर्शनप्रिया षड्भिः । समं पुत्रैर्मनोरमा ॥ तत्रागाद्यानमारुह्य । धर्मसंपद्गुणैरिव ॥ ४९ ॥ अभयां कपिलापृच्छत् । षट् पुत्रा केयमंगना ॥ महादेवीसमायाता । किमत्र षण्मुखान्विता ॥ ५० ॥ राज्यलक्ष्मीरिव गुणैः । सुतैः षड्भिरियं युता ॥ सुदर्शनप्रियाज्ञायि । नत्वयेत्यदभयावदत् ॥ ५१ ॥ श्रुत्वेति विस्मिता स्माह । कपिला देवि यद्यसौ ॥ सुदर्शनस्य गृहिणी । तदस्यास्तनयाः कुतः ॥ ५२ ॥ अथ स्मित्वाभयावोचत् । पुमान् किं न सुदर्शनः ॥ सावादीन्नैव राज्ञ्यूचे । चतुरे वेत्स्यदः कथं ॥ ५३ ॥ इत्युक्त्वा स्वानुभूतं सा—ऽभयायै कपिला ततः ॥ सुदर्शनस्य षंढत्व—वृत्तांतं तत्तथा जगौ ॥ ५४ ॥ अभयाप्यब्रवीदेवं । यद्येवं वंचितासि तत् ॥ मूढे षंढोऽयमन्यस्त्री—जने नात्ममृगीदृशि ॥ ५५ ॥ ख्यातो विलक्षा कपिला—प्यब्रवीदित्यसूयया ॥ वंचिता चेद

ञ्भयोचे स्त्रिया चंद्र—कलयेव करस्थितः ॥ ञ्प्रसंज्ञो-
हं मूढा । प्रौढायाः किं तवाधिकं ॥ ५६ ॥ सेर्ष्यमूचेऽथ कपिला—प्येवं मा गर्वमुद्वह ॥
ऽपि द्रवेद्ग्रावा । संसज्ञः किं पुनः पुमान् ॥ ५७ ॥ व्याजहाराभयादेवो । साहंकारमिदं ततः ॥ ह-
गर्वं वहसि चेद्देवि । रम्यतां तत्सुदर्शनः ॥ ५८ ॥ योषाभिः पशुवेषाभि—रपि ते मुनयो वने ॥
ले रामितमेवैनं । मया विद्धि सुदर्शनं ॥ ५९ ॥ विलसामि न यद्येनं । तद्विशामि हुताशनं ॥
नीरसा ञ्प्यरम्यंत । कासौ स्मरवशो गृही ॥ ६० ॥ चिरं चिक्रीडतुस्तत्रो—द्याने वानेयसंपदा ॥
इत्यालपंत्यावुद्यानं । प्रपेदाते क्षणेन ते ॥ ६१ ॥ ञ्भयात्मप्रतिज्ञात—मथ मन्मथजीवितं ॥
ञ्भयाकपिले श्रांते । निशांते जग्मतुस्ततः ॥ ६२ ॥ ञ्प्रथैतां पंडिता प्राह । खंम्हितानन्दीधितिः ॥
उपायपंडितायै तत् । पंडितायै न्यवेदयत् ॥ ६३ ॥ ञ्प्रन्योऽपि परनारीषु । सोदरः श्रावको भ-
पात्रापात्रमनालोच्य । धिक् प्रतिज्ञामिमां तव ॥ ६४ ॥ सदा गुरुकुलासेवी । ध्यानमौनरतः स-
वेत् ॥ ञ्प्रसौ किंतु महासत्व-शिरोरत्नं सुदर्शनः ॥ ६५ ॥ वरं सिंहसटासर्प—फणारत्नग्रहाग्रहः ॥
दा ॥ ञ्प्रानेतुमभिसर्तुं वा । स कथं नाम युज्यते ॥ ६६ ॥ जिनाधिवासितोऽप्यंत—र्गभीरोऽपि सरित्प-
न तु शीलविलोपाय । प्रतिज्ञातः सुदर्शनः ॥ ६७ ॥

सदैन्यमन्यथावादी—देकवेलं कथं-
तिः ॥ द्वये त्यजति मर्यादां । न तथापि सुदर्शनः ॥ ६८ ॥ अथो तथोदयत्प्रज्ञा—मंभिता प्राह
चन ॥ आनयैनं ततः सर्वं । न्नलिष्याम्यहमेव तत् ॥ ६९ ॥ पर्वाहे शून्यगेहादौ । कायोत्सर्गं
पंडिता ॥ निश्चयश्चेत्तवायं त–दस्त्युपायो मया स्मृतः ॥ ७० ॥ उपायः साधुसाध्वस्मिन् ।
करोति सः ॥ आनेतव्यो यदि परं ॥ तथास्थो नान्यथा पुनः ॥ ७१ ॥ सुदर्शनसमां काम–
यतितव्यं त्वयानिशं ॥ इत्युक्तवत्यां तात्पर्या—देव्यामामेत्युवाच सा ॥ ७२ ॥ तस्यामानीयमानायां ।
प्रतिमां तत्र कामपि ॥ पूजायै पंडिता पर्व—शर्वरीषु समानयत् ॥ ७३ ॥ एवंकारं व्यतीतेषु । दि-
प्रतिपर्वनिशं भृशं ॥ तया विश्वासमानीताः । सर्वेंतःपुरयामिकाः ॥ ७४ ॥ तदुत्सवाय राजाथ ।
वसेषु कियत्स्वपि ॥ विश्वानंदी समागच्छत् । कौमुदीयो महोत्सवः ॥ ७५ ॥ प्रातरेष्यच्चतुर्मास—धर्मक-
पटहोद्घोषपूर्वकं ॥ सर्वश्चोद्यानमाच्छास्त । समस्तमपि पूर्जनं ॥ ७६ ॥ अनुज्ञातो नृपेणाह्नि । द्वितीये
र्मकृते कृती ॥ सोपायनो नृपं गत्वा । पृच्छतिस्म सुदर्शनः ॥ ७७ ॥ ततो रात्रौ गृहीत्वैष । पौषधं उ-
श्रीमदर्हतां ॥ अर्चां विरचयंश्चैत्य—परिपाटीं चकार सः ॥ ७८ ॥ इतोऽन्ययापि विहित—शिरोऽ-
रितांतदं ॥ कायोत्सर्गेण कुत्रापि । स्थितः शून्यगृहांतरे ॥ ७९ ॥

च्छिद्मना तथा ॥ तस्थौ नृपतिमापृच्छ्य । यदुत्पन्नधियः स्त्रियः ॥ ८० ॥ अथो सुदर्शनं याने ।
न्यस्याछाद्य च वाससा ॥ द्वाःस्थैरस्खलिता नीत्वा—ऽभयायै पंक्तितार्पयत् ॥ ८१ ॥ तमस्पष्टाक्षरोल्ला-
पा । पाणौ धृत्वाथ पुंश्चली ॥ खिद्यंती कंपमानाथा—प्रार्थयत्पार्थिवप्रिया ॥ ८२ ॥ पुंनागस्यास्य
सुमनः—कृष्टिमाधातुमुच्चकैः ॥ भुजं व्यापारयामास । कुटिला मर्कटीव सा ॥ ८३ ॥ स्कंधे ललंबे
बाहुभ्यां । मृदुलाभ्यां मृणालवत ॥ रंभास्तंभाभिरामाभ्यां । तस्य सा मदनातुरा ॥ ८४ ॥ ततः सु-
दर्शनोऽत्यर्थं । समाधिस्तिमितोऽभवत् ॥ वर्षासरित्परीरब्धः । किमब्धिस्तरलायते ॥ ८७ ॥ पुनर-
प्यभयावादी—दतिदीनत्वभावयुक् ॥ प्रसीद नाथ सीदंतीं । कथं मां समुपेक्षसे ॥ ८८ ॥ मन्म-
थो हंत मां हंति । दुर्वारप्रसरैः शरैः ॥ ततश्चातीवदीनां त्वं । पाहि मां शरणागतां ॥ ८९ ॥ आ-
नीतश्छद्मनासीति । कोपं मास्म वृथा कृथाः ॥ बध्ध्वानीतो नदीपूरः । प्रजाशाः किं न पूरयेत् ॥
॥ ९० ॥ व्रतकष्टमिदं मुंच । मत्प्राप्त्या फलितं ह्यदः ॥ स्वर्गापवर्गयोर्वार्ता । स्मार्तानां खलु फल्गु-
री ॥ ९१ ॥ ताम्यंतीं याचमानां मां । नम्रां नाथोररीकुरु ॥ भाग्यात्स्वयमुपातायां । सुधां पिबसि
किं नहि ॥ ९२ ॥ कियद्द्यापि सौभाग्य—गर्वमुन्नाटयिष्यसि ॥ इत्यालपंती सा पीन—स्तनाभ्यां

तमताडयत् ॥ ९३ ॥ इत्थं यथा यथा चक्रे । सोपसर्गमनर्गला ॥ सुदर्शनः शुभध्यान—मारुरोह
तथा तथा ॥ ९४ ॥ स दध्यौ चेति चेन्मुच्ये । कथंचिदहमेतया ॥ पारयामि तदुत्सर्ग—मन्यथान-
शनं मम ॥ ९५ ॥ अमानिताथ घटित—भ्रुकुटिः कुटिलाशया ॥ तं भापयितुमारेभे । भषंती नि-
र्भयाभया ॥ ९६ ॥ त्वयीदमूषरे सर्वं । मूर्ख रे वर्षितं मया ॥ न वेत्सि मानिनी तुष्टा—मृतं रुष्टा
विषं पुनः ॥ ९७ ॥ चापस्येवाधुना जीवा—धानं ते नमतो मयि ॥ अन्यथा ते विनाशो हि ।
त्वया ज्ञेयः सुनिश्चितः ॥ ९८ ॥ इत्थं यथायथाभैषी—दभया पातकाभया ॥ तथातथासौ सद्ध्यान-
मानशे निजमानसे ॥ ९९ ॥ विचक्रामाभया काम—विह्वला सकलां निशां ॥ न चुक्षोभ तथा-
दात्म—दर्शनस्तु सुदर्शनः ॥ १०० ॥ ततः प्राभातिकीं वीक्ष्य । रजनीं राजवल्लभा ॥ विलक्षा स्वं
विलिख्याशु । नखैः पूत्कारमातनोत् ॥ १ ॥ आयांतिस्म ततो याव—द्यामिकास्तत्र संभ्रमात् ॥ का-
योत्सर्गस्थितं तावद् । ददृशुस्ते सुदर्शनं ॥ २ ॥ अस्मिन्न संभवत्येत—दिति द्रुतमुपेत्य तैः ॥ वि-
ज्ञप्तो भूपतिस्तत्रा—ययौ पप्रच्छ चाभयां ॥ ३ ॥ सोचेऽनुज्ञाप्य देव त्वा—महं यावदिह स्थिता ॥
आविर्भूतः पुरो भूत । इवायं तावदीक्षितः ॥ ४ ॥ ततः पटूनि चाटूनि । कुर्वाणः स्मरघस्मरः ॥

असौ पशुरिवोन्मत्तो । मां रिरंसुरयाचत ॥ ५ ॥ अनिर्बंत्यां मयि ततो । बलात्कारमयं व्यधात् ॥
मया च पूत्कृतं नान्य—दबलानां बलं यतः ॥ ६ ॥ अस्मिन्निदमसंभाव्य—मिति मत्वा महीपतिः
॥ किमेतदिति पप्रछ । सुदर्शनमनेकधा ॥ ७ ॥ पृष्टोऽपि राज्ञीकृपया । किंचिन्नोचे सुदर्शनः ॥
येनापकारकेऽन्योऽपि । संतो हंतोपकारिणः ॥ ८ ॥ ततः संभावयामास । दोषं तस्यैव भूपतिः ॥
पारदारिकदस्यूनां । तूष्णीकत्वं हि लक्षणं ॥ १० ॥ इति क्रुद्धः समादिक्ष—दारक्षेऽप्यत्र पत्तने ॥
दोषप्रख्यापनां कृत्वा । दुष्ट एष निगृह्यतां ॥ ११ ॥ अथारक्षैस्ततो धृत्वा । केशेष्वयमकृष्यत ॥ य-
थातथापि जायेत । यौवने हि विगोपनं ॥ १२ ॥ स मुखे चर्चितो मष्या । देहे चूर्णेन चित्रितः
॥ बिल्वैरलंकृतो मूर्ध्नि । कंठे निंबदलस्रजा ॥ १३ ॥ रासभारोपितः सूर्पा—तपत्रस्तत्र पत्तने ॥ वा-
द्यमानेन वाद्येना—रेजे भ्रमायितुं भटैः ॥ १४ ॥ कृतापराधः शुद्धांते । वध्यतेऽसौ सुदर्शनः ॥ ना-
त्र दोषो नृपस्येति । चक्रुराघोषणां च ते ॥ १५ ॥ न युक्तं कृतवानेष । नेह संभवतीदृशं ॥ अ-
स्मिन् राजापि नेदृक्षः । कुपितोऽत्र विधिः खलु ॥ १६ ॥ धर्मो धिगस्य किं शेते । पुराकर्म किम-
प्यदः ॥ अयं मुच्येत नः सर्व—द्रव्यैर्वा जीवितैरपि ॥ १७ ॥ मिथो विचारयत्येवं । हाहाकारं च

अदृश्यत महासत्या कुर्वति ॥ पूर्जने रोदिति भ्राम्य—न्नगादग्रे स्ववेश्मनः ॥ १८ ॥ विशेषकं ॥ इत्यंतर्विवशा वे- । स मनोरमया ततः ॥ अचिंति च सदाचारो । मत्पतिः किमिदं हहा ॥ १९ ॥ श्रृएवंतु नग- श्म—मध्यमध्यास्य सत्वरं ॥ अर्चयित्वा जिनं कायो—त्सर्गस्थेदमचिंतयत् ॥ २० ॥ परमश्राव- वत्यः श्री—जिनशासनदेवताः ॥ चंडे लांछनमस्तीदं । सर्वथा मत्पतौ तु न ॥ २१ ॥ अन्यथैवं कस्यास्य । सान्निध्यं चेत्करिष्यथ ॥ तदाहं पारयिष्यामि । कायोत्सर्गमिमं खलु ॥ २२ ॥ मा कु- स्थितिजुषो—ऽनशनं ध्रुवमेव मे ॥ धर्मध्वंसे पतिध्वंसे । किं जीवंति कुलस्त्रियः ॥ २३ ॥ थाः पुत्रि निर्वेदं । नलिष्यामोऽखिलं वयं ॥ सा समाधिस्थिताश्रौषी-द्गिरं दिव्यां कुतोऽप्यथ ॥२४॥ ततश्च न्यधुरारक्षाः । शूलिकायां सुदर्शनं ॥ स्वर्णांभोजासनमभू—दियं तस्य महात्मनः ॥ २५ ॥ अथारक्षैर्वधायास्य । दृढं व्यापारिता अपि ॥ कंठपीठेऽसिदंडानां । प्रहारी हारतामगुः ॥ २६ ॥ मौ- लौ मुकुटतां नेजुः । कुंडलत्वं च कर्णयोः ॥ बाह्वोः केयूरतां नेजुः । पादे कटकतां च ते ॥२७॥ तद् दृष्ट्वा चकितैरेतै-र्विज्ञप्तो वसुधापतिः ॥ आरुह्य करिणीं सोऽगा—द्वेगादधिसुदर्शनं ॥ २८ ॥ व्रीडामुकुलितास्येंदु—स्तमालिंग्य नृपोऽवदत् ॥ दिष्ट्या न हि विनष्टोऽसि । श्रेष्ठिन्नात्मप्रभावतः ॥

असौ पशुरिवोन्मत्तो । मां रिरंसुरयाचत ॥ ५ ॥ अनिच्छंत्यां मयि ततो । बलात्कारमयं व्यधात् ॥
मया च पूत्कृतं नान्य—दबलानां बलं यतः ॥ ६ ॥ अस्मिन्निदमसंभाव्य—मिति मत्वा महीपतिः
॥ किमेतदिति पप्रच्छ । सुदर्शनमनेकधा ॥ ७ ॥ पृष्टोऽपि राज्ञीकृपया । किंचिन्नोचे सुदर्शनः ॥
येनापकारकेष्वपि । संतो हंतोपकारिणः ॥ ८ ॥ ततः संभावयामास । दोषं तस्यैव भूपतिः ॥
पारदारिकदस्यूनां । तूष्णीकत्वं हि लक्षणं ॥ १० ॥ इति क्रुद्धः समादिक्ष—दखिलेऽप्यत्र पत्तने ॥
दोषप्रख्यापनां कृत्वा । दुष्ट एष निगृह्यतां ॥ ११ ॥ अथारक्षैस्ततो धृत्वा । केशेष्वयमकृष्यत ॥ य-
थातथापि जायेत । यौवने हि विगोपनं ॥ १२ ॥ स मुखे चर्चितो मष्या । देहे चूर्णेन चित्रितः
॥ बिल्वैरलंकृतो मूर्ध्नि । कंठे निबद्धस्रजा ॥ १३ ॥ रासभारोपितः सूर्पा—तपत्रस्तत्र पत्तने ॥ वा-
द्यमानेन वाद्येना—रेभे भ्रमायितुं भटैः ॥ १४ ॥ कृतापराधः शुद्धांते । वध्यतेऽसौ सुदर्शनः ॥ ना-
त्र दोषो नृपस्येति । चक्राघोषणां च ते ॥ १५ ॥ न युक्तं कृतवानेष । नेह संभवतीदृशं ॥ अ-
स्मिन् राजापि नेदृक्षः । कुपितोऽत्र विधिः खलु ॥ १६ ॥ धर्मो धिगस्य किं शेते । पुराकर्म किम-
प्यदः ॥ अयं मुच्येत नः सर्व—द्रव्यैर्वा जीवितैरपि ॥ १७ ॥ मिथो विचारयत्येवं । हाहाकारं च

कुर्वति ॥ पूर्जने रोदिति ग्राम्य—न्नगादग्रे स्ववेश्मनः ॥ १८ ॥ विशेषकं ॥ अदृश्यत महासत्या
। स मनोरमया ततः ॥ अर्चिंति च सदाचारो । मत्पतिः किमिदं हहा ॥ १९ ॥ इत्यंतर्विवशा वे-
श्म—मध्यमध्यास्य सत्वरं ॥ अर्चयित्वा जिनं कायो—त्सर्गस्थेदमचिंतयत् ॥ २० ॥ शृण्वंतु भग-
वत्यः श्री—जिनशासनदेवताः ॥ चंद्रे लांछनमस्तीदं । सर्वथा मत्पतौ तु न ॥ २१ ॥ परमश्राव-
कस्यास्य । सान्निध्यं चेत्करिष्यथ ॥ तदाहं पारयिष्यामि । कायोत्सर्गमिमं खलु ॥ २२ ॥ अन्यथैवं
स्थितिजुषो—ऽनशनं ध्रुवमेव मे ॥ धर्मध्वंसे पतिध्वंसे । किं जीवंति कुलस्त्रियः ॥ २३ ॥ मा कृ-
थाः पुत्रि निर्वेदं । भलिष्यामोऽखिलं वयं ॥ सा समाधिस्थिताश्रौषी-द्गिरं दिव्यां कुतोऽप्यथ ॥२४॥
ततश्च न्यधुरारक्षाः । शूलिकायां सुदर्शनं ॥ स्वर्णांभोजासनमभू—दियं तस्य महात्मनः ॥ २५ ॥
अथारक्षैर्वधायास्य । दृढं व्यापारिता अपि ॥ कंठपीठेऽसिदंडानां । प्रहारी हारतामगुः ॥ २६ ॥ मौ-
लौ मुकुटतां भेजुः । कुंडलत्वं च कर्णयोः ॥ बाह्वोः केयूरतां भेजुः । पादे कटकतां च ते ॥ २७॥
तद् दृष्ट्वा चकितैरेतै-र्विज्ञप्तो वसुधापतिः ॥ आरुह्य करिणीं सोऽगा—द्वेगादधिसुदर्शनं ॥ २८ ॥
व्रीडामुकुलितास्येंदु-स्तमालिंग्य नृपोऽवदत् ॥ दिष्ट्या न हि विनष्टोऽसि । श्रेष्ठिन्नात्मप्रभावतः ॥

॥ २९ ॥ भवान् विनाश्यते क्वापि । मादृशैरविवेकिभिः ॥ धर्मो यस्यांगरक्षोऽस्ति । जागरूकः स-
नातनः ॥ ३० ॥ स्त्रीणां विवेकशस्त्रीणां । वचनात्त्वां निहंति यः ॥ अविमृश्यकरः पापी । नापरो
दधिवाहनात् ॥ ३१ ॥ सुवंशजोऽप्यकृत्यानि । कुरुते प्रेरितः स्त्रिया ॥ स्नेहलं दधि मश्नाति । पश्य
मंथानको न किं ॥ ३१ ॥ मया मायाप्रधानायाः । स्त्रियो वाक्येन यत्त्वयि ॥ अपराद्धमशेषं तत् ।
क्षंतासि त्वं सुदर्शन ॥ ३२ ॥ एवमालपता राज्ञा । करिण्यामधिरोप्य सः ॥ नीत्वा स्वहर्म्ये स्नपि-
त—श्चंदनैश्च विलेपितः ॥ ३३ ॥ वस्त्रालंकारजातं च । परिधाप्य सुदर्शनः ॥ राज्ञा पृष्टो निशावृ-
त्तं । यथातथमचीकथत ॥ ३४ ॥ राजोचे भवतैवाह—मकृत्यं कारितोऽस्मि हा ॥ तदा यत्त्वं महा-
साधो । मया पृष्टोऽपि नावदः ॥ ३५ ॥ अथाभयांप्रति क्रुद्धो । नृपतिर्निग्रहोन्मुखः ॥ न्यषेधि श्रे-
ष्ठिना तेन । शिरः प्रक्षिप्य पादयोः ॥ ३६ ॥ श्रेष्ठी करिणमारोप्य । महीतरणिना ततः ॥ नायि-
तो न्यायिना गेहं । गौरवेण गरीयसा ॥ ३७ ॥ अभयापि तदाकर्ण्यो—द्बध्यात्मानं व्यपद्यत ॥ पं-
ण्डिता पाटलीपुत्रे । देवदत्तांतिके ययौ ॥ ३८ ॥ सुदर्शनोऽपि संसार—विरक्तो व्रतमग्रहीत् ॥ तपः-
कृशांगो विहरन् । पाटलीपुत्रमागमत् ॥ ३९ ॥ भजन्माधुकरीं वृत्तिं । दृष्टः पण्डितयात्र सः ॥ कथि-

तो देवदत्तायाः । सोऽपि तस्या गृहं ययौ ॥ ४० ॥ गृहस्य कुमुदस्येव । बध्ध्वास्यं देवदत्तया ॥
धृतो लद्म्येव दिवसं । यावच्चुक्षोभ नैष तु ॥ ४१ ॥ ततो मुक्तस्तया साय—मुद्यानं गतवानयं ॥
तत्रापि दृष्टोऽन्नयया । व्यंतरीभूतया तया ॥ ४२ ॥ स्मरंत्या प्राक्तनं कर्म । तस्य मर्माविधोऽनया ॥
स्वामिनः संगमेनेवो—पसर्गास्तेनिरे निशि ॥ ४३ ॥ क्लिश्यमानो बहु तया । महासत्वः सुदर्शनः
॥ क्षपकश्रेणिमारोह—दपूर्वकरणक्रमात् ॥ ४४ ॥ तस्यापि केवलज्ञान—मुन्मिमील समुज्ज्वलं ॥
समेत्य महितश्चायं । देवदानवमानवैः ॥ ४५ ॥ देवनिर्मितहेमाब्ज—मासितो भगवानथ ॥ दि-
देश कर्मणां मर्मा—विधं धर्मं चतुर्विधं ॥ ४६ ॥ तस्य देशनया तत्रा—न्येऽबुध्यंत न केवलं ॥
पंडिता देवदत्ता चा—भया चापि व्यबुध्यत ॥ ४७ ॥ इत्थं स भास्वानिव कांतिशाली । नालीक-
बोधं विरचय्य गोभिः ॥ सुदर्शनः केवलमूर्तिरायु—र्दिनावसानेऽजनि निर्वृतात्मा ॥ ४८ ॥ इति
सुदर्शनकथा ॥ अथ दशार्णभद्रश्लाघामुल्लाघयन्नाह—

॥ मूलम् ॥—वंदे दसन्नभद्दं । समसीसीए अहो सुरिंदस्स ॥ घित्तूण तहा विरइं । जेण प-
इन्ना सुनिव्वूढा ॥ ४९ ॥ व्याख्या—दसन्नभद्दं दशार्णभद्रमुनिं वंदे नमस्करोमि, जेण येन पइन्ना

प्रतिज्ञा, तथा श्रीवीरस्वामिनं वंदे यथासौ न केनापि वंदित इति संधा, सुनिव्वूढा सुष्ठु अतिशयेन निर्व्यूढा निर्वाहमनीयत, कया? समसीसीए समशीर्षिकया स्पर्धया, अहो इति विस्मये, कस्य? सुरिंदस्स सुरेंद्रस्य, किं कृत्वा? घित्तूण गृहीत्वा, कां? विरतिं प्रव्रज्यां, कथं? तहा तथा तेन प्रकारेण सेंद्रैरपि सुरैरसाध्येनेत्यर्थः, अविरता हि देवा देशविरतिमप्याप्तुमनलंभूष्णवः, किं पुनः सर्वविरतिमिति संक्षेपार्थः, व्यासार्थस्तु कथानकादवसेयस्तच्चैतत्—दशार्णदेशभूसुभ्रू–किरीटप्रतिमं पुरं ॥ दशार्णपुरमित्यस्ति । नैकरत्नविराजितं ॥ १ ॥ दशार्णभद्र इत्यासी—त्तत्रासीमयशा नृपः ॥ संपदामेकवरिता । सरितामिव सागरः ॥ २ ॥ एकदा तं सभासीनं । सायमित्यूचिरे चराः ॥ देव देवाधिदेवः श्री–वीरः प्रातरिहैष्यति ॥ ३ ॥ पयोदगर्जयेवाभू—त्तच्छ्रुत्वा भूविभूरयात् ॥ धाराकदंबवत्फुल्ल—पुलकांकुरदंतुरः ॥ ४ ॥ सभासमक्षमूचे च । प्रगे ऋद्ध्या तया प्रभुं ॥ वंदिष्ये न यथा कश्चि—द्ववंदे त्रिजगत्यपि ॥ ५ ॥ इत्यमात्यादिकान् सर्वान् । समुदीर्य विसृज्य च ॥ प्रीतचेता जगामांतः—पुरं पृथ्वीपुरंदरः ॥ ६ ॥ वंदिष्ये भक्तिभागेवं । स्तोष्ये चैवं प्रगे प्रभुं ॥ कथंचिदिति चिंतावान् । यामिनीं तामनीनयत् ॥ ७ ॥ रवावनुदितेऽप्येष । समाहूय च भूयसः ॥ आदिशन्नग-

शरदा—प्रभृतीनिति नृपतिः ॥ ८ ॥ मदीयसदनस्वामि—सदसोरंतराचिरात् ॥ कार्यं यानाय मे
मुक्त—दूषणं मार्गभूषणं ॥ ९ ॥ इतश्च तत्र भगवा—नाययौ नगराद्बहिः ॥ वरं तत्र सुराश्चक्रु—
र्विशालं देशनासदः ॥ १० ॥ शासनं नृपतेस्तेऽपि । तेनिरे तन्नियोगिनः ॥ राज्ञां हि वचसा सि-
द्धि—र्मनसा मरुतामिव ॥ ११ ॥ कलिता कुंकुमांभोभिः । सुमनोभिश्च तत्र भूः ॥ संध्यारागवती
ज्योति—ष्मतीव द्यौरराजत ॥ १२ ॥ मुक्तावचूलैरुल्लोचाः । स्वर्णस्तंभैर्विरेजिरे ॥ सबलाकाः सगां-
गेय—धारा धाराधरा इव ॥ १३ ॥ सुप्रपंचा विरेजुश्च । मंचास्तोरणदामभिः ॥ सस्रग्नगा इवोत्तुंगा
—हंकारभरतो मिथः ॥ १४ ॥ पदे पदे स्वर्णकुंभै—रशोभंत च मंडपाः ॥ स्थिररत्नानूनि सानूनि ।
लोकालोकगिरिव ॥ १५ ॥ घंटापथेषु हट्टानि । चंचलैः केतनांचलैः ॥ मंचस्थशालभंजीनां । न्युं-
छनानीव तेनिरे ॥ १६ ॥ शुभ्रेषु ताडितोल्लोच—पटेषु प्रतिमंडपं ॥ दधुर्धूपघटीधूमा—वर्ता मेघ य
म्बरं ॥ १७ ॥ परितः कदलीस्तंभा । दलैरुल्लासिभिर्बभुः ॥ अंगरक्षा इव श्रीणा—मुल्लासितरवार-
यः ॥ १८ ॥ वस्त्रवंदनमालाश्च । पुटापुटिकया बभुः ॥ सफेना गगनांभोधेः । कुटिला इव वीचयः
॥ १९ ॥ क्वचित् क्वचिच्च भांतिस्म । तोरणे चित्रकृत्त्वचः ॥ मणिस्तंभप्रभांभोधा—ववतीर्णा घना इ-

व ॥ २० ॥ एवं मार्गमतिस्वर्गं । विरचय्य नियोगिनः ॥ राज्ञे व्यजिज्ञपन् स्वामि—दर्शनौत्सुक्य-
धारिणे ॥ २१ ॥ स्नात्वा राजापि दिव्यांग–रागः सर्वांगभूषणः ॥ चारुचीरधरं स्रग्वी । गजमारोह-
दुत्तमं ॥ २२ ॥ स रराजातपत्रेण । पूर्वाचल इवेंदुना ॥ चलाभ्यां चामराभ्यां च । रवींदुभ्यामि-
वोदधिः ॥ २३ ॥ चामरैर्वीज्यमानाश्च । नरयानसमासिताः ॥ साचीकृतशचीरूपा । अंतःपुर्यस्तम-
न्वगुः ॥ २४ ॥ नरेंद्रः प्राचलत्प्राज्य–मणिभूषणभासुरैः ॥ असावनुगतो भूपै । रूपैः स्वैरिव वैक्रियैः
॥ २५ ॥ परितः परिवृत्तोऽसौ । नीलपाटलरोचिषां ॥ राजा राजिभिरश्वानां । यथावर्णं पृथक्पृथक्
॥ २६ ॥ बंदिभिः स्तूयमानश्च । गीयमानश्च गायनैः ॥ दर्श्यमानात्मविज्ञानो । मार्गालंकारकारि-
भिः ॥ २७ ॥ उपर्युपरि नीरंध्र–मिलितस्त्रीमुखांबुजैः ॥ पश्यन् मंचेषु मंचेषु । शतचंद्रं नभस्तलं ॥
॥ २८ ॥ भेरीणां भूरिभांकार–झल्लरीकंबुकूजिते ॥ स्वीकुर्वन् वचनं सेवा–कारिणां हस्तसंज्ञया ॥
॥ २९ ॥ जंगमोद्यानलेखो वा । वेष्टितः श्रीकरीभरैः ॥ क्रमेण प्राप समव–सरणं स महीपतिः ॥
॥ ३० ॥ स त्रिप्रदक्षिणीकृत्य । ववंदे परमेश्वरं ॥ आसांचक्रे यथास्थाने । स्वीयसमृद्धिगर्वतः ॥३१॥
तमृद्धिगर्वितं बुध्वा । स्वकीयावधिना ततः ॥ अंभोमयं विकृतवान् । विमानं पाकशासनः ॥ ३२ ॥

स्फटिकाब्भपयोभित्ति—प्रांतकांतमृणालिकं ॥ अंतरालविचालस्थ—मरालमिथुनाद्भुतं ॥ ३३ ॥ तारस्थानीभवत्पद्मं । तन्नालस्तंभशोभितं ॥ नागवल्लीदलपद्म—वृंदोल्लोचैश्च मंभितं ॥ ३४ ॥ उन्नोरशिखरं प्रांत—कलशीभूतपंकजं ॥ वीचिदंभोपरि प्रेंख—त्फेनकेतुभरोत्तरं ॥ ३५ ॥ उपांतोदारमंदार—पतत्कुसुमपूजितं ॥ सत्वैरांभसिकैरुह्य—मानं धुर्यैरिवोद्धतैः ॥ ३६ ॥ जलकांतविमानं तत् । शक्रोऽध्यास्त सहामरैः ॥ चामरैरमरस्त्रीभि—र्वीज्यमानः सहस्रशः ॥ ३७ ॥ पंचभिः कुलकं ॥ गंधर्वारब्धसंगीत—दत्तकर्णो मनाक् मनाक् ॥ मर्त्यलोकमवातारी—दमर्त्याधिपतिस्ततः ॥ ३८ ॥ जांबूनदांबुजन्यस्त—पादमष्टापदोन्नतं ॥ बिभ्राणं पार्श्वयोर्घंटे । सूर्यचंद्रमसाविव ॥ ३९ ॥ देवदूष्यकुथब्भन्न—पृष्ठं प्रसृज्य कुंभिनं ॥ मर्त्यलोकावतीर्णोऽथा—ध्यारुरोह पुरंदरः ॥ ४० ॥ युग्मं ॥ गजाष्टदंतीमाणिक्य—वाप्यंभोजेषु भूरिशः ॥ द्वात्रिंशत्पात्रबंधन—संगीतमवधारयन् ॥ ४१ ॥ आगादथोपसमव—सरणं भक्तिभावितः ॥ जिनेंद्रपादान् वंदारु—वृंदारकशिरोमणिः ॥ ४२ ॥ युग्मं ॥ गजस्थ एव सूत्रामा । विमानेनानुगामिना ॥ प्रत्यंबुजं सुरस्त्रैण—संगीताद्भुतशालिना ॥ ४३ ॥ स त्रिःप्रदक्षिणीकृत्य । स्वामिनो देशनासदः ॥ उत्तीर्य च गजात्तत्र । प्राविशत्सपरिच्छदः ॥ ४४ ॥ दशार्ण-

भद्र इंद्रस्य । तया ऋद्ध्याथ दृष्ट्या ॥ पुरऋद्ध्या ग्राम्य इव । स्तंभितांगोऽभवत्क्षणं ॥ ४५ ॥ दध्यौ
चेति दशार्णेशो । विस्मयस्मेरलोचनः ॥ अहो शक्रविमानस्य । शोभेयं भुवनाद्भुता ॥ ४६ ॥
अहो रुचिरगात्रत्वं । सुरेंद्रकरिणोऽस्य तु ॥ अहो समृद्धिविस्तारः । कोऽपि वास्तोष्पतेरयं ॥ ४७ ॥
स्वसंपदाभिमानोऽयं । व्यधायि धिगहो मया ॥ गोष्पदाब्ध्योरिवेति धि—ग्मम शक्रस्य चांतरं ॥
॥ ४८ ॥ ऋद्धिगर्वादथ स्वात्मा । हहा तुच्छीकृतो मया ॥ कूपकच्छपकेनेव । प्रागदृष्टेंद्रऋद्धिना ॥
॥ ४९ ॥ एवं भावयतस्तस्य । वैराग्यं गच्छतः शनैः ॥ परिणामः शुभतरो । बभूवेत्यल्पकर्मणः ॥
॥ ५० ॥ ऋद्ध्या यदाप्यनेनाहं । विजितोऽस्मि बिडौजसा ॥ प्रव्रज्याग्रहणेनाद्य । पराजेष्ये तथाप्य-
मुं ॥ ५१ ॥ न केवलं विजेष्येऽमुं । व्रतादानेन संप्रति ॥ कर्मारीनपि जेष्यामि । भवभ्रमणकारि-
णः ॥ ५२ ॥ विवेकी चिंतयन्नेवं । दशार्णपुरपार्थिवः ॥ तत्रस्थ एव व्यमुच—त्किरीटकटकादिकं
॥ ५३ ॥ दशार्णेंद्रोऽथ कर्मद्रो—र्मूलानीव समंततः ॥ पंचभिर्मुष्टिभिः केशा—नुच्चखानोत्तमांगतः ॥
॥ ५४ ॥ शक्रे निरीक्षमाणेऽथ । विस्मयस्मेरचक्षुषि ॥ स गत्वा गणभृत्पार्श्वे । यतिलिंगमुपाददे ॥
॥ ५५ ॥ गत्वा प्रदक्षिणापूर्व—मपूर्वोत्साहसाहसः ॥ दशार्णभद्रः श्रमणो । जगन्नाथमवंदत ॥ ५६ ॥

तमिंद्रः प्राह धन्यात्म—न्नहो पौरुषमद्भुतं ॥ तवेदममुनाजैषी—र्मामन्यस्य कथैव का ॥ ५७ ॥ स्तुत्वेति नत्वा च सुरेश्वरस्तं । जगाम धाम स्वमनश्वरश्रीः ॥ दशार्णभद्रोऽपि तपोऽभितप्त्वा । निर्धूय कर्माणि च मोक्षमाप ॥ ५८ ॥ इति दशार्णभद्रकथा ॥ अथ प्रसन्नचंद्रमुनिचंद्रचरित्रं चित्रीयमाण आह—

॥ मूलम् ॥—तह सत्तमीए बद्धं । कम्ममसेसंपि जेण तह खवियं ॥ कह न कुणइ अच्छरिअं । पसन्नचंदस्स सच्चरियं ॥ ४७ ॥ व्याख्या—तथा तेन दुर्मुखवचनश्रवणोपजातरौद्रध्यानावेशवशमनोवृत्तिसम्बद्धेन कवेरनुभवैकसाध्येन वा निखिलजनप्रसिद्धिसारेण प्रकारेण सप्तम्यां नरकभुवि बद्धं दृढीकृतं कर्म अशेषमपि तथा तेन शिरस्कस्वीकारप्रगुणीकृतकरस्पृष्टलुंचितशिरःस्मृतात्मानुशयनिवर्तमानकषायपरिणामातिशयजागरूकवैराग्यैकतानप्रकारेण येन क्षपितमुन्मूलितं, कैश्चिच्च चिरकालबद्धमचिरेण, कैश्चिच्चाचिरबद्धं चिरेण कर्म क्षपितं, अनेन तु महात्मना तत्कालं बद्धं क्षपितं चेतिरूपं सच्चरितं प्रसन्नचंद्रस्य राजर्षेः कथमाश्चर्यं न करोति? अपितु करोतीति संक्षेपार्थः, व्यासार्थस्तु कथानकादवसेयस्तच्चैतत्—इहास्ति पोतनपुरं । पुरं तत्र महीपतिः ॥ प्रसन्नचंद्र इत्या-

सी-त्प्रसन्नश्चंद्रवद्गुणैः ॥ १ ॥ तत्रैकदा पुरग्रामा-करद्रोणमुखादिषु ॥ विहरन्नाजगाम श्री-वीरो दे-
वासुरैर्वृतः ॥ २ ॥ नगराद्बहिरीशान्यां । दिशि देवा वितेनिरे ॥ देशनासदनं स्वामी । तदंतर्निष-
साद च ॥ ३ ॥ श्रुत्वा स्वामिनमायातं । पोतनाधिपतिर्नृपः ॥ प्रणंतुमाययौ पौर-सामंतामात्यसंयु-
तः ॥ ४ ॥ प्रणम्योचितभूपीठ-प्रतिष्ठेषु नृपादिषु ॥ स्वामी चकार वैराग्य-देशिनीं देशनामिति ॥
॥ ५ ॥ जंतुभिः पतितैरस्मि-न्नगाधे भवनीरधौ ॥ कथंचिन्मानुषं जन्म । प्राप्यते यानपात्रवत् ॥
॥ ६ ॥ प्राप्यापि यानपात्रं त-द्गुरुं निर्यामकं विना ॥ विना चारित्रमीहंते । नानुकूलं क्रमप्यमी
॥ ७ ॥ इदं वाहितदंतादि-भारमप्यंगवाहनं ॥ मृत्युग्रष्टिं समारोप्य । जरावात्या विनाशयेत् ॥ ८ ॥
तद्यावन्न जरावात्या । मृत्युग्रष्टिश्च न क्वचित् ॥ तावच्चारित्रमादाय । परं पारं प्रयात भोः ॥ ९ ॥
श्रुत्वेति देशनां सद्यो । जातवैराग्यवैभवः ॥ राजा व्रतमयाचिष्ट । वीरं विरचितांजलिः ॥ १० ॥ प्र-
तिबंधं कृथा मेति । नाथादेशादसावथ ॥ गत्वा पुरे सुतं बाल-मपि राज्ये न्यवेशयत् ॥ ११ ॥ सु-
तेन सह साम्राज्य-धुरामारोप्य मंत्रिषु ॥ स्वयं व्रतधुरां धीरो । वीरोपज्ञां बभार सः ॥ १२ ॥ त-
स्मादथ महावीर-स्तेन राजर्षिणा सह ॥ विहरन्नन्यदा प्राप । पुरं राजगृहाभिधं ॥ १३ ॥ वैभारो-

दयशैले श्री—जिनेश्वरदिनेश्वरः ॥ जगतां जनितश्रेयो—वासरः समवासरत ॥ १४ ॥ शैलपाला-त्तदाकर्ण्य । राजा राजगृहेश्वरः ॥ प्रचचाल प्रभुं नंतु । सर्वर्ध्या सपरिच्छदः ॥ १५ ॥ रंगदुत्तुंगमातंग—मदामोदेन मेदिनीं ॥ वासयन् वासवः क्षोणे—र्नगरान्निरगादयं ॥ १६ ॥ राज्ञोऽग्रसैनिकौ तस्य । नाम्ना सुमुखदुर्मुखौ ॥ एकांह्रिणा तस्थिवांसं । मुक्तौ गंतुमिवोत्सुकं ॥ १७ ॥ लंबितैकभुजं जंतू—नुद्धर्तुमिव दुर्गतेः ॥ उदंचितैकपाणिं चो—त्क्षेप्तुं तानेव सक्तौ ॥ १८ ॥ दिवाकरेऽपि मुकुर । इव न्यस्तविलोचनं ॥ तन्मंडलभिदा मार्गं । मार्गंतमिव मुक्तये ॥ १९ ॥ घर्मांभोबिंदुभिश्छन्नं । स्वर्णाचलमिवोडुभिः ॥ सध्यानमुद्रया कांतं । शांतं ददृशतुर्मुनिं ॥ २० ॥ कलापकं ॥ तयोरेकतमोऽवादी—दहो मुनिमतंगजः ॥ वंदनीयो महात्मायं । य एवं तप्यते तपः ॥ २१ ॥ एकपादेन कस्तिष्टेत् । कः पश्येच्च खरत्विषं ॥ एवं मुहूर्तमप्येक—महो डुष्करकारिता ॥ २२ ॥ स्वर्गो वाप्यपवर्गो वा । नास्य दूरे महात्मनः ॥ तपोभिर्दुस्तपैः किं किं । नासाध्यमपि साध्यते ॥ २३ ॥ द्वितीयोऽपि जगादैवं । वयस्य न हि वेत्सि किं ॥ राजा प्रसन्नचंद्रोऽयं । न धर्मोऽस्य मुधा तपः ॥ ॥ २४ ॥ चक्रेऽसौ हि सुतं बालं । राज्ये तस्मात्स्वमंत्रिभिः ॥ प्रच्यावयिष्यते दुग्धात् । तत्पिधान-

मिवोतुभिः ॥ २५ ॥ तस्मिन्नुच्छेदिते बाले। वंशो नास्त्यस्य सर्वथा ॥ स्वपूर्वजन्मिनां नाम-नाशनादेष पातकी ॥ २६ ॥ दुर्लभाः सुतपस्विन्यः। खल्वलब्धस्त्रियोऽपि च ॥ ता वियुज्य प्रव्रजितस्यास्य किं न तपो वृथा ॥ २७ ॥ समाधिपादपे तद्वाग्—वात्ययोन्मूलिते तदा ॥ विज्ञायश्चिंतयामास। राजर्षिरिति चेतसि ॥ २८ ॥ अहो तेषां मयाकारि। सन्मानो यः कुमंत्रिणां ॥ तद्भस्मनि हुतं सर्व—मूषरे च प्रवर्षितं ॥ २९ ॥ मत्सूनोः क्षीरकंठस्य। तैः शठैः पापकर्मभिः ॥ राज्यमाच्छेत्तुमारेभे। धिक् तान् विश्वस्तघातकान् ॥ ३० ॥ जीवितेनामुना किं मे। तपसा भूयसा च किं ॥ कर्णातिथिरभूद्यन्मे—ऽगभुवो यत्पराभवः ॥ ३१ ॥ तत्राहमभविष्यं चे—त्तदा तेषां दुरात्मनां ॥ अकरिष्यं नवनवै—र्निग्रहैरनुशासनं ॥ ३२ ॥ चरणस्खलनादेव—मंतःसंसारचत्वरं ॥ राजर्षिस्खलितः क्रोध—भूतेनाभूदनीदृशः ॥ ३३ ॥ इहांतरे नरेंद्रोऽपि। समायातः शमीश्वरं ॥ दृष्ट्वा तं सहसोत्तीर्य। गजाद्भक्त्या नमोऽकरोत् ॥ ३४ ॥ ऊर्ध्वबाहुमेकपादस्थं। तं दृष्ट्वातापनापरं ॥ अन्वमोदिष्ट शुद्धात्मा। राजा राजगृहेश्वरः ॥ ३५ ॥ राजर्षेस्तस्य तपसा—मुत्कर्षं तमनुस्मरन् ॥ पर्षदि स्वामिनः प्राप। पंचाभिगमनेन सः ॥ ३६ ॥ प्रभुं प्रणम्य पंचांगं। यथास्थानं निषद्य च ॥ प्राप्य

चावसरं राजा । पप्रच्छेति कृतांजलिः ॥ ३७ ॥ ध्यानस्थः समये यत्र । प्रसन्नर्षिर्मयैक्ष्यत ॥ तत्रैव चेद्विपद्येत । तत्कामासादयेद्गतिं ॥ ३८ ॥ स्वाम्यूचे समये तत्रा—प्रतिष्ठानं व्रजेदयं ॥ राजा दध्यौ गतिः केय—मस्योग्रतपसोऽपि हा ॥ ३९ ॥ नृपो भूयोऽपि पप्रच्छ । समयेऽस्मिन्महामुनिः ॥ स कालं यदि कुर्वीत । कां लभेत ततो गतिं ॥ ४० ॥ प्रभुरूचेऽस्ति योग्योऽय—मनुत्तरगतेर्नृप ॥ राजापीति जगौ नाथ । किमियं व्याकृतिर्द्विधा ॥ ४१ ॥ स्वाम्याचख्यौ यदा राजन् । राजर्षिर्वंदितस्त्वया ॥ रौद्रध्यानी तदा सोऽभूत् । शुक्लध्यानी तु संप्रति ॥ ४२ ॥ राजा प्राह पुनः स्वामिन् । ममाज्ञस्य निवेदय ॥ रौद्रध्यानी कथमभूत् । शुक्लध्यानी कथं च सः ॥ ४३ ॥ प्रभुरूचे च राजंस्त्व—दग्रसैनिकवार्तया ॥ शुश्रावाभिनवं सूनो—र्मंत्रिभ्यो निजपत्तने ॥ ४४ ॥ सादात्तैर्मंत्रिभिः सार्धं । युध्यमानोऽधिकाधिकं ॥ निष्ठितास्त्रः प्रसन्नोऽभू—दप्रसन्नमनाः क्रुधा ॥ ४५ ॥ ससन्नद्धं स्वमज्ञासी—दिति चाचिंतयत्क्रुधा ॥ शिरस्केनापि हंन्म्येतान्। सर्वं शस्त्रं हि दोष्मतां ॥ ४६ ॥ ततश्च शिरसि न्यास्थ—च्छिरस्कादित्सया करं ॥ तल्लुंचितं स्पृशन्नात्त—व्रतमात्मानमस्मरत् ॥ ४७ ॥ अचिंतयच्च धिग्मां । रौद्रध्यानानुबंधिनं ॥ किं तेन सूनुना किं तै—रमात्यैर्निर्ममस्य मे ॥ ४८ ॥ इति

चिंतयतस्तस्य । विलीने मोहडुर्दिने ॥ विवेकभास्करः प्राडु—र्भूद्भूयोऽपि भास्करः ॥ ५० ॥ भक्त्या तत्रैव वंदित्वा । सोऽस्मानग्रे स्थितानिव ॥ आलोच्याथ प्रतिक्रम्य । प्रशस्तं ध्यानमास्थितः ॥ ५१ ॥ प्रसन्नचंद्रश्चिच्छेद । शुक्लध्यानेन डुःकृतं ॥ प्रदोषसंभवं ध्वांत—मुदयाद्रिरिवेंडुना ॥ ५२ ॥ पप्रच्छ श्रेणिको भूयः । प्रणम्य परमेश्वरं ॥ किमेष देवसंपातो । दृश्यते द्योतितांबरः ॥ ५३ ॥ स्वाम्यप्याख्यत्प्रसन्नर्षे—रुत्पन्नमिह केवलं ॥ कर्तुं च तन्महिमान—ममराः संपतंत्यमी ॥ ५४ ॥ व्यापारेषु ध्रुवं चित्त-व्यापारो बलवत्तरः ॥ अशुभः सप्तमीं याव-च्छुभश्च नयति शिवं ॥ ५५ ॥ श्रुत्वैवं मगधपतिः प्रबोधशाली । व्याख्यांते स्वपुरमगाज्जिनं प्रणम्य ॥ राजर्षिः स तु भगवान् प्रसनचंद्रो । निर्निद्रोदयमपुनर्भवं जगाम ॥५६॥ इति प्रसनचंद्रराजर्षिकथा ॥ अथ कुरगडुकमहर्षिगुणोत्कर्षमुद्घोषयन्नाह—

॥ मूलम् ॥—सा कावि खमा तं किंपि । मद्दवं अज्जवं च तं किंपि ॥ जह कुरगडुयमहेसिणोसिमंताइं कज्जाइं ॥ ४७ ॥ व्याख्या—इह हि वचनगोचरातीता अपि कूरगडुकमुनेः क्षमामार्दवार्जवादयो गुणास्तदीयताकालिकलोकोत्तरफलसंपत्तिस्थितिपात्रस्य कवेरनुभवैकसाध्यसदर्थेन प्र-

सिद्धार्थास्तत्तच्छब्दे नैवोक्ताः, एवं पदार्थः स्पष्टः, व्यासार्थस्तु कथानकादवसेयस्तच्चैतत्—क्षितिप्रतिष्ठितं नाम्ना—ऽनीतिप्रतिष्ठितं ॥ पुरमेत्य पुरा प्राज्ञ—श्चाचार्याः केऽपि तस्थिरे ॥ १ ॥ तदीयः क्षपकः कश्चित् । क्षुल्लकेनानुगामिना ॥ बहिर्भूमौ व्रजन् भेकीं । प्रमादेनांह्रिणासृणात् ॥ २ ॥ इयं भेकी विवेक्यर्षे । त्वया हंत हता मुने ॥ इत्युक्तः क्षुल्लकेनायं । दर्शयंश्च मृताः पराः ॥ ३ ॥ जनलज्जावशादूचे । दुष्ट रे शिष्यपांशन ॥ किमेषापि किमेषापि । किमेषापि मया हता ॥ ४ ॥ युग्मं ॥ प्रतिक्रमणवेलाया—मयमालोचयिष्यति ॥ विमृश्येति स्थितस्तूष्णीं । क्षुल्लोऽपि विनयी नयी ॥ ५ ॥ स तमावश्यकेऽप्याह । तदनालोचनाकृतं ॥ महर्षे धर्षितां भेका—मालोचयसि किं न हि ॥ ६ ॥ अहो विगोपयत्ययं तः—साधूनामपि मामयं ॥ तदेनमात्मना हन्मि । यथा बूत्कुरुतेऽपि न ॥ ७ ॥ ध्यात्वेति क्षुल्लकं हंतुं । धावन्नुन्मुच्य विष्टरं ॥ सोंतरा मर्मणि स्तंभा—स्फालितो न्यपतद् भुवि ॥ ८ ॥ हा जीवे हैव कोपद्रु—फलं भुक्तं त्वयाधमं ॥ इति स्वं गर्हयन् सोऽथ । मृत्वा ज्योतिष्कदेव्यभूत् ॥ ९ ॥ इतश्च पुरमस्त्येकं । वसंतपुरसंज्ञितं ॥ तत्रारिदमनोऽन्वर्था—भिधानः पार्थिवोऽभवत् ॥ १० ॥ पुत्रस्तस्यैकपुत्रस्य । स्वगृहोपवनेऽन्यदा ॥ पुष्पाणि पाणिना चिन्वन् ।

दष्टो दुष्टेन भोगिना ॥ ११ ॥ तन्मत्वा दुःखितो राजा । पटहेनेत्यघोषयत् ॥ संजीवयति यः पुत्रं । स मे राज्यार्धमर्हति ॥ १२ ॥ ततो गारुडिकः कश्चि—न्नृपमेत्याशु मंडलं ॥ सर्पाकृष्टिकृतेऽलेख—द्गंधनागंधनाह्विकं ॥ १३ ॥ पर्यंकासनबंधेन । कृतनिर्दंभकुंभकः ॥ स सर्पाकर्षिणीं विद्यां । सभ्रूकुटिकमस्मरत् ॥ १४ ॥ तया सुस्फुरयाकृष्टाः । फणिनः पुरवासिनः ॥ गंधनागंधनकुलाः । स्वं स्वं मंडलमापतन् ॥ १५ ॥ अथाह मांत्रिकः सर्पा—नादिष्याक्रांतमुष्टिना ॥ मुक्त्वापराधिनमरे । परे यांतु निरागसः ॥ १६ ॥ यथागतमगुः सर्पा—स्ततस्ते ये निरागसः ॥ स एवैकः स्थितो येन । राजसूनुरदश्यत ॥ १७ ॥ मांत्रिकोऽग्निचितां कृत्वा । तत्र चाहिं तमब्रवीत् ॥ स्वमादत्स्व विषं दंशा—दहे वा दहने विश ॥ १८ ॥ अगंधनकुलीनत्वा—न्न वांतमपिबद्विषं ॥ सर्पोऽयं त्वविशद्वह्नि—मेकरूपा हि मानिनः ॥ १९ ॥ मृते पुत्रेऽथ राजापि । सर्पजातौ समत्सरः ॥ ददौ दीनारमेकैकं । सर्पतुंडच्छिदं प्रति ॥ २० ॥ जामदग्न्य इव क्षत्रा—नहीनुत्खातुमुद्यतः ॥ असर्पां कर्तुमारेभे । स एवमवनीं नृपः ॥ २१ ॥ इतश्च क्षपकात्मा स । ज्योतिष्केऽप्यच्युतस्तदा ॥ दृग्विषाहिकुले सर्पो । देवताधिष्ठितोऽभवत् ॥ २२ ॥ सैष जातिस्मृतिज्ञानो । मद्दृष्ट्या मास्म भस्मसात् ॥ भवंतु जंतव

इति । भ्राम्यतिस्म दिवा न हि ॥ २३ ॥ दयाढुर्न भ्रमानश्चा—न्निशायां निःसृतोऽपि सः ॥ पायं पायं तु पवनान् । प्रातः प्रातर्बिलेऽविशत् ॥ २४ ॥ अन्यदा राजदीनार-लुब्धः पन्नगलुब्धकः ॥ विलोक्य घर्षणं तस्य । विवेद विपिने बिलं ॥ २५ ॥ तेनौषधी बिलद्वारे । मुक्ता नागहिकर्षिणी ॥ तयाकृष्यत सर्पोऽय—मयस्कांतेन लोहवत् ॥ २६ ॥ मदृष्ट्या मास्म दह्यंतु । जीवा इति कृपावशात् ॥ निस्ससार महात्मासौ । पुच्छपक्षेण पन्नगः ॥ २७ ॥ यावान् यावान्निशयिष्ट । तावांस्तावानयं जवात् ॥ खंडशः क्रियतेस्माहि—तुंडिकेन दुरात्मना ॥ २८ ॥ खंड्यमानमिदं नांग—मस्ति किंतु विकर्म मे ॥ शुभोदर्कामिमां पीडां । रे जीवाधिसहस्व तत् ॥ २९ ॥ इति ध्यायन्नमस्कार-परः पंचत्वमाप्य सः ॥ तस्यैव नृपतेः पत्न्यां । पुत्रत्वेनोदपद्यत ॥ ३० ॥ तदा च तदधिष्ठात्री । स्वप्ने धात्रीशमब्रवीत ॥ राजन् मास्मवधीत्सर्पान् । पुत्रस्ते भविताचिरात् ॥ ३१ ॥ पुत्रस्य नाम दातव्यं । नागदत्त इति त्वया ॥ इत्याख्याय महीशाय । देवना सा तिरोदधे ॥ ३२ ॥ राजापि हैधमप्याप । प्रबोधं तमसोऽत्यये ॥ राज्ञी तु पूर्यमाणेष्ट-दोहदा गर्भमावहत् ॥ ३३ ॥ असूत च क्रमात्पुत्र—मसौ प्राचीव भास्करं ॥ नागदत्तं च तं राजा-ऽभ्यधत्तोत्सवपूर्वकं ॥ ३४ ॥ धात्रीभिर्गुणपात्रीभिः

। पाल्यमानोऽयमर्भकः ॥ पंचभिर्विषयेभ्राग्नि-रिव कामोऽप्यवर्धत ॥ ३५ ॥ स पंचवार्षिकः पित्रा ।
पंडितेभ्यः समर्पितः ॥ बालेंदुरिव वर्धिष्णु—रग्रहीदुज्ज्वलाः कलाः ॥ ३६ ॥ एकदा बहिरुद्याने ।
गतेन शिशुनामुना ॥ वंदिताः सूरयस्तेभ्यः । शुश्रुवे धर्मदेशनां ॥ ३७ ॥ प्रकृत्योपशमीशोऽयं ।
श्रुत्वोपशमदेशनां ॥ संविग्नमानसो दीक्षा—मयाचिष्ट गुरूनयं ॥ ३८ ॥ गुरुरूचेऽस्ति चेद्वत्स । व्र-
तेच्छा पृच्छ तन्निजौ ॥ पितरौ तन्मतायाशु । तुभ्यं दास्यामहे व्रतं ॥ ३९ ॥ ततो नत्वा गुरून् ग
त्वा । सोऽपृच्छत्पितरावित्ति ॥ तात मातरहं किंचि—द्याचे वां पुत्रवत्सलौ ॥ ४० ॥ तावूचतुरिदं
सर्वं । तवैव किमु याचसे ॥ राज्यादपि परं किंचि—दस्ति चेद् ब्रूहि वत्स तत् ॥ ४१ ॥ जगादा-
सौ प्रणम्यैतौ । दीक्षां दापयताद्य मे ॥ तौ तु वाक्छलमात्मीयं । निंदंताविदमूचतुः ॥ ४२ ॥ क्व
तात व्रतकष्टं तत् । क्व च ते कोमलं वपुः ॥ रंभास्तंभो गृहस्तंभः । क्रियते क्वापि पुत्रक ॥ ४३ ॥
स्मित्वावादीदयं केयं । दयांगस्य प्रयास्यतः ॥ दयां कुरुतं मे मुक्ति—फलं दापयितुं व्रतं ॥ ४४ ॥
छ्यथैतौ निग्रहस्थान-पतिताविव वादिनौ ॥ तं व्रतायान्वमन्येतां । तत्र प्रत्यंतरासहौ ॥ ४५ ॥ ना-
गदत्तस्ततः पित्रा । कृतनिष्क्रमणोत्सवः ॥ मुदादत्त परिव्रज्यां । सुसाधुगुरुसन्निधौ ॥ ४६ ॥ सिंह-

त्वेन विनिष्क्रम्य । विस्मापितजगत्त्रयः ॥ सिंहत्वेनैव गुरुभिः । सहोर्व्यां विजहार सः ॥ ४७ ॥
स तु प्राक्तनतिर्यक्त्वा—नुभावेन क्षुधातुरः ॥ कूरगडूक इत्यन्य—नामा जेमन्नभून्मुहुः ॥ ४८ ॥
ज्ञानदर्शनचारित्रा—एयस्य वृद्धाः क्षुधा समं ॥ इंदोरिव सहांकेन । स्कंधदेशप्रदेशकाः ॥ ४९ ॥
चत्वारो देवतावंद्या । गछेऽत्र क्षपकोत्तमाः ॥ एकद्वित्रिचतुर्मासान् । क्षपंतिस्म क्रमेण ते ॥ ५० ॥
यावज्जीवं च तद्वैया—वृत्त्यभिग्रहमग्रहीत् ॥ मत्वा तत्पुण्यमक्षय्यं । बालर्षिः कूरगडूकः ॥५१॥ बु-
भुक्षार्त्यैकदा तेषां । मुनीनां खेल्लमल्लकाः ॥ परिष्ठापयितुं तस्य । व्यस्मर्यंत महात्मनः ॥ ५२ ॥
विहृत्य शीतलं भानू—दये चायमुपागतः ॥ मुनीन्निमंत्रयामास । मासक्षपणिनस्तदा ॥ ५३ ॥ ते
तु खुंकृत्य जगदुः । कोपिनस्तं प्रमत्सरं ॥ भोजनैकस्मृते खेलं । क्षिपामः क्वेति शंसिनः ॥ ५४ ॥
ततो निमंत्रणायावि—ष्कृते तत्पात्र एव ते ॥ क्षपकाः खेलममुचन् । गरलं पन्नगा इव ॥ ५५ ॥
तन्मुखाब्जच्युतं खेलं । मन्वानो मकरंदवत् ॥ स क्षमापक्ष्मलस्वांत—श्चिंतयामासिवानिति ॥ ५६ ॥
परिष्ठापयितुं खेल—मल्लकान् व्यस्मरं हहा ॥ ध्रुवं ममैव दोषोऽयं । मनाग्भेषां महात्मनां ॥ ५७ ॥
अशनव्यसनं धिग्मां । पशुवद्ग्रासलालसं ॥ क्षुत्परीषहसोढार—स्त्वमी धन्यास्तपोधनाः ॥ ५८ ॥

सिच्यमानो रसैरात्मा । सार्द्रतुंबमिव ब्रुडेत् ॥ तेनैते शोषयंति स्वं । तितारयिषवो भवात् ॥५९॥ क्षमावायुव्रजेनैवं । प्रक्षिपन् प्राक्तनं रजः ॥ स लेभे केवलं रत्नं । लोकालोकप्रकाशकं ॥ ६० ॥ तदा शासनदेव्यागा-न्नमश्चक्रे च तं मुनिं ॥ क्षपकास्तद्विलोक्यैता-मभाषंतोन्मिषत्क्रुधः ॥ ६१ ॥ हित्वा तपोधनानस्मा—नद्य त्वं कटपूतने ॥ अमुं कथमवंदिष्टा । रे क्रूरे कूरगड्डुकं ॥ ६२ ॥ सोचे पवित्रमस्याभूत् । केवलं मूढबुद्धयः ॥ अवंदिषमहं तेन । वंदध्वं यूयमप्यमुं ॥ ६४ ॥ ततस्ते विस्मयानंद—विषादत्रयभाविताः ॥ तस्य केवलिनः पादां—बुजेऽभूवन्मधुव्रताः ॥ ६५ ॥ तेषामपि तदात्मानं । निंदतामभिगर्हतां ॥ विलिल्यिरे विकर्माणि । प्रादुरासीच्च केवलं ॥ ६६ ॥ देवा दुंदुभिनादपूर्वमवनीं गंधोदकोपस्कृतां । कुर्वंतः समुपेत्य केवलमहं कृत्वा च जग्मुर्दिवं ॥ कालात केवलिनः प्रपंचितरुचो धर्मस्य पंचापि ते । साम्राज्याय शुभग्रहा इव जगत्युच्चैः स्थिता जज्ञिरे ॥ ॥ ६७ ॥ इति कूरगडुमुनिकथा ॥ प्रणतिपूर्वमभयकुमारानगारगुणभारमथ विस्तारयन्नाह—

॥ मूलम् ॥—खंडियमोहपगारं । अभयकुमारं नमामि अणगारं ॥ अज्जवि जस्स मईज्ज । जणस्स चित्ते चमक्कंति ॥ ४८ ॥ व्याख्या—अभयकुमारनामानमनगारं महर्षिं नमामि नमस्करो-

मि. किंविशिष्टं? खंडियमोहपगारं खंडितश्चूर्णीकृतो मोहो मूढतैव मुक्तिपुरीप्रवेशे प्रत्यूहकारः प्राकारः शालो येन, यद्वा खंडितोऽवगणितो मोहस्य प्रकृष्टो महतामप्यलंघ्य आकारो घाटः साम्राज्यलोभमयो येन स तथा तं, यस्य किं? मनय औत्पातिकीवैनयिकीकार्मजापारिणामिकीतिसंज्ञाश्चतस्रो बुद्धयः, तथाहि सिद्धांतः—उप्पत्तियाविणइया । कम्मया पारिणामिया ॥ बुद्धि चउव्विहा वुत्ता । पंचमा णेव लप्भइ ॥ १ ॥ पुव्वमदिठ्ठमसूय–मचेयतक्कणविसुद्धमहियठ्ठा ॥ अवाहयफलजोगा । बुद्धि उप्पत्तिया नाम ॥ २ ॥ भरनित्थरणसमत्था । तिवग्गमुत्तगहियपेयाला ॥ उभउलोगफलवई । विणयसमुत्था हवइ बुद्धी ॥ ३ ॥ उवउगदिठ्ठसारा । कम्मपसंगपरिघोलणविसाला ॥ साहुक्कारफलवई । विणयसमुत्था हवइ बुद्धी ॥ ४ ॥ अणुमाणहेउदिठ्ठंत—साहिया विवागपरिणामा ॥ हियनिस्सेसफलवई । बुद्धि परिणामिया नाम ॥ ५ ॥ इत्येताः अज्जवि अद्यापि बहुधा श्रुता अपीति भावः जनस्य लोकस्य चित्ते मनसि चमक्कंति चमत्कुर्वत्याश्चर्यं जनयंतीति संक्षेपार्थः, व्यासार्थस्तु कथानकादवसेयस्तच्चैतत्—अस्ति राजगृहं नाम । पुरं तत्राभवन्नृपः ॥ प्रसेनजिदिति ख्यातः । प्रतापी भानुमानिव ॥ १ ॥ तस्यासन् सूनवो नैके । श्रेणिकाद्या महौजसः ॥

पयोधेरिव भास्वंतो । मणयः कौस्तुभादयः ॥ २ ॥ अन्यदा तु स्वपुत्राणां । राज्यार्हत्वं परीक्षितुं ॥ भोज्याय पायसस्थाला—नेकत्रादीदपन्नृपः ॥ ३ ॥ प्रवृत्तेषु ततो भोक्तुं । कुमारेषु कुशाग्रधीः ॥ सारमेयानयं सिंह-सारमेयानमूमुचत् ॥ ४ ॥ कुमारा द्रुतमुत्तस्थुः । कुक्कुरेष्वापतत्स्वपि ॥ तथैव श्रेणिकस्त्वस्था—चलितोरुष्विव ध्रुवः ॥ ५ ॥ स्तोकं स्तोकं ददौ सोऽन्य—स्थालेभ्यः पायसं शुनां ॥ यावल्लिलिहिरे ते तत् । तावच्च बुभुजे स्वयं ॥ ६ ॥ येन केनाप्युपायेन । परानेष निरोत्स्यति ॥ भोक्ष्यते च स्वयं राज्यं । राजा तेनेति रंजितः ॥ ७ ॥ राज्यार्हमानिनो मैनं । महांतं ज्ञासिषुः परे ॥ इत्यवज्ञाय तं देशान् । कुमारेभ्यो ददौ नृपः ॥ ८ ॥ ततोऽभिमानी स्वपुरा—न्निःसृत्य श्रेणिको गतः ॥ बेन्नातटपुरे भद्र-श्रेष्ठिनोऽट्टमुपाविशत् ॥ ९ ॥ प्रभूतक्रायिकैः श्रेष्ठी । सोऽभवद्व्याकुलस्तदा ॥ कुमारोऽप्यार्पयद्बध्ध्वा । तत्पुटापुटिकादिकं ॥ १० ॥ द्रव्यं माहात्म्यतस्तस्य । श्रेष्ठी भूयिष्ठमार्जयत् ॥ भानोः प्रभावतः किं न । लभते मुकुरः प्रभां ॥ ११ ॥ अद्यावितथपुण्यस्य । कस्यातिथिरसीत्ययं ॥ श्रेणिकः श्रेष्ठिना पृष्टो । भवतामित्यभाषत ॥ १२ ॥ नंदायोग्यो वरो दृष्टः । स्वप्ने योऽयं स एव सः ॥ इति श्रेष्ठी हृदि ध्यायन् । धन्योऽहमिति चाब्रवीत् ॥ १३ ॥ संवृत्याङ्ग-

मथ श्रेष्टी । तं नीत्वा च स्ववेश्मनि ॥ स्नपयित्वा परिधाप्य । सगौरवमभोजयत् ॥ १४ ॥ पाणि-
ग्रहं च नंदायाः । स्वनंदिन्याः परेद्यवि ॥ श्रेष्ठिना कारितो भोगा—नभुंक्त स तया सह ॥ १५ ॥
इतश्चाकस्मिकं रोगं । प्राप्य राजा प्रसेनजित् ॥ तदङ्गः श्रेणिकमाह्वातुं । शीघ्रमादिक्षदौष्ट्रिकान् ॥
॥ १६ ॥ औष्ट्रिकेभ्यः परिज्ञाय । पितुरत्यार्तिमुत्सुकः ॥ नंदां संबोध्य सस्नेहं । प्रतस्थे श्रेणिकस्ततः
॥ १७ ॥ वयं पांडुरकुड्यां गो—पाला राजगृहे पुरे ॥ आह्वानमंत्रप्रतिभा—न्यक्षराणीव चार्पयत्
॥ १८ ॥ गत्वा च श्रेणिको राज—गृहे राजानमानमत ॥ साम्राज्यदीक्षितं कृत्वा । तं राजापि य-
यौ दिवि ॥ १९ ॥ विश्वं विश्वंभराभार । बभार श्रेणिकस्ततः ॥ तेन गर्भवती मुक्ता । गर्भं नंदा
च दुर्वहं ॥ २० ॥ तस्या दोहद इत्यासी—द्गजारूढा शरीरिणां ॥ महाभूत्योपकुर्वाणा । भवाम्य-
भयदा यदि ॥ २१ ॥ ततो विज्ञाप्य राजानं । तत्पित्रापूरि दोहदः ॥ पूर्णे काले च सासूत । सु-
तं चंद्रमिवेंद्रदिक् ॥ २३ ॥ दोहदार्थानुसारेण । तस्याथ दिवसे शुभे ॥ चकाराभयकुमार । इति
मातामहोऽभिधां ॥ २४ ॥ क्रमादधीतविद्योऽसा—वमर्षणेन केनचित ॥ आक्षिप्तः सैष कोऽसि त्वं
। पिता यस्य न विद्यते ॥ २५ ॥ ऊचेऽभयकुमारस्तं । ननु भद्रः पिता मम ॥ त्वन्मातुः स पि

ता तेनो—दिते नंदां जगाद सः ॥ २६ ॥ कोऽस्तव जनको मात—र्मदीयं जनकं वद ॥ पुत्रे-
णेत्युदिते नंदा । निरानंदेदमब्रवीत् ॥ २७ ॥ देशांतराडुपेतेन । परिणीतास्मि केनचित् ॥ मम
च त्वयि गर्भस्थे । तमीयुः केचिदौष्ट्रिकाः ॥ २८ ॥ रहः स किंचिदुक्त्वा तैः । सहैव क्वचिदप्यगा
त ॥ अद्यापि तं न जानामि । कुतस्त्यः कश्चिदित्यहं ॥ २९ ॥ स यानुवाच किंचित्त्वा—मिति
पृष्टाभयेन सा ॥ अक्षराण्यर्पितान्येता—नीति पत्रमदर्शयत् ॥ ३० ॥ तद्विभाव्याभयः प्रीतो—ऽब्रवी
न्मम पिता नृपः ॥ पुरे राजगृहे तत्र । गच्छावो ननु संप्रति ॥ ३१ ॥ आपृच्छ्य श्रेष्ठिनं सोऽहं ।
सामग्रीसंयुतस्ततः ॥ नांदेयो नंदया सार्धं । ययौ राजगृहं पुरं ॥ ३२ ॥ मातरं बहिरुद्याने । विमु-
च्य सपरिच्छदां ॥ आत्मनात्मपरीवारः । प्रविवेशाभयः पुरे ॥ ३२ ॥ इतश्च मंत्रिणां क्लृप्त—मेको-
नशतपंचकं ॥ तत्पूर्तौ श्रेणिकः कंच—दुत्कृष्टमगवेषयत् ॥ ३२ ॥ ततश्च तत्परीक्षार्थं । शुष्ककूपे
निजोर्मिकां ॥नृपश्चिक्षेप लोकांश्च । पटहेनेदमादिशत् ॥ ३४ ॥ आदास्यति करेणैता—मूर्मिकां य
स्तटस्थितः ॥ तस्य धीकौशलक्रीता । मदीया मंत्रिधुर्यता ॥ ३५ ॥ तदाकर्ण्य जनाः प्रोचुः । कूप-
कंठगता इति ॥ पाणिनेडुं य आदत्ते । स इमामूर्मिकामपि ॥ ३६ ॥ ततोऽभयकुमारोऽपि । संप्रा-

मस्तत्र सस्मितं ॥ ऊचे किं गृह्यते नैषा । किमेतदतिदुष्करं ॥ ३७ ॥ तं दृष्ट्वा च जना दध्युः । कोऽप्यसावतिशायिधीः ॥ समये मुखरागो हि । नृणामाख्याति पौरुषं ॥ ३८ ॥ ऊचुस्ते तं गृहाणेमा—मूर्मिकां तत्पणीकृतां ॥ यदीच्छसि श्रियं राज्ञो । धूर्यतां चास्य मंत्रिषु ॥ ३९ ॥ ततोऽभयकुमारोऽपि । मुद्रिकां कूपमध्यगां ॥ आर्द्रगोमयपिंडेन । निजघानोपरिस्थितः ॥ ४० ॥ स निजोत्पत्तिकीबुद्धे—र्युद्भनीभूत उच्चकैः ॥ तोयचक्रभ्रमायातं । गोमयं पाणिनाददे ॥ ४१ ॥ तत्परिज्ञाय चारक्ता—राजुहावाभयं नृपः ॥ आलिलिंग च तं पुत्र—प्रतिपत्त्या प्रमोदभाक् ॥ ४२ ॥ कुतस्त्वमागतोऽसीति । पृष्टः श्रेणिकभूभुजा ॥ अभयः प्राह संप्राप्तो । बेन्नातटपुरादहं ॥ ४३ ॥ राजाभ्यधत्त भद्रास्य । तत्र भद्र इति श्रुतः ॥ श्रेष्ठी किमस्ति किं चास्य । नंदानाम्नी च नंदिनी ॥४४॥ अस्तीत्युक्तोऽमुना राजा । प्राह नंदोदरिण्यभूत् ॥ किं जातं सोऽभ्यधात्पुत्रं । सासूताभयसंज्ञितं ॥ ॥ ४५ ॥ किंरूपः किंगुणः सोऽस्ती—त्युदिते सति भूभुजा ॥ ऊचे ह्यसौ स एवाहं । स्वामिन्नसीति चिंत्यतां ॥ ४६ ॥ राजा तमंकमारोप्या—लिंग्याघ्राय शिरस्यथ ॥ प्राहानंदाश्रुवान् वत्स । माता कुशलिनी तव ॥ ४७ ॥ अभयोऽप्याह भृंगीव । त्वत्पदांभोजकांक्षिणी ॥ स्वामिन्नायुष्मती

मेवा । बाह्योद्यानेऽस्ति संप्रति ॥ ४८ ॥ ततो नंदां समानेतु—मानंदादभयं पुरः ॥ प्रस्थाप्य स्वय-मुत्कंठो—त्सुकोऽथागान्महीपतिः ॥ ४९ ॥ अनंजनाक्षीं शिथिल—वलयां लुलितालकां ॥ ददर्श राजा सानंदो । नंदामुद्यानवासिनीं ॥ ५० ॥ नंदामानंद्य नगरं । प्रविश्य च महीपतिः ॥ पट्टरा-ज्ञीपदे चक्रे । जानकीमिव राघवः ॥ ५१ ॥ पुत्रीं स्वसुः सुसेनाया । मुख्यतां चापि मंत्रिषु ॥ रा-ज्यार्धसंपदा साक—मभयाय ददौ नृपः ॥ ५२ ॥ पितृभक्त्याभयः स्वस्मिन् । पदातिपरमाणुतां ॥ मन्वानः साधयामास । दुःसाध्यानपि भूभुजः ॥ ५३ ॥ इत्यभयकुमारकथायामौत्पातिकीबुद्धिनिबं-धनं नाम प्रथमः प्रकाशः ॥ इतश्च श्रीविशालास्ति । वैशालीति पुरी वरा ॥ तत्र चेटीकृताराति—नृपोऽभूच्चेटको नृपः ॥ १ ॥ पृथग्राज्ञीभवास्तस्य । बभूवुः सप्त कन्यकाः ॥ तत्प्रतापोज्ज्वलत्सप्ता—र्चिषो ज्वाला इवोज्ज्वलाः ॥ २ ॥ प्रभावती पद्मावती । मृगावती शिवापि च ॥ तथैव ज्येष्ठा सु-ज्येष्ठा । चिल्लणा चेति ताः क्रमात् ॥ ३ ॥ प्रभावती वीतभये—श्वरोदायनभूपतेः ॥ पद्मावती तु चंपेश—दधिवाहनभूभुजः ॥ ४ ॥ कौशांबीशशतानीक—नृपस्य तु मृगावती ॥ शिवा तूज्जयि-नीशस्य । प्रद्योतपृथिवीपतेः ॥ ५ ॥ कुंभग्रामाधिनाथस्य । नंदीवर्धनभूभुजः ॥ श्रीवीरनाथज्येष्ठस्य॥

ज्येष्टा दत्ता यथाक्रमं ॥ ६ ॥ सुज्येष्टा चिल्लणा चापि । कुमार्यावेव तस्थतुः ॥ रूपश्रियोपमाभूते । ते मिथो बिंबिते इव ॥ ७ ॥ कलाकलापकुशले । श्रुतार्थोपनिषद्विदौ ॥ मूर्ते इव सरस्वत्या– स्ते रेमाते परस्परं ॥ ८ ॥ अपरेद्युश्च सुज्येष्टा—चिल्लणाभ्यामलंकृतं ॥ कन्यांतःपुरमभ्यागा—दे- का स्थविरतापसी ॥ ९ ॥ सा च व्याचष्ट धर्मं स्वं । मिथ्यात्वद्रुमसारणिः ॥ उत्फुल्लमनसा ह्यङ्ग– पर्षदीव तयोः पुरः ॥ १० ॥ सुज्येष्टा तु गुणश्रेष्टा । तस्या धर्मं निराकरोत् ॥ श्रुतकूपनिपानाभै– र्वचोभिर्युक्तिवर्मितैः ॥ ११ ॥ स्वस्वा.मनोजयोन्मत्ता—स्तामंतःपुरचेटिकाः ॥ उत्ताल्मुखाः कंठे । गृहीत्वा निरवासयन् ॥ १२ ॥ उपदाश्चाकृतादातुं । पतितेवाथ तापसी ॥ पूजार्थिन्यागता सैवं । प्रत्युतानर्थमासदत् ॥ १३ ॥ यांती च तापसी दध्या-विमां वैदुष्यगर्वितां ॥ भूयसीषु सपत्नीषु । दुः- खपात्रीकरोम्यहं ॥ १४ ॥ सुज्येष्टारूपमित्येषा । लिखित्वा चित्रपट्टके ॥ श्रेणिकायोपनिन्येऽथ । गत्वा राजगृहे पुरे ॥ १५ ॥ तां दृष्ट्वालिखितां रूप–मुषितामरनायिकां ॥ राजा राजगृहाधीशः । प्राशंसध्धूनयन् शिरः ॥ १६ ॥ अपृच्छच्च शुभे केयं । किंकुला कस्य नंदिनी ॥ कुमारी परिणीता वा । कां पुरीमधितिष्टति ॥ १७ ॥ तापसी कथयामास । सुज्येष्टेयं कलानिधिः ॥ वैशालीशसुता

कन्यो-द्वोढुमेतां त्वमर्हसि ॥ १८ ॥ विसृज्य तापसीं तस्थौ । कथंचिदथ पार्थिवः ॥ पट्टौ विधाय वैशाल्यां । यियासुरिव तां स्मरन् ॥ १९ ॥ दूतेन प्रार्थयामास । सुज्येष्ठां चेटकादयं ॥ न दास्ये श्रेणिकायेमां । चेटकोऽपीति चावदत् ॥ २० ॥ दूतेनाथ तथाख्याते । श्रेणिकं खिन्नमभ्यधात् ॥ अभयस्तात माशोचीः । करिष्ये वः समीहितं ॥ २१ ॥ इति वैनयिकीबुध्या-न्निधायैत्य गृहेऽभयः ॥ चिद्रूपो रूपमलिखत् । फलके मगधेशितुः ॥ २२ ॥ ततो गुटिकया वर्ण-स्वरभेदं विधाय सः ॥ वणिग्वेषं गृहीत्वा च । वैशालीं नगरीं ययौ ॥ २३ ॥ उपचेटकराजांतः-पुरं चापणमग्रहीत् ॥ तत्रांतःपुरचेटीनां । क्रेतव्यमधिकं ददौ ॥ २४ ॥ अभयश्चार्चयन्नित्यं । श्रेणिकं लिखिते पटे ॥ दासीपृष्टोऽयमाचख्यौ । देवो मे श्रेणिको नृपः ॥ २५ ॥ दास्यश्च कथयामासुः । सुज्येष्ठायै सविस्मयाः ॥ रूपं तादृग्यथादृष्टं । श्रेणिकस्यातिदैवतं ॥ २६ ॥ ज्येष्ठदास्या समानाय्य । पट्टकं कौतुकेन तत ॥ ध्यायंत्यासीच्च निश्चेष्टा । सुज्येष्टा योगिनीव सा ॥ २७ ॥ जगाद च क्षणं स्थित्वा । गत्वा रहसि सत्वरं ॥ गुप्तकार्यादिसर्वस्व-निधानवसुधां सखीं ॥ २८ ॥ यस्येदं फलके रूपं । धीमनीन्द्रामि तं पतिं ॥ तत्संघट्टयितुं त्वेनं । विधिभट्टारकोऽस्तु कः ॥ २९ ॥ यदीयं मे पतिर्न स्या-त्तदा-

तद्गदे क इहोपाय । त्व-
नीं हृदयं सखि ॥ द्विधा नविष्यति नूनं । दाडिमं व पचेलिमं ॥ ३० ॥ सुज्येष्टादास्यथावादी—दभयं
पायो यदिवास्त्ययं ॥ शरणं वणिगेवैष । य एतद्रूपमर्चति ॥ ३१ ॥ सुरंगां खानयिष्यामि ।
सोऽपि तां जगौ ॥ अचिरा पूरयिष्यामि । स्वामिन्यास्ते मनोरथं ॥ ३२ ॥ स्थानेऽमुष्मिन् दि-
तमानेष्ये तया रथात् ॥ अधिष्टेयश्च तत्कालं । त्वत्सामिन्यापि तद्रथः ॥ ३३ ॥ दासी
नेऽमुष्मिन् । क्षणेऽमुष्मिन् सुरंगया ॥ राजेष्यतीति संकेतं । तन्मुखेनाभयो ददौ ॥ ३४ ॥ अ-
तस्थै तदाख्याया—गत्य चाजयमब्रवीत् ॥ प्रमाणं त्वद्वच इति । पुनश्चांतःपुरं ययौ ॥ ३५ ॥ सु-
नयोऽपि हि संकेत—कथाख्यापनपूर्वकं ॥ पितृप्रयोजनप्रह्व । आह्वत् पितरमाश्वपि ॥ ३६ ॥ अन्यदा
ज्येष्टा तत्प्रभृत्येव । स्मरंती श्रेणिकं नृपं ॥ प्रभूतां प्रापदरतिं । रतिनाथवशंवदा ॥ ३७ ॥ प्रसे-
त्वह्नि निर्यातः । श्रेणिकः सुलसासुतैः ॥ सब्रह्मचारिभिर्दिव्या—नुभावादेकनालजैः ॥ ३८ ॥ युग्मं
नजित्सुहन्नाग—रथिकस्य सुतैः श्रुतैः ॥ द्वात्रिंशता समं प्राप । सुरंगामा सुरंगया ॥ ३९ ॥ सा-
सुरंगानिर्गतं प्रेक्ष्य । सुज्येष्टा मगधेश्वरं ॥ चित्रदृष्टानुसारेणो—पलक्ष्य मुमुदेतरां ॥ ४० ॥ र-
ख्याय सर्ववृत्तांत-मापप्रच्छाथ चेल्लणां ॥ प्रत्यज्ञासीच्चेल्लणापि । स्थास्यामि त्वदृते न हि ॥ ४१ ॥

थमारोपयदथ । सुज्येष्ठा चेल्लणां प्रति ॥ स्वयं चागात्समानेतुं । द्रुतं रत्नकरंडिकां ॥ ४२ ॥ न स्था-
तुमुचितं वैरि—गृहे चिरमितीरिभिः ॥ प्रेरितोऽनुचरैर्लात्वा । चेल्लणां ववले नृपः ॥ ४३ ॥ इति
वैनयिकीबुद्धिनिबंधनरूपं श्रीअभयकुमारकथानकं ॥ अथ जंबूस्वामिसत्वमहिमानमनुमोदयन्नाह—

॥ मूलम् ॥—तं नवनवइकणयकोडिं । चइकण तहय रमणीउ ॥ गहिकण संजमं जंबू—
सामिणा साहिअं कज्जं ॥ ४९ ॥ व्याख्या—सुगमैव. जंबूस्वामीकथा च ग्रंथांतरादवसेया. अथ स्तु-
तसृभिर्गाथाभिर्मुनिमतल्लिकानि नामतः प्रस्तुवन्नाह—

॥ मूलम् ॥—धन्नो तह कयपुन्नो । विहुकुमारो य अभयदत्तो ॥ जसभद्दभद्दबाहु । अइमुत्तो
नागदत्तो य ॥ ५० ॥ सिज्जंभवो अ पभवो । सिरिउ उदायणो अ मासतुसो ॥ केसी इलाइ-
पुत्तो । मेहकुमारो अ पुंमरीउ ॥ ५१ ॥ अद्दयकुमारसाहू । कित्तिधरो नंदिसेण करकंडू ॥ हल्ल-
विहल्लमुणिंदा । सालमहासालसीहगिरि ॥ ५२ ॥ अज्जमहागिरि अज्ज—सुहत्थी तह अज्जरक्खि-
उ संबो ॥ पज्जुन्नमुणी कुम्मा—पुत्तो तह भद्दगुत्तो य ॥ ५३ ॥ व्याख्या—आसां पदार्थः स्प-
ष्टः, भावार्थस्तु कथानकेभ्योऽवसेयः, अत्र धन्यः शालिभद्रकथायां, कृतपुण्यः पुनरभयकुमारकथा-

यामुद्दिष्टः, संप्रति विष्णुकुमारकथा यथा—कुरुषु स्वस्तिनागस्ति । हस्तिनागपुरं पुरं ॥ तत्रेक्ष्वाकु-
रभूत् क्षोणी—पतिः पद्मोत्तराभिधः ॥ १ ॥ ज्वालादेवी च लक्ष्मीश्चा—भूतां द्वे तस्य वल्लभे ॥
सम्यग्दृष्टिस्तयोराद्या । मिथ्यादृष्टिः परा पुनः ॥ २ ॥ प्रासूत द्वौ सुतौ ज्वाला । सिंहस्वप्नेन सूचितः
॥ तयोराद्योऽभवद्विष्णु—कुमार इति विश्रुतः ॥ ३ ॥ चतुर्दशमहास्वप्न—सूचितश्चक्रभृत्तथा ॥ द्वि-
तीयस्तु महापद्म । इत्यभूत्पद्मलोचनः ॥ ४ ॥ उभावपि शुभाकारौ । नरेंद्रस्य कुमारकौ ॥ अवर्ध-
तामर्भकत्वं । चंडादित्याविवाश्रितौ ॥ ५ ॥ कलाकलापकलितौ । तौ क्रमेण कुमारकौ ॥ युवतो
दृग्पिकीचूत–वनं यौवनमीयतुः ॥ ६ ॥ प्रकृत्याऽगृध्नुना विष्णु—कुमारेण निराकृते ॥ राज्ञाथ यु
वराजत्वे । महापद्मो न्यवेश्यत ॥ ७ ॥ इतश्चोज्जयिनीपुर्यां । श्रीवर्मा पार्थिवोऽभवत् ॥ मिथ्यात्व-
रुचिरासीच्च । मंत्री नमुचिसंज्ञितः ॥ ८ ॥ तत्पुरोपवनेऽन्येद्युः । शिष्यः श्रीसुव्रतप्रभोः ॥ समेत्य
सुव्रताचार्यः । शमवान् समवासरत ॥ ९ ॥ तद्वंदनाय निर्यांतं । वीक्ष्य राजा पुरीजनं ॥ पप्रच्छ न-
मुचिं लोको—ऽस्तोकोऽयं क नु यास्यति ॥ १० ॥ नमुचिः प्राह देवात्रो—पवने केऽपि सूरयः ॥
संत्यायाताः प्रणंतुं तां—स्तद्भक्त्या यांत्यमूः प्रजाः ॥ ११ ॥ राजोचे यावस्तर्ह्यावा—मपि मंत्र्याह

तत्र च ॥ मध्यस्थेन त्वया भाव्यं । तान् करिष्ये निरुत्तरान् ॥ १२ ॥ ओमित्युक्त्वा नृपस्तेन । सह
सूरीनुपाययौ ॥ धर्मतत्वं च नमुचिः । पप्रच्छाक्षिप्य तानथ ॥ १३ ॥ मत्वा क्षुद्रममुं क्षुल्ल—केन के-
नापि सूरयः ॥ तदा पराजयांचक्रु—र्वादिना प्रतिवादिनं ॥ १४ ॥ सोऽथ यातः समं राज्ञा । रजन्यां
तु समत्सरः ॥ छन्नं प्राप्तो मुनीन् हंतुं । वनदेव्या न्यबध्यत ॥ १५ ॥ प्रातर्लोकेन राज्ञा च । ज्ञा-
तो मुनिषु मत्सरी ॥ असामान्यं विमान्याथ । नमुचिर्निरवास्यत ॥ १६ ॥ हस्तिनापुरमायातः । स
विलक्षो द्विजाधमः ॥ महापद्मस्य तत्रापि । युवराजस्य मंत्र्यभूत् ॥ १७ ॥ इतः सिंहबलोऽन्वर्थ—
नामा सीमालभूपतिः ॥ भंजंभंजं महापद्म—देशं दुर्गं विशत्यसौ ॥ १८ ॥ महापद्मेन रुष्टेन । त-
तो नमुचिरौच्यत ॥ मंत्रिन् सिंहबलध्वंसो—पायं कमपि विंदसि ॥ १९ ॥ वेद्म्येवेति प्रतिज्ञाय
। सोऽपि सिंहबलं गतः ॥ भंक्त्वा तद्दुर्गमचिरा—त्तं बध्वा च समानयत् ॥ २० ॥ वरं वृणिष्व य-
भापिष्ट । महापद्मः प्रसीद्य तं ॥ यदा याचे तदा देय । इत्यूचे नमुचिश्च तं ॥ २१ ॥ यौवराज्यं
महापद्मे । पालयत्यन्यदंबया ॥ ज्वालयाविष्कृतो जैन—रथेनात्ममनोरथः ॥ २२ ॥ लक्ष्मीरपि सप
त्न्यस्या । स्पर्धया ब्रह्मणो रथः ॥ कारयित्वा भ्रमयितुं । तत्पूर्वमुपचक्रमे ॥ २३ ॥ तन्मत्वाऽभ्यग्रही-

ज्ज्वाला । समक्षं नृपतेरिति ॥ नाग्रेऽहंऽथयात्रा चे—त्तपरत्र ममाशनं ॥ २४ ॥ रथयात्रे नृपे-
णाथ । न्यषेत्सातामुभे अपि ॥ द्वयोः कादग्निमीष्येतो—न्मीष्येतापि च का यतः ॥ २५ ॥ इति
प्रेक्ष्य महापद्मः । स्वांबापरिभवं क्रुधा ॥ अनापृच्छ्यैव पितरं । ययौ देशांतरं निशि ॥ २६ ॥ स्त्री-
भिः स्त्रीभिश्च गणशो—ऽवीगतैष पदे पदे ॥ को विदेशः स्वदेशो वा । पूर्वोपात्तसुकर्मणां ॥
॥ २७ ॥ ततो नवमचक्रित्व—पदलक्ष्मीमुपार्ज्य सः ॥ स्वपुरं पुनरागच्छ—दनेकनृपसेवितः ॥ २८ ॥
पित्रा सहर्षमभ्येत्य । तत्र तेनादरादसौ ॥ प्रावेश्यत पुरं पौर—बद्धवंदनमालिकं ॥ २९ ॥ गत्वा
सौधमसौ धन्य—गुणां स्वजननीं नमन् ॥ तयाशास्यत सानंद—मंचयंत्या करांचलं ॥ ३० ॥ सुव्रतः
सुव्रताचार्यः । पुराद्बहिरिहांतरे ॥ आययावर्यमेवान्यो । हतमोहतमोभरः ॥ ३१ ॥ पद्मोत्तरनृपः
सांतः—पुरः पौरपरिच्छदः ॥ एत्यावंदिष्ट तत्पादान् । निकषा निषसाद च ॥ ३२ ॥ सूरिः संसारवै-
राग्य—कंदकादंबिनीं तदा ॥ चकार देशनामुग्र—क्लेशनाशपटीयसीं ॥ ३३ ॥ देशनांतेऽथ नृपालो ।
भववैराग्यमुद्वहन् ॥ गत्वा पुरं जगौ विष्णु—कुमारं राज्यहेतवे ॥ ३४ ॥ स त्वाह तात राज्येऽस्मिन्
। महापद्मो निवेश्यतां ॥ युष्माभिरेव सत्राहं । प्रव्रजिष्यामि निश्चितं ॥ ३५ ॥ ततो राज्ये महाप-

ज्ञं । कृत्वा पद्मोत्तरो नृपः ॥ व्रतं विष्णुकुमारेण । सहादत्त महामतिः ॥ ३६ ॥ चक्रवर्तिपदे किं-
चा—भिषेको द्वादशाब्दिकः ॥ अन्येत्यान्येत्य नृपालै-र्महापद्मस्य निर्ममे ॥ ३७ ॥ तावंतं का
लमस्थानां । रथौ वादे तथैव तौ ॥ मिथोऽप्याज्ञाग्रहाधीने । रणे सैन्ये इवेशयोः ॥ ३८ ॥ लक्ष्मी-
रथं निराकृत्य । मिथ्यात्वमिति मूर्तिमान् ॥ महापद्मः स्वजननी-रथयात्रामसूत्रयत ॥ ३९ ॥ किंच
कुक्कुटसंपात-प्रमाणांतरभूमिकाः ॥ अकार्यंत जिनेंद्राणां । विहारास्तेन कोटिशः ॥४०॥ जिनशा-
सनभक्तेऽस्मिन् । जनोऽपि जिनभक्तिमान् ॥ सर्वोऽप्यभवदुक्तं हि । यथा राजा तथा प्रजा॥ ४१ ॥
इतः पद्मोत्तरस्तीव्र-तरव्रतमहासिना ॥ हतकर्मरिपुः सिद्धिं । जयश्रियमिवाश्रयत् ॥ ४२ ॥ मुनेर्वि-
ष्णुकुमारस्य । तपतो दुस्तपं तपः ॥ लब्धयो वैक्रियाकाश-गामिन्याद्या जजृंभिरे ॥ ४३ ॥ इतश्च
सुव्रताचार्या । वर्षास्था हस्तिनापुरे ॥ ज्ञाता नमुचिना पूर्व-विरुद्धेन दुरात्मना ॥ ४४ ॥ ततोऽने-
न महापद्म-श्चक्री पूर्वप्रतिश्रुतं ॥ वरं यज्ञक्रियाहेतो । राज्यं देहीत्ययाचयत ॥ ४५ ॥ अस्मै राज्यं
प्रदायांतः-पुरांतरविशन्नृपः ॥ स चाभूत्कैतवाद्यज्ञ-दीक्षितो राज्यदीक्षितः ॥ ४६ ॥ मुक्त्वा जैनमु-
नीनेनं । वर्धापयितुमाययुः ॥ अन्यदर्शनिनो विप्राः । पौराः प्रकृतयोऽपि च ॥ ४७ ॥ न श्वेतभि-

दवोऽन्येयु—रिति संप्राप्य सब्बलं ॥ आहूय सुव्रताचार्या—नित्यूचे नमुचो रुषा ॥ ४८ ॥ यदा
यः कुरुते राज्यं । स मान्यः सर्वलिंगिभिः ॥ इति नीतिर्यतो राज—रक्षिता हि तपोधनाः ॥४९॥
यूयं तु गर्वकठिनाः । सर्वपाखंडदूषणाः ॥ विप्रनिंदापराः क्षिप्र—मिदं राज्यं तदुज्झत ॥ ५० ॥ त-
मूचुः सूरयो नास्त्य—स्वल्पोऽयं तेन नागताः ॥ न निंदामश्च कमपि । समभावा हि साधवः ॥
॥ ५१ ॥ वचसा शीतलेनापि । तप्ततैलमिवांबुना ॥ प्रज्ज्वलन्नमुचिः प्राह । सूरीन्क्रूरीकृतः क्रुधा ॥
॥ ५२ ॥ दत्ता सप्ताह्निकाह्वाय । यात यूयं यथारुचि ॥ तदूर्ध्वं तु यथादृष्टं । हंस्यामि जिनलिंगिनं
॥ ५३ ॥ श्रुत्वेति वमतावेत्य । जगदुः सूरयो यतीन् ॥ किं विधेयं महासत्वा । संकटेऽस्मिन्नुप-
स्थिते ॥ ५४ ॥ अथैकः प्राह भगवन् । महापद्मस्य सोदरः ॥ अनेकलब्धिमान् विष्णु—कुमारो-
ऽस्ति महातपाः ॥ ५५ ॥ तद्वाक्यान्नमुचिर्नून—मसावुपशमिष्यति ॥ विना भानुप्रभां नैशं । तमो
नश्यति कर्हिचित् ॥ ५६ ॥ परं मंदरशैलेऽस्ति । तप्यमानः स सांप्रतं ॥ यो विद्यालब्धिमान् साधु-
स्तमाह्वातुं प्रयातु सः ॥ ५७ ॥ अथान्यः प्राह गमने । शक्तिर्नागमने तु मे ॥ गुरुस्त्वाह भवान्
विष्णु—कुमारेणानयिष्यते ॥ ५८ ॥ गुर्वाज्ञातः समुत्पत्य । गरुत्मानिव स क्षणात् ॥ ययौ विष्णु-

कुमारेण । शाल्मानं शिलोच्चयं ॥ ५९ ॥ दृष्ट्वा विष्णुकुमारस्तं । निश्चिकायेति चेतसि ॥ संघ-
कार्यं ध्रुवं किंचित् । प्रावृष्येव यदागतः ॥ ६० ॥ ततो नतोऽमुना विष्णु—कुमारस्तत्तथा कथां ॥
श्रुत्वास्मात्सह तेनैवो—त्पत्यागाद्गुरुसन्निधौ ॥ ६१ ॥ गुरून्नत्वा तदाज्ञातो । गतश्च नमुचेः सदः
॥ तंविनान्यैर्नृपैर्नत्वो-पावेश्यत महासने ॥ ६२ ॥ तत्र विष्णुकुमारोऽथ । धर्माख्यानपुरस्सरं ॥ न-
मुचिं प्राह संत्वेते । यावद्वर्षा महर्षयः ॥ ६३ ॥ नमूचिरतूचिवान् राज्यं । हित्वा मेऽथ व नंत्वमी ॥
मुनिरूचे पुरे चेन्न । संतूद्याने पुराद्बहिः ॥ ६४ ॥ कोपान्नमुचिरूचेऽथ । पुरोद्यानस्य का कथा ॥
राज्येऽपि मम न स्थेयं । कार्यं चेज्जीवितेन तैः ॥ ६५ ॥ सप्रहासं मुनिः प्राह । राज्यमंभोधिसीम
ते ॥ तत्त्याज्यं कथमेतेषां । देहि स्थानं पदत्रयं ॥ ६६ ॥ नमुचिः प्राह दत्तं चेत् । प्रेक्षिष्येऽहम-
तो बहिः ॥ तं करिष्ये शिरश्छित्वा । धकाराकारसोदरं ॥ ६७ ॥ ततो विष्णुः शरीरांतः । कोपेनेव
प्रसर्पता ॥ ववृधे हिमवन्मुख्यान् । पर्वतानपि खर्वयन् ॥ ६८ ॥ नमुचिः पार्ष्णिघातेन । पातितस्ते-
न चासनात् ॥ परासुः प्रययौ शीघ्रं । सप्तमीं नरकावनिं ॥ ६९ ॥ त्रस्तं चोत्क्रुत्य दिग्नागै-स्तं वी-
क्ष्याथ भयंकरं ॥ धिष्ण्यैरतुपवडुड्डीनं । तद्ब्राणप्रभवानिलैः ॥ ७० ॥ ताटंकितेंडुमार्तंडां । भयाक्षी-

नमुरापगां ॥ तं वीक्ष्याद्रिदरीमिंद्रो–ऽविशन्मुक्त्वा कृशोदरीं ॥ ७१ ॥ विज्ञायावधिनेंद्रस्तं । मुनींद्रं
कुपितं ततः ॥ प्रैषीदस्य प्रबोधाय । गांधर्वानीकगायकाः ॥ ७२ ॥ कर्णान्यर्णे समेत्यैता—तस्य
गीतानि तेनिरे ॥ उत्फणस्य महामंत्र—वादिन्य इव भोगिनः ॥ ७३ ॥ क्रोधं प्रभो संहर यन्नि-
मित्त—मयं कृतोऽसौ नमुचिर्निरस्तः ॥ कृतेऽन्नपाके स्वयमात्मनीनैः । किं स्वाश्रयाग्निः प्रशमं न
नेयः ॥ ७४ ॥ क्रोधः प्रसूतत्रिजगद्विरोधः । क्रोधः कृतापत्प्रकरप्रबोधः ॥ क्रोधः शिवाध्वन्यजनैकरो-
धः । क्रोधः प्रणेयः कृतिभिस्त्वबोधं ॥ ७५ ॥ इत्यंबरे निर्जरगायनाभिः । पृथ्व्यां च संघेन मही-
भुजा च ॥ कथंकथंचित्प्रतिबोध्यमानः । सस्मार स स्वं कुपितं मुनींद्रः ॥ ७६ ॥ संहृत्य चाशु स्व-
तनोः प्रवृद्धिं । रुषः प्रवृद्धिं स विधूय मूलात् ॥ प्राप्तः स्वभावं क्षमितो लगित्वा । पादे महापद्मन-
रेश्वरेण ॥ ७७ ॥ श्रीसंघदौःस्थ्यमिति विष्णुकुमार एष । भित्वा क्रमेण निजकर्मबलं च जित्वा ॥
उत्पन्नकेवलकलाकलितः प्रबोध्य । विश्वंभरां शिवगतिं बिभरांबभूव ॥ ७८ ॥ इति श्रीविष्णुकुमा-
रकथा समाप्ता ॥

अथाग्निकापुत्रकथा यथा—उभे स्तो मथुरानाम्नी । नगर्यौ दक्षिणोत्तरे ॥ मुख्यांजनेन बि-

भ्राणे । श्रियं क्षोणीदृशोरिव ॥ १ ॥ मथुरायामुदीच्यां च । देवदत्तोऽजवद्वणिक् ॥ दक्षिणस्यां धनावाप्त्यै । मथुरायामियाय सः ॥ २ ॥ वणिजा जयसिंहेन । तत्रासीत्तस्य सौहृदं ॥ स्वसासीज्जयसिंहस्य । चान्निकानामकन्यका ॥ ३ ॥ जयसिंहोऽन्यदा जामि—मन्निकामादिशन्निजां ॥ समित्रोऽप्यद्य भोक्ष्येऽहं । रम्यां रसवतीं कुरु ॥ ४ ॥ इत्युक्त्वा जयसिंहेन । देवदत्तो निमंत्रितः ॥ आगाच्च तद्गृहे भोक्तुं । तौ द्वावपि निषेदतुः ॥ ५ ॥ भक्ष्यभेदानथो मिष्टा—नष्टादश महारसान् ॥ द्वयोरप्यन्निका सा तु । सुवेषा पर्यवेषयत् ॥ ६ ॥ तयोर्वातात्प्रियाकर्तुं । निराकर्तुं च मक्षिकाः ॥ धुन्वती व्यजनं चक्रे । कर्मैकं व्यर्थकारि सा ॥ ७ ॥ वीजनाल्लोलदोःसिंज—त्कंकणां तां मृगेक्षणां ॥ देवदत्तो भृशं पश्य—न्नभूत्कामवशंवदः ॥ ८ ॥ तद्रूपरसनिःस्यंद—पाननिस्पंदलोचनः ॥ सोऽविदन् भोजनस्वादं । बुभुजे गजलीलया ॥ ९ ॥ देवदत्तो द्वितीयेऽह्नि । जयसिंहादशान्निकां ॥ स्वमित्रैर्याचयामास । सोऽपि तानेवमूचिवान् ॥ १० ॥ कुलीनोऽयं कलाज्ञोऽयं । सश्रीकोऽयं सुधीरयं ॥ युवायं किं बहु ब्रूमः । सर्वे वरगुणा इह ॥ ११ ॥ किंतु यामिं प्रदास्यामि । तस्मै यो मे गृहात्क्वचित ॥ न याता वीक्ष्यते प्रात—रुत्थितैः स हि सज्जनः ॥ १२ ॥ एष संभाव्यते यास्य—

॥ किं न श्रुतं हि यद्ग्रामा । वसंति प्राघुणैः किमु ॥ १३ ॥ प्राणप्रिया स्व-
न्नद्य श्वो वापि सुंदरः ॥ किं न श्रुतं हि यद्ग्रामा । वसंति प्राघुणैः किमु ॥ १४ ॥ असौ कर्तुं
सेयं मे । जंगमा श्रीरिवौकसि ॥ तदिमां संप्रहेष्यामि । न भर्तुरपि वेश्मनि ॥ १५ ॥ देवदत्ता-
क्रमोऽपत्य—जन्मावधि यदीदृशं ॥ तदुद्वहतु मे जामिं । देवदत्तोऽन्निकामिमां ॥ १६ ॥ तत्र
नुमत्यैते । ओमिति प्रतिपेदिरे ॥ देवदत्तोऽपि तां कन्यां । परिणिन्ये शुभेऽहनि ॥ १७ ॥ आ-
तस्यान्निकाप्रेम—पाशबद्धस्य तस्थुषः ॥ प्रैष्युदग्मथुरास्थाभ्यां । पितृभ्यां लेख ईदृशः ॥ १८ ॥
वामंधौ जराजीर्णौ । जीवंतौ यदि वीक्षसे ॥ तदागत्य द्रुतं वत्स । मरणं नौ सफलीकुरु ॥ १९ ॥
पितृवात्सल्यवन्मूर्तं । स तं लेखमवाचयत् ॥ पथश्रांतोऽयमित्यश्रु—सलिलैः स्नपयन्निव ॥ २० ॥
अचिंतयच्च धिग्मां । पितरौ विस्मृतौ हि मे ॥ अहं विषयलग्नोऽस्मि । पित्रोः पुनरियं दशा ॥
किं करोमि कथं यामि । पतितोऽहं महापदि ॥ स्वजिह्वयाथ बद्धस्य । गतिः का मे भविष्यति ॥
॥ २१ ॥ अन्निका तत्कराल्लेख—मादाय तमवाचयत् ॥ तद्दुःखकारणं सद्यो । विवेद च जगाद च
॥ २२ ॥ सर्वथा मा कृथाः खेद—मार्यपुत्राचिरादहं ॥ भ्रातरं बोधयिष्यामि । करिष्यामि त्वदीप्सि-
तं ॥ २३ ॥ गत्वा भ्रातरमूचे च । नितरां कुपितेव सा ॥ विवेकिन् किमिदं भ्रात—र्भवतानुष्ठितं

थाकुर्वं—स्तामवाजीगणत्पुनः ॥ ४८ ॥ क्रमेण पुष्पकेतौ तु । कथाशेषत्वमीयुषि ॥ पुष्पचुलोऽज्ञ-
वद् नृपः । पुष्पचूला महिष्यनूत् ॥ ४९ ॥ अकृत्यं वारयंती त—त्तदापत्यापमानिता ॥ राज्ञी पुष्प-
वती लात्वा । व्रतं तप्त्वा ययौ दिवि ॥ ५० ॥ स देवोऽवधिनापश्य—त्तामकृत्यनियोजितां ॥ नि-
जां दुहितरं स्नेहात् । पुनरेवमचिंतयत् ॥ ५१ ॥ मम प्राच्यभवे प्राण—प्रियेयं दुहिताऽनवत् ॥ क-
रोमि तत्तथा घोरे । नरके न पतेद्यथा ॥ ५२ ॥ इति स्वप्नांतरे तस्या । नरकानतिदारुणान् ॥ द-
र्शयामास निर्दार्य—माणसांशविनारकान् ॥ ५३ ॥ चिटिका श्येनमुक्तेव । मृगीव दवनिर्गता ॥ सा
दृष्टनारका नीत्या । प्रबुद्धापि व्यकंपत ॥ ५४ ॥ तत्तथाकथयद्भीत—नीता सा पत्युरेष तु ॥ शि-
वेच्छुः पुष्पचूलायाः । कारयामास शांतिकं ॥ ५५ ॥ स तु पुष्पवतीजीव—देवस्तद्धितकाम्यया ॥
तादृशानेव नरका—ननुरात्रमदर्शयत् ॥ ५६ ॥ अथाख्यन्नरकान् राज्ञे । पृष्टः पाखंडिनो यथा ॥ ते-
ऽनूवंश्च तदा राज्ञी—स्वप्नदृष्टविलक्षणाः ॥ ५७ ॥ आह्वयच्चान्निकापुत्रं । राजापृच्छत्तदेव हि ॥ स चा-
ख्यन्नरकान् राज्ञी—स्वप्नदृष्टान् यथातथा ॥ ५८ ॥ चमत्कृतमना भूपो । जगाद मुनिपुंगवं ॥ नग-
वंस्त्वयापि किं दृष्टाः । स्वप्ने ते एव नारकाः ॥ ५९ ॥ सूरिः प्रोवाच हे वत्स । विनापि स्वप्नदर्शनं

॥ संसारे नास्ति तद्यन्न । विज्ञायेत जिनागमात् ॥ ६० ॥ पुष्पचूलाथ पप्रछ । भगवन् केन कर्मणा ॥ ईदृशान्नरकान् घोरान् । प्राप्नुवंति शरीरिणः ॥ ६१ ॥ आख्यातिस्मान्निकापुत्रो । महारंभपरिग्रहैः ॥ मांसाशनैर्गुरुप्रत्य—निकत्वेनांगिनां वधैः ॥ ६२ ॥ ततश्च जननीजीव—देवस्तस्यास्तदादि तु ॥ स्वप्ने च पूर्ववन्नित्यं । स्वर्गसुखान्यदर्शयत ॥ ६३ ॥ प्रबुध्धा कथयामास । सा पत्यै स्वर्गदर्शनं ॥ सोऽथ पाखंडिनोऽपृछत् । ब्रूथ किं स्वर्गलक्षणं ॥ ६४ ॥ तेष्वेके प्रोचिरे स्वर्ग—स्वरूपं प्रियसंगमः ॥ पुष्पचूला न तत्स्वप्न—दृष्टं स्वर्गं त्वमन्यत ॥ ६५ ॥ राज्ञा पृष्टोऽन्निकापुत्रः । स्वर्गान् द्वादश तत्तथा ॥ नवग्रैवेयकांश्चाप्य—नुत्तरानाख्यदंजसा ॥ ६६ ॥ प्रमाणं वचनं जैन—मिति निश्चित्य राझ्यथ ॥ गुरुं पप्रछ भगवन् । स्वर्गाप्तिः केन कर्मणा ॥ ६७ ॥ सूरिराह जिने देवे । सुसाधौ च गुरौ मतिः ॥ यस्य तस्यांगिनः स्वर्ग—पदवी न दवीयसी ॥ ६८ ॥ पुनश्चारित्रधर्मं च । गुरुणा कथिते सति ॥ सा राज्ञी लघुकर्मत्वा—द्भवोद्विग्नैवमभ्यधात् ॥ ६९ ॥ भगवन् पतिमापृच्छ्य । पादमूले तवैव हि ॥ उपादास्ये परिव्रज्यां । मर्त्यजन्मतरोः फलं ॥ ७० ॥ इत्युक्त्वा पुष्पचूलाथ । गुरून्नत्वा विसृज्य च ॥ आपप्रछ महीनाथं । सोऽपि तामिदमूचिवान् ॥ ७१ ॥ तदा त्वा-

वद ॥ २४ ॥ स्वकुटुंबवियोगेन । क्लिश्यते तव भावुकः ॥ श्वश्रूश्वशुरपादाना—महमुत्कंठिताऽस्मि
च ॥ २५ ॥ अनुमन्यस्व मे नाथं । स्वस्थानगमनंप्रति ॥ तमन्वेष्याम्यहमपि । तस्यायत्ता न ते
यतः ॥ २६ ॥ स्थास्यत्येवैष वाग्बद्धः । प्रणंतुं श्वशुरौ त्वहं ॥ एकाकिन्यपि यास्यामि । किं कार्यं
तदनेन ते ॥ २७ ॥ इति साग्रहमुक्तस्तु । जयसिंहो व्यसर्जयत् ॥ तावुदग्मथुरां प्रत्या—गंतुं ल-
ग्नौ च तौ द्रुतं ॥ २८ ॥ अन्निकाभूत्तदा गुर्वी । नेदीयःप्रसवापि च ॥ इति मार्गेऽपि सासूत ।
सुतं लक्षणविश्रुतं ॥ २९ ॥ नादत्तामस्य तौ नाम । पितरौ तत्करिष्यतः ॥ अन्निकापुत्र इत्येनं ।
तज्जनस्तूदलापयत ॥ ३० ॥ उत्तरामन्निकानाथो । जगाम मथुरामथ ॥ तौ ववंदे च पितरौ । ता-
भ्यां मूर्धन्यचुंबि सः ॥ ३१ ॥ स्वीकुरुतमिमां पूज्या—वुपदां च मयार्जितां ॥ इत्युक्त्वा सोऽर्भकं
पित्रो-रर्पयामास हृष्टयोः ॥ ३२ ॥ इयं वधूरयं पुत्रो । ममैतत्कुक्षिसंभवः ॥ इत्याचख्यौ च संबंधं ।
भक्तिबंधुरया गिरा ॥ ३३ ॥ स्थविरौ चक्रतुस्तस्य । शिशोः संधिरणाभिधां ॥ अन्निकापुत्र इति तु
। लोकनाम्ना स पप्रथे ॥ ३४ ॥ वर्धमानोऽन्निकासूनुः । स्पर्धमानो नवेंदुना ॥ चतुर्वर्गार्जनोजस्वि
। प्रपेदे मध्यमं वयः ॥ ३५ ॥ भोगान् रोगानिवापास्य । यौवनेऽपि स धीधनः ॥ जयसिंहगुरोः

पार्श्वे । परिव्रज्यामुपाददे ॥ ३६ ॥ स क्रमेण परिक्रांत—चारित्रज्ञानदर्शनः ॥ बभूव गणभृद्भव्य—
कमलाकरभास्करः ॥ ३७ ॥ स सूरिः सपरीवारो । वृद्धत्वे विहरन् ययौ ॥ नगरं पुष्पभद्राख्यं । गं·
गातटविभूषणं ॥ ३८ ॥ तत्राभूद्भूपतिः पुष्प—केतुस्तस्य तु वल्लभा ॥ बकुलस्येव वासंती । पुष्पव·
त्यभिधानतः ॥ ३९ ॥ अभूतां युग्मजौ तस्याः । पुत्रः पुत्री च सुंदरौ ॥ अभूत्तयोः पुष्पचूलः ।
पुष्पचूलेति चाभिधा ॥ ४० ॥ वर्धमानौ सहैवैतौ । रममाणौ सहैव तौ ॥ प्रीतिमंतौ मिथोऽभूतां ।
मरालपृथुकाविव ॥ ४१ ॥ राजा दध्यौ च यद्येतौ । दारकौ स्नेहलौ मिथः ॥ वियुज्येते तदा नूनं ।
न मनागपि जीवतः ॥ ४२ ॥ वियोगं सोढुमहमस्य । न ह्यलंभूष्णुरेतयोः ॥ मिथस्तदेतयोरेव ।
युक्तमुद्वाहमंगलं ॥ ४३ ॥ मित्राणि मंत्रिणः पौरा—नथ पप्रच्छ पार्थिवः ॥ अंतःपुरे यदुत्पन्नं । रत्नं
तस्य क ईश्वरः ॥ ४४ ॥ ते प्रोचुर्देशमध्येऽपि । रत्नं किमपि यद्भवेत् ॥ तस्यापीशो महीनाथः ।
का कथांतःपुरे पुनः ॥ ४५ ॥ यद्यदुत्पद्यते रत्नं । स्वदेशे तद्विशांपतिः ॥ यथाकामं नियुंजीत ।
बाधकस्तस्य कोऽपि न ॥ ४६ ॥ तेषां भावानभिज्ञाना—मालंब्याथ वचो नृपः ॥ मुक्ताफले इवा·
पत्ये । ते मिथः पर्यणाययत् ॥ ४७ ॥ राज्ञी पुष्पवती तस्य । श्राविकाभूत्तया नृपः ॥ अवार्यत त·

थाकुर्व—स्तामवाजीगणत्पुनः ॥ ४८ ॥ क्रमेण पुष्पकेतौ तु । कथाशेषत्वमीयुषि ॥ पुष्पचुलोऽन्नवद् नृपः । पुष्पचूला महिष्यन्नूत् ॥ ४९ ॥ अकृत्यं वारयंती त—त्तदापत्यापमानिता ॥ राज्ञी पुष्पवती लात्वा । व्रतं तप्त्वा ययौ दिवि ॥ ५० ॥ स देवोऽवधिनापश्य—त्तामकृत्यनियोजितां ॥ निजां डुहितरं स्नेहात् । पुनरेवमचिंतयत् ॥ ५१ ॥ मम प्राच्यभवे प्राण—प्रियेयं डुहितान्नवत् ॥ करोमि तत्तथा घोरे । नरके न पतेद्यथा ॥ ५२ ॥ इति स्वप्नांतरे तस्या । नरकानतिदारुणान् ॥ दर्शयामास निर्दार्य—माणसांशविनारकान् ॥ ५३ ॥ चिटिका श्येनमुक्तेव । मृगीव दवनिर्गता ॥ सा दृष्टनारका न्नीत्या । प्रबुद्धापि व्यकंपत ॥ ५४ ॥ तत्तथाकथयद्भीत—न्नीता सा पत्युरेष तु ॥ शिवेच्छुः पुष्पचूलायाः । कारयामास शांतिकं ॥ ५५ ॥ स तु पुष्पवतीजीव—देवस्तद्धितकाम्यया ॥ तादृशानेव नरका—ननुरात्रमदर्शयत् ॥ ५६ ॥ अथाख्यन्नरकान् राज्ञे । पृष्टाः पाखंडिनो यथा ॥ तेऽनूवंश्च तदा राज्ञी—स्वप्नदृष्टविलक्षणाः ॥ ५७ ॥ आह्वयच्चान्निकापुत्रं । राजापृच्छत्तदेव हि ॥ स चाख्यन्नरकान् राज्ञी—स्वप्नदृष्टान् यथातथा ॥ ५८ ॥ चमत्कृतमना भूपो । जगाद मुनिपुंगवं ॥ न्नगवंस्त्वयापि किं दृष्टाः । स्वप्ने ते एव नारकाः ॥ ५९ ॥ सूरिः प्रोवाच हे वत्स । विनापि स्वप्नदर्शनं

॥ संसारे नास्ति तद्यन्न । विज्ञायेत जिनागमात् ॥ ६० ॥ पुष्पचूलाथ पप्रच्छ । भगवन् केन कर्मणा ॥ ईदृशान्नरकान् घोरान् । प्राप्नुवंति शरीरिणः ॥ ६१ ॥ आख्यातिस्माग्निकापुत्रो । महारंभपरिग्रहैः ॥ मांसाशनैर्गुरुप्रत्य—निकत्वेनांगिनां वधैः ॥ ६२ ॥ ततश्च जननीजीव—देवस्तस्यास्तदादि तु ॥ स्वप्ने च पूर्ववन्नित्यं । स्वर्गसुखान्यदर्शयत ॥ ६३ ॥ प्रबुद्धा कथयामास । सा पत्यै स्वर्गदर्शनं ॥ सोऽथ पाखंमिनोऽपृच्छत् । ब्रूथ किं स्वर्गलक्षणं ॥ ६४ ॥ तेष्वेके प्रोचिरे स्वर्ग—स्वरूपं प्रियसंगमः ॥ पुष्पचूला न तत्स्वप्न—दृष्टं स्वर्गं त्वमन्यत ॥ ६५ ॥ राज्ञा पृष्टोऽग्निकापुत्रः । स्वर्गान् द्वादश तत्तथा ॥ नवग्रैवेयकांश्चाप्य—नुत्तरानाख्यदंजसा ॥ ६६ ॥ प्रमाणं वचनं जैन—मिति निश्चित्य राज्यथ ॥ गुरुं पप्रच्छ भगवन् । स्वर्गाप्तिः केन कर्मणा ॥ ६७ ॥ सूरिराह जिने देवे । सुसाधौ च गुरौ मतिः ॥ यस्य तस्यांगिनः स्वर्ग—पदवी न दवीयसी ॥ ६८ ॥ पुनश्चारित्रधर्मे च । गुरुणा कथिते सति ॥ सा राज्ञी लघुकर्मत्वा—द्भवोद्विग्नैवमभ्यधात् ॥ ६९ ॥ भगवन् पतिमापृच्छ्य । पादमूले तवैव हि ॥ उपादास्ये परिव्रज्यां । मर्त्यजन्मतरोः फलं ॥ ७० ॥ इत्युक्त्वा पुष्पचूलाथ । गुरून्नत्वा विसृज्य च ॥ आपप्रच्छ महीनाथं । सोऽपि तामिदमूचिवान् ॥ ७१ ॥ तदा त्वा-

मनुमन्येऽहं । व्रताय वरवर्णिनि ॥ ममैवौकसि चेद्भिक्षा—मादत्से व्रतिनी सती ॥ ७२ ॥ तथेति प्रतिपेदाना । दत्तदानार्थिषु व्रतं ॥ पुष्पचूलाददे नृप—कृतनिष्क्रमणोत्सवा ॥ ७३ ॥ सा शिक्षामाददे सर्वां । गुर्वादेशपथानुगा ॥ तपश्चचार चातीव—तीव्रकर्मारिकृंतनं ॥ ७४ ॥ विज्ञाय भाविदुर्भिक्षं । प्रैषि देशांतरे गणः ॥ जंघाबलपरिक्षीणै—स्तस्थे चात्रैव सूरिभिः ॥ ७५ ॥ आनीयांतःपुराद्भक्त—पानादि प्रतिवासरं ॥ गुरवे पुष्पचूलादात् । पित्रे पुत्रीव भक्तिभाक् ॥ ७६ ॥ अनन्यमनसस्तस्या । गुरूणां पर्युपासनात् ॥ भावयंत्याः स्वमुत्पेदे । केवलज्ञानमन्यदा ॥ ७७ ॥ पुष्पचूलाथ विज्ञाय । केवलज्ञानचक्षुषा ॥ सर्वं संपादयांचक्रे । सूरिर्यद्यदचिंतयत् ॥ ७८ ॥ सूरिः पप्रच्छ तां साध्वीं । वत्से वेत्सि कथं ननु ॥ ममाभिप्रायमेवं यत् । संपादयसि चिंतितं ॥ ७९ ॥ उवाच पुष्पचूलापि । प्रकृतिं वेद्मि वः खलु ॥ यो यस्य शश्वदासन्नः । प्रकृतिज्ञो हि तस्य सः ॥८०॥ सार्यिका पिंडमानिन्ये—ऽन्यदा वर्षति वारिदे ॥ सूरिणोचे श्रुतज्ञासि । वृष्टौ किमिदमर्हति ॥ ॥ ८१ ॥ साब्रवीद्यत्र मार्गेऽभू—दप्कायोऽचित्त एव हि ॥ आयासिषमहं तेन । प्रायश्चित्तागमोऽत्र न ॥ ८२ ॥ अचित्ताप्कायमध्वानं । कथं वेत्सीति सूरिणा ॥ उदिते पुष्पचूलाख्य—दुत्पन्नं मेऽ-

स्ति केवलं ॥ ८४ ॥ मिथ्या मे दुष्कृतं केव—ल्याशातित इति ब्रुवन् ॥ आचार्यः प्रवया दध्यौ । सेत्स्यामि किमहं न वा ॥ ८५ ॥ केवल्यूचे मुनिश्रेष्ठ । खेदं कुरुत मा ध्रुवं ॥ गंगामुत्तरतां वोऽपि । भविष्यत्येव केवलं ॥ ८६ ॥ उत्तरीतुं ततो गंगां । लोकेन सह सूरयः ॥ तदैवारुरुहुर्नावं । कोहि स्वार्थमुपेक्षते ॥ ८७ ॥ स सूरिः पुण्यसारत्वा—न्निषसाद यतो यतः ॥ ततस्ततोऽनमद् बेमा । तद्भारेणाधरीकृता ॥ ८८ ॥ ततो नौस्थितलोकेन । सूरिः सोऽक्षेपि वारिणि ॥ शूले न्यधात प्रवचन—प्रत्यनीकामरी च तं ॥ ८९ ॥ अप्कायादिदयासारं । स सूरिर्भावयंस्तदा ॥ क्षपकश्रेणिमारूढो—तकृत्केवल्यजायत ॥ ९० ॥ तुरीयशुक्लध्यानस्थः । सद्यो निर्वाणमाप सः ॥ निर्वाणमहिमानं च । तदासन्ना व्यधुः सुराः ॥ ९१ ॥ यस्मिन् शिवगतिमहिमा । चक्रे सुमनोभिरन्निकासूनोः ॥ तीर्थं प्रयाग इति त—द्भवतिस्म भुवीह विख्यातं ॥ ९२ ॥ इत्यन्निकापुत्रकथा ॥ यशोभद्रः शय्यंभवकथायां वक्ष्यते, भद्रबाहुर्वज्रस्वामिकथायामुक्तः, अथातिमुक्तको यथा—

पोसालपुरमित्यस्ति । पुरं पुष्कलवैभवं ॥ तत्रासीद्विजयोजस्वी । विजयो नाम पार्थिवः ॥१॥
श्रीदेवीति प्रिया तस्य । सिंहस्वप्नेन सूचितं ॥ असूत सुतमुद्युक्त—मतिमुक्तकसंज्ञितं ॥ २ ॥ त-

त्रान्यदा पुरेऽभ्येत्य । श्रीवीरः समवासरत् ॥ गौतमस्तु विवेशांत-र्विहर्तुं गणभृद्वरः ॥ ३ ॥ क्रीम-
न्नासीत्तदा दासी-दासैरनुगतः पथि ॥ क्रमाष्टवर्षदेशीयो । राजपुत्रोऽतिमुक्तकः ॥ ४ ॥ स गौतमं
समायांतं । वीक्ष्य चंद्रं चकोरवत ॥ हृष्टोऽभिसृत्य नत्वा च । जगादेति कृतांजलिः ॥ ५ ॥ के यू-
यं भगवन्नत्र । कथं विचरथोच्यतां ॥ अथ स्वामी जगौ स्मित्वा । कुमारं सुकुमारगीः ॥ ६ ॥ दे-
वानुप्रिय निर्ग्रंथा । वयं श्रमणलिंगिनः ॥ भिक्षार्थं विचरामोऽत्र । पुरे पोलासनामनि ॥ ७ ॥ त-
तोऽतिमुक्तकः प्राह । भिक्षां वो दापयाम्यहं ॥ इति स्वाम्यंगुलीलग्नः । स्वमागारमगाच्च सः ॥ ८ ॥
श्रीदेवी गौतमं वीक्ष्या-तिमुक्तकसमन्वितं ॥ हृष्टाभ्येत्य प्रणम्यान्न-पानीयैः प्रत्यलाभयत् ॥ ९ ॥
निर्यांतमथ साकूतं । कुमारः प्राह गौतमं ॥ भगवन् वसतौ कस्यां । यूयं वसत कथ्यतां ॥ १० ॥
स्वामी जगाद देवानु—प्रिय धर्मगुरुर्मम ॥ श्रीवीरो यत्र समव-सृतोऽस्ति नगराद् बहिः ॥ ११ ॥
ततो विसृष्टस्तेन श्री-गौतमोऽभ्येत्य भक्तिभाक् ॥ उपासामासिवान् वीर-स्वामिनं भवनाभिनं ॥१२॥
अथातिमुक्तकः प्रीत्या । मातापितृसमन्वितः ॥ अभ्येत्य भगवत्पादा-नवंदत समाहितः ॥ १३ ॥
भगवानपि संसार-सुखधिक्कारदायिनीं ॥ चक्रे पीयूषदेशीयां । देशनां वशिनां वरः ॥ १४ ॥ अथ

प्रभुं प्रणम्योचे । राजपुत्रोऽतिमुक्तकः ॥ आदित्सामि प्रभो दीक्षां । वीक्ष्यातिविरसं भवं ॥ १५ ॥
मा कृथाः प्रतिबंधं त्व-मित्यूचे भगवानपि ॥ सोऽपि गत्वा स्वमावास-मुवाच पितराविति ॥ १६ ॥
पितरौ दुस्तरादस्मा—द्बिभेमि भवसागरात् ॥ तन्मे दापयितुं दीक्षा—मंगिनीं यूयमर्हथ ॥ १७ ॥
ततस्तौ साश्रु चोचाते । पुत्र त्वमसि कोमलः ॥ व्रतभारं कथं वोढा । सोढासि च परीषहान् ॥
॥ १८ ॥ राजपुत्रोऽप्यथाह्वास्य—वशो धर्मालसो जनः ॥ संकटेऽन्यवशः सर्व । सोढा वामत्वमस्य
धिक् ॥ १९ ॥ तस्मान्मयि कृपां कृत्वा । नापथ्यं भावरोगिणः ॥ मम वाच्यं किमप्युच्चैः । पितरौ
वां वल्लभोऽस्मि चेत ॥ २० ॥ इत्युक्तियुक्तिभिः कृत्वा । पितरौ स निरुत्तरौ ॥ जग्राह साग्रहो दी·
। श्रीवीरचरणांतिके ॥ २१ ॥ स्वामिना दीक्षयित्वासौ । स्थविरेभ्यः समर्पितः ॥ क्रमेणाधीय·
मानश्चै—कादशांगधरोऽभवत् ॥ २२ ॥ वर्षाकालेऽन्यदा वृष्टौ । जातायां बाल्यकौतुकात् ॥ पतद्ग्र·
हं समादाय । ययावेष बहिर्भुवि ॥ २३ ॥ स्फारीकृत्य पयः कुल्यां । मृत्पालीबंधतोऽभितः ॥ चिक्री·
ड स चिरं तत्र । बेडीकृत्य पतद्ग्रहं ॥ २४ ॥ दृष्ट्वेति संयमाबाधां । कुर्वाणमतिमुक्तकं ॥ पप्रच्छुरु·
त्सुका वीर—मृषयोऽस्मिन् कृपालवः ॥ २५ ॥ प्रसीद सुकृतश्रीद । निवेदय महोदय ॥ कुत्र या·

ता भवे मुक्तिं । बालर्षिरतिमुक्तकः ॥ २६ ॥ स्वाम्युवाच भवेऽत्रैव । सेत्स्यत्येष महामनाः ॥ कु-
र्वीध्वं बालमित्येनं । गर्हितं मास्म कर्हिचित् ॥ २७ ॥ स्वाम्याज्ञातमिति श्रुत्वा । स्थविरा यावता
स्थिताः ॥ आकारसंवृतिं कृत्वा । तावत्सैषोऽतिमुक्तकः ॥ २८ ॥ प्रतिश्रयांतरविशत् । कृत्वा नैषेधि-
कीमयं ॥ गुर्वनुज्ञामयाचिष्ट । तदेर्यापथिकीविधौ ॥ २९ ॥ तत्प्रमादानधिक्षेप-तथैव गुरवोऽपि तं ॥
तदानुज्ञापयामासु—रीर्यापथप्रतिक्रमं ॥ ३० ॥ ततोऽयमिच्छामीत्युक्त्वा । प्रतिक्रामन् समाहितः ॥
दगमट्टीपदस्यार्थं । स्मरन् संवेगमित्यगात् ॥ ३१ ॥ अहो दगमिहाप्काय—स्तल्लेशेऽपि हि जंतवः
॥ सूक्ष्माः सर्षपमानाः स्यु—र्जंबूद्वीपे न मांति ये ॥ ३२ ॥ मट्टी च मृत्तिका ज्ञेया । ये तल्लेशेऽ-
पि जंतवः ॥ चेत्ते पारापतांगाः स्यु—र्जंबूद्वीपे न मांति तत् ॥ ३३ ॥ रे मया चिन्मयालोक—
विकलेन दुरात्मना ॥ व्यराध्यंत हि ते जीवाः । सामायिकविरोधिना ॥ ३४ ॥ अनालोच्यात्मनो
वीक्षा-मनालोच्य जिनागमं ॥ अनालोच्य गुरोः शिक्षा—मनालोच्य तु दुर्गतिं ॥३५॥ हहा म-
यातिमूढेन । तत्कृतं किल दुष्कृतं ॥ स्मरतोऽपि न यन्माति । हृदि मे निर्दयादिमे ॥ ३६ ॥ एवं
जातलयः क्षिप्रं । क्षपकश्रेणिमाश्रयन् ॥ घातिकर्म विघात्यैष ।

ताडयंतोऽभि—वर्षतः कुसुमोदकं ॥ स्तुवंतोऽभ्येत्य तं देवाः । सेवामस्य वितेनिरे ॥ ३७ ॥ इत्य-
तिमुक्तकनामा । बालर्षिः सपदि धर्षितविकर्मा ॥ भव्यान् विबोध्य भुवने । चिरमथ मुक्तिश्रियं
भेजे ॥ ३९ ॥ इत्यतिमुक्तकमुनिकथा ॥

अथ नागदत्तो यथा—अस्ति वाणारसीनाम—नगरी श्रीगरीयसी ॥ जितशत्रुनृपस्तत्र । द-
त्रधर्मधनोऽभवत् ॥ १ ॥ राजप्रसादपात्रं च । श्रेष्ठी तत्र महाधनः ॥ धनदत्तोऽभवत्तस्य । धनश्री-
रिति गेहिनी ॥ २ ॥ सापश्यदन्यदा स्वप्ने । नागदेव्या स्वकंठतः ॥ उत्तार्य सादरं हारं । निजकं-
ठे निवेशितं ॥ ३ ॥ तदेत्य पत्युराचख्यौ । प्रातः प्रीतिभरेण सा ॥ सोऽभ्यधान्नागदेवी नः । सा
प्रिये कुलदेवता ॥ ४ ॥ तस्याः प्रसादतः पुत्रो—ऽचिरेण भविता तव ॥ इत्युक्ता तेन सा गर्भं ।
बभार क्रमयोगतः ॥ ५ ॥ दोहदेषु ततः संघ—पूजादेवार्चनादिषु ॥ श्रेष्ठिना पूर्यमाणेषु । पूर्णेषु
च दिनेषु सा ॥ ६ ॥ असूत किरणस्फार—देहद्योतितदिङ्मुखं ॥ सुतं रूपयुतं देवी । पद्मत्रासेव
मन्मथं ॥ ७ ॥ जन्मोत्सवं विधायास्य । श्रेष्ठी स्वप्नानुसारतः ॥ नागदत्त इति ख्यात—नामानं त-
नयं व्यधात् ॥ ८ ॥ धात्रीभिः पाल्यमानोऽयं । ववृधे प्रतिवासरं ॥ भानोरमृतनाम्नीभि—रिव बा-

लः सुधाकरः ॥ ९ ॥ स पंचवर्षदेशीयो । जगृहे सकलाः कलाः ॥ आरुरोह च सौंदर्य—भवनं यौवनं क्रमात् ॥ १० ॥ पित्रा सार्धं व्रजन् देव—गुरूणामाश्रये सदा ॥ शृण्वन् धर्मसमूहेष । विषयेषु पराङ्मुखः ॥ ११ ॥ तद्रूपमोहिताः कन्याः । समाजग्मुरनेकशः ॥ चिद्रूपचंद्रमाः किंतु । स नोद्वोढुममन्यत ॥ १२ ॥ दृष्ट्वा विषयवैमुख्यं । ज्ञात्वास्य पितरावथ ॥ दुर्दांतमित्रगोष्ठीषु । निरतं कुरुतःस्म तं ॥ १३ ॥ अनिच्छन्नप्यसौ चित्ते । मित्राणामुपरोधतः ॥ कूपारामविहारेषु । विजहार दिवानिशं ॥ १४ ॥ सहस्राम्रवनोद्यानं । वयस्यैरथमन्यदा ॥ नीतः कंदर्पशिबिर—मिवाम्रस्तबकांचितं ॥ १५ ॥ क्रीडावाप्यां कृतस्नानो—ऽवचित्य कुसुमान्यथ ॥ विवेश तत्र तीर्थेश—भवनं सह तैरयं ॥ १६ ॥ कयाचित्कन्यया तत्र । कृतां पूर्वप्रविष्टया ॥ जिनपूजामथालोक्य । नागदत्तो विसिस्मिये ॥ १७ ॥ नागदत्तं च सा नाग—कुमारमिव रूपतः ॥ स्वभावं स्वसखीभ्योऽपि । गोपयंती निरैक्षत ॥ १८ ॥ तस्य रूपसुधांभोधे—र्निरंगीवसनांतरं ॥ लावण्यांभः पपौ नेत्रां—जलिभिः सा विवेकिनी ॥ १९ ॥ अथ तत्रानुरक्ता सा । लज्जमाना सखीवृता ॥ निर्ययौ जिनगेहात्तं । निध्यायंती मुहुर्मुहुः ॥ २० ॥ नागदत्तस्तु तीर्थेशं । पूजयित्वाभिवंद्य च ॥ वयस्यानाह केयं भोः । कन्या क-

स्य च नंदिनी ॥ २१ ॥ तैरूचे प्रियमित्रस्य । सार्थवाहस्य नंदिनी ॥ जाता नागश्रिया नाग—
वसुनाम्नी कुमारिका ॥ २२ ॥ इयं विश्ववधूसृष्टि—शलाका विश्वकर्मणः ॥ षष्ठमस्त्रं च पंचेषो—
र्जेतुं कमपि दुर्जयं ॥ २३ ॥ अनुरूपवराप्राप्ति—दोषोऽस्यामेष एव हि ॥ त्वया विलोकितो यातु ।
सोऽपि संप्रति मार्जितः ॥ २४ ॥ अथाह नागदत्तस्तान् । वृथायं विस्तरो गिरां ॥ प्रास्तूयत भवद्भि-
र्मे । मनोभावबहिर्मुखैः ॥ २५ ॥ मनागपि न रागोऽस्यां । कारणं पृच्छने त्वदः ॥ अस्यां जिनेश·
पूजायां । कौशल्ये कौतुकं मम ॥ २६ ॥ सवयोभिः समं त्वेतै—रालापानिति कल्पयन् ॥ चैत्या-
न्निर्गत्य गतवा—न्नागदत्तो निजं गृहं ॥ २७ ॥ इतश्च सापि सहिता । सखीभिः स्वनिकेतनं ॥
तं ध्यायंती ययौ नाग—वसुर्वसुमिव श्रियः ॥ २८ ॥ तत्र नाशेत नाभुंक्त । नापिबन्नालपच्च सा ॥
भाषितापि सखीभिर्ना—दत्त हुंकारमप्यहो ॥ २९ ॥ मात्रा मत्वेति सातंकं । सा सबाष्पमथोदिता
॥ म्रियेऽहं शंस हा वत्से । देहे किं तव बाधते ॥ ३० ॥ अथ नागवसुः प्राह । मातः किमपि वे-
द्मि न ॥ परं विजृंभते बाढं । देहे दाहज्वरो मम ॥ ३१ ॥ ततोऽसौ परिहासेन । सखीभिरिति
भाषिता ॥ किं न दाहज्वरः प्राप्तः । पीत्वा सलवणं सखि ॥ ३२ ॥ स्मित्वा मंदाक्मंदाक्षा । दध्यौ

नागवसुस्ततः ॥ हंत दक्षाग्निरेताग्नि—र्ज्ञाताहं किं करोमि तत् ॥ ३३ ॥ ततो रहसि पृष्टान्य—
स्तत्सखीभ्यस्तदाशयं ॥ मत्वा नागश्रियाशंसि । प्रियमित्राय तत्तथा ॥ ३४ ॥ प्रियमित्रस्ततोऽवादी—
त्तामथ प्रीतिमानिति ॥ स्थाने तु रागमाधत्त । प्रिये पुत्रीयमावयोः ॥ ३५ ॥ नागश्रीस्त्वरयामास ।
तं हर्षेण वदंत्यदः ॥ त्वरस्व प्रिय मत्पुत्र्या । नागदत्तं पतीकुरु ॥ ३६ ॥ तथेति प्रियमित्रोऽपि ।
गतवांस्तन्निकेतनं ॥ धनदत्तेन पृष्टश्च । स्मितपूर्वमिदं जगौ ॥ ३७ ॥ श्रेष्ठिन् यानीह रत्नानि । स्थ-
लेषु च जलेषु च ॥ उत्पद्यंते पदं तेषां । भवतो भुवनं ह्यदः ॥ ३८ ॥ तन्नागवसुनामास्ति । सु-
तारत्नं गृहे मम ॥ तद्दातुं नागदत्ताय । प्राप्तोऽहं तव सूनवे ॥ ३९ ॥ अथाह धनदत्तोऽपि । युक्त-
मुक्तं त्वया सखे ॥ परं मे विषयोद्विग्नः । स्वभावादेव नंदनः ॥ ४० ॥ प्रियमित्रस्ततोऽवादी—द्य-
द्यप्येवं तथापि मे ॥ सा सुता नागदत्तैक—मानसा नान्यमिच्छति ॥ ४१ ॥ धनदेवोऽभ्यधाद्भद्र ।
यद्येवं तन्निजं सुतं ॥ बोधयित्वा तदुक्तं ते । कथयिष्यामि निश्चितं ॥ ४२ ॥ इत्युदीर्य विसृष्टेऽस्मिं
—स्तदर्थं प्रार्थितः स्वयं ॥ श्रेष्ठिना नागदत्तो न । पाणिग्रहममन्यत ॥ ४३ ॥ इतश्चासीत्तलारक्षा—
धिकारी तत्र पत्तने ॥ वसुदत्त इति ख्यातो । जितशत्रुनृपप्रियः ॥ ४४ ॥ दृष्टा नागवसुस्तेन । वा-

तायनतले तदा ॥ आगत्य गृहमुद्वोढुं । प्रियमित्रादयाचत ॥ ४५ ॥ तेनोचे नागदत्ताय । धनद·
त्तात्मजन्मने ॥ दत्तेयं किं प्रदीयंते । क्वापि कन्याः पुनः पुनः ॥ ४६ ॥ वसुमित्रः पुनः प्राह ।
मोहात्कन्यां प्रयछ मे ॥ द्रव्यं समीहते याव—त्तावद्दास्यामि ते ध्रुवं ॥ ४७ ॥ प्रियमित्रो हसन्नाह
। कथं कन्याट्टमस्ति मे ॥ द्रव्यैर्विक्रीयमाणां ते । येन यछामि कन्यकां ॥ ४८ ॥ इत्युक्तः प्रिय-
मित्रेण । विलक्ववदनस्ततः ॥ वसुमित्रो निजं धाम । स गत्वेदमचिंतयत ॥ ४९ ॥ हतको नाग-
दत्तोऽयं । यावत्तावदियं न मे ॥ तछले पातयित्वैनं । मारयामि नृपाज्ञया ॥ ५० ॥ चिंतयित्वेत्य·
सौ दुष्टो । नागदत्तं निशुंभितुं ॥ छलानि मृगयामास । स्वयमेव दिवानिशं ॥ ५१ ॥ अश्वक्रीडा·
निवृत्तस्या—न्येद्युरुद्यानवर्त्मनि ॥ पपात नृपतेः कर्णात् । कुंडलं वाजिवल्गनात् ॥ ५२ ॥ तद्विवे-
द न नृपाल—स्तदाश्वक्रीडयाकुलः ॥ सेनारजोंधितैरन्यै—रपि तन्न विलोकितं ॥ ५३ ॥ प्रासाद·
मागतो भांडा—गारिकाय समर्पयन् ॥ भूषणानि नृपोऽज्ञासीत् । पतितं क्वापि कुंडलं ॥ ५४ ॥ व-
सुमित्रमथादिक्षत् । कुंडलं येन केन मे ॥ गृहीतं तत्परिज्ञाय । मत्पुत्रमपि शिक्षयेः ॥ ५५ ॥ दे-
व प्रमाणमादेश । इत्युदीर्य निरीय च ॥ असौ गवेषयामास । स्वैरन्यैश्च कुंडलं ॥ ५६ ॥ इत-

श्च नागदत्तोऽपि । कायोत्सर्गविधित्सया ॥ नगर्या निर्ययौ सायं । सहस्राम्रवनंप्रति ॥ ५७ ॥ अ-
ग्रेऽगान्नागदत्तश्च । वसुदत्तश्च पृष्टतः ॥ खल्लिचिल्लिसमायोगः । सोऽयं विधिकृतो हहा ॥ ५८ ॥ दृ-
ष्ट्वेवाशकुनं मार्गा—न्नागदत्तो न्यवर्तत ॥ दृष्टोऽयं वसुदत्तेन । वृक्षांतरितवर्ष्मणा ॥ ५९ ॥ नागद-
त्तः पथान्येन । सहस्राम्रवणं गतः ॥ तस्थौ प्रतिमया चित्ते । धर्मध्यानपरायणः ॥ ६० ॥ वसुदत्तश्च
दध्यौ किं । नागदत्तोऽयमध्वनः ॥ एतस्माद्ववले शीघ्रं । तत्र पश्यामि कारणं ॥ ६१ ॥ ध्यात्वेति
दुष्टधीः सोऽय—मगमद्यावदग्रतः ॥ तावत्पतितमद्राक्षी—त्कुंडलं रविबिंबवत् ॥ ६२ ॥ दृष्ट्वा तच्चिंत-
यामास । हर्षसोत्कर्षमानसः ॥ छलमेतदहो लब्धं । नागदत्तं निशुंभितुं ॥ ६३ ॥ ववले कुंडलं दृ-
ष्ट्वा । पुरः कुंडलिनं यथा ॥ तथापि पातयाम्यद्य । साधुतामस्य मूर्धनि ॥ ६४ ॥ चिंतयित्वेदमादा-
य । कुंडलं त्वरितक्रमः ॥ सहस्राम्रवनं सोऽपि । गत्वा चैत्यांतराविशत् ॥ ६५ ॥ कायोत्सर्गस्थितं
तत्र । नागदत्तं बलानके ॥ स ददर्श कुधीर्दर्श । इव राहुर्दिवाकरं ॥ ६६ ॥ गुणेन प्रोतयित्वाथ ।
कुंडलं कंठलंबितं ॥ विधाय नागदत्तस्य । पार्श्वे पत्तीन्ययुंक्त सः ॥ ६७ ॥ सरावेणेव शुशुभे । ते-
नासौ कंठलंबिना ॥ मार्गन्निव जगन्नाथा—त्कल्याणं निजमुक्तये ॥ ६८ ॥ गत्वाथ मायिकः पृथ्वी-

नायकाय शशंस सः ॥ देव किं क्रियते तत्र । यत्र स्यादमृतं विषं ॥ ६९ ॥ य एव नगरस्तंभो ।
धनदत्तो महाधनः ॥ तस्यैव सूनुना नाग—दत्तेनाहारि कुंडलं ॥ ७१ ॥ स बाह्याभ्यंतरं देवा—
देशतः पश्यता पुरं ॥ स्थगयन् कुंमलं दृष्टः । स माकंदवने मया ॥ ७२ ॥ ततोऽसौ धारितस्तत्र ।
चैत्य एवास्ति पत्तिभिः ॥ यदादिशति देवोऽतः—परं तत्क्रियते द्रुतं ॥ ७३ ॥ अथाह नृपतिः क्रु-
द्धो । धनदत्तस्य मंदिरे ॥ मुच्यंतां पत्तयः शीघ्रं । कारायां क्रियतामयं ॥ ७४ ॥ स च कुंडलचौ-
रस्तु । तत्र देवकुले धृतः ॥ प्रातः पौरसमक्षं तं । महादंडेन दंडयेः ॥ ७५ ॥ स्वामिन् प्रमाणमा-
देश । इत्युक्त्वा तत्क्षणादयं ॥ पत्तीन् गृहे विमुच्यास्य । धनदत्तमधारयत् ॥ ७६ ॥ तद्वृत्तांतम-
जानाना । प्रातर्नागवसुः पुनः ॥ सहस्राम्रवणे चैत्यं । ययौ नंतुं जिनाधिपं ॥ ७७ ॥ पूजयंती जि-
नं याव—त्तत्रास्ते सा सखीवृता ॥ राजतंत्रयुतस्ताव—द्वसुदत्तः समाययौ ॥ ७८ ॥ अरे गृह्णीत ब-
ध्नीत । राज्ञः कुंडलतस्करं ॥ मंडपस्थो जगर्जेति । वसुदत्तो मृगेंद्रवत् ॥ ७९ ॥ नागदत्तः पुनस्त-
स्मि—न्नपि कारुण्यपुण्यधीः ॥ दध्यौ प्रकटितं हा धि—ग्दुष्कृतं मे पुराकृतं ॥ ८० ॥ तदिदं प्रा-
क्कृतं किंचिद् । दुःकृतं सहतां वपुः ॥ नपेक्षैवास्य युज्येत । कृतघ्नस्य विनाशिनः ॥ ८१ ॥ वसु-

दत्तगिरा दंड—पाशिकैर्यष्टिमुष्टिभिः ॥ ताम्रयित्वा दृढं नाग—दत्तोऽबध्यत धिग्विधिं ॥ ८२ ॥ त-
तो नागवसुर्दृष्ट्वा । नागदत्तं तथापदि ॥ हा हतास्मीति जल्पंती । मूर्छिता न्यपतद्भुवि ॥ ८३ ॥
ससत्कारं सखीभिस्तु । चंदनव्यजनादिभिः ॥ हृतमूर्छा व्यलापित्सा । रुदती सुदती भृशं ॥ ८४ ॥
हा सर्वज्ञ मदीयं किं । दुःकर्मोदयमागतं ॥ येनायं साधुमूर्धन्यो—ऽभीष्टो मे कष्टभागभूत् ॥८५॥
जिनशासनदेव्यः स्थ । क्वापि हा यदि मातरः ॥ तदागच्छत शीघ्रं मे । पतिभिक्षां प्रयच्छत ॥८६॥
दैव रे केव रेखा ते । निष्टुरैषा निवेदय ॥ यदस्य मृदुलांगेषु ॥ बंधवैवशमाहितं ॥ ८७ ॥ यदि
मे कुपितो दैव । तदा मामेव मारय ॥ कल्याणपात्रमेनं तु । रक्ष रक्ष मम प्रियं ॥ ८८ ॥ तस्या
निःकारणप्रेम—ग्रहीलाया इतीरितं ॥ निशम्य नागदत्तोऽथ । चिंतयामास चेतसि ॥ ८९ ॥ यदि
शासनदेवीनां । प्रभावेण बुटिष्यते ॥ तदा निरुपमप्रेम—वतीयं परिणेष्यते ॥ ९० ॥ नो चेदा-
हारदेहादि । व्युत्सृष्टं सिद्धसाक्षिकं ॥ नाहं कस्यापि मे कोऽपि । न च मुक्त्वा जिनेश्वरं ॥ ९१॥
हठात्कंठेऽथ धृत्वा तं । चकर्षुर्दम्भपाशिकाः ॥ हन्यमानाश्च नानास्त्रै—र्जिनशासनदैवतैः ॥ ९२ ॥
अथ ते परितः पेतु—र्वमंतो रुधिरं मुखैः ॥ नागदत्तयशोवृक्षं । सिंचंतः कलशैरिव ॥ ९३ ॥ बं-

धाश्च नागदत्तस्य । तुत्रुटुस्तत्क्षणादपि ॥ हर्षान्नागवसोश्चापि । कंचुकांतरसेवकाः ॥ ९४ ॥ किमे-
तदिति साकूते । नागदत्ते पुरोऽभवन् ॥ जिनशासनदेव्योऽस्य । वर्षंत्यः कुसुमोत्करं ॥ ९५ ॥ ज-
य जीवाभिनंदेति । ददत्योऽस्मै महाशिषः ॥ तास्तदाप्रतिचक्राद्या । नागदत्तं बभाषिरे ॥ ९६ ॥
विस्मयं वत्स मा कार्षी—र्वयं शासनदेवताः ॥ पुण्यात्तव कुमार्यश्च । कारुण्यादित्यकार्ष्महि ॥ ९७॥
अथोचे नागदत्तस्ता । भगवत्यो वरं कृतं ॥ एतान् लंभितशिक्षांस्तु । सज्जीकुरुत बालिशान् ॥
॥ ९८ ॥ अथो तदुपरोधेन । प्रगुणीकृत्य तानमूः ॥ सत्त्वं च नागदत्तस्य । सर्वाः स्तुत्वा तिरोऽ-
भवन् ॥ ९९ ॥ अथेति ज्ञातवृत्तांतः । पौरामात्यान्वितो नृपः ॥ तत्रागत्य समालिंग्य । नागदत्त-
मभाषत ॥ १०० ॥ श्रेष्टिपुत्र तव ब्रूमः । किं वयं महिमादभुतं ॥ धन्योऽहमपि यत्पुर्यां । पुण्यपा-
त्रं भवादृशाः ॥ १ ॥ यत्र त्वं तत्कुलं पुण्यं । यस्य त्वं स पितादभुतः ॥ यस्याः कुक्षाववात्सीस्त्वं ।
सा श्लाघ्या जननी खलु ॥ २ ॥ अज्ञानादपराद्धं य—न्मया त्वयि महात्मनि ॥ सर्वथा मर्षणीयं
त—देष बद्धोंजलिस्तव ॥ ३ ॥ संभाष्येति महीपाल—स्तमारोप्य करीश्वरं ॥ पुर्यां प्रवेशयामास
। गौरवेण गरीयसा ॥ ४ ॥ सहैतं धनदत्तेन । नीत्वावासं निजं नृपः ॥ भोजयित्वा नवीनानि ।

वस्त्राणि परिधाप्य च ॥ ५ ॥ भूषणैर्भूषयित्वा च । स्वासनार्धे निवेश्य च ॥ पप्रच्छ कुंडलकथां । दत्वा शपथमात्मनः ॥ ६ ॥ असूनां वसुदत्तस्य । मार्गयित्वाभयं ततः ॥ नृपाय नागदत्तोऽपि । यथावृत्तमशंसत ॥ ७ ॥ अपि प्रीतस्ततो राजा—रोप्य भूयोऽपि तं गजं ॥ सौधाय व्यसृजद्वीक्ष्य—माणं पौरवधूजनैः ॥ ८ ॥ वसुदत्तं च नृपति—स्तत्क्षणाच्चूर्णचित्रितं ॥ धृतसूर्प शिखाबद्ध—बिल्वमारोप्य रासभं ॥ ९ ॥ नागदत्तापकार्येष । इति घुष्टागसं भृशं ॥ पुर्यंतर्भ्रामयित्वा तं । विदधे देशतो बहिः ॥ १० ॥ युग्मं ॥ इतश्च प्रियमित्रेण । पुनरागत्य मंदिरे ॥ पुत्र्या नागवसोरर्थे । धनदत्तोऽभ्यधीयत ॥ ११ ॥ ततस्तातगिरा नाग—दत्तोऽपि तदमन्यत ॥ मनसा प्रतिपन्नं हि । नान्यथा जायते सतां ॥ १२ ॥ अथ नागवसुर्नाग—दत्ते नात्मानुरागिणी ॥ द्रव्यानुमानसामग्र्या । तेन सा पर्यणीयत ॥ १३ ॥ असक्तो विषयानेष । ततोऽभुंक्त तया सह ॥ पयसीवांबुजं प्रेम्णि । निमग्नोऽप्यलिप्तोऽमुना ॥ १४ ॥ अथैकदा समं पत्या । सूक्तिगोष्ठीं वितन्वती ॥ गवाक्षस्थाशृणोन्नाग—वसुराक्रंदितं क्वचित् ॥ १५ ॥ पप्रच्छ नागदत्तं सा । किमिदं श्रूयते प्रिय ॥ नागदत्तोऽब्रवीत्कांते । भवनात्कमीदृशं ॥ १६ ॥ विद्वद्गोष्ठी क्वचित् क्वापि । कलहः क्वापि गीतयः ॥ क्वचिदाक्रं-

।दत्तं यत्र । तत्र रज्येत कः सुधीः ॥ १७ ॥ ततो नागवसुः प्राह । धिग्भवं त्यज्यतामयं ॥ नागदत्तोऽप्यधादीद्—मनो मेऽपि त्वरस्व तत् ॥ १८ ॥ परस्परमथापृच्छ्य । पितरौ तौ व्रतार्थिनौ ॥ संघपूजार्थिसत्कारा—भयदानादि तेनतुः ॥ १९ ॥ तौ सुस्थितौ सुस्थितसूरिपार्श्वे । व्रतं गृहीत्वा महतोत्सवेन ॥ तप्त्वा तपो दुस्तपमायुषोंते । सौधर्मकल्पे त्रिदशावभूतां ॥ २० ॥ इति श्रीनागदत्तकथा समाप्ता ॥

अथ शय्यंभवो यथा—अस्ति श्रीमोचितस्वर्ग—स्पृहं राजगृहं पुरं ॥ तत्र शय्यंभवो नाम । याज्ञिकोऽभूद् द्विजोत्तमः ॥ १ ॥ पुरोपांतसरःपाल्यौ । विलसद्यज्ञमंडपः ॥ आहूतानेकवेदांती । स यष्टुमुपचक्रमे ॥ २ ॥ इतश्च प्रभवस्वामी । तदागात्तत्र पत्तने ॥ मत्वा श्रुतोपयोगेन । तं योग्यं बोधसंपदः ॥ ३ ॥ आदिशच्च द्वयोर्मुन्यो—र्यज्ञौकसि युवां जवात् ॥ गत्वा भिक्षार्थिनौ ब्रूतं । धर्मलाभाशिषं सुखं ॥ ४ ॥ अदातुमिच्छुभिस्तत्र । यज्ञवाटद्विजातिभिः ॥ अपि प्रस्थाप्यमानाभ्यां । युवाभ्यां वाच्यमीदृशं ॥ ५ ॥ अहो कष्टमहो कष्टं । तत्वं विज्ञायते न हि ॥ अहो कष्टमहो कष्टं । तत्वं विज्ञायते न हि ॥ ६ ॥ अथ वंदनमालांक—द्वारमुत्तंभितध्वजं ॥ हैमुक्ताचमनप्रह्वं । स-

मिथ्यापूतमाणवं ॥ ७ ॥ स्तूपावबद्धछगलं । वेदिमध्येद्धपावकं ॥ होमद्रव्यभृतानेक—पात्रमृत्वि-
ग्जनांचितं ॥ ८ ॥ समिधाद्यर्पणव्यग्रा—ध्वर्यमध्वरवाटकं ॥ तौ मुनी जग्मतुर्भिक्षा—समये गुर्वनु-
ज्ञया ॥ ९ ॥ विशेषकं ॥ भिक्षामदित्सुभिर्विप्रै—र्विसृष्टावथ तौ मुनी ॥ गुर्वादिष्टमहो कष्ट—मि-
त्याद्यूचतुरुच्चकैः ॥ १० ॥ अध्वरे दीक्षितस्तस्मिन् । सैष शय्यंभवो द्विजः ॥ यज्ञवाटांतरद्वार—
स्थितोऽश्रौषीद्वचस्तयोः ॥ ११ ॥ दध्यौ चोपशमस्फाति—प्रधानाः साधवो ह्यमी ॥ न मृषावादिन-
स्तेन । तत्वे संदेग्धि मे मनः ॥ १२ ॥ इत्यपृछदुपाध्यायं । किं तत्वं मंक्षु कथ्यतां ॥ उपाध्यायो-
ऽवदत्तत्वं । वेदाः स्वर्गापवर्गदाः ॥ १३ ॥ शय्यंभवोऽप्यधान्नूनं । प्रतारयसि मादृशान् ॥ यज्ञादि-
दक्षिणालोभा—द्वेदास्तत्वमिति ब्रुवन् ॥ १४ ॥ मुनयो निर्ममा वीत—रागद्वेषपरिग्रहाः ॥ सर्वज्ञ-
पुत्रका नैते । वदंति वितथं क्वचित् ॥ १५ ॥ न गुरुस्त्वं त्वया यस्मा—द्विश्वमाजन्म वंचितं ॥ नि-
तांतं शिक्षणीयोऽसि । प्रत्युताद्य दुराशयः ॥ १६ ॥ यथावस्थितमाख्याहि । तत्वमेवमपि स्थिते ॥
न चेच्छेत्स्यामि ते मौलि—मित्यसिं कोशतोऽकृषत् ॥ १७ ॥ उपाध्यायोऽप्यदो दध्यौ । मिमारयिषु-
रेष मां ॥ यथास्थतत्वकथने । समयोऽयमुपस्थितः ॥ १८ ॥ इदं च पठ्यते वेदे—ष्वाम्नायोऽप्येष

नः सदा ॥ कथ्यं यथास्थितं तत्वं । शिरश्छेदे हि नान्यथा ॥ १९ ॥ तस्मात्प्रकाशयाम्याशु । तन्वमस्मै यथातथं ॥ यथा जीवामि जीवन् हि । नरो भद्राणि पश्यति ॥ २० ॥ इत्याचख्यावुपाध्यायो । ध्यायन् कुशलमात्मनः ॥ अधस्तादस्य यूपस्य । न्यस्तास्ति प्रतिमार्हतः ॥ २१ ॥ पूज्यतेऽत्र स्थितैवैषा । सिद्धपुत्रोऽन्यथाध्वरं ॥ हंति प्रौढतपा हंत । नारदः परमार्हतः ॥ २२ ॥ इति यूपमुपाध्याय—स्तमुत्पाट्य यथास्थितां ॥ तामर्हत्प्रतिमां पुण्यां । दर्शयित्वैवमब्रवीत् ॥ २३ ॥ इयं हि प्रतिमा यस्य । देवस्य श्रीमदर्हतः ॥ तत्वं तदुदितो धर्मो—ऽध्वरादि तु विडंबनं ॥ २४ ॥ चिरं प्रतारितोऽसि त्वं । मया स्वोदरपूर्तये ॥ नातःपरमुपाध्याय—स्तवास्मि स्वस्ति तेऽनघ ॥ २५ ॥ शय्यंभवोऽपि तं नत्वा । यज्ञोपाध्यायमब्रवीत् ॥ त्वमुपाध्याय एवासि । सत्यतत्वप्रकाशनात् ॥ २६ ॥ इति दत्वास्य यज्ञोप—करणं सर्वमप्यसौ ॥ ययौ मुनिपदैरेव । प्रभवस्वामिसन्निधौ ॥ २७ ॥ वंदित्वा सपरिवारं । गुरुमग्रे निविष्टवान् ॥ पप्रच्छ धर्मतत्वं स । मुक्तिमार्गमनर्गलं ॥ २८ ॥ अहिंसा सत्यमस्तेयं । ब्रह्माकिंचन्यमित्यथ ॥ धर्मतत्वं दिदेशास्मै । प्रभवोऽपि भवोघ्नं ॥ २९ ॥ श्रुत्वेति विलसद्बोधः । प्रभवस्वामिनोंतिके ॥ शय्यंभवो भवोद्विग्नः । परिव्रज्यामुपाददे ॥ ३० ॥ तप्यमानस्तप-

स्तीव्र-मधीयानो महामतिः ॥ गुरुपादप्रसादेन । स चतुर्दशपूर्व्यभूत् ॥ ३१ ॥ श्रुतज्ञानादिना तुल्यं । मूर्त्यंतरमिवात्मनः ॥ प्रभवस्तं पदे न्यस्य । परलोकमसाधयत ॥ ३२ ॥ शय्यंभवो यदा पर्यव्राजीह्लोकस्तदाखिलः ॥ तद्भार्यां युवतीं दृष्ट्वा । शोचयन्निदमभ्यधात् ॥ ३३ ॥ भट्टः शय्यंभवः कष्टं । निष्टुरेभ्योऽपि निष्टुरः ॥ स्वप्रियां तरुणीमेतां । सुशीलामपि योऽत्यजत् ॥ ३४ ॥ पुत्राशयैव जीवंति । योषितो हि पतिं विना ॥ अभूत्पुत्रोऽपि नैतस्याः । कथमेषा भविष्यति ॥ ३५ ॥ पृष्ठंतिस्म च लोकास्ता-मयि शय्यंभवप्रिये ॥ गर्भसंभावना कापि । किंनामास्ति तवोदरे ॥ ३६ ॥ मनागित्यभिधातव्ये । सापि प्राकृतभाषया ॥ ऊचे मणयमित्यल्प-मात्रगर्भा ह्यभूत्तदा ॥ ३७ ॥ तस्याश्च ववृधे गर्भः । स्वाशयैव शनैः शनैः ॥ समयेऽपि सुतो जज्ञे । तन्मनोंभोधिचंद्रमाः ॥ ३८ ॥ तदा मणयमित्यासी-द्ब्राह्मण्या कृतमुत्तरं ॥ अतस्तस्यापि बालस्या-भिधा मणक इत्यभूत् ॥ ॥ ३९ ॥ पाल्यमानोऽर्भकः सोऽष्ट-वर्षोभूतो जगाद तां ॥ क नाम तातो मे मात-र्वैषेणाविधवासि यत् ॥ ४० ॥ सोचे यङ्गरतस्तात-स्तव शय्यंभवोऽभवत् ॥ प्रतार्य व्रतिभिर्धूर्तै-र्नीतो गर्भगते त्वयि ॥ ४१ ॥ पितुः शय्यंभवस्यैष-र्मिलनायोत्सुकः स तु ॥ निरयाय गृहाद्बालो । वंच-

यित्वात्ममातरं ॥ ४२ ॥ तदा शय्यंभवाचार्य—श्चंपायां विहरन्नभूत् ॥ ययौ बालोऽपि तत्रैव । स्वर्ग पातालमध्विव ॥ ४३ ॥ कायचिंतादिना सूरिः । पुरीपरिसरे व्रजन् ॥ बालमिंदुमिवायांतं । दृष्ट्वा-मोदत वार्धिवत ॥ ४४ ॥ दृष्ट्वा बालोऽपि तं सूरिं । सूरं कमलकोशवत् ॥ विकसद्वदनो जज्ञे । स्फुटरोमांचकंटकः ॥ ४५ ॥ अथापृष्टंस्तमाचार्या । बालमुत्फालहर्षतः ॥ कस्त्वं कुतस्तथायासी—र्वत्स पुत्रोऽस्मि कस्य च ॥ ४६ ॥ सोऽभ्रकोऽभिदधे राज—गृहादत्राहमागमं ॥ सूनुः शय्यंभवस्यास्मि । वत्सगोत्रद्विजन्मनः ॥ ४७ ॥ मम गर्भगतस्यापि । प्रव्रज्यामाददे पिता ॥ पुरात्पुरं तमन्वेष्टुं । संभ्रमीव भ्रमीम्यहं ॥ ४८ ॥ जानंते यदि मे तातं । बत शय्यंभवं ततः ॥ पूज्यपादाः प्रसीदंतु । क्व सोऽस्तीति वदंतु च ॥ ४९ ॥ पितरं यदि पश्यामि । तदा तत्पादसन्निधौ ॥ प्रव्रजाम्यहमप्यंग । या गतिस्तस्य सैव मे ॥ ५० ॥ सूरिरप्याह तातं ते । जानामि स सुहृन्मम ॥ शरीरेणाप्यभिन्नश्चा—युष्मंस्तमिव विद्धि मां ॥ ५१ ॥ तन्ममैव सकाशे त्वं । परिव्रज स ते पिता ॥ ज्ञेयो मिलित एवात्रा—स्माकमेवातिथिर्भव ॥ ५२ ॥ सूरिस्तं बालमादाया—दीक्षयद्वसतौ गतः ॥ सर्वसावद्यविरति—प्रतिपादनपूर्वकं ॥ ५३ ॥ उपयोगं ददौ सूरिः । कियदस्यायुरित्यथ ॥ षण्मासान्या-

वदस्तीति । तच्च सद्यो विवेद सः ॥ ५४ ॥ अत्यल्पायुरयं बालो । भावी श्रुतधरः कथं ॥ इत्युद्द-
धार सिद्धांत—सारं सूरिवरस्ततः ॥ ५५ ॥ कृतं विकालवेलायां । दशाध्ययनगर्भितं ॥ दशवैका
लिकं तेन । नाम्ना शास्त्रं बभूव तत् ॥ ५६ ॥ गुरूपदेशात्तं ग्रंथं । पठित्वा विधिना सुधीः ॥ ष-
एमासांते तु मणकः । कालं कृत्वा ययौ दिवि ॥ ५७ ॥ मणकेऽत्र विपेदाने । सूरीनश्रूणि मुंचतः
॥ यशोभद्रादयो नत्वा—भ्यधुः किमिदमर्हति ॥ ५८ ॥ ततो मणकवृत्तांतं । सुतसंबंधबंधुरं ॥ सू-
रयः कथयामासु—स्तज्जन्ममरणावधि ॥ ५९ ॥ ऊचुः शिष्या नमद्ग्रीवा । यशोभद्रादयस्ततः ॥
पूज्यैरपत्यसंबंधः । किमादौ ज्ञापितो न नः ॥ ६० ॥ गुरुवद्गुरुपुत्रेऽपि । वर्ततेति वचो वयं ॥ अ-
करिष्यामहि तदा । सत्यं तत्पर्युपासनात् ॥ ६१ ॥ सूरिरूचे तदा नास्या—द्भविष्यत्सुगतिप्रदं ॥
वयोवृद्धेषु युष्मासु । वैयावृत्त्योत्तमं तपः ॥ ६२ ॥ ज्ञातास्मत्पुत्रसंबंधा । यूयं हि मणकान्मुनेः ॥
नाकारयिष्यतोपास्तिं । तेन स स्वार्थवंचितः ॥ ६३ ॥ अमुमल्पायुषं मत्वा । कर्तुं श्रुतधरं मया ॥
सिद्धांतसारमुध्धृत्य । दशवैकालिकं कृतं ॥ ६४ ॥ यथास्थानं नयाम्येत—दिति जल्पन् गुरुस्ततः ॥
शिष्यसंघोपरोधेन । शास्त्रं समवृणोन्न हि ॥ ६५ ॥ अथ शय्यंभवः सूरि—र्यशोभद्रं महामुनिं ॥

श्रुतसागरपारीणं । पदे स्वस्यन्यवेशयत् ॥ ६६ ॥ अनंगहार्यप्ययमंगहारी । गुणैरपूर्वोऽपि सपूर्व एव ॥ शय्यंभवो जृंभितकीर्तिपूरः । पूर्णायुरुच्चैःपदमाससाद ॥ ६७ ॥ इति श्रीशय्यंभवकथा ॥ प्रभवो जंबूस्वामिकथायां, श्रीयकः स्थूलभद्रकथायां, उदायनस्त्वभयकुमारकथायामुपदिष्टः, अथ माषतुषो यथा—

पुरे रत्नपुरे सूरि—रासीद्गुणनिधिः पुरा ॥ संघमुख्यः श्रुतनिधि—र्धर्मव्याख्याविशारदः ॥१॥ वैयावृत्त्यकरस्तस्य । भवज्ञातेयबांधवः ॥ मुनिः प्रसन्ननामासी—न्मूर्खतैकनिकेतनं ॥ २ ॥ स सूरिरेकदा श्रांतो । भूरिशो धर्मकर्मभिः ॥ आगत्य भोजनादूर्ध्वं । श्राद्धैर्व्याख्यामकार्यत ॥ ३ ॥ ततो विश्रांतमालोक्य । प्रसन्नं पार्श्व एव सः ॥ अप्रसन्नमनाः सूरि—श्चिंतयामासिवानिति ॥ ४ ॥ धन्योऽयं पुण्यवानस्म—द्भ्राता मौर्ख्यबलेन यः ॥ निश्चिंतः सुखमेवास्ते । स्वैरशायी दिवानिशं ॥ ५ ॥ वयं तु पाठवैगुण्यात् । क्रीडाशुकवदन्वहं ॥ दिवारात्रमिहानेकै—र्लापयामो नवैर्नवैः ॥ ६ ॥ दुर्ध्यानेनामुना कर्म । ज्ञानावरणमर्जितं ॥ अनालोच्याप्रतिक्रम्य । मृत्वा सूरिः सुरोऽभवत् ॥ ७ ॥ धन्योऽयं पुण्यवान् सूरिः । प्रकाशयति यः श्रुतं ॥ इति ध्यानकृतज्ञाना—वरणोऽस्य तु बांधवः ॥

॥ ८ ॥ मृत्वा स्वर्गमगाद्भोगान् । भुक्त्वा तस्मादपि च्युतः ॥ नगरे श्रीपुरे जज्ञे । श्रीपतेर्वणिजः सुतः ॥ ९ ॥ युग्मं ॥ धन्य इत्याख्यया सैष । व्रतेच्छुः शैशवादपि ॥ क्रमेण संयमं प्राप्य । सूरिः श्रुतधरोऽभवत् ॥ १० ॥ सूरिदेवोऽपि स च्युत्वा । सज्जनाख्यो वणिक्सुतः ॥ भूत्वा तेजे प्रबुद्धः सन् । धन्याचार्यांतिके व्रतं ॥ ११ ॥ तस्य पूर्वकृतं कर्म । ज्ञानावरणमुद्ययौ ॥ नायाति च ततस्तस्य । पठतोऽप्येकमक्षरं ॥ १२ ॥ प्रज्ञापात्रं परे शिष्याः । खेदयंतस्तमूचिरे ॥ कुरु गाढं स्वरं येना—याति पाठोऽतिदूरगः ॥ १३ ॥ इत्यस्य खिद्यतः सूरि—र्बोधायेदमलेखयत ॥ जीव मा रुष्य मा तुष्य । यतो दोषाः स्वयंकृताः ॥ १४ ॥ घोषयन्नित्यसौ नित्यं । स्वशक्तेः सारमग्रहीत् ॥ जीव माषतुषेत्यादि । कदापि नामुचत्पदं ॥ १५ ॥ ततोऽसावतिघोषेण । शश्वत्कौतुकिनो जनात् ॥ लेभे माषतुषाभिख्यां । मासाहसपतत्रिवत् ॥ १६ ॥ ज्ञानावरणखेदेना—भ्यग्रहीदित्ययं गुरोः ॥ आचाम्लानि तदा मोक्ष्ये । पाठोऽयं मे यदैष्यति ॥ १७ ॥ मुनेर्माषतुषस्यैव—माचाम्लानि वितन्वतः ॥ द्वादशाब्दी व्यतीयाय । सोऽस्य पाठस्त्वियानथ ॥ १८ ॥ स्वपाठपट्टिकामग्रे । मुक्त्वैकांतस्थितोऽन्यदा ॥ निनिंद मूर्खताकंद—मात्मानं स महातपाः ॥ १९ ॥ रे जीव भवता पूर्व—भवे ज्ञानं व्यराध्य-

त ॥ यथा तथा तवाभ्यर्णे । क्लिश्यतोऽपि समेति न ॥ २० ॥ द्विसंस्था ह्येकसंस्थास्ते । पदानुसृति-
लब्धयः ॥ भवंति कवयो धन्याः । स्वाराद्धं यैः श्रुतं पुरा ॥ २१ ॥ पुरा विराधितज्ञानं । धिग्माम-
धमाधमं ॥ श्लोकार्धमपि यस्येय—दर्षतोऽपि समेति न ॥ २२ ॥ इत्थं विविधमात्मानं । निंदनोऽ-
पि च गर्हतः ॥ क्षपकश्रेणिलीनस्य । केवलज्ञानमुद्ययौ ॥ २३ ॥ उत्पन्नकेवलोऽन्येषा—मनुग्रह-
विधित्सया ॥ मोहाहिगारुडमिव । श्लोकार्धं तदथापठत् ॥ २४ ॥ तन्निशम्यागमेनास्य । यानस्येव
प्रवासिनः ॥ अवर्धयन् गुरुं हृष्टा । हर्षफुल्लाननास्ततः ॥ २५ ॥ जगुर्माषतुषं पूज्याः । कथं पाठस्त-
वागतः ॥ ज्ञानेनाह स तेनोक्तः । केनोचेऽप्रतिपातिना ॥ २६ ॥ परितः सपरिवाराः । सूरयो गु-
णसूरयः ॥ नेमुस्तं निस्तुषज्ञान—मथ माषतुषं मुनिं ॥ २७ ॥ सुराः समेत्य सद्भक्ति—कलिता-
श्चलितासनाः ॥ तदा केवलिनस्तस्य । महिमानं वितेनिरे ॥ २८ ॥ सैष माषतुषकेवली ततो ।
गोभिरुज्ज्वलतराभिरिंदुवत् ॥ लोकसंहतितमोहतिक्रमात् । कौमुदं किल विकास्य निर्वृतः ॥ २९ ॥
इति श्रीमाषतुषमुनिकथा ॥

अथ केशी यथा—श्रावस्ती भरतक्षोणा—वस्तीह नगरी वरा ॥ तत्र क्षत्रशिरोरत्नं । जितश-

त्तुरभून्नृपः ॥ १ ॥ तत्र श्रीपार्श्वनाथस्य । गणभृद्गणसंभृतः ॥ केशिनामा चतुर्ज्ञानी । द्वादशांगध-
रोऽभवत ॥ २ ॥ इतः श्वेतांबीति ख्याता । पुरी पौरगणांचिता ॥ प्रदेशीनामराजासी—त्तत्रासीम-
भुजाबलः ॥ ३ ॥ चित्रनामा च तन्मंत्री । राजकार्येण केनचित् ॥ श्रावस्त्यामाययौ तस्यां । जि-
तशत्रुनृपांतिके ॥ ४ ॥ केशी गणधरस्तत्र । जगन्मोहतमोऽपहः ॥ तेनैक्षि गोभिरूर्जस्वी । ज-
न्मांधेनेव भास्करः ॥ ५ ॥ गत्वा नत्वा च तं भक्त्या । निषसादेष तत्पुरः ॥ चक्रे च केशिनाप्य-
स्य । बोधये धर्मदेशना ॥ ६ ॥ प्रबुद्धस्तत्क्षणादेष । केशिदेशनया तया ॥ मंत्री पवित्रसम्यक्त्वं ।
श्रावकत्वमशिश्रयत् ॥ ७ ॥ सिद्धकार्योऽन्यदा मंत्री । गच्छन्निजपुरींप्रति ॥ श्रीकेशिगणभृत्पादान् ।
वंदित्वैवं व्यजिज्ञपत् ॥ ८ ॥ पूज्यपादैरनुग्राह्यः । श्वेतांब्यागमनादहं ॥ धर्मं चेत्प्रतिपद्येत । प्रदेश्य-
पि नरेश्वरः ॥ ९ ॥ सूरयोऽप्यूचिरे मंत्रिन् । स राजा नास्तिकस्तव ॥ वास्यो धर्मेण किं क्वापि ।
कर्पूरेणेव रामठः ॥ १० ॥ मंत्री प्राहोपकार्या व–स्तत्रान्ये संति भूरिशः ॥ पौरा भक्तिविधौ शूरा ।
दूरादास्तामयं नृपः ॥ ११ ॥ वर्तमानेन योगेन । तत्रैष्यामः कदाचन ॥ इत्युक्ते सूरिभिर्मंत्री । स्वां
पुरीमगमत्ततः ॥ १२ ॥ सूरयोऽप्येकदा पृथ्व्यां । विहरंतो यथागमं ॥ समेत्य श्वेतांबीपुर्या—मुद्या-

ने समवासरत् ॥ १३ ॥ चैरैर्वर्धापितो मंत्री । तदागमनवार्तया ॥ स्थानस्थ एव सद्भक्त्या । गुरुपा-
दानवंदत ॥ १४ ॥ अचिंतयच्च मिथ्यात्व—ग्रहग्रस्तो नृपो मम ॥ याता हा दुर्गतिं घोरां । सति
मंत्रिणि मय्यपि ॥ १५ ॥ तदेनं गुरुपादांते । कथंचन नयाम्यहं ॥ तद्गीःश्रवणतोऽस्यापि । यदि
मोहो विलीयते ॥ १६ ॥ इतश्च वाहनव्याजा—द्राजानं बहिरानयत् ॥ परिश्रमविनोदायो—द्याने
प्राविविशच्च सः ॥ १७ ॥ धर्मव्याख्यापरं तत्र । केशिनं वीक्ष्य भूपतिः ॥ सोत्प्रासमवदन्मंत्रिन् । मुं-
डोऽयं रारटीति किं ॥ १८ ॥ चित्रोऽप्युवाच नो विद्मो—ऽभ्यर्णीभूय निशम्यते ॥ इत्युभावुपसर्पा-
ते । केशिनं राजमंत्रिणौ ॥ १९ ॥ स्वरूपे तत्र देवानां । जीवानां च गणेंऽधुना ॥ दिश्यमाने ज-
गादेति । विहस्य वसुधापतिः ॥ २० ॥ मुने ते भाषितं सर्व—मसंबद्धमसच्च तत् ॥ असत्त्वं च
तत्प्रत्यक्षा—गोचरत्वात् खपुष्पवत् ॥ २१ ॥ सत्यपक्षागोचरं मे । यथा भूतचतुष्टयं ॥ इति स्थिति-
मुपन्यस्य । तमूचुः सूरयोऽप्यथ ॥ २२ ॥ भद्र किं भवतोऽध्यक्ष—विषयातीतमेव तत ॥ ज्ञातान्य-
देहिनामाद्य—पक्षे स्तंभादिवस्तुनः ॥ २३ ॥ अभावतोऽप्रसंगः स्या—त्तन्मध्यपरभागयोः ॥ अर्वा-
ग्विभागमात्रस्य । व्यापारात्तव चक्षुषः ॥ २४ ॥ अन्यपक्षोऽथवा तस्या—सिद्धत्वाद्देत्सि यत्कथं ॥

तत्सिद्धौ तु तवैवेह । सिद्धा सर्वज्ञजीवता ॥ २५ ॥ तस्मादनुपपत्तिस्ते । देवजीवादिनिष्कृतौ ॥
जीवे च सूपपादत्वा—द्वेषादीनामिति स्थितं ॥ २६ ॥ ततो राजाह भगवन्। परलोकोऽस्ति चेत्क-
चित ॥ धार्मिका मे सवित्री तत् । पापीयान् जनकोऽभवत् ॥ २७ ॥ त्वन्मते नियतं स्वर्ग-दुर्गति-
व्यतिषंगिणौ ॥ प्रतिबोधयतस्तन्मां । कथमागत्य तौ न हि ॥ २८ ॥ अथाह भगवान् राजन् । य-
था काराग्रहस्थितः ॥ ईष्टे न बांधवान् दृष्टु-मेवं जीवोऽपि नारकः ॥ २९ ॥ अन्यच्च विषयासक्ता ।
दिव्यप्रेमपराः सुराः ॥ समाप्तकृत्या नो मर्त्य—लोकं डुर्गंधमियति ॥ ३० ॥ राजोचे द्वौ पुरा चौरौ
। संगृह्यैकस्तयोर्मया ॥ खंडितो न तथाप्यात्मा । तत्तनौ क्वापि वीक्षितः ॥ ३१ ॥ क्षिप्तः कुंभ्यां द्वि-
तीयस्तु । तद्द्वारं च नियंत्रितं ॥ कथं तदात्मा निरगात् । कृम्यात्मानोऽविशन् कथं ॥ ३२ ॥ सु-
रिराह यथा नील—नालिकेरात्पयोध्वनिः ॥ निःसरत्ययसि ध्माते । यथा विशति चानलः ॥ ३३ ॥
अन्यच्च दारितादग्नि—ररणेः क्वापि दृश्यते ॥ तद्वदात्मा न वीक्षेत । देहात् खंडीकृतादपि ॥ ३४ ॥
राजोचे तोलितश्चैक—श्चौरः सात्मा मया पुरा ॥ निरात्मा च ततो भार-स्तत्तनौ तादृगेव किं ॥
॥ ३५ ॥ सुरिः प्राह दृतिः पुर्वं । रिक्ताथो वायुपूरिता ॥ तोल्यतां तादृगेवास्यां । भारो हि नाधि-

को ज्ञवेत् ॥ ३६ ॥ राजंस्तद्देहिनामात्मा । गंधः सुमनसामिव ॥ देहाद्भिन्नोऽपि चिद्रूप—चेष्टालिंगो मरुल्लघुः ॥ ३७ ॥ पीत्वेत्थमाचार्यगवीप्रसूतो—पदेशदुग्धं मधुरं सितावत् ॥ प्रदेशिनो ज्ञूमिपतेर्विलिल्ये । मिथ्यात्वहृत्पूरविषस्य पूरः ॥ ३८ ॥ गुरोरथो भावज्ञिषग्वरात्परा—मवाप्य सम्यक्त्वमहौषधीमथ ॥ विमुच्य नास्तिक्यमयं क्षमाकृता—मयः क्रमेणाजनि निर्जरो नृपः ॥ ३९ ॥ सूरिस्तु पूरितजगद्यशसा रसायां । धर्मोक्तमार्थमखिलानि खलानि भित्वा ॥ कर्मक्षयं क्रमतया च विधाय मोक्ष—मुत्पन्नकेवलकलः कलयांचकार ॥ ४० ॥ इति श्रीकेशिकथा ॥

अथेलातीपुत्रो यथा—वसंतपुरमित्यस्ति । पुरं तत्राज्ञवन्नृपः ॥ अग्निशर्मेति विप्रोऽस्य । महिला सोमिलेति च ॥ १ ॥ सोऽन्यदा साधुसंसर्गात् । प्रबुद्धो व्रतमग्रहीत् ॥ तत्प्रियापि तथा देह—च्छायेव हि सधर्मिणी ॥ २ ॥ पूर्वाभ्यासवशादेता—वनुरागं परस्परं ॥ तथा जातिमदं नामु—चतामात्तव्रतावपि ॥ ३ ॥ ततोऽनशनमाधाय । तदनालोच्य दुष्कृतं ॥ मृत्वा द्वावपि सौधर्म—कल्पे देवौ बज्रूवतुः ॥ ४ ॥ इलावर्धनमित्यस्ति । पुरमस्मिन्निलातले ॥ तत्र श्रेष्ठी धनाख्योऽज्ञू—द्धारिणी चास्य गेहिनी ॥ ५ ॥ तावपुत्रावमन्येतां । पुत्रार्थमुपयाचिते ॥ पुरदेव्या इलावत्या ।

यातां पुत्रस्य नाम च ॥ ६ ॥ इतश्च सोऽग्निशर्मात्मा । च्युत्वा सौधर्मकल्पतः ॥ आययौ धरिणीकुक्षौ । शुक्तौ स्वातिपयो यथा ॥ ७ ॥ कालेनाजायत सुतः । शुभेऽह्नि शुभलक्षणः ॥ इलातीपुत्र इत्याख्यां । पितरौ तस्य चक्रतुः ॥ ८ ॥ ततोंगैर्मृदुलैः कांति—कंदलैरिव चंद्रमाः ॥ स विश्वनयनानंदी । क्रमेण ववृधेतमां ॥ ९ ॥ च्युत्वा सौधर्मतस्तस्य । प्रिया जातिमदादभूत् ॥ नटस्य नंदिनी रूप—लावण्यरसदीर्घिका ॥ १० ॥ तथा ननर्त सा वंश—प्रांतरंगतरंगिता ॥ यथा किं मानवा देव—दानवा अपि विस्मिताः ॥ ११ ॥ एतामिलावतीपुत्रो । मित्रवर्गयुतोऽन्यदा ॥ खेचरीमिव नृत्यंतीं । चत्वरेऽथ व्यलोकयत् ॥ १२ ॥ अथास्यां रूपलावण्य—विज्ञानातिशयेक्षणात ॥ असौ भवांतरप्रेमा—भ्यासादप्यन्वरज्यत ॥ १३ ॥ एतस्यां मोहितश्चित्र—न्यस्तवल्लेप्यकृत्सवत् ॥ पाषाणोत्कीर्णवच्चास्था—न्मंत्रकीलितवच्च सः ॥ १४ ॥ दृष्ट्वेति जल्पितो मित्रै—र्नोचे किंचन लज्जया ॥ भूयोऽप्यभिहितोऽवोच—दयं मुक्तत्रपो द्रुतं ॥ १५ ॥ भो वयस्या इमामेव । परिणेष्यामि नर्तकीं ॥ नो चेत्प्राणपरित्यागं । करिष्यामि हुताशने ॥ १६ ॥ ततो नीतो गृहं मित्रैः । प्रतिबोध्य कथंचन ॥ तत्रास्थान्मदनावस्था—व्याकुलो मौनभागयं ॥ १७ ॥ पितृभ्यामथ पृष्टोऽयं । लज्जमानो

जगाद न ॥ ताभ्यां पृष्टैस्तु तन्मित्रै—स्तदीप्सितमकथ्यत ॥ १८ ॥ श्रुत्वा तदीहितं श्रेष्टी । मर्मा·
हत इवाकुलः ॥ पुत्रं रहसि कृत्वेति । सानुतापमभाषत ॥ १९ ॥ कुलीनानुचितं वत्सा—र्थयसे त्वं
किमीदृशं ॥ चांडालकूपिका क्वापि । गम्यते तृषितैरपि ॥ २० ॥ निष्टिताः किं वणिक्पुत्र्यः । पात्रं
सौंदर्यसंपदां ॥ अवाच्यामपि साधूनां । यन्नटीमनुरज्यसे ॥ २१ ॥ इलातीसूनुरप्याह । ताताहमि·
ति वेद्म्यदः ॥ किं करोमि परं कामो । वामो मथ्नाति मन्मनः ॥ २२ ॥ महांतोऽपि न विंदंति ।
कृत्याकृत्यं स्मरातुराः ॥ जानंतोऽपीति किं तात । यूयं त्याजयत त्रपां ॥ २३ ॥ असाध्य इति पि·
त्राथो—पेक्षितोऽयं दुरीहितः ॥ नटेभ्यः स्वर्णतुलिता—मुद्वोढुं तामयाचत ॥ २४ ॥ ऊचुस्ते नोऽक्ष·
तं रत्न—निधानमियमंगजा ॥ विक्रीणामो वयं नैतां । वसुभिः प्रचुरैरपि ॥ २५ ॥ अथ ते प्रतिबं·
धोऽस्यां । तदागच्छ मिलाशु नः ॥ शिल्पं शिक्षस्व चास्माकं । तवैवेयं प्रिया ततः ॥ २६ ॥ इति
स्वस्यावधीर्योच्चैः । कुलं शीलमथो यशः ॥ नटानामिलत्तेषा—महो कामग्रहो बली ॥ २७ ॥ अ·
हो नटीकृते नृत्य—पदीयानप्यनूदयं ॥ यद्वा योषित्कृते शंभु—रपि जज्ञे महानटः ॥ २८ ॥ ततो बे·
न्नातटपुरं । नटपेटकसंयुतः ॥ ययाविलातीपुत्रोऽपि । द्रविणार्जनहेतवे ॥ २९ ॥ प्रेक्षाकृते तमादि·

दा—त्तत्र राजारिमर्दनः ॥ तद्वर्ग्यां राजसौधाग्रे—ऽवसरप्रसरं न्यधुः ॥ ३० ॥ तदा नांदीरवाहूताः । स्यूताः कौतुकरंहसा ॥ उपर्युपरि नीरंध्र—ममिलन् परितः प्रजाः ॥ ३१ ॥ सांतःपुरपरिवारः । पौरामात्यादिभिर्वृतः ॥ कुट्टिमाग्रसभावेदी—मलंचक्रे च भूपतिः ॥ ३२ ॥ रंगभूमौ नटा वंशं । तदा प्रांशुममंभयन् ॥ वरत्राभिश्चतसृभि—र्भववक्रतिभिर्युतं ॥ ३३ ॥ उभयप्रासविश्रांत—कीलिकं फलकं च ते ॥ वंशोपरि न्यधुः सिद्धि—शिलामिव भवोपरि ॥ ३४ ॥ खड्गखेटकहस्तोंह्रि—विलसत्पादुकाद्वयः ॥ इलासूनुरथारोह—द्वंशं विश्वमनोऽपि च ॥ ३५ ॥ स्थितां वंशमवष्टभ्य । शालभंजीमिवाग्रतः ॥ नटीमालोकयन् राजा । तदानीमित्यचिंतयत् ॥ ३६ ॥ स्वयं वंशान्निपत्योच्चै—र्नटोऽयं म्रियते यदि ॥ नटीमेतां तदाऽक्लेशात् । क्षिपाम्यंतःपुरं निजं ॥ ३७ ॥ इतश्च वीक्षमाणः खे । खेचरैर्भूचरैरपि ॥ इलासूनुः किलाधत्त । करणानि चतुर्दश ॥ ३८ ॥ सप्त पश्चात्पुरः सप्त । तान्यथो फलकोपरि ॥ ऊर्ध्वस्थोत्कीलकान् कृत्वा । पादुकारंध्रगोपुरान् ॥ ३९ ॥ पौरामात्यादयस्ते त—न्नाट्यातिशयरंजिताः ॥ दध्युर्ददाति राजा चे—दस्मै दद्मो वयं ततः ॥ ४० ॥ राजापि मृत्युमाकांक्ष—स्तस्यांतर्विस्मितोऽपि हि ॥ ऊचे न किंचिदालोकि । मयैतत्तत्पुनः कुरु ॥ ४१ ॥ विलक्षीभूय कृष्णास्यैः । पौ-

रामा॰रिस्थ स्थितं ॥ स तु लोभात्पुनस्तेने । करणानि चतुर्दश ॥ ४२ ॥ नृपस्तत्पतनाकांक्षी । जगा-
द पुनरप्यदः ॥ व्यलोकि न तथा सम्य—क्करणानि पुनः कुरु ॥ ४३ ॥ नृपाविवेकविमनाः । स-
वो॰भासीज्जनस्ततः ॥ इलासूनुः पुनर्लोभा—त्तत्तथा कष्टमातनोत् ॥ ४४ ॥ राजा तथैव चाचख्या
—विलातीतनयः पुनः ॥ शंकितश्चिंतयामास । किमयं ग्रहिलो नृपः ॥ ४५ ॥ अज्ञानो वाथ वि-
द्वेषी । यदेवं वक्ति मां मुहुः ॥ चिंतयन्निति तं दृष्टि—विकाराद् ज्ञातवानयं ॥ ४६ ॥ तदा च प्रां-
शुवंशाग्रा—धिरूढोऽयमलोकत ॥ इभ्यगेहे कचिद्भिक्षा—कृते प्राप्तं मुनिद्वयं ॥ ४७ ॥ ईर्येषणोक्ष-
णा॰॰यस्त—मीक्षणं क्षणमप्यहो ॥ अददानं पुरो दानं । ददत्यामपि योषिति ॥ ४८ ॥ दृष्ट्वा त-
द् व्रतिनोर्द्वंद्व—मद्वंद्वशमभाजनं ॥ इलासूनुरघोत्सूनु—भवोद्वेगो व्यभावयत् ॥ ४९ ॥ अहो मो-
हस्य विहित—द्रोहस्याब्धेश्च तुल्यता ॥ स्ताघो यस्य महावंशै—रपि न प्राप्यते कचित् ॥ ५० ॥
यदुच्चकुलसंभूतो—ऽप्यहमुच्चकुलोषकः ॥ सुकन्या लभमानोऽपि । व्यलगं नीचयोषिति ॥ ५१ ॥
मन्मुखं को नु वीक्षेत । गृह्णीयान्मेऽभिधां च कः ॥ भाषते कोऽपि मां को नु । पदेनापि स्पृशेच्च
मां ॥ ५२ ॥ येन मोहमहांधेना—ऽकार्यसज्जेन पातितं ॥ असुखे हा मनः पित्रो—र्निर्निमित्तो-

पकारिणोः ॥ ५३ ॥ मानिता न सुहृद्वाचो । गणितं नात्मलाघवं ॥ जनवादाच्च नो भीतं । कुलां-
गारेण हा मया ॥ ५४ ॥ ही नीरवाहवन्नीचै–र्गामिना यत्कृतं मया ॥ रुष्टे राज्ञीह तज्जात—मकृ-
त्यमपि निष्फलं ॥ ५५ ॥ अयं च रमणी राज—वंशमुक्तामणिर्नृपः ॥ भुंजानोऽपि यदेतस्यां ।
रज्यते नटयोषिति ॥ ५६ ॥ तन्मन्ये मोहराजस्या—विषभः कोऽपि न क्वचित् ॥ मुक्त्वा जिनमु-
नीनेतान् । महाव्रतधुरंधरान् ॥ ५७ ॥ विषयीकुर्वते ये स्व—दृशामेणीदृशोऽपि न ॥ ईर्यायै न्य-
ग्मुखा धारा–सारसिक्ता वृषा इव ॥ ५८ ॥ तदेत एव धन्या ये । विमलं ब्रह्म बिभ्रति ॥ यत्र चा-
मी प्रवर्त्तंते । मार्गः सोऽस्तु ममापि हि ॥ ५९ ॥ इति भावयतस्तस्य । विगलत्पापकर्मणः ॥ वि-
पेदे मोहसंतान–मुत्पेदे केवलं महः ॥ ६० ॥ तत्कालं तन्महाज्ञान—महिमानं वितेनिरे ॥ दे-
वा जयजयेत्युच्चै—रुच्चरंतश्चतुर्विधाः ॥ ६१ ॥ द्रव्यलिंगं समादत्स्व । नमस्कुर्मो यथा वयं ॥ त्रिद-
शैरिति विज्ञप्तः । केवली तत्तथाकरोत् ॥ ६२ ॥ वंशः स एव कनक–कमलं तत्क्षणादभूत् ॥ वि-
मानिभिः स्थितोऽत्रैव । ततोऽसौ देशनां व्यधात् ॥ ६३ ॥ उन्मुखैर्भूचरै राजा—दिभिर्विस्मितमा-
नसैः ॥ चातकैरिव मेघांभः । पपे तद्देशनावचः ॥ ६४ ॥ प्रबुद्धा बहवो जीवा—स्तस्य देशनया

राजा स्वेंगितवैराग्या-दात्मवैराग्यतो तदा ॥ केचिद्देशविरतिं सर्व—विरतिं केचनाश्रयन् ॥ ६५ ॥ तदानीमेव तस्योच्चै-स्तस्थुषः कमलानटी ॥ राज्ञी च राजवैराग्या-त्तत्पार्श्वे जगृहुर्व्रतं ॥ ६६ ॥ क्रमादिलातीतनयो मुनींद्र-स्तैः सासनं ॥ सर्वे ते क्षपकश्रेणि-मारुह्यासन् समासनाः ॥ ६७ ॥ निर्धूय निर्धूतभवो भवोप-ग्राहीणि कर्माणि शिवं प्रपेदे ॥ ६८ ॥ इतीकमुत्पाकसमृद्धिपात्रं ॥ इलातीपुत्रकथा ॥

अथ मेघकुमारो यथा—अस्ति स्वस्तिकमाणिक्य-राजि राजगृहं पुरं ॥ आसीत्तत्र गुणश्रेणि-कलितः श्रेणिको नृपः ॥ १ ॥ तत्प्रिया धारिणीनाम । सामजस्वप्नसूचितं ॥ सुरत्नं रत्नगर्भेव । गर्भे सुतमधारयत् ॥ २ ॥ तस्यास्तृतीयमासेऽब्द-वृष्टिखेलनदोहदं ॥ अकाले पूरयामास । राजा दिव्यानुभावतः ॥ ३ ॥ असूयत तया सूनुः । समये निःसमद्युतिः ॥ दोहदान्वयतो मेघ-कुमार इति विश्रुतः ॥ ४ ॥ पाल्यमानः क्रमेणाप । वृद्धिं नृपतिनंदनः ॥ असौ धात्रीभिरुद्यान-पालीभिरिव चंदनः ॥ ५ ॥ अष्टादश लिपीस्तत्तद्-द्विगुणान्यायुधानि सः ॥ ततोऽपि द्विगुणा बिभ्रन् । कला भेजेऽथ यौवनं ॥ ६ ॥ इतश्चान्येद्युरुद्याने । वने गुणशिलाभिधे ॥ यथाविहारं श्रीवीरः । स-

मेत्य समवासरत् ॥ ७ ॥ श्रेणिकः सपरिवारो । निरीय नगरादथ ॥ प्रणंतुमाययौ नाथं । स्वर्गा-
दिव पुरंदरः ॥ ८ ॥ प्रणम्योचितभूपीठ—प्रतिष्टेषु नृपादिषु ॥ स्वामी संसारधिक्कार—दायिनीं दे-
शनां व्यधात् ॥ ९ ॥ देशनांते प्रबुद्धात्मा । विभुं मेघो व्यजिज्ञपत् ॥ नाथ संसारपाथोधि—तरीं
दीक्षां प्रयच्छ मे ॥ १० ॥ जगादाथ जगन्नाथः । प्रमादं वत्स मा कृथाः ॥ ततश्चानेन पितरा—वा-
पृष्टौ नम्रमौलिना ॥ ११ ॥ कृच्छ्रादनुमतस्ताभ्या—मथ मेघो महोत्सवात् ॥ जग्राह साग्रहो दीक्षां ।
करेण परमेशितुः ॥ १२ ॥ स्वामिना दीक्षयित्वायं । स्थविरेभ्यः समर्पितः ॥ रात्रौ संस्तारकस्तस्य
। स्थानद्वारि क्रमादभूत् ॥ १३ ॥ ततः शरीरचिंतार्थे । गच्छदागच्छतां तदा ॥ स्थविराणां पदैर्मेघः ।
सर्वांगीणमघट्यत ॥ १४ ॥ कदलीकोमलांगस्य । बदरीविटपोपमैः ॥ तत्पादैर्घट्यमानस्य । निद्रा-
यासीदमुष्य न ॥ १५ ॥ अचिंतयच्च खिन्नात्मा । मेघोऽमी व्रतिनः पुरा ॥ गृहस्थं मां मृदूल्लापै—
रालपन् निखिला अपि ॥ १६ ॥ घट्टयंतस्त्विदानीं मां । पदैरस्पृष्टमातिभिः ॥ कुंभकारगृहद्वार—
पंकतामनयन् हहा ॥ १७ ॥ तत्प्रभाते विभुं नत्वा । यास्यामि निजमंदिरं ॥ व्यलोकि मान्नवः स्प-
ष्टं । न्यक्कृताश्चापि मन्मकाः ॥ १८ ॥ ततः प्रगे तथाकर्तुं । तमुपेतं प्रभुर्जगौ ॥ वत्स ते जागृतो

रात्रौ । चिंता या समजायत ॥ १९ ॥ महासत्ववतां मेघ । त्वादृशां नौचितैव सा ॥ दाहे चर्मैव
दुर्गंधं । सुगंधस्त्वगुरुर्यतः ॥ २० ॥ अपरं च भवादस्मा–त्तृतीये त्वं भवांतरे ॥ सुमेरुप्रभ इत्या-
सी–र्विंध्ये यूथाधिपः करी ॥ २१ ॥ सुखं स्वीयपरिवार—स्त्वमस्थाः प्रतिकाननं ॥ सल्लकीर्मृदुलाः
खादन् । पिबन् रेवांबु निर्मलं ॥ २२ ॥ ग्रीष्मे ग्रीष्मेऽन्यदा वन्य—दावधूमाकुलीकृतः ॥ अगा-
स्तृष्णातुरस्तूर्णं । पल्वलं प्रतनूदकं ॥ २३ ॥ तत्र पातुं प्रविष्टोंबु । निमग्नः पंकसंकटे ॥ प्राणं कुर्व-
न् स्वमाक्रष्टुं । निमग्नस्त्वं विशेषतः ॥ २४ ॥ ततः पूर्वापराद्धेभ–यूना व्यूढेन हस्तिना ॥ तत्रागते-
न दंताभ्यां । विद्धस्त्वं कटु चारटः ॥ २५ ॥ सप्तमोर्व्यामिव प्राप्तः । सप्तरात्रमिति व्यथां ॥ विषह्य
पालयित्वायुः । समा विंशोत्तरं शतं ॥ २६ ॥ आर्तध्यानेन मृत्वात्र । भारते विंध्यपर्वते ॥ चतुर्दंतः
करी मेरु—प्रभो यूथाधिपोऽभवः ॥ २७ ॥ युग्मं ॥ ततो ग्रीष्मे दवं दृष्ट्वा । संभ्रांतः समचिंतयः ॥
मयेदृग्दृष्टपूर्वोऽग्नि—संचयः क्वचिदप्यहो ॥ २८ ॥ चिंतयन्निति संजात—जातिस्मृतितया व्यधाः ॥
प्रावृष्युत्पाट्य विटपि–विटपान् स्थंडिलत्रयं ॥ २९ ॥ ग्रीष्मकाले तथैवाथ । दीप्यमाने दवानले ॥
भीतो दहनतस्त्वं तु । प्रथमं स्थंडिलं गतः ॥ ३० ॥ तदपि परितोऽन्येत्य । निकुंजेभ्योऽग्निभीरुभिः

उपर्युपरि संलीनै—र्नीरंध्रं श्वापदैर्वृतं ॥ ३१ ॥ मुक्त्वा तत्कृपया तेषां । द्वितीयं स्थंडिलं गतः ॥ त-त्तथैव ततोऽयासी—स्तृतीयं सपरिछदः ॥ ३२ ॥ अस्थास्तत्र निराबाधे । प्रविश्य करिणीयुतः ॥ तारिकासहितः सायं । नभसीव निशाकरः ॥ ३३ ॥ कंडूयितुं ततः स्वांग—मेकोंह्रिस्त्वयकोध्धृतः ॥ स्थानेऽत्र शशकोऽभ्येत्य । तस्थौ दावभयातुरः ॥ ३४ ॥ कृतकंडूयनो याव—द्यथास्थानेऽमुचः पदं ॥ स्पृष्टश्च तावदेतेन । शनकैः शशकस्त्वया ॥ ३५ ॥ सहसैष त्वयाकुंच्य । धृतो जीवानुकंपया ॥ त्रिभिरेव स्थितं पादैः । कृपाहो ते पशोरपि ॥ ३६ ॥ मनुष्यायुस्त्वया बद्धं । तया सत्वानुकंपया ॥ संसारश्च सुपुण्यात्म—न्ततनुः प्रतनुः कृतः ॥ ३७ ॥ दिनद्वयेन सार्धेन । दग्ध्वा वनमशेषतः ॥ स्वयमेव तदा दाव—पावकः प्रशमं ययौ ॥ ३८ ॥ ययुस्तद्भीतितो मुक्ताः । शांतेऽग्नौ श्वापदाः स-मे ॥ स्थंडिलेभ्यो विनिःसृत्य । कुटुंबेभ्यो यथा जनाः ॥ ३९ ॥ मेघ त्वमपि खिन्नात्मा । तदानीं क्षुत्तृषातुरः ॥ तूर्णं निर्यातुकामोऽद्रि—र्वज्राहत इवापतः ॥ ४० ॥ मृतावस्थस्ततः काको—लूक-जंबुकभक्षणं ॥ दुःसहं सहमानोऽस्था । महासत्त्व दिनत्रयं ॥ ४१ ॥ पालयित्वा शतं वर्षा—ण्या-युर्मृत्वा ततोऽपि च ॥ धीर त्वं धारिणीकुक्षौ । पुत्रत्वेन समागतः ॥ ४२ ॥ गजो येनाभवस्तेन ।

स्वप्ने सा गजमैक्षत ॥ तृषार्त्तो येन चागास्त्वं । तेन सा वृष्टिदोहदा ॥ ४३ ॥ तत्तिरश्चापि भवता । पुरा जीवानुकंपया ॥ सोढं दृढतया कष्ट—मिदानीं तु किमुच्यते ॥ ४४ ॥ पदस्पर्शेन साधूनां । पूज्यः पांशुकणोऽपि हि ॥ जायेत वत्स तेनायं । विषोढुमुचितस्तव ॥ ४५ ॥ श्रुत्वेति जातिस्मृ-तिवान् । मेघः प्रमदबाष्पयुक् ॥ विभुं नत्वा ददौ मिथ्या—दुष्कृतं स्वविकल्पिते ॥ ४६ ॥ तपोऽतितप्त्वा क्षमया प्रधानं । विपद्य भेजे विजयं विमानं ॥ च्युत्वा ततोऽप्येष महाविदेह—जनेः शिवं यास्यति मुक्तदेहः ॥ ४७ ॥ इति श्रीमेघकुमारकथा ॥ अथ पुंडरीको यथा—

जंबूद्वीपे विदेहेऽस्ति । विजयः पुष्कलावती ॥ नृपुंडरीकिणी तत्रा-स्ते पुरी पुंडरीकिणी ॥१॥ महापद्म इति श्रीणां । सद्म तत्राभवन्नृपः ॥ राज्ञी तस्य विनिर्धूत-ब्रह्मा पद्मावतीत्यभूत् ॥ २ ॥ तयोश्च पुंमरीकश्च । कंडरीकश्च विश्रुतौ ॥ सुतावजनिषातां द्वौ । क्षात्रधर्मस्नुजाविव ॥ ३ ॥ दत्वाथ पुंडरीकाय । राज्यं भूमिपतिस्ततः ॥ स्थविराचार्यतः प्राप्य । व्रतं तप्त्वा शिवं ययौ ॥ ४ ॥ त एव स्थविराचार्या विहरंतोऽवनीतले ॥ पुर्यां कालांतरेणात्र । समेत्य समवासरन् ॥ ५ ॥ श्रुत्वा तदागमं राजा । कंमरीकसमन्वितः ॥ पुंमरीको महाभूत्या-ऽभ्येत्य चैतानवंदत ॥ ६ ॥ गुरवस्ते मुखद्वार-

विन्यस्तमुखवस्त्रिकाः ॥ धर्मलाभाशिषं दत्वा । तस्मै धर्ममुपादिशन् ॥ ७ ॥ यौवनं वनिताक्षीणा-
मपांगप्रतिहस्तकं ॥ प्रेमापि पद्मिनीपत्र—स्थितोदकणसोदरं ॥ ८ ॥ विषयाः किंच किंपाक—विप-
क्कफलसोदराः ॥ वपुःश्रियोऽपि संध्याभ्र—रागाभिनयनाटिकाः ॥ ९ ॥ संपातदा सदा ज्ञेया । सं-
पदामपि संहतिः ॥ तदपि प्राणिनामायु—र्वायुसब्रह्मचारि च ॥ १० ॥ मत्वेति धर्म एवैको । वि-
वेकिभिरुपास्यते ॥ स्वर्गापवर्गसंपत्ति—कारणं यः सनातनः ॥ ११ ॥ आत्मासौ पंचभिरपीं—द्रियै रा-
गमुपागतैः ॥ मोहतीक्ष्णैर्निहन्येत । स्वस्वतृष्णासिधेनुभिः ॥ १२ ॥ तपोहुताशनोद्भासि—ज्ञानाद्यन्व-
यचेतितः ॥ आत्मा सत्यीभवत्येष । हतोऽपींद्रियघातकैः ॥ १३ ॥ विषयांस्त्याजयित्वैता—नींद्रियाणि
रिपूनिव ॥ तदा दासीकरोत्यात्मा । वैराग्यास्त्रं यदाप्नुयात् ॥ १४ ॥ अन्नपानादिरोधेना—त्मनः से-
नापतिस्तपः ॥ बद्धमूलान् पुरेऽमुष्मिन् । मारयत्यांतरान् रिपून् ॥ १५ ॥ स्थापितोऽथ मनोऽमात्यः ।
करणेष्वेषु पंचसु ॥ पुरेऽस्मिन्नात्मनो राज्यं । विप्लावयति विप्लुतः ॥ १६ ॥ विवेकनृपरिस्थायी ।
न्यायी यद्यस्य युध्यते ॥ आत्मनृपालहस्ते स्यु—स्तदा सर्वा अपि श्रियः ॥ १७ ॥ ज्ञात्वा विवेक-
तोऽनेन । करणाचारचंचुना ॥ कल्याणं ग्रस्तमप्यात्मा—दत्ते संयमयन्मनः ॥ १८ ॥ श्रुत्वेति देश-

नां नत्वा । गुरुपादानथो नृपः ॥ जगाम नगरीमंत—र्नववैराग्यमुद्वहन् ॥ १९ ॥ मंत्रिभिर्मंत्रयि-
त्वाथ । कंडरीकं जगौ नृपः ॥ वत्स राज्यं गृहाणेदं । पालयेथा यथाक्रमं ॥ २० ॥ परिव्रज्यां गृही-
ष्यामि । विरक्तोऽहं भवात्पुनः ॥ वार्धके मुनिवृत्तत्वं । कुलाचारादपाति नौ ॥ २१ ॥ उवाच कंमरी-
कस्ते । भ्रातः का भ्रातृता मयि ॥ क्षिप्त्वा संसारगुप्तौ मा—मात्मानं मोचयिष्यसि ॥ २२ ॥ आ-
त्मनः स्वदते यत्तद् । दीयते लघवे पुरः ॥ तदार्य मह्यं स्वमतं । व्रतं दापयसे न किं ॥ २३ ॥
अथाह पुंडरीकस्तं । वत्स युक्तं त्वमब्रवीः ॥ ऋते व्रतं मनुष्यत्वे । नान्यत्किमपि सुंदरं ॥ २४ ॥
यौवने मुक्तिवर्त्मेदं । परं न वहते यतः ॥ स्वस्थानेऽत्र स्थितात्काम—चरटाद्भयमुत्कटात ॥ २५ ॥
स्मरस्य विषयानस्य । भंजयंती समंततः ॥ मुखे शिबिरदंतांश्च । पातयंती निरंतरान् ॥ २६ ॥ पंच
वह्निवाजींऽञान् । खंजयंतींड्रियाणि च ॥ भस्मयंती च कबरी—गरीयोवनजालिकां ॥ २७ ॥ जरा
यदा तु चारित्र—सेनानीशमवाहिनी ॥ दिग्जयं कुरुते मोक्ष—मार्गोऽयं सुवहस्तदा ॥ २८ ॥ वि-
शेषकं ॥ तन्ममेयं जरा वत्स । व्रतसाहाय्यकारणं ॥ तेन त्वां वच्मि तारुण्यं । यावत्तावद्गृहे वस
॥ २९ ॥ जाते राज्यधरे पुत्रे । तारुण्ये चात्र जीर्यति ॥ स्वकुलाचारतः पश्चाद् । गृह्णीयास्त्वमपि

व्रतं ॥ ३० ॥ अथाह कंडरीकोऽपि । युक्तमार्य त्वयोदितं ॥ परं तत्पौरुषं मन्ये । यत्तारुण्येऽपि सं-
यमः ॥ ३१ ॥ महापद्मसुतः किं न । त्वत्कनिष्ठश्च किं न हि ॥ अधुनैवाग्रहं कृत्वा । यद्गृह्णामि न
संयमं ॥ ३२ ॥ संसारो दुस्त्यजस्तावद् । व्रतं तावच्च दुष्करं ॥ दुःप्रापं च शिवं ताव—द्धीरा या-
वदुदासते ॥ ३३ ॥ प्रतिज्ञामिति निर्माय । वार्यमाणोऽपि बंधुना ॥ सोत्सवं कंडरीकोऽथ । व्रतं ज-
ग्राह साग्रहः ॥ ३४ ॥ कोऽपि राज्यधरो याव—देधते तावदुन्मनाः ॥ पुंडरीकः पुना राज्ये—ऽप्य-
स्थाद्भावेन संयमी ॥ ३५ ॥ तप्यमानस्तपस्तीव्रं । सहमानः परीषहान् ॥ कंडरीकमुनिः साकं । गु-
रुभिर्व्यहरद् भुवि ॥ ३६ ॥ यथाकालं वसंततु—रथ प्रावर्तनान्यदा ॥ कूजितैः कलकंठीना—मकुं-
ठीकृतमन्मथः ॥ ३७ ॥ पलाशपुष्पदीपालि—मालितेऽवनिमंडले ॥ पुष्पाणि पूरयत्युच्चै—र्मधावुत्त-
रसाधके ॥ ३८ ॥ भृंगकूजितह्रींकार—मंत्रजापपरायणः ॥ कंडरीकं वशीचक्रे । तदा मन्मथमांत्रि-
कः ॥ ३९ ॥ युग्मं ॥ चारित्रावरणे कर्म—ण्युदितेऽचिंतयत्ततः ॥ कंडरीकमुनिः कोऽय—मपस्मा-
रो व्रतं मम ॥ ४० ॥ दुर्विधानां च वृद्धाना—मुभयेषां व्रतं मम ॥ येषां भोगेष्वसंपत्ति—रशक्ति-
श्च किल क्रमात् ॥ ४१ ॥ हहा तदाहमार्येण । वारितोऽप्यग्रजं व्रतं ॥ अथवाद्यापि किं नाम । वि-

नष्टं मे त्यजाम्यदः ॥ ४२ ॥ व्रजामि द्विगुणैर्भोगैः । पूरयामि सुखक्षतिं ॥ तदार्यादित्सितं राज्य—
मादायात्मकमागतं ॥ ४३ ॥ चिंतयित्वेति शयितान् । मुक्त्वा गुरुपदांबुजान् ॥ प्रकृत्या मलिनः सो-
ऽगाद् । भृंगवत्पुंमरीकिणीं ॥ ४४ ॥ स तत्रोपवने गत्वो—पधिमालंब्य शाखिनि ॥ कंडरीको व्य-
शिश्राम । श्रांतः शाद्वलभूतले ॥ ४५ ॥ उद्यानपालकेनाथ । ज्ञापयामास भूपतिं ॥ भूमानपि
तदाकर्ण्य । विस्मयादित्यचिंतयत् ॥ ४६ ॥ व्रते भग्नप्रतिज्ञोऽय—मेकाकी यदिहागतः ॥ महास-
त्वोऽथवैकाकि—प्रतिमास्थो भविष्यति ॥ ४७ ॥ तथाप्यल्पपरिवार । एव यामि तदंतिके ॥ कथंच-
नायं भग्नः स्या—द्विचित्रा कर्मणां गतिः ॥ ४८ ॥ चिंतयित्वेति राजापि । प्रधानैः कैश्चिदन्वितः
॥ उद्यानमागतोऽपश्य—त्कंडरीकं तथास्थितं ॥ ४९ ॥ तदालोक्य महीपालः । शोकेनांगीकृतो हृ-
दि ॥ व्यमृश्यत्तातपुत्रोऽयं । हा कर्मवशगोऽभवत् ॥ ५० ॥ आरोपयामि लज्जायां । तदेनं विधि-
वंदनात ॥ चेततेऽसौ यदि पुनः । प्रच्युतः स्वप्रतिश्रवात ॥ ५१ ॥ चिंतयित्वेति निर्माय़ो—त्तरासंगं
यथाविधि ॥ वंदित्वा तं नृपोऽपृच्छत् । प्रांजलिः सुखसंयमं ॥ ५२ ॥ ततोऽसौ प्राह विहित—मिय-
त्कालं मया तपः ॥ राज्यार्थी सांप्रतं राजन् । भवंतमहमागमं ॥ ५३ ॥ स्वबंधोर्व्रतखिन्नस्य । वचः

श्रुत्वा व्रतार्थ्यसौ ॥ शोकहर्षाश्रुवानूचे । प्रधानानिति नृपतिः ॥ ५४ ॥ भोभो सचिवसामंता ।
बंधुर्मे वोढुमक्षमः ॥ व्रतं वत्सतरो भार—मिव तेनागतो मयि ॥ ५५ ॥ कारणीयस्ततो राज्य—
मयं प्राज्यमहं यथा ॥ युष्माभिरनुमंतव्यो—ऽस्मि च संयमहेतवे ॥ ५६ ॥ आपृच्छ्येति प्रधानांस्त—
द्यतिलिंगमुपाददे ॥ निजं च कंडरीकाय । राज्यलिंगं नृपो ददौ ॥ ५७ ॥ कंडरीकस्ततः साकं ।
प्रधानैः पुरमाययौ ॥ भद्रासनं च स्वपितुः । काकश्चैत्यमिवाश्रयत् ॥ ५८ ॥ मांगलिक्यं व्यधुस्तस्य
। सामंतसचिवादयः ॥ बहिरंतश्च तेनोच्चैः । शल्येनेवातिदुःखिताः ॥ ५९ ॥ अयं सूदानथादिक्षद् ।
दुःकालादिव निःसृतः ॥ प्रगुणं मत्कृते सर्व—मशनं कुरुताशु रे ॥ ६० ॥ तथा ते चक्रिरे सोऽ-
ऽपि । स्वोदरं समपूरयत् ॥ भोज्यैः कौतुपिकः पांशु—विसरैः कुतपं यथा ॥ ६१ ॥ विध्यातजठरा-
ग्नित्वा—त्तस्याहारव्यथा निशि ॥ बभूव वेल्लतो भूमौ । शय्यायां च प्रतिक्षणं ॥ ६२ ॥ हुंकारांकार-
सूत्कार—पुरस्सरमथारटत् ॥ मातरं पितरं देवं । सस्मार च मुहुर्मुहुः ॥ ६३ ॥ परित्राणं न कोऽप्यस्य
। चकार सचिवादिषु ॥ औषधेन विना व्याधि—रवशाम्यत्वसाविति ॥ ६४ ॥ ततोऽसौ कुपितस्ते-
भ्य—श्चिंतयामासिवानिति ॥ प्रातरेतान् पीलयिष्ये । सपुत्रपशुबांधवान् ॥ ६५ ॥ कांश्चित्कांश्चिच्च

सामंत-मंत्रिणः कटुमर्दतः ॥ चूर्णयिष्येऽसिना ये मे-ऽप्युपेक्षामिति कुर्वते ॥ ६६ ॥ कृष्णलेश्या-
परिणाम । इत्यसावारटन् भृशं ॥ अप्रतिष्टो विपद्यागा-दप्रतिष्ठानकावनिं ॥ ६७ ॥ राजर्षिः पुंमरी-
कस्तु । धन्यंमन्योऽध्वनि व्रजन् ॥ दध्यौ व्रतं गृहीष्यामि । गत्वाहं गुरुसाक्षिकं ॥ ६८ ॥ क्षुत्तृ-
षार्तोऽपि घर्मार्तो-ऽप्युर्वीचंक्रमणक्रमात् ॥ पाषाणकंटकाविद्धां-हिगलद्रुधिरोऽपि हि ॥ ६९ ॥ शु-
भध्यानपरः शस्त—लेश्यापरिणताशयः ॥ पथश्रांतो ययौ ग्रामे । स मुनिग्रामणी क्वचित् ॥ ७० ॥
याचित्वोपाश्रयं तत्र । सायं संस्तारके स्थितः ॥ भावितात्मा स राजर्षिः । प्रीतिमानित्यचिंतयत् ॥
॥ ७१ ॥ धन्योऽहं पुण्यवानस्मि । चिरकालाद्व्रतार्थिनः ॥ मेऽकस्माद्व्रतमायातं । गृहीतं च मया
मुदा ॥ ७२ ॥ कदाहं गुरुपादांते । दांतेन मनसा गतः ॥ प्रव्रज्यां पालयिष्यामि । गृहीत्वा च य-
थाविधि ॥ ७३ ॥ कदाहं भवदाहं च । स्वरसप्रशमोर्मिभिः ॥ गुरूपदेशतः सम्यक् । शमयिष्यामि
सर्वथा ॥ ७४ ॥ चिंतयन्निति निर्माय । शिरसि प्रांजलोंजलिं ॥ स्तुवन् पंचापि पंचांगं । ननाम प-
रमेष्ठिनः ॥ ७५ ॥ आहारोपधिदेहमोहरहितः श्रीपुंडरीको मुनिः । श्रेष्टः क्षापितसर्वजंतुनिवहो
लीनः परे ब्रह्मणि ॥ तत्पूर्वाध्वपरिश्रमेण महता खिन्नोऽपि नास्थान्मह—च्चित्तं दीर्घपदप्रयाणविधि-

ना सर्वार्थसिद्धिं ययौ ॥ ७६ ॥ इति श्रीपुंडरीककथा ॥ आर्द्रकुमारोऽन्नयकुमारकथायां कीर्तिधरस्तु सुकोशलकथायामुक्तः, नंदिषेणस्तूच्यते यथा—

अस्ति स्वस्तिश्रियोरेक—गृहं राजगृहं पुरं ॥ नृपस्तत्र जिताराति—श्रेणिः श्रेणिक इत्यनू-
त् ॥ १ ॥ कुमारमंडलीमौलि—मंडनं तस्य भूपतेः ॥ नंदिषेण इति ख्यातः । सुतरत्नमजायत ॥
॥ २ ॥ अन्यदा विहरन् वीरः । पुरग्रामाकरादिषु ॥ समेत्य समवासार्षी—त्तत्रर्षींदुसमन्वितः ॥ ३ ॥
तन्निशम्य समायातं । प्रणंतुमथ पार्थिवः ॥ सोमः सौम्येन वा नंदि—षेणेन सहितो ययौ ॥ ४ ॥
प्रणम्योचितनूपीठ—प्रतिष्टे सति पार्थिवे ॥ चकार नवनिःकार—देशिनीं देशनां विभुः ॥ ५ ॥
अस्मिन्नपारे संसारे । सारमेकं तपः खलु ॥ यतः स्वर्गापवर्गोऽपि । देहिनां करगोचरः ॥ ६ ॥
श्रुत्वेति देशनां प्राप्ते । नृपे निजनिकेतनं ॥ तं प्रव्रजितुमापृच्छ—न्नंदिषेणो नवं हिषन् ॥ ७ ॥ कृ-
च्छ्रादनुमतः पित्रा । स दीक्षार्थं व्रजन् पथि ॥ ऊचे शासनदेव्येद—मंतरिक्षतलस्थया ॥ ८ ॥
किमुत्सुकायसे वत्स । प्रव्रज्याग्रहणंप्रति ॥ चारित्रावारकं भोग—फलं कर्मास्ति यत्तव ॥ ९ ॥
किंचित्कालं प्रतीक्षस्व । गृहे तत्कर्मणः क्षये ॥ प्रव्रज्यां प्रतिपद्येथाः । सर्वं काले फलेग्रहि ॥ १० ॥

चारित्रावारकं कर्म । साधुसंगजुषो मम ॥ करिष्यति किमित्युक्त्वा । स ययौ स्वामिनोंतिके ॥११॥
निषिद्धः स्वामिनापीति—रभसेन भृशायितः ॥ प्रपेदे स परिव्रज्यां । तत्पादकमलांतिके ॥१२॥
अथ षष्टाष्टमादीनि । तप्यमानस्तपांसि सः ॥ व्याहार्षीत् प्रभुणा साकं । द्रोणाकरपुरादिषु ॥ १३ ॥
जपन् सिद्धांतमनीशं । सिद्ध्याकर्षणमंत्रवत् ॥ बिज्रीषक इवासह्यान् । सैष सेहे परीषहान् ॥ १४ ॥
संकटादिव निःसर्तुं । स भोग्यफलकर्मणः ॥ तपोभिः प्रतनूचक्रे । स्वतनूमतनूद्यमः ॥ १५ ॥ मह-
र्षिः सोऽन्यदैकाकी । चिकीर्षुः षष्टपारणं ॥ ययौ वेश्यागृहे धर्म—लाभवाचमुवाच च ॥ १६ ॥ न
नोऽर्थो धर्मलाभेन । द्रव्यलाभोऽस्तु केवलं ॥ इति प्रत्याह तं वेश्या । सोपहासविकारयुक् ॥१७॥
किं मां हंत वराकीयं । हसतीति विचिंत्य सः ॥ कृष्ट्वा नीव्रतृणं लब्ध्या । रत्नराशिमपातयत् ॥१८॥
द्रव्यलाभोऽयमित्युक्त्वा । स तस्माद्वलते गृहात् ॥ ससंभ्रमं तमभ्येत्य । सापि वेश्येदमभ्यधात ॥
॥ १९ ॥ अवक्रयाधमर्णां मा—माधाय त्वं क यास्यसि ॥ नदीव रसपूर्णा य—दलंघ्याहं पुरस्तव
॥ २० ॥ तपःकष्टमिदं मुंच । भुंक्ष्व भोगान् मया सह ॥ त्यक्ष्यामि सर्वथा प्राणान् । प्राणनाथाहम-
न्यथा ॥ २१ ॥ भूयोभूयस्तयेत्युक्तो । भोगान्भोगान्विदन्नपि ॥ भोग्यकर्मवशात्तस्याः । सोऽनुमेने

वचस्ततः ॥ २२ ॥ शश्वद्दशाधिकान् वापि । बोधयिष्यामि नो यदि ॥ तदादास्ये पुनर्दीक्षां । प्र-
तिज्ञामिति चाकृत ॥ २३ ॥ मुक्तर्षिलिंगः सोऽवात्सी–द्वेश्यावेश्मनि चिंतयन् ॥ दीक्षानिषेधिकीं
वाचं । देवताया जिनस्य च ॥ २४ ॥ भोगान् सह तयाभुंक्त । सोन्वहं च जनान् दश ॥ प्रबो-
ध्य भव्यान् दीक्षार्थं । प्रैषीदुपजिनेश्वरं ॥ २५ ॥ क्षीणेऽन्यदा भोगफले । तस्य बोधयतः सतः ॥
नवाबुधन् जनाष्ठक्क–जातीयो दशमो न तु ॥ २६ ॥ तस्मिन्नबुध्यमाने सा । वेश्या रसवतीं कृतां ॥
आचख्यौ नंदिषेणाय । समयज्ञा मुहुर्मुहुः ॥ २७ ॥ सोऽपूर्णाभिग्रहो भोक्तुं । नोत्तस्थौ किंतु
सादरं ॥ तं ठक्कं बोधयन्नस्था–द्गीर्भिर्विविधभंगिभिः ॥ २८ ॥ तदा चोवाच तं वेश्या । प्राक्सिद्धान्नं
विरस्यभूत् ॥ भूयो निष्पन्नमस्त्यन्नं । किं विलंबयसि प्रभो ॥ २९ ॥ नंदिषेणोऽप्युवाचैतां । बोधि-
तो दशमो न हि ॥ दशमोऽद्याहमेवातः । प्रव्रजिष्यामि भामिनि ॥ ३० ॥ इत्युक्त्वा नंदिषेणः स्वं
। भुक्तभोगफलं विदन् ॥ निर्गत्य स्वामिनः पार्श्वे । प्रव्रज्यां पुनराददे ॥ ३१ ॥ आलोच्य दुःक-
र्म तदेतदुच्चैः । शमी समीपे जिनपुंगवस्य ॥ स नंदिषेणो मुनिरायुषोंते । समाधिना देवभुवं ज-
गाम ॥ ३२ ॥ इति श्रीनंदिषेणकथा ॥

अथ करकंडुर्यथा—आस्ते कलिंगदेशेषु । पुरी चंपेति विश्रुता ॥ कूपछायेव लोकानां । यत्रार्थ्याप्तिमनोरथाः ॥ १ ॥ तत्र नक्षत्रनाथांशु—गुणोज्ज्वलगुणोदधिः ॥ राजासीदपनीतारि—वाहनो दधिवाहनः ॥ २ ॥ चेटकोर्वीशडुहिता । सहिता रूपसंपदा ॥ राज्ञी तस्यापरिज्ञात—ब्रह्मा पद्मावतीत्यभूत् ॥ ३ ॥ संसारसुखसर्वस्वा—नुषंगिफलमन्यदा ॥ गर्भं कादंबिनीवार्काद् । दधौ सा दधिवाहनात् ॥ ४ ॥ आसीत्तस्याः करिस्कंध—गताहं नृपवेषभृत् ॥ विश्वग्राजधृतछत्रा । विचरामीति दोहदः ॥ ५ ॥ पतिभक्ता न पत्यै तं । दोहदं सा न्यवेदयत् ॥ कृष्णपक्षेंडुलेखावत् । क्षीयतेस्म तु केवलं ॥ ६ ॥ नृपः शपथपूर्वं ता—मपृछत् खेदकारणं ॥ तदाज्ञाभंगभीरुश्च । साप्यथाकथयत्तथा ॥ ७ ॥ हर्षसंदोहदे तस्या । दोहदेऽथ महीभुजा ॥ पूर्यमाणे ववर्षाब्दो । मुदश्रुभिरिवांबुभिः ॥ ८ ॥ घनसिक्तमहीगंधा—द्विंध्याद्रिस्मृतिदुर्धरः ॥ सिंधुरः क्ष्मापदंपत्यो—रुच्चचाल दिशैकया ॥ ९ ॥ हित्वा परिजनं सर्व—मुत्पथेनाथ विप्लुतः ॥ नामन्यतैष मातंगो । गुरुशिक्षामिवांकुशं ॥ १० ॥ दूरस्थं पार्श्व एवाशु । पार्श्वस्थं दूरतः पुनः ॥ गजवेगेन संभ्रांतौ । दंपती तावपश्यतां ॥ ११ ॥ इति कर्तव्यतामूढो । राजा न्यग्रोधमग्रतः ॥ एकमालोक्य दयितां । जगादोत्पन्न-

धीरिति ॥ १२ ॥ देव्यस्य वटशाखस्या—धस्ताद्धस्ती यदा व्रजेत् ॥ तदा त्वमाशु प्रालंब—मालंबे-
था मया सह ॥ १३ ॥ इत्यचिंतयतां याव—दिमौ नृपतिदंपती ॥ तावद्वटस्य तस्याधः । सिंधुरः
प्रापदेव सः ॥ १४ ॥ लब्धलक्षो ललंबे च । तत्प्रालंबमिलापतिः ॥ राज्ञी तूद्यमते याव—त्ताव-
देवाव्रजद्गजः ॥ १५ ॥ न्यग्रोधादुत्ततारोच्चैः । प्रमोदाच्च महीपतिः ॥ प्रापच्च पृष्ठतः सैन्यं । शोक-
स्तस्याग्रतः पुनः ॥ १६ ॥ विलपन् विपुलापालो—ऽरोदीद्बालो यथा ततः ॥ वियोगकारणं देव्या
। निःश्वासैर्ज्ञापयन् दृढं ॥ १७ ॥ हा पद्मवदने पद्म—नेत्रे पद्मकरक्रमे ॥ क मया सद्मपद्मे त्वं ।
पद्मावति विलोक्यसे ॥ १८ ॥ नामंत्ररिरपासीत्त्वां । ह्रियमाणामिभेन यः ॥ स कथं पास्यति क्षो-
णी—मधमो दधिवाहनः ॥ १९ ॥ अंतर्वत्नीं प्रवास्य त्वा—मेकपत्नीं प्रियेऽधुना ॥ स्वमुखं दर्शयि-
ष्यामि । कथं कथमहं जने ॥ २० ॥ प्रवासितप्रियाशोक—पतितं रघुराजवत् ॥ अमात्यास्तमुपे-
त्याशु । सानुरोधमबोधयन् ॥ २१ ॥ मामा देव रुदन्नेव—मबलाकृत्यमाश्रय ॥ वैधुर्ये यदि धीरेषु ।
धैर्यं कुत्रोपयुज्यतां ॥ २२ ॥ तद्धैर्यमवलंबस्व । केतनं पुंव्रतस्य यत् ॥ पुरोमेहि निजां देवी । वि-
लोक्यानेष्यते ततः ॥ २३ ॥ प्रधानपुरुषैरेवं । बोधंबोधमनेकधा ॥ कथंकथमपि क्ष्मापो । राजधा-

नीमनीयत ॥ २४ ॥ पद्मावती तु करिणा । कर्मणेव पुराभुवा ॥ प्रावेश्यत महाभीमा—मथापद- मिवाटवीं ॥ २५ ॥ करी खेदपरीतोऽत्रा—विशदेकं महासरः ॥ वायुवेगागतस्तोय—मिवादातुं घनोऽर्णवे ॥ २६ ॥ निममज्ज गजस्तत्र । साहसीव सरोंबुनि ॥ देवी तु वेतसं पुण्य—मिवाप्योदतरत्ततः ॥ २७ ॥ सरःपालीमथारुह्या—टवीं वीक्ष्य विमानुषां ॥ रुरोद रोदयंती सा । प्रस्वनैः पर्वतानपि ॥ २८ ॥ हा तात हहहा मातः । सुतेयं वामभाग्यिनी ॥ कैवर्तेनेव शफरी । कृता धातामृताद्बहिः ॥ २९ ॥ धातर्निरपराधाहं । कथं भर्त्रा वियोजिता ॥ प्रालंबाज्ञाप्रमादिन्या । ममागो व्यक्तमेव वा ॥ ३० ॥ स्वशीलरत्नरक्षार्थ—मसवो दुस्त्यजा न मे ॥ गर्भरत्नमयो न्यास—स्त्वार्यपुत्रेण दुस्त्यजः ॥ ३१ ॥ तदहं दैव रे शंस । क यामि करवाणि किं ॥ इहानयार्यपुत्रं मे । तं वा प्रापय मां लघु ॥ ३२ ॥ अथवा प्रार्थनादैन्या—दलं मे वीरयोषितः ॥ सत्वैकमनसो यस्माद् । दुर्दैवमपि नश्यति ॥ ३३ ॥

इति धैर्यमथालंब्य । प्रक्षाल्य मुखमंजसा ॥ प्रत्याख्याय च सागारं । सिंहीवासौ वनेऽचरत् ॥ ॥ ३४ ॥ यावद्दिशैकया दूरं । सा जगाम महासती ॥ तावत्तापसमण्डाली—दृश्वासमिव देहिनं ॥

॥ ३५ ॥ नीता तेनाश्रमेऽनंसी—दियं कुलपतिं ततः ॥ पृष्टा तेनापि पित्रेवा—तुल्यवात्सल्यया गिरा ॥ ३६ ॥ वत्से कासि किमेकासि । कस्यासि खलु नंदिनी ॥ अमरी किन्नरी विद्या-धरी किं वा सरीसृपी ॥ ३७ ॥ सोचेऽहं चेटकोर्वीश-सुता चंपेशगेहिनी ॥ मत्तेभेनापहृत्येह । पातिता विजने वने ॥ ३८ ॥ ततः कुलपतिः प्राह । चेटकस्यास्म्यहं सुहृद् ॥ तत्प्राप्ता पितृगेहे त्वं । वत्से मास्म विखिद्यथाः ॥ ३९ ॥ तेनेति गदिता वन्य—वृत्तिः सा तापसीष्वथ ॥ न्यवात्सर्षान्विता वर्षा-चातुर्मासीमिह स्थिता ॥ ४० ॥ अन्यदाचिंतयदियं । काहं सम्यक्त्वनिर्मला ॥ क्व च मिथ्यात्वपंकेऽस्मिन् । पातो धिक्कर्मवैवशं ॥ ४१ ॥ वरं वनं वरं भैक्ष्यं । वरं प्राणविमोचनं ॥ मिथ्यात्विषु न तु स्थातु—मार्हत्याया ममोचितं ॥ ४२ ॥ इत्यसौ व्यवहारेण । नत्वा कुलपतिं जगौ ॥ अस्थां वर्षाचतुर्मासी—माश्रमे भवतामहं ॥ ४३ ॥ नागात्वनुपदं कश्चि—दगम्येऽत्र वने मुने ॥ तद्वसंतीं भुवं यामि । यदि कोऽपि मिलेन्मम ॥ ४४ ॥ तन्मार्गदर्शकं कंचि—न्मुनिमादिशताद्य मे ॥ तथेति गदितः सोऽस्यै । शिष्यमेकमथार्पयत् ॥ ४५ ॥ सोऽप्येत्य कियतीं भूमिं । जगौ पद्मावतीमिति ॥ अतःपरमगम्या नः । पृथ्वी हलविलेखिता ॥ ४६ ॥ ऋजुरेष प्रयातीतः । पंथा दंतपुरं प्रति

॥ भद्रे तद्याहि पंथानः । शिवास्ते याम्यहं गुरुं ॥ ४७ ॥ विसृज्य तमथो पद्मा—वती यांती शनैः
शनैः ॥ सायं दंतपुरोपांते । प्राप प्रेतवनं महत् ॥ ४८ ॥ प्रत्याख्यायात्र सागारं । लतागारे क्वचि-
त्कृता ॥ स्मृत्वा देवान् गुरून् गुर्वि—ण्यशेत श्रमवत्यसौ ॥ ४९ ॥ नृत्यदुत्तालवेताल-मालाकिल-
किलारवैः ॥ शृगालादिरुतैर्भीते—वास्था निद्रानशन्निशि ॥५०॥ तत्तद्विभीषिकाभीते-राकुला सा
कुलांगना ॥ कृष्णाष्टमीव शीतांशुं । निशीथेऽसूत नंदनं ॥ ५१ ॥ तद्देहविभयैवैतं । पश्यंती स
तमस्यपि ॥ आशशासांकमारोप्य । स्नपयंत्यश्रुवारिभिः ॥ ५२ ॥ जात त्वमाजने रेवा-रण्यभूत इव
स्वयं ॥ वर्धेथा मंदभाग्याया—स्त्वयि मे न हि योग्यता ॥५३॥ विभातायां विभावर्यां । विभावर्या-
शुकावृतं ॥ विधाय सास्य कंठेऽधा-दूर्मिकां दाधिवाहिनीं ॥ ५४ तमथो वनदेवीनां । भलयित्वा
लतागृहे ॥ वपुः क्षालयितुं सागा-त्तडागांतस्तभिभविः ॥ ५५ ॥ क्षालयित्वांगमभ्येति । यावदेषा
लतागृहं ॥ स्मशानपालश्चांडाल-स्तावदत्रे समाययौ ॥ ५६ ॥ बालस्तेन लतागेहे । देहेनार्क इवा-
परः ॥ दृष्टः प्रहृष्टमनसा । कराभ्यामुदपाटि सः ॥ ५७ ॥ ममापुत्रस्य पुत्रोऽयं । वनदेवीभिरर्पितः
इत्युत्तालः स चांमाल—श्चचाल स्वगृहंप्रति ॥ ५८ ॥ लतांतरितया देव्या । तन्निरूप्य व्यचिंत्यथ

॥ यदुत्तरति शृंगाग्र्यां । शृंखला तद्वरं खलु ॥ ५९ ॥ निर्विण्णाहमतीवास्मा—ज्ज्ञानादुःखभुवो भवा-
त् ॥ छित्वा केशांश्चुटिष्ये त—द्दीक्षाग्रहणकर्मणा ॥ ६० ॥

विमृश्यंतीति तत्पृष्टे । लग्ना ह्यध्वनि धेनुवत् ॥ चांडालस्त्वविशद्वाट—धानकाख्यं स्वपाटकं ॥
॥ ६१ ॥ प्रिये ते निरपत्यायाः । सुतरत्नमुपायनं ॥ ब्रुवाण इति पाणस्तं । स्वपत्न्यै बालमर्पयत् ॥
॥ ६२ ॥ इदं पद्मावती दृष्ट्वा—दासीन्यादित्यचिंतयत् ॥ अहो विचित्रता कापि । कर्मणामवलो-
क्यते ॥ ६३ ॥ क्व संभवः शिशोरस्य । नृभुजां विमले कुले ॥ क्व च श्वपचगेहेऽस्मिन् । विश्राम-
श्च कलंकदः ॥ ६४ ॥ इत्युत्तेजितवैराग्या । सा प्रविश्य पुरांतरा ॥ व्रतं निवृत्तकामादात् । प्रवर्ति-
न्याः पदांतिके ॥ ६५ ॥ गुरूपास्तिमुरीकृत्य । नित्यमेवोत्तमं तपः ॥ तन्वती मोक्षसाधीयं । साध्वी-
यायोचितं श्रुतं ॥ ६६ ॥ दुस्त्यज्यापत्यमोहेन । मोदकादि कदाचन ॥ पुत्रायोपनयंती सा । चक्रे
तामंत्यजां सखीं ॥ ६७ ॥ बालकः स तु पूर्वस्मिन् । भवेऽभूत्क्षपकाग्रणीः ॥ आदाय स्वांशुकाद्यू-
काः । परवस्त्रेषु चाक्षिपत् ॥ ६८ ॥ तपःप्रभावाज्जज्ञे भू—पतेस्तनुभवस्ततः ॥ चांडालपुत्रकश्चाभू-
दुत्तमोऽहमिति स्मयात् ॥ ६९ ॥ परवस्त्रेषु चात्मीय—यूकाक्षेपविपाकतः ॥ भवेऽस्मिन्नुदियायास्य

। कंडूरुद्दंमवेदना ॥ ७० ॥ स पंचवर्षदेशीयः । कोमंश्चांडालपाटकात ॥ नृपीभूय करे कंडू—कं-
डूयनमयाचत ॥ ७१ ॥ अमीभिस्तच्च कुर्वाणै—र्डिंभोऽयं दाधिवाहनिः ॥ करकंडुरिति स्वैर—म-
भ्यधीयत दारकैः ॥ ७२ ॥ नाम्नामुनैव विख्यातो । वर्धमानः क्रमादसौ ॥ प्रपेदे यौवनं नाग—
पोतः कलभतामिव ॥ ७३ ॥ अन्यदा तद्वने काय—चिंतार्थं व्रतिनावुभौ ॥ आगतौ लघुमाचष्ट ।
स्थिरधीः स्थविरस्तयोः ॥ ७४ ॥ धीमन् वंशः प्रवर्धिष्णु—र्नवपर्वाऽस्ति योऽग्रतः ॥ स्वग्राहकस्य भवि-
ता । दशपर्वा स राज्यदः ॥ ७५ ॥ तद्वाक्यं शुश्रुवे वृक्षां—तरेण करकंडुना ॥ बटुनैकेन चोत्खन्य
। वंशोऽसौ गृहितोऽन्यदा ॥ ७६ ॥ दृष्ट्वा च करकंडुस्त—माच्छिद्यादत्त तत्करात ॥ मडूमेवंशमादाय
। क्व गंतासीति विब्रुवन् ॥ ७७ ॥ राजाज्ञादानपूर्वं तं । धृत्वाथ करणेऽनयत् ॥ विप्रोऽधिकारिणाम-
न्या—यिनं चाकथयत्तथा ॥ ७८ ॥ साक्षेपमूचिरे ते तं । कथं रे मलिन त्वया ॥ विप्रादाछेदि वं-
शोऽय—मस्मै प्रत्यर्प्यतां द्रुतं ॥ ७९ ॥ सोऽब्रवीत् किं मुधा दानीं । स्मशानस्य ददाम्यहं ॥ तदेनं
तद्भुवं वंशं । विप्रचौराय नार्पये ॥ ८० ॥ अथाधिकारिणः प्रोचु—स्तथाप्यस्मद्गिरार्पय ॥ स प्राहा-
न्यान् प्रयच्छामि । म्रियमाणोऽप्यमुं न तु ॥ ८१ ॥ ते प्रोचुरमुना राज्यं । किं ते शठ भविष्यति ॥

सोऽब्रवीदेवमेवैत-न्नान्यथा महतां गिरः ॥ ८२ ॥ हसंतस्ते पुनः प्रोचु-र्यदा ते राज्यमेष्यते ॥ य-
छेस्याः पदे ग्राम-मस्मै देया द्विजाय तत् ॥ ८३ ॥ ओमित्युदीर्य करणात् । करकंडू स्याद्यात् ॥
विलक्षस्तु द्विजः स्थानं । तद्वधार्थं समुद्यतः ॥ ८४ ॥ करकंडुस्तु तद् ज्ञात्वा । पितृभ्यां सहितो
निशि ॥ निरीय कांचनपुरं । ययौ श्रांतस्त्विहास्वपत् ॥ ८५ ॥ इतश्च तन्नृपोऽकस्मा-दपुत्रः पंच-
तां गतः ॥ दिव्यानि पंच तत्काल-मध्यवास्यंत मंत्रिभिः ॥ ८६ ॥ भ्रांत्वा पुरांतरामूनि । बहिस्त-
त्पार्श्वमाययुः ॥ असौ गजेन गर्जित्वा । पुण्येनेवाभ्यषिच्यत ॥ ८७ ॥ अश्वोऽथाहेषत छत्रं । व्य-
कसत् कीर्तिवद्दिवि ॥ पुरोधा मंत्रमपठ-च्चामरे चापि चेलतुः ॥ ८८ ॥ पुरप्रवेशं तस्याथ । करकं-
डोर्महीपतेः ॥ तदा संभूय नायच्छं-श्चांडालोऽयमिति द्विजाः ॥ ८९ ॥ करकंडुस्ततो वंश-रत्नं प-
स्पर्श पाणिना ॥ तत्र ज्वलति नेशुश्च । प्रत्यूहा इव ते द्विजाः ॥ ९० ॥ नृपासनमथासीनः । पौ-
रप्रकृतिभिर्नतः ॥ तत्राधः स्थापयित्वा स । पितरौ तावचोदयत् ॥ ९१ ॥ दधिवाहनपुत्रेण । राज्ञा-
थ करकंडुना ॥ वाटधानकवास्तव्या-श्चांडाला ब्राह्मणीकृताः ॥ ९२ ॥ कंचूलकाख्यमेतेभ्यो । म-
हास्थानमयं ददौ ॥ ईश्वरेच्छा हि यत्कृत्य-विधावस्खलिता खलु ॥ ९३ ॥ तेनैत्य बटुना चंपा-

सन्नं ग्राममथार्थितः ॥ स्वग्राममव्यत्ययेनैष । लेखं चंपेंद्रवे ददौ ॥ ९४ ॥ अनात्मनीनश्चांडाल—
श्चास्मान् लेखेन भाषते ॥ इति चंपेंद्रुराक्रोशन् । लेखं त्वस्फाटयत्क्रुधा ॥ ९५ ॥ करकंडुरपि ज्ञा-
त्वा । तत्कोपाटोपभीषणः ॥ दधिवाहनमुच्छेत्तुं । तदानीमभ्यषेणयत् ॥ ९६ ॥ देशदाहोच्छ्रितैर्धूमैः
। परागैश्च बलोध्धृतैः ॥ द्विषतां द्वैधमप्याशा । रुंधंश्चंपामयं ययौ ॥ ९७ ॥ वारीमिव गजं दृप्त्वा
। नगर्यां दधिवाहनं ॥ तद्बहिर्वेष्टमाधाय । करकंडुरथ स्थितः ॥ ९८ ॥ पद्मावत्यपि मत्वेति । मि-
थः संधिकृते तयोः ॥ प्रवर्तिनीं तथाख्याना—दापृच्छ्यागात्तदंतिकं ॥ ९९ ॥ नता तेनाभ्यधाद्वत्स
। कस्ते तातेन विग्रहः ॥ कथं तातोऽयमित्युक्ता—मुना तां युक्तिमाह सा ॥ १०० ॥ सोऽपृच्छत्पि-
तरौ प्रीत—स्तावप्येवमशंसतां ॥ मुद्रिकांकावलीरत्ना—भिज्ञादर्शनपूर्वकं ॥ १ ॥ पद्मावतीं नृपोऽ-
थाह । यद्यप्यस्तीदमंबिके ॥ तथापि नाभिमानेना—पसर्तुमधुना सहे ॥ २ ॥ ततः पद्मावती चं-
पा—मध्येऽगात्पतिमंदिरे ॥ रुदतीभिर्नताभ्येत्य । दासीभिरुपलक्ष्य सा ॥ ३ ॥ मत्वा राजापि ता-
मेत्य । साश्रु नत्वा निवेश्य च ॥ पप्रच्छ किं तदा जातं । साह यद्बहिरागतं ॥ ४ ॥ निर्ययावथ चं-
पेंद्रुः । प्रीत्या पुर्यां द्रुतं तदा ॥ करकंडुस्त्वनंसीत्त—मभ्येत्य क्षुद्रदंगकैः ॥ ५ ॥ चंपेंद्रोऽप्यालि-

लिंगेन—मभिषिच्य मुदश्रुभिः ॥ चंपाराज्यं च दत्वास्मै । प्राव्रजदत्रजिनं द्विषन् ॥ ६ ॥ करकंडु-
रपि क्षोणीं । प्रशासन् प्रियगोकुलः ॥ विलोक्य गोकुले श्वेतं । वृषमेकमपूपुषत् ॥ ७ ॥ स्वर्णशृं-
गखुरो रत्न—किंकिणीवानयं महान् ॥ वृषस्नानपरानात्त—दिक्कान् हिंकारवैर्व्यधात् ॥ ८ ॥ राजा
दिग्विजयं कृत्वा—न्यदायातो ददर्श तं ॥ घट्यमानं परैः शृंगै—र्वृषभैस्तं जरद्गवं ॥ ९ ॥ वृषभं तं
तथावस्थं । दृष्ट्वा भूमिपतेर्द्रुतं ॥ जले तैलमिवानित्य—भावना प्रासरत्तदा ॥ १० ॥ विभवो वैभवं
बंधु—युवतीयौवनादिकं ॥ सर्वमेतच्चलं चंडा—निलोद्धूतार्कतूलवत् ॥ ११ ॥ स्वयं बुद्ध्वेति सा-
म्राज्य—मुत्सृज्य तृणखंडवत् ॥ परिव्रज्यामुपादत्त । सिद्धसाक्षिकमेव सः ॥ १२ ॥ देवतार्पितलिं-
गोऽयं । द्वादशांगीधरः स्वयं ॥ विजहार धरापीठे । कर्मसामजकेसरी ॥ १३ ॥ एतत्ततो जगदनि-
त्यतयाभिनाट्य—मानं विलोकितुमिवाश्रितकेवलश्रीः ॥ प्रत्येकबुद्धमुनिराट् करकंडुनामा । धामा-
ध्यरोहदपुनर्भवनामधेयं ॥ १४ ॥ इति श्रीकरकंडुकथा ॥ हल्लविहल्लौ श्रेणिकसुतौ श्रीवीरशिष्यी-
भूय निर्वृत्तौ, शालमहाशालौ तु पृष्ठचंपायां राजयुवराजौ श्रीवीरात्प्रबुध्य प्रव्रज्य च मोक्षं गताविति
विदितं, सिंहगिरिस्तु श्रीवज्रस्वामिकथायामुपदिष्ट एव, आर्यमहागिरिआर्यसुहस्तिनौ स्थूलभद्रकथा-

यां तद्विष्यौ कथितपूर्वौ, आर्यरक्षितस्तु वज्रस्वामिकथायामुक्तः, सांबप्रद्युम्नौ तु कृष्णसुतौ श्रीनेमेः
शिष्यीभूय शत्रुंजये सिद्धौ प्रसिद्धमेतत्. संप्रति कूर्मापुत्रो यथा—

पुरासीद्दुर्गमपुरे । द्रोणो नाम नरेश्वरः ॥ द्रुमादेवीभवश्चास्य । सुतोऽभूद् दुर्लभाभिधः ॥
॥ १ ॥ स तु दुर्ललितः प्रासान् । गृहे सेवादिकर्मणे ॥ लोठयन् कंदुकीकृत्य । चेटांश्चिक्रीड सर्व-
दा ॥ २ ॥ अन्यदा दुर्गिलोद्याने—ऽभिधानेन सुलोचनः ॥ तत्रैत्य समवासार्षीत् । केवली सूरि-
सत्तमः ॥ ३ ॥ तत्र भद्रमुखीनाम । यक्षिण्येकाभवद्दने ॥ बहुशालवटस्याधो—भूमिभवनवासिनी ॥
॥ ४ ॥ केवलालोकभास्वंतं । सा समेत्य सुलोचनं ॥ भक्त्या प्रणम्य पप्रछ । पद्मकोशीकृतांजलिः
॥ ५ ॥ अहं मानवतीनाम । मानुष्यपि पुरा प्रभो ॥ वेलंधरसुरस्यासं । सुवेलाख्यस्य वल्लभा ॥६॥
तादृक्पुण्यक्षये स्वस्या—युःक्षये चागते समं ॥ मृत्वा भद्रमुखीनाम—यक्षिण्यहमिहाभवम् ॥७॥
सुवेलः कथमास्ते स । स्वामिन्निति निवेदय॥ अथाख्यत्केवली भद्रे । च्युत्वा स तदनंतरं ॥ ८ ॥
सुतो द्रोणनृपस्यास्ते । जातस्ते वल्लभः खलु ॥ आख्यया दुर्लभोऽप्येष । सुलभोऽत्रैव पत्तने
॥ ९ ॥ श्रुत्वेति यक्षिणी हृष्टा । नत्वा केवलिनं ततः ॥ कृत्वा मानवतीरूपं । सा ययौ दुर्लभांतिकं

॥ १० ॥ मानुषोद्भावणक्रीडा-परं तं वीक्ष्य सा जगौ ॥ निःसत्वैः किममीभिश्चे—च्चित्रं मामनुधा-
व तत् ॥ ११ ॥ डुर्लभोऽपि निशम्येति । द्रुतं तामन्वधावत ॥ धावंतो तत्पुरः सापि । व्यामोह्या-
न्यान् वने ययौ ॥ १२ ॥ तत्र सा बहुशालाख्य—वटकोटरवर्त्मना ॥ गता पातालमन्वायि । तेन
सूचीव तंतुना ॥ १३ ॥ भूपभूर्भुवनं तत्र । मणीमयमलोकत ॥ आदाय सारमर्केन्दु—रोचिषामिव
निर्मितं ॥ १४ ॥ अथास्मै विस्मयस्मेर—लोचनाय सुलोचना ॥ निवेशिताय पल्यंके । सार्घपाद्या-
दि निर्ममे ॥ १५ ॥ ततो मडमुखी स्मेर—मुखी प्रांजलिराह तं ॥ दीपालीदिनवन्नाथ । वीक्षितो-
ऽसि चिरान्मया ॥ १६ ॥ तामालोक्य कुमारोऽपि । क्वापीयं वीक्षिता मया ॥ विमृश्यन्निति संस्मृत्य
। जातिं तामन्वरज्यत ॥ १७ ॥ पुद्गलानशुभान् हत्वा । कृत्वा च शुभपुद्गलं ॥ तमथारंस्त सा स्ने-
हा—द्गुणस्यूतेव तत्तनौ ॥ १८ ॥ इतः कुमारपितरौ । ज्ञात्वा तद्गमनं शुचा ॥ विश्वगप्यगवेषिष्टां ।
नालभेतां च त्वं क्वचित् ॥ १९ ॥ तयोः पुत्रवियोगार्ति—विमुक्ताशनपानयोः ॥ तदैव मंत्रिणा
प्रोक्तं । केवल्यागमनं मुदा ॥ २० ॥ ततस्तौ प्रावृषेण्याब्दा—विवाश्रुजलवर्षिणौ ॥ गत्वा केवलि-
नं नत्वो-पविश्य तमपृच्छतां ॥ २१ ॥ भगवन् कुलदीपो नौ । भानुर्नूनभसोरिव ॥ कुमारो डुर्लभः

कास्ति । कृपां कृत्वा निवेदय ॥ २२ ॥ केवली प्राह यक्षिण्या—पहृतो वां कुमारकः ॥ कथं तावू-
चतुः केव—व्याख्यचाखिलमेतयोः ॥ २३ ॥ ऊचाते तौ कदा नौ स । मिलिष्यत्याह केवली ॥
यदीहैष्याम्यहं भूय—स्तदा वां स मिलिष्यति ॥ २४ ॥ श्रुत्वेत्यथैतौ संविग्नौ । डुर्लभानुजमंगजं
॥ राज्ये निवेश्य व्रजाते । व्रतं केवलिसंनिधौ ॥ २५ ॥ समं केवलिना देशा—नुदेशं तौ विज-
ह्रतुः ॥ तप्यमानावधीयानौ । सहमानौ परीषहान् ॥ २६ ॥ विहारक्रमयोगेन । कदाचिद्दुर्गमं पुरं
॥ केवली पुनरप्येत्य । डुर्गिलोद्यानमास्थित ॥ २७ ॥ यक्षिण्यवधिना मत्वा । कुमारस्यायुरल्पकं ॥
सागत्य सादरं नत्वा—पृच्छत्केवलिनं तदा ॥ २८ ॥ प्रभो वर्धयितुं शक्यं । स्वमल्पायुः कथंचन ॥
केवली प्राह नार्हन्तो—ऽप्यायुः संधातुमीशते ॥ २९ ॥ निरुत्साहा करश्रस्त—सर्वस्वेवाथ यक्षिणी ॥
गता स्वं भवनं पृष्टा । सा कुमारेण सादरं ॥ ३० ॥ प्रिये किमसि खिन्नेव । साब्रवीदेवमेव हि ॥
ततोऽपि साग्रहं पृष्टा । साख्यत्केवलिभाषितं ॥ ३१ ॥ संविग्नोऽसावथ प्राह । द्रष्टव्यः केवली स मे
॥ इत्याग्रही स नीतश्च । यक्षिण्यापि तदंतिके ॥ ३२ ॥ नत्वा केवलिनं सोऽपि । न्यषीदत्तत्पदां-
तिके ॥ तं वीक्ष्य पितरावस्या—रोदिषातां च मोहतः ॥ ३३ ॥ केवली प्राह तं वत्स । वंदस्व पि-

तराविमौ ॥ किमेतदिति स प्रोचे । केवल्याख्यच्च तत्तथा ॥ ३४ ॥ ततः कुमारः सोत्कंठं । प्राग्व-
दालिंग्य तौ रयात ॥ प्रवृत्तो रोदितुं कृच्छ्रा–द्यक्षिण्यायमवार्यत ॥ ३५ ॥ देवदूष्यांचलेनास्य । सं-
प्रमार्ज्य दृशौ तदा ॥ न्यवेश्यत स पादाब्ज—मूले केवलिनोऽनया ॥ ३६ ॥ केवल्यपि हि संसा-
र–विषनाशसुधारसं ॥ विदधे प्रतिबोधांगा—वेशनं धर्मदेशनं ॥ ३७ ॥ तन्निशम्य चिरं सम्यग् ।
यक्षिणी श्राविकाभवत् ॥ तामापृच्छ्य कुमारस्तु । भेजे गुर्वंतिके व्रतं ॥ ३८ ॥ तप्यमानस्तपस्तीव्रं
। सहमानः परीषहान् ॥ अधीयानः कुमारर्षिः । स चतुर्दशपूर्व्यभूत् ॥ ३९ ॥ कालं कृत्वा यथाका-
ल—ममी पितृकुमारकाः ॥ महाशूक्रेऽभवन् देवा । विमाने मंदिराभिधे ॥ ४० ॥ यक्षिणी सापि
वैशाल्यां । भूत्वा स्त्री कमलाभिधा ॥ तत्राभूत्तद्भवेष्टेन । भ्रमरेण समं पुरः ॥ ४१ ॥ इतश्चास्ति
पुरं राज–गृहं लीलागृहं श्रियः ॥ राजा महेंद्रसिंहोऽभू–त्तत्र सिंह इवौजसा ॥ ४२ ॥ कूर्मादेवीति
राज्ञ्यस्य । तस्याः कुक्षाववातरत् ॥ च्युत्वा कुमारदेवोऽथ । भवनस्वप्नसूचितः ॥ ४३ ॥ स्वप्नं तं भ-
र्तुराचख्यौ । कूर्मादेवी निशात्यये ॥ राजा व्याख्यच्च ते देवि । भावी श्रीभवनं सुतः ॥ ४४ ॥ त-
तोऽस्या हृष्टमनसो । वहंत्या गर्भमुत्तमं ॥ धर्मागमश्रुतौ जात–सौहृदो दोहदोऽभवत ॥ ४५ ॥ प्र-

त्येकं भट्टमुख्यांश्चा—हूय दर्शनिनोऽन्वहं ॥ तत्तद्धर्मागमं राज्ञीं । श्रावयामास नृपतिः ॥४६॥ स्व

स्वं धर्मागमं ते तु । पंचाप्युच्चैर्व्यपंचयन् ॥ तं तु हिंसात्मकं राज्ञी । श्रावं श्रावमखिद्यत ॥ ४७ ॥

ततो जैनान्मुनीन् भक्त्या—हूय तद्धर्मदेशनां ॥ श्रावयामास वसुधा—वासवस्तां क्षमाशचीं ॥

॥ ४८ ॥ जंतुजातदयारूपं । शृण्वंती सा जिनागमं ॥ संसारस्थापि मेने स्वं । महानंदपदे गतं ॥

॥ ४९ ॥ अथो नवसु मासेषु । दिनेष्वर्धाष्टमेषु च ॥ राज्ञ्यसूत सुतं कल्प—द्रुमवन्मेरुचूलिका

॥ ५० ॥ राज्यांगानि विमुच्यान्य—पूर्णपात्रं वितन्वता ॥ तस्य जन्मोत्सवश्चक्रे । सुमहीयान् मही-

भुजा ॥ ५१ ॥ ततः सूनुरसौ राज्ञा । महोत्सवपुरस्सरं ॥ दोहादानुगुणं धर्म—देव इत्यभिधीयत

॥ ५२ ॥ कूर्मापुत्र इति ख्यातः । पुनरुल्लापनैरयं ॥ धात्रीभिः पंचभिः पाल्य—मानः शिशुरवर्धत

॥ ५३ ॥ जनबंधनखेलातः । पुरोपार्ज्यत कर्म यत् ॥ खर्वनाम्नामुना जज्ञे । द्विहस्तोच्चवपुस्तु सः ॥

॥ ५४ ॥ कलाचार्याश्रयादेव । स कलाः सकला अपि ॥ स्वत एवापदादर्शो । मृजामात्रादिव प्र-

भां ॥ ५५ ॥ आसन्नमुक्तचारित्र-वशादेव वशी भृशं ॥ निकटे पल्वलादीनां । शाद्वलाः स्युर्न किं

द्रुमाः ॥ ५६ ॥ विमुखो विषयेब्वायां । यौवनस्थोऽप्यनूदयं ॥ कल्पते पशुधर्माय । पशुरेव न ता-

दृशः ॥ ५७ ॥ हर्षी सैद्धांतिकर्षीणां । सविधं न मुमोच सः ॥ किं चित्रमथवा योऽभू-द्गर्भस्थोऽप्यागमस्पृहः ॥ ५८ ॥ शृण्वानोऽन्वहमेवासौ । यतिभ्यो जैनमागमं ॥ श्रुतपूर्वमिदं क्वापी-त्यूहया जातिमस्मरत् ॥ ५९ ॥ ततश्च क्षपकश्रेणी-रूढोऽज्ञानतमोऽव्ययात् ॥ स जातकेवलालोको । लोकालोकमलोकत ॥ ६० ॥ व्यवहारमलंकर्तुं । गृहीष्यामि यदि व्रतं ॥ तदिमौ पितरौ वक्षः-स्फोटनाद्धि मरिष्यतः ॥ ६१ ॥ अज्ञातवृत्त्या तिष्ठे त-देतयोः प्रतिबोधये ॥ इत्यस्थाद्भगवान् कूर्मा-पुत्रः सदन एव सः ॥ ६२ ॥ इतो महाविदेहोर्व्या-मस्ति स्वस्तिनिकेतनं ॥ विजये मंगलावत्यां । नगरी रत्नसंचया ॥ ६३ ॥ देवादित्योऽभवत्तस्या—मादित्य इव तेजसा ॥ चक्रीति विदितः कामं । विजयेन महीभुजां ॥ ६४ ॥ जगत्यां विहरन्नर्हन् । जगदुत्तमसंज्ञितः ॥ तदैत्य समवासार्षीत् । पुरीपरिसरे वने ॥ ६५ ॥

तं धर्मचक्रिणं चक्र—वर्ती वंदितुमाययौ ॥ तद्विधाय यथास्थानं । निषसाद कृतांजलिः ॥६६॥ इतो द्रोणद्रुमादेव्यौ । कमलाभ्रमरौ च ते ॥ च्युत्वा भरतवैताढ्ये—ऽभवन् विद्याधरांगजाः ॥ ॥ ६७ ॥ चारणश्रमणीभूय । चत्वारोऽपि समाहिताः ॥ जगदुत्तमतीर्थेशं । तेऽपीयुर्वंदितुं तदा ॥

॥ ६८ ॥ नत्वा विभुं निषण्णेषु । तेषु पप्रच्छ चक्रभृत ॥ कुतोऽमी नाथ चत्वारो । धर्मांशा इव चा-
रणाः ॥ ६९ ॥ अमी भारतवैताढ्या—न्नाथोक्ते चक्रभृज्जगौ ॥ भरते तीर्थकृच्चक्री । केवली वास्ति
संप्रति ॥ ७० ॥ स्वाम्यूचे तीर्थकृच्चक्री । केवली चात्र कोऽपि न ॥ किंतु राजगृहे कूर्मा—पुत्रोऽस्ति
केवली गृही ॥ ७१ ॥ चक्र्यूचे स व्रती किं न । स्वाम्यूचेऽवद्यवर्जितः ॥ गृहेऽस्ति प्रतिबोधाय ।
पित्रोर्दुःप्रतिकारयोः ॥ ७२ ॥ श्रुत्वेति चारणाः प्रोचुः । स्वामिन् केवलिनो वयं ॥ भविष्यामो न
वा स्वामी । प्रोचे भद्रा भविष्यथ ॥ ७३ ॥ ते तु प्राह कदा नाथ । नाथोऽप्याह महाशयाः ॥ कू-
र्मापुत्राद्यदा विस्थै—तन्मंदिरकथानकं ॥ ७४ ॥ ततस्ते विस्मिता नत्वा । स्वामिनं चारणर्षयः ॥ कूर्मा-
पुत्रं गता याव—त्तं नत्वा मौनमासिरे ॥ ७५ ॥ तावच्च तेन ते प्रोक्ता । महासत्वा जिनेन वः ॥
नेदं मंदिरमाख्यायि । महाशुक्रगतं हि तत् ॥ ७६ ॥ श्रुत्वेति तेऽपि संजात—जातिस्मरणवर्त्मना
॥ क्षपकश्रेणिमासाद्य । केवलज्ञानिनोऽभवन् ॥ ७७ ॥ भूयस्तीर्थंकरं गत्वा । तेऽस्थुः केवलपर्षदि
ततो जिनं जगादेंद्रो—ऽधुना किं नानमन्नमी ॥ ७८ ॥ स्वाम्यूचे केवलं कूर्मा—पुत्रादेषामजाय-
त ॥ शक्रोऽथाह कदा कूर्मा—पुत्रोऽसौ प्रव्रजिष्यति ॥ ७९ ॥ स्वाम्यूचे सप्तमे ह्यस्मा—द्दह्नि या-

मे तृतीयके ॥ भविष्यति हरे कूर्मा—पुत्रः श्रमणकेवली ॥ ८० ॥ इतश्च भगवान् कूर्मा—पुत्रः स्वपितरौ क्रमात् ॥ प्रबोध्य प्राव्रजत्तौ च । प्रव्रज्यानुत्तरं गतौ ॥ ८१ ॥ कूर्मापुत्रो भगवा—नपि सुरसंदोहपूजितो भुवनं ॥ परितः प्रबोध्य कैरव—मिव शिवमूर्धानमिंडुवत्प्राप ॥ ८२ ॥ इति श्री-कूर्मापुत्रकथा ॥ भद्रगुप्तस्तु वज्रस्वामिकथायामुपदिष्टः. अथ बाहुल्येन मुनिमुपश्लोकयति—

॥ मूलम् ॥—विसमभवभमणनासण । जिणसासणगयणमंडणमियंका ॥ अन्नेवि महामुणिणो । गुणिणो मम दिंतु सिद्धिसुहं ॥ ५४ ॥ व्याख्या—धन्याद्या मुनयस्तावत्केचनापि नामतोऽभिहिताः, अन्येऽपि 'समणहकोडिसहस्सदुन्न थुणिजिय निच्चं विहाण' इति वाक्यात्पंचदशकर्मभूमिषु ये केचनापि च वर्त्तंत इत्यपरेऽपि गुणिनः, गुणाः क्षमाद्याः संति येषां ते तथा, महामुनयो महर्षयः मम दिंतु सिद्धिसुहं मह्यं सिद्धिसुखं ददतु. किं विशिष्टास्ते? विसमत्ति विषमः स्थपुट उच्चनीचकुलाद्यारोहावरोहक्रमेण विसंस्थुलो योऽसौ भवस्तत्र भ्रमणं तत्तथा, तन्नाशयति निराकरोति तत्तथा, तच्च तज्जिनशासनमर्हन्मतं तदेव निर्मलत्वान्महत्वाच्च गगनमाकाशं तस्य मंडनाय मृगांका दुःकर्मसंतप्तजंतुजाताह्लादनत्वाच्चंद्रा इति. अथ महासतीगुणानुमोदनां कर्तुकामः पुरस्तीर्थ-

करजननीरभिष्टुवन्नाह—

॥ मूलम् ॥—तित्थंकरजणणीउ । जयंति जणविम्हयकरणीउ ॥ पसवंति जा पुत्तरयणं । तिलोगसिरिसिरतिलयं ॥ ५५ ॥ व्याख्या—तीर्थं भवांबुधेरवतारमार्गं, यद्वा चतुर्वर्णं श्रीश्रमणसंघं अथवा गणधरं कुर्वंतीति तीर्थंकरा अर्हंतस्तेषामतीतानागतवर्तमानानां विहरमाणानां जनन्यो मातरस्तीर्थंकरजनन्यस्ता जयंति सर्वोत्कर्षेण वर्तंते, किंविशिष्टाः? जणविम्हयत्ति जनानां त्रिलोकीलोकानां विस्मयमाश्चर्यं जनयंति यास्तास्तथा, विस्मयकारणमुत्तरार्धेनाह—'पसवंतित्ति' याः पुत्ररत्नं जातावेकवचनं सुतरत्नं सुतमाणिक्यमिति भावः प्रसवंति जनयंति, किंविशिष्टं? तिलोगत्ति त्रिलोकस्य स्वर्भूर्भुवोरूपस्य श्रीर्लक्ष्मीस्तस्याः शिरस्तत्तथा सिद्धिपदमिति भावः. तत्र तिलकं मंडनं, यदुक्तमागमे—'नमोत्थु ते रयणकुक्खिधारिए, नमोत्थु ते जगपईवदाईए' इत्यादि. अथ गाथात्रयेण सतीनाममंत्राक्षरैरात्मानं पवित्रयन्नाह—

॥ मूलम् ॥—सीया तहा य सुलसा । राइमई मयणरेह दवदंती ॥ अज्जा चंदणबाला । मणोरमा तह विलासवई ॥ ५६ ॥ अंजणासुंदरी चेव । नम्मयासुंदरी सिवा ॥ धारिणी चिल्लणा·

देवी । पन्नावई कलावई ॥ ५७ ॥ रेवई देवई जिठा । मुक्किठा पउमावई ॥ नंदा न्नद्दा सुभद्दा य । रिसिदत्ता मिगावई ॥ ५८ ॥ व्याख्या—आसां पदार्थो व्यक्त एव. अथ सतीवर्गोपसंवर्णगाथामाह—

॥ मूलम् ॥—इयमाइ सत्नहणिज्जा । महासई जाण सुद्धचरियाणं ॥ वाइज्जइ सीलगुणो । पयमुव्व जयंमि जसपम्हो ॥ ५९ ॥ व्याख्या—इत्यादयो महासत्यः श्लाघ्याः स्तुत्याः, जाण सुद्धचरियाणं यासां शुद्धचरितानां सीलगुणो वाइज्जइ शीलमेव सर्वसिद्धिनिबंधनं स्वन्नाव एव गुणः शीलगुणो वाद्यते उद्घोष्यते, पयमुव्व जयंमि जसपडहो प्रकटो जगति यशःपटह इति ॥ ५९ ॥ अथ गाथायुगेन गुणानुमोदनसंग्रहः—

॥ मूलम् ॥—गुणगारवं जिणाणं । सिद्धसरूवं च सव्वसिद्धाणं ॥ आयरियाणायारं । उवज्झायाणं च अज्झयणं ॥ ६० ॥ सच्चरियं साहूणं । जं सुहकिच्चं च सावयाणंपि ॥ अणुमोएमि सहरिसं । तं चिय उल्लसियरोमंचो ॥ ६१ ॥ व्याख्या—उल्लसितः प्रादुर्भूतो रोमांचः पुलको यस्य स तथा, अहं सहरिसं सहर्षः अणुमोएमि अनुमोदयामि, किं ? तंचिय तदेव, तत्किमित्याह—गु-

णगारवं गुणानां चतुस्त्रिंशदतिशयरूपाणां षट्त्रिंशद्वचनातिशयात्मनां गौरवं गुणगौरवं माहात्म्यं, केषां? जिनानामर्हतां, सिद्धसरूवं च, चः समुच्चये, सिद्धस्यानंतज्ञानदर्शनवीर्यानंदरूपं स्वरूपं, केषां? सव्वसिद्धाणं, सर्वे च ते तीर्थातीर्थतीर्थंकरातीर्थंकरप्रत्येकबुद्धस्वयंबुद्धबुद्धबोधितपुल्लिंगनपुंसकलिंगपरलिंगगृहिलिंग एकानेकादिभिः पंचदशभेदैः सिद्धाः सर्वसिद्धाः, तत्र नपुंसकलिंगसिद्धास्तीर्थंकरसिद्धा न भवंत्येव, प्रत्येकबुद्धसिद्धाः पुल्लिंगसिद्धा एव, स्वलिंगेन रजोहरणादिना द्रव्यलिंगेन सिद्धाः, अन्येषां परिव्राजकाणां लिंगेन सिद्धा अन्यलिंगसिद्धाः, गृहिलिंगसिद्धाः, अतीर्थसिद्धाश्च मरुदेव्यादयः, एकैकस्मिन् समये एकाकिनः सिद्धा एकसिद्धाः, एकस्मिन् समये अष्टोत्तरशतं यावत् सिद्धा अनेकसिद्धाः, यदाह—अमवीसा अमयाला। सट्ठी बाहुत्तरीय बोधव्वा ॥ चुलसीइ छन्नउई। डुराहिय अट्ठुत्तरसयं च ॥ १ ॥ इति तेषां, आयरियाणायारं आचार्याणां गणभृतां ज्ञाने दर्शने चरणे तपसि वीर्ये चाचरणमाचारः पंचधा तं, उवज्झायाणं च अज्झयणं, च पुनरर्थे, उपाध्यायानामध्ययनं सिद्धांतपाठस्तं, सच्चरियं साहूणं साधूनां महर्षीणां सत्समीचीनं चरितमष्टादशशीलांगसहस्रधुराधरणस्वरूपं, तत् किं बहुना? जं च सुहकिच्चं सावयणंपि, चः समुच्चये,

यत् शुभकृत्यं सत्कर्म देवपूजागुरूपास्तिस्वाध्यायसंयमतपोदानादि श्रावकाणामपि तदनुमोदयामीति संबंधः ॥ इत्याचार्यश्रीबालचंद्रविरचितायां विवेकमंजरीवृत्तौ गुणानुमोदनविवरणनामा द्वितीयः परिमलः समाप्तः ॥ श्रीरस्तु ॥ अंतर्नभोजलधिकुंडलिताहिराज-रम्ये विधौ विदलितांजनकालिमश्री आसीनकेशवतुलामिदमेति याव—त्तावज्जयं कलयतादिह जैत्रसिंहः ॥ १ ॥

अथ दुष्कृतगर्हाद्वारमाह—

॥ मूलम् ॥—अरहंतसिद्धचेईय—सिद्धंताईण जयपवित्ताणं ॥ जं आसाईयमिण्हिं । मह मिछादुक्कडं तछ ॥ ६२ ॥ व्याख्या—अरहंतत्ति, अर्हंतो जिनाः, सिद्धाः प्रक्षीणकर्माणः, चैत्यानि जिनायतनानि, सिद्धांताः प्रवचनानि, त एते आदौ येषां ते तथा, गुरुस्थविरोपाध्यायतपस्विनः, तेषां जयपवित्ताणं जगत्पवित्राणां आसाईयं आशातितं, इण्हिं इदानीं मह मिछाडुकडं तछ तत्राशातनाविषये मम मिथ्यादुष्कृतमिति. अथ जिनवाणीं क्षमयन्नाह—

॥ मूलम् ॥—पयअक्खरमत्ताए । अहियं हीणं च जं मए गुणियं ॥ तं तिछयरपयासिय । वाणीए मज्झ खमिअव्वं ॥ ६३ ॥ व्याख्या—स्पष्टा, अथ गाथात्रयेण संघमभिष्टुत्य क्षमयन्नाह—

॥ मूलम् ॥—जयइ सुरासुरनमिओ । गुणरयणमहोअही सुहावासो ॥ तिअयरमाणणीओ । चउविहसिरिसमणसंघो य ॥ ६४ ॥ व्याख्या—चतुर्विधः साधुसाध्वीश्रावकश्राविकारूपः, श्राम्यति तपःशीलभावनादानैस्तपस्यतीति श्रमणः स चासौ श्रिया शोभया उपलक्षितः संघः श्रीश्रमणसंघः, चः समुच्चये, जयति सर्वोत्कर्षेण वर्त्तते, किंविशिष्टः? सुरासुरनमिओ सुरा वैमानिकाः, असुरा भवनपतयस्तैर्नमितो वंदितः, गुणरयणमहोअहि गुणरत्नानां महोदधिर्महासागरः, सुहावासो सुधा पीयूषं तदावासः, पुनः किंविशिष्टः? संघः? तिअयरमाणणीओ तीर्थंकरा जिनास्तैर्माननीयो वंदनीयः.

॥ मूलम् ॥—तं भगवंतं अणहं नियसत्तीए अणग्घभत्तीए ॥ सक्कारेमि य सम्माणेमि य सिरसा नमंसामि ॥ ६५ ॥ व्याख्या—तं श्रीश्रमणसंघं भगवंतं पूज्यं अणहं अनघं निःपापं नियसत्तीए निजशक्त्या अणग्घभत्तीए अनर्घ्यभक्त्या महद्भक्त्या यथा सक्कारेमि य सम्माणेमि य प्रवरवस्त्राभरणैरभ्यर्चयामि सन्मानयामि च गुणोन्नतिक्रियया स्तवीमि, च शिरसोत्तमांगेन, आदरप्रदर्शनार्थं चैतत, नमंसामि नमस्यामि.

॥ मूलम् ॥—जं तस्स मए कहवि । पडिकूलं कहवि विप्पियं विहियं ॥ आसायणा तह क-

या । कयावि खामेमि तं सव्वं ॥ ६६ ॥ व्याख्या—यत्तस्य भगवतः श्रीश्रमणसंघस्य मए मया कब्वि क्वापि समये पडिकूलं प्रतिकूलं तद्धितोपदेशविपरीताचरणं कथमपि प्रमादेनेत्यर्थः, विप्पियं विप्रियं अनिष्टाचरणं विहियं विहितं, आसायणा तह कया आसातना हस्तपादादिसंघट्टना तथा कृता, कयावि कदापि, खामेमि तं सव्वं क्षमयामि तत्सर्वमशेषमिति. अथ गाथात्रयेण धर्मसुत्कीर्त्य क्षमयन्नाह—

॥ मूलम् ॥—अहिंसालक्खणो धम्मो । गुणाण रयणायरो ॥ भासिओ वियराएहिं । मुक्खमुक्खाण कारणं ॥ ६७ ॥ व्याख्या—स्पष्टा.

॥ मूलम् ॥—दहभेओ जइधम्मो । सावगधम्मो अ बारस वयाइं ॥ भणिओ थूलगपाणाइ-वायविरमणपुरोगाइं ॥ ६८ ॥ व्याख्या–पूर्वगाथोपदिष्टो धर्मस्तावद् द्विप्रकारः' यतिधर्मः श्रावकधर्मश्च, तत्र दहभेओ जइधम्मो दशभेदो यतिधर्मः, खंति य मद्दवज्जव–मुत्ति तह संजमो य बोधव्वो ॥ सच्चं सोअं अकिं-चणं च बंभं च जइधम्मो ॥ १ ॥ श्रावकधर्मश्च द्वादशव्रतरूपो भणित उपदिष्टः, कोऽसौ श्रावकधर्मः? च पुनरर्थे, थूलगपाणाइवायत्ति स्थूलकं च तत् बादरं च प्राणाति-

पातविरमणं च तत्पुरोगं मुख्यं येषां तानि, यदाहुः—पाणिवहमुसावाए । अदत्तमेहुणं परिग्गहे चेव ॥ दिसिभोगदंडसमिइ । देसे तह पोसहविभागे ॥ १ ॥ इति.

॥ मूलम् ॥—संकाकंखवितिगिछा—मित्थादिट्ठिसंथवपसंसा ॥ आसायणं च कत्थवि । तस्स कयंतं खमावेमि ॥ ६७ ॥ व्याख्या—तत्र दशद्वादशभयोभेदधन्ये जिनोपज्ञे सम्यक्त्वमूले भवजलधिपरकूले चिदानंदलक्ष्मीहर्म्ये धर्मे शंका संशयकरणं, कांक्षा अन्यान्यदर्शनग्रहणेच्छा, विचिकित्सा फलंप्रति संदेहः, मित्थादिट्ठिसंथवपसंसा मिथ्यादृष्टीनां शाक्यादीनां संस्तवः परिचयः, तेषामेव प्रशंसा स्तुतिः, आसायणं च मनोवाक्कायैरेवाशातनाकरणं कत्थवि कस्मिन्नपि भवे कुत्रापि प्रस्तावे क्वापि विषये कृतं यत् तत् खमावेमि तत् क्षामयामि सानुतापेन मनसा तद् व्युत्सृजामीति संबंधः. अथात्मनः सप्तक्षेत्रीदानमनुकंपादानं च गाथायुगेन सदाशंसन्नाह—

॥ मूलम् ॥—जिणसमयपसिद्धेसु । सत्तसु खित्तेसु गुणसमिद्धेसु ॥ जं चिय दिन्नं दाणं । भत्तीए कयं च सम्माणं ॥ ७० ॥ जं विहियं सुहकिच्चं । अन्नंपि मए जिणाण आणाए ॥ तं सव्वंपि अणग्घं । मम हुज्ज मुक्खसुक्खफलं ॥ ७१ ॥ व्याख्या—जिनानामर्हतां समयः शासनं, तत्र

प्रसिद्धेषु व्याख्यातेषु जिनभवनजिनबिंबजिनागमसाधुसाध्वीश्रावकश्राविकात्मसु गुणसमिद्धेषु गुणास्तावद्भव्यजनमतप्रमोदजननप्रभृतयः, जिनबिंबस्य तु प्रसादनीयत्वं विशिष्टलक्षणलक्षितत्वं प्रातिहार्यविराजितत्वं लोकोत्तरोदात्तशांतमुद्रयाह्लादकत्वेन भव्यानां कर्मनिर्जराहेतुत्वं, यदाहुः—पासाईआ पडिमा । लक्खणजुत्ता समत्तलंकरणा ॥ जह पल्हाएइ मणं । तं निज्जरिमो वियाणाहि ॥१॥ जिनभुवनस्य तु भव्यानां धर्मध्यानैकतानताहेतुत्वं परमानंदजनकत्वं प्रव्रज्याकरणोत्थापनाचार्यपदस्थापनाधर्मदेशनासंघागमनप्रभावनानिर्मोक्षांगत्वं च, यदाहुः—पिच्छिस्सइत्थ अहं । वंदणगनिमित्तमागए साहु ॥ कयपुन्नो भगवंते । गुणरयणनिहिमहासत्ते ॥ १ ॥ पडिबुज्झिस्संति इहिं । दहूण जिणिंदबिंबमकलंकं ॥ अन्नेवि भवसत्ता । काहिंति तओ परं धम्मं ॥ २ ॥ ता एवं मे चित्तं । जमिह भुवणंगमेइ मणचरयं ॥ इय चिंतापरिवडिया । सासयबुद्धिव्व मुक्खफला ॥ ३ ॥ जिनागमस्य तु कुशास्त्रजनितसंस्कारविषमूर्छापहारकर्मणि महामंत्रायमाणत्वं धर्माधर्मकृत्याकृत्यभक्ष्याभक्ष्यपेयापेयगम्यागम्यसारासारादिविवेचनाहेतुत्वं, यदाहुः—सुयनाणंमि नेउन्नं । केवले तयणंतरे ॥ अप्पणो य परेसिं च । जम्हा तं परिभावियं ॥ १ ॥ अपि चास्य केवलज्ञानादपि प्रामाण्यातिरेकत्वं

च, यदाहुः—जहाखुज्जवज्जो । सुयनाणी जइ हु गिएहइ असुद्धं ॥ तं केवलीविभुंजइ । अपमाणसुअं भवे इहरा ॥ १ ॥ साधुसाध्वीनां च जिनवचनानुसारेण निर्वाणसाधकत्वं सर्वजीवदयापरत्वं व्रतशीलतपोयुक्तत्वं सङ्गतिकांक्षकत्वं च, यदुक्तं—निर्वाणसाधकान् साधून् । सर्वजीवदयापरान् ॥ व्रतशीलतपोयुक्तान् । वंदे सङ्गतिकांक्षिणः ॥ १ ॥ श्रावकश्राविकाणां च विशुद्धसिद्धांतानुसारेण श्रद्धासमृद्धिपात्रकत्वं सुपात्रेषु च न्यायोपात्तवित्तपावकत्वं, साधुवर्गसंसर्गात् पापाकरविक्षेपत्वं च, यदुक्तं निरुक्त्यां—श्रद्धालुता श्रौतपदार्थचिंतना—द्धनानि पात्रेषु वपंत्यनारतं ॥ किरंत्यपुण्यानि सुसाधुसेवना—त्ततोऽथ तं श्रावकमाहुरंजसा ॥ १ ॥ इति. तैः सम्यग् ऋद्धान्युपचितानि गुणसमृद्धानि, तेषु गुणसमृद्धेषु जं चिय दिन्नं दाणं, चियत्ति अवधारणे, यद्दानं दत्तं, जिनबिंबजिनागमजिनभुवनसाधुसाध्वीष्विति मंतव्यं, तत्र जिनबिंबे श्रीकालिकाचार्यप्रभृतिगणभृत्प्रणीतप्रतिष्ठाकल्पोक्तविधिप्रतिष्ठापनं, अष्टाभिश्च प्रकारैरभ्यर्चनं, यात्राविधानं, विशिष्टाभरणभूषणं, विचित्रवस्त्रैः परिधापनमिति. यदाहुः—करिज्ज तम्हा पडिमा जिणाणं । न्हाणं पइठा बलिपूयजत्ता ॥ आणच्चयाणं च चिरंतताणं । जहारिहं रक्खणवड्ढणं च ॥ १ ॥ जिनभुवने तु शल्यादिरहितायां भु-

त्वि स्वयं सिद्धस्योपलकाष्ठप्रमुखदलस्य ग्रहणं, सूत्रधारादिभृत्यानामधिकमूल्यवितरणेन षड्जीवनिकायरक्षायतनया विधानं, तस्य च जीर्णशीर्णस्य समारचनं, नष्टस्य भ्रष्टस्य चोद्धरणं, तत्र देवाधिदेवस्य क्षीरस्नानाय गोकुलप्रदानं, कुसुमपूजार्थं चारामवितरणं, वाद्यनादनृत्यपूजाकृतः प्रमदाकुलस्य वृत्तये पुरनगरग्रामादिदानं, भग्नसज्जीकरणसंमार्जनादिकृते द्रविणवितरणं चेति. यदुक्तं—

दिज्जादिमं मंडल गोउलाई । जिन्नाइ सिन्नाइ समारइज्जा ॥ नठ्ठाइं भठ्ठाइं समुध्धरिज्जा ॥ मुक्कंगमेयं खु महाफलंति ॥ १ ॥ जिनागमे तु पुस्तकलेखनं वस्त्रादिभिरभ्यर्चनं, यदुक्तं—लेखयंति नरा धन्या । ये जैनागमपुस्तकं ॥ ते सर्वं वाङ्मयं ज्ञात्वा । सिद्धिं यांति न संशयः ॥ १ ॥ लिखितानां च पुस्तकानां संविग्नगीतार्थेभ्यो बहुमानपूर्वकं पठनाद्यर्थं दानं च, व्याख्यायमानानां च प्रतिदिनं पूजापूर्वकं श्रवणं च, तत्पाठकेभ्यो भक्तिपूर्वकं सन्मानदानं चेति, यदाह—पठति पाठ्यते पठतामसौ । वसनभोजनपुस्तकवस्तुभिः ॥ प्रतिदिनं कुरुते य उपग्रहं । स इह सर्वविदेव भवेन्नरः ॥ १ ॥ साधुषु च जिनवचनानुसारेण सम्यक्चारित्रमनुपालयद्भ्यस्तीर्थंकरगणधरेभ्योऽथ च तद्दिनदीक्षितेभ्यः सामायिकसंयतेभ्यो यथोचितप्रतिपत्त्योपकारिणां प्राशुकैषणीयानां कल्पनीया-

नां चाशनादीनां, रोगापहारिणां च भेषजादीनां, शीतादिवारणार्हाणां च वस्त्रादीनां, प्रतिलेखनहेतो रजोहरणादीनां, भोजनाद्यर्थं पात्राणामौपग्रहिकाणां च दंडकादीनां, निवासार्थमाश्रयाणां च दानं, साधुधर्मोद्यतस्य स्वपुत्रपुत्र्यादेरपि समर्पणमिति, यदुक्तं—कात्रे पत्ताए यत्ताए । धम्मसद्धाकमाइणो ॥ असणाईण दव्वाणं । दाणं सव्वत्थसाहणं ॥ १ ॥ असणं खाइमं पाणं । साइमं भेसहोसहं ॥ वत्थं पडिग्गहं चेव । रजोहरणकंबलं ॥ २ ॥ पीढगं फलगं चेव । सिज्जासंथारयं तहा ॥ धम्मोवगरणं नाणा—नाणाईण पसाहणं ॥ ३ ॥ तथा रत्नत्रयधारिणीषु साध्वीषु साधुष्विव यथोचिताहारादिप्रदानं, यदाह—साहूण जं पावयणं पसिद्धं । तं चेव अज्जाणवि जाणियव्वं ॥ पाएण ताणं न वरं विसेसो । वड्ढावणाई बहुनिज्जरंति ॥ १ ॥ कया? भत्तीए भक्त्या जं कयं च सम्माणं यत्कृतं सन्मानं वात्सल्यं श्रावकेष्विति मंतव्यं, साधर्मिकाः खलु श्रावकस्य श्रावकाः, समानसाधर्मिकाणां च संगमोऽपि महते पुण्याय, किं पुनस्तदनुरूपा प्रतिपत्तिः? सा च स्वपुत्रादिजन्मोत्सवे विवाहेऽन्यस्मिन्नपि तथाविधे प्रकरणे साधर्मिकाणां निमंत्रणं, विशिष्टभोजनतांबूलवस्त्राभरणादिदानं, आपन्निमग्नानां च स्वधनव्ययेनाप्युद्धरणं, अंतरायदोषाच्च विभवक्षये पुनः पूर्वभूमि-

काप्रापणं, धर्मे च विषीदतां तेन तेन प्रकारेण धर्मस्थैर्यारोपणं, प्रमाद्यतां च सारणावारणादिकरणं, वाचनाप्रच्छनापरिवर्तनानुप्रेक्षाधर्मकथादिषु यथायोग्यं विनियोजनं, विशिष्टधर्मानुष्ठानकरणार्थं च साधारणपौषधशालायाः करणमिति. श्राविकासु च सन्मानं श्रावकवदन्यूनातिरिक्तमुन्नेतव्यं. यदुक्तं—जं सावयाणं करणिज्जमुत्तमं । तं सावियाणंपि मुणेह सव्वं ॥ तित्थाहिवाणं वयणे रयाणं । ताणं विभागेण विसेस किच्चं ॥ १ ॥ जं विहिअं सुहकिच्चं अन्नंपि मए, मया यद्विहितं शुभकृत्यं धर्मकार्यमन्यदपि, कोऽत्र भावः? अविचारितपात्रापात्रमविमृष्टकल्पनीया कल्पनीयप्रकारं केवलयैव करुणया दीनेष्वार्तेषु भीतेषु जीवितं याचमानेषु प्रतीकारकृते धनवितरणादि यत्कृतं, किं स्वच्छंदमित्याह—जिणाण जिनानां रागद्वेषविप्रयुक्तानामर्हतां आज्ञया 'अणुकंपादाणं पुण जिणवरेहिं न कयावि पडिसिद्धमित्यादिरूपया शिक्षया,' यद्वा भगवंतोऽपि हि निःक्रमणकाले अनपेक्षितपात्रापात्रविभागं करुणया सांवत्सरिकदानं दत्तवंत इति. तं सव्वंपि तत्पूर्वोक्तं सर्वमप्यशेषमपि, अणग्घं न विद्यतेऽन्यद् अर्घ्यं यस्मात्तदनर्घ्यं, ममेति स्पष्टं हुज्जा भूयात्. कीदृक्? मुक्खसुक्खफलं मोक्षसौख्यमेव निःश्रेयःशर्मैव फलं यस्य तत्तथेति. अथानंतभवापराद्धं जंतुजातं सप्तभिर्गाथाभिर्व्यक्त्यो-

चार्य दमयन्नाह—

॥ मूलम् ॥—कालो अणाइ जीवो । अणाइ भवपरंपराणाए ॥ जे केवि तब जीवा । ए-
गिंदियपमुहा जाईसु ॥ ७२ ॥ व्याख्या—समयावलिकारूपः, यदाहुः—समयावलीमुहुत्ता । दिव-
सअहोरत्तपक्खमासाइं ॥ संवछर जुगपलिया । सागरउसप्पिपरिअट्टा ॥ १ ॥ तत्र समयो जीर्णप-
टपाटनादिदृष्टांतानिर्विभागकालरूपः, आवली तु असंख्यसमयसमितिसमुदायसमागमरूपा, मुहूर्त-
स्तु घटिकाद्वयरूपः, दिवसाहोरात्रपक्षमाससंवत्सरास्तु विदिता एव, युगं तु पंचवर्षमयं, पल्योपमं तु
उद्धाराद्धाभ्यां द्विरूपं विदितमेव, सागरोपममपि च प्रख्यातं, उत्सर्पिण्यवसर्पिणीपरावर्तास्तूच्यंते
यथा—सुषमसुषमनाम्नि । सागराः कोटिकोटयः ॥ चतस्रोऽरे क्रमात्क्रोश—त्रयीमानं च युग्मिनां
॥ १ ॥ आयुः पल्योपमानि स्यु—स्त्रीण्याहारो दिनत्रयात् ॥ दश कल्पद्रुमा मत्त—गजभृंगादयो
मताः ॥ २ ॥ सुषमारे प्रमा अब्धि—कोटिकोटि दश द्रुमाः ॥ व्यहाशिता द्विपल्यायुः । क्रोशौ
मानं च युग्मिनां ॥ ३ ॥ सुषमदुःषमारे द्वे । कोटाकोटिप्रमाब्धयः ॥ क्रोशोच्चयुग्मिनामायुः । पल्यं
चान्नं दिनैकतः ॥ ४ ॥ दुःषमासुषमारे च । द्विचत्वारिंशतोनकाः ॥ सहस्रैः शरदां मानं । कोटा-

कोटिपयोधयः ॥ ५ ॥ पूर्वकोट्यायुषां नृणां । धनुःपंचशती प्रमा ॥ कल्पांह्रिपद्वयेऽर्हतः । स्युस्त्र- योविंशतिः क्रमात् ॥ ६ ॥ दुःषमारे प्रमा वर्ष—सहस्रा एकविंशतिः ॥ सप्तहस्तनृणामायुः । समा विंशोत्तरं शतं ॥ ७ ॥ द्विसप्ततिशरन्माना—युषो निर्वृत्तिरर्हतः ॥ भस्मकोदयतो वर्ष—सहस्रौ द्वौ नयच्छिदा ॥ ८ ॥ दुःषमादुःषमारे च । शरदामेकविंशतिः ॥ सहस्रा मानमायुश्च । षोडशाब्दी क- रप्रमा ॥ ९ ॥ वैताढ्यकंदरे गंगा—सिंधूभयतटीभुवि ॥ बिलावासिमनुष्याणां । युगलानि द्विसप्त- तिः ॥ १० ॥ अवसर्पिणीयं षड्भि—ररैरे तैर्विलोमभिः ॥ उत्सर्पिणी तदानंत्यात् । परावर्तः प्रकी- र्तितः ॥ ११ ॥ तदेवंविधः कालः, किंविशिष्टः? अणाइ न विद्यते आदि मूलं यस्येत्यसावनादिः, न केवलं कालः, जीवोऽप्यनादिः, तथा भवपरंपराणाए, भवानां जन्मनां परंपरा पद्धतिः अनादिः, जे केवि ये केऽपि तत्र तत्र भवपरंपरायां जीवाः प्राणिनः, एगेंदियपमुहजाइसु, एकमिंद्रियं स्पर्शनं येषां ते एकेंद्रियाः पृथ्व्यादयः, तत्प्रमुखजातयो निकायास्तासु. अथैतान् व्यक्त्योच्चरति—

॥ मूलम्—एगिंदिया य बेइं—दिया य तेंदियाय चउरिंदी ॥ पंचिंदिया य कत्थवि । अस- न्निपंचिंदिया चेव ॥ ७३ ॥ व्याख्या—एगिंदिया एकेंद्रियाः, पृथिव्यंबुतेजोवायुमहीरुहः, द्वींद्रियाः

कृमयः शंखगंडूपदजलौकसः, एवं त्रींद्रियाश्चतुरिंद्रियाश्च प्रसिद्धाः, पंचेंद्रिया जरायोतां—डजाः संमूर्छिमोद्भिदः ॥ गर्भजोद्भवजास्तत्र । संज्ञिनोऽसंज्ञिकाः परे ॥ १ ॥ शिक्षोपदेशालापान् ये । जानं ते संज्ञिनोऽत्र ते ॥ संप्रवृत्तमनःप्राणा—स्तेभ्योऽन्ये स्युरसंज्ञिनः ॥ २ ॥

॥ मूलम् ॥—देवनरतिरियनारय—चउगइमग्गेसु परिभमंता य ॥ तह तेवि पुढविकाया । दगकाया वाउकाया य ॥ ७४ ॥ तेउकायवणस्सइ—काया तसकाइया य सव्वेवि ॥ इय छविह जीव—निकायलक्कणा निग्गुणेण मए ॥ ७५ ॥ व्याख्या—किंस्वरूपास्ते जीवाः? परिभमंता य परिभ्रमंतः, चः समुच्चये, देवत्ति देवा भुवनपतिव्यंतरज्योतिष्कवैमानिकाः, नरा मर्त्याः, तिर्यंचश्चतुष्पदादयः, नारका नरकवासिनः, तेषां चतुर्णां गतयः संसरणानि देवनरतिर्यग्नारकचतुर्गतयः, ता एव मार्गाः पंथानस्तेषु तह तेवि तथा तेऽपि पूर्वगाथोदिता एकेंद्रियादयो जीवाः षट्कायभाषया भण्यंते, यथा पुढविकाया पृथ्वीकायाः, प्रवालमणिरत्नानि । रूप्यस्वर्णादिधातवः ॥ स्फटिकाश्मखटीधातु—हरितालमनःशिलाः ॥ १ ॥ गंधकाभ्रकपारेवा । रणे वृंदारपादपाः ॥ सौवीरांजनकासीस—तुवर्याद्या भुवो भिदाः ॥ २॥ दगकाया अप्कायाः, आकाशभूम्यवश्याय—मिहका करका हि-

मं ॥ घनांभोधिहरतनु—प्रमुखा जलजातयः ॥ ३ ॥ वाउकाया य, चः समुच्चये, वायुकायाः पवनाः, तेउकाया तेजस्काया अग्नयः, तथा ह्युक्तं अपि, वात्या घनतनूद्भ्रामो—त्कुलीगुंजादयोऽनिलाः ॥ अंगारमुर्मुरज्वाला—कणोल्काविद्युतोऽनलाः ॥ १ ॥ वणस्सइकाया वनस्पतिकाया भूरुहः, साधारणाश्च प्रत्येका । द्विप्रकारा महीरुहः ॥ तत्र पूर्वे बादराः स्यु–रुत्तरे सूक्ष्मबादराः ॥ १ ॥ सूक्ष्माश्च परिछिन्न—प्ररोहाः समभंगकाः ॥ अतंतुत्वग्नसासंधि–पर्वगुप्त्यादिलक्षणाः ॥ २ ॥ अनंतात्माश्रयैकांगाः । पनकस्थेगवास्थुलाः ॥ कंदांकुरनवोद्भव–त्पर्णानस्थिफलानि च ॥ ३ ॥ गरूचीगुल्मुलीमुस्ता । विरूढानि शतावरी ॥ भूस्फोटो लवणद्रुत्व–कुमारीकोमलाम्लिका ॥ ४ ॥ स्नुहीशूकरवल्ल्यश्च । पल्यंकोऽमृतवल्लरी ॥ शैवलं शणपत्राणि । निगोदा बादरा इति ॥ ५ ॥ प्रत्येकास्ते स्युरेकैक–तनौ यत्रैककः प्रभुः ॥ मूलपल्लवकाष्टत्वक्–पुष्पबीजफलादयः ॥ ६ ॥ तसकायाउ त्रसश्चलः कायो येषां ते तथा, त एव ते स्वार्थे के सति त्रसकायकाः, चः समुच्चये, सव्वेवि सर्वेऽपि चतुर्विधा अपीति भावः, तथाहि—त्रसा द्वित्रिचतुःपंचेंद्रियत्वेन चतुर्विधाः, इय छविहजीवनिकायलक्खणा इत्यमुना प्रकारेण पूर्वोदितेन षट्जीवनिकायलक्षणाः षट्प्रकारजीवनिकायसंज्ञाः प्राणिनः,

निग्गुणेण मए निर्गुणेनाऽज्ञानिना मयेति.

॥ मूलम् ॥—चुलसीइलक्खसंखासु । जीवजोणीसु परिभमंतेण ॥ तज्जिय वत्तिय डुन्निय । परिन्नविया तह जवद्दविया ॥ ७६ ॥ निप्भञ्जिय संघट्टिय । विहडाविय पीलिया य वेलविया ॥ परियाविया य तह जि—विया जवरोविया चेव ॥ ७७ ॥ व्याख्या—मयेति पूर्वसंबंधः, किं विशिष्टेन परिन्नमंतेण परिभ्रमता संसरता, कासु? जवजोणीसु जीवानामेकेंद्रियाणां योनयो जन्मस्थानानि तासु, कतिसंख्योपेतासु चुलसीइलक्खसंखासु चतुरशीतिलक्षाः संख्या प्रमाणं यासां तासु, संप्रदायगम्यासु, तथाहि योगशास्त्रे—प्रत्येकं सप्त लक्षाणि । पृथ्वीवार्यग्निवायुषु ॥ प्रत्येकानंतकायेषु । क्रमाद्दश चतुर्दश ॥ १ ॥ षट् पुनर्विकलाक्षेषु । मनुष्येषु चतुर्दश ॥ स्युश्चतस्रश्च तिस्रश्च । श्वभ्रतिर्यक्सुरेषु च ॥ २ ॥ एवं लक्षाणि योनीना—मशीतिश्चतुरुत्तरा ॥ सर्वज्ञोपज्ञमुक्तानि । सर्वेषामपि जन्मिनां ॥ ३ ॥ तास्तथा, तासु परिभ्रमता मया, कथं कथं कृतास्ते जीवाः? तज्जिय वत्तिय डुन्निय परिन्नविया तर्जिता जद्घट्टनादिना तिरस्कृताः, वर्तिताः पुंजीकृता धूलिचिखिल्लादिना वा स्थगिताः, दूनाः पीडिताः परिन्नूताः, एतत्परे प्राकृतत्वाल्लुप्तबहुवचनांताः शब्दाः, तह तथा जवद्दविया

अवद्दाविता उत्त्रासिताः, निष्पंछियसंघट्टियविहमाविय पीलिया य निर्भर्त्सिता आकृष्टाः, संघट्टिता घृष्टाः, विघट्टिता वियोजिताः, पीलिताः पिष्टाः, पीलितात्परे लुप्तबहुवचनांताः सर्वेऽप्यमी शब्दाः, चः पुनरर्थे. वेलविया विप्लाविताः, परियाविया परितापिताः प्राणांतिकीं ग्लानिमापादिताः, चः समुच्चये, एवो निर्धारणे.

॥ मूलम् ॥—तं तिविहं तिविहेणं । सव्वं खामेमि तह य अप्पाणं ॥ निंदामि य गरिहामि य । मह मिच्छाडुक्कडं मम ॥ ९७ ॥ व्याख्या—तत त्रिविधं कृतानुमतकारितरूपं त्रिविधेन मनसा वचसा कायेन सव्वं सर्वं पूर्वोक्तमशेषं खामेमि क्षामयामि, तहय अप्पाणं तथा चात्मानं निंदामि अकृत्यकारिणमिति निंदामि आत्मसाक्षिकं शोचामि, चः समुच्चये, तह तथा मिच्छाडुक्कडं मम मम मिथ्याडुष्कृतं नूयादिति. अथेह नवसंबंधिनः क्षमयन्नाह—

॥ मूलम् ॥—पियमायनायबंधव–पुत्तकलत्तेसु मित्तवग्गेसु ॥ अवयारिसु उवयारिसु । सव्वेसुवि खामणा मञ्झ ॥ ९९ ॥ व्याख्या—स्पष्टा, अथ बाहुल्येनापरजीवजातं क्षमयन्नाह—

॥ मूलम् ॥—खामेमि सव्वजीवे । मञ्झ सव्वे खमंतु ते ॥ तेसु मञ्झञ्चावो मे । मित्ती

वा पारिणामिया ॥ ८० ॥ व्याख्या—स्पष्टेयमपि, परं मध्यस्थभावः पितृमातृबंधुसुहृदादिषूपकारिषु रागस्तथा अपकारिषु द्वेषस्तदुभयविप्रयुक्तत्वं भवत्विति शेषः, अथवा मैत्री भवतु, सा च लौकिकी लोकोत्तरा च, आद्या प्रसिद्धा, लोकोत्तरा तु—माकार्षीत्कोऽपि पापानि। मा च भूत्कोऽपि दुःखितः ॥ मुच्यतां जगदप्येषा । मतिर्मैत्री निगद्यते ॥ १ ॥ सा च पारिणामिकीत्युच्यते, तामेवाह—

॥ मूलम् ॥—सुहियामयरहिया । धुयपावरयासुधम्मकम्मरया ॥ दीहाउ जिणमहन्नू । हवंतु सव्वेवि इह जीवा ॥ ८१ ॥ व्याख्या—सुगमा, अथोपसर्गतितिक्षामाह—

॥ मूलम् ॥—तिरियनरामरजणिया । उवसग्गा के जे मए तेवि ॥ खमियव्वा सहियव्वा । सम्मं अहियासियव्वा य ॥ ८२ ॥ व्याख्या—तिर्यंचः कलभकरभवृषभशरभविहगभुजगभषणादयः, नराश्चौरचरटादयः, अमरा दुष्टव्यंतराः, तैर्जनिता उपसर्गाः केऽपि मयेति तेऽपि क्षमितव्याः समायांत उपेक्षणीया इति भावः, सोढव्या आयाताः संतो ह्यदीनेन मनसांगीकर्तव्या इत्यर्थः, सम्यगधिसहितव्याश्च, सव्वो पुव्वकयाणं । कम्माणं पावए फलविवागो ॥ इत्यनुध्यानेन तितिक्षणीया इति. अथ वाक्कायमनःकृतदुःकर्मगर्हामाह—

अवद्राविता उत्त्रासिताः, निप्फंडियसंघट्टियविहम्माविय पीलिया य निर्भत्सिंता आक्रुष्टाः, संघट्टिता घृष्टाः, विघट्टिता वियोजिताः, पीलिताः पिष्टाः, पीलितात्परे लुप्तबहुवचनांताः सर्वेऽप्यमी शब्दाः, चः पुनरर्थे. वेलविया विप्लाविताः, परियाविया परितापिताः प्राणांतिकीं ग्लानिमापादिताः, चः समुच्चये, एवो निर्धारणे.

॥ मूलम् ॥—तं तिविहं तिविहेणं । सव्वं खामेमि तह य अप्पाणं ॥ निंदामि य गरिहामि य । मह मिच्छाडुक्कडं मज्झ ॥ ७८ ॥ व्याख्या—तत त्रिविधं कृतानुमतकारितरूपं त्रिविधेन मनसा वचसा कायेन सव्वं सर्वं पूर्वोक्तमशेषं खामेमि क्षामयामि, तहय अप्पाणं तथा चात्मानं निंदामि अकृत्यकारिणमिति निंदामि आत्मसाक्षिकं शोचामि, चः समुच्चये, तह तथा मिच्छाडुक्कडं मज्झ मम मिथ्याडुष्कृतं ब्रूयादिति. अथेह भवसंबंधिनः क्षमयन्नाह—

॥ मूलम् ॥—पियमायभायबंधव-पुत्तकलत्तेसु मित्तवग्गेसु ॥ अवयारिसु उवयारिसु । सव्वेसुवि खामणा मज्झ ॥ ७९ ॥ व्याख्या—स्पष्टा, अथ बाहुल्येनापरजीवजातं क्षमयन्नाह—

॥ मूलम् ॥—खामेमि सव्वजीवे । मज्झ सव्वे खमंतु ते ॥ तेसु मज्झब्भावो मे । मित्ती

वा पारिणामिया ॥ ८० ॥ व्याख्या—स्पष्टेयमपि, परं मध्यस्थभावः पितृमातृबंधुसुहृदादिषूपकारिषु रागस्तथा अपकारिषु द्वेषस्तदुभयविप्रयुक्तत्वं भवत्विति शेषः, अथवा मैत्री भवतु, सा च लौकिकी लोकोत्तरा च, आद्या प्रसिद्धा, लोकोत्तरा तु—माकार्षीत्कोऽपि पापानि। मा च भूत्कोऽपि दुःखितः ॥ मुच्यतां जगदप्येषा । मतिर्मैत्री निगद्यते ॥ १ ॥ सा च पारिणामिकीत्युच्यते, तामेवाह—

॥ मूलम् ॥—सुहियामयरहिया । धुयपावरयासुधम्मकम्मरया ॥ दीहाउ जिणमहन्नू । हवंतु सव्वेवि इह जीवा ॥ ८१ ॥ व्याख्या—सुगमा, अथोपसर्गतितिक्षामाह—

॥ मूलम् ॥—तिरियनरामरजणिया । उवसग्गा के जे मए तेवि ॥ खमियव्वा सहियव्वा । सम्मं अहियासियव्वा य ॥ ८२ ॥ व्याख्या—तिर्यंचः कलभकरभवृषभशरभविहगभुजगभषणादयः, नराश्चौरचरटादयः, अमरा दुष्टव्यंतराः, तैर्जनिता उपसर्गाः केऽपि मयेति तेऽपि क्षमितव्याः समायांत उपेक्षणीया इति भावः, सोढव्या आयाताः संतो ह्यदीनेन मनसांगीकर्तव्या इत्यर्थः, सम्यगधिसहितव्याश्च, सव्वो पुव्वकयाणं । कम्माणं पावए फलविवागो ॥ इत्यनुध्यानेन तितिक्षणीया इति. अथ वाक्कायमनःकृतदुःकर्मगर्हामाह—

॥ मूलम् ॥—जं वायाए भणियं । देहेण कयं मणेण संकलियं ॥ तं मह असुहं कम्मं । सम्मं गरिहामि सव्वंपि ॥ ७३ ॥ व्याख्या—स्पष्टा, अथ केवलिसमक्षं आत्मदुःकृतमालोचयन्नाह—

॥ मूलम् ॥—जाणंति जव कवि । केवलिणो मज्झ दूसणं किंपि ॥ तं आलोएमि अहं । तेसिं चिय सक्खियं इण्हिं ॥ ७४ ॥ व्याख्या—स्पष्टेयमपि, अष्टादशपापस्थानानि चतसृभिर्गाथाभिरुच्चार्य व्युत्सृजन्नाह—

॥ मूलम् ॥—सव्वं पाणाइवायं । असच्चभासणमदत्तदाणं च ॥ मेहुणपरिग्गहराई-भत्तं कोहं च माणं च ॥ ७५ ॥ मायं लोहं कलहं । परपरिवायं तहेव पेसुन्नं ॥ अब्भक्खाणं माया-मोसं दोसं च पिम्मं च ॥ ७६ ॥ रइअरई तह मिच्छा—दंसणसल्लं च पावठाणाइं ॥ अठारस एयाइं । पुव्वभवेसु इह भवे वा ॥ ७७ ॥ कारवियाइं कयाइं । अणुमंताइं जाइं ताइं अहं ॥ तिविहेण वोसिरामि । अरिहंताईण पच्चक्खं ॥ ७८ ॥ व्याख्या—सर्वं प्राणातिपातं एकेंद्रियपंचेंद्रियांतं प्राणिवधं, असत्यभाषणमलीकवचनं, अदत्तादानं चौर्यं, चः समुच्चये, मैथुनमब्रह्म, परिग्रहं धनधान्यक्षेत्रवास्तुरूप्यसुवर्णकुप्यद्विपदचतुष्पदादिना नवधा वस्तुमूर्छा, सर्वमिति सर्वत्र योज्यं, रात्रिभुक्तं निशा-

भोजनं, एतत्पदत्रयस्य समाहारः, रात्रिभोजनं तु प्राणातिपातानुगमेव, परं पृथगुच्चारोऽस्य बहुदोषत्वाज्ज्ञेयार्थं, अपि च क्रोधं रोषं, मानमहंकारं, चकारौ समुच्चये, मायां कपटं, लोभं लौल्यं, परपरिवादमन्यथा कथाप्रपंचनं, तथैव पैशून्यं कर्णेजपत्वं, अभ्याख्यानमालदानं, मायामृषामिंद्रजालादिकरणं, द्वेषं मत्सरं, प्रेम स्नेहरागं, चकारौ समुच्चये, रतिः असंयमे शक्त्या उपेक्षिता, अरतिः संयमनाशक्तिः, तथा मिथ्यादर्शनशल्यं, मिथ्यैव मिथ्यात्वमेव दर्शनस्य सम्यक्त्वस्य शल्यं, चः समुच्चये, पापस्थानानि चतुर्दश, एतानि पूर्वभवे, अनंतत्वाद् बहुवचनं, इहास्मिन् भवे, वा अनंतरोक्तौ, कारितान्यन्यैः, कृतानि स्वयं, तथानुज्ञातानि परैः क्रियमाणानि, अनुमोदितानि यानि तान्यहं त्रिविधेन मनोवचनकायेन व्युत्सृजामि मुंचामि, कथं? अर्हदादीनां पंचपरमेष्ठिनां प्रत्यक्षं समक्षमिति. अथ गाथाचतुष्केण सावद्ययोगान् परिहरन्नाह—

॥ मूलम् ॥—कत्थवि कयं कुतित्थं । जं च कुसत्थं चिय कुसत्थं च ॥ निन्हविज्जं तह मग्गो । पयासिज्जं वा अमग्गो य ॥ ८९ ॥ मुक्कं पावनिलुक्कं । देहं दव्वं कुडुंबसयणाइं ॥ अहवा जीवेहिं समं । कहवि निबद्धाइं वइराइं ॥ ९० ॥ व्याख्या—चियत्ति अवधारणे, यत्कृतं कु-

तीर्थं शाक्यादि, यच्च कुशास्त्रं मोहजनकं शृंगारादि, तथैव शस्त्रं शस्त्रिका, कृतमिति सर्वत्र योज्यं, निह्नुतस्तथा मार्गोऽपलपितं सम्यक्त्वं, प्रकाशितो वा ऽमार्गो मिथ्यात्वमिति भावः, चः समुच्चये. पापलीनं देहं द्रव्यं कुटुंबस्वजनादि मुक्तं व्युत्सृष्टं, मया सर्वमित्यध्याहार्यं अथवा जीवैः प्राणिभिः समं पूर्वनिबद्धानि वैराणि तान्यपि मुक्तानि,

॥ मूलम् ॥—मोहंधणरइयं । हलउक्खलमुसलमुहमहिगरणं ॥ तं वोसिरियं सव्वं । तिविहेणं पाणिवहकरणं ॥ ८१ ॥ व्याख्या—स्पष्टा.

॥ मूलम् ॥—परिचत्ताइं पनरस । कम्मादाणाइं जाइं विहियाइं ॥ अन्नंपि मए चत्तं । जं चिय मित्थत्तवुड्ढिकरं ॥ ८२ ॥ व्याख्या—कर्मणां भवहेतूनां आदानं ग्रहणं येभ्यस्तानि कर्मदानानि, कति? पनरस, यदाहुः श्रीहेमसूरयः—अंगारभ्राष्ट्रकरणं । कुंभायःस्वर्णकारिता ॥ ठठारत्वेष्टिकापाकौ । तथा ह्यंगारजीविका ॥ १ ॥ छिन्नाछिन्नवनपत्र—प्रसूनफलविक्रयः ॥ कणानां दलनात्पेषाद् । वृत्तिश्च वनजीविका ॥ २ ॥ शकटानां तदंगानां । घटनं खेटनं तथा ॥ विक्रयश्चेति शकट—जीविका परिकीर्तिता ॥ ३ ॥ शकटोक्षलुलायोष्ट्र—खराश्वतरवाजिना ॥ भारस्य वाहनाद्वृत्ति—

र्भवेद्भाटकजीविका ॥ ४ ॥ सरःकूपादिखनन—शिलाकुट्टनकर्मभिः ॥ पृथिव्यारंभसंभूते—र्जीवनं स्फोटजीविका ॥ ५ ॥ दंतकेशनखास्थित्वक्—रोम्णां ग्रहणमाकरे ॥ त्रसांगस्य वणिज्यार्थं । दंतवाणिज्यमुच्यते ॥ ६ ॥ लाक्षामनःशिलानीली—धातकीटंकणादिनः ॥ विक्रयः पापसदनं । लाक्षावाणिज्यमुच्यते ॥ ७ ॥ नवनीतवशाक्षौद्र—मद्यप्रभृतिविक्रयः ॥ द्विपाच्चतुष्पाद्विक्रयो । वाणिज्यं रसकेशयोः ॥ ८ ॥ विशास्त्रहलयंत्रायो—हरितालादिवस्तुनः ॥ विक्रयो जीवितघ्नस्य । विषवाणिज्यमुच्यते ॥ ९ ॥ तिलेक्षुसर्षपैरंड—जलयंत्रादिपीडनं ॥ दलतैलस्य च कृति । र्यंत्रपीडा प्रकीर्तिता ॥ १० ॥ नाशावेधोंकनमुष्क—च्छेदनं पृष्टगालनं ॥ गोकर्णकंबलच्छेदो । निर्लांछनमुदीरितं ॥ ॥ ११ ॥ सारिकाशुकमार्जार—श्वकुक्कुटकलापिनां ॥ पोषो दास्याश्च वित्तार्थ—मसतीपोषणं विदुः ॥ १२ ॥ व्यसनात् पुण्यबुद्ध्या वा । दवदानं भवेद् द्विधा ॥ सरःशोषः सरःसिंधु—ह्रदादेरंबुसंप्लवः १३ ॥ इत्येवं प्रकाराणि यानि विहितानि, यत्तदोर्नित्यसंबंधात्तानि परिचत्ताइं परित्यक्तानि, अन्यदपि मया त्यक्तं, किमित्याह—जं चिय मित्थत्तवुड्ढिकरं यदेव मिथ्यात्ववृद्धिकरमिति. अथ वल्लभेभ्योऽप्यतिवल्लभं वपुर्व्युत्सृजन्नाह—

॥ मूलम् ॥—जं असुइदूसियंपि हु । देहं बहुमन्नियं मए एयं ॥ तंपि हु अंतिमऊसा—सेहिं तिकट्टु वोसरियं ॥ ७३ ॥ व्याख्या—स्पष्टा, परं तिकट्टुत्ति त्रिकृत्वो मनोवचनकायैः, अपि च अंतिमऊसासेहिं अंतिमोच्छ्वासेष्विति व्याख्येयं. अथ सर्वयोगपरित्यागमाह—

॥ मूलम् ॥—तह सव्वदव्वजोगो । सरीरजोगो य कम्मसंजोगो ॥ सव्व इमे संजोगा । जावज्जीवइ वोसिरिया ॥ ७४ ॥ व्याख्या—यथा पूर्वोक्तं सावद्यमशेषं व्युत्सृष्टं, तथा सर्वाणि सचित्ताचित्तानि च तानि द्रव्याणि भोगोपयोगीनि वस्तूनि सर्वद्रव्याणि, तैर्योगः स तथा, न केवलमयं, शरीरेण वर्तमानेनौदारिकेण योगः स तथा, चः समुच्चये, कर्मणां ज्ञानावरणीयादीनां संयोगो बंधः स कर्मसंयोगः, सर्वे इमे संयोगाः जावजीवाइ वोसिरिया यावज्जीवं, यावत् शब्दोऽवधारणे, ततश्च यावज्जीवनं तावदेव व्युत्सृष्टाः, न मृत्योः परत इत्यर्थः. अथ गाथायुगेन पर्यंताराधनाविधिमुच्चार्य तत्फलमाह—

॥ मूलम् ॥—पच्चरकाइ चउव्विह—माहारं जो पुणो निरागारं ॥ अणुमोयइ सुयकयाइं । आलोयइ पावकम्माइं ॥ ७५ ॥ अंते जो संथारग—पवज्जं वा पवज्जइ धीरो ॥ सो परलोए सुहि-

उ । हवइ नरो लहइ पुण बोहिं ॥ ८६ ॥ व्याख्या—स्पष्टं, अथ लब्धबोधेर्नरस्योत्कर्षमाह—

॥ मूलम् ॥—नाणदंसणचारित्त—रयणत्तयविब्भूसिउ ॥ अदूसिउ अ दोसेहिं । जीवो होइ न दुक्खिउ ॥ ८७ ॥ व्याख्या—जीवः प्राणी दुःखितो दुःखपात्रं न भवति, किंरूपः सन्? नाणदंसणत्ति ज्ञानं जीवाजीवाश्रवसंवरनिर्जराबंधमोक्षादिसप्ततत्वपरिज्ञानं, दर्शनं सम्यक्त्वं, चारित्रं सर्वसावद्ययोगविरतिः, एतेषामेव रत्नानां त्रयं तत्तथा, तेन भूषितोऽलंकृतः, न केवलमिदं, अदूसिउ अदूषितश्च, कैः? दोसेहिं दोषै रागादिभिः, अपि चोक्तमस्माभिः—जंतो रत्नत्रयी यस्य । चेतोग्रंथावशल्यका ॥ सेवाहेवाकिनस्तस्य । देवाः के वा न किं परे ॥ १ ॥ इत्याचार्यश्रीबालचंद्रविरचितायां श्रीविवेकमंजरीवृत्तौ दुःकृतगर्हाविवरणं नाम तृतीयः परिमलः ॥ चंडांश्वचंडकरमंडलगोलकाभ्यां । विक्रीडतो नभसि कालकुमारकस्य ॥ गयापथस्तदयनश्रियमेति याव—त्तावज्जयं कलयतादिह जैत्रसिंहः ॥ १ ॥

अथ भावनाद्वारं प्रस्तुवन्नाह—

॥ मूलम् ॥—चउसरणं पडिवन्नो । जीवो संसारकज्जनिविन्नो ॥ भावेइ भावणाउ । अ-

णिच्चयाई उ सव्वाउ ॥ ९८ ॥ व्याख्या—जीवो मुक्तिगमनयोग्यो जंतुः भावेइ भावयति संविग्नेन मनसानुध्यायति, काः कर्मतापन्नाः? भावणाउ भावनाः, किंरूपाः? अणिच्चयाईउ अनित्याद्याः, किं द्वे तिस्र इत्याह—सव्वाउ सर्वा द्वादशा अपीति भावः. किंविशिष्टोऽसौ? चउसरणं पडिवन्नो चतुर्णामर्हदादीनां शरणं चतुःशरणं, उपलक्षणमेवेदं, सम्यग्गुणानुमोदना दुःकृतगर्हापि च ज्ञेया, तत्प्रतिपन्नः, तदेकतानमानस इति भावः, पुनः किंविशिष्टः? संसारकज्जनिविन्नः संसरणं संसारः पुनर्जन्मपरंपरा सैव कर्मपरतंत्रस्य जंतोः कार्यं, ततो निर्विण्ण उद्विग्नः, यदुक्तं—जरामरणदौर्गत्य—व्याधयस्तावदासतां ॥ जन्मैव किंतु धीरस्य । भूयोभूयस्त्रपावहं ॥ १ ॥ अथानित्यताभावनां गाथायुगेनाह—

॥ मूलम् ॥—विहवो सज्जणसंगो । विसयसुहाइं विलासललियाइं ॥ नलिनीदलग्गघोलिर—जललव परिचंचलं सव्वं ॥ ९९ ॥ व्याख्या—स्पष्टा, परं घोलिरत्ति घूर्णमानपर्यायः.

॥ मूलम् ॥—तं कत्थ बलं तं । कत्थ जोव्वाणं अंगचंगिमा कत्थ ॥ सव्वमणिच्चं पिच्छह । नट्ठं दट्ठं कयंतेण ॥ १०० ॥ व्याख्या—स्पष्टेयमपि. अथ गाथापंचकेनाशरणभावनामाह—

॥ मूलम् ॥ घणकम्मपासबद्धो । भवनयरचउप्पहेसु विविहाउ ॥ पावइ विडंबणाउ । जीवो को इत्थ सरणं से ॥ १ ॥ व्याख्या—कर्माणि ज्ञानावरणादीनि एव पाशाः कर्मपाशाः, दृष्टाश्चैते तथा, तैर्बद्धो नियंत्रितः सन् भवनयरचउप्पहेसु भवः संसार एव चतुःकषायगोपुरविराजमानं विशालविषयवासनाशालवलयसुस्थितं मिथ्यात्वनृपाधिष्ठितं चतुरशीतिलक्षयोनिभवनं कुमतिविलासतलारक्षं चतुर्ध्यानमयवर्णप्रकृतिपौरप्रकारं नगरं, तस्य चत्वारो नरदेवनरकतिर्यग्गतिनामानः पंथानस्तेषु, विविहाउ विविधा अनेकरूपाः पावइ प्राप्नोति विडंबणाउ विटंबनाः, देवत्वे किल्विषित्वाभियोगिकत्वपरर्द्धिदर्शनेर्ष्याविषादक्रोधलोभासन्नच्यवनक्षोभाद्याः, मनुजत्वे च चिंतासंतापस्वामिशापस्वजनमरणधनहरणजराज्वरादिरोगानिष्टसंप्रयोगाभीष्टविप्रयोगाद्याः, तिर्यक्त्वे च कशांकुशप्राजनाघातवातशीतातपक्षुत्तृषासहनभारवहनरूपाः, नारकत्वे च छेदनभेदनतप्तत्रपुपानशाल्मलीवृक्षालिंगनवैतरणीतरणासिपत्रवनविचरणाद्याः, इत्येता घनकर्मपाशबद्धो विडंबनाः कः प्राप्नोति? इत्याह—जीवः प्राणी, क इह सरणं मे? कः शरणमिह मे? न कोऽपीति तात्पर्यं.

॥ मूलम् ॥—जीवो वाहि विलुद्धो । सफरो इव निज्जले तडप्फडइ ॥ सयणो विमणो पिच्छइ

। को सक्को वेयणाविगमे ॥ १०२ ॥ व्याख्या–स्पष्टा.

॥ मूलम् ॥–मा जाणसु जीव तुमं । पुत्तकलत्ताइं मज्झ सुहहेऊ ॥ नियणं बंधणमेयं । संसारसंसरत्ताणं ॥ १०३ ॥ व्याख्या–स्पष्टा.

॥ मूलम् ॥–विसमिव मुहंमि महुरा । परिणामनिकामदारुणा विसया ॥ कालमणंतं भुत्ता । अज्जवि मुत्तुं न किं जुत्तं ॥ १०४ ॥ व्याख्या–सुगमा.

॥ मूलम् ॥—विसयरसासवमत्तो । जुत्ताजुत्तं न जाणइ जीवो ॥ झूरइ कलुणं पच्छा पत्तो नरयं महाघोरं ॥ १०५ ॥ व्याख्या–विषयरस इंद्रियार्थास्वाद एव आसवो मद्यं विषयरसासवः, तेन मत्तः क्षीवः सन् जीवो भक्ष्याभक्ष्यपेयापेयगम्यागम्यादिरूपं युक्तायुक्तं न जानाति, पच्छा झूरइ पश्चात् खिद्यति कलुणं करुणं दीनं यथा भवतीति क्रियाविशेषणं, किंभूतः? पत्तो नरयं महाघोरं नरकं महाघोरमतिभयंकरं प्राप्तः. अथ गाथायुगेन संसारभावनामाह–

॥ मूलम् ॥–तह लालियंपि तह पा–लियंपि अंते मुहं विकूणेइ ॥ फरिसंतंपि कुडुंबं । विडंबणा का न संसारे ॥ १०६ ॥ व्याख्या–संसारे का न विटंबना? को न विगोपकः? कथमित्याह–

अंते वार्धके अतिसारादिरोगाभिभूतं स्वामिनमिति गम्यं, फरिसंतंपि स्पृशदपि कुडुंबं कर्तृमुखं
विकूणयति वक्रीकरोति, न तस्य स्वार्थः कोऽप्यनेन पूरितो भविष्यतीत्याह—तह लालियंपि तह
पालियंपि तथा तेन प्रकारेण यथेप्सितं वसनाशनशयनाभरणतांबूलविलेपनमाल्यादिना लालित-
मपि शुश्रुतमपि, न केवलमित्थं, तथा तेन प्रकारेण शीतातपक्षुत्तृषारोगाद्यातंकेभ्यः शुभोदर्कविधा-
नेन पालितमपि परित्रातमपीति भावः.

॥ मूलम् ॥–जणणी जायइ जाया । जाया माया पिया य पुत्तो य ॥ अणवत्था संसारे ।
कम्मवसा सव्वजीवाणं ॥ १०७ ॥ व्याख्या–स्पष्टा, अथ गाथाषट्केनैकत्वभावमाह–

॥ मूलम् ॥—एगो बंधइ कम्मं । एगो धणहरणमरणवसणाइं ॥ विसहइ भवंमि भमइ ।
एगोच्चिय कम्मवेलविओ ॥ १०८ ॥ व्याख्या—अकृत्यशतचतुरो नरः कुटुंबार्थमर्थमर्जयन्नित्यध्याहा-
रः, एकः कर्म दुर्गतिगमनौपयिकं पापं बध्नाति दृढीकरोति, नान्यः कश्चित्तदुपार्जितद्रव्यग्रासलाल-
सः स्वजनादिषु, यदुक्तं—धनं धर्मविलोपेन । परभोगाय केवलं ॥ दोषस्त्वात्मन एवैको । हरेर्द्वि-
पवधादिव ॥ १ ॥ एगो धणहरणमरणवसणाइं एको राजतस्करदायादेभ्य इति गम्यं, धनहरणमर-

णव्यसनानि विषहति, भवम्मि भमइ एगोच्चिय भवे संसारे भ्राम्यत्येकोऽपि, यदाहुः—अत्थो घरे नियत्तइ । सयणजणो पिउवणा नियत्तेइ ॥ देहंपि दहइ दहणो । जीव जण एकउ जाइ ॥ किंविशिष्टः? कम्मवेलविउ कर्मभिर्मोहनीयादिभिर्विप्लावितो विनटितः.

॥ मूलम् ॥—अन्नो न कुणइ अहि-यंपि अप्पा करेइ न हु अन्नो ॥ अप्पकयं सुहदुक्खं । भुंजसि तं कीस दीणमुहो ॥ १०९ ॥ व्याख्या—सुगमा.

॥ मूलम् ॥—बहुआरंभविढत्तं । वित्तं विलसंति जीव सयणगणा ॥ तज्जणियपावकम्मे । अणुवहसि पुणो तुमं चेव ॥ ११० ॥ व्याख्या—स्पष्टा.

॥ मूलम् ॥ अह दुक्खियाइं तह भु—क्खियाइं जह चिंतियाइं डिंभाइं ॥ तह थोवंपि न अप्पा । विचिंतिउ जीव किं भणिमो ॥ १११ ॥ व्याख्या—स्पष्टा.

॥ मूलम् ॥—विसरइ सयणलोगो । तुह संबंधं सुहुत्तकयसोगो ॥ जीव सुहासुहकम्मं । वच्चइ एगं तए सरिसं ॥ ११२ ॥ व्याख्या—सुगमा.

॥ मूलम् ॥—तुह परिचियलक्खाइं । अणंतसो जीव जम्ममरणाइं ॥ ता मरणेवि तुम्मं ।

कह धीद्धी धीरत्तणं मुयसि ॥ ११३ ॥ व्याख्या—सुगमा, परं धीधीति हाधिक्पर्यायः अथ गाथायुगेनान्यत्वभावनामाह—

॥ मूलम् ॥—खणभंगुरं सरीरं । जीवो अन्नो य सासयसहावो ॥ कम्मवसा संबंधो । निब्बंधो इत्थ को तम्हा ॥ ॥ ११४ ॥ व्याख्या—शरीरं क्षणभंगुरं क्षणविनाशि, जीवो अन्नो य, चः समुच्चये, जीवोऽन्यः शरीरात पृथक्, एतद्विलक्षणगुणत्वात्, कथमित्याह—सासयसहावो शाश्वतो नित्योऽछेद्याभेद्यरूपः स्वभावः प्रकृतिर्यस्येति स तथा, एतयोरनित्यनित्ययोस्तर्हि संबंधः कथमित्याह—कम्मवसा कर्मवशात् नामानुपूर्व्या गत्यायुःकर्मपारवश्यात्, निब्बंधो इत्थ को तम्हा तस्मादत्र शरीरे को निर्बंधः? कः प्रतिबंध इति.

॥ मूलम् ॥—कह आयं कह चलियं । तुम्हंपि कह आगउं कहिं गमिही ॥ अन्नुन्नंपि न जाणह । जीव कुडुंबं कउं तुझ ॥ ११५ ॥ व्याख्या—हे जीव तुझ तव तावकमिति भावः, कउं कुडुंबं कुतः कस्माद्धेतोः कुटुंबं? कथमित्याह—अन्नुन्नंपि न जाणह, अपीति विस्मये, अन्योन्यं च न जानासि परस्परं न वेत्सि, कोऽत्र भावः? त्वं कुडुंबकं न जानासि. कीदृक्? कह आयं कुत

सह वर्तते साभ्यंतरं तच्च तद्बाह्यं च तत्तथा. पुनरपि किंविशिष्टं? जिणुद्दिठो जिनेन भगवता वीत- रागेणोपदिष्टं तत्तथा, किं समस्तमालमेवैवंविधं तपः कर्माशेषं निर्जरयतीत्याशंक्याह—तविउं तसं आचीर्णं, किंविशिष्टं? विसुद्धो विशेषेण मनोवाक्कायैः शुद्धं निरतिचारमिति. अथ गाथायुगेन लोकभावनामाह—

॥ मूलम् ॥—धम्माधम्मा पुग्गल । जीवाकासा य पंच सुपसिद्धा ॥ अत्थिकाया तम्मय—मेयं लोगं वियाणाहि ॥ २१ ॥ व्याख्या—धर्मश्चाधर्मश्च धर्माधर्मौ, पुद्गलश्च जीवश्चाकाशं च पुद्गलजीवाकाशं, पच सुपसिद्धा जिनसमयविदिताः, तथाहि—स्वयं गंतुं प्रवृत्तेषु । जीवाजीवेषु सर्वतः ॥ सहकारी भवेद्धर्मः । पानीयमिव यादसां ॥ १ ॥ जीवानां पुद्गलानां च । प्रपन्नानां स्वयं स्थितिं ॥ अधर्मः सहकार्येष । यथा छायाध्वयायिनां ॥ २ ॥ पुद्गलाः स्पृ रसस्पर्श—गंधवर्णस्वरूपिणः ॥ तेऽणुस्कंधतया द्वेधा । तत्राबद्धाः किलाणवः ॥ ३ ॥ बद्धाः स्कंधा बंवशब्द—सूक्ष्मस्थूलाकृतिस्पृशः ॥ अंधकारातपोद्योत—भेदच्छायात्मका अपि ॥ ४ ॥ युग्मं ॥

एकाद्याः स्थूलसूक्ष्माद्याः । पंचाद्याः संज्ञ्यसंज्ञिनः ॥ विकलाद्याश्च पर्याप्ता । अपर्याप्ताश्चतुर्द-

श । ॥ ५ ॥ जीवो जिनोदितैरेभि—र्भेदैर्भिन्नोऽत्र संसृतौ ॥ ज्ञेयोऽयं रक्षणीयोऽय—माज्ञेयं तत्व-मप्यदः ॥ ६ ॥ युग्मं ॥ सर्वगत्वप्रतिष्टं स्या—दाकाशमवकाशदं ॥ लोकालोकौ स्थितं व्याप्य । त-दनंतप्रदेशभ क् ॥ ७ ॥ इति पंचैते श्रब्निकाया श्रस्तिकायाः, तन्मयमेयं लोयं वियाणाहि तैरस्ति-कायैः स्थित्युत्पत्तिव्ययात्मकैर्निर्वृत्तं तन्मयमेतं लोकं विश्वं विजानीहि? यडुक्तं—कटिस्थकरवैशा-ख—स्थानकस्थनराकृतिं ॥ द्रव्यैः पूर्णं स्मरेल्लोकं । स्थित्युत्पत्तिव्ययात्मकैः ॥ १ ॥ इति.

॥ मूलम् ॥—चउदसरज्जुपमाणे । लोए गणंपि तिलतुससमाणं ॥ तं नत्रि जत्र जीवा । न य पत्ता जम्ममरणाइं ॥ २२ ॥ व्याख्या—लोके जगति तिलतुषमानमपि स्थानं तन्नास्ति यत्र जीवाः प्राणिनो जन्ममरणानि न च प्राप्ता नाधिगतवंतः, किंविशिष्टे लोके चतुर्दशरज्जुप्रमाणे एको-द्देशेन लोकप्रमाणेऽस्योपलक्षणमात्रमेवेदं विशेषणपदं, रज्जुसंज्ञापि संप्रदायगम्या, तथाहि—क-श्चिल्लोकाग्रमारुह्य । देवो दिव्यानुभावतः ॥ श्रितं भारसहस्रेण । लोहगोलकमाक्षिपेत् ॥ १ ॥ स गोलो निपतन्मासैः । षड्भिर्यावत्क्रमेत्क्रमात ॥ तावता जायते रज्जु—रेकेति कथितं जिनैः ॥ २ ॥ लोकाग्रादप्रतिष्ठान—तलं यावच्चतुर्दश ॥ रज्जवोऽत्र पुनस्तिर्यक् । सप्तोर्ध्वं क्रमहानितः ॥ ३ ॥ ऊ-

आगतं? कह चलियं कुत्र चलितं? क यास्यतीत्यर्थः, त्वमपि कुटुंबेन न ज्ञायसे, कीदृशः? कह आगओ कुत आगतः? कहिं गमिही कुत्र गमिष्यसीति भावः. अथाशुचित्वभावनामाह—

॥ मूलम् ॥—असुइरसमवायजायं । असुइरसाहारबद्धसंठाणं ॥ असुईण जम्मभूमी । तं देहं कहं सुई होइ ॥ ११६ ॥ तद्देहं कथं केन प्रकारेण शुचि भवति, अपि तु न केनापीत्यर्थः. शुचित्वे तस्यासाध्यतां विशेषणैराह—किंविशिष्टं देहं? असुइसमवायजायं अशुचयोः शुक्रशोणितयोः समवायः संयोगस्तस्माज्जातं निष्पन्नं तत्तथा, यदुक्तं—शुक्रशोणितसंभूतो । मज्जनिस्पंदवर्धितः ॥ गर्भे जरायुसंछन्नः । शुचिः कायः कथं भवेत् ॥ १ ॥ पुनः किंविशिष्टं असुइरसाहारबद्धसंठाणं अशुचयोर्मातृभुक्तपीतान्नपयसो रसास्तेषामाहारस्तेन बद्धं संस्थानमंगोपांगादि यस्य तत्तथा. अपि चोक्तं—मातृभुक्तान्नपानोत्थ—रसनाडीक्रमागतं ॥ पायं पायं प्रवृद्धः सन् । शौचं मन्येत कस्तनोः ॥ १ ॥ पुनरपि किंविशिष्टं? असुईण जम्मभूमी अशुचीनां रसासृग्मांसमेदोऽस्थिमज्जाशुक्रांत्रवर्चसामशुचीनां पदं जन्मभूमिरुत्पत्तिस्थानं. यदुक्तं—रसासृग्मांसमेदोऽस्थि—मज्जाशुक्रांत्रवर्चसां ॥ अशुचीनां पदं कायः । शुचित्वं तस्य तत्कुतः ॥ १ ॥ इति. अथ गाथायुगेनाश्रवभावनामाह—

॥ मूलम् ॥—पंचिंदिया य चउरो । तिन्हा कसाया य तिन्नि दंडा य ॥ पंचप्पाणिवहाई । सत्तरसासवदुवाराई ॥ ११७ ॥ एएहिं मुक्केहिं । जीवंतलाइं समंनउ एयं ॥ निच्चं आउरिज्जइ । कम्ममहावारिपूरेण ॥ ११८ ॥ व्याख्या—स्पष्टे. अथ संवरभावनामाह—

॥ मूलम् ॥—एयाइं जो निरुंभइ । पडिसेहइ सोत्तमित्थ पविसंतं ॥ जं च पुराणं तंपि हु । कमेण सोसइ अपमत्तो ॥ ११९ ॥ व्याख्या—य एतानि पूर्वोदितानि सप्तदशाश्रवद्वाराणि पिधत्ते सोऽत्र जीवतडागप्रविशत्कर्मजलं प्रतिषेधयति, यच्च पुराणं पुरातनमग्रे प्रविष्टं तदपि क्रमेण मंदंमंदं यद्वा विशुद्धध्यानमयार्कतेजसेति भावः, सोसेइ शोषयति, किंभूतः? अपमत्तो अप्रमत्तोऽप्रमद्वर इति, अथ निर्जराभावनामाह—

॥ मूलम् ॥ बारसभेयविसुद्धो । सब्भिंतरबाहिरो जिणुद्दिठो ॥ तविउ तवो विसुद्धो । कम्म मसेसंपि निज्जरइ ॥ १३० ॥ व्याख्या—तपोऽशेषं समस्तं बद्धस्पृष्टनिधत्तनिकाचितादिचतूरूपं कर्म निर्जरयति परिशाटयति, किंविशिष्टं तपः? बारसभेयविसुद्धो नपुंसकलिंगस्यात्र प्राकृतत्वाबाहुल्यात पुल्लिंगता, द्वादशभिर्भेदैर्विशिष्टं प्रधानं तत्तथा, अत एव सब्भिंतरबाहिरो आभ्यंतरेण भेदषट्केन

सह वर्तते साभ्यंतरं तच्च तद्बाह्यं च तत्तथा. पुनरपि किंविशिष्टं? जिणुद्दिठो जिनेन भगवता वीतरागेणोपदिष्टं तत्तथा, किं स्मृतमात्रमेवैवंविधं तपः कर्माशेषं निर्जरयतीत्याशंक्याह—तविउं तपं आचीर्णं, किंविशिष्टं? विशुद्धो विशेषेण मनोवाक्कायैः शुद्धं निरतिचारमिति. अथ गाथायुगेन लोकभावनामाह—

॥ मूलम् ॥—धम्माधम्मा पुग्गल । जीवाकासा य पंच सुपसिद्धा ॥ अत्थिकाया तम्मय— मेयं लोगं वियाणाहि ॥ २१ ॥ व्याख्या—धर्मश्चाधर्मश्च धर्माधर्मौ, पुद्गलश्च जीवश्चाकाशं च पुद्गलजीवाकाशं, पच सुपसिद्धा जिनसमयविदिताः, तथाहि—स्वयं गंतुं प्रवृत्तेषु । जीवाजीवेषु सर्वतः ॥ सहकारी भवेद्धर्मः । पानीयमिव यादसां ॥ १ ॥ जीवानां पुद्गलानां च । प्रपन्नानां स्वयं स्थितिं ॥ अधर्मः सहकार्येष । यथा छायाध्वयायिनां ॥ २ ॥ पुद्गलाः स्यू रसस्पर्श–गंधवर्णस्वरूपिणः ॥ तेऽणुस्कंधतया द्वेधा । तत्राबद्धाः किलाणवः ॥ ३ ॥ बद्धाः स्कंधा बंधशब्द–सूक्ष्मस्थूलाकृतिस्पृशः ॥ अंधकारातपोद्योत–भेदच्छायात्मका अपि ॥ ४ ॥ युग्मं ॥

एकाक्षाः स्थूलसूक्ष्माक्षाः । पंचाक्षाः संज्ञ्यसंज्ञिनः ॥ विकलाक्षाश्च पर्याप्ता । अपर्याप्ताश्चतुर्द-

श । ॥ ५ ॥ जीवो जिनोदितैरेभि—र्भेदैर्भिन्नोऽत्र संसृतौ ॥ ज्ञेयोऽयं रक्षणीयोऽय—माज्ञेयं तत्व-मप्यदः ॥ ६ ॥ युग्मं ॥ सर्वगत्वप्रतिष्ठं स्या—दाकाशमवकाशदं ॥ लोकालोकौ स्थितं व्याप्य । तदनंतप्रदेशभ क् ॥ ७ ॥ इति पंचैते ऋछिकाया ऋस्तिकायाः, तन्मयमेयं लोयं वियाणाहि तैरस्ति-कायैः स्थित्युत्पत्तिव्ययात्मकैर्निर्वृत्तं तन्मयमेतं लोकं विश्वं विजानीहि? यदुक्तं—कटिस्थकरवैशाख—स्थानकस्थनराकृतिं ॥ द्रव्यैः पूर्णं स्मरेल्लोकं । स्थित्युत्पत्तिव्ययात्मकैः ॥ १ ॥ इति.

॥ मूलम् ॥—चउदसरज्जुपमाणे । लोए ठाणंपि तिलतुससमाणं ॥ तं नत्थि जत्थ जीवा । न य पत्ता जम्ममरणाइं ॥ २२ ॥ व्याख्या—लोके जगति तिलतुषमानमपि स्थानं तन्नास्ति यत्र जीवाः प्राणिनो जन्ममरणानि न च प्राप्ता नाधिगतवंतः, किंविशिष्टे लोके चतुर्दशरज्जुप्रमाणे एको-द्देशेन लोकप्रमाणेऽस्योपलक्षणमात्रमेवेदं विशेषणपदं, रज्जुसंज्ञापि संप्रदायगम्या, तथाहि—कश्चिल्लोकाग्रमारुह्य । देवो दिव्यानुभावतः ॥ श्रितं भारसहस्रेण । लोहगोलकमाक्षिपेत् ॥ १ ॥ स गोलो निपतन्मासैः । षड्भिर्यावत्क्रमेत्क्रमात ॥ तावता जायते रज्जु–रेकेति कथितं जिनैः ॥ २ ॥ लोकाग्रादप्रतिष्ठान–तलं यावच्चतुर्दश ॥ रज्जवोऽत्र पुनस्तिर्यक् । सप्तोर्ध्वं क्रमहानितः ॥ ३ ॥ न्यू-

तलरज्जुरेकास्ति । तदूर्ध्वं क्रमवृद्धितः ॥ पंच पंचमकल्पे स्यु-स्तदूर्ध्वं क्रमहानितः ॥ ४ ॥ एका सिद्धशिलासिद्धि । रज्जुः संपिंडितास्त्विमाः ॥ शतानि त्रीणि लोके त्रि-चत्वारिंशत्प्रकीर्तिताः ॥ ५ ॥ तत्प्रमाणे च लोकेऽत्र । स्थानं तन्नास्ति कंचन ॥ यत्र जीवा न जन्मानि । मरणानि च लेभिरे ॥ ६ ॥ इति. अथ बोधिभावनामाह—

॥ मूलम् ॥—अन्नाणेण कुसंगेण य । कुत्थियमयवासणाए य ॥ डुलहा भवंमि बोहि । विसयपसत्ताण सत्ताण ॥ १२३ ॥ व्याख्या—अज्ञानेन जडतया, कुसंगेन मिथ्यादृष्टिसंसर्गेण च. चः पुनरर्थे, कुत्सितं मतं द्वादशांगीतः पदाक्षरादेरन्यथा प्ररूपणं कुमतं, यदाहुः—पयमक्खरंपि एक्कंपि । जो न रोएइ सुत्तनिद्दिठं ॥ सेसं रोयंतोवि हु । मिच्छदिठ्ठिमुणेयव्वो ॥ १ ॥ अपि च, आसुधर्मस्वाम्यविछिन्नगुर्वाज्ञाप्रवर्तमानगणभृत्परंपराभिरशठाभिराचीर्णात् विविधविप्रतिपत्तिकरणं कुमतं, यदाहुः—आयरियपरंपरेणं । समागयं जो छेय बुद्धीए ॥ को वेइछेयवाई । जमालिनासंसना सेज्जा ॥ १ ॥ एतदादिरूपस्य तस्य वासना मिथ्याभिनिवेशमिति, तया, डुलहा भवंमि बोहि भवेऽस्मिन् संसारे बोधिर्ज्ञानावाप्तिर्दुर्लभा, केषां? सत्ताण सत्वानां प्राणिनां, किंविशिष्टानां? विसय-

पसत्ताण विषया इंडियार्थास्तेषु प्रसक्ता निबद्धबुद्धयस्तेषामिति. अथ धर्मभावनामाह—

॥ मूलम् ॥—अइदुल्लहो य धम्मा—यरिओ जीवाण मोहमूढाण ॥ जो सहइ जिणधम्मं । अंधाणव मग्गसंचारं ॥ १२४ ॥ व्याख्या—दुर्गतौ नरकतिर्यग्लक्षणायां पततो ये प्राणिनस्तेषां धारणाद्धेतोर्धर्मः, यद्वा धत्ते सुरनरमोक्षस्थानेषु जंतूनिति निरुक्ताद्धर्मः, यदाहुः—दुर्गतौ प्रसृतान् जंतून् । यस्माद्धारयते ततः ॥ धत्ते चैतान् शुभे स्थाने । तस्माद्धर्म इति स्मृतः ॥ १ ॥ तस्याचारं सुष्टु आख्यातीति धर्माचार्यः, सैष दुर्लभो दुःप्रापः, चः पूर्वभावनापेक्षया समुच्चये, यः किं? जीवाण जीवानां प्राणिनां, किंविशिष्टानां? मोहमूढाण मोहेन मिथ्यात्वमोहनीयेन कर्मणा मूढाः, हेयोपादेयविवेकविकलास्तेषां, केषामिव? अंधाणव मग्गसंचारं, स्पष्टं.

॥—मूलम् ॥—धम्मायरिएण विणा । जाणंति न मोहनिग्गहोवायं ॥ धम्माभिमुहावि पुणो । पुणोवि जीवा भमंति भवे ॥ १२५ ॥ व्याख्या—धर्माचार्येण विना जीवा मोहनिग्रहोपायं न जानंति ततः किं स्यादित्याह—पुणोपुणोवि भमंति भवे, भवे संसारे पुनः पुनरपि भ्राम्यंति, किमधर्माभिमुखा इत्याह—धम्माभिमुहावि धर्माभिमुखा अपि तामल्यादिवत्, तत्वबहिर्भूताः प्रभूता-

ज्ञानकष्टपटिष्टाः, अपि स्वल्पफलं भुंक्ते न मुक्तिमाप्नुवंतीति भावः. अथ गाथाचतुष्केण धर्ममहिमोत्कीर्तनेन स्वजीवं बोधयन्नाह—

॥ मूलम् ॥—रे जीव कहणु चिंतसि । चिंतामणिकामधेणुकप्पतरू ॥ धम्मेणं चिय सवाइं । हुंति कज्जाइं सज्जाइं ॥ २६ ॥ व्याख्या—रे इत्यभिमंत्रणार्थं हे जीव कथं न्वनुचिंतयस्यनुध्यायसि चिंतामणिकामधेनुकल्पतरून्, अजागलस्तनप्रासवनमिवानर्थकमेवेदमिति भावः. तर्हि जर्जरितात्मकार्यसंसाधनविधौ क उपायः स्यादित्याह—धम्मेणंत्ति चियत्ति अवधारणे, धर्मेण जिनप्रणिताचारेण सर्वाणि ऐहिकामुष्मिकानीति भावः, कार्याणि कृत्यानि सज्जानि प्रगुणानि, भग्नान्यप्यस्थीनीव सर्पिषा सन्नद्धानि भवंति, यदुक्तमस्माभिः—कल्पद्रुमो द्रुमः सोऽपि । पशुः कामदुघापि सा ॥ दृषच्चिंतामणिः सोऽप । विनैनं धर्ममंगिनां ॥ १ ॥ अपि च—का कामधेनुरिह । कश्चिंतामणिरपि कल्पशाखी कः ॥ सर्वाण्यमूनि भुवने । पर्यायवचांसि धर्मस्य ॥ २ ॥ इति.

॥ मूलम ॥—भमिहिसि भवंमि निग्गुण । जम्मजरामरणपरवसो जीव ॥ न कया कयावि तुमए । जिणवयणरसायणे तण्हा ॥ १२७ ॥ व्याख्या—हे जीव निर्गुण नितरां गतो विनष्टो गुणः

सद्ज्ञानरूपो यस्य स तथा तस्य संबोधनं, भ्राम्यसि तैलिकवृषभ इव बद्धदर्शनः पर्यटसि, किंभूतः सन्? जम्मजरामरणपरवसो जन्म च जरा च मरणं च जन्मजरामरणानि तैः परवशः परायत्तः सन्, कथमित्याह—तुमए तण्हा न कयावि कया, त्वया तृष्णा रुचिर्न कदापि कृता, क्व? जिणवयणरसायणे जिनानामर्हतां वचनं सम्यक्त्वमूलमहिंसादिव्रतानुष्ठानरूपं, तदेव रसायनमजरामरत्वदायिमहौषधं तत्तथा, आयुर्वेदोक्तं हि रसायनमन्यत फल्गुवल्गितमेव, एतज्जिनवचनरसायनं त्वजरामरत्वादद्वैतवादि तस्मिन्, अन्यत्तु रसायनमनुभूतं सदजरामरत्वं कुर्यान्न वा, अस्मिन् जिनवचनरसायने त्वनुभवस्य किमुच्यते? तृष्णापि पुंडरीकाणामजरामरणत्वहेतुस्तच्च संप्रदायगम्यं, तथाहि—
निस्तुपं समभागं च । तत्वत्रितयमादितः ॥ महाव्रतानि पंचेषु । भावनाः पंच पंच च ॥ १ ॥ तपश्च द्वादशविधं । तत्र द्वादश भावनाः ॥ अष्टौ स्पष्टौजसः किंच । दर्शनस्य प्रभावनाः ॥ २ ॥ गुरूपदेशतो बध्ध्वा । स्वमनःपारदं ततः ॥ तेनैता योजयेत्प्राज्ञ—स्तत्वमुख्या महौषधीः ॥ ३ ॥ मिथ्यात्ववमनं मोह—लंघनं मलपातनं ॥ कृत्वा पूर्वं ततः कुर्या—दिदं धर्मरसायनं ॥ ४ ॥ न जन्म न जरा नापि । मरणं तस्य कर्हिचित् ॥ इदं यः कार्यवित् कुर्या—ज्जिनवाक्यरसायनं ॥ ५ ॥

॥ मूलम् ॥—जइ मुणसि पावकम्मं । सम्मं दुक्खाण कारणं जीव ॥ तहवि हु तुज्झ पमाओ । निद्धंधस धम्मकज्जेसु ॥ १२८ ॥ व्याख्या—हे निद्धंधस निर्लज्ज आत्मन् यदि पापकर्म सम्मं सम्यग्दुःखानां जन्मजरामरणादीनां कारणं हेतुं जानासि, तहवि हु तथापि खलु तव प्रमादोऽनादरः, केषु? धर्मकार्येषु सत्क्रियासु, तास्तु संप्रदायगम्यास्तथाहि—केशोत्तारणमल्पकं च निरसं निर्व्यंजनं भोजनं । निद्रावर्जनमह्नि मज्जनविधित्यागश्च भोगोज्झनं ॥ पानं संस्कृतपाथसामविरतं येषां किलेदं क्रिया—स्तेषां कर्ममयामयः स्फुटमयं पुष्टोऽपि हि क्षीयते ॥ १ ॥ इति. अथ नष्टविघटनया जीवस्य धर्मं प्ररोचयन्नाह—

॥ मूलम् ॥—विहडइ विहवो विहडेइ । बंधवो विहडए सरीरंपि ॥ तणु परिचत्तवि अंते । विहडेइ न जीव तुह धम्मो ॥ १२९ ॥ व्याख्या—हे जीव विभवो द्रव्यं अनेककष्टैरुपार्जितोऽपि रक्ष्यमाणश्चांते परलोकप्रवासानेहसि विघटते, न सहायातीति भावः, द्रव्यं ह्यचेतनं न जानीते, किं तस्येत्याशंक्याह—बांधवः स्वजनो यः सचेतनः कृत्याकृत्यवेदी सोऽपि विघटते, न केवलमयं शरीरमपि देवगुरुबांधवेभ्योऽप्यधिकवाल्लभ्यात्पोषितं तदपि विघटते, अत एव कृतघ्नत्वागसि वह्निना

दाहशिक्षां लभते, धर्मस्तु तवापरिचितोऽपि स्वल्पसेवितोऽपि न विघटते, यदुक्तं—गृहेभ्योऽर्था निवर्तंते । स्मशानेष्वयश्च बांधवाः ॥ वह्निना दह्यते देहः । सत्कर्मैव सह व्रजेत् ॥ १ ॥ इति. अथांतरंगकुटुंबगुणकदंबपरिमलोद्गारेण जीवस्य बहिरंगकुटुंबमोहभावमुच्छ्वासयन्नाह—

॥ मूलम् ॥—धम्मो चिय तुह जणओ । जणणी तुह जीव सव्वदया ॥ तुह बंधवो विवेगो । परमं मित्तं च संमत्तं ॥ १३० ॥ मणसुद्धी पुण दइया । उवसमपमुहा गुणा य तुह सयणा ॥ इंदियजओ य पुत्तो । सुबुद्धि तुह पुणो धूया ॥१३१॥ एयं चेव कुडुंबं । धरिज्ज हियए करिज्ज महव्वयणं ॥ परलोएविपओत्थं । तं न मुयइ जं खणद्धंपि ॥ १३२ ॥ व्याख्या—हे जीव चियत्ति अवधारणे, तव धर्मो जनकः, नान्यः सांसारिकः, यदयं संसारनाट्ये कर्मसूत्रभृत्परतंत्रो गृहीतमुक्तान्यज्ञातीयनेपथ्यो नट इव विचेष्टते, धर्मस्तु नत्वाद्युत्कुलजातिरूपचिद्रूपतारोग्यभाग्यसौभाग्याधिपत्यादेः प्रतिभवं जनकत्वादेकांतेन जनकः, जननी च तव का नाम? सव्वजीवदया, सर्वे च ते जीवा एकेंद्रियादयस्ते तथा, तेषु दया कृपा, अन्या हि जननी पूर्वोक्तबहिरंगपितृवद्भवनाटकनटी, इयं तु सर्वजीवदयारूपायुरारोग्यादिजननाद्धैतादात्मनः सनातनैव जननी, यदुक्तं—मातेव सर्वभूताना—

महिंसा हितकारिणी ॥ इति. जनकस्य जननी प्रसत्तिपात्रं स्यात्तदियमपि धर्मस्य तद्वत्, तथाहि—चराचरेषु जीवेषु । रक्षा धर्मप्रसत्तये ॥ तपोदानजपध्यान—जातमस्याः परिच्छदः ॥ १ ॥ बांधवश्च तव को नाम? विवेको हेयोपादेयकृत्यविवेचनं, सांसारिको हि बध्नाति दुःखेनेति बांधव इति व्युत्पत्त्या ऋणवैरादिना द्रव्यादिविभागित्वाच्च दुःखद एव. अयं विवेकबांधवश्चानंतभवप्रवर्धितकर्मऋणमोचयिता रागादिवैरिवारकत्वाद्भिन्नवासंविभागित्वाच्चेहामुत्र प्राणिनां सुखदत्वात्सत्यबांधव एव.

परमं प्रकृष्टं मित्रं च तव किं? तत् सम्यक्त्वं, यतः मेद्यति स्निह्यतीति व्युत्पत्त्या विचार्यमाणमिदमेव जाघटीति, यत्कर्मबंधकारणमिथ्यात्वनिवर्तकत्वात्प्राणिनः प्रीतिं वर्धयति, यदुक्तं—किं मित्रं यन्निवर्तयति पापात्, अन्यच्च सांसारिकं मित्रं सहखेलनादिभिः पापहेतुरेवेति. दयिता च तव का नाम? मणसुद्धी मनसो विकल्परूपस्य शुद्धिर्निर्विकल्पता मनःशुद्धिः, यतो दयते दत्ते सदानंदमितीयं दयितेति व्युत्पत्त्या चिंत्यमाना सैव संगतिसंगति, अपरा तु सांसारिकी क्षणिकानंददात्रीह, अमुत्र तु नरकनिपातनिमित्तत्वाददयितैव, स्वजनाश्च तव के? उपशमप्रमुखा गुणाः, यतो जनयंति प्रतिबोधमिति जनाः, स्वस्यात्मनो जनाः स्वजना इति व्युत्पत्त्या निर्धार्यमाणा अमी ए-

वेहामुत्र च प्राणिनां सुखजनकाः, अपरे सांसारिकास्तु प्रांते प्रेतवनानुप्रयाणप्रत्रासावधिप्रीतय एवेति. पुत्रश्च तव को नाम? इंदियजओ य इंद्रियाणां स्पर्शनादीनां जयो वशीकरणं इंद्रियजयः, यतः पुंनाम्नो नरकात् त्रायत इति लौकिकव्युत्पत्त्या विचार्यमाणोऽयमेव युक्तिमासादयति. अपरस्तु सांसारिकः पुत्रो विषयवासनासमपास्तसमस्तशस्ताचारतया न तथैवेति. तुह पुण धूयत्ति तव पुनर्दुहिता का? सुहबुद्धि शुभा सावद्यविरत्या शोभमाना बुद्धिः शुभबुद्धिः, यतो दोग्धि प्रमोदेन पितरं पूरयतीति दुहितेति व्युत्पत्त्या सत्याप्यमानोऽयमेवार्थो घटनाकोटिमाटीकते, अन्या तु सांसारिकी दुहिता शोकसंतापनिबंधनमेवेति. एयं चेव कुटुंबमित्येषा गाथा स्पष्टैव. परं परलोयपउत्तं प्रोषितं त्वामिति पर्यायः. अथ धर्मविषयप्रमादेऽनुशयान आह—

॥ मूलम् ॥—साहम्मियसम्माणं । न कयं जिणमंदिरं न उद्धरियं ॥ न य जिणवरवरबिंबं । कारवियं जम्म हारवियं ॥ १३३ ॥ व्याख्या—स्पष्टा.

॥ मूलम् ॥—पत्ते घरम्मि पत्ते । सव्वविसुद्धं विसुद्धसद्धेण ॥ जेण न दिन्नं दाणं । कह होइ तस्स कल्लाणं ॥ १३४ ॥ व्याख्या—पात्रं ज्ञानदर्शनचारित्रात्मकं तस्मिन्, घरम्मि पत्ते द्वितीयातृ-

तीययोः सप्तमीति प्राकृतलक्षणात्, गृहं प्राप्ते, सव्वविसुद्धं सर्वैः सचित्तक्षेपणसचित्तपिधानकाललंघनमत्सरान्योपदेशादिभिः पंचभिरप्यतिथिसंविभागव्रतातीचारैर्विशुद्धं विप्रमुक्तं, विसुद्धसद्धाए, विशुद्धातिनिर्मला चासौ श्रद्धा च, कृतकृत्योऽस्मि धन्योऽस्मि पुण्यवानस्म्यहं, यतः—चित्तं वित्तं च पात्रं च । त्रिवेणीसंगमोऽद्य मे ॥ इत्यादिरूपा वासना विशुद्धश्रद्धा, तयोपलक्षितेन येन जीवेन प्राशुकाशनपानखादिमस्वादिमवस्त्रपात्ररजोहरणादिपीठफलककंबलशय्यासंस्तारकादिकं दानं न दत्तं, कह होइ तस्स कल्लाणं, कथं भविष्यति तस्य कल्याणं मुक्तिः! ननु 'दाणेण य हुंति उत्तमा भोगा' कथं मुक्तिरिति ब्रूषे तन्न, यदाह भगवान्—समणोवासएणं भंते तहारूवं समणं वा माहणं वा फासुएणं एसणिज्जेणं असणपाणखाइमसाइमेणं वत्थपडिग्गहकंबलपायपुंछणेणं पीढफलगसिज्जासंथारएणं पडिलाभेमाणे किं लहइ? गोयमा! समणोवासएणं तहारूवं समणं वा माहणं वा जाव पडिलाभेमाणे किं चयइ, समणस्स वा माहणस्स वा समाहिमुप्पाएहिं, समाहिकारएणं तमेव समाहिं पडिलभइ, समणोवासएणं भंते तहारूवं समणं वा माहणं वा जाव पडिलाभेमाणे किं चयइ? गोयमा जीवियं चयइ, दुच्चयं चइत्ता दुक्करं करइ, दुल्लहं लहइ, बोहिं लब्भ-

इ, तओ पच्छा सिज्झइ, मुच्चइ जाव अंतं करेइ, इति.

॥ मूलम् ॥—दीणुद्धरणंमि धणं । न वच्चं सज्जिअं न सीलगुणो ॥ न कयं जिणभवए-सा—णुसरणं तस्स किं सरणं ॥ १३५ ॥ व्याख्या—सुगमा. अथानादिभवाभ्यस्तमिथ्यात्वलीनं जीवं हितोपदेशेन प्रीणयन्नाह—

॥ मूलम् ॥—आमयकारि विसायं । मिच्छत्तं कयसणंव जं भुत्तं ॥ तं वमसु विवेगोसह—सुवभुंजह जीव कुसलकए ॥ १३६ ॥ व्याख्या—हे जीव सुदेवसुगुरुसेवामये सद्धर्ममोदके सत्यपि त्वया यन्मिथ्यात्वमज्ञानत्वं भुक्तं, किंविशिष्टं? आमयकारि आ सामस्त्येन मतानि निजकुमतिकल्पितान्याचरणानि, जमालिगोष्ठामाहिलद्वैराशिकादिक्रियारूपाणि करोतीत्येवंशीलं आमतकारि, पुनः किंरूपं विसायं, इह विग्रहविवादरुचितया कुलगणसंघबहिःकृतत्वात् कष्टानुभावाद्दिवि किल्विषिकत्वमात्रमापन्नस्य सुरसभानिरस्कृतत्वात् परत्र च विगतं सातं सुखं यस्य तद्विसातं, यदाहुः—विग्गहविवायरुइणो । कुलगणसंघेण बाहिरकयस्स ॥ नत्थि किर देवलोगेवि । देवसमिईसु अवगासो ॥ १ ॥ किमिव? कयसणंव कदशनमिव, तच्च किंरूपं? आमयकारि रोगकारि, विसायं विस्वा

दं, तं वमसु तद् वम? किं कृत्वा? विवेगोसहमुवत्रुंजिय, विवेको रागद्वेषमोहादिदोषेभ्यः पृथग्भावरूपः, स एवौषधं विवेकौषधं उपभुज्य, कस्मै? कुसलकए कुशलकृते जन्मजरामरणहरणकरणायेति भावः. अथोपायांतरेण स्वजीवंप्रति तत्वतात्पर्यमाह—

॥ मूलम् ॥—विसएसु परिब्भमंतं । अइदुस्सहकम्मघम्मपरिसिंतं ॥ विसामसु मणपहियं । जिणधम्मतरुंमि तं जीवा ॥ १३७ ॥ व्याख्या—हे जीव त्वं मनःपथिकं चित्ताध्वगं विसएसु परिब्भमंतं विषयेष्विंडियार्थेषु, देशेष्विति श्लिष्टं पदं, परिभ्रमंतं, अइदुस्सहत्ति अतिदुस्सहानि तीव्राणि कर्माण्येव घर्म आतपः स तथा तेन परिश्रांतं खिन्नं विसामसु विश्रमस्व? क? जिणधम्मतरुम्मि जिनस्यार्हतो धर्म आज्ञापालनं स एव तरुर्वृक्षस्तस्मिन्निति. अथान्यतमोपायेन जीवस्य मनःशुद्धिमुपदिशन्नाह—

॥ मूलम् ॥—नीरागमणुगुरुसरो-वराउं गहिऊण देसणासलिलं ॥ तं कुणसु चित्तनिवसण-मवणीयनीसेसदोसमलं ॥ १३८ ॥ व्याख्या—हे जीव त्वं चित्तनिवसनं मनोवस्त्रं, अवणीयत्ति निःशेषाश्च ते दोषा रागद्वेषादयश्च, मलः पूर्वबद्धं कर्म, निःशेषदोषमला अपनीता यस्मात्तदपनीत-

निःशेषदोषमलं कुरुष्व? किं कृत्वा? गहिऊण गृहीत्वा कस्मात्? नीरागमणगुरुसरोवराउ नीराग-
मनाश्चासौ गुरुश्च नीरागमनोगुरुः, स एव सरोवरं तस्मात, अन्यच्च नीरस्य जलस्यागमनं यत्र त-
न्नीरागमनं तच्च तत्सरोवरं च तस्मादिति श्लिष्टं पदं. अथ सर्वधर्मोपदेशेन स्वजीवं शिक्षयन्नाह—

॥ मूलम् ॥—रक्खिज्जसु जीव तुमं । हियए निहिऊण जच्चरयणंव ॥ भवजलहिजाणपत्तं । पत्तं पुन्नेहिं सम्मत्तं ॥ १३९ ॥ व्याख्या—हे जीव तुमं त्वं सम्मत्तं सम्यक्त्वं 'अरिहंतो देवो, गुरुणो सुसाहुणो, जिणमयं तत्तं' इतिरूपं दर्शनं हियए निहिऊण हृदये निधाय दृढं धृत्वा, जच्चरयणंव जात्यरत्नमिव रक्खिज्जसु रक्षेः, किंविशिष्टं? पत्तं पुन्नेहिं प्राप्तं पुण्येन पूर्वकृतलाघवेनेत्यर्थः, पुनः किंविशिष्टं? भवजलहिजाणपत्तं भवः संसारः स एव जलधिस्तत्र यानपात्रं प्रवहणं, तदमज्जनविधावेक एव हेतुत्वादस्येति. अथ यद्यपि संसारपारावारतरणतरंडमेकं सम्यक्त्वं, तथापि चारित्रादिक्रियाकौशलमंतरेण न परं पारमधिगंतुं पार्यते, अतस्तदुपदेशमाह—

॥ मूलम ॥—जइ इच्छसि लंघेउं । सांसारं दुक्करंपि ता कुणसु ॥ तवनियमसामायारं । माः यारंभं पमुत्तूण ॥ १४० ॥ व्याख्या—स्पष्टा, इति सोपालंभं सकरुणं स्वजीवमुपधायोपवर्गसंव-

गणमाह—

॥ मूलम् ॥—इय सुणिऊण पसत्थं । जीव तुमं जाणिऊण परमत्थं ॥ सुहकज्जेसु पमायं असुहसहायं इमं मुयसु ॥ १४१ ॥ व्याख्या—इति पूर्वोक्तं चतुःशरणप्रतिपत्तिसम्यग्गुणानुमोदनदुःकृतगर्हाभावनादिचतुःप्रकारमुपदेशं प्रशस्तं सर्वोत्तमं श्रुत्वा, हे जीव त्वं परमार्थं तमेव सच्चं निस्संकं जं जिणेहि पवइयं, इति तत्वं ज्ञात्वा शुभकार्येषु धर्मकृत्येषु प्रमादमालस्यं, असुहसहायं अधर्मप्रकृतिप्रसंगं इमं मुंचस्व परिहरेति. अथैतत्प्रकरणप्रासादोपरि कलशमिवोपदेशरहस्यमाह—

॥ मूलम् ॥—तं जीव सुणसु सवं । फुरंतरोमंचकंचुओ निच्चं ॥ जिणपवयणस्स सारं । भावेज्जमणो नमोक्कारं ॥ १४२ ॥ व्याख्या—अस्या व्याख्यानं तु कर्पूरकलिकायां वासदानमिव निरर्थकमिति. अथ ग्रंथसमाप्तौ मंगलगाथामाह—

॥ मूलम् ॥—रइयं पगरणमेयं । जिणपवयणसारसंगहेण मए ॥ सम्मं सम्मत्तविया-सम्मंबरं दिसउ भवियाणं ॥ १४३ ॥ व्याख्या—एतत्प्रकरणं मया रचितं, केन कृत्वा? जिणपवयणसारसंगहेण जिनानां प्रवचनं सिद्धांतस्तत्र सारभूतानां चतुःशरणप्रतिपत्तिप्रभृतीनां चतुर्णामुपदेशानां

संग्रहस्तेन, अन्यदपि प्रकरणमुत्सवो विवाहादिः सारसंग्रहेण डव्योच्चयेन क्रियत इत्युक्तिलेशः, किं करोतु? ददातु, कथं? सम्मं सम्यकसम्मत्तवियासम्बरं सम्यक्त्वस्य सुदेवसुगुरुसुधर्मप्रतिपत्तिरूपस्य विकासम्बरो विज्ञानविस्तरस्तं, केभ्यः भवियाणं भविकेभ्यः भद्रकेभ्य इति कवेरुक्तिः, वयं तु किं ब्रूमः? एतत्प्रकरणं भविकेभ्य आसडं आसडनामानं कविं वरं प्रधानं दिशतु कथयतु, यतः कवयः काव्यकीर्तनैरेव प्रसिद्धिमायांति. किंविशिष्टमिदं प्रकरणं? सम्मतविय 'दिप्रजनकांत्यशनखादनेषु' इत्यनेन सम्यक्त्वं वेदति समुद्दीपयति अवगमयति वेति सम्यक्त्वविदिति सिद्धमिति. अथ प्रशस्तिगाथमाह—

॥ मूलम् ॥—सिरिभिल्लमालनिम्मल—कुलसंभवकडुयरायतणएण ॥ इय आसडेण रइयं । वसुजलहिदिणेसवरिसंमि ॥ १४४ ॥ व्याख्या—एतद्विवेकमंजरीनामधेयं प्रकरणं आसडेन रचितं रचनामानीतं, किंविशिष्टेन? सिरिभिल्लमालत्ति निर्मलं निर्दूषणं च तत्कुलं च निर्मलकुलं, श्रिया उपलक्षितं तद् भिल्लमालाख्यं निर्मलकुलं च, तस्मात्संभवतीति श्रीभिल्लमालकुलसंभवः, स चासौ कटुकराजस्तस्य तनयः पुत्रो यः स तथा तेन, कदेत्याह—वसुजलहिदिणेसवरिसंमि वस-

वोऽष्टौ जलधयश्चत्वारो दिनेशो द्वादश, तैर्निर्मितं वर्षं वसुजलधिदिनेशवर्षे, तत्रेति संक्षेपार्थः, व्यासार्थस्तूच्यते—श्रीभिल्लमालाभिधया प्रसिद्धो । वंशोऽवतंसो जगतीतलस्य ॥ समस्ति पाथोधिरिवाच्युतश्री—सरस्वतीवासनिवास एकः ॥ १ ॥ तस्मिन्नवो रजनिजानिरिवाजनिष्ट । भासा पटुः कटुकराज इति प्रतीतः ॥ यो जैनदर्शनमयो न्नवमूर्ध्नि चक्रे । लीलास्पदं पदमखंमितवृत्त एव ॥ २॥ सुधांशो रोहिणीवास्य । बुधपुत्रप्रसूः प्रिया ॥ बभूवानलदेवीति । सतीजनमतल्लिका ॥ ३ ॥ तयोरजनिषातां द्वौ । सुतावासडजासमौ ॥ सत्पथं न व्यलंघेतां । धुर्यौ धर्मरथस्य यौ ॥ ४ ॥ आसडः कालिदासस्य । यशोदीपमदीपयत् ॥ मेघदूतमहाकाव्य—टीकास्नेहनिषेचनात ॥ ५ ॥ श्रुत्वा नवरसोद्गार—किरोऽस्य कविता गिरः ॥ राजसभ्याः कविसभा—शृंगार इति यं जगुः ॥ ६ ॥ जिनस्तोत्रस्तुतीः पद्य—गद्यबंधैरनेकशः ॥ चक्रे यः क्रूरकर्माहि—जांगुलीमंत्रसन्निभाः ॥ ७ ॥ येनोपदेशकंदल्या—ह्वानप्रकरणछलात् ॥ कृतं मोक्षाध्वनीनेभ्यः । पाथेयातिथ्यमक्षयं ॥ ८ ॥ आसडस्याम्रमस्येव । गौरीगंगे बभूवतुः ॥ पृथिवीदेवीजैतल्ल–देव्यौ द्वे तस्य वल्लभे ॥ ९ ॥ जैतल्लदेव्यां तनयावभूतां । द्वावेतयो राजडनामधेयः ॥ ज्येष्ठः कनिष्ठः कलिकालकुंभि—द्विट्जैत्रसिंहः किल

जैत्रसिंहः ॥ १० ॥ अरिसिंह इति पृथिवी देव्यां करपुष्करः श्रवद्दानः ॥ गुरुगिरिपरिणयकर्मा । गज इव कलभोंगजः समभूत ॥ ११ ॥ पुत्रे राजडनाम्नि बालकदलीकांडोपमे स्वःपुरीं । याते बालसरस्वतीति विदिते तच्छोकमूढाशयः ॥ संबुद्धोऽभयदेवसूरिसुगुरो यैंरेववाक्यैरसौ । तैरेवेदमसूत्रयत्प्रकरणं श्रीआसडः सत्कविः ॥ १२ ॥

एतामासिडजैत्रसिंहसचिवेनात्यंतमभ्यर्थितो । वृत्तिं श्रीहरिभद्रसूरिसुगुरोः शिष्यप्रशिष्यावधिः ॥ वाग्देवीप्रतिपन्नसूनुरकृत श्रीबालचंद्राख्यया । विख्यातोऽधिपतिर्गणस्य गणिनीरत्नश्रियो धर्मजः ॥ १३ ॥ नागेंद्रगच्छार्णवपार्वणेंदु—रेतां बृहद्गच्छनभोरविश्च ॥ श्रीमान् विपूर्वो जयसेनसूरिः । श्रीपद्मसूरिः समशोधयेतां ॥ १४ ॥ देवानंदमुनींदुगच्छगगनालंकारशीतद्युतेः । सूरेः श्रीकनकप्रभाभिधगुरोस्त्रैवेद्यचुडामणेः ॥ वाग्देवीसुनबालचंद्रसुकवेरासप्रतिष्ठः सुधी—रेतस्यां सहकारिकारणमभूत्प्रद्युम्नसूरिः पुनः ॥ १५ ॥ उत्सूत्रं यदसूत्रि सूत्रविकलेनालक्षणं लक्षण—न्यूनेन श्लथनीतिरीतिरिपुणा व्यर्थं हृतार्थेन च ॥ किंचित् क्वापि मया वचः प्रलपितं स्वच्छंदमच्छंदसा । तच्छोध्यं विबुधैः परैरपि परं कृत्वा प्रसादं मयि ॥ १६ ॥ श्रीधातुर्लेखशाली त्रिदशपथमहालेखिनीदंभशाली । सायं

यावद् द्यौपट्टिकायामुडुलिपिविपुलं हस्तलेखं वि-
यावत्किलायं शितकरखटिनीपात्रमादाय कालः ॥ यावद् द्यौपट्टिकायामुडुलिपिविपुलं हस्तलेखं वि- इत्याचार्यश्रीबालचंद्रविरचितायां
धत्ते । तावद्वाच्यमाना कृतिभिरतितरां वर्ततां वृत्तिरेषा ॥ १७ ॥ श्रीरस्तु ॥ ब्रह्मंडशैलमयदंडधृ-
श्रीविवेकमंजरीवृत्तौ भावनाविवरणनामा चतुर्थः परिमलः समाप्तः ॥ श्रीरस्तु ॥ ब्रह्मंडशैलमयदंडधृ- यावज्जायं
तस्य धात्री—छत्रस्य वारिधिदुकूलवृतस्य मौलौ ॥ स्वर्णाचलः कलशतामयमेति याव—त्तावज्जायं
कलयतादिह जैत्रसिंहः ॥ १ ॥ श्रीरस्तु ॥

आ ग्रंथ श्रीजामनगरनिवासी पंडित श्रावक हीरालाल हंसराजे स्वपरना श्रेयमाटे

पोताना श्रीजैनभास्करोदय छापखानामां छापी प्रसिद्ध कर्यो छे.

॥ समाप्तोऽयं ग्रंथो गुरुश्रीमच्चारित्रविजयसुप्रसादात् ॥

---

॥ इति श्रीविवेकमंजरीटीका समाप्ता ॥

ताकृतसाहाय्यं । सर्वलोकेषु विश्रुतं ॥ १ ॥ इति शीले सतीसुभद्राकथानकं समाप्तं ॥ पुनरपि शीलदृष्टांतमाह—

॥ मूलम् ॥—नंदउ नमयासुंदरी । सा सुचिरं जीए पालियं सीलं ॥ गहिलत्तणंपि काउं । सहिआ य विडंबणा विविहा ॥ ७ ॥ व्याख्या—सा नर्मदासुंदरीनाम्नी सती सुचिरकालं नंदतु जयतु, सा का? यया ग्रथिलत्वमपि कृत्वा शीलं पालितं, च पुनर्यया शीलरक्षणकृते विविधा नानाप्रकाराः 'विडंबणत्ति' विडंबनाः सोढाः, इत्यक्षरार्थः, विस्तरार्थस्तु कथानकादवसेयस्तच्चेदं—

अस्मिन् भरतक्षेत्रे श्रिया वर्धमानं वर्धमानाभिधं पुरमस्ति, यच्चैत्यकेतुभिर्लक्ष्म्या सुरपुरं तर्जयत इव, तस्मिन्नगरे कंदर्पदर्पहृत्संप्रतिनामा नृपोऽस्ति, तस्मिन् पत्तने वृषभसेनाह्वः सार्थेशोऽस्ति, तस्य सार्थवाहस्य वीरमतीति नाम्ना पत्न्यस्ति, तयोः सहदेववीरदासनामानौ सुतौ वर्तेते, ऋषिदत्तानाम्नी च पुत्र्यस्ति, सा सकलगुणगरिष्ठा जैनधर्मैकनिष्ठास्ति, तस्याः पिता सम्यक्त्ववान् जैनधर्मवासितत्वादन्येषां मिथ्यादृशां मार्गयतामपि तां कन्यां न ददौ. अन्यदा रूपचंद्रपुरात्कश्चिन्महर्द्धिको रुद्रदत्तनामा वणिक्पुत्रो वाणिज्यार्थमुपागमत, स तस्मिन्नगरे कुबेरदत्तस्य निजमित्रस्य मंदिरे

स्थितः, तस्मिन् पुरे व्यवसायं कुर्वाणः स स्वगेहवन्मित्रगेहे स्वैरमास्ते. सोऽन्यदा गृहवातायनस्थो नगराट्टवीथीं विलोकयन् निजरूपेण निर्जितसुरांगनां स्वर्गादागतां सुरीमिव ऋषिदत्तां सखीपरिवृतां दृष्ट्वा मोहितमानसो रुद्रदत्तश्चिरं पश्यंस्तस्थौ. तं मार्गावलोकनं कुर्वाणं रुद्रदत्तं वीक्ष्य मित्रं कुबेरदत्तो ब्रूते, भो मित्ररुद्रदत्त! त्वं राजपथे वारंवारं किं पश्यसि? तेनोक्तमेषा कस्य तनया? या स्वर्गादवतीर्णा देवकन्येव स्वयं क्रीडति. कुबेरदत्तेनोक्तं भो रुद्रदत्त! वृषभसेनसार्थवाहस्य तनया ऋषिदत्तानाम्नी, स सार्थवाहः श्रावकः, पुत्र्यपि च श्राविका, अतो मिथ्यादृशां याचमानानामपि स श्रेष्ठी न दत्ते. कुबेरदत्तेनोक्तं स्वरूपं ज्ञात्वा रुद्रदत्तो मिथ्यादृगपि तल्लोभतो जिनधर्मं शिक्षित्वा कपटश्रावको बभूव. तद्दिनादारभ्य वृषभसेनसार्थवाहेन समं रुद्रदत्तः पौषधसामायिकं करोति. तेन पुण्यादिना हृताशयः स तस्मै कन्यामदत्त. अहो दंभो धूर्तानां कल्पपादपः. रुद्रदत्तः शुभेऽहनि ऋषिदत्तां सविस्तरेणोपायंस्त, ततश्च स स्वं कृतकृत्यं मेने. कतिभिर्मासैरतीतैः कृतकृत्यः समुपार्जितधनः स श्वशुरमापृच्छ्य ऋषिदत्ताकांतया सार्धं श्वशुरानुज्ञया स्वपुरं समागात्. पुनर्मातापित्रोः संयोगाद्रुद्रदत्तो जैनं धर्ममत्यजद्बालो रत्नमिव. तत्संसर्गादृषिदत्तापि मिथ्यात्वमभजत्, यतः शबेन

मिलितो वायुः किं दौर्गंध्यं नाश्नुते? ततः शुद्धजैनाभ्यां मातापितृभ्यामृषिदत्ता मिथ्यात्वमती मत्वा पुत्रजन्मविवाहादिकार्ये दूरापास्ता व्यधीयत. सा ऋषिदत्ता समये महेश्वरदत्ताख्यं क्रमेण सुतं सुषुवे, स च सर्वकलाकुशलः क्रमेण यौवनं प्राप.

इतश्च ऋषिदत्ताबंधोः सहदेवस्य सुंदरीदयिता सुस्वप्नसूचितं गर्भं दध्रे. तस्याः सुंदर्या गर्भानुभावतो नर्मदानद्यां स्नानदोहदः संजातः. तदा सहदेवः सार्थेशो भूत्वा सुंदरीप्रियासहितो नर्मदानद्यास्तीरे जगाम. कियद्दिनानि तत्र स्थित्वा शुभेऽह्नि जिनानर्चयित्वा यथाविधि नर्मदामध्यं च प्रविश्य स जलकेलिमसूत्रयत्. ततः स सहदेवसार्थवाहस्तत्र स्थाने नर्मदापुरं नाम नगरं स्थापयामास. तस्मिन्नगरे सहदेवः सम्यक्त्वपिंडपोषाय मेरुवत्तुंगं जिनमंदिरमातेने आत्मनः पुण्यपिंडमिव. तेन च स्वं सुकृतार्थं मन्यमानः स तन्नगरराज्यमतनोत्. धर्मराजस्य राजधानीमिव भ्राजमानं नगरं दृष्ट्वा बहवो व्यवहारिणः स्वानि स्वानि स्थानानि संत्यज्य तत्रागत्य स्थितिं चक्रुः सरोजे भ्रमरा इव. अथ सा सुंदरी संपूर्णदोहदा वैडूर्यभूमिर्वैडूर्यशलाकामिव समये साधुलक्षणां तनयामसूत. तस्य पिता सहदेवः पुत्रजन्मवत्तस्या जन्मोत्सवं कृत्वा नर्मदासुंदरीति नामधेयं व्यधात. एषापि पू-

वाभ्यस्ता इव सकलाः कलाः प्रपद्य पूर्णिमा चंद्रोदयमिव पावनं यौवनं प्राप. अथ ऋषिदत्ता नर्मदासुंदरीरूपं समाकर्ण्य तां स्वपुत्रार्थं याचितुं चिंतयामास. पुनस्तया विमृष्टं नूनं मया विरूपमाचरितं यज्जैनो धर्मस्त्यक्तः, अतश्चाहं मातापित्रादिभिः शटितपादवदहं दूरीकृता, ये मां पर्वतिथ्यादावपि न संभाषयंति. ते च कथं मम पुत्राय निजां तनयां दास्यंति, एवं विचिंत्य ऋषिदत्ता भृशं रुरोद. तां च रुदंतीं वीक्ष्य तत्पतिना रुद्रदत्तेन पृष्टं हे सुंदरि! त्वं किं रोदिषि? तव किं बाधते? तत्त्वं ब्रूहि? तया सर्वं स्वरूपं निरूपितं. तत् श्रुत्वा पुत्रो महेश्वरदत्तो बभाषे, हे तातमातरौ! मां तत्र प्रेषयतं? यथाहं तत्र गत्वा स्वजनानावर्ज्य मातुलसुतां चोद्वाह्य मातुर्मुदमुपानये. मातापितृभ्यां दत्ताज्ञो महेश्वरदत्तः प्रस्थितः, स्वल्पैरेव दिवसैश्च स नर्मदापुरपत्तनं प्राप. तत्र गत्वा स मातामहं मातुलं च नत्वा रुचिराचारो देवगुरुभक्तिकारको भूत्वा निजगुणैरावर्जयन् मातृपक्षीयान् सर्वांस्तोषयामास चारुगीतैर्व्याधो मृगानिव. तस्य गुणैरावर्जितो मातामहोऽन्यदा तं दौहित्रं निजोत्संगसंगिनं विधायाहस्म, भो वत्स! किं तव रोचते? यद्रोचते तद्याचस्व? दौहित्रो महेश्वरदत्तो ब्रूते, हे मातामह! यदि समीहितं लभे तर्हि कन्यां नर्मदासुंदरीं मह्यं देहि? यतोऽहमेतदर्थं समागतोऽस्मि.

नमर्जयित्वा प्रतिज्ञां च गृहीत्वा स्वनगरं प्राप्तः पित्रोः पुरस्तथाहतां स्वप्रियामाख्यत्, स्नुषायाः प्रेतकार्याणि कृत्वा मातापितरावपि दुःखितौ जातौ. ततस्तौ सुतस्यान्यां कन्यां पर्यणाययिषातां.

इतश्च जागरिता नर्मदासुंदरी त्रिपंचसप्तवारान्नमस्कारं स्मरंती यावदुत्तस्थौ तावत्पतिं नो वीक्षते, तदानीं सा नर्मवचनैरुवाच हे प्राणनाथैहि? ईदृक्षं हास्यं सोढुमहं न क्षमा, एवं बहुधा शब्दितोऽपि स पुनरुत्तरं नादत्त, ततः सा स्वयमेवोत्थाय तीरे तीरे तरौ तरौ गतरत्नमिव तमैक्षिष्ट, परं काप्यदृष्ट्वा पतिं सा नर्मदासुंदरी मुक्तकंठं भृशं रुरोद, यतः—न तद्वनं न ते वृक्षा। न तद्गुल्मं न सा गुहा ॥ यत्र सा न हि बभ्राम। सतारं न रुरोद च ॥ १ ॥ तच्छोकादथ तिग्मांशौ। द्वीपांतरमुपेयुषि ॥ सुखं कर्तुमिव सतीं। विधिः प्रैषीत्सुधाकरं ॥ २ ॥ एवं दुःखार्ता नर्मदासुंदरी पतिदुःखेन दुःखिता भीता त्रस्ता वेपमानशरीरा निशायां लतागृहं विवेश, तस्मिन् लतागृहे तां रात्रिं संवत्सरशतमयीमिव व्यतीत्य पत्युर्गुणांश्च स्मृत्वा प्रभाते भृशं रुरोद, यतः—हे नाथ मां दीनानाथां।

कान् पक्षिगणांश्च रोदयंती पत्युर्वार्ता च मार्गयंती पंच दिनान्यत्यवाहयत्, पुनस्तस्मिन् वने भ्रमंती
नर्मदासुंदरी यत्र पयोनिधेस्तीरे यानं विलंबितमभूत्तत्र षष्ठे दिने गता, परं तत्स्थानं शून्यमैक्षिष्ट,
ततो निशा जाता, अहो मां मुक्त्वा मत्पतिरन्यत्र गतः, अथाहं किं करिष्ये ? पूर्वोक्तमुनेर्वचः स-
त्यं जातं, मुनिनोक्तमन्यथा न भवतीति, यतः—अमोघा वासरे विद्यु— दमोघं निशि गर्जितं ॥
अमोघा मुनीनां वाणी । ह्यमोघं देवदर्शनं ॥ १ ॥ इति विचिंत्य सा शोकं स्तोकं चकार, आत्मा-
नं शिक्षयति च, यथा—पूर्वार्जितं निजं कर्म । भुज्यतां मा विषीद रे ॥ आत्मानमात्मना चेद्धं ।
प्रतिबोध्य महासती ॥ १ ॥ स्नात्वा सरोवरे देवान् । वंदित्वा च वनांतरे ॥ फलाहारं विदधाना ।
तापसीव बभूव सा ॥ २ ॥ ततः सा नर्मदासुंदरी मृन्मयमार्हतं बिंबं निर्माय क्वापि गह्वरे वननिकु-
ंजे स्थापयामास, तज्जिनबिंबरूपं प्रत्यहं पुष्पफलाद्यैरर्चयित्वेंगुदीतैलेन दीपावलीं च विधाय जिन-
पुरतो गीतगानतानमाननाट्यादि कुर्वाणा पतितवनफलैः प्राणवृत्तिं च वितन्वाना दिनान्यत्यवाहय-
त्. एवं सा नर्मदासुंदरी स्वदिवसान् कृतार्थान् कुर्वत्यन्यदा सद्गतिसाधनेच्छया व्रतमादातुं भरते गंतु-
मियेष मानसं राजहंसीव.

नमर्जयित्वा प्रतिज्ञांमं च गृहीत्वा स्वनगरं प्राप्तः पित्रोः पुरस्तथाहतां स्वप्रियामाख्यत्, स्नुषायाः प्रेतकार्याणि कृत्वा मातापित्रावपि दुःखितौ जातौ. ततस्तौ सुतस्यान्यां कन्यां पर्यणायिषातां.

इतश्च जागरिता नर्मदासुंदरी त्रिपंचसप्तवारान्नमस्कारं स्मरंती यावदुत्तस्थौ तावत्पतिं नो वीक्षते, तदानीं सा नर्मवचनैरुवाच हे प्राणनाथैहि? ईदृक्षं हास्यं सोढुमहं न क्षमा, एवं बहुधा शब्दितोऽपि स पुनरुत्तरं नादत्त, ततः सा स्वयमेवोत्थाय तीरे तीरे तरौ तरौ गतरत्नमिव तमैक्षिष्ट, परं क्वाप्यदृष्ट्वा पतिं सा नर्मदासुंदरी मुक्तकंठं भृशं रुरोद, यतः—न तद्वनं न ते वृक्षा । न तद्गुल्मं न सा गुहा ॥ यत्र सा न हि बभ्राम । सतारं न रुरोद च ॥ १ ॥ तच्छोकादथ तिग्मांशौ । द्वीपांतरमुपेयुषि ॥ सुखं कर्तुमिव सतीं । विधिः प्रैषीत्सुधाकरं ॥ २ ॥ एवं दुःखार्ता नर्मदासुंदरी पतिदुःखेन दुःखिता भीता त्रस्ता वेपमानशरीरा निशायां लतागृहं विवेश, तस्मिन् लतागृहे तां रात्रिं संवत्सरशतमयीमिव व्यतीत्य पत्युर्गुणांश्च स्मृत्वा प्रभाते भृशं रुरोद, यतः—हे नाथ मां दीनानाथां । प्रेमस्थेमसुधामयीं ॥ सुप्तां मुक्त्वा गतः क्वासि । चंद्रः कुमुदिनीमिव ॥ १ ॥ यथा स्मरति गौ वत्सं । चक्रवाकी दिवाकरं ॥ सती स्मरति भर्तारं । तथाहं तव दर्शनं ॥ २ ॥ इत्थं सा रुदंती पथि-

दिनान्यत्यवाहयत्, पुनस्तस्मिन् वने भ्रमंती
कान् पक्षिगणांश्च रोदयंती पत्युर्वार्तां च मार्गयंती पंच दिनान्यत्यवाहयत्, पुनस्तस्मिन् वने भ्रमंती षष्टे दिने गता, परं तत्स्थानं शून्यमैक्षिष्ट,
नर्मदासुंदरी यत्र पयोनिधेस्तीरे यानं विलंबितमभूत्तत्र षष्टे दिने गता, परं तत्स्थानं शून्यमैक्षिष्ट,
ततो निशा जाता, अहो मां मुक्त्वा मत्पतिरन्यत्र गतः, अथाहं किं करिष्ये ? पूर्वोक्तमुनेर्वचः स·
त्यं जातं, मुनिनोक्तमन्यथा न भवतीति, यतः—अमोघा वासरे विद्यु—दमोघं निशि गर्जितं ॥
अमोघा मुनीनां वाणी । ह्यमोघं देवदर्शनं ॥ १ ॥ इति विचिंत्य सा शोकं स्तोकं चकार, आत्मा·
नं शिक्षयति च, यथा—पूर्वार्जितं निजं कर्म । भुज्यतां मा विषीद रे ॥ आत्मानमात्मना चेत्थं ।
प्रतिबोध्य महासती ॥ १ ॥ स्नात्वा सरोवरे देवान् । वंदित्वा च वनांतरे ॥ फलाहारं विदधाना ।
तापसीव बभूव सा ॥ २ ॥ ततः सा नर्मदासुंदरी मृन्मयमार्हतं बिंबं निर्माय क्वापि गह्वरे वननिकुं·
जे स्थापयामास, तज्जिनबिंबरूपं प्रत्यहं पुष्पफलाद्यैरर्चयित्वेंगुदीतैलेन दीपावलीं च विधाय जिन·
पुरतो गीतगानतानमाननाट्यादि कुर्वाणा पतितवनफलैः प्राणवृत्तिं च वितन्वाना दिनान्यत्यवाहय·
त्. एवं सा नर्मदासुंदरी स्वदिवसान् कृतार्थान् कुर्वत्यन्यदा सद्गतिसाधनेच्छया व्रतमादातुं भरते गंतु·
मियेष मानसं राजहंसीव.

इतश्च वीरदासनामा नर्मदासुंदरीपितृव्यो बर्बरकूलं व्रजंस्तं प्रदेशमुपागमत्, सोऽपि सपरिवारो जलेंधनादिकं गृह्णन् सुंदर्याः पदपंक्तिं पश्यतिस्म, किमेतदिति विचिंत्य स पदपंक्त्यनुसारेणोपशैलं गतः, तत्रैकस्मिन् गह्वरे वीरदासनामा पितृव्यः श्रावकस्तया क्रियमाणां जिनस्तुतिं शुश्राव, तां स्तुतिं श्रुत्वा शब्दध्वनेरभिज्ञानान्नर्मदासुंदर्याः स्वरमिति ज्ञापयंस्तत्रागतः, यावच्च तां गुहां प्रविशति, तावन्नर्मदासुंदरी तत्र दृष्टा, सापि पितृव्यमुपलक्ष्य कंठे लगित्वा भृशं रुरोद, सोऽपि रुदन् सुंदरीं पृच्छति, हे वत्से! त्वमेकाकिन्यस्मिन् वने कथमागता? एवं पृष्टा सा सर्वं वृत्तांतं न्यवेदयत्. ततो वीरदासो दैवं निंदन् नर्मदासुंदरीं लात्वा बर्बरकूलं प्राप्य सार्थं ग्रामाद्बहिरवासयत्. तां महासतीं च प्रत्यग्रे वस्त्रमंडपे निवेश्य प्राभृतिकमुपादाय स्वयं राजसभायां नृपस्य मिलनाय ययौ. राजसमीपं गत्वा राजानं च नत्वा प्राभृतं पुरो मुक्त्वा सोऽग्रे निषण्णः, राज्ञा चार्धशुल्कादिनिर्मुक्त्या तोषितः सन्मानितश्च स व्यवसायपरायणः क्रयाणकादीनां देयादेयव्यवस्थितिं चक्रे. एवं व्यवसायं कुर्वतस्तस्य दिनानि यांति. इतस्तस्मिन्नगरे जनमनोहारिणी हारिणीनामगणिका विश्रुता वर्तते. कथंभूता? जननयनमनोहारिणी, सकलसौख्यकारिणी, राज्ञा प्रदत्तछत्रचामरसिंहासनादिधारिणी, सौ-

भाग्यैकसारिणी च. सा सांयात्रिकेभ्योऽष्टोत्तरसहस्रं दीनाराणामादत्ते इति नृभुजा व्यवस्था कृताऽस्ति. एषा हारिणी वीरदासं समाह्वातुं स्वचेटिकामप्रेषयत्. तांप्रति स प्राह, अहं हि स्वदारसंतुष्टोऽस्मीति तत्र मे कृत्यं नास्ति. ततस्तया यथोक्ता राजस्थितिः प्रोक्ता, तेन सार्थेशेनापि धनं दत्वा सा विसृष्टा. दास्यपि गत्वा हारिणींप्रति प्रोवाच, हे स्वामिन्! स श्रेष्ठी तु स्वदारसंतुष्टोऽस्ति, इत्युक्त्वा तया तद्दत्तमष्टोत्तरसहस्रं दीनाराणां तदग्रे मुक्तं. हारिण्युवाच हे सखि! धनेन किं करोमि? तं सार्थवाहमेवेहानय? पुनर्दासी तत्र गता, तं बहुबहु च संभाष्य स्वस्वामिन्यंतिके समानयत्. हारिणींप्रति सा चेट्याह हे स्वामिन्यस्य सार्थवाहस्य गेहे काचिद्भार्या वा पुत्री वा रूपापास्तसुरांगना वर्तते, यदि सा हरिणाक्षी तवादेशवशंवदा स्यात्तदा स्वगेहे कल्पवल्लीमवतीर्णां त्वं जानीहि? सापि प्रत्युत्पन्नमतिः केनचिद्व्याजेन वीरदासमुद्रां जग्राह. तां मुद्रिकां दासीकरे दत्वा कर्णे च किंचित्कथयित्वा तां तत्र प्रेषयामास.

ततश्चेट्या नर्मदासुंदर्यंतिके गत्वैवं कथितं, हे सुंदरि! वीरदासश्रेष्ठ्यस्माकं गृहे स्थितो मुद्रिकाभिज्ञानेन त्वामाह्वयति, नर्मदासुंदर्यपि तां मुद्रिकां समुपलक्ष्य निश्शङ्का गणिकागृहेऽगमत्, सा

वेश्या च तां तत्क्षणादेव भूमिगृहेऽक्षिपत. ततो हारिणीवेश्या कृतकृत्या तां मुद्रिकां श्रेष्ठिनः पुनरर्पयत, स श्रेष्ठ्यखंडितव्रतः स्वगृहे समागमत्, परं तत्र नर्मदामपश्यन् क्षुब्धहृदयः सेवकान् पप्रच्छ, तैरुक्तं स्वामिन् वयं न जानीमः, ततः सर्वैरपि सेवकैः सा विलोकिता, परं क्वापि न लब्धा, सुगुप्तधूर्तकृत्यस्य पारं कः प्राप्नोति? ततो वीरदासः स्वानीतानि क्रयाणकानि विक्रीय प्रतिभांडानि च गृहीत्वा नृपमापृच्छ्य स्वपुरंप्रति प्रतस्थे, क्रमेण च स्वीयनगरे भृगुकच्छे च समागतः, पुनर्व्यवसायार्थं जिनदासाभिधं मित्रमुपासकं निःशेषं नर्मदासुंदरीवृत्तांतमुक्त्वा सत्वरं प्रेषयामास, सोऽपि बर्बरकूले समागतः, तथैव राजानं च मिलित्वा वाणिज्यं करोति. अथ वीरदासे प्रचलिते हारिणीवेश्या नर्मदासुंदरीमाह हे भद्रे! त्वं वेश्याकार्यमंगीकृत्य स्वजन्म सफलीकुरु? देवराजस्य देवीव राज्ञः सेवां कुरु? तस्यास्तद्वचनं श्रुत्वा नर्मदासुंदर्यवोचज्जीवंत्या मम शीलमाणिक्यं को हर्तुमिच्छति? वेश्याहास्माकं जन्म सफलं, या वयं स्वेच्छया भोगान् भुंजामहे, नर्मदासुंदर्याह मुग्धे! भोगार्थं शिवसुखात् स्वं को वंचयेत्? यद्वा माणिक्यैश्चणकक्रयं कः कुरुते? इति तद्वचसा कोपमापन्ना हारिणी वेगेन तामाजघ्ने, सा नर्मदा तया ताड्यमाना चित्ते पंचनमस्कृतिमस्मार्षीत्, तत्प्रभावात्सा वे-

श्याकस्मात्प्राणैरमुच्यत. अथ मंत्रिमुखात्तां वेश्यां मृतां श्रुत्वा नरेश्वरस्तत्पदे नर्मदां प्रार्थयामास, सापि प्रभुत्वे स्वेछयात्मनो निर्गमोपायवांछया राज्ञोक्तं मेने, नरेश्वरो मंत्रिमुखात्तद्रूपं श्रुत्वा तामानेतुं सुखासनं प्रेषयामास, नृपसेवकाः सुखासने तां समारोप्य पुरमध्ये धृतछत्रां कृत्वा यावद्यांति तावत्तया शीलरक्षार्थं वैकल्यमौषधं ज्ञात्वा विशाले नगरखाले पतित्वा कर्दमेण स्ववपुर्विलिप्तं, तथा सर्वलोकसमक्षं पत्राणीव स्वविग्रहाद्वस्त्राणि पाटितानि, तथा सर्वेषां लोकानां शीलजीवितनाशिनां वित्रासाय तत्सन्मुखं सा रेणुमक्षिपत्. एवं दुर्वार्यव्यंतरेण गृहीतेव सा भीषणाकृतिर्जाता, सा क्षणं रोदति, क्षणं नृत्यति, क्षणं गायति, क्षणं च ध्यायति.

एवंविधां चेष्टां कुर्वाणा सा सर्वै राजलोकैर्ददृशे. ततस्तै राजलोकैर्मांत्रिकाः समाहूताः, तैर्मत्रोपचारे क्रियमाणे सापि मांत्रिकान् पाषाणैस्ताडयामास, ततस्तैस्त्यक्ता ग्रथिलीभूता बाललोकैः परिवृता जिनरासकान् गायंती जिनदासेन ददृशे, जिनदासोऽपि तस्याः पुरोभूय करुणार्द्रचित्तस्ताम्भ्यधत्त, हे व्यंतराधीश! त्वं जिनभक्तः कोऽसि? ममाग्रे कथय? साप्यूचे भो महाभाग! त्वं यदि जैनोऽसि, तदाहं रहसि पृछ्या, सांप्रतमनवसरोऽस्ति. अन्यदा कदाचिन्निजपरिवृतान् बालान्

दूरमुतत्तस्य किंचिद्वनाश्रितदेवान् वंदितुं सा नगरान्निर्गता, तत्पृष्टे जिनदासोऽपि गतः, तत्र तान् देवानभिवंद्य योजितांजलिर्जिनदासस्तामप्राक्षीत्, का त्वं धर्मैकमानसा वर्तसे? नर्मदासुंदर्यपि तं श्रावकं मत्वा सर्वं स्वस्योदंतं तस्मै समाख्यत्, तेनोक्तं हे वत्से! दूरदेशात्तव मातुलेन वीरदासेन त्वदर्थमेव प्रेषितोऽहमत्र भृगुकच्छनगरतः समागतः, अथ सर्वं साधु भविष्यति, त्वया काचिदपि चिंता न विधेया, जिनदेवः सर्वं समीहितं करिष्यति, अथ त्वया भृशं ग्रथिलीभूय गृहाद्भांडानि भृशं भंजंत्या नृपाध्वनि प्रसर्तव्यं, इति संकेतं कथयित्वा स नगरमध्ये गतः, सा नर्मदासुंदर्यपि जिनदासोक्तं सर्वमकरोत्, ततो लोके कोलाहलो जातः, राजा समीपस्थं जिनदासं वीक्ष्य लोकरूपया प्राह भो जिनदास! अनया ग्रहिलीभूतया नार्या पुरमेतदुपद्रुतं वानर्योद्यानमिव, तस्मादेनां त्वं गृहीत्वा याहि? जलधेः पारं च पन्नगीमिव दूरतः क्षिप? तं नृपादेशं श्रुत्वा जिनदासो मुदमापन्नस्तां नर्मदां निगडैर्नियंत्र्य पोतमारोपयत्, एनां दुःप्रापां प्राप्य पंकाच्चिंतामणिमिव नर्मदां वारिणा स्नापयित्वा सानंदं स दुकूलानि पर्यधापयत्.

एवं तां महर्घ्यभांडमिव पोते समारोप्य स सत्वरं नर्मदापुरं निन्ये, तामायांतीं ज्ञात्वा जनका·

दयस्तत्सन्मुखमुपाजग्मुः, सा नर्मदापि मातापित्रादिबंधूनां कंठमालंब्य भृशं रुरोद, ततस्तां जीवंतीं वीक्ष्य मातापित्रादयो मंगलाचारपूर्वकं पुनस्तस्या जन्मोत्सवं चक्रुः, तथा जिनप्रासादेषु पूजां कृत्वा सद्गुरुं च नत्वा साधर्मिकवात्सल्यादिधर्मकर्माणि तेनिरे, सगौरवं जिनदासस्तत्र स्थित्वा वीरदासं द्रष्टुं भृगुपत्तनं जगाम. इतश्च श्रीआर्यसुहस्तिसूरयो विहरंतोऽन्यदा नर्मदापुरं समाजग्मुः, नर्मदासुंदर्यपि सपरिवारा मातापितृप्रभृतिपरिवृता सूरीन् वंदितुं जगाम, गुरवोऽपि तस्या धर्मलाभाशिषं दत्वा धर्ममुपादिशन्, यथा—भोगे रोगभयं सुखे क्षयभयं देहे कृतांताद्भयं । माने म्लानिभयं जये रिपुभयं वंशे कुयोषिद्भयं ॥ दास्ये स्वामिभयं गुणे खलभयं वित्तेऽग्निभूभृद्भयं । सर्वं नाम भयं भवेद्भवभृतां वैराग्यमेवाभयं ॥ १ ॥ तां देशनां श्रुत्वा मुदितमानसो वीरदासो गुरून्नत्वा व्यजिज्ञपत् हे स्वामिन् पूर्वजन्मनि नर्मदासुंदरी किं कर्म चक्रे? निर्दोषाप्यसौ येन कारणेन दुःखभाजनं जाता. अथ गुरुः श्रुतोपयोगेन ज्ञात्वा वीरदासंप्रत्यभाषत, भो वीरदास! अस्याः पूर्वभवोपार्जितं कर्म फलितं. वीरदासेनोक्तं तत्कथं? गुरुणोक्तं श्रूयतां? भूमेर्मानदंड इव विंध्याचलो नाम पर्वतोऽस्ति, यत एषा नर्मदानाम नदी निर्गता. तस्याधिष्ठात्री नर्मदानाम्नी देव्यस्ति. अन्येद्युर्नर्मदानदी-

तीरे धर्मरुचिमुनेः प्रतिमां तस्थुषोऽसौ नर्मदादेव्युपसर्गांश्चक्रे. सा तस्य मुनेर्नैश्चल्येन हृष्टा. ततः सम्यक्त्वधारिणी सा नर्मदादेवी ततश्च्युत्वा तव भ्रातृसहदेवपुत्री नर्मदासुंदरी जाता. पूर्वाभ्यासादियं नर्मदास्नानदोहदेन वर्धिता साधूपसर्गदुःकर्मोदयतो दुःखिन्यजनि.

एतन्मुनेर्वचनं श्रुत्वा नर्मदासुंदरी जातिस्मरणं लब्ध्वा, आर्यसुहस्तिसूरिसमीपे च दीक्षामुपाददे. सा सती तपस्यंती संयमवती क्रमेणोत्कलमवधिज्ञानं प्राप, ततश्च सा प्रवर्तिनीपदं प्राप. क्रमेण विचरंती सा रूपचंद्रपुरं गता. बहुकालात्ययात्तीव्रतपस्तपनाच्च सा कृशशरीरा जाता, अतः केनापि तत्र नोपलक्षिता. सा नर्मदासुंदरी साध्वीवृंदमंडिता ऋषिदत्तादत्तोपाश्रये तस्थुषी प्रत्यहं सुविशुद्धधर्मोपदेशं चक्रे. तं धर्मं ऋषिदत्तायुतो महेश्वरदत्तोऽप्यशृणोत्. महेश्वरदत्तस्य संवेगोत्पादनार्थमन्यदा नर्मदासुंदरी प्रवर्तिनी शास्त्रोक्तं स्वरलक्षणमपाठीत्. तत् श्रुत्वा महेश्वरदत्तः पश्चात्तापपरोऽवदत्, हा मया मूढेन स्वरलक्षणमजानताधमाधमेन निःकृपेण सती कांतैकाकिनी सुप्ता वने त्यक्ता. अहोऽस्मिन् संसारे मत्परोऽन्यः कोऽपि निर्घृणो नास्ति, इत्यादिपश्चात्तापपरं निजपतिं दृष्ट्वा नर्मदाप्रवर्तिनी कृपयाह हे महाशय! त्वं मा विषीद? साहं या त्वया सुप्ता वने त्यक्ता, तव कोऽपि

दोषो नास्ति, मम कर्मणामेव हि दोषः. ततः स महेश्वरदत्तोऽपि नर्मदां क्षमयित्वा स्फुरद्वैराग्येण देदीप्यमान आर्यसुहस्त्याख्यसद्गुरोः समीपे ह्युत्तमं व्रतमाददे. ऋषिदत्तापि संवेगाच्चारित्रं प्रपेदे. तावुभावपि तपस्तप्त्वा स्वर्गसंपदं प्रापतुः. नर्मदासुंदर्यप्यवधिना स्वायुःपर्यंतं ज्ञात्वा संलेखनापूर्वक- मनशनं प्रपेदे. उत्पद्य देवेषु ततो विदेहे। भुक्त्वा नरेंद्रश्रियमाप्य दीक्षां ॥ जित्वाष्टकर्माणि च नर्मदा सा। प्राप्ता शिवं निर्मलशीलयोगात् ॥ १ ॥ एवं श्रीनर्मदानाम—सुंदर्याश्चरितं कृतं ॥ य- या हि ग्रहिलीभूय। शीलं स्वं रक्षितं दृढं ॥ २ ॥ इति श्रीनर्मदासुंदरीकथानकं समाप्तं. अथ क- लावतीसंबंधमाह—

॥ मूलम् ॥—भद्दं कलावईए। भीसणरन्नम्मि रायचत्ताए ॥ जं सा सीलगुणेणं। छिन्नंग पुणन्नवा जाया ॥ ९ ॥ व्याख्या—कलावत्याः शंखनाम्नो राज्ञः पत्न्या भद्रं भवतु कल्याणं भव- तु. कथंभूतायाः कलावत्याः? ‘ रायचत्ताएत्ति ’ शंखनाम्ना राज्ञा त्यक्तायाः, कस्मिन् ‘ भीसणर- न्नम्मित्ति ’ भीषणारण्ये भीषणकांतारे, यतः सा कलावती शीलगुणेन शीलमाहात्म्येन ‘ छिन्नंग- त्ति ’ छिन्नांगा सती पुनर्नवा नवीनांगा जातेति समस्तमेवैकं विशेषणमिति गाथार्थः. ॥ ९ ॥

व्यासार्थस्तु कथायां वक्ष्यते, तत्कथा चेयं—

अस्मिन् जंबूद्वीपे भरतक्षेत्रे श्रीमंगलनामा देशोऽस्ति. तस्मिन् देशे शंखपुरनाम पुरमस्ति. तस्मिन्नगरे शंखो नाम राजा राज्यं करोति. स समरे शत्रून् जित्वैकातपत्रिणीं पृथ्वीं कृत्वा परैरनाक्रांतां पृथ्वीं बुभुजे. तमेकदा सभासीनं गजश्रेष्ठिसुतो दत्तनामा पुरः प्राभृतं मुक्त्वा मुदा प्राणमत्. तं दत्तमासनासीनं कृत्वा राजा पप्रच्छ, भो दत्त! देशांतरे त्वया दृष्टं किंचित्कौतुकं वद? दत्तोऽवक् हे देव! अहं देवशालपुरं गतो वाणिज्यार्थं, यतो वणिजां लक्ष्मीर्व्यापारे वर्धते. तत्राहं व्यापारं कृत्वा कृतकृत्यो लब्धलाभो व्याघुटितश्चात्रागतः. तत्र मयाश्चर्यं दृष्टमस्ति, परं यथा मया दृष्टं तथा वक्तुं नो शक्यते, अत्याश्चर्यकारित्वात्. राज्ञा पृष्टं तत्किं तावत्? तदा दत्तेन राज्ञोऽग्रे एका चित्रपट्टिका मुक्ता. शंखराट् तत्र लिखितामेकां स्त्रियं दृष्ट्वा तां देवीमिव मन्यमानः प्राणंसीत्. दत्तेनोक्तं नेदं देवीरूपं, एषा हि भवतः पट्टदेवी भाविनीत्यहं मन्ये. तत् श्रुत्वा शंखनृपस्तत्र सम्यग्दत्तदृष्टिस्तद्रूपं वर्णयति. भो दत्त! ईदृग्रूपं मानुषीषु नास्ति. दत्त ऊचे देव! एवमेव संभाव्यते, नूनं विधिना प्रथमोद्यमे नैषा निष्पादिता, किंत्वतीवाभ्यासश्रमपूर्वकं निष्पादिता दृश्यते. राज्ञोक्तमे-

षा का? दत्तेनोक्तं भो राजेंद्र! देवशालनगरे विजयसेनस्य राज्ञः श्रीमतीकुक्षिसंभूता पुत्री कलावती नाम्न्यस्ति, या च रूपकलासौभाग्यादिगुणैः श्रेष्ठा वर्तते. सा कलावती यथा यथावर्धिष्ट तथा तथा जनकस्य चिंताप्यवर्धिष्ट. एवं च दिनानि यांति. एकस्मिन् दिने पुत्र्या कलावत्या प्रोक्तं यो मे प्रश्नचतुष्टयं कथयिष्यति तस्याहं पाणिग्रहणं करिष्ये. तत् श्रुत्वा विजयसेनो राट् भृशं चिंतातुरो जातः. अहो! पुत्र्याः प्रतिज्ञा कथं पूर्णाभविष्यति? इति विचिंत्य स तदर्थं स्वयंवरमंडपं कारयामास. इतश्चाहं व्यवसायार्थं देवशालपुरं व्रजन् क्वापि कानने संप्राप्तः. तत्र विजयसेनस्य राज्ञः पुत्रो जयसेनाभिधो दुष्टाश्वापहृतो मूर्छामगमत्. तस्य मया बहूनुपचारान् कृत्वा जीवापितः. तेनाप्यहं सुखासने स्थापयित्वा नगरे नीतः. राजा तेनोपकारेण सदा मां पुत्रवन्मेने.

एकस्मिन् दिने राज्ञोक्तं भो दत्त! यथा त्वया स्वबंधोर्जयसेनस्योपकारः कृतस्तथा स्वस्वसुः कलावत्या अपि वरं चिंतयित्वा चिंतामहोदधेर्मां निस्तारय? तदा दत्तेनोक्तं मया तव स्वरूपं हृदये धृत्वा शंखकलावत्योः सदृशसंयोगं ज्ञात्वा तव ज्ञापनाय तस्याः किंचिद्रूपं पट्टे लिखित्वाहमत्रागमं. राज्ञोक्तं भो वत्स! त्वया साधु कृतं, परं क्व मादृशां भाग्यं येनेदृक्संगमो भवेत्. दत्तेनोक्तमिदं हि

मया वर्णिकामात्रं किंचिल्लिखितं, सम्यग्लिखितुं तु केनापि न शक्यते. अथ तद्रूपं पश्यन् राजा मूर्धानं धूनयित्वा क्षणमेकं मुकुलितेक्षणो बभूव. ततोऽसौ दत्तंप्रत्याह भो दत्त! सा कलावती कथं लभ्यते? तत् श्रुत्वा सानंदो दत्तो वक्ति हे नाथ त्वं खेदं मा कृथाः, अहं शकुनेन वेद्मि यत्सा कलावती तव पत्नी भविष्यत्येव, तथापि त्वं द्रुतं वागीश्वर्याराध्यतां, यथा प्रश्नचतुष्कस्य निर्णयो जायते. ततः शंखनरेश्वरो ब्रह्मचर्यादियुक्तिभिर्वाग्देवीं तोषयामास. सापि तोषिता राजानंप्रत्यवोचद्भो राजेंद्र! त्वत्पाणिसंस्पर्शाद्बालभंज्यपि कलावतीप्रोक्तप्रश्नानां निर्णयं कर्त्री भविष्यति, तदा ललाटांजलियोजितकरकमलः शंखो राट् महाप्रसाद इति मन्यमानस्तां नत्वा व्यसृजत्, सरस्वत्यपि राज्ञा विसृष्टा स्वस्थानमगमत. ततः शंखनरेश्वरोऽपि दत्तेन समं सत्वरं देवशालपुरं प्रतस्थे, विजयसेननरेश्वरः शंखनरेश्वरं समायातं श्रुत्वा स्वं जयसेनसुतं तत्सन्मुखं प्रैषीत्. ततो विजयसेननरेश्वरो महामहेन शंखस्य पुरप्रवेशमकारयत, एवमन्येऽपि राजानस्तस्मिन्न स्वयंवरे समाजग्मुः, विजयो राट् सर्वेषां राज्ञां भोजनादिसामग्रीं कृत्वा बहुमेने, तथा सुदिवसे सुमुहूर्ते देवविमानानुकारिस्वयंवरमंडपमकारयत्.

तस्मिन् मंडपे मंचमंडिते सिंहासनालंकृते नामांकितासने सर्वेऽपि राजान आसनान्यलंचक्रुः, तदा तत्र कृतसर्वशृंगारा देवांगनानुकारा सखीभिः परिवृता सेवकैर्धृतातपत्रा चामरैर्वीजितांगी करे स्वयंवरस्रजं बिभ्राणा लक्ष्मीरिव कलावती समागात्, तदानीं प्रतीहार्युवाच भो राजानो यः कोऽपि कुमार्याः कलावत्याः प्रश्नचतुष्कस्य निर्णयं करिष्यति, स कलावत्याः करग्रहं करिष्यति, तत्प्रश्नचतुष्कं यथा—को देवः १ को गुरुः २ किं च । तत्वं ३ सत्वं च ४ कीदृशं ॥ स्फुटीकर्ता इति स्पष्टं । कलावत्या वरस्रजं ॥ १ ॥ इति प्रश्नचतुष्टयं श्रुत्वा सर्वे राजानो यथाशक्त्योत्तरं ददुः, परं सा परमार्हती तदुत्तरं नैव मेने, ततः शंखनृपः स्तंभपांचालीमूर्ध्नि स्वपाणिकुशेशयमधत्त, ततः सरस्वत्यनुभावेन शंखराज्ञः करस्पर्शात्सा पांचाली प्रश्नोत्तरं जगौ, यथा—वीतरागः परं देवो १ । महाव्रतधरो गुरुः २ ॥ तत्वं जीवदया ज्ञेया ३ । सत्वं चेंद्रियनिग्रहः ४ ॥ १ ॥ ततः पूर्णमनोरथा कलावती श्रीशंखनृभृतः कंठे स्वयंवरस्रजं चिक्षेप, विजयो राट् सुमुहूर्ते तयोः पाणिग्रहणं कारयतिस्म, गजवाजिरथादिभिः सत्कृतः शंखनृपः कतिचिद्दिनानि स्थित्वा कलावत्या देव्या समं स्वपुरंप्रति प्रतस्थे, प्रमोदाश्रुविलोचनो विजयनृपालः कलावत्याः सम्यक् शिक्षां दत्वा कांचिद्भुवं गत्वा प्रति-

निवृत्तः. एकस्यंदनमारूढौ दंपती मार्गे गछंतौ पौलोमीवज्रिणाविव शुशुनाते. एवं तौ दंपती गजारूढौ महर्द्ध्या पुरं प्रविष्टौ, स शंखनृपस्तां कलावतीं पट्टदेवीपदे संस्थाप्य तया सह देवो देव्येव वैषयिकं सुखं नेजे. एवं नूयान् कालोऽगमत्.

अन्येद्युः कलावतीदेवी शयनीयस्थिता स्वप्ने पीयूषकुंभमालोक्य प्रबुद्धा नर्तुरग्रे समागत्यैवमनवीत्, हे नाथ! मयैष स्वप्नो दृष्टः, तस्य किं फलं नविष्यति? राज्ञोक्तं हे नद्रे! राज्यधुराधौरेयस्तव पुत्रो नावी, तद्वचनं श्रुत्वा हर्षिता कलावती शुक्तिर्मुक्ताफलमिव गर्नं बनार, क्रमेण विंशत्या दिनैरन्यधिकाष्टमासी व्यतिक्रांता, लोकानामिति कुलाचारोऽस्ति, यत्प्रथमपुत्रप्रसूतिः पितृगेहे, नवतीति विजयसेनो नृपः कलावतीमाह्वातुं स्वान्नरान् प्रैषीत्, तज्ज्ञातापि तेषां करे कलावत्यर्थमंगदद्वयं वस्त्राणि च प्रैषीत्, तेऽपि तत्र गत्वा तत्सर्वं दत्तस्यार्पयन्, सोऽपि कलावत्यै तद्दत्तवान्. तयापि स्वजनकुशलोदंतं पृष्ट्वा सत्कारपूर्वं विसर्जितास्ते क्रमेण स्वस्थाने गताः. अथ सा कलावती प्रमोदमेदुरा तामंगदद्वयीं करे धृत्वा स्वसखीनिः सह हास्यविनोदमकरोत्, दैववशात्तदानीमंतःपुरे प्रविशन् राजा कलावत्यास्तत्सखीनां च हसितध्वनिमाकर्ण्यैताः किं वदंतीति चिंतया तत्र गत्वा स

भित्त्यंतरितोऽशृणोत्. कलावती तदंगदौ भुजे बध्ध्वा सखीरुद्दिश्यैवं बभाषे, अहो सख्यो! येन मे इदमंगदद्वयं प्रेषितं तस्योपरि मम महान् स्नेहोऽस्ति, ईदृग्वल्लभो ममान्यः कोऽपि नास्ति. तस्य चिरायुषो मयि प्रेमातिरेको भृशमस्ति. मया चिरादद्य तत्पाणिसंगतं वस्तु संप्राप्तं, अथ साक्षान्मिलितेन तेन मे जन्म सफलं भवतु. तत् श्रुत्वा सख्यः प्रोचुर्हे सखि त्वं धन्या, येन तव तस्योपरीदृक्प्रेमातिरेको भृशमस्ति, तस्यास्तानि वचनानि श्रुत्वा दीप्तक्रोधो नृपतिरेवमचिंतयत् क्वाप्यन्यत्रेयं प्रेमवती, अहो कलावत्या अप्यपलक्षणानि पश्यंतु, अहं त्वेवं जाने यदेषा महासती, परमेषाप्येवंविधानि कर्माणि यदि समाचरति, तर्हि किमन्यस्य कथ्यते? अहो मम प्रिया कलावती गुंजाफलेव बहिरेव रक्ता, अंतस्तु विषमया, अहो स्त्रियाश्चंचलत्वं! यतः—अंतर्विषमया ह्येता । बहिरेव मनोहराः ॥ गुंजाफलसमाकारा । योषितः केन निर्मिताः ॥ १ ॥ इत्यादि विमृशन्नंतःकोपवान् धिक्स्त्रीणामिति निंदन् राजा स्वगृहमागादेवं चाचिंतयत्, क्वापि वने ह्येनां त्यजामि, तस्मिन्नवसरे कलावत्या दुःखं द्रष्टुमक्षमो नृपविवेकेन समं रविरस्तं गतः, तदानीं दुरालोकराज्ञो हृदि विश्वे च तमस्ततिः समज्जृंभत, राज्ञा तन्निशायां प्रच्छन्नं मातंगीयुगलं समाकार्यादिष्टं, त्यक्तायाः कलाव-

त्याः सांगदं भुजयोर्युग्मं छित्वा युवाभ्यामानेतव्यं, नात्र काचिद्विचारणा कार्या, तयोरेवमुक्त्वा दुराशयो राजा तस्यां रात्रौ शय्यापालकमेवमादिशत्, भो शय्यापालकैषा कलावती क्कापि भीषणे कानने नीत्वा त्वया त्याज्या, यथा कोऽपि न जानाति, सोऽप्येकाकिनीं देवीं कलावतीं रथे समारोप्य क्वचिदरण्ये नीत्वा मुमोच, ततः स शय्यापालकः कलावतींप्रति सगद्गदं प्राह हे देवि केनचिद्दोषेण राज्ञा शंखेन त्वं वने त्याजितासि, अत्र मदीयः कश्चिद्दोषो नास्ति, किंतु तव पूर्वकृतकर्मणामेव दोषोऽस्ति, तत श्रुत्वा सा राज्ञी द्राग्मुमूर्छ, पुनः सा वनमारुतैः शीतलैश्चैतन्यं प्राप्य रथक्रोडस्था छिन्नवृक्षाल्लतेव भुवस्तले पपात, सा भुवस्तले पतिता पुनर्लब्धचैतन्या मातापितरौ भ्रातरं च स्मरंती मुहुर्मुहुर्मुक्तकंठं भृशमरुदत, स शय्यापालकोऽपि रुदंस्तां मुत्कलयामास, ततो निशांते स्वपुरं व्रजंतं तं कलावत्याह भो शय्यापालक! शंखनृपतेरेवं शंसेः, भो राजंस्त्वया विरूपमाचीर्णं, यदविमृश्यैवाहं वने त्यक्ता, तत्त्वया कुलोचितं नाकारि, यतः शंकास्थाने दिव्यं दत्वा शुद्धा वाशुद्धा वेति निश्चित्य पश्चात्सदोषा त्याज्या, परं दिव्यं विना यत्त्वयाहं त्याजिता तन्महदकार्यं कृतं, यद्वा तवात्र कोऽपि दोषो नास्ति, किंतु मम कर्मणामेव दोषोऽस्ति, तथापि ते स्वस्त्यस्तु.

अथ सोऽपि देवीमाश्वासयन् साश्रुलोचनो यावत्तिष्ठति, तावत्ते चांडालिके कर्तरीयुते मूर्तिमत्यौ यमराजभगिन्याविव तत्र समागते, आः पापे! स्वपत्युर्वचनाफलं भुज्यतामित्युक्त्वा तस्याः सांगदं बाहुयुगं छित्वा मातंगीयुगलं स्वस्थाने गतं. ततः सा कलावती सोपालंभं शंखनृपं प्राह, हे प्राणेशैतद्दुःखद्वयेन पीडिताया मम हृदयं चिर्भटीफलमिव स्फुटति, अतस्तद्रक्षको भव? इत्यादि विलपंती दुःखाकुला तदासन्ननदीतीरे वननिकुंजे गता तादृग्दुःखेऽपि सुखहेतुं प्राची सूर्यमिव तेजःपुंजमयं तनयं जनयामास. महादुःखेऽपि हर्षपूरितमानसा सा तनयं वीक्ष्याशिषं ददौ, हे वत्स! त्वं दीर्घायुर्भव? यथाहं तव पुण्यप्राग्भारेण सुखमनुभवामि, दैवेन ममाशीरेव तव तोषाय कल्पितान्यजनाभावात. रे वत्स! यदि तव जनकगृहे जन्मो भवेत्तदा महानुत्सवो जायेत. एकाकिन्यहमस्मिन् वने तव कमुत्सवं करोमि? इति यावत्सा कथयति तावन्नद्याः पुरो ववृधे. स पूरश्च तं बालकं कीटमिव प्लावयितुमारेभे. तदानीं सा शंखपत्नी कलावती परमेष्ठिनमस्कारं स्मृत्वैवं प्राह, हे शासनेश्वरि! यदि मया त्रिवर्गशुद्ध्योज्ज्वलं शीलं पालितं भवेत्तथा सम्यग्जिनधर्मोऽप्याराधितो भवेत्तदा शिशोः पालनोपायो जलशांतिर्जायतां. ततस्तस्याः कलावत्याः शीलप्रभावेण पुनर्नवौ भु-

जौ जातौ, तथा तयोरुपरि देवैर्मुक्ता पुष्पवृष्टिर्जाता, तल्लीलांलीलायितं दृष्ट्वा कलावती विस्मयमादधौ. अत्रांतरे कश्चित्तापसः समागत्यैवमवोचत्, हे वत्से प्रसूतवत्सायास्तवास्मिन् वने स्थातुं न युक्तं, अतो ममाश्रमे समागच्छ? यथा तव शुश्रूषां कारयामि. इत्युक्त्वा स तापसस्तां कुलपतेः पुरतो निन्ये. तेन पृष्टा च सा सर्वं वृत्तांतं समाचख्यौ. ततस्तापसाधिपतिस्तां प्रोचे, हे भद्रे! त्वं मा खिद्यस्व? अहं तव लक्षणैर्जानामि यत्त्वं महाकुलोत्पन्ना, पुनस्त्वं स्तोकदिनांते बहूनि श्रेयांसि लप्स्यसे. तेन कुलपतिनैवमाश्वासिता सा विजयनंदिनी कलावती पुत्रसहिता तापसीभिः सह पितृगेहवत्तापसाश्रमे सुखं तस्थौ.

इतश्च ताभ्यां चांडालीभ्यां कलावत्या बाहू सांगदौ शंखराजाय दर्शितौ. ततो राजा तत्रांगदयोर्जयसेनाख्यां ददर्श. ततः समाकुलोऽसौ दत्तमाहूय पप्रच्छ, भो दत्त! देवशालपुरादिह किमद्य कल्ये वा कोऽप्यागात्? तेनोक्तं हे देव! विजयसेनेन राज्ञा प्रेषिता नराः कल्ये आगच्छन्, तैर्जयसेनकुमारप्रेषितमंगदद्वयं वस्त्राणि च मत्करे दत्तानि, मयापि देव्यै समर्पितानि. ते नराश्च कुशलोदंतमुक्त्वा स्वस्थाने गताः. तत् श्रुत्वा राजा वज्राहत इव मूर्छितो भुवि पपात. ततो लब्धचैतन्यः

स एवमुवाच, यथा—अहो मे मूढचारित्व—महो मे मंदभाग्यता ॥ अहो मे निर्विचारित्व—महो मम कुशीलता ॥ १ ॥ एवंविधान् विलापान् कुर्वाणो नृपो मंत्रिणा पृष्टो भो राजेंद्र किमिति पूत्करोषि? राज्ञोचे भो मंत्रिन्! क यामि? किं वच्मि? क विशामि? किं करोमि? मम महापापचेष्टितं कस्याग्रे कथयामि? अहो मम कर्मविलसितं! एतत्कर्मफलं कथं भोक्ष्ये? यन्मया पाप्मना सा निर्दोषापि दोषमुत्पाद्यांतर्वत्नी निर्जने वने त्याजिता छिन्नकरा कृता च. अहो! मयाऽविचार्य कार्यं कृतं, अतः परमहमास्यं लोकानां कथं दर्शयिष्यामि? किं मम जीवितेनेति विमृश्य स आसन्नसेवकानाख्यत्, भो भो सेवकाः! नगराद्बहिरेका काष्ठैर्महाचिता प्रगुणीक्रियतां, यथाहं तस्यां चितायामात्मदेहं दहामि, नारीहत्यामलीमसस्य ममान्यथा शुद्धिर्न भविष्यति. एवंविधं राज्ञः साग्रहं वाक्यं निशम्य सशोका मंत्रिमुख्याः पौराश्च नृपमिति व्यजिज्ञपन्. हे राजन्नेषा तावत्केनापि निजकर्मदोषेण देवी मृता, अथ त्वमपि मुधा किमविचार्य जीवितं त्यजसि? त्वया विना प्रजापि निर्नाथा भविष्यति. अतः प्रजार्थं त्वमात्मानं त्रायस्व? इत्यादि पौरामात्यानां वचांस्यप्यनादृत्य नृपो वेगेन कानने समागमत्. तदानीं समयज्ञो गजश्रेष्ठी कालक्षेपचिकीर्षया मधुराक्षरैः श्रीशंखध·

रणीधवमाहस्व, हे देव! यदि तव देवीसमीहा वर्तते तदोपवने गत्वा श्रीजिनेंद्रस्य पूजां कुरु? यतः—सर्वविघ्नहरी पूजा। चिंतितार्थप्रदायिनी॥ धर्मवृद्धिकरी पूजा। मोक्षसौख्यकरी नृणां ॥१॥ सा जिनपूजा ते चिंतितफलदायिनी भविष्यति. तथास्मिन् वनेऽमिततेजा महामुनिर्वर्तते, तस्य पादानभिवंदस्व? तस्यांतिके च धर्मं शृणु? तत श्रुत्वा राजा शंखो देवान्नत्वा गुरूंश्च वंदित्वा पुर उपाविशत. गुरुस्तु मुमुक्षुरपि तद्भावं विज्ञाय पापनाशिनीं देशनां चक्रे, भो राजन्—जीवाः संसारकांतारे। पूर्वकर्मसमीरिताः॥ वातोध्धूतपताकेव। भ्राम्यंति जगतीतले ॥ १ ॥ अतः सुखार्थिभिर्धर्मविषये प्रमादो न विधेयः, यतः—धर्मो जगतः सारः। सर्वसुखानां प्रधानहेतुत्वात्॥ तस्योत्पत्तिर्मनुजात्। सारं तेनैव मानुष्यं ॥ १ ॥

इत्यादिमुनिदेशनां श्रुत्वा विशामीशस्तां निशां तत्रैव वने विशश्राम. तत्र सुखसुप्तो राजा विभातकल्पायां विभावर्यां स्वप्नं पश्यति, यथा—अपक्वैकफला वल्ली। पतिता कल्पपादपात्॥ आरुरोह पुनः पूर्ण—फला सा तत्र तत्क्षणात ॥ १ ॥ प्रगे समुत्थाय तत्स्वप्नं तेन गुरोरग्रे निवेदितं. गुरुरप्याह भूमींद्र। भवान् कल्पमहीरुहः॥ वल्ली प्रिया ते सा सून—पुत्रा पुनरुपेष्यति ॥ १ ॥

ततो राजा स्वस्वप्नफलं श्रुत्वा प्रीतः सत्वरं स्वपुरं प्राप, दत्तमितं समादिशच्च, भो दत्त! सकलसैन्यपरिवृतस्त्वं कलावतीमन्वेष्टुं तस्मिन् वने याहि? यत्र सा त्यक्ता. दत्तोऽपि तत्र वने गतो वनाद्वनं वृक्षाद्वृक्षं च भ्राम्यन्नेकं तापसमद्राक्षीदंबुधौ द्वीपमिव. तदंतिके गत्वा दत्तः पप्रच्छ, हे भगवन्नस्मिन् वने भवतैकाकिनी काचिद्वनिता दुःखिता किं वीक्षिता? मुनिरूचे भो भद्र! तया सह तव किं कार्यमुच्यतां? दत्तेनोक्तं मम भूपतेर्वह्नौ विशतः प्राणरक्षणकार्यं, नान्यत्. तत श्रुत्वा स मुनिरपि दत्ताय पुत्रोपेतां तां कलावतीं तापसाश्रमे दर्शयामास. दूरतो दत्तमालोक्य जातातिशोका कलावती राज्ञी बाढस्वरेण भृशं रुरोद. दत्तोऽवक् हे स्वामिनि! त्वं खेदं मा कुरु? इदं हि प्राग्भवोपार्जितं स्वकर्मफलं, तदभुक्त्वा कोऽपि न मुच्यते, तच्च त्वया भुक्तं, अथ त्वं स्वस्था भव? धीरत्वं चांगीकुरु? स्वदर्शनसुधावृष्ट्या च त्वं द्रुतं नृपमाश्वासय? पश्चात्तापपरो भूपो वह्नौ प्रविशन्नद्यतनं दिनं मया स्थापितोऽस्ति.

अथ कलावती कुलपतिमापृच्छ्य कुलपतिं च नत्वा तेनापि दत्ताशीस्तनयसहिता रथमारुह्य दत्तेन सह चचाल. तां प्रियां सपुत्रामासन्नागतां च श्रुत्वोदश्रुलोचनः शंखराजा सन्मुखमागत्य मि·

लितः, ततोऽसौ कलावतीं सस्नेहं बभाषे, हे प्रिये! त्वं निर्दोषापि मया यद्दोषमुत्पाद्य विडंबिता तन्ममापराधं सहस्व? एवं नृपः प्रीतिपरायणां महासतीं सन्मान्य सादरं समहोत्सवं पुरे प्रवेशयामास. पौरांगनाभिर्गीयमानयशाः कलावती राज्ञोंतःपुरं प्राविशत्. ततो राजा स्वप्नानुसारतः पुत्रस्य द्वादशे दिवसे पुष्पकलश इत्यभिधां कारयामास. अन्यदा कलावती नृपं प्राह हे नाथ! त्वया ममेदृग्दंडः केन दोषेण कारितः? तदा सलज्जो नृपालः प्रियांप्रत्याह हे सुंदरि! त्वयि प्रतिपच्चंद्रलेखायामिव सर्वथा दोषलेशो नास्ति, किंतु ते प्राग्भवाचीर्णं कर्मेदं समुपस्थितं, यन्मयैवमकार्यं कृतं, तन्मूलकारणं त्विदं. यदंगदयोर्युगं त्वया श्लाघितं, मया चिंतितमिदं मया दत्तं नास्ति, तर्हि नूनमस्यां रक्तेन केनचित्पुंसा दत्तं भावीति मम दोषो जातः, तेनेदं कार्यं च मया कृतं, अथावां नगरोपवने गत्वामिततेजसो महामुनेः पुरतः प्राक्कृतकर्म पृछाव इत्युक्त्वा कलावत्या समं नृधवः शंखः सपरिछदो नंदनोद्यानं जगाम, तत्र जिनं नत्वा महामहेन पूजां कृत्वा तौ दंपती नतिपूर्वकं मुनेरग्रे निषीदतुः, मुनिना देशना दत्ता, देशनांते शंखमहीपालः प्रांजलिर्मुनिं पप्रछ, हे भगवन्! कलावत्या पूर्वभवे किं कर्म कृतं? येनास्या निर्दोषाया अपि मया भुजौ छेदितौ. अवधिज्ञानेन

ज्ञात्वा मुनिः कलावत्याः प्राग्भवानाचख्यौ—

श्रीमद्विदेहोर्व्यां महेंद्राभिधपुरमस्ति, तस्मिन् पुरे चारुविक्रमो नरविक्रमो नाम नृपोऽस्ति, तज्जाया लीलावतीनाम्नी, तयोः पुत्री सुलोचना, सा बालकालादारभ्य धर्मरसिका कौतुकप्रिया मातापित्रोः प्रेमपात्रं क्रमेण यौवनं प्राप्ता. एकस्मिन् दिने पितुरुत्संगे स्थितायामेतस्यां केनचिन्मनोहरो राजकीरो भ्रुपायनीचक्रे, ततः कौतुकेन करे कृत्वा राज्ञा स शुकः पाठितः, कीरोऽपि स्वं दक्षिणं पाणिं समुत्पाट्याशीर्वादमुदाहरत, यथा—स्फुरत्तमःपक्षपाती । राजतेजोविवर्धकः ॥ भाति प्रतापभानुस्ते । राजन् विश्वावभासकः ॥ १ ॥ तथा—यावल्लीलातरंगैर्वहति सुरनदी जाह्नवी तोयपूर्णा । यावच्चाकाशमार्गे तपति शुभकरैर्भास्करो लोकपालः ॥ यावद्वैडूर्यरत्नप्रभवमणिशिला मेरुशृंगे विभाति । तावत्त्वं पुत्रपौत्रैः स्वजनपरिवृतो जीव धर्मप्रसादात् ॥ २ ॥ इत्याद्याशीर्वचः श्रुत्वा प्रीतो राजा तस्मै भ्रुपायनदायकाय स्वदेहालंकारं दत्वा विससर्ज, तं शुकराजं च प्रीतमनाः स्वपुत्र्याः प्रददौ, सा राजपुत्री तं शुकं लब्ध्वा मुदमाप, दरिद्रार्भको मोदकमिव. ततः सा गृहे गत्वा तं स्वर्णपंजरेऽक्षिपत्, सा तं शुकराजं शर्करास्वंभैः शालिधान्यैर्दाडिमीफलैर्हारहूरादिभिश्च प्रमोदात्

पुपोष, सा तं कदाचित्करस्थं, कदाचिद् हृदिस्थं, कदाचिदंकस्थं, कदाचित्पंजरस्थं च पाठयंत्यात्मानं व्यनोदयत्, भोजने शयने याने स्थाने वने गृहे वा सा सुलोचना तं शुकं न मुमोच योगी ध्यानमिव. कदाचित्तं पंजरस्थं समादाय सा कुसुमाकरोद्याने सखीयुता क्रीडार्थं गता, तस्मिन् वने श्रीसीमंधरजिनप्रासादे श्रीजिनं नंतुं सा गता, शुकस्तत्र श्रीवीतरागं निरीक्ष्य चेतस्येवमभावयत्, दृष्टपूर्वमिदं बिंबं मया पुरेत्यूहापोहं विदधानो जातजातिस्मृतिरेवं दध्यौ, यदहं पूर्वभवे साधुरभवं, तत्र मया क्षयोपशमतः सर्वशास्त्रमध्यैषि, क्रियापि शुद्धा पालिता, परमहं वस्त्रपुस्तकपात्रादिषु मूर्छितश्चारित्रज्ञानमहारयं. एवं व्रतं विराध्य मृत्वास्मिन् काननेऽहं राजशुकोऽभवं, प्रत्यासन्नशास्त्रज्ञानबलादहं तिर्यग्भवेऽपि धिषणापटुरस्मि, परं तिर्यग्योनौ किं सुकृतं करोमि? धिग्मां येन मया मंदबुद्धिना प्रमादेन निरर्थकं मनुजजन्म हारितं. अथ किं करोमि? एवं विचिंत्य शुकेनाभिग्रहो गृहीतो यत्प्रत्यहं जिनं नत्वा भक्ष्यमादास्ये, नान्यथेति कृत्वा स स्वस्थोऽभवत्. सुलोचना राजपुत्री तीर्थेशं नत्वा भक्त्या चाभ्यर्च्य सपंजरं तमादाय निजमंदिरे समागात्.

अन्यदा सा राजकन्या कीरं करे कृत्वा भोक्तुमुपाविशत, तावता शुकः स्वनियमं स्मृत्वा न-

मोऽरिहंताणमित्युक्त्वा नभोध्वनोड्डीय तं तीर्थेशं नंतुं तस्मिंश्चैत्ये जगाम, त्रिवर्गशुद्धितः सीमंधरदे-
वं वीतरागं नत्वा प्रीतो राजशुकः श्रीकुसुमोद्याने वनफलाहारैर्भोजनं करोतिस्म. ततः कस्यांचिद्वा-
खिशाखायां स उपविष्टः, गतं राजशुकं ज्ञात्वा तद्वियोगेनाक्रंदंत्यां राजपुत्र्यां तत्सेवकास्तस्याः शु-
के प्रेमातिरेकं ज्ञात्वा शुकाभिमुखं धावंतिस्म, तत्र शाखिशाखानिविष्टं शुकं वीक्ष्य तेऽपि शनैः श-
नैस्तामारुह्य तं शुकं करे धृत्वा स्वस्वामिन्यै समार्पयन्, सा प्रेममन्मनालापेन तमालाप्य जगाद,
भो शुक! त्वं जननीसमानां मां परित्यज्य कथं गतोऽसि, अथाहं तव विश्वासं न करोमीत्युक्त्वा
तस्य गतिभंगाय सा राजसुता पक्षौ चिच्छेद. ततो नृपजा तं शुकं पंजरे स्थापयामास, शुकोऽप्य-
चिंतयत्पराधीनवेदनाविधुरं मां धिगस्तु, परवशे पतितोऽहं किं करोमि? कस्याग्रे पूत्करोमि? रे जी-
व! त्वं स्वं पूर्वकृतं कर्म सहस्व? तव पापकर्मणोऽथ जिनमुखावलोकनं क्व? तद्विना च फलाहा-
रादिकमपि क्व? इत्यादिचिंतापरः शुकोऽश्रूणि मुमुचे, ततः स शुकोऽनशनं कृत्वा कतिचिद्दिवसा-
नंतरे मृत्वा सौधर्मकल्पे देवोऽभूत्, शुकविरहात्सुलोचनाप्यनशनेन मृत्वा सौधर्मे कल्पे तस्यैव दे-
वीत्वेनोत्पन्ना, तावुभौ परस्परं सुखं बुभुजाते. भो राजन्! स शुकदेवजीवश्च्युत्वा त्वं शंखनृपो जा-

तः, सुलोचना पुनरेषा कलावतीनाम्नी तव प्रिया जाता, प्राग्भवे यत्कलावत्या शुकस्य पक्षौ छिन्नौ तत्कर्मविपाकेन त्वयास्याः करौ छेदितौ. पुनर्गुरुणोक्तं भो राजन्नस्मिन् संसारे सर्वे जीवाः स्वोपार्जितमेव शुभाशुभं कर्मानुभवंति, येन यादृशं पूर्वजन्मनि कर्म कृतं भवति, तेन तादृशं फलमवश्यं भोक्तव्यमेव, यतः—कृतकर्मक्षयो नास्ति । कल्पकोटिशतैरपि ॥ अवश्यमेव भोक्तव्यं । कृतं कर्म शुभाशुभं ॥ १ ॥ ततस्तौ दंपती जातिस्मरणमासाद्य सद्यः संयमायोद्योतौ जातौ, साधुं प्रणम्य च स्वगृहं गतौ. ततः शंखः कलावत्या उदरजातं निजांगजं पूर्णकलशाख्यं स्वराज्ये निवेशयामास, ततोऽमिततेजोगुरोः पार्श्वे तौ दंपती दीक्षां जगृहतुः, अनल्पकालं च चारित्रं प्रपाल्य स्वर्गमवापतुः, तत्र स्वायुः प्रपूर्य ततश्च्युतौ सुकुलोत्पन्नौ पुनः संयमं लात्वा क्षीणकुकर्मलेशौ भूत्वा क्रमाच्छिवं प्राप्स्यतः. इत्थं देव्याः कलावत्या—श्चरित्रं चारु वर्णितं ॥ यस्याः शीलप्रभावेण । हस्तौ जातौ पुनर्नवौ ॥ १ ॥ इति कलावतीकथानकं समाप्तं. ॥ अथ शीलवत्याः स्वरूपमाह—

॥ मूलम् ॥—सीलवईए सीलं । सक्कइ सक्कोवि वण्णिउं नेव ॥ रायनिउत्ता सचिवा । चौरोवि पवंचिआ जीए ॥ १० ॥ व्याख्या—शक्रोऽपि वर्णयितुं नैव शक्नोति, तर्हि किं पुनर्मानवाः?

यय। शीलवत्या ' रायनिउत्तेत्ति ' राज्ञा नियुक्ताः प्रेषिताश्चत्वारोऽपि सचिवा मंत्रिणः ' पवंचिऊ· त्ति '·प्रकर्षेण वंचिता इति गाथार्थः, विस्तरार्थस्तु कथानकादवसेयस्तद्यथा—

जंबूद्वीपे भरतक्षेत्रे श्रीनंदनवननामपुरमस्ति, तस्मिन्नगरेऽरिमर्दनो नाम राजा राज्यं करोति, तस्य मान्यो वदान्यः सदाचारो रत्नाकरो नाम श्रेष्ठ्यस्ति धनै रत्नाकर इव, तज्जाया नारीगुणालं· कृता श्रीमतीनाम्न्यस्ति, तावुभौ परमश्रावकौ श्राद्धधर्मं पालयामासतुः, परं चिरेणापि कालेन सु· खकारणं पुत्ररत्नं न लभेतेस्म, पुत्राभावपीडिता तज्जाया श्रीमत्यथान्यदा रत्नाकरश्रेष्ठिनमभाषिष्ट, हे स्वामिन्नगरोपवने श्रीजिनचैत्याग्रे श्रीजिनवरसेविका जिनाधिष्ठायिकाऽजितबलानाम्नी देव्यस्ति, सा सेविताऽपुत्राणां पुत्रान् ददाति, तथा निर्धनानां धनं ददाति, तथा दुर्भगानां सौभाग्यानि द· त्ते, ततः त्वमप्येनामजितबलां देवीं समाराधय? यथा सा तुष्टा तव पुत्रं ददाति, यतः—शर्वरीदी· पकश्चंद्रः । प्रभाते रविदीपकः ॥ त्रैलोक्ये दीपको धर्मः । सुपुत्रः कुलदीपकः ॥ १ ॥ पुत्रार्थं लो· काः स्वप्राणानप्युपायनीकुर्वंति, किंच यदि पुत्रो नास्ति तर्हि किं धनेन? ततस्तेन श्रेष्ठिनापि त· दाराधनं सम्यक्चक्रे. तस्याः प्रसादेन तयोः पुत्रो जातः, यतो भाग्योदये देवा अपि प्रसन्ना भवं·

ति. यतः—औषधं शकुनं शास्त्रं । नक्षत्रं ग्रहदेवताः ॥ भाग्यकाले प्रसीदंति । अभाग्ये यांति विक्रियां ॥ १ ॥ अथ पुत्रजन्मोत्सवानंतरं तस्या देव्या माहात्म्यसूचकामजितसेन इत्याख्यां द्वादशेऽहनि तस्य पुत्रस्य विदधे. सोऽजितसेनः क्रमात् पंचवर्षानंतरं पाठितो द्वासप्ततिकलावान् जातः. क्रमाद्बाल्यत्वमतिक्रांतोऽसौ यौवनश्रिया शिश्रिये, तत्स्पर्धयेव च श्रिया सरस्वत्या चापि स शिश्रिये. ततो रत्नाकरः श्रेष्ठी तदनुरूपकन्यायै चिंतां चकार बुद्धिमान् शास्त्रार्थसंदेह इव. यदि मम पुत्रो गुणानुरूपां कन्यां न लभते तदा तद्रूपादिगुणो व्यर्थ एव. यतः—निर्विशेषः प्रभुः पार—वश्यं दुर्विनयोऽनुगः ॥ दुष्टा भार्या च चत्वारि । मनःशल्यानि देहिनां ॥ १ ॥

इतश्च तेनैव श्रेष्ठिना व्यवसायार्थं पुरा कश्चिद्वणिक्पुत्रः प्रहितः सोऽभ्येत्य पुरत उपविष्टो रत्नाकरश्रेष्ठिना पृष्ट आयव्ययादिव्यवहारस्वरूपं. ततस्तेनोक्तं भो श्रेष्ठिन्नहं मंगलायां महापुरि जग्मिवान्, तत्र मम जिनदत्तश्रेष्ठिना समं व्यवहारोऽभवत्. तेनैकदाहं स्वगृहे भोजनाय निमंत्रितः, तत्रैका मया कन्यका दृष्टा स्वर्गादवतीर्णा सुरीव सुरूपा. मयोक्तं भो श्रेष्ठिन् कैषा? श्रेष्ठिनोक्तं मम पुत्री कन्येयं शीलवत्याख्या, परं ममास्याः चिंता वर्तते, एषा वरं वरं प्राप्स्यति न वा? तथा स्व·

गुणैः श्वशुरादीनां मनो रंजयिष्यति न वा? तथैव सम्यक्शीलं पालयिष्यति न वा? तथा सुतं प्रसविष्यति नवेत्यादिचिंता मम चेतसि वर्तते. तथैषा मम पुत्री सकलगुणसंपूर्णा पशुपक्षिभाषाविशारदा देवकन्येव वर्धिता शीलवतीनाम्नी गुणेनापि शीलवती वर्तते, अस्या योग्यजामातृचिंता मम बाधते. मयोक्तं देव! त्वं चिंतां मा कुरु? श्रीनंदने पुरे रत्नाकरश्रेष्ठिसुतोऽजितसेनाभिधोऽमुष्या योग्यो वरोऽस्ति. तदानीं जिनदत्तेनोक्तं भो भद्र! त्वया साधूक्तं, वरचिंताब्धौ मग्नस्त्वयाहं साधूध्धृतः, भो मित्र! अथ त्वमितो याहि स्वग्रामे, तत्र गत्वा चाजितसेनं समानय? यथाहं तस्मै मम पुत्रीं शीलवतीं ददे, त्वया नात्र विलंबो विधेयः. ततस्तेन जिनशेखरेण निजपुत्रेण समं प्रेषितोऽहमत्रागां. अथ यत्तव रोचते तत्कुरु? श्रेष्ठी प्राह भो महाभाग! त्वया मम महानुपकारः कृतः, सर्वलाभेभ्यो ममैष महालाभो जातः.

अथ श्रेष्ठिना जिनशेखरः सादरं समाहूतः सन्मानितश्च. ततो जिनशेखरोऽजितसेनं सार्धं नीत्वा तां पुरीं ययौ. अजितसेनोऽपि तत्र गत्वा तां शीलवतीं महामहेन परिणीय महर्ध्या निजगृहं समियाय. सोऽजितसेनश्च तया शीलवत्या समं त्रिवर्गसारं गार्हस्थ्यधर्मं चिरमपालयत्. अन्य-

दा रात्रिद्विप्रहरावसरे शिवारुतं श्रुत्वा मूर्धनि घटमादाय गेहान्निर्गता. तदानीं तस्या श्वशुरो वृद्धत्वात्त्यक्तनिद्रस्तां महासतीं यांतीं दृष्ट्वा चिंतयति—मनस्यर्थपरा नार्यो । बहिरेव मनोहराः ॥ अत्यंतदारुणाश्चांतः । स्वर्णात्तक्षुरिका इव ॥ १ ॥ शीलवत्यपि निष्कपटा किंचिदनिंदितं कार्यं कृत्वा घटं स्थाने मुक्त्वा पुनः स्वतल्पे प्राप्ता. स श्रेष्ठी रजनीप्रांते स्वां जायामभाषत, एषा वधूः शीलगुणैस्तव कीदृशी विभासते? तयोक्तमेषा महासती शीलवती, नात्र कोऽपि संदेहः. पुनः श्रेष्ठिनोक्तं हे प्रिये! मयैषा वधूर्निशायामेकाकिनीं रंतुं क्वापि यांति दृष्टा पुनरागता च. पश्चान्न ज्ञायतेऽनया किं कृतं? इतश्चाजितसेनोऽपि तातप्रणामार्थं तत्रागात. पित्रापि सखेदं स भाषितो यथा हे वत्स! अस्मत्कुले एतां वधूं कल्पवल्लीसदृशां ज्ञातवान्, सांप्रतं तु दृष्टदोषां विषवल्लीतोऽपि तामनिष्टां जाने. अतः केनापि पुरुषेण स्त्रीमात्रस्यापि विश्वासो न कर्तव्यः, यतस्तासां शीलं विद्युल्लतायते. हे पुत्र! तव पत्नी शीलवती नीराहरणदंभतो निशासमये क्वापि गता, प्रहरसमयेन च पुनरागता, अतः कारणाद्वत्सेमां दुर्वृत्तां तव वल्लभां त्यज? न चोचितां जानीहि? पुत्रोऽपि तातादेशः प्रमाणमिति कृत्वा तत्सर्वं प्रतिपद्य स्वस्थानं गतः.

अथ श्रेष्ठी कूटप्रयोगेण तां शीलवतीं प्रातर्व्यजिज्ञपत्, हे वधूटिके! तव तातो मिलनाय त्वामाह्वयति. तन्निशम्य सा विदग्धा तज्जात्रिचरित्रं चेतसि चिंतयित्वा श्वशुरोक्तमनुमेने. ततः श्रेष्ठी स्यंदनं सज्जीकृत्य शीलवतीं तस्मिन् स्यंदने समारोप्य मंगलकार्याणि कृत्वा मार्गे चचाल. तावदेका मार्गे तटिनी समागता. शीलवतींप्रति श्रेष्ठिनोक्तं हे वत्से! पादत्राणे परित्यज्य पाथसि संचर? सापि किंचिद्विचार्य विशेषेण पादत्राणे परिधाय रथादुत्ततार. ततः श्रेष्ठी तां दुर्विनीतां मेने प्रागधृतकश्मलत्वात्. अग्रे गच्छन् मुद्गक्षेत्रं फलितमालोक्य श्रेष्ठी जगाद, अहो! क्षेत्रस्वामिनो भाग्यं! यतः क्षेत्रं सुष्टु फलितं दृश्यते. स्नुषयाभाणि भो श्वशुर! इदं यदि पुरा जग्धं भविष्यति तर्ह्यस्मिन् क्षेत्रे किमपि निष्पन्नं नास्ति. श्रेष्ठी दध्यावहो दुर्विनीतेयं विपरीतं कथयति. ततः श्रेष्ठिना द्रुतं रथश्चालितः. अग्रे गच्छता श्रेष्ठिना जनसंकुलं पुरं वीक्ष्य प्रोक्तं, अहो महत्पुरं लोकैः संभृतं वर्तते. तया विचार्योक्तं यद्युद्वसं न स्यात्तदेदं वरं. श्रेष्ठी दध्यावहो इयमुद्धता मामपि हसति. अग्रे गच्छता कंचिद्भटं प्रहारजर्जरांगं दृष्ट्वा श्रेष्ठिनाभाणि अहो! कश्चिदेष महावीरः शूरः सत्वैकनिधिर्वर्तते. वध्वोक्तमसौ पामरः श्वानवत्कातरः केनचिद्भृशं कुट्टितोऽस्ति. श्रेष्ठिना चिंतितमेषात्युन्मत्ता या प्रत्य·

क्षेऽपि विरुद्धमभ्यधत्त. अग्रे गच्छता मार्गे वटवृक्षं वीक्ष्य श्रेष्ठिनाभाणि अहो शीतलच्छायो महावृक्षोऽयं वर्तते, अस्य छायां समाश्रित्य मार्गे खेदोऽपनीयते. इत्युक्त्वा श्रेष्ठी तच्छायायां निविष्टः, सा शीलवती तु वटच्छायां परित्यज्यातपे पटमावृत्य तस्थौ. तदपि विपरीतं वीक्ष्य श्रेष्ठ्यूचे वटच्छायामाश्रय? सापि तद्वचः श्रुतमप्यश्रुतमिव कृत्वा तत्रैव तस्थौ, ततस्तामुपेक्ष्य स स्वयमेव तत्र स्थितः. ततोऽग्रे गच्छता तुच्छमेकं ग्रामं समालोक्य श्रेष्ठिनाभाणि, अहो एष तुच्छग्राम उद्वस इव दृश्यते, अस्मिन्निवासी जनः कोऽपि नास्ति. शीलवत्योक्तमहो महान् ग्रामोऽयं जनतासमाकुलो वर्तते, एषा वधूस्तु सर्वं विपरीतं भाषते, तन्नूनमेषा विपरीता कुशिक्षिततुरंगमवद्वक्रगतिः.

एवं विषण्णात्मा श्रेष्ठी यावच्चिंतयति तावच्छीलवतीमातुलस्तस्माद्ग्रामात् समागत्य सगौरवं श्रेष्ठिनं सरथं स्वगृहे नीत्वा सरसरसवत्या भोजयित्वात्यर्थमुपचचार. श्रेष्ठी च सादरं तेन स्थाप्यमानोऽपि नास्थात्. ततस्तेन वस्त्रादिना सत्कृतो मार्गे संचरन् दूरमार्गं गतो वृक्षाधो रथादुत्ततार, पुनर्भोजनं कृत्वा वृक्षच्छायायां सुखं सुष्वाप. वधूरपि पितुर्गृहमभ्यर्णं विजानती हृष्टा भोक्तुमुपाविशत्. तस्मिन् समये करीरवृक्षस्तंबस्थितो वायसोऽरटत. तदा तद्भाषाविशारदा शीलवती बभाषे भो काक!

वारंवारं किं करकरायसे? श्रेष्टिना चिंतितमहोऽस्या दुराचारत्वं! या नराभावे पक्षिभिः सह भाषते. तावता पुनः करंबकालोके काको जातोत्कंठोऽरटत्. ततः सावसरं ज्ञात्वा तं काकं निःशंकमाख्यत्, रे काक! पूर्वं गोमायुकांताध्वनिं श्रुत्वा भर्तृवियुक्ताभवं. तवोक्तकृतेन पुनः पितृवियुक्ताभविष्यं, अतस्त्वं मौनं विधेहि? एतत् श्रुत्वा जागरूकेण श्वशुरेणोक्तं हे वधूटि! त्वं किमेवं भाषसे? सा प्राह हे श्वशुर! मे गुणा दोषाय जाताः, यतः—कुसुमनिचयः शाखाभंगं तनोति वनस्पते—र्ललसगमनं बर्हिपोते वधाय शिखंडिनः ॥ चतुरं गमनो यो जातोऽश्वः सगौरववाह्यते । गुणवति जने प्रायेणैते गुणाः खलु वैरिणः ॥ १ ॥ श्रेष्टिनोक्तं कथं? तयोक्तं श्रूयतां?—गोमायुकांतारुतं श्रुत्वा निशासमये तव जागृतोऽहं घटं गृहीत्वा गता, नदीं च तीर्त्वा मृतकमाकृष्य तत्कटिबद्धमाभरणादिकं घटे क्षिप्त्वा क्षिप्रं स्वगृहमागमं, तान्याभरणानि च मया महीपीठे गृहकोणके निखातानि वर्तते, अनेन दुर्नयेनाहमीयतीं भुवमासदं, सांप्रतमयं वायसः करंबकं याचते, ब्रूते चात्र करीराधो दशलक्षकांचनं वर्तते, तदहं कथयामि, रे काक! सृतं जल्पनेन, मौनमाधेहि? क्षते क्षारं च मा धेहि? श्वशुरेणोक्तं त्वया कथं ज्ञातं? वध्वोक्तं—बाल्ये बंधूपरोधेन । सर्वशास्त्र-

शिरोमणिः ॥ अहमध्येषि मूढात्मा । शास्त्रं पठितुमाहृयं ॥ १ ॥ ततः ससंभ्रमं कर्णौ कंपयन् स्थविरो जगौ, हे वत्से! किं सत्यमेतत्? तयोक्तमत्र संशयः कः? ततः स्थविरः परिकरं बध्ध्वा तरुणवल्लोहकुद्दालं करे कृत्वा काकाय करंबकं दत्वा स्वयं खनितुमारेभे, करीरवृक्षे खन्यमाने तस्याधः स्वर्णकुंभाः प्रादुरासन् शीलवत्या गुणा इव, तस्याः शीलवत्या दोषा इव रेणवश्च दूरे क्षिप्ताः, खन्यमाने तरोस्तले निर्गते च स्वर्णे वधूटिं श्रेष्ठी स्वयं प्राशंसत्, यथा—अहो मूर्तिमती लक्ष्मी—रेवासौ मद्गृहे वधूः ॥ काचभ्रांत्या मरकत—मिवावगणिता मया ॥ १ ॥

इति कथयन् स स्वर्णकलशान् रथे व्यधात, स्वापराधप्रकाशनाच्च तां क्षमयामासिवान्, एष श्रेष्ठी धनलोभतो भृशं तुष्टः, स्यंदनं वालयामास युद्धतो जितकासी पुमानिव, वधूराख्यत् हे श्वशुर! मम पितुर्गृहं समीपे वर्तते, ततोऽहं तातं मिलित्वा पश्चान्निवर्तयिष्ये. श्रेष्ठिनोक्तं रथमारुह? मम मनोरथांश्च पूरय? सापि श्वशुरदाक्षिण्यात्तथाकरोत, प्रमुदिताशयः श्रेष्ठी रथं परावृत्य गृहाभिमुखं प्रेरयामास, मार्गे गच्छन् श्वशुरः प्राह हे वत्से! तव वचो निर्हेतुकं नास्ति, अतः पृच्छ्यते त्वद्‌ सोऽयं ग्रामस्त्वया जनाकुलः कथमूचे? साख्यत् हे तात! यत्रास्ति कोऽपि स्वजनः तच्छून्यमपि सु-

दरं, यतो भवंतं समागतं श्रुत्वा मम मातुलेन भवतः सेवा कृता, अतः शून्योऽपि जनाकुलो मया प्रतिपादितः क्रमेण मार्गे गच्छतः स वटः समागतः, श्रेष्ठिना पृष्टं हे वत्से! तदा त्वं छायां त्यक्त्वातपे कथमुपविष्टा? तयोक्तं हे श्वशुर! त्वया कदापि किं न श्रुतं? यथा—वायसश्चेद्वटारूढो। वनिताशिरसि स्रवेत्॥ षण्मासाभ्यंतरे पत्यु—स्तदापायो भवेन्महान्॥ १॥ तथा वृक्षमूले सर्पादिभयं भवेदतोऽहं वटछायां त्यक्त्वातपे समुपविष्टा, तत् श्रुत्वा श्रेष्ठी प्राह हे कुलाधारे! त्वया साधूक्तं, एवं वारंवारं वधूं श्लाघमानो मार्गे चलन् स पुनः पप्रच्छ, हे वत्से! मयोक्तमेष वीरो वर्तते, त्वयोक्तमेष कातरः केनचित्कुट्टितः, तत्त्वया कथं ज्ञातं? सा प्रोवाच तत्पृष्ठप्रहारेण मयाज्ञायि यदेष कातरः प्रणश्यन् केनचित्पृष्ठे हतः, पुनः श्रेष्ठी बभाषे श्लाघ्यं पत्तनं त्वया कथमुद्वसमभ्यधायि? सावदत् सुवसेनापि पत्तनेन किं? यत्र कोऽपि स्वजनो नास्ति, तद्वसन्नप्युद्वसं, यतः—स्वभावस्नेहसांद्रेण। विनैकेन प्रियात्मना॥ जनाकुलमपि क्षोणी—पीठमाभात्यरण्यवत्॥ १॥ हे महाभागे! त्वया सत्यमुक्तमित्युक्त्वा स पुनः प्राह मुद्गक्षेत्रमिदं परिपाकदशामापन्नमपि त्वं कथं जग्धमुदाहरः? तयोक्तमसौ कार्षुको रक्षानपेक्षया शंबामश्नाति, तेन कारणेनानेन वृद्ध्या व्यवहारितो धनं दात्वा

भक्षितं भावीति ज्ञायते, ततो मयोक्तमिदं क्षेत्रं जग्धं, ततः श्रेष्टिना पृष्टः कृषीवलोऽपि तथैवाख्यत, पुनर्मार्गे गच्छन् श्रेष्टी शीलवतीं प्राक्षीत्, नदीमुत्तरता मयोक्तमुपानहौ मुक्त्वा नदीमुत्तर? परं त्वया पादत्राणे परिधाय नदी कथमुत्तीर्णा? तयोक्तं कंटकादयो यत्र दृश्यंते तत्र पादत्राणेन परिहितेन किमपरिहितेन वा किं? जलांतरे तु कंटककर्करादयो न दृश्यंते, अतो मया जले पादत्राणे परिहिते, इत्यादि स्नुषोक्तियुक्तिं निशम्य प्रीणितमानसः श्रेष्टी क्रमात् स्वगृहं प्राप. ततो वध्वा शकटतटाद् गृहीताभरणानि भूमौ निखातानि दर्शितानि, ततस्तुष्टः श्रेष्टी तयोक्तं सर्वं सत्यं मेने, तद्दिनादारभ्य च तेन श्रेष्टिना सा वधूः सर्वस्वस्वामिनी स्थापिता. ततः कतिपयवर्षांते आयुषः क्षये श्रेष्टी धर्मध्यानपरो मृत्वा स्वर्गं गतः. ततो देहछायेव श्रेष्टिन्यपि तमन्वगात्. ततः श्रेष्टिपदेऽजितसेनः स्वजनैः स्थापितः, सोऽजितसेनो जिनधर्मरतः शीलवत्या समं गृहिधर्मं पालयामास.

अन्यदा तन्नगराधीशेनारिमर्दनराजेनैकोनपंचाशन्मंत्रिणो मेलिताः, स राजा विशिष्टधिषणं कंचिन्मंत्रिणं चिकीर्षुर्नागरिकानाहूय प्रत्येकं पप्रच्छ. यो मां लत्तया हंति तस्य को दंडो युज्यते? तेऽप्यूचुस्तस्य शिरश्छेदो वा पादच्छेदो वा सर्वापहारो वा देशत्यागो वा विधीयते. तद्वचनं श्रुत्वा

जितसेनः शीलवत्यै न्यवेदयत. सा शीलवती चतुर्विधबुद्धिनिधानं राज्ञो वचनं बुध्ध्वा विचिंत्यादोऽवदत्, तस्य सर्वांगाभरणानि यथाशक्त्या दीयंते. अजितसेनेन पृष्टमेतत्किं? शीलवत्योक्तं, प्रियपुत्रंविनान्यो राजानं लत्तया को हंति? अतस्तस्याभरणानि दीयंते. तेनाजितसेनेन गत्वा राज्ञोऽग्रे तथैव विज्ञप्तं. ततस्तुष्टो राजा तमजितसेनं सकलमंत्रिमुख्यं महामंत्रिणं स्थापयामास. एकस्मिन् दिने राजारिमर्दनः पर्यंतदेशस्वामिनं सिंहनामानमभ्यषेणयत. तेन सह गंतुमना अजितसेनः प्रियांप्रत्याह, हे प्रियेऽहं राज्ञा समं यास्यामि, मया विना त्वं शीलरक्षां कथं करिष्यसि? तयोक्तं मम शीलं शक्रोऽपि म्लानिं प्रापयितुं न क्षमः, एतदर्थं त्वं निश्चिंतो भव? तथा तव प्रत्ययार्थं मत्करार्पितामेकां पुष्पमालां कंठे निधेहि? यावदेनां पुष्पमालामम्लानां वीक्षसे तावत्त्वं मां शीलालंकृतां विद्धि.

इत्युक्त्वा शीलवती स्वगुणश्रेणिमिव स्वकरेणाजितसेनकंठकंदले पुष्पमालां निचिक्षेप. ततो हृष्टोऽजितसेनो राज्ञा समं मार्गेऽचलत्. पुष्परहितां क्वांचिदरण्यानीं गतो भूपोऽजितसेनस्य कंठे विकस्वरां पुष्पस्रजं ददर्श. भूपेन पृष्टोऽजितसेनः, भो अजितसेन! एषा पुष्पस्त्रक्तव केन दत्ता?

त्वया कुतो लब्धा? तत्सत्यमाख्याहि? राज्ञैवं पृष्टो मंत्री स्फुटं जगौ, हे राजेंद्र! मम पत्नी शीलव- ती, तया स्वकरेण वरमालिका क्षिप्ता, एषा पुष्पमाला तस्याः शीलप्रभावतः सदैवाम्लाना वर्तते, एषा च कदापि न म्लानिं प्राप्नोति. राज्ञोक्तमहो! सत्याः शीलं. ततः कामांकुरो मंत्री प्राह राजेंद्र! मृगीदृशां कुतः शीलं भवति? द्वितीयो मंत्री ललितांगोऽवदत् स्वामिन् सत्यं कामांकुरो वक्ति. तृ- तीयो रतिकेलिनामा मंत्री प्राह, देव! अत्र तव कः संशयः? चतुर्थोऽशोकनामा मंत्री प्राह हे रा- जेंद्र! तत्र मां प्रहिणु? यथा शीलवत्याः शीलं ज्ञायते. अथ राजा बहु धनं दत्वा प्रथममशोकं श्री- स्वनगरेऽप्रैषीत्. असावशोको विधृतभूरिनेपथ्यो बहुपरिवारपरिवृतः शीलवत्याः शीलखंडनेच्छया श्री- नंदनपुरे प्राप्तः, शीलवत्या गृहासन्ने च स्थानमादाय तस्थिवान्. स तत्र शृंगाररसमग्नो गीतगानता- नसावधानः शीलवत्याः सन्मुखं वक्रदृष्ट्या विलोकयन् हास्यादिकं करोतिस्म. यतो निर्लज्जोऽसौ राज्ञा प्रेपितस्तमन्यो जनो विरूपमाचरंतं को निवारयति? एवं दिनानि यांतिस्म. शीलवती दध्यौ नूनमेष मम शीलविध्वंसार्थमागतः संभाव्यते, यतोऽसौ किंचिदसमंजसं मया सार्धं भाषते. एवं च कुर्वन्नसौ केसरिकेसरान् करेण क्रष्टुमीहते, सुहुतं वा हुताशनं करेणादातुमिच्छति, यो मया शी-

लवत्या रंतुमिच्छति. तथाप्यहं कौतुकं पश्यामि यत्किमसौ कुधीश्चेष्टते. एवं ध्यात्वा सापि तं नेत्र-कोणेन विलोकयितुं लग्ना. अशोकोऽपि तां कामपरवशां ज्ञात्वा ममार्थः सिद्ध इति विदन् काम-भोगप्रार्थनाय दूतीं प्रस्थापयामास. सा तत्र गत्वा तामाह, हे भद्रे तव भर्ता दूरदेशांतरं गतो रा-ज्ञा समं, न ज्ञायते स कदा समेष्यति? अतस्त्वं रूपसंपदं तारुण्यलक्ष्मीं च भुंक्ष्व? किं मुधा ज-न्म गमयसि अरण्ये मालतीपुष्पमिव. तव भाग्यैराकृष्टः समागतस्तवासन्नगृहे स्थितोऽशोको नाम महामंत्री राजमान्यो भूरिभाग्यैर्लभ्यते, अतस्तेन समं त्वं वैषयिकं सुखं भुंक्ष्व? सा बभाषे हे स-खि! कुलस्त्रीणामन्यतरपुंसा सह संगमो न युज्यते, एवमुक्तियुक्त्या शीलवत्या बहु बहु प्रतिपादि-तं, तथापि सा दूतिका वारंवारं कथयत्येव. तदा शीलवत्योक्तं तर्हि सांप्रतमर्धलक्षं स मे ददातु, येनाहं भोगसामग्रीं सज्जयामि. ततः पंचमेऽह्नि सोऽत्रागच्छतु. तयोक्तमेवं भवतु. ततः साशोकमं-त्रिणः समीपे गता, यथोक्तं च निवेदितं, तेनापि प्रेषितमर्धलक्षं.

अथ सा शीलवती स्वनरैर्गृहापवरककोणके महतीमेकां गर्तां कारयामास. गर्तोपरि पर्यंकं, त-स्योपरि चोत्तरच्छदं सा तथाच्छादयामास यथा कोऽप्यन्यो न जानाति. ततः पंचमेऽह्नि शीलवत्या

समाहूतोऽशोकमंत्री लक्षार्धमादाय तांबूलव्यापृतकरः स्वसौभाग्येन जगत्तृणवन्मन्यमानः शर्वर्यां शीलवत्या गृहे समागतः, तस्याः करे लक्षार्धं दत्वा च मुदमाप. तथा मुदमापन्नः स तया पर्यंके निवेशितः. यावत्स तत्रोपविशति तावन्नरकोपमायां गर्तायां निपतितः. ततः शीलवती तस्याशोकमंत्रिणो जीवितव्यरक्षार्थं किंचिद्भोजनोदकं रज्जूबद्धशरावेण ददाति. एवं मासे व्यतिक्रांते राज्ञा मंत्रिणः समाकार्य प्रोक्तं भो मंत्रिणः! अशोको नागतः, किं कारणं? तदा तृतीयेन रतिकेलिमंत्रिणोक्तं स्वामिन् यदि तवादेशो भवति तदाहं तत्र यामि. एतत्कार्यं कृत्वा च त्वरितं समेष्यामि, राज्ञा द्रविणं दत्वा सोऽपि विसर्जितस्तथैवात्रागात्, तमपि तथैव भोजनादिकिंचिद्ददती नरकोपमे कूपेऽस्थापयत्. एवं तृतीयो ललितांगो मंत्रिमुख्यस्तथैवागतः, तथैव च नरकोपमे कूपके निपातितः, तस्यापि तथैवान्नादिकं सा ददौ. एवं प्रथमः कामांकुरो राजाज्ञया समागतः, सोऽपि नरकोपमे कूपे निपातितः. एवं ते चत्वारोऽपि नरकोपमकूपके निपातिता दुःखभाजनं बभूवुः. अहो विषयवैषम्यं! येऽन्यस्त्रियामासक्ता भविष्यंति त एवंविधां पीडां प्राप्स्यंति. ये तु स्वदारसंतोषिणो भविष्यंति, ते इहामुत्रजन्मनि स्वर्गतुल्यमनुजसुखानि भुक्त्वा स्वर्गं यास्यंति.

अथ सिंहरथशत्रुं विनिर्जित्य पौरैः कृतमंगलो नृपतिः पुरं प्रविवेश, ते मंत्रिणो नरकोपमे गर्तविवरे वर्तिनो दुःखपीडिताः शीलवतीं प्रोचुः, हे शीलवति! अस्मान् क्षुधापीडितान्नाथानज्ञानानशरणान् भवत्याः शरणसमागतांस्त्रायस्व? दृष्टमस्माभिस्तव शीलमाहात्म्यं. अथ तवादेशकारिणोऽस्मान् कूपतो निष्कासय सद्गुरुरुपदेशदानाज्जंतून्नरकादिव, तयोचे भो भो मंत्रिमुख्या यूयं मआदिष्टं वचनं करिष्यथ तदा मोक्ष्यामि, नान्यथा. तैरूचे यत्कर्तव्यं भविष्यति तत्सर्वं करिष्यामः, शीलवत्योक्तं यदाहं मार्गयामि तदा भवद्भिर्वक्तव्यं सर्वं संपद्यतामिति, तैरुक्तमेवं कथयिष्यामः. अथ शीलवत्येनं वृत्तांतं सर्वं स्वपत्ये शशंस, सोऽप्याश्चर्यपूरितः शीलवत्याज्ञयैकस्मिन् दिने राजानं सपरिकरं भोजनाय न्यमंत्रयत्, प्रछन्ना च सर्वा सामग्री कृता, भोजनार्थमागतो राजा दध्यावहो मंत्रिणा वयं सपरिकरा निमंत्रिताः, परं गृहांतस्तादृशी सामग्री नास्ति, अत एतान् सर्वान् किं भोजयिष्यति? एवं यावता स राजा चिंतयति, तावता शीलवती गर्तद्वारमागत्य कुसुमादिभिरभ्यर्च्य प्रोच्चकरेदमब्रवीत्, भो यक्षाः! मोदकपक्वान्नादिसामग्री विलोक्यते, तैरुक्तं सर्वा संपद्यतां. ततः सर्वा सामग्री तया प्रकटीकृता, राजापि विस्मयमापन्नो भोजनं चक्रे, अनया रीत्या तांबूलवस्त्रालंका-

रात्रपि चतुर्लक्षीव्ययात्प्रकटीकृत्य तया राजा सत्कृतः, अहो शीलवत्या अपूर्वेयं काचित्सिद्धिरिति ध्यात्वा स शीलवतीं पप्रछ, हे भद्रे! किमिदमाश्चर्य? तयोक्तं देव मद्गृहे चत्वारो यक्षाः कामितप्रदाः संति, तेभ्यश्चाखिलं संपद्यते. ततो राजा शीलवतीं वस्त्राभूषणैः सत्कृत्य भगिनीं च कृत्वा बहुमानपुरस्सरं यक्षान् ययाचे, शीलवत्योक्तं हे स्वामिन्नस्मज्जीवितमपि त्वदीयं वर्तते. तर्हि यक्षाणां का कथा? प्रभोः पुरो यक्षाः ढौकयिष्यंते, इत्युक्त्वा तांश्चतुरोऽपि कूपान्निष्कास्य स्नपयित्वा हरिचंदनैर्लिंपयित्वा कुसुमाभरणभूषितान् विधाय वंशकरंडकेषु च निक्षिप्य तांश्चतुरोऽपि करंडकान् राज्ञः समीपमानीय धूपोत्क्षेपपुरस्सरं रथेष्वारोपयामास, शीलवतीप्राणप्रियोऽजितसेनो नाम मंत्रीश्वरस्तान् लात्वा दिगंतव्यापितूर्यनिर्घोषैः पूरितदिगंतो मार्गे प्रेक्षणीयकं कारयन् राजगृहाभिमुखं चचाल, राजापि सन्मुखमागत्य बहुमानपुरस्सरं पुष्पादिभिस्तान् संपूज्य चत्वारोऽपि करंडकान् गीतगानपुरस्सरं स्वगृहाभ्यंतरेऽनयत, तस्मिन्नेव दिने राजा बहुलोकान् भोजनार्थमामंत्र्य यक्षा भोजनं दास्यंतीति धिया रसवतीकारकान् सूपकारान् निवारयतिस्म, यथा भो भो सूपकारा युष्माभिरद्य काचिदपि रसवती न कार्या, यतोऽद्य समागता यक्षाः सर्वमपि रसवत्यादिकं पूरयिष्यंति, सूपकारैरुक्तम-

स्माकं ज्ञवदाज्ञा प्रमाणमित्युक्त्वा तेऽप्याश्चर्यं पश्यंतस्तिष्टंति, राज्ञा यक्षकरंमकान् समभ्यर्च्य जोजनं ययाचे, यक्षैरुक्तं सर्वं संपद्यतां? लोकाश्चोर्ध्वं पश्यंति, परं पुरो न किंचित्प्रादुर्जवति, नृपेन चिंतितं किमेतत्? ततो राजा विलक्षो जातो यावत् करंमकान् समुद्घाट्य विलोकयति, तावद् ग्लानेंद्रियान् विदीर्णास्यान् शुष्कान् निर्मांसान् जीवितशेषांश्चतुरो जनान् ददर्श, प्रेतानिव करालांस्तान्निरीक्ष्य नृपोऽवदन्नामी यक्षाः, किंतु राक्षसा इत्युक्त्वापासरत, तैरूचे देव! वयं न यक्षा न च राक्षसाः. किंतु वयं कामांकुरादयश्चत्वारोऽपि महामात्यास्तव नर्मकारिणो ज्ञवत्प्रेषिता अत्रागताः शीलवत्या महासत्यैनां दशां प्रापिताः. नृपेन सम्यग्निरीक्ष्य समुपलक्ष्य च प्रोक्तं जो मंत्रिमुख्या युष्माभिः केयमवस्था प्राप्ता? ततस्तैर्यथावृत्तः स्ववृत्तांतो निवेदितः. ततो राजा शिरो धूनयन् शीलवतीशीलमश्लाघयत्.

ततो राजा शीलवतीं समाकार्योवाच, अहो ते बुद्धिवैज्ञवमहो ते मतिकौशलमहो ते निर्मलं शीलमीदृशेन शीलपालनेन त्वं त्रिज्ञुवने श्लाघ्या वर्तसे, तव ज्ञर्तुः कंठेऽम्लानपुष्पमालया शीलं ज्ञातं, परमस्माभिर्मंदबुद्धिभिर्न स्वीकृतं, ततो मया तव शीलविध्वंसकृते एते चत्वारोऽपि प्रेषि·

ताः, परं तव शीलवातेनार्कतूलवदुत्पाट्यास्मिन्नरकोपमे कूपे ते क्षिप्ताः, दैवेनेदृशीं दशां च नीताः, अहो ते शीलमाहात्म्यं! किंच हे शीलवति! त्वया ममैषोऽपराधः क्षंतव्यः, सापि तं राजानं बंधुप्रीत्या जिनधर्मोपदेशदानेन वारंवारं जिनधर्मे स्थापयामास. राजापि तां सतीं सत्कृत्य स्वगृहे प्रेषयामास. तद्दिनादारभ्य विशेषतोऽजितसेनोऽपि राजकार्यधुरंधरः शीलवत्या समं धर्मसारं कालमवाहयत्. तत्रान्यदा चतुर्ज्ञानधरो दमघोषाभिधानः साधुः समागतः, सवल्लभोऽजितसेनश्च तं नंतुं ययौ, मुनिना देशना दत्ता, देशनानंतरं गुरुः शीलवतीगुणैराकृष्ट एवं भाषितवान् हे भद्र पूर्वभवाभ्यासात्ते निर्मलं शीलं शोभते, तदानीमजितसेनो दमघोषमुनिं पृच्छति, हे भगवन्! मम पत्न्या शीलवत्या कथं पूर्वभवे शीलं पालितं? गुरुराह श्रूयतां? पूर्वभवे कुशपुरे स्थाने सुलसाभिधः श्राद्धोऽभूत्, तद्भार्या सुयशानाम्नी, तयोर्गेहे प्रकृत्या भद्रको दुर्गतनामा कर्मकरोऽस्ति, तस्य भार्या दुर्गिलानाम्नी, श्रेष्ठिगृहे तौ कार्यं कुर्वाणौ दिनानि गमयामासतुः. एकस्मिन् दिने सुयशासार्धं दुर्गिला व्रतिनीवसतिं ययौ, तत्र दुर्गिला स्वामिनीं सुयशां पुस्तकार्चनसादरां संवीक्ष्य प्रवर्तिनीं पप्रछ हे आर्ये! किमद्य पर्वमस्ति? यत्पुस्तकार्चनं क्रियते, प्रवर्तिन्युवाचाद्य श्वेतपंचमी तिथिर्विख्याता

ज्ञानपंचमीति कृत्वा ज्ञानपूजा क्रियते, दुर्गिला पुनः पप्रच्छ हे स्वामिन्यनेन तपसा किं भवति?
भगवत्योक्तं ज्ञानाराधना भवति, ज्ञाने चाराधिते भवांतरे निर्मला बुद्धिर्जायते, ततः शीलयुक्तः
केवलं लब्ध्वा जीवः सिद्धिभाग्भवति, यतः—य इह श्वेतपंचम्या—मुपवासपरायणः पुस्तकाभ्यर्च-
नापूर्वं । कुर्याद् ज्ञानप्रभावनां ॥ १ ॥ स प्रेत्य सुखसौभाग्य—भाग्यबुध्यादिवैभवं ॥ प्राप्य क्रमे-
ण निर्वाणं । लभते शुद्धशीलयुक् ॥ २ ॥ तत श्रुत्वा दुर्गिला प्राह धन्यैषा मम स्वामिनी या स्व-
हितं साधयति, अहं तु स्वहितसाधनेऽसमर्था चाधन्या. प्रवर्तिन्याह हे भद्रे! त्वं खेदं मा कुरु?
यदि तव दानतपसोः शक्तिर्नास्ति तथापि परपुरुषत्यागव्रतमंगीकुरु? तथाष्टमीचतुर्दश्योः स्वभर्तुः
सेवनमपि परिवर्जय? साप्येवमभिग्रहं गृहीत्वा हृष्टा सती स्वपत्युरग्रे तदभिग्रहं सर्वमभाषत. सोऽपि
कर्मलाघवतो भावतश्च प्रियागृहीतमभिग्रहं गृहीतवान्. तावुभौ भावशुद्धितः क्रमेण शुद्धं सम्यक्त्वं
प्रापतुः. दुर्गिला भावशुध्या क्रमेण ज्ञानपंचम्यास्तपो विदधे. ततस्तौ पूर्णायुषौ कालधर्मं गतौ, सौ-
धर्मदेवलोके च द्वावपि तौ देवौ बभूवतुः. ततश्च्युत्वा दुर्गतजीवो भवानजितसेनो मंत्रीश्वरोऽभूत,
दुर्गिलाजीवश्चैषा शीलवती जाता. ज्ञानाराधनपुण्येन च सा विशिष्टमतिवैभवा जाता. एतद्गुरुणो-

दितं श्रुत्वा जातिस्मृत्या च सर्वं ज्ञात्वा स्वयमेव विबुध्य तौ परमवैराग्यमापन्नौ, गुर्वंतिके च द्रुतं व्रतं जगृहतुः. ततस्तौ चिराय चारित्रं प्रपाल्य पंचमदेवलोकं प्रापतुः. ततश्च्युतौ मनुजभवं लब्ध्वा संयमं लात्वा कर्मक्षयं कृत्वांते केवलज्ञानेन भव्यान् प्रतिबोध्यायुःपर्यंते तावजितसेनशीलवतीजीवौ मोक्षमीयतुः, शीलमाहात्म्यतश्चानंतसुखभाजावभूतां. एवं चारुचरित्रेण । स्तुता शीलवती सती ॥ यस्याः शीलस्य माहात्म्यं । श्रुत्वा न प्राप को मुदं ॥ १ ॥ इति श्रीशीलविषये शीलवतीकथानकं समाप्तं. अथ सुलसाया निर्मलं शीलं वर्णयन्नाह—

॥ मूलम् ॥—सिरिवद्धमाणपहुणा। सुधम्मलाहुत्ति जीइ पठविउ॥ सा जयउ जए सुलसा । सारयससिविमलसीलगुणा ॥ ११ ॥ व्याख्या—श्रीवर्धमानस्वामिना 'सुधम्मलाहुत्ति' शोभनो धर्मलाभः सुधर्मलाभो यस्याः 'पठविउत्ति' प्रस्थापितः, अम्मडमुखेन प्रेषितः, सा सुलसा जगति विश्वे जयतु. कथंभूता 'सारयत्ति' शारदशशिविमलशीलगुणा शरत्कालीयचंद्रतुल्यो निर्मलः शीलव्रतगुणो यस्याः सा तथेति गाथार्थः. ॥ ११ ॥ विशेषार्थस्तु कथानकादवसेयः, तत्कथा चेयं—

एकस्मिन् दिनेऽम्मडपरिव्राजकः श्रीवीरस्वामिनो देशनां श्रुत्वा प्रभुं च नत्वा यावद्राजगृहंप्रति

चलितस्तावत् श्रीवीरेण स्वामिनेत्यूचे—जो नागरथिकपत्न्याः । सुलसायास्त्वमादरात् ॥ प्रवृत्तिमस्मदादेशा—त्पृछे पेशलया गिरा ॥ १ ॥ तथास्मद्धर्मलाभाशिषं च ब्रूयाः, इति स्वामिवाक्यं श्रुत्वा 'इच्छामीति' भणित्वाम्मडो गगनगामिन्या विद्यया तत्क्षणादेव राजगृहं नगरं ययौ, सुलसागृहद्वारे गत्वाम्मडेन चिंतितं सुरासुरेंद्रपर्षदि सर्वेषां शृण्वतां त्रिजगत्पतिना श्रीवीरेणास्यै धर्मलाभः कथितस्तत्किं? अथ तस्याः परीक्षां करोमि, सा कीदृशी वर्तते? ततो वैक्रियलब्धितोऽम्मडेन रूपांतरं कृत्वा सुलसागृहे गत्वा भिक्षा याचिता हे सुलसे! साधवे मे भिक्षां देहि? तया तस्य साधुलक्षणमदृष्ट्वा साधुबुद्ध्या दानं न दत्तं, पुनस्तेन चिंतितं पश्याम्यस्याः सम्यक्त्वं कीदृग्वर्तते? ततोऽसौ नगरान्निःसृत्य प्राग्गोपुरद्वारे गत्वा ब्रह्मणो रूपं विकुर्व्य समाहितमानसोऽवतस्थे, यथा—

पद्मासनसमासीन—श्चतुर्बाहुश्चतुर्मुखः ॥ ब्रह्मसूत्र्यक्षसूत्री च । जटामुकुटमंडितः ॥ १ ॥ सावित्रीसंयुतो हंस—यानो धर्मं दिदेश सः ॥ पौराणां च मनोऽहार्षीत् । साक्षाद्ब्रह्मेतिमानिनां ॥२॥ तं ब्रह्माणं नमस्कर्तुं सर्वेऽपि पौराः समाजग्मुः. सुलसा तु सखीजनैः समाहूतापि सम्यक्त्वधारिणी मिथ्यादृष्टिसंस्तवकातरा तन्नमस्कारपराङ्मुखा न ययौ. ततोऽम्मडो द्वितीयेऽह्नि दक्षिणस्यां दिशि

गोविंदरूपं विदधे. गरुत्मासनः शंखचक्रगदाशार्ङ्गपाणिस्तत्र स तस्थौ. तं नारायणं नमस्कर्तुं सर्वे लोकाः समाजग्मुः. सख्या समाहूतापि सुलसा सम्यग्दर्शनपूतात्मा विष्णोर्वंदनाय न ययौ. अम्मडस्तृतीयेऽह्नि पश्चिमाशायां वृषभवाहनश्चंद्रचूडो गंगागौर्याश्रितः कृत्तिवासास्त्रिलोचनो भस्मांचितविग्रहः खट्वांगी शूलपाणिः पिनाकभृत्कपाली रुंडमाली नानागणपरिवृत ईश्वरो भूत्वा पौराणां मनो हरन् धर्ममाख्यत्. पुनस्तथैव सख्या समाहूतापि सा सम्यक्त्वभंगकातरा तं देवं मनाग्द्रष्टुमपि न ययौ. चतुर्थेऽह्नि उत्तरस्यां दिशि वप्रत्रयशोभितं तोरणैर्विराजितं चतुःसिंहासनालंकृतमशोकपरिमंडितं दिव्यं समवसरणं स विचक्रे.

तत्र समवसरणे सोऽम्मडश्च जिनीभूय स्थितः, समागताः पौरलोकाः, दिव्यानुभावतोऽम्मडोऽमृतस्राविणीं देशनां विदधे, तां देशनां भावतः सर्वे लोकाः शुश्रुवुः, तथैव सुलसा सखीभिः समाहूतापि तत्र न गता, ततोऽम्मडेन चिंतितं सर्वे लोकाः समागताः, परं सुलसा नागतेति विचिंत्य सुलसासमाकारणाय कंचिन्नरं प्रैषीत. स नरो गत्वावोचत्, हे सुलसे! अद्य त्वं किं न समागच्छसि? विश्वस्वामी जिनेंद्रः समवसृतः, अतः स्वामिनं वंदस्व? तस्य पापनाशिनीं देशनां च शृणु?

किं विलंबसे? धर्मे विलंबो न कार्यः, तदानीं तं पुरुषं सुलसा बभाषे, भो महात्मन्! नैष विश्व· स्वामी भगवान् श्रीवीरस्त्रिजगद्गुरुश्चतुर्विंशो जिनेश्वरः, सोऽपि सुलसांप्रत्युवाच हे भद्रे! एष पंच· विंशस्तीर्थंकरः, त्वं तत्र त्वरितं गत्वा तं विनयेन वंदस्व? एष भगवान् भक्त्या वंदितस्तव मोक्षदा· यको भविष्यति, सुलसा जगाद भो महात्मन्! पंचविंशो जिनः कदापि न भवति, न च भविष्य· ति, एतद्विषये त्रैकालिकोऽभावः, त्वं तु मूढोऽसि, यदेवं वारंवारं भाषसे. अयं कोऽपि विद्याधरः कार्पटिको लोकवंचनतत्परो नानारूपान् कृत्वा लोकान् वंचयते, पुनः स ऊचे हे भद्रे! त्वं शास· नस्य भेदं मा कृथाः? शासनप्रभावनां च कुरु? यतस्त्वं शासनप्रभावका पुण्यकारिका च वर्तसे, तेन जिनं नंतुं समागच्छ? धर्महानिं च मा कुरु? तत् श्रुत्वा सुलसाप्येवमवदत्, एवं शासनस्य प्र· भावना न भवति, किंतु केवलमपभ्राजनैव स्यात्, अपभ्राजनया च धर्महानिः स्यात्. एवं तेन प· रिव्राजकेण सुलसा धर्मध्यानान्मनागपि न चालिता. ततः संजातप्रत्ययोऽम्मडो हृदये चिंतयामास स्वामिना देवमनुजपर्षदि सुलसाया यद्धर्मलाभः ख्यापितस्तद्युक्तं, सम्यक्त्वे निश्चला सा केनापि चालयितुमशक्या, तस्याश्च स्वामी धर्मलाभाशिषं कथं न दद्यात्. ततः सोऽम्मडो निःशेषं स्वं प्रपं·

चं संहृत्य स्वेनैव रूपेण सुलसागृहे नैषेधिकीं कृत्वा प्राविशत्, सापि तं दृष्ट्वा हर्षेण बहुमेने, य॰
था—अभ्युत्तस्थौ सुलसा । तमूचे स्वागतं तव ॥ धर्मबंधो जगद्बंधो—र्वीरस्य श्रावकोत्तम ॥ १ ॥
पादौ प्रक्षालयामास । तस्य मातेव वत्सला ॥ निजानि गृहचैत्यानि । वंदयामास चोच्चकैः ॥ २ ॥
ततः सोऽम्मडः श्रावकः सुलसाया गृहचैत्यानि वंदित्वा यावत्तस्थौ, तावत्तया भोजनादिसामग्री स॰
ज्जिता, ततः सुलसा भूतलन्यस्तमस्तका शाश्वताशाश्वतानि चैत्यानि प्रत्यक्षाणीव पश्यंती भक्तिभा॰
वितात्मा ववंदे. अथाम्मडो भूयः सुलसामूचे, भो सुलसेऽस्मिन् संसारे त्वमेवैका पुण्यवत्यसि, य॰
तस्तव सभायां स्थितः स्वामी श्रीवीरो धर्मलाभाशिषं ददाति मन्मुखेन, अतस्त्वं धन्यासि, सापि त॰
द्वचः समाकर्ण्य मुदितमानसा रोमांचितशरीरा तत्रस्था स्वामिनं ववंदे, पुनरपि तां परीक्षितुमम्म॰
डोऽवोचत् हे पुण्यवति! हे धर्मशीले! साक्षाद्ब्रह्मादयोऽत्र स्वयमवतेरुः, धर्मं च व्याचचक्षिरे, तद्ध॰
र्मश्रवणार्थं सर्वेऽपि लोकाः समाजग्मुः, तत्र त्वं कुतूहलेनापि न गता, तत्किं? तन्निशम्य साम्मडं॰
प्रति बभाषे, हे महात्मंस्त्वं जानन्नपि किमज्ञवज्जल्पसि? के ब्रह्माद्यास्तपस्विनो ये हिंसनशीलाः
शस्त्रभाजः स्त्रीसेवनतत्परास्ते किं धर्मं समाख्यास्यंति, ये स्वयमधर्मनिरतास्ते धर्मपरायणाः कथं भ॰

वंतीति ज्ञात्वा तदवलोकनार्थमप्यहं न निर्गता, श्रीमंतं महावीरं त्रिजगन्नाथं त्रिजगत्पूज्यं देवासुरनरवंद्यं मम धर्माचार्यं प्राप्य तदंतिके च धर्ममुररीकृत्यान्यं दृष्टुमपि नोत्सहे. ततोऽम्मडः साधु साध्विति वारंवारं प्रशंसन् प्रमोदभाग् स्वस्थाने गतः, मुलसा विमलशीलगुणैः शोभमाना जिनधर्ममाराध्यांते मृत्वा स्वर्जगाम. इत्यम्मडेन सुलसा—नलसा पुण्यकर्मणि ॥ चालिता दिव्यरूपेण । न चचाल मनागपि ॥ १ ॥ इति सुलसाकथानकं संक्षेपतः प्रोक्तं, विशेषतस्तु सुलसाचरित्रादवगंव्यं. अथ श्रीस्थूलभद्रशीलं वर्णयन्नाह—

॥ मूलम् ॥—हरिहरबंभपुरंदर—मयभंजणपंचबाणबलदप्पो ॥ लीलाए जेण दलिओ । स थूलभद्दो दिसउ भद्दं ॥ १२ ॥ व्याख्या—हरिर्विष्णुः, हर ईश्वरः, ब्रह्मा जगत्सृष्टिकर्ता, असुराणां पुराणि दारयतीति पुरंदर इंद्रः, एतेषां मदभंजको यः पंचबाणः कामस्तस्य बलदर्पो बलाभिमानो लीलया येन दलितः स स्थूलभद्रो भद्रं कल्याणं दिशत्विति क्रियासंबंधः, इति गाथार्थः. विस्तरार्थस्तु कथानकादवसेयः, तत्कथा चेयं—

अस्मिन् भरतक्षेत्रे पाटलीपुरपत्तनमस्ति, यच्चैत्यकलशतेजोभिर्निशायामपि भानुविभ्रमो जया·

ते, तस्मिन् पत्तने प्रजायाः कृतानंदो नंदो नाम महीपतिरस्ति, यत्कीर्तिनर्तकी नवनववंशेषु नृत्यति, तस्य राज्ञः सकलमंत्रिमुख्य औत्पतिकी १ वैनयिकी २ कार्मिकी ३ पारिणामिकी ४ बुद्धिनायको वाक्पतिवद्विचक्षणो नागरज्ञातीयो विप्रः शकडालनामा मंत्रीश्वरोऽस्ति, तस्य मंत्रिणो लक्ष्मीवतीनाम्नी पत्न्यस्ति, सा च लक्ष्मीरिव सर्वगुणसंपूर्णास्ति, तत्कुक्षिशुक्तिमुक्ताभौ द्वौ पुत्रौ वर्तेते, तयोराद्यः स्थूलभद्रो द्वितीयः श्रीयकाभिधश्च, तौ द्वावपि भ्रातरौ नंदचित्ताभिनंदनौ राजमान्यौ महर्द्धिकौ वर्तेते, तन्नगरनिवासिनीकोशावेश्यागृहे स्थूलभद्रो द्वादशवर्षाणि तस्थिवान्, श्रीयकस्तु विश्वासभाजनं राज्ञोंगरक्षको बभूव. इतश्च तत्र वररुचिनामा विप्रोऽस्ति, स वाग्मी निपुणो महाकविरष्टोत्तरशतनवीनकाव्यैर्नंदराजानं प्रत्यहं स्तौति. वैधर्मिकत्वाच्छकडालमंत्रीश्वरस्तत्कृतकाव्यानि कदाचिदपि न श्लाघते. ततो नृपोऽपि तस्मै किंचिदपि न ददाति, यतो नृपाः परमुखा वर्तंते. ततस्तेन वररुचिनाम्ना पंडितेनोपायश्चिंतितः, वशावशवर्तिनः पुरुषाः, अतोऽहमपि लक्ष्मीवतीं प्रसन्नां विधाय स्वं कार्यं साधयामीति ध्यात्वा स लक्ष्मीवत्याः सेवां करोति. तदा सा प्रसन्ना कथयति भो वररुचे! तव किं विलोक्यते? तेनोक्तं मम काव्यानि सभायां मंत्रिवरः शकडालो वर्णयतु, यथा

राजा मम किंचिद्ददाति. अथ नार्योक्त्या शकमालोऽपि तद्वर्णनममन्यत. अहो महदाश्चर्य! स्त्रीभिः को न भ्राम्यते घरट्टयंत्रादिवत्? अन्यस्मिन् दिने राज्ञोऽग्रे वररुचिना काव्यानि पठितानि. तदा मंत्रिणा राज्ञोऽग्रे कथितमहो वररुचिः पंडितस्तारमधुरस्वरेणोत्कृष्टानि काव्यानि पठति. तत श्रुत्वा राजा तस्मै अष्टोत्तरशतदीनारान् ददौ. एवं प्रत्यहं क्रियमाणे मंत्रीश्वरस्तद्दानाद्राजानं न्यवारयत. तदा राज्ञोक्तमहं तु त्वत्प्रशंसातो दानं ददामि. मंत्र्यूचे पूर्वकृतराजवर्णनकाव्येषु कास्य प्रशंसा? राज्ञोक्तं तर्ह्ययमत्यंतदुरात्मा यो निर्माल्येन परकाव्येन मां स्तवीति. अहो नृपमानसघटाः सुखेनैव भज्यंत आमघटा इव. मंत्र्यूचे स्वामिन्नेतत्कथिता काव्यावली मत्पुत्रीणां सप्तानामपि समायाति, प्रातस्ते श्रावयिष्यामीत्युक्त्वा मंत्रीश्वरो गृहं गतः, तस्य मंत्रिणः सप्त पुत्रिकाः संति, तासां पुत्रीणाममूनि नामानि, यथा—

जक्खा य १ जक्खदिन्ना २। भूया ३ तह चेव भूयदिन्ना ४ य ॥ सेणा ५ वेणा ६ रेणा ७। भयणीओ थूलिभद्दस्स ॥ १ ॥ एताः सर्वा एकद्व्यादिवेलया श्रुतं काव्यादिकं पठितुं समर्थाः. अथ मंत्रिणा विप्रपाठावसरे ताः सर्वा निजपुत्र्यो यवनिकांतरे स्थापिताः. विप्रेण पठितानि काव्यान्ये-

कवारं श्रुत्वा यक्षया तथैव पठितानि. एवं द्वितीययापि तानि पंडितोक्तानि भगिन्युक्तानि च श्रुत्वा तथैव पठितानि. एवं ताः सर्वाः सरस्वत्युपमास्तानि काव्यानि पठंतिस्म. तत् श्रुत्वा रुष्टो राजा वररुचेर्दानं न्यवारयत्, तथा राजद्वारप्रवेशमपि न्यवारयत्. अथ स वररुचिर्विप्रो ऽन्यग्रंथिं कृत्वा गंगां च गत्वा तं ग्रंथिं सायं चटुकयंत्रे मुक्त्वा पुनः प्रातर्गत्वा स्तुतिपूर्वकं चटुकचालनेन तं ग्रंथिं जग्राह. एवंविधानेन तेन विप्रेण सर्वोऽपि लोको विस्मापितः. लोके च वार्ता चलिता, यथा वररुचेः पंडितस्य स्तुत्या तुष्टा गंगादेवी दीनाराणामष्टोत्तरशतं ददाति. मंत्रीश्वरोऽपि चारप्रयोगनस्तत्सर्वं कूटमज्ञासीद्. राज्ञोऽग्रेऽपि तेनोक्तं राजन्नेतत्सर्वं मिथ्या, राज्ञोक्तं कथं? मंत्रिणोक्तं प्रातर्दर्शयिष्यामि. अथ वररुचिना सायं मुक्तं स्वर्णग्रंथिं चरेभ्यः समानाय्य स्वयमरक्षत्. ततः प्रभाते मंत्रिमुख्यः कौतुकं द्रष्टुकामं नृपतिं तत्र निनाय. अथ तत्रागतो वररुचिस्तथैव गंगां स्तुत्वा चटुयंत्रे चालयामास, परं किमपि धनं नोत्पपात, तावत्स राजमंत्र्यादिभिर्हसितः, ततः सर्वेषां पश्यतां वररुचिविप्रो वैलक्ष्यभाजनं जातः पातालं प्रवेष्टुमिव ह्रिया नम्रशिरो बभूव, तावता मंत्रीश्वरो बभाषे, भो विप्र! वयं नान्यस्य धनं गृह्णीमः, त्वं निजं धनं गृहाणेत्युक्त्वा तं ग्रंथिं तस्मै विप्राय राज्ञः

समक्षं स दत्तवान्, ततो मंत्रिणा राज्ञः पुरस्तस्य सर्वं स्वरूपं निवेदितं. ततो राजा मंत्रिणं जगौ साधु साधु तव बुद्धिवैभव इत्युक्त्वा राजा मंत्रिणा समं स्वस्थानं जगाम. अथ तद्दिनादारभ्य वररुचिविप्रः सर्प इव तस्य छिद्रान्वेषी बभूव, तस्य गृहचेट्यै तद्गृहस्वरूपं पृछतिस्म, तस्मिन् समये शकडालमंत्रीश्वरः श्रीयकविवाहे प्रस्तुते नृपोपायनहेतवे सर्वा वस्त्रशस्त्रछत्रचामरादिसामग्रीमसज्जयत्, मंत्रिदासीतः सर्वं स्वरूपं ज्ञात्वा वररुचिश्चिंतयति, मम वैरनिर्यातनावसरोऽयं समागतः, अथ मम चिंतितं सर्वं संपत्स्यत इति विचार्य सुखाशिकादिभिर्बालकानावर्ज्य बालकैरित्यघोषयत्, यथा—न वेत्ति मूढो लोको य—च्छकडालः करिष्यति ॥ हत्वा नंदनृपं राज्ये । श्रीयकं स्थापयिष्यति ॥ १ ॥ एवं ते बालकाः कूर्दमानाः पदे पदे निःशंकं जुघुषुः, राजमंदिराधोगच्छद्भिर्बालकैरिति पठ्यमानं श्रुत्वा राजा चिंतयति, यथा—यदाहुर्बालकाः स्वैरं । यद्भाषंते च योषितः ॥ आकस्मिकं च यद्वाक्यं । तत्प्रायो न मृषा भवेत् ॥ १ ॥ इति विमृश्य नृपस्तद्गृहे चरान् प्रैषीत्, ते चरा मंत्रिगृहे राज्यसामग्रीं दृष्ट्वा प्रत्यावृत्य राज्ञोऽग्रे तत्सर्वं न्यवेदयन्, कुपितो राजा मंत्रिणं नमस्कारार्थमागतं ज्ञात्वा पराङ्मुखोऽभूत्. ततो मंत्रीश्वरो गृहमागत्य श्रीयकमभ्यधात्, हे वत्स! केनापि दुष्टेन ममोपरि म-

हीशः कोपवान् कृतः, तदस्माकं कुतोऽयमाकस्मिकोत्पातः समुत्थितः. अथ त्वया स्वगृहरक्षार्थमहं तालपुटविषं भक्षयित्वा यावता राज्ञः प्रणामं करोमि, तावत्त्वया मम शिरश्छेद्यं, अत्रार्थे विकल्पो न विधेयः, सोऽवोचत् हे तात! नेदृशं कर्म म्लेच्छोऽपि करोति, तर्हि कथमहं कुर्वे? इत्युक्त्वा रुदंतं पुत्रं निवार्य पुनर्जगौ, हे पुत्र! जरसा लीढं कृतविषभक्षणं तातं मारयतस्तव को दोषः? एवं कृते राजमुद्रादि सर्वं स्थास्यति, एतदकरणे च कुलस्य महानुत्पातो भावी, तस्मात्काकिन्याः कृते को मूर्खः कोटिं विनाशयति? विषभक्षणेन मृतस्य मम शिरश्छित्वा वदेः, स्वामिन्! दुष्टस्तातोऽपि नेष्यते, एवं कथंचित्तं पुत्रं बोधयित्वा गृहदेवान् पूजयित्वा मंत्रिमुख्यः शकडालस्तत्रागतः, तथैव च राजा पराङ्मुखो जातः, मंत्रिणा तालपुटे मुखे दत्ते श्रीयकस्तथैव चकार, सभ्यलोकैरुक्तं भो भो श्रीयक! त्वया किमिदमकार्यं कृतं? श्रीयकेनोक्तं स्वामिद्रोहकारकपित्रापि किं क्रियते? इत्याद्युक्त्वा तान् सभ्यलोकान् स प्रत्यबोधयत्, तदा राज्ञा प्रोक्तं भो श्रीयक! तातस्तु पूज्यः, अतस्त्वयैतत्सुंदरं न कृतं, विरूपं चाचरितं, श्रीयकः प्राह स्वामिन्! तेन स्वर्णेनापि किं स्याद्यत्कर्णत्रोटाय भवेत्? तद्वचनं श्रुत्वा तुष्टो राजा तं समस्तमुद्राव्यापारं समादिशत्, तदा नृपंप्रति श्रीयकः प्राह हे

देव! स्थूलभद्राभिधो मम ज्येष्ठो बंधुः सौभाग्यैकनिधी रूपेण मन्मथोपमो दाने कल्पतरुतुल्योऽस्ति, तमाकार्येमां मुद्रिकां देहि? स्थूलभद्रो मुद्रायोग्योऽस्ति. नाहं, यतोऽसौ वृद्धबांधवोऽहं तु लघीयान्, राज्ञोक्तं स तव बांधवः कुत्रास्ति? यतः समाकार्यते, तेनोक्तं स तु सांप्रतं कोशागृहे वर्तते, तस्य च तत्र संस्थितो द्वादश वर्षाणि संजातानि, राज्ञा वेश्यागृहात्स्थूलभद्रः समाकारितो भाषितश्च भो स्थूलभद्र! तव जनककरस्थामिमां मुद्रिकां गृहाण? तव जनकवत्त्वमपि सर्वमुद्राव्यापारी भव? तेनोक्तं राजन्नालोच्याहं मुद्रिकां गृहीष्यामि, राज्ञोक्तं वाटिकांतर्गत्वा विचारय? तेनापि तत्रैव गत्वा विचारितमहो धिग्संसारस्वरूपं, यत्र मे जनकस्येदृशी गतिर्जाता, ममाप्येवं भविष्यति, यस्मिन् राज्यकार्ये लग्नः पुमान् कृत्याकृत्यं न वेत्ति, स्वजनपरिजनादिकं चापि न वेत्ति, मम भ्रात्रा मम जनको हतः, धिक्संसारस्वरूपं! यतः—

ही संसारसहावं । चरियं नेहाणुरायरत्तावि ॥ जे पुव्वह्ने दिठ्ठा । ते अवरह्ने न दीसंति ॥ १ ॥
संसारम्मि असारे । नत्थि सुहं वाहिवेयणापउरे ॥ जाणंतो इह जीवो । न कुणइ जिणदेसियं धम्मं ॥ २ ॥ धन्यास्ते महात्मानो य एवंविधं संसारस्वरूपं ज्ञात्वा संसारविरक्ता व्रतसाम्राज्ये सु·

स्थिताः सुरासुरमनुजवृंदवंदिता ये स्वं परांश्च तारयंति, अतोऽहमपि जैनीं दीक्षां सर्वार्थसाधिनीं वां- छितार्थदायिनीं च सेवे, इति चिंतयित्वा तत्कालं स्थूलभद्रश्चिकुरलुंचनं कुर्वे, रक्तकंबलकृतरजोहरण- मंडितः स सभामध्ये समभ्येत्य राज्ञः पुरतो धर्मलाभाशिषं ददौ, राज्ञोक्तं भो स्थूलभद्र! त्वया किमालोचितं, तेन स्वं शिरो दर्शितं. ततो राज्ञोक्तं भो महात्मंस्त्वया साध्वालोचितं, साधु समा- चरितं चेत्यादि वर्णयित्वा राजा तत्पादयोर्निपतितः; स्थूलभद्रोऽपि धर्मलाभं दत्वा राजमंदिरान्निर्ग- तः, श्रीसंभूतिविजयाचार्यसमीपे च गत्वा सर्वसावद्यव्रतमगृहीत्, ज्ञानाराधनतत्परश्च स गुरुणा समं विजहार. ततो राजा श्रीयकं समस्तराज्यमुद्राव्यापारे स्थापयामास, श्रीयको भ्रातृजायाप्रीत्या प्रत्य- हं कोशागृहे याति, साप्यासनदानादिना तं सन्मानपूर्वं संभाषयति. श्रीयको वार्तावसरे कोशावे- श्यांप्रति वक्ति. यन्मम भ्राता प्रवासं कारितस्तत्सर्वं वररुचिचेष्टितं, नान्यस्य, मज्जनकोऽपि यन्निधनं नीतस्तदपि वररुचेर्विलसितं, एतद्वैरं च यौष्माकसाहाय्यादेव साध्यते, तयोक्तं तत्कथं? श्रीयकेणो- क्तं वररुचिपंडितस्त्वद्भगिन्योपकोशया समं रमते, यद्यसौ द्विजो मद्यं पाय्यते. तदा तव मम च वै- रनिर्यातनं भवति, नान्यथा, कोशावेश्या तत्प्रतिपेदे, यदेतत्कार्यमहं करिष्ये, तयोपकोशा भणि-

ता हे भगिनि! वररुचेर्मद्यपानं कारय? तथापि वररुचिर्मद्यपानं कारितः, यतः क्षयकाले समाया
ते महात्मापि वेदपारगोऽपि ज्ञानवानपि च कुलाचारं त्यजति, सोऽन्वहं तयोपकोशासमं मद्यपानं
करोति, एवं दिनानि यांति, श्रीयकोऽपि वैरसाधनसोद्यमस्तेन समं मैत्रीं चक्रे, आखुना सह मा-
र्जार इव, राजा कविप्रीत्या वररुचिं बहु मन्यते, राजमानितत्वाल्लोकोऽपि तं बहु मन्यते, कदाचित्
समये राजा श्रीयकं समादिशद्भो श्रीयक! शकटालं विना मे सभा न भाति, यथा चंद्रेण विना
रजनी न भाति, एवं बहुधा प्रस्तावे राजा शकटालं वारंवारं वर्णयति, तदानीं श्रीयक उवाच, स्वा-
मिन्ननेन मद्यपेन वररुचिना डिंभानां श्लोकं शिक्षयित्वा मुधा मज्जनको निपातितः, राज्ञोक्तं भो
श्रीयक! असौ विप्रः किं मद्यं पिबति? श्रीयकेणोक्तं राजन्! प्रातस्तस्य ब्राह्मणत्वं पांडित्यं च द-
र्शयिष्यामि. निशायामुपकोशया मद्यं पाययित्वा श्रीयकाय ज्ञापितमद्य मया वररुचिर्मद्यं पायितः,
अथ यत्तव कर्तव्यं भवति तत्कुरु? अथ सभामध्यस्थितो वररुची राज्ञो गुणान् वर्णयति, लोका-
श्चापि तं प्रशंसंति, यथाहोऽस्य पांडित्यं! केचिद्वदंत्यहो पावित्र्यं! एवं यावत्स बहुवर्णनां लेभे, ता-
वत् श्रीयकमंत्रिणा शिक्षितो मालिकः सभायां समागमत्, तेन मालिकेन सर्वेषां सभासदामेकैकं

कमलं दत्तं, तस्मै वररुचये विप्राय च मदनफलोन्मिश्रं पद्मं दत्तं, श्रीयकः कुशेशयमाघ्राय सौरभ्यं वर्णयामास. ततः सर्वेऽपि स्वानि स्वानि पद्मानि जिघ्रंतिस्म. द्विजन्मापि सोत्सुको निजं कमलं यावता समाघ्राति, तावता नासारंध्रेण मदनफलचूर्णे प्रविष्टे तद्गंधादुद्वांतमद्यो लोकैस्तिरस्कृतो जवात् सज्जातो निर्गतः, राज्ञोक्तं भो श्रीयक! केन प्रायश्चित्तेनासौ शुध्यति? वेदविद्भिस्तच्छुद्धिनिमित्तं तप्तत्रपुपाने प्रोक्ते तस्य च तथा कृते श्रीयकेण पितृवैरनिर्यातनं कृतं, एवं स वररुचिविप्रो यममंदिरेऽगमत्. सप्तांगनंदराज्ये श्रीयको निर्विरोधं मंत्रित्वमसाधयत्.

अथ स्थूलभद्रो महामुनिर्गुर्वंतिके एकादशांगीं पठतिस्म. एवं काले याति कियद्दिनानंतरं वर्षाकाले समागते साधुत्रयमेत्य गुरुं विज्ञपयति. एको वक्ति हे भगवंस्तवाज्ञयाहं चतुर्मासमुपोषितः सिंहगुहाद्वारे कायोत्सर्गेण स्थितो दिनानि निर्गमिष्यामि. द्वितीयेनोक्तं चतुर्मासीमुपोषितोऽहं तवाज्ञया दृग्विषाहिबिलद्वारे प्रतिमया स्थास्यामि. तृतीयेनोक्तं चतुर्मासीमुपोषितोऽहं कूपफलकोपरि वर्षारात्रं स्थास्यामि, चतुर्थेन स्थूलभद्रेणोक्तं स्वामिन्नहं तवाज्ञया कोशावेश्यागृहे चित्रशालायां षड्रसादनं कुर्वंश्चतुर्मासीं करोमि, संभूतिविजयोऽपि श्रुतज्ञानेन तेषां शक्तिं ज्ञात्वानुज्ञां ददौ. अ-

थ ते त्रयोऽपि गुर्वाज्ञया यथोक्तं स्थानमासदन्, स्थूलभद्रोऽपि मदनेर्ष्यया गुर्वाज्ञया कोशावेश्या· गृहे समागात्, मुनिं दृष्ट्वा सन्मुखं समागत्य सा तं ववंदे, मुनिनोक्तं ते धर्मलाभोऽस्तु, अहं तव गृहे चतुर्मासकरणार्थमागतोऽस्मि, मह्यं वसतिस्थानं देहि? यत्राहं चतुर्मासीमासीनः संयमं पाल· यामि, तया हास्यं विधायोक्तं स्वामिन्नस्यां चित्रशालायां चतुर्मासीं समाश्रय? सोऽपि साधुस्तस्या आज्ञया तत्र तस्थौ, सापि तं मुनिं षड्रसाहारैः प्रत्यहं प्रत्यलाभयत्, सा तं मुनिं क्षोभयितुं दि· वारात्रमनेकोपायान् विदधे, परं स मुनिस्तया चालितोऽपि धर्मध्यानान्निर्मलशीलाच्च न चचाल, य· था मेरुर्वातेन न चलति, तथैव मुनिराजोऽपि तस्या हावभावादिभिर्न चलितः, सा वेश्या नाट्ये स्वांगानि दोलयामास. न पुनस्तस्य मानसं, वक्षसो वस्त्रं श्लथयामास, परं न ध्यानतो मुनिं, हाव· भावविलासाद्यैः स्वशरीरं कंपयामास, न पुनस्तस्य धर्मध्यानमौनं, सा पूर्वभुक्तान् भोगान् वारंवार· मस्मारयत. रतिकेलिविलसितान्यदर्शयत्, परं मुनिस्तु पद्मिनीपत्रवन्निर्लेपो नितरां शुशुभे, यथा—

प्रहारा इव पानीये । हारा इव विरागिणि ॥ गणिकाया विकारास्ते । तव जाता निरर्थकाः ॥ १ ॥
नित्यं प्रत्यग्रशृंगारा—स्तद्विकारा महामुनौ ॥ तस्मिन्निरर्थतां भेजुः । सिंहस्फाला गिराविव ॥ २ ॥

ततः खिन्ना मुनेः पादौ । प्रणिपत्य जगाद सा ॥ त्वयि प्राक्तनताब्धीव्या—द्यत्कृतं तत्क्षमस्व मे ॥ ॥३॥ सापि मुनिमूर्तिविलोकनात्प्रतिबुद्धा सती गणिकाधर्मं त्यक्त्वा श्राद्धधर्ममुररीकृत्येममभिग्रहं जग्राह, हे स्वामिन्नतः परं महीपालस्तुष्टो यस्मै मां प्रयच्छति तं मुक्त्वान्यपुरुषगमने मे नियमोऽस्तु जीवितावधि.

एवं सा कोशावेश्या स्थूलभद्रमुनिना प्रतिबोधिता, चतुर्मासीपूर्णीकरणानंतरं ते त्रयोऽपि महामुनयः पूर्णाभिग्रहाः सुगुरोः पादमूलं समाजग्मुः, तानागतान् वीक्ष्य गुरुरभ्युत्थानपूर्वं स्वागतेनाभिनंद्येमां वाचमुवाच, अहो दुष्करकारका यूयं! अथ चतुर्थं स्थूलभद्रं समागतं ज्ञात्वा तथैवोत्थाय गुरुरेवमभाषत, भो महाभाग! साधु साधु तव दुष्करदुष्करकारकत्वं, तथोक्तं श्रुत्वा ते त्रयः साधवो दध्युः—अहो मंत्रिसुतत्वेन । गुरुर्दुःकरदुःकरं ॥ कारकेति कथयति । वारंवारं प्रशंसति ॥ ॥ १ ॥ किमनेन दुष्करदुष्करं कृतं?—भुषितं चित्रशालायां । भक्षितं षड्रसादिकं ॥ अहो दुःकरदुःकर—कारकत्वं मुनेरिदं ॥ २ ॥ अथ सिंहगुहावासी साधुर्वक्ति यदिदं दुष्करदुष्करं तर्ह्यहमप्यागामिनि वर्षे इममेवाभिग्रहं करिष्ये, अष्टौ मासानन्यत्र विहृत्य सिंहगुहावासी साधुर्गुर्वंतिके समा-

नैषोऽभिग्र· गात्, गुरून् वंदित्वा चैवमवोचत्, हे भगवन्नस्मिन् वर्षेऽहं स्थूलभद्राभिग्रहं गृहीष्यामि, नैषोऽभिग्रहपारगो भविष्यतीति ज्ञात्वा गुरुणोक्तं भो मुने! अमुं कदाग्रहं मुंच? त्वमस्याभिग्रहस्य पारगो न भविष्यसि, अतः स्थूलभद्रेण सह स्पर्धां मुंच? अनया स्पर्धया तव विरूपं भविष्यति, एवं गुरुणा वारितोऽपि स तदध्यवसायान्न व्यरमत्. ततस्तमभिग्रहं गृहीत्वा स मुनिः कोशागृहे प्राप्तो हस्तिशालायां रासभ इव, सा कोशावेश्यापि तं मुनिं स्थूलभद्रस्पर्धया समागतं ज्ञात्वा षड्रसैर्भोजयामास, कृतशृंगारनेपथ्या विभ्रमैकतरंगिणी कामराजधानीव सा मुनिसमीपे समागात्. तस्या मुखेंदुमालोक्य । शुद्धे तच्चित्तसागरे ॥ चित्तस्थितोऽपि यत्कामो । वाडवाग्निरिवाज्ज्वलत् ॥१॥ ततः कामविषोर्मिभिरपहृतचैतन्यः स यतित्वं न सस्मार, तथा स्पर्धातपःक्रियामपि न सस्मार. तस्या हावभावविलासविभ्रमैर्मोहितो मुनिः कामं कामक्रीमां ययाचे. तयोक्तं मह्यं द्रव्यं देहि? यथा तवेप्सितं सिध्यति. मुनिराह कुतोऽस्माकं धनं? वयं मुनयो निर्द्रव्याः, तयोक्तं भो मुने! यदि भोगेच्छा तव वर्तते, तर्हि नेपालदेशे गत्वा रत्नकंबलं समानय? नेपालनृपालो देशांतरीयतपस्विनामेकैकं रत्नकंबलं ददाति. स रत्नकंबलश्च लक्षमूल्यो भवति.

एतत्तस्या वचनं निशम्य कामपरवशो मुनिश्चतुर्मासकमध्ये नेपालाभिमुखोऽचलत. तत्र नृपात्कंबलमासाद्य वंशमध्ये च निधाय प्रत्यावृत्तः. मधुपो मालतीमिव मार्गे मुनिः कोशां संस्मरन् शीघ्रं चचाल. लक्षं यातीति कीरोक्त्या मार्गे तस्करैर्धृतः, किंचिदप्यदृष्ट्वा तैर्मुक्तः, पुनः कीरेण तथैवोक्ते तथैव स धृतः पृष्टश्च, भो मुने! सत्यं ब्रूहि? तव पार्श्वे किमस्ति? मुनिना सत्ये प्रोक्ते कृपया तैर्मुक्तो मुनिः कतिपयदिनांते कोशासमीपे समागत्य कोशाकरे कंबलमदत्त. तया स कंबलः पादप्रोंछनीकृत्य कर्दमे क्षिप्तः. मुनिनोक्तं हे मुग्धे! ईदृशो लक्षमूल्यो रत्नकंबलस्त्वया कर्दमे कथं क्षिप्तः? सावोचद्रे मूढ! त्वयेत्थं रत्नकंबलः शोच्यते, परं स्वीयममूल्यं व्रतमाणिक्यं त्यजन् किं स्वात्मानं नेक्षसे? अहो ते मौढ्यं! यतः—यः प्राप्य दुःप्राप्यमिदं नरत्वं। धर्मं न यत्नेन करोति मूढः॥ क्लेशप्रबंधेन स लब्धमब्धौ। चिंतामणिं पातयति प्रमादात्॥ १॥ स्वल्पसंसारसुखकृते त्वं मोक्षसुखं मुधा हारयसि. इत्यादिवाक्यैः प्रतिबोधितो जातवैराग्यो मुनिराह, हे महानुभावे! त्वयाहं संसारादुध्धृतः, अथाहमतीचारदोषालोचनहेतवे गुर्वंतिके यास्यामि, ते च धर्मलाभोऽस्तु. तत् श्रुत्वा सापि स्वकरौ कुड्मलीकृत्य मुनिंप्रति जगौ, हे मुने! मया त्वत्प्रतिबोधाय यदाशातना कृता

तत्क्षम्यतां. ततो मुनिर्लज्जयाधोमुखः सम्यक्संसारविरक्तधीर्गुरोः पार्श्वं प्राप. पुनरालोचनापूर्वं भूयांसि तपांसि स तेपे.

अन्यदा सा कोशाऽकामापि राज्ञा कस्मैचिद्रथिने ददे, सापि तदग्रे स्थूलभद्रस्य गुणान् प्रशशंस. सोऽन्यदा गवाक्षस्थः सहकारलुंबिकां बाणेन विव्याध, पुंखपुंखार्पितशरैश्च सुप्रापां चकार. ततस्तद्वृंतमर्धचंद्रबाणेन छित्वा तत्रस्थः पाणिना चादाय कोशाकरे ददौ. एतच्चमत्कारं दर्शयित्वा स वारंवारं कोशाभिमुखं विलोकयति. यथा—दर्शयित्वा स्वकौशल्यं । स तस्या मुखमैक्षत ॥ सापि पुष्पावृतां शुचीं । राशौ विन्यस्य सार्षपे ॥ १ ॥ ननर्त चारुचारीभि—र्विद्याधरीव निश्चला ॥ शुचीमुखेन नो विद्धा । न च पुष्पाण्यचालयत् ॥ २ ॥ रथी तत्कलया तुष्टो—ऽवोचत् हे सुभगे त्वया ॥ दर्शिता मे कला रम्या । वद किं ते ददाम्यहं ॥ ३ ॥ सा प्राह भो महात्मन्! मया किं चित्रं चक्रे? येन त्वं रंजितः, किंच त्वया यद्दर्शितं तदपि किं चित्रं? यतः—न दुक्करं अंबयलुंबितोडणं । न दुक्करं सूचीअनच्चिआए ॥ तं दुक्करं जं च महाणुभावो । जं सो मुणी पेमवणं न बुड्डो ॥ १ ॥ यथा घृतं वह्निसंयोगाद् द्रवीभवति, तथा स्त्रीसंसर्गात्पुरुषोऽपि द्रवीभवति, न पुनः स्थू-

भद्रो महामुनिस्तथाऽभवत्, यतः—वेश्या रागवती सदा तदनुगा षड्भी रसैर्भोजनं । शुभ्रं धाम मनोहरं नववपुर्नव्यो वयःसंगमः ॥ कालोऽयं जलदागमस्तदपि यः कामं जिगायादरात् । तं वंदे युवतिप्रबोधकुशलं श्रीस्थूलभद्रं मुनिं ॥ १ ॥ इत्यादिस्थूलभद्रगुणान् दिवानिशं गृह्णंती कोशावेश्या रथिकं प्रतिबोधयामास चंद्रज्योत्स्ना कैरवमिव. स रथ्यपि भद्राभिलाषुकः स्थूलभद्रगुणान् स्मरन् श्रीसंभूतिविजयसद्गुरुसमीपे दीक्षां कक्षीचक्रे. कोशापि स्वाभिग्रहे स्थिता दिनानि निर्गमयामास.

इतश्च तस्मिन् देशे द्वादशाब्दिकः सुदुष्करो दुष्कालोऽभवत्. तं दुष्कालं साधुसंघो महाकष्टेन जलधेस्तटे व्यतिचक्राम. गुणनादिसामग्र्यभावात् सिद्धांतो विस्मृतिं गतः. ततः पाटलीपुत्रपत्तने समस्तसाधुसंघ एकत्र बभूव. केभ्यः केभ्यः साधुभ्यः किंचित्किंचित्सूत्रालापककदंबकमेकीकृत्य क्रमेणैकादशांगानि परिपूर्णानि चक्रे. ततः संघेन सिद्धांतविच्छेदभीरुणा चतुर्दशपूर्वविदः श्रीभद्रबाहोराह्वाहनेच्छया मुनिद्वंद्वं प्रेषितं. तेन तत्र गत्वा विधिपूर्वं नत्वा संघेनोक्तं समादिष्टं, स्वामिंस्त्वामाह्वातुमावां पाटलीपुत्रात्संघेन प्रेषितौ, अतस्त्वरितं पादाववधार्यतां. तदानीं भद्रबाहुस्वामिनोक्तं मया महाप्राणायामध्यानं ध्यातुमारब्धं, अतो मम तत्रागमनं न भविष्यति. तत् श्रुत्वा तौ मुनी भ्या-

वृत्य पाटलीपुत्रपत्तने समायातौ. पूर्वोद्धारकृते संघस्तत्र पुनर्मुनिद्वयं प्रैषीत्, तौ च तत्र गतौ श्रीभद्रबाहुसूरींद्रं वंदित्वोचतुः, स्वामिन्! संघेन भवतः पृष्टं वर्तते यद्यः संघं न मन्यते तस्य को दंडो जायते? भद्रबाहुस्वामिनोक्तं यः संघं न मन्यते स संघबाह्यो ध्रुवं क्रियते. मुनिनोक्तं हे भगवन् तर्हि संघस्त्वामेव संघबाह्यं चिकीर्षति. इदं श्रुत्वा गुरुराह संघो यदिच्छति तत्करोति, परं चेत्संघो मयि प्रसत्तिं कुरुते तदात्र महाप्राज्ञान् मुनीनत्र प्रहिणोतु, तेषामहं सप्त वाचना दास्ये, यथा—

वाचनामत्र दाताह—मेकां भिक्षात आगतः ॥ द्वितीयां कालवेलायां । तृतीयां च बहिर्भुवः ॥१॥
विकालावसरे तुर्यां । तिस्रस्त्वावश्यकक्षणे ॥ निर्विघ्नमिदं संघस्य । मम कार्यं च सेत्स्यति ॥ २ ॥

ताभ्यां मुनिभ्यां गत्वेत्याद्युक्ते तुष्टः संघस्तदंतिके स्थूलभद्रादिसाधूनां पंचशतीं प्राहिणोत. भद्रबाहुस्वामी ध्यानावरोधतस्तेषां मुनीनां स्वल्पवाचनां ददाति, स्थूलभद्रं विनान्ये पंचशतसाधवः पठनान्निर्विण्णाः स्वस्थानमगुः, पठनतत्परोऽनुद्विग्नो विनयी स्थूलभद्रो विनयादिभिर्गुरोर्मानसमावर्जयामास. एवं कियति काले भद्रबाहुगुरुरपि महाप्राणायामध्यानपारं प्राप्तः. ततोऽसौ स्थूलिभद्रस्य मुनेस्त्वप्त्यंतां वाचनां मुदितो ददौ. एवं पठमानः स्थूलभद्रः क्रमाद्वस्तुद्वयोनानि दशपूर्वाण्यपठत्.

अथ स्थूलभद्रस्य सप्त स्वसारो यक्षाद्याः पूर्वोक्ता गुर्वंतिके दीक्षां समादाय कानिचिच्छास्त्राण्यधीत्य गुर्वाज्ञया तत्र वंदितुमाययुः, ताः गुरुं पप्रच्छुः, स्वामिन्! सांप्रतं स्थूलभद्रः क्वास्ति? गुरुरभाषिष्ट तव भ्राता स्थूलभद्रोऽस्मिन् देवकुले पूर्वाणि गुणयन्नस्ति, स्थूलभद्रो मुनिस्तास्वयः स्वां विद्यां दर्शयितुं सिंहतनुमाश्रित्य कौतुककाम्यया तस्थौ, तास्तत्र हरिं वीक्ष्य प्रत्यावृत्ता गुरुमवोचन्, स्वामिन्नस्माकं बांधवं स्थूलभद्रं विदार्य तत्र सिंहः स्थितोऽस्ति, ततो गुरुः सोपयोगज्ञानेन तत्स्वरूपं ज्ञात्वा जगौ. स एव युष्माकं भ्राता युष्माकं विद्यां दर्शयितुं सैंहीं तनुं विधाय स्थितोऽस्ति, यूयं गत्वा त्वरितं वंदध्वं? ता गतास्तदंतिके, चमत्कृताश्च बांधवं वारंवारं वंदंतेस्म, धर्मवार्तां स्पृष्ट्वा स्थूलभद्रंप्रति ज्येष्ठार्या यक्षोवाच हे बंधोऽस्माभिः सार्धं श्रीयकोऽपि व्रतमगृहीत्, परं स क्षुधातुर एकाशनमपि कर्तुं न क्षमः, स सांवत्सरिकपर्वणि मद्वाचा पौरुषींप्रत्याचष्ट, तत्र पूर्तौ मयोक्तं पूर्वार्द्धं किं न क्रियते? असौ महात्मा लज्जया तत्प्रत्यपद्यत, तस्मिन् पूर्णतां संप्राप्ते भोक्तुमना अपि स मयोत्साह्यापरार्द्धतपःक्रियां कारितः, ततः स्तोकं दिनं ज्ञात्वोपवासप्रत्याख्यानं मया कारितः, ततोऽर्धरात्रौ वर्धिष्णुक्षुधाकुलितविग्रहः श्रीयकमहामुनिराराधनापूर्वं मृत्वा स्वर्गमुपेयिवान्, ऋषिघातोद्भ-

वपापभीत्या तत्स्वरूपं मया श्रमणसंघस्य सर्वं निवेदितं, संघेनोक्तं तव किमपि प्रायश्चित्तं नैवापतति, यतस्त्वया तत्तारणायेदं प्रत्याख्यानादि कारितं, अतस्तवैका निर्जरैव फलं भवति, तथापि स्वं निंदंती संयमातीचारभीतया मयोक्तं यदि जिनः स्वयमेवमाख्याति, तदा मम मनोनिवृत्तिर्भवति, तदा श्रीसंघः कारुणिकाग्रणीः शासनसुरीं संस्मृत्य तदाराधनकृते कायोत्सर्गमकरोत्, समागता शासनसुरी संघमभाषत किं करोमि? संघेनोक्तं यक्षाया मनोरथं पूरय? शासने देव्योक्तं यावदहं श्रीसीमंधरोपांते एनां नीत्वात्र पश्चादानयामि, तावत् श्रीसंघेन कायोत्सर्गे स्थातव्यमित्युक्त्वा शासनदेवी मां करसंपुटे गृहीत्वा श्रीसीमंधरोपांतेऽनयत्, ततो हर्षेण मया सीमंधरो जिनेश्वरो वंदितः, जिनेनोक्तं त्वं निर्दोषा, निर्व्याजा, निर्जराभाक् च, न तु पापभाग्. ततः स्वामिना ममाग्रे चूलिकायुगलं व्याचक्रे. पुनर्देव्या करतले धृत्वाहं भारते क्षेत्रे समानीता, अहं तच्चूलिकाद्वयं संघायार्पयं, संघोऽप्यभिग्रहे पूर्णे स्वस्थानं गतः, शासनसुर्यपि कार्यं कृत्वा स्वस्थानं गता, अहमपि सपरिवारा स्वाश्रयं गता, ततोऽहं गुर्वाज्ञया वंदनार्थमिहागता, यक्षामुखात्तद्वृत्तांतं निशम्य स्थूलभद्रो भृशं मुदमाप.

अथ वाचनार्थं गुर्वंतिके समागतः स्थूलभद्रः, गुरुणोक्तं त्वं वाचनाया अयोग्यः, स्थूलभद्रः प्राह हे भगवन्! मया कोऽपराधः समाचीर्णः? गुरुणोक्तं सावधानो भूत्वा स्मृतिमानय? स्थूलभद्रेणोक्तं मम किंचिदपि न स्मृतिमायाति, गुरुणोक्तमपराधं कृत्वापि किं न मन्यसे? सिंहरूपं विधाय विस्मयं नीता भगिन्यः, तत्स्मृतिमानीय स गुरुपादयोः पतित्वोवाच हे स्वामिन्नेकवारं ममापराधः क्षम्यतां? नेदृग्भूयोऽपि विधास्यते, गुरुरूचे यथा—भूयः कुर्या न कुर्या वा। सांप्रतं कृतवान् पुनः ॥ वाचना तु न ते देया। ज्वरार्तस्येव चिर्भटी ॥ १ ॥ स स्थूलभद्रो गुरुरोषशांतये संघाय प्रार्थयामास, संघोऽपि तस्मै वाचनार्थं गुरुं प्रार्थयामास, चिंतामणिं विना समीहितं दातुं कः क्षमः? यूयं मणितुल्याः स्थूलभद्राय वाचनां प्रयच्छत? ततः सूरिः संघमवोचत, यथासावधुना विकृतस्तथान्ये साधवोऽतः परं शठा भविष्यंति, पूर्वाणि मय्येवावशिष्टानीति वेद्म्यहं. अथ शेषपूर्वचतुष्टयं मा पठत्वयं, अस्य स्थूलभद्रस्यैष दंडो भवतु. पुनः सूरिः संघाग्रहान्मयि पूर्वच्छेदो मा भवत्विति विचिंत्य चतुर्णां पूर्वाणां सूत्रतो वाचनां दत्वेत्याह, हे महात्मंस्त्वयैतेषां पूर्वाणां वाचना कस्यापि न देया. इत्यादिचतुर्दशपूर्वपारगोऽसौ श्रीभद्रबाहुस्वामिनाचार्यपदे स्थापितः. ततोऽसौ गुर्वंतिके

समागात, गुरुणापि स स्वपदे स्थापितः. एवं चतुर्दशपूर्वधरोऽसौ बहूनि वर्षाणि मह्यां विहृत्य भव्यान् प्रतिबोध्य स्वायुःपर्यंते मदनविजयी श्रीस्थूलभद्रस्त्रिदिवं जगाम. इत्थं श्रीस्थूलभद्रस्य चरित्रं देशतो दर्शितमिति. अथ वज्रमहामुनेर्दृष्टांतमाह—

॥ मूलम् ॥—मणहरतारुन्नभरे । पत्थिज्जंतोवि तरुणीनियरेण ॥ सुरगिरिनिच्चलचित्तो । सो वयरमहारिसी जयउ ॥ १३ ॥ व्याख्या—जनानां मनांसि हरतीति मनोहरं, मनोहरं च तत्तारुण्यं च मनोहरतारुण्यं, मनोहरतारुण्यस्य भरो मनोहरतारुण्यभरस्तस्मिन् मनोहरतारुण्यभरे संपूर्णयौवने इत्यर्थः. 'पत्थिज्जंतोवित्ति' भोगार्थं प्रार्थ्यमानोऽपि तरुणीनिकरैर्वनितासमूहैः स कथंभूतः? सुरगिरिनिश्चलचित्तो मेरुगिरिवन्निःप्रकंपमनाः स वज्रमहामुनिर्जयतु. नंदत्विति गाथार्थः. ॥ १३ ॥ विस्तरार्थस्तु कथानकादवसेयः, तत्कथा चेयं—

अस्मिन् भरतार्धे भूषणोपमोऽवंतीनामदेशोऽस्ति. तस्मिन् देशे तुंबवननामा सन्निवेशोऽस्ति, स च धनधान्यैः संपूर्णो जनैः परिपूर्णो भूभामिनीतिलकोपमश्चास्ति. तस्मिन् सन्निवेशे धनेन धनदोपमो धनगिरिनामा व्यवहारिपुत्रोऽस्ति, मनसा वाचा कायेन धर्मध्यानैकतत्परो देवगुरुभक्तश्च स

क्रमेण पावनं यौवनं प्राप. एवं यौवने वर्तमानोऽपि स विषयविमुखो गृहवासमपालयत्. तद्विवाहकृते पितरौ यकां कन्यां याचते तां स दीक्षार्थी धनगिरिर्निषेधयति यथा तृप्तो भोजनं. धनगिरिस्तासां कन्यानां तन्मातापित्रादीनां च कथयति यथाहं दीक्षामादास्ये, अतो मे विवाहे कार्यं नास्तीत्युक्त्वा स तान्निषेधयति. अथ धनपालव्यवहारिपुत्री सुनंदानाम्नी तातं धनपालं विज्ञपयति, यथा हे तात! अहं धनगिरिं विना नान्यं पतिं करोमि, इति तस्या निश्चयं ज्ञात्वानिच्छुनापि धनगिरिणा सह पितृभ्यां सा पर्यणाय्यत. एकस्मिन् दिने धनगिरिणोक्तं हे प्रिये! तवादेशादहं दीक्षां समाददे. तयोक्तं विना पुत्रं दीक्षादेशं न ददामि. सोऽपि पुत्रार्थी तया सह भोग्यकर्मानुभावतो भोगान् बुभुजे. अन्यदा सुनंदा ऋतुस्नाता, ततः श्रीदसामानिकस्तिर्यग्जृंभकामरश्च्युत्वा तस्याः कुक्षाववतार. पूर्णमासां गर्भवतीं सुनंदाभिधानां द्विधा संपन्नसत्वां स्वां पत्नीमापृच्छ्य धनगिरिः सुधीः श्रीसिंहगुरोः पार्श्वे दीक्षां जग्राह. तस्य सहाध्यायी पत्नीभ्राताार्यसमितोऽभवत्. तौ द्वौ गुर्वंतिके एकादशांगादि सर्वं श्रुतं जगृहतुर्भृंगः पुष्परसमिव. सुनंदा तं गर्भं पालयंती सुखेनास्थानंदनोर्वी कल्पद्रुमिव. ततः सुलग्ने सुमुहूर्ते सोत्तमं सुतं प्रासूत. तदानीं जन्ममंगलगीतानि गायं-

त्यो योषित इबमालापनं व्यधुः, हे वत्स! तव तातो यदि पुरा प्रव्रज्यां नागृहीष्यत्तदा तवातुच्छो जन्मोत्सवोऽभविष्यत्, सधवापि वनिता पुमांसं विना किं कुर्यात्? यतस्तैलक्षये प्रौढापि दीपिका कियद्दीपते? बालकोऽप्येवं वाक्यानि श्रुत्वोहापोहपरायणो जातिस्मृतिश्चारित्रार्थी दध्यौ. माता मद्गुणनंदिता मां न त्यक्ष्यति, अतो मे व्रतग्रहणं दुष्करमिति ध्यात्वा तस्याः खेदवृद्ध्यर्थं स बालको निरंतरं रुरोद. न दोलांदोलनैर्न मृदूल्लापैर्न गीतकैर्न च मधुरवाजित्रैः स विरराम. एवं तस्य रुदतः षण्मासी व्यतिचक्राम. प्रियपुत्रापि सुनंदा तस्मिन् पुत्रे भृशं निर्वेदमगमत्.

इतो धनगिरिरार्यसमितादिसाधुसंघपरिवृतः श्रीसिंहगिरिसूरिस्तस्मिंस्तुंबवनसन्निवेशे समागमत्. तदा धनगिरिरार्यसमितेन समन्वितः स्वसांसारिकसंबंधिनो वंदापयितुकामो गुरुमपृच्छत्. तस्मिन्नवसरे किंचिच्छकुनं दृष्ट्वा तस्यार्थं च मनसि धृत्वा सिंहगिरिसूरिश्चमत्कारसमन्वितस्तयोरिति व्याजहार, युवयोस्तत्र गच्छतोर्महान् लाभो भविष्यति, तस्मात्सचित्तं वाऽचित्तं वा किमपि भैक्ष्यमद्य न निषेध्यं. ततस्तौ गुरुणानुज्ञातौ सुनंदागृहे जग्मतुः. तौ समागतौ ज्ञात्वैका सखी सुनंदां सस्मेरमेवमभाषत, हे सखि! आर्यसमितेन सहितो धनगिरिस्तव गृहद्वारे भिक्षार्थं समागतोऽस्ति, त·

स्मै सुतमर्पय? अनेन त्वं सुतरां क्लेशितासि. तत् श्रुत्वा सा सुनंदा निर्विण्णा सती पाणिभ्यां स्वसुतमादाय धनगिरेः पुरः समागत्यैवं बभाषे, हे स्वामिन्नियत्कालं मयायं सुदुःपाल्योऽपि पालितः, अथाहं निर्विण्णा पुत्रपालनात्, त्वं निस्पृहोऽप्येनं पुत्रं गृहाण? येन त्वं पितासि, पिता च पुत्रं निर्वहत्येवेति लोकव्यवहारः. अतस्त्वं लोकोत्तरोऽप्येनं पुत्रं गृहाण? किंचित् स्मित्वा गुरुभाषितं च स्मृत्वा धनगिरिणोक्तमहं तवोक्तं सर्वं करिष्ये, परं तव पश्चात्तापो भविष्यति, हस्तेन दत्तं पुनर्न लभ्यते, त्वं विचारय? त्वया दत्तः पुत्रो मया गृहीतश्च न पुनर्मया दास्यते. एवं मुनिना बहूक्तापि सा पुत्रदानोत्साहं न तत्याज. तावता मुनिनोक्तमत्रार्थेऽन्ये साक्षिणः कार्याः. तानपि कृत्वा मुग्धया सुनंदया बालरुदितेन खिन्नया धनगिरये पुत्रो ददे. धनगिरिमुनिनापि सर्वसमक्षं स समादाय पात्रबंधे निहितः, स बालकोऽपि सिद्धमनोरथस्तत्कालमेव रोदनान्निवृत्तः. धनगिर्यार्यसमितौ गुर्वादेशकर्तारौ सुनंदामंदिरान्निर्गतौ, नैषेधिकीं कृत्वा पौषधालयं च प्रविष्टौ. गुरुभारभंगुरदोर्लतं धनगिरिं वीक्ष्य गुरुरुवाच, भो धनगिरिमुने! पात्रबंधं मत्करे दत्वा क्षणं विश्रम्यतां. तावता धनगिरिरपि तिग्मांशुमांसलबिभासुरं सुनंदासमर्पितं सुतरत्नं गुरोः करेऽर्पयामास. तस्य बालस्य भूरिभा-

रेण गुरोरपि कर आनमत्, तेन लक्षणेन च गुरुस्तमधिकं मेने. तं लक्षणोपेतं वीक्ष्य गुरुरब्रवीद्यथा—नूनमेतेन भारेण। कांत्या च जगतीतले ॥ युगप्रधानो भाव्येष। जिनशासनमंडनं ॥ ॥ १ ॥ तथा—वज्रवत्सार इत्यस्य। वज्राख्यां निदधे गुरुः ॥ पालनायार्पितश्चैष। साध्वीनां सूरिभिः शिशुः ॥ २ ॥

अथ ताभिः साध्वीभिर्दक्षाणां पुत्रवतीनां वत्सलात्मनां पुण्यवतीनां देवगुरुभक्तिभावितमानसानां धर्मधुरंधराणां शय्यातरस्त्रीणां पालनाय समर्पितः. ततो मंडनक्रीडनस्तन्यपानस्नानविलेपनैस्तं ता योषाः पोषयामासुर्वर्षा महीरुहमिव. एवं बालवयसि वर्तमानो वज्रकुमारो धर्म्याभिः क्रीडाभिः क्रीडन् प्राशुकान्नं भुंजानः साध्वीचेतांस्यमोदयत्. तं वज्रकुमारं दर्शं दर्शं जननी सुनंदा महानंदा बभूव. ततः श्राद्धांतिके सा पुत्रं ययाचे, ममैष पुत्रो दीयतामिति, तैरप्युक्तं वयं न जानीमो युवयोरिमां घटनां, अस्माकं तु गुरुणा पालनायार्पितोऽस्माभिः पाल्यते, वयमन्यत्किमपि न जानीमः, इत्युक्त्वा तैस्तिरस्कृता सा शाखाभ्रष्टा मर्कटीव दूरस्था वज्रमिव सुदुर्लभं वज्रमैक्षिष्ट. ततः सा स्नेहमोहिता तन्मंदिरे गत्वा धात्रीवत् स्तन्यमकारयत. इतोऽचलपुरोपांते द्वयोर्नद्योर्मध्ये कन्यापूर्णाभि-

धं तीर्थं. तत्तीर्थे तापसा वर्तंते, तेष्वेको लेपकर्मज्ञः पादयोर्लेपं कृत्वा हंसलीलया भोजनार्थं नग-
रमध्ये समायाति, एवं स प्रत्यहं लेपयोगतो जनान् विस्मापयामास. सोऽभिमानाच्च श्रावकानेवं व-
क्ति भो श्रावका भवतां शासने किमेवंविधः कोऽप्यस्ति? यो नद्यंभसि पादचारेणागच्छति, ते तू-
ष्णीकास्तस्योत्तरं दातुमशक्ता यावदभूवंस्तावत्तत्रार्यसमिताचार्यो योगतपोनिधिर्वज्रमातुलः समागतः,
श्रावकैस्तत्तापसोपज्ञा निंदा निवेदिता, गुरुणा ज्ञानेन तापसस्य पादलेपादिस्वरूपं ज्ञात्वा प्रोक्तं
भो श्रावका एष तापसः पादलेपादिना लोकान् विस्मापयति, न तु तपःशक्त्या, तत्परीक्षार्थं च तं
तापसं भोजनाय निमंत्रयत? ततो भक्तिदंभतोऽस्य पादौ प्रक्षाल्यौ, शासनोपहासनाशाय मायावि
सुखावहा स्यात्. ततो दंभेन ते श्रावकास्तं तापसं निमंत्रयामासुः, सोऽपि तद्भक्तिरंजितो नदीं पा-
दचारेणोत्तीर्यैकस्य श्रावकस्य गृहे समभ्यगात्, तं द्वारागतं ज्ञात्वा स श्राद्धः श्रद्धाभरादिवोवाच,
अद्य मे भाग्यं फलितं, यतो मद्गृहे भवच्चरणरेणवः पतिताः, अथाहं भवत्पादौ प्रक्षालयामि, य-
तो मे गृहं तद्वारिणा पवित्रं स्यादित्युक्त्वोष्णवारिणा स तस्य तापसस्य पादप्रक्षालनं तथाकरोद्यथा
तस्य पादयोर्लेपांशोऽपि न स्थितः.

ततः गोशीर्षचंदनेन लेपं कृत्वा तस्य पादौ तेन सुगंधौ विहितौ, ततः स भोजनं कारितः, भोजनांते च चंदनपुष्पादिभिः पूजितः, वस्त्रादिभिश्च सन्मानितः, ततः सकलसंघपरिवृतोऽसौ नदीतीरे जगाम, अथापि स्वल्पमात्रो लेपोऽवशिष्टो भावीति शंकया स नदीं प्रविवेश, ततः स तापसो नद्यंभसि विना लेपं तदानीं लोहनौरिव यशसा समं निमज्जन ददृशे, तदा समस्तोऽपि जनो भृशं जहास, अहो तापसमुनेस्तपस्तेज इत्याद्युक्त्वा परस्परं हस्ततालीं ददौ, एतत्स्वरूपं मिथ्यादृशोऽपि दृष्ट्वा कथयंत्यहो एते नैतावंति दिनानि कपटेन वंचयित्वा व्यर्थमस्माकं सर्वमास्वादितमिति, तन्नगराधीशेन भोजनृपेण समं तदानीमेव तत्रार्यसमिताचार्याः समागताः, तैर्जिनशासनोन्नतिकृते योगमाहात्म्यतो निम्नगां वशवर्तिनीं कृत्वा राजादिजनतासमक्षमेवमुक्तं, हे तटिनि! अस्माकं पंथानं प्रयच्छ? यथा ते पारं व्रजामः, गुरुणेत्युक्ते—मित्रयोरिव तत्कालं । तटयोरैक्यमीयुषोः ॥ संघभूपजनैर्युक्तः । सूरिः प्राप परं तटं ॥ १ ॥ एवं तस्यार्यसमिताचार्यस्यातिशयं निरीक्ष्य गर्वरहितास्तापसा गुर्वंतिके दीक्षां जगृहुः, ते च ब्रह्मदीपिकनामानो मुनयो जाताः, तेभ्यश्च ब्रह्मदीपिकाशाखा निर्गता, अथ प्रस्तुतमेवाह—

अथ वज्रे त्रिवार्षिके जाते धनगिर्यादयः साधवो विहरंतस्तुंबवनसन्निवेशे समीयुः, सुनंदापत्नी समागत्य धनगिरिं ययाचे हे स्वामिन्! मम न्यासीकृतं पुत्ररत्नमर्पय? धनगिरिणोक्तं समस्तलोकसमक्षं दत्वा पुनर्याचमाना त्वं किं न लज्जसे? तत् श्रुत्वा सुनंदा प्राह मम गोत्रजैः साक्षिकं न दत्तं, अतो गोत्रजैरननुज्ञातं मम बालकं को जिघृक्षति? एवं तयोर्विवादो जातः. ततस्तावुभावपि तं वज्रं बालं समादाय नृपपर्षदि जग्मतुः. राज्ञो वामेन पक्षेण सपरिच्छदा सुनंदा निषसाद, समग्रोऽपि श्रीसंघो दक्षिणपार्श्वे धनगिरिणा समं समाविशत, राज्ञोक्तं वज्रो ममोत्संगे निवेश्यतां? भवतोर्द्वयोर्मध्याद्यदाहूतो यस्यांतिके याति, तस्यैष पुत्रः, द्वाभ्यामप्यंगीकृतं राज्ञो वचः, यथा—उभाभ्यामपि पक्षाभ्यां। न्यायश्चायममन्यत॥ स्त्रीपक्षीया अथाचख्यु—र्देवायं बालकश्चिरं
॥ १ ॥ उवास यतिनां मध्ये। भावी तदनुगस्ततः॥ तस्मादादौ जनन्येव। वज्रमाह्वातुमर्हति॥
॥ २ ॥ तथेत्युक्ते नरेंद्रेण। सुनंदा पुलकांकिता॥ सुखाशिकाक्रीडनानि। न्यस्य चित्राणि तत्पुरः
॥ ३ ॥ शर्करामृद्वमृद्वीका—माधुर्यैककिरा गिरा॥ रयादाकारयत् पुत्रं। तर्णकं स्वगिरेव गौः
॥ ४ ॥ हे वत्सैहि? मम मुदं देहि? तथा त्वं ममोत्संगमलंकुरु? एतन्मोदकखाद्यखंडमत्स्यंडीश-

र्कैरादि मम कराद् गृहीत्वा भुंक्ष्व? गजाश्वादिकमाश्रय? वत्सेदं कंदुकं गृहाण? हे वत्स! दीनां मां मा मुंच? त्वं मया महादुःखेन गर्भे धृतोऽसि, महादुःखेन जातोऽतोऽनृणो भव? ममालिंगनं देहि? एकवारं मया सह वार्तां कुरु? इत्यादितद्वचनैस्तस्य मनो मनागपि न चचाल महावातैर्मेरुरिव. अथ ज्ञानवता वज्रकुमारेण चिंतितमेषा मम माता यद्वक्ति तत्सत्यमेव, यतो जनकाज्जननी समधिका गर्भाधानजन्मबालत्वपरिपालनादिना, परं यदि मातुर्वचनं कुर्वे, तदा संघस्यास्य म्लानिः स्यात्, ततश्च भवपाथोधिलंघनं दुर्घटं भवेत्, ततोऽहं संघं मातरं चाराधयिष्यामि, यतोऽल्पकर्मा मातापि मां विना व्रतमादास्यते, इत्यादिदीर्घदर्शी स बालो जनन्या दृष्टिं न ददौ. ततो नृपप्रेरितो धनगिरिर्विकसन्मनाः क्षिप्रं हस्ते तत्वमिव रजोहरणमाददे. उक्तं च—वत्स यद्यस्ति ते दीक्षां । कक्षीकर्तुं दृढं मनः ॥ तदा शिवश्रियो दूत—ममुं धर्मध्वजं भज ॥ १ ॥ पित्रा समुत्क्षिप्ते धर्मध्वजे वज्रो नृपोत्संगात्समुत्थाय प्राज्ञश्चितारत्नमिव, अंबुजं हस्तिपोत इवोत्प्लुत्य रजोहरणमाददे. तस्मिन् समये धनगिरेः समस्तसंघस्य च वज्रेण रजोहरणे गृहीते मुखं निर्मलं बभूव. सुनंदापि क्षणमेकं दुःखमनुभूय महानंदा बभूव, यतः पूर्वं मम भ्राता प्रव्रजितः, ततः परं वल्लभः प्रव्रजितः,

अथ पुत्रोऽपि प्रव्रजिष्यति, अहमपि दीक्षां कक्षीकरोमि, सृतं गृहवासेन, इति ध्यात्वा सुनंदा महानंदमेदुरा शुभाशया गृहमाययौ. धनगिर्यादयोऽपि साधवो वज्रमादाय स्वीयोपाश्रयमागमन्, गुरवस्त बालं पुनः साध्वीनामर्पयामासुः. ततः सा सुनंदा समुत्पन्नानंदा सिंहगिरेः पार्श्वे दीक्षां समाददे. पदानुसारिलब्धिमान् वज्रः साध्वीमुखश्रुतामेकादशांगीं जग्राह.

अथाष्टवर्षीयो वज्रः शुभेऽहनि शुभे मुहूर्ते सिंहगिरिसूरिणा दीक्षितो गुरुणा समं विहारं कुर्वाणोऽवंतीं याति, मार्गे जलदो ववर्ष, तेनाप्कायरक्षार्थं गुरवः कचिद्यक्षालये तस्थुः. ततो वज्रपूर्वभवमित्राणि देवाः सत्वं परीक्षितुं मंदं मंदं वृष्टिं विधायावासितवणिग्रूपं कृत्वा भिक्षार्थं सूरिं न्यजिज्ञपन्. गुरोरादेशमासाद्य वज्रो महामुनिस्तैः सार्धमावश्यकीं कृत्वा भिक्षार्थं प्रयतोऽचलत्, मार्गे पुनस्तुषारागमे स विरराम. देवैर्वृष्टिर्निरुद्धा, वज्रश्च पुनरग्रे चलितः, तत्र तार्णकुटीरेषु स्वर्णस्थालकच्चोलकानि संवीक्ष्य तथा मनोज्ञभोज्यानि चापि संवीक्ष्य वज्रमुनिर्विस्मितो द्रव्यक्षेत्रकालभावादिसामग्रीं ध्यात्वा तत्सन्मुखमैक्षत, निर्निमेषादिलक्षणैश्च तान् स देवानमन्यत. देवपिंडोऽकल्प्य इति कथयित्वा वज्रमुनिर्भिक्षादानतो न्यवर्तत, देवा अपि निजस्वरूपं प्रकटीचक्रुः, तस्मै वैक्रियल-

द्धिं दत्वा च सद्यस्तिरोदधुः. तत् श्रुत्वा तस्य गुरवश्चमत्कृताः. ज्येष्टमासेऽन्यदा तैरेव जृंभकामरैर्वे· णिजीभूय घृतपूराय स निमंत्रितः, तथैव देवपिंडं ज्ञात्वा तथैव पश्चाद्वलिते तुष्टैर्देवैराकाशगामि· नी विद्या तस्मै दत्ता, पुनश्च ते तिरोऽभवन्. मुनिवृंदेभ्यः पठद्भ्य एकादशांगानि श्रुत्वा वज्रस्ता· नि वज्रदृढानि व्यधात्. गुरुभिरध्येतुं प्रेरितः स्वां प्रतिज्ञामप्रकाशयन् गुरुणोक्तं सूत्रमव्यक्तध्वनिग· सिंतमन्ववदत्. अपरान् साधून् पूर्वगतश्रुतमधीयमानान् श्रुत्वा तदपि स शृण्वन्नगृह्णीत. एकदा सा· धुषु भिक्षार्थं गतेषु गुरौ च बहिर्भुवं गते पौषधमंदिरे एकाकी स्थितो वज्रः साधूनां वेष्टिकाः पंक्तौ संस्थाप्य स्वयं गुरुरिव वाचनां दातुमारेभे, तस्य कोलाहलध्वनिं श्रुत्वा बहिर्भुवः प्रत्यावृत्ता गुरव एवं चिंतयंति—भिक्षातः साधवः किमद्य तूर्णं समागताः? ये बाढस्वरेण स्वाध्यायं कुर्वाणास्तिष्टं· ति, ततस्तैर्गुरुभिर्द्वारे स्थित्वा विलोकितं, तत्रैको वज्रो दृष्टः, तन्मुखाच्चैकादशांगानां पूर्वाणां चा· लापकान् श्रुत्वा विस्मिता गुरव एवं चिंतयंति, धन्योऽस्माकं गच्छो यत्रेदृक्पात्रसंभवः, ततः शिष्यव· त्सला गुरवो बाढस्वरेण नैषेधिकीं व्यधुः. ततस्ता वेष्टिकाः सर्वाः संहृत्य कपाटोद्घाटनं कृत्वा स गु· रोः पादौ प्रमार्जयामास.

एकस्मिन् दिने बालकत्वान्माकोऽप्येनमवजानात्विति मत्वा गुरवो निकटग्रामे गंतुकामा जाताः? तदा मुनयो वदंति स्वामिन्नस्माकं वाचनां को दाता? गुरुणोक्तं भवतां वज्रो वाचनां दास्यतीत्युक्त्वा गुरवो ग्रामांतरे प्रतस्थिरे. ते गुर्वादेशवशंवदाः सिंहगिरिसुशिष्या वज्रस्याग्रे गुरोर्बुद्ध्या वाचनार्थमुपाविशन्, श्रीवज्रोऽपि गुर्वाज्ञां ज्ञात्वा तेषां सर्वेषां मुनीनां विस्मितचित्तानां विधिवद्वाचनां ददौ. पंचदिनांते समागता गुरवो गीतार्थान् वाचनासुखं पप्रच्छुः, तेऽपि गुरून्नत्वा प्रोचुरस्माकमेतावंति दिनानि वाचना सुखेनैव जाता, अथ भवदाज्ञयास्माकमेष एव वाचनाचार्यो भवतु, स्वामिन्नेष जंगमः श्रुतकोषो मूढत्वेनैतावंति दिनानि यदवज्ञातोऽस्ति, तदस्माभिर्भवतां पुरः समालोच्यते, सिंहगिरिसूरयो ज्ञातावशेषांगोपांगादिकं श्रुतं तद्गौरवेण तस्मै वज्राय सर्वं पाठयामासुः, अंगोपांगादिकं पाठयित्वा वज्रस्य सिद्धांतस्थितेरवस्थितिहेतवे सिंहगिरिसूरयो यथाविधिरुत्सारकल्पमाचख्युः, यावान् दृष्टिवादो गुर्वंतिके वर्तते, तावंतं दृष्टिवादं स्तोकैरेव दिवसैः स वज्रः समग्रमगृहीदगस्तिः सागरांश्च इव. सिंहगिरिसूरय इतस्ततो ग्रामनगरादिषु विहारं कुर्वंतो दशपुरं प्रापुः, वज्रं च समाकार्यैवमादिशन्, हे वत्स! दशपूर्वभृतो भद्रगुप्ताख्यसूरयः सांप्रतं विहरंतोऽवंत्यां समागताः

संति, तेषां कोऽपि पूर्वपाठकः शिष्यो नास्ति. भवंतं विना ममाप्येतादृशः कोऽपि शिष्यो नास्ति, ममांतिके यावंति पूर्वाण्यासंस्तावंति मया पाठितानि, अथ त्वमेव दशपूर्वाणि परिपूर्णान्यध्येतुमर्हसि, गजवाह्यमहाभारो गजैरेव वोढुं शक्यते, नान्येन, तेन त्वमुज्जयिन्यां पठनार्थं गछ? तथा तव दशपूर्वीं समाधिनाधीयानस्य ध्रुवं शासनदेवता सर्वतः सान्निध्यं करिष्यति. वज्रमुनिस्तद्गुरुवचनमंगीकृत्य गुरुं च नत्वा यतियुगान्वितोऽचलत्, सायं चोज्जयिनीं प्राप्तः, तां रजनीं च देवकुले स नगराद्बहिरवसत्, तदा श्रीभद्रगुप्ताचार्योऽमुं स्वप्नं लेभे, यथा—

अद्य प्रतीछकः कोऽपि । पयःपूर्णं पतद्ग्रहं ॥ अस्मत्करादुपादाय । तृप्तिपर्यंतमापपौ ॥ १ ॥

ततः स्वयं स्वप्नविचारं चक्रे, यथा—अद्य कोऽप्यतिथिः प्रज्ञा—पात्रं साधुः समेष्यति ॥ यो मत्तो दशपूर्वाणि । ससूत्रार्थानि गृहीष्यति ॥ १ ॥ ततः स चिंतयति, यथा—सुधन्योऽहं न मय्येव । विछेदं दशपूर्व्यसौ ॥ यास्यतीति यत्र पात्र—योगो विद्याफलं परं ॥ २ ॥ प्रातः समये जागरिता भद्रगुप्ताख्यसूरयो व्रतिणां पुरस्ताद्यावत्तज्जगुस्तावत्प्रातः समये नैषेधिकीं कुर्वन् शीघ्रं वज्रः समाययौ, स गुरुस्तमाकृतितेजोभ्यां विद्यायोग्यं परिज्ञावयंश्चेतसा नितरां मुमुदे, गुरुर्यावत्पाणिभ्यां समा-

दाय तं परिरब्धुं समीहते, तावद्वज्रोऽपि द्रुतं तत्पादपंकजयोर्ननाम, गुरुणालिंगनपूर्वकं सुखसंयमस्था- लादिप्रश्नपूर्वकं च भणितं भो भद्र! त्वं ससुखं गुरुपदांबुजं त्यक्त्वा ममांतिके कथमागतः? भक्त्या नम्रीभवद्वपुर्वज्रो गौरवाद्गुरुमब्रवीत्, अहं गुरोर्गिरा भवदंतिके संपूर्णानि दशपूर्वाण्यध्येतुं समाग- तोऽस्मि, पूर्वाणि च भवत्समीपे वर्तते, नान्यत्र, अतोऽहं गुरुणा प्रेषितः, हे भगवन्नथ कृपां विधा- य तद्दानेन मयि प्रसीद? ततो वज्रो गुरुमाहात्म्यात्तथा लब्धवर्णानुभावतः पूर्वाणि संपूर्णानि च- कार. स वज्रो महामुनिर्दश पूर्वाण्यधीत्य विद्यागुर्वाज्ञया दशपुरं प्राप्तः, श्रीसिंहगिरिसूरिपादांतिके च जगाम. अथ प्रीतः सिंहगिरिसूरिर्दशपूर्विणो वज्रस्य पूर्वानुज्ञापुरस्सरं गणानुज्ञां वितताार. त- स्मिन् महोत्सवे वज्रसुहृद्भिर्जृंभकामरैर्लाजा इव पुष्पवृष्टयः कृताः. सिंहगिरिसूरिस्ततः कियत्काले ग- ते विहितानशनः समाधिना स्वर्गं जगाम. ततो नवनवाश्चर्यसद्माः श्रीवज्रसूरयः पंचशतयतियुक्ता भूमिमंडले विजह्रुः. यत्र यत्र श्रीवज्रसूरिर्जगाम तत्र तत्र सर्वे जनाः पुण्याश्चर्यमग्ना इवाभवन्. इ- तश्च श्रीवज्रस्वामिनः साध्व्यः पाटलीपुरे नगरे धनाख्यवणिजो यानशालायां स्थितिमासदन्. त- स्यैव्यस्य सुतातिनिपुणा सकलगुणालंकृता रुक्मिणीनाम्न्यस्ति. सा साध्वीमुखतः श्रीवज्रस्वामि

नः शीलसौभाग्यरूपकांत्यादिगुणोच्चयं श्रुत्वा तत्रैव वज्रेऽतीवानुरागिणी बभूव. तयैवं चेतसा प्रतिज्ञा कृता, यदस्मिन् जन्मनि वज्रस्वाम्येव मम वरो, नान्यः, साध्वीभिरुक्तं हे मुग्धे! विरक्ते श्रीवज्रे तव मनोरथो मुधा वर्तते, यथा मरौ मधुकर्याः कल्पद्रुभोगेच्छा वृथा स्यात्तथा तवापि वज्रे भोगेच्छा. एवं साध्वीभिराख्याता रुक्मिणी पुनः प्राह यदि मम पाणिग्रहणं वज्रो न करिष्यति तर्हि तदंतिकेऽहं दीक्षामादास्ये.

अन्यदा श्रीवज्रः स्वीयपंचशतशिष्यैः परिवृतः पाटलीपुरे समायातिस्म. गुरुं समागतं निशम्य पौरलोकावृतो राजा सहर्षं संमुखमाययौ. तेजसा लावण्येन रूपेण वयसा च मनोहरान् सर्वान् मुनीन् समालोक्य नृपतिर्वारंवारं वंद्यमानो मुनीनपृच्छत्, को युष्माकं गुरुर्वज्रः? तेऽप्यूचिरेऽस्मासु मुनिषु प्रतिभेषु राजहंसतुल्यस्य श्रीवज्रस्य विषये तव कोऽयं भ्रमः? हारावल्यामिवामुष्यां साधुश्रेणौ यो नायक इवाभाति तमेवास्माकं गुरुं वज्रं विजानीयाः. इत्यादिमुनिवचनानि श्रुत्वाग्रे गच्छन् राजा मुनिवृंदमध्यगं शीतांशुं ताराभिरिवावृतं श्रीवज्रस्वामिनं ददर्श. ततो महीपालो भक्तिपूर्वकं श्रीवज्रस्वामिनं प्रणनाम. तत्पादयुगलनखप्रभाचंदनरसैश्च स्वभाले तिलकक्रियामकार्षीत्. ततः श्री·

वज्राचार्यः पुरपार्श्ववर्तिवने राजानुज्ञां लात्वा स्थितो धर्मदेशनां विदधे, यथा—धर्माज्जन्म कुले शरीरपटुता सौभाग्यमायुर्बलं । धर्मेणैव भवंति निर्मलयशोविद्यार्थसंपत्तयः ॥ कांताराच्च महाभयाच्च सततं धर्मः परित्रायते । धर्मः सम्यगुपासितो भवति हि स्वर्गापवर्गप्रदः ॥ १ ॥ इमां श्रीवज्रस्वामिदेशनां निशम्य दंतज्योत्स्नाप्रक्षालितमनोमला आश्चर्यभाजो राजाद्याः पार्षद्या निजं निजं स्थानं ययुः. ततोंतःपुरनार्यस्तद्रूपवैभवं श्रुत्वा नरेंद्रानुज्ञया सूरिं नंतु समाययुः. तदानीं रुक्मिण्यपि वज्रं प्रभुं दृष्टुं समुत्सुका पितरमुवाच, हे तात! स मे वरः समेतोऽस्ति, तेन समं मम पाणिग्रहणं कारय? अस्मिन् जन्मनि ममैष वरः, अन्यथा कृशानुरेव शरणं, नान्यः, एतदर्थे च मया निश्चयो विहितः. रुक्मिणीजनकोऽप्यतिभद्रको धननामा धनकोटियुतः स्वां पुत्रीं कृतस्नानमज्जनां विहितशृंगारामुपवज्रं निनाय. भगवान् श्रीवज्रोऽपि पौरस्त्रीचित्तविक्षोभभीरुकः सुधीः स्वं रूपं विरूपं कृत्वा तस्थिवान्. तद्रूपं दृष्ट्वा पुरीजनो विमनस्क एवं कथयति, यथा—अहो विश्वगुरोरस्य । सातिशायिकलाजुषः ॥ गुणानुरूपा रूपश्री—र्न सृष्टा दुष्टवेधसा ॥ १ ॥ इति भक्तनृणां चित्तं । विज्ञाय ज्ञानचक्षुषा ॥ श्रीवज्रः सहजं रूपं । भेजे भुवनचित्रकृत् ॥ २ ॥ ततः श्रीवज्रः कांचनांभोजमध्या

स्य विद्युत्पुंज इवोज्ज्वलः संसारक्लेशनाशिनीं धर्मदेशनां चक्रे. एवंविधां रूपपरावर्तकरीं तस्य वि-
द्यां विलोक्य सद्यो मुदं दधौ यथा मेघगर्जारवैः शिखण्डिनः. तं वज्रस्वामिनं कलानिधिं वीक्ष्य ध-
न्यं मन्यमानो धनो दध्यौ धन्येयं मम कन्यका यया स्वचित्तदीनारे श्रीवज्रो वज्र इव निवेशि-
तः. ततो वज्रमुखनिवेशितदृष्टिर्धनः कन्यादानतत्परो देशनामशृणोत् कामी शीलकथामिव. देश-
नांते धनः समुत्थाय संघसमक्षं श्रीवज्रमहामुनिं व्यजिज्ञपदेषा मम पुत्री रुक्मिणीनाम्नी कन्यका
त्वद्योग्या त्वदनुरक्ता तव भक्ता च वर्तते, तथा तव सौख्यकृते कोटिस्वर्णभृतं गृहं च वर्तते, त्वमि-
मां कन्यां स्वर्णकोटिभृतं गृहं च गृहाण? अस्याश्च प्रतिज्ञास्ति, यथा मम वज्रमुनेः शरणं, वज्रंवि-
ना च वह्नेः शरणं, अतोऽस्या इमां प्रतिज्ञां पूरय? यतो भवान् दयानिधिर्वर्तते, यथा त्वं कंदर्पा-
तिशायिरूपोऽसि, तथैषा मम पुत्री रतिजित्वरी वर्तते. अतो मम पुत्र्याः पाणिग्रहणं कृत्वा मम
मानसं प्रीणय? तथाहं पुत्र्याः पाणिविमोचने तवानेकशो हेमकोटीर्वितरिष्यामि. धनस्य वचनानि
श्रुत्वा प्रभुरभाषिष्ट भो महात्मंस्त्वया किमुक्तं? साधवो न पाणिग्रहणं कुर्वंति, नापि धनलालसा
भवंति. अतोऽस्माकं कन्यया धनेन च किमपि कार्यं नास्ति. वयं साधवः, साधूनां च संयमेन का-

यं, न तु कन्यया धनेन वा, यदीयं तव पुत्री मय्यत्यंतरागिण्यस्ति तर्हि मत्प्रियं संयमं श्रयतु, यतः—

किमेभिर्नश्वरैः स्वल्पैः । संयोगैर्भवसंभवैः ॥ शिवार्थं यत्यते किंतु । यत्रानंतसुखागमः ॥ १ ॥
इत्यादिवज्रसूरीणां । देशनामृतसिंचनैः ॥ शांतमोहार्तिरादत्त । रुक्मिणी तत्क्षणं व्रतं ॥ २ ॥ इ-तश्च संघार्थं वज्रस्वामी लब्धिसागर आकाशगामिनीं महाविद्यां महापरिज्ञायाध्ययनादुद्दध्रे. देवैरु-क्तमियं महाविद्या मानुषक्षेत्रावधिसंचरणक्षमा त्वयार्जितास्ति, परं त्वयान्यस्मै कस्मैचिदपि न देया. श्रीवज्रोऽपि संघस्य तदन्वधात. जृंभकदेवैर्दत्तया तया विद्यया महाभागो वज्रः संघे प्रभावनिधि-र्जातः. अथ श्रीवज्रस्वामी पूर्वदेशेषु विहृत्य जंगमविद्याब्धिरन्यदोदीचीं दिशं प्राप, तत्रान्यदा दारु-णे दुर्भिक्षे जाते श्रीसंघः श्रीवज्रं युगप्रधानं व्यजिज्ञपद्यथा—अत्र दुर्भिक्षकांतारे । रंकफेरुसमा-कुले ॥ बुभुक्षाराक्षसीमंत्रो । जागरूकोऽस्ति केवलं ॥ १ ॥ भिक्षाचराणां भिक्षासु । दंभैरुत्पाटि-तैरपि ॥ दधिभांडेषु मार्जारा । इव पेतुरलंव्रजाः ॥ २ ॥ यतिष्वपि समेतेषु । भिक्षार्थं भिक्षुकव्र-जाः ॥ दापयंति कपाटानि । द्वारेषु स्वर्गतेरिव ॥ ३ ॥

एवंविधाद्दुष्कालात्त्वमेव संघं समुद्धर्तुं समर्थोऽसि, यतस्त्वं लब्धिनां निधानमसि, विद्यामहा

मणिनां च रोहणगिरितुल्योऽसि, इत्यादि संघविज्ञप्तिं श्रुत्वा सूरीश्वरो मनस्येवमचिंतयत्, संघोद्धारकृते संघाज्ञया प्रयुक्ता विद्या दोषाय न स्यादिति विचिंत्य श्रीमान् वज्रस्वामी सर्वविद्यासार्वभौमः समस्ततपोनिधिश्चर्मरत्नमिव विकटं पटं विचक्रे, ततः संघेन सार्धं श्रीवज्रः पटमध्ये निवेश्य व्योमाध्वगामिनीं विद्यां प्रायुंक्त, श्रीवज्रविद्यानुभावतः स पटः पवनवर्त्मन्यचालीत्, मोक्षाध्वन्यध्वनीनानां भव्यानां मोक्षाध्वानं दर्शयन्निव, तदानीं सूरेः शय्यातराग्रणीर्दत्तनामा विप्रो गोचारिकार्येण गतस्तदानीं गृहे समागतः, श्रीवज्रस्वामिनं श्रीसंघं च व्योमचारिणं वीक्ष्य धर्मज्ञः केशानुत्खायोर्ध्वदृष्टिरदोऽवदत्, युष्माकं शय्यातरोऽहं साधर्मिकोऽधुना जातः, तत्किमनाथमिव हे नाथ! मां त्यक्त्वा यासि? तदालापं समाकर्ण्य तमुत्खातमूर्धजं दृष्ट्वा दशपूर्वभृत् श्रीवज्रः स्थिरात्मेदं सूत्रार्थं सस्मार—

ये साधर्मिकवात्सल्य—भृतः स्वाध्यायतत्पराः ॥ प्रभावका व्रतोद्युक्ता—स्ते तार्याः सर्वशक्तिभिः ॥ ॥ १ ॥

ततः सूरिणा स शय्यातरः पटे स्थापितः. पुनः श्रीवज्रस्तथैव चचाल पयोधरो वायुनेव. व्योम्नि सुरैर्वंद्यमानः संघमानसं चित्रयन् पटवाहनः स गगनाध्वना महापुरं पुरं प्राप, तत्र सुभिक्षमंगले श्रीसंघो निर्विघ्नमीयिवान्, वज्रस्वामिप्रसादेन च सर्वाणि धर्मकर्माण्यसाधयत्. तस्मिन्नगरे

जैना बौद्धाश्च धर्मकर्माण्यकार्षुः, परं ते परस्परं स्पर्धां कुर्वंतिस्म, यतो वैधर्म्यं वैरकारणं भवति, तत्र मिलितैः प्रचुरैर्जैनोपासकै रंजितप्रजैर्महापूजाद्युत्सवैः सौगता विजिग्यिरे, तदानीं बौद्धभक्तेन नृपेण स्पर्धया जैनेभ्यः कुसुमार्पणादारामिका न्यवार्यंत खड्गेन परशुणा इव, ततः परं सुलभान्यपि पुष्पाणि जैनश्राद्धाः कोटिभिरपि न प्रापुः धर्मसामग्रीमभव्या इव.

अथ ते धनाढ्याः श्राद्धा कुसुमैरिव कर्पूरादिसुगंधिद्रव्यैरेवार्चां चक्रुः, अथ ते श्रीजैनश्राद्धाः शासनाभीष्टे श्रीसांवत्सरिकपर्वणि पुष्पैः पूजाविधित्सया तं विज्ञपयामासुः, हे स्वामिन्! कृत्रिमैः पुष्पैः कृता पूजा नातिसौभाग्याय भवति, यतो रत्नमयैर्भोज्यैः क्वचिदपि स्थूलत्वं न जायते, तेन हे भगवंस्त्वयि लब्धिनिधौ गुरौ सति विना पुष्पं पूजा क्रियते. तदीशे गृहमणौ ध्वांतपराभव इवाभाति, तस्मात्पुष्पाण्यानीय संघं हर्षपुष्टं कुरु? संघोक्तं श्रुत्वा सूरिर्गगनाध्वना तत्क्षणादेव माहेश्वरीं पुरीं प्राप गुरुत्मानिव, तत्र तन्मिताभिधो मालिकः पितुर्धनगिरेर्मित्रं वर्तते, तदंतिके स गतः, तेन मालिकेन गुरवो वंदिताः, उक्तं च हे स्वामिंस्त्वं किमर्थमागतोऽसि? मे कृत्यं समादिश? सूरिणोक्तं संघकार्ये पुष्पाण्याहर्तुं समागतोऽस्मि, तेषां दाने च त्वं क्षमोऽसि यथा रत्नानां दाने रोहणः

समर्थोऽस्ति. तेनोक्तमत्र मम वाटिकायां निरंतरं विंशतिलक्षपुष्पाणि भवंति. अतः संप्रति तानि स्वैरं समादाय मां कृतार्थय? श्रीवज्रमुनिनोक्तं तावत्त्वं पुष्पाणि सज्जय? यावदहमग्रे गत्वा निवर्तयामि, इत्युक्त्वा स स्वयमनाकुलः क्षुद्रहिमवगिरिं जगाम. तत्र शाश्वतचैत्यानि नत्वा वज्रमुनिः पद्मखंडमंडितं पद्मादेव्या गृहमभ्यगात, तत्र पद्मायाः सद्म मणिमयं पद्मं स ददर्श. तत्र पद्मादेवी देवार्चनेच्छयैकं पद्मं समादाय प्रस्थिता. सा वज्रमुद्वीक्ष्य विनयान्विता विधिवद्वंदयामास. किंचित्कृत्यमादिशेति तया प्रोक्ते दत्ताशीः सूरिवरस्तत्पाणिसंगतं सहस्रपत्रमयाचत. पद्मा प्रोचे हे भगवंश्चेद्भवतां पद्मेनार्थो भवति तर्हि पद्मलक्षाणि समर्पयामि, तदेकस्य पद्मस्य का कथेत्युक्त्वा श्रीसूरिणे तत्पद्मं तया दत्तं, ततश्च तया बहूनि कमलानि समर्पितानि, तानि कमलानि विमाने क्षिप्त्वा मुनिपुंगवस्ततो निवृत्य तस्मिन् हुताशनवने पुनर्जग्मिवान्.

तत्र हेमरत्नाढ्यं विमानं विशेषतो विकृत्य पुष्पैश्च भृत्वा तदंतः स्वयं छत्रस्येव तस्य पद्मस्य तले तस्थिवान्. तदानीं श्रीवज्रस्तारामंडलमंडितश्चंद्र इवोच्चै रराज. तत्कालं स्मृतिमात्रसमुपस्थितैर्जृंभकामरैः स्वस्वविमानस्थैः सेव्यमानः श्रीवज्रः सुराधिपः सुरैरिव रराज, यथा—वाद्यमानमहातू-

र्य —नादैर्बधिरितांबरं ॥ गंधर्वकिन्नराकीर्णं । किंकिणीजालसंकुलं ॥ १ ॥ विमानवरमारुह्य । सूरिर्लघुहिमाचलात् ॥ महापुरींप्रति क्षिप्रं । विजह्रे संघहर्षकृत् ॥ २ ॥ युग्मं ॥ तानि देवविमानानि वीक्ष्य बौद्धाश्चिंतयंति नूनमस्मत्पूजाप्रभावतो देवाः समागताः. एवमुच्चैर्दृष्ट्या यावत्ते निरीक्षंते तावत्तैर्देवविमानैर्वृतः श्रीवज्रस्वामी युगप्रवरो जिनचैत्येष्वापतत्. तैः पुष्पैश्च ते श्राद्धाः पर्युषणपर्वणि जैनीं पूजां वितेनिरे. तत्पूजाप्रभावनां दृष्ट्वा बौद्धाः श्याममुखा जाताः. जैनचैत्येषु पुष्पौघसौरभलोलुपा भ्रमंतो भ्रमरा बौद्धदुर्यशांसीव रेजिरे. ततस्ते बौद्धा बौद्धगुरवो राजा च श्रीवज्रस्वामिप्रभावमालोक्य जैनधर्मानुरागिणो बभूवुः. श्रीवज्रयुगप्रवरः श्रीतोसलिपुत्राचार्यशिष्यस्यार्यरक्षितमहामुनेः सार्धानि नव पूर्वाणि क्षिप्रमपीपठत. ततः श्रीवज्रो भव्यान् पृथिव्यां प्रतिबोधयन् पदे पदे विचित्रां प्रभावनां विदधानो दक्षिणां दिशं विजहार.

अन्यदाकस्मिकश्लेष्मबाधायां श्रीवज्रसूरयो भोजनोपरीयं शुंठी ग्राह्येति विचिंत्य कर्णे न्यधुः, ततो विहिताहारा गुरवस्तथैव स्वाध्यायध्यानपरास्तां कर्णस्थां न सस्मरुः. अथावश्यकवेलायां मुखवस्त्रिकाप्रतिलेखनावसरे मुखवस्त्रिकयाहता सा निशि खटत्काररवेण पतिता, तदानीं च ते पूर्वं

कर्णे मुक्तां तां सस्मरुः. गुरवो दध्युर्धिगस्माकं प्रमादो बाधते, ततो देहत्यागेन परं भवं साधयामः. इतश्च पुनर्द्वादशाब्दिके दुर्भिक्षे श्रीवज्रसेनाभिधं शिष्यं स स्वतोऽन्यत्र व्यहारयत्. ते श्रीवज्रस्वामिशिष्या भिक्षामलभमाना यतयो विद्यया गुरुभिः समानीतं विद्यापिंडं भुंजते. ततः श्रीगुरुभिः प्रोक्तं भो गीतार्थाः साधवः! द्वादशाब्दानि दुर्भिक्षं भविष्यति. किमस्यासारस्य देहस्य कृते सारं संयमं विद्यापिंडेन निराकुर्महे? तर्हि किमपि तीर्थमाश्रित्यानशनादिना प्राणांस्त्यजामः. एवं विमृश्य श्रीगुरवोऽनशनार्थं कतिचिद्यतियुक्ता गिरिं जग्मुः. गिर्यासन्नग्रामे च कंचित् क्षुल्लकं सहसमायातं विमुच्य तं कृपया संभाष्य स्वयं गिरिमारुरुहुः. गिरिसमीपवर्तिग्रामस्थितेन क्षुल्लकेन चिंतितं मयि गिरेरूर्ध्वं गते गुरोरसमाधिर्माभूदिति विचिंत्य तत्रैव तप्तशिलायां क्षणेन नवनीतवज्जगाल. स बालमुनिर्वशीकृतेंद्रियस्त्रिदशालयं जगाम. तद्वपुःसंस्कारकृते सुरानागच्छतो वीक्ष्य मुनिभिः पृष्टः श्रीवज्रगुरुराचष्ट, स क्षुल्लको गृहीतानशनः परासुतां गतो देवो जातः, तस्य महिमानं देवाः कुर्वंति. तन्निशम्य ते मुनयस्तमभ्यनंदयन्, यथा धन्य एष बालमुनिर्येनात्महितं साधितं, अहो शिशोर्मतिः, पश्चान्मुक्तोऽप्यसावस्मत्पुरस्सरो जातः. अथास्माभिः किं विलंबो विधीयते? ततस्ते गुरुभिः

सार्धं तस्मिन् गिरिशिरसि स्वयमनशनं चक्रुः. तस्मिन् गिरौ मिथ्यादृष्टयो देवाः श्रावकीभूय व्रतिनां चालनाय मोदकान् दर्शयामासुः. प्रोचुश्च भो मुनयः पारणं क्रियतामिति. ततः श्रीवज्रसूरयः सशिष्यास्तं गिरिं विहाय सम्यग्दृष्टिदेवाश्रितं गिरिं ययुः. तत्रावग्रहसमाधिना सर्वे साधवोऽनशनं प्रपाल्य स्वर्गमीयुः. तैर्देवैः ख्यापितोदंत इंद्रस्तत्रागात, रथस्थितश्च स तं शैलं प्रदक्षिणीचक्रे. तदादितश्च स भूधरो रथावर्त इति ख्यातः. तस्मिन् भूधरे चितास्थाने स्वयं विबुधाधिपो हिरण्मयीं स्तूपश्रेणिं स्थापयामास. तन्मध्यस्तूपे श्रीवज्रस्वामिनो मूर्तिं स्थापयित्वा भावसारं च पूजयित्वा सम्यक्स्तुत्या च स्तुत्वा श्रीवज्रस्वामिगुणान् स्मरन् हरिर्दिवमासदत्.

इतः श्रीवज्रस्वामिशिष्यो वज्रसेनो गणधरः श्रुतसागरपारगः कतिचिच्छिष्यपरिवृतः सोपारकपत्तनं प्राप. तत्र जिनदत्तनामा श्रेष्ठी श्राद्धशिरोमणिरस्ति, तस्येश्वरी वल्लभास्ति, सापि च धर्मविशारदा वर्तते. तयोश्चत्वारस्तनूजाश्चंद्र १ नागेंद्र २ निर्वृति ३ विद्याधर ४ नामानो धर्मकर्मसु तत्परा वर्तंते. ते सर्वे विवेकिनोऽप्यन्नाभावाद्विषमिश्रेणान्नेनाराधनापूर्वं प्राणत्यागं चिकीर्षवो लक्षमूल्येनैकां स्थालीं निष्पाद्य यावद्भोजनार्थमुपविशंति तावद्वज्रशिष्यः श्रीवज्रसेनो जंगमकल्पपादपस्तत्पुण्ये-

ईश्वरी तत्पुरोभूय स्वं धन्यं मन्यमाना जगौ, हे स्वामिन्नस्माकं भा·
नाकृष्टो जिनदत्तगृहे समागात्. यावच्चेदं पायसं विषेण नो लिप्तं ता·
ग्यं फलितं, यदस्मिन् समयेऽस्माकं तारणाय त्वं समागतः, तदा पूर्वं श्रीवज्रस्वामिनोदितां शिक्षां
वदेतत्प्रतिग्राह्यं. एतत्पायसं गृहीत्वास्मान् भवांबुधेस्तारय? प्रगे सुभिक्षं भविष्यति, इदमेव सु
स्मृत्वा वज्रसेनाचार्य ईश्वरींप्रत्यदोऽवदत्, यूयं मा म्रियध्वं? इति तद्वचसा तेऽपमृत्युनो निवृत्ताः.
भिक्षस्य लक्षणमादिश्य वज्रसूरिभिर्ज्ञानभूरिभिरत्राहं प्रेषितः, ईश्वरीसहितो जिनदत्तश्रे·
प्रातर्भूरिशो देशांतराद्धस्यपोताः प्राप्ताः, ततस्तस्मिन् देशे सुभिक्षं जातं, श्रीवज्रसेनगुरुणेश्वरीपुत्राश्चत्वारोऽपि सू·
ष्ठी तयोश्चत्वारः पुत्राश्च ते सर्वेऽपि गुर्वंतिके व्रतं जगृहुः. तेभ्यश्चत्वारो गच्छाः प्रथिताश्चंद्रगच्छ १ नागेंद्रगच्छ
त्राणि पाठिताः, ततस्ते आचार्यपदे स्थापिताः, तेन श्रीवज्रसेन इति शाखाप्यपि प्रवर्तते, ते श्रीवज्रसे·
२ निर्वृतिगच्छ ३ विद्याधरगच्छ ४ नामानः. इत्थं महामहिमसूरिशिरोवतंसो । वज्रो मुनिः प्रबलनिर्मलल·
नसूरयोऽनशनेन परलोकमसाधयन्. कृत्वा प्रभावनमभूत् त्रिदिवे सुपर्व ॥ १ ॥ इति
ब्धिसिंधुः ॥ श्रीत्रैशलेयजिननायकशासनस्य । अथ सुदर्शनश्रेष्ठिदृष्टांतः
श्रीवज्रस्वामिचरित्रं लेशतो दर्शितं, अस्य विशेषार्थो विशेषग्रंथतो ज्ञेयः.

कथ्यते—

॥ मूलम् ॥—मुणिउं तस्स न सक्का । सड्ढस्स सुदंसणस्स गुणनिवहं ॥ जो विसमसंकडे· सुवि । पडिओवि अखंडसीलधणो ॥ १४ ॥ व्याख्या—तस्य सुदर्शनश्रेष्ठिनः ' सड्ढस्सेत्ति ' श्राद्धस्य सम्यक्त्वमूलद्वादशव्रतधारकस्येति यावत्, ' गुणनिवहं मुणिउंति ' ज्ञातुं न शक्ता भवंति जना इति कर्तृपदमध्याहार्यं, यो विषमसंकटेषु पतितोऽप्यखंडितशीलधनोऽभूदिति गाथार्थः. विस्तरार्थस्तु कथानकादवगंतव्यस्तच्चेदं —

अंगदेशे चंपानामनगर्यस्ति, तस्यां नगर्यां दधिवाहनो नाम राजास्ति. तस्य राज्ञोऽभयानाम्नी पट्टदेव्यस्ति, तस्यां पुर्यामृषभदासाख्य उपासको वर्तते, तस्यार्हद्दासीप्रिया जिनधर्मैकवत्सला वर्तते, तस्यर्षभदासस्य सुभगनामा महिषीपालोऽस्ति, स वन्यभूमौ गत्वा श्रेष्ठिमहिषीश्चारयति. अन्यदा माघमासे महिषीश्चारयित्वा सायं गृहाभिमुखो निवृत्तो मार्गेऽप्रावृतमेकं प्रतिमास्थं महामुनिमद्राक्षीत्, स महिषीचारको गृहागतोऽपि तस्य मुनेः शीतकष्टं दृष्ट्वा करुणापरस्तां रजनीं दुःखेन गमयामास. ततः सकाले समुत्थाय महिषीः पुरस्कृत्य गच्छंस्तं मुनिं तत्र तथैवापश्यत्. तं कायोत्स·

गैस्थं वंदित्वा सूर्योदयं यावत्तस्यैवांतिके स समुपाविशत्, तावत्तत्पुण्यबीजवत्सहस्रांशुरुदियाय, स तु
चारणर्षिर्महातेजाः सूर्योदये द्राग् ' नमो ऋरिहंताण ' मित्युक्त्वांशुमानिव दिवमुद्ययौ, स महि·
षीपालकस्तव्द्योमगामिनीविद्यामंत्रं विदन् हृदये दध्यौ, मौक्तिकनिर्मलहारमिव. ततः स महिषीपालको
दिवारात्रौ स्वपन् जाग्रत्तदेव दध्यौ. ऋन्यदा श्रेष्ट्यपृच्छत् जो सुजग ! त्वयैतत्पदं कुतो लब्धं ? म·
हादुर्लजं दरिद्रेण निधानमिव. तेनोक्तं व्योमगामिन्या विद्याया एष मंत्रो मया गुरुमुखाल्लब्धः.
श्रेष्टिनोक्तं न केवलं नजोगमनविद्यापदं, किंत्वेष मंत्रः स्वर्गापवर्गयोरपि कारणं वर्तते. किंच जो
सुजग ! यत्किंचिदस्मिन् संसारे दुर्लजं स्यात्तत्सर्वमनेन मंत्रेण सुलजं जवति, परं त्वयोच्छिष्टेन स·
तैष मंत्रो न जाप्यः. इति शिक्षां दत्वा स तं सकलं नमस्कारमंत्रमपाठयत्. निःस्वो निधानमिव तं
पठित्वा स सुगृहीतं व्यधात्. तस्याजस्रं नमस्कारपरावर्तनशीलस्य क्रमेण वर्षाकालः समागतः. ऋ·
न्यदा महामेघे वर्षति सुजगो महिषीं समादाय वनं ययौ. ता महिष्यस्तूर्णं नदीं तीर्त्वा परं पारं
गत्वा परक्षेत्रे समाविशन्. सुभग इत्यचिंतयन्मत्स्वामिन उपालंजो मायासीत्, ततोऽहं तत्र द्रुतं ग·
त्वा महिषीर्वारयामि, व्योमगामिन्या विद्यया च त्वरितं गच्छामीति ध्यायन् स नद्यास्तटे समारुरोह.

वारंवारं ' नमो अरिहंताणं ' इति मंत्रं स्मृत्वा दत्तझंपोऽसावंतः पपात, तत्क्षणादेव च कीलकविद्धो ममार. ततो मृत्वासावृषभदासश्रेष्ठिभार्यार्हद्दासीकुक्षौ सुस्वप्नसूचितः पुत्रत्वेनोदपद्यत. तस्मिन्नर्भके गर्भे प्राप्ते तृतीयके मासि तस्या धर्ममयान् सुदोहदानुत्पन्नान् श्रेष्ठी पर्यपूरयत्. समये सा श्रेष्ठिन्यर्हद्दासी शुभलक्षणं सर्वांगसुंदरं सुदिवसे पुत्रं सुषुवे प्राची सूर्यमिव. तं सर्वानंदशशिवत्सुदर्शनं दृष्ट्वा श्रेष्ठ्यशुचिजातकर्मणि निवर्तिते संप्राप्ते च द्वादशेऽह्नि तस्य पुत्रस्य सुदर्शन इति नाम व्यधात्. क्रमेणाष्टवर्षीयोऽसौ कलाचार्यांतिके स्तोकैरेव दिनैः सकलाः कला जग्राह. क्रमेण यौवनं प्राप्तो विवेकिना तातेन मनोरमानामकन्यां पर्यणाययत. स सुदर्शनाभिधः श्रेष्ठिपुत्रो जने राजवर्गे च महामान्यो जातः.

इतश्च कपिलनाम्ना राजपुरोधसा समं सुदर्शनस्य प्रीतिरजायत. वसंतस्मरयोरिव नित्यगोष्ठीपरयोस्तयोः कपिलसुदर्शनयोर्नित्यगोष्ठीपरयो रामलक्ष्मणयोरिव सुखेन दिवसा यांतिस्म. अन्येद्युः कपिलानाम्नी भार्या पुरोधसमपृच्छत्, किमद्य सर्वस्मिन् कार्ये विलंबो जातः? इयतीं वेलां त्वं कुत्रास्थाः? कपिलेनोक्तं मम मित्रं प्राणप्रियः सुदर्शनश्रेष्ठी वर्तते, तद्गोष्ठीनिमग्नस्य मे सर्वं गृहकार्यं

विस्मृतं. तयोक्तं स्वामिन् कोऽसौ सुदर्शनः? कीदृशोऽस्ति? कपिलेनोक्तं स च ऋषभदासश्रेष्ठिनो महान् पुत्रोऽस्ति. स सर्वगुणसंपन्नो। रूपाद्दर्पविजित्वरः॥ वर्ण्यते नात्र तद्रूपं। गगने तारका इव ॥ १ ॥ व्यर्थजन्मासि जडे त्वं। ययासौ गुणसेवधिः॥ न दृष्टो न श्रुतो वापि। पद्मिन्येव सुधारुचिः ॥ २ ॥ प्रियेणोक्तं तद्वचनं श्रुत्वा तद्दिदृक्षया तद्दिनादारभ्य सा बहूनुपायांश्चिंतयामास. अन्येद्युः कपिलपुरोहितो राजाज्ञया कस्मिंश्चिद् ग्रामे गतः, कामविह्वला कपिला सुदर्शनगृहेऽभ्यागत्यं तमित्यूचे, भो सुदर्शन! तव मित्रशरीरे पाटवं नास्ति, अथ त्वमस्मद्गृहे समागत्य सुधावृष्ट्या तव दृष्ट्या स्वमित्रं समालोक्य तोषय? तव दर्शनात्तस्य शरीरे पाटवं भविष्यति, अहं त्वामाह्वातुं समागतास्मि, तस्या वचनानि श्रुत्वा मित्रप्रीत्या सोऽपि द्रुतं तत्र गतः, क्वास्ति मम मित्रमिति प्रोक्ते सावदत, निर्वातेऽपवरकमध्येऽस्ति, एवमुक्त्वा तया कामुक्या सुदर्शनो गृहांतरे नीतः, तत्र नीत्वा सा कामुकी द्वारं दत्वा श्लथश्रोणिबंधना निस्त्रपा कामार्थं सुदर्शनं प्रार्थयामास, सोऽपि श्रेष्ठी प्रत्युत्पन्नमतिः सहास्यं तामिदं प्राह—इदमेव फलं यूनां। संसारे सारता तथा॥ किंत्वहं षंढभावेन। जडे धात्रा विडंबितः ॥ १ ॥ तद्भामिनि वृथा भ्रांता। मयि पुंरूपधारिणि॥ क्षुधाक्रांत-

स्तालफला—भिलाषी पथिको यथा ॥ २ ॥ ततः सा द्विजांगना विलक्षा सती श्रेष्ठिनं गच्छ गच्छे त्युक्त्वा द्वारमुद्घाट्य मनोरथैः सह विसर्जयामास. ततो निर्गतस्तस्या गृहाद्भीतः संसाराज्जीव इव सरलमार्गेण स्वगृहमागतः, राक्षसीभ्य इव स्त्रीभ्यो भीतः सुदर्शनोऽभिग्रहं चक्रे, अतः परं परगृहे मया कथमपि न गंतव्यमेष निश्चयो मेऽस्तु.

अथान्यदा श्रीदधिवाहननृपस्तेन मंत्रिमुकुटेन सुदर्शनेन सार्धं क्रीडितुमुद्यानं ययौ, ततः कपिलया सख्या सार्धं यानारूढाभया राज्ञी तमन्वगाच्छची सुरनायकमिव, सुदर्शनस्यापि जाया षड्भिः पुत्रैर्युता यानारूढा पथि संचचार, तां सुदर्शनप्रियां दृष्ट्वा कपिला पट्टराज्ञीमभयां सविस्मयमपृच्छत्, केयं षड्भिः सुतैर्युक्ता देवीव दिव्यरूपा दृश्यते? अभया जगाद हे सखि! त्वं किं न जानासि? एषा सुदर्शनश्रेष्ठिप्रिया, षडप्येते कुक्ष्युद्भवाः पुत्रा ज्ञेयाः, कपिला प्रोचे हे सखि! अस्याः पुत्राणां प्राप्तिः कुतः? इक्षुयष्टेः फलानामिव, तयोक्तं रे जल्पाके! असंबद्धं किं जल्पसि? यतो राजरंकयोः पुत्राभिलक्षणं साधारणं स्यात्, कपिलाभयां प्रोचे एतस्याः पतिः षंढो मया बाढं परिक्षितश्च, तयोक्तं कथं? ततः कपिलया मूलतः षंढत्ववृत्तांतः कथितः, ततोऽभयाऽभाषिष्ट रे मूढे! किं त्वया न

ज्ञातमेष धर्मी शीलवान् परस्त्रीषु षंढः, न तु स्वस्त्रीविषये, रे मुग्धे! त्वमनेन महात्मनैवमुक्त्वा वंचिता. तयोक्तं हे सखि! यद्यहं वंचिता, तर्हि त्वमेवानेन सह रंत्वा स्ववैदग्ध्यमुद्भावय? एवं तस्याः कपिलाया वचनमंगीकृत्य सगर्वं सोत्कटं निर्लज्जया पट्टराज्ञी जगौ, हरिहरादयो देवाः पत्रशेवालजल्लादिभक्षिणस्तापसाद्या भ्रूलताक्षेपाभीलनो लीलामात्रेण क्षोभं नीताः, तर्हि किमस्य चालने? यतः—

रमणीभिररम्यंत। निरसा अपि तापसाः॥ किं वाच्यमस्य तु स्वैरं। सदा कांतानुषंगिणः॥ १॥ एकाक्षा अपि पुष्पंति। स्त्रीकटाक्षादिभिर्द्रुमाः॥ पंचेंद्रियस्य दक्षस्य। क्षोभनेऽस्य कियान् श्रमः॥ २॥ ततः सेति प्रतिज्ञां चकार यद्यहमेनं श्रेष्ठिनं न रमे तदा हुताशनं विशामि, इति प्रतिज्ञां कृत्वा सोद्यानभूमिकां संप्राप्ता, तत्रारामे राज्ञा समं रंत्वा उद्यानश्रियं भुक्त्वाभयाकपिले सायं स्वं स्वं गृहमुपेयतुः.

अथ साभयात्मीयां प्रतिज्ञां पूरयितुं पंडितानाम्न्या निजधात्र्याः पुरोऽवदत्, तयापि प्रोचे हे पुत्रि! त्वया साधु न मंत्रितं. त्वं धैर्यस्य शक्तिं न जानासि, एष तु धीरो वर्तते, अतश्चालयितुमशक्यः, सामान्योऽप्यन्यः श्राद्धः परस्त्रीसहोदरो भवति, एष तु महाश्राद्धो वर्तते, अतस्त्वयाऽविमृ-

श्यांगीकृतं, यतोऽसौ नित्यं गुरूपास्तिपरो धर्मध्यानैकतत्परश्च भवति. यथा मृगतृष्णां पातुं कः समर्थः? यथा शशकशृंगजिघृक्षायै कः काननं पर्यटति? तथास्य सुदर्शनस्य शीलोल्लंघनकर्मणि रूपसौभाग्यगर्वेण का प्रयत्नं चिकीर्षति? पुना राज्ञी साग्रहमाहस्म, हे मातस्त्वं श्रेष्टिनं ममांतिके एकवारं समानय? यथाहं तस्य शीलपरीक्षां करोमि, तत् श्रुत्वा पंडिताप्यूचे हे पुत्रि! त्वं स्थिरा भव? तस्यानयनोपायश्चिंतितः, यतोऽसौ पर्वदिने गृहीतपौषधः शून्यगृहादौ कायोत्सर्गं कृत्वा तिष्टति, ततदा मयाऽनेतव्यः, अन्यथा तस्य संगमो न भवति. राज्ञी प्रोचे हे पंडिते मतिमंडिते! त्वया साधूक्तं, ततः सा पंडितैकां सुदर्शनसमां प्रतिमां कामदेवस्य पर्वदिने आनयंती नयंती यामिकान् विश्वस्तान् व्यधात. इतश्च समागते चतुर्मासकचतुर्दशीदिने कौमुदीमहे राजा पटहोद्घोषपूर्वकं प्रजाः क्रीडार्थं विपिन आह्वाययामास. सुदर्शनश्रेष्टी चतुर्मासकपर्वणि राजानमनुज्ञाप्य पौषधचिकीर्षया गृह एव तस्थौ, पंडितापि राज्ञीमुवाच हे पुत्रि! यदि तव प्रतिज्ञासफलीकरणेच्छा भवति तर्हि त्वया मिषांतरं कृत्वा वने न गंतव्यं. सापि राजांतिके गत्वा मेऽद्य शीर्षं बाधत इत्युक्त्वा राजानमापृच्छ्य गृह एव तस्थौ. अहो मनिबलाः स्त्रियस्तत्कुर्वंति यदन्यैः कर्तुं न शक्यते.

अथ सुदर्शनो दिवसे देवार्चादिविधीन् निर्माय सार्द्धं रात्रिपौषधं संगृह्य निश्येकस्मिन् शून्य·
गृहे प्रतिमया तस्थौ, सापि पंडिता सायं कायोत्सर्गस्थं तं समुत्पाट्य रथे समारोप्य वस्त्रेणाच्छाद्या·
ज्ञ्यायै समार्पयत्, सेयं कामदेवस्य मूर्तिरिति विचिंत्य द्वारपालैरपि सा न स्खलिता. अथाज्ञया तं
समानीतं समालोक्यैवमवदत्, हे श्रेष्ठिंस्तवाद्य पुण्यं फलितं यद्भवतो मया सह संगमो जातः, दु·
स्तपं ते तपः फलितं, मुंच कष्टमिदं, मया सह सुदुर्लभान् भोगान् भुंक्ष्व? इत्थं सा नर्म जल्पंती।
कल्पितानल्पविक्रिया ॥ स्तनोपपीडसर्वांग—मालिलिंग स्मरातुरा ॥ १ ॥ ततः सुदर्शनस्तस्य वच·
नानि श्रुत्वा तथालिंगनादिविक्रियां दृष्ट्वा विशेषतो धर्मध्यानमध्यास्त. परं धर्मध्यानान्न चचाल. य·
तः प्रलयोत्कालवायुना सुमेरुः किं कदापि कंपते? साज्ञया राज्ञी कामोऽकवशंवदा पुनः सुदर्शनं
प्रत्याह, हे महात्मन् मन्मथेन मथ्यमाना तवाहं शरणं गता, इत्याद्यनेकवचनानि श्रुत्वापि स सु·
दर्शनः कथमपि कामुको न बभूव, तदा सा पापिष्ठा भृशं रुष्टा विमातायां विज्ञावर्यां विलक्षा स्वां·
गं नखैर्विलिखंती रुषाकुला प्राहरिकान् प्रत्याह, भो भोः प्राहरिकाः! कश्चित्पुमान् मद्रूपमोहितो
मयापमानितो ममांगे लग्नो ममांगं नखैर्विलिखतीति पूत्कारं चकार. ततः ससंभ्रमं तत्र प्राहरिकाः

क्षिप्रं समीयुः, तस्या अंगं दृष्ट्वाग्रे च शांतं प्रतिमास्थं केवलं सुदर्शनं ध्यानस्थं दृष्ट्वा प्राहरिकाश्चिंतयंति, एते विकाराः सुदर्शने न संभवंति यथा शशिनि विषोर्मयः. तत्क्षणादेव तैर्विज्ञप्तो नृपः स्वयमुपागमत्, समागत्य च तेन स्पष्टं पृष्टं, भो प्रिये! किं जातं? यज्जातं तन्निवेदय? तयोक्तं हे प्राणेश! युष्मानापृच्छ्य यावदहं स्थिता, तावदस्यां निशायामकांडकुष्मांडमिवाहं पुरोऽमुमदर्शं. एष दुष्टश्च मां पटुचाटुवाग्भिर्भृशं कामार्थं ययाचे. मया तिरस्कृतोऽसौ बलात्कारं कुर्वन् मया निषिद्धो नखैर्मां व्यलिखत्, तदा मया पूत्कृते, अबलाजने एतदेव बलं. राज्ञा चिंतितमहो किमेषा वक्ति? दुग्धे पूरकवत्सुदर्शने एतत्कार्यं को मन्यते? अथैनं सुदर्शनं पृच्छामि. ततो राज्ञा पृष्टोऽपि सुदर्शनोऽन्ययाकृपयापि किंचिन्नावोचत. यतः—

स्वजनो बोध्यमानोऽपि । सज्जनत्वं न मुंचति ॥ पीड्यमानोऽपीक्षुदंडो । मधुरत्वं न मुंचति ॥ १ ॥ पुनरपि राज्ञा विमृष्टं, चौराणां पारदारिकाणां मौनमेव लक्षणं, इति विमृश्य महीभर्तारक्षकानादिदेश. भो आरक्षका एनं गोमुखं व्याघ्रं बहुधा विडंब्य ग्रामाद्बहिः शूलिकायामधिरोपयत? असौ शुद्धांते जातापराधः, ततस्तैरारक्षकैः केशेषु धृत्वा रासभे समारोप्य वध्यनेपथ्यं कृत्वा ज-

नसमक्षं झिंझिमध्वनिपूर्वकं वध्यभूमौ निन्ये, तं तथाविधं समालोक्य नगरलोको मनसि चिंतय· त्यहो राज्ञा सुंदरं न विदधे, ईदृशे पुरुषे ईदृशं कार्यं कथं संभवति? अहो राज्ञाऽविमृष्टं कार्यं कृतं. एवं पुरलोके ब्रुवाणे तथा हाहाकारपरायणे रुदत्सु स्वजनेषु सुदर्शनस्तद्देशमतोऽग्रेऽगात, तदानीं तस्य प्रिया मनोरमानाम्नी सतीशिरोरत्नं गर्भगृहांतरे गत्वा जिनं पूजयित्वेममभिग्रहमगृहीत्, यथा—अचिंतयच्च शृण्वंतु । जिनशासनदेवताः ॥ उत्पातो निष्कलंकस्य । श्राद्धस्यायमुपस्थितः ॥ १ ॥ चेत्करिष्यथ सान्निध्यं । तदा पारयितास्म्यहं ॥ कायोत्सर्गममुं नो वा—नशनं मे कुलस्त्रियः ॥ २ ॥ शासनदेवता तस्या इमां प्रतिज्ञां श्रुत्वैवमुवाच—निर्वेदं मा कृथा वत्से । निधानस्या महे वयं ॥ इत्थं दिव्यामियं वाणी—मशृणोत प्रतिमास्थिता ॥ १ ॥ तदानीं तस्य शीलमाहात्म्यतः शासनदेवताभिर्यत्कृतं तदाह—इतश्च भ्रमयित्वा ते । शूलिकायां सुदर्शनं ॥ न्यधुरारक्षकाः स्वर्णा—म्भोजासनमभूच्च तत ॥ १ ॥ वधाय पुनरेतस्य । प्रयुक्ताः खड्गयष्टयः ॥ हारलीलायितं भेजुः । कंठे मौलौ च मौलितां ॥ २ ॥ कर्णयोः कुंडलीभावं । बाह्वोः केयूरतामगुः ॥ पादयोर्हस्तयोश्चैव । प्रोद्यत्कटकतां च ते ॥ ३ ॥

तदाश्चर्यं दृष्ट्वा ते आरक्षकाः शीघ्रं गत्वा तदाश्चर्यं नरेंद्राय ज्ञापयामासुः, राजापि तदंतिका-त्सुदर्शनवृत्तांतं श्रुत्वा महाश्चर्यपूर्णो गजस्कंधं समारुह्य द्रुतं तत्र समागतः. पश्चात्तापपरो नरेशस्तं समालिंग्यैवमभाषिष्ट, हे श्रेष्टिन्! यस्यांगरक्षणे धर्मवासना जागरूकास्ति, तस्य देवता सान्निध्यम-ध्यासते, तथा यः स्त्रीणां वचसि विश्वासं करोति, स दधिवाहनवत्पश्चात्तापभाजनं भवति. हे म-हात्मन्! मया त्वयि किमपि विरूपमाचीर्णं ममापराधं सहस्वेत्यादि कथयित्वा करिराजमारोप्य सो-त्सवं स स्वसौधे समानीतः. हर्षोत्कर्षवशाल्लोकै—स्तदेत्यूचे मनोरमे ॥ वर्ध्यसे मंगलैः कायो-त्स-र्गं पारय पारय ॥ १ ॥ राजा तं सुदर्शनं वस्त्रमाल्याभरणविलेपनैः सत्कृत्य यथावृत्तं पप्रच्छ, तदा सो-ऽपि तथ्यमचीकथत्. तत् श्रुत्वा राजाभयानिग्रहे क्रुद्धः, सुदर्शनश्च राज्ञः पादयोर्मौलिं निधायाभ-यायै अभयं ययाचे. इत्थं सुदर्शनश्रेष्टिनः शीलमहिमानं समालोक्य राजादिजनो जिनधर्मपरायणो जातः. ततो महामहेन गजस्कंधं समारोप्य राजा सुदर्शनं स्वमंदिरे प्रैषीत्. एतद् वृत्तांतमभया ज्ञा-त्वा दवरकेण स्वकंठं बध्वा व्यपद्यत, स्वकृतानि पापानि स्वात्मन्येव पतितानि, यतः—

त्रिभिर्वर्षैस्त्रिभिर्मासै—स्त्रिभिः पक्षैस्त्रिभिर्दिनैः ॥ अत्युग्रपुण्यपापाना—मिहैव फलमाप्यते

॥ १ ॥ अन्यदाधात्री पंडितानाम्नी राज्ञो भयत्रस्ता पाटलीपुरे नगरे देवदत्तागणिकांतिके गता, यतस्तादृशानां हि तादृशैः सह संयोगो युज्यते. यतः—गारस्स मिलइ धूली । धूलीमिलयस्स कत्तवारस्स ॥ सुणहस्स हड्डखंमं । सरिसा सरिसेहिं रज्जंति ॥ १ ॥ सा पंडिता तत्पुरः सुदर्शनस्य शीलं वर्णयामास. तयोक्तं यदि मम समीपे स स्वं शीलं रक्षयेत्तदासौ शीलवान्नान्यथा. अथ कतिपयवर्षांते सुदर्शनश्रेष्ठी संसाराद्विरक्तो गुर्वंतिके व्रतमग्रहीत. स साधुः क्रमेण गीतार्थो भूत्वैकाकित्वविहारेण विचरन् पाटलीपुरे गतः. तत्रान्यदा ग्रामाद्बहिर्वनांते स कायोत्सर्गेण स्थितः, केनचिन्निमित्तेन तत्र गतया पंडितया दृष्टः समुपलक्षितश्च. तया गृहे समागत्य देवदत्तायै तद्वृत्तांतो निवेदितः, तया च श्राविकीभूय वंदित्वा साग्रहं पारणामिषाद्गणिकागृहे नीतः, साधुरपि ऋजुत्वात्तत्र गतः. ततस्तया देवदत्तया कपाटं दत्वा भृशं कामार्थं प्रार्थनापूर्वकं कदर्थितः, एवं तया कदर्थितोऽपि स धर्मध्यानान्निर्मलशीलाच्च न चचालानिलै रत्नदीप इव. सायं मुक्तः पुनरसौ वने गतः, श्मशानमध्ये च मेरुवन्निश्चलः प्रतिमया तस्थौ. तदानीमपध्यानेन मृत्वाभया व्यंतरीभूता तं मुनिं दृष्ट्वाकुपत्. ततस्तया बहुधा विडंबितोऽपि स ध्यानान्न चचाल, प्रत्युत तैस्तैरनुलोमप्रतिलोमोपसर्गैः

शुक्लध्यानात्सकलकर्मक्षयं कृत्वा केवलज्ञानमासदत्. समागतैर्देवैः कृतसौवर्णकमलमध्यास्य श्रीसुदर्शनकेवली देवमनुजपर्षदि देशनां निर्ममे, यथा—अथिरेण थिरो समलेण । निम्मलो परवसेण साहीणो ॥ देहेण जइ विढप्पइ । धम्मो ता किं न पज्जत्तं ॥ १ ॥ भो भव्या एवंविधं धर्मं समासाद्य संसारसौख्यकृते धर्मे प्रमादो न विधेयः. एवंविधां धर्मदेशनां श्रुत्वा बहवो वैराग्यवंतो मोक्षैककारणं यतित्वं श्रावकत्वं च प्रतिपेदिरे. सा जयाभ्यंतर्यपि सम्यक्त्वमुररीचक्रे, देवदत्ता पंडिता च धर्मं प्रपेदे. इत्थं सुदर्शनमुनिर्विहरन् पृथिव्या—मुध्धृत्य भव्यनिवहान् भवनीरराशेः ॥ शीलप्रभावमतुलं भुवने निवेश्य । मोक्षश्रियः शिरसि शेखरतां बभार ॥ १ ॥ इति सुदर्शनश्रेष्ठि कथानकं संपूर्णं ॥ अथ सतीसमूहदृष्टांतेन शीलं वर्णयन्नाह—

॥ मूलम् ॥—सुंदरि १ सुनंद २ चिल्लणा ३ । मणोरमा ४ अंजणा ५ मिगावई य ६ ॥ जिणसासणसुपसिद्धा । महासईओ सुहं दिंतु ॥ १५ ॥ व्याख्या—सुंदरी ऋषभदेवपुत्री १. सुनंदा अभयकुमारमाता २, चिल्लणा कोणिकराजमाता ३, ते च उभे अपि श्रेणिकराजपत्न्यौ. मनोरमा सुदर्शनश्रेष्ठिपत्नी ४, अंजना पवनंजयपत्नी ५, मृगावती च शतानीकपत्नी ६, एता जिनशासने

सुप्रसिद्धाः सुविख्याता महासत्यः सुखं ददत्विति गाथार्थः. विस्तरार्थस्त्वासां कथानकादवसेयः ॥ ॥ १५ ॥ तत्रादौ सुंदरीकथा कथ्यते—

अस्यामेवावसर्पिण्यां श्रीनाभितनयः श्रीमरुदेवाकुक्षिसरसि राजहंसः श्रीऋषभदेवाधिदेवो विनीतानगर्यां सुरेंद्रस्थापितराज्यो देवराज इव राज्यमपालयत्. इंद्रेंद्राणीभ्यां विवाहिते सुमंगलासुनंदाख्ये द्वे भार्ये तस्य बभूवतुः. ताभ्यां सार्धं भोगाननुभवतः प्रभोः षट् पूर्वलक्षाण्यतिक्रांतानि. पूर्वमानं यथा, चतुरशीतिपूर्वलक्षैः पूर्वांगं, तत्तद्गुणगुणितं पूर्वं भवति. पुव्वस्स य परिमाणं । सयरं खलु वासकोडिलक्खाओ ॥ छप्पन्नं च सहस्सा । बोधव्वा वासकोडीणं ॥ १ ॥ अन्यदा सुमंगला प्रथमपत्नी मध्यरात्रौ किंचित्सुप्तजागरितेमांश्चतुर्दश महास्वप्नानद्राक्षीत्. यथा—वसह १ गय २ सीह ३ अभिसेय ४ । दाम ५ ससि ६ दिणयरं ७ झयं ८ कुंभं ९ ॥ पउमसर १० सागर ११ विमाण—भुवण १२ रयणुच्चय १३ सिहिं १४ च ॥ १ ॥ सापि तान् स्वप्नान् ज्ञानशालिने स्वामिने कथयामास. स्वामिनोक्तं हे प्रिये! तव चक्रवर्ती महान् सुतो भावी. ततः सुमंगला प्रथमं भरतब्राह्मीतिपुत्रपुत्रीयुगलं सुमुहूर्ते सुषुवे. ततः सुनंदा स्वामिनो द्वितीयपत्नी सुदिवसे सुमुहूर्ते सुंदराकृति·

बाहुबलिसुंदरीतिपुत्रपुत्रीयुग्ममसूत सद्गुरूपात्तविद्यो ज्ञानवासनामिव. पुनरेकोनपंचाशत्सुमंगला प्रथमपत्नी पुत्रयुग्मान्यजीजनत्. स्वामिनो गृहे ते पुत्राः क्रमेण वर्धतेस्म विंध्याद्रौ कलभा इव. चामीकरद्युतिः स्वामी तैर्वेष्टितः कलभैर्वेष्टितकरिराज इव रराज. ततः स्वामिना लोकव्यवहारप्रवृत्तये शिल्पशतान्युक्तानि. स्वामी द्वासप्ततिपुरुषकलाश्चतुःषष्टिस्त्रीकलाश्च भरतं पाठयामास. भरतोऽप्यन्येषां सोदराणां ताः कला अध्यजीगपत. सत्पात्रे दत्ता विद्या हि शतधा भिद्यते शालिबीजवत. ततः स्त्रीपुंसगजवाजिलक्षणान्यखिलान्यपि बाहुबलिनः स्वाम्यशिक्षयत्. स्वामिनाष्टादशापि लिपयः सव्येन पाणिना ब्राह्मीकुमार्याः शिक्षिताः, सुंदर्याश्च वामेन पाणिना शिक्षिताः. पुनर्गणितमपि शिक्षितं. क्षीणे भोग्यफले स्वामी विगलन्मोहबंधनः संसारवैराग्यं दधौ. तावल्लोकांतिकामरैः स विज्ञप्तो हे स्वामिन् लोकव्यवस्थावद्धर्मतीर्थं प्रवर्तय? तत श्रुत्वा वार्षिकं दानं दत्वा भरतस्य साम्राज्यसंपदं वितीर्य बहुलीविषये बाहुबलिं निधायान्यपुत्रेभ्योऽन्यानि राज्यानि यथोचितं दत्वा चतुर्भिः सहस्रैः समं स्वयं दीक्षामुपाददे. ततस्त्रिजगन्नाथ आर्यानार्येषु देशेषु विहरन् मौनवान् वर्षेणेक्षुरसेन सोमयशःपुत्रश्रेयांसगृहे पुण्यकारणं पारणं चक्रे. तदादितश्च भरते प्रासुकदानप्रवाहोऽभवत्. एवं भ-

गवानार्यानार्येषु देशेषु विहरन् लीलया वर्षाणां सहस्रमेकं व्यतिचक्राम. ततोऽसावयोध्यापुरोपांत पुरिमतालपुरमासदत्. तत्र शकटमुखोद्याने कृताष्टमतपसो न्यग्रोधतलासीनस्य त्रिजगद्गुरोः केवलज्ञानमुत्पन्नं. ततस्तत्र वासवैः समवसरणं चक्रे.

इतश्च भरतस्य नरेशितू राज्यं शासतो वर्षाणां सहस्रमेकं गतं. तावता यमकशमकनामानावुभौ पुरुषौ समकालं समागतौ. तत्रैको यमकनामा प्रथमेशितुः केवलोत्पत्तिमाचख्यौ. द्वितीयो भरतस्यायुधागारे चक्रोत्पत्तिमाचख्यौ. प्राणिघातैकहेतुचक्रार्चनविधिमुपेक्ष्य त्रैलोक्याभयदं नाथं नंतुं सपरिच्छदो भरतो महत्या विभूत्या मरुदेवीं पितामहीं सार्धं नीत्वा गजराजं समारुह्य स्वामिवंदनाय निर्ययौ. मार्गे देवदुंदुभिनादं श्रुत्वा समवसरणांतिके च गतैकत्वभावनायां समारूढा भगवज्जननी घनघातिकर्मक्षयात्केवलं लब्ध्वा मोक्षमगमत्. तत्क्षणादेव देवैस्तन्मरुदेव्याः शरीरं क्षीराब्धौ क्षिप्तं. अथ भरतस्तद्दुःखसमाकुलः सपरिच्छद उदग्द्वारेण समवसरणे प्रविश्य तीर्थनाथं सानंदमानमत. तत ईशानकोणे इंद्राधोसनमासीने योजितांजलौ भरतेश्वरे स्वामी सर्वभाषानुगया वाण्या देशनां चक्रे, यथा—जराधिव्याधिदौर्गत्या—दिकनक्रचक्राकुले ॥ किं सुखं प्राणिनामत्र ।

दुःखं संसारसागरे ॥ १ ॥ चातुर्गतिकसंसारं । दुःखरूपं विचार्य तत् ॥ यतध्वं खलु मोक्षाय । सर्वथा भो मनीषिणः ॥ २ ॥ स पुनर्दुर्लभः सर्व—सावद्यविरतिं विना ॥ दीयतां सर्वदुःखेभ्य—स्तामादाय जलांजलिः ॥ ३ ॥ इत्थं स्वामिदेशनां समाकर्ण्य भरतस्य पुत्राणां पंचशती दीक्षामाददे. तथा सप्तशती पौत्राणां भरताज्ञया दीक्षां जग्राह, तथा ब्राह्मी चापि संयमसाम्राज्यलीना बभूव, सुंदरी बाहुबलिना विसृष्टापि चरणार्थिनी भरतेशेन दीक्षादानतो निषिद्धा, अहो कामाशा दुर्निवारा! यत्र महानपि मुह्यते, यतः सुंदरछायां लावण्यामृतपूर्णां सुंदरीं स्त्रीरत्नकाम्यया भरतस्तदानीं स्थापयामास. भरतः श्रावकोऽभवत, सुंदरी श्राविका जाता.

एवं चतुर्विधसंघे स्थापिते भरतश्चक्रपूजाचिकीः शीघ्रमायुधागारमागमत्, तत्र चक्रं प्रदक्षिणीकृत्य नत्वा चाष्टाह्निकोत्सवं विधाय दिग्विजयाय चक्रानुगोऽचलत्, षोडशसहस्रैर्यक्षैः परिवेष्टितश्चक्रभृद्भरतः षट्खंडं भरतक्षेत्रं साधयामास. चक्रं छत्रमसिर्दंडश्चेति चत्वारि रत्नान्यायुधमंदिरे जातानि, काकिनीचर्ममणयश्चेति त्रीणि रत्नानि भरतस्य लक्ष्मीगृहेऽभवन्महामुनेर्ज्ञानदर्शनचारित्राणीव, सेनापतिर्गृहपतिः पुरोधा वर्धकी चेति चत्वारि नररत्नानि विनितापुर्यां जज्ञिरे, गजाश्वरत्ने वै-

ताव्यमूले बभूवतुः, उदग्विद्याधरश्रेण्यां स्त्रीरत्नमुदपद्यत. एवं चतुर्दशरत्नैर्भरतश्चक्री चाशोभत. एवं
षट्खंडं षष्टिवर्षसहस्रैः साधयित्वा चतुर्दशरत्ननवनिधिसमग्रैश्वर्ययुक्तः श्रीभरताधिपो विनीतायां पु·
र्यामाजगाम, ततो भरतस्य द्वादशाब्दिके राज्याभिषेके जाते स स्वकीयपरिवारं स्मर्तुं प्रावर्तत, प्र·
थमं तावन्नियुक्तैर्दर्शितां सुंदरीं प्रैक्षिष्ट, हिमसंपाततो दीनां कमलिनीमिव म्लानां कदलीमिव शु
ष्कां दिवा चंद्रकलामिव कृशां प्रम्लानरूपलावण्यामस्थिशेषतनूलतां भवांतरयातामिवान्यादृशविग्र
हां द्वितीयाचंद्रकलामिव सुंदरीं निरीक्ष्य राजा भरतः स्वनियुक्तानित्यभाषत, यथा—किं रे मम
गृहे शस्य—संपत्तिस्तादृशी न हि॥ बीजसूरपि निर्बीजा । तर्हि संभवति ध्रुवं ॥ १ ॥ किममी सूप·
कारा वा । स्वकर्मसु न कर्मठाः ॥ वृत्तिस्तेनतया तर्हि । दुरापास्या अमी अपि ॥ २ ॥ खर्जूरोत्प·
त्तिकोद्राक्षा—नालिकेरफलादिकाः ॥ सुखादिका न किं संति । दरिद्रस्येव सद्मनि ॥ ३ ॥ अथो·
द्यानेषु पादपाः किं वंध्या बभूवुः? अथवा किं कल्पपादपाः प्रार्थनाविमुखा जज्ञिरे? अथवा मम
गृहे कलशदुघा अपि धेनवः किं दुग्धं न ददति? अथवा मम गृहे किं भोज्यं नास्ति? अथवा
सरसायां रसवत्यामपि सकलभोज्यसामग्र्यां सत्यामसौ किं किंचिन्नाश्नाति? अथवा किमस्या शरीरे

कोऽपि रोगो बाधते? तथा च तत्प्रतीकारका भिषग्वराः किं निधनं गताः? अथवा मम गृहे किं दिव्यौषधयो न संति? अथवा हिमाचलोऽपि किमौषधिवंध्यो जातः? यदौषधीर्न ददाति, यदेषा सुंदरी शौनिकागारबद्धा गगीव दुर्बलाऽजनि. एतद्भरतोक्तं श्रुत्वा नियोगिनो भरतं नत्वेदमूचिरे, स्वामिंस्तव गृहे कल्पद्राविव किमपि दुर्लभं नास्ति, किंतु सर्वं संभृतमेवास्ति, परं यदादितो यूयं दिग्विजयंप्रति प्रस्थितास्तदादितः सुंदर्याचाम्लानि नित्यं कुरुते, यदादौ प्रव्रजंति सति त्वया न्यषिध्यत, तत्प्रभृति च भावतः साचाम्लतपःपरा प्रवर्तिनीव तस्थौ. तदा भरतेनोक्तं हे कल्याणि! किं त्वं तातपादांते व्रतं जिघृक्षसि? आमेति तयोक्तं. पुनर्भरतेनोक्तं हे सुंदरि! तदानीं त्वं प्रव्रजंती मयैतावंतं कालं स्थापिता, तन्ममापराधं सहस्व? धिगस्माकं मोहविलसितं. यतः प्रोन्मत्ता विषयासक्ता हिताहितमजानाना वयं राज्यसंपदि मूर्छामः, गत्वरेणामुना शरीरेण मोक्षः साध्यते, तर्हि किं न लब्धं त्वया? त्वं खलु धन्या या विषयविमुखा तातोपांते दीक्षां गृहीष्यसि. एवं भरतेनानुज्ञाता सा महासती सुंदरी तपःकृशापि हर्षमेदस्विनीव बभौ.

इतश्च नाभेयः स्वामी पृथिव्यां विहरन्नष्टापदगिरौ समियाय. निदाघोष्मतप्तानां वारिदमिव त-

त्रायातं स्वामिनं देशनां कुर्वाणं समालोक्योद्यानपालका द्रुतमागत्य चक्रिणे ज्ञापयामासुः. तेषां
सार्धद्वादशकोटीसुवर्णं नृपतिः प्रददौ. हर्षपूरितमानसो भरतः सुंदर्यंतिके गत्वा कथयति हे सुंदरि!
त्वन्मनोरथसिद्ध्ये जगद्गुरुः स्वामी समागात्. अथ भरतादेशादंतःपुरनार्यः सुंदर्या दीक्षादानाभि-
षेचनं कारयामासुः. ततो विलेपनं कृत्वा शुभ्राणि दिव्यान्यंशुकानि परिधाप्य तां महर्घ्यरत्नाभरणै-
र्भूषयामासुः. तदानीं तत्तनौ दिव्यरत्नालंकारराशयोऽनर्घ्यशीलालंकारकिंकरा इव रेजिरे. सुंदर्या
रूपसौंदर्यपुरतः सुभद्राश्रीरत्नं किंकरीव प्रतिभासते. सुंदरी शिबिकारूढा दीनेभ्यो दानं ददाना भा
द्रपदीनमेघमालेव रेजे. श्वेतातपत्रेण शोभिता धौतचामरैर्वीज्यमाना बंदिजनैः स्तूयमाना नरेंद्रैर-
नुयाता भ्रातृजायाभिरुद्गीतमंगला बालिकाभिरुत्तार्यमाणलवणा वाद्यगीतनादैर्बधिरितांबरा प्रमोदैः
पूरितमानसा सुंदरी देवसुंदरीनिभा महासती तातपादपावितमष्टापदगिरिं प्राप. अथ भरतोऽपि सु
दरीं पुरस्कृत्य भवभीयुषां प्राणिनां शरणं समवसरणं प्राप. भरतेशोऽपि भगवंतं सुंदर्या समं प्रद-
क्षिणीकृत्य नत्वा कृतांजलिरेवमवादीत्. हे नाथ! त्वं मया बहुभिः पुण्यसंचयैरद्य दृष्टोऽसि, अथ
मां सुंदरीं च तारय? सुंदरी बभाषे स्वामिन्नियत्कालं भरतेशोपरोधतो मयका चरणं नाग्राहि, स्व-

कर्मतोऽहं स्वयमेव वंचिता. मम भगिनी ब्राह्मी भ्रातृव्यास्तत्सुताश्चैते सर्वेऽपि धन्या ये नाथ तव मार्गं प्रपेदिरे. अथ हे जगद्वत्सल! मम दीक्षां देहि? संसाराद्भीताहं भवतः शरणं समागता, अतो मां तारय? तत् श्रुत्वा स्वाम्याह हे महाभागे! हे महासत्वे! साधुसाध्वित्युदीरयन् विभुः स्वयं तस्यै दीक्षां ददौ. ततः स्वामी तदनुशिष्टिसंबंधां पीयूषदेशीयां देशनामादिदेश. ततः स्वं कृतकृत्यं मन्यमानो भरतेश्वरः प्रमोदमेदुरः सुंदरीं साध्वीं नत्वाऽयोध्यायां समागमत्. सुंदर्यपि द्विधा शिक्षामादाय स्वात्मानं धन्यं मन्यमाना निरतीचारं चारित्रं विधिवत् पर्यपालयत्. सा घनघातिकर्माणि निहत्य निरवद्यतपश्चरणैः केवलज्ञानमवाप. इत्थं निर्मलशीलेन । लब्ध्वा केवलमुज्ज्वलं ॥ अष्टापदे गिरौ मोक्षं । जगाम किल सुंदरी ॥ १ ॥ इति सुंदरीकथानकं संपूर्णं ॥

अथ सुनंदादृष्टांतमाह, तथाहि—मगधदेशमंडनं कुशस्थलं नाम नगरं, तत्र प्रसेनजिन्नामा राजा राज्यं करोति. तस्मिन् कुशस्थले पुरे कदाचिदग्नेर्भयमभवत. तदा राज्ञा सर्वसभासमक्षं प्रोक्तं यद्गृहादग्निरुत्तिष्ठेत्स पुराद्बहिः स्थाप्यः. एकस्मिन् दिने सूपकारप्रमादेन राज्ञो गृहादग्निरुत्थितः. ततः प्रसेनजिद्राज्ञा चिंतितं स्वोक्तं पालयामीति. ततस्तेन स्वानि गृहाणि नगराद्बहिः स्थापितानि.

कार्ये समुत्पन्ने लोकाः परस्परं कथयंति यूयं क यास्यथ? कुतो वा समागताः? तेऽपि कथयंति व·
यं राजगृहं यास्यामो वा राजगृहात समागताः. तत्र प्रसेनजिद्राज्ञा नवं नगरं स्थापितं सौधाट्टचै·
त्यप्राकारपरिणततोरणाद्यलंकृतं राजगृहं नाम्ना. तदादितः कुशस्थलपुरस्य राजगृहमिति द्वितीयं ना·
म जातं. तस्य राज्ञो बहवः पुत्राः संति. तेष्वेकः श्रेणिको नाम बुद्ध्या सुरगुरूपमो रूपेण मन्म·
थोपमश्चासीत. मान्ये बांधवा एनं राज्यार्हं जानंत्विति धिया राज्ञा बुद्ध्या परीक्ष्य सोऽलीकमपमा·
नितः. ततो नरेश्वरोऽन्येषां कुमाराणां पृथक्पृथक् देशान् ददौ, परं श्रेणिकस्य वचनमात्रमपि न
ददौ, तर्हि देशदानादिवार्ता तु दूरेऽस्तु. राज्ञापमानितः सोऽभिमानी निःसृत्य क्रमाद्वेन्नातटपुरं प्रा·
प. तस्मिन्नगरे च स भद्राभिधश्रेष्टिनोऽट्टे प्राविशत्. श्रेणिकस्य भाग्योदयाच्च तस्य श्रेष्टिनो महान्
लाभो बभूव. तदानीं च प्रभूतक्रायकैः स श्रेष्टी व्याकुल आसीत. श्रेणिककुमारस्तदा तत्पुटपुटिका·
दिकं बध्ध्वा समर्पयत्. कुमारमाहात्म्याद्भूयिष्टं धनं चार्जयत. अहो! पुण्यवतां पुंसां श्रियः सहच·
र्यो भवंति. श्रेष्टिना श्रेणिकः पृष्टो भो महात्मंस्त्वं कस्य प्राघूर्णकोऽसि? तेनोक्तं भवतां. तत श्रु·
त्वा श्रेष्टिना चिंतितं सुनंदायोग्यो वरो मयाद्य स्वप्ने दृष्टः, स एवासौ सुनंदाभाग्येन विधिना समा·

अहं महात्मन् धन्योऽ
नीतः, अत्र च काचिदपि विचारणा न कार्या, श्रेष्ठिनैवं विचिंत्य प्रोक्तं—अहं महात्मन् धन्योऽ
स्मि । यद्भवस्यतिथिर्मम ॥ निकेतनेऽद्य मे नूनं । शुभा गंगा समागता ॥ १ ॥ ततोऽहं संवृत्य
श्रेणिकं सह नीत्वा स निजवेश्मन्यागात्. तं श्रेणिकं प्राघूर्णकं स्नपयित्वा वरवस्त्राभरणैर्भूषयित्वा
सगौरवं स वरभोज्यैर्भोजयामास. एवं तस्य श्रेष्ठिनो गृहे तिष्ठतस्तस्यान्यदा श्रेष्ठिनोक्तं हे महात्म-
न्नहं ते मम सुतां सुनंदां यच्छामि. श्रेणिकेनोक्तं भो श्रेष्ठिन्! ममाज्ञातकुलस्य त्वं कथं सुतां द-
त्से? स ऊचे भो महाभाग! मया तव गुणैः कुलं ज्ञातं. ततः श्रेष्ठ्युपरोधेन श्रेणिकः शुभेऽह्नि
सुनंदाकरमग्रहीत्. ततस्तस्य श्रेष्ठिनो गृहे स्थितस्य तया सह रममाणस्य श्रेणिकस्य सुखेन कालो
याति. तत श्रेणिकस्वरूपं राजा प्रसेनजितश्चरमुखेन सर्वं विवेद. यतः—सहस्राक्षा हि राजानो ।
भवंति चरलोचनैः ॥

अथान्यदा राज्ञः प्रसेनजितस्य महती रोगोत्पत्तिर्जाता, तेनात्मनोंतं विदन् राजा प्रसेनजितः
श्रेणिकमानेतुमौष्ट्रिकानादिशत्. भो सेवका बेन्नातटे नगरे गत्वा लेखार्पणं कृत्वा द्रुतं मत्पुत्रं श्रे-
णिकं समानयत? इत्युक्त्वा स्वहस्तलिखितं लेखं दत्वा तेनौष्ट्रिका विसृष्टाः, समागताश्च ते बेन्ना-

पितुरत्यर्तिवार्तां निशम्य पीडितः श्रेणिको लेखं वाचयामास.
तटे, ततस्तैः श्रेणिकाय लेखो दत्तः, पितुरत्यर्तिवार्तां निशम्य पीडितः श्रेणिको लेखं वाचयामास.
यथा हे वत्स ! यदि पितुराज्ञाकारकोऽसि, यदि पितुर्वत्सलोऽसि, यदि च पितुर्मिलनायोत्सुकोऽसि
तर्हि लेखं समालोक्य त्वया त्वरितं समागंतव्यं, अन्यथावयोर्मिलनं दुर्लभं दृश्यते. एवंविधं लेखं
दृष्ट्वा तातमिलनायोत्सुकः स सुनंदां स्वां प्रियां मिष्टवाक्यैः संबोधयामास. तयोक्तं हे स्वामिन् ग·
र्भवतीं मां मुक्त्वा कथं यासि? श्रेणिकेनोक्तमिमान्यक्षराणि गृहाण? यदि ममात्मजो भविष्यति
तर्हि त्वरितमेव स ममांतिकं समेष्यतीत्युक्त्वा तान्यक्षराणि तत्करे दत्वा ततः श्रेणिक उष्ट्रीमारुह्य
तैः सार्धं प्रतस्थे. अक्षराणि यथा—' वयं पांडुरकुड्यां गोपाला राजगृहे पुरे निवसामः ' इति.
मदर्शितो मम तातस्य भृशं रोगो माभूदिति भिया स्तोकैरेव दिनैः स राजगृहं पुरं समाययौ. तं
श्रेणिकं दृष्ट्वा हृष्टो राजा हर्षाश्रुयुतो विमलसुवर्णकलशांबुभिः साम्राज्येऽभ्यषिंचत. तद्दिनादारभ्य
संतुष्टो राजा श्रीपार्श्वजिनं स्मरन्नमस्कारमहामंत्रं च हृदये परावर्तयंश्चतुःशरणं मनसा ध्यायन्ननशने·
न विपद्य त्रिदिवं ययौ. श्रेणिको राजा तातस्य मृतकार्याणि कृत्वा गतशोको विश्वंभराभारं बभार,
तेन पूर्वं या गर्भवती सुनंदा मुक्ता, तस्यास्तृतीये मासे गर्भानुभावतोऽभयदानदोहदो बभूव, रा·

जानमनुज्ञाप्य भद्रश्रेष्ठिना नगरेऽमारिपटहो वादितः, पूर्णे काले सुनंदा सुतमसूत प्राची सूर्यबिंबमिव, ततः कुलाचारानुरूपं निवर्तितेऽशुचिजातकर्मणि समागते च द्वादशे दिवसे मातामहोऽभयदानदोहदादभयकुमार इति तस्य नाम विदधे, सोऽभयकुमारः क्रमेण वृद्धिं गतः स्तोकैरेव दिवसैः सकलाः कलाः पपाठ. ततो द्वासप्ततिकलापारगः स सुरगुरुरिव सर्वविद्यापारगो जातः. कोऽपि सवयाः कलहे तं कोपादित्यतर्जयत्, अहो त्वं किं जल्पसि? यस्य पितापि न ज्ञायते, अभयस्तमूचे मम पिता भद्रो वर्तते, सवयसोक्तमेष तु तव मातामहो न तु पिता. तत् श्रुत्वाभयो मातुरंतिके गत्वा तांप्रत्याह हे मातर्मम पिता कुत्रास्ति? मात्रोक्तमेष भद्रश्रेष्ठी तव पिता. पुत्रेणोक्तमेष भद्रस्तु तव पिता. मम पिता कुत्रास्ति? तत् श्रुत्वा निस्तोकशोकव्याकुला सैवमवोचत, हे वत्स! तव जनको देशांतरादागतो मां परिणीतवान्, मया सह क्रीडां कुर्वतो यावता त्वं गर्भेऽभूत्तावता केचिदौष्ट्रिकाः समागताः, तै रहः किंचिदुक्तं. ततस्तैः सहौष्ट्रीमारूढः स एतान्यक्षराणि मम दत्वा क्वचिदप्यगात्. मया न ज्ञायते तव पिता कुतः समागात्? कुत्र गतश्चेत्युक्त्वा तया बाढस्वरेण रुदितं, पुत्रेणोक्तं हे मातस्त्वं किं रोदिषि? धीरा भव? तान्यक्षराणि च दर्शय? पश्यामि च तन्मध्ये कि-

मस्ति लिखितं? तया तत्पत्रं दर्शितं, अन्नयस्तद्वाचयित्वा प्रोवाच हे मातस्त्वं चिंतां मा कुरु? मम पिता राजगृहनगराधीशो वर्तते, अतः पितुर्मिलनायावां तत्र गछावः, मात्रोक्तमेवं नवतु. ततः स श्रेष्ठिनमापृच्छ्य मात्रा सह सार्थसामग्रीसंयुतो मार्गेऽचलत्. अविछिन्नप्रयाणैः स्तोकैरेव दिनैश्च स राजगृहासन्नं समागत्य सार्थं बहिरुद्याने निवेशयामास, तत्र सपरिछदां मातरं मुक्त्वा स्वयं स्वल्प· परिवारो नगरमध्ये प्राविशत.

इतस्तेन श्रेणिकेन राज्ञा पंचशतान्येकोनानि मंत्रिणां मेलितानि, परं पंचशतीं पूर्णीकर्तुं लोके कंचिदुत्कृष्टं पुरुषं स गवेषयामास. ततस्तत्परीक्षार्थं श्रेणिको राजा शुष्ककूपे निजोर्मिकां प्र· चिक्षेप, ततोऽसौ लोकानित्यादिशद्यस्तटस्थितः पुमानिमामूर्मिकामादास्यते, स मम सर्वमंत्रिमुख्यो नविष्यति. इतोऽनयकुमारः सपरिवारस्तत्कूपसमीपे समागतः, तत्तथाविधं स्वरूपं च ज्ञात्वा कुमारे· णोक्तं नो नो लोका अत्र किं दुष्करं वर्तते? अत्र स्थितेनैषा किं न गृह्यते? लोकैरूचे त्वमेव गृहाणेमां? मंत्रिधुर्यतां चांगीकुरु? ततोऽनयकुमारः कूपकंठस्थितः कूपमध्यगां मुद्रिकां गोमयपिंडे· न जघान, तदुपरि च ज्वलितं तृणपूलकं प्रक्षिप्य तद्गोमयं सद्यः संशोषयामास, ततः सुनंदानंदनः

तूर्णं वारिणा तं कूपमाकंठमपूरयत, ततस्तं शुष्कं गोमयपिंडं तरंतमाददे, तद्गोमयपिंडात्तां मुद्रिकां चाचकर्ष, तस्मिन् स्वरूपे आरक्षकैर्विज्ञप्ते जातविस्मयो नृपोऽभयकुमारमात्मसन्निधौ द्रागाजुहाव, तं च श्रेणिकः पुत्रप्रतिपत्त्या सस्वजे, यतोऽज्ञायमानोऽपि बंधुर्मनो मोदते. ततः श्रेणिकभूभुजा पृष्टं भो महात्मंस्त्वं कुतः समागतोऽसि? अभयोऽवदत् स्वामिन्नहं बेन्नातटपुरादागतोऽस्मि. राज्ञोक्तं हे भद्र! किं तत्र भद्रनामा श्रेष्ठ्यस्ति? तस्य सुनंदानाम्नी नंदना चाप्यस्ति? तेनोक्तं सम्यगस्त्येव, भूयोऽपि भूपतिः प्रोचे तया गर्भवत्या किं जातं? अभयेनोक्तं स्वामिंस्तया पुत्रो जातः, राज्ञोक्तं स कीदृशः? किंरूपः किं गुणश्चास्तीत्युक्तेऽभय उवाच स एवाहं स्वामिन्नस्मि. तमेव च मां जानीहि? ततस्तं बालं विशेषतः समालिंग्य साश्रुनेत्रो नृपस्तमंकमारोप्य मूर्धनि चाघ्रायात्युग्रस्नेहाद् दृगंभसाऽसिंचत, अहो पुत्रस्नेहो महान्! येनेदृशा राजानोऽपि पुत्रप्रेम्णि मुह्यंति, राज्ञा पृष्टं वत्सास्ति ते मातुः कुशलं? तदानीं बद्धांजलिपुटोऽभयो वक्ति, यथा—अनुस्मरंती भृंगीव। त्वत्पदांभोजसंगमं ॥ स्वामिन्नायुष्मती मेऽम्बा। बाह्योद्यानेऽस्ति संप्रति ॥ १ ॥ तत् श्रुत्वाऽमंदानंदो राजा प्रियां समानेतुं सर्वसामग्र्या सममभयं प्रैषीत्, पश्चात्स्वयं सन्मुखं ययौ. राज्ञा तत्र सुनंदा दृष्टा, कथं-

भूता? शिथिलीभूतवलया। कपोलल्लुलितालका ॥ अनंजनाक्षी कबरी—धारिणी मलिनांशुका ॥ ॥ १ ॥ पुनः कृशशरीरा द्वितीयेंदुकलातुल्या च. एवंविधां स्वां प्रियां समालोक्य राजा शोकाकुलो बभूव. अहो! ममैषा प्रिया मम विरहे ईदृशी दृश्यते. ततः सा सुनंदा भर्तृसंयोगे महानंदा जाता, राज्ञोऽभिमुखी च समुत्थाय विनयावनम्रा राजानमानमत्.

ततो राजा तां सुनंदां राज्ञीं स्वकरे धृत्वा सुखासनासीनां कृत्वा स्वनिकेतनं नीत्वा पट्टराज्ञीपदेऽकार्षीत् सीतामिव रघूद्वहः. ततः श्रेणिको राजाभयाय राज्येन सार्धं स्वसुः पुत्रीं ददौ, तथा मंत्रिष्वपि धुर्यतां ददौ. अभयोऽपि स्वस्य पितरि भक्तितः पदातिपरमाणुतामन्वते, दुःसाध्यान् भूभुजश्च साधयामास. स श्रेणिकतनयोऽभयश्चतुर्बुद्धिनायकः श्रेणिकराज्याधिष्टायको बुद्धिबलाज्जनकस्य निष्कंटकं राज्यं कारयामास. अथैकदा शिशिरर्तौ श्रेणिकश्चेल्लणापट्टराज्ञ्या सार्धं रथस्थितोऽपराह्णे वीरसमवसरणे स्वामिनं वंदितुमभ्यगात. स्वामिनो देशनां च श्रुत्वा भगवंतं वंदित्वा स्वगृहं प्रति प्रत्यावृत्तौ तौ दंपती मार्गे जलोपांते प्रतिमास्थितमेकं श्रमणं ददृशतुः. ततस्तौ दंपती सीतपरीषहान्वितं तं मुनिं ववंदाते. तं क्षमाश्रमणं भक्त्या वंदित्वा पुण्यवार्ताः प्रपंचयन् प्रियायुतो रा-

जा निर्दग्धागुरुकर्पूरधूपधूमांधकारिते निजवासागारे समाययौ. तत्र स चेल्लणया देव्या समं रंत्वा भोग्यभोगान् भुक्त्वा तया सह शयनीये सुखं सुष्वाप.

इतश्चेल्लणायाः पाणिपल्लवः प्रच्छादनवस्त्राद्बहिर्निर्गतः, तेन तस्याः सुवर्णकंकणे शितलीभूते. शीतवेदनया चेल्लणा प्राबुध्यत. कृतसीत्कारा चेल्लणा निजं पाणिकमलं प्रच्छदांतर्न्यधात्. तदा निरुत्तरीयमप्रावृतं प्रतिमास्थितं तं महामुनिं स्मृत्वा चेल्लणोचे हा स कथं भविष्यति? एवं तस्य मुनेः शीतवेदनां स्मृत्वा सा निद्रां नाससाद. जागरितो राजा तद्वचः श्रुत्वा चेतस्येवं चिंतयामास, नूनमस्याः कोऽप्यन्यः पुमान् रिंसितो भविष्यति. तस्य शीतार्त्तिसंभावनयेयं वारंवारमनुशोचति. अहो! एषा दुःशीला, अनया किं क्रियते? एवं मनसा विचिंत्य प्रभातेऽभयमाहूय स इत्यूचे, भो अभय! सर्वा भवन्मातरो दुराचारदूषिताः संति, तेन समस्तमप्यंतःपुरं ज्वालय? मातृमोहान्मदुक्तवचनविपरीतो मास्मभूः. चंडशासनः श्रेणिकोऽभयं पुत्रमित्यादिश्यार्हद्भट्टारकं वीरस्वामिनं वंदितुं ययौ. अभयेन चिंतितं तातेनाविमृश्य प्रोक्तं, तर्ह्यहं तत्कार्यं कथं करोमीत्यादि विचिंत्यैकां महतीं गजशालां स तृणकाष्टैर्भृतां कृत्वा ज्वालयामास. नगरे चांतःपुरं ज्वालितमित्याघोषणं कृत्वा स स्व-

यं स्वामिनं नंतुं चलितः. इतश्च श्रेणिकः स्वामिनं नत्वापृच्छत्, हे भगवन् मम पत्नी चेल्लणा कि-मेकपत्नी अनेकपत्नी वा? स्वाम्याख्यत्ते धर्मपत्नी चेल्लणा महासती, तामन्यथा मास्मशंकिष्ठाः, ए-षा हि शीलालंकारशालिनी. इदं वीरवाक्यं श्रेणिकः श्रुत्वा पश्चात्तापपरो वीरं नत्वा नगरंप्रति द-धावे. अभयस्तु तातवचनं कृत्वा मार्गे तस्य सम्मुखं मिलितः. राजानं नत्वा प्रांजलिश्च स सर्वं व्य-जिज्ञपत्. राजा प्रोवाच रे पाप! निजमातृजनं दग्ध्वा त्वं किमद्यापि जीवसि? तस्मिन् प्रदीपने त्वं किं न प्रविष्टः? अभयेनोक्तं हे देव! भगवता श्रीवीरेण पतंगमरणं नोक्तं, अतोऽहं भवदाज्ञया संयमं समादास्ये. राज्ञोक्तं याहि? व्रतं गृहाण? तामाज्ञां लात्वाभयो बभाषे, हे तात! मया मा-तरो रक्षिताः, न तु ज्वालिताः, किंतु भवदाज्ञां कर्तुं मयैका जीर्णा करिकुटी ज्वालिता, तेन वा-क्येन रंजितो भूपोऽभयंप्रत्यूचे त्वं मम सत्पुत्रोऽसि, यत्त्वया मम कुले नारीहिंसाकलंको नानीतः, त्वं धन्योऽतो मम संतोषकृते राज्यं गृहाण? अभयेनोक्तमथाहं दीक्षां समादास्ये, हे ताताहमभयः पुनर्भवान् सभयोऽस्ति, भवदाज्ञयाऽभयदं श्रीवीरं श्रयामि, मम राज्ये नालमभिमानसुखदेन, यतः संतोषसाराणि सौख्यानि महर्षय आहुः—

सन्निधौ निधयस्तस्य । कामगव्यनुगामिनी ॥ अमराः किंकरायंते । संतोषो यस्य भूषणम् ॥ ॥ १ ॥ एवं बहुधा प्रोच्यमानोऽप्यभयो यदा राज्यं नाग्रहीत्तदा राज्ञा श्रेणिकेनाभयस्य राज्याभिषेकवद्दीक्षामहामहश्चक्रे. ततोऽभयः संसारभयभीतो मात्रा सुनंदया समं श्रीवीरपदांतिके दीक्षां स्वीचक्रे. तयोर्दीक्षां दत्वा श्रीवीरस्ततश्चलितो भव्यान् प्रतिबोधयन् वसुंधरायां विजहार. अथाभयो महामुनिः सुनंदाजननी चेति द्वावप्यत्युग्रं संयमं प्रपाल्य मृत्वा सर्वार्थसिद्धविमाने देवावभूतां, ततश्च्युत्वा मनुष्यभवं प्राप्य पुनः संयमं लब्ध्वा द्वावपि केवलं प्रपाल्य मोक्षं यास्यतः. अत्राभयकुमारसंबंधः सुनंदाजनन्यत्वात्सुनंदावैराग्यकारणत्वाच्चोक्तः, इदं शुभ्रं सुनंदाया—श्चरित्रं द्योतितं मया ॥ यस्या अभयनामासीत् । पुत्रः प्रीतिकरो जने ॥ १ ॥ इति श्रीसुनंदाकथानकं समाप्तं ॥ अथ चेल्लणादृष्टांतः कथ्यते, तथाहि—

इहास्मिन् जंबूद्वीपे दक्षिणार्धभरते श्रिया विशाला वैशालीनामनगर्यस्ति. तस्यां नगर्यामाखंडल इवाखंमशासनश्चेटकनामा महाराजोऽस्ति, तस्याष्टादशगणराजानो महाराजत्वात सेवां कुर्वंति, स महाश्रावकः सम्यक्त्वमूलद्वादशव्रतधरश्चेटीकृतानेकभूपालभुवं पालयन् राज्यं करोति, तस्य पृथ-

ग्पृथग् राज्ञीभवाः सप्त कन्यका बभूवुः, तेषाममूनि नामानि, यथा—प्रभावती पद्मावती । मृगाव· ती शिवापि च ॥ ज्येष्टा तथैव सुज्येष्टा । चेल्लणा चेति ताः क्रमात् ॥ १ ॥ चेटकनृपः सुश्रावको· ऽन्यविवाहनियमं कृत्वा स्वां कन्यामपि कस्मैचिन्न ददौ, उदासीन इव च तस्थौ. तन्मातरो राजान· मापृच्छ्यानुरूपवराणां स्वां कन्यां प्रददुः. तद्यथा—प्रभावतीं वीतभयपत्तनेश्वरोदायननृपतेः १, प· द्मावतीं चंपेशदधिवाहनभूपतेः २, मृगावतीं कौशांबीशशतानीकनृपतेः ३, शिवामुज्जयिनीशचंड प्रद्योतनृपतेः ४, ज्येष्टां कुंभपुराधीशस्य श्रीवीरज्येष्टभ्रातृनंदिवर्धननृपतेः ५, सुज्येष्टा ६ चिल्लणा ७ चैते द्वे कुमार्यावेव तस्थतुः. ते द्वे दिव्याकारधारिण्यौ वस्त्राभूषणभूषिते देव्याविव विरेजतुः. ते उभे कलाकलापकुशले लक्ष्मीसरस्वत्याविव परस्परं रेमाते. तथा ते सममेव धर्मं शुश्रुवतुः, एका· त्मिके इव च ते द्वे दृश्येते. अन्येद्युस्ते द्वे कन्यके यावदंतःपुरे रेमाते तावदेका स्थविरा तापसी शौचमूलं धर्मं कन्यांतःपुरे समाचख्यौ. सुज्येष्टा तया समं विवादं कृत्वा शौचमूलं धर्मं निराकरोत. ततो निरुत्तरीभूता सा तापसी दासीभिर्मुखमर्कटिकाभिर्हसित्वा कचेषु धृत्वा गृहाद्बहिर्निष्कासिता. यांती तापसी दध्यावहो एषा वैदुष्यगर्विता मां तिरस्करोति. अतोऽहमेनां भूयसीषु सपत्नीषु दुःख·

पात्रीकरोमि. ततः सा समग्रकौशल्येन सुज्येष्टारूपं पटे लिखित्वा राजगृहे पुरे गत्वा श्रेणिकाय दर्शयामास. राजगृहाधीशो भृशं मोहितस्तद्रूपमवर्णयत्, यथा—श्यामा यौवनशालिनी मधुरवाक् सौभाग्यभाग्योदया । कर्णांतायतलोचनातिचतुरा प्रागल्भ्यगर्वान्विता ॥ रम्या बालमरालमंथरग-तिर्मत्तेभकुंभस्तनी । बिंबोष्ठी परिपूर्णचंद्रवदना सा स्त्री कथं प्राप्यते ॥ २ ॥ अहोऽस्याः केशपाशैः कलापिनां कलापा दासत्वं यांति! अहोऽस्या मनोज्ञं वक्त्रं चंद्रबिंबोपमं! अहोऽस्या कट्या निर्जितः केसरी वने बभ्राम! अहो सौंदर्यमहो लावण्यमहोऽस्याः सर्वं रम्यं! अस्याः शरीरे रम्या-तिरेकं विना किमपि नास्ति, इत्यादि तद्रूपं वर्णयित्वा तापसीं पृच्छति हे महाभागे! कैषा स्त्रीमत-ल्लिका? अस्मादृशां मोहोत्पादनार्थं त्वयात्मविनोदार्थं वा किं स्वयं लिखिता लिखापिता वा? अ-थवैषा किं सुरी वा किन्नरी वा विद्याधरी वा राजकन्या वा? चित्रस्थैषास्मादृशां मनोमोहमुत्पादय-ति. सा तु प्रत्यक्षा कीदृशी भविष्यति? किंचैषा कनी केनापि पुंसा किं पाणिगृहीता? तापसी ब-भाषे एषा हैहयान्वयजा विशालाधिपतेश्चेटकनृपस्य पुत्री सुज्येष्टेति, मया चात्मविनोदार्थमियं किं-चिदाकारमात्रतो लिखिता, न तु यथास्था लिखिता, येन विधिनोत्पादिता सोऽपि विधिस्तां यथा-

स्थां लेखितुं न शशाक, तर्हि काहं? हे राजेंद्र! त्वयि सत्यपि चेदस्या अन्यः पतिर्भविष्यति त-
र्हि त्वं तृतीयपुरुषार्थेन स्वयं वंचितः, तत् श्रुत्वा हर्षपूरपूरितः श्रेणिकस्तापसीं विसृज्य पद्मौ विधा-
य वैशाल्यां यियासुरिव तां स्मरंस्तस्थौ. एकस्मिन् दिने राजगृहेश्वरः सुज्येष्ठाप्रार्थनायै शिक्षां दत्वा
चेटकनृपतेः समीपे दूतं प्रेषयामास, दूतोऽपि सद्यो वैशाल्यां गत्वा चेटकं नत्वा श्रेणिकवाचिकमु-
वाच, हे राजेंद्र! मत्स्वामी मगधाधिपस्त्वत्तः सुज्येष्ठां कन्यां याचते, यतो महतामपि कन्याप्रार्थनं
न लज्जायै स्यात्, चेटकोऽप्यब्रवीद्भो दूत! तव प्रभुरनात्मज्ञोऽस्ति, यतो बाहीककुलजो हयवंशजां
कन्यां वांछन् किं न लज्जते? समानकुलयोरेव विवाहो भवति, नान्ययोः, अतोऽहं श्रेणिकाय क-
न्यां नहि दास्यामि, त्वं स्वस्थानं याहि? मा विलंबं विधेहि? दूतेन गत्वा चेटकोक्तं सर्वं निवेदि-
तं, तत श्रुत्वा श्रेणिकभूपतिर्भृशं खेदमासादयामासारिभिर्जितः सुभट इव. समीपस्थेनाभयेनोक्तं
हे तात! माशोचीः, अहं भवतः समीहितं करिष्ये. ततो मतिसागरोऽभयः स्वगृहे गत्वा फलके म-
गधेशितूरूपमलिखत्, ततः स्वयमेव गुटिकाप्रयोगेण वर्णरूपस्वरभेदं विधाय वणिग्वेषं गृहीत्वा स
वैशालीं नगरीं समाययौ, उपचेटकराजांतःपुरमापणं चाग्रहीत, तत्रांतःपुरचेटिकानामभयः क्रेतव्यम-

धिकं ददौ. एवं तस्य तान्निर्भृशं व्यापारोऽभूत्.

एकस्मिन् दिनेऽभयः तद्रूपं पट्टे लिखितं वारंवारं समालोकयन् दासीभिः पृष्टः कस्येदं रूपं? अभयेनोक्तं मत्स्वामिनः श्रेणिकस्येदं, मया किंचिन्मात्रं विनोदेनैव लिखितं, परं यादृग्रूपं वर्तते, तादृक्केनापि लिखितुं न शक्यते, दास्योऽपि सुज्येष्ठांतिके गत्वा पट्टे यादृक् श्रेणिकरूपं दृष्टं, तादृग्रूपं सविशेषतोऽवर्णयन्. ततः सुज्येष्ठा सखीप्रायां ज्येष्ठदासीं समादिशत हे सखि! तत्पट्टमत्रानय? यतो मम महत्कौतुकं वर्तते, श्रेणिकरूपं पश्यामि कीदृशं तदस्तीति? ततः सा स्थविरादास्यभयात्तं पट्टमादाय स्वस्वामिन्यै चादर्शयत्, श्रेणिकरूपं पट्टे लिखितं दृष्ट्वा तद्रूपमोहिता निष्पंदनेत्रनलिना योगिनीव लयं ययौ, क्षणं स्थित्वा सा तां निजसखीं जगौ हे सखि! यद्येष मम भर्ता न भवति, तदाहमधन्या, धिग्मम जीवितं, यद्येष पतिर्न लभ्यते तर्हि जीवितेन किं? यद्येष मम पतिर्न स्यात्तदा मे हृदयं पचेलिमाचिर्भटिकेव द्विधा स्यान्नात्र संदेहः, हे भद्रेऽत्र क उपायो येनैष संयोगो भवति, सावोचत् स्वामिन्येष्वर्थेषु स एव वणिग्शरणं, कुमार्योक्तं हे सखि! मत्कार्यधुर्ये! मदर्थं तं प्रसादय? ततः सा दास्यभयांतिके गत्वा तं प्रसादयामास, तयाभ्यर्थिनोऽभयोऽप्यधात् हे

सुंदरि! स्तोकदिनमध्ये त्वत्स्वामिन्या मनोरथं पूरयिष्ये. त्वं स्वस्था भव? एतन्मम वाचिकं तव
स्वामिन्यग्रे निवेदयित्वा तोषय? अहं तव स्वामिनीकृते सुरंगां खानयिष्यामि, तया सुरंगया च
श्रेणिकोऽत्र समेष्यति, तदा तव स्वामिन्या तद्रथोऽधिष्ठेयो यथा—स्थानेऽमुष्मिन् दिनेऽमुष्मिन् ।
क्षणेऽमुष्मिन् सुरंगया ॥ राजैष्यतीति संकेतं । तन्मुखेनाभयो ददौ ॥ १ ॥ एवं सा दासी सुज्येष्ठां
समाख्याय तां च संतोष्याभयांतिकमागत्यैवमब्रवीत् हे अभय! तव वचः प्रमाणं. श्रेणिकेन सह
मम स्वामिनी समेष्यतीत्युक्त्वा सा दासी पुनरंतःपुरं ययौ, ततस्थोऽभयो गूढां सुरंगां कृत्वा पूर्वोक्त-
कथाख्यानपूर्वकं स्वपितरमाह्वयत.

अथान्यदा निर्णीते दिवसे श्रेणिको द्वात्रिंशता सुलसासुतैः सार्धं सुरंगाद्वारसीमनि समागा-
त्, यथा—रथस्थैः सुलसापुत्रै—रन्वितोऽथ रथस्थितः ॥ चक्रीव वैताढ्यगुहां । सुरंगां श्रेणिकोऽ-
विशत् ॥ १ ॥ अथ सुरंगाया बहिर्निर्गतं श्रेणिकं सुज्येष्ठा चित्रपट्टानुसारेण समुपलक्ष्य मुमुदे.
ततः सुज्येष्ठा मूलतः स्वं सर्वं वृत्तांतं चेल्लणाग्रे समाख्याय गमनाय चेल्लणां पप्रच्छ. तयोक्तमहमपि
त्वया सह समेष्यामि, त्वद्दते न हि स्थास्यामि. ततः सुज्येष्ठा चेल्लणामपि रथे समारोपयत्, स्वयं

च द्रुतं रत्नकरंडकं समानेतुमगात्. तदानीं सुलसापुत्राः श्रेणिकपार्थिवमूचुः स्वामिन् वैरिवेश्मनि सुचिरं स्थातुं न युज्यते. ततो राजा चेल्लणामादाय सुलसासुतैः प्रेरितः सुरंगयैव व्याघुट्य यथा-यातस्तथा गतः. अथ रत्नकरंडिकां समादाय यावता सुज्येष्टा समागता तावन्नापश्यत श्रेणिकं चे-ल्लणां च. तदाऽपूर्णकामत्वाद्भगिनीहरणाच्च संखेदिता सुज्येष्टा नादं पूचक्रे, भो भोः सेवकाः! द्रुतं धावत? अहो! अहं मुपितास्मि. चौरेण चेल्लणा ह्रियते. अथ चेटकं सन्नह्यंतं दृष्ट्वा वीरंगको रथी चेटकराजंप्रत्युवाच, हे नाथ मयि सेवके सति तव कोऽयमाक्षेपः! ततो वीरंगको युद्धाय सज्जीभू-य कन्याप्रत्याहरणाय सुरंगाद्वारमभ्यागात. सुरंगाद्वारमार्गेण गच्छतश्च तान् सर्वान् सुलसासुतान् वी-रंगको रथी महाबाहुरेकेनेषुणावधीत्. सुरंगायाः संकीर्णत्वाद्यावत्स तद्रथानपसारयन् दूरेऽकरोत्ताव-न्मगधाधिपश्चेल्लणामादाय दूरे गतः. प्रत्यावृत्तश्च वीरंगकस्तमखिलं वृत्तांतं चेटकाय राज्ञे व्यजिज्ञप-त. दुहितुर्हरणाद् द्वात्रिंशद्रथिकानां वधाच्च चेटको युगपद्रोषतोषाभ्यां समाकुलो बभूव. तदानीं सु-ज्येष्टा तान् सुलसासुतांश्चेल्लणाकृते मृतान् श्रुत्वा विषयविपाकान् विरसान् ज्ञात्वा श्रीवीरदेशनां श्रु-त्वा विशेषतो विषयविरक्ता चंदनार्यायाः समीपे प्रव्रज्यामंगीचक्रे. श्रेणिको मगधाधिपश्चेल्लणां सु-

ज्येष्ठेत्यभ्यालपत, तदानीं चेल्लणाकथयत् हे नाथ! सुज्येष्ठा न समागता. किंत्वहं कनिष्ठा चेल्लणानाम्नी, श्रेणिको व्याजहार हे सुभ्रु! त्वमपि मम सुज्येष्ठा, यतस्त्वमपि खलु न हीयसे. चेल्लणा पतिलाभेन हर्षिता भगिनीवंचनेन च दुःखिता हर्षशोकाभ्यां समाकुला श्रेणिकेन समं यानारूढा द्रुतं स्वनगरं प्राप. श्रेणिकश्चेल्लणां गांधर्वविवाहेन परिणीय नागसुलसयोर्गृहे गत्वा तत्सुतान् मृतानाचख्यौ. तौ दंपती सुतोदंतं नृपात् श्रुत्वा मुक्तकंठं रुरुदतुः. रे दैव! त्वया निष्करुणेन मम सुताः समकालं कथं हृताः? रे कृतांत निर्घृण! सर्वान् हरतस्तव किं दया नोत्पन्ना? एवं तौ तारस्वरं रुदंतौ निवार्य तत्वविदभयो बोधयामास. ततः श्रेणिकोऽभयकुमारसहितः स्ववेश्मनि समागात्. ततश्चेल्लणादेव्या समं मगधेश्वरो निर्विघ्नं भोगान् बुभुजे पौलोम्या पुरंदर इव.

इतश्चौष्ट्रिकाख्यः तापसो व्यंतरायुः परिपूर्य चेल्लणायाः कुक्षौ पुत्रत्वेनावततार. तद्दुष्टगर्भदोषेण पतिमांसास्वादने चेल्लणाया दोहदोऽभवत. पतिभक्ता चेल्लणा कस्यापि तं दोहदं नाख्यत्. अपूर्णे दोहदे सा राज्ञी दिवेंदुवत्क्षीयतेस्म. ततः सा चेल्लणा दुष्टगर्भत्वाद् दुर्दोहदविरक्ता पापमप्युररीकृत्य गर्भपातनविषये बहूनुपायानकरोत. तथापि स पापगर्भो नापतत. ततस्तां परिम्लानमुखीं प्रि-

यांप्रति मधुरया गिरा राजोचे, हे सुंदरि! किं तवाज्ञा केनापि खंडिता? अथवा मया तव विषये किमपि विरूपमाचीर्णं? अथवा त्वया कोऽपि दुःस्वप्नो दृष्टः? अथवा त्वं किं जग्नकामासि? इत्यादि बहूक्त्वा चेल्लणा कथंचन बजाषे. स्वामिन् मम गर्जानुजावतो दुःपूरो दुष्टो दोहद जत्पन्नो यदहं जर्तृमांसं जक्षयामीति. स च दोहदः कथं वक्तुं शक्यते? तेनापूर्यमाणे च दोहदेऽहं कृशास्मि. राज्ञोक्तं त्वं चिंतां मा विधेहि? तवाहं दोहदं पूरयिष्यामि. इत्युक्त्वा बहुमानपूर्वकमजयकुमारमाहूय श्रेणिकोऽजाषत, हे पुत्र! तव मातुश्चेल्लणाया मम मांसजक्षणदोहदो जातः, स च कथं पूर्यते? इमामेव चिंतामहं करोमि. अजयेनोक्तं हे तात! त्वं चिंतां मा विधेहि? एतत्सर्वमहं करिष्ये. इत्युक्त्वा तेनाजयेन श्रेणिकस्योदरे शशकजांगलं चर्माच्छादितं बद्धं, ततोऽसौ तमुत्तानमशाययत्, यथा—श्रेणिकस्यानुज्ञया च। ततो रहसि चेल्लणा॥ जघास मांसं निर्लज्जा। रक्षसामिव देवता ॥ १ ॥ तस्यां मांसं च खादंत्या—माक्रंदच्च महीपतिः॥ कपटेन तदा सद्यो—ऽसावमूर्छन्मुहुर्मुहुः ॥ २ ॥ चिंतयंत्याः पतिं तस्या—श्चकंपे हृदयं क्षणात्॥ गर्भं पुनश्चिंतयंत्याः। क्षणादुल्लसति तथा ॥ ३ ॥ एवमजयकुमारेण चेल्लणा पूर्णदोहदा चक्रे. ततश्चेल्लणा प्रकृतिं प्राप्ता मनस्येवमचिंतय-

त, अहो! मया पापिन्या किमिदं कृतं? अथ किं भविष्यति? राजा च कथं जीविष्यति? इत्यादि विलापान् वितन्वाना साभयेन निवारिता, हे मातस्त्वं चिंतां मा विधेहि? मत्तातस्य क्षेममस्ति. सां प्रतमहं तव राजानं दर्शयामीत्युक्त्वाभयो राजानं सज्जीकृत्य चेल्लणाग्रे समानयत्. हृष्टा राज्ञी रा जानमानमत, कुशलं चापृछत.

अथ तुष्टा चेल्लणा सुखेनैव तं गर्भं परिवहति. गतेषु नवमासेषु चेटकनंदना नंदनं सुषुवे मलयोर्वी विषवृक्षमिव. ततः सा दासीमादिदेशैष दारकः पापात्मा पन्नगवत्कापि दूरे त्याज्यः. दास्यपि तं बालकं गृहीत्वाशोकवनं गत्वा पर्यत्यजत्. तत्र तं बालकं त्यक्त्वा दास्यायांती महीभुजा पृष्टा त्वं क्व गतासीरिति. दास्योक्तं राज्ञ्या दत्तं बालं त्यक्त्वा समागता. तन्निशम्य तत्र गतो राजा तं बालकं समादाय चेल्लणांतिके गतः, चेल्लणां च प्रोचे, हे कुलोत्पन्ने! हे विवेकिनि! इदं कर्म त्वं किमकार्षीः? श्वपचैरपि स्वपुत्रो न त्यज्यते, तर्हि त्वं किं त्यजसि? या दुश्चारिणी भवति सापि स्वोदरोत्पन्नं पुत्रं न त्यजति, तर्हि तव किं कथ्यते? चेल्लणा स्माह हे नाथ! असौ पुत्ररूपेण वैरी वर्तते, यस्मिन् गर्भस्थितेऽपीदृग्दोहदो मे जातः स कथं रक्ष्यते? यतः कुलजानां नारीणां प·

त्युः क्षेमकृते किं पुत्रेणापरेण वा? श्रेणिको बभाषे हे प्राणप्रिये! यद्येनं प्रथमपुत्रं त्वं त्यक्ष्यसि तदा तवान्ये पुत्रा न स्थिराः स्युर्जले बुद्बुदा इव. एवं पत्युर्निर्देशेन सा चेल्लणानिच्छंत्यपि स्तन्यपानादिभिस्तं बालमपालयत्. कांत्या कमनीयश्चंद्रवदशोकवनिकायां प्राप्तोऽतस्तस्य राज्ञाऽशोकचंद्र इति नाम विदधे. तदानीं त्यक्तस्य बालस्य कनिष्टांगुलिः कुर्कुटीपिच्छेनाकोणि, ततोंगुलीपीडापराभूतो यावता सोऽरोदीत्, तावता श्रेणिकः पुत्रप्रेम्णा तस्यांगुलीं पूतिमतीमपि स्वमुखेऽक्षिपत्. तदानीं स बालो रोदनाद्व्यरंसीत्. रूढव्रणापि सांगुली कूणिताभवत्, ततः स बालो बालकैः कूणिकनामाऽभ्यधीयत. ततः क्रमेण चेल्लणादेव्या हृदयांभोजभास्करौ राजराज्ञीप्राणप्रियौ नेत्रे इव परस्परं प्रीतिपरायणौ हल्लविहल्लनामानौ सुतौ जातौ. एवं ते त्रयोऽपि पुत्रा राज्ञोऽनुचरंतः प्रभुत्वमंत्रोत्साहानां प्रत्यक्षा मूर्तय इव विरेजिरे. चेल्लणाराज्ञी पतिद्विषे कूणिकाय गुडमोदकान् प्रैषीत्. एतत्सर्वं श्रेणिकः कारयतीति पूर्वकर्मदूषितः स पितरि द्वेषमवहत्. एवं कूणिकः प्रथमं वयो मुक्त्वा मध्यमं वयः प्रपेदे, स्नेहलात्मा श्रेणिकोऽन्यदा महता महेन पद्मावतीराजपुत्र्याः कूणिकेन सह पाणिग्रहणमकारयत.

एवं कूणिको यौवनस्थो राज्यधुराधरणधौरेयो जातः, परं पूर्वकर्मदोषतः स श्रेणिकोपरि वैरं वहति, यतः—कृतकर्मक्षयो नास्ति । कल्पकोटिशतैरपि ॥ अवश्यमेव भोक्तव्यं । कृतं कर्म शुभा· शुभं ॥ १ ॥ पूर्वकृतं कर्म भोक्तुं विना केनाप्युल्लंघयितुं नो शक्यते, तस्य श्रेणिकस्यानेकराज्ञी· भवा अनेके पुत्रा बभूवुः. परं विना कूणिकं सर्वेऽपि पुत्रा अभयाद्याः स्वामिभक्ता आसन्. इत्या· दि श्रेणिकसंबंधः सविस्तरो वीरचरित्राद् ज्ञेयः, ग्रंथगौरवभयादत्र न लिख्यते. अथ प्रस्तुतमेवाह— श्रेणिके परलोकं गते कूणिकेनापि पितृदुःखेन चंपानगरीवासितेन हल्लविहल्लवैरेण रथमुशलमहा· शिलाकंटकनामानौ संग्रामौ जातौ, तत्र एका कोट्यशीतिलक्षाणि च नरा उभयोः सैन्ययोर्मृताः, वैशालीनगरी भग्ना, चेटकनृपोऽनशनपूर्वं मृत्वा सहस्रारदेवलोकं गतः, वैशालीनगरीलोकश्च सत्य· किविद्याधरेणापहृत्यान्यत्र वासितः. ततः कूणिकेन कोपतो विशालानगरी रासभयुक्तहलैर्वाहिता, कूणिकः प्रत्यावृत्य चंपानगरीं समागतः, हल्लविहल्लाभ्यां च वीरसमीपे दीक्षा गृहीता. एतत्सकलवृ· त्तांते कर्णाभ्यां श्रुते चेल्लणा श्रीवीरसमीपे दीक्षां जग्राह. तथा कालीदेवीप्रभृतयो दश, एवमेका· दशापि राज्ञ्यः स्वाम्यंतिके दीक्षामुपाददिरे. सम्यग्दीक्षां परिपाल्य ता सर्वा राज्ञ्यो देवलोके गताः.

ततो भवांतरे च मोक्षं यास्यंति. इत्थं कूणिकराजस्य । जननी चेल्लणा सती ॥ ख्याता महती लोकेऽस्मिन् । ज्ञेया ज्ञानवता वरा ॥ १ ॥ इति श्रीचेल्लणामहासतीकथानकं समाप्तं ॥ इति तृतीया कथा. ॥ अथ मनोरमासतीदृष्टांतः कथ्यते, तथाहि—

श्रीमनोरमा महासती तु सुदर्शनश्रेष्ठिसधर्मिणी, तस्याश्च शीलमाहात्म्यं श्रीसुदर्शनस्याभयाराज्ञीकृतोपसर्गस्यावसरे कायोत्सर्गाकृष्टश्रीशासनदेवताविहिततादृशजिनधर्मप्रभावनारूपं, तच्च तदानीमुक्तत्वादत्र नोच्यते, पौनरुक्त्यात्. इति मनोरमाकथानकं समाप्तं. इति चतुर्थी कथा. ॥ अथांजनासुंदरीदृष्टांतमाह, तथाहि—

अस्मिन् जंबूद्वीपे भरतक्षेत्रे वैताढ्यपर्वते उत्तरश्रेणिभूषणं प्रह्लादनपुरं नाम पुरमस्ति, यत्पुरं देवगृहोपमैर्गृहैर्भूषितमासीत्. तस्मिन्नगरे प्रह्लादो नाम राजास्ति, प्रह्लादवती नाम च तस्य देव्यस्ति, तयोः पुत्रः पवनंजयनामा पवनवद्गगनगाम्यासीत्, स कौतुकी ऋषभदत्താद्यैर्मित्रैः समं क्रीडाकाननवापीषु नानाविनोदखुरलीश्रमैः सुखं चिक्रीड. इतस्तत्रैव श्रेण्यामंजनसंज्ञितं नगरमस्ति, तस्मिन्नगरेंजनकेतुनामा भूपालोऽस्ति, सोऽन्वहं स्वर्गतुल्यं स्वराज्यं देवराज इव पालयामास, तस्य

राज्ञ्योंजनवतीनामराज्ञ्यस्ति, तयोर्नवांजनामृतमंजनासुंदरी पुत्र्यस्ति, सा रूपसौंदर्यसीमेव पित्रोर्मनोरथैः सार्धं वर्धमाना सर्वांगीणगुणा कामसखं वयः प्राप, सा सर्वकलाकुशला चतुःषष्टिकलान्विता जाता. तस्या रूपं श्रुत्वानेके राजान आत्मीयकुमाराणां मारसन्निभानां रूपाणि पट्टेषु लेखंलेखं सचिवपाणिना प्रैषुः, परं पित्रो रूपकुलैश्वर्यविद्याशीलपराक्रमान् पर्यालोचयतोर्हृदये कोऽपि वरो न रुरुचे. अन्यदा भविष्यदत्तपवनंजययोः पटे युगपन्मंत्रियुते समागते. ततो राजा सर्वान् पटांस्त्यक्त्वा तत्पटद्वयं करे कृत्वा तयो रूपमवर्णयत. तयोर्गुणान् ज्ञात्वा राजा सचिवं पप्रच्छ, हे सचिव! पटयोरनयोरिमौ कौ लिखितौ? सचिवेनोक्तं हे नरेंद्रैष राजतनयो भविष्यदत्तनामकः सकलगुणसंपूर्णः, परं स जन्मतोऽष्टादशे वर्षे मृत्वा मोक्षं यास्यतीति केवलिनोक्तं, एष पवनंजयोऽन्यकुमाराद्गुणाधिकः प्रह्लादतनयोंजनासुंदर्या योग्यवरोऽस्ति, अनयोर्द्वयोर्मध्ये भविष्यदत्तो गुणाधिकः, परं स्वल्पायुस्तेन कन्यां नार्हति. अन्यदांजनकेतुभूपालो नंदीश्वरद्वीपे शाश्वतक्षेत्रे शाश्वततीर्थयात्रायां गतः, तत्र विद्याधरसहस्राणि यात्रार्थं संमीलितानि, तत्रांजनपुरनायकः प्रह्लादतनयं पवनंजयं योग्यं वरं ज्ञात्वा मुदा स्वां कन्यां तस्मै ददौ, नैमित्तिकैः स्तोकदिनांतरे च लग्नं दत्तं, ततस्तौ यात्रां

कृत्वा स्वस्वगेहमुपेयतुः. अंजनकेतुनृपालः प्रह्लादनरेंद्राय महामहोत्सवकाम्यया मंत्रिणं लग्नपत्रिकासमेतं प्राहिणोत्. तेन च गत्वा प्रोक्तं भो प्रह्लादनरेंद्र! लग्नदिने भवता महामहेन समागंतव्यमित्युक्त्वा समागतो मंत्री. ततोंजनासुंदरीजनकेन साटोपं महदुत्सवं कर्तुकामेन महती विवाहसामग्री चक्रे. ततोऽसौ समग्रपरिवारसंयुतो महत्या समृद्ध्या श्रीमानसरोवरे गतः, ततः सोऽपि तत्र सर्वान् स्वजनानाह्वयत, सत्यां समृद्धौ पुत्रविवाहादिकार्ये के के सोद्यमा न भवंति? इतश्चार्षभदत्तः पवनंजयसुहृत पवनंजयं बभाषे भो मित्र! त्वं धन्यो यस्य तवैषा पत्नी सकलगुणसंपूर्णा सुरूपा च भाविनी. कुमारेणोक्तं भो मित्र! लग्नांतरे कियंति दिनानि संति, आवस्तत्रावां गत्वा पश्यावः, सा कीदृश्यस्तीति. ततस्तौ नीलपटावृतौ निशायां विमाने समुपविश्य तत्र गतौ. विमानं मुक्त्वा तावुभौ श्वशुरागारं प्रविष्टौ, यत्रांजना सखीभिः परिवृता मिथः कथानुरक्ता वर्तते. तदा कापि सखी स्वामिनींप्रत्याह हे स्वामिनि! यो भवत्याः कृते पूर्वं वराश्चिंतितः स त्वष्टादशवर्षायुः शिवगामी, परं किं तेन प्रवरेणापि? यतो विना तृप्तिं जीवस्य दुस्सहं दुःखं भवति. तदा केतुमंजरी द्वितीया सखी बभाषे, हे सखि! अमृतस्य हि ब्टापि दुःप्रापा, बहुतरेणापि विषेण किं क्रियते? तदांजना बभाषे,

भोः सख्योऽनया चर्चया किं? यद्भावि तद्भवति, नात्र विचारहेतुः. एवं तयोरंजनासख्योर्वार्ता श्रुत्वा पवनंजयस्य महद्दुःखं जातं. अहोऽनया सख्याहं विषप्रायः प्रोक्तः, अनया च किंचिदपि सा न निवारिता. ततोऽहमेनामंजनां तथेमां सखीं हन्मीति कथयित्वा तयोर्हननाय पवनंजयो धावितः. तदा ऋषभदत्तः खड्गं पाणिनाभिधैवं बभाषे, अहो महात्मन्! अशिष्टोचितं कर्म त्वया किमारब्धं? एकं परगृहे गमनं. द्वितीयं तावद्रात्रौ कनीवधः, अतस्तत्त्वया कर्तुं न युक्तं.

एवं मित्रेण वारितः पवनंजयः कोशे करवालं निधाय विमनस्को विरक्तचित्तः स्वं धामाजगाम. तयोर्विवाहलग्नदिनेऽनेके विद्याधरनरेंद्रा हस्त्यश्वरथपदात्यादिसकलविवाहसामग्रीसहिताः प्रस्थिताः. मंगलध्वनिमिश्रेषु मृदंगेषु वाद्यमानेषु सुवासिन्यः कुमारस्य मंडनाय समाययुः. कुमारस्तासां समारंभं समालोक्य पार्श्वगतं मित्रं समाचष्ट, नाहमेनामंजनासुंदरीं परिणेष्ये, किमनेन पाणिग्रहणसमारंभेण? तेन मित्रेण तन्मातापित्रोरग्रे निवेदितं. मातापितृभ्यामुक्तं हे वत्स! त्वया दानमानसन्मानादिभिः सामान्यलोकानामप्याशा पूरिता, तदंजनायाः पाणिग्रहणं कृत्वा मातापित्रोरप्याशां पूरय? त्वमिदानीं मातापितरौ निराशीकर्तुं नार्हसि. पुनः कुमारागारमागत्य नरेंद्रः प्र-

ह्लादः साह्लादो भूत्वैवं वक्ति, भो वत्स! नीचजनोचितं तथा लज्जनीयं तव कर्तुं न युज्यते, केना- प्येवं कदापि समाचीर्णं नास्ति. एतदनाचीर्णं त्वं कथं समाचरसि? तथास्माभिः समाचीर्णं कार्यं क्वापि शैथिल्यनाम भवेत्, किं चास्मासु जीवत्सु तामन्यश्चेत्कश्चिदपि परिणेष्यति तदा वयं जीवंतो मृता इति साहंकारां सरोषां नृपवाचं श्रुत्वा पवनंजयो यावता मौनमाधाय स्थितस्तावता प्रह्लादो रा- जा कुमारं पाणिना समाकृष्य वाहनमारोपयामास.

ततः कुमारो गूढरोषवान् पूज्यवचोऽन्यथा कर्तुं कातरोऽलंकारवेश्मनि गतः. वधूटीभिर्विहित- स्नानमंगलः परिहितपट्टकूल आरोपितकिरीटो हारार्धहारकेयूराद्यनेकाभरणभूषितविग्रहः, चंद्रमंडल- निभछत्रेणाछादितशरीरो गंगातरंगसमश्वेतचामरैर्वीजितो बंदिजनकृतजयजयारवैः पूरितदिगंतो मा- र्गे मार्गणगणद्रविणदानतत्परः, शुभगायनादिसमूहपरिवृतः, षण्मुख इव चतुरंगसैन्ययुतः पवनंज- यः संप्राप्तो विवाहमंडपे. तदानीं सा भूमिरपि महोत्सवमय्यभवत. ततस्तयोर्दानमानभोजनपरिधा- पनिकाक्रमेण विवाहमंगलः प्रवृत्तः. तावनुरूपवयसौ वधूवरौ लोके श्लाघ्यतां प्रापतू रोहिणीशशिना- विव. प्रह्लादनृपेण स्वकीयं गृहमीयुषा ते सर्वे स्वजनास्तुष्टिदानैस्तोषिता निजं निजं स्थानं जग्मुः.

सांजनासुंदरी शुद्धशीलकुलाचारपरायणा सकलेव कुटुंबकं स्वगुणैः प्रीणयामास, परं प्राच्यदुःकर्म· परतंत्रतया पतिः पवनंजयः केवलं श्वपचीमिव तादृशीमपि तां न पस्पर्श. सांजना पतिव्रक्तापि र· क्तापि महासत्यपि पत्युर्मुदे न बभूव. तथा सा स्वपूर्वकर्मदोषं जानाना भक्तिमलंघयंती मर्यादां नातिचक्राम वेलामिव महोदधिः.

इतश्च प्रतिविष्णुना रावणेन लंकातो वरुणंप्रत्यन्यमैत्रीणतां कर्तुकामेन युद्धसाहाय्यदानाय प्रह्लादनरेश्वरमाह्वातुं प्रेषितो राजादेशस्तत्र समायातः. तदानीं प्रह्लादनो नृपो रणकौतुकी तत्क्षणं सैन्यं सज्जीकृत्य चलनकृते जयढक्कामवादयत. तदाकर्ण्य पवनंजयकुमारः पितरं रणमुपस्थितं ज्ञा· त्वैवं जगाद. हे स्वामिन्! मयि पुत्रे सति त्वं योध्धुं कथं प्रस्थानं करोषि? त्वं गृहे तिष्ट? तव का· र्यमहं करिष्ये, तव स्थाने संग्रामायाहं यास्यामि, यतो धुरंधरः पुत्रः पितृकार्यं करोति, एवमुक्त्वा स संग्रामबीटकं जग्राह. अथ पवनंजयो मातरमापृष्टुं तत्पार्श्वे गतः. गंतुकामं पतिं ज्ञात्वांजना श्व· श्रूसदनं समासदत्. परं तेनाऽनालापिता सा दुर्मनस्का मार्गस्तंभमवष्टभ्य तस्थौ, यतः कदाचिन्मा· मासन्नां दृष्ट्वायं संभाषते. अथ पवनंजयः सन्नह्य सैन्यमग्रे कृत्वा स्वयं मातुराशिषमादातुं जननीगृहे

जगाम. तत्र मातुः पादयोः पतित्वा तदाशिषं शिक्षां च लात्वा स मात्रा विसर्जितश्चलितः, ततोऽसौ यत्र स्तंभेंजनावष्टभ्य स्थिता वर्तते तत्रागतः. तत्र तां स्तंभलग्नां निश्चलांगीं पतिदत्तदृष्टिं पांचालिकामिव दृश्यमानां पादयोः पतितामपि स दृष्ट्वापि न पस्पर्श. एवं तेनानालापितांजनाश्रुभिर्भुवं सिंचंती शून्यचित्ता पुनः स्वसदनं प्राप. सपरिच्छदः प्रस्थितः पवनंजयो मार्गे संचरन्मानससरस्तीरे सैन्यमावासयामास.

प्रथमप्रयाणके स सुखेन तत्रैव तस्थौ. तत्र निशायां कोकीं क्रंदनाकुलां निरीक्ष्य स प्रहसितमित्रं प्राह. भो प्रहसित! एषा कोकी किमाक्रंदति? प्रहसितो बभाषे हे स्वामिन्! दैवस्य वशात् कोकयुगं दिने संयुज्यते, निशायां च नित्यमेव वियुज्यते, तेनासावपि पत्युर्विरहादश्रूणि मुंचति. एषा कोकी निशायां जीवंत्यपि मृतप्राया पतिसंयोगं विना प्रातः संयोगे पुनर्जीवितेव भवति. स्वामिन्! स्त्रीणां भर्तृविरहो महादुःसहो विशेषतः श्रावणमासे, यतः—शिखिनि कूजति गर्जति तोयदे। स्फुटति जात्यलताकुसुमाकरे ॥ अहह पांथ न जीवति ते प्रिया। नभसि मासि न यासि गृहं यदि ॥ १ ॥ इतश्चांजनासुंदर्या भोगांतरायिके कर्मणि क्षीणे सोऽप्यूचे, द्वादशाब्दानि या

स्त्री मया मुक्ता सा कथं भविष्यति? हा मया स्तोककार्ये विरूपमाचीर्णं, अनया तु किमपि जल्पितं नास्ति, किंतु सख्या जल्पितं, अहो मया मूढेन सख्या दोषोंजनायामारोपितः, अहो मया कुटिलभावेन कुटिलं कृतं, यतः—कुटिलगतिः कुटिलमतिः । कुटिलात्मा कुटिलशीलसंपन्नः ॥ सर्वं पश्यति कुटिलं । कुटिलः कुटिलेन भावेन ॥ १ ॥ महात्मा पुमान् सरलभावेन सर्वं सरलं पश्यति, यतः—सरलगतिः सरलमतिः । सरलात्मा सरलशीलसंपन्नः ॥ सर्वं पश्यति सरलं । सरलः सरलेन भावेन ॥ १ ॥ प्रहसितेनोक्तं स्वामिंस्तस्याः किंचिद्दूषणं नास्ति, पूर्वकृतकर्मण एव दूषणं. अथ तस्याः कर्मक्षयात्पवनंजयस्य तस्या उपरि महान् स्नेहो जातः, प्रहसितवचनरचनया विशेषतः प्रमोत्फुल्लनयनः पवनंजयस्तेन मित्रेण समं गगनगामिन्या विद्यया तद्गृहेऽभ्यागात्, तत्र स क्षणं द्वारे स्थितस्तां महासतीं ताम्यंतीं दृष्ट्वात्मानं निंदन् द्वारमपावृणोत, तां रात्रिं च तया सह सुखं रेमे, रात्रिप्रांते गंतुकामं पवनंजयं प्रत्यंजनासुंदरी बभाषे हे प्राणेशाहमद्यर्तुस्नातास्मि, कदाचिन्मम गर्भोत्पत्तिर्भविष्यति तदा मम का गतिः स्यात्? अतोऽहं त्वया सहागमिष्यामि, कुमारेणोक्तं हे प्रिये! त्वमिमां मन्नामांकां मुद्रिकां गृहाण? गर्भोत्पत्तौ च मम मातुरभिज्ञानाय तां मुद्रिकां दत्वा

तोषयेः, इत्युक्त्वा तां स्वनामांकां मुद्रिकां दत्वा स्वयं पुनः शिबिरं ययौ. पतिसंयोगादंजनायाः प्राच्यदुर्दशा विस्मृता, आत्मानं च सा सफलं मेने, आशा हि जनानां परमसुखाय वर्तते, यतः—
आशा सवि कही वल्लही । जगि वल्लहु न कोइ ॥ तुटी आशा प्राणिआ । विरलो जीवइ कोइ ॥ १ ॥ अथ तृतीये मासि तस्या मनाग्गर्भः प्रादुरभूत्, श्वश्रूश्वशुराद्या एषा वधूरसतीति चित्ते समभावयन्, यथा यथा तस्या गर्भ एधते, तथा तथा कलंकोऽपि स्पर्धयैवैधते, प्रवर्धमाने गर्भेऽसतीति कलंके च प्रोच्यमाने सा पत्युर्नामांकं तदंगुलीयकं श्वश्रूश्वशुरयोरदर्शयत्, तावप्याहतुरहोऽस्मत्पुत्रः पवनंजयस्तव नामापि न गृह्णाति, स पुनस्तव दूरादागत्य कथं मिलति? हे कुटिले! हे चतुरुद्वेगकारिके! त्वं कथं मिथ्या कथयसि? इत्थमारोपिता सालीककलंका ताभ्यां गृहान्निष्कासिता, दोषे हि विरलः पक्षपातकृद्भवति, एकया बालसख्या समं सा दुःखिना पितुर्गृहाभिमुख्यचलत्, एतद् वृत्तांतस्तत्पित्रादिभिरपि ज्ञातः. ततस्तैरपि गृहप्रवेशे निषिद्धा. ततः सा सती लज्जया शुद्धशीलेन रक्षिता सख्या समं कानने बभ्राम, यथा—

कंदमूलफलाहारा । निर्झरोदकपायिनी ॥ एकदासीसहाया सा । निर्भया तद्वनेऽभ्रमत् ॥ १ ॥

यतः—तोयत्यग्निरपि स्रजत्यहिरपि व्याघ्रोऽपि सारंगति । व्यालोऽप्यश्वति पर्वतोऽप्युपलति क्ष्वेडोऽपि पीयूषति ।। विघ्नोऽप्युत्सवति प्रियत्यरिरपि क्रीडातडागत्यपां—नाथोऽपि स्वगृहत्यटव्यपि नृणां शीलप्रभावाद्ध्रुवं ॥ १ ॥ शीलवत्याः कुतो भयं? अथ पूर्णे गर्भावधौ कस्मिंश्चिद्गहने सांजना पुत्रं सुषुवे सिंही शावमिव, तेजःपुंजमयं प्राची सूर्यमिव. रोहणगिरिभूश्चिंतामणिमिव. सा सती सिंहव्याघ्रगजद्वीपिचौरनीरानलादिभ्यः शीलास्त्रेणैव निर्भीका वनाद्वनं संचचार. अथैकस्मिन् दिने नीरमन्वेष्टुं सा वनांतरे दासीं प्रैषीत, कृतार्थां सा जलमानयंती मार्गे गिरिशृंगे कायोत्सर्गस्थमेकं महामुनिमैक्षत, ततः सा पानीयमंजनायै दत्वा साधुस्वरूपमकथयत्. तत् श्रुत्वा पिपासां विस्मृत्य सांजना सख्या समं तं गिरिमारुह्य भक्त्या मुनिमवंदत, मुनिरपि कायोत्सर्गं पारयित्वा रजोहरणेन भूमिं प्रमार्ज्य तत्रोपविष्टः, सांजना मुनिं वंदित्वा पुरो निषसाद. ततः साधुस्तस्याः पुरो धर्मदेशनामाचष्टे, यथा—महानुभावे संसारे । बहुदुःखौघसंकुले ॥ शरणं नो विना धर्म—मस्वाधीनस्य देहिनः ॥ १ ॥ संयोगा विप्रयोगाश्च । कर्मायत्तप्रवृत्तयः ॥ व्यर्थं मोहवशः प्राणी । परं दूषयते रुषा ॥ २ ॥ स्वार्जितं कर्म स्वेनैव भुज्यते, नान्येन, अतस्त्वमपि पूर्वोपार्जितं कर्म भुंक्ष्व? एवं गुर्व-

तिके धर्मं श्रुत्वा जातवैराग्या सांजना सती तं महामुनिं ज्ञानातिशायिनं ज्ञात्वा पप्रछ, हे भगवन् ममेदृग्दुःखं केन कर्मणा जातं? मुनिराह सावधानीभूय श्रूयतां? त्वं पूर्वभवे कस्यचिद्व्यवहारिणो वल्लभासीत्. अन्या च त्वदीयसपत्न्यभूत्. त्वं मिथ्यात्वभाविता, तव सपत्नी तु जिनधर्मपरायणा कृताभिग्रहा प्रत्यहं श्रीजिनप्रतिमामर्चयामास.

एकदा त्वं मिथ्याभिनिवेशभावितेर्ष्यावशात्सपत्नीरुषा च तस्या जिनप्रतिमामादायावकरके प्रछन्नतया प्राक्षिपत्. ततस्तस्या जिनबिंबार्चनं विनाऽनश्नंत्यास्त्वया दयावशतो द्वादशक्षणांते प्रतिमा दत्ता. तत्कर्मणस्तवायं द्वादशाब्दिको भर्त्रा सह विरहविपाको जातः. परिणामविशेषात्तु किंचिदेवावशिष्यते. पुनः सांजना प्राह, ममैषा सखी केन कर्मणा मया सह दुःखान्यनुभवति? मुनिनोक्तं हे धर्मशीले! तदा तव प्रतिमां गोपयंत्यास्तया प्रोक्तमत्र प्रदेशे दृश्यते, अतोऽत्यंतं गुप्तस्थाने स्थाप्या, ततश्च त्वया सा प्रतिमा विशेषेण स्थगिता, तेनैषापि दुःखमन्वभूत. इति मुनिनोक्तं श्रुत्वा विस्मयस्मेरमानसांजना सुखदुःखयोः कारणं सर्वत्र कर्मैव मेने. पुनः सा पप्रछ हे भगवन्! मम शुभकर्मोदयः कदा भविष्यति? तथा मे पतिसंगो भविष्यति न वा? इति ज्ञानेन ज्ञात्वा मम

मनोमोदसंपत्तये सम्यक्समादिश? मुनिरूचे हे महासत्वे! अत्रैव तिष्ठंत्यास्तव मातुलो मिलिष्यति, स च त्वां नीत्वा स्वगृहे यास्यति. स्वपितुरिव तस्य गृहे स्थितायास्तव पत्युः संगमो वर्षांते भविष्यति. मुनिनेत्याश्वासितांजना साधुपर्युपास्तिपरायणा सत्वमालंब्य गिरेः शिखरे तस्थौ. इतस्तन्मातुलः सूर्यकेतुनामा नरेश्वरो नंदीश्वरे यात्रां कृत्वा स्वगृहंप्रति प्रतस्थे. तदानीं चारणश्रमणप्रभावतस्तत्र तस्य विमानं स्तंभितं. यतस्तीर्थमुल्लंघ्य विमानं न यातीति पूर्वं धरणेंद्रेण स्थितिः कृतास्ति. सा स्थितिश्च केनापि लंघयितुं न शक्यते. ततः स खेचरः सूर्यकेतुनामा विमानादवतीर्य स्वं धन्यं मन्यमानस्तं मुनिं मुदा ववंदे. मुनिना तस्य धर्मलाभाशीर्दत्ता. तत्र तामंजनां समालोक्य साधर्मिकवंदनार्थं स्वरूपानुसारतो भागिनेयीं ज्ञात्वा सम्यगुपलभ्य खेचराधिपो भृशं मुमुदे. तद्वृत्तांतं श्रुत्वा कृपापरिणताशयः स खेचरोंजनासुंदरीं ससुतां ससखीं विमाने समारोप्य स्वगृहाभिमुखः प्राचलत्.

मार्गे सूर्यकेतुविद्याधरो भागिनेयीसुतं लालयन् विमानमारुह्य नभःपथा यावद्ययौ तावदेकदा बालचापल्यलीलया मातुलांकतः स बालः पाणिना विमानकिंकिणीं कर्षन्नुच्छलितः, विमानं नभ·

सा गतं, स तु भूमौ पतितः. बालं पतितं ज्ञात्वा तज्जननी भृशं रुरोद, यथा—हा दैव तादृशं दुः·खं । दत्वा न खलु तृप्तवान् ॥ यत्पुत्रवदनप्रेक्षा—सुखं न क्षमसे मम ॥ १ ॥ इत्यादि क्रंदंतीं भा·गिनेयीं समाश्वास्य खेचराधिपो द्रुतं विमानादुत्प्लुत्य तं प्रदेशमवातरत, तत्र तदीयेन वज्रसारेण वर्ष्मणा शिलां संचूरितां स ददर्श. तदीयचूर्णमध्ये च रममाणं तं बालकं ददर्श. ततस्तं बालं शि·रस्याघ्राय कराभ्यामाददे माणिक्यमिव पंकतः. ततस्तं शिशुं मरालमिव लालयन्नुपायनमिव राजा भागिनेय्यै समर्पयामास. तमक्षतांगं समालोक्य सा सती मुदिता निधानमिव मुहुर्मुहुः पाणिना पस्पर्श. अमुना शिशुना शिला संचूरितेति मातुलस्तस्य शिलाचूर इति नाम चक्रे. ततः सूर्यके·तुनामा खेचरः सोत्सवं तां भागिनेयीं निजं गृहं निन्ये. ततोंजनां वीक्ष्य ते सर्वे स्वजनाः कुटुं·बिनश्च हृष्टाः. सा तत्र दीनानाथादिभ्यो दानं ददाना धर्मं वितन्वाना सुखं तस्थौ. अथ जितका·सी पवनंजयो रावणाज्ञया महोत्सवपुरस्सरं निजनगरमागमत. तत्र पितुः पादौ प्रणिपत्य मातरं च नत्वा तदाशिषं लात्वा मिष्टवाचा स्वजनांश्च संभाष्य स्वजायामुखदिदृक्षया स्वावासभवनं प्राविशद्भ·जागारं गजेंद्र इव. परं जायाशून्यं स्वगृहमालोक्य स भृशं विरहाकुलो बभूव. ततोऽसौ मातरमपृ·

च्छत् हे मातस्तव वधूः क्वास्ति? मात्रा यथातथे प्रोक्ते कुमारस्तद्विरहेण चित्रशालां ज्वालामिव, प्राज्यं राज्यं पलालवत्, प्राणांश्च तृणवन्मन्यमानो मातरं प्रत्याह, हे मातस्त्वयाऽविचार्य स्वकुलोचितं न समाचीर्णं, नूनं सा वने व्याघ्रैर्भक्षिता भविष्यति. अहो! करप्राप्तं चिंतारत्नं नष्टं, अहो मम भाग्यविपर्ययः, गृहांगणे समागता कामगवी चौरैर्हृता, इत्यादि विलपन् दैवायोपालंभं यच्छन् पवनंजयः सद्यश्चंदनदारुभिर्नगराद्बहिश्चितामारचयामास. अथ कुमारो विविधैर्वचनविलासैर्मातापितृभ्यां बोधितोऽपि वियोगविषपीडितो मरणाग्रहं नामुंचत.

इतश्च ऋषभदत्तः सुहृत्पवनंजयकुमारं समालिंग्य साग्रहं कालक्षेपचिकीर्षया दिनत्रयमयाचत, भो मित्र! त्वया दिनत्रयं स्थेयं, नूनं सा शीलमाहात्म्यतो जीवंती भविष्यति, तत्प्रतीक्षस्व? यथाहं दूरदेशांतरे गत्वा तत्प्रवृत्तिमुपानयामि. एवं कुमारं संबोध्य विमानमधिरुह्य ऋषभो व्योममार्गेण चचाल. अनेकपत्तनोपवनग्रामनगरादिषु विमानस्थितोऽसौ भ्रमन् स्त्रीबालयुवादिगोष्ठीष्वनेकशः कथाः शृण्वंस्तृतीये दिवसे सूर्यपुरस्योपवने गतः. तत्र स्त्रीगोष्ठ्यां स इति शुश्राव. अहो! धन्यैषा पवनंजयपत्न्यंजना या तेजःपुंजविराजितं पुत्रं सुषुवे. ऋषभदत्तस्तत्रासन्नप्रदेशे स्थित आमातुलगृ-

हागमं तत्कथां शुश्राव. मुदित ऋषभदत्तः श्रीसूर्यकेतुनृपपर्षदि गतः, तत्रोत्संगस्थापितपुत्रामंजनां च ददर्श. सापि भर्तुर्मित्रमागतमुपलक्ष्य ससंभ्रमा सलज्जासनमुत्सृज्य समुत्तस्थौ. ततः सा सती मातुलाय सकलं वृत्तांतं कथयित्वा विस्मेरचित्ताय तस्मै स्वागतमचीकरत. सा प्रमोदमेदुरा ऋषभदत्तस्य स्नानपानभोजनादिसकलां सामग्रीं विदधे. ततः संतुष्ट ऋषभदत्तः सूर्यनृपं बभाषेंजनासुंदर्याः सपुत्राया विलोकनान्मम श्रमः सर्वथा सफलो जातः. पवनंजयो वरुणं जित्वा लब्धजयो गृहमागतः, मातापित्रोश्च पादौ नत्वैतस्या गृहे गतः, परं तत्रैनामदृष्ट्वा चितां प्रवेष्टुकामो मया दिनत्रयमधारि, तेन द्रुतमेषा प्रेष्यतां, अहमेतदर्थमागतोऽस्मि, भवतो गृहे क्षेममस्तु, तव चायमुपकारः शतशाखः प्रवर्धतां. ततः श्रीसूर्यनृपो विमानं सज्जीकृत्य जामातुः सुहृदा समं सपुत्रामंजनासुंदरीं तस्मिन् विमाने समारोप्य श्वशुरालये प्रेषयामास. ऋषभदत्तस्तद्विमानं प्रह्लादपुरोद्याने मुक्त्वा स्वयं पुरतो ययौ. तत्र गत्वा सपुत्राया अंजनायाः समागमनकौतुकैः स प्रह्लादननरेश्वरं पवनंजयं वर्धापयामास. तदानीं पवनंजयस्य स्वजना ऋषभदत्तस्य तद्वचनं जीवनौषधतुल्यं मेनिरे. तदानीं पवनंजयसंभवं पुत्रं दृष्टुं नागराः सागरा इव समाजग्मुः.

ततो नृपस्तां सपुत्रां पुरे प्रवेशयामास. वाद्यमानेषु तूर्येषु । गीयमानोरुमंगलं ॥ चलच्चेलां- चलैर्लोलं । लोलद्वंदनमालिकं ॥ १ ॥ श्रीप्रह्लादनृपेंद्रो । विस्तरेण महीयसा ॥ वधूं प्रवेशयामास । सपुत्रां निजपत्तनं ॥ २ ॥ तद्दिनादारभ्य श्वश्रूस्तामंजनासुंदरीं परीक्षितगुणां बह्वमन्यत, यत एवंविधा सतीमतल्लिका कस्य वल्लभा न भवति? सांजनासुंदरी विशेषतः पवनंजयस्य वल्लभाभूत फलशालिनी कल्पवल्लीव. अथ सा पुत्रयुक्तांजनासुंदरी साधुसाध्वीसंयोगतो वैराग्यैकतरंगिता पूर्वजन्म स्मरंती जैनं धर्ममाचचार. पवनंजयस्य सूनोः शिलाचूरस्य संमदात्संबंधिसज्जनैर्हनुमानिति द्वितीयं नाम निर्ममे. अथ प्रह्लादननृपः पवनंजयं राज्यार्हं ज्ञात्वा गुर्वादिसामग्रीं निर्मलां च प्राप्य तं राज्ये न्यस्य स्वयं दीक्षामुपाददे. ततः पवनंजयनृपाल एकलीलया पृथ्वीं पालयन् प्रौढपराक्रमः परमां प्रौढिं प्राप. सांजना पवनंजयस्य राज्ञः पट्टराज्ञी बभूव, पवनंजयो नृपस्त्रिवर्गसारं साम्राज्यमनुभवन्नंजनया समं सुखेन कालमवाहयत. हनुमानपि संप्राप्तयौवनस्तातेन बह्वीः कन्याः परिणायितः, क्रमेण सोऽपि गांभीर्यादिगुणैः संपूर्णो बभूव. इतः श्रीमुनिसुव्रतस्वामितीर्थे केचिदाचार्यास्तत्र पत्तने समाजग्मुः, तद्देशनां श्रुत्वा संवेगमापन्नांजनासुंदरी दीक्षायै पतिमयाचत. ततः पवनंजयेन

बहूक्तापि सा यावन्नावतिष्टते तदा पत्नीसहितः पवनंजयो वंदनाय तत्र ययौ. आचार्यसमीपे च भ-वनाशिनीं देशनां शुश्राव, तां देशनां श्रुत्वा हनुमते पुत्रे राज्यं दत्वा स्वयं महामहेन देव्यांजनया सार्धं दीक्षामुपाददे. ततस्तौ दंपती निरतीचारं चारित्रं प्रतिपाल्य स्वर्गं जग्मतुः, क्रमान्मोक्षमवाप्स्यतः. इति पवनंजयभार्या । हनुमज्जननी जगत्त्रये ख्याता ॥ सत्यंजनाभिधाना । सुंदरशीला गुणविशाला ॥ १ ॥ इत्यंजनासुंदरीकथानकं समाप्तं, पंचमी कथा च समाप्ता. ॥ अथ मृगावतीकथानकं कथ्यते. यथा—

साकेतपुरपत्तने सुरप्रियनामा यक्षोऽस्ति, स सप्रत्ययः प्रत्यब्दं यात्रादिने चित्रकारेण विचित्रं चित्र्यते, ततश्चित्रितो यक्षस्तं चित्रकं हंति, अचित्रितः पुनर्लोकं हंति. एवं बहवश्चित्रकारास्तेन यक्षेण निधनं नीताः, ततस्ते साकेतपुरीयचित्रकाः सर्वे पलायित्वान्यग्रामे ययुः. ततो राज्ञा प्रजामारिभीरुणा ते सर्वेऽपि चित्रकरा लोकैर्धृत्वानायिताः, ततस्तेषां नामानि पत्रेषु लिखितानि, तैर्नामपत्रैश्च घटो भृत्वा मुक्तः, प्रत्यब्दं काचित्कन्या तस्मात्कुंभात्पत्रमेकं कर्षति, तस्मिन् पत्रके यन्नाम निर्याति स यक्षचित्रं करोति, इति व्यतिकरे जाते एकदा कौशांब्याः कश्चिच्चित्रदारकश्चित्रकौशल्य-

सिद्धये तत्र समायातः, तत्र काचिदेकपुत्रका चित्रकारी स्थविरा वर्तते, तस्या गृहे च स तस्थौ, तस्मिन् वर्षे तस्याः पुत्रनाम्नि पत्रे निर्गते कृतांताह्वानलेखवत्सा वृद्धा कराघातै रुरोद, तदानीं प्राघूर्णकचित्रकारकस्तां वृद्धां पृछति हे मातस्त्वं किं रोदिषि? तदा सत्ये प्रोक्ते कौशांबीचित्रकारको वक्ति हे मातस्त्वं स्वस्था भव? तवाहमपि पुत्रोऽस्मि. तव पुत्रस्थानेऽहमेव यास्यामि, तयोक्तं त्वं मम प्राघूर्णकस्त्वामहं कथं प्रेषयामि मृत्युहेतवे. एवमुक्त्वा तया बहुबोधितोऽपि स नाबुधत्. ततः स स्थविरापुत्रवारके यक्षालये गतः, तत्र गत्वा तेन चित्रकारेण षष्टं तपो विहितं. ततः कृतस्नानस्तथा कृतांगविलेपनो स धौतवाससी परिदधे. ततश्चारुचंदनकस्तूरिकर्पूरागुरुसन्मिश्रैर्वर्णकैर्नवीनानि कचोलकानि भृत्वा तथा नवकूर्चकानि कृत्वा तथाष्टपुटमुखकोशं विधाय स चित्रकरो निर्भयः स्वस्थचित्तो यक्षं चित्रयामास. ततस्तं यक्षं चित्रयित्वा कृतनतिस्तत्पादयोर्लगित्वा विनयपूर्वमेवमवोचत्. हे यक्ष! त्वद्योग्यं चित्रं कर्तुं कोऽपि न क्षमस्तन्मया यदयुक्तं कृतं भवति, तत्क्षमस्व? इत्याद्युक्त्वा स यक्षपादयोर्निपतितः. ततस्तुष्टो यक्षः प्रीत्यावदद्भो चित्रकरदारक! तुभ्यं यद्रोचते तद्याचस्व? स जगाद हे तातास्मिन् पुरे त्वं मारिं निवारय? तथा चित्रकराणामभयं देहि? एतावता च पर-

प्रियकरणेनाहं प्रीतोऽस्मि, यक्षः प्राह हे परोपकारिन्नद्यप्रभृति सर्वेषां लोकानां चित्रकराणां च कल्याणं भविष्यति. अथ स्वविषये किंचित्त्वं याचस्व? चित्रकृदूचे हे नाथ! यदि त्वं मम तुष्टोऽसि तर्हि चित्ररूपस्यैकदेशेऽपि दृष्टे यथास्थितं सर्वं रूपं चित्रयामि, यक्षेण वरो दत्त एवमस्त्विति. ततो यक्षस्तिरोदधे. स चित्रकारदारको वरं प्राप्य मुदितमानसः पुनः कौशांबीं समाययौ. एकस्मिन् दिने कश्चिद्दूतः शतानीकराजसदसि समागतो दूरदेशसंदेशान् कथयति. तदानीं स दूतो राज्ञा पृष्टो भो दूत! अन्यराज्येभ्यो मम राज्ये किं किमपि न्यूनमस्ति? तेनोक्तं स्वामिंस्तव राज्ये सर्वमप्यस्ति, परमेका चित्रसभा नास्ति, ते नैकां देवसभानुकारिणीं चित्रसभां कारय? राज्ञा तद्वचनं श्रुत्वा सौधर्मसभासदृश्येका सभा कारिता निजप्रासादसमीपे. सा सभा च सर्वेषां चित्रकराणां चित्रकरणाय विभज्य दत्ता. तस्य चित्रकरस्यांतःपुरासन्नप्रदेशे भागो दत्तः. ततस्तेन चित्रकरेण जालांतरेण देव्या मृगावत्या दीप्यमाना पादांगुलिर्दैवादालोकिता. तदंगुलिदर्शनात्तेन चित्रकेण तस्या मृगावत्याः सर्वं स्वरूपं यथास्थितमालेखितं. तदानीं तद्रूपलिखनावसरे ऊरौ मषीलवोऽपतत्, तं लवं प्रमार्जतः पुनर्लवः पतितः, एवं द्वित्रिवारं प्रमार्जनानंतरमपि तत्रैव लवः पुनः पतितः. ततस्तेन

ज्ञातं नूनमत्र देव्या लांछनं वर्तते, ततस्तेन तत्र लांछनं कृतं. यादृशी मृगावती वर्तते तादृशी ते· न लिखिता, दिव्यानुभावतस्तत्र किंचिदपि न्यूनाधिकं नाभूत.

एवं स चित्रकारस्तां लिखित्वा द्वितीयप्रहरे भोजनाय गृहं गतः. तावद्राजा शतानीकस्तां स· भां विलोकयितुं तत्रागात. तां चित्रसभां समालोक्य स यावद्भृशं हृष्टहृदयो बभूव तावत्तेन राज्ञा सा मृगावती सर्वांगीणा दृष्टा, यावच्च तज्जंघायुगलं स विलोकयति तावत्तत्र तन्मषीलांछनं दृष्ट्वा कुपितो राजाचिंतयदहोऽनेन मम भार्याया जंघालांछनं कथं ज्ञातं? तन्नूनमनेन पाप्मना मम भा· र्या भुक्ता, अन्यथासौ जंघास्थलांछनं कथं वेत्ति? ततोऽसौ क्रोधात् स्वसेवकानादिशत्, भो सेव· का· ! एनं चित्रकारकं शूलिकायां समारोपयत? तत श्रुत्वा सर्वेऽपि चित्रकारका मिलिता एवमूचुः स्वामिन्नेष केनापराधेन हन्यते? राज्ञोक्तमनेन मृगावत्या जंघालांछनं कथं ज्ञातं? तैरुक्तं स्वामिन्! यक्षप्रसादेनैष चित्रकारो रूपस्यैकदेशे दृष्टे सर्वांगीणं यथास्थितं रूपं लिखति. अथ तत्प्रत्ययार्थं राज्ञा तस्य कुब्जिकामुखं गवाक्षाद्दर्शितं. ततस्तेन चित्रकेण मुखानुसारेण कुब्जिकारूपं यथास्थितं लिखितं. तथापि राज्ञा स चित्रकश्छिन्नांगुष्ठोऽकारि. पुनस्तेन चित्रकेण स यक्ष आराधितः, तेन च

वामपाणिना सा चित्रसिद्धिर्दत्ता. तद्दिनादारभ्य स चित्रकरो वामेन पाणिना चित्रं करोति. ततः स चित्रकारश्चेतसि चिंतयामास धिग् राजानं येनाहं निरपराधोऽपि मुधांगुष्ठछेदनेन विडंबितः, अथ तर्ह्यहं चित्रकरो यद्येनं राजानं मूलादुन्मूलयामि. इति ध्यात्वा तेन चित्रकरेण पट्टे मृगावत्या रूपं लिखितं, तदादाय स्वस्वजनपरिवृतोऽसौ कौशांब्या निर्ययौ. शतानीकप्रत्यनीकं बलवंतमवंत्यधीशं चंडशासनं चंडप्रद्योतं च ज्ञात्वा सोऽवंत्यां गतः. तन्मृगावतीरूपं पट्टे लिखितं पुरो मुक्त्वा राजानं ननाम. चंडप्रद्योतस्तां पट्टे लिखितां मृगावतीं वीक्ष्य मोहितस्तद्रूपं वर्णयति, अहोऽस्या रंभातिरेकं रूपं! अहोऽस्या लावण्यं! अहोऽस्याः सुंदराकृतिः! ततः स चित्रकृत्तेन पृष्टः, भो चित्रक! त्वयात्मीयकलाकौशलदर्शनार्थमेषा सुंदरी लिखिता, किंवा कस्याश्चित्प्रतिरूपं लिखितं? सत्यं ब्रूहि? चित्रकारेणोक्तं राजेंद्र! मयैतत कस्याश्चित्प्रतिरूपं लिखितं, परं तस्या यादृग्रूपमस्ति तादृग्रूपं ब्रह्मापि लिखितुं न शक्नोति. तर्हि कियन्मात्रा वयं मनुजाः? चंडप्रद्योतेनोक्तं तर्हि ब्रूहि? कस्या इदं रूपं? चित्रकारेणोक्तमेषा मृगावती पट्टे लिखिता शतानीकराजस्य पत्नी रूपाधिका तव योग्यापि विधेर्वैपरीत्यात्तेनाप्ता. अथानुकूले विधौ सा तव पत्नी भविष्यति. इत्युक्त्वा स चित्रकारस्तां प-

ट्टलिखितां मृगावतीं तस्मै दत्वा स्वस्थाने गतः.

तद्दिनादारभ्य चंद्रप्रद्योतोऽचिंतयदेषा मृगावती शतानीकपत्नी सामवाक्येन बलात्कारेण वा मया ग्राह्या. इति विचिंत्य चंद्रशासनेन चंडप्रद्योतेन लेखं लिखित्वा शिक्षां च दत्वा वज्रजंघाख्यो दूतस्तत्र प्रेषितः. स दूतः कौशांब्यां गत्वा शतानीकं नत्वा चंद्रप्रद्योतवाचिकमाचख्यौ, भो राजेंद्र! मम स्वामिवाचिकं श्रूयतां? यथा—त्रपुणेव मणिनैव । त्वया भाति मृगावती ॥ सा मह्यं प्रेष्यतां येन । मणिर्मौलौ हि युज्यते ॥ १ ॥ जीवितव्यं च राज्यं च । रक्ष प्रेष्य मृगावतीं ॥ सर्वनाशो- शनाशेन । रक्षणीयो विचक्षणैः ॥ २ ॥ ततः स कोपारुणलोचनः शतानीको नृपोऽभ्यधात्, भो भो दूत! तव स्वामी किं विकलो वर्तते? यद्वा तव स्वामी किं जीवितादुद्विग्नोऽस्ति? नूनमसौ मम करेण मृत्वा नरकगामी भविता यो मत्तो मृगावतीं याचते. इत्युक्त्वा भृशं निर्भर्त्स्य दूतत्वादवध्यो ऽसीत्युक्त्वा तेन स निष्कासितः. स लोहजंघो दूतोऽप्यवंत्यां चंडप्रद्योतांतिकं समागतः. शतानी- कोक्तं च सर्वं सत्यं न्यवेदयत्. ततः कुपितश्चंद्रप्रद्योतश्चतुर्दशनृपैरावृतः कौशांबींप्रति प्रयाणं चक्रे. तस्मिन् सैन्ये प्रचलिते धूलिधूसरदिग्भिः सूर्यो निस्तेजस्तां ययौ. तथा तत्सैन्यभारेण भूवलयं कं-

पयामास. एवमविच्छिन्नप्रयाणैर्मार्गे संचरंश्चंडप्रद्योतः स्तोकैरेव दिनैः कौशांब्यामासन्नं समागतः. शतानीकस्तमासन्नं समागतं ज्ञात्वा महद्भीत्या भीतोऽतिसाररोगेण महाव्याधिना बाधितः शरणार्थीव यममंदिरं ययौ, अहो! मरणं केनाप्युल्लंघयितुं न शक्यते. यतः—दिव्यज्ञानयुता जगत्त्रयनता येऽनंतवीर्या जिना। देवेंद्राः सुरवृंदवंद्यचरणाः सच्चिक्रमाश्चक्रिणः ॥ वैकुंठा बलशालिनो हलधरा ये रावणाद्याः परे। ते कीनाशमुखं विशंत्यशरणा यद्वाऽविलंबो विधिः ॥ १ ॥ चंडप्रद्योतभयाद्भीते शतानीके मृते मृगावती चिंतयति सूनुर्मेऽल्पबलस्तथा बालो, वैरी तु महाबलोऽतो बलेन शीलं न रक्ष्यते, ततोऽहं कमप्युपायं कृत्वा स्वं शीलं रक्षयामीति विचिंत्य कश्चिद्वाग्मी दूतः शिक्षयित्वा तया प्रेषितः. तेन राज्ञोऽग्रे गत्वा विनयेन विज्ञप्तं, हे देव! राज्ञी मृगावती मन्मुखेनेदमाह, हे नाथ! तव भीत्या शतानीके मृते त्वं मम शरणमसि, किंत्वयं मम पुत्र उदयननामाल्पबलः शिशुश्च शोकाक्रांतो मया मुक्तोऽन्यैः पराभूयते, अतोऽहं सांप्रतं भवदंतिके समागंतुमसमर्था, अतोऽहं कमप्यस्य पुत्रस्य संजीवनोपायं कृत्वा त्वरितं समेष्यामि. इति दूतवचनं श्रुत्वा प्रद्योतो जगौ, भो दूत! मयि नाथे सति तस्य रोमापि को नाम पीडयितुं समर्थः? दूतो बभाषे स्वामिन्!

स्त्रिया हृदयं कातरं भवति, अतो मन्मुखेन सा वारंवारं वक्ति, यन्मम नगर्याः परितस्त्वं प्राकारं कुरु? यथा तन्मध्ये मम पुत्रो निर्भयो भवति. तत् श्रुत्वा राज्ञा प्रद्योतेन कालविलंबभयादवंतीतः समानीतैरिष्टिकौघैः समश्रेण्या स्थापितैः पुंभिः करानुकरसंचारितैः स्तोकैरेव दिनैर्दृढः प्राकारो निष्पादितः. ततः प्रद्योतेनोक्तमथ किं कृतं विलोक्यते? तयोक्तं स्वामिन् यदि मध्ये द्रव्यं नास्ति तर्हि प्राकारेण किं? तत् श्रुत्वा प्रद्योतेन स्वकीयो भांडागारः समानीतः. एवं काष्ठान्नादिसर्ववस्तुभ्यः कौशांबीप्राकारस्तया तथा सज्जितो यथा द्वादश वर्षाणि यावत्केनापि गृहीतुं न शक्यते. ततो मृगावत्या स्वमंत्रिणः पृष्टाः, अथ किं कर्तव्यं? मंत्रिभिरुक्तं यथा तव शीलं तिष्टति तथा कुरु? तया प्रोक्तं भो मंत्रिणोऽहं तथा करिष्ये यथा मम शीलं स्थास्यति, इत्युक्त्वा तया मृगावत्या कौशांब्यां दुर्गरोधः कृतः, प्रद्योतेनाहूता मृगावत्युवाच भो राजंस्त्वं किं विकलोऽसि? यन्मां समाह्वयसि, अहं चेटकराजपुत्री शतानीकराजपत्न्येवंविधमकार्यं किं स्वप्नेऽपि करोमि? तदा चंद्रकोपभ्रंशप्रद्योतः सदस्येवं प्रत्यपादयदहोऽनया किं कृतं? अनया यत्कृतं तत्केनापि कर्तुं नो शक्यते, अहोऽस्या मतिवैभवः! अहोऽस्याः कलाकौशल्यं! प्रथममनया बुद्धिप्रपंचेनाहं पश्चाद्वालितः, ततो मम प्राकारो

मूलादुन्मूलायितः. ततोऽनया मम भांडागारो गृहीतः, ततो धान्यपानादिसामग्रीं समादाय स्वप्राकारं सज्जीकृत्य मम वाक्यमन्यथा कृत्वाथ पुनर्मया सह युद्धसज्जा जाता, तत्किं करोमि? अथाहं तत्र यामि. गत्वा च तत्र तां ससैन्यां सपुत्रां सप्राकारां सकौशांबीं मूलादुन्मूलयामि, तर्ह्यहं चंडप्रद्योतो नान्यथेति, इत्युक्त्वा ससैन्योऽसौ कौशांबींप्रति धावितः, स्तोकैरेव दिनैर्हस्त्यश्वरथपदातिचतुरंगिणीसेनायुक्तस्तत्रायातः, कौशांबीं परिवेष्ट्य च स्थितो जंबूद्वीपं सागर इव. तदानीं मृगावती दध्यौ मया बाह्योऽरिश्छलितः, अथाहमंतरारातींश्छलयामि, यदीह श्रीवीरस्तीर्थनाथः समायाति तदाहमंतरारातींश्छलयित्वात्महितं करोमि, सर्वभावस्वभावज्ञो भगवान् श्रीवीरोऽपि तत्कालमेव तत्पुरीपरिसरे समुपाययौ.

ततः सा मृगावती दिनेशस्याभ्युदये श्रीजिनेशवंदनाय पुरादुद्घाटितद्वाराद‍ब्जाद्भृंगीव निर्ययौ. अथ सा मृगावती निर्भयात्मध्यां भक्त्या जिनाधिनाथं त्रिःप्रदक्षिणीकृत्य स्वामिनं नत्वा यथास्थानस्थिता त्रिवर्गशुद्ध्या स्वामिदेशनामशृणोत्. चंडप्रद्योतनृपोऽपि कोपचंडत्वं विमुच्य श्रीवीरं प्रणिपत्य स्वाम्यंतिके यथायोग्यस्थाने समुपाविशत. ततः श्रीवीरो मनुजसुरासुरपर्षदि पापनाशिनीं

देशनां व्यतनोत्. सर्वभाषानुगां भगवद्देशनां श्रुत्वा केचन मनुष्याः स्वाम्यंतिके दीक्षां प्रत्यपद्यंत, केचन सम्यक्त्वं, केचन देशविरतिं च प्रतिपन्नाः, तदानीं कश्चिद्धन्वी स्वसंशयं स्वामिनं मनसा पप्रच्छ, तं धन्विनं स्वाम्यूचे भो धन्विन्! मद्गिरा पृच्छ? यथा तव वार्तां निशम्य बहवो जना बुध्यंते, स जगौ भगवन्! या सा सा सैवेति? ततो भगवानाह या सा सा सेति. तदा गौतमः स्वामिनं पप्रच्छ हे भगवन्ननेन धन्विना किमुक्तं? स्वामिना च किमुत्तरं दत्तं? प्रभुणोक्तं भो गौतम! सावधानो भूत्वा शृणु?—

अस्त्यस्मिन् भारते चंपानामनगरी. तत्रैको धनाकरो नाम स्वर्णकारो धनवान् कामी च, स कामासक्तः कामरसगृध्नो यां यां रूपवतीं कन्यां पश्यति, तज्जनकस्य तथा तत्संबंधिनां हेमसहस्रार्धं दत्वा तां कन्यां परिणयति. एवं तेन स्वर्णकारेण काममोहितेन नारीणां पंचशती मेलिता, सर्वासां नारीणां तेन सर्वांगाभरणानि कारितानि, परं यदा यस्या वारको भवति, तदा सा सम्यग्वस्त्राभरणानि परिधाय तेन सह रमते, अन्यास्तु तदाज्ञया शांतवेषा एव तिष्ठंति, एवं तासां कालो याति. तस्मिन् स्वर्णकारे इतस्ततो याते ताः शृंगारादि मुधा व्यधुः, स पुनस्ताडयामास. ततः सो·

ऽतीर्ष्यया पूर्णस्तासां रक्षाकृते कदापि गृहद्वारं नामुंचद्भूतोऽधिष्टानस्थानमिव. हृत्यादग्ध इवागच्छ—द्भोक्तुं कस्यापि नौकसि ॥ सज्जनान् स्वगृहे कांश्चि—न्न कदाचिदभोजयत ॥ १ ॥ अथ कदाचित् केनचित सुहृदा स बलात्कारेण स्वगृहे नीतः, तदासौ द्विषा गुप्तिगृहे क्षिप्तमिवात्मानं मेने, तदा तस्य स्त्रियो निर्जनं स्वस्थानं ज्ञात्वा हृष्टाः कृतस्नानविलेपनाः परिहितप्रवरवस्त्रा विहितसर्वांगभूषणाः प्रीताः संतो यावता दर्पणमध्ये स्वं पश्यंत्यस्तस्थुस्तावता तद्गृहाधीशः स सुवर्णकारः पिशाच इव क्रूरदृष्ट्या विलोकयन् स्वगृहद्वारमागात्, स तत्स्वरूपदर्शनात्तासामुपरि क्रुद्धः, तासां मध्यादेकां स तथा जघान यथा सा यमातिथितां प्रपेदे. तदानीं सर्वासामपि स्त्रीणां समकालं भयमुत्पन्नं, यथैष पापात्मास्मानप्येवं हनिष्यति, ततस्तान्निश्चिततं वयमेवैनं प्रियं मारयामः. ततस्ताः सर्वाः स्त्रियस्तं दर्पणैरमारयत. तत एकोनपंचशतदर्पणैर्हतो मृतः स स्वर्णकारः. ततस्ताः स्त्रियः पश्चात्तापेन गृहं प्रज्ज्वाल्य तेन सार्धं ज्वलिताः.

एवं ताः सर्वा अकामनिर्जरया मृत्वा कस्मिंश्चिद्दुर्गे तस्करकुले तस्करत्वेनोत्पन्नाः. क्रमेण ते सर्वेऽपि लोकलुंटनतत्परा लुंटाका जाताः. सा पूर्वं हता योषित् कुत्रचिद्ग्रामे कस्यापि रोरविप्रस्य

पुत्रत्वेनोदपद्यत. ततः पूर्णे काले स जातः, क्रमेण च स पंचवर्षीयोऽभूत. पंचवर्षाणि यावत् स्व एंकारजीवस्तिर्यग्योनौ परिभ्रम्य तस्यैव दरिद्रविप्रस्य पुत्रिकाजनि. मातापितृभ्यां स एव बालकस्त- स्याः पालकः कृतः. सा तु रोदनशीला भृशं रोदिति, रोदनाच्च न विरमति. तस्य बंधोरन्यदा त- स्या उदरं स्पृशतो गुह्ये प्रदेशे हस्तो लग्नः, तदा तया त्यक्तं रुदितं, मुदिता च जाता. एवं च ते- न तद्रोदननिवारणाय प्रतीकारो लब्धः. ततः परं यदा यदा सा रोदिति तदा तदा तस्या योनि- स्थानं स करेण स्पृशति. एवं तस्या रुदंत्याः प्रतीकारं कुर्वन् स कदाचित्पितृभ्यां दृष्टः, कुट्टयित्वा निकेतनाच्च निष्कासितः. एवं पितृनिष्कासितः स दारकस्तेषां चौराणां मिलितः. ततस्तेन मिलि- तेन चौरपंचशती जाता. अथ सा विप्रबालिका शैशवादपि कुलटा जाता. सान्यदैकस्मिन् ग्रामे ग- ता, तैश्चौरैः स ग्रामो लुंटितः, ततस्तैश्चौरैः सा बालिका गृहीता, तैः सर्वैरपि च सा स्वभार्याकारि- ता. सैका च तैः सार्धं भोगाननुभवति. तदा करुणापरैस्तैश्चौरैर्विमृष्टं यदेषैकाकिनी बहुभिः सार्धं भो- गाननुभवंती निधनं यास्यति, अतोऽस्याः समाध्यर्थं काचिद् द्वितीया वनितानीयते. एवं विमृश्य तैः स्तेनैरेका द्वितीया भार्या समानीता, ततस्ते स्तेनास्ताभ्यां भार्याभ्यां भोगाननुभवंतः कालं

निन्युः. कियद्दिनानंतरं प्रथमातिरोषणा कामुकी पापपरैवमचिंतयत: अहो! एषा द्वितीया भार्या मम कामविघ्नकारिणी सपत्नी जाता. ततोऽहं केनाप्युपायेनैनां मारयामीति विचिंत्य सा तस्याश्छिद्राणि व्यलोकयत.

अथैकस्मिन् दिने तेषु चौरेषु धाटीं गतेषु गृहे च विजने जाते सा पूर्वभार्यातिकोपात्तां द्वितीयां भार्यां सरलां वंचयित्वागाधकूपे निचिक्षेप. चौरिकां कृत्वा समागताश्चौराः, तैः पृष्टं तव द्वितीया भगिनी कास्ति? तयोक्तं नाहं जाने, कापि गता भविष्यति. ते दध्युरनया पापिन्या नूनं सा मुग्धा हता संभाव्यते. द्विजेन चिंतितमेषा दुर्मतिर्मम भगिनी भवति न वा? एतत्कथं ज्ञास्यते? यदि कश्चिद् ज्ञानी समेति तदा पृच्छ्यते. एवं स यावता चिंतयति तावत्तेनास्मदागमनं श्रुतं. सोयं विप्रतस्करः स्वसृलज्जयागत्य स्वसंशयं मनसापृछत्. ततोऽस्माभिरुक्तो गिरा पृछ? ततोऽनेन गुप्तगिरा पृष्टं भगवन्! या सा सा सेति, अस्माभिरपि तथैवोत्तरमदायि. पुनः स्वामिनोक्तं भो भविकाः! पंचेंद्रियवशतां प्राप्ता लोका एवं विडंबनां प्राप्नुवंति. तानींद्रियाणि च भवे भवे जीवान् विलोभयंति. इत्यादिवीरवाक्यं श्रुत्वा स विप्रतस्करः संविग्नो विप्रोर्व्रतमवाप्य पल्लीं गतः, तत्र तेन मु

निना प्रतिबोधितास्ते सर्वेऽपि तस्करास्तस्यांतिके प्रव्रजिताः. अथ भगवद्देशनां श्रुत्वा मृगावती जगाद हे प्रभो! चंडप्रद्योतानुज्ञयाहं प्रव्रजिष्यामि. अथ सा प्रद्योतं जगाद, हे राजेंद्र! यदि त्वं मामनुजानासि तदाहं श्रीवीरपादांते व्रतमंगीकरोमि. प्रभुप्रभावप्रभ्रष्टवैरश्चंडप्रद्योतो मृगावतीं जगाद, हे मृगावति! ममाज्ञया व्रतं लात्वात्महितं कुरु? तत् श्रुत्वा हृष्टा मृगावत्युदयनं पुत्रं चंडप्रद्योतोत्संगे मुक्त्वा स्वाम्यंतिके दीक्षामुपाददे. तदानीं मृगावत्या समं प्रद्योतस्त्रीभिरंगारवत्यादिभिरष्टाभिर्दीक्षांगीचक्रे. चंडप्रद्योतो नृप उदयनं कौशांबीराज्ये स्थापयामास. ततो नाथेनानुशिष्य मृगावत्यादयश्चंदनायै समर्पिताः. अथ तासां साध्वीनां चंदना सामाचारीं शिक्षयति. ततो भगवानन्यत्र विजहार. मृगावत्याः केवलोत्पत्तिसंबंधस्तु चतुर्थकुलके भावनाधिकारे कथयिष्यते. इत्थं मृगावतीदेव्या—श्चरित्रं शीलसंयुतं ॥ दर्शितं मयका किंचि—द्भव्यानां भुवि बोधकृत् ॥ १ ॥ इति मृगावतीकथानकं समाप्तं. ॥ इति षष्ठी कथा ॥ अथाच्चंकारिताचरित्रमाहात्म्यमाह—

॥ मूलम् ॥—अच्चंकारिअचरित्रं । सुणिउं ण को धुणेइ किर सीसं ॥ जो अखंडियसीला । भिल्लवइ कयत्थियावि दढं ॥ १६ ॥ व्याख्या—' अच्चंकारियत्ति ' अच्चंकारिता, प्राकृतत्वात्कस्व:

' चरियंति ' चरित्रं श्रुत्वा कः पुमान् किलेति निश्चयेन शीर्षं न धुनोति? अपि तु सर्वोऽपि. या
दृढमत्यर्थं भिल्लपतिना भिल्लनायकेन कदर्थितापि पीडिताप्यखंडशीलाभूदिति गाथार्थः. विशेषार्थ-
स्तु कथानकादवगंतव्यः. ॥ १६ ॥ तत्कथानकं चेदं—तत्रादौ मुनिपतिचरित्रं लेशतो लिख्यते,
यतस्तद्विनाच्चंकारिताचरित्रं सम्यग्नावबुध्यते. तद्यथा—

अत्रैव भरतक्षेत्रे मणिपतिका नाम नगर्यस्ति, तस्यां नगर्यां मुनिपतिराजा राज्यं करोति. त-
स्य राज्ञः पृथ्वीनामपट्टदेव्यस्ति. तयोः पुत्रो निजबांधवकुमुदवनचंद्रो मुनिचंद्रनामास्ति. अथान्यदा
मुनिपतिनरेंद्रः स्वमस्तकान्निर्गतं पलितकेशं दृष्ट्वा जातसंवेगः पुत्रे राज्यं दत्वा दमघोषमुनिपादांते
निष्क्रांतः. अभ्यस्तद्विविधशिक्षः षड्विधजीवनिकायरक्षापरः क्रमेण स गीतार्थो जातः. एकाक्येव
प्रतिमां प्रतिपन्नोऽसौ मह्यां क्रमेण विचरन् शिशिरर्ताववंतीनगर्यां बहिरुद्याने नगरोपांते कायोत्सर्ग-
प्रतिमया मेरुनिश्चलो यावत्तस्थौ तावत्तत्र शीतत्राणकृते गोपालबालकैः भक्त्या स्वचीवरैः सर्वतः
परिवेष्टितः. प्रातः समये स्वानि चीवराणि संगृहीष्याम एवं विचिंत्य ते गोपालबालकाः स्वस्थान-
मगुः. तस्मिन् समये तत्र यज्जातं तन्निशम्यतां. तस्यां नगर्यां बोधिभट्टो नाम ब्राह्मणः परिवसति.

स्स. तस्य भार्या धनश्रीनाम्न्यसतीमुख्या पापरता दुःशीला. स विप्रस्तिलसंग्रहणाल्लोके तिलभट्ट इ-
तिनामा कथ्यते. स तु मुग्धो वर्तते, मुग्धत्वाच्च भार्याया दुष्टचेष्टितं स न जानाति. तया पापिन्या
धनश्रिया भोगोपभोगार्थं सर्वे तिलाः पुष्पतांबूलसुखासिकादिकृते विक्रीताः. ततस्तया पापिन्या
धनश्रिया चिंतितं तिलाः सर्वेऽपि निष्ठिताः, अथ भर्तुः किमुत्तरं दास्यामि? तत्कालोत्पन्नमत्या त-
या कृष्णचतुर्दश्यां निशाद्विप्रहरसमये नगराद्बहिर्गत्वा यस्मिन् प्रदेशे स मुनिपतिसाधुर्वतते तत्र
परिधानं मुक्त्वा विहंगमपिच्छैः स्वं शरीरं सर्वतश्छादितं. ततः सा कज्जलेन श्यामं मुखं कृत्वा खदि-
रांगारपूरितं शरावं करे कृत्वा द्वितीयकरे च कर्त्रिकां धृत्वा विकीर्णकेशा साक्षाड्डाकिनीव यत्र क्षेत्रे
तिलभट्टो विप्रो वर्तते तत्र ‘ तिलं भक्षयामि तिलभट्टं वा भक्षयामीति ’ पूत्कुर्वती गता. एवं वा-
रंवारं जल्पंतीमंतरांतरा च करस्थं वह्निशरावमुद्दीपयंतीमुत्तमांगं धूनयंतीं दृष्ट्वा भीतो विप्रस्तस्या व-
क्रमवलोकयंश्चेष्टां च दृष्ट्वा भयेन कंपितशरीरो यावत्तिष्ठति तावत्समीपमागत्य सा पापा भणति, रे
पाप विप्र! बहुकालेन त्वं मया दृष्टोऽसि, त्वामहं सांप्रतं स्वहस्तेन मारयामि. ततः स भयभीतो भ-
येनाकंपितशरीरो वक्ति हे देवि! मयि दीने तवाज्ञाकारके तव सेवके कृपां कुरु? इत्युक्त्वा स त-

स्याः पादयोः पतितः, ततः सा भणति भो विप्र! किं त्वं मां नोपलक्षयसि? अहं तिलभक्षिणी देवी त्रिभुवने विख्याता, यदि तव जीवितेच्छा वर्तते तर्हि निजान् सर्वांस्तिलान् देहि? त्वया तेषां तिलानां नामापि न ग्राह्यं, स्वस्थचित्तश्च याहि स्वस्थानं? सोऽपि तुष्टस्तत्पादे पतितः स्वस्थचित्तो जातः, सापि संतुष्टमानसा कृतकार्या तत्रैव साधूपांते समागता. ततस्तया स्वं शरीरं प्रक्षालितं, वस्त्राणि परिहितानि, तावत्तस्मिन्नग्नौ वातप्रेरितस्तृणपूलकः पतितः, तेन चोद्योतो जातः, तेनोद्योतेन च तया पापिन्या चीवरप्रावृतो मुनिपतिर्मुनिर्दृष्टः, तदा निजचरित्रभीतया तया पापिन्या मनस्येवं चिंतितमहो एष मुनिर्मम चरित्रं सर्वं लोकाग्रे कथयिष्यति. तर्ह्येनं मुनिमनयाग्निज्वालया ज्वालयामीति कृत्वा स एवाग्निस्तया तस्य मस्तकोपरि क्षिप्तः, तयाग्निज्वालया बालकैराच्छादितानि वस्त्राणि दग्धानि, तेन च स मुनिः किंचिद्दग्धः, यतोऽग्निः स्तोक आसीत, एतत्कार्यं कृत्वा सा पापात्मा यावद्गृहे समागता, तावत्तथा ज्वलितो भयतरललोचनः कंपितशरीरस्तस्याः पतिस्तिलभट्टो गृहे समागतः, प्रोक्तं च तेन हे प्रिये! सांप्रतमहं देवतया ज्वलितः, मम कृते पल्यंकं सज्जय? तया पल्यंकः सज्जितः, ततोऽसौ यावत्तत्र शयनं करोति तावद्दाहज्वरेणात्यंतं पीडितस्तत्क्षणादेव मरणं

प्रासः, अहो पापिन्या किं कार्यं कृतं! ततः सा पापात्मैवं बहु पापं कृत्वा ततो मृत्वा नरकं गता. अथ ते गोपालबालकाः स्वचीवरग्रहणार्थं मुनिपतिसमीपे प्राप्ताः, तं मुनिवरं च दग्धं दृष्ट्वा मनसि दुःखपरायणाः कुंचिकश्रेष्ठिसमीपे गताः, तस्य कुंचिकश्रेष्ठीत्यभिधानं कथं जातं? यतो जिनगृहाणां कुंचिकास्तत्करे तिष्ठंतीति स कुंचिकश्रेष्ठीति प्रसिद्धः, ते बालकाः कुंचिकश्रेष्ठिसमीपे गत्वा सर्वं पूर्ववृत्तांतं न्यवेदयन्, समागतस्तत्र श्रेष्ठी, तं मुनिपतिमुनिं च समानीय स्वगृहसमीपस्थाने एकस्मिन्नपवरके स्थापयामास. ततस्तेन श्रेष्ठिना तत्रस्थसाधुसमीपे गत्वा प्रोक्तं भो साधव एको मुनिवृषभः कायोत्सर्गेण नगरबहिः स्थितो निशायां केनचित्पापिना वह्निना दग्धः, स च मया मम गृहे समानीतः, तस्य चिकित्सार्थं यूयं सावधाना भवत? मुनिभिरुक्तं वयं किं कुर्मः? कुंचिकश्रेष्ठिनोक्तं यूयमच्चंकारिभट्टागृहे गत्वा लक्षपाकं नाम तैलं समानयत? ततोऽहमन्यत्सर्वमौषधादिकं करिष्ये, ततश्चासौ नीरोगो भविष्यति.

ततस्तन्मुनिवरयुगलमच्चंकारिभट्टागृहे गतं, तेन मुनिवरयुगलेन तत्र गत्वा लक्षपाकतैलं याचितं, तया च तैले दीयमाने यज्जातं तन्निशम्यतां?—सौधर्मदेवलोके सौधर्मसभायां समुपविष्टः

सौधर्मेंद्रो जल्पति, संप्रति भुवनेऽच्चंकारिभट्टासदृक्षः कोऽपि शमतावान्नास्ति. या देवदानवमानवै- रन्योऽन्यया क्रोधं कारयितुं चाशक्या, तदिंद्रवाक्यमश्रद्दधानः कश्चिद्देवोऽच्चंकारितागृहे समागतः, अच्चं- कारितया साधुदानार्थं दास्या हस्तेन तैलकुंभः समानायितः, स कुंभो देवेन देवशक्त्या तस्या ह- स्तात्पातितः, सर्वं च तैलं गतं. ततस्तया द्वितीयः कुंभः समानायितः, सोऽपि देवेन पातितः, एवं त्रीन् वारांस्त्रयो लक्षपाकतैलकुंभा महामूल्यास्तेन देवेन पातिताः, तथापि तस्या दास्या उपरि को- पो न जातः, तदानीं मुनिरूपधारी स देव उक्तवान्, हे अच्चंकारिते! त्वमप्यस्यै कोपं माकृथाः. तया प्रोक्तं स्वामिन्मम गृहे प्रचुरं तैलं विद्यते, ततस्तैलं गृहाण? ततस्तया चतुर्थः कुंभः समानायितः, स तु तस्याः शीघ्रमाहात्म्यतो न भग्नः, तया तैलं दत्तं, मुनिवरेणापि च यथायोग्यं गृहीतं, तया तैलं दत्त्वा प्रोक्तं स्वामिन् मया- स्मिन् भवे क्रोधफलं सम्यगनुभूतं, तत्स्मरंत्या च मया क्रोधप्रत्याख्यानं कृतं, तद्दिनाच्चारभ्याहं मह- त्यपराधेऽपि मनागपि क्रोधं न करोमि, यतः—क्रोधो मूलमनर्थानां । क्रोधः संसारवर्धनः ॥ धर्म- क्षयंकरः क्रोध—स्तस्मात् क्रोधं विवर्जयेत् ॥ १ ॥

ततो मुनिन्योक्तं त्वयास्मिन् भवे क्रोधफलं कथं भुक्तं? क्रोधप्रत्याख्यानं च कथं कृतं? तत्वं सर्वं तव चरित्रमस्मदग्रे कथय? तयोक्तं श्रूयतां मम चरित्रं—अस्मिन्नेव नगरे धननामा श्रेष्ठी परिवसति, तस्य प्रिया कमलश्रीनाम्नी, तयोरष्टौ पुत्राः संजाताः, तेषां पुत्राणामुपरि अहमेका पुत्रिका जाता भट्टिकानाम्नी बांधवजनवल्लभा. विशेषतो जनकस्य. अथैकस्मिन् दिने बंधुसमक्षं जनकेनोक्तमेषा मम पुत्री प्राणप्रिया केनापि नाच्चंकारयितव्या. ततो जनैरच्चंकारिताभट्टेति मम द्वितीयं नाम प्रवर्तितं. एवं मातापितृभ्यां बंधुभिश्च लाल्यमाना क्रमेणाहमष्टवार्षिकी जाता. पित्रा कलाचार्यसमीपे पाठिता, यौवनं प्राप्ताप्यहं पाणिग्रहणं नेच्छामि. मया जनकस्य प्रोक्तमहं तस्य पुरुषस्य पाणिग्रहणं करिष्ये, यो मम वचनकारको भविष्यति. अन्यथाहं पितृगृहे धर्मपरायणा स्थास्यामि. एवमभिग्रहं कृत्वा यावत् सा तस्थौ तावदनेकवराः पाणिग्रहणेच्छया समायांति, परं मम जनकः कथितकारकत्वात् कस्यापि न ददाति. एवं दिनानि यांति. क्रमेणाहं प्रौढकन्या जाता. तस्मिन् प्रस्तावे एतन्नगरनिवासिसुबुद्धिनाम्ना मंत्रिणाहं दृष्टा, मम जनकपार्श्वे च तेन मार्गिता. तदा मम तातेनोक्तं योऽस्या वचनं करिष्यति तस्याहं दास्ये, नान्यस्य. तेनापि मद्रूपमोहितेन मम जनक

वचोंगीकृतं. ततोऽहं तस्य दत्ता. ततो महोत्सवपूर्वकं विवाहो जातः, तस्य गृहे च तिष्ठंत्या मम सुखेन दिनानि यांतिस्म. तस्य परिवारो मां गृहदेवतावत्पूजयति मानयति च.

अथैकस्मिन् दिने मया भर्तुरग्रे प्रोक्तं स्वामिंस्त्वया संध्यायां गृहे समागंतव्यं, निशायां कुत्रापि न स्थातव्यं, यतो निशायामधिकारिणां गृहाद्वहिः स्थितानां भयं भवति, ततश्चाहं निषेधयामि, नान्येन हेतुना. मंत्रिणापि चिंतितमेषा यथास्थितं सुंदरं च मम हितं कथयति, अतोऽस्या वचनमंगीकरोमीति विचिंत्य तेनापि मम वचनमंगीकृतं. एवं कियंतो वासरा गताः. तदानीं राज्ञा पृष्टं भो मंत्रिंस्त्वं प्रत्यहं सकाले किं गृहे यासि? तेनोक्तं स्वामिन् भार्याभयेन. राज्ञोक्तं भार्यायाः किं भयं? ततो मंत्रिणा यथातथ्ये प्रोक्ते राज्ञा विनोदार्थं स द्विप्रहरनिशां यावत्स्थापितः, ततो मुक्तश्च. शेषद्विप्रहरनिशासमये स गृहे गतः. तं समागतं ज्ञात्वाहमपि रोषारुणलोचना दृढं कपाटं दत्वा गृहमध्ये तस्य वचांसि शृण्वाना तिष्ठामि, यथा—उग्घाडेसु किसोअरि । वासघरं तुज्झ किंकरो भिच्चो ॥ एसागओ दुवारे । चिठ्ठइ उक्कंठिओ बाढं ॥ १ ॥ बहुसोवि भणिज्जंतो । अहयं अन्नाणकोहदोसेण ॥ उग्घाडेमि दुवारं । नतस्स तो तेणिमं भणिअं ॥ २ ॥ ततो मया चिंतितं

मम प्राणेशो मम कृते भृशं खिद्यते, अतः कपाटमुद्घाटयामि, ततश्चाहं स्वेप्सितं करिष्ये. इति
विचिंत्य मया तस्य कृते कपाटोद्घाटनं कृतं. ततः स मध्ये समागतः. कोपावेशवशं गताहं तदैव
गृहाद्बहिर्निर्गता, पितृगृहे यांती निशायां मार्गे चौरेणाहं गृहीता. तेन चौरेण मम वस्त्राभरणानि
गृहीत्वा मां पल्लीं नीत्वा पल्लीस्वामिने दत्ता. तेन पल्लीशेनाहं भोगार्थं प्रार्थिता, परं मया तस्योक्तं
न कृतं, ततस्तेन रुष्टेनाहं विविधप्रकारेण मारिता. प्रत्यहमुत्थाय स मां कथयति हे सुंदरि! त्वं म-
या सह भोगान् भुंक्ष्व? मयोक्तं नाहं कदापि शीलं खंडयामि, मम प्राणा यांतु, परं प्राणत्यागेऽपि
शीलत्यागं सर्वथा न करोमि, त्वं मुधा मया सह प्रयासं करोषि, मम विषये तव प्रयासो वृथा भ-
विष्यति यथोषरे वर्षणं, यथा चारण्ये धर्मोपदेशस्तथा मयि तव विलासेच्छा. तथापि तेन पापिना-
हं भृशं कदर्थिता, परं मया तस्योक्तं न कृतं. ततस्तस्य जनन्योक्तं भो पुत्रक! एषा महासती, तव
कदर्थयितुं नो युक्ता. यतः शीलवत्यः कदर्थिताः सत्यः शापं ददति, तदा तच्छापेन पुमान् मृत्युमा-
प्नोति. इत्युक्त्वा तज्जननी तस्याग्रे बलाकिकाकथानकमकथयत्. एकस्यामटव्यां कश्चित्परिव्राजकः
परिवसति, तस्याज्ञानतपोयोगात्तेजोलेश्या समुत्पन्ना.

अथान्यदा कदाचिद् वृक्षतले स परिव्राजकः स्थितः, तस्य मस्तकोपरि बलाकिकया पुरीषप्रक्षेपः कृतः, तदा तस्य परिव्राजकस्य महान् कोपो जातः, अहो पापिन्या बलाकिकया मम मस्तकोपरि विष्ठा क्षिप्ता. ततस्तेन तापसेन तदुपरि तेजोलेश्या मुक्ता, दग्धा बलाकिका, ततस्तेन तापसेन चिंतितं यः कोऽपि ममावज्ञां करिष्यति तमहं तेजोलेश्यया ज्वालयिष्यामि. इति चिंतयित्वा तापसो भिक्षार्थं नगरे कस्यचित् श्रावकस्य गृहे गतः, तस्य स्त्री सती वर्तते, सा निजपतिकार्यव्यापृता भिक्षां गृहीत्वा विलंबेनागता, स तापसस्तस्या उपरि कुपितस्तेजोलेश्यां मुमोच, परं शीलमाहात्म्यतः सा न दग्धा, तया चैवं भणितं भोस्त्रिदंडिन्नाहं बलाकिका, तापसेनोक्तं हे दृढशीले त्वमरण्यसंभूतं व्यतिकरं कथं जानासि? सा कथयत्येनं व्यतिकरं तव वाराणसीकुंभकारः कथयिष्यति, त्वं तत्र गत्वा पृच्छ? स तापसश्च तत्र गत्वा तं परिपृच्छतिस्म, तेनोक्तं भो तापस! अस्याः शीलमाहात्म्यतो ज्ञानमुत्पन्नं. तेन ज्ञानेन चैषा सर्वं जानाति, ममापि शीलगुणेन तथैव ज्ञानमुत्पन्नं, तेनाहमपि सर्वं जानामि, अतस्त्वमपि तस्मिन् शीलविषये यत्नं कुरु? एतत्कथानकं श्रुत्वा विरक्तो भिल्लनायकः. ततस्तेनाहं कस्यचिन्नरस्यांतिके विक्रीता, तेनापि चाहं भोगार्थं प्रार्थिता, परं

तस्यापि कथितं मया न कृतं, ततस्तेनाहं बब्बरकूले कारुकगेहे विक्रीता, तस्याप्युक्तं मया न कृतं, ततः स कारुको मम शरीराद्रुधिरमाकृष्यैकत्र भांडे न्यधात्. तत्रोत्पन्नानां कृमीणां रुधिरेण च स वस्त्राणि रंजयति. एवं रक्ताकर्षणादहं पांडुरांगी जाता.

अथान्यदा तस्मिन् देशे तस्मिन्नगरे विधिवशात्तस्य गृहे वाणिज्यार्थं मम भ्राता समागतस्तेनाहं चोपलक्षिता. तेन तस्य कारुकस्य पृष्टं भो एषा वनिता कुतस्त्वया लब्धा? तेनोक्तं केनचिद्व्यापारिणैषा विक्रीता, मया भार्यार्थं भाषिताप्येषा मम वाक्यं न चक्रे. ततो मयानया रीत्या तद्रुधिरं कृष्यते. तेन चिंतितं सैषा मम भगिनी, तथाप्येनां पृच्छामि. ततस्तेन सा पृष्टा, हे भद्रे! त्वं कासि? क्व वासिनी? कस्य च तनया? मया प्रोक्तं भो महात्मन्नहमवंतीवासिनी धनश्रेष्ठिनः पुत्री, सुबुद्धिमंत्रिणश्च पत्नी. दैवेन चाहमत्रानीता मम पूर्वकर्मदोषतः. ततस्तेन तां स्वभगिनीं ज्ञात्वा तेभ्यः सा मोचिता. ततोऽहं भ्रात्रा बाढं शुश्रूषिता वस्त्राद्यैरलंकृता च, ततोऽहं तेन गृहे समानीय जनकस्यार्पिता. एष सकलोऽपि वृत्तांतो मम भर्त्रा श्रुतः. ततस्तेनाहं स्वगृहे समानीता. ततो मया तद्दिनादारभ्यैषा प्रतिज्ञा कृता यथा मरणांतेऽप्यहं कस्याप्युपरि कोपं न करोमीति. यतो मया क्रो·

धस्य फलं भुक्तं. क्रोधवशतश्च मया यानि यानि फलानि भुक्तानि तानि कस्याप्यग्रे वक्तुं नो शक्यंते. तस्या एवंविधानि वचनानि श्रुत्वा स त्रिदशोऽपि प्रकटीबभूव. ततस्तेन देवेनेऽस्य सकलो वृत्तांतः कथितः, संतुष्टो देवः पूर्वभग्नांस्तैलकुंभान् सज्जीकृत्य तस्यै समर्पयामास, तामच्चंकारितां च प्रशस्य स्वर्णवृष्टिं विदधे, यतः—अमोघा वासरे विद्यु—दमोघं निशि गर्जितं ॥ अमोघा मौनिनां वाणी । ह्यमोघं देवदर्शनं ॥ १ ॥ ततः स स्वस्थानं गतः. ततस्तौ मुनिवरौ तत्तैलं गृहीत्वा मुनिपतिवैयावृत्त्यर्थं कुंचिकश्रेष्टिने दत्वा स्वस्थानं गतौ. ततः कुंचिकश्रेष्टिना तेन तैलेन स मुनिपतिसाधुः पटूकृतः. स साधुरपि स्वस्थचित्तस्तद्वर्षाकालं तस्य गृहे तत्रैव तस्थौ. अच्चंकारितापि शीलालंकारधारिण्यंते समाधिना मृत्वा देवसुखानि भुक्त्वा मोक्षं यास्यति. अत्र मुनिपतिचरित्रं प्रसंगतः किंचिदुक्तं, विस्तरतस्तु मुनिपतिचरित्रादवसेयं. भट्टिकाख्यमहासत्या । स्वशीलक्रोधनिग्रहौ ॥ वर्णितौ स्वमुखेनैवं । साध्वोरग्रे यथास्थितं ॥ १ ॥ इत्यच्चंकारिताकथानकं समाप्तं. अथ कुशीलस्य दुःखं दर्शयति—

॥ मूलम् ॥—नियमित्तं नियजाया । नियजणओ नियपितामहो वावि ॥ नियपुत्तोवि कुसी-

लो । न वल्लहो होइ लोयाणं ॥ १७ ॥ व्याख्या—निजमित्रं, निजभ्राता, तथा निजजनकः, निजपितामहो वापि, निजपुत्रोऽपि, अपिशब्दादन्येऽपि स्वज्ञातीयाः, कुशीलः कुत्सितशील इत्यर्थः, लोकानां जनानां वल्लभो न भवतीति गाथार्थः. ॥१७॥ अथ शीलव्रतभंगस्य निःप्रतीकारतामाह—

॥ मूलम् ॥—सवेसिंपि वयाणं । भग्गाणं अत्थि कोवि पडियारो ॥ पक्कघडस्सव कण्णा । न होइ सीलं पुणो भग्गं ॥ १८ ॥ व्याख्या—सर्वेषामपि भग्नानां व्रतानां कोऽपि कश्चिदपि प्रतीकारोऽस्ति, परं शीलं भग्नं पुनर्न भवति, यथा कुंभकारकृतपक्कघटस्य कर्णा भग्नाः पुनर्न भवंतीत्यत्र वचनपरिणामस्तु प्राकृतत्वादिति गाथार्थः. ॥ १८ ॥ अथ शीलाढ्यप्रभावं दर्शयति—

॥ मूलम् ॥—वेआलभूअरक्खस—केसरिचित्तयगयंदसप्पाणं ॥ लीलाइ दलइ दप्पं । पालंतो निम्मलं सीलं ॥ १९ ॥ व्याख्या—वेतालभूतास्तथा राक्षसा इति व्यंतरजातयः, तथा केसरिणः सिंहाः, 'चित्तयत्ति' चित्रकाः, गजेंद्राः, तथा सर्पास्तेषां दर्पमभिमानं लीलया दलयति जनः; किं? कुर्वन्, किं? शीलं, कथंभूतं निर्मलमिति गाथार्थः. ॥ १९ ॥ अथ शीलमाहात्म्यमाह—

॥ मूलम् ॥—जे केइ कम्ममुक्का । सिद्धा सिज्झंति सिज्झहिंति तहा ॥ सवेसिं तेसिं बलं ।

विसालसीलस्स दुल्ललियं ॥ २० ॥ व्याख्या—पूर्वं ये केचन पुरुषाः कर्ममुक्ताः सिद्धा मोक्षं गता· स्तथा वर्तमानकाले महाविदेहादौ सिध्यंति मोक्षं यांति, तथागमिष्यत्काले ये सेत्स्यंति, तेषां सर्वे· षां वलं विशालशीलस्य दुर्ललितं विजृंभितं ज्ञेयमिति गाथार्थः.॥ २० ॥

इति श्रीमत्तपागच्छाधिराजभट्टारकश्रीआनंदविमलसूरितत्पट्टालंकारहारभट्टारकश्रीविजयदानसूरितत्पट्टप्रभावकपातिसाहिप्रतिबोधकभट्टारक श्रीहीरविजयसूरितत्पट्टालंकार संप्रतिविजयमानभट्टारक· श्रीविजयसेनसूरिराज्ये आचार्यश्रीविजयदेवसूरियौवराज्ये पंडितदेवविजयगणिविरचितायां कुलक· वृत्तौ धर्मरत्नमंजूषानाम्न्यां शीलधर्मरूपो द्वितीयो वक्षस्कारः समाप्तः. इति श्रीशीलकुलकं समाप्तं॥

॥ इति श्रीधर्मरत्नमंजूषायाः द्वितीयो भागः समाप्तो गुरुश्रीमच्चारित्रविजयसुप्रसादात् ॥

चारित्रपूर्वा विजयाभिधाना । मुनीश्वराः सूरिवरस्य शिष्याः ।
आनंदपूर्वविजयाभिधस्य । जातास्तपागच्छसुनेतुरेते ॥ १ ॥

आ ग्रंथ श्रीजामनगरनिवासी पंडित श्रावक हीरालाल हंसराजे स्वपरना श्रेयमाटे पोताना श्रीजैनभास्करोदय छापखानामां छापी प्रसिद्ध कर्यो छे.

॥ श्रीजिनाय नमः ॥

॥ श्रीचारित्रविजयगुरुभ्यो नमः ॥

॥ अथ श्रीधर्मरत्नमंजूषा ( दानादिकुलकवृत्तिरूपा ) प्रारभ्यते ॥

( तृतीयो भागः )

( कर्ता—श्रीदेवविजयगणी )

छपावी प्रसिद्ध करनार—पंडित श्रावक हीरालाल हंसराज. ( जामनगरवाळा )

अथ धर्मस्य तृतीयभेदं तपोरूपमाख्यातुकामस्तपस्विनं प्रथमजिनं मंगलार्थं स्तौति—

॥ मूलम् ॥—सो जयउ जुगाइजिणो । जस्संसे सोहए जडामउडो ॥ तवझाणग्गिपलीविअ—कम्मिंधणधूमपंतिव्व ॥ १ ॥ व्याख्या—स युगादिजिनः प्रथमजिनो जयत्विति क्रियासंटंकः. स कः? यस्यांसे स्कंधे ' सोहएत्ति ' शोभते विराजते जटामुकुटो जटैव मुकुटो जटामुकुटः, उत्प्रेक्षामाह—तपोध्यानरूपाग्निभिः ' पलीविअत्ति ' प्रदीपितानि प्रज्वालितानि यानि कर्मेंधना

॥ श्रीजिनाय नमः ॥

# ॥ श्रीधर्मरत्नमंजूषा भाग २. ॥

( कर्त्ता—श्रीदेवविजयगणी )

छपावी प्रसिद्ध करनार—पंडित श्रावक हीरालाल हंसराज ( जामनगरवाळा )


वीरसंवत्—२४४२. विक्रमसंवत—१९७२. सने—१९१६.

किं. रु.—६—१२—०

☞ श्रीजैनभास्करोदय प्रेस. जामनगर. ☜

॥ श्रीजिनाय नमः ॥

॥ श्रीचारित्रविजयगुरुभ्यो नमः ॥

## ॥ अथ श्रीधर्मरत्नमंजूषा ( दानादिकुलकवृत्तिरूपा ) प्रारभ्यते ॥

( तृतीयो भागः )

( कर्ता—श्रीदेवविजयगणी )

छपावी प्रसिद्ध करनार—पंडित श्रावक हीरालाल हंसराज. ( जामनगरवाळा )

अथ धर्मस्य तृतीयभेदं तपोरूपमाख्यातुकामस्तपस्विनं प्रथमजिनं मंगलार्थं स्तौति—

॥ मूलम् ॥—सो जयउ जुगाइजिणो । जस्संसे सोहए जडामउडो ॥ तवझाणग्गिपलीविअ—कम्मिंधणधूमपंतिव्व ॥ १ ॥ व्याख्या—स युगादिजिनः प्रथमजिनो जयत्विति क्रियासंटंकः. स कः? यस्यांसे स्कंधे ' सोहएत्ति ' शोभते विराजते जटामुकुटो जटैव मुकुटो जटामुकुटः, उत्प्रेक्षामाह—तपोध्यानरूपाग्निभिः ' पलीविअत्ति ' प्रदीपितानि प्रज्वालितानि यानि कर्मेंधना

नि तेभ्यो निर्गता धूमपंक्तिरिव धूमश्रेणिरिवेति गाथार्थः ॥ १ ॥ व्यासार्थस्तु कथानकादवसेयः. तत्कथा तु पूर्वं श्रीऋषभदेवचरित्रे दानकुले ' धणसत्थवाहजम्मे ' इतिगाथाव्याख्यानावसरे प्रोक्ता. जटामुकुटश्च दीक्षावसरे स्वामिना चतुर्मुष्टिकलोचकरणानंतरमिंद्रविज्ञप्त्या ये पंचममुष्टिग्राह्याः केशा नोत्पाटितास्ते जटारूपेण स्थिता इति ज्ञेयं. अथ सर्वोत्कृष्टतपस्वित्वात्प्रथमं बाहुबलिदृष्टांतमाह—

॥ मूलम् ॥—संवच्छरिअनवेणं । काउस्सग्गंमि जो ठिअ भयवं ॥ पूरियनिययपयणो । हरउ दुरिआइं बाहुबली ॥ २ ॥ व्याख्या—यो भगवान् बाहुबलिः सांवत्सरिकतपसा कायोत्सर्गे स्थितः, संपूरिता संपूर्णीकृता निजप्रतिज्ञा येनैवंविधः सन् बाहुबलिः श्रीऋषभदेवपुत्रो लोकानां दुरितानि पापानि हरतु विनाशयत्विति क्रियासंबंध इति गाथार्थः. ॥ २ ॥ विस्तरार्थस्तु कथानकादवसेयस्तत्कथा चेयं—

विनीतायां नगर्यां श्रीऋषभदेवस्य द्वे पत्न्यौ सुमंगलासुनंदानाम्न्यौ. तयोर्द्वयोर्द्वौ पुत्रौ, सुमंगलायाः पुत्रो भरतचक्री, सुनंदायाश्च बाहुबलिनामा, परं सोऽतिशयेन बलवान्. श्रीऋषभजिनाथेन

प्रव्रजता भरतो विनीताराज्ये स्थापितः, बाहुबलिश्च बहलीदेशे निवेशितः. तथान्येऽष्टनवतिपुत्राः
स्वस्वनामांकितदेशेषु स्थापिताः. ततः स्वामिना दीक्षा गृहीता. अथ स्वामिनः श्रीऋषभस्य वर्षस-
हस्रं यावदार्यानार्येषु देशेषु मौनेन विहरत एकसहस्रवर्षांते कार्तिककृष्णैकादश्यां तिथावुत्तराषाढा
नक्षत्रस्थिते चंद्रे केवलज्ञानमुत्पन्नं. देवैस्तत्केवलमहिमा कृतः, ततो देवैः समवसरणे निष्पादिते
भगवति च तत्रोपविष्टे उद्यानपालकेन यमकेन भरतो वर्धापितः. तदैव तदायुधशालायां चक्ररत्न-
मुत्पन्नं, तदुत्पत्तिकथनेन च स शमकेन वर्धापितः. ततो मोक्षदायिनं भगवंतं केवलिनं ज्ञात्वा त-
त्केवलमहिमानं कृत्वा, मरुदेव्याः स्वामिन्याश्च निर्वाणमहिमानं कृत्वा भगवद्देशनां श्रुत्वा लब्धस
म्यक्त्वो भरतेश्वर आयुधशालामाजगाम. तत्रायुधशालायां चक्री चक्रं नत्वा कृतस्नानमज्जनो भर-
तश्चक्ररत्ननिमित्तमष्टाह्निकामहामहं चक्रे. यतश्चक्रं चक्रिणां परमदैवतं. तत्रैव निवसंश्चक्री प्रस्थानके
लग्ने कृतप्रस्थानमंगलः शुभशकुनैः प्रेरितोऽनुचक्रं करिरत्नसमारूढः सकलसैन्यपरिवृतो धृतातपत्र-
श्चामरैर्वीज्यमानशरीरः श्रीभरतनृपालो देशसाधनायाचलत. यथा—छत्र १ चर्म २ सि ३ सेनानी
४ । खड्ग ५ दंड ६ पुरोधसः ७ ॥ कुटुंबी ८ मणि ९ काकिण्यौ १० । वर्धकिश्च ११ नृपानुग. ॥

॥ १ ॥ चचाल रत्नस्तोमोऽयं । देवताकृतसन्निधिः ॥ दिगंतरपतीनां तु । चकंपुर्हृदयानि वै ॥ २ ॥
द्वात्रिंशद्बद्धमुकुटनरेशैः सार्धं परिवृतः स भरतनृपः षष्टिवर्षसहस्रैः षट्खंडां पृथ्वीं साधयित्वा सर्वत्र
लब्धजयश्चतुर्दशरत्ननवनिधिसहितो विनीतापुरिं पुनराजगाम.

अयोध्यायां समागते भरतनृपे सर्वे लोका मंत्रिमहामंत्र्यादयस्तत्पुरतः प्राभृतानि मुक्त्वा प्र-
णेमुः. एवं सर्वे राजानो दूरादागत्यागत्य क्रमेण प्राभृतानि मुक्त्वा द्वादशाब्दिकं चक्रवर्तित्वाभिषेकं
चक्रुः. तस्मिन् द्वादशाब्दिके चक्रिराज्याभिषेके वर्तमाने भरतनृप आगतानागतान् लोकान् प्रभु-
त्वादवलोकयंस्तत्र निजाननुजाननायातान् विज्ञाय न्यायविद्भूपालवासवस्तान्प्रति स्वदूतान् प्रेषया-
मास. ते दूतास्तान् भरतबांधवानित्येवमाहुः, भो राजेश्वराः! यूयं भरतं बांधवं नमध्वं? यतोऽसौ यु-
ष्माकं राजा वर्तते. तैरुक्तमस्माकं राजा तु ऋषभदेवो योऽस्माकं राज्यप्रदः, भरतस्त्वस्माकं बांधवो
न तु राजा. पुनस्तैरुक्तं भो राजेश्वराः! युष्माकं यदि जीवितेन राज्येन वा कार्यं भवति तर्हि भ-
रतनृपं यूयं भजध्वं? ततस्तैरुक्तं—विभज्य राज्यमस्माक—मेतस्यापि भवत्प्रभोः ॥ तातेन दत्तम-
स्मभ्यं। स किमाच्छेत्तुमिच्छति ॥ १॥ वयं भरतं कथमपि न सेवामहे, यतोऽस्माकमधिकेन कार्यं ना-

स्ति. परं स्वकीयं रक्षितुं क्षमाः. वयं सर्वेऽप्येकीभूय भरतेन सह युद्धं कृत्वा षष्टिसहस्रवर्षैस्तेनोपार्जितं सर्वं राज्यमादास्यामहे. यतो वयमपि पितुः सूनवः, भरतोऽपि पितुः सूनुः, भरतः किमस्मभ्यमधिकः? योऽस्माकं सेवां वांछति. भो दूताः! यूयं स्वस्थाने यात? वयं तातं पृष्ट्वा यत्किमपि कर्तव्यं भविष्यति तत्करिष्यामः. इत्युक्त्वा तान् दूतान् विसृज्य स्वयमष्टापदगिरौ स्वाम्यंतिके गत्वा जिनं च नत्वा भरतसंदिष्टं सर्वं स्वाम्यग्रेऽभ्यधुः. हे प्रभो! भवता तातेनास्मभ्यं राज्यं दत्तं. भरतश्च भरतं साधयित्वा षष्टिवर्षसहस्रैः समागतः, परं षट्खंडराज्येनापि स तृप्तो नाभूत्. अथ सोऽस्माकं राज्यान्युद्दालयितुं समीहते. यदि भवदाज्ञा भवति तर्हि वयं सर्वेऽपि संभूय भरतराज्यं गृह्णीमः. तत श्रुत्वा स्वामिना चिंतितमहो एते मुग्धाः किमपि न जानंति, यदेते भरतेन चक्रिणा सह संग्रामं कर्तुमीहंते. ततः स्वामिना तेषां पुरो देशना दत्ता. यतः—

संबुज्झह किं न बुज्झह । संबोही खलु पेच्च दुल्लहा ॥ नो हुवणमंति राईओ । नो सुलहं पुणरवि जीवियं ॥ १ ॥ डहरा वुड्ढा य पासहा । गब्भत्थावि चयंति माणवा ॥ सेणे जह वट्टयं हरे । एवं आउक्खयंमि तुट्टइ ॥ २ ॥ जीवियं जलबिंदुसमं । संपत्तीओ तरंगलोलाओ ॥ सुविणयसमं च

पिम्मं । जं जाणिसु तं करिज्जासु ॥ ३ ॥ इत्यादिभगवद्देशनां श्रुत्वा ते प्रतिबुद्धाः. ततस्तैरष्टनवतिभरतानुजैर्व्रतं भेजे. अथ भरतभूपस्तेषां प्राज्यानि राज्यानि जग्रसेऽग्निरिवेंधनानि. अथैकस्मिन् दिने सुषेणसेनानीर्गर्वपर्वतो भरतभूपं नत्वैवं व्यजिज्ञपत, हे स्वामिन्! भवता दिग्विजयं कृत्वा षट्खंडानि साधितानि, तथापि चक्रमायुधागारे न प्रविशति शठः शिष्यो मठमिव. तदानीं शुद्धबुद्धिनामा सचिवपुंगवो भरतंप्रत्याह हे स्वामिंस्त्वयि भर्तरि यात्राकर्तरि तवाज्ञाविमुखः कस्तिष्ठेत्? यथा चंद्रद्युतौ स्फुरति तमस्कांडं कियत्तिष्ठति? तथापि स्वामिंस्तवावरजो बंधुर्बाहुबलिभूपालस्त्वया न जितः, तस्मिंश्चाजिते त्वया जितमपि षट्खण्डमजितमेव, यतश्चक्रं शस्त्रागारे न प्रविशति. अतो बांधवत्वात्त्वयासौ नोपेक्षणीयः, तत् श्रुत्वा भरतभूपेन सुवेगनामा वाग्मी दूतः शिक्षां दत्वा तक्षशिलां नगरींप्रति प्रेषितः, सोऽप्यपशकुनैर्वार्यमाणोऽपि राज्ञा प्रेषितत्वान्मार्गे निम्नगानगरग्रामकांतारगिरिगह्वरानुल्लंघ्यास्तोकैः प्रयाणैर्बहलीदेशमासदत, तस्मिन् देशे स सुवेगनामा दुतो ग्रामे ग्रामे नगरे नगरे स्त्रीभिरपि श्रीऋषभदेवस्य यशस्तथा बाहुबलेर्यशो हल्लीसके नाटके च गीयमानं शुश्राव, भरतस्य तु नामापि कोऽपि न जानाति यद्भरतो भरते वर्तते. तद् दृष्ट्वा सुवेगोऽपि तं देशं

षट्खमादन्यं विवेद, यतस्तत्र सुंदराकृतयो ग्रामाकरनगरादयो दृश्यंते, तथा गजवाजिरथादयोऽप्य· न्याकृतयो विलोक्यंते. तं देशं तथाविधं दृष्ट्वा मोहितो सुवेगः क्रमेणाविछिन्नप्रयाणैः संचरंस्तक्ष· शिलां नगरीं समासदत्, स पुर्यां वैभवं त्रुवनाद्भुतं पश्यन्नुन्मुखो भवनालोकेन कौतुकान्निर्निमे· षोऽभूत्. एवं हट्टश्रेणितोरणजिनमंदिरान् समालोकयन् नृसिंहस्य बाहुबलेः सिंहद्वारं प्राप. सविस्म· यो रथात्समुत्तीर्याग्रे गछन् राजकुलद्वारे वेत्रिभिर्वारितो भरतचक्रिणः प्रताप इव स सुवेगनामा दूतो क्षणं तस्थौ. ततो वेत्रिणा राज्ञोऽग्रे विज्ञप्तं स्वामिन् भरतदूतः सुवेगनामा तव सिंहद्वारे स· मागतोऽस्ति, तवाज्ञया च राजपर्षदि प्रवेशं लभते. बाहुबलिनोक्तं भो वेत्रिंस्तं सुवेगमंतःसभं प्र· वेशय? ततस्तेन सुवेगोंतःसभं प्रवेशितः, स सुवेगोंतःसभं प्रविशन् स्फटिकस्तंभे लग्नः, स्खलितां· गकः पुनः स्फटिकस्तंभभिया करयुग्मं पुरः कृत्वा वेत्रिणा सार्धं रत्नस्तंभनिविष्टां सौधर्मसभानुकारां सभां समभिलोकयन् बाहुबलिसमीपे समागात्.

ततो बाहुबलिं नमस्कृत्य स पुरः स्थितः, ततो बाहुबलिनिर्देशाद्वेत्रिनिर्दिष्टे विशिष्टे विष्टरे सु· वेगो विनिविष्टवान्. ततो बाहुबलिर्वीरसुधामधुरया गिरा मेघवद्गर्जन् सुवेगंप्रति प्रोचे भो सुवेग!

मम बंधोर्भरतस्यास्ति कुशलं? तथा मद्बांधवेन षट्खंडं क्षमामंडलमाक्रमता सर्वे राजानो वशमानीताः? ते च सर्वे तव स्वामिन आज्ञां शिरसि धारयंति महानागा मणिमिव? तथा मद्बांधवेन षट्खंडं साधयता केनापि कश्चित्पराभवो लब्धः? तथा तस्यार्यस्य धर्मकामार्थाः परस्परं न बाधंते? तथा मद्बंधोः षड्गुणास्तिस्रः शक्तयः कल्पद्रुमा इव फलंति? इत्युक्त्वा स्थितो बाहुबलिराजः. ततः सोत्साहं भरतदूतः सुवेगो जगाद हे राजेंद्र! कस्तस्य कुशलप्रश्नः? तस्य सपरिच्छदस्य कुशलमस्ति, तस्मिन् भरते सति को कुशलक्रमः? तथा सुरकृतोपास्तेस्तस्य तव बांधवस्य पुरतः कस्तिष्टेत्? अर्के विक्रामति ध्वांतविक्रमः कुतः क्रमतां? तस्याज्ञा ह्यनेकैर्नृपैर्मुकुटमिव मूर्धनि ध्रियते, तस्य नृभुजश्च षाड्गुण्योपायचतुष्कशक्तित्रयादयोर्थाश्चिंतितैरर्थैः साक्षात्कल्पद्रुमा इव फलंति. त्रयोऽपि पुरुषार्थास्तस्य सेवका इव प्रवर्तंते. नृपैर्लोलकिरीटैः सेवितोऽपि स मुदं न दधाति. यदेतेऽस्मदीया अस्मत्सेवां कुर्वंत्यत्र को मोदः? योऽनाज्ञाकारकाणां बांधवानां सारामपि श्रियं कारानुकारां गणयति. यः सकलां पृथ्वीं विजित्य विनीतायामुपागतः, सबंधुभिः सुहृद्भिश्च तस्य चक्रित्वाभिषेकोऽभिषिक्तः, तवाग्रजन्मनस्तस्मिन्नुत्सवे लक्ष्मीजीवितरक्षार्थं के के पृथिवीभुजः स्वयं न समाया-

ताः? स्वार्थकृते सर्वेऽपि समायांत्येव, तव बंधुर्भरतो द्वादशवार्षिकेऽपि राज्याभिषेके जायमानेऽनायातान् स्वान् बंधून् विज्ञाय आर्तैनाकारयितुं पुरुषान् प्रेषयामास. ततस्ते सुमेधसः कल्पितानल्पसंकल्पास्तातपादांते गत्वा शांतात्मनो व्रतं व्यधुः. अथ भरतस्तव वियोगार्तिकातरस्त्वन्मिलनायोत्सुकस्त्वामाह्वयति, यद्यपि त्वं भ्रातृभावेन पुरा समागतस्तर्हि सांप्रतं लोकापवादभियापि किं नागच्छसि? अन्यथा दुर्मुखो लोक एवं कथयिष्यति यद्बाहुबलिर्बांधवो भरताज्ञां न मन्यते, अतस्त्वमेकवारं भरतं नत्वा भरताज्ञां शिरसि धृत्वा त्वरितं तत्र समागच्छ? स च स्वयं तत्रागतस्य तवाधिकराज्यप्रदो भविष्यति, यदि तव बांधवमिलनाय नायासि, तर्हि ते राज्ये संशयो भविष्यति, तमेनं माज्ञासीर्यन्ममायं भरतो भ्राता वर्तते, ततो मम किमपि न कथयिष्यति, राज्यार्थी तु राज्यार्थे भ्रातरं पितरं चापि हंति, अत्रार्थे त्वं संशयं माकार्षीः, एतेषां त्रयाणां च विश्वासो न कार्यः. यथा—करालगरलः सर्पः। पावकः पवनोध्धुरः ॥ प्रभुः प्रौढप्रतापश्च । वश्या स्यान्न त्रयोऽप्यमी ॥ ॥ १ ॥ तथा च—जीवितव्येन राज्येन । कार्यं ते विद्यते यदि ॥ तदा रक्षौषधं मूर्ध्नि । धार्यतां भ्रातृशासनं ॥ २ ॥ नित्यं वितन्यते यस्य । सेवा देवासुरैरपि ॥ भवतो मर्त्यमात्रस्य । सेवायां त-

त्र का त्रपा ॥ ३ ॥

इत्यादि सुवेगाख्यदूतवचनान्यादौ मधुराणि मनोज्ञानि, ततोऽतितीक्ष्णानि, ततोऽतिकटूनि श्रवणाभ्यां श्रुत्वा रोमांचकवचांचितः सुनंदानंदनो निजं भुजं विलोकयामास, दंतज्योत्स्नया तां सभामुद्योतितां कुर्वन् कोपकंप्राधरस्तत्क्षणादेव ताम्रनयनः साक्षाद्वीररस इव क्रोधाग्निना दीप्यमान एवं बभाषे, भो दूत! अयं मम ज्येष्ठभ्राता यन्मम समागममिच्छति तद्युक्तं, यतोऽयं पूज्यो मम ताततुल्यः सर्वथा भिलनार्हस्तेन मां समाह्वयति तत्सत्यं, बंधूनपि यदाकारयति तदपि वरं, परं तेषु तातोपांतं यातेषु ते विभुस्तेषां राज्यानि जग्राह, तदयं तु नूतनस्नेहोऽस्माभिः कुत्रापि न दृष्टः, किंच भो दूत! तव स्वामी ज्येष्ठबांधवः कनिष्ठानां तातैर्दत्तानि राज्यानि गृह्णन् किं न लज्जितः? लोभाभिभूतो लोकापवादादपि किं न भीतः? अहो तव स्वामिनो ज्ञातृत्वमहो विवेकोऽहो बांधवोपरि स्नेहो यद्भ्रातृभिर्वांतानि राज्यानि श्वान इव जग्रसे. अहो तव स्वामी षट्खंडराज्येन तृप्तो न जातः, किंतु लघुसहोदराणां राज्यग्रहणात तृप्तो जातः, अतस्तव स्वामिसेवया किं? मम स्वामी तु ऋषभदेवः, नान्यः, यतः—मम प्रभुरसौ देवः । सेव्यः श्रीनाभिनंदनः ॥ सुरासुरनृपैः पूज्यः ।

प्रथमस्तीर्थनायकः ॥ १ ॥ पिता गुरुर्वा स्वामी वा । जन्मन्येकत्र जन्मिनां ॥ एष एव भवे नान्य—स्तत्किं तेन करोम्यहं ॥ २ ॥ भो दूत! तव स्वामिसेवया सृतं, मम स्वाम्येक एव श्रीऋषभदेवः, तत् श्रुत्वा दूतो बभाषे भो बाहुबले! भरतसेवा तव राज्यप्रदा भविष्यति, सेवाविमुखस्य च तव राज्ये जीवितव्ये च संशयो भविष्यति, अतो गुरुलाघवं विचारय? ततो भरतसेवां कुरु? अस्य सेवायां तव हीनत्वं नास्ति, देवा अपि तस्य सेवां कुर्वते, तस्य पुरतः के मनुष्याः? स च सेवितस्तवेप्सितदायको भविष्यति, ममोक्तं मन्यस्व? भरतं च सेवस्व? बाहुबलिर्बभाषे भो दूत! तव स्वामी मां वीक्ष्य लज्जां प्राप्स्यति, यतो मया पूर्वं खुरलीक्रीडायां स जितोऽस्ति, तथा पुरा मम भुजपंजरे कारासुखं प्रापयित्वा मया करुणया स मोचितोऽस्ति, तव स्वामिनस्तदपि किं विस्मृतं? तथा बाल्यावस्थायां जलकेल्यवसरे पादं धृत्वा नभसि कंदुकवन्मयोच्छालितस्तदपि किं तेन विस्मृतं? भो दूताथ त्वं द्रुतं याहि? भवतः प्रभुरपि शीघ्रमत्र समायातु, यतोऽसौ षट्खंडां मेदिनीं साधयित्वा षष्टिवर्षसहस्रैः समायातोऽस्ति, तत्पापैर्भृतस्य तस्य दुष्कर्मणः प्रायश्चित्तमहं दास्यामि, यतस्तव स्वामिनोऽन्यः कोऽपि प्रायश्चित्तदायको नास्ति, अहमेवास्मि, अतस्त्वं तं शीघ्रमत्रानय?

ततः सभयो दूतो धैर्यमालंब्य सभागृहान्निस्ससार. सभासद्भिः कूणिताक्षं निरीक्षितस्त्वरित-सुलोचनः कंपितवपुः स सभातो निर्ययौ, सज्जीकृतायुधान् वीरान् संग्राममधीरान् समालोकयन् स सुवेगो बाहुबलिमंदिराद्वेगेन निरगात्. सभासदः परस्परं कथयंति कोऽयं दूतः? कस्य वा दूतः? तदा केनचिद्विज्ञेनोक्तमस्यैव ज्येष्ठबांधवस्य भरतस्य राज्ञोऽयं दूतः, स च भरतः कियत्कालं दिग्विजयाय गतोऽभूत्, स च समागतो बाहुबलेरपि सेवां वांछति, तेन चायं दूतः प्रेषितः, सोऽयं दूतः प्रत्यावृत्तः स्वस्थानं याति. ततस्तैर्बाहुबलिसुभटैः प्रोक्तमहो भरतस्य गृहे किं कोऽपि मंत्री नास्ति? यो भरतं निवारयति. भो भरत त्वं बाहुबलेः सेवास्पृहां मा कुरु? अस्य सेवास्पृहातस्तव राज्यं यास्यतीति. अहो मुग्धो भरतो जितं षट्खंडं भरतं बाहुबलेः पुरो हारयिष्यति, केनाप्युक्तं स मंत्रिणा तु वारितो भविष्यति, परं तेन मंत्रिणोक्तं न कृतं भविष्यति. यतः—अभ्यासकारिणी विद्या । लक्ष्मीः पुण्यानुसारिणी ॥ दानानुसारिणी कीर्ति—र्बुद्धिः कर्मानुसारिणी ॥ १ ॥ भरतोपार्जितं राज्यं नूनं बाहुबलिर्ग्रहीष्यति, अहो! भरतेन विरूपमाचरितं, यद्दूतप्रेषणेन बाहुबलिः कोपितः. इत्यादिलोकवार्तां शृण्वन् सुवेगो बाहुबलिनगरीं दूरादुल्लंघयामास.

ततोऽग्रे गच्छन् स क्रमेण भिल्लसंकुलामटवीं प्रयातः, तत्र मार्गे शबरीरपि बाहुबलेर्गुणान् गायंतीः स ददर्श. अतिभीषणां तामटवीमुल्लंघ्य कथंचिच्चक्रिणो देशमासाद्य स स्वं पुनर्नवजन्मानं मेने. भयभ्रांतः सुवेगो भयमेव पश्यन् मार्गे तान् लोकान् प्रत्याह, भो भो लोका अपक्वान्यपि धान्यानि लूनीत? तथा स्वानि स्वानि धनानि क्षोणीतले क्षिपत? सांप्रतं समागमिष्यति बाहुबलिः, तथोत्कटानतिभारसहान् शकटान् सज्जीकुरुत? लभ्यदेयानि च मा कुरुत? तथा पंथानं मुक्त्वा गिरिगह्वरादौ बालस्त्रीधनधान्यानि धारयत? यतो भरतेन सार्धं योध्धुं बाहुबलिरभ्युद्यतो विद्यते. एवं प्रतिक्षेत्रं प्रतिग्रामं बुंबारवं कुर्वन् देशमुद्वसं कुर्वन् स सुवेगनामा दूतः स्तोकैरेव दिनैरतिप्रयाणैर्विनीतापुरि समाजगाम. ततः स सुवेगदूतो भरतांतिके समागत्य बाहुबलेः सर्वं स्वरूपं यथास्थितं विज्ञपयामास. हे भरतभूपते! यदि वेलाबलेन रविराच्छाद्यते, यदि ज्वालाकुलो वह्निर्मुष्टिना ग्राह्यते तथापि तवानुजो बाहुबलिर्बलिना देवेन दानवेन वा जेतुं न शक्यते, अथ भरताधीश इति श्रुत्वा सुमुहूर्ते शुभलग्ने तक्षशिलांप्रति प्रयाणमकरोत, तदानीं भरतसैन्यभारेण समाक्रांता काश्यपी चकंपे, गजवाजिरथपदातिकोटिभिः परिवृतः श्रीभरतनृपः षोडशसहस्रैर्देवैः शुश्रूषितशरीरो द्वा-

त्रिंशद्बद्धमुकुटराजभिः परिवृतः षट्खंडमेदिनीनाथो मार्गे संचरन् बहलीदेशसीमानमाचक्रमंशुमान् वियद्देशमिव, तदानीं भरतसैन्ये लक्षशो रिपुप्राणप्रयाणपटहोपमा निःस्वाननिकरा नेदुः. अथ बाहुबलिर्भरतं समागतं ज्ञात्वा संग्रामभेरीमवादयत, तेन नादेन मेलितसैन्यः पुत्रपौत्रैः परिवृतो लक्षसंख्यैर्गजवाजिरथादिभिः परिवृतो राजवृंदपरिवृतस्तारकवृंदपरिवृतश्चंद्र इव सन्मुखमागात. ततस्तयोरुभयोः सैन्ययोर्मध्ये निःस्वानलक्षा नेदुः. ततस्तयोः सैन्ययोः परस्परं संग्रामो बभूव, कदाचिद्भरतसैन्यस्य जयो भवति, बाहुबलिसैन्यस्य च पराजयो भवति, एवं कदाचिद्बाहुबलिसैन्यस्य जयो भवति, भरतसैन्यस्य च पराभवो भवति. एवं प्रत्यहं परस्परं संग्रामे जायमाने द्वादशवर्षाणि जातानि. अथैकस्मिन् दिने बाहुबलिसैन्येन भरतेशस्य वाहिनी पश्चाद्व्यधीयत नदीशकल्लोलैर्नदीव, तदा कोपारुणो भरतेशः सुषेणाख्यं स्वसेनान्यं संग्रामेऽग्रेसरं पुरस्कृत्यागात्, तेन चागत्य बाहुबलिसेनायां महान् कोलाहलश्चक्रे, तस्याग्रे कोऽपि स्थातुं न शक्नोति, तेन च बाहुबलेर्बलं भग्नं, ततो बाहुबलिः संग्रामसज्जः सुषेणाभिमुखं स्वयं दुढौके.

अथ तौ द्वावपि महावीरौ जगत्येकमल्लाविंद्रोपेंद्राविव शोभेते, तौ दृष्ट्वा लोकाः कथयंत्यहो

स्वामिना श्रीऋषभेणैषा प्रजा निष्पादिता, एतौ किं संहरिष्यतः? द्वावपि सम्यग्वयसौ सदृग्वाहनौ सदृशशस्त्रवस्त्रधरौ सदृक्परिकरपरिवृतौ च स्तः, अथ किं भविष्यति? एवं यावल्लोकाश्चिंतयंति तावद्देवा भरतेश्वरमभ्येत्य दत्ताशीर्वादा एवमूचुः, हे ऋषभनंदन! भो भरताधीश! यदा त्वया षट्खंडमेदिनी जिता, तदा तवाभिमुखः कोऽपि नाभूत्, अथ स्वदोर्दंडकंडूभेदाय भवान् निजेन बंधुना सार्धं युद्धं कुर्वाणो किं न लज्जते? इति वचनं श्रुत्वा देवान्प्रति चक्री प्राह युक्तमेतद्भवद्वचः, परं किं करोमि? अत्र किंचित्कारणं वर्तते, श्रूयतां?—न दोर्कंडूभरच्छेद—बुद्धिर्युद्धे निबंधनं ॥ हेतुः किंतु रथांगस्या—प्रवेशः शस्त्रमंदिरे ॥ १ ॥ ततो हे देवा एष बाहुबलिरेकवारं नमस्कारं कृत्वा स्वस्थानं यातु, ममैतावतैव कार्यं, सृतं संग्रामेण, ममानुजश्च मया दत्तां षट्खंडां पृथ्वीं भुनक्तु, ततो यूयमेव बाहुबलिसमीपे गत्वैतेष्वर्थेषु तं बोधयत? ततस्ते सुरा बाहुबलिसमीपे गत्वैवमूचुः, भो बाहुबले! बंधुना सह कोऽयं ते संग्रामारंभः? बाहुबलिनोक्तमत्र को मम दोषः? अहं तु पितृदत्ते स्वे राज्ये स्थित आसं, परमेष भरतो भरतराज्यं गृहीत्वा मम राज्यग्रहणाय मदोत्कटोऽतिलौल्यान्ममोपरि समागतोऽस्ति, विना संग्रामं च राज्यं याति, गते राज्ये च जीवितेन किं? श्रीतातोऽपि

कथयिष्यति किं त्वया स्वं राज्यमपि न रक्षितं? अहो बाहुबलेर्बलं! इति हास्यभयेनाहं युद्धं करोमि, मम को दोषः? सुरैर्ज्ञातमेतयोर्द्वयोर्मध्ये एकस्यापि दोषो नास्ति. ततस्तैरुक्तं युवाभ्यामस्त्रैर्न योधव्यं, अत्रार्थे चोभयोरपि वृषभप्रभोराज्ञा. ताभ्यामुक्तं तर्हि किं कर्तव्यं? सुरैरुक्तं यथा—दृष्टिवाग्दंडदोर्दंड—युद्धैरेव बलाबलं ॥ युवयोर्ज्ञास्यते किं.त—दायुधैर्दारुणै रणः ॥ १ ॥ एतद्वचो भरतेन चक्रिणा प्रतिपन्नं, ततः संग्रामान्निवृत्तौ तौ स्वे स्वे सैन्ये समागतौ. तदंगांगिसंगरं श्रुत्वा ते चक्रिणः सैनिकाः परस्परमिति प्रोचुः, अहोऽधुनास्मत्स्वामिनः कष्टं समागतं, यद्बलिना बाहुबलिना समं रणः समुत्थितः. अथवास्मिन् परस्परं युद्धबुद्धिदाने देवानां को दोषः? ईदृशानां मुधा युद्धकौतुकं को न पश्यति? अहो भरतेशेन स्वभुजयोर्वीर्यमजानतैव तेन सार्धं युद्धं मेने, तन्न जानीमो यदत्र किं भविष्यति? एवंविधाः स्वसैनिकानां गिरः श्रुत्वा भरतनृपतिः स्वस्य बलं दर्शयितुं तानाहूयेदमब्रवीत्, भो राजानो मयाद्य दुःस्वप्नो दृष्टः, यतो युष्माभिः सर्वैरेकीभूय शृंखलमंडलैर्बध्ध्वा तटादाकृष्याहं कूपे निपातितः, ततोऽधुना तदशिवस्य विभेदाय भवद्भिरयं स्वप्नार्थोऽवश्यं सत्यतां नेयः; तैरनिच्छद्भिरपि विघ्नोपशमनार्थं तद्वचो मानितं.

ततो राजेंदुर्भरतः सेवकानामाज्ञां दत्वा कूपमेकमकारयत्, तदवटस्य तटे च भरतेश्वरो निविष्टः, सर्वे राजानः शृंखलानां सहस्रेण वामहस्तावलंबनं कृत्वा यथाशक्त्या समाकर्षयामासुः, परं ते सर्वेऽपि राजानः सर्वाभिसारेण संयुतास्तं भरतं कूपकंठे स्थितं कूपांतः पातयितुं न समर्था जाताः. अथ भरतस्तान् सर्वानूचे भो राजानो भवंतः शृंखलायां दृढविलग्ना भवंतु, इत्युक्त्वा लीलया स्वयं तेनैव पाणिना हृद्यंगरागं वितेने, तावत्ते सर्वेऽपि समाकृष्टा दत्तसंकेता इव समं पेतुः. ततस्ते सैनिका राजानश्च स्वस्य राज्ञो दृष्टबला अंभोजस्मेरवक्त्रा मुदं भेजिरे, द्वयोः सैन्ययोः सैनिकाः स्वं स्वं राजानं परितो वेष्टयित्वा तस्थुः. अथ सुमुहूर्ते बाहुबलिसेवका रणांगणं सुगंधोदकैरसिंचन्. तथा कुसुमोत्करैः पुष्पप्रकरं वितेनुः, रणांगणं च राज्ञो गृहांगणभूमिमिव पुष्पदंतुरं कृत्वोभयोः सैन्ययोः सैनिकास्तन्मंडपं परिवृत्य तस्थुः.

अथ भरतो बाहुबलिना समं समरसीमनि प्रथमं दृष्टियुद्धाय प्रतिज्ञां कृतवान्, उभावपि बद्धपरिकरौ भूत्वा निर्निमेषेक्षणैः सन्मुखिनौ तस्थतुः, तयोर्निर्निमेषत्वं समालोक्य लोकश्चिंतयत्यहो एतौ किं देवौ वा दानवौ वा? सौधर्मेशानौ देवेंद्रौ वा? अथवा लेप्यमयमूर्ती, तदानीं प्रतापिनो

बाहुबलेरालोकनाद्भरतदृशौ संतप्ते. ततोऽश्रुभिः स्नपयित्वा चक्री पक्ष्मणा स्वदृशौ प्रावृणोत, अहो बाहुबलिना जितं जितमिति देवदानवैः प्रोक्तं. ततः क्रोधारुणो भरतः शब्दसमरं प्रारभत. तदाशि लाःविभुसन्मुखो भूत्वा प्रथमं भ्रामितदिग्गजं सिंहनादं चक्रे, तन्नादं श्रुत्वा सर्वे राजानो मुदमापुः, भरतध्वनौ विरते ततोऽधिकतरो बाहुबलिर्नादं विदधे. तेन नादेन च सर्वा दिशो व्यानशे, यथा

—कयाब्दगर्जिसंवादे । नादे तस्मिन् विसर्पति ॥ अभूदकालकल्पांत—शंकातकाकुलं जगत ॥ ॥ १ ॥ त्रुट्यत्पर्वतशृंगेण । क्षुभ्यदंभोधिनाधिकं ॥ विजिग्ये तेन शब्देन । भूयो भरतभूपतिः ॥ ॥ २ ॥ अथ तौ दुर्मदौ हस्तप्रहारेण रणं निश्चित्य ततोऽपासरतां वनगजाविव, प्रथमं भरतेन मुष्ट्या हतो बाहुबलिः, तथा वज्रमुष्ट्या च नेत्रांधकारैरावृतो नभोंबुदैरिव. ततः क्षणेन बाहुबलिनेत्रात्तत्तमो ययौ गुरुवाक्यैर्भव्यस्य मिथ्यांधकारमिव.

ततो बाहुबलेर्मुष्टिवज्रपातेन ताडितो भरतचक्री स्वसैन्यमनोरथैः समं भूमौ पपात. ततो बाहुबलिना बंधुना स भरतश्चंदनैः सिक्तः, पुनर्लब्धचेतनोऽसौ दंडयुद्धायोद्यतो बभूव. क्रोधारुणलोचनश्चक्री लोहदंडं करेऽकरोत. ततस्तौ द्वौ भीष्मौ धृतदंडौ यमाविवाधावतां. ततो भरतभूपेन लोह·

दंडेन शिरसि हतो बाहुबलिः पृथिव्यां कीलकवदाजानु ममज्ज. ततः सुनंदानंदनः पंकिलाद्भूतला-
त्पादावुध्धृत्य धावित्वा भरतनरेशमौलौ तथाताडयद्यथासौ लज्जयेवावनीतले कंठं यावन्ममज्ज, य-
तः—बभूव क्षितिमग्नस्य । चक्रिणः स्फुटमाननं ॥ शोकश्यामं निजयशः । शशिग्रासेन राहुवत् ॥
॥ १ ॥ भरतः शरीरमवधूय पृथ्वीतलान्निःससार, बाहुबलिनाहतो भरतो विषादमापन्नो मनस्येवम
चिंतयन्नूनमेष बांधवश्चक्री, नाहं चक्री, यतोऽहमनेन जितः, तर्हि कथमहं चक्री? एवं विषादमा-
पन्नो यावच्चक्री बभूव, तावदकस्माच्चक्रित्वख्यापकं रविबिंबवद्दीप्यमानं चक्रं करे समागतं, तच्चक्रं करे
समागतं दृष्ट्वा भरतः क्रुधा ज्वलन् सुनंदानंदनवधाय देवैर्वार्यमाणोऽपि चक्रं मुमोच, तच्च बाहुब
लेः प्रदक्षिणां ददौ, चक्रं हि देवैरधिष्टितं गोत्रे न प्रभवति, तर्हि तद्भ्रातरं कथं हंति? तेनासम-
र्थं तच्चक्रं चक्रवर्तिमनोरथमकृत्वैव पुनर्भरतकरे समागात्, तत्स्वरूपं दृष्ट्वा लोकाश्चिंतयंत्यहो मह-
दाश्चर्यं! भरतो विलुप्तनीतिको जातः, परं चक्रेण नीती रक्षिता, ततः क्रोधाकुलो बाहुबलिश्चक्रव-
र्त्यभिमुखं मुष्टिमुद्यम्य धावितः, अनया मुष्ट्या स च चक्रं चक्रवर्तिनं चूर्णयिष्यामीति धावितं बा-
हुबलिं दृष्ट्वा जनैरिति बुंबारवश्चक्रे, हा हा हतो भरतेशः, तं बुंबारवं निशम्य सकरुणः सुनंदानंद-

नो मनस्येवमचिंतयदहो मम बांधवो जगतीजिष्णुरपि क्रोधादिभिर्जितः, तं भरतं जेतुं किमहं प्रवृत्तः? धिग्ममोद्यमं, तर्हि तत्क्रोधादिजये यत्नं करोमीति विचिंत्य भरतवधायोत्पाटितां मुष्टिं सफलां करोमीति धिया स स्वशिरसः केशान् क्लेशानिवोत्खाय सर्वव्यापारांश्च निवार्य निश्चलचित्त एवमचिंतयत्—

सर्वे लघवो मम बांधवाः केवलज्ञानशालिनः, मया च तस्य सन्निधौ गत्वा ते कथं वंद्याः? अतोऽहमत्रैव केवलं प्राप्य स्वबंधूनां सदृशो भूत्वा तातसंसदि गमिष्यामीत्यहंकारगजेंद्रारूढोऽसौ तस्मिन्नेव पदे तत्रैव कायोत्सर्गेणास्थात्, भरतस्तं तथाविधं बाहुबलिं साधुं समालोक्य व्यषीदत्, अहो मया किमकार्यं कृतं? अनेन त्वात्महितं कृतं, अहो एष एव तातपुत्रो यो तातानुगोऽभूत्, इति विलपन् भरतो बाहुबलिमुनेः पादौ नत्वा स्वं निंदतिस्म, यथा—धिगेतच्चक्रवर्तित्वं। बंधुभिर्विरहो यतः॥ किं तेन कांचनेनापि। येनाशु त्रुट्यते श्रुतिः॥ १॥ मन्ये धन्यमहं काकं। साकं यः स्वजनैर्निजैः॥ अप्यल्पं बलिमादत्ते। नात्मानं त्यक्तबांधवं॥ २॥ या लक्ष्मीर्निजैर्बंधुभिः सार्धं भुज्यते सैव लक्ष्मीरेवं वारंवारं कथयन् विषण्णात्मा भरतः स्वं निंदन् मुनिं च प्रशंसन् सगद्गदं नि-

जगाद—हे धर्ममूर्ते हे बंधो! त्वमेव तातस्य सूनुर्यस्तातानुगो जातः, अहं त्वधन्यो यतोऽहं हतविक्रमः, मयि वध्ये त्वं च दयालुः, मयि क्रोधाभिमुखे त्वं क्रोधविमुखः, हा हा हतोऽहं यतः पुरा समग्रैरपि बंधुभिरहं मुक्तः, अथ त्वं बंधुर्मां मा मुंच? अहं तवाज्ञाकारकोऽस्मि, त्वं च मम ताततुल्योऽसि, अतस्त्वं तातराज्यं पालय? यतो भवान् गुणाधिकोऽस्ति, अथाहं भृत्यवत्तव सेवां करिष्ये, हे बंधो! स्वापराधेन संतप्तं मां त्वं वागमृतवृष्टया सिंच? हे दयाकर! मयि प्रलपति दयां कृत्वा सन्मुखमवलोकय? एवं तेन भरतेन वारंवारं प्रलपितेऽपि बाहुबलिर्निश्चितव्रतो मौनेनास्थात. ततो भरतश्चक्री बांधवं बाहुबलिं संयमे कृतनिश्चयं ज्ञात्वोन्मुखः साश्रुदृक् पादन्यस्तहस्त एवमवोचत्, हे वाचंयमेश्वर! यदि मम वाचं न दास्यसि तर्ह्येकवारं मां सौम्यदृशावलोकय? ततो बाहुबलिमुनिस्तुष्टिसुधावृष्ट्या दृष्ट्या भरतमपश्यत्. ततस्तुष्टो भरतो नेत्रांबुसंपातनिर्धौतमुनिपादः केशपाशेन तत्पादौ संमार्ज्य ततो निर्ययौ.

अथ बाहुबलिपुत्रं सोमयशसं स्वयं तक्षशिलानगरीराज्ये भरतोऽभ्यषिंचत. ततो भरतः समग्रेण निजबलेनायोध्यां ययौ, चक्रमपि चायुधागारे विवेश. अथ बाहुबलिस्तत्र निश्चलः केवलज्ञा-

ने बद्धनिश्चयो मेरुसानुमानिव धैर्यवान्. तत्र स्वामिनस्तस्य बाहुबलिमुनेर्ध्यानस्थस्य षडपि ऋतवः सेवार्थं समागताः. कार्तिकमार्गशीर्षमासयोर्हिमर्तुः शीतवातास्त्रं हिमालयादमुंचत्. तेन शीतेनापि वातास्त्रेण स मुनिर्ध्यानान्न चचाल. १. पोषमाघमासयोः शिशिरर्तुसमुद्भूतहीमेन भृशं पीडितोऽपि स ध्यानान्न चचाल. २. फाल्गुनचैत्रयोर्वसंतर्तुर्निजमित्रस्य मदनस्य तं मुनिं वशवर्तिनं कर्तुं प्रयत्नमकरोत्, तदा पुष्पितप्रवरवननिकरे कूजितकोकिलारावबंधुरे सहकारमंजरीबंधुरे सहकाराशमभ्रमद्भ्रमरगुंजारवमुखरे प्रादुर्भूतानेकप्रकारपुष्पप्रकरे समागतेऽपि वसंते स मुनिर्मेरुवद्ध्यानात् किंचिदपि न चचाल. वैशाखज्येष्ठाभ्यां ग्रीष्मर्तुः, तस्मिनृतौ तपनकिरणैस्तापितदेहो भगवान् बाहुबलिः शुष्कताल्वोष्टपुटस्तापक्रांतदेहः क्षुत्तृड्बाधितोऽपि किंचिन्मात्रं न चचाल. आषाढश्रावणमासाभ्यां वर्षाऋतुः, मेघमालिस्तं मुनिपतिं ग्रीष्मतापार्दितं निर्वापयितुमिव वर्षाशीतलजलधाराभिः शनैः शनैर्ववर्ष, कदाचिन्मुशलप्रमाणधाराभिश्च ववर्ष, तस्मिन् वर्षतौ वल्ल्यावृतो मुनिपतिः, पादतले दर्भांकुरोद्गमा जातास्ते पादौ भित्वा बहिर्निर्गताः, ऊरुबाह्वोरंतरे पक्षिसमूहैः शरणार्थिभिरिव वासः कृतः, अनेन प्रतिज्ञोढा, परं मयायं वोढुं न शक्यत इति हेतोरिव पन्नगेंद्रेण पन्नगाः प्रेषिताः,

ते बाहुबलिनं परिवेष्ट्य संस्थिताः, सेवार्थमागताः, शिष्या इव बभूवुः, तैः पन्नगसमूहैश्चालितोऽपि मुनिर्ध्यानान्न चचाल.

अथ भाद्रपदाश्विनमासाभ्यां शरदृतुः, गतो घनसमयः, जलानि निर्मलीभूतानि, शरदृतौ पंकेरुहाणि प्रकटीभूतानि, नार्यो विकसितवदना बभूवुः, मुनिर्विशेषतः शुक्लध्यानारूढः संयमे दत्तदृष्टिर्विरेजे, परं सानुमानिव कथमपि ध्यानान्न चचाल, दीक्षादिनादारभ्य वर्षं यावद्ध्यानेन बाहुबलिमुनिना कर्माणि क्षयं नीतानि. ततः स्वामिना बाहुबलेः केवलावसरं ज्ञात्वा तन्मानापनोदाय ब्राह्मीसुंदर्यौ प्रेषिते, ते स्वामिनः श्रीऋषभप्रभोः शिक्षां लात्वा तत्र बाहुबलिसमाश्रिते वने गते, तस्मिन् वने ते पश्यंत्यौ पुरुषाकृतिं सोच्छ्वासं वल्लीनां गुल्मं ददृशतुः, तत्र तं महामुनिं संभाव्य ते ब्राह्मीसुंदर्यौ तत्र गते, तत्र गत्वा च ताभ्यां प्रोक्तं यथा—भ्रातरुत्तर मातंगा—दित्याकर्ण्य तयोर्वचः ॥ विचिंत्य च मतिभ्रांत—स्तस्थिवान् स मुनिश्चिरं ॥ १ ॥ शब्दोऽयं नियतं ब्राह्मी—सुंदर्योः श्रुतिसुंदरः ॥ भाषेते चानृतं नैते । न चारूढोऽस्मि हस्तिनं ॥ २ ॥ विकल्पं कल्पयन्नेवं । दध्यौ वंदे लघून्न यत् ॥ मानोऽयमेव हस्ती च । तत्रारूढोऽस्मि धिग्जडं ॥ ३ ॥ तातेन मयि दयां वित-

भ्वतैते मम भगिन्यौ मम प्रतिबोधाय प्रेषिते, ततोऽहं किं मुधाभिमानं करोमि? ते मम बांधवा म·
त्तो गुणाधिकाः, तर्हि तातांतिके गत्वा लघूनपि गुणाधिकांस्तान् सर्वान् बंधून्नमस्करोमीति ध्यात्वा
यावन्मानमतंगजं त्यक्त्वा गमनाय पादावुत्पाटयति, तत्क्षणादेव स केवललक्ष्म्या वृतः, तदानीं बा·
हुबलेः केवलमहिमानं देवा व्यधुः, यथा—दिवि दुंदुभयो नेदु—रभवन् पुष्पवृष्टयः ॥ प्राप्तास्तं वं·
दितुं भक्ति—भासुराश्च सुरासुराः ॥ १ ॥ महामुनिर्बाहुबलिः केवलालंकृतः सुरासुरसार्थैः परिवृतो
भगवतः श्रीऋषभदेवस्य समवसरणं प्राप, तत्र प्रभुं प्रदक्षिणीकृत्य नमस्तीर्थायेत्युक्त्वा केवलिपर्षदि
ययौ, तस्यां पर्षदि बाहुबलिकेवली मुक्तमालायां नायक इव शुशुभे, ततश्च स्वायुः परिपूर्य सोऽष्टा·
पदपर्वते श्रीऋषभस्वामिना समं शिवं ययौ. इत्थं बाहुबलिवीरो । जित्वा भरतभूपतिं ॥ मोहमल्लं
वशीकृत्य । प्राप केवलमुज्ज्वलं ॥ १ ॥ इति श्रीबाहुबलिकथानकं किंचिद्दर्शितं. ॥ अथ तपःप्र·
भावमाह—

॥ मूलम् ॥—अथिरंपि थिरं वंकंपि । उज्जुअं दुल्लहंपि तह सुलहं ॥ दुस्सज्झंपि सुसज्झं ।
तवेण संसिज्झए कज्जं ॥ २ ॥ व्याख्या—इह यत्किंचिदस्थिरमपि स्थिरं, वक्रमपि सर्वमृजुकं सरलं

जवति. एवं दुर्लभमपि सुलभं जवति. दुःसाध्यमप्येवं सुसाध्यं जवति, चक्रवर्तिनः षट्खंमसाधन-
मिव. एवं तपसा सर्वमपि कार्यं संपद्यते, तन्नास्ति यत्तपसा न सिध्यतीति गाथार्थः ॥ ३ ॥ यत्पूर्वा-
र्जितकर्मशैलकुलिशं यत्कामदावानल—ज्वालाजालजलं यदुग्रकरणग्रामाहिमंत्राक्षरं ॥ यत्प्रत्यूहत-
मःसमूहदिवसं यल्लब्धिलक्ष्मीलता—मूलं तद्द्विविधं यथाविधि तपः कुर्वीत वीतस्पृहः ॥ १ ॥ अत्र
तपोऽधिकारत्वाद् ग्रंथांतरात्तपांसि लिख्यंते, यथा—

तत्रोपधानतपो महानिशीथग्रंथादवगंतव्यं. शेषाणि सूत्रोक्तानि पुनरिमानि, प्रवचनसारोद्धारे
यथा—पुरिमड्ढेगासणनिवि—याइं आयंबिलोववासेहिं ॥ एगलयाइ अ पंचहिं । होइ तवो इं-
दियजउत्ति ॥ १ ॥ इतींद्रियजयतपः. १. निव्विगइयमायामं । उववासो इयलयाहिं तिहिं भ-
णिउ ॥ नामेण जोगसिद्धी । नवदिणमाणो तवो एसो ॥ २ ॥ इति योगसिद्धिनामतपः. २.
नाणंमि दंसणंमि य । चरणंमि तिन्नि तिन्नि पत्तेयं ॥ उववासा तप्पूया । तन्नामगतवंमि य ॥३॥
इति ज्ञानदर्शनचारित्रतपः ३. एगासणग तह निवि—गइ य आयंबिलं अप्नत्तट्ठं ॥ इय होइ
लयचउक्कं । कसायविजसे तवच्चरणे ॥ ४ ॥ इति कषायविजयतपः. ४. खवणं एगासणगं । एक-

गसिद्धं एगठाणं च ॥ इक्कगदत्ती निव्विय—मायंबिलमट्ठकवलं च ॥ ५ ॥ एसा एगावलईया । अ-ट्ठहिं लईएहिं दिवसचुसठी ॥ इय अट्ठकम्मसूडण—तवोवि भणिओ जिणंदेहिं ॥ ६ ॥ इत्यष्टक-र्मसूदनतपः. ५. इग दुग इग तिग दुग चउ । तिग पण चउ छक्क पंच सत्त छगं ॥ अट्ठग स-त्तग नवगं । अट्ठग नव सत्त अट्ठेव ॥ ७ ॥ छग सत्तग पण छक्कं । चउ पण तिग चउर दुग ति-गं एगं ॥ दुग इक्कग उववासा । लहुसिंहनिक्कीलियतवंमि ॥ ८ ॥ चउपन्नं खमणसयं । दिणाणि तह पारणाणि तित्तीसं ॥ इह परिवाडिचउक्के । वरिसदुगं दिवस अडवीसा ॥ ९ ॥ विगईय नि-व्विगईयं । तह अलेवाडयं च आयामं ॥ परिवाडिचउक्कम्मि अ । पारणएसु य विहेअव्वं ॥ १० ॥ इति लघुसिंहनिक्रीडितं तपः. ६. इग दुग इग तिग चउ तिग । पण चउ छक्क पंच सत्त छगं॥ अड सत्त नवम दस नव । इक्कारस दस य बारसगं ॥ ११ ॥ इक्कार तेर बारस । चउदस तेरस य पनर च दसगं ॥ सोलस पनरस सोलाइ । होइ विवरीअमिक्कंतं ॥ १२ ॥ एए उ अजत्तट्ठा । इगसठी पारणाणि इह होइ ॥ एसा एगालइआ । चउगुणाए पुण इमाइं ॥ १३ ॥ वरिसछक्कं मासदुगं । दिवसाइं बारस हवंति ॥ इअ महासीह—निक्कीलिअंति तवचरणं ॥ १४ ॥ इति महा-

सिंहनिःक्रीडितं तपः. ७. एगो दुगाइ इक्कग । अंतरिआ जाव सोलस हवंति ॥ पुण सोलस एगंता । इक्कंतरिआ य उत्तठा ॥ १५ ॥ पारणयाणं सठी । परिवाडिचउक्कगंमि चत्तारि ॥ वरिसाणि हुंति मुत्ता—वलि दिवससंखाए ॥ १६ ॥ इति मुक्तावलितपः. ८. इगडुतिकाहलियाहिं । दाडिमपुप्फे हवंति सठतिगा ॥ एगाइ सोलसंता । सरिआजुअलंमि उववासा ॥ १७ ॥ अंतंमि तस्स पयगं । तब्बंकठाणमिक्कमह पंच ॥ सत्तय सत्तय पण पण । तिन्निक्कंतेसु तिगरयणा ॥ १८ ॥ पारणायदिणहासी । परिवाडिचउक्कगे वरिसपणगं ॥ नवमासा अठारस । दिणाणि रयणावलितवंमि ॥ १९ ॥ इति रत्नावलितपः. ९. रयणावलीतवेणं । कीरय कणगावलीतवो न वरं ॥ कुज्जा दुगाइ तिगपए । दाडिमपुप्फेसु पयगे अ ॥ २० ॥ परिवाडिचउक्कगे । वरिसपंचगं दिणदुगूण मासतिगं ॥ पढमतवुत्तो कज्जो । पारणगविही तवापणगे ॥ २१ ॥ इति कनकावलितपः १०. भद्दाइतवेसु तहा । इगालया इग दु तिणि चउ पंच ॥ तह ति चउ पंच इग दो । तह पण इग दुन्नि ति चउक्कं ॥ २२ ॥ तह दु ति चउ पणगेगं । तह चउ पणगेग दुन्नि तिन्नेव ॥ पणहत्तरि उववासा । पारणगाणं तु पणवीसा ॥ २३ ॥ इति भद्दतपः. ११.

पन्नवामि महाभद्दं । इग दुग तिग चउ पण छ सत्तेव ॥ तह चउ पण छग सत्तग । इग दु ति तह सत्त इक्कं दो ॥ २४ ॥ तिण्णि चउ पंच छक्कं । तह तिग चउ पण छ सत्तगेइं दो ॥ तह छग सत्तग इग दो । तिग चउ पण तह दुगं ति चउ ॥ २५ ॥ पण छग सत्तिक्कं तह । पण छग सत्तिक दुण्णि तिन्नि चउरो ॥ पारणयाणिगुवण्णा । छण्णउ अ सयं चउद्धाणं ॥ २६ ॥ इति महाभद्रतपः. १२. भद्दुत्तरपडिमाए । पण छ सत्तठ नव तहा सत्त ॥ अड नव पंच छ तहा । नव पण छग सत्त अठेव ॥ २७ ॥ तह छग सत्तड नव पण । तहठ नव पण छ सत्त भत्तठा ॥ पणहत्तरिसयसंखा । पारणगाणं तु पणवीसा ॥ २८ ॥ इति भद्रोत्तरप्रतिमा. १३. पडिमाए सव्वभद्दाए । पण छ सत्तठ नव दसिक्कारा ॥ तह अठ नव दस इक्कारसा । पण छ सत्तय तहिक्कारा ॥ ॥ २९ ॥ पणं छग अड नव दस तह । सत्तठ नव दसिक्कारा ॥ पण छग सत्तठ नव । ॥ ३० ॥ छग सत्तड नव दसगं । इक्कारस पंच तह नव दसगं ॥ इक्कारस पण छक्कं । सत्तठ य इह तवे हुंति ॥ ३१ ॥ तिण्णि सया बाणउआ । इन्नो ववासाण हुंति संखाए ॥ पारणयाणि गुणवण्णा । भद्दाइ तवा इमे भणिआ ॥ ३२ ॥ इति सर्वतोभद्रप्रतिमा. १४.

पडिवइओ इक्कइच्चिय । दुगं दुगज्जाण जाव पन्नरस ॥ खवणेहमावसाउ । होइ तवो सव्वसंपत्ती ॥ ३३ ॥ इति सर्वसंपत्तितपः. १५. 'पखवासु' इति प्रसिद्धं. रोहिणिरिक्खदिणंमि । रोहिणितवो सत्तमासवरिसाइं ॥ सिरिवासुपुज्जपूआ । पूवं कीरइ अ नत्तट्ठे ॥ ३४ ॥ इति रोहिणीतपः. १६. इक्कारससुअदेवी । नवंमि इक्कारसि उ मोणेणं ॥ करिंति चउत्थेहिं । सुअदेवीपूअणापूवं ॥ ३५ ॥ इति मौनएकादशीतपः. श्रुतपूजा. १७. सव्वंगसुंदरतवो । करिंति जिणपूअखंतिनियमपरा ॥ अट्ठुववासे एगं—तरंबिले धवलपक्खंमि ॥ ३६ ॥ इति सर्वांगसुंदरनामतपः. १८ ॥ एवं निरुजसिहोवि हु । णवरं सो होइ सामले पक्खे ॥ तंमि अ अहिउ कीरइ । गिलाणपडिजागरणनियमो ॥ ३७ ॥ इति निरुजशिखनाम तपः. १९. सो परमभूसणो होइ । जंमि आयंबिलाणि बत्तीसं ॥ अंतरपारणयाइं । भूसणदाणं च देवस्स ॥ ३८ ॥ इति परमभूषणनामतपः. २०. आयइजणगोप्पेवं । नवरं सव्वासु धम्मकिरियासु ॥ अणगूहिअबलवीरिउ । पवित्तिजुत्तेहिं सो कज्जो ॥ ॥ ३९ ॥ इत्यायत्तिजनकनामतपः. २१. एगंतरोववासा । सव्वरसं पारणं च चित्तंमि ॥ सोहग्गकप्परुक्खो । होइ तहा दिज्जए दाणं ॥ ४० ॥ एवं सौभाग्यकल्पवृक्षनामतपः. २२. तवचरणसम्मत्ती-

ए । कप्पतरुजिणपुरो ससत्तीए ॥ कायव्वो नाणाविह । फलबिलसिरसाहियासहिओ ॥ ४१ ॥ अस्य तपस एवं ढौकनं—

तिब्रयरजणणीपूआ । पुविं इक्कासणाइं सत्तेव ॥ तिब्रयरजणणीनामग—तवंमि किरंति पाहवए ॥ ४२ ॥ इति तीर्थंकरजननीनामतपः. २३. एक्कासणाइएहिं । अट्ठवयचउक्कगंमि सोलसहिं ॥ होइ समोसरणतवो । तप्पुव्वा पुव्वविहिएहिं ॥ ४३ ॥ इति समवसरणतपः. २४. नंदीसरपडपूआ । नियसामत्थसरिसतवचरणे ॥ होइ अमावस्सतवो । अमावासावासरुद्दिठो ॥ ४४ ॥ इत्यमावास्यातपः. २५. सिरिपुंडरीयनामग—तवंमि इक्कासणाइं कायव्वा ॥ चित्तस्स पुण्णिमाए । पूएअव्वा य तप्पडिमा ॥ ४५ ॥ इति पुंडरीकतपः. २६. देवग्गठविअकलसो । जा पुन्नो अक्खयाण सुठीए ॥ जो तव सत्तिसरिसो । तवो तमक्खयनिहिं बिंति ॥ ४६ ॥ इत्यक्षयनिधितपः. २७. वड्ढइ तहा कलाए । इक्किक्काएणुवारयं चंदो ॥ संपुण्णो संजुज्जइ । जा सयलकलाहिं पव्वंमि ॥ ४७ ॥ तह पडिवाए इक्को । कवलो बीयाए पुण्णिमा जाव ॥ इक्किक्ककवलवुड्ढी । जा तेसिं होइ पनरसगं ॥ ४८ ॥ इक्किक्कं कन्हंमि । पक्खंमि कलं जहा ससी मुञ्चइ ॥ कवलोवि तहा मुञ्चइ । जामावासाइसा ए-

को ॥ ४७ ॥ एसा चंदप्पडिमा । जवमज्झा मासमित्तपरिमाणा ॥ एषा चंद्रप्रतिमा यवमध्या. २८.
दुएहं तु वज्जमज्झं । मासपडिमं पवक्खामि ॥ ५० ॥ पनरसपडिवयाए । इक्कगहाणी अ जा अमा-
वस्सा ॥ इक्केणं कवलेणं । जाया तह पडिवइ विसिठ्ठा ॥ ५१ ॥ बीयाइआसु इक्कग—वुढ्ढी जा
पुन्निमाए पन्नरस ॥ जवमज्झवज्जमज्झाउ । दोविमाउ भणिआउ ॥ ५२ ॥ एषा वज्रमध्या. २९.
दिवसे दिवसे एगा । दत्ती पढमंमि सत्तगे गिज्झा ॥ वढ्ढइ दत्तीसहसत्त—गेहिं जा सत्तसत्तमए ॥
॥ ५३ ॥ इगुणवारसेहिं । होइ इमा सत्तसत्तिमा पडिमा ॥ अठ्ठमि नवनवमिआ । य दसदस-
मिआ एवं ॥ ५४ ॥ नवरं वट्टिदत्ती । सह अठ्ठगनवगदसगवुढ्ढिहिं ॥ चउसठी इक्कासी । सयं
च दिवसाणि मासुकमा ॥ ५५ ॥ इति प्रतिमा. ३०. एगाइं आयंबिलाइं । इक्किकवुढ्ढीमंताणि ॥
पज्जंतअप्पत्तठाणि । जाव पुणं सयं तेसिं ॥ ५६ ॥ एयं आयंबिलवद्धमाण—नामं महातवच्चरणं
॥ वरिसाणि इहचउदस । मासतिगं वीस दिवसाणि ॥ ५७ ॥ इत्यायंबिलवर्धमानतपः. ३१. गुण-
रयणवच्छरंमि । सोलस मासा हवंति तवचरणे ॥ एगंतरोववासा । पढमे मासंमि कायव्वा ॥ ५८ ॥
ठायव्वं उक्कडुगासणेण । दिवसे निसाइपुण निच्चं ॥ वीरासणएण तहा । होइ मवाउडेणं च ॥

॥ ५९ ॥ बीआइसु मासेसु । कज्जा एगुत्तराए वुड्ढीए ॥ जा सोलसमे सोलस । उववासा हुंति मासंमि ॥ ६० ॥ जं पढमगंमिमासे । तमणुठाणं समग्गमासेसु ॥ पंचसयाइं दिणाणं । विसूणाइ इमंमि तवे ॥ ६१ ॥ एवं चायं—पनरस १ वीस २ चउवीस ३ । चेव चउवीस ४ पंचवीसा य ५ ॥ चउवीस ६ इक्कवीसा ७ । चउवीस ८ सत्तवीसा ९ य ॥ ६२ ॥ तीसा १० तित्तीसावि अ ११ । चउवीस १२ छवीस १३ अट्ठवीसा य १४ ॥ तीसा १५ छत्तीसावि अ १६ । सोलसमासेसु तवदिवसा ॥ ६३ ॥ पनरस १ दसरठ ३ छ ४ पंच ५ । चउर ६ पंचसु अ तिन्नि तिन्निति ॥ पंचसु दो दो अ तहा १६ । सोलसमासेसु पारणया ॥ ६४ ॥ इति गुणरत्नसंवत्सरतपः. ३२ ॥ तह अंगोवंगाणं । चिवंदण पंचमंगलाईणि ॥ उवहाणाइं जहाविह । हवंति नेआइं समयाउ ॥ ६५ ॥ इति तपांसि. ॥ ३ ॥

॥ मूलम् ॥—छठं छठेणं तवं । कुणमाणो पढमगणहरो भयवं ॥ अक्खीणमहाणसीउ । सिरिगोअमसामिउ जयउ ॥ ४ ॥ व्याख्या—श्रीमन्महावीरस्य प्रथमगणधरो भगवान् श्रीगौतमस्वामी जयतु, इति क्रियासंबंधः. किं? कुर्वाणः, किं? तपः, केन? छठं छठेणं, षष्टभक्तं यावद्भक्तं

त्यज्यते यत्र तत् षष्टषष्टेन, इयं चोपवासद्वयस्य संज्ञा, कथंभूतः श्रीगौतमः? 'अक्खीणमहाणसीलत्ति' अक्षीणमहानसी लब्धिर्यस्य, तत्स्वरूपं चैतद्यथाहि—महानसमन्नपाकस्थानं, तदाश्रितत्वाद्भक्तान्नमपि महानसमुच्यते, ततश्च क्षीणपुरुषशतसहस्रेभ्योऽपि दीयमानं स्वयमभुक्तं सत्तथाविधलब्धिविशेषादत्रुटितं, तच्च तन्महानसं च भिक्षालये भोजनमक्षीणमहानसं, एतत्स्वरूपा लब्धिरक्षीणमहानसी लब्धिरिति गाथार्थः. ॥ ४ ॥ विशेषार्थस्तु कथानकादवसेयस्तच्चेदं—

मगधदेशे गोर्बरनाम्नि ग्रामे गौतमगोत्री वसुभूतिनाम्ना द्विजोऽभूत्, तस्य पत्नी पृथ्वीनाम्नाभूत, तयोः पुत्रास्त्रय इंद्रभूत्यग्निभूतिर्वायुभूतिनामानः, ते त्रयोऽपि क्रमेण पित्रा पाठिता वेदवेदांगपारगा चतुर्दशविद्यापारगा जाताः. ततस्ते त्रयोऽपि छात्रपंचशतैः परिवृताः पृथक्पृथक्स्वान् स्वान् शिष्यान् पाठयंतिस्म. अन्यस्मिन् दिने श्रीअपापामहानगर्यां सोमिलविप्रेण यज्ञः कर्तुमारब्धः, तस्मिन् यज्ञे बहवो विप्रा मिलिताः, तत्रैकादशमुख्यास्तेषां नामान्यमूनि, यथा—इंद्रभूति १ रग्निभूति २—र्वायुभूतिश्च ३ गौतमाः ॥ व्यक्तः ४ सुधर्मा ५ मंडित ६—मौर्यपुत्रा ७ वकंपितः ८ ॥१॥ अचलभ्राता ९ मेतार्यः १० । प्रभासश्च ११ पृथक्कुलाः ॥ तेषामेकादशानामप्येते संदेहाः संति,

यथा—जीवे १ कम्मे २ तज्जीव ३। भूअ ४ तारिसय ५ बंधमुक्के य ६॥ देवा ७ नेरईआ ८ वा। पुन्ने ९ परलोअ १० निवाणे ११॥ १॥ एतेषां परिवारो यथा—पंचन्हं पंचसया। अद्धुट्ठ सयाइं हुंति दुन्नि गणा॥ दुन्हं तु जुवलयाणं। तिसओ तिसओ हवइ गब्बो॥ १॥ एवमन्येऽपि बहवो विप्रा यज्ञपाटके यज्ञकरणार्थं मिलिताः संति, ते सर्वेऽपि यज्ञकर्माणि कुर्वंति स्वशर्माणि प्रलिप्सवः, तत्र तस्मिन् समये श्रीवीरो भगवान् देवसंघपरिवृतः श्रीअपापापुर्यां समवसृतः, देवैस्तत्र समवसरणं कृतं, स्वामी तस्मिन् समवसरणे देशनां करोति, तदा तत्र समवसृतं वीरं विवंदिषून् सुरान् समालोक्य गौतमो द्विजान्प्रति बभाषे, भो द्विजाः! मंत्रैः समाहूता एते सुरा अस्मिन् यज्ञे समायांति, भो लोकाः! यज्ञमाहात्म्यं पश्यत? ततस्ते सुरेश्वरास्तं यज्ञपाटकं चंडालपाटकमिव त्यक्त्वा समवसरणे ययुः, तदानीं सर्वे लोका एवं कथयंत्यहो देवाः सर्वे सर्वज्ञं वंदितुं सर्वज्ञसमवसरणे यांति, अहो सर्वज्ञमाहात्म्यं! तत् श्रुत्वेंद्रभूतिनामा विप्रः कुपितः, सर्वज्ञेत्यक्षराणि श्रुत्वा कोपावेशवशंगतः स विप्रानेवमवदत्. धिगेतान् देवान् मानवांश्च ये मां मुक्त्वा तत्र पाखंडिनमानमंति, भो ममाप्यग्रे किं कोऽपि सर्वज्ञोऽस्ति? पंचाननस्यान्यः कोऽपि पराक्रमी भवेत्? अमी मनु·

ष्याः कदाचिन्मूर्खा जाताः, तर्हि देवाः कथमनेन वंचिताः? तर्हि नूनं यादृश एष सर्वज्ञो वर्तते, तादृशास्ते देवा अपि निपुणा दृश्यंते, अनयोः सदृशः संयोगो मिलितः, असावद्भूतसर्वज्ञाटोपमात्रेण सर्वान् देवान् मनुजांश्च विप्रतारयति, तर्हि नूनं स कोऽपींद्रजालिकः कलाशाली विदेशजो महाधूर्तो वर्तते, तस्य सर्वज्ञत्वं नाहं सहे, यथा—वैश्वानरकरस्पर्शः । मृगेंद्रः श्वापदः श्वनं ॥ क्षत्रियाश्च रिपुक्षेत्रं । न सहंते कदाचन ॥ १ ॥ तथाहमप्यस्य सर्वज्ञस्य सर्वज्ञत्वं न सहे, यद्यस्य सर्वज्ञतां सर्वेषां पश्यतामपहरामि तर्ह्यहं वसुभूतिपुत्रो नान्यथा.

एवमहंकारपरः स पंचशतछात्रैः पठ्यमानबिरुदः समवसरणं ययौ, प्रथमं समवसरणे समारूढः सोपानस्थो वीरं निरीक्ष्य दध्यौ, यतः—वीरं निरीक्ष्य सोपान—स्थितो दध्यौ सविस्मयः ॥ किं ब्रह्मा शंकरः किं वा । किं विष्णुर्ब्रह्म वा किमु ॥ १ ॥ चंद्रः किं न स यत्कलंकसहितः सूर्योऽथवा नो स य—त्तीक्ष्णांशुः किमु वासवो न सहस्राक्षो यतो गीयते ॥ किं वा स्वर्णगिरिर्न सोऽतिकठिनः ख्यातः सुरद्रुर्न वा । नो स्याच्चिंतितमात्रदः स हि जिनः श्रीवर्धमानो ह्यसौ ॥ २ ॥ आदित्यमिव दुःप्रेक्ष्यं । समुद्रमिव दुस्तरं ॥ बीजाक्षरमिवाचर्च्यं । दृष्ट्वा वीरं महोदयं ॥ ३ ॥ कथं मया

महत्त्वं हा । रक्षणीयं पुरार्जितं ॥ प्रासादं कीलिकाहेतो—र्भक्तुं को नाम वांछति ॥ ४ ॥ युग्मं ॥ तत्र समवसरणे स्वामिनस्तादृशं रूपं तादृशं तेजश्च दृष्ट्वा स स्वाम्यग्रे गतः. तदा स्वामिना गौतमो भाषितो भो गौतम इंद्रभूते! तव स्वागतं वर्तते, ततोऽभिमानादिंद्रभूतिर्दध्यावहो ममैष नामापि जानाति, अथवाहं जगत्प्रसिद्धो मम नाम को न जानाति, सर्वेऽपि मां जानंति. परं यदि मम हृद्गतं संशयं स कथयति. तदा ममाश्चर्यं भवति, गौतमेनेंद्रभूतिनेति चिंतिते सुधामधुरया गिरा भगवानाह भो गौतम! तव मनसि जीवसंशयो वर्तते. जीवोऽस्ति न वेति संशयं मा कुरुः? अस्त्येव जीवो वेदे उक्तत्वात, अत्र स्वामिना श्रीवीरेण वेदपदान्युक्तानि, यथा—स वै अयमात्मा ज्ञानमय इत्यादि, तथा ददद इति दमो दानं दया चेति दकारत्रयं यो जानाति स जीवः, इति प्रभुमुखाद्वेदपदानि श्रुत्वा श्रीगौतम इंद्रभूतिनामा मिथ्यात्वेन समं संदेहमुज्झांचकार, पुनः स्वामिनं नत्वा स एवं बभाषे हे प्रभो! अहं दुर्बुद्धिस्त्वत्परीक्षार्थमागमं, उत्तुंगवृक्षं नाम यतु वामन इव, परं हे नाथ त्वयाहं बोधितः, अतो भवाद्भिरक्तं मां प्रव्रज्यादानेनानुगृहाण? स्वामी तमाद्यं गणधरं भाविनं ज्ञात्वा जगद्गुरुरिंद्रभूतिं पंचशतछात्रोपेतं स्वयं प्रव्राजयामास, तदानीं धनदेन धर्मोपकरणमु-

पनीतं, तदा दानसमये गौतमो मनस्येवमचिंतयन्निर्वद्यव्रतादाने किमुपकरणरूपपरिग्रहेण? गौतमम-
नश्चिंतितं विज्ञाय स्वामिनोक्तं हे गौतम! वस्त्रपात्रादिकं मुनिना ग्राह्यं, यदिदं धर्मोपकरणं ध-
र्मोपष्टंभकारणं, न तु परिग्रहः, मूर्छापरिग्रहो हि सिद्धांते उक्तः, इंद्रभूतिः स्वामिनोक्तं हृदये धृत्वा
त्रिदशार्पितं धर्मोपकरणं गृहीत्वा शिष्याणां पंचभिः शतैः समं संयमं जग्राह. अथ तं प्रव्रजितं श्रु-
त्वा द्वितीयोऽग्निभूतिरभिमानं कृत्वा तथैवागतः, स्वामिना तथैव दीक्षितश्च, एवमेकादशापि विप्राः
प्रतिबोधितास्तथैव दीक्षिताश्च, एवं चतुश्चत्वारिंशच्छतमुनिवरा दीक्षिताः, तेषामेकादशानां मध्ये ए-
कादश मुख्यशिष्या अभवन्, यथा—

महाकुला महाप्राज्ञाः । संविग्ना विश्ववंदिताः ॥ एकादशाप्यभूवंस्ते । मूलशिष्या जगद्गुरोः ॥
॥ १ ॥ ततः स्वामिना तानेकादशानप्याचार्यपदवीयोग्यान् ज्ञात्वा तेभ्यस्त्रिपदी दत्ता. ततस्ते तद-
नुसारेण द्वादशांगीः पृथक्पृथग्विधाय स्वाम्यनुज्ञां प्रतिभवः परिपाट्या किंचिन्नमितमौलयोऽवतस्थि-
रे. ततः समयज्ञः सौधर्मेशः सुगंधिवासचूर्णपूर्णभाजनमादाय पुरो बभूव. ततस्तेषां मुनीनां द्रव्य-
गुणपर्यायैश्चानुज्ञातं तीर्थमिति जल्पन् स्वामी पूर्वं गौतममूर्धनि चूर्णमक्षिपत. ततोऽन्येषां परिपा-

त्या मूर्धसु चूर्णं चिक्षेप. ततस्तेषां शिरस्सु देवाः पुष्पवर्षं चूर्णवर्षं च प्रीताः संतश्चक्रिरे. एवं तेषामेकादशानामपि गणधरस्थापना कृता. ततः स्वामिना साध्वीनां मध्ये चंदना प्रवर्तिनीपदे स्थापिता. एवं स्वामिना साधुसाध्वीश्राद्धश्राद्धीरूपश्चतुर्विधः संघः स्थापितः. पूर्णप्रथमपौरुष्यंते राजोपनीतबलिः प्राग्द्वारेण प्राविशत्. ततस्तस्योदस्तस्य बलेरर्धं देवा नभःस्थिता जगृहुः. ततः पतितस्यार्धं राजा जग्राह. तुर्यांशं च शेषजना जगृहुः. ततः स्वामी समुत्थाय देवछंदमुपाविशत. ततः स्वाम्यंह्रिपीठे श्रीगौतमः समासीनो भव्यबोधाय देशनां व्यधाद् द्वितीयपौरुषीं यावत्. ततो देशनांते निवृत्ते गौतमे सर्वे देवा लोकाश्च स्वस्थानमगुः. तत्र स्वामी श्रीज्ञातनंदनः कतिचिद्दिनानि स्थित्वा ततो भव्यानां प्रतिबोधकृतेऽन्यत्र पृथिव्यां विजहार. ततः स्वामिना समं श्रीगौतमः षष्टाष्टमादितपोनिःक्षिप्तकर्मा विचरति.

अन्यदा मह्यां विहरन् सुरासुरैः सेव्यमानः श्रीवीरः पृष्टचंपायां समाययौ. तत्र शालमहाशालौ राजयुवराजौ तन्नगरनायकौ त्रिजगद्बांधवं श्रीवीरं वंदितुमीयतुः. तौ च स्वामिनं नत्वा स्तुत्वा देशनां च श्रुत्वा प्रतिबुद्धौ यशोमतीपिठरयोः सुतं निजं भागिनेयं गांगिलनामानं राज्येऽभ्यषिंचतां.

ततः शालमहाशालौ भववासतो विरक्तौ श्रीमहावीरपादाब्जमूले व्रतं जगृहतुः. ततः कालांतरेण विहरन् भगवान् सपरिच्छदो देवसंघपरिवृतश्चतुस्त्रिंशदतिशयशोभितश्चंपापुरीं ययौ. मार्गे स्वामिना समं यांतौ शालमहाशालमुनी पृष्टचंपां गंतुकामौ स्वामिनमपृच्छतां, यथा हे स्वामिन्! भवदाज्ञया पृष्टचंपां गत्वावां गांगिलराजानं प्रतिबोधयावः. स्वामिनोक्तं युवां गौतमेन सह गच्छतं. ततस्तौ गौतमं पुरस्कृत्य पृष्टचंपां जग्मतुः. शालमहाशालसहितं श्रीगौतमं समागतं श्रुत्वा पौरलोकसहितो मातापितृभ्यां सह गांगिलनृपो वंदनार्थं गौतमांतिके गतः. तत्र सुरकृतसौवर्णकमलासने समासीन इंद्रभूतिश्चतुर्दशपूर्वधरश्चतुर्ज्ञानोऽक्षीणमहानसाद्यनेकलब्धिनिधिर्भगवान् देवमनुजपर्षदि देशनां विदधे, यथा—भोगे रोगभयं सुखे क्षयभयं वित्तेऽग्निभूभृद्भयं। दास्ये स्वामिभयं गुणे खलभयं वंशे कुयोषिद्भयं॥ स्नेहे वैरभयं नयेऽनयभयं काये कृतांताद्भयं। सर्वं नाम भयं भवेत्पुनरिदं वैराग्यमेवाभयं॥ १॥ एनां देशनां श्रुत्वा प्रतिबुद्धो गांगिलो निजं सुतं राज्ये न्यस्य मातापितृभ्यां सह श्रीगौतमपादांते शमरससंपूरितां दीक्षां समाददे. ततः श्रीगौतमस्तैस्त्रिभिः शालमहाशालाभ्यां च समावृतश्चंपायां प्रभुं वंदितुं चचाल. अनुगौतममायांतास्ते पंचापि केवलिनो भूत्वा चंपायां प्रा-

था:. श्रीगौतम: स्वामिनं प्रदक्षिणीकृत्य यावत्प्रणनाम तावत्ते पंचापि तीर्थं नत्वा केवलिपर्षदि चेलुः. तदा तान् गौतम ऊचे भो शालमहाशालाद्याः! यूयं पंचापि परमेश्वरं वंदध्वं? स्वाम्यूचे गौतमर्षे! केवल्याशातनां मा कृथाः. गौतमोऽप्याह स्वामिन्! किमेते केवलिनः? स्वामिनोक्तमेवमेव. ततो गौतमेन ते मिथ्यादुष्कृतपूर्वकं क्षामिताः. ततः खिन्नो गौतमो दध्यौ किं मम केवलं नोत्पत्स्यते? विना केवलं चाहमस्मिन् भवे न सेत्स्यामि. यावदेवं चिंतामग्नो गौतमोऽभवत्तावत्तस्य स्मृतिपथमागतं यदष्टापदे तीर्थे मनुजो गत्वा स्वशक्त्या देवान्नत्वा रात्रौ तत्रैव वसति स तस्मिन्नेव भवे सेत्स्यति. एतद्भगवद्वाक्यं देवमुखात्पुरा श्रुतं स्मृत्वा सोऽष्टापदे गंतुं स्वामिनमपृच्छत्. स्वाम्यपि त्र्यधिकपंचदशशततापसबोधिं विज्ञायार्हद्वंदनायाष्टापदे गमनाय गौतममादिदेश. इच्छानुरूपां स्वाम्याज्ञां प्राप्य मुदितः श्रीगौतमो मुनिर्वायुवच्चारणलब्ध्या समुत्पत्य क्षणेनाष्टापदं ययौ.

इतश्चाष्टापदारोहणं मोक्षहेतुं श्रुत्वा तापसाः कोडिन्न १ दिन्न २ सेवाल ३ नामानोऽष्टापदमारोढुं समुपस्थिताः, तेषामाद्य एकांतरोपवास्यार्द्रकंदफलाहारः पंचशत्या तपस्विनां सममाद्यां मेखलां प्राप. १. द्वितीयः षष्टषष्टभोजी पारणके च शुष्ककंदफलभोजी पंचशत्या तपस्विनां समं द्वितीयां

मेखलां प्राप. २. तृतीयोऽष्टमकारकः पारणके शुष्कसेवालभोजी पंचशत्या तपस्विनां समं तृतीयां मेखलां प्राप ३. तत ऊर्ध्वमारोढुमसमर्थास्ते तत्रैव तस्थुः. अथ ते त्र्यधिकपंचदशशतानि तापसा गौतमं पीवरांगं देहकांत्या जितसुरेश्वरं च निरीक्ष्य मिथः प्रोचिरे, यदि वयं कृशा अपि शैलमारोढुमसमर्थास्तर्ह्येष स्थूलकायो देहकांत्या जितसुरेशो महाशैलमेनं कथमारोहयिता? एवं तेषु ब्रुवाणेषु श्रीगौतमश्चारणलब्ध्या सूर्यकरानालंब्य सुर इव क्षणेनोत्पत्य तं महाचलं समारुरोह, तदा ते तापसाः परस्परमेवं जगदुरहोऽस्य महर्षेर्महाशक्तिर्ययासौ याति. तर्हि वयं सर्वेऽप्यस्य शिष्या भविष्यामः. एवं निश्चित्य ते सर्वेऽपि तापसा अष्टापदाधोऽवतीर्यैकीभूय सुस्थाने गौतमपथं विलोकयंतस्तस्थुः. इतः श्रीगौतमोऽष्टापदशिरसि गतः, तत्र भरतेश्वरकारितं नंदीश्वरचैत्याभं चतुर्विंशतिजिनांकितं चैत्यं ययौ, तत्र च स प्रत्येकं जिनबिंबान्यप्रतिबिंबानि महाभक्त्या प्रणनाम.

ततः श्रीगौतमश्चैत्यान्निर्गत्यैकस्याशोकमहातरोस्तले वैश्रमणादिभिर्देवैर्विद्याधरैश्च वंद्यमान उपाविशत, तेषां देवविद्याधराणामग्रे भगवान् गौतमो धर्मोपदेशं ददानः प्रस्तावादिदमाख्यत्, मुनयः किटिकिटीति संधयोऽस्थिचर्मावशिष्टशरीरा अग्लानिभाजः सत्वैकनिधयो भवंति, यतः सिद्धां·

तेऽप्युक्तं, अरसाहारा विरसाहारा तुच्छाहारा किडिकिभियभूया इति. तत् श्रुत्वा वैश्रमणो गौतमस्य स्थौल्यं विभावयन् स्वस्मिन्नपि विसंवादिवचो दृश्यत इति ध्यातवान्, ततः स्वामी मनोज्ञानी तस्याभिप्रायं ज्ञात्वैवमुवाच, भो धनद! नांगकार्श्यं प्रमाणं स्यात्, किंतु ध्यानस्य माहात्म्यं शुभाशुभयोः, शुभध्यानाच्छुभा गतिरशुभध्यानाच्चाशुभा गतिः स्यात्पुंडरीककंडरीकवत्तथाहि—

अस्मिन् जंबूद्वीपे महाविदेहभूषणे पुष्कलावतीविजये पुंमरीकिणी नाम नगर्यस्ति, तन्नगरीनायको महापद्मो नाम राजा, तस्य च पद्मावती नाम पट्टदेव्यस्ति, तयोः पुत्रौ पुंमरीककंडरीकनामानौ बभूवतुः. अन्यदा नलिनवनोपवने धर्मोपदेशदायकाः श्रीधर्मघोषाचार्याः समेयुः, महापद्मस्तत्र वंदनार्थं गतः, तदंतिके देशनां श्रुत्वा पुंडरीकं च राज्ये न्यस्य महापद्मो दीक्षां गृहीत्वा समुत्पन्नकेवलः कर्मक्षयं कृत्वा मोक्षमगात्, पुनस्ते धर्मघोषाचार्या महामुनयो विहरंतः पुंडरीकिण्यां नगर्यां समागताः, तदा पुंडरीककंडरीकौ तेषामंतिके धर्मं शुश्रूवतुः, तां देशनां श्रुत्वा पुंडरीको राज्ञावयतीभूय गृहं ययौ, स कंडरीकं बभाषे भो बांधवेदं पैतृकं राज्यं गृहाण, भवाद्भीतोऽहं दीक्षां गृहीष्यामि, तदा पुंडरीकंप्रति कंमरीको बभाषे हे बंधो! त्वं मां राज्यं दत्वा किं संसारांधकूपे पा

तयसि? तदहं प्रव्रजिष्यामि, तरिष्यामि च भवार्णवं, पुंडरीकेण राज्ञा द्वित्रिवारानुक्तं, परं कंडरीकेण न मन्यते, तदा पुंडरीकेणानुज्ञातः स प्राव्राजीत्, पुंडरीकेणोक्तं हे बंधो! त्वं प्रव्रजितः संयमे दृढप्रतिज्ञो भूयाः, यतः प्रव्रज्या दुष्करा वर्तते, त्वं च सुकुमारोऽसि, अतः परीषहोपसर्गादिषु सावधानो भूयाः, इंद्रियाणि दुर्जयानि वर्तंते, अतस्त्वया दृढव्रतेन भाव्यमिति शिक्षां दत्वा स स्वगृहमागात्, पुंडरीको नृपतिर्गृहस्थोऽपि भावचारित्रवांस्तस्थौ. कंडरीकोऽपि विविधैस्तपोभिरात्मानं निर्मलीकुर्वन् सामाचारीं सम्यक्पालयन् साधूनामतीववल्लभोऽभूत्. एवं कियंति वर्षाणि महोत्कटं संयमं परिपालयतस्तस्य शरीरेंतप्रांततुच्छाहारैर्बाधा समुत्पन्ना. तया बाधया पीडितविग्रहोऽसावतीवकृशो बभूव.

अथासौ गुरुभिः समं विहरन् पुंडरीकिण्यां नगर्यां समागात्. पुंडरीको नृपः कंडरीकं सबाधशरीरं दृष्ट्वा गुरून् पप्रछ यद्भवदाज्ञया कंडरीकशरीरे चिकित्सां करोमि, अतो मम दानशालायां यूयं समवसरत? गुरुभिरपि तथा कृतं. अथ स कंडरीकमुनिस्तेन राजपिंडेन मूर्छितस्तन्नगरं तद्गृहं तदाहारं च त्यक्तुं न शक्नोति. ततो गुरुरन्यत्र विजहार, कंडरीकश्च तत्र तस्थौ. ततः पुंडरीकः

सपरिवारः कंडरीकं मुनिं नत्वेत्युवाच त्वं धन्योऽसि, कृतपुण्यश्चासि, येन त्वया राज्यं त्यक्त्वा संयमो गृहीतः, इत्यादि तत्प्रशंसां निशम्य सोऽपि लज्जितः पुंडरीकं बांधवमापृच्छ्य विहारं कृतवान्, एवं दीक्षितोऽसौ वर्षसहस्रं यावत्संयमं प्रतिपाल्य पुनश्चारित्रावरणकर्मोदयाद्भ्रष्टक्रियो भ्रष्टसंयमो भृशं विषयाभिलाषुको बभूव. ततो भ्रष्टधर्मपरिणामः स एवमचिंतयत्, अनया प्रव्रज्यया मम पर्याप्तं, अहो मम बांधवः कपटं कृत्वा राज्यान्मां निष्कास्य स्वयं निष्कंटकं राज्यं करोति, तर्हि तत्र गत्वाहं राज्यं गृह्णामीति ध्यात्वा स पुंडरीकिण्यां नगर्यां समागतः, तत्रोद्यानवाटिकायां पात्राद्युपकरणमात्रं वृक्षशाखायां समालंब्य स्वयं हरिततरुपल्लवस्रस्तरे शीतले सुखं लुलोठ. उद्यानपालकेनागत्य राज्ञोऽग्रे तत्स्वरूपं विज्ञप्तं, तत श्रुत्वा पुंडरीको नृपस्तत्रागतः, बांधवं च तादृशं दृष्ट्वापि वंदित्वा त्वं धन्योऽसीत्याद्यवर्णयत्, तथापि तादृशाकारं तं निरीक्ष्य राज्ञा चिंतितं नूनमेष पतितः संयमात्, ततो राज्ञोक्तं भो भो सामंता वारयतापि मयामुना बालेन रभसा श्रामण्यं गृहीतं, परं सोऽद्य संयमान्निर्विण्णो जातः, ततः पुंडरीकः कंडरीकं जगाद, भो बांधव! त्वं राज्यं गृहाण? तेनाप्युक्तमहं राज्यार्थमेवागतोऽस्मि. ततस्तस्य राज्यं दत्वा स्वयं च कंडरीकस्य साधुवेषं लात्वा ततोऽसौ व्यहरत्,

कंडरीकश्च राजा जातः, भग्नव्रतोऽसौ रंकवत् क्षुधाक्रांतः शरीरेऽतिकृशः सेवकैर्हस्यमानो हृदये सेवकोपरि भृशं चुकोप. ततस्तेन चिंतितं प्रथमं तावद् भुंजे, पश्चादेतान् शिक्षयिष्यामीति विचिंत्य वि विधाहारैरुष्ट्रीर्षकवदुदरं भृत्वा रात्रौ प्रमदाभिः सह भोगानासेव्य जागरितो रात्रिजागरणाज्जघन्यमध्यमोत्कृष्टरसवत्याहारदुर्जरतश्च विसूचिकादाघज्वरशिरोर्तिर्भागभवत्, अहो पापस्यैतत्फलं! अथ भ्रष्टप्रतिज्ञं तं ज्ञात्वा रुष्टा नियोगिनः केऽपि तन्निकटे नायांति, तेनाकारिता अपि प्रत्युत्तरं न ददति, ततः कंडरीको रुष्टो दध्यौ प्रभाते सर्वानप्येतान् सकुटुंबान् हनिष्यामि, एवं स कंडरीकः कृष्णलेश्यावान् रौद्रध्यानेन मृत्वा सप्तमावनावप्रतिष्ठाने त्रयस्त्रिंशत्सागरायुर्नारकः समुदपद्यत. अथ पुंडरीको दुष्प्रापं संयमं लब्ध्वा मुदितमना गुर्वंतिके गतः, जिनसाक्षिकं च पुनः संयमं गृहीत्वा स भृशं तुतोष. ततः स पुंडरीकसाधुररसाहारैर्विरसाहारैः कालातिक्रांताहारैः शीताहारै रुक्षाहारैः पीडितो मृदुशरीरो विसूचिकारोगेण पीडितोऽभूत्, तस्यापि तथैव पीडा समुत्पन्ना, तदा स चिंतयति, धन्योऽहं येन मया संयमो गृहीतः, इत्यादि भावनां भावयन् विहिताराधनः कृतानशनः शुभध्यानपरायणः पीनांगोऽपि विपन्नः सन् स सर्वार्थसिद्धिविमाने त्रयस्त्रिंशत्सागरायुर्देवो जातः. ततस्तप-

स्विनां पीनत्वं कृशत्वं वा न प्रमाणं, किंतु शुभध्यानमेव प्रमाणं, एतदर्थं पुंडरीकाध्ययनं गौतमोदितं श्रीदसामानिकसुरेण जृंभकामरेण धारितं, स देवस्ततश्च्युत्वा श्रीवज्रस्वामी भावी, स वैश्रमणदेवः श्रीगौतमांतिके सम्यक्त्वं प्रतिपेदे. ततोऽसौ दुश्चिंतितं क्षमयित्वा स्वाश्रयं मुदितो ययौ. श्रीगौतमस्तां निशां तत्रैवाशोकतले नीत्वा प्रभाते पुनर्देवान्नत्वा चोत्तरत. तदा स गौतमो गणधरस्तैस्तापसैरदृश्यत. ते महामुनिं तं गौतमं प्रणम्य प्रोचुर्हे महात्मन्! वयं तव शिष्या भविष्यामः, त्वमस्माकं गुरुर्भव? ततः श्रीगौतमस्तानूचे भो तापसाः! मे गुरुः श्रीवीरः परमेश्वरः सर्वज्ञोऽर्हन्, भवतां चापि स एव गुरुर्भवतु. ततः श्रीगौतमस्तानाग्रहपरान् दीक्षयामास. ततस्तेषां सर्वेषां तापसानां सद्यो देवतया यतिलिंगं समर्पितं. ततस्ते गौतमेन सार्धं स्वामिनं नंतु चेलुः. विंध्याद्रौ कलभैर्वृतो गजराज इव तैर्वृतः श्रीगौतमो मार्गे गच्छन्नेकस्मिन् सन्निवेशे भिक्षाकाले गतः. तदा गणाग्रणीस्तान् पृष्टवान्, भो मुनयः! भवदर्थं किमाहारमानयामि? युष्माकं किं रोचते? यद्रोचते तत्कथयत? तैरुक्तमस्माकं पारणके पायसान्नं भवतु.

तदा लब्धिमान् श्रीगौतमः स्वकुक्षिपूरणमात्रपात्रमादाय कस्यचिद्विप्रस्य गृहे गतः, तेन च

सहजनिष्पन्नं पायसं तस्मै दत्तं, तदा तस्य गृहे पंच दिव्यानि जातानि. स्वामी तदन्नमादाय जल-भाजनं च करे कृत्वा तेषां समीपे समागतः. तत इंद्रभूतिस्तान् बभाषे भो साधवः! यूयं पायसेन पारणं कर्तुं निषीदत? इत्युक्त्वा तेषां मुनीनां मध्ये क्षीरभृतः पतद्ग्रहो मुक्तः, तज्जलभाजनं च मुक्तं. ते दध्युरहोऽनया क्षैरेय्यास्माकमयं किं करिष्यति? तिलकान्यपि न भविष्यंति, तर्हि पारणकानि तु कथं भविष्यंति? इति विमृशंतो गुर्वाज्ञया ते सर्वेऽपि मुनयः पंक्तौ समुपाविशन्. ततः श्रीगौतमस्तान् सर्वानपि मुनीनक्षीणमहानसीलब्ध्या भोजयत्. इति लब्धिमंतं तं श्रीगौतमं दृष्ट्वा ते सर्वेऽपि तापसा विस्मयस्मेरचक्षुष आनंदमया बभूवुः. तत्र सेवालभक्षिणस्ते तापसाः पायसं भुंजाना ईदृशीं भावनां भावयंति, यथा—दिष्ट्या धर्मगुरुर्वीरः । प्राप्तोऽस्माभिर्जगद्गुरुः ॥ पितृकल्पो मुनिश्रेष । बोधिश्चात्यंतदुर्लभा ॥ १ ॥ सर्वथा कृतपुण्याः स्म । इति भावयतामभूत ॥ भुंजानानां केवलं द्राक् । शुष्कसेवालभक्षिणां ॥ २ ॥ जज्ञे च प्रतिहार्याणि । दिन्नादीनां प्रशस्यतां ॥ कोडिन्यादीनां श्रीवीरं । केवलज्ञानमुज्ज्वलं ॥ ३ ॥ ततस्तैर्वृतो गौतमः समवसरणे समागात्. ते साधवश्च प्रभुं प्रदक्षिणीकृत्य केवलिपर्षदि ययुः. तदा गौतमः स्वामिनं वंदित्वा तानभाषिष्ट, भो साध-

वः! यूयं कुत्र यास्यथ? स्वामिनं वंदध्वं? स्वाम्याह भो गौतम! केवल्याशातनां मा कुरु? ततो गौतमस्तान् मिथ्यादुष्कृतपूर्वं क्षमयामास. ततः श्रीगौतमो दध्यावहो मद्दृष्टावेतेषामपि केवलज्ञानं समुत्पन्नं, अहं तु गुरुकर्मास्मिन् भवे किं न सेत्स्यामि? एवं चिंताप्रपन्नं श्रीगौतमं ज्ञात्वा भगवानाह, हे गौतम! सुराणां वचनं तथ्यं किंवा जिनानां वचनं तथ्यं? गौतमेनोक्तं जिनानां. स्वामिनोक्तं तर्ह्यधृतिं माकार्षीः. त्वमपि केवलं लब्ध्वा मोक्षं यास्यसि, यतो ममोपरि तव महान् स्नेहो वर्तते, तेन च तव केवलं नोत्पद्यते. यतः—

चत्तारि कडा पन्नत्ता, तं जहा—सुंठिकडे १, विदलकडे २, चम्मकडे ३, कंबलकडे य ४. एवमेव चत्तारि नेहा पन्नत्ता. हे गौतम! ममोपरि तव कंबलसमानः स्नेहोऽस्ति, तेन च मयि मोक्षं गते सति स्नेहाभावे तव केवलज्ञानं समुत्पत्स्यते, नान्यथा. यतः—मुक्कमग्गपवन्नाणं। सिणेहो वज्जसिंखला ॥ वीरे जीवंतए जाओ। गोयमो जन्न केवली ॥ १ ॥ तवाप्यासु चिरं संसर्गात् स्नेहो दृढतरो वर्तते, तेन तव केवलं रुद्धं, तदभावे च तव केवलं भविष्यति, तत्र गौतमस्वामिनः सर्वेषां च सभासदां प्रतिबोधार्थं भगवता श्रीवीरेण द्रुमपुष्पिकाभिधानमुत्तराध्ययनस्य दशमा-

ध्ययनं प्रकाशितं. तत् श्रुत्वा सभालोकाः केचिद्दीक्षां केचिद् द्वादश व्रतानि, केचित्सम्यक्त्वं केचिद्भद्रकत्वं च प्रतिपद्य सर्वे स्वं स्वं स्थानं ययुः. गौतमप्रतिमो नास्ति । गणेशो गुणसागरः ॥ येनाक्षीणमहालब्ध्या । भोजिता मुनयः स्वयं ॥ १ ॥ इति श्रीगौतमस्वामिकथानकं समाप्तं. ॥ अथ सनत्कुमारस्य तपोलब्धिमाह—

॥ मूलम् ॥—रज्जाइ सणंकुमारो । तवबलखेलाइलद्धिसंपन्नो ॥ निठ्ठुयखवलिअंगुली । सुवन्नसोहं पयासंतो ॥ ५ ॥ व्याख्या—सनत्कुमारश्चतुर्थश्चक्रवर्ती 'रज्जाइत्ति' राजते, कथंभूतः? तपोबलेन श्लेष्मौषध्यादिलब्ध्या संपन्नः सहितः, यथा खेलो निष्ठीवनं, तदेवौषधिः सकलरोगाद्यनर्थोपशमनहेतुत्वात् खेलौषधिः, तथा आदिशब्दादन्या अपि लब्धयो ज्ञेयाः, 'निठ्ठुअत्ति' निष्ठ्यूतेन थूत्कृतेन 'खवलिअत्ति' दग्धा अंगुलिर्यस्य, एवंविधः सन् सुवर्णशोभां प्रकाशयन्निति गाथार्थः. ॥ ५ ॥ विस्तरार्थस्तु कथानकादवसेयस्तच्चैवं—

इहैव जंबूद्वीपे भरतक्षेत्रे श्रीकांचनपुरं नाम नगरमस्ति, तस्मिन्नगरे श्रीविक्रमयशो नाम राजास्ति, तस्य राज्ञः पंचशतमिताः कांता अभूवन्, तस्मिन्नेव पत्तने नागदत्तो नाम सार्थवाहोऽस्ति

धनैर्धनदोपमः, तस्य सार्थवाहस्य विष्णुश्रीनामप्रियाजनि, लक्ष्मीरिव रम्या लोकानां मनोनयनहारिणी, तया दयितया स श्रेष्टी जगतत्रितयसाहाय्यवंतं स्वं मेने, सा सार्थवाहपत्नी विष्णुश्रीरेकस्मिन् दिने क्रीडार्थं वने गता, कथंचिद्राज्ञा दृष्टा च, तद्रूपमोहितेन राज्ञा सा सार्थवाही स्वांतःपुरे क्षिप्ता. ततः स तया समं वैषयिकं सुखं भेजे, तस्या अग्रे पंचशतमपि वनितास्तस्य विस्मृतिं गताः, अहो काममोहितः पुमान् किमपि कृत्याकृत्यं न जानाति! तथा राजा तया विष्णुश्रिया मोहितो राजकार्यचिंतां कामपि नाकरोत्, एवं तया सह रममाणोऽसौ कालं निर्गमयामास, स नागदत्तसार्थवाहस्तु तस्याः प्रियाया विरहेणोन्मत्तवन्नगरे बभ्राम. एवं तयोः सार्थवाहनृपयोर्वियुक्तयुक्तयोः कालो जगाम. अथ ताः पंचशतमाना राजपत्न्यस्तस्या विष्णुश्रियाः कार्मणं चक्रे, तेन कार्मणेन दिवसे दिवसे क्षीयमाणा सा निधनं प्राप, परं तस्य मंत्रिणस्तस्याः स्त्रियोऽग्निसंस्कारं न चक्रुः, अस्याः प्रेमतो राजा मा ग्रथिलो भवत्विति भिया सैकत्र स्थाने स्थापिता, नृपश्च तन्मृत्युनोन्मत्तो बभूव. ततो मंत्रिणो राजानं तत्र नीत्वा तृतीयेऽह्नि तां मृतां दर्शयामासुः, तां मृतामपि जीवंतीं ज्ञात्वा स प्रोचे, हे प्रिये! त्वं सानुरागैकवारं सन्मुखीभूय मां प्रेक्षस्व? त्वं हास्येन मौनमाधाय किं

स्थितासि? मंत्रिभिरुक्तं स्वामिन्नेषा मृता, त्वं सावधानो भूत्वास्याः शरीरं विलोकय? राज्ञा तस्याः शरीरं विशेषतया विलोकितं, तदा प्रकटकीटकसन्मिश्रं कीटकैरावृतं दुर्गंधं मलमूत्रक्लिन्नं तच्छरीरं दृष्ट्वा लज्जितोऽसावचिंतयदहो मोहो महामल्लः, येनाहमेवं विडंबितः, धिगस्तु मोहस्य चेष्टितं, यो लोकानेवं विडंबयति, अहो मया किमकार्यं कृतं? पंचशतराजकन्याः स्त्रियस्त्यक्त्वास्यामन्यस्त्रियां रक्तो जातः, तस्याः स्वरूपं त्वेतत्, तर्हि धिगस्तु संसारसुखं. एवं यावत्स चिंतयति तावदुद्यानपालकेनागत्य विज्ञप्तं स्वामिन् भवदुद्याने सुव्रताचार्यगुरवः समागताः संति. तस्य वर्धापनिकां दत्वा राजा गुरुवंदनाय गतः. देशनां श्रुत्वा पुत्राय राज्यं दत्वा स्वयं दीक्षामुपाददे. ततः स विक्रमयशा राजर्षिर्दुस्तपैर्महातपोभिरात्मानं संशोध्य प्राणांतेऽनशनेन मृत्वा सनत्कुमारकल्पे प्रथमे प्रतरे प्रवरर्द्धिकः सुरोऽभूत.

ततश्च्युत्वा रत्नपुरे नगरे सम्यक्त्वतत्वज्ञाग्जिनधर्माभिधः स महाश्राद्धोऽभूत, नागदत्तोऽप्यार्तध्यानाद्दिरद्रातुरो मृत्वा तिर्यग्भवेषु भ्रांत्वा सिंहपुरे नगरे द्विजोऽभूत् षट्कर्मरतोऽग्निशर्माख्यः, कालेन च स तापसोऽभूत्. द्विमासक्षपणादितपः कुर्वाणः स तापसो मह्यां भ्रमन् रत्नपुरं ययौ. त-

न्नगराधीशेन हरिवाहनेन राज्ञा स तपःपारणायै निमंत्रितः, तेन तापसेन तत्र स जिनधर्मः स्वपूर्वभववैरी दृष्टः, तं दृष्ट्वा तस्य तापसस्य वैरोत्पत्तिर्जाता, तेन वैरेण च राज्ञोऽग्रे तापसेन कथितं यदि जिनधर्मस्य पृष्टे स्थालं धृत्वा त्वं भोजयसि तदाहं भुंजे, नान्यथा. तदा राज्ञा श्रेष्टिने प्रोक्तं भो श्रेष्टिन्नेष तापसो यथा कथयति तथैनं भोजय? श्रेष्टिनोक्तं तत्र नगरवासित्वात्तवोक्तं सर्वं करिष्ये, ततस्तेन तापसेन तस्य पृष्टे पायसभृतं स्थालं धृत्वा भुक्तं, तप्तपायसपात्रेण जिनधर्मस्य पृष्टचर्म कर्म च प्रादाहि, परं तस्य मनागपि मनो नादाहि, भुक्त्यनंतरं स्थाले समुध्धृते घातेन सह तत्त्वगपि समुध्धृता, परं स धीरो निजकर्मण एव चुकोप, न तु तपस्विने. ततः स जिनधर्मश्राद्धः स्वायुःपर्यंतं ज्ञात्वा जिनगृहेषु देवार्चनं कृत्वा व्रतं भेजे. उत्तुंगपदलिप्सया स शैलशृंगाग्रमारुह्य कायोत्सर्गं वितेने. ततः स साधुर्गृध्राद्यैश्चंचुभिस्त्रोट्यमानोऽपि सानुमानिव निःप्रकंपस्तत्परीषहं सेहे. ततोऽसौ धर्मध्याने स्थितो नमस्कारपरायणो मृत्वा सौधर्माधिपोऽभवत. सोऽपि त्रिदंडी मृत्वा तस्यैव सौधर्माधिपतेरैरावणनामा हस्तिरूपवाहनमभूत. ततश्च्युत्वा भवान् भ्रांत्वा सोऽसिताक्षनामा गुह्यकोऽजनि.

इतश्चास्मिन् जंबूद्वीपे भारते क्षेत्रे कुरुजंगलनाम्नि देशे हस्तिनागपुरं नाम पत्तनमस्ति, तस्मिन् पत्तनेऽश्वसेननामा राजास्ति, तस्य राज्ञः सहदेवीनाम्नी महादेव्यस्ति. अथ स जिनधर्मस्य जीवः काले सौधर्मकल्पतश्च्युत्वा तत्कुक्षिसरसि राजहंस इवावातरत्. तस्यां रात्रौ सहदेवी राज्ञी चतुर्दशमहास्वप्नानिमानद्राक्षीत्. यथा—गय १ वसह २ सीह ३ अभिसेय ४ । दाम ५ ससि ६ दिणयरं ७ झयं ८ कुंभं ९ ॥ पउमसर १० सागर ११ विमाण—भुवण १२ रयणुच्चय १३ सिहिं १४ च ॥ १ ॥ चतुर्दशमहास्वप्नानेवंविधान् दृष्ट्वा राज्ञी जागरिता. ततस्तया तत्स्वरूपं राज्ञोऽग्रे प्रोक्तं. राज्ञा च प्रभाते स्वप्नपाठका आकारिताः, तैरुक्तं नव पुत्रश्चक्रवर्ती भविष्यतीति. एवं तैः स्वप्नपाठकैर्विचारे कथिते मुदितो राजा तेभ्यो दानं ददौ. एवं तोषितास्ते स्वस्थानमगुः. पूर्णे मासि सहदेव्याः पट्टराज्ञ्याः पुत्रो जातः, जनकेन तस्य पुत्रस्य सुदिवसे सनत्कुमार इति नाम दत्तं. स जगन्नयनपीयूषसन्निभोऽश्वसेननृपगृहे ववृधे. अथ चंद्र इवाथवा नंदने कल्पवृक्ष इव वर्धमानोऽसौ समाष्टवर्षीयः पुण्यप्राग्भारवशतो गुर्वंतिके शस्त्रशास्त्रकला अल्पैरेव दिनैः शिक्षितः. ततः क्रमेण स कुमारो यौवनाभिमुखो युवतीजननयनकुमुदशारदपूर्णिमाचंद्रतुल्यो बभूव. द्विचत्वारिंशद्धनुस्तुंगः स

हेमवर्णतनुद्युतिर्युवतीजनमनोहारी मूर्तिमाननंगोंगं कृत्वा लोकानां मनोमोहाय समायात इव दृश्यते. तस्य सनत्कुमारस्य महेंद्रसिंहनामा वयस्यः समजायत. स कुमारस्तेन मित्रेण सहान्यदा मकरंदाख्यमुद्यानं रंतुं ययौ. तदैवाश्वपतिक्ष्मापप्राभृतेनायातं हयमब्धितरंगनामानमश्वसेनः स्वसूनवे सनत्कुमाराय प्रैषीत. ततः सकलां वनक्रीडां परित्यज्य सनत्कुमारस्तस्मिन् तुरंगमे समारुरोह. यावत्तं तुरंगमं सोऽवाहयत्तावत्तेन तुरंगमेण कुमारो हृतः. तत्पदानुगः सेनया सहितोऽश्वसेननृपोऽपि हयलालानुसारतः कियंतीं भूमिं गतः.

ततो दैवयोगाच्चंडवातो वातः, तेन प्रचंडवातेनाश्वस्य पदपंक्तिर्भग्ना, ततोऽश्वसेनस्य राज्ञस्तदनु गंतुकामस्यापि मनोरथो भग्नः. राजानं चिंतातुरं दृष्ट्वा महेंद्रसिंहाख्यः कुमारमित्रं राजानं प्रोचे, त्वमितो निवर्तय? अहं कुमारानुगो भूत्वा तस्य शुद्धिं समानयिष्ये. ततो निवर्तितो राजा स्वगृहमागात्, महेंद्रसिंहश्चाग्रे चलितः. स महेंद्रसिंह एकाकी वनाद्वनं भ्राम्यन्नेकां महाटवीमां हरिकरिव्याघ्रमंडितां घोरघूकघूत्काररवातिव्याप्तामटवीं विवेश. तत्र स मित्रं विलोकयन् जलस्थलादिस्थानेषु संचरन्नेकाकी कार्मुकसखायो मित्रलब्धियशोभागी वर्षाकालं शीतकालमुष्णकालं वा खेदहेतुं न

विवेद. इत्थं सुखे दुःखे तुल्योऽसौ योगीव मित्रं विलोकयन् वने बभ्राम. एवं भ्रमतस्तस्यान्यदा द-
क्षिणशरीरांगैः स्फुरितं, तदा तेन ज्ञातं मम दक्षिणांगस्फुरणतो नूनं सांप्रतं मित्रं मिलिष्यति. त-
तः स सम्यग्वनं विलोकयन् सकर्णः सावधानो गच्छन्नेकं सरोवरं ददर्श, यथा—अग्रे हंसरवोपेतं।
पद्मगंधमनोहरं ॥ दृष्टं सरोवरं रम्यं। सुमित्रमिव शीतलं ॥ १ ॥ पुरो ददर्श सुहृदं। हृदयादिव
निर्गतं ॥ ततः सनत्कुमारस्य। स क्रमौ सहसानमत् ॥ २ ॥ कुमारोऽप्यथ हर्षाश्रु—शांततद्विरहा
नलः ॥ उत्थायोत्थाय सुहृदं। हृदि दोर्भ्यामपीडयत् ॥ ३ ॥ ततस्तौ सुहृदौ वर्षांते मिलितौ दृग्सु
धानिर्झरौ मिथस्तापं शमयामासतुः. ततः सनत्कुमारेण स्नेहपरिप्लुतेन माहेंद्रसिंहः पृष्टः, भो मित्र
अस्ति मम मातापित्रोः कुशलं? तेनोक्तं तयोः केवलं त्वद्वियोगदुःखमस्ति, अन्यत् सर्वेषां कुशल-
मस्त्येव. पुनः कुमारेणोक्तं भो मित्र! त्वयैषा भीमाटवी कथमुल्लंघिता? ततो मित्रेणादितः स्वीयः
सकलोऽपि वृत्तांतो निवेदितः. ततः सनत्कुमारेण स्वस्त्रीभिः स्नानभोजनादिसामग्री सज्जीकृता.
ततो महेंद्रसिंहेनोक्तं भो कुमार! त्वमात्मीयवृत्तांतं हयापहारादारभ्य मूलतो ममाग्रे समाख्याहि?
ततो नृपसुतो निद्राव्‌ रतिग्रहेऽविशत्.

इतस्तस्य राज्ञी बकुलमती मंजुलशब्देन स्वस्वामिचरितं वक्तुमारेभे. यथा तदा विपरीतशिक्षितेनाश्वेन हृतस्तव सुहृद्. वल्गाकर्षणेऽपि सोऽश्वो द्विगुणवेगो बभूव, यथा मूर्खो निषिद्धोऽपि द्विगुणो भवति. एवं तव मित्रमपहृत्य दिनद्वयेन महाटवीं नीत्वा सोऽश्वो मृत्युमाप. ततस्तुरंगादवतीर्णस्तव सखा तृषाकुलो भूपीठे मूर्छितोऽपतत्. तदानीं कोऽपि कृपादक्षो यक्षस्तद्वनाधिष्ठायकः शीतलजलैस्तव मित्रं सिषेचेंदुः स्वकरैः कैरवमिव. ततस्तेन प्राग्जन्मबंधुना यक्षेण स शीतलजलं पायितः स्वस्थीकृतश्च. तदा तव मित्रेण तं प्रत्युक्तं त्वं कोऽसि? तेनोक्तमहमेतद्वनाधिष्ठायको यक्षस्तवानुकंपया समागतः, शीतलजलेनाभिषिच्य सचेतनं च कृत्वा त्वां जलमपाययम्. आर्यपुत्रेणोक्तं त्वया जलं कुतः समानीतं? तेनोक्तं मानससरतः. कुमारेणोक्तं तर्हि मां तत्र सरसि नय? यथा तज्जलावगाहेन मम देहस्य दाहो नश्यति. तत श्रुत्वा यक्षेणार्यपुत्रः क्षणेन तत्र नीतः. तस्मिन् सरसि जलक्रीडां च कुर्वतः स्वामिनो देहतापो गतः. तत आर्यपुत्रो यावज्जलक्रीडां कृत्वा सरसो बहिर्निस्सरति तावत्पूर्वभवमत्सर्यसिताक्षनामा यक्षस्तत्र समागतः. तेनोक्तं रेरे तिष्ठ तिष्ठ त्वं, मत्पुरः क्व यास्यसि? इत्युक्त्वा तेन पापिना तव मित्रोपर्येको महान् वृक्षः समुत्पाट्य मस्तकोपरि क्षि-

क्षः, स वृक्षस्तव मित्रेण मुष्टिना हतः. ततः सोऽसिताक्षो यक्ष आर्यपुत्रस्योपर्यकांडमंधकारावलीं विचक्रे, तन्मध्ये च स घोरघोषान्वितान् पिशाचान् विचक्रे. तदा तव मित्रेण तदंधकारं ते पिशाचाश्च विद्याबलतः पुण्यतश्च दूरं क्षिप्ताः. ततस्तव मित्रं तेन पन्नगपाशैर्बद्धं, परं तेन ते पाशा विद्याबलेन त्रोटिता ज्ञानिना कर्मचया इव. ततस्तेन देवेन तव मित्रोपर्येको महान् गिरिवरो मुक्तः, तव मित्रेण मुष्टिना हतः स शतखंडतां गतः. ततोऽसौ देवस्तव मित्रेण सह मल्लयुद्धे लग्नः, कुमारेण मुष्टिना दीर्घं हतः पीडां प्राप्तः, परं देवत्वात्स न मृतः, ततस्तुष्टेन तेन देवेनार्यपुत्रोपरि पुष्पवृष्टिः कृता, ततश्च स स्वस्थाने प्राप्तः, ततः कुमारस्तस्मिन् सरसि रंत्वापराह्णे तस्य सरसः पाल्यामेकस्य वृक्षस्याधो यावदुपविष्टस्तावदष्टौ कांतिमत्यः शच्य इव शोभमानाः स्त्रियस्तस्य पुरो बभूवुः, तव मित्रं च कटाक्षविशिखैर्घ्नत्यस्ताः कुमारेण पृष्टा वनदेव्य इव यूयं काः? किमर्थं चास्मिन् वने स्थिताः? ता जगुर्भानुवेगस्य विद्याधरपतेः सुता वयमस्मद्भाग्यैस्त्वां द्रष्टुमिवाकृष्टा इह समागताः, स्वामिन्नितो नातिदूरेऽस्मत्पितुः पुर्यस्ति, यूयं तत्रायात? भवदागमनेन च तां पुरीं पवित्रयत? ततस्ता अग्रे कृत्वा ताभिः परिवृतः स तां नगरीं समागतः, तत् स्वरूपं कंचुकिना राज्ञोऽग्रे निवेदितं, तद्वचनं

श्रुत्वा राजा भानुवेगः कुमारसन्मुखमागात्, तं च बहुगौरवेण स्नानांगरागवस्त्राभरणादिभिः सत्कृ·
त्य प्रवरे सिंहासने निवेशयामास.
ततो भानुवेगविद्याधरः कुमारंप्रत्याह भो महात्मंस्त्वं मम भाग्यैरत्र समागतः, त्वं च महावं·
शोत्पन्न इति तवाकारेणैव ज्ञायते, अतस्त्वामर्थये यदेता अष्टापि धन्या मम कन्यास्त्वं परिणय?
एवं तेनाभ्यर्थितः कुमारस्तासामष्टानामपि कन्यानां पाणिग्रहणं चक्रे, कियंति दिनानि च स तत्रै·
व तस्थौ. अथैकस्मिन् दिने तव सखा लीलागृहे सुखसुप्तस्तेन यक्षेण छलं लब्ध्वा निद्रायां हृतः,
यतो निर्बलानां छलमेव बलं, निद्रांतेऽसौ वनांते एकाकिनं भुवि लुठंतमुद्वाहमंगलबद्धकंकणकरं
स्वं पश्यन् मनसि दध्यौ, किमहं स्वप्नमाप्नोमि? किं वेदमिंद्रजालं? ततः स उत्थाय वनं बभ्राम,
तस्मिन् वने च सप्तक्षणमयमेकं प्रासादं दृष्ट्वा विस्मितः, तस्मिन् प्रासादे एका कापि कामिनी बा·
लिका सनत्कुमारस्याभिधानं गृहीत्वा रुदंत्येवमवादीत्, यथा हे सनत्कुमार! कौरवकुलोत्तंस! अ·
स्मिन् भवे त्वं मे भर्ता न भूतः, तर्हि भवांतरे त्वमेव मे भर्ता भवेः, ततः कुमारः सप्तमीं भुवमा·
रूढस्तत्समीपे गतः, पृष्टा च सा तेन हे शुभे! त्वं कासि? किं च रोदिषि? तया प्रोक्तं भो महा·

त्मन्! साकेतपुरं नाम नगरं, तत्र सुराष्ट्रो नाम राजा, तस्य चंद्रयशा पट्टदेवी, तयोरहं सुनंदानाम नंदिनी, पित्रा सनत्कुमारायाहं दत्ता, ततः केनापि विद्याधरेणाहं हृता, सोऽमुं प्रासादं विकृत्य मामत्रैव विमुच्यान्यत्र गतः, अथ न जाने स किं करिष्यति? ततः कुमार आचष्टे सुभ्रू! त्वं मा भैषीः, सोऽहं कुरुवंशजः सनत्कुमारो यस्मै त्वत्पित्रा त्वं दत्ता, अथ त्वं चिंतां मा विधेहि? तव चिंतावारकोऽहं तव पुण्येनात्र समागतः, तत् श्रुत्वा सापि हृष्टा यावत्तस्थौ तावत्स एव विद्याधरोऽशनिवेगपुत्रो वज्रवेगनामा तत्रागतः, स रोषात्तं कुमारं समुत्पाट्य गगने चिक्षेप. तदानीं सा सुनंदा हा नाथ नाथेत्युक्त्वा रुदंती क्षितौ न्यपतत्. अथ तेन गगने क्षिप्तः स आर्यपुत्रस्तस्य रथोपरि हेलयापतत्. ततः कुमारस्तं दुर्जयं वैरिणं हत्वा तां कन्यां तूर्णमूढवान्. यतः पुरा निमित्तज्ञेन निवेदितं यदेषा सनत्कुमारस्य चक्रिणः स्त्रीरत्नं भविष्यति. ततः सा स्त्रीरत्नं जाता.

तस्मिन्नवसरे वज्रवेगविद्याधरस्वसा संध्यावलीनाम्न्यमुं प्राणेशं वव्रे, यतो निमित्तज्ञेनाशनिवेगस्य पूर्वं कथितमभूद्यथा यस्तव पुत्रस्य वज्रवेगस्य हंता स तव पुत्र्याः संध्यावल्या भर्ता, एवं च निमित्तज्ञोक्तं तत्सत्यं जातं. एष वृत्तांतोऽशनिवेगेन श्रुतः, तदा सोऽशनिवेगः क्रुधा ज्वलन् सैन्य-

संनाहसंभृतः कुमाराभिमुखमचालीत. तदानीं भानुवेगो विद्याधरो जामातुः साहाय्याय चंडवेगेन बंधुना समं कुमारसमीपमागात. तदा संध्यावली प्रिया स्वप्रियाय सनत्कुमाराय रोहिणीं प्रज्ञप्तिकां च विद्यामदात. स्त्रीणां भ्रातृपितृभ्योऽपि पतिः प्रियः, धिक्संसारवैचित्र्यं. तदाशु चंडवेगेन भानुवेगेन चार्पितं सन्नाहं रथं च तव सुहृदंगीचक्रे. ततस्तयोर्द्वयोः सैन्ययोः परस्परं महान् संग्रामः संजज्ञे. यथा—लोलध्वजकराहूति—मिथ आहूतयोरिव ॥ उभयोरुभयोद्दामः । संग्रामः सैन्ययोरभूत्
॥ १ ॥ ततः करिकरोत्क्षिप्त—भटध्वंसार्त्तदिग्गजं ॥ द्विरूघातनिर्यद्दंतास्थि । हेषोद्धुरतुरंगमं ॥ २ ॥
त्रुटत्स्वांगायुधव्रात—संकीर्णोरुमहीतलं ॥ भग्नस्यंदनचक्रौघ—संरुद्धसमरांगणं ॥ ३ ॥ त्रिभिर्विशेषकं ॥ एवं संग्रामं कुर्वाणोऽशनिवेगो विद्याधरः कुरुकुलोत्तंसकुमारंप्रत्यधावत. ततस्तौ कुमाराशनिवेगौ परस्परमयुध्येतां. ततः सोऽशनिवेगः स्वामिनः कराद्विद्याबलेन खड्गं जह्रे, ततः कुपितेन स्वामिनार्धचंद्रबाणेन तस्याशनिवेगस्य भुजार्धं छिन्नं, पुनः सोऽशनिवेगो विद्यास्त्रेण युयुधे. ततः स्वामिना मत्प्रियेण विद्यार्पितचक्रेणाशनिवेगस्य शिरश्छिन्नं, तदानीं देवैर्जयजयारवश्चक्रे, मत्स्वामिनो मस्तकोपरि च तैः पुष्पवृष्टिः कृता.

ततो मत्पतिश्चंमवेगाद्यैः परिवृतो वैताढ्यगिरिं ययौ, तत्र ते चंडवेगाद्या विद्याधराः कुमारं वैताढ्ये श्रेणिद्वयनायकत्वेऽभ्यषिंचन्, ततश्चाश्वसेनिः सकलविद्याधरनायकैः परिवृतो नंदीश्वरेऽष्टाह्निकां कृत्वा पुनर्वैताढ्ये समागतः, तत्र मत्पिता चंडवेगेन प्रणम्याभ्यर्चितोऽभ्यर्थितश्च कन्याशतं परिणीतवान्, तत्रासौ ताभिः स्त्रीभिः सह रममाणः कियंति दिनानि निर्गमयामास, ततोऽसौ देवेन भवता सह संगमायास्मिन् सरोवरोपांते समानीतः. अत्र च युवयोः पुनः संगमो जातः, एषा मत्प्राणप्रियस्य पूर्ववार्ता. बकुलमत्या इत्युक्तं श्रुत्वा विस्मयमापन्नो महेंद्रसिंहोऽहो मन्मित्रस्य सौभाग्यमहो धीरत्वमहो शूरत्वमेवं वारंवारं प्रशंसंस्तद्गुणान् बाढं वर्णयामास. तावत्कुमारः शय्यां त्यक्त्वा तत्रायातः, ततः क्षीरनीरवन्मिलितौ तौ क्रीडंतौ कियद्दिनानि तत्रैव तस्थतुः. अपरेद्युर्महेंद्रसिंहमित्रेण कुमारो विज्ञप्तो हे बांधव! तव पितरौ वियोगार्तौ तव मिलनाय बहूत्कंठितौ वर्तेते, ततो यथा भवतो मातापित्रोः संयोगो भवति तथा कुरु? अहमेतदर्थमेवागतोऽस्मि, कुमारोऽप्येतन्मित्रोक्तं श्रुत्वा विमानारूढो मित्रसहितः सकलप्रियान्वितो विद्याधरविमानैः परिवृतः पालकविमानारूढो देवैः परिवृतो देवराज इव वादित्रनिर्घोषैर्गायनैर्गीयमानयशाः कुरुकुलोत्तंसः श्रीसनत्कुमारनरेशो ह-

स्तिनापुरे समाययौ. एवंविधया समृद्ध्या परिवृतं पुत्रं सनत्कुमारं प्रणमंतं कराभ्यां समुध्धृत्य वक्षसा चालिंग्याश्वसेनो रकृशं मुदमाप, राज्यार्हं च पुत्रं ज्ञात्वा सोऽश्वसेनो नृपः पुत्रं राज्ये न्यस्य स्वयं श्रीधर्मनाथतीर्थे साधूपांते दीक्षामाददे, राज्ये स्थितस्य सनत्कुमारचक्रिणश्चक्रादीनि चतुर्दशरत्नानि समुदपद्यंत, ततश्चक्रमार्गानुगोऽसौ वर्षसहस्रमेकं यावद्देशान् साधयित्वा सर्वत्र लब्धजयः साधितषट्खंडभरतो गंगोपकंठे संप्राप्तः, ततोऽसौ नवनिधानसैन्यसहितो हस्तिनापुरे समागात्, ततोऽस्य चक्रिणश्चक्रवर्तित्वाभिषेके धनदः स्वयमागत्य योजनैकमानां रत्नवेदिकां विचकार, तस्यां वेदिकायां स एकं मणिमयं मंडपं विचक्रे, तत्र नानारत्नमयं पीठं, तत्र महार्घ्यं सिंहासनं महत्पुण्यलभ्यं देवराजसिंहासनतुल्यं स विचक्रे. ततो धनदेन विज्ञप्तं हे स्वामिन्! हे मनुजेंद्र! इमां सौधर्माख्यां सभां त्वमलंकुरुष्व? तस्मिन्नासने समागतो नरेशः सनत्कुमारः. तदानीं मुकुटकुंडलहारार्धहारकेयूरमुद्रिकाकटिसूत्राद्यनेकालंकारान् चीवरपादुकाछत्रचामराद्यनेकोपस्करसमूहं च सुरास्तस्मै ढौकयांचक्रिरे.

ततः क्षीरनीरनिधेर्नीरैः संभृतैः स्वर्णकलशसमूहैर्द्वादशवार्षिकं चक्रित्वाभिषेकं सुराश्चक्रिरे.

ततो गीतातोद्यनाट्याभिनयदर्शनादि देवदेवीभिर्विदधे. पश्चाद् भूषणैर्भूषितो दिव्यांगरागनेपथ्यै-र्विभूषितः पुनर्महामहेन चक्री हस्तिनापुरे प्रविष्टः. ततः पुरे जलस्येव स्वर्णस्य वृष्टिं कृत्वा धनदः प्रोचे भो चक्रिन्! सौधर्मेंद्रस्तव प्राच्यसौहृदात्सर्वं मयेत्यकारयत, पुनर्यत्तव रोचते तत्किंचिदादिश्य तां? एवं वदन् धनदश्चक्रिणा सत्कृत्य विसर्जितो दिशो द्योतयन् द्यां ययौ. ततो द्वात्रिंशत्सहस्रैर्मु-कुटबद्धनरेंद्रैः सामंतैश्च तस्य द्वादशवार्षिको राज्याभिषेको विदधे. अथ स सनत्कुमारश्चक्री दंड-शुल्कादिक्लेशशतैरुज्झितां क्षितिं सुखेनापालयत्. अथैकस्मिन् समये ईशानकल्पतः समागतः सं-गमनामा देवः स्वदेहकांत्या सौधर्मेंद्रसदसि सौधर्मेंद्रसभासुरान् भासुरानपि निर्भर्त्सयंस्तस्थौ. तत्र सदसि स्थितोऽसौ सौदामिनीनाटकं दृष्ट्वा कृतकृत्यो यथैवागतस्तथैव स्वस्थाने गतः. तदा सुरैः सु-राधिपः पृष्टो हे स्वामिन् प्राग्भवेऽनेन देवेन किं पुण्यं कृतं? येनास्येदृग्रूपकांतिसंपत्तिर्जाता. दे-वेंद्रेणोक्तं भो देवाः! श्रूयतां? अनेन देवेन पूर्वभवे आचाम्लवर्धमानाख्यं तपो विहितं, तेना-स्येदृशी रूपकांतिसंपज्जाता, तपःस्वरूपं हि महत्फलं. पुनः सुरैः सुरेंद्रः पृष्टः स्वामिन्नीदृग्रूपोऽन्यः किं कोऽप्यस्ति? शक्रोऽप्यधाद्भो देवाः! तुर्यस्य चक्रिणो हस्तिनापुराधीशस्यातोऽप्यधिकतरं रूपम-

स्ति. इंद्रस्येदं वाक्यमश्रद्दधंतौ विजयवैजयंतनामानौ द्वौ देवौ विप्ररूपं विधाय चक्रिरूपनिरूपणाय तत्रायातौ. तस्मिन् समये श्रीसनत्कुमारश्चक्री मज्जनमंडपे मुक्तभूषणः स्नानोचितवस्त्रावृतस्तैलाभ्यक्तदेहः स्नानपीठे स्थितः शोभते.

इतस्तौ देवौ विप्ररूपधरौ चक्रिद्वारे समागतौ. द्वारपालेन राज्ञोऽग्रे विज्ञप्ते राज्ञा तौ प्रवेशितौ. अथ तौ नृपस्य रूपं पश्यंतौ मोहितौ विस्मयमापन्नौ परस्परमूचतुः, अहो यादृग्रूपमिंद्रेण वर्णितं ततोऽप्यत्यधिकमस्य दृश्यते. इत्युक्त्वा तौ वारंवारं शिरो धूनयंतौ चक्रिणा दृष्टौ पृष्टौ च, भो विप्रौ! युवां वारंवारं स्वशिरसी कथं धूनयथः? ताभ्यामुक्तमावां तव रूपविलोकनकृते दूरदेशात्समागतौ, तव च यादृग्रूपं केनापि वर्णितं तत्तादृगेव दृश्यते, ततोऽभिमानतश्चक्रिणोक्तं भो विप्रौ! सांप्रतं मम मलमलिनशरीरस्य रूपं भवद्भ्यां किं वर्णितं? अथ क्षणं स्थीयतां? स्नातस्य वस्त्राद्यैरलंकृतस्य सभायां स्थितस्य च मम रूपं विलोकनीयं, इत्युक्त्वा चक्री मज्जनालयं प्राविशत्. निवृत्तमज्जनश्चक्री चंदनचर्चितदेहो वस्त्राभरणैरलंकृतः सदसि सिंहासने समुपाविश्य तावाह्वयत्, तावपि समागतौ, राजानं समालोक्य तौ देवौ प्रम्लानवदनांभोजावभूतां. पुनश्चक्रिणा पृष्टं भो मम द·

र्शनाद्युवां प्रम्लानवदनांभोजौ कथं जातौ? तावूचतुः सौधर्माधिपस्त्वद्रूपस्य स्तुतिं चक्रे, तदावां देवौ तद्वचनमश्रद्दधानौ तव रूपं वीक्षितुं क्षितिमागतौ. पूर्वं तु तव रूपं शक्रस्तुतेरप्यधिकमस्माभिर्दृष्टं, सांप्रतं च त्वद्रूपं ततोऽपि हीनं दृश्यते. राज्ञोक्तं केन केन हेतुना? देवाभ्यामुक्तं सांप्रतं त्वच्छरीरे कुष्टाद्या रोगाः समुत्पन्नाः, तेन च तव देहद्युतिर्विरूपा जाता. इत्युक्त्वा तौ देवौ भूत्वा स्वरूपं दर्शयित्वाऽदृश्यीभूतौ.

अथ राजापि स्वदेहं विच्छायं निस्तैलदीपकमिव दृष्ट्वा दध्यौ धिग्रूपं मानवानां, धिग्यौवनं, धिक् च ममाभिमानं, यतः—तनूस्वरूपमुत्कृष्ट—शोभास्पदं मदप्रदं ॥ संध्यारागास्थिरं धीरा । नीरागत्वेन बिभ्रति ॥ १ ॥ इति ध्यात्वा सुधीः श्रीसनत्कुमारो नरेश्वरः पुत्रं राज्ये न्यस्य धर्मं च हृदये धृत्वा राज्यं तृणवत्त्यक्त्वा विनयी विनयंधरसूरिसमीपे व्रतं जग्राह. ततस्तस्य चक्रिणः षण्मासान् यावत्सकलोऽपि परिवारः पृष्टे परिबभ्राम. परं श्रीसनत्कुमारो राजर्षिः सिंहावलोकनमात्रेणापि कस्यापि सन्मुखं न व्यलोकयत. ततः सर्वोऽपि प्रणयिनीपुत्रपौत्रादिपरिवारः षण्मासानंतरं न्यवर्तत. स्वयं च स राजर्षिः प्रत्यंतग्रामे गत्वा षष्टपारणके कोद्रवकरंबादिभक्तयमभुंक्त. तेन तपसाऽपथ्यभो-

जनेन च तस्यान्येऽपि बहवो रोगाः समुत्पन्नाः. यतः—कच्छू १ शोष २ ज्वर ३ श्वासा ४—रुचि ५ कुक्ष्य ६ क्षिवेदनाः ॥ देहे सेहेतरां सप्त । सप्तवर्षशतानि सः ॥ १ ॥ एवं तस्य सनत्कुमारस्य राजर्षेर्दुस्सहान् परीषहान् सहमानस्य सर्वौषध्याद्यनेकलब्धयोऽभुवन्. तदा तस्य पवित्रेण चरित्रेण चमत्कृतः सौधर्मेंद्र आनंदमग्नितो देवानुद्दिश्येत्याचष्टे, अहो देवाः! सनत्कुमारो राजर्षिः स्वयं सर्वतपोभिः सर्वलब्धियुक्तोऽपि स्वशरीरनिःस्पृहः स्वदेहस्यापि चिकित्सां न करोति, तदप्यश्रद्दधंतौ तावेव द्वौ देवौ विजयवैजयंतनामानौ वैद्यरूपं समासाद्य तत्रागत्य तं मुनिमूचतुः, भो महाभाग! त्वं रोगैः परिवृतो दृश्यसे, किमर्थं च रोगपीडां तितिक्षसे? आवां सर्वत्र भ्रमणशीलौ वैद्यौ सर्वस्य लोकस्य चिकित्सां कुर्वः, द्रव्याद्यर्थं चिकित्सया सृतं, अथ यदि तवाज्ञा भवति तदावां मोक्षार्थं तव चिकित्सां कुर्वः. मुनिरूचे यदि युवां वैद्यौ तर्हि जन्मौघसहचारिणां क्रोधमानमायालोभादीनां भावरोगाणां चिकित्सां कुरुतं? बाह्यरोगाणां चिकित्सया किं? किंच बाह्यरोगचिकित्साकरणे त्वहमपि समर्थोऽस्मीति कथयित्वा स निजकफेनैकांगुलीं विलिप्य सुवर्णवर्णां विदधे. तदंगुलीं तथाविधां कांचनवर्णां भासुरां च वीक्ष्य स्मेरास्यौ तौ सुरौ प्रणामपूर्वकं तं मुनिमूचतुः, धन्य·

स्त्वं यस्येदृशी लब्धिर्वर्तते, लब्धिमानपि चेदृशीं वेदनां त्वं कर्मक्षयाय सहसे, यतः—

लब्धीर्लब्ध्वापि रुग्बाधाः । सहमानस्तपस्यति ॥ आश्वसेनिर्महात्मेति । चक्रे शक्रस्तव स्तवं ॥ १ ॥ आवां तावेव गीर्वाणौ । भवद्रूपनिरूपकौ ॥ आगत्येदमपश्याव । शंसित्वेति तिरोहितौ ॥ २ ॥ सरूवहाणिं सुणिऊण राया । निवेइऊं सो हु सणंकुमारो ॥ छक्खंडसामित्तमुविक्कदिक्खं । गिण्हित्तु पत्तो स सणंकुमारो ॥ ३ ॥ वाससत्तसयसहिया । लद्धिसुसिद्धेण वेअणा जेण ॥ भुग्गाणं रोगाणं । तं नमिमो मुणिवरं निच्चं ॥ ४ ॥ कंडू अभत्तसद्धा । तिव्ववेअणाउ अच्छिकुच्छीउ ॥ खासं सासं च जरं । अहिआसिआ सत्तवाससया ॥ ५ ॥ सप्तशतवर्षानंतरं स सनत्कुमारो राजर्षिर्निरुग्जातः. ततः सम्यक्संयममनुपाल्य सार्धैकचत्वारिंशद्धनुस्तुंगो भगवान् सनत्कुमारराजर्षिर्धर्मशांत्यंतरे वर्षलक्षत्रयायुर्ज्ञातावसानसमयो गृहीतानशनस्ततश्च्युत्वा सनत्कुमारनाम्नि देवलोके देवोऽभवत्. इत्थं सनत्कुमाराख्य—श्चक्री स्वदेहहानितः ॥ श्रुत्वा सुरमुखाद्दीक्षां । समादाय शिवं ययौ ॥ १ ॥ इति श्रीसनत्कुमारचक्रिकथानकं ॥ अथ दृढप्रहारितपोमाहात्म्यमाह—

॥ मूलम् ॥—गोबंभगब्भगब्भिणी—बंभिणीघायाइ गुरुअपावाइं ॥ काऊणवि कणयंमिव

। तवेण सुद्धो दढप्पहारी ॥ ६ ॥ व्याख्या—गोर्धेनुः, ब्राह्मणगर्भो भ्रूणः, गर्भवती ब्राह्मणी, तेषां घातादीनि गुरुकाणि महांति पापानि कृत्वापि कनकमिव तपसा दृढप्रहारी शुद्धोऽभूदिति गाथार्थः ॥ ६ ॥ विस्तरार्थस्तु कथानकादवसेयस्तथाहि—

क्वापि पुरे कोऽपि दुर्धरो दुर्नयकारको द्विजो वसति. स च चौरोऽनिष्टकर्मवान् महापापी लोकैर्निवारितोऽपि पापान्न विरराम. ततो राज्ञारक्षकैर्ग्रामाद्बहिर्निष्काशितः सोऽधन्यो निजं धन्यं मन्यमानश्चौरपल्लिकामगात्. तत्रस्थः पल्लीशः पुत्ररहितस्तं सुतवदमन्यत्. स च यस्य प्रहारं करोति स निश्चितं मृत्युमाप्नोति. ततो लोके तस्य दृढप्रहारीति नाम पप्रथे. स दृढप्रहारी पल्लीनाथेन स्वांतकाले स्वस्थाने निवेशितः, एवं स महान् पल्लीनाथो जातः. सोऽन्यदा लुंटाकचक्रेण परिवृतः कुशस्थलं नाम ग्रामं लुंटनाय ययौ. तस्मिन् ग्रामे देवशर्मनामैको दरिद्रविप्रो वसतिस्म, तस्य च दरिद्रत्वाद्बहुन्यपत्यानि संति. सोऽन्यदा बालकैः क्षैरेयीं याचितः. ततोऽसौ कस्यचिदिभ्यस्य गृहे गत्वा तंदुलांश्च मार्गयित्वा, एवं कस्यचित्पार्श्वाद् दुग्धं शर्करां चाभ्यर्थ्य स्वभार्यायै समर्प्य क्षैरेयीं विधापयामास. ततोऽसौ तद्दिनं सोत्सवं मन्यमानोऽद्य चाहं क्षीरान्नं भोक्ष्ये इति हर्षान्वितो मध्याह्ने या·

वत् स्नानं कर्तुं सरसि गतस्तावत्सा दृढप्रहारिचौरधाटी तस्मिन् ग्रामे समागता. केचन चौरास्तस्य वि-
प्रस्य गृहे समागताः, तैस्तस्माद्गांम् गृहीतं, बालका उच्चैः क्रंदंतस्तदनु धाविताः, तावत्तज्जनकः स्ना-
नं कृत्वा समागतः, तेन तत्स्वरूपं दृष्टं, रुष्टो विप्रो गृहार्गलां गृहीत्वा राक्षसवद्धावितः, तेनार्गलाप्र-
हारेण ते चौरा निधनं नीताः, एवमन्येऽपि बहवश्चौरा निधनं प्रापिताः, तत स्वरूपं दृढप्रहारिणा
श्रुतं, स तत् श्रुत्वा त्वरितं तत्रायातः, तत्र स्वान् भटान् मृतान् समालोक्य तस्य विप्रस्योपरि पल्ली-
शो रुष्टः, ततो गृहमध्ये गछन् स गवा रुद्धः, ततोऽसौ तामपि जघान, ततो विप्रस्तं हंतुं दधावे,
ततः कोपात् पल्लीशः खड्गेन तस्य शिरो नालिकेरमिव दूरतोऽपातयत्, तद् दृष्ट्वा तस्य द्विजस्य स्त्रि-
या स पल्लीश आक्रोशितो यथा हे क्रूर पापात्मन्! किं करोषि? तयेत्याक्रोशितः स पुना रुष्टः,
ततस्तेनैव खड्गेन स तस्या उदरमदारयत्. ततः सापि भूमौ पतिता, ततस्तस्या उदरात्कंपमानो
द्विखंडीकृतो बालोऽपि पतितः.

एवं तांश्चतुरोऽपि तत्कालहतान् समालोक्य, तथा हा तात हा मातरिति ब्रुवाणानन्यांस्तदर्भ-
कान् वीक्ष्य दृढप्रहारिणो मनसि महद्दुःखं जातं. अहो! मया पाप्मना किमकार्यं कृतं? ततः स

चौरनायकस्तान् बालान् दीनान् भग्नान् दीनरवांश्च पश्यन् दध्यौ, अथैतेषां बालानां कस्त्रायको भ· विष्यति? तथेदृग्दुःकर्मभारेण संसाराब्धौ मम ब्रुडतः कस्त्रायको भविष्यति? महावैराग्यादिति ध्या· यन् स ग्रामाद्बहिर्निर्ययौ. तत्र तद्ग्रामस्योद्याने महामुनीन्निरीक्ष्य तांश्च नत्वा स एवं जगौ, हे स्वा· मिन्नहं पापभागित्युक्त्वा स्वकृतं सर्वं पापं निवेद्य पृच्छति, हे भगवन्नीदृशात्पापात्कथं मे मुक्तिर्भवि· ष्यति? मुनिनोक्तं यदि तव कर्मण्यपोहाभिलाषो वर्तते तर्हि त्वं संयमे सम्यग्यत्नं कुरु? यतः— एगदिवसंपि जीवो । पव्वजमुवागओ अणुन्नमणो ॥ जइवि न पावइ मुक्खं । अवस्स वेमाणिओ हो· इ ॥ १ ॥ एतद्वचनं श्रुत्वा तेन दृढप्रहारिपल्लीशेन संयमो गृहीतः, ततस्तेन गुरूणामंतिके सर्वा· पि सामाचारी शिक्षिता. ततस्तेन दृढप्रहारिमुनिना महानेकोऽभिग्रहो गृहीतः, यथा—अदः पापं स्मरिष्यामि । यत्र भोक्ष्येऽह्नि तत्र न ॥ धास्यामि च क्षमां सोऽय—मित्यभिग्रहमगृहीत् ॥ १ ॥ एवमभिग्रहं कृत्वा स महामुनिस्तस्मिन्नेव ग्रामे कर्मक्षयाय विजहार, असौ पापात्मा स्त्रीब्रह्मगोभ्रूण· हंता, तथासौ ग्रामलुंटक इत्युक्त्वा लोकस्तं मुनिं तर्जयति, लेष्टुयष्ट्यादिभिश्च ताडयति, एवं स लोकैस्ताड्यमानो मनसापि कोपमकृत्वा सर्वं सहते धरित्रीव, एवं प्रत्यहं लोकैर्यष्टिमुष्ट्यादिभिस्ता·

डितोऽपि स क्षमावान् महामुनिर्दध्यावहो एते लोका ममोपसर्गकरणेन मम पापानि गृह्णंति, स्वसुकृतानि च ददति, हा हा मन्निमित्तेनैते जीवाः पापानि समाचरंति, अहो एते लोका मम मोक्षं दत्वा स्वयं च नरकगुप्तौ विशंति. एवं लोकानां कृपया शुभभावनया च सर्वाणि भवोपग्राहिकर्माणि क्षपयित्वा केवलं च लब्ध्वा स क्षमाब्धिर्मोक्षं गतः. साधुर्दृढप्रहारीव । क्षांत्या प्रक्षिप्तपातकः ॥ ॥ केवलज्ञानमासाद्य । प्रपेदे पदमव्ययं ॥ १ ॥ इति दृढप्रहारिकथानकं समाप्तं. ॥ अथ नंदिषेणतपःफलमाह—

॥ मूलम् ॥—पुव्वभवे तिव्वतवो । तविओ जं नंदिसेणमहरिसिणा ॥ वसुदेवो तेण पिओ । जाओ खयरीसहस्साणं ॥ ७ ॥ व्याख्या—पूर्वभवे नंदिषेणविप्रभवे तीव्रं तपस्तप्तं, प्राकृतत्वात्पुंस्त्वं, यन्नंदिषेणमहर्षिणा, तेन तपसा तृतीये भवे सोंधकवृष्णितनयो वसुदेवनामा खचरीसहस्राणां विद्याधरीसहस्राणां प्रियो वल्लभो जातोऽभूदिति गाथार्थः. ॥ ७ ॥ विस्तरार्थस्तु कथानकादवसेयः, सा कथा तु पूर्वं शीलकुलके प्रथमगाथाव्याख्यानावसरे श्रीनेमिकथायां प्रतिपादितेति ज्ञेयं. अथ तपःप्रभावोपरि हरिकेशदृष्टांतमाह—

॥ मूलम् ॥—देवावि किंकरत्तं । कुणंति कुलजाइविरहिआणंपि ॥ तवमंतपभावेणं । हरिकेसबलस्सव रिसिस्स ॥ ८ ॥ व्याख्या—कुलजा इति मातृपितृपक्षविरहितानां नीचकुलजातीयानामपीत्यर्थः, देवा अपि किंकरत्वं दासत्वं कुर्वंति, केन? तपोमंत्रप्रभावेण, कस्येव? ' हरिकेसबलस्सवेति ' हरिकेशबलस्येव, कथंभूतस्य? ' रिसिस्सेत्ति ' ऋषेरिति गाथार्थः. ॥ ८ ॥ विशेषार्थस्तु कथानकादवगंतव्यस्तत्कथा चेयं—मथुरायां शंखो राजा कामभोगान्निवर्तितः सद्गुरुसमीपे व्रतमग्रहीत्. स च क्रमेण गीतार्थो जातः, एकाकित्वविहारेण च पृथिव्यां विहरन् स क्रमाद्धस्तिनापुरं प्राप्तः. स मुनिस्तपसः पारणे भिक्षार्थं नगरमध्ये गछन् सोमदेवं पुरोहितं पंथानमपृछत्. तेन दुष्टेन पुरोधसा च तस्मै हौताशनः पंथा निर्दिष्टः. उष्णत्वादन्यदेहिनामलंघ्येन तेन पथा स मुनिरीर्यासमित्या समितो यावद्याति तावत्तस्य मुनेस्तपोमाहात्म्यतः सोऽतिशीतलो मार्गो जातः. ततः सोमदेवो व्यचिंतयदहो एष महामुनिः क्षमावांस्तपोलब्धिकल्पवृक्षो यस्य माहात्म्यतोऽत्युष्णमार्गोऽप्यतिशीतः सुखस्पर्शो जातः. ततो निजनिंदापरायणः सोमदेवस्तं मुनिमवर्णयत्, यथा—धिग्धिग्मां निर्दयं क्रूरं । मुधाजातिमदोद्धतं ॥ अमी अजिह्मब्रह्माणो । ब्राह्मणा न तु मादृशाः ॥ १ ॥

दृश्यो नमस्यः स्तुत्योऽयं । वरिवस्यतपोनिधिः ॥ ध्यात्वेति गत्वा तं नत्वा । धर्मं श्रुत्वाग्रहीद् व्रतं ॥ २ ॥ स गृहीतव्रतो ग्रहणासेवनाशिक्षापारगो मनाग्जातिमदोन्मनाः संयमं पालयामास. ज्ञानदर्शनचारित्रवान् पूतात्मा स सम्यगाराधनापूर्वं भावनापावनाशयो मृत्वा प्रथमदेवलोके महाद्युतिर्देवोऽभवत्, क्रमात्ततश्च्युत्वा जातिमदसद्भावान्नीचैर्गोत्रकर्मोदयात स सोमदेवविप्रजीवो गंगोपकंठे चांडालकुले बलकोट्टनामा हरिकेशपतिः, तस्य गौरीनाम्नी प्रिया, तयोर्भूतस्वप्नोपसूचितो बलनामा पुत्रो जातः, दुर्भगः श्यामशरीरः कुरूपः कृशस्तुंदिलः सोऽन्यदा वसंतोत्सवे स्वबंधुसहितो वने क्रीडति, तस्यां क्रीडायां बलो बंधुभिः सार्धं कलहं कुर्वस्तैर्धिक्कृतो दूरे स्थितः, तावत्तैकः सर्पस्तत्रागतः, तैश्चांडालैश्च स सर्पो हतः, पुनरेको दीप्तकनामा निर्विषः सर्पो निर्गतः, तैरुक्तमेष निर्विषोऽतो नो हन्यते. ततस्तैर्मुक्तः स स्वस्थानं गतः, ततोऽसौ बलस्तत्स्वरूपं दृष्ट्वा कर्मलाघवाद्ध्यावहो सविषो हन्यते, निर्विषं च न कोऽपि हंति, दोषैरेव पराभूतिः, निर्दोषस्य कस्यापि पराभवो नास्ति, गुणवान् हि सर्वत्र पूज्यते, निर्गुणस्तु सर्वैर्लोकैस्त्यज्यते, यतः—वानेयं पुष्पमादेयं । मलस्याङ्योंगजोऽपि यत ॥ गुणाः संपत्तये तस्मा—द्दोषा एव विपत्तये ॥ १ ॥

ततः स बलः साधुभ्यो धर्मं श्रुत्वा जातिस्मरणं च लब्ध्वा संप्राप्तसाधुधर्मः षष्ठाष्टमचतुर्मासक्षपणादितपःकृशः साधुक्रियाचारचतुरो मह्यां विहरन् वाणारसीं पुरीं ययौ, तत्र किंदुकोद्याने ग्रंथितिंदुकयक्षेण दिवानिशं सेव्यमानश्च स तस्थौ. अन्यदा स ग्रंथितिंदुकयक्षः स्वमित्रयक्षगृहे गतः, मित्रेणोक्तं भो ग्रंथितिंदुक! सांप्रतं त्वं स्तोकं किं दृश्यसे, ग्रंथितिंदुकेनोक्तं मम गृहे साधुः समागतः, तस्य चाहं प्रत्यहं सेवां करोमि, तेन चाहं क्वापि गंतुं न शक्नोमि. मित्रेणोक्तं तर्हि तं मुनिं मम दर्शय? ततो ग्रंथितिंदुकयक्षेण तस्मै स हरिकेशबलो महामुनिर्दर्शितः, अथ मित्रदेवेनोक्तं ममाप्यारामे साधवो वर्तंते, तत् श्रुत्वा तेन मित्रदेवेन समं स ग्रंथितिंदुकोऽपि तत्रायातः, तान् विकथासक्तान् दृष्ट्वा हरिकेशबले मुनौ तौ देवावतिभक्तावभूतां.

इतश्च वाणारसीपतेः कौशलिकस्य राज्ञो भद्रानाम्नी पुत्र्यन्यदा तं यक्षमर्चितुं तत्रागात, तं यक्षमर्चित्वा यावता चेटिकाचक्रपरिवृता सा प्रदक्षिणां करोति, तावता तच्चैत्यस्यैककोणके तं हरिकेशबलं महामुनिं मलमलिनदेहं कायोत्सर्गस्थितं निरैक्षत. तं मलिनं तुच्छवस्त्रावृतं विरूपं बीभत्साकृतिं च दृष्ट्वा सा थूत्कृत्य मुखमर्कटिकां च कृत्वा कूणितघ्राणा जुगुप्सामकरोत्. ततस्तस्य महर्षे-

निंदया कुपितेन तेन यक्षेणाधिष्ठिता सा विकला जाता, असमंजसं च सा यथातथा जल्पति, ततः सा तरसा कथंचिद्दासीभिरावासं नीता. अथ राजाज्ञया वैद्या मांत्रिकाश्च तत्राययुः, परं तेषामौषधमंत्रादिसर्वक्रियाः कर्मदूषणान्निष्फला अभवन्नूषरक्षेत्रेषु कृषिवत्. ततः स यक्षः स्वयमेवागत्य कन्यामुखेऽवतीर्यैवमुवाच, महात्मा तपसां राशिः साधुर्यदनया मदोन्मत्ततया गर्हितस्तदसौ कथं मुच्यते? यदि कदाचित्तेन महर्षिणा सहेयं परिणाय्यते तदैनामहं जीवंतीं मुंचामि, अपरोऽखिलोऽपि प्रयासो मुधा भविष्यति. देवोक्तं सर्वमपि नृपतिर्मेने पुत्रीजीवनकृते. ततो राजा तां निजां पुत्रीं सुभद्रां वस्त्रनेपथ्याद्यैरलंकृतां कृत्वा वृद्धमंत्रिणा सह सर्वसामग्र्या हरिकेशबलस्यार्थे स्वयंवरां प्रैषीत्. सापि तस्य तपोनिधेः पादयोर्निपत्यैवं व्यजिज्ञपत्, हे प्रभो! मम पाणिं गृहाण? ममानुग्रहं च कुरु? मुनिरूचे वयं हि सिद्धिवधूसंबंधकांक्षिणः, ततः सृतमन्यवधूसंबंधेन. ततो मुने रूपं पिधाय तस्याकृतिं च विधाय स्वयं विडंबनाचिकीः स गुह्यकस्तदुद्वाहं चक्रे. रात्रौ च तां विविधोपायैर्विडंब्य प्रभाते च त्वं मुक्तासीत्युक्त्वा स वटवासी स्वेच्छयान्यत्र जगाम. तदा सा मंदं मंदं विमनाः पितृपदांतिकं प्राप्ता.

ततो राज्ञा स्मृतिविदः पृष्टा एषा कस्योचितेति? ततस्ते जगुर्हे राजेंद्र! एषा तव पुत्री ऋषिपत्नी, तेन मुनिना च सा त्यक्ता, सांप्रतं चैषा विप्रस्य कल्पते. तन्निशम्य स नृदेव आत्मपुरोधसे रुद्रदेवाय तां भद्रां ददौ, यतो नीतिविदो नीतिं नातिक्रामंति. अन्यदा रुद्रदेवो यज्ञं यजमानो दीक्षितो जातः, तया धर्मपत्न्या साकं च नाकं स्वकरस्थितं मेने. तदानीं स हरिकेशबलः प्रौढतपोबलो यक्षसेव्यो भिक्षार्थं मासक्षपणपारणे तस्यैव यज्ञवाटके समागतः, तदा जातिमदोद्धता द्विजन्मानस्तमालोक्योचुः, भोः कस्त्वं? यज्ञवाटके किमर्थं प्रविष्टोऽसि? तदानीं यक्षो मुनिशरीरं प्रविश्य सावष्टंभं तानाहाहं साधुर्माधुकरीं भिक्षामाप्तुं भवद्यज्ञपाटके प्राप्तोऽस्मि. तत् श्रुत्वा ते वाडवाः प्रोचुः, भो मुने! एतदन्नं केवलं जातिमतां वेदविदां हेतोरुपस्कृतं, तुभ्यं शूद्राय न दातव्यं, पुनर्यक्षाधिष्ठितवपुषा मुनिनोक्तं भो विप्राः! अहं हिंसाऽनृतस्तेयाब्रह्मपरिग्रहान्निवृत्तधीरस्मि, एवंविधस्य मम धर्माय दीयतां? मुनिनेत्युक्ते ते विप्राः प्रोचुरस्मात्तदन्नं प्राक्पितृब्रह्मिभ्यु देयं, ततो ब्राह्मणेभ्यो देयं, नान्यस्मै कस्मैचिदपि देयं, सांप्रतं त्वं वृथा स्थितोऽसि. मुनिराह भो यज्ञकारका हिंसाद्याश्रवसेविनामब्रह्मचारिणां सूत्रकंठानां ब्राह्मणनामधारकाणां ब्राह्मणानां यद्दत्तं, तथाग्नौ हुतं, त·

त्सर्वं भस्मनिहुतं यूयं जानीत? तथा युष्माकं ब्राह्मणत्वमपि नास्ति, यतो ब्रह्मचर्येण ब्राह्मणा भ-
क्ताः, यथा—ब्राह्मणो ब्रह्मचर्येण । यथा शिल्पेन शिल्पिनः ॥ अन्यथा नाममात्रस्य । इंद्रगोपक-
कीटवत् ॥ १ ॥ ब्रह्मचर्येण ब्राह्मणाः कथितास्ते नु वयं, अतोऽस्मभ्यं दत्तं युष्माकं मोक्षदायकं भ-
विष्यति, ब्राह्मणत्वं कर्मणा भवति, न तु जात्या, यथा—सत्कर्मनिरतः शूद्र—स्त्रैलोक्यस्यैति पू-
ज्यतां ॥ असत्कर्मा द्विजन्मापि । निंद्यानामेति निंद्यतां ॥ १ ॥ मृतेषु तर्पणं श्राद्धं । यन्मूढैरुपक-
ल्प्यते ॥ छित्त्वा भस्मतां नीते । तत्तरौ सेचनोपमं ॥ २ ॥ भस्मीभूतस्य भूतस्य । तृप्तिः श्राद्धा-
त्तथा भवेत् ॥ क्लेशत्येवात्र जन्मापि । तद्वदेव न तस्य किं ॥ ३ ॥ अतः कारणात्तुषखंडनमाका-
शरंजनं पाथोमथनं वालुकापीलनं च यथा वृथा तथा ब्राह्मणकर्तव्यं दया विना सर्वं वृथा. एतन्मु-
नेर्वचनं श्रुत्वा क्रुधा विप्रा लकुटाद्यैस्तं मुनिं ताडयंतिस्म. ततो रुष्टो गुह्यकस्तान् ब्राह्मणान् ब्राह्मण-
बालांश्च दैवशक्त्याताडयत्. ततस्ते शोणितं वमंतो निश्चेष्टाः क्षितौ पतिताः, तदानीं महान् कोला-
हलो जातः, तं कोलाहलं श्रुत्वा भद्रा तत्रागता, तं मुनिं दृष्ट्वैवमुवाच, अहो तातेनाहं यस्मै दत्ता,
येन महात्मना मनसापि च न ध्याता, तृणवच्च त्यक्ता, स एवैष महामुनिः; अतो भो विप्रा यदि

जीवितं वांछथ तदेतस्य महामुनेः शरणं कुरुत? यथा भवतां सर्वेषां जीवितं भवति, अन्यथा भवतां जीवितं नास्ति. एतानि भद्रावचनानि श्रुत्वा जीवितार्थिनो विप्रास्तस्य मुनेः शरणं प्रपन्नाः. ततो रुद्रदेवोऽपि तैर्द्विजैः समं प्रांजलिर्भूत्वा तं मुनिं क्षामयामास, ततस्तेन रुद्रदेवेन भक्तपानाद्यैः स मुनिः प्रत्यलाभि. ततस्ते सर्वेऽपि बटवः पटवोऽभवन्, तदामरैः पंच दिव्यानि प्रपंचितानि, यथा—वुट्ठं च गंधोदगपुप्फवासं । दिव्वा तहिं वसुहारा य वुट्ठा ॥ पहया य दुंदुहिओ सुरेहिं । आगासे अहो दाणं च घुट्ठं ॥ १ ॥ सक्खं हि दीसेइ तवोविसेसो । न दीसइ जाइविसेस कोइ ॥ सोवागपुत्तं हरिएससाहुं । जस्सेरिसा इड्ढी महाणुभागा ॥ २ ॥

अथ रुद्रदेवो विप्रः पप्रच्छ हे महर्षे! त्वं सम्यग्ज्ञानं प्रकाशय? एतावंति दिनानि वयं वंचिताः, यूयं सम्यग्ब्रह्मविदो ब्रह्मचारिणश्च, अथ को यज्ञः? किं च स्नानं? का तयोः सामग्री? भवदंतिके तत्सर्वं ज्ञातुमिच्छामि. अथ मुनिराख्यत्, जीवो वेदी, तपो ज्योतिः, योगा वह्निः, वपुररणिः, कर्माणि समिधः, एष यज्ञश्च संयमसाधनः, क्षांत्यादिदशविधो धर्मो ह्रदः, यथा—खंति १ अज्जव २ मद्दव ३ । मुत्ति ४ तव ५ संजमे अ ६ बोधव्वे ॥ सच्चं ७ सोअं ८ आकिं—चणं च

९ बंभं च १० जइधम्मो ॥ १ ॥ ब्रह्मव्रतरूपं निर्मलं तीर्थं, मलो रागादिकः. इहात्मनो लेश्याशुद्धिः स्नानं, अनेन होमेन ये शांतास्तथाऽनेन स्नानेन ये निर्मला भवंति, ते सिद्धिवधूसंबंधसंपद्योग्याः. ततस्ते ब्राह्मणा रुद्रदेवादयस्तस्य हरिकेशमहामुनेः समीपे धर्मं श्रुत्वा श्राद्धा जाताः, सोऽपि महामुनिर्निर्मलं संयमं परिपाल्य केवलं च प्राप्य मोक्षमगमत. एवं जातिविहीनोऽपि । हरिकेशबलो मुनिः ॥ देवैः संसेवितः साक्षा—द्धर्ममूर्तिः शिवं ययौ ॥ १ ॥ इति हरिकेशबलसाधुकथानकं समाप्तं ॥ अथ तपसः कल्पवृक्षसाम्यं वर्णयन्नाह—

॥ मूलम् ॥—पडसयमेगपडेणं । एगेण घडेण घडसहस्साइं ॥ जं किर कुणंति मुणिणो । तवकप्पतरुस्स तं खु फलं ॥ ९ ॥ व्याख्या—एकेन पटेन पटशतं, तथैकेन घटेन घटसहस्राणि, यत् किलेति सत्ये, कुर्वंति मुनयस्तत खु निश्चितं तपःकल्पवृक्षस्य फलं ज्ञेयं. तपो हि द्वादशधा, षड् बाह्यभेदतः, षडभ्यंतरभेदतश्च, यथा—अणसण १ मूणोअरिआ २ । वित्तिसंखेवणं ३ रसच्चाओ ४ ॥ कायकिलेसो ५ संलीण—या ६ य बझो तवो होइ ॥ १ ॥ पायछित्तं १ विणओ २। वेयावच्चं ३ तहेव सज्झाओ ४ ॥ झाणं ५ उस्सग्गोवि अ ६ । अभिंतरओ तवो होइ ॥ २ ॥ अत्रा-

ऽभ्यंतरतपसि चतुर्थभेदः स्वाध्याय उक्तः, तत्रात्यंतं निरतश्चतुर्दशपूर्वी ज्ञानवान्, तस्य लब्धिवर्णनं कथ्यते, यथा—चउद्दसपुव्वी घडाओ घडसहस्सं, पडाओ पडसहस्सं, कडाओ कडसहस्सं, रहाओ रहसहस्सं, छत्ताओ छत्तसहस्सं, दंडाओ दंडसहस्सं अभिनिव्वट्टित्ता उवदंसित्तए हंता पभू से केणट्ठेणं पभू? चउद्दसपुव्वी जाव उवदंसित्तए गोयमा! चउद्दसपुव्विस्सणं अणंताइं दव्वाइं उक्कारियाभेदेणं भेज्जमाणाइं लद्धाइं पत्ताइं अभिसमण्णागयाइं भवंति. से तेणट्ठेणं जाव उवदंसेत्तए सेवं भंते, इति श्रीभगवतीसूत्रे पंचमे शते चतुर्थोद्देशके. इति गाथार्थः. ॥ ९ ॥ अनिदानतपसः फलमाह—

॥ मूलम् ॥—अनिआणस्स विहिए । तवस्स तविअस्स किं पसंसामो ॥ किज्जइ जेण विणासो । निकाइआणंपि कम्माणं ॥ १० ॥ व्याख्या—अनिदानस्य निदानरहितस्य विधिना तप्तस्य तपसः किं प्रशंसामः? किं स्तुमः? येन तपसा निकाचितानामपि कर्मणां विनाशोऽत्र क्रियत इति गाथार्थः. ॥ १० ॥ अथ ढंढणकुमारतपोवर्णनमाह—

॥ मूलम् ॥—अइदुक्करतवकारी । जगगुरुणा कण्हपुच्छिएण तया ॥ वाहरिओ सुमहप्पा ।

समरिज्जउ ढंढणकुमारो ॥ ११ ॥ व्याख्या—भो भविकाः! ढंढणकुमारः स्मर्यतां? कथंभूतः? 'सुमहप्पा' सुमहात्मा, पुनः कथंभूतः? 'वाहरिउ' व्याहृतः कथितः, केन? जगद्गुरुणा श्रीनेमिनाथेन, कथंभूतेन? कृष्णपृष्टेन, 'अइदुक्करत्ति' अतिदुष्करं यत्तपः करोतीत्येवंशील इति. तदा तस्मिन् काले श्रीनेमिजिनसमये इति गाथार्थः ॥ ११ ॥ विशेषार्थस्तु कथानकादवसेयस्तच्चैवं—

द्वारिकानगर्यां धनदकृतायां प्रत्यक्षदेवलोकभूतायां दशदशार्हसहितः श्रीकृष्णवासुदेवो बलभद्रसहितो राज्यं करोति. स राजा षोडशसहस्रमुकुटबद्धनृपाणां, सार्धत्रयकुमारकोटीनां षष्टिसहस्राणां यदुकुमाराणां, अनेकानां गणिकासहस्राणां, अनेकानां राज्ञीसहस्राणां चाधिपत्यं कुर्वाणो विहरन्नास्ते, दिवि देवराज इव दीप्यमानः स भूमिनाथः भूमिं पाति, तस्य कृष्णस्य राज्ञो ढंढणेति नाम्ना देव्यस्ति. तस्याः कुक्षिसंभवो ढंढणाख्यः कुमारः सकलकलापारगो यौवनस्थः पित्रा कृष्णेन राज्ञां बह्वीः कन्या महामहेन परिणायितः, ताभिः साकं भोगाननुभवन् स सुखेन विचरतिस्म. अथैकस्मिन् समये भगवानरिष्टनेमिः पृथिव्यां विहरन् द्वारिकायां समवसृतः, उद्यानपालकेन श्रीकृष्णः स्वाम्यागमनवर्धापनेन वर्धितः. ततः श्रीकृष्णस्तस्य वर्धापनिकां दत्वा सपरिकरः स्वामिवंदनाय

ढंढणकुमारेण सह निर्ययौ, स्वामिनः समवसरणे गत्वा स राजचिह्नानि तत्याज, यतः—सच्चित्तदव्वमुज्झण—मच्चित्तमणुज्झणंमणेगत्तं ॥ इगसाडिउत्तरासंग । अंजलि सिरसि जिणदिट्ठे ॥ १ ॥ इह पंचविहाभिगमो । अहवा मुच्चंति रायचिह्नाइं ॥ खग्गं छत्तोवाणह । मौडं चमरे अ पंचमए ॥ ॥ २ ॥ ततः प्रदक्षिणापूर्वं स्वामिनं नत्वा विनयावनम्रदेहो योजितकरकमलयुगलोऽसौ भगवत्पुरो यथायोग्यस्थाने निषसाद.

ततः स्वामी सर्वभाषानुगामिनीभिर्वाग्भिः पापनाशिनीं देशनां विदधे, यथा—जियं जलबिंदुसमं । संपत्तिउ तरंगलोलाउ ॥ सुविणयसमं च पिम्मं । जं जाणसु तं करिज्जासु ॥ १ ॥ इत्यादि भगवद्देशनां श्रुत्वा शुभाशयो ढंढणो जातसंवेगः कृष्णस्याज्ञां लात्वा विष्णुकृतनिष्क्रमणोत्सवो भगवदुपांते प्रवव्राज. ततः श्रीनेमिनाथो देवसंगपरिवृतोऽन्यत्र विजहार, ढंढणोऽपि मुनिः स्वामिना समं विजहार. ततो ढंढणस्य मुनेः पूर्वकृतमांतरायिकं कर्म प्रकटीभूत, तेन च स ढंढणो मुनिर्भिक्षार्थं यत्र यत्र याति, तत्र तत्र तस्य भिक्षान्नं न मिलति, येन मुनिना सार्धं च याति, सोऽपि भिक्षान्नं न प्राप्नोति, ततस्तेन ढंढणेन मुनिनाभिग्रहो गृहीतः, यदाहमात्मलब्ध्यान्नं लप्स्ये,

तदैव पारणकं करिष्ये, नान्यथा. एवमभिग्रहं गृहीत्वा भिक्षार्थं याति, परमशनपानादि किमपि स न लभते. एवं कियंति दिनानि गतानि, पुनः स्वामी श्रीनेमिनाथो मह्यां विहरन्नेकदा द्वारवत्यां समागतः, तस्यां नगर्यां च स तथैव भिक्षार्थं भ्रमति, परमंतरायेण पूर्वकृतकर्मणा स यादृशो याति तादृशः पुनरितस्ततो भिक्षार्थं भ्रांत्वा समवसरणे स्वाम्यंतिके समायाति. एवं बहुषु दिवसेषु व्यतीतेष्वेकस्मिन् दिने भगवत्समीपवर्तिभिः साधुभिः स्वामी पृष्टो यथा हे भगवन्ननेन ढंढणमुनिना पूर्वं किमंतरायकर्म निबद्धं? येनास्यां पुर्यां समृद्धश्रद्धावतामपि श्राद्धानां गृहे एष भिक्षामपि नाप्नोति. स्वामिनोक्तं श्रूयतामस्य कथानकं—

मगधदेशे धान्यपूराभिधे ग्रामे परासरो नाम द्विजो जज्ञे राजनियोगी. राज्ञा तस्य तत्र ग्रामे पंचशतहलोपर्यधिकारो दत्तः. अथैकदा हलिनां भोजने समागतेऽपि, वृषभाणां च तृणादिभक्ष्येऽप्यागते तन्नोऽमुंचत, उवाच च मम क्षेत्रे चाषमेकं दत्वा सर्वे भोजनादिकं कुर्वंतु. तदा ते परवशाः किं कुर्वंति? यथा तेनोक्तं तथैव तैः कृतं. एतदंतरायकर्म कृत्वा स परासरो विप्रस्ततो मृत्वा भूरिभवान् भ्रांत्वा किंचित्पुण्यं विधाय कृष्णपत्नीढंढणायाः पुत्रो जातः, संसारासारतां च ज्ञात्वा

वैराग्यात् स दीक्षां प्रपन्नः. स च कृताभिग्रहः स्वलब्धिलब्धाहाराभिलाषुकः परलब्धिपराङ्मुखश्च भिक्षार्थं द्वारिकायां पर्यटति. परं पूर्वकर्मदोषतो यथा याति तथैव स प्रत्यायाति. एवं तस्य मुने-र्भिक्षां विना भ्रमतः षण्मासी व्यतीता. तस्मिन् समये श्रीजिनवंदनाय समागतो गदापाणिः. भग-वतो देशनां श्रुत्वा देशनांते स एवमपृच्छत्. हे स्वामिन्नमीषां तपस्विनामष्टादशसहस्राणां मध्ये को दुष्करकारकः साधुः? स्वामिनोक्तं शार्ङ्गपाणे! सर्वेऽपि मुनयो दुष्करं कुर्वंति, परं तेभ्योऽपि सर्वे-भ्यस्तव पुत्रो ढंढणाराज्ञीकुक्ष्युद्भवो ढंढणो नाम महामुनिः सांप्रतमत्युत्कृष्टो य इयत्कालमलाभाख्य-परीषहमसहिष्ट, पुनर्हरिरुवाच हे भगवन्! स महामुनिर्ढंढणः कुत्रास्ति? तमहं नमस्करोमि. श्रीने-मिनाथेनोक्तं तव द्वारिकानगर्यां प्रविशतो भिक्षायै भ्रमन् स मिलिष्यति, ततो जनार्दनस्तीर्थेशं प्रणिपत्य पुरीं प्रविशन् ढंढणर्षिं सन्मुखमागच्छंतमैक्षिष्ट. मुनिदर्शनेनोच्छ्वसितो माधवः सिंधुरादवती-र्य तं साधुं भक्त्या प्रदक्षिणीकृत्यानमत्. एवं तं लक्ष्मीपतिं नमंतं वीक्ष्यैको वणिग्गवाक्षस्थो दध्या-वहो एष साधुर्महान् दृश्यते, यो विष्णुनाप्यवंदि, ततस्तं मुनिं नत्वा जनार्दनः स्वस्थानमगमत, ते-न वणिजा च स मुनिर्ढंढणो गृहे नीत्वा सबहुमानं सिंहकेसरमोदकैः प्रत्यलाभि, तान् मोदकांश्चि-

त्तमोदकान् समादाय स जिनसमीपमागत्य स्वामिनं नत्वा व्यजिज्ञपत् हे प्रभो! किं तन्मम कर्म क्षीणं? यदहं भैक्ष्यमासदं, प्रभुराह भो ढंढण! एषा तव लब्धिर्नास्ति, हरिणा प्रणतत्वात्त्वं वणिजा प्रतिलाभितः, अतो विष्णुलब्धिर्न तु तव लब्धिः. ततः स ढंढणस्तां भिक्षां परलाभलब्धां ज्ञात्वा परिष्ठापयितुमिष्टिकापाकस्थाने गतः, तत्र शुद्धस्थंडिले मोदकान् भंक्त्वा भंक्त्वा रक्षायां परिक्षिपन्नात्मानं निंदतिस्म, अहो मया पूर्वजन्मनि महदशुभं कर्म कृतं, येनाद्यापि मम कर्मक्षयो नास्ति, अहो प्राणिनां कर्माणि पुराणानि दुःक्षयाणि, अथ मम पूर्वकर्माणि कथं क्षयं यास्यंति. एवं वारंवारं चिंतयन् शुक्लध्यानारूढः कर्मक्षयात्स ढंढणो मुनिस्तदैव केवलज्ञानमाप, तदा तस्मिन् वने देवेन कनककमलं रचितं, तत्रोपविष्टः केवली धर्मदेशनां विदधे, तस्यां धर्मदेशनायां च स्वामिना श्रीढंढणकेवलिना स्वस्यांतरायजं कर्म प्रकाशितं, भो भविका एवमंतरायजं फलं ज्ञात्वा केनापि कस्याप्यंतरायो न विधेयः. एवंविधां देशनां दत्वा ढंढणकेवली देवसंघपरिवृतः श्रीनेमिजिनसमवसरणे समागत्य जिनं च प्रदक्षिणीकृत्य नमस्तीर्थायेत्युक्त्वा केवलिपर्षदि समागत्योपविष्टः, स्वायुःपर्यंते चानशनेन मोक्षमगमत. इत्थं श्रीकृष्णपुत्रेण । ढंढणेन महात्मना ॥ अंतरायार्जितं कर्म । तप-

सा क्षेपितं निजं ॥ १ ॥ इति तपोविषये ढंढणकुमारकथानकं ॥ पुनरप्यभिग्रहरूपतपोवर्णनमाह—

॥ मूलम् ॥—पइदिवसं सत्तजणे । वहिऊणं गहिअवीरजिणदिक्खं ॥ दुग्गाभिग्गहनिरओ । अज्जुणओ मालिओ सिद्धो ॥ १२ ॥ व्याख्या—प्रतिदिवसं सप्त जनान्, षट् पुरुषाः सप्तमी च स्त्री, इत्येवं सप्त जनान् ' वहिऊणंति ' हत्वा श्रीवीरजिनपार्श्वे दीक्षां गृहीत्वा दुर्गो विषमो योऽभिग्रहस्तस्मिन्निरत आसक्तः सन्नर्जुनमालाकारः सिद्धो मोक्षं प्राप्त इति गाथार्थः. ॥ १२ ॥ विस्तरार्थस्तु कथानकादवसेयस्तत्कथा चैवं—

जंबूद्वीपे भरतक्षेत्रे मगधदेशे राजगृहे नगरे श्रेणिको नाम राजा राज्यं करोति. तस्य चेल्लणा नाम पट्टदेव्यस्ति, तस्मिन् राजगृहेऽर्जुननाममालाकारोऽस्ति, स धनवान् केनाप्यपरिभूतः समृद्धत्वात. तस्य मालाकारस्य बंधुमतीनामभार्यास्ति, सा च सुकुमारा रूपवती यौवने च वर्तमानोत्कृष्टशरीरा सर्वगुणसंपूर्णा चास्ति. तस्य मालाकारस्य राजगृहनगराद्बहिर्महानेकः पुष्पारामो वर्तते. स च रमणीयो महामेघवच्छ्यामः पंचवर्णकुसुमैश्च समाच्छादितोऽतिशयेन दर्शनीयोऽस्ति. तस्य पुष्पारामस्य नातिदूरे नात्यासन्ने मुद्गरपाणियक्षस्यायतनमस्ति. तत्र तस्य यक्षस्य प्रतिमास्ति. तस्य

मालाकारस्य पूर्वजैः पूजिता तत्कुलपरंपरागता सा प्रतिमातिभद्रिमोत्कृष्टैकं महांतं पलसहस्रनिष्पन्नं लोहमयं मुद्गरं गृहीत्वा तिष्ठति. स मालाकारो बाल्यादारभ्य तस्य यक्षस्य भक्तोऽस्ति. विशाले प्रातःकाले पुष्पारामतः पुष्पाण्यादाय स यक्षस्य महतीं पूजां करोतिस्म, ततोऽसौ तं प्रणामं करोति. ततो राजमार्गे पुष्पविक्रयं कृत्वा स आजीविकां करोति. एवं च तस्य मालिकस्य दिनानि यांतिस्म. तस्मिन् राजगृहे नगरे षड् ललितगोष्ठीपुरुषा व्यसनिनः परिवसंति, ते च स्वेच्छाचारिणो द्रव्यैः केनाप्यपरिभूताः संति.

अथैकस्मिन् दिने तस्मिन् राजगृहनगरे कोऽपि महोत्सवः प्रावर्तत. तस्मिन् महोत्सवे स मालाकारो बहुतरैः पुष्पैरद्य कार्यमिति कृत्वा प्रत्यूषकाले बंधुमत्या भार्यया समं पुष्पाण्यादातुं स्वगृहान्निर्गत्य तत्र पुष्पारामे समागात्. ततश्च स मालाकारो बंधुमत्या समं पुष्पावचयं करोति. इतश्च ते षडपि ललितगोष्ठीपुरुषा मुद्गरपाणियक्षस्यायतने समुपागताः, तत्र ते षडपि क्रीडंतो विचरंति. तदानीं स मालाकारोऽपि बंधुमत्या भार्यया समं पुष्पावचयं कृत्वाग्र्याणि वराणि पुष्पाणि गृहीत्वा यत्र मुद्गरपाणियक्षायतनं तत्र समुपागतः. अथ ते षडपि पुरुषास्तं मालाकारं सभार्यं समागच्छंतं द-

ष्ट्वा परस्परमेवमवोचन्. अहो एष वराको मालाकारः सभार्यः सांप्रतमिहायाति, तदेनं बध्ध्वा बंधुमत्या सार्धं वयं विपुलान् भोगान् भुंजामहे. ततस्ते षडप्येकीभूय कपाटांतरे प्रविश्य निश्चलास्तूष्णीकाः प्रछन्नं देवगृहकोणके तिष्टंतिस्म. ततः स मालिकः सभार्यः पुष्पकरंडकसहितस्तस्मिन् यक्षायतने समागात. तस्य मुद्गरपाणियक्षस्यालोके च स प्रणामं करोतिस्म. ततो महर्घ्यां पुष्पार्चां कृत्वा यावत्स यक्षस्य पंचांगप्रणामं करोति तावत्ते षडपि पुरुषा द्रुतं द्रुतं कपाटांतरान्निर्गत्य तं मालिकं गृह्णंति, ततस्तत्करौ च तत्पृष्टे कृत्वा दवरकेणात्यर्थं बध्नंतिस्म. एवं तं बध्ध्वा तत्रैव यक्षालये देवसाक्षिकं मालाकारस्याग्रे तस्य भार्यया बंधुमत्या समं ते षडपि भोगान् बुभुजिरे. ततः स मालाकारश्चेतसि चिंतयति धिग्मम जीवितं, दृग्भ्यां किं दृश्यते ? अहो मयासौ यक्ष इयत्कालं भावेन पूजितो भक्त्या च नुतः, परं मयास्मात्किंचिदपि फलं न लब्धं, नवरमेतत्फलं लब्धं, यन्मम भार्यया सहैतेऽनार्या एवंविधमकृत्यं कुर्वंति, परं नैष यक्षस्तान्निषेधयति, तन्नास्त्ययं कश्चित, यदि मुद्गरपाणियक्ष इह सन्निहितो भवेत्तर्हि ममैतावदापदं स न पश्येत्, अतो नास्ति मुद्गरपाणियक्षः, किंत्वेष काष्टपिंडः.

अथ तत्तस्य चिंतितं ज्ञानेन मुद्गरपाणियक्षेण ज्ञातं, ततः स यक्षो मालाकारशरीरमनुप्रविश्य त्रटत्कारपूर्वकं शरीरबंधनानि त्रोटयति, तं पलसहस्रनिष्पन्नं च लोहमयमुद्गरं गृह्णाति. ततस्तान् स्त्रीसप्तकान् षडपि पुरुषान् स घातयतिस्म. ततः स मालाकारो यक्षाविष्टशरीरः प्रत्यहं स्त्रीसप्तकान् षट् पुरुषान् हंति. राजगृहनगरस्य परितश्चतुर्दिक्षु भ्रांत्वा भ्रांत्वा स्त्रीसप्तमकान् षट् पुरुषानन्निहत्य न निवर्तते. ततस्तस्मिन् राजगृहे नगरे महान् कोलाहलो जातः, अहो मालाकारः स्त्रीसप्तमकान् षट् पुरुषान् हंतीति. श्रेणिकेन राज्ञैतत् श्रुतं, ततो राज्ञा सेवकानाकार्य कथितं, भोः सेवकाः! यूयं नगरमध्ये त्रिकचतुष्कचर्चरकादिषु गत्वैवं कथयत? भो लोकाः! मालिको लोकान् हंति, अतः केनापि पुरुषेण वा स्त्रिया वा तृणकाष्ठजलपुष्पफलाद्यर्थं नगराद्बहिर्न गंतव्यं, एवं राज्ञा वार्यमाणोऽपि यो यास्यति तस्य शरीरस्य व्यापत्तिर्भविष्यति. ततस्तैः सेवकैर्नगरमध्ये तथैवाघोषणा कृता. ततो भीतो लोको नगराद्बहिः कोऽपि न निर्याति.

तस्मिन् राजगृहे नगरे सुदर्शननामा श्रेष्ठी परिवसति, स च धनवान् महाश्राद्धो जिनधर्मवासितदेहो जिनप्रवचनमेव हितं पथ्यं तथ्यं च मन्यमानः शेषमनर्थमिति कृत्वा सम्यग्धर्मे प्रवर्तते,

सम्यग्जीवाजीवादितत्वज्ञः स जिनप्रवचनं प्रभावयन् विचरति. तस्मिन् समये भगवान् श्रीवीरो देवसंघपरिवृतो राजगृहे नगरे गुणशिलाख्ये चैत्ये समवसृतः. भगवदागमनं सुदर्शनोऽपि बहुजनस्यांतिके श्रुत्वैवं चिंतयामास, भगवानत्र गुणशिलाख्ये चैत्ये समवसृतस्तर्ह्यहं स्वामिनं वंदितुं गच्छामि. एवं च चिंतयित्वा यत्र मातापितरौ तत्रागत्य स योजितकरतल एवमवादीत्, हे मातापितरौ भवदाज्ञयाहं श्रीवीरवंदनाय यामि, ततस्तं सुदर्शनं तन्मातापितरावूचतुर्हे पुत्र! स मालाकारो लोकान् घातयन् विचरति, तर्हि त्वं स्वाम्यंतिके कथं यास्यसि? तत्र गतस्य च तव शरीरस्य व्यापत्तिर्भविष्यति. अतस्त्वमिहैव स्थितः सन् स्वामिनं वंदस्व? एवं वारंवारं वारितोऽपि यदा स न तिष्ठति तदा मातापितृभ्यामुक्तं वत्स! यथा ते सुखं भवति तथा कुरु? एवं मातापितृभ्यामनुज्ञातः कृतस्नानः स शुद्धानि वस्त्राणि परिधाय स्वकीयाद् गृहान्निर्गतः, पादविहारेण विचरंश्च राजगृहान्निर्गतः, मुद्गरपाणियक्षायतनासन्ने गतश्च. ततः स मुद्गरपाणियक्षः सुदर्शनं दृष्ट्वा रुष्टस्तं पलसहस्रनिष्पन्नं मुद्गरं करे कृत्वोल्लालयन् सुदर्शनसमीपमागात्. सुदर्शनोऽपि तमागतं दृष्ट्वाऽभीतोऽत्रस्तोऽनुद्विग्नोऽक्षुभितोऽचलितोऽसंभ्रांतो वस्त्रांचलेन भूमीं प्रमार्जयंस्तत्रोपविष्टः. ततो जिनाभिमुखं योजि·

तकरकमलयामलः स सर्वार्हतो नमस्करोति, ततः श्रीवीरं नमस्करोति, ततः स एवमुवाच, यद्यह· मित उपसर्गान्मुक्तो न भवामि, तदा प्राणातिपातादिव्रतानि तथाष्टादश पापस्थानानि तथाशना· दिचतुर्विधाहारं प्रत्याख्यामि. एतस्मादुपसर्गाच्च मुक्त एवेदं प्रत्याख्यानं पारयिष्यामि, नान्यथेति सागारं प्रत्याख्यानं कृत्वा स प्रतिमया स्थितः.

तदानीं स यक्षो मुद्गरं समुल्लालयन् सुदर्शनांतिके समागतः, परं स देवः सुदर्शनस्योपसर्ग कर्तुं नो शक्नोति. ततः स यक्षः सुदर्शनस्य चतुर्दिक्षु परितो भ्रांतस्तथापि यदा कामपि पीडां त· स्य कर्तुं न शक्नोति, तदा स देवः सुदर्शनाभिमुखमनिमिषदृष्ट्या भृशं समालोक्य मालाकारस्य शरीरं त्यक्त्वा तं पलसहस्रनिष्पन्नं मुद्गरं च गृहीत्वा स्वस्थानं गतः. ततः स मालाकारो यक्षेण वि· निर्मुक्तः पृथिव्यां निपतितः. ततः सुदर्शनो निरुपसर्गं स्वं ज्ञात्वा प्रतिमां पारयति. ततः स मालि· कः क्षणेन स्वस्थो जातः, सुदर्शनं पृच्छति च कस्त्वं? कुत्र च संप्रस्थितः? सुदर्शनेनोक्तमहं श्रीवी· रं वंदितुं गच्छामि, मालिकेनोक्तमहमपि त्वया सह श्रीवीरं वंदितुं समागमिष्यामि, तेनोक्तमेहि? ततस्तौ सुदर्शनमालाकारौ द्वावप्येकीभूय श्रीवीरवंदनाय ययतुः. ततस्तौ स्वाम्यंतिके गत्वा प्रदक्षि·

णां च दत्वा स्वामिनं च नत्वा यथास्थानं समुपविष्टौ, स्वाम्यपि तयोर्धर्मदेशनां विदधे, सुदर्शनोऽपि देशनां श्रुत्वा स्वस्थाने गतः. ततः स मालिको भगवदंतिके धर्मं श्रुत्वा वैराग्यमापन्नः प्रव्रज्यां ययाचे, स्वामिनोक्तं यथा सुखं तथा कुरु? मा प्रतिबंधं कार्षीः. ततोऽसौ पंचमुष्टिकं लोचं करोति. ततः स्वामिना स्वयमेव प्रव्राजितः सोऽनगारो जातः, संयमं पालयंश्च विचरति. ततः स मालाकारो मुनिर्यस्मिन् दिने प्रव्रजितस्तस्मिन् दिने भगवदंतिके ईदृशमभिग्रहमगृहीत, हे प्रभो! भवदाज्ञयाहं सदैव षष्ठेन तपःकर्मणात्मानं भावयन् विचरिष्यामि, स्वामिनोक्तं यथारुचि कुरु? ततः स साधुरपि यथैवोक्तं कुर्वन् विचरति.

अथैकदा स साधुः षष्टपारणके प्रथमपौरुष्यां स्वाध्यायं कृत्वा राजगृहनगरे उच्चावचकुलेषु भिक्षार्थमटति, तं साधुं दृष्ट्वा बहवो लोका एवं कथयंति, यदनेन मे पिता मारितः, अनेन मे माता मारिता, एवं भ्रातृभगिनीभार्यापुत्रपुत्रीस्नुषेत्याद्युक्त्वा केचन पुरुषास्तं मुनिमाक्रोशंति, केचन हीलयंति, निंदंति, तर्जयंति, ताम्यंति च. ततः स महामुनिस्तैर्लोकैराक्रुश्यमानस्ताड्यमानश्च तेषामुपरि मनसाप्यदुष्यमानस्तत्परीषहादि सर्वं सम्यक्सहते. ततः स साधू राजगृहे नगरे भिक्षां

भ्रमन् यदि भिक्षां लभते, तदा पानं न लभते, यदि पानं लभते तर्हि भक्तं न लभते, तथाप्य-र्जुनो महामुनिरदीनोऽविमनाऽकलुषोऽविषाद्यपरित्यक्तयोगो नगर्यां भिक्षार्थमटति. एवं स मालाकारो यदा कदाचित षष्टपारणके भक्तपानादिकं लभते, तदा स्वाम्यंतिके गत्वा सर्वमाहारादिकं निवेद्य दर्शयित्वा च स्वाम्याज्ञयाऽमूर्छितस्तमाहारमश्नाति. ततः श्रमणो भगवान् वीरोऽन्यदा राजगृहनगराद्विजहार. एवं स मालाकारस्तेनोदारेण विपुलेन प्रयत्नकरणयोग्येन महानुभागेन तपःकर्मणात्मानं भावयामास. एवं च तस्य बहुप्रतिपूर्णा षण्मासी व्यतिक्रांता. एवं स सम्यक् श्रामण्यमनुपाल्य प्रांते चार्धमासिक्या संलेखनयांतकृत्केवलीभूयानंतचतुष्कांकितमव्ययपदं प्रपेदे. प्रतिदिवसं सप्तजनान् । हत्वा संप्राप्य वीरजिनदीक्षां ॥ कृत्वाभिग्रहमसमं । षण्मासैः सोंतकृज्जातः ॥ १ ॥ इत्यर्जुनमालिककथानकं समाप्तं ॥ अथ जंघाचारणतपोलब्धिं दर्शयन्नाह—

॥ मूलम् ॥—नंदीसरि रूअगेसुवि । सुरगिरिसिहरंमि एगफालाए ॥ जंघाचारणसमणा । गच्छंति तवप्पभावेणं ॥ १३ ॥ व्याख्या—नंदीश्वरेऽष्टापदद्वीपे, रूचकेष्वपि त्रयोदशमद्वीपेष्वपि, सुरगिरिशिखरे मेरुमस्तके एकया फालयैकेनोत्पातेन जंघाचारणश्रमणा गच्छंति यांति, केन? ' तव-

प्पन्नावेणं ' तपसः प्रन्नावेणेति. अत्र जंघाचारणाश्चैतदुपलक्षणाद्विद्याचारणा अपि, तत्राष्टममष्टमेन क्षपतो यतेर्या लब्धिरुत्पद्यते, यया च केचिज्जंघाव्यापारमाश्रित्यैकेनैवोत्पातेन त्रयोदशमं रुचकव· राभिधानं द्वीपं मेरुमस्तकं च यावद्गंतुं, प्रतिनिवृत्तश्च तत उत्पादद्वयेनेहागंतुं समर्थो जवति, एत· या युक्त्या चाद्यो ज्ञेयः. या पुनः षष्ठषष्ठेन क्षपत उत्पद्यते, यया चोत्पातद्वयेनाष्टमं नंदीश्वराख्यं द्वीपं मेरुमस्तकं च गंतुं, ततो निवृत्तश्चैकेनैवोत्पातेनेहागंतुं समर्थो जवति, एनया युक्त्या च द्वि· तीय इति गाथार्थः ॥ १३ ॥ अथानयोरालापकः श्रीन्नगवत्यंगगतो लिख्यते यथा—कइविहाणं भंते चारणा पन्नत्ता? गोयमा! दुविहा चारणा पन्नत्ता, तं जहा—विज्जाचारणा य जंघाचारणा य, से केणठेणं जंते एवं वच्चंति विज्जाचारणा? गोयमा! छठं छठेणं अणिखित्तेणं तवोकम्मेणं वि· ज्जाए उत्तरगुणलध्धिखममाणस्स विज्जाचारणलध्धी नाम लध्धी समुप्पज्जइ. से तेणठेणं जाव वि· ज्जाचारणा चिइत्ता चिइत्ता विज्जाचारणस्स णं जंते कहं सीहा गती कहं सीहा गतीविसए पन्न· त्ते? गोयमा! अयणं जंबूदीवे दीवे जाव किंचिवि सेसाहिए परिक्खेवेणं देवेणं महिड्ढिए जाव महासुक्खे जाव इणमेवंति कट्टु केवलकप्पं जंबूद्दीवं दीवं तिहिं अच्छरानिवाएहिं तिखुत्तो अणुप·

रिच्छहृत्ताणं हव्वमागच्छेज्जा. विज्जाचारणस्स णं तहा सीहागई तहा सीहागइविसए पन्नत्ते. विज्जाचारणस्स णं भंते तिरिच्छं केवइअं गतिविसए पन्नत्ते? गोयमा! से णं इओ एगेणं उप्पाएणं माणुसुत्तरे पव्वए समोसरणं करेंति, माणु० त्ता तहिं चेइयाइं वंदइ. तहिं चेईआइं वंदित्ता बितिएणं उप्पाएणं नंदीसरवरदीवे समोसरणं करेंति. नंदि० त्ता तहिं चेईआइं वंदइ, वंदित्ता तओ पडिनिअत्तए, त्तए० त्ता इहमागच्छइ, त्ता इह चेइयाइं वंदंति. विज्जाचारणस्स णं इओ एगेणं उप्पाएणं सुदंसणवयणे समोसरणं करेंति, समो० त्ता तहिं चेइआइं वंदंति, त्ता बितिएणं उप्पाएणं पंडगवणे समोसरणं करेंति, त्ता तहिं चेइआइं वंदंति, तओ पडिनिअत्ति, त्ता इहमागच्छइ, त्ता इह चेइआइं वंदंति. विज्जाचारणस्स गोयमा! उड्ढं एवइए गइविसए से णं तस्स ठाणस्स अणालोइअपडिक्कंते कालं करेंति, नत्थि तस्स आराहणा, से णं तस्स ठाणस्स आलोइयपडिक्कंते कालं करेंति, अत्थि तस्स आराहणा.

से केणट्ठेणं भंते एवं वुच्चइ? जंघाचारणा जं गोयमा! तस्स णं अट्ठमं अट्ठमेणं अनिक्खित्तेणं तवोकम्मेणं अप्पाणं भावेमाणस्स जंघाचारणनामलद्धी समुप्पज्जंति. से तेणट्ठेणं जाव जं-

घाचारणा, जंघाचारणस्स णं भंते कहं सीहागइ कहं सीहागइविसए पन्नत्ते? गोयमा! अयण्णं जंबूद्दीवे दीवे, एवं जहेव विज्जाचारणाचारणस्स, णवरं तिसत्तखुत्तो अणुपरिअट्टित्ताणं हव्वमागच्छेज्जा, जंघाचारणस्स णं गोयमा! तहा सीहागइ तहा सीहागइविसए पन्नत्ते, सेसं तं चेव, जंघाचारणस्स णं भंते! तिरियं केवइए गइविसए पन्नत्ते? गोयमा! से णं इओ एगेणं उप्पाएणं रुयगवरदीवे समोसरणं करेति, रुय० त्ता तिहिं चेइयाइं वंदेइ, त्ता तओ पडिनियत्तमाणे बितिएणं उप्पाएणं नंदीसरवरदीवे समोसरणं करेति, नंदी० त्ता तिहिं चेईयाइं वंदेइ, त्ता इहागच्छइ, इह चेइआइं वंदेइ. जंघाचारणस्स णं गोयमा! तिरिए एवइए गइविसए, जंघाचारणस्स णं भंते! उड्ढं केवइए गइविसए? गोयमा! से णं इओ बितिएणं उप्पाएणं पंडगवणे समोसरणं करेंति, त्ता तिहिं चेईयाइं वंदेइ, त्ता तओ पडिनियत्तमाणो बितिएणं उप्पाएणं नंदणवणे समोसरणं करेइ, नंद० त्ता तिहिं चेइयाइं वंदेइ, तिहिं चेइयाइं वंदित्ता इहमागच्छइ, त्ता इह चेइयाइं वंदेइ. जंघाचारणस्स णं गोयमा! उड्ढं एवइए गइविसए पन्नत्ते, से णं तस्स ठाणस्स अणालोइयपडिक्कंते कालं करेइ, त्ता नत्थि तस्स आराहणा, से णं तस्स ठाणस्स आलोईयपडिक्कंते कालं

करेंति, श्चत्रि तस्स श्चाराहणा, सेवं ग्नंते सेवं ग्नंतेत्ति जाव विहरइ. शत-२ उद्देशो नवमः ए.

श्चथ धन्यमुनितपसः स्वरूपं वर्णयन्नाह—

॥ मूलम् ॥—सेणिश्रपुरत्र जेसिं । पसंसिश्रं सामिणा तवोरूवं ॥ ते ध । धन्नमुणी । दुन्निवि पंचुत्तरे पत्ता ॥ १४ ॥ व्याख्या—श्रेणिकपुरतो ययोस्तपोरूपं तपःस्वरूपं स्वामिना श्रीमहावीरेण त्रिजगन्नाथेन प्रशंसितं, 'ते धन्नेत्ति' तौ धन्यौ, धन्यमुनी, धनाभिधानौ महामुनी, काकंदिराजगृहवासिनौ द्वावपि पंचमानुत्तरं प्राप्तौ. इति गाथार्थः ॥ १४ ॥ विशेषार्थस्तु कथानकादवसेयः, तत्र राजगृहवासिनो धन्यस्य तु कथानकं दानकुले शालिभद्रकथायां प्रोक्तं ज्ञेयं, काकंदीवासिनस्तु कथानकमेवं, यथा—

इहास्मिन् भरते काकंदी नाम नगरी सकलगुणोपेता समृद्धा चास्ति, तस्यां नगर्यां सहस्राम्रवननामोद्यानं वर्तते, तत्र जितशत्रुराजा राज्यं करोति, किंच तत्र भद्रनाम्नः सार्थवाहस्य भद्रानाम्नी पत्नी सार्थवाही धनकनकसमृद्धा वसति, तस्या श्चात्मजो धननामा दारकोऽस्ति, सोऽपि सुरूपः सकलगुणगरिष्ठः क्रमेण संप्राप्तयौवनो द्वासप्ततिकलाकुशलोऽस्ति. तं भोगसमर्थं ज्ञात्वा भद्रा

द्वात्रिंशदिव्यवरकन्यकानामेकस्मिन्नेव दिने पाणिग्रहणं
द्वात्रिंशत्प्रासादावतंसान् कारयतिस्म. ततो द्वात्रिंशद्रूप्यकोटीर्द-
कारयतिस्म. ततः सा जननी पुत्रा सर्वगृहोपस्कराणां द्वात्रिंशतं ददौ, तथा लीलाल-
दौ. अथ स धन्यस्ताभिर्भार्याभिः साकं वैषयिकं सुखं निरंतरायं बुभुजे दुगुंदकदेव इव. कि-
सोऽसौ गतमपि कालं न जानाति. एवं तस्य धन्यस्य ताभिर्भार्याभिः सार्धं भोगाननुभवतः
यंति वर्षाण्यतीतानि.

एवं काले यात्येकस्मिन् समये चतुर्दशसहस्रैर्मुनिभिः परिवृतो देवसंघैश्च परिवृतो भगवान्
श्रीवीरश्चतुस्त्रिंशदतिशयैर्विराजितस्तस्यां काकंद्यां नगर्यां समवसृतः. ततः स्वामिनं नंतु राजप्रभृतयः
सर्वेऽपि लोकाः समाजग्मुः. धन्योऽपि स्वामिसमागमनं श्रुत्वा पादचारेण गछन् समवसरणे समा-
गात्, श्रीवीरं च प्रदक्षिणीकृत्य वंदतेस्म. ततः स्वामिना देशना दत्ता, यथा—धर्मो जगतः सारं
। सर्वसुखानां प्रधानहेतुत्वात् ॥ तस्योत्पत्तिर्मनुजात् । सारं तेनैव मानुष्यं ॥ १ ॥ भो भविकाः!
एवंविधं मानुष्यभवमवाप्य धर्मे यत्नो विधेयः. इत्यादि भगवद्देशनां श्रुत्वा वैराग्यमापन्नोऽसौ मा-
तुरंतिके समागत्यैवमवादीत्, हे मातर्मया भगवदंतिके धर्मः श्रुतः, तं श्रुत्वाहं प्रतिबुद्धश्च. अतो हे

मातस्तवाज्ञयाहं दीक्षामंगीकरोमि. भोगादिभोगदर्शनान्मात्रा बहूक्तोऽपि यदा स न तिष्ठति, तदा भद्रा सार्थवाही राज्ञो जितशत्रोः समीपे गत्वा छत्रचामरादीनि मार्गयति. ततो राजा जितशत्रुर्भद्रागृहे समागत्य स्वयमेव धन्यस्य निष्क्रमणोत्सवं करोति. ततो वीरेण भगवता स्वयमेव दीक्षितः पंचसमितिभिः समन्वितः स त्रिगुप्तिभिरलंकृतो धन्योऽनगारो जातः. ततः स धन्योऽनगारो यस्मिन् दिने प्रव्रजितस्तस्मिन्नेव दिने स्वामिनं नत्वा स्वाम्यंतिकेऽभिग्रहमग्रहीत, हे भगवन्! भवदाज्ञया निरंतरं षष्ठतपः कुर्वन् पारणके चोज्झितभिक्षयाचामाम्लं करिष्यामि. स्वाम्याह भो धन्य! यथासुखं तपसि प्रवर्तस्व? मा प्रतिबंधं कुरुष्व? ततः स धन्योऽनगारः स्वाम्याज्ञया हृष्टस्तुष्टः संस्तस्मिंस्तपसि प्रवर्तते. ततः स धन्यो मुनिः प्रथमषष्टपारणके प्रथमपौरुष्यां स्वाध्यायं करोति, द्वितीयपौरुष्यां ध्यानं करोति, तृतीयपौरुष्यां भगवंतं समापृच्छ्य भिक्षार्थं काकंद्यां नगर्यामुच्चनीचगृहेष्वटन्नाचामाम्लान्नं गृह्णाति, नान्यत्कांक्षति.

एवं भिक्षायै पर्यटन् स यदि भक्तं लभते तदा पानं न लभते, यदा च पानं लभते तदा भक्तं न लभते, तथाप्यदीनो दृढमना अकलुषोऽविषादी स्थिरमनोवाक्काययोगी स्वयमेव यत्नकार-

को वर्तते. एवं यतमानेन यदि कापि भिक्षा लभ्यते, तदा तां भिक्षां समादाय काकंदीनगरीतो निर्गछति, निर्गत्य च तदाहारादिकं स्वाम्यग्रे दर्शयति. ततः स धन्योऽनगारः स्वामिनानुज्ञातस्ति-स्मिन्नन्नादिकेऽमूर्छितः केवलं देहधारणार्थं तमाहारमश्नाति. एवं संयमेन तपसा चात्मानं भावयन् स विचरति. ततः श्रमणो भगवान् काकंदीनगरीतो निर्गछत्यन्यत्र च विहारं करोति. ततः स ध-न्यो महामुनिर्भगवदाज्ञया तथारूपः श्रमणांतिके सामायिकादीन्येकादशांगानि पपाठ. एवं क्रमेण स धन्योऽनगारस्तपसा शुष्को निर्मांसशरीरश्च जातः, परं तपसोपचितः सुष्टूद्दीप्तहुताशन इव तप-स्तेजसा दीप्यमानोऽसौ विराजते. अतिकृशशरीरः स धन्यो महामुनिः पदमपि गछन्नेकं वचनमपि भाषमाणश्च ग्लानिं याति, तथा तस्य शरीरं निर्मांसं शुष्कास्थिसंभूतमिंगालशकटमिव शब्दं करो-ति, तथा भस्माछादितहुताशन इव तस्य शरीरे चैतन्यमपि दुर्लक्ष्यमभूत्. तस्मिन् समये मह्यां वि-हरन् भगवान् श्रीवीरो राजगृहे नगरे गुणशिले चैत्ये समवासार्षीत, वर्धितः श्रेणिको राजा भगवद्वंद-नाय निर्गतः, नगरात्पौरपर्षदपि निर्गता, स्वामिना देशना दत्ता, पर्षत्प्रतिगता. ततः श्रेणिको रा-जा भगवंतं नत्वैवमपृछत्, हे भगवन्नेतेषां चतुर्दशसहस्रमुनीनां मध्ये कोऽनगारो महादुःकरकारको म-

हानिर्जराकारकश्च? स्वाम्याह भो श्रेणिक! एतेषामिंद्रभूतिप्रमुखाणां चतुर्दशश्रमणसहस्राणां मध्ये धन्योऽनगारो महादुःकरकारको महानिर्जराकारकश्च. श्रेणिकेनोक्तं भगवन्! केन हेतुनैवमादिश्यते? भगवानाह काकंदीनगर्यां भद्रापुत्रो ममांतिके प्रव्रजितो निरंतरं षष्ठं तपः कृत्वाचामाम्लेन पारणकं करोति.

इत्यादिसकलोऽपि वृत्तांतो भगवता तस्याग्रे प्रोक्तः, तेन हेतुना च भो श्रेणिक! एवमुच्यते, यद्धन्यो महामुनिः सर्वेषां मुनीनामुत्कृष्टः. एवं तद्भगवद्वाक्यं श्रुत्वा हृष्टः श्रेणिकः स्वामिनं वंदित्वा धन्यांतिके गतः, तं च त्रिःप्रदक्षिणीकृत्य वंदित्वैवमवादीत, भो महामुने! त्वं धन्योऽसि कृतपुण्योऽसि, सुलब्धं तव जन्मजीवितफलं. एवं स श्रेणिको राजा धन्यं मुनिं स्तुत्वा पुनः स्वाम्यंतिके समागात्. पुनः स्वामिनं नत्वा स राजगृहे नगरे समागात्. ततः स श्रेणिको नृपो दिव्यान् भोगान् भुंजानो विचरति. अथान्यदा स धन्यो महामुनिर्निशायां धर्मजागरिकया जाग्रन्नेवमचिंतयत्, अहमनेन तपसा शुष्को निर्मांसश्च जातः, तर्हि प्रातःकाले भगवंतं श्रीवीरं पृष्ट्वा स्थविरैः सार्धं विपुलं पर्वतं समारुह्य मासिक्या संलेखनयात्मानं शोषयित्वा जीवितमरणयोः समानो विचरामि. ततस्तेन

मुनिना यथा चिंतितं तथा कृतं, ततः स धन्यो मासिक्या संलेखनया शुभध्यानेन सर्वार्थसिद्धे म-
हाविमाने देवत्वेनोत्पन्नः. स्थविरैस्तस्योपकरणादिकं गृहीत्वा महापारिष्टापनिकं कायोत्सर्गं कृत्वा
विपुलपर्वतादवतीर्य स्वाम्यंतिके समागत्य तदुपकरणादिकं स्वाम्यग्रे मुक्तं. ततो गौतमः स्वामिनं पृ-
च्छति, हे भगवन्! भवच्छिष्यो धन्यः कां गतिं गतः? भगवतोक्तं मम शिष्यो धन्यः कालं कृत्वा स-
र्वार्थसिद्धविमाने देवत्वेनोत्पन्नः, तत्र च सर्वेषां देवानामजघन्योत्कृष्टैव स्थितिस्त्रयस्त्रिंशत्सागरोपमा-
णि, एवं तस्य धन्यस्यापि त्रयस्त्रिंशत्सागरोपमाणि स्थितिः. पुनर्गौतमेन पृष्टं स्वामिन् स धन्यस्तत-
श्च्युत्वा कुत्रोत्पत्स्यते? भगवानाह हे गौतम! महाविदेहे क्षेत्रे सुकुलेषूत्पद्य दीक्षां च कक्षीकृत्य के-
वलं लब्ध्वा स मोक्षं यास्यति. इत्थं धन्यमहात्मासौ । तपः कृत्वा सुरोऽभवत् ॥ श्रेणिकेन स्वयं पृ-
ष्टः । श्रीवीरोऽवर्णयद्यकं ॥ १ ॥ इति काकंदीनिवासिधन्यकथानकं ॥ द्वितीयधन्यकथानकं तु दा-
नकुलके नवमगाथायां शालिभद्रकथानकादवसेयं, पौनरुक्त्यदोषशंकयात्र नोच्यते. भद्रौ तौ मु-
नींद्रौ प्रपन्नावसानौ । विमानेऽथ सर्वार्थसिद्धाभिधाने ॥ अभूतां प्रभूतप्रमोदाब्धिमग्नौ । त्रयस्त्रिंश-
दब्ध्यायुषौ देववर्यौ ॥ १ ॥ अथ सुंदरीतपःस्वरूपं वर्णयति—

॥ मूलम् ॥—सुणिऊण तवं सुंदरी—कुमारीए अंबिलाण अणवरयं ॥ सट्ठिवाससहस्सा ।
ऋषभदेवपुत्रीसुंदरीकुमार्या आचामाम्लानां तपः
ऋण कस्स न कंपए हिययं ॥ १५ ॥ व्याख्या—
श्रुत्वा कस्य हृदयं न कंपते? त्वं कथय कथमनवरतं निरंतरं कियत्कालं यावत्? षष्टिवर्षसहस्राणि यावदिति गाथार्थः. ॥ १५ ॥ विस्तरार्थस्तु कथानकादवसेयः; सुंदर्याः कथानकं तु पूर्वं शीलकुलके पंचदशगाथायामुक्तमवगंतव्यं. अतस्तस्याः स्वरूपमत्र नोक्तं. इति सुंदरीस्वरूपं. ॥ अथ शिवकुमारदृष्टांतेन तपसो माहात्म्यमाह—

॥ मूलम् ॥—जं विहियमंबिलतवं । बारसवरिसाइं सिवकुमारेण ॥ तं दट्ठुं जंबूरूवं । विम्हिअ कोणिअ राया ॥ १६ ॥ व्याख्या—शिवकुमारभवे द्वादशवर्षाणि यावद्यस्मात्कारणादाचामाम्लतपो विहितं तस्मादन्यत्र जन्मनि जंबूरूपं वीक्ष्य कूणिको राजा विस्मितो विस्मयमापन्न इति गाथार्थः. ॥ १६ ॥ विस्तरार्थस्तु कथानकादवसेयस्तत्कथा चेयं—

मगधदेशे सुग्रामनाम्नि ग्रामे राष्ट्रकूटाख्यः कौटुंबिकोऽस्ति, तस्य शीलालंकारधारिणी रेवतीतिनाम्नीप्रियास्ति, तयोर्भवदत्तभवदेवनामानौ द्वौ पुत्रौ सर्वकलाकुशलौ वर्तेते, तस्मिन् ग्रामेऽन्यदा

गुणभूरयः सुस्थितसूरयो मह्यां विहरंतः समागच्छन्. तेषां देशनां श्रुत्वा भवविरक्तो भवदत्तस्तेषां सूरीणां समीपे व्रतं जग्रहे, सूरिभिः समं विहरन् ग्रहणासेवनाशिक्षां सोऽशिक्षत. अथैकदा कश्चित्साधुः सुस्थितसूरिशिष्य आत्मद्वितीयः सूरीनापृच्छ्य स्वग्रामे निजबंधुं व्रतयितुं जगाम, तत्कालकृतपाणिग्रहणग्रथिलः कनीयान् बंधुर्ज्येष्ठबांधवमुनिमायातमपि नाज्ञासीत्. तेनाभाषितः स मुनिः प्रत्यावृत्य पुनर्विलक्षवदनो गुर्वंतिके समागात. ततस्तेनागत्य गुरोः पुरो बंधोः सर्वं स्वरूपं निवेदितं. तत् श्रुत्वा भवदत्तः साधुरवददहो भवद्बंधोः काठिन्यं! येन त्वं समागतोऽपि तेन न भाषितः. ततस्तेन मुनिना भवदत्तो मुनिरभाणि, यदि मम भ्रातैवंविधः कठिनस्तर्हि त्वं स्वग्रामे गत्वा मृदुं निजसहोदरं दीक्षय? तदा भवदत्तो मुनिर्बभाषे यदा गुरवो मगधदेशे विहरंतो यास्यंति, तदा ज्ञास्यते, सांप्रतं किं कथ्यते? इत्युक्त्वा स तूष्णीको बभूव. एवं काले गच्छति श्रीसुस्थितसूरयः पृथिव्यां विहरंतोऽन्यदा मगधदेशे समागताः. तदानीं भवदत्तो मुनिर्गुरोरनुज्ञां गृहीत्वैकाक्येव स्वबंधुगृहे समागतः.

तस्मिन् समये तस्य मुनेः कनीयान् बंधुर्वासुकीनागदत्तनाम्नो व्यवहारिणो नंदिनीं नागि-

लानाम्नीं परिणीतः. भवदत्तो बंधुगृहे गत्वा धर्माशीश्चक्रे. ततस्ते सर्वे स्वजनास्तं मुनिं नमस्कुर्वंति स्म. तेनापि धर्मलाभो दत्तः, कथितं चात्रासन्नग्रामे मम गुरवः समवसृतास्तेन तत्र द्रुतं गंतुमहं समुत्सुकोऽस्मि. ततस्तैः स्वजनैः स मुनिरन्नपानादिभिः प्रतिलाभितः, इतो भवदेवो बंधुः स्वकुलाचारत्वान्नागिलाया वक्षसि स्वयं मंडनं कुर्वन् भ्रातरमागतमशृणोत्. ततस्तामर्धमंडितां च मुक्त्वा स भ्रातरं वंदितुमागात्. मुनिरपि भ्रातुः करे घृतपात्रं ददौ व्रतस्य सत्यंकारमिव. ततः स मुनिः स्वजनैः परिवृतोऽचलत्. अथ दूरे गत्वा सर्वेऽपि स्वजनास्तं मुनिं नत्वा नत्वा स्वस्थाने जग्मुः. भवदेवस्तु धृतघृतपात्रो बाल्यक्रीडादिवार्ताभिस्तं प्रवर्तकं मुनिमनुजग्मिवान्. ततः स मुनिर्बंधुना समं यत्र गुरवः संति तत्रागतः, सबांधवं च तं मुनिं दृष्ट्वा सर्वेऽपि मुनयो विस्मिताः, धन्य एष भवदत्तबंधुर्भवदेवो य एवंविधे वयसि प्रव्रजति, यावता ते मुनयः परस्परमेवंविधां वार्तां कुर्वंति तावता भवदत्तेन गुरोरग्रे निवेदितं, हे भगवन्! ममैष बांधवो भवदंतिके दीक्षार्थमागतोऽस्ति, तदा भवदेवेन चिंतितं मम ज्येष्ठबंधुः साधुर्मा मृषाभाषी भवत्विति ध्यात्वा तेनोक्तं हे भगवन्नहं दीक्षार्थमागतोऽस्मि, अतो मां संसारान्निस्तारय? अहं भवादुद्विग्नोऽस्मि, अतो मां दीक्षां देहि? तत्तस्य वचनं श्रुत्वा गु

रुणा स दीक्षितः. ततो भवदत्तप्रयुक्तेन गुरुणा समादिष्टो भवदेव एकेन मुनिना सहान्यं ग्रामं जगाम. अथ स्वजनाः परस्परं कथयंति भवदेवोऽद्यापि किं नागतः? इत्यधृत्या ते समागत्य गुरुं पृछंति हे भगवन्! भवदेवः कुत्रास्ति? गुरुसमीपवर्तिना भवदत्तेनोक्तं संप्रत्येव स ग्रामे गतः, तत् श्रुत्वा ते स्वजनाः स्वस्थानं गताः.

अथ बंधूपरोधेन भवदेवो व्रते स्थितो व्रतं पालयति, परं तां नागदत्तसुतां नागिलां हृदयान्न मुंचति, योगींद्रः परमात्मानमिव. ततः कियद्वर्षानंतरं निर्मलां तपस्यां पालयित्वा भवदत्तो महामुनिरनशनेन कालं कृत्वा दिवं ययौ. अथ भवदत्ते मृते दाक्षिण्यमपहाय भवदेवो दध्यौ धिग्मम जीवितं! मया किमकार्यं कृतं यत्प्रिया नागिला मयार्धचित्रितैव मुक्ता, तस्याः का गतिर्जाता भविष्यति. अथाहं तत्र यामीति ध्यात्वा चारित्रावरणकर्मोदयात्संयमाद्भ्रष्टो रात्रौ सुप्तान् मुनीन् मुक्त्वैकाकी तत्स्थानान्निःससार मत्तगजो गजयूथादिव, मार्गे एकाकी यतिवेषधारकः क्रमेण सुग्रामग्रामसीमनि गत्वैकस्मिंश्चैत्ये स्थितः, तस्मिंश्चैत्ये एकया स्थविरया सार्कं काचिदर्धवृद्धा स्त्री अत्यंतकृशशरीरा तेन दृष्टा, तां दृष्ट्वा भवदेवो द्रव्यमुनिर्बभाषे हे धर्मिणि! हे वृद्धे! राष्ट्रकूटरेवत्योः किं कु-

शलमस्ति? तयोक्तं तौ द्वौ धर्मध्यानपूर्वकं निधनं गतौ, पुनस्तेनोक्तं तर्हि नागिलायाः किं कुशलमस्ति? तदा सैव नागिला तं भवदेवं विज्ञाय बभाषे भो मुने! त्वं नागिलापतिर्भवदेवोऽसि, तेनोक्तं स एवाहं भवदेवो भ्रात्रा पूर्वं कपटेन प्रव्रज्यां ग्राहितः. अथ भ्रातरि स्वर्गं गतेऽहं नागिलाप्रेमानुविद्धो भोगाभिलाषुकश्चारित्रं परित्यक्तुमना इहागतोऽस्मि, तेन त्वया वाच्यं सा नागिला कुत्रास्ति? तदा नागिला चिंतयत्ययं चारित्रभ्रष्टमना वयःपरावर्तनान्मां नोपलक्षयति, तर्ह्यात्मानमहं प्रकाशयामीति मत्वा सा प्राह भो महात्मन्! साहं नागिला, अथ मयि किं लावण्यं पश्यसि? इत्यादि बहूक्तोऽपि स यावन्न विरमति, तावन्नागिलायाः सख्या वृद्धाया दारकस्तत्रागात्, स च स्वां मातरमित्युवाच, हे मातस्त्वं भाजनं धारय? यतोऽहं भुक्तं पायसं वमिष्यामि, मम भोजनायामंत्रणमायातमस्ति, तेनाहं तत्र गत्वाकंठं यावदुदरं पूरयिष्यामि, यदा च पुनरहं बुभुक्षितो भविष्यामि तदाहमेतद्वांतं पायसं भोक्ष्ये. इदं पुत्रवाक्यं श्रुत्वा सा वृद्धा ब्राह्मणी बभाषे हे पुत्रानेन जुगुप्सनीयेन कर्मणालं. तदानीं भवदत्तो बभाषे हे बटो! त्वमिदं कर्मचिकीर्षुः श्वानतोऽप्यधिकं जुगुप्सनीयोऽसि, तदानीं नागिला प्राह हे महात्मंस्त्वमेवं जानन्नपि पूर्वं वांतां मामभिलषन् किं न ल-

ज्ञासे? अथ मम शरीरेऽस्थिचर्मविशेषे त्वं किं पश्यसि? यदस्मिन् शरीरे पुनर्भोगेच्छां कुरुषे, श- रीरे किमपि सारं नास्ति, यतः—अस्मिन्नशुचिवस्तूनां । मलिनीकारकारणे ॥ देहे जरापराधीने । मुधा मुह्यंति जंतवः ॥ १ ॥ विषमाममृतं दीक्षां । मन्यथा मास्म ह्यन्यथा ॥ तच्चाघुव्य फटिश्येव । गुरुं भज कुरु व्रतं ॥ २ ॥ इति नागिलागिरा प्रतिबुद्धो भवदेवो महामुनिः पुनरायातसंवेगः स्व- गुरोः पार्श्वे समागत्य पुनर्दीक्षां समादाय स्वापराधं समालोच्य गुरुणोक्तं तपो विधाय प्रांतेऽनश- नेन विपद्य सौधर्मे देवलोके प्रभातिभासुरः सुरो बभूव. एवं भवदत्तभवदेवयोः प्रथमद्वितीयभवौ प्रतिपादितौ. अथ तयोस्तृतीयो भवः प्रतिपाद्यते—

महाविदेहक्षेत्रे पुष्कलावतीविजये विष्वक्प्रिये देशे पुंडरीकिण्यां नगर्यां वज्रदत्तचक्रिणः प- त्न्यां यशोधराख्यायां भवदत्तजीवः प्रथमस्वर्गाच्च्युतस्तत्पुत्रो जातः सागरदत्तनामा, क्रमेण वर्धितो द्विसप्ततिकलाकुशलः स पित्रा वज्रदत्तचक्रिणा पवित्रांगीः सहस्रशः कन्याः परिणायितः. ताभिः स्त्रीभिः समं वैषयिकं सुखं देवीभिः सह देवराज इव बुभुजे. एकदा स सागरदत्तनामा चक्रिपुत्रो- ऽनेकदारांतर्वर्ती मंदिरमूर्धनि स्थितोंतरिक्षे स्वर्णवर्णं पयोमुचमभ्रंकषत्तुंगशृंगसमाकुलं मेरुशृंगमिव

रमणीयं. पुनः क्षणमात्रेण तस्मिन्नेव धाराधरे विधुरतां गते सागरदत्तः कुमारवर एवं संसारासारतां विभावयन् प्रतिबुद्धोऽमृतसागरसूरिसमीपे साग्रहो व्रतं जग्राह. क्रमेण द्वादशांगधरोऽसाववधिज्ञानमवाप. गुरुणानुज्ञातोऽसौ मह्यां विहरतिस्म. अथ तत्रैव विजये वीतशोकानाम्न्यां राजधान्यां पद्मरथस्य राज्ञो वनमालानामपट्टदेव्यस्ति. इतः स भवदेवः प्रथमदेवलोकाच्च्युतः सुस्वप्नसूचितो वनमालाकुक्षिसरसि राजहंस इव समुत्पन्नः, सुदिवसे च जातः, शिवकुमार इति दत्तनामा क्रमेणाष्टवर्षीयः पित्रा पाठितो यौवनस्थो द्वासप्ततिकलाकुशलः पित्रानेकशः कुलजाः कन्याः परिणायितः. स शिवकुमारोऽन्यदा महिलाभिः सार्धं स्वसदनोपरि स्थितोऽस्ति, तावता कामसमृद्धस्य सार्थवाहस्य गृहे मासक्षपणपारणके सागरदत्ताख्यो महामुनिर्भिक्षार्थमागतः, तेन च भिक्षया स प्रतिलाभितः, ततस्तस्य गृहे तन्मुनिदानमाहात्म्यतः पंच दिव्यानि जातानि. सागरदत्तो महामुनिस्तदन्नमादाय स्थाने गत्वा पारणकं चक्रे.

एतत्स्वरूपं शिवकुमारो राजपुत्रः समालोक्य भृशं मुदितमानसस्तस्य मुनेः समीपे गत्वा धर्ममशृणोत. ततः शिवेनोक्तं हे भगवन् भवदुपरि मम भृशं स्नेहो वर्तते, तत्स्नेहस्य किं कारणं?

तद् ज्ञानेन ज्ञात्वा मम मनोमोदसंपत्तये यथास्थितं समादिश? ततोऽसौ सागरदत्तो महामुनिरवधिज्ञानेन तस्य शिवकुमारस्य पूर्वभवस्वरूपं ज्ञात्वा भवदत्तभवदेवयोर्भव समादिशत्, भवदत्तश्चाहं सागरदत्तो जातः, भवदेवश्च त्वं शिवकुमारो जातः, एतदेव च पूर्वभवस्नेहकारणं. शिवकुमारो राजपुत्रः सागरदत्तमुनिमुखादेवं पूर्वभववृत्तांतं श्रुत्वा संजातसंवेगो मातापित्रोरंतिके समागत्य दीक्षानुज्ञां ययाचे. पितृभ्यामननुज्ञातोऽकृतभोजनः स पौषधशालायां तस्थौ. तस्मिन्नभुक्ते मातापितरौ दुःखितौ जातौ. ततः पद्मरथेन राज्ञा शिवकुमारस्य मित्रं दृढधर्मा श्राद्धः समाकारितः, तेन धर्मवता शिवः संबोधितो भोजितश्च. शिवकुमारेणोक्तं भो मित्र! भवदाग्रहादहं षष्ठपारणके आचामाम्लं करिष्ये. ततोऽसावीदृग्तपःप्रकाशी प्राशुकाशी व्रतस्थो व्रतीव गृहे तस्थौ. दृढधर्ममित्रेण शुश्रूषितो द्वादशवर्षांते भावमुनिर्व्यूढसंयमः शिवकुमारो मृत्वा ब्रह्मदेवलोकेऽद्भुतद्युतिर्विद्युन्मालिनामा देवोऽभूत. इत्युक्तौ तृतीयचतुर्थभवौ.

अन्यदा राजगृहे पुरे श्रीवीरः समवासार्षीत्. तस्मिन समये सुरकृतसमवसरणे सर्वे सुराः सुरेश्वराश्च समाजग्मुः. एवं तस्यां पर्षदि स विद्युन्माल्यपि स्वामिनं नंतुं तदागमत्. शक्रादिसुरचक्रेषु

काचेष्विव मणिरिव स शुशुभे. तस्य तेजो रूपं कांतिं च समालोक्य श्रेणिकेन पृष्टो भगवान्, हे भगवन्! अनेन पूर्वभवे किं सुकृतं कृतं? स्वाम्याहानेन विद्युन्मालिदेवेन शिवकुमारभवे षष्टपारणके आचामाम्लानि चक्रिरे. एवं द्वादशवर्षाणि तपस्तप्त्वैष विद्युन्माली देवो जातः. पुनः श्रेणिकेनोक्तमेष देव इतश्च्युत्वा कुत्रोत्पत्स्यते? भगवानाह इतः सप्तमेऽह्न्यत्रैव पुरे ऋषभश्रेष्ठिगृहे धारिणीनाम्न्यास्तत्पत्न्याः कुक्षौ स पुत्रत्वेनोत्पत्स्यते. स च जंबूनामास्यामवसर्पिण्यां चरमकेवली भविष्यति. तत श्रुत्वा विद्युन्मालिनः कांता देव्यो विनयावनम्रास्तीर्थेशं श्रीवीरमिति पप्रच्छुः, हे भगवन्नस्माकं का गतिर्भाविनी? स्वामिनोक्तं यूयमितश्च्युत्वा राजगृहनगरे श्रेष्ठिकुलेषु पुत्रीत्वेनोत्पन्ना अस्यैव योषितो भविष्यथ, इति भगवद्वाक्यं श्रुत्वा विद्युन्माली तत्प्रियाश्च मुदमापन्नाः स्वस्थाने जग्मुः. अथ जंबूस्वामिनः पंचमो भवः कथ्यते—

पुरात्रैव नगरे वैभारगिरिकानने सुधर्मस्वामिनं नंतुमृषभदत्तश्रेष्ठिप्रिया धारिणी गताभूत्. सिद्धपुत्रो विद्याधरोऽपि सुधर्मस्वामिनं नंतुं समागतः, स्वामिना देशनायां सिद्धपुत्रपुरतो जंबूवृक्षस्य स्वरूपं प्रतिपादितं. ततो जंबूविचारांते गणेश्वरं धारिणी पप्रच्छ हे भगवन्! मम कुक्षौ तनयः

कथं भविष्यतीति कथ्यतां? भगवान् श्रीसुधर्मा तत्सावद्यप्रश्नतो मौनमाश्रितः, तदानीं शीलधारिणीं धारिणींप्रति सिद्धपुत्रो विद्याधरो बभाषे हे शीलवति! साधवो नैतत्सावद्यं कथयंति, तस्मादहं भवत्यै सुतार्थं कथयामि, त्वमष्टोत्तरशतमाचामाम्लानां कुरु? तदंते च सिंहस्वप्नेन सूचितस्तव पुत्रो भावी, सिद्धपुत्रविद्याधरादिति श्रुत्वा हर्षनिर्भरा धारिणी गृहे गत्वा जिनपूजापूर्वकमाचामाम्लानि व्यधात्. अथ विद्युन्माली देवो ब्रह्मदेवलोकाच्च्युत्वा धारिणीकुक्षाववातरत, सिंहस्वप्नोपसूचितं सुतं पूर्णे मासि धारिणी प्रासूत, असौ जंबूविचारस्य प्रक्रमेऽभूदिति हेतोः पितृभ्यां तस्य जंबूकुमार इति नाम विदधे, स कुमारः क्रमेण वर्धमानः सप्ताष्टवर्षीयो जातः. इतश्च विद्युन्मालिदेवस्य पूर्वभवप्रियाणामुत्पत्तिः कथ्यते, यथा—

राजगृहे नगरे समुद्रस्य व्यवहारिणः पद्मावत्यां पत्न्यां जाता समुद्रश्रीनाम्नी प्रथमा १, तस्मिन्नेव नगरे समुद्रदत्तस्य व्यवहारिणः पत्न्यां कमलमालायां जाता पद्मश्रीनाम्नी द्वितीया २, तत्रैव नगरे सागरदत्तस्य स्त्रियां विजयश्रियां जाता पद्मसेनानाम्नी तृतीया ३, तत्रैव नगरे कुबेरदत्तस्य पत्न्यां जयश्रियां जाता कनकसेनेति नाम्नी चतुर्थी ४. एताश्चतस्रो विद्युन्मालिसुरस्यात्यंतवल्लभाः

पूर्वप्रिया ज्ञेयाः. चतस्रश्चापरा यथा —तत्रैव नगरे कुबेरसेनस्य पत्न्यां कमलवत्यां जाता नभःसेनेतिनाम्नी पंचमी ५, तत्रैव नगरे श्रमणदत्तस्य श्रेष्ठिनः सुषेणाकुक्षिसंभूता कनकश्रीनाम्नी, ६, तत्रैव नगरे सुषेणस्य चारुमतीप्रियाजाता कमलवत्याख्या सप्तमी ७, तत्रैव नगरे वसुपालश्रेष्ठिनो जयसेनापत्न्या जाता जयश्रीनाम्न्यष्टमी ८. एता अष्टावपि दिक्पालराजधानीनामष्टौ मूर्तिमत्यः श्रिय इव शोभंते. तासां पितृभिः स ऋषभदत्तः प्रोक्तो यथा भो श्रेष्ठिंस्तव सुतोऽस्माकं पुत्रीणां पाणिग्रहणं करोतु. श्रेष्ठिनापि तत्प्रतिपन्नं.

इतश्च महामोहरजोमारुतः श्रीसुधर्मस्वामी पंचमगणाधिपो वैभारगिरिकाननं समायासीत. तस्मिन् समये भगवत्समागमनं श्रुत्वा पुरलोका नगरान्निर्गताः. श्रीसुधर्मगणेशं सकलसाधुगुणसंपूर्णं समागतं ज्ञात्वा भगवंतं नमस्कर्तुं जंबूकुमारोऽपि रथारूढस्तत्रागात्. रथादवतीर्णोऽसौ स्वामिनं विधिवन्नत्वा पुरो निषण्णः. तदानीं जंबूवपुर्देशनांबुभिः सिंचन्निव मुनींदुर्देशनां प्रारेभे—संबुज्झह किं न बुज्झह । संबोही खलु पेच दुल्लहा ॥ तो हु वणमंति राईओ । नो सुलहं पुणरावि जीवियं ॥ १ ॥ डहरा बुड्ढा य पासहा । गब्भहावि चयंति माणवा ॥ से ण जह वट्टयं हरे । एवं आउ-

स्कयंमि तुट्टइ ॥ २ ॥ तथा—काले पाठादिभिर्ज्ञान—मशंकाद्यैश्च दर्शनं ॥ मूलोत्तरगुणैः शुद्धै—श्चारित्रं भजते यतिः ॥ ३ ॥ इति रत्नत्रयाल्लेभे । हतमोहतमोभरैः ॥ चिराद् गृहस्थैः सद्योऽपि । यतिभिः शाश्वतं पदं ॥ ४ ॥ ये तु मोहग्रहग्रस्ताः । प्रमादस्य वशंवदाः ॥ अशरण्यैर्भवारण्ये । भ्रमितव्यं सदापि तैः ॥ ५ ॥ इत्यादिश्रीसुधर्मस्वामिदेशनासलिलैर्भवानलतापं त्यजन् जंबूकुमारो मुनींद्रं नत्वैवं जगाद. हे प्रभोऽहं मातापित्रोरनुज्ञां लात्वा भवदंतिके संयमं ग्रहिष्यामि. स्वामिनोक्तं भो महाभाग! धर्मे मा प्रमादीः, यथासुखं तथा कर्तव्यं. धर्मे च विलंबो न कार्यः. ततो भगवंतं नत्वा रथारूढोऽसौ प्रत्यावृत्तो यावन्नगरद्वारे समायातस्तावत्पुरगोपुरोपरि नानाप्रकारयंत्रगोलकशिलादि दृष्ट्वा स चिंतयत्यहो कदाचिदेतन्मम मस्तकोपरि पतति तदा निरालंबस्य मृतस्य मे का गतिः स्यात्? अतोऽहं द्रुतं प्रत्यावृत्य संयमं लास्यामि. ततोऽसौ सत्वरं गृहे समागत्य मातापितरौ नत्वा कंबुलसद्यशा एवं जगाद, हे मातापितरावहं श्रीसुधर्मस्वाम्यंतिके धर्मं श्रुत्वा भवाद्भीतो यावज्जीवं चतुर्थव्रतमंगीकृत्य प्रीतश्च भवदंतिके दीक्षानुज्ञार्थमागतोऽस्मि. अतो युवां मम दीक्षानुज्ञां यच्छतं? यथाहं श्रीसुधर्मस्वाम्यंतिके दीक्षामंगीकृत्यात्मानं साधयामि, तदा मातापितरौ क-

एवमपूर्वं पुत्रवचनं श्रुत्वा मूर्छामवापतुः, लब्धसंज्ञौ च सुतस्य व्रतनिषेधाय पितरावूचतुः हे पुत्र!
त्वमस्माकमेक एव पुत्रोऽस्मत्कुलदीपः, हे वत्स! त्वमस्माकं बहुमनोरथशतोद्भूतोऽतिदुष्करैरपि त-
पोभिरलभ्य उदुंबरपुष्पवद् दुःप्रापः. अतोऽस्माकं मनोरथमहीरुहं मा मूलादुन्मूलय? कियंति व-
र्षाणि गृहे स्थित्वा पाणिग्रहणं कृत्वा च वर्धितकुलसंतानः कार्यनिरपेक्षः पुत्रार्पितगृहभारो व्रतायो-
द्यतो भवेः. तथा पूर्वं व्यवहारिभिर्दत्ता अष्टौ बालिकाः साभिलाषुकाः सोत्साहा वर्तंते, तासां म-
नोरथं पूरयित्वा यथेप्सितं कुरु? पित्रोरिमां वाचं श्रुत्वापि व्रतनिश्चितमना उचितज्ञः स कुमार एवं
वचोऽभ्यधात्. हे तात! हे मातर्मया ब्रह्मव्रतमंगीकृतं, तदहं नान्यथा करिष्ये, तथापि युष्मत्कुतूह-
लाय विवाहस्य कार्यं कृत्वा द्वितीयेऽह्नि व्रतं ग्रहीष्यामि. मातापितृभ्यामुक्तं हे वत्स! आसामष्टाना-
मपि नारीणां पाणिग्रहणमनोरथान् पूरयित्वा यथेप्सितं समाचरेः, पाणिग्रहणानंतरं च यद्भावि त-
द्भविष्यति. इत्यालोच्य ताभ्यां पितृभ्यां तासां पाणिग्रहोपक्रमो हर्षेणाकारि. अथ कुमारेण तासां
ज्ञापितः स्वव्रतमनोरथो यदहं प्रातर्दीक्षां गृहीष्ये. तदा ताः प्रोचुर्हे स्वामिन्निहापि परलोकेऽपि चा-
स्माकं त्वमेव गतिः.

ततः सर्वे लोकाः स्वजनाश्चैवं कथयंति धन्याः खल्वेताः कन्यका या एवंविधं भावसंयमिनमपि पतिमंगीकुर्वंति. अथ सर्वेषां बंधूनामुपरोधेन चेतसो विरोधेन च सुलभे कुमारस्ताः कुमारिका उपयेमे. गतस्पृहो जंबूकुमारस्ताभिर्महेलाभिः सार्धं वासवेश्मनि स्थितस्ता नारीर्धर्मोपदेशैर्बोधयामास. इतश्च विंध्याद्रौ जयपुरं नाम नगरमस्ति, तन्नगराधीशो जयनामा राजास्ति, सोऽन्यदा कनिष्टं पुत्रं परं गुणैर्ज्येष्टं युवराजपदे न्यधात. ततस्तस्य ज्येष्टपुत्रः प्रभवो क्रुधा ज्वलन्नपमानतो गृहान्निर्गत्य चौरपंचशतीयुक्तश्चौरिकां कुर्वन् लोकानामुपद्रवं करोति, परं स केनापि वारयितुं न शक्यते. सोऽतिक्रूरस्तालोद्घाटिन्यवस्वापिनीभ्यां विद्याभ्यां युक्तोऽस्ति, अतस्तं को निवारयेत? इतस्तस्य कुमारस्य सदने श्वशुरगृहादायातैकादशैकादशकांचनकोट्यो जनकार्पिताश्चैकादशकांचनकोट्यः, एवं नवनवतिकांचनकोट्यः संति. तद्वार्तां श्रुत्वा निशायां प्रभवश्चौरपंचशतीयुक्तः कुमारस्य गृहे समागत्यावस्वापिनीं विद्यां मुक्तवान्. तया सर्वोऽपि लोको निद्रामुद्रितो जातः. ततस्तालोद्घाटिन्या विद्यया तेन सर्वाण्यपि तालकान्युद्घाटितानि. ततोऽसौ गृहाधीशवत्पंचशतीचौरयुक्तो गृहमध्ये प्रविष्टः. तत्र गृहांतर्मेरुकूटवत्कांचनकूटं दृष्ट्वा हर्षिताश्चौराः, परमेकं प्रभवं विना ते सर्वेऽपि चौराः स्तं-

म्भिताः. ततः प्रभवेणोक्तं भोः सेवकाः! यूयं त्वरायुक्ता भवत? परं तान् मौनपरान् ज्ञात्वा प्रभवो दध्यौ, नूनमेते चौराः केनापि स्तंभिताः संति, अथ पश्यामि यत्केनैते स्तंभिताः? इतस्ततः पश्यन् स उपरितनभूम्यां गतः. तत्रैकस्मिन् गवाक्षे स्थितं स्त्रीभिः परिवृतं कुमारं दृष्ट्वा कथयति भो महात्मन् मया तव विद्या दृष्टा, त्वं धन्यो य एवं विद्यां जानासि, तव विद्ययाहं तुष्टः, अहं तव तालोद्घाटिन्यवस्वापिनीविद्याद्वयं ददामि, त्वं च ममैकां स्तंभिनीं विद्यां देहि? तदा कुमारो बभाषे भो प्रभव! नैषा विद्या किंतु कुविद्या, विद्या तु सा कथ्यते यया संसारं छित्वा मोक्षसाधनं भवति. अहं तु प्रभाते सुधर्मस्वाम्यंतिके व्रतं गृहीष्यामि. तदा प्रभवेणोक्तं भो कुमार! भवानेताभिः स्त्रीभिः सार्धं भोगान् कथं न भुनक्ति? किं व्रताय यतते? कुतः पुनरीदृशी ऋद्धिर्वारंवारं लभ्यते? तथा पुनर्मानुष्यं दुर्लभं वर्तते, अत एताभिः सार्धं भोगान् भुंक्ष्व? यया गृहे गृहे पुनर्भिक्षायै भ्राम्यते तया दीक्षया किं? अतो भोगान् मा त्याक्षीः. तत् श्रुत्वा कुमारो बभाषे भो प्रभव! राज्यस्त्रीभोगसौख्यान्यापातमधुराणि परिणामे तु दुःखदायीनि, अतो मया त्यज्यंते. एवं बहूक्तयुक्त्या प्रतिबोधितः स प्रभवो वैराग्यमापन्नः. ततस्ताः स्त्रियोऽपि तथैव धर्मोपदेशदानेन कुमारेण प्रतिबो-

धिताः. अत्र प्रभवजंबूकुमारस्त्रीकथिताः कथास्तु जंबूचरित्रादवसेयाः, ग्रंथविस्तारभयान्नात्र लिखिताः. ततस्ता जंबूकुमारस्त्रियो वैराग्यरसार्द्रीभूतचेतसोऽपि जंबूकुमारमिदमभ्यधुः, हे स्वामिन्नापातदुःखदैर्विपाकविरसैर्विषयैरेतावंतं कालं वयं वंचिताः, त्वया प्राणप्रियेण विवाहसंबंधादयमुद्धृताः स्मः, अथास्माभिरपि तवैव पंथाश्रितः, यतस्त्वमस्माकं शिवपत्तनं सहैव नेतासि.

अथ जंबूं नत्वा प्रभवो बभाषे, हे महाभाग! भवद्गुणैराकृष्टोऽहं स्वजनानापृच्छ्य त्वामनुयास्यामि. स बभाषे भो महाभाग! धर्मे मा प्रमादीः, गृहे गत्वा त्वरितमागच्छेः, तत् श्रुत्वा प्रभवो गृहं गतः. कुमारस्य सदारस्य दीक्षानिश्चयं ज्ञात्वा तस्य माता च पिता च, स्त्रीणां मातरः पितरश्चेति सर्वेऽपि दीक्षोद्यता तमनुयियासवो जाताः. अथ कुमारोऽपि प्रियान्वितो जिनपूजनं विधाय, तथा संघं विधिवदभ्यर्च्य, स्वजनादिकान् सन्मान्य सुगंधपानीयेन कृतमंगलस्नानः शरीरं चंदनेनानुलिप्य श्वेतवासांसि परिधाय स्वर्णरत्नालंकारसंभारैर्भूषितविग्रहोऽसमैः कुसुमैर्यशोभिरिवोज्ज्वलैरलंकृतः, कर्पूरागुरुधूपैर्धूपितो दानैर्दीनानानंदयंस्तूर्यनिर्घोषैर्मुखरितांबरो नरसहस्रवाह्यां शिबिकामधिरूढवान्. जंबूवृक्षवासिना जन्मांतरसौहार्दधारिणानादृतेन देवेन कृतनिष्क्रमणोत्सवः स्फुरज्जयज

याराववप्रतिध्वनितदिङ्मुखो मंगलनादैः समाकृष्टपौरजनः, शिरसि धृतातपत्रः श्वेतचामरैर्वीजितदेहः, समस्तैर्नागरिकैः स्तूयमानयशाः सुधर्मस्वामिपादाब्जरेणुपूतं वनमीयिवान्. ततः शिबिकातः समुत्तीर्य श्रीजंबूः कुटुंबपरिवारपरिवृतः पंचमगणभृन्नाथं नत्वा करयामलं शिरसि धृत्वैवं व्यजिज्ञपत, हे नाथ! संसारसागरोत्तरणकर्णधार! हे मुनीश्वर! मां सकुटुंबं चारित्रयानपात्रेण तारय? ततः स्वपाणिपद्मेन भगवान् श्रीसुधर्मागणभृत् स्वजनैरन्वितं जंबूकुमारमदीक्षयत्.

प्रभवोऽप्यन्यदा समभ्येत्य सुधर्मस्वामिसन्निधौ भावशत्रुप्रतिक्षेपदक्षो दीक्षामुपाददे. गणधारिधुरीणेन श्रीसुधर्मस्वामिना तदानीं प्रभवो मुनिर्जंबूशिष्यः कृतः. सोऽपि तस्य पादांबुजं मधुकरवत् सेवतेस्म. एकदा जंबूप्रभृतिशिष्यैः परिवृतः सुधर्मगणधरो गजकलभैः परिवृतो गजपतिरिव पृथ्वीं पावयंश्चंपानगर्यां पूर्णभद्रनाम्नि चैत्ये समागमत्. उद्यानपालकेन वर्धितः श्रेणिकपुत्रः कोणिकनृपस्तस्मै दानं दत्वा वंदनाय विनिर्ययौ, अन्येऽपि तदीयपादारविंदरेणवो जनाः समाययुः, एवं सकलसंघमध्यस्थितः कोणिको नृपो गणभृच्चरणांबुजासन्नासीनो भगवद्देशनामशृणोत्. भगवद्देशनांते कोणिको राजा जंबूस्वामिनं संवीक्ष्य पंचमगणधारिणं पृच्छतिस्म, यथा—अपृच्छच्च प्रभो कोऽयं।

द्विपेष्वेव सुरद्विपः ॥ सुधांशुरिव धिष्ण्येषु । त्रिदिवाद्रिरिवाद्रिषु ॥ १ ॥ शालिधान्यमिवान्नेषु । कल्पद्रुम इव द्रुषु ॥ अंभोधिष्विव दुग्धाब्धि—श्चंपकः कुसुमेष्विव ॥ २ ॥ हिरण्यमिव लोहेषु । रसेष्विव सुधारसः ॥ अद्भुतस्तव शिष्येषु । सविशेषः प्रदीप्यते ॥ ३ ॥ त्रिभिर्विशेषकं ॥ ततः श्रीगणींद्रेण जंबूस्वामिनः प्राक्तपोर्जितं रूपं सौभाग्यमंत्यकेवलित्वं च कोणिकाग्रे सर्वं निवेदितं, कोणिकस्तद्भगवद्वाक्यं श्रुत्वा हर्षनिर्भरश्चंपां पुरीं ययौ. ततः श्रीसुधर्मा गणाधिपो जंबूप्रभृतिशिष्यैः परिवृतस्ततो निर्ययौ.

ततः श्रीवीरनिर्वाणाद्विंशतिवर्षेषु व्यतीतेषु स्वपदे गच्छभारधुरंधरं श्रीजंबूस्वामिनमाधाय श्रीसुधर्मगणाधीशो निःश्रेयसः श्रियं शिश्रिये. ततः श्रीजंबूः स्वदेशनांशुभिर्भव्यकमलावलीर्दिवाकर इव मह्यां प्रतिबोधयामास. ततश्च श्रीवीरनिर्वाणाद्वर्षचतुःषष्ट्यां गतायां श्रीजंबूस्वामिना पूर्णायुषा स्वपदे प्रभवप्रभुर्गच्छेशश्चक्रे. मनःपरावधी श्रेण्यौ । पुलाकाहारकौ शिवं ॥ कल्पस्त्रिसंयमी ज्ञानं । नासन् जंबूमुनेरनु ॥ १ ॥ जीयात्काचिद्विश्वजैत्री धरित्र्यां । सौभाग्यश्रीरद्भुता जंबूनाम्नः ॥ लब्धे यस्मिन् केवलज्ञानलक्ष्मी—र्धन्यंमन्या नान्यमभ्याजगाम ॥ २ ॥ जंबूभगवतः सर्वायुर्यथा—सोल-

स पुण गिहवासे । वीसा छउमढ जंबूसामिस्स ॥ केवली चउआलीसा । असीइवरिसाणि सव्वाउ ॥ १ ॥ अनेन यदुक्तं प्राग्मूलगाथायां 'दट्ठुं जंबूरूवं । विह्मिउ कोणिउ राया ॥' इति निरूपितं. जंबूस्वामिपंचनवकथानकं समाप्तं; अथोत्कृष्टतपोवर्णनमाह—

॥ मूलम् ॥—जिणकप्पं १ पडिहारिय २ । पडिमापडिवन्न ३ छंदयाइणं ४ ॥ सोउण नवसरूवं । को अन्नो वहउ तं गव्वं ॥ १७ ॥ व्याख्या—जिनकल्पं १ परिहारविशुद्धचारित्रिकाः २, प्रतिमाप्रतिपन्नकाः ३, यथाछंदिकाः ४, इत्यादिसाधूनां तपःस्वरूपं श्रुत्वान्यः कस्तपोविषये गर्वं वहतु, अपि तु कोऽपि नेति गाथार्थः. जिनकल्पिकादितपःस्वरूपं च प्रवचनसारोद्धारसूत्रतः किंचिल्लिख्यते, यथा—जिणकप्पियावि तहियं । किंचि तिगिछंपि ते न कारिंति ॥ सयमेव निरप्पेक्खा । करेंति सव्वंपि परिकम्मं ॥ १ ॥ इक्किकपडिग्गहगा ॥ सप्पाउरणा हवंति थेराउ ॥ जेसिं पुण जिणकप्पे । नवणंमि वच्छपायाइं ॥ ३ ॥ गणमाणउ जहन्ना । तिन्नि गणा सयग सोय उक्कोसा ॥ पुरिसपमाणे पन्नरस । सहस्सा चेव उक्कोसा ॥४॥ इति जिनकल्पिकाः. परिहारविशुद्धितपः—एगोवाणायरिउ । चउरो तविणो अ तदगुणा चउरो ॥ मुणिनवगं निग्गछइ । परिहारविसुद्धिचरणाइं ।१।

चरिहारियाण उ तवो । जहन्नमज्झो तहेव उक्कोसो ॥ सी उण्हवासकाले । भणिओ धीरेहिं पत्तेयं ॥ २ ॥ तत्थ जहन्नो गिम्हे । चउत्थं छट्ठं तु होइ मज्झिमओ ॥ अट्ठममिहमुक्कोसो । एत्तो सिसिरे-पच्चक्कामि ॥ ३ ॥ सिसिरे उ जहन्नतवो । छट्ठमदसम चरिमगो होइ ॥ वासासु अट्ठमाइ । बारसपज्जंतगो नेओ ॥ ५ ॥ एवं छम्मासतवं । चरिउं परिहारिया अणुचरंति ॥ अणुचरगे परिहारियपयट्ठिए जाव छम्मासा ॥ ६ ॥ कप्पट्ठिओवि एवं । छम्मासतवं करेइ सेसाओ ॥ अणुपरिहारियभावं । वयंति कप्पट्ठियतवं च ॥ ७ ॥ एवं सो अट्ठारस—मासपमाणो य वन्निओ कप्पो ॥ संखेवओ विसेसो । विसेससुत्ताओ नायव्वो ॥ ८ ॥ जम्मेण तीसवरिसो । परियाए इगुणवीसवरिसो य ॥ परिहारपट्ठवीओ । कप्पइ मणुओ हुएरिसहो ॥ ९ ॥ कप्पसम्मत्तीइ सयं । जिणकप्प वा उविंति गच्छं वा ॥ पडिवज्जमाणगा पुण । जिणसग्गासे पवज्जंति ॥ १० ॥ तित्थयरसमीवा । सेवगस्स पासेव नो व अन्नस्स ॥ एएसिं जं चरणं । परिहारविसुद्धिगं तं तु ॥ ११ ॥ इति परिहारविशुद्धितपः ॥ अथ प्रतिमास्वरूपं कथ्यते, यथा—मासाइसत्तंता । पढमा बिइय तइय सत्तराइ दिणा ॥ अहराइ एगराइ । भिक्खुप्परिमाण बारसगं ॥ १ ॥ पडिवज्जइ एआओ । संघयणधिइ जुओ महासत्तो ॥ पडि

माओ नाविअप्पा । सम्मं गुरुणा अणुन्नाओ ॥ २ ॥ गच्छेच्चिय निम्माओ । जा पुन्ना दसभवे असं-
पुन्ना ॥ नवमस्स तइय वत्थुं । होइ जहन्नो सुयाहिगओ ॥ ३ ॥ वोसठचत्तदेहो । उवसग्गासहो
जहेव जिणकप्पी ॥ एसण अभिग्गहिया । भत्तं च अलेवडं तस्स ॥ ४ ॥ गच्छाविणिक्कमित्ता । प-
डिवज्जइ मासियं महापडिमं ॥ दत्तेगभोयणस्स । पाणस्स तत्थ एगभवे ॥ ५ ॥ जत्थत्थमेइ सू-
रो । न तओ ठाणा पयंमि संचलइ ॥ नो एगराइवासी । एगं च दुगं च अन्नाए ॥ ६ ॥ दुठाणहत्थि-
माइण । नो भएणं पयंपि ओसरइ ॥ इयमाइ नियमसेवी । विहरइ जा खंडिओ मासो ॥ ७ ॥
पच्छा गच्छमुवेइ । एव दुमासी तिमासी जा सत्त ॥ णवरं दत्ती वड्ढइ । जा सत्तओ सत्तमासीए ॥
॥ ८ ॥ तत्तो य अठमीए । भवइ इह पढमसत्तराइंदी ॥ तीए चउत्थचउत्थेण । पाणएणं अह
विसेसो ॥ ९ ॥ उत्ताणगपासल्ली । नेसज्जि वावि ठाण ठाइत्ता ॥ सहइ उवसग्गे घोरे । दव्वाइ
तत्थ अविकंपो ॥ १० ॥ दोचावि एरिसच्चिय । वहिया गामाइयाण नवरं तु ॥ उक्कडलगंडसाई । दं-
डायय उच्चठाइत्ता ॥ ११ ॥ तच्चावि एरिसच्चिय । नवरं ठाणं तु तस्स गोदोही ॥ वीरासणमहवावि ।
ठाइज्जा अंबखुज्जोवा ॥ १२ ॥ एमेव अहोराइ । छठं भत्तं अपाणगं नवरं ॥ गामनगराण बहिया

। वग्घारिय पाणिए ठाणं ॥ १३ ॥ एमेव एगराई । अठमभत्तेण ठाण बाहिरओ ॥ ईसी पब्भारगओ । अणिमिसनयणेगदिठिए ॥ १४ ॥ साहट्टु दोवि पाए । वाघारिय पाणि ठायए ठाणं ॥ वाघारि-लंबिअभुओ । अंते समयाइ लद्धित्ति ॥ १५ ॥ इति साधुप्रतिमास्वरूपं निरूपितं. अथ यथालंदि-स्वरूपं कथ्यते—

लंदं तु होइ कालो । सो पुण उक्कोसमज्झिमजहन्नो ॥ उदउल्लकरो जाविह । सुक्कइ सो हो इ उ जहन्नो ॥ १ ॥ उक्कोसपुव्वकोडी । मज्झे पुण हुंति णेगठाणाइं ॥ इत्थ पुण पंचरत्तं । उक्कोसं होइ अहलंदं ॥ २ ॥ जम्हाउ पंचरत्तं । चरंति तम्हा उ हुंति अहलंदी ॥ पंचेव होइ गच्छे । तेसिं उक्कोसपरिमाणो ॥ ३ ॥ जा चेव य जिणकप्पे । मेरा सा चेव लंदियाणं तु ॥ नाणत्तं पुण सुत्ते । भिक्खायरिमासकप्पे य ॥ ४ ॥ अहलंदियाण गच्छे । अपडिबद्धाण जह जिणाणं तु ॥ नवरं काल-विसेसो । उउवासे पणगचउमासे ॥ ५ ॥ गच्छे पडिबद्धाणं । अहलंदीणं तु अह पुण विसेसो ॥ उग्गह जो तेसिं तु । सो आयरियाण आभवइ ॥ ६ ॥ एगवसहिए पणगं । छव्वीहीउ य गामि कुव्वंति ॥ दिवसे दिवसे अन्नं । अडंति वीही सुनियमेण ॥ ७ ॥ पडिबद्धाइयरेवि हु । इक्किक्का

ते जिणा य थेरा य ॥ अद्धस्स उद्देसंमि य । असमत्ते तेसिं पडिबद्धो ॥ ८ ॥ लगाइसुत्तरंते । ता पडिवज्जित्तु खित्तबाहिठिया ॥ गिण्हंति जं अगहियं । तत्थ य गंतूण आयरिओ ॥ ९ ॥ तेसिं पयं पयच्छइ । खेत्तं इताण तेसिमे दोसा ॥ वंदंतमवंदंते । लोगंमि होइ परिवाओ ॥ १० ॥ न तरेज्जा जई गंतुं । आयरिओ ताहि एइसो चेव ॥ अंतरपल्लिं पडिवसइ । गामवसहिं य वसहिं वा ॥ ११ ॥ तीएइ य परिभोगे । ते वंदंते न वंदइ सोओ ॥ तं घेत्तुमपडिबद्धा । ताहि जहिच्छाए विहरंति ॥ १२ ॥ जिणकप्पिया य तहियं । किंचितिगच्छंपि ते न कारिंति ॥ निप्पडिकम्मसरीरा । अविअच्छिमलंपि न वणिंति ॥ १३ ॥ थेराणं नाणत्तं । अतरत्तं अप्पिणंति गच्छस्स ॥ तेवि असे फासुएणं । करिंति सव्वंपि परिकम्मं ॥ १४ ॥ इक्किकपरिग्गहगा । सप्पाउरणा हवंति थेराओ ॥ जेसिं पुण जिणकप्पे । भयएसिं वत्थपायाइं ॥ १५ ॥ गणमाणओ जहन्ना । तिन्नि गणसयगसोय उक्कोसा ॥ पुरिसपमाणे पनरस । सहस्स सो चेव उक्कोसा ॥ १६ ॥ पुव्वपरिवन्नगाणवि । उक्कोसजहन्नसोपरिमाणं ॥ कोडिपहुत्तं भणियं । होइ अहालंदियाणं तु ॥ १७ ॥ पडिवज्जमाणगा वा । इक्का इह वेजऊण पक्खेवि ॥ होंति जहन्ना एए । सयग्ग सो चेव उक्कोसा ॥ १८ ॥

इति यथालंदिस्वरूपं समाप्तं. ॥ अथ बलदेवतपोवर्णनमाह—

॥ मूलम् ॥—मासद्धमासखवणो । बलभद्दो रूववंपि हु विरत्तो ॥ सो जयउ अरणवासी । पडि-
बोहियसावयसहस्सो ॥ १८ ॥ व्याख्या—बलभद्रो रूपवानपि हु निश्चितं विरक्तः संसारात्, स जयतु.
कथंभूतः? मासार्धमासक्षपको मासार्धमासोपवासीति यावत्, पुनः किंलक्षणः? अरण्यवासी, पुनः किं०?
प्रतिबोधितश्वापदसहस्रः, प्रतिबोधितानि श्वापदसहस्राणि येन स तथेति गाथार्थः, ॥ १८ ॥ विस्त-
रार्थस्तु कथानकादवसेयः, सा कथा तु शीलकुलके पूर्वं प्रतिपादिता, तथापि किंचिदुच्यते—

जंबूद्वीपे भरतक्षेत्रे सौराष्ट्रदेशे द्वारावती नाम नगरी, सा स्वर्णप्राकारशोभिता, स्वर्णमयगृह-
श्रेणिशोभिता, भूभामिनीभालस्थलतिलकायमानास्ति, तस्यां नगर्यां कृष्णवासुदेवो राजा बलभद्र-
सहितो राज्यं पालयन् विचरति. एवं तस्य कृष्णवासुदेवस्य राज्यं कुर्वतः कियंति वर्षशतानि गता-
नि. अथैकस्मिन् समये भगवान् श्रीनेमिजिनः पृथिव्यां विहरन् स्वदेशनाजलैर्जगज्जंतुमहीरुहान्
सिंचन् द्वारावत्या नगर्या आसन्ने रैवतकपर्वते नंदनवननाम्न्युद्याने सुरप्रियनाम्नि यक्षायतने स-
मवसृतः, उद्यानपालकैर्वर्धितः श्रीकृष्णस्तस्य दानं दत्वा सपरिकरो श्रीनेमिजिनवंदनाय विनिर्ययौ

तत्र गत्वा स्वामिनं नत्वा स तस्य पुरो निषण्णः, स्वामिना देशना दत्ता, यथा—विलंबो नैव कर्तव्य
। आयुर्याति दिने दिने ॥ न करोति यमः शांतिं । धर्मस्य त्वरिता गतिः ॥ १ ॥ नार्थाः क्लेश-
शतार्जिता न च पिता मातापि नो वत्सला । भार्या न प्रतिरूपयौवनवती नैकोदरा भ्रातरः ॥ वि-
श्वासैकरसानुकूलरचिता नानावयस्याः सुता । जीवस्यापि भवंति मृत्युसमये त्राणं न चालंबनं ॥
॥ २ ॥ अस्मिन्नपारे संसारे । पारावारे शरीरिणां ॥ चिंतामणिरिव श्रीमान् । जिनधर्मः सुदुर्लभः
॥ ३ ॥ देशनांते माधवः श्रीनेमिनाथमपृच्छन्मे मृत्युः कुत्र कदा वा भविष्यति? तदा भगवान् पा-
ह भो जनार्दन! शृणु?—यदा बलदेवेन सह त्वं दक्षिणाभिमुखो युधिष्ठिरप्रभृतीनां पंचानां पांड-
वानां पार्श्वे मिलनार्थं पांडुमथुरायां प्रस्थितस्तदा कौशांबिकानने वटवृक्षस्याधः पृथ्वीशिलापट्टके
पीतवस्त्राच्छादितः स्वकबांधवजराकुमारेण कोदंडविप्रमुक्तेन तीक्ष्णेन बाणेन वामे पादे विद्धः सन्
कालमासे कालं कृत्वा तृतीयायां वालुकाप्रभायां पृथिव्यामुज्ज्वलके नरकावासे नारकत्वेनोत्पत्स्यसे.
ततः श्रीकृष्णोऽर्हतोऽरिष्टनेमे रंतिके एतत् श्रुत्वोपहतमनाः संकल्पपर आर्तध्यानं ध्यायंस्तस्थौ, तं त-
थाविधं दृष्ट्वा पुनर्भगवानाह भोऽच्युत! त्वमार्तध्यानं मा ध्यायय? त्वं वालुकाप्रभानरकपृथ्वीत उज्ज्वल-

कान्नरकावासादुध्धृत्यास्मिन्नेव जंबूद्वीपे भरतक्षेत्रे आगामिन्यामुत्सर्पिण्यां पुंड्रकेषु जनपदेषु शतद्वारपुरे नगरे द्वादशोऽममनामा तीर्थनाथो भविष्यसि, तत्र त्वं बहूनि वर्षाणि केवलिपर्यायं पालयित्वा मोक्षं यास्यसि. ततः श्रीकृष्णः श्रीनेमिनाथोक्तमेतत् श्रुत्वा हर्षप्रकर्षवशाद्बलादतिभुजास्फोटं सिंहनादं च करोति. ततः स भगवंतं नेमिजिनं वंदित्वा स्वकीयं च हस्तिरत्नं समारुह्य द्वारावत्यां स्वगृहे समागतः, ततः स सभायां सिंहासने उपविश्य सेवकानाहूयैवमवादीत्, भो सेवका द्वारिकायां नगर्यां त्रिकचतुष्कचत्वरेषु बाढस्वरेणैवंविधामाघोषणामघोषयत यथा भो भो लोकाः कृष्णद्वैपायनसुरकोपाद् द्वारिकाया विनाशो भविष्यति. अतो द्वारवत्यां नगर्यां युवराजो वेश्वरो वा तलवरो वा माटंबिको वा कौटुंबिको वेभ्यो वा श्रेष्ठी वा सेनापतिर्वा सार्थवाहो वा देवी वा कुमारो वा कुमारी वार्हतोऽरिष्टनेमेरंतिके यः कोऽपि प्रव्रजति, तस्य श्रीकृष्णवासुदेव आदेशं ददाति, तथा यः कोऽपि स्थविरो स्थविरी वा भवति तस्य निर्वाहं करोति, तथा तस्य महत्याऋद्ध्या सत्कारसमुदयेन स्वयमेव निष्क्रमणोत्सवं करोति. ततस्ते कौटुंबिकपुरुषा द्वारिकायां द्वित्रिवारमाघोषणां कृत्वा कृष्णस्याग्रे गत्वा कृष्णाज्ञां प्रत्यर्पयंति, तद्वचनं श्रुत्वा पद्मावत्यादयोऽष्टौ कृष्णस्याग्रमहिष्यो भगवतो

तिके धर्मं श्रुत्वा कृष्णाज्ञया तेन कृतनिष्क्रमणमहोत्सवा दीक्षां जगृहुः. तेषाममूनि नामानि, यथा—पउमावई १ य गोरी २। गंधारी ३ सुलक्कणा ४ सुसीमा ५ ॥ जंबूवई ६ सच्चन्नामा ७। रूप्पिणी ८ किण्हअमहिसीउ ॥ १ ॥ स्वामिना श्रीनेमिनाथेन तासामष्टानामपि दीक्षां दत्वा ताः साध्व्य आर्ययक्षिण्याः प्रवर्तिन्याः शिक्षायै ददिरे. ततः सा यक्षिणी तासामष्टानामपि ग्रहणासेवनाख्ये शिक्षे शिक्षयति. ततस्ताः सर्वाः साध्व्यः पद्मावत्यादयो यक्षिण्या अंतिके एकादशांगान्यधीत्य षष्टाष्टमाद्यनेकतपांसि तप्त्वा बहुप्रतिपूर्णानि विंशतिवर्षाणि श्रामण्यपर्यायं पालयित्वा मासिक्या संलेखनया मोक्षं जग्मुः. एवमनेके श्रेष्टिसेनापतिसार्थवाहादयो भाविनं द्वारिकादाहं श्रुत्वा वैराग्याद्दीक्षां लात्वा मोक्षं जग्मुः. एवं जिनोक्ते काले तेन पापिना कृष्णद्वैपायनसुरेण द्वारिकादाहे कृते रोहिणीदेवक्यौ वसुदेवश्चेति त्रीन् जनान् रथारूढान् कृत्वा कृष्णबलभद्रौ यावन्नगरगोपुराभिमुखं समायातौ, तावद्रथतुरगौ पदमपि गंतु न शक्नुवंतौ. ततः कृष्णबलभद्रौ स्वयमेव रथं समाक्रष्टुं लग्नौ, तौ नगरगोपुरं यावदागतौ तावदंतरिक्षस्थेन द्वैपायनदेवेनोक्तं भो रामकृष्णौ युवां मुधा प्रयासं कुरुथः, अहं भवंतौ विना कमपि न मोक्ष्ये, इत्युक्त्वा तेन रोहिणीदेवकीवसुदेवोपरि ज्वलंती

प्रतोलीर्निपातिता, तया प्रतोल्या ते त्रयोऽपि मृत्वा देवत्वं गताः.

अथ तौ रामकृष्णौ द्वारिकातो निर्गतौ शरीरादात्मनाविवेकको, कस्मिंश्चिद्गिरिशिखरे गतौ, तत्र स्थितौ तौ तां नगरीं ज्वलंतीं षण्मासान् यावद्व्यलोकयतः. ततस्तस्यां भूमौ सागरेण विलुप्तं. ततस्तौ रामकृष्णौ तत्स्थानान्निर्गत्य क्रमेण कौशांबीकानने गतौ, तत्रैकस्य वटस्याधः पृथिवीशिलापट्टके निषण्णौ. तदा तृषाक्रांतः कृष्णो बलभद्रं ययाचे, भो बांधव! मां तृषा बाधते, तस्मान्मदर्थं जलमानय? ततो बलदेवो वनदेवान् संस्मृत्य कृष्णं बांधवं तान् समर्प्य तत्र शिलायां सुप्तमेकाकिनं मुक्त्वा स्वयमेकाकी जलमानेतुं जलाश्रयं गतः, अहो विधिर्बलीयान्, यः कृष्णो पूर्वं देवसहस्रैर्वेष्टितोऽभूत्तथा राज्ञीसहस्रैः परिवृतोऽभूत्तथा दासदासीभिरावृतोऽभूत्सोऽयं श्रीकृष्णः सांप्रतं महावने एकस्य वटवृक्षस्याध एकाकी शिलायां सुप्तो वर्तते, धिग्संसारस्वरूपं! यतः—ही संसारसहावं। चरियं नेहाणुरायरत्तावि ॥ जे पुव्वन्हे दिट्ठा। ते अवरन्हे न दीसंति ॥ १ ॥ अथ तस्यां शिलायां सुप्तस्य श्रीकृष्णस्य निद्रा समागता. इतश्च यो जराकुमारः पूर्वं द्वारिकातो निर्गतो द्वादशवर्षाणि यावद्वनाद्वनं बभ्राम सोऽकस्माद्दैववशात् कथमपि तत्रागतः, हरिं शिलायां सुप्तं पीतांबरावृतं निद्रामुपा-

गतं निरीक्ष्य स्वर्णमृगभ्रांत्या तेन जराकुमारेण तस्योपरि तीक्ष्णो बाणो मुक्तः, तेन बाणेन वामपादतले विद्धो जागरितो जनार्दन एवमवादीत्–कोऽसौ मोऽप्रार्थ्यको यो मां सुप्तं निद्रावशमुपगतं तीक्ष्णेन बाणेन हंति? यः कोऽपि वीरमानी स्ववीरत्वं मन्यते स मम पुरो भूत्वा स्वं वीरत्वं दर्शयतु? तद्धरिणोक्तं श्रुत्वा जराकुमारः श्रीकृष्णं ज्ञात्वात्मानं निंदन् द्वादशवर्षाणि वने भ्रमणं वृथा कथयंस्त्वरितं तत्र समागतः, बंधोश्चरणयोर्निपतितः, तदा श्रीकृष्णेन स बाहुभ्यां धृत्वा भृशं समालिंगितः, ततस्तेन पृष्टो द्वारिकावृत्तांतो हरिणा मूलादारभ्य सर्वोऽपि निवेदितः तद्धरिणोक्तं श्रुत्वा जराकुमारेण भृशं रुदितं, तदा हरिणोक्तं हे बंधो! भगवता श्रीनेमिनाथेन यदुक्तं तज्जातं, किमत्र शोचनं! यद्भावि तद्भवति, नात्र विचारहेतुः. हरिणेत्याद्युक्त्वा तोषितो जराकुमारः, भाषितश्च भो बांधव ममेदं कौस्तुभरत्नं त्वं गृहाण? तद् गृहीत्वा पांडुमथुरायां गत्वैतत्सकलमपि वृत्तांतं पांडवानामग्रे निवेदयेः, एतदलंकारं च दर्शयेर्यथा तेषामभिज्ञानं दृष्ट्वा निश्चयो भवति, तथा तव राज्यादिकं किंचिद्ददाति, यदि त्वमितो न यास्यसि तदा बलभद्रस्त्वां निश्चयेन हनिष्यति. तत् श्रुत्वा भीतो जराकुमारो रुदन् शीघ्रं पांडुमथुरांप्रति चलितः.

अथ श्रीकृष्णो बाणोद्धरणं विधाय व्रणे पट्टबंधं च कृत्वैवं दध्यौ, धन्यास्ते मम बांधवाः पुत्राश्च ये सर्वसंगपरित्यागं कृत्वा मोहमल्लं वशीकृत्य मोक्षं जग्मुः. अहं पुनरधन्यो यः संसारसागरे मग्नः स्वकृतकर्मणेदृशीं दशां प्राप्तः. एवंविधया लेश्यया तृतीयायां नरकपृथिव्यां गंतुं न शक्यते, अतो विधिना तस्य कृष्णस्य लेश्यापरावर्तो विहितः, तेन प्राणांतसमये हरिश्चिंतयामास यथाहो पापिना द्वैपायनसुरेण किमकार्यं कृतं? एवंविधोऽप्यहं यदि तं पापिनं सुराधमं कथमपि पश्यामि तर्हि निश्चयेन तं हत्वा यमातिथिं कृत्वा वैरनिर्यातनं करोमीति ध्यायन्नप्रत्याख्यानकं क्रोधमनंतानुबंधित्वेन परिणमय्य निधनं गतः. एवं स मृत्वा वालुकाप्रभायां नरकपृथिव्यामुज्ज्वलके नरकावासे नारकत्वेनोत्पन्नः. अहो कर्मणां गतिः! एवंविधः पुमाननया रीत्या मृत्वा नरके याति.

इतश्च जलभाजने नीरं नीत्वा तत्र समागतो बलदेवः, तेन संभाषितो बांधवो हे हरे समानीतं मया शीतलं जलं, भाजनं करे कृत्वा पिब? एवमुक्तोऽपि हरिर्यदा प्रत्युत्तरं न ददाति, तदा बलभद्रेण चिंतितं किं कारणं? मम बंधोरीदृशी निद्रा कदापि न स्यात्. ततो रामेण वस्त्रमपावृत्य विलोकितं, हरिर्मृतो दृष्टः, ततो भृशं विलपितं बलभद्रेण. ततः श्रीकृष्णशरीरं स्कंधे कृत्वा मोहन-

स्तस्मिन् वने बलभद्र इतस्ततो बभ्राम. एवं स षण्मासान् यावद्वनाद्वनं बभ्राम. अत्र विशेषो ग्रंथांतराद् ज्ञेयः. तस्मिन् समयेऽवधिज्ञानेन ज्ञात्वा सिद्धार्थनाम्ना देवेन देवलोकात्समागत्य बलभद्रो बोधितः, भो बलभद्र! जिनेंद्रवचः स्मृतिमानय? व्रतं कुरु? सांप्रतं तव व्रतावसरोऽस्ति, धीरत्वमवलंबय? ततस्ताभ्यां तद्धरेः कलेवरं चंदनादिभिः पूजयित्वा गोशीर्षचंदनचितां विरच्य हरेरग्निसंस्कारः कृतः. इतश्च तत्र कश्चिच्चारणर्षिः समागतः, तदानीं बलदेवस्तं नत्वा तस्यांतिके निविष्टः, तदा स मुनिर्बलभद्रं बभाषेऽहं त्रिभुवनस्वामिना श्रीनेमिजिनेन तव बोधाय प्रेषितोऽत्र समागतः, तद्वाक्यं श्रुत्वा बलभद्रो हरेर्गुणान् संस्मृत्य तस्य मुनेः पुरतो भृशं रुरोद, यथा—मनः शून्यं दिशः शून्याः । सर्वं शून्यं त्वया विना ॥ हा वत्सवत्सल क्वासि । देहि प्रतिवचो मम ॥ १ ॥ इत्यादि रुदंतं बलदेवं निवार्य मुनिरवदद् हे बलभद्रास्मिन् संसारे स्त्रियः कामबंधुसंगमोत्सवा इत्यादि सर्वं संपातमनोरमं, परं विपाकविरसं, यतः—जरा लुनाति लावण्यं । तारुण्योद्यानतस्करी ॥ कालः कपिरिवादत्ते । देहिनां जीवितं फलं ॥ १ ॥ संपत्तौ च विपत्तौ च । कालः कलयति प्रजाः ॥ वृथा हर्षविषादाभ्यां । परः परवशो जनः ॥ २ ॥ अर्हद्धर्मसुधाकुंडे । स्नातो जातोऽसि पावनः ॥ ४ ॥ मा विषाद

निषादस्या—निषादस्य वशो भव ॥ ३ ॥ भो राम सावधानो भव? संसारासारतां विभावय? ध· र्मे मतिं कुरु? अथ तव शोकैरलं, मोक्षदायिनीं दीक्षामंगीकुरु? तच्चारणर्षिवचनं श्रुत्वा बलभद्रः सिद्धार्थकृतनिष्क्रमणोत्सवस्तन्मुनिसमीपे संयममगृहीत्. ततः स साधुर्बलभद्रमुनेर्ग्रहणासेवने शि· क्षे शिक्षयित्वा स्वस्थाने गतः. अथ बलभद्रो महामुनिर्मासक्षपणपारणे क्वापि पुरेऽविशत्, तत्र गच्छन् सार्भकया कूपकंठस्थया कयाचित् स्त्रिया सोऽदर्शि, तया बलभद्रमुनिरूपं विलोकयंत्या त· द्रूपमोहितया कुंभस्थाने र्भिभस्य गले रज्जुरबध्यत, तं च कूपे क्षेप्तुकामां समवलोक्य राममुनि· नाभाणि हे सुलोचने लोचनाभ्यामवलोकय? घटस्थाने दवरकं दत्वा बालं किं कूपेऽवतारयसि? ततः सा सावधाना जाता, बलभद्रेण मुनिना चिंतितं धिग्मे रूपमनर्थकारि, अतोऽहमद्यप्रभृति क्वापि पुरादिषु भिक्षार्थं न प्रवेक्ष्यामि, वनमध्ये दारुदारिजनात्सार्थवाहाद्वा भिक्षां याचयिष्यामीति निश्चित्य स्वयं वने गतो बलभद्रः, स च तुंगीपर्वतशिखरे शरीरनिरपेक्षो महातपस्तेपे, काष्टाहारिद- त्तैः प्राशुकैरन्नपानैश्च प्राणधारणं चक्रे, तेऽपि काष्टफलादिहारिणः पुरुषाः स्वस्वमहीभृतां पुरो गत्वैवं कथयामासुरस्मिन् वने कश्चिन्नरो रूपनिर्जितमन्मथो महत्तपश्चरति. ततस्ते नृपतय एवं दध्युः, नू·

नमेष कश्चित्पुमांस्तपः कुर्वाणो मंत्रं जपति, तज्जापित्वा चास्मद्राज्यान्यसौ गृहीष्यति. तत एवं चिंतयित्वा ते सर्वेऽपि राजानः संभूय स्वस्वसैन्यपरिवृताः श्रीराममुनिसमीपं युगपत्समाजग्मुः, तदा तस्य मुनेः संनिहितः सिद्धार्थदेवो वैयावृत्त्यार्थं भयंकरान् सहस्रशः सिंहान् विचक्रे. तान् दृष्ट्वा ते राजानो भीताः संतस्तं मुनिं नत्वा यथागतास्तथागुः. तदादितस्तस्य बलभद्रमुनेर्नृसिंह इति ख्यातिरभूत्. इतश्च वने तस्य मुनेर्धर्मोपदेशश्रवणतो व्याघ्रसिंहादयः शांतिमासदन्, तथा केचन पशवः श्राद्धनामाश्रयन्, केचन सम्यक्त्वं प्रापुः, अपरे भद्रकतां प्रपेदिरे, इतरे प्रतिमां प्रापुः, अन्येऽनशनं व्यधुः, केचन मांसाहारमुचोऽभवन्, केचन च धर्मरुचो बभूवुः, एवं सर्वेऽपि परस्परं निर्मत्सरा बलभद्रमुनेर्निकटवर्तिनो बभूवुः. इतश्च तत्रैको मृगः प्राग्भवसंबंधजातजातिस्मरस्तस्य मुनेः शिष्यवत्सेवां करोति, काष्ठहारिणो जनान् मृग्यमाण इतस्ततश्च वने भ्राम्यति, यदि कांश्चित्पुरुषान् स पश्यति, तदा बलभद्रमुनेः समीपे समागत्य स भिक्षाग्रहणाय संज्ञां कृत्वा तेषां पार्श्वे याति, तेषामपि संज्ञया ज्ञापयति. ततो बलभद्रमुनिस्तेभ्यः काष्ठहारफलाहारकेभ्यः पारणकदिने कल्पनीयमाहारमादाय पारणकं करोति, एवं च कालो याति. एवं दीक्षाग्रहणदिनादारभ्य शतवर्षं यावद्बलदेवे-

न मुनिना भूयांसि तपांसि कृतानि. यथा—सढिं मासा सड्ढिं । पक्खा चत्तारि चाउमासीउं ॥ जे·
णणसणेण विहिया । बलभद्दरिसिं नमंसामि ॥ १ ॥ एकदा केऽपि रथकारका एकेन महता रथ·
कारेण सह यत्र वने बलदेवो महामुनिस्तिष्ठति तस्मिन् वने समागताः, ते रथकारास्तत्रानेकान्
महावृक्षांश्छिछिदुः, ततो भोजनावसरे समायाते तान् वृक्षांश्छेदितांस्तथैव त्यक्त्वा सर्वेऽपि भोजन·
सामग्रीकरणे सज्जा जाताः. अत्रांतरे स कुरंगस्तान् सूत्रधारान् दृष्ट्वा सार्थमध्ये प्लुतस्ततो भ्रांत्वा
पश्यतिस्म. ततः स बलभद्रांतिके गत्वा संज्ञया ज्ञापयामास. ततः स मुनिर्ध्यानं पारयित्वा मास·
क्षपणपारणे मृगदर्शितमार्गस्तत्रागमत. ततः स रथकारनाथस्तं महामुनिं दृष्ट्वा हर्षरोमांचितदेहः
त्रिःप्रदक्षिणीकृत्य पंचांगस्पृष्टभूतलो मुनिं प्रणमति, मुनिस्तस्य धर्माशिषं ददाति. रथकारश्चैवं वक्ति,
यथा—तं वीक्ष्य विस्मितो दध्या—वग्रणी रथकारिणां ॥ अहो मुनिः कुतोऽमुत्र । मरौ कल्पतरु·
र्यथा ॥ १ ॥ अहो ध्यानमहो रूप—महो क्षांतिरहो शमः ॥ ममाद्य सफलश्चाभू—देतेनातिथि·
ना जनुः ॥ २ ॥ अज्ज कयत्थो जम्मो । अज्ज कयत्थं च जीवियं मज्झ ॥ जेण तुह दंसणामय–
रसेण सित्ताइं नयणाइं ॥ ३ ॥ एवं बलभद्रमुनिं वर्णयन् समुत्कंठितमानसो भावशुद्ध्या स रथका·

राग्रणी राममहामुनये भिक्षामुपनिनाय. तदा रामो दध्यावसौ महान् श्रद्धावान् दृश्यते, स्वर्गफल-निबंधनां मे भिक्षां प्रयच्छति, अतोऽस्य भिक्षां गृहीत्वैनं रथकारकमनुगृह्णामि, एनं च तारयामीति धिया भैक्ष्यमाददे. ततो दानं दत्वा सूत्रधारो दध्यौ, यथा—धन्योऽहं कृतपुण्योऽहं । निस्तीर्णोऽहं भवार्णवात् ॥ येनाद्य त्वं मया दृष्टो । घोरेऽस्मिन् कानने वरे ॥ १ ॥ तदानीं स कुरंग ऊर्ध्वाननो बाष्पाहतदृग्युगलो रामं रथकारं च समवलोक्येति ध्यातवान्—धन्य एष महामुनिर्योऽस्मिन् महा-कानने रथकारं तारयितुं दानमादातुमुद्यतो वर्तते, धन्येभ्योऽप्ययं रथकारको धन्यो य एनं महामु-निं भक्त्या प्रतिलाभयति, अहमधन्यो यस्तिर्यग्भवेन दूषितः किमपि पुण्यं कर्तुं न शक्नोमि, यतः—न दीक्षाग्रहणे साधो—र्भिक्षादाने न च प्रभुः ॥ एकोऽहं मंदभाग्योऽस्मि । धिग्मां पशुतयाहतं ॥ १ ॥ एवं स मृगो भावनां यावद्भावयति तावत्तेषां त्रयाणां साधुरथकारकमृगाणामुपरि वातो-र्मिप्रेरितोऽर्धछिन्नः पादपः पतितः, तेन त्रयोऽपि मृत्वा ब्रह्मलोके पद्मोत्तरविमाने देवत्वेनोत्पन्नाः. इत्थं संयमसाम्राज्यं । कृत्वा वर्षशतं परं ॥ बलदेवो ययौ ब्रह्म—लोके पद्मोत्तरालये ॥ १ ॥ इति बल-देवमहामुनिकथानकं समाप्तं. ॥ अथ विष्णुकुमारतपोलब्धिमाह—

॥ मूलम् ॥—थरहरियधरं डलहलिय-सायरं चलियसयलकुलसेलं ॥ जमकासि जए विण्हु । संघकए तं तवस्स फलं ॥ १७ ॥ व्याख्या—नवमचक्रवर्तिपद्मभ्राता विष्णुकुमारो महामुनिः संघकृते संघवैयावृत्त्यार्थं यज्जगद्विश्वं, द्वितीयार्थे सप्तमी, एवंविधमकार्षीत्, कीदृशं? 'थरहरियधरं' देशत्वात्कंपिता धरा पृथिवी यत्र तत्तथा, पुनः कीदृशं? 'डलहलियसायरं' डलहलियेत्यपि देशत्वात् क्षुभिताः सागरा यत्र तत्तथा, पुनः कीदृशं? चलितसकलकुलशैलं, चलिताः क्षोभं प्राप्ताः सकलाः समग्राः कुलशैलाः कुलपर्वता यत्र तत्तथा, तत्सर्वं तपसः फलं ज्ञेयमिति गाथार्थः ॥ १७ ॥ विस्तरार्थस्तु कथानकादवसेयः, तत्कथा चेयं, यथा—

अस्मिन् जंबूद्वीपे भारते वर्षे कुरुजंगलदेशे स्वामिश्रीऋषभदेवपौत्रो हस्ती. तन्नाम्ना स्थापितं पुरं हस्तिनापुरं नाम नगरं, तत्रर्षभस्वामिवंशोत्पन्नः पद्मोत्तरो नाम राजास्ति. तस्य ज्वालानाममहादेव्यस्ति, सा परमश्राविका जिनधर्मभाविका चास्ति, तस्या उदरे सिंहस्वप्नसूचितो विष्णुकुमारो नाम पुत्रो जातः, तथा पुनरपि तस्या उदरे चतुर्दशमहास्वप्नसूचितो महापद्मो नाम द्वितीयः पुत्रो जातः, तौ द्वावपि पुत्रौ क्रमेण वर्धितौ देहोपचयेन कलाकलापेन च कुशलौ जातौ. तयोर्मध्ये वि:

शेषतः कलाशालिनं महापद्मं विज्ञाय पद्मोत्तरेण राज्ञा महापद्मो लघुपुत्रो युवराजपदे स्थापितः. इतश्चोज्जयिन्यां नगर्यां श्रीधर्मो नाम राजा, तस्य राज्ञो नमुचिनामा मंत्री, तस्यामुज्जयिन्यामन्यदा श्रीमुनिसुव्रतस्वामिशिष्यः शोभनव्रतः सुव्रतो नामाचार्यो बहुशिष्यपरिवृतस्तत्र समवसृतः, तदा तस्य महामुनेर्वंदनार्थं लोको निजनिजविभूत्या यातिस्म, तस्मिन् समये प्रासादगवाक्षस्थेन श्रीधर्मेण राज्ञा नमुचिमंत्री पृष्टो भो मंत्रिन्नेते लोका अकालयात्रायां कुत्र यांति? ततो नमुचिमंत्रिणा भणितं हे देवात्र नगरोद्याने केऽपि श्रमणाः समायाताः, तेषां ये भक्तास्ते वंदनार्थं यांति, तत् श्रुत्वा राज्ञोक्तं वयमपि तत्र यामः, ततो नमुचिमंत्री बभाषे स्वामिन्! यद्येवं तर्हि भवता मध्यस्थेन भाव्यं यतोऽहं तेन मुनिना सार्धं वादं कृत्वा तं निरुत्तरीकुर्वे, तर्ह्यहं भवन्मंत्री नमुचिः, इत्युक्त्वा स मंत्री राज्ञा सार्धं तत्र गतः, साधवो वंदिताः. ततो नमुचिर्बभाषे भोः प्रव्रजितक! यदि त्वं किंचिद्धर्मस्य तत्वं जानासि तर्हि त्वं ब्रूहि१ यदि न जानासि तर्हि मौनमाधाय स्थेयं. एतद्वचनं श्रुत्वा क्रुद्धोऽयमिति ज्ञात्वा सुव्रतगुरुस्ते सर्वेऽपि साधवाश्च मौनमाधाय तस्थुः. ततो नमुची रुष्टो वक्ति किमेष बलिवर्दो जानाति? ततः सूरिणोक्तं भो नमुचे यदि तव रोचते तर्ह्यस्माभिः किंचिदुच्यते, तत् श्रुत्वा चैकेन वि-

चक्रणक्षुल्लकेनोक्तं हे भगवन्नहमेवैनं नमुचिं निराकरोमि, यूयं तूष्णीका भवत? इत्युक्त्वा स क्षुल्लको तेन नमुचिना सार्धं विवादं कृत्वा तं निरुत्तरीचक्रे. ततः स नमुचिमंत्री तेन क्षुल्लकेन निराकृतो गुरोरुपरि बाढं प्रदेषमुद्वहन् स्वगृहं गतः, निशायां पुनः खड्गव्यग्रकरो गुरोर्हननार्थं तत्र समागतः, उद्घाटितखड्गः स यावद्गुरुं हंति, तावच्छासनदेवतया स्तंभितः. विभातायां विभावर्यां समागता राजादिलोकाः, तैः स निरीक्षितो धिक्कृतश्च. ततो देवतया मुक्तः समस्तलोकैर्निंदितो राज्ञा नगरान्निष्कासितः स नमुचिर्नृपादिलोकैरपमानितः कस्यापि स्वमास्यं दर्शयितुमक्षमो विलक्षीभूतस्तन्नगरान्निर्गत्य हस्तिनापुरं गत्वा महापद्मस्य युवराजस्य मंत्री जातः.

इतश्चावंत्यासन्नपल्ल्यां सिंहबलो नाम राजा कोट्टाधिपतिर्महापद्मस्य देशादिनाशं कृत्वा दुर्गं प्रविशति. ततो महापद्मेन रुष्टेन पृष्टो नमुचिमंत्री भो मंत्रिन् जानासि किंचिदुपायं सिंहबलग्रहणे? नमुचिनोक्तं हे राजन् जानाम्युपायं. महापद्मेन भणितं तर्हि त्वं तत्र गत्वा तं जित्वा बलाद्बध्ध्वा शीघ्रमत्रानय? ततो महापद्मादेशान्नमुचिस्तत्र गत्वा महदुपायं कृत्वा तं सिंहबलं जित्वा बध्ध्वा च महापद्मसमीपे समानयत्. ततस्तुष्टो महापद्मः कथयति मया तव वरो दत्तः, यत्तव रोचते तद्याच-

स्व? ततो नमुचिनोक्तं हे देव! सांप्रतं तव वरो न्यासीनवतु, यदाहं तं वरं मार्गयामि तदा दद्याः. एवं तस्य महापद्मस्य यौवराज्यं पालयतो दिनानि यांति. एकस्मिन् समये महापद्मजनन्या कारापितो जिनरथः, तथा महापद्मापरमात्रा लक्ष्मीवतीनाम्न्या मिथ्यादृष्ट्या कारापितो ब्रह्मरथः. ततो ज्वालादेव्या नणितः पद्मोत्तरो राजा यत्प्रथमं मम जिनरथो नगरे भ्रमतु. ततोऽपरया मिथ्यादृष्ट्या जैनधर्मप्रत्यनीकया लक्ष्मीवत्या प्रोक्तं यथा प्रथमं ब्रह्मरथो नगर्यां भ्रमतु. एवं तयोर्द्वयोर्वाचं श्रुत्वा राजा विषण्णः, पुनर्ज्वालादेव्या राज्ञोऽग्रे विज्ञप्तं यदि मम जैनरथो नगरे न भ्रमिष्यति तदा मेऽन्यजन्मनि नोजनं, लक्ष्मीवत्याप्येवं नणितं. ततो राज्ञा तौ द्वावपि रथौ भ्रमणान्निवारितौ, ततो महापद्मो ज्वालामात्रा कारापितं जैनरथं भ्रमणान्निवारितं वीक्ष्य शोकोद्विग्नां मातरं चालोक्य स शोकाक्रांतो एकाक्येव सुप्तेषु सकललोकेषु रजन्यां देशयात्रार्थं निर्ययौ, मार्गे गछन्नेकां महाटवीं प्रविष्टः, तस्यामटव्यां भ्रमन् महापद्म एकं तापसालयं प्राप, तत्र स्थितैस्तापसैरातिथ्यं कृत्वा स स्थापितः, सोऽपि सुखं स्वगृहवत्तत्र तस्थौ.

इतश्च चंपानगर्यां जनमेजयो नाम राजा परिवसति. स कालनाम्ना राज्ञा रुद्धः, ततस्तयोः सं

ग्रामो लग्नः, अवसरं लब्ध्वा सर्वोऽपि नागरिकलोकः प्रतिदिशं प्रणष्टः, राज्ञोंतःपुरमपि प्रणष्टं. एवं च राज्ये भग्ने प्रणष्टे सकललोके जनमेजयस्य राज्ञो भार्या नागवती मदनावल्या पुत्र्या समं पलायमाना समागता तं तापसाश्रमं, सा समाश्वासिता कुलपतिना, सा तत्र स्थिता च. तत्र तयोर्महापद्ममदनावल्योः परस्परमनुरागो जातः, तत्स्वरूपं ज्ञातं कुलपतिना, तेन विज्ञप्ता नागवती, तदा नागवत्या मदनावली भाषिता यथा हे पुत्रि किं न स्मरसि नैमित्तिकवचनं यथैषा मदनावली चक्रवर्तिनः प्रथमपत्नी भविष्यति? तर्हि त्वं यत्र तत्रानुरागं किं करोषि? कुलपतिना कुमारो विसर्जितः कथितश्च भो महात्मंस्त्वमितो यहि? किं तवात्र स्थितेन? तेनापि चिंतितमेतस्या मदनावल्याः समागमेनाहं समस्तभरताधिपो भूत्वा ग्रामनगरादिषु सर्वत्र जिनमंमिन्ततां पृथिवीं कारयिष्ये, इत्यादि मनोरथमालाकुलः कुमारस्तत्स्थानान्निर्गतः. ततः क्रमेण पृथिव्यां भ्रमन् प्राप्तः सिंधुनंदनं नाम नगरं, तत्र चोद्यानक्रीडार्थं निर्गता नरनार्यो विविधप्रकारैर्यथेष्टं क्रीडंतिस्म. इतश्च तस्मिन्नुद्याने उन्मूलितालानस्तंभो महसेनस्य राज्ञः प्रधानहस्ती सादिनं व्यापाद्य संप्राप्तस्तस्मिन् जनसमूहप्रत्यासन्ने. तदा ते लोका भीताः प्रतिदिशं प्रणष्टाः, परं सकलोऽपि प्रमदाजनः पलायितुमसमर्थस्तत्रै·

व स्थित, ततस्ताः स्त्रियो गजभीत्या रोदितुं लग्नाः, तदाऽदूरस्थितेन महापद्मकुमारेण तं प्रमदावर्गं तेन करिणा कदर्थ्यमानं दृष्ट्वा समुत्पन्नकरुणहृदयेन हस्तिसन्मुखं समागत्य प्रकर्षेणाक्रोशितः, करी वलितः कुमाराभिमुखं, तं करिराजं कुमाराभिमुखं प्रधावंतं वीक्ष्य ताः स्त्रियोऽप्येवं कथयितुं प्रवृत्ता हाहास्मदर्थे कृतोद्यम एष महानुभावो दुष्टेन करिणा मारयिष्यते. एवं कथयंत्यस्ताः स्त्रियः कुमाराभिमुखं निरीक्षमाणास्तस्थुः, ततस्तत्र मिलिता लोकाः कुमारं गजक्रीडाविचक्षणं दृष्ट्वा प्रशंसंति, सोऽपि गजक्रीडाविचक्षणो गजं वशीकर्तुं लग्नः, अत्रांतरे भृत्यसेवकसामंतैर्महसेनो राजा विज्ञप्तः, सोऽपि तत्र समागत्य कुमारं कथयति भो भो महात्मन् कुपितकृतांतस्येव दुष्टस्य करिराजस्य वशीकरणे मा साहसं कुरु? कुमारेणोक्तं हे महाराज विश्वस्तः सन् प्रेक्षस्व मम पराक्रमं? क्षणमात्रेणाहं तव पुरतो गजराजं वशीकरोमि. ततः स कुमारो गजेंद्रं क्रीडयितुं लग्नः, ततः करिराजं खेदयित्वोत्तरबद्धं वेष्टयित्वा गजाग्रे चिक्षेप. क्रोधारुणो गजो यावत्तं पुरुषभ्रांत्या दंतमुशलैः प्रहरति तावन्महापद्मकुमारो दंतयोः पादं दत्वा लाघवात्तं गजराजं समारुरोह, तावद्धिपालकैरंकुशोऽर्पितः, तेनांकुशेन तं मातंगं वशीकृत्य लोकानां साधुवादं शृण्वंस्तं गजपतिमालानस्तंभे बबंध. ततो राज्ञा चिं-

तितें नूनमेष महाकुलोत्पन्नो कश्चिद्राजपुत्रो वर्तते, विना राजपुत्रं नतादृशं सत्वं विज्ञानं रूपं च संभवति. ततो राज्ञा स स्वगृहमानीय कन्यानां शतेन सार्धं विवाहितः, ताभिः प्रियाभिः सार्धं विषयसुखं भुंजानस्य तस्य कोऽपि कालो गतः, तथापि तां मदनावलीं हृदयान्न मुमोच, योगी सध्यानासक्तः परमात्मानमिव. इतोऽन्यदा ताभिः समं विषयसुखै रंत्वा शय्यायां सुखसुप्तः स वेगवत्या विद्याधर्या वेगेनापहृतः, निद्राक्षयाज्जागरितः कुमारस्तां बभाषे हे सुंदरि! त्वं किं मां हरसि? तया भणितं भो महात्मन् सावधानो भूत्वा ममोक्तं शृणु? कुमारेणोक्तं कथय? ततः सा कथयति, यथा—

वैताढ्यपर्वते सूरोदयं नाम नगरमस्ति, तस्मिन्नगरे विद्याधराधिपतिरिंद्रधनुर्नामा राजास्ति, तस्य भार्या श्रीकांतानामपट्टदेव्यस्ति, तयोः पुत्री जयचंडानाम्नी, सा च पुरुषद्वेषिण्यस्ति, सा कथमपि वरं न वांछति. ततो राज्ञेंद्रधनुना सर्वेऽपि भरतनरेंद्राः पट्टे लिखित्वा तस्यै दर्शिताः, परं तस्याः कोऽपि वरो न रुरुचे. अथान्यदा तव रूपं पट्टे संलिख्य दर्शितं, ततस्तव रूपदर्शनानंतरमेव गृहीतकामावस्थया तयाहं भणिता यदि ममैष भर्ता न संपद्यते तदा मयावश्यमेव मरणं करणीयं, नात्र संदेहः, तथान्नजक्षणमप्यन्यजन्मनि. एष वृत्तांतो मया तस्य जनकजनन्योरग्रे निवेदितः, ताभ्यामहं तत्र

ह्वानकृते प्रेषिता, ततो मया राजपुत्र्या अग्रे तत्प्रोक्तं, तथा प्रतिज्ञा कृता यद्यदि तं महापद्मकुमारं त-
वातिप्रियमत्र नानयामि, तर्ह्यहं ज्वलितज्वलने निश्चितं प्रविशामि, संप्रति हे कुमार यथा मम मर-
णं न भवति तथा कुरु? ततः कुमारेणोक्तं शोभनं, तवेप्सितं भवतु. ततस्तया महापद्मकुमारो व्यो-
माध्वना समानीय सूरोदयनगरे आगता, तयेदमिंद्रधनुराजस्याग्रे निवेदितं, तेन महामहेन प्रवेशि-
तो नगरं, ततः सुदिवसे विद्याधराधिपेन जयचंद्राया निजपुत्र्याः पाणिग्रहणं कारितः, ततो राजपुत्र्या
वेगवती बहु सन्मानिता. एवं स कुमारः सर्वत्र लब्धजयः सौभाग्यैकनिधिः समुत्पन्नस्त्रीरत्नवर्जचतु-
र्दशरत्नो लब्धनवनिधिर्द्वात्रिंशत्सहस्रनरवरसंसेव्यमानपादपद्मः परिणीतैकोनचतुःषष्टिसहस्ररमणीकश्च-
तुरशीतिलक्षगजाश्वरथः षण्णवतिकोटिपदातिपरिवृतोऽनेकभांडागारसमृद्धः षट्खंडपृथ्वीप्रथितयशा नि-
जराज्ये प्रथितप्रतापो जातो नवमचक्रवर्ती, तथापि षट्खंडभरतराज्यं समृद्धमपि जनमेजयराजपुत्र्या
मदनावल्या रहितं सर्वं नीरसं मन्यते. अहो दुःसाध्यः कामातिरेकः! सोऽन्यदा कामाशाव्यथित-
स्तमाश्रमपदं गतः, तत्र तैस्तापसैः प्रवरपुष्पफलादिभिः सन्मानितः, तत्र जनमेजयेन राज्ञा महापद्म-
स्य राज्ञो मदनावली दत्ता, स्त्रीरत्नं महापद्मेन परिणीता. ततो महामहेन चक्रवर्त्यर्द्धिसमेतो बंदिज-

नैः स्तूयमानो हस्तिनापुरं नगरं प्रविष्टः, प्रणतौ तेन जनकजनन्यौ, तथैव वधूटिकाभिर्नतौ श्वशुरौ, ताभ्यामभिनंदिताः, ताः सर्वा अपि चक्रवर्तिना समं सुखं रेमिरे. एवं काले यात्येकस्मिन् दिने समवसृतः श्रीमुनिसुव्रतस्वामिशिष्यः सुव्रतो नाम सूरिः. उद्यानपालकैर्वर्धितः पद्मोत्तरो राजा तस्य यथेप्सितं दानं दत्वा गुरुवंदनाय सपरिवारो निर्ययौ, तेन राज्ञा वंदिता गुरवः, तैर्गुरुभिर्देशना दत्ता, यथा-संबुज्झह किं न बुज्झहि । संबोहि खलु पेच्च दुल्लहा ॥ नो एहवणमंतराइओ । न सुलहं पुणरावि जीवियं ॥ १ ॥ डहरा बुड्ढा य पासहा । गब्भत्थावि चयंति माणवा सेणे ॥ जह वट्टयं हरे । एवं आउक्खयम्मि तुट्टइ ॥ २ ॥ इत्यादिदेशनां श्रुत्वा राजा पद्मोत्तरः कथयति हे भगवन्नहं गृहे गत्वा राज्यं सुस्थं कृत्वा भगवदंतिके प्रव्रजिष्यामि. गुरुणोक्तं भो राजेंद्र धर्मे मा विलंबं विधेहि? ततो गुरुं नत्वा प्रविष्टो राजा हस्तिनापुरं, समाहूता मंत्रिणः प्रधानपुरुषाश्च, विष्णुकुमारमहापद्मावपि समाकारितौ, सर्वेषां पश्यतां प्रोक्तं भो भो सामंताः कुमारकाः शृण्वंतु मद्वचः, एतावंतं कालं भोगतृष्णया विषयैश्च वंचितेन मयाऽज्ञानवशतो गतोऽपि कालो न ज्ञातः, अतो मया श्रामण्यं नानुचेष्टितं, अथाहं विष्णुकुमारे ज्येष्ठपुत्रे राज्यं दत्वा संयमं गृहीष्ये, तदा विष्णुकुमारेणो·

क्तं हे तातालमिमैः किंपाकफलोपमैर्भोगैः. अहं त्वया सार्धं तपस्यामादास्ये, मम राज्येन सृतं. ततो राज्ञा विष्णुकुमारस्य संयमे निश्चयं ज्ञात्वा समाहूतो महापद्मः, उक्तं च हे पुत्र प्रतिपद्यस्व मम राज्यश्रियं, यथाहं प्रव्रज्यामंगीकरोमि, तदा तेन प्रोक्तं हे तात मम ज्येष्ठभ्रातरि राज्यमारोपय? राज्यार्हो विष्णुकुमारो मम सहोदरो वर्तते, अहं पुनस्तस्याज्ञया यौवराज्ये स्थितः संस्तस्य सेवैकलालसो भविष्यामि. पुनरुक्तं राज्ञा विष्णुकुमारस्य भो पुत्र राज्यं गृहाण? तदा तेनोक्तमहं संयमसाम्राजयश्रियं समादास्ये. ततो राज्ञा विष्णुकुमारस्य संयमे निश्चयं ज्ञात्वा शोभनदिवसे कृतो महापद्मस्य महर्ध्या राज्याभिषेकः. ततः पद्मोत्तरो राजा विष्णुकुमारेण सह श्रीसुव्रतसूरिसमीपे प्रव्रजितः. अथ महापद्मचक्री विख्यातशासनो जातः. अथ तौ रथावेतावंतं कालं तथैव स्थितावास्त. ततो महापद्मचक्रवर्तिना भ्रामितो निजजनन्याः सत्को जिनेंद्ररथः, कृतोन्नतिर्जिनशासनस्य. अथ तद्दिनादारभ्य बहवो लोका धर्मपरायणा जाताः. ततस्तेन चक्रवर्तिना सकलेऽपि भरतक्षेत्रे ग्रामाकरनगरारामवनादिषु कारितान्यनेककोटिलक्षप्रमितानि जिनभवनानि. अथ पद्मोत्तरमुनिरपि पालित-

रो महामुनिः संयमदिनादारभ्य महामनाः पृथिव्यां विहारनिरतो ज्ञानदर्शनचारित्रपालनतत्परो महदुग्रं तपस्तेपे. एवं तस्य विष्णुकुमारस्य बहूनि तपांसि तप्यमानस्याकाशगामिनी वैक्रियाणिमालघिमादयोऽनेका लब्धयः समुत्पन्नाः. अपि च—मेरुच्चतुंगदेहो। वच्चइ गयणंमि परिक्खनाहोव ॥ मयणुव्व रूववंते। बहुरूवो होइ तियसोव ॥ १ ॥

इतश्च ते सुव्रताचार्या बहुशिष्यपरिवारपरिवृता विहरन्त समागता हस्तिनापुरं, स्थिता उद्याने, उपलक्षितास्तेन निष्कारणवैरिणा नमुचिना. ततस्तेनावसरं ज्ञात्वा विज्ञप्तो महापद्मो राजा हे राजन्न मम पूर्वप्रतिपन्नं वरं देहि? ततो राज्ञोक्तं याचस्व यत्तव रोचते, तेनोक्तं वेदभणितेन विधिना यज्ञं करोमि, तस्मान्मे तव सकलराज्यं सप्तदिनानि देहि? ततो राज्ञा स चक्रवर्तित्वेऽभिषिक्तः, स षट्खंडाधिपो महाराजो जातः, महापद्मश्चांतःपुरे स्थितः. अथ नमुचिर्नगरान्निर्गत्य यज्ञकरणार्थं यज्ञपाटके समागत्य कपटेन दीक्षितो जातः, तस्य राज्येऽभिषिक्तत्वाच्च सर्वे लोका राजानश्च नवीनसाधुवर्धापनार्थमागताः. ते लोकास्तं नमुचिं नत्वा किंचिद्धनादिकं पुरो मुक्त्वा सर्वेऽपि स्वस्थानमगुः, अथ नमुचिप्रजापतिनोक्तं मम सेवार्थं सर्वे ब्राह्मणाः क्षत्रिया लिंगिनश्चागताः, परं श्वेतांबरा

मुनयः कुथं नागता इत्युक्त्वा सेवका भाषिता भोः सेवका द्रुतं तानाह्वयत? तैरपि तदैव सुव्रताचार्या-स्तत्र समानीताः, कथितं च तेषां नमुचिना भोः श्वेतांबरा यदा ब्राह्मणो वा क्षत्रियो वा राजा भवति तदा सर्वैरपि पाखंडिभिरागत्य स प्रणम्यते, यूयं मद्दर्शनार्थं कथं नागताः? मूढा अज्ञानिनश्च, यत एषा लोकस्थितिर्भवद्भिर्न ज्ञाता, तथा राज्ञा रक्षितानि तपोवनानि भवंति तद्यूयं न जानीथ? यूयं स्त-ब्धाः सर्वपाखंडपूरिता निर्मर्यादा मामपि निंदथ? अतो मम राज्यं मुक्त्वा यथेच्छया विचरत? यः को-ऽपि भवद्विष्यो मम नगरे मम देशे वा भ्रमिष्यति, स मम वध्यो नात्र संदेहः. ततो गुरुणोक्तं राजेंद्र भवान् सकलपृथ्वीशः, वयं कुत्र यामोऽस्माकं कुत्रापि स्थानं दर्शय? तत्र वयं यामस्तिष्ठामो वा. पूर्व-क्रोधवशात्पुनस्तेनोक्तं भो भोः पाखंडिन एतदर्थं भवद्भिर्न वाच्यं, यदि कोऽपि श्रमणः सप्तदिनांतः कुत्रापि प्रेक्षिष्ये तर्हि तं चौरवद्बद्ध्वा मारयिष्यामि, नात्र संदेहः. ततस्तद्वाक्यं श्रुत्वा गुरवः स्वस्था-नमागताः. ततः सूरीश्वरेण साधवः पृष्टा अथ किं कर्तव्यमेष नमुचिः कृत्रिमराजा जिनधर्मविरोधी साधुमत्सरी सर्वान् मुनीन् हंतुमिच्छति. अतो यत्कर्तव्यं तद्विचार्य वक्तव्यं. तस्मिन् समये केनचित्स्थ-

ष्णुकुमारस्तिष्ठति स च महापद्मचक्रिज्येष्ठभ्राता वर्तते, तद्वचनादेष नमुचिरुपशमिष्यति, अन्यः कोऽपीदृ· शो नास्ति यो नमुचिं शमयति. तदानीं गुरुणोक्तं भो एतेषां साधूनां मध्ये कोऽप्येवंविधः साधुरस्ति यो विष्णुकुमारं समानयति. तद्गुरोर्वाक्यं श्रुत्वैकेन मुनिनोक्तं मम तत्र मेरुमस्तके गमनशक्तिरस्ति, परमागमनशक्तिर्नास्ति तदा गुरुणोक्तं त्वां विष्णुकुमारोऽत्र समानेष्यति, त्वं तत्र गत्वा तं महामुनि मत्रानय? ततः स गुरुवचनं प्रतिपद्य गगनगामिन्या लब्ध्या समुत्पत्य क्षणमात्रेण प्राप्तो मेरुशिखरं, विष्णुकुमारेणागच्छन् दृष्टः, चिंतितं चाहो किंचिन्महत्संघकार्यं समुत्पन्नं, येनैष चतुर्मासकमध्ये समागतः. ततो विष्णुकुमारेण मुनिना वंदित्वा पृष्टं भो महामुने त्वं किमर्थमागतोऽसि? तेन सकलोऽपि वृत्तांतः कथितः, ततस्तस्य वाक्यं श्रुत्वा तत्क्षणादेव तं साधुं गृहित्वा प्रवृत्तः स गगनाध्वना गंतुं, क्षणेन समागतो गजपुरनगरे, वंदिता गुरवः, ततो गुरून्नत्वा गुर्वाज्ञया साधुसंघपरिवृतो गतो विष्णुकुमारो नमुचिदर्शनार्थं. नरेंद्रादिभिः सर्वैर्वंदितो विष्णुकुमारः. ततो विष्णुकुमारेण तस्यां सभायां धर्मकथा· पूर्वं विज्ञप्तो नमुचिर्भो महाराज तवाज्ञया वर्षारात्रं यावत्तिष्ठंतु मुनयोऽत्र, पुनर्मंत्रिणा भणितं कि· मत्र पुनरुक्तेन? अथ मम पंच दिनानि राज्यं वर्तते, पुनर्मुनिनोक्तं यद्येवं तर्हि तावंतं कालं मुन·

यः पत्तनबहिरुद्याने एव तिष्टंतु. ततः संजातामर्षेण नमुचिनोक्तं तिष्टतु तावन्नगरमुद्यानं, मम राज्येऽपि भवद्भिर्न स्थातव्यं, त्वरितं मम राज्यं मुक्त्वा यांतु, यदि जीवितेन कार्यं भवति. ततः समुत्पन्नकोपानलेन विष्णुकुमारेण मुनिनोक्तं तथापि त्रयाणां पदानां स्थानं देहि? तेनोक्तं तद्दत्तं, परं तद्बाह्यं कमपि मुनिं प्रेक्षिष्ये तमवश्यं लुप्तशीर्षं करिष्ये. ततो विष्णुकुमारमहामुनिः समुत्पन्नकोपानलो वर्धितुं प्रवृत्तः. योजनलक्षमानः स जातः. यतःसकयनाणावहरूवो। वड्ढंतो सो कमेण मेरुसमो ॥ जाओ जोयणलक्खो। अप्फालियफारफुक्कारो ॥ १ ॥ कमदद्दरं कुणंतो। गामागरनगरसायराईणं ॥ कंपावइ महीपीठं। ढालइ सिहरीण सिहराइं ॥ २ ॥ उब्बालइ जलनिहिणो। जोइसचक्कंपि दूरमोसारे ॥ खोभेइ देवदाणव—गणमेवं पलयकालोव ॥ ३ ॥ ततो विष्णुकुमार. पूर्वापरसमुद्रमध्ये पादौ दत्वा जंबूद्वीपं पादयोर्मध्ये कृत्वा तृतीयं पादं तस्य शिरसि दत्वा नमुचिं निधनं नीत्वा स्थितः. एवं विष्णुकुमारेण त्रिभुवनं क्षोभितं ज्ञात्वा शक्रेण मुनिकोपोपशमनार्थं सुरसंदर्यो गीतगानार्थं प्रेषिताः, तास्तस्य क्रोधोपशमनार्थं शांतरसमयानि गीतानि श्रावयंति, तथापि तस्य महामुनेः कोपोपशमो न जातः, एतद् वृत्तांतविज्ञातमात्रेण महापद्मचक्रवर्तिना भगवान् विष्णुकुमारः प्रसन्नीक्रियमाणोऽपि

क्रोधान्न विरराम, ततः शांतिनिमित्तं चतुर्भिर्देवनिकायैश्चतुर्विधसंघेन च क्रोधान्निवार्यमाणः कथमपि क्रोधान्निवृत्तः. तत्प्रभृति विष्णुकुमारो लोके त्रिविक्रम इति प्रसिद्धिमुपगतः. अथ समुपशांतकोपो भगवान् विष्णुकुमारो महामुनिरालोचितप्रतिक्रांतमात्रः शुद्धात्मा पृथिव्यां विचरति. भणितं च —आयरिए गच्छम्मि य । कुलगणसंघे य चेइयविणासे ॥ आलोइयपडिक्कंतो । सुद्धो जं निज्जराविउला ॥ १ ॥ अथ स विष्णुकुमारो निष्कलंकं श्रामण्यमनुपाल्य समुत्पन्नकेवलज्ञानो मोक्षमगमत्. महापद्मचक्रवर्त्यपि कियता कालेन संसारवासविरक्तः पुत्रे राज्यं न्यस्य सद्गुरुसमीपे निःक्रांतः, अधिगतसूत्रार्थो निरतीचारचारित्रपवित्रांगो धर्मोद्यमो विंशतिधनुरुच्छ्रितदेहस्त्रिंशद्वर्षसहस्राण्यायुः परिपाल्य केवलज्ञानमवाप्य मोक्षं गतः, तत्र महापद्मकथा प्रसंगतः प्रोक्ता, अनेन विष्णुकुमारकथाकीर्तनेन 'थरहरियधरं झलहलिय—सायरं चलियसयलकुलसेलं ॥' इति निरूपितं. इत्थं विष्णुकुमारस्य । दृष्टांतो दर्शितो मया ॥ तपसा लब्धिसंयुक्तो । योऽभूज्जगति विश्रुतः ॥ १ ॥ अथ तपसः सुखंप्रति कारणत्वं दर्शयन्नाह—

॥ मूलम् ॥—किं बहुना भणिएणं । जं कस्सवि कहवि कत्थवि सुहाइं ॥ दीसंति भुवणमज्झे ।

तत्थ तवो कारणं चेव ॥ २० ॥ व्याख्या—नो भविका बहुना भणितेन कथितेन किं? न किमपीत्यर्थः, यत्कस्यापि पुरुषस्य कथमपि महता कष्टेनापि कुत्रापि स्वदेशपरदेशादौ सुखानि बहूनि दृश्यंते भुवनमध्ये, तत्र तप एव कारणं ज्ञेयं, नान्यत्किमपीति गाथार्थः. ॥ २० ॥ इति श्रीमत्तपागच्छाधिराजभट्टारकश्रीविजयसेनसूरिराज्ये पंडितश्रीदेवविजयगणिविरचितायां कुलकवृत्तौ धर्मरत्नमंजूषानाम्न्यां तपोधर्मरूपस्तृतीयो वक्षस्कारः समाप्तः ॥ श्रीरस्तु ॥

———

अथ क्रमप्राप्तं भावनास्वरूपं धर्मचतुर्थभेदं प्रतिपादयन्नाह—

॥ मूलम् ॥—कमठासुरेण रइयंमि । भीसणे पलयतुल्लजलबोले ॥ भावण केवललच्छी-विवाहिओ जयउ पासजिणो ॥ १ ॥ व्याख्या—कमठासुरनाम्ना दैत्येन पूर्वभवनिःकारणवैरिणा भीषणे भयंकरे प्रलयकालतुल्यजलबोले कल्पांतकालजलपूरे रचिते सति प्राकृतत्वाद्विभक्तिलोपे 'भावणत्ति' भावनया केवललक्ष्मीं विवाहित उद्वाहितः, एवंविधः श्रीपार्श्वजिनो जयत्विति गाथार्थः. ॥ १ ॥ विस्तरार्थस्तु पार्श्वचरित्रादवगंतव्यः, तच्चरित्रं पूर्वभवाख्यानपूर्वकं समासतः किंचिदुच्यते, य-

था—विप्रः प्राग्मरुभूति १ रित्यथ करी २ देवोऽथ कल्पेऽष्टमे ३ । विद्याभृत्किरणाख्यदो ४ ऽच्युतसुरः ५ श्रीवज्रनाभो नृपः ६ ॥ ग्रैवेये त्रिदशो ७ ऽथ चक्रिनृपतिः श्रीस्वर्णबाहुस्ततः ८ । श्रीमत्प्राणतनिर्जरोऽथ ९ स विभुः श्रीपार्श्वनाथः १० श्रिये ॥ १ ॥ अथ प्रथमभववर्णनं कथ्यते—

अस्मिन् जंबूद्वीपे भरतक्षेत्रे पोतनपुरं नाम नगरं. तत्रारविंदो नाम राजा, तस्य श्रावको विश्वभूतिनाम्ना पुरोहितोऽभूत्, तस्यानुद्धरीनामभार्या, तयोर्द्वौ पुत्रावाद्यः कमठो द्वितीयश्च मरुभूतिः २, तयोः क्रमेण द्वे भार्ये, एका वरुणा, द्वितीया वसुंधरा च. अथ तयोर्द्वयोः पुत्रयोर्गृहभारधुरंधरयोर्गृहभारं विन्यस्य विश्वभूतिपुरोहितः स्वयं संसारपराङ्मुखो धर्मोद्यतः कालं कृत्वा देवलोकं गतः, तस्य भार्यानुद्धर्यपि पतिविरहे तपःशोषितशरीरा मृत्वा देवलोकं गता, कमठोऽपि कृतमातापितृकार्यो राज्ञा पितृपदे स्थापितः, स पुरोहितो जातः, मरुभूतिरपि प्रायेण ब्रह्मचारी धर्मकर्मण्युद्यतः सकलविद्यासंपूर्णो जातः. अन्यदा तस्य वसुंधरां भार्यां मनोहरां यौवनस्थां च दृष्ट्वा कमठस्य चित्तं चलितं, प्रवृत्तस्तया सह विषयवासनया जल्पितुं, सापि कामनिरोधमसहमाना कमठेन सह विषयासक्ता भोगान् बुभुजे, तया सह तादृशमनाचारं प्रवर्तमानं ज्ञात्वा वरुणया कमठपत्न्या ज्ञापितो म-

रुभूतिर्भो देवर तव पत्नी तव ज्येष्ठभ्रात्रा कमठेन सह विषयासक्ता रमते. ततो मरुभूतिस्तस्या वाक्यं श्रुत्वा तस्याः प्रत्युत्तरमदत्त्वैवाहं ग्रामांतरं गमिष्यामीत्युक्त्वा तयोः पश्यतोर्नगरान्निर्गत्य कियतीं भूमिं गत्वा कार्पटिकवेषं कृत्वा संध्यासमये निजगृहमागत्य कपटेन कमठंप्रति कथयति भो महात्मन् मम निरालंबस्य शीतपरित्राणार्थं किंचिन्निर्वातस्थानं देहि? ततस्तेन कमठेनाज्ञातपरमार्थेन दयया भणितं भोः कार्पटिक मम गृहांगणे इह चतुःशालके स्वेच्छया सुखं तिष्ट? ततस्तत्र स्थितो मरुभूतिः, तेन तत्र स्थितेन दृष्टं सर्वं कमठचेष्टितं, तदसमंजसमसहमानो लोकापवादभीरुत्वेन मौनावलंबनपरो निशायामेव स निर्गतः, प्रभाते च वेषं परावृत्य गतो राज्ञः समीपं, निवेदितं सकलं स्वभ्रातुर्विचेष्टितं. ततः कुपितेन राज्ञा निजपुरुषाः समादिष्टा भो द्रुतं तं नानाविडंबनापूर्वं नगरान्निष्कासयत? ततस्तै राजपुरुषैरर्धमुंडितशिरो रक्तचंदनविलिप्तदेहो निंबपत्रकृतशेखरः कंठाप्तशरावमालो विरसडिंडिमान्वितो रासभारूढो भ्रामितः सकलनगरे, भाषितश्चैवमेष पुरोधाः स्वकृतकर्माणि भुंक्ते. एवं राजपुरुषैः प्रोच्यमान उद्घोषणपूर्वं नगरान्निष्कासितः. ततः स तथा विडंबितो यथा समुत्पन्नदुःखगर्भवैराग्यो गृहीतपरिव्राजकालिंगः प्रवृत्तो दुष्करं तपश्चरितुं, तं कमठं तथावस्थं

दृष्ट्वा समुत्पन्नपश्चात्तापो मरुभूतिलघुबांधवस्तस्य क्षामणनिमित्तं यत्र कमठतापसोऽस्ति तत्र वने गतः, तस्य समीपे गत्वा स्वं निंदित्वा क्षामणार्थं तच्चरणे निपतितः, तावत्तेन कमठेन पूर्वविरोधं स्मृत्वा पादपतितो मरुभूतिर्महत्यैकया शिलया चूर्णितमस्तको विहितः, मरुभूतिर्बुंबापातं कुर्वाणो मृतः, मृत्वा च विंध्याटव्या एकस्याः करिण्या उदरे समुत्पन्नः, क्रमेण वृद्धिमुपगतो जातः स महाकरी, हस्तिनीपरिवृतः स तस्मिन् वने सदैव क्रीडति.

इतश्चारविंदो राजा कदाचिच्छरत्काले सांतःपुरः प्रासादोपरितनभूम्यां यावता क्रीडति तावता सुस्निग्धशरदभ्रैर्व्याप्तं नभस्तलं दृष्टं, क्षणेन वायुना प्रतिहतं तमभ्रवृंदं दृष्टं, तद्वीक्ष्य तथैव क्षणभंगुरं सर्वभावं विभावयन् समुत्पन्नावधिज्ञानो निजपुत्रनिहितराज्यभारः प्रव्रजितः. अथैकदा मह्यां विचरंस्तेनारविंदराजर्षिणा सागरदत्तसार्थवाहसार्थो दृष्टः. स मुनिः सार्थसमीपं गतः, तदा सार्थवाहेन प्रणम्योक्तं हे महामुनेस्त्वं कुत्र यास्यसि? मुनिनोक्तं तीर्थयात्रया, पुनः सार्थवाहेनोक्तं हे भगवन् कीदृशो भवतां धर्मः? तेनापि दानशीलतपोभावनाभेदः सविस्तरो धर्मः कथितः, तं श्रुत्वा सार्थवाहः श्रावको जातः, अनेन भणितं च भगवानस्माकं सह विचरतु, अरविंदर्षिणापि तत्प्रतिपन्नं.

अथ सार्थो मार्गे संचरन् क्रमेण यत्र मरुभूतिकरी करिणीसमन्वितः क्रीडति तत्र विंध्याटव्यां समागतः, तत्रैकस्मिन् सरोवरे भोजनार्थं स्थितः सार्थवाहः. तस्मिन् समये तस्मिन् सरोवरे बहुकरिणीपरिवृतो जलपानार्थमागतः स एव करिराजः, पीत्वा जलं समारूढः स पालिशिखरे, तेनावलोकितं चतुर्दिक्षु, तं सार्थवाहं वीक्ष्य धावितः स तद्विनाशार्थं. ततस्ते सार्थलोकास्तं करिणं समापतंतं वीक्ष्य सर्वे प्रतिदिशं प्रणष्टाः. अरविंदो महामुनिरवधिज्ञानेन तस्य स्वरूपं ज्ञात्वा कायोत्सर्गेण स्वस्थान एव स्थितः. ततः स करी सकलं सार्थसमूहं त्रासयित्वा यत्र स महामुनिः कायोत्सर्गेण तिष्ठति तत्रागतः. ततस्तं महामुनिं विलोकयन् समुपशांतकोपो जातः, चित्रलिखित इव स्थितः. तं तथावस्थं दृष्ट्वा तस्य गजस्य प्रतिबोधनार्थमरविंदराजर्षिः कथयति भो भो मरुभूते किं न स्मरसि मामरविंदराजर्षिमात्मनो पूर्वभवं च? ततः स तत् श्रुत्वा संजातजातिस्मरणः पतितो मुनिचरणेषु. मुनिनापि सविशेषदेशनापूर्वं कृतः श्रावकः, ततो गतः स्वस्थानं करिराजः, पुनरपि मिलितः सार्थलोकः, मुनिं नत्वा धर्मं च श्रुत्वा श्राद्धधर्मं प्रतिपद्य केचित् श्रावका जाताः, केचिच्च भद्रकभावं प्रतिपन्नाः. ततश्चलितः सार्थवाहः, स्वेप्सितं स्थानं गतः, अरविंदोऽपि राजर्षिः संयमं प्रपाल्य मोक्षं

गतः. इतश्च स कमठपरिव्राजको मरुभूतिं भ्रातरं निहत्य वैरनिर्यातनं कृत्वा निजायुःक्षये मृत्वा कुर्कुटसर्पत्वेनोत्पन्नः, तेन सर्पेण विंध्याटव्यां परिभ्रमता पंकनिमग्नः पूर्वभववैरी मरुभूतिजीवः करी दृष्टः, तेन सर्पेण पूर्वभववैरिणा स कुंभस्थले दष्टः. ततः स करिराजस्तद्विषवेदनाभावितः श्रावकत्वेन नमस्कारगुणनतत्परः शुद्धसम्यक्त्वभावितमानसस्तद्विषवेदनां सम्यक् सहमानो मृत्वा सहस्रारदेवलोके परमर्द्धिकः सप्तदशसागरोपमायुर्देवो जातः, कुर्कुटसर्पोऽपि स्वायुःक्षये मृत्वा पंचमपृथिव्यां रिष्टानाम्न्यां सप्तदशसागरोपमायुर्नारको जातः, इति प्रथमद्वितीयतृतीयभवाः प्रतिपादिताः. ॥

इतः स करिदेवस्ततश्च्युतो जंबूद्वीपे पूर्वविदेहे सुकच्छाविजये वैताढ्यपर्वते तिलकापुर्यां विद्युद्गतिरिति नाम्ना विद्याधराधिपोऽस्ति, तस्य कनकतिलकानामपट्टदेव्यस्ति, तस्याः कुक्षौ पुत्रत्वेनोत्पन्नः, क्रमेण जातः, तस्य पित्रा किरणवेग इति नाम दत्तं, क्रमेण वर्द्धमानः स सकलाः कलाः पाठितः, यौवनस्थः स पित्रा राज्ये स्थापितः, क्रमागतं राज्यं परिपाल्य सुगुरुसमीपे प्रव्रजितः. ततः स पठितसकलसिद्धांत एकत्वविहारी चारणश्रमणः पृथिव्यां विहरति. सोऽन्यदाकाशमार्गेण गतः पुष्करवरद्वीपे, तत्र च कनकगिरिसमीपे कायोत्सर्गेण स्थितो विचित्रं तपः कुर्वाणः कियंति दि·

नानि स्थितः. इतः स कुर्कुटसर्पनारकः पंचमनरकादुध्धृत्य तस्यैव कनकगिरेः समीपे कस्मिंश्चित्सन्निवेशे महोरगो जातः, तेन महोरगेण स मुनिर्दृष्टः, संजातकोपेन दष्टः सर्वांगोपांगेषु, मुनिरपि तद्वेदनया कालं कृत्वाच्युतदेवलोके जंबूद्रुमावर्तविमाने देवो जातः, सोऽपि महोरगः पूर्णायुष्कः कालं कृत्वा पुनरपि सप्तदशसागरोपमायुः पंचमपृथिव्यां रिष्टानाम्न्यां नैरयिको जातः. प्रतिपादितावुभयोरपि चतुर्थपंचमभवौ. ॥ इतः स किरणवेगजीवदेवो ततश्च्युत्वास्मिन् जंबूद्वीपेऽपरविदेहे सौगंधिकाविजये शुभंकरायां नगर्यां वर्यवीर्यस्य राज्ञो लक्ष्मीवत्या भार्याया उदरे समुत्पन्नः, क्रमेण शुभदिवसे जातः, वज्रनाभ इति नाम दत्तं, सोऽपि वृद्धिं गतः, क्रमागतं राज्यं परिपाल्य वैराग्यमापन्नश्चक्रायुधपुत्रे राज्यं दत्वा क्षेमंकरजिनसमीपे प्रव्रजितः. ततो विविधतपोविधानेन बहुलब्धिसंपूर्णो जातः. ततः पृथिव्यां विहरन् गतः स सुकच्छाविजयं, तत्राप्यप्रतिबद्धविहारेण विचरन् संप्राप्तो ज्वलनगिरिसमीपं, अस्तमिते दिनकरे तत्रैव कायोत्सर्गेण स्थितः, प्रभातायां च रजन्यां ततश्चलितो महामुनिः. इतश्च स महोरगनैरयिकस्तत उध्धृत्य कियंतं कालं संसारे भ्रांत्वा तस्यैव ज्वलनगिरेः समीपे भीमाटव्यां चंडालवनचरो जातः, तेनाखेटकनिर्गतेन प्रथमं स एव मुनिर्दृष्टः. ततः पूर्वभ-

ववैरवशतोऽपशकुनोऽयमिति मत्वा कर्णांतं बाणं कृत्वा हृदये स विद्धः, तेन विधुरीकृतदेहः स विधिना मृत्वा वज्रनाभमुनिर्मध्यग्रैवेयके ललितांगनामा देवो जातः, सोऽपि चंडालवनचरस्तं मुनिवरं मृतं दृष्ट्वा मनसि तुष्टो जातः. अहोऽहं धनुर्धरो येन मयैकबाणेन हतोऽयं मृतः. ततः पूर्णायुः स वनचरो मृत्वा सप्तमपृथिव्यां सप्तविंशतिसागरोपमायू रौरवके नरकावासे नैरयिको जातः. इत्थमनयोरपि प्रतिपादितौ षष्ठसप्तमभवौ. ॥ इतश्च वज्रनाभदेवस्ततो मध्यमग्रैवेयकाच्च्युत्वात्रैव जंबूद्वीपे पूर्वविदेहे पौराणपुरे कुलिशबाहो राज्ञः सुदर्शनाया देव्याः कुक्षौ पुत्रत्वेनोत्पन्नः, क्रमेण चतुर्दशस्वप्नसूचितः कनकप्रभो नाम पुत्रो जातः, क्रमेण स चक्रिपदं प्राप. अथैकस्मिन् दिने प्रासादोपरि स्थितेन तेन तीर्थंकरवंदनार्थमागतो देवसंघातः दृष्टः, तं वीक्ष्य विज्ञातजगन्नाथतीर्थंकरागमनो सोऽपि निर्गतस्तद्वंदनार्थं, वंदितस्तीर्थंकरः. उपविष्टस्य तस्य भगवता भवनिर्वेदजननी धर्मदेशना दत्ता, तां देशनां श्रुत्वा स प्रविष्टो नगर्यां, ततो भगवानप्यन्यत्र विजहार. अन्यदा कनकप्रभचक्रवर्ती तीर्थंकरपादमूले प्रव्रजितः, संजातो गीतार्थः, अथ पृथिव्यां विचरन् क्षीरवननाममहाटव्यां क्षीरमहागिरौ सूर्याभिमुखः कायोत्सर्गेण तस्थौ, इतश्च स चंडालवनचरः सप्तमनरकादुध्धृत्य त·

स्यामेवाटव्यां क्षीरपर्वतगुहायां महाभयंकरः सिंहो जातः, स सिंहोऽटव्यां भ्रमंस्तं मुनिप्रदेशं संप्राप्तः. ततः समुद्भवसितपूर्ववैरेण तेन पाप्मना स मुनिर्विनाशितः, सोऽपि समाधिना कालं कृत्वा विंशतिस्थानकैर्निबद्धतीर्थंकरगोत्रो दशमदेवलोके महाप्रभे विमाने विंशतिसागरोपमायुर्महर्द्धिको देवो जातः, सोऽपि सिंहश्चतुर्थं नरकं गत्वा ततश्च्युत्वा बहुसंसारं भ्रांत्वा कर्मवशतो ब्राह्मणो जातः. तत्रापि पापोदयाज्जातमात्रस्यैव मातृपितृभ्रातृभगिन्यादिकः सर्वोऽपि परिजनः क्षयं गतः, महाकष्टेन स जीवति, संप्राप्तयौवनो लोकेन बहु निंद्यमानः स कथमपि संपद्यमानभोजनवृत्तिर्वैराग्यमुपगतः, कंदमूलफलाहारो वनमध्ये तापसो जातः, तत्र स पंचाग्निप्रमुखं बहुप्रकारमज्ञानतपोविशेषमकरोत्. इत्युक्तावष्टमनवमभवौ. ॥

इतः स कनकप्रभचक्रवर्तिजीवदेवः प्राणतकल्पाच्चैत्रमासकृष्णचतुर्थ्यां च्युत्वास्मिन् जंबूद्वीपे भारते वर्षे काशीजनपदे वाणारस्यां नगर्यामश्वसेनस्य राज्ञो राज्ञ्या वामादेव्याः कुक्षौ समुत्पन्नो भगवान्. ततस्तया पट्टदेव्या निशासमये चतुर्दश स्वप्ना दृष्टाः, तया विज्ञप्तो राजा हे स्वामिन् मया चतुर्दश स्वप्ना दृष्टाः, यथा—गय १ वसह २ सिंह ३ अभिसेय ४। दाम ५ ससि ६ दिनयरं ७

झयं ८ कुंभं ९ ॥ पउमसर १० सागर ११ विमाण—भुवण १२ रयणचय १३ सिही च १४ ॥ १ ॥ हे स्वामिन् किमेतेषां फलं भविष्यति? ततस्तेन राज्ञात्युग्रमानंदमुद्वहता प्रोक्तं हे प्रिये सर्वलक्षण· संपूर्णः शूरः सर्वकलाकुशलस्ते पुत्रो भविष्यति. तत् श्रुत्वा वामाराज्ञी बाढं परितुष्टा, प्रशंसितं च भर्तृवचनं. अथ प्रभाते राजा कृतप्रभातकृत्यः शस्त्रशालायां गत्वा कृतशस्त्रपरिश्रमो व्यायामादिना परिश्रांतदेहो मर्दनेन स्वस्थीभूतः सन् स्नानं कृत्वा परिहितसर्वालंकारः सदसि समागत्य सिंहासने समुपविष्टः. ततस्तेन राज्ञा प्रधानपुरुषैः समाहूता अष्टांगनिमित्तज्ञाः स्वप्नपाठकाः, तेऽपि शुची भूताः कृतशृंगारा राज्ञः समीपे समागताः, उपविष्टा राज्ञा दर्शितेषु भद्रासनेषु, ते स्वप्नपाठका राज्ञा पू· जिताः पुष्पफलादिभिः, ततो यवनिकांतरे स्थापिता राज्ञी वामादेवी. ततो राज्ञा स्वप्नफलं पृष्टं भो भोः स्वप्नपाठका वामादेव्या निशायामेते गजादयश्चतुर्दश· महास्वप्ना दृष्टाः, किमेतेषां स्वप्नानां फ· लं भविष्यति? ततस्ते परस्परं स्वप्नफलं विचार्य राज्ञः प्रतिपादयंति, हे महाराजास्माकं शास्त्रेषु ग· जवृषभादीन् चतुर्दश महास्वप्नान् चक्रिषु तीर्थंकरेषु वा गर्भोत्पन्नेषु तेषां जनन्यः पश्यंति, केशवा· नां बलदेवानां मंडलिकानां च जनन्यः क्रमेण सप्त चतुर एकं च महास्वप्नं· पश्यंति, तस्माद्वामादे·

ल्याश्चतुर्दशमहास्वप्नावलोकनात्साधिकनवमासानंतरं जिनो वा चक्रवर्ती वा पुत्रो भविष्यति. एतत्तेषां वाक्यं श्रुत्वा महानंदपूरितमानसो जातो नराधिपः, तेषां जीवितार्हं प्रीतिदानं दत्वा विसर्ज्य निश्चलमानसः स तिष्ठति. वामाराज्ञ्यपि सहर्षा तं गर्भं गर्भोचिताहारैः प्रतिपालयति, इतश्च शक्रासनकंपो जातः, तदा शक्रेण चिंतितमहो किंनिमित्तं ममासनं चलति? ततस्तेनावधिज्ञानं प्रयुक्तं, दृष्टो भगवान् गर्भे समुत्पन्नः. ततः ससंभ्रमं सिंहासनात्समुत्थितः, सप्ताष्टपदानि भगवतोऽभिमुखं गत्वा त्रिःकृतप्रणामो दक्षिणजानुं धरणीपीठे निवेश्य शक्रस्तवेन भगवंतमस्तवीत्. अहमत्र स्थितो भगवंतं नमस्करोमि. तत्र स्थितो भगवान् मां पश्यत्वित्युक्त्वा भगवंतं ववंदे, तदनंतरं सौधर्मेंद्रो वाणारस्यां समागत्य भगवज्जननीं नत्वा स्तुत्वा चैवमुवाच हे मातस्त्वं धन्या कृतपुण्या, सुलब्धं तव जन्म जीवितं च. अद्यप्रभृति त्वं त्रिभुवनस्य वंदनीया, यतस्तव गर्भे पुरुषोत्तमो जगच्चिंतामणिस्त्रयोविंशतितमो जिनः समुत्पन्नः, जिनगृहे स्वर्णवृष्टिं कृत्वा शक्रः स्वस्थानं गतः. प्रहृष्टा वामाराज्ञी ततःप्रभृत्यत्युष्णातिशीतदोषवर्जिताशनादिभिस्तं गर्भं पालयंती सुखेन तिष्ठति, एवं शेते, एवं क्रीडति च, यत्प्रभृति स्वामी मातुर्गर्भे उत्पन्नस्तत्प्रभृति शक्रादेशेन तिर्यग्जृंभका देवा ग्रामाकरनगरनिहितानि·

महानिधानानि पौराणिकानि प्रक्षीणस्वामिकानि भवंति तानि भगवद्गृहे समानयंति, तानि जन्म-
गृहे मुक्त्वा तेऽपि देवाः स्वस्थानं गताः. एवं सा वामा प्रशस्तदोहदा संपूर्णदोहदा तं गर्भं परि-
वहति. एवं व्यतिते नवमासे सार्धाष्टदिवसेऽर्धरात्रिसमये पौषशुक्लदशम्यां वामाराज्ञी दारकं प्रसूता,
सर्वेषामानंदो जातः, तस्मिन् समये षट्पंचाशद्दिक्कुमारिकाणामासनानि चलंति. ततस्ता अवधिज्ञा-
नेन भगवज्जन्मसमयं ज्ञात्वा तत्राजग्मुः. तत्राधोलोकवासिन्योऽष्टौ दिक्कुमार्यश्चतुःसहस्रसामानि-
कादिपरिवारपरिवृता हर्षनिर्भरा जिनजन्मैतदिति परिभावयंत्यः सर्वर्ध्या समागत्य विमानगता एव
प्रदक्षिणीकृत्य भगवतो जन्मगृहमीशानकोणके विमानयोग्यभूम्यां चतुरंगुलमसंप्राप्तं विमानं मु-
क्त्वा विमानादवतेरुः. ततो भगवंतं समातृकं प्रदक्षिणां कृत्वा शिरसावर्तं मस्तकांजलिं कृत्वैवं वदंति,
नमोऽस्तु ते रत्नकुक्षिधारिके हे विश्वदीपिके जगच्चिंतामणिप्रसविके वयमधोलोकवासिन्यो दिक्कु
मार्यस्तीर्थंकरस्य जन्ममहिमानं करिष्यामः, तस्माद्भवत्या न भेतव्यमिति भणित्वा वैक्रियसमुद्घा
तं करोति, ततः शीतं मंदं सुरभिवातं विकुर्वंति, तेन वातेन जन्मगृहतश्चतुर्दिक्षु योजनिकमंडलं
सर्वतः समंतादाहत्य तृणकाष्टशुष्कपर्णकचवराद्यशुचि यत्किंचिद्भवति तत्सर्वं शोधयति, शोधयित्वा

चैवं जिनवरेंद्रं स्तौति, यथा—अत्थमिए नमिजिणे । दुगप्पइत्र अणाहयं नरहं ॥ सवजगुज्जोअ-
गरे । पुणो सणाहं तु मे जायं ॥ १ ॥ धण सजणो एत्थं । सुलक्कणो अस्ससेणरायावि ॥ वा-
मावि वंदणिज्जा । जेसिं अंगुप्नवो नयवं ॥ २ ॥ अहोवि कयबाओ । सुरनरनारीसु बहुमयं अम्म
॥ जं जाओ अहिगारो । पढमं जिणजम्ममहिमासु ॥ ३ ॥ इत्यादि. एवमर्थनिबद्धानि गेयानि गा-
यंत्यः स्थितास्ता नगवतो नातिदूरे. एवमूर्ध्वलोकान्मंदरकूटवासिन्योऽष्टौ समागछंति, नवरं ता अ-
भ्रवर्दलं विकृत्य गंधोदकवृष्टिं पुष्पवृष्टिं च कुर्वंति. एवं पूर्वदिक्स्था अष्टावादर्शहस्ताः, दक्षिणदिक्स्था
अप्येवमष्टौ भृंगारहस्ताः, एवं पश्चिमदिक्स्था अपि व्यंजनपाणयो दीपेनोद्योतं कुर्वत्यस्तिष्ठंति. एवं
मध्यमरुचकवासिन्यश्चतस्रस्तथैवागछंति, तासां कृत्यान्यमूनि—यथा हे मातस्त्वया न नेतव्यमित्युक्त्वा
नगवतश्चत्वार्यंगुलानि वर्जयित्वा नालं बछयंति, तन्नालं नूमौ क्षिप्त्वा वैमूर्यरत्नैस्तां गर्तां पूरयंति, तत-
स्तदुपरि पीठं बध्नंति, ततस्त्रिदिक्षु त्रीणि कदलिगृहाणी विकुर्वंति तेषां मध्ये त्रीणि चतुःशालानि वि-
कुर्वंति, तन्मध्ये त्रीणि सिंहासनानि विकुर्वंति. ततो नगवंतं करतलसंपुटे मातरं च बाहुभ्यां गृहीत्वा
दक्षिणकदलीगृहचतुःशालकसिंहासने निवेशयंति, ततः शतपाकसहस्रपाकतैलैरभ्यंगं कुर्वंति, ततः

सुरभिगंधोद्वर्तनेन देहोद्वर्तनं कुर्वंति, ततः पूर्वचतुःशालसिंहासने निवेश्य सुरभिगंधोदकेन पुष्पोदकेन शुद्धोदकेन च जिनं वामादेवीं च स्नपयंति, उभावपि सर्वालंकारैर्विभूषयंति, तत उत्तरचतुःशालसिंहासने निवेशयंति, ततः क्षुल्लहिमवतोऽभियोगिकैर्देवैः सद्यस्कगोशीर्षचंदनकाष्ठान्यानाय्यारणीप्रयोगेणाग्निं पातयंति, तैः काष्ठैरग्निमुज्ज्वालयित्वा होमं कुर्वंति. सूतिकर्म च कुर्वंति. ततस्तयोर्मातृपुत्रयो रक्षापोट्टलिकां बध्नंति. ततो मणिमयौ द्वौ गोटकौ गृहीत्वा भगवतः कर्णमूले आस्फाल्यैवं कथयंति हे भगवंस्त्वं पर्वतायुर्भव? ततो भगवंतमंजलिपुटे कृत्वा मातरं च बाहुभ्यां धृत्वा जन्मभवनशयनीये श्रीजिनमातरं स्थापयित्वा तस्याः पार्श्वे भगवंतं स्थापयित्वा पूर्ववद्गीतगानपरायणास्तस्थुः. इति षट्पंचाशद्दिक्कुमारीकृत्यानि कथितानि. अथेंद्रकृत्यान्याह—

तस्मिन् समये सौधर्मायां सभायां सुखनिषण्णस्य शक्रस्य देवेंद्रस्यासनं चलितं. ततः ससंभ्रमं शक्रोऽवधिज्ञानं प्रयुक्ते, भगवज्जन्मसमयं जानाति, तद्ज्ञात्वा हर्षोल्लसितहृदयः शक्रः किरीटकेयूरकुंडलहाराद्यलंकारविभूषितशरीरस्त्वरितं सिंहासनादभ्युत्थितो रत्नपादुके त्यक्त्वैकशाटिकमुत्तरासंगं करोति; ततः सप्ताष्टपदानि भगवदभिमुखं गत्वा शक्रस्तवमुक्त्वा पश्यतु मां भगवानिति कथयित्वा

भगवतो नमस्कारं कृत्वा पूर्वाभिमुखः पुनः सिंहासने निषीदति. ततो जीतमेतदिति कृत्वा प्रत्युत्पन्नमतिः शक्रः पूर्वगतानां शक्रानामाचारं ज्ञात्वा यत्नकेण जिनजन्ममहोत्सवं कर्तव्यमिति, ततो हरिणैगमेषिणं पदात्यनीकपतिं देवं समाह्वयति, भो हरिणैगमेषिन् शीघ्रतरं सौधर्मायां सभायां योजनैकमानां परिमंडलां सुस्वरां नाम सुघोषां घंटां परिणामेनापि सुघोषां क्रौंचस्वरां हंसस्वरां मेघौघगंभीरां त्रिःकृत्वोल्लालय? उल्लालयित्वा च सौधर्मदेवलोकवासिदेवदेवीनां तीर्थंकरजन्ममहिमानं ज्ञापय? इंद्रेणैवं प्रोक्तो हरिणैगमेषी देवो हृष्टस्त्वरितमेव तत्र गत्वा तां सुघोषां घंटां त्रिःकृत्वोल्लालयति, तस्याः प्रतिशब्देनैकोनद्वात्रिंशल्लक्षविमानेषु सर्वत्र घंटानां लक्षेषु लक्षशो रणत्काराः प्रादुर्बभूवुः. ततः सौधर्मे कल्पे प्रतिशब्दशतसहस्रे प्रवृत्ते स सुरलोकस्तन्नादमयो जातः. उपशांते घंटारवे देवदेव्यो यावच्चिंतयंति किमेष घंटाशब्दः? इंद्रोऽस्माकं किमाज्ञां दापयति? तावद्धरिणगमेषी देवो बाढस्वरेणैवं बभाषे शृण्वंतु भो देवदेव्यः शक्र आज्ञापयति जंबूद्वीपे भरतक्षेत्रे त्रयोविंशतितमो जिनः समुत्पन्नस्तस्मात्तज्जन्ममहिमाकृते सर्वदेवदेवीभिस्त्वरितं समागंतव्यं. तद्धरिणगमेषिदेववाक्यं श्रुत्वा हृष्टा देवदेव्यः केचित्तीर्थंकरभक्त्या केचित्कौतुकेन केचन शक्रानुवृत्त्या केचि-

ज्जीतमेतदिति संप्रेक्ष्य सर्वसमुदयेन शक्रस्यांतिकमागताः. ततः शक्रः पालकमाभियोगिकं देवं समाह्वयति, ततश्चैवं वदति, भोः पालक मम गमनयोग्यं विमानं कुरु? ततः स पालकः पालकविमानं करोति, तत्कीदृशं? अनेकस्तंभशतसंनिविष्टं, सर्वरत्नमयं, चलद्घंटावलिशब्दमनोहरं, योजनलक्षविस्तीर्णं, पंचशतयोजनोन्नतं च. तस्य विमानस्य त्रिदिक्षु त्रिसोपानकानि करोति, तेषां पुरतस्तोरणानि, विमानमध्यभागे प्रेक्षागृहमंडपं च करोति, तन्मध्ये मणिपीठिकामष्टौ योजनान्यायामेन विष्कंभेन च, चत्वारि योजनान्युच्चत्वेन च करोति, तन्मध्ये सिंहासनं करोति, तस्मादपरोत्तरेणोत्तरपूर्वेण च शक्रस्य चतुरशीतिसामानिकसहस्राणां तावंति सिंहासनानि, दक्षिणपूर्वेण द्वादशानामभ्यंतरपर्षद्देवसहस्राणां सिंहासनानि. दक्षिणेन चतुर्दशानां मध्यमपर्षद्देवसहस्राणां, तावंति सिंहासनानि, दक्षिणपश्चिमे षोडशानां बाह्यपर्षद्देवसहस्राणां सिंहासनानि, पश्चिमदिशि सप्तानीकाधिपतीनां सप्त सिंहासनानि च. ततस्तस्य सिंहासनस्य चतुर्दिक्षु प्रत्येकं चतुर्णां चतुरशीत्यंगरक्षकदेवसहस्राणां तावंति भद्रासनानि करोति. ततः शक्र उत्तरवैक्रियं रूपं करोति, अष्टभिरग्रमहिषीभिः सार्धं गांधर्वानीकेन नाट्यानीकेन च सार्धं तद्विमानं प्रदक्षिणीकृत्य पूर्वदिशि स्थितेन त्रि·

सोपानप्रतिरूपकेण समारुह्य पूर्वाभिमुखः सिंहासने निषीदति. इंद्रसामानिका उत्तरेणान्यसर्वदेवदेव्यो दक्षिणत्रिसोपानप्रतिरूपकेण तत्पालकविमानमधिरोहंति. पूर्वन्यस्तेषु भद्रासनेषु चोपविशंति. ततस्तस्य शक्रस्य पुरतोऽष्टौ मंगलकानि संप्रस्थितानि, तदनंतरं पूर्णकलशभृंगारछत्रचामरपताकाः पुरतः संप्रस्थिताः. ततो योजनसहस्रोच्छ्रितो वज्रदंडप्रतिष्ठितः पंचवर्णलघुपताकापरिमंडितः पुरतो महेंद्रध्वजः प्रस्थितः. ततः पुरतोऽलंकारविभूषिताः पंचानीकाधिपतयश्चतुर्दिक्षाभियोगिका देवदेव्यश्च सह चेलुः. ततः सौधर्मवासिदेवा देव्यश्च संप्रस्थिताः, सर्वर्ध्या सौधर्मकल्पवासिदेवदेवीपरिवृतः शक्र उदग्दिशि स्थितेन निर्याणमार्गेण स्वर्गादवतीर्णः. तत उत्कृष्टगत्या तिर्यक्संख्येयान् द्वीपान् समुद्रांश्च व्यतिक्रम्य शक्रः समागतो नंदीश्वरद्वीपे, दक्षिणपूर्वस्थे रतिकरपर्वते समवतरति, ततस्तद्विमानं संहरति, ततो भगवतो जन्मगृहमागछति, तत्रागत्य विमानेनैव स्थितः शक्रस्त्रिः प्रदक्षिणां करोति, ततो जन्मभवनादीशानकोणके चतुरंगुलमसंप्राप्ते भूभागे विमानं मुक्त्वा सपरिवारः शक्रस्तस्माद्विमानादवतरति. ततः शक्रो जिनजन्मगृहे समागत्य भगवंतमालोक्य प्रणामं करोति, ततः समातृकं भगवंतं त्रिःप्रदक्षिणीकरोति, कृत्वा च यथा दिक्कुमार्योऽभिनंदंति तथैवाभिनंद-

ति, स्तुत्वा चैवं वदति—अहं शक्रोऽस्मि देवेंद्र— कल्पादाद्यादिहागमं ॥ भेतव्यं देवि तन्नैवे—त्यु· क्त्वावस्वापिनीं ददौ ॥ १ ॥ ततो जिनप्रतिरूपकं विकुर्व्य जिनमातुः समीपे स्थापयति, पश्चाच्छक्रः पंच रूपाणि करोति, एकेन रूपेण भगवंतं करतलसंपुटे गृह्णाति १, एकेन रूपेणातपत्रं बिभर्ति २, द्वाभ्यां पार्श्वयोश्चामरोत्क्षेपं करोति ४, एकेन वज्रमुल्लालयन् पुरतो याति ५.

एवं सर्वसमुदयेन मेरुमस्तके पांडुकवनेऽभिषेकासिंहासने पूर्वाभिमुखः करतलधृतजिनेश्वरः शक्रः समुपविशति, ईशानेंद्रोऽपि वृषभवाहनः शूलपाणिस्तथैव समागच्छति, महाघोषाघंटालघुकृतपराक्रमः पदात्यनीकपतिः पुष्पकविमानकारी दक्षिणे निर्याणमार्गे उत्तरपूर्वांतरस्थे रतिकरपर्वते मंदरे समा· गच्छति. एवं जंबूद्वीपप्रज्ञप्त्यनुसारेण ज्ञेयं, यथा विंशतिर्भुवनपतयः, द्वात्रिंशद्व्यंतरेंद्राः, चंद्रसूर्यौ, द्वा- दशकल्पानां दशेंद्राश्च, एवं चतुःषष्टिसुरेशाः सपरिवारा भगवज्जन्ममहोत्सवे मेरुशिखरे समागच्छंति. अथ शक्रादीनां दशेंद्राणां सामानिका आत्मरक्षकाश्च कथ्यंते, यथा—

चुलसी ८४ असी ८० बावत्तरी ७२ । सत्तरि ७० सट्ठी ६० य पन्न ५० चत्ताला ४० ॥ तुल्ल· सुरतीस ३० वीसा २० । दस सहस्सा १० आयरक्ख चउगुणिया ॥ १ ॥ तथा—चउसठी ६४ सठी

६० खलु । छच ६ सहस्सा य धरणमाईणं ॥ सामाणिया इमेसिं । चउगुणा आयरक्खा य ॥ २ ॥
एते भुवनपत्यादीनां सामानिका आत्मरक्षकाश्च. अथानीकानि कथ्यंते, यथा—गंध्रव १ नट्ट २
हय ३ गय ४ । रह ५ भड ६ अणियासुराहिवाणभवे ॥ सत्तममुणियं वसभा ७ । महिसा ८ य
अहोनिवासीणं ॥ १ ॥ ततोऽच्युतेंद्रेण भगवज्जन्ममहिमाभिषेकार्थमाभियोगिकादया भक्ताः सं-
तोऽष्टोत्तरसहस्रं सुवर्णकलशानामेवं रूप्यमयानां सौवर्णमणिमयानां मणिमयानां सुवर्णरूप्यमयानां
रूप्यमणिमयानां सौवर्णरूप्यमणिमयानां मृन्मयानां च प्रत्येकमष्टोत्तरसहस्रकलशानां ज्ञेयं. एवं
भृंगाराणां स्थालीनां सुप्रतिष्ठानां रत्नकरंडकानां पुष्पचंगेरिकाणामादर्शानां विकुर्वंति. इत्यादीनि
बहूनि जन्माभिषेकोपकरणानि विकुर्व्य क्षीरोदधौ गत्वा तज्जलं लात्वैवं पुष्करोदधिजलमेवं मा-
गधादितीर्थजलं गंगादीमहानदीनां च जलं, एवं पद्मद्रहादीनां जलमुत्पलानि च, तथा तीर्थानां
मृत्तिका, सर्ववैताढ्येभ्यः सर्वकुलपर्वतेभ्यः सर्वपुष्पाणि सर्वगंधान् सर्वौषधीः सर्षपान् भद्रशालवना-
द्गोशीर्षचंदनमाल्यं च गृहीत्वा भगवतो मज्जनविधिमुपस्थापयंति. ततोऽच्युतेंद्रः सामानिकत्रयस्त्रिं-
शद्देवादिपरिवृतः स्वाभाविकैर्वैक्रियैश्च कलशैर्वरकमलप्रतिष्ठानकैः पद्मपिधानैः सुरभिवारिभृतैश्चंदनच-

र्चितैराबद्धकंठमालैस्तुवरद्रव्यैर्मृत्तिकादिभिः सर्वर्द्ध्या भगवतो जन्माभिषेकं करोति. तस्मिन् समये आभियोगिका देवास्तथेंद्रादयो देवाश्छत्रचामरकलशधूपादिहस्ता हृष्टास्तुष्टा च वज्रशूलपाणयः पुरतस्तिष्ठंति. एके देवा आसिक्तसन्मार्जितोपलिप्तं तंभूमिभागं कुर्वंति, एके देवाः सुगंधद्रव्येण धूपोद्वाहनेन च सुगंधेनाभिरामं कुर्वंति, एके हिरण्यवृष्टिं कुर्वंति, एके सुवर्णवृष्टिमेके रत्नाभरणपत्रपुष्पफलगंधादीनां वृष्टिं कुर्वंति, एके ततविततघनसुचिरभेदं वाद्यं वादयंति, एके गायंत्येके नृत्यंत्येकेऽभिनयं कुर्वंति, एके भुजास्फोटं कुर्वंति, एके सिंहनादं कुर्वंति, एके गजवद्गर्जंति, एके जलवद्गर्जंति, एके विद्युद्वद् द्योतयंति, एके भगवतो गुणोत्कीर्तनकारीणि बिरुदानि पठंति. ततः सोऽच्युतेंद्रो निर्वर्तिताभिषेको योजितकरयुगलो जयेन विजयेन च वर्धाप्य पक्ष्मलसुकुमालया गंधकाषायिकया गात्राणि मर्दयति. ततः स स्वामिनमलंकारविभूषितं करोति, नाट्यादिविधिं च दर्शयति. ततो भगवत्पुरतोऽक्षतैः स्फटिकवन्निर्मलैरत्युज्ज्वलैस्तंदुलैरष्ट मंगलकान्यालिखति, यथा—दप्पण १ भद्दासण २ । वद्धमाण ३ वरकलस ४ मछ ५ सिरिवछे ६ ॥ सछि य ७ नंदावत्ता ८ । लिहिया अठ्ठमंगलया ॥ १ ॥ ततः करतलविमुक्तस्य पंचवर्णपुष्पस्य जलस्थलसमुद्भवस्य जानुप्रमाणं

प्रकरं करोति. ततो वैडूर्यमयधूपघटिकां करे कृत्वा कृष्णागुरुप्रभृतिभिः प्रवरधूपोत्क्षेपं करोति. ततः सप्ताष्टपदानि प्रत्यागत्यैकशाटिकमुत्तरासंगं कृत्वा संयोजितकरकमलो मेलितदशनखो मस्तकेंजलिं कृत्वाष्टोत्तरशतैः काव्यैर्भगवंतं स्तौति, पुनरेवमवादीच्च नमोऽस्तु ते सिद्ध बुद्ध नीरजो निर्भय निर्गतरागद्वेष निःसंग निःशल्य गुणरत्नशीलसागर धर्मवर चक्रवर्ती. एवं स्तुत्वा स्वामिनं नत्वा भद्रासने नातिदूरे पर्युपास्ते. एवं यथाच्युतेंद्रस्य जन्माभिषेको वर्णितस्तथेशानेंद्रपर्यंतानां कल्पवासिनां भवनपतिव्यंतरज्योतिष्काणामपींद्राणामभिषेको ज्ञातव्यः.

अथेशानेंद्रः पंच रूपाणि करोति, एकेन भगवंतं करतलसंपुटे गृहीत्वा सिंहासने निषीदति, एकेन रूपेण पृष्टे छत्रं बिभर्ति. द्वाभ्यां पार्श्वयोश्चामरोत्क्षेपं करोति, एकेन रूपेण पाणौ वज्रं समुल्लालयति. अथ सौधर्मशक्रो भगवतश्चतुर्दिक्षु चत्वारि धवलवृषभरूपाणि करोति, तेषामष्टसु शृंगेष्वष्टौ तोयोधारा निर्गच्छंति, तास्तोयोधारा ऊर्ध्वमुत्पत्यैकीभवंति. ततो भगवतो मस्तकोपरि निपतंति. एवं भगवतः स्नपनं कृत्वाच्युतेंद्रवदन्यत्सर्वं करोति. ततः सौधर्मेंद्रो भगवंतं स्तौति, यथा—

श्रीमत्प्रौढप्रभापूर १ । राजमानमहेश्वर २ ॥ जगदानंदनोदार ३ । विद्यासिंधुसुधाकर ४ ॥ १ ॥

जगत्त्रयपते तार ५—यशोराशिरमाम्नर ६ ॥ उद्दामसमतासार ७ । रिरंसार चिंतादर ८ ॥ २ ॥ पापांधकारसंचार ९—दलनैकदिनेश्वर १० ॥ पंचेषुप्रमथापार ११ । कल्याणकमलाकर १२ ॥ ३ ॥ जगतीजनसंभार १३—सेव्यमानांह्रिपुष्कर १४ ॥ वंदारुत्रिदिवागार १५—कलापनतमुत्कर १६ ॥ ४॥ चंचच्चामीकरस्फार १७—कायकांतिजितस्मर १८ ॥ रम्य सौम्य गुणाधार १९ । कुमतांधकशंकर २० ॥ ५ ॥ लसल्लक्ष्मीकलागार २१ । कलाकमलभास्कर २२ ॥ व्यापादिततमोतार २३ । ख्यातकीर्तिजि- नेश्वर २४ ॥ ६ ॥ श्रीनिवास कृपासार २५ । देवशाखिसहोदर २६ ॥ बहुदुःखांह्रिसंहार २७—विधानवि- बुधेश्वर २८ ॥ ७ ॥ जगन्मनोहराकार २९ । यंत्रितेंद्रियसिंधुर ३०॥ सुभगश्रेणिशृंगार ३१। धीरता- जिनमंदिर ३२ ॥ ८ ॥ एवं भगवंतमष्टोत्तरशतनवीनकाव्यैः स्तुत्वा सौधर्मेंद्रो भगवद्गृहे तथैवागत्य तीर्थंकरं मातुरंतिके मुक्त्वा तत्प्रतिरूपकं हृत्वावस्वापिनीं निद्रामपहरति. ततः शक्रः क्षौमयुग्मं कुंडलयु- ग्मं च भगवत उच्छीर्षमूले स्थापयति. श्रीदामरत्नदामाख्यं गंदुकद्वयं मणिरत्नमंडितं हाराद्युपशोभितं भगवतो नयनाभिरोचनार्थमुल्लोचके निवेशयति. ततः शक्रो द्वात्रिंशत्स्वर्णकोटीनां द्वात्रिंशद्भिरण्य- कोटीनां च तथान्येषामपि मणिमुक्ताफलाभरणादीनां वैश्रमणेन वृष्टिं कारयति. ततः शक्र आभि-

योगिकैर्देवैः सकलनगरे एवमाघोषणां कारयति, यथा शृएवंतु भो भुवनपतिप्रमुखदेवा देव्यो यो जिनस्य जिनमातुश्चोपर्यशुभं मनः करिष्यति तस्यार्थमंजरीव सप्तधा मूर्धा स्फुटिष्यति. ततः सर्वेऽपींद्रादयो देवा नंदीश्वरे गत्वाष्टाह्निकामहामहिमानं कृत्वा स्वकीये स्वकीये स्थाने यांति, तस्यां रात्रौ तिर्यग्जृंभकामरा अश्वसेनस्य राज्ञो हिरण्यसुवर्णादिवृष्टिं कुर्वंति.

ततोऽश्वसेनो राजा प्रभातसमये नगरारक्षकानाहूयैवमवादीद्भो भो आरक्षका वाणारस्यां नगर्यां चारकशोधनं मानोन्मानवर्धनं च कारयत? तथा नगरीं सन्मार्जितोपलिप्तां सर्वप्रदेशेषु निबद्धवंदनमालिकातोरणां पंचवर्णपुष्पोपचारकलितां तथागुरुकर्पूरतुरुष्कधूपमघमघायमानगंधाभिरामां तथोच्छ्रितपताकां मंचातिमंचकलितां तथा शोकरहितां नर्तकनर्तकीदर्शितनाट्यां तथोच्छ्रितयूपसहस्रमुशलसहस्रां च कारयत? ततो ममाज्ञां प्रत्यर्पयत? ततस्तैः सेवकैः सकलं कार्यं कृत्वा राज्ञो निवेदितं. ततोऽश्वसेनः शतसहस्रदीनारदानपूर्वकं दशाह्निकामहोत्सवं करोति. एवं गते एकादशे दिवसे निवर्तितेऽशुचिजातकर्मणि संप्राप्तो द्वादशो दिवसः. ततो मित्रज्ञातिप्रभृतिपरिजनभोजनानंतरं भगवतो नामस्थापनां करोति, यथास्मिन् गर्भगते जनन्या शय्यापार्श्वे सर्पो दृष्टः, अतोऽस्य पुत्रस्य पार्श्व

जगत्त्रयपते तार ५—यशोराशिरमाभर ६ ॥ उद्दामसमतासार ७ । रिंसार चिंतादर ८ ॥ २ ॥
पापांधकारसंचार ९—दलनैकदिनेश्वर १० ॥ पंचेषुप्रमयापार ११ । कल्याणकमलाकर १२ ॥ ३ ॥
जगतीजनसंभार १३—सेव्यमानांह्रिपुष्कर १४ ॥ वंदारुत्रिदिवागार १५—कलापनतमुत्कर १६ ॥ ४॥
चंचच्चामीकरस्फार १७—कायकांतिजितस्मर १८ ॥ रम्य सौम्य गुणाधार १९ । कुमतांधकशंकर २०
॥ ५ ॥ लसल्लक्ष्मीकलागार २१ । कलाकमलभास्कर २२ ॥ व्यापादिततमोतार २३ । ख्यातकीर्तिजि-
नेश्वर २४ ॥ ६ ॥ श्रीनिवास कृपासार २५ । देवशाखिसहोदर २६ ॥ बहुदुःखांह्रिसंहार २७—विधानवि-
बुधेश्वर २८ ॥ ७ ॥ जगन्मनोहराकार २९ । यंत्रितेंद्रियसिंधुर ३० ॥ सुभगश्रेणिशृंगार ३१ । धीरता-
जिनमंदिर ३२ ॥ ८ ॥ एवं भगवंतमष्टोत्तरशतनवीनकाव्यैः स्तुत्वा सौधर्मेंद्रो भगवद्गृहे तथैवागत्य
तीर्थंकरं मातुरंतिके मुक्त्वा तत्प्रतिरूपकं हृत्वावस्वापिनीं निद्रामपहरति. ततः शक्रः क्षौमयुग्मं कुंडलयु-
ग्मं च भगवत उच्छीर्षमूले स्थापयति. श्रीदामरत्नदामाख्यं गंडुकद्वयं मणिरत्नमंडितं हाराद्युपशोभितं
भगवतो नयनाभिरोचनार्थमुल्लोचके निवेशयति. ततः शक्रो द्वात्रिंशत्स्वर्णकोटीनां द्वात्रिंशद्धिरण्य-
कोटीनां च तथान्येषामपि मणिमुक्ताफलाभरणादीनां वैश्रमणेन वृष्टिं कारयति. ततः शक्र आभि-

योगिकैर्देवैः सकलनगरे एवमाघोषणां कारयति, यथा शृण्वंतु भो भुवनपतिप्रमुखदेवा देव्यो यो जिनस्य जिनमातुश्चोपर्यशुभं मनः करिष्यति तस्यार्थमंजरीव सप्तधा मूर्धा स्फुटिष्यति. ततः सर्वेऽपींद्रादयो देवा नंदीश्वरे गत्वाष्टाह्निकामहामहिमानं कृत्वा स्वकीये स्वकीये स्थाने यांति, तस्यां रात्रौ तिर्यग्जृंभकामरा अश्वसेनस्य राज्ञो हिरण्यसुवर्णादिवृष्टिं कुर्वंति.

ततोऽश्वसेनो राजा प्रभातसमये नगरारक्षकानाहूयैवमवादीद्भो भो आरक्षका वाणारस्यां नगर्यां चारकशोधनं मानोन्मानवर्धनं च कारयत? तथा नगरीं सन्मार्जितोपलिप्तां सर्वप्रदेशेषु निबद्धवंदनमालिकातोरणां पंचवर्णपुष्पोपचारकलितां तथागुरुकर्पूरतुरुष्कधूपमघमघायमानगंधाभिरामां तथोच्छ्रितपताकां मंचातिमंचकलितां तथा शोकरहितां नर्तकनर्तकीदर्शितनाट्यां तथोच्छ्रितयूपसहस्रमुशलसहस्रां च कारयत? ततो ममाज्ञां प्रत्यर्पयत? ततस्तैः सेवकैः सकलं कार्यं कृत्वा राज्ञो निवेदितं. ततोऽश्वसेनः शतसहस्रदीनारदानपूर्वकं दशाह्निकामहोत्सवं करोति. एवं गते एकादशे दिवसे निवर्तितेऽशुचिजातकर्मणि संप्राप्तो द्वादशो दिवसः. ततो मित्रज्ञातिप्रभृतिपरिजनभोजनानंतरं भगवतो नामस्थापनां करोति, यथास्मिन् गर्भगते जनन्या शय्यापार्श्वे सर्पो दृष्टः, अतोस्य पुत्रस्य पार्श्व

इति नाम भवतु. उक्तं च—गब्भगए जं जणणी । सिज्जापासे सुपासिउं सप्पं ॥ पच्चिसप्पंतं प- इणो । लंबियहत्था जगाडेइ ॥ १ ॥ भणइ य चेस सप्पो । वच्चइ शयाह तं कहं मुणासि ॥ साह सयं चियत्तो । दीवएण तं सोवि सच्चवि ॥ २ ॥ चिंतइ गब्भपभावो । एसो कहमण्हा निसातमसि ॥ एसा पासइ पासे । सुतस्स पासोत्ति नाम कयं ॥ ३ ॥ ततः कल्पपादप इव जातः स सर्वजनानंदकारी, प्रवर्धमानदेहः क्रमेणाष्टवार्षिको जातः, शोभनदिवसे च पित्राश्वसेनेन कलाचार्यस्योपांते पठनार्थं नीतः. ततस्तेन भगवता पार्श्वकुमारेण कलाचार्यः सकलकलाकुशलः कृतः, स एव भगवच्छिष्यो जातः. ततः कौमुदीमृगांकवत्सौम्यवदनो नीलोत्पलादनंतगुणशोभनाभ्यां नयनाभ्यां शोभितो रूपेण सुरपतितोऽप्यनंतगुणरूपो मधुघृतक्षीरादनंतगुणमधुरस्वरः स्वयंभूरमणादनंतगुणगांभीर्योपेतो मदोन्मत्तकरिवरादनंतगुणललितगत्या विराजितः संसारे निपतज्जनरक्षालालसेन कारुण्येन विराजमानः श्रीपार्श्वजिनो देवदेवीभिर्नित्यं क्रीडां कुर्वाणो यौवनं संप्राप्तः. ततः प्रसेनजिता राज्ञा निजपुत्रीं प्रभावतीनाम्नीं गुणरूपशालिनीं महामहेन परिणायितः, तया सार्धं भगवान् श्रीजिनो योग्यान् भोगान् बुभुजे.

अन्यदा भगवता प्रासादोपरि स्थितेन गवाक्षजालकेन दिगवलोकनं कुर्वता दृष्टः सकललोकः प्रवरकुसुमपटलिकाभृतहस्तो बहिर्निर्गछन्, तदानीं स्वामिना निकटस्थितस्य कस्यचित्सेवकस्य पृष्टं भो एते जनाः पुष्पपटलिकाव्यापृतकरा एकस्यां दिश्येव कथं गछंति? किमद्य कोऽपि महोत्सवो वर्तते? ततस्तेन सेवकेन भणितं हे स्वामिन्न कोऽपि महोत्सवः, किंतु कश्चित्कमठनामतपस्वी नगर्या बहिः समागतोऽस्ति, सर्वोऽपि लोकस्तद्वंदनार्थं प्रस्थितस्तदभिमुखं याति. तद्वचनं श्रुत्वा कौतुकेन प्रेरितो भगवानपि तद्विलोकनाय प्रस्थितः, क्रमेण यत्र कमठतापसः पंचाग्निं साधयति भगवांस्तत्रागतः. तेन तत्र दृष्टः कमठशठः तपस्तप्यमानः. अत्रांतरे त्रिज्ञानसंयुक्तेन भगवतैकस्मिन्नग्निकुंडे क्षिप्तमहत्काष्टकोतरमध्ये दह्यमानं नागं वीक्ष्यात्यंतकरुणापरहृदयेनानेन प्रोक्तमहो कमठ ते महदज्ञानं, यत्त्वमग्निकुंडे नागं दह्यमानं न पश्यसि. तव काचिद्दया नास्ति, त्वं तापसोऽप्यविवेकी वृथा कष्टं करोषि? परं दयां न जानासि, धर्मस्य मूलं दयैव, यतः—त्यजेद्धर्मं दयाहीनं । विद्याहीनं गुरुं त्यजेत् ॥ त्यजेत्क्रोधमुखीं भार्यां । निःस्नेहा बांधवास्त्यजेत् ॥ १ ॥ ततो भगवद्वचनं श्रुत्वा कमठो बभाषे भो राजकुमार भवादृशानां राजकुमाराणां तु तुरंगमकुंजरादीनां दमने कौशल

भवति. धर्माधर्मविवेककौशलं त्वस्मादृशां मुनीनामेव भवति. ततः स्वामिनैकस्य सेवकस्य कथितं भो एतत्काष्ठं सावधानीभूय तीक्ष्णकुठारेण स्फोटयित्वा द्विधा कुरु? ततस्तेन भगवदाज्ञा प्रमाणमित्युक्त्वा तीक्ष्णकुठारेण तत्काष्ठं द्विधा कृतं, तस्मान्निर्गतं नागकुलं, तत्रैकोऽर्धदग्धो दृष्टो महापन्नगः, तस्यासन्नमरणं ज्ञात्वा स्वामिना निजसेवकमुखेन नियमपूर्वकं पंचपरमेष्ठिनमस्कारो दापितः. 'ॐ अ सि आ उ सा नमः' इति पन्नगस्य श्रावितं. स सर्पस्ततो मृत्वा नमस्कारप्रभावतो नागलोके धरणेंद्रो नाम नागाधिपतिर्जातः, लोकैरुक्तं चाहो कुमारस्य निर्मलं ज्ञानमहो कुमारस्य दयापरिणामः, एवं सर्वैर्लोकैर्भगवान् प्रशंसितः, कमठश्च धिक्कृतः, अहो मूर्खाज्ञानिन् दयारहितस्त्वं किमपि तत्त्वं न जानास्येवं सर्वैर्लोकैर्निंदितो विलक्षीभूतः कमठपरिव्राजको गाढमज्ञानतपः कृत्वा मेघकुमारनिकायेषु मेघमालिनाम्ना भुवनवासिदेवः समुत्प : . इतश्च भगवानपि नगर्यां प्रविष्टः, एवं सुखेन विचरतस्तस्य समागतो वसंतसमयः, तस्मिन् समये सकलोऽपि नागरिकलोको वसंतक्रीडाकरणार्थमुद्यानं गतः, अत्रांतरे उद्यानपालकेनागत्य भगवतः प्राभृतीकृतैका सहकारमंजरी, भगवता कथितं भो किमेतत्? तेनोक्तं हे स्वामिन्! बहुविधकलानिवासः सांप्रतं वसंतसमयः संप्राप्तः. तत श्रुत्वा

वसंतक्रीडाकरणार्थं यानारूढो भगवान् बहुपुरजनपरिवारपरिवृतो गतो नंदनवननामोद्यानं. ततः स यानात्समुत्तीर्य नंदनवनप्रासादमध्यस्थितकनकमयसिंहासने समुपविष्टः, तत्र चातिरमणीयकत्वेन सर्वतो विलोकयंस्तस्य प्रासादस्य भित्तौ रमणीयतरं चित्रं ददर्श, तच्चित्रं दृष्ट्वा स्वामिना चिंतितं सम्यग्निरीक्ष्यतेऽस्मिंश्चित्रे किंचिल्लिखितमस्ति? ततः स्वामिना तच्चित्रं सम्यग्निरीक्षितं, दृष्टं तत्रारिष्टनेमिचरित्रं चित्रितं, तद् दृष्ट्वा चिंतितं पार्श्वजिनेंद्रेण धन्यः सोऽरिष्टनेमिजिनो यः सावद्यं विषयसुखं ज्ञात्वा निर्भरानुरागां निरुपमरूपलावण्ययौवनां राजवरकन्यकां त्यक्त्वा मोक्षाभिलाषुको भगवान् यदुकुलमंडनः कुमारत्वेनैव प्रव्रजितः. अथाहमपि सर्वसंगपरित्यागं करोमि. तस्मिन् समये लोकांतिका देवाः समागताः, ते च भगवंतं प्रतिबोधयंति, यथा—सारस्सयमाइच्चा । वन्हिवरुणा य गद्दतोया य ॥ तुसिआअव्वाबाहा । अग्गिच्चा चेव रिट्ठा य ॥ १ ॥ एए देवनिकाया । भयवं बोहिंति जिणवरिंदंतु ॥ सव्वजगजीवहियं । भयवं तित्थं पवत्तेह ॥ २ ॥ एतेषां वाक्यं श्रुत्वा भगवता सांवत्सरिकदानं दत्तं, यथा—संवच्छरेण होही । अभिनिक्खमणं तु जिणवरिंदाणं ॥ तोअत्थसंपयाणं । पवत्तए पुव्वसूरम्मि ॥ १ ॥ एगा हिरण्णकोडी । अट्ठेव अणूणगा सयसहस्सा ॥ सूरोदयमाई-

यं । दिज्जइ जा पायरासीउ ॥ २ ॥ वरवरिया घोसिज्जइ । किमिच्छियं दिज्जए बहुविहीयं ॥ सुरअसुरदेवदाणव–नरिंदमहियाण निक्कमणे ॥ ३ ॥ तिन्नेव य कोडिसया । अठासीयं च हुंति कोडीउ ॥ असिपंचसयसहस्सा । एयं संवच्छरेण दिन्नं ॥ ४ ॥ स्वामिना श्रीपार्श्वनाथेनैवं कृपणवनीपकादीनां याचकानां च सांवत्सरिकदानं दत्तं. ततो जननीजनकपार्श्वे गत्वा भगवान् करौ संयोज्य मस्तकेंजलिं कृत्वैवमवादीद् हे मातापितरौ भवदाज्ञयाहं दीक्षामंगीकर्तुमिच्छामि. तदा तौ कथयतो भो पुत्रक धर्मे मा विलंबं कुरु? ततोऽश्वसेनो राजा दीक्षाभिषेकार्थं कौटुंबिकपुरुषैः सुवर्णादीनां कलशानामष्टोत्तरसहस्राणि सज्जयित्वोपढौकयतिस्म, तस्मिन् समये चलितासनाः सर्वे सुरेंद्राः समागच्छंति. ततः शक्र आभियोगिकसुरैः कलशादिसमग्रमज्जनविधिमुपस्थापयति, ते कलशास्तेषु पूर्वकृतकलशेषु प्रविष्टाः. ततः शक्रो भगवंतं पूर्वाभिमुखं सिंहासनं निवेशयति. ततस्तैः सुवर्णादिकलशैर्जन्माभिषेकवत्सुरेशा निष्क्रमणाभिषेकं कुर्वंति, तस्मिन्नभिषेके वर्तमाने देवा हर्षप्रकर्षेण सुवर्णवृष्टिं कुर्वंति. ततः शक्रो भगवंतं सर्वालंकारविभूषितं करोति. ततोऽश्वसेनो राजा विशालां नाम शिबिकां कारयतिस्म, ततः पार्श्वो भगवांस्तां शिबिकां पूर्वाभिमुखः संनिविष्टः. ततोऽश्वसेनेन राज्ञा समुपदिष्टाः पुरुषाः

सर्वालंकारविभूषितास्तां शिबिकां वहंति. ततः शक्रः शिबिकाया दक्षिणमुपरितनं पार्श्वं गृह्णाति, ईशानेंद्र उत्तरं, चमरो दक्षिणमधस्तनं, बलींद्र उत्तरदिक्पार्श्वं. शेषा सर्वेऽपि देवा यथार्हं शिबिकां वहंति, यथा–पुव्विं उक्खित्ता माणु–सेहिं साहट्टरोमकूवेहिं ॥ पच्छा वहंति सीयं । असुरिंद-
सुरिंदनागिंदा ॥ १ ॥

अथ भगवत्पुरतः प्रथममष्टमंगलकानि प्रस्थितानि, ततश्छत्रचामरध्वजादीनि प्रस्थितानि, ततो जय जयेत्याशिषं कुर्वतो मागधजनाः प्रस्थिताः. ततो बंदिजनैर्जयश्रीः, अश्वसेनकुलालंकारहार तव धर्मेऽविघ्नं भवत्वेवमभिनंद्यमानो बहुजनसहस्रैः स्तूयमानोंगुल्यादिभिर्दर्श्यमानः पुष्पांजलिभिः पूज्यमानः पदे पदेऽर्घानाददानो बहुनरनारीणामंजलिं दक्षिणहस्तेनाददानो महत्यर्द्ध्या द्युत्या कांत्या च मार्गे गच्छन् भगवान् शोभते विमानारूढो वैमानिकदेवराज इव. यथा—वरपडहभेरिझल्ल-
री—दुंदुहिसंखसएहिं तुरेहिं ॥ धरणियले गयणयले । तूरनिनीओ परमरम्मो ॥ १ ॥ नयरीओ नि-
क्खमित्ता । गओ य आसमयंमि उज्जाणो ॥ तह य असोगपायवस्स । अहे सिबाओ समुत्तरइ
॥ २ ॥ ततो भगवान् पौषबहुलैकादश्यां पूर्वाह्णे स्वयमेव सर्वालंकारं मुक्त्वा तिष्ठति, तदलंकारं

वामा जननी रुदनं कुर्वाणा हंसलक्षणेन वस्त्रांचलेन गृह्णाति, ततो भगवान् पंचमुष्टिभिर्लोचं करोति, शक्रस्तान् केशान् गृहीत्वा क्षीरसमुद्रे परिष्ठापयति, तस्मिन् समये शक्रवचनेन देवमनुष्याणां नादो गीतवाद्यशब्दश्चोपरतः. एवं भगवान् श्रीपार्श्वनाथस्त्रिंशद्वर्षाणि गृहस्थत्वेन व्यतिक्रम्य कृताष्टमतपाः करेमि सामाइयमिति सर्वसावद्ययोगं परित्यज्यैवं देवदूष्यवस्त्रमादाय त्रिभिः शतैः पुरुषैः सह व्रतं प्रतिपन्नवान्, भणितं च—काऊण नमुक्कारं । सिद्धाणमभिग्गहं च सो गिह्ने । सव्वं मे अकरणिज्जं । पावंति चरित्तमारूढो ॥ १ ॥ तत्क्षणादेव समुत्पन्नं भगवतस्तूर्यं मनःपर्यवज्ञानं. ततः पंचसमितित्रिगुप्तियुक्तः क्षांतियुक्तो निर्ममो निरहंकारो निःसंगस्त्यक्तगर्वो लाभेऽलाभे च सुखे दुःखे च निंदायां प्रशंसायां च समस्तपसा संयमेन चात्मानं परिभावयन् विचरति. इतश्च कल्पवासिभुवनपतिव्यंतरादयो देवा भगवतो निष्क्रमणोत्सवं कृत्वा नंदीश्वरेऽष्टाह्निकामहोत्सवं च कृत्वा सर्वे स्वस्वस्थानं गताः, भगवानपि विहरन्नगरासन्नसंस्थितं तापसाश्रमं प्राप्तः, तत्रास्तमितो दिनकरः, तदा तत्प्रदेशे कूपासन्नस्थितवटपादपस्याधः स्थितो भगवान् कायोत्सर्गेण.

इतः स कमठजीवोऽसुरो मेघमाल्यवधिज्ञानेनात्मनो व्यतिकरं ज्ञात्वा स्मृत्वा च पूर्वभववैकार-

णं समुत्पन्नतीव्रामर्षः समागतो भगवत्समीपं, प्रारब्धास्तेन सिंहादिका उपसर्गाः, अपि च—सीहेहिं घोररूवेहिं । अइकठिनेहिं वग्घदाढेहिं ॥ वहिउ गयरूवेहिं । सरोसकयदंतपहरेहिं ॥ १ ॥ करगहियकत्तिएहिं । खुभियकयंतोव्व घोररूवेहिं ॥ वेयालेहिं य भयवं । कयछिड्ड गरुयदंसणेहिं ॥ २ ॥ एमाइबहुविहियं । कमठेणुसग्गिउवि पावेणं ॥ पासजिणो धीरमणो । न य खुहिउ धम्मझाणाउ ॥ ३ ॥ ततोऽचलं भगवंतं ज्ञात्वा तेन पाप्मना चिंतितमेष ध्याना । चलितस्तर्हि जले मज्जयित्वैनं मारयामि, इति ध्यात्वा प्रारब्धा तेन पापेन विद्युद्गर्जितप्रचंडपवनाहता वृष्टिः, तेन जलेन भगवान्निमग्नो यावन्नासिकाविवरं, तस्मिन् समये चलितं धरणेंद्रस्यासनं. प्रयुक्तावधिज्ञानेन तेन ज्ञातो भगवान् श्रीपार्श्वनाथो यावन्नासिकां यावज्जले निमग्नः, त्वरितं तत्रागत्य भगवंतं स्कंधेनोत्सार्य शिरस्युपरिकृतः सहस्रफणाटोपमंडपः, तत्कृत्वा च जलभयं निवारितं. भगवत्पुरतो वेणुविणादिवाद्यप्रधानं नाटकं च प्रारब्धं. ततः स कमठासुरः स्वामिनो धीरत्वमतिशयं च निरीक्ष्य विस्मितमानसः प्रशांतदर्पः स्वामिनं नत्वा क्षमयित्वा च स्वस्थानं गतः. धरणेंद्रोऽपि निरुपसर्गं ज्ञात्वा स्वामिनं स्तुत्वा गतः स्वस्थानं.

अथ निष्क्रमणदिनादारभ्य त्र्यशीतिदिनानंतरं चतुरशीतितमे दिने चैत्रकृष्णचतुर्थीदिनेऽष्ट-
मभक्तांते पूर्वप्रहरे आश्रमपदोद्यानेऽशोकपादपस्याधः पृथ्वीशिलापट्टे सुखनिषण्णस्य शुभाध्यवसाय-
स्यापूर्वकरणादिक्रमेण क्षपकश्रेणिं समारूढस्य क्षीणघातिकर्मचतुष्कसकललोकालोकप्रकाशकं श्री-
पार्श्वनाथस्य भगवतः समुत्पन्नं केवलज्ञानं, चलितासनाः समागताश्चतुर्विधाः सुराः, तेषां सुराणां
मध्ये वायुकुमारदेवैर्वातेन परिशोधितं योजनैकमंडलं. आसिक्तं सुगंधवारिणा मेघकुमारैः, तस्यां
भूमौ मणिरत्नखचितं देवैः कृतं समवसरणं, तस्मिन् मध्यस्थितस्वर्णसिंहासने निषण्णो भगवान् पू
र्वाभिमुखः, रजतकनकरत्नप्राकारैर्ज्ञानदर्शनचारित्रैरिव वेष्टितः, चामरयुगलेन धर्मशुक्लध्यानद्वयेनेव
विराजमानः, छत्रत्रयेण त्रिभुवनप्रभुत्वेनेव शोभितो भगवान् श्रीपार्श्वनाथो देवासुरमनुजपर्षदि स-
मुपविष्टो मधुरया गिरा सर्वभाषानुगयैकयोजनगामिन्या वाण्या धर्मं कथयति, यथा—भो भवा
चउगइत्ति । संसारो एस घोरदुहपउरो ॥ सरणं न एत्थ अन्नं । धम्मं जिणदेसियं मुत्तुं ॥ १ ॥
हिंसाइविरइरूवंतो । तं मणवयणकायसुपउत्तं ॥ इंदियकसायनिग्गह—पवरं जइसत्ति उ कुणह
॥ २ ॥ मा महुबिंदुसमाणे । विसयसुहे सज्जिऊण तुब्भे ॥ निरयाइविविहदुक्खाण ॥ भायणं

अप्पणं कुणह ॥ ३ ॥ अइवल्लहावि पियरा । अइप्पिया पुत्तभाइभज्जाओ ॥ अइसंचिअवि अत्थो । न भवइ दुहसंकडे सरणं ॥ ४ ॥ अत्थो अत्थोत्ति इह । पुत्तो पुत्तो घरं घरं वत्ति ॥ भज्जा भज्जत्ति नरं । किलिस्समाणं जमो हरइ ॥ ५ ॥ एगमणो एस जिणो । परिकिलिसई जह कुडुंबकज्जम्मि ॥ तह जइ जिणंदधम्मे । तो पावइ मोक्खसुक्खाइं ॥ ६ ॥ इति श्रीपार्श्वदेवचरित्रकीर्तनेन कमठासुरेण रइयंमीत्यादि गाथोक्तः सर्वोऽपि संबंधः प्रतिपादितः. ॥ अथ प्रसंगतो भगवतः पार्श्वनाथस्य शेषचरित्रं किंचिदुच्यते, यथा—

श्रीपार्श्वनाथस्य देशनां श्रुत्वा बहवो लोकाः प्रव्रजिताः, ये गणपदयोग्या साधवस्तेभ्यस्त्रिपदी दत्ता, तैर्द्वादशांगानि रचितानि, ते स्वामिना गणधरपदे स्थापिताः, चतुर्विधः संघः स्थापितः. ततस्ते देवा देव्यश्च केवलमहिमानं कृत्वा नंदीश्वरद्वीपे यात्रां च कृत्वा गताः स्वस्थानं. श्रीपार्श्वनाथो जिनः सप्तफणिफणालांछनो वामदक्षिणोभयपार्श्वयोः पद्मावतीधरणेंद्राभ्यां सेव्यमानः प्रियंगुवर्णदेहो नवहस्तसमुन्नतोऽरिष्टनेमितीर्थं समुल्लंघ्य भव्यसत्वप्रतिबोधनार्थं निजतीर्थं प्रवर्तयंश्चतुस्त्रिंशदतिशयैर्विराजमानः पृथिवीमंडले विचरति. अथ भगवत्परिवारमानमाह—श्रीपार्श्वनाथस्य दश गणा

दश गणधराश्चाभूवन्, आर्यदत्तप्रमुखाणां श्रमणानां षोडशसहस्राण्यभूवन् पुष्पचूलाप्रभृतीनामष्टत्रिंशत्सहस्राणि साध्वीनामभूवन्, सुनंदप्रभृतीनां श्रमणोपासकानां चतुःषष्टिसहस्राधिकं लक्षमभूत्, सुनंदाप्रभृतीनां श्रमणोपासिकानां सप्तविंशतिसहस्राधिकानि त्रीणि लक्षाणि बभूवुः, सार्धत्रिशती चतुर्दशपूर्विकाणां, चतुर्दशशतान्यवधिज्ञानिनां, दशशतानि केवलज्ञानिनामेकादशशतानि वैक्रियलब्धिमतां, सार्धसप्तशती विपुलमतिनां, षट्शतानि वादिनां द्वादशशतान्युत्तरोपपातिकानां बभूवुः, एषोत्कृष्टा परिकीर्तिता. ततः श्रीपार्श्वो भगवान् भव्यकमलदिवाकरः किंचिन्न्यूनानि सप्ततिवर्षाणि केवलिपर्यायेण पृथिव्यां विहृत्यैकं वर्षशतं सर्वायुः परिपाल्य स्वायुःपर्यंते सम्मेतगिरिशिखरमागतः, तत्र श्रमणानां श्रमणीनां श्रावकाणां श्राद्धीनां देवानां देवीनां च पर्षदि मिथ्यात्वादिसंसारपथं देशनया निराकुर्वन् सम्यग्दर्शनादिकं मोक्षपथं च प्रदर्शयन् मासभक्तांते कायोत्सर्गस्थः शैलेशीं प्रतिपन्नः क्षीणभवोपग्राहिकर्मा त्रयस्त्रिंशन्मुनिवरैः सार्धं श्रावणशुक्लाष्टम्यां श्रीपार्श्वनाथो मोक्षं जगाम. तदा चलितासनः शक्रोऽवधिज्ञानेन श्रीपार्श्वनाथस्य च्यवनव्यतिकरं ज्ञात्वा निरानंदो विमनस्कोऽश्रुपूर्णनयनः शोकसंतापितहृदयः समागतो जिनदेहसमीपं, जिनशरीरं त्रिःप्रदक्षिणीकृत्य नात्यासन्ने ना-

तिदूरे पर्युपास्तिं कुर्वन् स्थितः, एवमवादीच्च—पसरइ मिछत्ततमं । गज्जंति कुतिछकोसिया अज्ज ॥ दुभिक्खडमरवेराइ ।निसि य राहुंतिसप्पसरा ॥ १ ॥ अत्थमिए जिणसूरे । मउलेइ तुमंमि संघकमलवणं ॥ ऊल्लसइ कुमयता–निअरोवि हु अज्ज जिणपास ॥ २ ॥ तमगहियससिनह–विज्जाय पईवयं च निसि भवणं ॥ भरहमिणंगयसोहं । जायमाणं च पहु अज्ज ॥ ३ ॥ एवं सर्वेऽपि सुरवरा बाढस्वरेण पूत्कारं कुर्वंति. ततः शक्रो गोशीर्षचंदनदारुभिश्चितात्रयं करोति, क्षीरसमुद्रजलेन भगवतः शरीरं स्नपयति. ततो गोशीर्षचंदनेनानुलिप्य हंसलक्षणं पटशाटकं परिधाप्य सर्वालंकारविभूषितं करोति, शेषा देवा गणधराणां शरीराण्येवं कुर्वंति. ततः शक्रः शिबिकात्रयं करोति, तत्रैकस्यां शिबिकायां शक्रो जिनदेहमारोपयति, तच्चितायां स्थापयति, शेषा देवा द्वाभ्यां शिबिकाभ्यां गणधराणां मुनीनां च शरीराण्यारोप्य द्वयोरपि चितयोः स्थापयंति. ततः शक्रादेशेनाग्निकुमारदेवाश्चितास्वग्निं क्षिपंति, वायुकुमारा देवास्तासुवातं कृत्वा ताः समुज्ज्वालयंति, शेषा देवा कालागुरुप्रभृतीनि सुगंधद्रव्याणि, तथा घृतमधुकुंभान् प्रक्षिपंति. एवं स्वामिशरीरे मांसादिषु दग्धेषु मेघकुमारा देवाः क्षीरसागरजलेन चिता निर्वापयंति. ततः शक्रो जिनस्य दक्षिणामुपरितनां दंष्ट्रां गृह्णाति, ईशानेंद्रो वामां,

चमरोऽधस्तनां दक्षिणां, बलींद्रो वामां, शेषा देवा भगवतः शेषान्यंगोपांगानि गृह्णंति. ततश्चिता· स्थाने शक्रः स्तूपानि करोति. एवं निर्वाणमहिमानं कृत्वा शक्रो नंदीश्वरे द्वीपे गत्वा पूर्वाभिमुख स्थेंजनपर्वते जिनायतनेऽष्टाह्निकामहिमानं करोति, ततश्चत्वारो लोकपाला अपि तस्यैवांजनपर्वत· पार्श्ववर्तिषु चतुर्षु दधिमुखपर्वतेषु सिद्धायतनेष्वष्टाह्निकामहिमानं कुर्वंति. ईशानेंद्र उत्तरस्थेंजन पर्वते सिद्धायतनेष्वष्टाह्निकामहिमानं करोति. एवं चमरो दक्षिणस्थे, बलिः पश्चिमस्थे, तयोर्लोक· पालाः पार्श्ववर्तिषु दधिमुखपर्वतेष्वष्टाह्निकामहोत्सवं कुर्वंति. ततः शक्रः स्वविमाने गत्वा सौधर्मस· भामध्यस्थितमाणवकस्तंभाद्वज्रमयं वृत्तं समुत्तार्य सिंहासने निवेश्य जिनदंष्ट्राः पूजयति. तत्र पा· र्श्वजिनस्यापि दंष्ट्राः स्थापयति. एवं सर्वेऽपि देवेंद्रा देवाश्च तथैव कुर्वंति. भगवतः श्रीपार्श्वनाथ· स्य पंचस्वपि कल्याणकेषु विशाखानक्षत्रमासीत. इत्थं श्रीपार्श्वनाथस्य । चरित्रमतिपावनं ॥ दर्शितं देशतः किंचि—द्भवणीयसुखप्रदं ॥ १ ॥ इति श्रीपार्श्वनाथचरित्रं समाप्तं. ॥ पुनर्भावनायाः सर्व त्रोपयोगमाह—

॥ मूलम् ॥—निच्चुण्णो तंबोलो । पासेण विणा न होइ जह रंगो ॥ तह दाणसीलतवभा·